***********************************************************************************
*
*
* e-text created by muktabodha indological research institute
*
*  yogasaarasa.mgraha
*
*
*
* ifp transcript no. t0859 copied from  d 4373 belonging to the goml, madras
*
* data entered by the staff of muktabodha under the supervision of mark s. g. dyczkowski
*
*
*
* revision 0 april 5, 2010
*
***********************************************************************************

# ॥ योगसारसंग्रहः ॥

प्रणमामि गणेशानं प्रणवार्तिप्रभञ्जनम् ।

प्रसन्नं भजतामिष्ट प्रदातारं भवच्छिदम् ॥

सुधांशुकोटिद्युतिमप्रमेयं सुधाकरस्मेरे मुखारविन्दम् ।

योराजयोगामृतदान दक्षं श्रीदक्षिणामूर्तिं गुरुं नमामि ॥

श्रीशङ्करं पराशक्तिं गणेशं षण्मुखंहरिम्।

ब्रह्माणं नन्दिकेशं च दत्तात्रेयं पतञ्जलिम्॥

नवयोगीन्द्रवृन्दांश्च व्यासं व्यासात्मजं भजे।

आधारपद्मवन लोलन राजहंसी मन्तर्महागगनवासव चापरेखाम्।

आनन्द विद्युतमनङ्गरिपोः पुरन्ध्रीमा ब्रह्मविष्णुजननीमभिवादयामि॥

मूलाधारमुखप्रसूनसुलभ ज्वाला समालिङ्गितां

बालादित्य सहस्रकोटिरुचिमत्तन्तूपमामुन्मनीम्।

तत्वातीतसदाशिवेन सततं संयोग वाञ्छापरां

तत्वानामुपयाय कान्तिजननीं श्रीकुण्डलीं भावये॥

आपार पद्म शिखिहंसविमुक्तनिद्रा

मक्षान्त वर्णमणि भूषण दिव्य गाजाम्।

अर्कानिलेन्दु नयनामखिलैक बीजा-

मम्बां भजे परसुधा परिषिक्त मूर्तिः॥

सिन्दूर सन्दोह निभां शुभाङ्गीं

शिवस्यवामाङ्क विहारलोलाम् ।
तेनैव संलालितमन्दहासां
भजामि गौरीं भवतारणाय ॥

अष्टाङ्गादि समस्त योगकमल श्रीकुण्डलिन्याः परः
ब्रह्मद्वारकवाट पाटन पटोमार्गस्य यल्लक्षणम् ।
तत्वातीत सदाशिवस्य निलयस्यात्म स्वरूपं च य
त्तत्सर्वं प्रकटी करोमि च पुरा योगेषु यद्वर्णितम् ॥

योगशास्त्राणि सर्वाणि सम्यगालोच्य सङ्ग्रहात् ।
योगसारमहंवक्ष्ये साधकानु जिघृक्षया ॥

गुरूपदिष्टमार्गेण योगशास्त्रानु वर्तिना ।
वैराग्यशीलयुक्तानामिदं शास्त्रं प्रगीयते ॥

तदुक्तं योगशांकरे -

ज्ञानखड्गं दृढं कृत्वावैराग्यमय चर्म च ।

p. 2)

दुर्लभे योगसंग्रामे शूरः कोटौ विराजते ॥

गीतायाम् -

अभ्यासेन च कौन्तेय वैराग्येण च गृह्यते ॥ इति ।

योगे नैव विमुच्यन्ते देहिनोभव बन्धनात् ।
नान्यथा मुक्तिरेतेषां जन्मकोटि शतैरपि ॥

तदुक्तं योगशांकरे -

नास्ति योगं विनामुक्तिः या मुक्तिर्योगदर्शिता ।
योगयुक्तश्चजानाति समुक्तो भवसागरात् ॥ इति ।

निरोध एव चित्तस्य योग इत्यभिधीयते ।
योगाभ्यास वशेनैव परमात्मा प्रकाशते ॥

तदुक्तं श्वेताश्वतरे -

तावन्मनोनिरोद्धव्यं हृदि यावत् क्षयं गतम् ।
एतज्ज्ञानञ्च ध्यानञ्च शेषाश्च ग्रन्थविस्तराः ॥

पतञ्जलिश्च योगश्चित्त वृत्तिनिरोध इति ।
विध्यन्तःकरणं बुद्धिर्मनस्तद्वृत्तिरुच्यते ॥

अगमन्मे मनोऽन्यत्रेत्युक्तवात्तया तद् ज्ञातुमर्हसि ॥

द्विविधाचित्तवृत्तिः स्या च्छुद्धा शुद्धेति चोच्यते ।
अशुद्धा जन्महेतुः स्याच्छुद्धा जन्मविनाशिनी ॥

तदुक्तममृतबिन्दूपनिषदि -

मनोहिद्विविधं प्रोक्तं शुद्धञ्चाशुद्धमेव च ।
अशुद्धं कामसङ्कल्पं शुद्धं कामविवर्जितम् ॥

मन एव मनुष्याणां कारणंबन्धमोक्षयोः ।
बन्धाय विषयासक्तं मुक्तं निर्विषयं गतम् ॥ इति ।

द्वाभ्यामेव निरोधःस्या स्यात् सूर्येन्दुभ्यां यथा तमः ।
अन्यथा चित्त चलनं कदाचिन्ननिवार्यते ॥

तदुक्तं पतञ्जलिना -

उभयाधीनश्चित्त वृत्तिनिरोध इति।

व्यासभाष्ये -

अभ्यास वैराग्याभ्यां तन्निरोध इति॥

योगसाधनमभ्यासो विरागश्च निरीहता।
द्वाभ्यामेव भवेद्योगो मन्त्रादिर्नैव संशयम्॥

मन्त्रो हठो लयोराजेत्येको योगश्चतुर्विधः।
योगानामर्थ विज्ञानान्मुक्तो भवति नन्यथा॥

प्रत्याहारस्तथा ध्यानं प्राणायामोऽयधारणा।
तर्कश्चैव समाधिश्च षडङ्गोयोग उच्यते॥

अयञ्च पूर्वपक्षः आदौ योगां गान्यष्टौ निरुप्यपश्चान्मन्त्रादि
योगानां स्वरूपन्निरूप्यते।

सूतसंहितायाम् -

p. 3)

यमश्च नियमश्चैव तथैवासनमेव च ।
प्राणायामस्तथा विप्र प्रत्याहारस्तथा परम् ॥

धारणा च तथा ध्यानं समाधिश्चाष्टमो मुने ।
अहिंसा सत्यमस्तेयं ब्रह्मचर्यं दयार्जवम् ।
क्षमा धृतिर्मिताहारः शौचश्चैते यमादश ॥

वेदोक्तेन प्रकारेण विनान्यत्र तपोधन ।
कायेन मनसावाचा हिंसाहिंसा न चान्यथा ॥

आत्मा सर्वगतोऽच्छेद्यो नादह्य इति या मतिः ।
सा चा हिंसा पराप्रोक्ता मुने वेदान्त वेदिभिः ॥

यत्र दृष्टेन्द्रियैर्दृष्टं श्रुतं वेदविदांवर ।
तस्यैवोक्तिर्भवेत् सत्याविप्रसा नान्यथा भवेत् ॥

सर्वं सत्यं परं ब्रह्म नामान्यदिति या मतिः ।
तत्सर्वं परमं प्रोक्तं वेदान्त ज्ञानभावितैः ॥

अन्यदीयेदृणेरत्ने काञ्चने मौक्तिकेऽपिवा ।
मनसापि निवृत्तिः स्यात्तदस्तेयं विदुर्बुधाः ॥

आत्मनो नामभावेन व्यवहार विवर्जनम् ।
एतदस्तेयमित्युक्तमात्म विद्भिर्महात्मभिः ॥

कायेन मनसा वाचा नारीणां परिवर्जनम् ।
ऋतुकालं विनास्वस्यां ब्रह्मचर्यं तदुच्यते ॥

ब्रह्मचर्याश्रम स्थानां यतीनांनैष्ठिकस्य च ।
ब्रह्मचर्यं तथैवोक्तं तथैवारण्यवासिनाम् ॥

ऋतावृत्तौ स्वदारेषु संगतिर्या विधानतः ।
ब्रह्मचर्यं तथैवोक्तं गृहस्थाश्रमवासिनाम् ॥

राज्ञश्चैव गृहस्थस्य ब्रह्मचर्यं प्रकीर्तितम् ।
विशोवृत्तवतां चैव केचिदिच्छन्ति पण्डिताः ॥

शुश्रूवैव तु शूद्रस्य ब्रह्मचर्यं प्रकीर्तितम् ।

ब्रह्म भावेमनश्चारं ब्रह्मचर्यंपरं तथा ॥ इति ॥

स्वात्मवत्सर्वभूतेषु कायेनमनसागिरा ।
अनुज्ञायादयासैव प्रोक्ता योगांगवेदिभिः ।
मित्रे पुत्रे कलत्रे च रिपौस्वात्मनि सन्ततम् ॥

एक रूपं मुने यत्तदार्जवं प्रोच्यते बुधैः ।
कायेन मनसावाचा शत्रुभिः पीडिता च सा ॥

p. 4)

बुद्धिक्षोभनिवृत्तिर्या क्षमा सा मुनिपुङ्गव ।
वेदादेव मुनेर्मोक्षः संसारस्य न चान्यथा ॥

इति विज्ञान निष्पत्तिः धृतिः प्रोक्ता च वैदिकैः ।
अहमात्मान चान्योऽस्मीत्येवं या प्रस्थिरामतिः ॥

सा प्रोक्ता विधृतिश्श्रेष्ठा मुनिभिर्वेदपारगैः वादिभिः ।
अल्पमृष्टाशनाभ्यान्तु नास्तियोगः कथञ्चन ॥

तस्माद्योगानुगुण्येन भोजनं मितभोजनम् ।

विश्वेश्वरः -

हितं मितञ्चयश्चान्नंयच्चान्नं नैव जीर्यते ॥

धातुः प्रकुप्यते तस्मात् तदन्नं परिवर्जयेत्।

योगसारमञ्जर्याम् -

आहाराच्छिद्यते योगी कृष्णपक्षे तु चन्द्रमाः।
शुक्लपक्षे यथा चन्द्रोमिताहारः प्रवर्तते ॥

गीतायाम् -

नात्यश्नत्श्च? योगोऽस्ति न चैकान्तमनश्नतः॥ इति।

सूतसंहितायाम् -

स्वदेह मलनिर्मोक्षं मृज्जलाभ्यां महामुने।
युक्तशौचं भवेद्बाह्यं मानसं मननं विदुः॥

अहंशुद्ध इति ज्ञानं शौचं वाञ्छन्तिपण्डिताः।
ज्ञान शौचं परित्यज्य बाह्ययोरमते नरः॥

समूढः काञ्चनं त्यक्त्वा लोहं गृह्णाति सुव्रत।
ज्ञानाम्भसैव शुद्धस्य कृतकृत्यस्य योगिनः॥

कर्तव्यं नास्तिलोकेऽस्मिन्नस्ति चेन्न सतत्त्ववित्।

अथ नियमः

याज्ञवल्क्यः -

तपस्सन्तोषमास्तिक्यं दानमीश्वरपूजनम्।
सिद्धान्त श्रवणं चैव ह्रीमतिश्च जपा व्रतम्॥

एते च नियमाः प्रोक्ताः योगविद्भिर्महात्मभिः।
ता नहं क्रमशो वक्ष्ये शृणु श्रद्धापुरस्सरम्॥

वेदोक्तेन प्रकारेण कृच्छ्रचान्द्रायणादिभिः।
शरीरशोषणं यत्तत् तप इत्युच्यते बुधैः॥

यदृच्छा लाभतोनित्यमलं पुंसां भवेदिह ।
या वीस्तामृषयः प्राहुस्सन्तोषस्य च लक्षणम् ॥

धर्माधर्मेषु विश्वासो यस्तदास्तिक्यमुच्यते ।
न्यायार्जित धनं चान्नं शुद्धया वैदिके द्विजे ॥
अन्यद्वायत् प्रदीयन्ते तद्दानं प्रोच्यते मया ॥

p. 4)

वैदिकाय च विप्राय यद्दत्तं वस्तु शोभते ।
नोपकारायदत्तं स्याद्भस्मनीव हुतंहविः ॥

आदित्यमम्बिकां विष्णुं गणनाथं महेश्वरम् ।
यथा शक्त्यर्चनं भक्त्या यत्तदीश्वर पूजनम् ॥ इति ।

सूतसंहितायाम् -

रागाद्यपेतं हृदयं वागदृष्टानृतादिना ।
हिंसादिरहितः कायः एतच्चेश्वरपूजनम् ॥

सत्यं ज्ञानमनन्तञ्च परानन्दं परं ध्रुवम् ।

प्रत्यगित्यवगन्तव्यं वेदान्त श्रवणं बुधैः ॥

सिद्धान्त श्रवणं प्रोक्तं पुराणश्रवणं बुधैः ।
वेदवैदिकमार्गेषु कुत्सितं कर्म यद्भवेत् ॥

तस्मिन् भवति या लज्जा ह्रीश्च सैवेति कीर्तिता ।
वैदिकेषु च सर्वेषु श्रद्धयामतिर्भवेत् ।
गुरुणा चोपदिष्टोऽपि तत्र संबंध वर्जितः ॥

वेदोक्ते नैव मार्गेण मन्त्राभ्यासो जपः स्मृतः ।
कल्पसूत्रे तथा वेदशास्त्र पुराणके ।
इतिहासे प्रवृत्तिर्या सा जपः प्रोच्यते मया ॥

या वेद बाह्यास्मृतयो याश्चकाश्च कुदृष्टयः ।
सर्वास्ता निष्फलाः प्रोक्तास्तमोनिष्ठा हितास्स्मृताः ॥

गीतासु –

श्रेयान् स्वधर्मोविगुणः परधमात्स्वनुष्टितात् ।
स्वधर्मे निधनं श्रेयः परधर्मो भयावहः ॥ इति ।

तस्मात् सर्वं प्रयत्नेन वेदमन्तं सदा जपेत्।

जकारो जन्मनाशः स्यात् पकारात्पापनाशनम्।

जन्मपापविनाशित्वाज्जप त्युच्यते बुधैः॥

जपश्च त्रिविधः प्रोक्तः वाचिकोपांशु मानसः।

मानसो मनसाप्रोक्तो ह्युपांशुर्जिह्वया स्मृतः॥

उच्चैर्जपो वाचिकः स्यात् इति वेदविदांवरः।

मानसं तु सहस्रं स्यादुपांशुश्शतमुच्यते॥

वाचिकस्त्वेक एकः स्यात् जप लक्षणमीरितम्।

विश्वामित्रः -

यदुच्चनी च स्वरितैः शब्दैः स्पष्टं पदाक्षरैः॥

मन्त्रमुच्चारयेद्विप्रो जपयज्ञस्सवाचिकः॥

स्वरवर्णपदैर्वाक्यं शुद्धमावर्तयेज्जपन्।

p. 6)

न कम्पयेच्छिरो ग्रीवां दन्तान्नैव प्रपीडयेत् ।
नीचैश्श्रुतो भवेद्धार्गीण्यश्रुतं सफलं भवेत् ॥

ऋषिश्छन्दो देवताश्च ध्यायन् मन्त्रं च सर्वदा ।
यस्तु मन्त्रं जपेद्धार्गीं तदेव हि फल प्रदम् ॥

प्रसन्न गुरूणापूर्वमुपदिष्टत्त्वनुज्ञया ।
धर्मार्थ कामसिद्ध्यर्थं यत्तु तद्वत मुच्यते ॥ इति ।

अथासन क्रमः -

अथासन क्रमं वक्ष्ये साधकानां हिताय वै ।
यदभ्यास क्रमेणैव स्थिरत्वं सुकरं भवेत् ॥

योगसारमञ्जर्याम् -

वीरं कूर्मञ्च सुदृढं स्वस्तिकं कुक्कुटासनम् ।
मयूरं विजयं चैव पद्मं व्यासासनं तथा ॥

दृढासनं च वृषभं गारूडं गजमेव च ।

सिद्धं सिंहासनं चैव प्रवक्ष्यामि यथा विधि ॥

समाधाय शुचौ देशे हृद्य वस्त्रोत्तरच्छदे ।
जङ्घां च दक्षिणां न्यस्य सम्यग्वामो रूमूर्धनि ॥

समग्रीवशिरो वक्षोहस्तौ विन्यस्य चोपरि ।
आकुञ्च्य गुदमेकाग्रो वीरासनमिदं परम् ॥

अनेनाभ्यासयोगेन योगारूढः प्रसिद्ध्यति ।
न चाभ्यासविधौ चैतश्शिष्यते शीघ्रसिद्धये ॥

तस्यैव दक्षिणे जंघां न्यसेद्वामोरु मूर्धनि ।
कूर्मासनं तु विज्ञेयं सर्वेन्द्रिय वशंकरम् ॥

दक्षपादं च वामोरुमूले विन्यस्यतत्पदम् ।
दक्षोरु मूलपीठार्थं कल्पयेत् सुदृढासनम् ॥

बाहुयुग्मं समुत्सृज्य स्वस्तिकासनमीरितम् ।
सर्वसिद्धिप्रदं देवि सर्वरोगविनाशनम् ॥

वामगुल्फमधः कृत्वा कृत्वोपरि च दक्षिणम्।
गुदे ना पीड्यवैजान्वोः युगलं परिपात्य च ॥

वामहस्तांगुली मूलेष्वत्वाष्टभ्य यथा तलम्।
दक्षहस्तांगुलीमूले परिवर्त्य च तत्तले ॥

ऊरुमूलद्वयं पीड्यघ्राणाग्रे स्थापयेद्दृशौ।
कुक्कुटासनमेतद्वै मनसः स्थैर्यकारणम्।
ऊरुमूल द्वयेस्थाप्य पाद युग्मं निधाय च ॥

p. 7)

तयोर्मध्ये स्थिर गुदः पृष्टमुन्नम्य निश्चलः।
तथा करतलद्वन्द्वं समासीनः परस्परम्।
ऊर्वोरु परिविन्यस्य नासिकामवलोकयेत्।

मयूरासनमेतद्वै सर्वव्याधिविनाशनम्।
एतस्य बाहु युगलं कारयेद्दण्ड युग्मवत् ॥

करद्वय तलं भूमौ पुटाकारेणधारयेत्।
किञ्चिदानम्रित तनुः निश्चलास्थिरमानसः ॥

पादौ निलोकयेद्रम्यं समासीनः समाहितः।

व्यासासनमिदं सद्यो व्याधिघ्नं योगसिद्धिदम्॥

वामपादमथोत्तानं कृत्वादक्षोरुमण्डले।

दक्षपादं च वामोरौ दक्षपादं च वामोरौ तथा भूतं निधापयेत्।

ऊरुभ्यामुपरिस्थाप्य बाहुं त्यज्य यथा यतः।

कर पृष्ठं च दक्षाख्यं व्यसेद्वामतलान्तरे॥

ऋजुग्रीव शिरोभूत्वा नासिकामवलोकयेत्।

न निमीलन्नचोन्मीलन् कुर्यादाकुंच्य वै गुदम्॥

समदेह स्थिरमतिः पद्मासनमिदं परम्।

सर्वयोग प्रसिद्ध्यर्थमभ्यसेद्भवभित्तये॥

वामजङ्घोपरिस्थाप्य दक्षजंघांजितेन्द्रियः।

दक्ष जंघोदरेमूले गुल्फपार्श्वेन्निधापयेत्॥

हस्तादिमति पर्यन्तं पद्मासनवदाचरेत्।

विजयासनमेतद्धि सर्वसिद्धिकरं परम्॥

ऊरुभ्यामुपरिस्थाप्य पादयुग्मं प्रयत्नतः।
दक्षिणं सव्यदेशे च सव्यं दक्षिण देशके॥

करद्वयं पृष्ठदेशे परिवर्त्य प्रयत्नतः।
पादांगुष्ठ द्वयंसम्यक् कराभ्यांसंनिगृह्य च॥

किञ्चिदुत्तान हृदयो नासिकामवलोकयेत्।
दृढासनमिदं प्रोक्तं सद्योरोगविनाशनम्॥

वाम गुल्फक पृष्ठे तु दक्षगुल्फं निधापयेत्।
पातयित्वा महेशानि जानु युग्मं महीतले॥

ऊर्वोः कूर्परमाधारं कृताञ्जलि पुटौ करौ।
कुञ्चच्चिबुकसंयोगं नासिकाग्रंविलोकयेत्॥
गरुडासन मेतद्धै सर्वसिद्धिकरं परम्।
गुदेन पीडयधरणीं पादाभ्यामपि संस्फुटम्॥

p. 8)

जान्वोरूर्ध्वकरौ स्थाप्य स्थिरदेहो भवेद्दृढम्।
एतद्वजासनं सर्वविघ्न विच्छेदकारकम्॥

ऊरूयुङ्मूलपीठार्थं जंघे चा श्लिष्यपार्वति ।
पादयुक् पश्चिमं न्यस्य पर्यङ्कोनदृढं तनुम् ॥

गुल्फेन गुदमा पीड्य सव्यं गुह्योपरिक्षिपेत् ।
समदेहः स्थिरोभूत्वा शुद्धासनमिदं परम् ॥

सर्वसिद्धि प्रदं देवी सर्वव्याधिविनाशनम् ।
जंघाभ्यामूरु युग्मं च समाश्लिष्यनिपात्य च ॥

कूर्परौ स्तम्भवत् कृत्वा पार्श्वेनैकेन संश्रयेत् ।
एतत् प्रोक्तं मया देवि वृषभासन मुत्तमम् ॥

सर्वरोगविधातार्थे प्रोक्तमेतन्महात्मभिः ॥ इति ।

आदिनाथेन निर्णीत मासनं वक्ष्यतेऽधुना ।
तत्कुर्यादासनं स्थैर्य मारोग्यं चांगपादवम् ॥

जानूर्वोरन्तरे सम्यक् कृत्वा पादतले उभे ।
ऋजुकायः समासीनः स्वस्तिकं परिचक्षते ॥

सव्ये दक्षिणगुल्फं तु पृष्ठ पार्श्वे निवेशयेत्।
दक्षिणेऽपि तथा सव्य गोमुखं गोमुखं यथा॥

गुदं निष्पीडय गुल्फाभ्यां व्युत्क्रमेणसमाहितः।
कूर्मासनं भवेदेतदिति वेदविदां मतम्।
पद्मासनं सुसंस्थाप्य जानूर्वोरन्तरे करौ॥

निवेश्य भूमौ संस्थाप्य व्योमस्थं कुक्कुटासनम्।
कुक्कटासन बंधस्थोदोर्भ्यां संगृह्य कंधरम्॥

शेते कूर्मवदुत्तानंमेतदुत्तान कूर्मकम्।
पादांगुष्ठौ तु पाणिभ्यां गृहीत्वाश्रवणावधि॥

धनुराकर्षका कृष्टन्धनुरासनमीरितम्।
वामोरुमूलार्पित दक्षपादं जान्वोर्बहिर्वेष्टित वामदोष्णान्।
प्रगृह्य तिष्ठन् परिवर्तितां गोमत्स्येन्द्र नाथोदितमासनं न्यसेत्॥

मत्स्येन्द्र पीठं जठर प्रवृद्धं पचण्डरुङ्मण्डल खण्डनास्त्रम्।
अभ्यासतः कुण्डलिनी प्रबोधं शुद्धस्वरूपं च ददाति पुंसाम्॥

प्रसार्य पादौ भुवि दण्डरूपौ दोर्भ्यां पदाग्रद्वितयं गृहीत्वा ।

जानू परिन्यस्त ललाट देशो भवेदिदं पश्चिमताणमाहुः ॥

यदि पश्चिमताणमासनाग्र्यं पवनं पश्चिमवाहनं करोति ।

उदरे जठरानलो ज्वलस्स्यात् उदरे कार्श्यमरोगता च पुंसाम् ॥

धरामवष्टभ्यकरस्थलाभ्यां तत्कूर्परस्थापित नाभिपार्श्वम् ।

p. 9)

उच्चासनोदण्ड वदुत्थितः खे मयूरमेतत् प्रवदन्ति पीठम् ॥

उत्तानशववद्भूमौ शयानन्तं शवासनम् ।

सर्वासनश्रान्तिहरं चित्तविश्रान्ति साधनम् ॥

मुख्यं सर्वासनेष्वेवं सिद्धासिद्धासनं विदुः ।

ऊरुयुङ्मूलपीठार्थं जंघे चाकुंच्य पार्वति ।

पादयुक् पश्चिमे न्यस्य पर्यङ्के सदृढन्तनुम् ॥

गुल्फेन गुदमापीड्य सव्य गुह्यो परिक्षिपेत् ॥

समदेह स्थिरो भूत्वा सिद्धासनमिदं परम्।
सर्वसिद्धिप्रदं देवि सर्वव्याधि विनाशनम्॥

चतुराशीतपीठेषु सिद्धमेवसमभ्यसेत्।
द्विसप्ततिसहस्रेषु सुषुम्नामिवनाडिषु॥

आत्मध्यायोमिताहारी यावद्द्वादशवत्सरम्।
सदा सिद्धासनाभ्यासा द्योगनिष्पत्तिमाप्नुयात्॥

श्रमदैर्बहुभिः पीठैरलं सिद्धासने सति।
प्राणानिलं सावधानं बद्धे केवलाकुम्भके॥

उत्पद्यते विनायासात् स्वयमे वोन्मनी च सा।
तथैकस्मिन्नेव बद्धे सिद्धासने सदा।
ग्रन्थित्रयमनायासात् स्वयमेवोपभिद्यते।

आसनं सिद्धि सदृशं न कुम्भः केवलो जपः।
न खेचरे समामुद्रा न नाद सदृशो लयः॥

गुल्फौ च वृषण स्याथ स्वीविन्याः पार्श्वयोः क्षिपेत्।

दक्षिणे सव्यगुल्फं तु वामे दक्षिण गुल्फकम्॥

हस्तौ च जान्वोः संस्थाप्य स्वाङ्गुलीस्संप्रसार्य च।
व्याप्तवक्त्रो निरीक्षेत नासाग्रं सुसमाहितः।
सिंहासनं भवेदेतत् पूजितं योगिभिः सदा॥

गुल्फौ च वृषणस्यायस्वीविन्याः पार्श्वयोः क्षिपेत्।
पार्श्वपादे च पाणिभ्यां दृढं बध्वासु निश्चलः॥

भद्रासनं भवेदेतत् सर्वव्याधिविनाशनम्।
गोरक्षासनमित्याहुरिदं वै सिद्धयोगिनः॥

आसनं त्रिविधं प्रोक्तमेकत्रा वासमेव च।
कुशाद्यासनमेकं च सिद्धाद्यासनमेव च॥

यावत्संकल्पितः कालस्तावदेकत्र संवसेत्।
क्रोशान्नपर्यटे दूर्ध्वमचलं प्रोच्यते बुधैः॥

p. 10)

शुचौ देशे प्रतिष्ठाप्य स्थिरमात्मन आसनम्।
नात्युच्छ्रितं नाति नीचं चेलाजि न कुशोत्तरम्॥

तत्रैकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः ।
उपविश्यासने युञ्ज्यात् योगमात्मविशुद्धये ॥

बधिप्रदेशे मरुभूमिमण्डले सदामरुद्धोषित कीकटस्थले ।
वल्मीकयुक्ते बहुजीवसङ्कुले किरातभूयिष्ठकुराजमण्डले ॥

योगसारमञ्जर्याम् -

नदंशमशका कीर्णेन च श्वापद सेविते ।
नदी समुद्रतीरेवा न जलाशय  सन्निधौ ॥

श्मशाने चैत्यवृक्षे वा न महाजनसन्निधौ ।
अराजके देशसन्धौ वल्मीकादि समाकुले ॥ इति ।

शुचौ देशे मनोरम्ये निश्शठे जनवर्जिते ।
शोधिते घटिते स्निग्धे निम्नोन्नतविवर्जिते ॥

हठयोगे -

तत्र रम्येमठं कुर्यात् सूक्ष्मद्वारञ्च निर्व्रणम् ।
प्राकार चेष्टितं शुद्धं बहिजाला समन्वितम् ॥

सुगन्ध कुसुमाकीर्णे वितानाशोप शोभिते ।
तत्रोपधान शय्याद्यैरासनाद्यैः समाकुलम् ॥

सुधूप वासितं नित्यं गोमयेनोपलेपितम् ।
समित्पुष्पदलोपेतं कन्दमूल फलान्वितम् ।
समग्र भस्म रुद्राक्ष कुशोदकविभूषितम् ।
शुद्धान्न व्यञ्जनैः पूर्णं सर्वौषधि समाश्रयम् ॥ इति ।

हठयोगे -

शैवे - अल्पद्वारमरन्ध्रगर्त पिटकंनात्युच्चनीचायतं
सम्यग्गोमयसान्द्रलिप्तममलं निश्शेषबाधोज्झितम् ।

बाह्ये मण्टपवेदिकूपरुचिरं प्राकार संवेष्टितं
प्रोक्तं योगिमठस्य लक्षणमिदं सिद्धेर्हठाभ्यासिभिः ॥

इति श्रीदत्तात्रेयविरचिते योगसंग्रहे यमनियमासन स्थान निर्णयोनाम

प्रथमोऽध्यायः ॥

नाडी ।

नाडीस्थानं च तद्वर्णं प्राण कर्म च विस्तरात् ।
ज्ञात्वा योगीशनैर्नाडी शुद्धिं सम्यक् समारभेत् ॥

तत्र शिवः ।

सुषुम्नादशमद्वाराहर दाराश्वमध्यमा ।
नागश्चन्द्र स्वर्गमुखी मशकामध्यनाडिका ॥

पम्पालिनी मराकारी बालशक्ति तपस्विनी ।
शंखिनी नलिनी गौरी शिखिनी व्यापिनी गुहा ॥

p. 11)

मासोपवासी त्रिपुरात्रिवेणी मन्दाकिनी सर्वरुजापहती ।
सा कोकिलाभ्राजपदा च सिद्धा वज्राख्यदन्तामरशून्यनावी ॥

अनाकार मुखीकन्द संहारातिग्मसूचिका ।
शंखिनीशिव जालंध्र वियद्गङ्गोर्ध्व वाहिनी ॥

पश्चिमोर्ध्व सरित्कारी मुखा कपिलपीलिका।

आकुला सिद्धमुनिवन्दिनी ततो मणिकुलं हरिविरिञ्चिगोचरा।

विषमसन्धिरपि वायुसूत्रकं तदनुघटति यद्वासरश्रियम्॥

मरुरिन्द्रमणिमोक्षसाधनी संगमात्र तदेह नायकी।

पद्मिनीत्रिदशवल्लभा वियद्ग्रन्थिवंशमणिमार्ग इत्यपि॥

योगसारमञ्जर्याम् -नारदीये च -

ब्रह्मद्वारे त्रयोग्रन्थिर्वामीक पालिनी तथा।

त्रिगन्धिर्मत्य सर्वा च मण्डनी स्याद् मूलिकम्॥

मृणालतन्त्रत्रिलिंगा तथा सर्व रसोऽपि च॥

आदिनाथः।

कन्दमध्ये स्थितानाडी सुषुम्नेति प्रकीर्तिता।

चक्रेऽस्मिन्परितोनाड्यस्तिष्ठन्त्या पादमस्तके।

नारायणे -

सन्ततं सिराभिश्चलम्पत्या कोशसन्निभम्।
तस्यान्ते सुषिरं सूक्ष्मं तस्मिन् सर्वं प्रतिष्ठितम्॥ इति।

मुक्तिदेव्यागमेत्युक्ता सुखदा विश्वधारिणी।
स्वतः प्रतिष्ठिता पूर्वा सुमनाशुद्धनिर्मला॥

पृष्ठमध्ये स्थितानाडी सदा मूर्ध्निव्यवस्थिता।
सूक्ष्मा श्रीवैष्णवी शुभ्रा विजया व्यक्तसंज्ञिका॥
जिह्वादारा निलचाराचोर्ध्वाध्वाचाति गुप्तका॥

भैरवः -

सुधाख्या मध्यगाचैव ब्रह्ममार्गा सरस्वती।
त्रिमूर्ति निलया लोक धामा श्रीसर्वसंभवा॥
योगिगम्या खगाकारा मंगलामातृरूपिणी॥ इति।

दत्तात्रेयः।

द्यौस्सन्तिश्चैव सङ्क्रान्तिः कारण विश्वधारिणी।
प्रज्ञान निलया नित्या साध्या केदार संज्ञिका॥

कैलासश्चैव वैकुण्ठं कालमासाब्दमेव च।
विष्णवाद्यनेक नामानि योगशास्त्रेषु निश्चितम्॥ इति।

शिवयोगे -

ब्रह्मेन्द्र सात्विकमदातुर सृष्टिवाणी-
न्वारिद्विलक्ष शशिशीतल चन्द्रगङ्गा।
स्याद्वारुणी च खदिरा च कलङ्कवामा
संहार एव शिववर्य निजाभिधास्युः॥

पिङ्गलाम्भोजिनी सूर्या यमुनाग्निरहस्मृतः।
इडा च वाम निश्वासा पिंगलादक्षिणा स्मृतः॥

p. 12)

गङ्गा च यमुना चैव चन्द्रसूर्यौ निशादिवौ।
सूतकं प्रेतकं चैव पक्षद्वय मुदाहृतम्॥

धर्माधर्मौ तमो रक्तावयष्द्वयमुच्यते।

सितासिते वारणासि हंसद्वयपदं विदुः ॥

शिवशक्ति पदं चैव सुषुम्नापार्श्वयोः स्थितः ॥

कलाकाष्ठौ मुहूर्तश्च कारणं विश्वदेहिनौ ।
पञ्चभूत स्वरूपेते पञ्चब्रह्ममये स्फुटे ॥

गन्धद्वारे कलाचारे प्रवाहौ जन्महेतुकौ ।
अतिधूमयमाकीर्णौ योगिवश्यौ सनातनौ ॥

मानसेन समायुक्ता विन्द्रियाणां प्रवर्तकौ ।
प्राणापान स्वरूपौ तौ जगत्कर्म प्रवर्तकौ ।
वर्णद्वयात्मकौ शुद्धौ नानावर्णप्रभेदकौ ।
पञ्चस्थलसमाविष्टौ त्रिपञ्चप्राणरूपकौ ॥

सर्वेषां प्राणिनामेव देहकाल प्रवर्तकौ ।
प्राणवायुरयं नित्यं कालनिर्णयकारणात् ॥

इडायां पिङ्गलायाञ्च श्वासरूपेण वर्तते ।
एतद् द्वयं विना जीवो न तिष्ठति न संशयः ॥

सुषुम्नाग्नि कलाप्रोक्ता तिसृभिः सर्वदा भवेत्।

सुषुम्ना वाहनं तत्र नैव जानन्ति मानवाः।

तया विदन्ति सुज्ञानं देवाः परमयोगिनः॥ इति।

प्रणवचिन्तामणौ -

शरीरादधिकः श्वासो निर्गमो द्वादशांगुलः।

प्रवेशेऽष्टांगुलोमध्ये विनष्टश्चतुरंगलः॥

शारीरे -

षष्ट्युत्तरैश्च त्रिशतैः श्वासैरेका तु नाडिका।

पञ्चभिर्नाडिकाभिश्च राशिरेकः प्रकीर्तितः॥

दिनं जानाति मेषान्तैरेवं द्वादश राशिभिः।

चर स्थिरो भयात्मानो भवेयुश्श्वास संयुतः॥

चरात्मकास्तु चत्वारो वामभागे व्यवस्थिताः।

स्थिरात्मकाश्च याम्येस्युरुभयत्रो भयात्मकः।

मेष कर्कटकश्चैव मकरश्चतुला तथा ॥

चत्वारो राशयस्त्वेते वामभागे व्यवस्थिताः ।
वृश्चिकश्च वृषः सिंहः कुम्भोदक्षिणभागतः ॥

कन्यामीनौ धनुर्युग्ममुभयत्र व्यवस्थिताः ।
भूतं भव्यं भविष्यं च शुभाशुभफलं तथा ॥

p. 13)

राशिष्वेतेषु भूतेषु विज्ञातव्यं ग्रहोदयात् ।
एकैकस्मिन् भवन्त्यत्र राशौ भूतानि पञ्च च ॥

वायुर्वह्निस्तथा भूमिरापः खमिति पञ्चवै ।
सर्वेषामपि राशीनां वायव्याद्यातु नाडिका ॥

द्वितीया नाडिका ज्ञेयी तृतीया पार्थिवामता ।
चतुर्थी वारुणी ज्ञेया व्योमाख्या पञ्चमी स्मृता ॥

नासे पार्श्वे वहेद्वायु वायंव्यां शेषुराशिषु ।
आग्नेयांशे चरत्यूर्ध्वे पार्थिवस्तम्बपार्श्वतः ॥

नासिकाया ह्यधो वायुर्वारिणांशे भवेत्तदा ।
नासा मध्ये भवेद्वायुर्व्योमांशे वहति स्फुटम् ॥

गुरुराणूश्च वायव्ये चरतोग्नौ भृगुः कुजः ।
भूम्यां बुधर वीज्ञेयौ जले चन्द्रशनैश्चरौ ॥

आकाशे विग्रहं विद्यादेवं सर्वेषु राशिषु ।
पूर्वोदिताश्च सर्वत्र सौम्याः पापास्त्वनन्तराः ॥

राहुः कुजौ रविस्सौरिरेते दक्षिणतः शुभाः ।
गुरुर्भृगुर्बुधश्चन्द्रस्सव्ये सौम्याः शुभावहाः ॥

पापाश्च शुभदास्सव्ये सौम्याः पापफला इमेः ।
प्रवेशे शुभदाः सव्ये निर्गमे चा शुभावहाः ॥

एवं राशिस्यभूतेषु ग्रहोदयवशाद्बुधः ।
शुभाशुभं सदा ज्ञात्वा पृष्टः सर्वं वदेत् ततः ॥

यत्र वायुः स्थितस्तत्र पृष्टश्चेत् सुखमेव तत् ।
यस्मिन् भागे मरुन्नास्ति तत्रस्थश्चेद्वृथा भवेत् ॥

अग्रस्थो यदि चेत्पृष्ठस्तस्य दक्षिणवत्फलम् ।
पृष्ठ स्थितस्य तस्यापि सव्यं तत्फलमुच्यते ।
भोजनं मैथुनं युद्धं फलसंग्रहणे तथा ।
कुर्यादेतानि कर्माणि वायौदक्षिणतः स्थिते ।
वामे च वायुवह्नौ च न कुर्याद्गमनं बुधः ।
गच्छेद्यदि तदा मोहाद्ब्रह्मा पिननिवर्तते ॥

पार्थिवे वारुणांशे च गमनं सुखसाधनम् ।
व्योमांशेऽपि न गन्तव्यं कदाचिदपि यत्नतः ॥

यदि सव्यादि राशौ तु वायूदय विपर्यये ।
चित्तक्षोभो भवेत् तेन कार्यहानिश्च जायते ॥

द्वितीये चैव राशौ तु यात्रा दुःखं भविष्यति ।
चतुर्थे बहुनाशं स्यात् पञ्चमे दिशिविग्रहः ॥

p. 14)

षष्ठे च प्रत्यवायं स्यात् सप्तमे रोगसंभवः ।
अष्टमे मरणं विद्यान्नवमे बुद्धिनाशनम् ॥

दशमे देहसन्तापः परस्मिन् मित्रनाशनम्।
दिवसस्यान्तराशौ च सर्वतो दुरितं भवेत्॥

राशिष्वेतेषु भूतानां स्थानेष्वपि विपर्यये।
सर्वभूतभयं विद्यात् राज्ञो च रुचिरं भवेत्॥

वायुचार वशादेव शुभाशुभ परीक्षणम्।
कुर्याद्दिने दिने विद्वानेवं सर्वेषु राशिषु।
अयुते च सहस्रं च षट्शतानि तथैव च॥

श्वासं प्रयान्ति निर्यान्ति जन्तूनां तु दिने दिने।
दिनानां पञ्चदशतः पक्षः पूर्वापराह्वयः।
ताभ्यामेको भवेन्मासो मासौद्वौ तु ऋतुर्भवेत्॥

ऋतुभिश्च त्रिभिर्विद्यात् अयनं तद्द्वयं समाः।
आयुरब्दशतं प्रोक्तं तन्न्यूनं श्वासविप्लवात्॥

यावत्कालं तु यस्या युस्तत्तच्छ्वास प्रमाणकम्।
श्वास काल बलादेव मृत्युकालः परीक्षताम्।
वत्सरस्यादि काले तु राज्ञाने चोत्तरायणे।

अनन्तरं बहिर्वायुर्दक्षिणे पञ्चनाडिकाः ॥

ततः सव्ये तथा पञ्चशतायुश्चेदयं भवेत् ।
घटिका षड्वसेद्यस्य तस्माशीतिरितीरितम् ॥

घटिका सप्तयस्यस्युर्द्विषष्ट्यायुस्स विन्दति ।

घटिकाष्टौ यदि चरेत् पञ्चाशत्तस्य निर्दिशेत् ।
घटिकानां नव चरेत् त्रयस्त्रिंशत्समावधि ॥

नाडिकानां दशवहेत् अष्टाविंशत्समाः स्मृताः ।
दिवसार्धं वहेद्वामे पञ्चविंशत् वत्सराः ॥

दिवायस्य चरेद्वायुः द्वादशाब्दंस जीवति ।
अहोरात्रं वहेद्वायुर्दशाब्दं तस्य जीवितम् ॥

दिनद्वयं वहेद्वायु रष्टवर्षाणि जीवति ।
दिन त्रयं वहेद्वायुः पञ्चवर्षाणि जीवति ।
चतुर्दिनं तु यस्य स्यात् चतुरब्दंस जीवति ।
पञ्चरात्रं वहेद्वायुस्तस्या युर्वत्सरत्रयम् ॥

दशरात्राद्विवर्षं स्यात् पक्षादायुश्च वत्सरम् ।
विंशद्दिनं वहेद्यस्य षाण्मासं तस्य जीवितम् ।
पञ्चविंशद्दिनादायुः त्रिमासं तस्य जीवितम् ॥

p. 15)

षड्विंशति दिनान्मासद्वयमायुः प्रकीर्तितम् ।
सप्तविंशद्दिनं वामे मासमेकं सजीवति ॥

अष्टाविंशतिरेतस्मिन् मासार्धं तस्य जीवितम् ।
एको न विंशदस्मिंश्चेद्दशाहतं तस्य जीवितम् ॥

त्रिंशद्दिनं वहेद्वामे पञ्चरात्रं स जीवति ।
द्वात्रिंशद्दिनस्त्रा?देकान्दिनमायुः प्रकीर्तितम् ॥

त्रयस्त्रिंशद्दिना त्रिंशद् घटिकाजीवनं भवेत् ।
आरभ्य चायनं वायोश्चरादूर्ध्वं फलंत्विदम् ।
आरभ्यायनकालान्तं भाग एव तु दक्षिणे ॥

यथोक्त सर्व संक्रान्तिमारभ्य दिनपञ्चकम् ।
वायुर्यस्य वहेद्याम्ये त्रिवर्षं तस्य जीवितम् ॥

चैत्रमासस्य संक्रान्तिमारभ्य दिनपञ्चकम्।

वायुर्यस्य वहेद्याम्ये सोऽष्टादश समावधि॥

एवमेव वहेद्यस्य सव्यभागे तु मारुतः।

नानाविध भयं तस्य मृत्योरन्यत्र विद्यते॥

यस्य कस्य च मासस्य शुक्लपक्षस्य चादितः।

परीक्षेत तदा मृत्युं वायुचारवशाद् बुधः॥

याम्ये यदि वहेद्वायुरेका होरात्रमेव च।

वर्षत्रयाद्भवेन्मृत्युः द्विदिने मृत्यु द्वयम्॥

त्रिदिने वत्सरामृत्युर्दशा हे मासतो मृतिः।

मासं त्वेकदिने मृत्युरेवं सौम्ये वहेद्यदि॥

रोगश्च धननाशश्च मनस्संताप विग्रहौ।

एवं चोभयतश्चारे यावत्तत्फलमुच्यते।

स्थिरे सप्तमराशौ तु सविता यदि चन्द्रमाः।

जन्मराशि स्थितस्तत्र सावित्रोयोग उच्यते।

अस्मिन् काले वहेद्वायुरेकत्रार्धदिनं यदि ॥

चतुर्दशाब्द पर्याप्तं तस्य मृत्युर्भविष्यति ।
सावित्रं योगमारभ्य दिनमेकं वहेद्यदि ।
द्वादशाब्दं च पर्याप्तं मृत्युं तस्य विनिर्दिशेत् ।
स याति नाशमुद्ध्वान्ते अहोरात्रे दशाब्दकम् ।
एवं दिनद्वयं यस्य तस्या युस्त्वष्टमाब्दकम् ॥

एवं दिनद्वयं यस्य षड्वर्षं तस्य जीवितम् ।
एवं चतुर्दिनं यस्य तस्यायुश्चतुराब्दिकम् ॥

एवं पञ्चदिनं यस्य त्रिवर्षं तस्य जीवितम् ।
एवं योगं समारभ्य वहे दष्ठदिनं तथा ॥



षट्त्रिं शदधिकं सार्धं द्विवर्षं तस्य जीवितम् ।
योगमेवं समारभ्य द्वादशाहं भवेद्यदि ॥

द्विसप्तत्रिदिनन्यून द्विवर्षं तस्य जीवितम् ।
योगमेवं समारब्य्य चतुर्दशदिनं भवेत् ।
चतुर्थीसात्मकं सार्धं वत्सरं तस्य जीवितम् ॥

एवं पञ्चदिनाहं चेत् वत्सरान्ते मृतिर्भवेत् ।
योगमेवं समारभ्यषोडशाहं वहेद्यदि ।
तमारभ्य वहेत्सप्तदशाहांत्वेक पार्श्वतः ॥

षट्त्रिंशद्दिनहीनाब्दे यमास्यं यातिनिश्चितम् ।
एकोन विशतिश्चेत् स्यात् अष्टमासान्मृतिर्भवेत् ॥

विंशद्दिनं वहेद्यस्य षण्मासान्मरणं भवेत् ।
स्यादेकविंशतिर्यस्य द्विमासान्मरणं भवेत् ॥

एकोनत्रिंशददह्नाश्चेत् दशाहं तस्य जीवितम् ।
त्रिंशद्दिनं वहेद्यस्य पञ्चाहान्मरणं भवेत् ।
एकत्रिंशद्दिनं यस्य त्रिरात्रान्मरणं भवेत् ॥

द्वात्रिंशद्दिनमेकं त्रिद्यत्र्यहान्मृत्यु रुदाहृतः ।
त्रयस्त्रिंशद्दिनं स्याच्चेदेकाहान्मरणं भवेत् ॥

सव्ये यदि वहेदेव मुक्त काले हि मारुतः ।
पुत्रमित्रकलत्रार्थ वृत्तिबंधुविनाशनम् ॥

अन्यैर्वापि नरश्चिह्नैर्बाह्यैरपि तथैव च।

कालाकाल परिज्ञानं कर्तव्यं तु विचक्षणैः॥ इति गोक्षः॥

काशीखण्डे –

सन्ध्ययोरूपविष्टोयः पयेद्धूम्रं स्वमूर्धजम्।

पञ्चाह्नां वै भवेत्तस्य मरणं वत्सर त्रयात्।

चतुर्दिनं यदि भवेत् मरणं वत्सरद्वयम्॥

त्रिदिनं च भवेद्यस्य मरणं चैक वत्सरम्।

श्रोत्रद्वयेऽपि हस्ताभ्यां पिहिते वै ध्वनिःश्रुतः॥

वह्नेरन्तः स्थितस्यापि नास्ति चेद्वत्सरान्मृतिः।

गतेरुभययोर्भागे युगपन्निर्गमेयदि।

ब्रह्मसूत्र विनाशो वा नाशस्तस्यापि वत्सरात्॥

स्थौलं चा कस्मिकं यस्य कार्यं चा कस्मिकं भवेत्।

अतिक्रोधोऽति रोगो वा नाशस्त स्थापि वत्सरात्।

विण्मूत्रं च क्षयं चैव युगपत्संभवन्ति चेत्॥

तन्मासे तत्तिथौ वर्षे मृत्युस्तस्योपविद्यते ।
गन्धर्वनगरं पश्येत् वृक्षाग्रे यदि कुत्रचित् ॥

तस्यापि वत्सरा दर्वाक् मृत्युना परिबाध्यते ॥

यदि वा कस्मिकं वापि स्वदेहं कृष्णपिंगलम् ।

p. 17)

वसेद्वर्षात्परं तस्य मरणं परिकीर्तितम् ॥

गृध्रैश्च काक गोमायुखरोष्ट्रैस्सैरिभैस्तथा ।
शरीरं भक्षितं यस्य मरणं तस्य वत्सरात् ॥

स्वप्ने वापिभवेदेतैर्भक्षितोदेह आतुरः ।
अन्यैर्वावत्सरान्मृत्यु भविष्यति न संशयः ॥

आकाशात्पतितं भानुमिन्दुं भानुविवर्जितम् ।
यः पश्येन्मृत्युरेवस्या दर्वागब्दार्धवत्सरात् ॥

नक्षत्रमञ्जनाभं स्याच्छुष्के यस्योष्ठतालुके ।

तस्याप्यब्दार्धं भाविस्यान्मृत्युरस्य न संशयः ॥

अंगुलद्वयमध्येन यत्र दृश्येत चन्द्रमाः ।
तयांगुलत्रयं पश्येद्यस्योप्यब्दार्धजीवनम् ॥

वक्रीभूतं स्वमात्मानं छिद्रंवाथ सहस्रशः ।
तेषु चादृश्यमानेषु षण्मासान्मरणं भवेत् ॥

काकं गृध्रं विलीनाङ्गौ रक्तगन्धानुलेपनः ।
तैलात्यक्ताति भीतश्चानुष्णीषोमुक्त वस्त्रभाक् ॥

तस्य मृत्युर्भवेदर्वाक् अर्धाब्दान्नात्र संशयः ।
पङ्के वा पांसुलेवाथ यस्य खण्ड पदं भवेत् ॥

गच्छन्तं गगनं पश्येत् कृकलासंत्रिरूपिणम् ।
खद्योतं च न पश्येत मंगुल्या पीड्यमानयोः ॥

नेत्रयोस्तस्य वा मृत्युरर्धाब्दान्नात्र संशयः ।
लोहदण्डधरं कृष्णं ह्रस्वं कृष्ण परिच्छदम् ॥

स्वप्ने वा पश्यतस्तस्य त्रिमासान्मरणं ध्रुवम्।
इन्द्रियाणि न गृह्णन्ति स्वकीय विषयाण्यदि।
मासान्तं मरणं तस्य भविष्यति न संशयः॥

स्वलं नं चानिरोधेन प्रलापं ज्वलितं शिरः।
रात्राविन्द्रधनुर्विद्युदमेघेऽपि च दर्पणे॥

छाया शिरोदर्शनं च पावकं नीलवर्णकम्।
मयूरवच्चयः पश्येन्मैथुनं काकहंसयोः॥

अतिशीतोष्णयो रल्पनेतेस्युर्मास जीविनः।
स्नातस्य हृत्प्रदेशेषु छिद्रं भूमौ रवौ विधौ॥

स्वच्छायायां तु मासार्धं जीवितं प्रवदन्तिते॥

सूर्याच्छीतं हिमात्तापं तौवाकान्ति विवर्जितौ।
अम्बरं पीतवर्णं वा पक्षान्मृत्युर्न संशयः।
यस्य चाकस्मिकीज्वाला ज्वलन्ती जायते तले॥

ऋक्षान् सप्तऋषींश्चैव स्वाग्रेयस्तु न पश्यति।

उष्टं यस्य शरीरार्धं शीतलं मण्डलं च दृक् ॥

p. 18)

विवर्णोवक्र वासोवा सप्तरात्रात् प्रणश्यति ।

अकस्माच्छव गंधं च स्वदेहे वा विवाससीम् ॥

स्वप्ने स्त्रियं वा स्वं वापि दक्षिणेन प्रदक्षिणौ ।

स्वान्नं परेण भुक्तं वां खेवावृषभवाहनम् ॥

अन्यं वा दण्डिनं पश्येत्त्रिरात्रान्मरणं भवेत् ॥

प्रकीर्णकेशां नग्नां वा स्त्रियं वा पाशधारिणम् ।

पश्येद् भोजनकाले यः सोऽपि सद्यो मरिष्यति ॥

भुज्यमानं तदात्मानं गृहे(ले)ण भुज्यते ।

यस्य तस्यापि मृत्युः स्यात् सद्य एव न संशयः ॥

रागाभिभूतमर्त्यानामौषधं यस्य रक्तवत् ।

दृश्यते मृत्युरेव स्यात् सद्य एव न संशयः ॥

इति काल गतिं ज्ञात्वा बाह्याभ्यन्तर लक्षणैः ।

कुर्यु निश्रेयसे यत्नं तावदेव परीक्ष्य वै ॥

एवं सु बुद्धिमाञ्ज्ञात्वा वञ्चयेत् कालमागतम् ।
प्राणायामविधानोऽसौ योगाभ्यासेन साधकः ॥

॥ इति योग शास्त्रसंग्रहे द्वितीयोऽध्यायः ॥

अथ नाड्यः पञ्चदश दश वायुक्रमं ब्रुवे ।
सुषुम्ना भोगदाहस्ति जिह्वावृषा यशस्विनी ॥

विश्वोदरापिङ्गलैला वारुणीञ्च पयस्विनी ।
अलंबुसा कुहुश्चैवश्चाथ गान्धारी च पयस्विनी ।
शङ्खिनीत्युदिता मुख्या सिराः पञ्चदशप्रिये ॥ इति

योगसारमञ्जर्याम् । भावोपनिषदि ।

अलंबुसा कुहुर्विश्वोदरी वारुणाहस्तिनी हास्तिजिह्वा
यशोवती गान्धारी पूषाशंखिनी सरस्वती इला पिङ्गला
सुषुम्ना चेति चतुर्दश नाड्यः इति ।
तारचिन्तामणौ चैव नाड्यः पञ्चदश स्मृताः ॥

याज्ञवल्क्येन संप्रोक्ता नाड्यश्च चतुर्दश ।
चन्द्रज्ञानेन संप्रोक्ता नाड्यः षोडश स्मृताः ॥

राशिमान प्रकारेऽपि याज्ञ वल्क्येन चोदिताः ।

सर्वसारोपनिषदि योगसारमञ्जर्यां च -

प्राणापान समानाश्च व्यानश्चोदान एव च ।
नाग कूर्मौ च कृकरो देवदत्तो धनञ्जयः ॥

वैरंभो मुक्तदायश्च प्रभंजन समीरणौ ।
अन्तर्यामी महाप्राणाश्चोक्ता पञ्चदशानिलाः ।

p. 19)

भावोपनिषदि -

पाणोपान व्यानोदान समान कूर्मनाग कृकलदेवदत्त धनञ्जया इति ॥

प्रणवचिन्तामणौ -

द्विसप्ततिसहस्त्राख्याः सिरास्सन्ति जगत्प्रिये।
शरीरे पवना यामात् सम्यक् शुद्धा भवन्तिताः॥

दुरिकोपनिषदि च -

द्विसप्तति सहस्त्राणि नाड्यः स्युर्वायुगोचराः॥ इति।

ईश्वरः -

द्विसप्तति सहस्त्राणि नाडिभिर्देह उच्यते।
संवृता रज्जुभिश्शिक्यमिव देहं समाश्रिताः॥

योगसारमञ्जर्याम्

शिभाकन्दादधोर्ध्वास्याद्व्यष्टान्ताश्चोर्ध्व गामिनः।

काश्चिद्दीर्घाश्च ह्रस्वाश्च तद्ध्रस्वास्सर्व तस्तताः।
स्वाधिष्ठाने सहस्त्राणि नाड्यःसु समुत्थिताः॥

मणिपूरे द्विसहस्त्राणि नाड्यः सन्ति संवृताः।

अनाहते द्विसहस्राणि नाड्यः सम्यगुद्भवाः ॥

विशुद्धिदेशे साहस्र नाड्यः संवृताः स्मृताः ।
दशसाहस्रमाज्ञाब्ज संभूता नाडि सन्ततिः ॥

शिरोदेशे समुद्भूता दशसाहस्र नाड्यः ।
व्यष्टान्ताश्चोर्ध्वगामिन्यः सिराः कन्दोद्भवा यथा ॥

अप्रधानाः समावृत्य पश्चाद्भागं समाश्रिताः ।
द्विसप्तति सहस्राश्च नाडीनां मध्यमे तनोः ॥

द्विचतुष्षष्टि नाड्यस्ताः प्रधानाः सर्वदेहिनाम् ।
तासां मध्ये मुख्यतराः सिराः पञ्चदश स्मृताः ॥

ईश्वरः -

काश्चिन्नाडी बहिर्व्याप्ता काचिद्धृदय मध्यगा ।
यया तत्पुष्टिमाप्नोति केदार इव कुल्यगा ।
मथुरा रसजैर्धातुभिः पुष्ट्यते क्रमात् ॥

गान्धारी नामया जिह्वा पिङ्गला पार्श्ववर्तिनी ।
उन्मुखी ब्रह्मरन्ध्रान्तं बहुशाखासमुद्गता ॥

छुरिकोपनिषदि -

इडा तिष्ठति वामेन पिङ्गला दक्षिणेन तु ।
इडायाः पार्श्वगानाडी संप्रोक्ता हस्ति जिह्विका ॥

बहुशाखा बहुस्कन्धा मूलाग्रान्तमधोमुखी ॥

सपूषालंबुसाचोभे पार्श्वयोरूर्ध्वगा स्मृताः ।
कराग्रांगुली पर्यन्तं बहुशाखास्समुद्भवाः ॥

यशस्विनी च दक्षस्य पादांगुष्ठाभमिष्यति ।
बहुशाखा भवेदेषा मूलाधाराद्धोमुखी ।
शंखिनी या महानाडी सा वामे चोन्मुखा स्मृता ॥

शाखोपशाखाभेदेन पादंगुल्यन्तमिष्यते ।
कुह्वरिति च या नाडी साधश्चोर्ध्वा च सुस्थिता ॥

p. 20)

बहुशाखा विभेदेन देहं व्याप्य व्यवस्थिता ।
सरस्वती समूलोत्था जिह्वाग्रान्तं व्यवस्थिता ॥

जया च विजया चोभे नाभिमूल समुद्भवे ।
भ्रूयुग्मनेत्र कर्णान्तं कपोलौ व्याप्यसंस्थिते ॥

सुषुम्ना पार्श्वयोर्जातात्विडा चैव तु पिङ्गला ।
वामदक्षिण नासान्तः शरीरेऽस्मिन् व्यवस्थिते ॥

तयोर्मध्ये परं स्थानं यस्तं वेद स वेदवित् ॥
देहेऽस्मिन् ब्यंगुलाधारे समुद्यन्ति समीरणा ॥

द्विसप्तति सहस्रेषु विचरन्ति हि सर्वदा ॥

याज्ञवल्क्यः –

देहमध्ये शिखिस्थानं तप्त जाम्बूनद प्रभम् ।
त्रिकोणमनुजानी हि चतुरश्रं चतुष्पदम् ॥

मण्डलान्तपतंगानां स्थानं विद्धिसुशोभने ।

पतंगानां प्राणादि वायूनामिति। उत्तर गीतायाम्।

द्विसप्तति सहस्राणि नाड्यः स्युर्वायु गोचराः॥ इति।

योगसारमंजर्याम्। नाडीभ्यामथ सभ्येति प्राणतो द्विषडंगुले।

अहोरात्रा विनेतृभ्यामूर्ध्वाधोवृत्तिरुच्यते॥

वामदक्षिणनाडीभ्यां स्यादुग्रहनामकम्।

याश्च नाड्यश्शरीरेऽस्मिन् समावृत्यव्यवस्थिताः॥

तासु सर्वासु देवेशि विचरन्तिस्मवायवः।

तेषां मुख्यतरः प्राणः कन्दस्याधः प्रतिष्ठितः॥

आस्य नासिकायोर्मध्ये हृदये जानुमण्डले।

पादांगुष्ठेषु च प्राणः एतेष्वपि च तिष्ठति॥

जंघोदरे कटिर्देशेष्वपानस्थानमीरितम्।

घ्रोणाश्रोत्राक्षिमध्यस्या भ्रूकुटयंगुलयोर्द्वयोः॥

उदानः संधिदेशस्यः पादयोर्हस्ति योरपि।

सर्वदेहं समानेन व्याप्य तिष्ठति सर्वदा॥

नागादि वायवः पञ्चत्वगस्थ्यादिषु संस्थिताः ।
इन्द्रनील प्रतीकाशं प्राणरूपं प्रकीर्तितम् ॥

नित्यमापूरयत्येषां प्राणानामुरसिस्थिताः ॥

निश्वासोच्छ्वासपूर्णस्तु प्राणोजीवसमावृतः ।
प्रयाणे कुरुते यस्मात् तस्मात् प्राणः प्रकीर्तितः ॥

आस्य नासिकयोर्मध्ये भ्रूमध्येनाभिमण्डले ।
प्राणालयमिति प्राहुः पादांगुष्ठे नखेऽपि च ॥

तुन्दस्थं जलमन्तं च रसं चैव समीकृतं ।
तुन्द मध्यगतः प्राणःस्तन्न कुर्यात् पृथक् पृथक् ॥

p. 21)

आदिनाथः -

पुनरग्नौ जलं स्थाप्य चान्नादी(द्)नि जलोपरि ।
स्वयं त्वपानं संप्राप्य तेनैव सह वेगवान् ॥

प्रयाति ज्वलनं तत्र देहे मध्यगतः पुनः।
तत्तेजो ज्वलते तुन्दस्सकले देह मध्यमे॥

ज्वालाभिर्ज्वलनस्तत्र प्रेरितः प्राणवायुना।
जलमत्युष्णमकरोत् कोष्ठमध्यगतं तथा॥

अन्नं व्यंजनसंयुक्तं जलोपरिसमर्पितम्।
ततः सपक्वमकरोत् वह्नि सन्तप्तवारिणा॥

स्वेदमूत्रे जलस्यातां वीर्यंरूपं रसं भवेत्।
अन्नंपुरीषं स्यादेवं प्राणः कुर्यात् पृथक् पृथक्॥

अपान्नयत्यपानोऽयमाहारञ्चमलायितम्।
शुक्लं मूत्रं तथोत्सर्गं अपानस्तेन मारुतः॥

इन्द्रकोपप्रतीकाशः सर्वैजलदसन्निभः।
स च मेढ्रौ च पायौचोरुमक्षण जानुषु॥

जंघोदरे च कट्यां च नाभिमूले च तिष्ठति।
व्यानोऽपि व्यान इत्यंगानुदानोपिप्रकोपनः॥

महाजाम्बूनदप्रख्यो व्यापारोदानकारणम् ।
संचापिकण्ठयोर्मध्ये कट्यां गुल्फद्वयोरपि ॥

घ्राणे चापिस्फिचोर्देशे तिष्ठत्यत्र निरंकुशः ।
स्पन्दयत्यधरं वक्रं गोत्रनेत्र प्रकोपनम् ॥

उद्वे जयन्ति कर्माणि ह्युदानो नाम मारुतः ।
विद्युत्पावक वर्णा स्यात् उदानासनकारकः ।
पादयोर्हस्तयोश्चापि स च सन्धिषु वर्तते ॥

पीतं भक्षितमाघ्रातं रक्तपित्तकफात्मकम् ।
समानयति गात्राणि समानो नाम मारुतः ॥

गोक्षीरधवलाकारः सर्वदेहे व्यवस्थितः ।
उद्गारो नाग इत्युक्तो नील जीमूत सन्निभः ।
कृकरः क्षुधितश्चैव जपाकुसुमसन्निभः ।
धनंजयः स्थितः पोषे महाराजतवर्णकः ॥ इति ।

प्रणवचिन्तामणौ । प्राण नागौ द्वयोर्वर्णौ राजावर्तसमप्रभः ।

अपानकूर्मौ सदृशौ इन्द्रनील समप्रभौ ॥

समानकृकरौ व्योम सदृशौ विश्वमंगलौ ।
शुद्ध स्फटिकसंकाशौ समौ व्यानदनंजयौ ।
उदान देवदत्तौ तु पद्मकिञ्जल्कसन्निभौ ।

नागान्तर्यामिणौ शुद्ध विद्युद्वर्णौ समीरितौ ।
एतौ मुख्यौ महाप्राणौ तौ वैरंभः प्रभञ्जनौ ॥

p. 22)

श्यामलेन्द्र मणिप्रख्यौ वाय्वाकाराः प्रकीर्तिताः ।
इत्वा प्राणौ समारुह्य शरीरे व्याप्यसञ्चरेत् ॥

समान वायुमारुह्य वाश्रणी देह दाढर्यकृत् ।
अन्तर्यामिणमारुह्य तनुमाप्नोत्यलंबुषा ॥

पिङ्गलानाम पवनं पूषाकूर्मसमीरणौ ।
हस्ति जिह्वा देवदत्तौ कृकरं च समीरणौ ॥

यशस्विनी धनंजयौ सुषुम्नाथ प्रभंजनौ ।
वैरंभ शंखिनी चाथ मुक्तिवायुं सरस्वती ॥

विश्वोदरा महाप्राणं समारुह्य प्रवर्तते ।
प्राणादि वायवः पञ्चपुरुषाः परिकीर्तिताः ।
नागादि वायवः पञ्चस्त्रीरूपाः परिकीर्तिताः ॥

धनञ्जयादिकाः पञ्चवायवस्तु नपुंसकाः ।
गुदे त्वपान वायुश्च मलमूत्रविसर्जकः ॥

नाभौ समानवायुश्च क्षुत्पिपासादि कारकः ।
उदानः कण्ठदेशे तु मनोग्रसनकारकः ॥

व्यानवायुश्च सर्वांगं बलस्वरकरः परम् ।
हिक्कोद्गारकरोनागः कूर्मो मीलनकारकः ॥

कुत्कारः कृकरो देवदत्तो जृम्भणकारकः ।
धनञ्जयस्थाल्यकरो वैरंभः क्रोधकारकः ॥

करोति मुक्तिपवनः पाञ्चभौतिकविग्रहः ।
अन्तर्यामि शरीरस्य प्रपञ्च ज्ञानकारकः ॥

ज्ञानवैराग्यविज्ञानं महाप्राणः करोत्यलम् ।
देहत्यागकरश्शीघ्रं प्रभञ्जनसमीरणः ।
एवं प्राणस्वरूपाणि याज्ञा योगं समभ्यसेत् ॥

इति योगशास्त्रे प्राणनाडी निरूपणं नाम तृतीयोध्यायः ॥

प्राणायामः ॥

अगस्त्यः

प्राणायामविशुद्धात्मा यद्यत्कर्म करोति हि ।
तत्तत्फलत्यसन्देहस्स्त्व प्रयत्नेन वा कृतम् ।
प्राणायामं विनायस्य जपहोमार्चनादिकम् ॥

न फलत्येव तत्सर्वं प्रयत्नेनाप्यनुष्ठितम् ।
प्राणायामैर्विनायद्यत् कृतं कर्मनिरर्थकम् ॥

अतो यत्नेन कर्तव्यं प्राणायामश्शुभार्थिभिः ॥

अमृतबिन्दूपनिषदि –

यथापर्वतयात्रानां दण्यते यमनीबलान्।

तथेन्द्रियकृतान् दोषान् दह्यते प्राणनिग्रहात्॥

योगसारमंजर्याम् नाजीर्णेम्ल रसोद्गारे न च विण्मूत्र धारणे।

p. 23)

न छर्द्यां नेतिसारे च नातिभूतसमन्विते।

योग्ये गुरु प्रकार्ये वा न चापिक्षुत्पिपासितः॥

प्राणायामं न कुर्वीत कुर्याच्चेद्व्याधि भाग्भवेत्॥

गोरक्षः

यथा तोयार्थिनस्तोयं यन्त्रानान्वादिभिश्शनैः।

न पिवेयुस्तदा वायुं क्रमाद्योगीजिजश्रमः॥

ध्याननादबिन्दूपनिषदि-यथैवोत्पलनान्वेन तोयमाकर्षयेन्नरः।

तथैवे षत्कर्षयेद्वायुं योगी योगपदे स्थितः॥

योगसारमञ्जर्याम् -

मात्रामात्रार्धकंचापि वृद्धिं कुर्याद्दिने दिने ।
यद्यत्सुकरतामेति तत्तथ्यत्तवोपरि व्रजेत् ॥

वासिष्ठे

यथारण्ये गजेन्द्रस्तु पुरुषैरप्रयोगतः ।
नाशयेद्धार्यमाणस्तु तथावायुरबुद्धितः ।
स चैव तु यथाहस्ती प्रयोगाद्दम्यते शनैः ॥

निर्दोषश्च भवेत्कालाद् नश्यः सौम्यश्च जायते ।
शनैश्शनैस्तथाप्राणः प्रयोगाद् नश्यतां गतः ॥

स्वेच्छया धार्यते देहे न तु दोषं करोति यः ।
यथा प्रचोदितो हस्ती परसैन्यं विनाशयेत् ।
रक्षते च प्रयोक्तारं मारूढस्तु बलेन सः ॥

तथा शरीरे संरूढः प्राणस्सम्यक् प्रचोदितः ।
नाशयेत् सर्वपापानि तच्छरीरं च रक्षति ॥ इति ।

सूत संहितायाम्- सर्वं सम्यग्विदित्वाथ विषुसंक्रान्ति पूर्वकम्।

दक्षिणायनमभ्यस्य ग्रहणं चोत्तरायणम्।

पुरस्कृत्य तथाच्छर्दि विच?दारणविवर्जितम्।

प्रेतकत्वं सूतकत्वं संश्रयन् शुद्धमन्वहम्॥

ज्ञात्वा समभ्यसेन्नित्यं कुम्भकं पूर्णकुम्भवत्।

सन्ध्यायामुच्चरेत् प्राज्ञः सूतकं प्रेतकं विना।

नैवोच्चरेदहोरात्रं सन्ध्याकालेषु षट्स्वपि॥

समुच्चरेत् प्रयत्नेन कुम्भकं पूर्णकं भवेत्।

सूतक प्रेतके भूते जप्त्वा निष्फलतां व्रजेत्॥

तस्मात् सर्व प्रयत्नेन पूतकेषु समभ्यसेत्॥

इडायां पिङ्गलस्थानं यथा प्राणस्समांगतः।

सोमग्रहणमित्युक्तं तदा तत्व विदांवरैः॥

यदा पिङ्गलया प्राणः कुण्डली स्थानमागतः।

सूर्यग्रहणमित्युक्तं तदातत्व विदांवरैः॥

पिङ्गलायामिडायां तु द्वयोः संक्रमणं तु यत्।

तदुत्तरायणं प्रोक्तं पिङ्गलायामिति श्रुतिः॥

इडायां पिङ्गलायां तु वायोऽसंक्रमणं तु यत्।

p. 24)

दक्षिणायनमित्युक्तं मुनिभिर्वेदपारगैः।

इडा पिङ्गलयोस्संधिं यदाप्राणः समागतः॥

संवत्सरं तदा प्रोक्तं देहे देह विदांवर॥

मूलाधारं यदा प्राणः प्रविष्टः पण्डितोत्तम।

तदाद्यं विषुमं प्रोक्तं तापसैस्तापसोत्तमैः॥

प्राणसंज्ञं मुनिश्रेष्ठमूर्धानं प्रविशेद्यदा।

तदन्यं विषुवं प्रोक्तं धार्मिकैर्वस्तु चिन्तकैः॥

निश्वासो च्छ्वसनं सर्वं मासानां संक्रमो भवेत्॥ इति।

दत्तात्रेयः। किञ्चिद्विरेच्यं संकुञ्च्य पुनस्तद्वत्पुनस्तथा॥

एतच्छर्दिरिति प्रोक्तं पूर्वमभ्यास सूरिभिः।
प्रेतकत्वं सूतकत्वं वामदक्षिणयोर्विदुः॥

षट्सन्धिः। पृथिव्यप्तेजो वाय्वाकाशादि पञ्चसन्धिः।
रेचकान्तं पूरकादौमिलित्वा षट्। तेषां स्वरूपाणिपूर्वमुक्तम्।
पराशरः। संकुञ्च्य मध्य तर्जन्यावंगुष्ठानामिकादिभिः।
सम्यङ्नासाग्रबध्यविपश्चिन्नियमेदसून्।
अमृतबिन्दूषनिषदि- नासिकापुटमंगुल्या पिधायैकेन मारुतम्।

पिबेन्मन्दं यथैवोक्तं योगसिद्ध्यर्थमात्मवान्।
कनिष्ठानामिकांगुष्ठैर्यन्नासा पुटबन्धनम्॥

प्राणायामः स विज्ञेयस्तर्जनीभ्यां विना दृढम्॥

शिवः -

व्यासश्च।

पञ्चांगुलीभिर्नासाग्रं पीडनं प्रणवैर्युतम्।
मुद्रेयं सर्वपापघ्नी वानप्रस्थगृहस्थयोः।

नासिकापुटमंगुल्या पीड्यैकामपरेण च ॥

औदरं रेचयेद्वायुं रेचकस्समुदाहृतः ।
वाह्येन वायुना देहं धृतिवत् पूरये च्छुभे ॥

पूरणात् पूरकं प्रोक्तं कुम्भकं च तथा विदुः ॥

मार्कण्डेयः

प्राणानामुपसंरोद्यः प्राणायाम इति स्मृतः ॥

पतञ्जलिः ।

व्यासप्रश्वासयोर्गतिविच्छेदः प्राणायामः ॥

व्यासः ।

बाह्यस्य वायो राचमनं श्वासः ।
कोष्ठस्य वायोर्निस्सरणः प्रश्वासः ॥

तयोर्गतिविच्छेदः प्राणायाम इति ।

संवर्तकः । सधूमं च विधूमं च सगर्भं च विगर्भकम् ॥

स लक्ष्यञ्च विलक्ष्यञ्च प्राणायामस्तु षड्विधः ।

केवलश्वासेन प्राणायामः सधूमः ।

हंसवर्णद्वयेन प्रणवेन वा विधूमः ॥

p. 25)

हंसस्वरूपानुसंधानेन प्रणवस्वरूपानुसंधानेन वापि गर्भः ।

मन्त्रदेवता ध्यानपूर्वकं सगर्भः । केवलकुम्भके सुषुम्नायां

प्राणसंयमनमेव सलक्ष्यः । सुषुम्नाजिगिमिषामात्रमेव विलक्ष्यः । इति ।

आदित्यपुराणे

रेचकः शून्यकश्चैव पूरकः कुम्भकस्तथा ।

एवं चतुर्विधः प्रोक्तः प्राणायामोऽत्रसूरिभिः ॥

अमृतनादबिन्दूपनिषदि

उत्क्षिप्यवायुमाकाशे शून्यं कृत्वा निरात्मकः ।

शून्यभावेन युञ्जीयाद् रेचकस्येति लक्षणम् ।

श्रीदक्षिणामूर्तिः।

नासिकावामरन्ध्रेण पूर्वमापूरयेद्बुधः।
तत्रैकादशकृत्वस्तु मन्त्रं ध्यायेदतः परम्॥

तेनैव विसृजेत् पश्चाद् दशवारं विभोस्तवम्॥

नववारं जपेन्मन्त्रं मित्थमेव च साधयेत्॥ इति।

औदरं रेचयेद् वायुं चतुर्भिश्च शनैः शनैः।
तदर्धमिडया मन्दं मन्दं संपूरयेद्बुधः॥

पुनर्विरेचयेदेवं पुनरापूरयेद्बुधः॥ इति।

योगसारमंजर्याम्

आपूर्य वा मया नाड्या मुञ्चेद्दक्षिणया बहिः।
पुनर्दक्षिणया पूर्य बहुशो वा मया त्यजेत्।
एवं विशुद्धनाडीनां कुम्भकानां शतंशतम्॥

कुर्याद्बहिर्षु हंसेन सहजेनान्तर स्थितः॥ इति।

दत्तात्रेयः।

पूरकात् द्विगुणं सम्यक् रेचकस्य विधीयते॥

रेचकाद् द्विगुणं कालं कुम्भकस्य प्रशस्यते॥ इति।

पाराशरः-

इडां षोडशभिः पूर्य चतुष्षष्ट्या च पूरयेत्।
द्वात्रिंशाद्रेचयेत् सूर्यात् प्रणवेन समभ्यसेत्॥

योगसारमंजर्याम्

लघुद्वादशमात्रस्तु मध्यमो द्विगुणः स्मृतः।
त्रिगुणं चोत्तमं प्रोक्तं षट्त्रिंशत्तालमात्रकम्॥ इति।

विश्वामित्रः

पूरके त्रयमुच्चार्य कुम्भके न चतुष्टयम् ।
रेचके त्रयमुच्चार्य प्राणायामो विधीयते ॥

प्रणवचिन्तामणौ

अकारंपूरके न्यस्य चोकारं कुम्भके न्यसेत् ।
मकारं रेचके तद्वत् नादो ध्यानेन शस्यते ॥ इति ।

हंसंहंसेति संपूर्य सोऽहं बीजेन कुम्भयेत् ।
रेचयेद्धंसमन्त्रेण प्राणायामस्य लक्षणम् ॥

याज्ञवल्क्यः -

सव्याहृतीं सप्रणवां गायत्रीं शिरसा सह ।
त्रिः पठेदायतप्राणः प्राणायामस्स उच्यते ॥

भारद्वाजः -

सप्तव्याहृति पूर्वान्तामाद्यन्ते प्रणवां हृदा ।

जपेद् द्वादश गायत्रीमेकोयं प्राणसंयमः ॥

p. 26)

अशक्तस्यायमुदितः प्राणायामो द्विजन्मनः ॥

बालस्य चेतरेषां तु प्रशस्तः प्रथमोदितः ॥

विश्वामित्रः ।

आसने सम्यगासीनो वामेनापूर्यचोदरम् ।
कुम्भकेन त्रिरावृत्य दक्षिणेन तु रेचयेत् ॥

याज्ञवल्क्यः ।

पूरणो द्वादशोंकारः कुम्भके षोडशं ध्रुवम् ।
रेचके दश चोंकारः प्राणायामः स उच्यते ॥

उत्तमं नवधा प्रोक्तं मध्यमृतु संख्यया ॥

अधमं त्रयमित्याहुः प्राणायामेविधीयते ।
आदौ कुम्भकमाश्रित्य रेचपूरकवर्जितः ।

व्याहृत्यादि शिरोन्तं च प्राणायामस्तु कुम्भकः ॥

भरद्वाजः-

सव्याहृतिः सप्रणवः प्राणायामस्तु षोडश ।
अपि भ्रूणहणंमासात् पुनात्यंहरहः कृतम् ॥

बृहस्पतिः । संवर्तश्च-

मानसं वाचिकं पापं कायकर्मादिभिः कृतम् ।
तत्सर्वं नश्यते क्षिप्रं प्राणायाम त्रये कृते ।
पूरके विष्णु सायुज्यं कुम्भके ब्रह्मणोन्तिकम् ॥

रेचकेन तृतीयेन प्राप्नुयादैश्वरं पदम् ॥

योगसारमंजर्याम् -

पूरकं च भवेद्ब्रह्मा कुम्भको विष्णुरुच्यते ।
रेचकस्तु तथा रुद्रो त्राटकञ्च निरञ्जनः ॥

ह्रस्वदीर्घप्लुतैर्युक्तं रेचकपूरक कुंभकैः।
आवर्तयेद् यथैवोक्तं प्राणायामस्स उच्यते॥

अकारादि त्रिवर्णेन हंसमन्त्रेण वा यतिः।
प्राणायामं प्रकुर्वीत प्रणवेन प्रयत्नतः॥

बृहस्पतिः -

बद्धासनो नियम्यासून स्मृत्वा चर्षादिकं पुनः।
न निमीलित दृङ्मौनी प्राणायामं समभ्यसेत्॥

योगसारमंजर्याम् -

बिन्दुजीवजलाक्रान्तं वर्तुलं चन्द्रमण्डलम्।
बिन्दुप्राणा निलाक्रान्तं त्रिकोणं वह्निमण्डलम्।

बिन्दु। प्रणवः। जीवः। सकारः। जलं वकारः। तैः समाक्रान्तं वर्तुलं
चन्द्रमण्डलमिडानाडीति ज्ञेयम्।
बिन्दु प्रणवः प्राणः यकारः अनलः रेफः तैः क्रान्तं त्रिकोणं वह्नि
मण्डलं पिङ्गला नाडीति ज्ञेयम्।

बिन्दु चैतन्यसंयुक्तं वर्तुलं सूर्यमण्डलम्।
बिन्दुना प्रणवेन चैतन्येन ह्रींकारेण संयुक्तं वतुलं
सूर्यमण्डलं सुषुम्ना नाडीति ज्ञेया॥

एवं नाडीनां स्वरूपं ज्ञात्वा पूरकादिकमारभेत्।

p. 27)

अयं भावः -

ओं सं वं इति पूरयेत्। ओं सं ह्रीं इति कुम्भयेत्। ओं यं रमिति रेचयेदिति।

आपूर्य वामनाड्यामुञ्चेद्दक्षिण्या बहिः।
पुनर्दक्षिणयापूर्य बहुशो वामया त्यजेत्॥

एवं विशुद्धनाडीनां कुम्भकानां शतम् शतम्॥

कुर्याद्बहिर्ष्ठहंसेन सहजेनान्तर स्थितः।
स पश्यति जगत्कीर्णं तेजसां परमाणुभिः॥

प्रणव चिन्तामणौ -

सव्यापसव्यमार्गाभ्यामभ्यसेत् पवनं क्रमात्॥
प्रत्यहं नियमेनैव सम्यक्काल चतुष्टयम्॥

त्रिचतुर्वत्सरं चाथ त्रिचतुर्मासमेव वा॥

षड्वर्षं वाथ षण्मासमभ्यसेद्यदि योगिराट्।
नाडी शुद्धिमवाप्नोति पृथक् चिह्नोपलक्षितम्॥ इति।

योगसारमंजर्याम् -

लघुत्वमारोग्यमलोलुपत्वं
तंनु प्रसन्नत्वमुदग्रकान्तिम्।
हृद्वह्नि वृद्धिश्च कृशत्यमार्ये
नादस्फुटत्वं च तनोत्यवश्यम्॥

हठयोगे -

पूरकान्ते तु कर्तव्यो बन्धो जालन्धराभिधः।
कुम्भकान्ते रेचकादौ कर्तव्यस्तूड्डियाणकः॥

सूर्यभेदी मनुझ्झायी तथा चीत्कार शीतली ।
भस्त्रिका भ्रमरी मूर्छा कुम्भकं चाष्टभेदतः ॥

कुम्भके न सुषुम्नान्तर्गत सूर्यमण्डल भेदात् सूर्यभेदिनी ।
कुम्भकेनाधस्तात् प्रणवरूपं मनुं जनयतीति मनुज्जननी ॥

अपाने सन्निरुध्यासून् कण्ठे बन्धं समाचरेत् ।
येन तारान् प्रसूयन्ते जननी तेन कुम्भकम् ॥

वर्णान् वमति तारोऽयं चीत्कारी तेन कुम्भकः ।
येन चन्द्रात् सुधावृष्टिः स्राव्यते सर्वनादिषु ॥

शीतली नाम तेनैव दुःखधर्मविनाशिनी ।
भस्त्रिकापवनो यद्वत् धातूनां मलदाहकः ।
तद्वत्पापविदाहित्वात् भस्त्रिकेति प्रचक्षते ॥

भस्त्रिकावत् प्राणधारकत्वात् भस्त्रिकेति वा ।
भ्रमणादि भ्रामरी प्रोक्तं तत्तत्स्थानानुसारतः ॥

कुम्भको नाम मुनिभिः सर्वसिद्धिफलप्रदः ।
येन मूर्छा भवेद् वायोस्तेन मूर्छेति गीयते ॥

कुम्भकं नाम योगीन्द्रैः पूर्वमभ्यस्तसूरिभिः ।
रेचकं पूरकं मुत्तवा यस्मिन्वा वायुधारणम् ॥

p. 28)

प्राणायामोऽयमित्युत्तवा स वै केवलकुम्भकः ।
विरेच्या पूर्ययः कुर्यात् स वै संहित कुम्भकः ॥

केवलं संहितं वाथ कुम्भकं सम्यगभ्यसेत् ।
कण्ठेन पूरयेद्वायुं रेचयेत् कण्ठनालतः ॥

भुजंगी करणं चैतत् कुम्भको नवधा स्मृतः ।
अन्तःस्थितस्य वायोर्यत् बहिर्निस्सरणं तदा ॥

तत्रैव संनिरोधस्तु बाह्यकुम्भक ईरितः ।
बाह्यवायुर्यदाकुक्षौ प्रविष्टः संनिरुध्यते ॥

तदनन्तरमिति प्रोक्तं कुम्भकं योगवित्तमैः ।
यदा प्रश्वासमुक्तेन गतिर्नासान्त मण्डले ।

लयं वायोस्तदा तज्ज्ञैः प्रोक्तस्तद्वाह्य कुम्भकः ॥

पतंजलिः -

व्यासभाष्ये च श्वास पूर्वोगत्यभावः स बाह्य प्राणायामः।
यत्र प्रश्वासपूर्वको गत्यभावः स आभ्यन्तरः।
तृतीयस्स्तम्ब वृत्तिः। नासा पुटयोर्मध्यस्थलस्य नामस्तंबमिति।
स्तंत्रे स्थितं स्तम्ब वृत्तिः। यत्रो मयां भावः सकृत् प्रयत्नेनोद्भवति।

प्रश्वासं च विना श्वासं नासाग्रं लीयते निलः।
तदाज्ञेय स्तम्ब वृत्तिः कुम्भकस्तु तृतीयकः॥

तृतीयकुम्भके यथातप्त शिलान्यस्त जलं सर्वतः संकोच मापद्यते। तदा द्वयोर्युगपत् गत्यभाव इति॥

प्राणसंयमनं प्रोक्तं त्रिविधं काल भेदतः।
उत्तमं मध्यमं चैव त्वधमं योग वित्तमैः॥

षट्शतं च त्रिसाहस्रं मात्राणां कुम्भकं गुरुः।
तदर्धं मध्यमं प्रोक्तं तदर्ध मधमं स्मृतम्॥

पक्ष मासाब्द भेदेन तेषां नामानि योगिभिः।

दीर्घसूक्ष्माति सूक्ष्मेति प्रोच्यन्ते सिद्धलक्षणे॥

योगवाचस्पत्ये -

सखल्वयं प्रत्ययाभ्यस्ता वर्षमासपक्षादि क्रमेण

देशकाल संख्यादि स्वजानुमण्डलः पाणिनापरिमृश्या स्फुटका

विच्छिन्नकाल मात्राभिः त्रिसहस्र षट्च्छत

मात्रापरिमितः प्रथम उद्घातो मन्दः।

एवं द्विगुणी कृतो द्वितीयो मध्यमः॥

एवं त्रिगुणी कृतस्तृतीयस्तीव्र इति॥

कृत्वारेचक पूरकं दृढतरं बध्वा समीरं भृशं ब्रह्मद्वारमुखे

निरुध्यनियतो बाह्याभ्यन्तरस्मारकः।

p. 29)

प्राणायामपरायणः प्रतिदिनं कालत्रयेऽप्यभ्यसेच्छुद्धं कुम्भक

मार्यसे वितमिदं योगीन्द्रगुप्तं धनम्॥

समीरमार्गेण निरुध्य नाडिकामूले निरुध्याग्निसुखासुखस्थितिः।
ततोत्तमांगे हृदया पितेक्षणः स कुम्भको नाम स नादबोधकः॥

त्यजेद् यथा पिङ्गलया शनैः शनैः गृहीतवायुर्यतिरप्रमत्तधीः।
अत्यन्तसूक्ष्मव्रणमृद्घटाम्बुवत् स रेचको नाम पृथक् समभ्यसेत्॥

दत्तात्रेयः -

हृदये च शिरः स्थाने भ्रूमध्ये नाभिमण्डले।
मृत्युः प्राणगतो यत्र तन्निरोध परोभव॥

आदिनाथः -

यावन्मरञ्तत्र मनःप्रवृत्तिः यावन्मनश्चापि मरुत्प्रवृत्तिः।
तत्रैक नाशादपरस्थनारा एक प्रवृत्तेरपरप्रवृत्तिः॥

अध्वस्तयोश्चेन्द्रिय वर्गवृत्तिर्विश्वस्तयोमार्गपदस्य सिद्धिः।
तत्राप्यसाध्यः पवनस्य नाशः षडङ्ग योगादि निषेवणेन॥

मनोविनाशस्तु गुरोः प्रसादान्निमेषमात्रेण सुसाध्य एव ।
तस्मान्मनो नाशयताम्मनस्काद्यन्नश्यतो नाश्यति वायुरग्रे ॥

अत्र श्रुतिः -

यथाशकुनिः सूत्रेण प्रबद्धो दिशं दिशं पतित्वान्यत्रायतनमलब्ध्वा
बन्धनमेवोपाश्रयते । प्राण बन्धनं हि सोम्यमनः इति मन एव जीवः ।

योगवासिष्ठे -

मनो हि जीवनाज्जीव इति ।

ज्ञानसारे -

नासाग्रं जीवनाभिश्च हृदयं च तृतीयकम् ।
स्थानान्येतानि जीवस्य कल्पितानि शिवेन तु ॥

अत्र श्रुतिः -

तेत्रस्थं जागरं विद्यात् कण्ठे स्वप्नं समादिशेत् ।

सुषुप्तं हृदयस्थं तु तुर्यं मूर्धनिसंस्थितम्॥ इति।

ज्ञात्वैवं वायुजीवौ द्वौ सन्निरुध्य मनो हृदि।
प्राणसंयमनं कुर्यात् मृत्युमातंगकेसरी॥

नादस्वरूपं लय योगे लिख्यते॥

इति योगशास्त्रसंग्रहे प्राणायामस्वरूपं नाम चतुर्थोऽध्यायः॥

अथ प्रत्याहारः॥ शिवयोगे-

चित्तस्यान्तर्मुखेनप्रतिहत बहुचैतन्य कल्लोल जलस्योत्पन्नस्यास्य नाना विपुलमितिविकारस्य संवृत्तिरेव। तत्तन्नानाविकाराग्रसनमिति। तथा कथ्यते योगविद्भिः॥

प्रत्याहारः स एवा विचलित सुमनाःस्तंसदाहं भजामि॥

सूतसंहितायाम्- अथातत् प्रवक्ष्यामि प्रत्याहारं महामुने॥

p. 30)

इन्द्रियाणं विचरतां हृदयेषु स्वभावतः॥

बलादाहरणं तेषां प्रत्याहारः स उच्यते।
यद्यत्पश्यति तत्सर्वं ब्रह्म पश्येत् समाहितः॥

प्रत्याहारो भवेदेष ब्रह्मविद्भिः पुरोदितः।
यद्यच्छुद्धमशुद्धं वा करोत्यामरणान्तिकम्॥

तत्सर्वं ब्रह्मणे कुर्यात् प्रत्याहारोऽयमुच्यते॥

अथवा नित्यकर्माणि ब्रह्माराधनबुद्धितः।
काम्यानि च तथा कुर्यात् प्रत्याहारः स उच्यते॥

अथवा वायुमाकृष्य स्थाने स्थाने निरोधयेत्।
दन्तमूले तथा कर्णे कण्ठादुरसिमारुतः।
उरो देशात्समाकृष्य नाभिकन्दे निरोधयेत्॥

नाभिकन्दात्समाकृष्य कुण्डल्यां तु निरोधयेत्।
कुण्डली देशतो विद्वान् मूलाधारे निरोधयेत्॥

तथापाने कटिद्वन्द्वे तथोरुद्वय मध्यके।

तस्माज्जानु द्वये जंघे पादांगुष्ठे निरोधयेत् ॥

प्रत्याहारोऽयमुक्तः स्यात् प्रत्याहारपरैः सदा ।
एवमभ्यास युक्तस्य पुरुषस्य महात्मनः ॥

सर्वपापानि नश्यन्ति भवरोगं च सुव्रत ।
अथवा तव वक्ष्यामि प्रत्याहारान्तरं मुने ॥

नाडीभ्यां वायुमाकृष्य निश्चल स्वस्तिकासनः ।
पूरयेदनिलं विद्वानापादतलमस्तकम् ॥

पश्चात् पादद्वये तद्वन्मूलाधारे तथैव च ।
नाभिकन्दे च हृन्मध्ये कण्ठे मूले च तालुके ॥

भ्रूवोर्मध्ये ललाटे च तथा मूर्धनि धारयेत् ।
अकारोकारमाश्चैव शैव पञ्चाक्षरं स्मरन् ॥

ऐं प्रजपेत् स्तंभितः प्राणः प्रत्याहारस्त एव हि ।
अथवा मुनिशार्दूल प्रत्याहारं वदामिते ।
देहादात्म मतिं विद्वान् समाकृष्यसमाहितः ॥

आत्मानात्मनिर्द्वन्द्वे निर्विकल्पे निरोधयेत् ।
प्रत्याहारः समाख्यातः साक्षाद्वेदान्त वेदिभिः ॥

ब्रह्मरन्ध्रादानखाग्रं वायुनिरोधस्य मर्मज्ञानपूर्वकत्वात्
मत्स्थानान्युच्यन्ते ।

श्रीदत्तः - शारीरे च -

द्विद्वादशांगुलं विद्धि मध्यमं जानुपादयोः ।

p. 31)

जान्वादि नाभिपर्यन्तं तद्वदेव विनिर्दिशेत् ।
नाभ्यादि हृदयान्तं तु विद्धिद्विद्वादशांगुलम् ।
हृदयाद्ब्रह्मरन्ध्रान्तं तद्वद्विद्वद्वादशांगुलम् ॥

ज्ञात्वैवंधारयेत् प्राणमेकैकांगुलमानतः ।
नवद्वाराणि कण्ठान्तं हृन्मध्यं नाभिमध्यमम् ॥

करयोर्मूलमध्याग्रं ब्रह्मरन्ध्रबिलं ततः ॥

जानुद्वयं च जान्वग्रमूरुमूलद्वयं क्रमात्।
उक्ताश्चैते गिरिसुते पञ्चविंशति सन्धयः॥

योगसारमंजर्याम् -

करद्वन्द्वं भुजद्वन्द्वं पादद्वन्द्वमतः परम्।
ऊरुद्वन्द्वं च फालंचाथांगुष्ठौ जानुयुग्मकम्॥

सीविनीकण्ठ कूर्पञ्च कण्ठमूला च व्यञ्जनौ।
लम्बिकाग्रं ततोघ्राणं भ्रूमध्यं चूलिमेव च॥

ललाटाग्रं सुषुम्नाग्रं द्वादशान्तमतः परम्।
द्वादशान्तान्तमुक्तेषु चाष्टाविंशति मर्मसु॥

दिने दिने षण्णवतिस्स्थानेषु विधिवत्पुमान्।
प्राणमारोप्य घटिकां प्रापयन् पुनराहरन्।
षण्मासमभ्यसेदेवं पञ्चविंशतिसन्धिषु॥

प्राणं मुहूर्तमेकैकमारोप्य पुनराहरन्।
ऋतु त्रयं समभ्यस्य ततोऽष्टांगेषु योगवित्॥

षण्मासमभ्यसेद्यत्नात् पञ्चभूत स्थलेष्वपि।
पृथक् पृथक् पञ्चघटीः प्राणमारोप्य चाहरन्।
षण्मासमभ्यसेद् यत्नात् द्वादशान्त स्थलेष्वपि॥

द्विषट्स्थलेष्वपि तथा ततोऽन्तर्ध्यष्टनाडिषु

प्राणं मुहूर्तमेकैकं माहरन् पुनराहरन्।
तत्रत्य देवताध्यान पुरस्सरमनन्यधीः॥

एवं षट्धारणाद्योगी प्रत्याहारेति वत्सरम्।
समभ्यसेत् प्रयत्नेन कुम्भकेन शनैश्शनैः॥

योगसिद्धिमवाप्याथ सर्वतत्वात्मको भवेत्।
किञ्चाणुत्वं महत्वं च दूरश्रवणमेव च।
कामरूपं मनो वेगं परकाय प्रवेशनम्॥

स्वच्छन्दमरणं देवैः सह क्रीडनदर्शनम्।
इष्ट संकल्प सिद्धिं च सदा प्रतिहतागतिः॥

त्रिकालज्ञत्वमन्द्वन्द्वं परचिन्ताद्यभिज्ञता ।
अर्कानिला नलांबूनां पदस्तम्भनमेव च ॥

p. 32)

एतानि लक्षणान्येवं लब्धुं शक्यं वरानने ॥ इति ।

प्रणवचिन्तामणौ -

मर्मस्थानानिसर्वाणि शरीरे योगमोक्षयोः ॥

वच्म्यहं तानि सर्वाणि यथा विज्ञायते तथा ।
पादांगुष्ठौ च गुल्फौ च मध्ये चोरुद्वयस्य च ॥

पायुश्च गिरिजे पश्चात् मध्ये देहस्य मेढ्रकम् ।
नाभिश्च हृदयं चैव कण्ठकूपमनुत्तमम् ॥

तालुमूलं च नासायां मूलमक्ष्णोश्च मण्डले ।
भ्रुवोर्मध्यं ललाटं च मूर्धा सर्वसुरार्चिते ॥

मर्म स्थानानि सर्वाणि मानं तेषां पृथक् शृणु ।
पादमानञ्च गुल्फं च सार्धांगुल चतुष्टयम् ॥

पादांगुलं च विज्ञेयं मध्यमं गुल्फ जंघयोः ।
जंघा मध्यं चितेर्मूलं यत्तदेकादशांगुलम् ॥

चितेर्मूलादध शिवे जानुन्यादंगुलद्वयम् ।
चित्ताग्रादूरुमूलान्तात् सार्धांगुल चतुष्टयम् ।
जान्वोर्दशांगुलं प्रोक्तमूरुमूलं जगत्प्रिये ॥

ऊरु मध्याद्योगमात्रात् पायुमूलं नवांगुलम् ।
देहे मध्यं तथा प्रोक्तं पायोर्मूलं स्यादंगुल द्वयम् ॥

चतुर्दशांगुलं नाभेर्भ्रूमध्यं पङ्कजानने ।
षडंगुलं तु हृन्मध्यात् कण्ठकूप मतः परम् ॥

कण्ठकूपाच्च जिह्वायां मूलंस्थाच्चतुरंगुलम् ।
नेत्रस्थानान्ततन्मूलात् सार्धांगुल चतुष्टयम् ॥

तस्मादर्धांगुलं विद्धिभ्रुवोरन्तरमात्मनः ।
ललाटाख्यं भ्रुवोर्मध्यादूर्ध्वं स्यादङ्गुलत्रयम् ॥

ललाटाद्व्योमरन्ध्रं स्यादङ्गुलत्रयमात्मनः।

स्थानेष्वेत्रेषुमनसा वायुमारोप्यधारयेत्॥

एवमग्रेभ्यसेन्नित्यं पञ्चविंशतिसंधिषु।

मर्मस्थानेष्वपि सुधीः प्रत्यहं योगसिद्धये॥

स्थानात् स्थानं समाकृष्य प्राणायामंप्रकुर्वतः।

सर्वे रागाः प्रणश्यन्ति तस्य योगः प्रसिद्ध्यति॥

प्रणवचिन्तामणौ -

प्रत्याहारविशेषोऽस्ति स्थानेष्वेतेषु पार्वति।

प्रत्याहारं प्रवक्ष्यामि सृष्टिक्रम विधानतः।

स्थानात् स्थानं समाकृष्य स्थानवित्पवनं सुधीः॥

प्रतिलोमानुलोमाभ्यां यस्त्वेवं धारयेद् द्विधा॥

सर्वव्याधि विनिर्मुक्तो जीवेदा चन्द्र तारकम्।

योगसारमंजर्याम् -

संपूर्णकुम्भनित् वायुमंगुष्ठामूर्ध्नि मध्यतः ॥

p. 33)

धारयेत् पवनं बुद्ध्या प्राणायामं प्रचोदयेत् ॥

व्योमरंध्रात्समाकृष्य ललाटे धारयेत् पुनः ।
ललाटाद्वायुमाकृष्य भ्रुवोर्मध्ये निरोधयेत् ॥

भ्रुवोर्मूलात्समाकृष्य नेत्रमध्ये निरोधयेत् ।
नेत्रात् प्राणं समाकृष्य नालामूलं निरोधयेत् ॥

नासामूलात्समाकृष्य जिह्वामूले निरोधयेत् ।
जिह्वामूलात्समाकृष्य कण्ठकूपे निरोधयेत् ॥

कण्ठकूपात्तु हृन्मध्ये हृन्मध्यान्नाभिमध्यमे ।
नाभिमध्यात् पुनर्मेढ्रे मेढ्रादाधारमण्डले ।
देहमध्याद् गुदे गौरि गुदाद्वाशेफमूलके ॥

ऊरुमूलात्तयोर्मध्ये तस्माज्जान्वोर्निरोधयेत् ।
जानुमूलात्तु चित्योस्तु तन्मूले तु निरोधयेत् ॥

चितिमूलात्पुनस्तस्मात् जंघायोर्मध्यमे तथा ।
जंघामूलात्समाकृष्यपादगुल्फे निरोधयेत् ॥

गुल्फाभ्यां सम्यगाकृष्य चांगुष्ठाग्रे निरोधयेत् ।
इति स्थानात् समाकृष्य योगवित्पवनं सुधीः ।
प्रतिलोमानु लोमेन यस्त्वेवं धारयेद्धिया ॥

सर्वव्याधिविनिर्मुक्तो जीवेदा चन्द्रतारकम् ।
नाडीभ्यां वायुमाकृष्य कुण्डल्या पार्श्वयोः सुधीः ॥

धारयेद्युगपत्सोऽयं गिरिजे योगसिद्धिभाक् ।
पूर्ववद्वायुमारोप्य हृन्मध्ये व्योम्निधारयेत् ॥

सोऽचिराद्योगमाप्नोति परमात्मा पदं व्रजेत् ।
नासाभ्यां वायुमाकृष्य पूरयेत् स्वोदरंचिरम् ॥

भ्रुवोर्मध्ये दृशोः पश्चात् समारोप्यसमाहितः ।
धारयेत् क्षण मात्रं वा स याति परमां गतिम् ॥

पृथक् पृथक् पञ्च घटीः पञ्चभूतेषु धारयेत्।
तत्तद्भूत जयस्तस्य भविष्यति न संशयः।
तत्तन्मात्राणि तद्वच्च धारयेत् सिद्धि कारणम्॥
ब्रह्मपञ्चकमेवं हि धारयेद् योग वित्तमः॥

शरीरं तावदेवं तु पञ्चभूतात्मकं स्वतः।
तदेवन्तु सदोक्तं ते वातपित्तकफात्मकम्॥

वातात्मकानां सर्वेषां योगेष्वासक्त चेतसाम्।
प्राणसंयमनेनैव शरीरं शुष्यति ध्रुवम्॥

पितात्मकत्वे त्वचिरात् न शुष्यति कलेवरम्।
कफात्मकानां कायस्तु संपूर्णमचिराद्भवेत्।

p. 34)

तत्पृथ्वी मण्डले क्षीणे पलितं याति देहिनाम्।
तोये क्षीणे तृणानीव चिकुराः पाण्डराः क्रमात्॥

तेजः क्षयेक्षुधाकान्तिर्नश्यतो मारुतस्तथा।
वायुक्षये भवेन्नित्यं आकाशेनैव जीवति॥

इत्थं तत्तत्क्षये मृत्युर्जीवनं भूतधारणम्।
पञ्चवर्ष शते लक्षे नान्यथा मरणं भवेत्॥ इति।

अमृतनादबिन्दूपनिषदि -

मनः सङ्कल्पकं ध्यात्वा संक्षिप्यात्मनि बुद्धिमान्।
धारयित्वा तथात्मानं धारणा परिकीर्तिता॥

सूतसंहितायाम्

अथ तत्प्रवक्ष्यामि धारणापञ्चसुव्रत।
देहमध्यगते व्योम्नि बाह्याकाशं तु धारयेत्॥

प्राणे बाह्यानिलं तद्वत् ज्वलने चाग्निमौदरे।
तोयं तोयांशके भूमिं भूमि भागे महामुने॥

हयरावलकाराख्यं मन्त्रमुच्चारयन् मुने।

अयं भावः -

आत्मन आकाशः संभूतः। आकाशाद्वायुः। वायोरग्निः अग्नेरापः।
अद्भ्यः पृथिवी। इति। क्रमेण ब्रह्मरंध्रादिभ्रूमध्यपर्यन्तं
भ्रूमध्यादि हृदयपर्यन्तं हृदयादि नाभिपर्यन्तं नाभ्यादि
जानुपर्यन्तं जान्वादि पादपर्यन्तं तत्तद्बीजानि न्यसेत्।

धारणैषा मया प्रोक्ता सर्वपाप विशोधिनी॥
जान्वन्तः पृथिवी भागात् दपां पाय्वन्तमुच्यते॥

पायुतो हृदयान्तं च वह्निमण्डलमुच्यते।
हृदयादि भ्रुवोरन्तं वायुमण्डलमुच्यते॥

आकाशांशस्तथा प्राज्ञमूर्धान्तं परिकीर्तितम्।
ब्रह्माणं पृथिवीभागे विष्णुं तोयांशके तथा॥

अग्न्यंशे तद्वदीशानमीश्वरञ्चानिलांशके।
आकाशांशे महाप्राज्ञं धारयेत् तु सदाशिवम्॥

अथवा तव वक्ष्यामि धारणं मुनिपुंगव॥

मनसीन्दुं दिशि श्रोत्रे बुद्धौ विष्णवंबरे हरम्।

अहंकारे चतुर्वक्रं हस्तयोर्देवनायकम् ।
वाचाग्नी मृत्युमुत्सर्वे तथोपस्ये प्रजापतिम् ॥

त्वचि वायुं तथानेत्रे सूर्य मूर्तिं तथैव च ।
जिह्वायां वरुणं घ्राणे भूमि देवीं तथैव च ॥

पुरुषे सर्वशास्त्रान्त बोधानन्दमयं शिवम् ।
धारयेद्बुद्धिमान्नित्यं सर्वपापविशुद्धये ॥

यथैषा धारणा प्रोक्ता सर्वशास्त्रवेदिभिः ।
ब्रह्मादिकार्यरूपाणि स्वे स्वे संहृत्यकारणे ॥

p. 35)

सर्वकारणमव्यक्तंमनिरूप्यमचेतनम् ।
साक्षादात्मनि संपूर्णे धारयेत् प्रणवं नरः ॥

धारणैषा परा प्रोक्ता धार्मिकैर्वेदपारगैः ।
इन्द्रियाणि समाहृत्य मनसात्मनिधारयेत् ॥

किञ्चित्कालं महाप्राज्ञ धारणैषा च पूजिता ।
वेदादेव धृता देवा वेदादेव सदानराः ।

वेदादेव सदालोका वेदादेव महेश्वरः ॥

इति चित्तं व्यवस्थाय धारणा सापि कीर्तिता ।
ब्रह्मैवाहं न गन्धर्वो देवो यक्षो नरोऽथवा ॥

न देहेन्द्रिय बुद्ध्यादि न माया नान्य देवताः ।
इति बुद्ध्या व्यवस्थाय धारणा चेति कीर्तिता ॥

इति सर्वं समाख्यातं सर्वशास्त्रविशारद ॥

॥ इति योगसंग्रहे प्रत्याहारधारणानिरूपणं नाम पञ्चमोऽध्यायः ॥

ध्यानम् ॥ योगसारमञ्जर्याम्-

अथातः संप्रवक्ष्यामि ध्यानयोगमनुत्तमम् ।
अकृताभ्यासशीलानां योगिनां शीलमिच्छताम् ॥

अकलङ्कोज्ज्वलच्छीत किरणाभोदरस्थितम् ।
शरीरं चिन्तयेन्मासात् वलीपलितनाशनम् ॥

हृदम्बुजे समासीनं बालसूर्यसमप्रभम् ।
देव्याश्लिष्टतनुं देवं सुवर्णसमवर्णया ॥

भस्मोद्धूलित सर्वाङ्गं दधानं मृगचर्म च ।
पद्मासने स्थितं शान्तं त्रिणेत्रं चन्द्रशेखरम् ॥

स्वफालस्थल बालेन्दुस्रुतदिव्यसुधाप्लुतम् ।
वराभयमहाटङ्क मृगमुद्राधरंशिवम् ॥

अक्षस्त्रक्पुस्तकधरं प्रसन्नं परमेश्वरम् ।
जटामण्डलसंबद्ध महाफणिफणान्वितम् ॥

यवयौवनसम्पन्नं ग्रस्त काल भयादिकम् ।
सुमुखं चारु सर्वाङ्गं गुप्तविज्ञानगोचरम् ॥

पशुपाशौघदलनं तारकं भव वारिधेः ।
सर्वज्ञत्वादि सामर्थ्यदायकं सर्वसिद्धिदम् ॥

एवं ध्यायेन्महादेवं सर्वविघ्नोपशान्तये ।
अथवैवं शिवंध्याये द्विशुद्धे हृदयाम्बुजे ॥

शुद्धस्फटिकसंकाशो शरच्चन्द्रायुतप्रभम्।
अक्षमालाधरं शान्तं प्रसन्नं वरदं शुभम्॥

सर्वमृत्युप्रशमनं वलीपलितनाशनम्।
दिव्यामृतमहावर्षैर्वर्षयन्तं समन्ततः॥

p. 36)

तत्सुधा वर्षपातेन सहसा शीतलात्मना।
दुःखघर्द गदैर्मुक्तं भावयेदात्मननुम्॥

अनेनध्यानयोगेनमुच्यते देहबंधनात्।
हृत्पद्मकर्णिकामध्ये सुधा दीपशिखाकृति॥

समुद्भुतं महज्ज्योतिर्वर्तियादमृतांशुभिः।
त्रिलोकमखिलं योगी व्याप्यमानं विचिन्तयेत्॥

अनेन ध्यानयोगेन योगी स्यादीश्वरः स्वयम्।
स्वदेहं भावयेद् योगी कोटि सूर्यसमप्रभम्।
सम्यगात्माविभेदेन सोऽचिराद्योगमाप्नुयात्॥

आत्मानं चिन्तयेद्योगी सम्यगीश्वरविग्रहम् ।

तद्भावनावशाच्छुद्धां सिद्धिं श्रीशाम्भवीं लभेत् ॥

शिवोऽहमप्रमेयोऽयमहमचिन्त्योऽहमहं महत् ।

एवं ध्यानविधौध्यायेदात्मानं सर्वरूपिणम् ॥

प्रणवचिन्तामणौ -

आनन्दशीतकिरणोदयपूर्णिताशश्चित्सारफेन परिरञ्जित दिव्यतोयः ।

नानाविधप्रमथदैवतमत्स्यजुष्ट श्रीमत्सुधाब्धिरहमस्मि

विधूतपात्मा ॥

श्रीमद्गुरोः पदसरोरुहरेणुवज्रसंभिन्नपापभयभूभृतिदेहगेहे ।

कोटीन्दुभास्करनिभं परमाणुकल्पं आविस्मरामि परमं

महदात्मरूपम् ॥

विद्युत्सहस्ररुचिरं त्रसरेणु कल्प-

मानन्दसान्द्र परिमोदित भावगम्यम् ।

पीयूषवारिनिधिसाधनमप्रमेय

माविस्मरामि हृदये सुमत्प्रबोधम् ॥

षट्पद्मकोटीरकवाट विपाटनेन
या ज्योतिरूर्ध्वमुपयाति तटिल्लतेव ।
पीयूषरूपघनस्त्रारसहस्त्रवृष्टि
मेघंभजामि हृदये परमात्मदीपम् ॥

संवित्स्वभाव परिबृंहित वीचिजाल
स्वानन्द शीकरसमुच्चय सिक्तदेहम् ।
सद्भावगम्य विमलोत्तमचित्तवृत्ति
सेवासमुत्सुक कलामृतसिन्धुरस्मि ॥

भूर्व्योमवायुशिखिनी रविभेदभिन्न
मेकंयतोऽस्य जगतो विभवायतत्वम् ।
तत्सर्वकारणमनन्तमचिन्त्यमाद्यं
ज्योतिर्मनोवचनदूरगमस्मिसंवित् ॥

p. 37)

यद्ब्रह्मकन्दमखिलागमपत्रनालं-
मानन्द पिङ्गल सुधाजल दिव्यसारम् ।
सिध्यष्टक प्रकटपत्र विराजमानं
तद्योगि भावकमल भ्रमरोऽहमस्मि ॥

अनेनध्यानयोगेन जीवन्मुक्तिमवाप्नुयात् ।
ध्यानेन लभते योगं ध्यानात् सिद्धिं च दुर्लभाम् ।
ध्यानेन तु तरेन्मृत्युं ममवाक्यं मृषा न तु ॥ इति

सूतसंहितायाम् -

अथातः संप्रवक्ष्यामि ध्यानयोगमनुत्तमम् ।
आकाशे निर्मलं शुक्लं भासमानं सुशीतलम् ॥

सोममण्डलमापूर्णमचरं दृष्टिगोचरम् ।
ध्यात्वा मध्ये महादेवं परमानन्दविग्रहम् ॥

उमादेहार्धवरदमुत्पत्ति स्थितिवर्जितम् ।
शुद्धस्फटिकसङ्काशं चन्द्ररेखावतंसकम् ।
त्रिलोचनं चतुर्बाहुं नीलग्रीवंपरात् परम् ।
ध्यायेन्नित्यंसदासोऽहमिति ब्रह्मविदांवर ॥

अथवाकाशमध्यस्थे भ्राजमाने सुशोभने ।
आदित्यमण्डले पूर्णे लक्षयोजनविस्तृते ॥

सर्वलोक विधातारमीश्वरं हेमरूपिणम्।

हिरण्यश्मश्रुकेशं च हिरण्मय नखं तथा॥

जपाकुसुमवक्त्रं च नीलग्रीवंविलोहितम्।

आगोपाल प्रसिद्ध्यन्तमम्बिकार्धशरीरिणम्॥

सोऽहमित्यनिशंध्यायेत् संध्याकालेषु वा नरः।

अथवाहं हरिः साक्षात् सर्वज्ञः पुरुषोत्तमः॥

सहस्र शीर्षा पुरुषः सहस्राक्षः सहस्रपात्।

विश्वं नारायणं देवमक्षरं परमंपदम्।

अथवासच्चिदानन्दमनन्तं ब्रह्मसुव्रत॥

अहमस्मीत्यभिप्रायो भावयेद विमुक्तये।

य इदं हृदिदेवेशमपिध्यायेन्मनागपि॥

ब्रह्मणः साक्षिरूपत्वान्नेदं यदिति हि श्रुतिः॥ इति।

सारगीतासु।

हृदयकमलमध्ये दीपमद्वैतसारं

प्रणवमयमतर्क्यं योगिभिर्योगमृग्यम्।

हरिगुरुशिवयोगं सर्वभूतस्थमेकं

सकृदपि मन्सा मां ध्यायतेयः स मुक्तः॥ इति।

योगसारमंजर्याम् -

शुद्धेन्दु बिम्बं हृन्मध्ये स्त्रवन्तममृतं स्मरेत्।

अमृतेन स्वकं देहमापादतलमस्तकम्॥

प्लाव्यमानं स्मरेदङ्गं तर्पयेत्सुधयातया॥

ऋतु त्रयेण दार्ढ्यञ्च सौकुमार्यं गदक्षयम्।

p. 38)

वलीपलितनाशं च भविष्यति सुरार्चिते॥

कंजासनादयो(धो)देशे खरन्ध्राद्ध्र्वमेव च।

पूर्वोक्तमण्डलेशीत सुधावृष्टिसमन्विते॥

मूलबीजाद् दलाच्छीतसुधावृष्टिविनिर्गमैः ।
सुधासागरसल्लीन न बहिरन्तर्विभावयेत् ॥

अन्तरङ्गमशेषं तु ब्रह्मरन्ध्रेन्दु निर्गतैः ।
परामृतैर्ब्रह्मरन्ध्र नाडीविलनिवेशकैः ॥

तर्पयेदात्मनो जीवं देवताश्च शिवेधिया ।
अन्तरङ्गमशेषं तु तत्सुधा वृष्टि पूरितम् ।

परिभाष्यस्वरोमाख्य मार्गकोटिविनिर्गतम् ।
सुधावृष्टिभिरभ्यक्तं बाह्यमाभ्यन्तरं स्मरेत् ॥

तत्र मध्ये समुल्लीनमात्मदेहं तदात्मकम् ।
तर्पयेदात्मसुधया ब्रह्माण्डमखिलं शिवे ॥

तत्सुधा तृप्ति सन्तृप्तं परमानन्दधीमयम् ।
ब्रह्माण्डमखिलं चेदमात्मदेहं विचिन्तयेत् ॥

वेष्टयेत् सुधया स्वस्य सिरयास्निग्धशीतया ।
अनेन देवि योगेन षण्मासादजरामरः ।

लोहितन्नवमं वर्णं स बिन्दुममृतात्मकम् ॥

नेत्रयोः परिसञ्चिन्त्य तत्सुधावृष्टि रश्मिभिः ।
ब्रह्माण्डमखिलं ध्यायेदात्मदेहं समर्पितम् ॥

त्रिवर्षध्यानयोगेन निर्विकल्पेन चेतसा ।
सप्त सप्तान्त लोकश्च सप्तजन्म च दृश्यते ॥

रोहितं रेफः। नवम वर्णः सकारः ह्रीं सूर्यमण्डलाय नमः इति
दक्षनेत्रो संसोममण्डलय नमः इति वाम नेत्रो इति च ।

पयः पयमयां भोधौ नीलमात्मकलेवरम् ।
नित्यं चिन्तयतो वर्षात् वलीपालीतनाशनम् ।
ब्रह्मरंध्रामृतधारात् स्त्रवत्परसुधारसैः ॥

प्लुतदेहस्तु षाण्मासात् वली पलितनाशकृत् ।
स्वदेहं चन्द्रसङ्काशमकुलंकसुधामयम् ॥

ध्यायन् वर्षार्धतो योगी वलीपलिताहा भवेत् ।
तप्त चन्द्रमसोबिंबा न कलंकामृताप्लुतान् ॥

मूलादिब्रह्मरंध्रान्तं सप्तपद्मेषु भावयेत्।
वेदषड्दशसूर्येन्दुकलापक्षादि संख्यया॥

पत्रैरक्षरसंलीनैरमृतप्लावितं स्मरेत्।
ऐक्यं सञ्चिन्तयेदेषां मण्डलानामनुक्रमात्॥

अविच्छिन्नादाधाराद्ब्रह्माण्डा वधिपार्वति।

p. 39)

प्रज्वलत्कोटि चन्द्राभमात्मदेहं तदात्मकम्।
चिन्तयेदमृतासिक्तं योगीयोग प्रसिद्धये॥

वलीपलितनाशश्च षण्मासाल्लभते प्रिये।
वाञ्छा लाभहताधात्री दुःखान्मुच्येत वैविषात्।
अब्दात् सर्वज्ञता प्राप्तिस्त्र्यब्दादीश्वरसन्निभम्॥

खेचरत्वं भवेद्दिष्य मणिमादिभिरर्चितम्॥ इति।

शिवगौरीसंवादे॥

कमुकद्वयमध्यस्थंमैहिरं मण्डलं प्रिये ॥
ध्यायेन्मासावधिनरो रोगराशिक्षयो भवेत् ॥

षण्मासादिन्द्रसायुम्यत्वमब्दाद्विष्णुसमो भवेत् ॥

षडब्दाद्रुत्वसाम्यं स्याद्द्वादशाब्दमतिप्रभः ।
ध्यायते नियतात्मा चेत् सत्यं कुर्यात् तु भावना ॥

रक्ताण्डमध्यगं देवि रक्तामृतपरिप्लुतम् ।
ध्यायन्वर्षार्धमात्रेण जायते ह्यजरामरः ॥

मूलाधारं स्मरेद् देविज्वलन्तं रविमण्डलम् ।
तत्प्रभापटल व्याप्त शरीरं परिचिन्तयेत् ॥

तथैव ब्रह्मरंध्रेय हृदब्जे च पृथक् पृथक् ।
मूलबिंबं च हृदिबिंबं च हृदि बिंबं ब्रह्मरंध्रागतं तथा ।
अन्योन्य प्रभयाश्लिष्टं स्वशरीरं ध्रुवं स्मरेत् ।
तन्मयं चिन्तयेद् देहं व्योमान्तं तु दिने दिने ॥

षण्मासादणिमादीनामाधिपत्यमवाप्नुयात् ।

सर्वज्ञत्वं च लभते त्रिवर्षात् सूर्यसन्निभः॥

तद्बिम्बान्तं स्मरेज्जीवं ज्वलद्दीपशिखाकृतिम्।
मासाद्वलीपलिश्चैव मृत्युं व्याधि भयंहरेत्॥

वर्षात् सर्वज्ञतां प्राप्य वसेद्व्योमांकणोर्ध्वके।
चिन्तयेदात्मनो जीवं ज्योतिर्लिङ्गपदा स्थितम्॥

तेनाण्डं पूरितं सर्वं ममृतापूरितं स्मरेत्।
तत्र मध्यगतो योगी गंधाख्यगुणपूरितम्॥

सर्वाधारमशेषं तु धरातत्वं न विस्मरेत्।
वाण्यारस गुणाधारं जलातत्वमशेषकम्॥

तथारूप गुणाधारं तेजस्तत्वमशेषकम्।
नेत्रत्रयेषु देवेशि चिन्तयेद् योगवित्तमः॥

वायुतत्वमशेषं तु श्वासमात्रे स्मरेच्छिवे।
शब्दाख्यगुणसंजुष्टं व्योमतत्वमशेषकम्॥

श्रुतिस्थाने स्मरेद् देवि रसैः संहृत्यबाह्यकान्।
ज्वालाण्डमध्यसंलीनं देहं विश्वमयं स्मरेत्॥

स्वदेह मध्यसंलीनं ब्रह्माण्डमिदमव्ययम्।
लवादिप्रलयान्तं च ग्रसेत् कालस्य लीलया॥

p. 40)

लवादि पृथिव्यादि। एकीभावेन सुदृढं बध्वापद्मासनं स्मरेत्।
चिन्तयेत् काल कलुषैर्मुक्तिं देहं निरामयम्॥

यदा तदण्डमीशानि स्मरेत् सुषिरवर्जितम्।
तदाकालभयं त्यक्त्वा शिववत् स्वेच्छया वसेत्॥

अनेन देवि योगेन वञ्चयेत् कालमागतम्।
पृथिव्यादीनि तत्वानि स्वीकृत्यास्ते निरामयम्॥

ध्यानस्यास्य समानेन फलं तु शृणु पार्वति।
स्फोटये च्छैलवृक्षादीन् शोषयेज्जलाधीश्वरान्॥

करोति घोरकालाग्नि ज्वालानलनिवारणम्।
शब्दतत्वं जयेद्योगी जरामरणवर्जितम्॥

त्रिकालाज्ञः स्वयं कर्ता सर्वव्यापित्वमाप्नुयात्॥ इति।

गोरक्षंः॥

नेत्रे निमीलीते नित्यं किञ्चिदुन्मीलिते तथा।
योमनश्चक्षुषां ब्रह्म पश्यतीति स योगिराट्॥

शशी भास्करयोर्मध्ये तारयोः स्थित तेजसा।
बिन्दुद्वयंन्तु संयोज्य ब्रह्मतारकमभ्यसेत्॥

बाह्यान्त मध्यलक्ष्येषु ब्रह्मदर्शनतत्परः।
दृष्टादृष्टस्वरूपाणि ननुतानि विलोकया॥

मूलकन्दाद्दण्डलग्नाद्ब्रह्मनाडी शशिप्रभा।
तस्या मध्ये तटित्कोटि निभांतामूर्ध्व गामिनीम्॥

मनसालक्षयेन्मूर्तिं सदृशं बिसतन्तुना।
आ ब्रह्मरन्ध्रपर्यन्तं गतां सिद्धिप्रदां स्मरेत्॥

ललाटोर्ध्वे तथा लक्ष्ये योगी कोल्लाटमण्डले ।
विस्फुरत्तारकाकारं मनसा लक्षयेत् सदा ।
अथवा कर्णयोर्द्वारे तर्जनीभ्यां निरोधयेत् ।
श्रीमद्देहान्तरे नादं घूंघूंकारं शृणोति च ॥

चक्षुर्मध्ये तथा नीलस्याति रूपं विलक्षयेत् ।
अन्तर्लक्ष्यामितिज्ञेयं बहिर्लक्ष्य मतः शृणु ॥

नासाग्रदेशाच्च चतुष्क षष्ठ तथा दशद्वादशसंख्ययांगुलिः ।
बहिःस्मरेन्नीलसुधूम्ररक्त तरङ्ग पीताभसुतत्वपञ्चकम् ॥

कथं वा संमुखाकाशं स्थिरदृष्ट्या विलक्षयेत् ।
ज्योतिर्मयूखा दृष्यन्ते योगिभिधीरमानसैः ॥

दृष्ट्यग्रे वाप्यपांगे वा तप्तकाञ्चनसन्निभम् ।
भूमिं संलक्षयेद् दृष्टिः स्थिराभवति योगिनः ॥

अथवाशरसश्चोर्ध्वद्वादशांगुलसंमिते ।
ज्योतिःपुञ्छनिभाकारं लक्षयेन्मुक्तिदं भवेत् ॥

यत्रयत्राथवा योगी तत्र तत्र विलक्षयेत्।
आकाशमेवयस्तस्य चित्तं भवति तादृशम्॥

इत्यनेकविधाकारं बहिर्लभ्यमुदीरितम्।

p. 41)

शृणुष्व मध्य लक्ष्यञ्च कथितं पूर्व सूरिभिः॥

श्वेतादि वर्णानथ चण्डचन्द्रसौदामिनी वह्निशिखेनबिम्बान्।
ज्वलन्नभो वा स्थलहीनमेकं विलक्षयेत् तत् खलु मध्यलक्ष्यम्॥

निराकारं पश्येत् गुणरहितमाकाशमथवा
तनोरूपंगाडस्फुरदुरुपराकाशमथवा।
महाकालं कालानिलनिभमवात्यन्त रुचिमत्
परं तत्वाकारां रविशशिनिभं मध्यखमिति॥

व्योमपञ्चकमेतद्धि तद्बाह्याभ्यन्तर स्थितिः।
यः पश्यति नरो लक्ष्ये स व्योम सदृशो भवेत्॥ इति।

योगसारमंजर्याम् -

इत्थं संहृत सर्वचित्तविषयस्या शेषविश्वात्मनः

संविद्भावसुधैककारण महायोगे चिरं तिष्ठतः ॥

मेरौ स्वर्ण वदर्णवे चुलुकवत् खद्योतवद्भास्करे

ब्रह्माण्डे च पिपीलिकाण्डवदहो निष्कातुका योगिनः ॥

वासिष्ठे -

सोऽहं चिन्मात्रमेवेहिति चिन्तनं ध्यानमुच्यते ।

ध्यानस्या विस्मृतिः सम्यक् समाधिरभिधीयते ॥

इति योगसारसंग्रहे ध्यानलक्ष्यस्वरूपं नामषष्ठोध्यायः ॥

उत्तरगीतायाम् ।

प्रमाशून्यं मनःशून्यं बुद्धिशून्यं निरामयम् ।

सर्वशून्यं निराकारं समाधिस्तस्य लक्षणम् ॥

आकाशे मानसं कृत्वा मनःकृत्वा निरास्पदम् ।

निष्कलं तं विजानीयात् समाधिस्थस्य लक्षणम् ॥

दृग्दृश्यविवेके -

उपक्ष्य नामरूपे द्वे सच्चिदानन्द लक्षणः।

समाधिं सर्वदा कुर्यात् हृदये वाथवा बहिः॥

सविकल्पो निर्विकल्पः समाधिर्द्विविधो हृदि।

दृश्य शब्दानु विद्धेन सविकल्पः पुनर्द्विधा॥

कामाद्याश्चित्तजादृश्यास्तत्साक्षित्वेन चेतनम्।

ध्यायेद् दृश्यानु विद्धोऽयं समाधिः सविकल्पकः॥

असंगः सच्चिदानन्दः स्वप्रभो द्वैतवर्जितः।

अस्तीति शब्दविद्धोऽयं समाधिः सविकल्पकः॥

स्वानुभूति रसावेशात् दृश्यशब्दा न पेक्षतः।

निर्विकल्पस्समाधिः स्यात् निवात स्थित दीपवत्॥

रात्रिंदिवा बाह्यदेशे यस्मिन् कस्मिंश्च वस्तुनि।

समाधिराद्यस्तन्मात्रान्नामरूपं पृथक् पृथक्॥

अखण्डैक रसं वस्तु सच्चिदानन्दमव्ययम् ।
इत्यवच्छिन्न चिन्तेयं समाधिर्मध्यमो भवेत् ॥

स्तम्भीभावरसाश्चोक्तास्तृतीयः पूर्ववन्मतः ।
एतैः समाधिभिष्षड्भिर्नयेत्काले निरन्तरम् ॥

p. 42)

शिवयोगे –

यदासंक्षीयते प्राणो मानसं च प्रलीयते ।
यदा समरसत्वन्तत् समाधिरभिधीयते ॥

पतञ्जलिः –

मनसो वृत्तिशून्यं च ब्रह्माकारतयास्थितिः ।
असंप्रज्ञातनामासौ समाधिरभिधीयते ॥

हठयोगे –

यस्समत्वं द्वयोरैक्यं जीवात्मपरमात्मनोः ।

समस्तनष्टसङ्कल्पः समाधिरगिधीयते ॥

भगवद्गीतायाम् -

यथा दीपोनिवातस्थो नेङ्गते सोपमा स्मृता ।
योगिनो यत चित्तस्य युञ्जते योगमात्मनः ॥

वासिष्ठे -

तत्वावबोध एवैक सर्वाशा तृणपावकः ।
प्रोक्तः समाधिशब्देन न तु तूष्णीमवस्थितिः ॥

इमं गुणसमाहारमनात्मत्वेन पश्यति ।
अन्तश्शीतलता यासौ समाधिरिति कथ्यते ॥

यस्त्वात्मरतिरेकान्तः कुर्वन् सर्वेन्द्रिय क्रिया ।
न परोहर्षशोकाभ्यां स समाहित उच्यते ।
समाहिता नित्यतृप्ता यथा भूतार्थदर्शिनी ॥

सा यो समाधि शब्देन पराप्रज्ञोच्यते बुधैः ।

अक्षुब्धा निरहंकारा द्वन्द्वेष्पननु पालनी ।
सायो समाधिशब्देन परा स्थितरतास्थितिः ॥

निश्चिताभिमताभीष्ट हेयो पादेयवर्जिता ।
सा यो समाधिशब्देन परिपूर्णस्तदुच्यते ॥

सूतसंहितायाम् -

अथातः संप्रवक्ष्यामि समाधिं गणनाशनम् ।
समाधिः संविदुत्पत्तिः परं जीवैकतां प्रति ।
नाहं देहो न च प्राणो नेन्द्रियाणि तथैव च ॥

न मनोऽहं न बुद्धिश्च नैवचित्तमहंकृतिः ।
नाहं न पृथ्वी न सलिलं न च वह्निस्तथा निलः ॥

न चाकाशो न शब्दश्च न च स्पर्शस्तया रसः ।
न च गन्धो न रूपं च न मायाहं न संस्मृतिः ॥

सदा साक्षात् स्वरूपत्वात् शिव एवास्मि केवलः ।
इति धीर्या मुनिश्रेष्ठ सा समाधिरिहोच्यते ॥

न हं ब्रह्मा न संसारी न मत्तोऽन्यत् कदाचन ।
इति विद्यात् स्वमात्मानं सा समाधिः प्रकीर्तिता ॥

अथवा योगिनां श्रेष्ठ प्रणवात्मानमीश्वरम् ।
वर्णत्रयात्मिकं विद्यादकारादि त्रयेण तु ॥

उच्यते प्रणवचिन्तामणौ -

हकारश्शंभुरित्युक्तस्सकाशश्शक्तिरुच्यते ।
शक्तिरूपो स्थितश्चन्द्रो वामनाडी प्रवाहकः ॥

p. 43)

शम्भुरूपी दिनकरो दक्षनाडीप्रवाहकः ॥

ब्रह्मस्वरूपमुभयोर्मध्यमंतारकंबलः ॥

तापनीये -

अकारः पुरुषस्तत्रमकारः प्रकृतिरुच्यते ।
तथाप्रणव ओङ्कारः बीजात्मापुरुषस्स्मृतः ॥

मकारः शक्तिरूपत्वात् प्रकृतिश्चार्यरूपिणी।
पुंस्त्रीप्रकृतिरूपेण तस्माद् रू(द्धु?)मध्यगा सदा॥ इति।

त्र्यक्षरेण समुद्भूतं तारमेकाक्षरं स्फुटम्।
ततः पञ्चाक्षरं जातं पञ्चाशद्वर्णसंहितम्॥

कलासंहितायाम् -

आद्यस्वरः पञ्चमश्च पवर्गान्तं ततः परम्।
बिन्दुनादौ च पञ्चाणुः प्रोक्तो वै प्रणवसंज्ञकः॥ इति।

शारदातिलके -

नादजाष्षोडशकला अवर्णाद्दश च स्मृता।
उवर्णाद्दशसंभूतामवर्णाद्दश चापरे॥

तयोरपि परेजाताः कलावर्ण क्रमेण तु।
आदौ सूक्ष्मसृष्टि स्वरूपेण प्रणवमाविर्भवति तद्रूपेण ब्रंह्यते॥

प्रणवचिन्तामणौ -

मात्रा षोडशभिः क्लिष्टमवतातैःस्तथैव च।
निष्पन्नं ब्रह्मतत्सर्वमभ्यसेद्योगवित्तमः।
एकोन व्यष्टमात्रात्वं व्यष्टमात्रात्वमप्युमे॥

चन्द्रस्यैवोपपन्नत्वात् व्यष्टमात्रात्वमुत्तमम्।
अकारश्च तयोकारो मकारस्तदनन्तरम्॥

अर्धम्मात्रास्ततो नादस्ततो बिन्दुस्ततः कलाः।
शक्तिश्शान्तिश्च समता चोन्मना च मनोन्मनी॥

वैखरी मध्यमा चाथ पश्यन्ती च परा ततः।
मात्रास्तु षोडश प्रोक्तास्ताभिर्युक्तस्तु तारकः॥

व्यष्ट मात्रात्मकः शुद्धः प्रणवः परिकीर्तितः।
अकारस्तु चतुर्विंशत् तत्वात्मकमुदाहृतम्॥

उकारश्चापि षड्विंशत्तत्वात्मकमितिस्फुटम्।
अष्टात्रिंशत्तत्वयुक्तो मकारः परिकीर्तितः।

षडशीत्यात्मिकात्वर्धमात्रातत्वागमोदिताः ॥

सप्ततत्वात्मको नादो बिन्दु द्वात्रिंशदात्मकः ।
कलाष्टादशतत्वोक्ताः शक्तिष्षड्विंशदात्मिका ॥

त्रिंशत्तत्वात्मिकाशान्तिस्सर्वोत्कृष्टाजयावहा ।
पञ्चविंशति तत्वात्मिकेत्युक्ता समाना ततः ॥

उन्मना च चतुष्षष्टितत्ववक्ता जगत्स्थिता ।
मनोन्मनी चतुर्विंशत्तत्वविख्यात गोचरा ।
पञ्चाशत्तत्वविस्तारा वैखरी विश्वमोहिनी ॥

p. 44)

अष्टाविंशतितत्वात्मा मध्यमा सर्वधामता ।
पश्यन्ती चतुरष्टैकं तत्वाकारासमीरिता ॥

परात्वानन्दतत्वस्था सोक्ता चोपनिषत्क्रमात् ।
विशेषाणापि विदितासाशेषोपनिषत्क्रमात् ॥
एवं षोडशसंख्याभिस्तस्मात्तत्वादिनिर्णयः ॥

एकोनद्व्यष्टमात्रात्मकोंकारस्तारकोर्णवः ।

ह्यष्टमात्रात्मकश्शंभुरोंकारस्तारको ध्रवः॥

वर्णवः प्रणवस्तारस्तारको योगपोध्रुवः।
तार्तीयोंकार इत्येते प्रणवाः परिकीर्तिताः॥

ह्यष्टावरणसंक्रान्तं तारकं ध्रुवमव्ययम्।
योजानाति स एवाहं वर्णतत्वागमात्मकम्॥

ओंकारः प्रणवस्तारस्तार्तीयस्तारको ध्रुवः।
रुद्रेशानोक्षरस्सर्वव्याप्यन्तोऽथवैद्युतः॥

शुक्लः सूक्ष्मः परंब्रह्म भगवानिति शङ्करी।
ह्यष्टावताराः संप्रोक्ता प्रणवोपनिषत्क्रमात्॥

शैवतंत्रे -

षोडशकलाभेदः -

अकारश्चोकारश्च मकारस्तदनन्तरम्।

प्रणवस्त्वर्धमात्रा च नादबिन्दुकलास्तथा ।
शक्तिश्शान्तिश्च समनाचोन्मता वैखरी ततः ।
मध्यमा चाथ पश्यन्ती परा चेति स्वभावतः ॥

षोडशी ह्यष्टमात्राभिर्मिलिता योगिनो विदुः ॥ इति ।

प्रणवचिन्तामणौ -

अकारस्त्वं पदं विद्यात् उकारस्तत्पदं विदुः ।
असीत्येकं मकारस्य इत्येष प्रणवो भवेत् ।
त्वं पदं तु महावाक्यं प्रणवस्तत्पदं प्रिये ॥

अर्धमात्राद्यसीत्यैक्यात्परं प्रणवमीरितम् ।
तद्वत्सोऽहं पदे नासीज्जीवात्मपरमात्मनोः ॥

प्रणवेनैक्यमासाद्य स्वरूपं यतिराप्नुयात् ।
बिन्दुस्त्वं पदं प्रोक्तमर्धमात्रात् तु तत्पदम् ॥

असीत्यैक्य पदो नादस्तस्मान्नादपरो भवेत् ।
कण्ठादकारः स्फुरति लघुपदान्नाभिरन्ध्रादुकारो

मध्यस्था नान्मकारो विशति करणतः कण्ठतो भवेत् ।
नादो मध्याच्च शक्तिश्शिरसि च पदन्तश्शान्तिमाद्वादशान्ता
मोंकारध्यानरूपी रविखतुजगन्नायको विश्वमूर्तिः ॥

नरसिंहतापनीययोः -

वेदादि मूलं सकलं स्वराणां त्रयोदशस्थं शशिबिन्दुरूपम् ।

p. 45)

वेदान्वितं सुप्तभुजङ्गरूपं त्रिरत्नमूलं प्रणवं नमामि ॥

योगसारमञ्जर्याम् -

मूलाधारे स्मरेत्तारमचञ्चलतटित्प्रभम् ।
चित्प्रभां कुरितां देवीं शक्तिमाद्यो मनोन्मनीम् ॥

बालार्ककोटिरुचिरां मन्त्र चैतन्यरूपिणीम् ।
प्रज्वलद्व्यक्तिचैतन्यादुद्भूतां वर्णपद्धतिम् ॥

स्मरेद्देवीं दीप्यमानां ताराकारां सुवर्चसम् ।
तज्जीवांकुरितां देवीं हुताशकणिकाकृतिम् ॥

उच्चरेच्च ततो मन्त्रं शब्दरूपं हृदि प्रिये ॥

जीव चैतन्ययुक्तस्य मन्त्रस्य ज्योतिरूपिणः ।
ब्रह्मशीर्षसमुद्भूतं जीवशक्तिध्रुवादिकम् ॥

पूर्ववत्प्रचयाद्देवि जीवचैतन्यमाहरेत् ।
आदितत्वात्मकं देवं शक्तिचैतन्यभासकम् ॥

वर्णमालाकृताशेषं मन्त्रराजं महाप्रभम् ॥

अतिलोमार्णमु ॥ ॥ ॥ ॥ महोरस्कं महाक्षमम् ।
ऊर्ध्वतारशिरस्त्राणं तद्बिन्दुकृतशेखरम् ॥

अनन्तशक्तिसम्पन्नं महाज्वालं महाक्षमम् ।
शिवशक्तिमशेषं तु कबलीकृत्य तत्क्षणात् ॥

सुस्थिरं चात्मनो देहे प्रज्वलन्तं ततोऽधिकम् ।
स्वदेह मध्यसंलीनं श्वासमोक्षावधि स्मरेत् ॥ इति ।

परमेश्वरस्य प्रभयाकुण्डल्या मुखात् परात् परेण यथा

जलगतमण्डुकस्य मुखात् बुद्बुदान्युत्पद्यन्ते तथोद्भूत

पञ्चाशद्वर्णान्। वैखरीरूपेण प्रणवाद्युच्चार्य शिवशक्त्यात्मकतया

मूलाधारे कुण्डली स्वरूपं यथा आनन्दकारमनलं विदुः।

जातप्राणाग्निसंयोगात्तेन नादोऽभिधीयते॥

प्रणवचिन्तामणौ -

आहतोऽनाहतश्चेति द्विदानादेनभियते।

निर्गुणो नाहतो नादस्त्वाहतस्सगुणः स्मृतः॥

राजतो निर्गुणो नादः सर्वजीवहृदंबुजे।

राजते प्रेरितोत्यर्थं मोक्षमात्रैकसाधनम्॥

ब्रह्मनादः परोह्द्य परमानन्दसागरः।

द्वितीयः सगुणोनादवाचिकोपांशुमानसः॥

सर्वार्थमुख्यहेतुः सन् सर्वलोकैकरञ्जकः।

गानसङ्गीत भरतशास्त्रेषु प्रतिपादितः॥

बहुरूपेण सर्वत्र प्रेरितः सन् विराजते ।

नादमात्रस्तु सर्वत्र वाचिकोपांशुमानसः ॥

p. 46)

ब्रह्मनादो मानसिको वाचिको गानमुच्यते ।

वितानातानसंवीत विवृतोदीर्णकुम्भकः ॥

प्लुतानन्दा प्लुतानन्दा नवनादाः प्रकीर्तिताः ।

नृसिंहस्याभि मुख्यार्थं प्रह्लादेन प्रदर्शिताः ।

उदात्ते नानुदात्तेन स्वरितप्रचयेन च ।

गीत्वाथसाधकास्तत्तत्फलमप्याप्नुवन्तिते ॥ इति नारदः ।

पाषाणद्रावणं मेधा कर्षणञ्च प्रवर्षणम् ।

शिलायां देवता वेशं क्षीरप्रस्रवणं गवाम् ॥

भूरुहाणामकालेऽपि पुष्पोद्वेगकरं परम् ।

मोहकं सर्वलोकानां पश्वादि मृगपक्षिणाम् ॥

साधकानां क्षणादेव तद्ध्यानात्संभन्त्यमी ॥ इति ।

ज्ञात्वैवं साधकश्शान्तो गुरुशिक्षापुरस्सरम् ।

अभ्यसेन्नादसिद्ध्यर्थं विविक्ते शान्तमानसः ॥

रन्ध्रे सकृन्मारुतपूर्णवेणुर्मनोहरं जन्मजराति नाशनम् ।
नदत्यजस्रं हृदि सर्वदेहिना तद्ब्रह्मनादं प्रवदन्ति योगिनः ॥

तदुक्तं ध्यान नाद बिन्दूपनिषदि -

अनाहतं तु यच्छब्दं तस्य शब्दस्य यत्परम् ।
तत्परं विन्दते वस्तु स योगी छिन्नसंशयः ॥ इति ।

असाध्यदुर्जयो पाय षडन्तर्वर्तिनो रिपून् ।
विजित्य ज्ञनवैराग्य संपत्त्याश्रद्धयान्वितः ॥

एकान्त दुर्गमाक्रम्य परमानन्दबन्धुरः ।
स्वास्तिकासनमारूढो धात्री शुद्धिपुरस्सरम् ॥

गुर्वादि वन्दनं कृत्वा प्राणायाम परायणः ।
ह्रस्वदीर्घप्लुतैः सम्यग् रेचपूरक कुम्भकैः ॥

त्रिधैकवारमुत्सृज्य तत्त्रिवारं पुनः पुनः ।

त्रिधैकवारमुच्चार्य षट्प्राणायामपूर्वकम् ॥

चिन्तयेत् प्रणवाकारं स्वशरीरं समाहितः ।
ज्योतिर्मयं विभाव्याथ तत्त्ववित्तारवित्पुनः ॥

प्राणायामत्रयं कृत्वा पृथगात्मनि चिन्तयेत् ॥

श्रीकृष्णः -

अधोमुखन्तु हृत्पद्ममुद्धृत्य प्रणवेन तु ।
गत्वा तु पद्मकोशान्तं विकसेद्व्याहृतिः पुनः ॥ इति ।

तस्य मध्य गतोवह्निर्वह्निमध्य गतो रविः ।
रविमध्यगतश्चन्द्रश्चन्द्रमध्यगता प्रभा ॥

ध्याननादबिन्दूपनिषदि -

तत्राग्निरविचन्द्राणामुपर्युपरि चिन्तयेत् ॥ इति ।

p. 47)

प्रभामध्यगतो बिन्दुर्नादस्तन्मध्यगस्वरः ॥

ध्याननादे -

बीजाक्षरपरं बिन्दुर्नादं तस्य परः स्मृतः॥ इति।

प्रणवचिन्तामणौ -

प्रणवावृतिकालेषु निरुद्धोद्भूत वायुना॥

अन्यत्रगमनाभावात् ताडिते चाप्य नाहते।
बिन्दुर्भिद्यति नादेन स नादःखेनभिद्यति॥

उत्तरगीतायाम् -

अनाहतस्य शब्दस्य तस्य शब्दस्य च ध्वनिः।
ध्वनिरन्तर्गतं ज्योतिर्ज्योतिरन्तर्गतं मनः॥

तन्मनो विलयं याति तद्विष्णोः परमं पदम्।
ओंकारध्वनि नादेन वायुसंहरणान्तिकम्॥

निरालंबं समुद्धृत्य तत्र नादोलयं गतः ॥ इति ।

अमनस्कं यथाध्यायेन्नाभि हृन्मूर्ध्नि मध्यमे ।
तन्मध्ये ब्रह्म इत्यार्यैर्मन्यन्ते योगवित्तमैः ॥

बहुधा बहुरूपेण सर्वान्तर्लीन रूपवत् ।
न्यूनं नादं परंब्रह्म विद्धित्वमसुरार्दिनि ॥

अकारान्तर्गतं विद्धि उकारं तस्य मध्यगम् ।
मकारं लीनमित्युक्तं मूर्तित्रयसमन्वितम् ।
तन्मध्ये बिन्दुरित्युक्तं ध्वनिस्तन्मध्यसंभवः ॥

ध्वनेरन्तर्गतं तेजस्तेजसोन्तर्गतं रविः ।
रविमध्यगतः स्थाणुः स्थाणोर्मध्य गतंमनः ॥

तन्मनो विलयं याति तन्नाद ब्रह्म इत्यते ।
ध्वनिना वेष्टितं सर्वं जगदेतच्चराचरम् ॥

प्रणवचिन्तामणौ –

स्थावरेष्वपि सर्वेषु जङ्गमेष्वप्यहर्निशम् ।
पिपीलिकादि ब्रह्मान्त जन्तुजालेष्वपि प्रिये ॥

अन्तर्बहिः समावृत्य नादस्तिष्ठति केवलम् ॥ इति ।

असाध्यः साधकानां तु करस्य इवमात्ययम् ।
निस्सन्देहास्सम्यगानन्द सिद्धैर्ध्यष्टा वस्थास्सन्ति तत्तद्विशेषैः । एकैकेन
व्यस्तरूपास्समस्तास्स्वस्थावस्थास्सिद्धिमुत्पादयन्ति ॥

प्लुताप्लुतेन प्रणवं समभ्यसेत् तद्वत्तदग्रेणतदर्धमात्रकम् ।
रङ्गप्लुतेनेव हि नादमग्रतस्स्तदङ्गमात्रेणससिद्धिमाप्नुयात् ॥

नादाक्रान्तार्धमात्रप्रणववमभीमुखी कृत्य नित्यं निशान्ते
स्वाधाराद्यष्ट पद्मेष्वनुपमपवनाभ्यासयुक्त्यावक्लृप्तः ।
ध्यातव्यस्साधकेन्द्रैः स्वहृदयदहराकाशविद्योतमान स्वान्तांभोजात
मित्रो विनिहत धृतिकृत्सावधानः परित्राट् ॥ इति ।

p. 48)

आज्ञादि षोडशान्तेषु स्थलेष्वपि पृथक् पृथक् ।
अकारादि क्षकारान्तान् व्यक्ताव्यक्तानु कारिणः ॥

स्वारान् ज्ञात्वा नरः सम्यक् निरुध्यानिलमन्वहम् ।

तदुक्तव्यवधानेन मन्द्रमध्यम तारकैः ।

उदात्तैरनुदात्तैश्च स्वरित प्रचयैरपि ॥

हृदि दीपप्लुतैर्युक्तैस्तत्तदुक्तक्रमैर्यतिः ।

स्वरमेकैकमाद्यन्तं व्यष्टावस्थावशेषितम् ॥

कृत्वा पञ्चप्लुतोदात्तारं मप्लुतपरिस्फुतम् ।

नादामृतमनुप्राप्य विस्मृत्यैवाखिलं जगत् ॥

प्राप्नोति मोक्षमव्याजं पुनर्जन्मापहारकम् ।

एकैकमाद्यन्तमनन्य बुद्ध्या चतुर्गुणी कृत्यदश स्वरेस ॥

ह्रस्वादिपूर्वोक्तपरान्तमेवमावर्तयेन्नादसमाधि योगी ॥

त्यक्त्वा रेचकपूरकं गुरुपदांभोजस्थले पूर्णयुक्

दृष्टिः केवलकुम्भकान्तरनदत् शृ(भृ)ङ्ग प्लुताप्लावितः ।

विस्मृत्याखिलमात्मविद् गगतवन्निश्चेष्टितो निर्ममः

स्वान्तानन्दसुधान्तरं गलहरी क्रीडापरो नादवित् ॥ इति ।

नादसंग्रहे –

शुद्धप्लुतं पञ्चविधं विदित्वा रङ्गप्लुतं पञ्चविधं विभज्य ।
चतुर्गुणी कृत्य दशस्वरेभ्य समभ्यसेदुक्त दशप्लुतानि ॥

विवृतेन प्रणवस्य क्रमाद्रंगप्लुते न दीर्घेण ।
व्यञ्जनेकार्धमात्रादि संज्ञां ज्ञात्वा समभ्यसेत् ॥ इति ।

वेदलक्षणे च -

एकमात्रो भवेद् ह्रस्वो द्विमात्रो दीर्घ उच्यते ।
त्रिमात्रस्तु प्लुतो ज्ञेयो व्यञ्जनं त्वर्धमात्रकम् ॥

ह्रस्वार्धं व्यंजनं प्रोक्तं तदर्धमनुनासिकः ।
नादमूलं तदेवस्यादर्धमात्रेति गीयते ॥ इति शिवः ।

चतुर्मात्रात्मकः तारप्लुतः प्लुतसमाहृतः ।
पञ्चमात्रात्मको रंगप्लुत इत्यभिधीयते ॥

व्यञ्जनं चार्धमात्रादि चैवं ज्ञात्वासमभ्यसेत् ।

सानुनासिकया दीर्घ प्लुतरंगप्लुतं विदुः ॥

ह्रस्वप्लुतदीर्घप्लुत रङ्गप्लुतश्च विज्ञेयः ।
व्यञ्जनप्लुत इत्येवं रङ्गप्लुतस्तु पञ्चार्धे ॥

योगसारमंजर्याम् -

अकारश्चैक मात्रःस्यादाकारस्तु द्वितीयकः ।
आदिनाथेन सम्प्रोक्तं तालमात्रस्य लक्षणम् ॥

चाषस्तु शब्दे मात्रं द्विमात्रं वायसोऽब्रवीत् ।

p. 49)

शिखीरौतित्रिमात्रं हि चैतन्मात्रस्य लक्षणम् ॥

प्रणवचिन्तामणौ - वेदलक्षणे च -

विलम्बत्वरितं त्यक्तवा मध्यमस्सतु निश्चलः ।
वेष्टयित्वा त्रिधाजानु मण्डलं छोटकां स्मृतम् ॥

कुर्यादेषा भवेन्मात्रा कनिष्ठा कालमानतः ।

मध्यमा द्विगुणासैव त्रिगुणादुत्तमोत्तमा ॥

भवेद्द्वादशमात्राभिः कनिष्ठाभिः कनिष्ठिका ।
मध्यमा मध्य उद्गीत उत्तमाभिरथोत्तमः ॥

एकमात्रो भवेद् ह्रस्वो द्विमात्रो दीर्घ उच्यते ।
त्रिमात्रस्तु प्लुतो ज्ञेयः चतुर्मात्रः प्लुतप्लुतः ॥

रङ्गप्लुतः पञ्चमात्र षण्मात्रस्तु शिखिप्लुतः ।
समाप्लुतस्सप्तमात्रः गान्धर्वोऽष्टप्लुतः स्मृतः ॥

प्लुतः पञ्चविधः प्रोक्तः केचिन्नाद विदोविदुः ॥

अकारश्च उकारश्च मकारश्च प्रणवःस्तथा ।
उदात्तैरनुदात्तैश्च स्वरितप्रचयेन च ॥

त्रिरावृत्तेन विदितः स्वरभेदानु भेदतः ।
ह्रस्वदीर्घप्लुतैरेकः प्रणवो नवधाभवेत् ॥

केचिद्वदन्ति चान्येन चतुर्विंशतिधा पुनः ।

प्लुते नैवत्रिमात्रेण तच्छिकेति प्रकीर्तिता ॥

ह्रस्वदीर्घप्लुतैरेकः प्रणवः पर्युपास्यते ।
सोदात्तादि त्रिभेदेन प्रणवो नवधा भवेत् ॥

ह्रस्वदीर्घप्लुतैर्व्यक्तः प्रणवप्लुतभेदतः ॥

उदात्ते नानुदात्तेन स्वरितेन तथा पुनः ।
द्वाभ्यामैक्यं त्रिधोच्चार्य ज्ञातव्यं नवधा पुनः ॥

नवैतद्द्विविधासानु नासिकेन विपश्चितः ।
ज्ञातव्यमेवनिरनु नासिकेन स्वरः स्फुटः ॥

उक्ताः स्युरन्याद्विनवभेदश्च प्रणवश्च वै ।
विनाप्लुतेन प्रणवं नोच्चरेत् क्वचिदप्युमे ॥

इति प्रणवचिन्तामणौ ॥

नवप्लुतविभेदेन संशोध्यप्रणवं पुनः ।
प्लुतनं वा भ्यसेद्यत्नान्मोक्षमार्गप्रवर्तकः ॥

अकारादिपरान्तानामुक्ताः स्युष्षोडश स्वराः ।
प्लुतष्षोडशिका विद्धिं प्रणवं तत्प्रबोधकम् ॥

p. 50)

अर्धमात्राप्लुतशिखानादो रंगप्लुतं विदुः ॥

नादंकुर प्लुतशिखाजलदान्तरस्थ विद्युल्लतेव हृदयान्तर कर्णिकादौ ।
आमाति दीपकालिकोपम दीपितार्धमात्रा ध्रुवोपनिषदि प्रतिपादितेयम् ॥

प्लुतःप्लुतानुवर्तिस्यादर्धमात्रा स्वतस्तथा ।
समभ्यसेदर्धमात्रांश्वरूपामभवो भवेत् ॥

नादोरंगप्लुतेनैव लभ्यते नेतरेण तु ।
ध्रुवप्लुताप्लुतेनैव सिध्यत्येननान्यथा ॥

सम्यक् प्लुतशिखाज्ञेयार्धमात्रेति कीर्तिते ।
अर्धमात्रस्वरूपं तु ज्ञातुं वक्तुं प्रदर्शितुम् ॥

न शक्ता सर्वदा देवि हरिब्रह्मादि योगिनः ।
कालस्या गमनिर्गमात् परिमितः कालो भवेदत्र सा

मात्राश्वासमयी दशाक्षरमितोच्चारेणरङ्गप्लुतः।
मात्राद्वादशसम्मितो यदिमरुत् देवं स्थितस्स्यात्तदा
प्राणायामपदंपुमान् नधिगतः पद्मासने संस्थितः॥

मात्रास्वरूपमेवादो ज्ञात्वैवं प्रणवेन च।
दशप्लुत क्रमज्ञश्च नादाविर्भावमाप्नुयात्॥

दशप्लुतानां सर्वेषां नाममेकं विनिर्दिशेत्।
तारकान्त्यप्लुतान्त्यस्थं नादं तस्योपरि स्थितम्॥

नादब्रह्म इति ज्ञेयं गीर्वाणं परमं पदम्।
अन्तश्शारदचन्द्रिका विलसितागंभीरनादांकिता
व्यक्ताव्यक्ततरस्वभावविभवा योगैक रम्या परा।
स्वान्तस्वानुभवैक वेद्यमहिमासद्ब्रह्मनादाह्वया
ब्रह्मानन्दमयी रहस्य जननी सैवार्धमात्रा ह्वया॥

एवमभ्यास शीलोयः प्राणायाम परो हि सः।
नादं सिद्धिमवाप्नोति नोचेद्व्यर्थाब्धि वृष्टिवत्॥

पूर्वोक्तप्लुतमध्ये तु पञ्चैते सुप्रतिष्ठिताः।

पदान्तस्थ प्लुतो वर्णौ नासिक्योरंगसंज्ञकः ॥

पदान्ते ष्वपि सर्वत्रसरंग प्लुतसंज्ञिकः ।
सुश्लोकाञ्च सुमंगलां च तथा- सूक्तैः स्पष्टतया प्रपञ्चितमिदं
शुद्धप्लुतं सर्वदा । बिद्वादित्याक्षरदीर्घमात्रमहितो ज्ञेयः प्लुतः
प्रायशः ॥

प्लुत स्वरूपज्ञानेन नादसिद्धिर्भविष्यति ।
नादानुभवविद्योगी प्रपञ्च व्यक्तलक्षणः ॥

p. 51)

एवमभ्यासशीलस्य सिद्धिलक्षणमुच्यते ।

योगसारमञ्जर्याम्

पूर्वं पूर्वं प्रकुर्वीत यावदुत्तरसंभवम् ।
सम्भवन्त्युत्तरे सिद्धिः प्राणायामेषु सुखी भवेत् ॥

प्रथमश्चिञ्चिणी नादो द्वितीयः किङ्किणी स्वः ।
तृतीयो वेणुनादाख्यो घण्टानादश्चतुर्थकः ॥

पञ्चमस्तालनादाख्यो भृङ्गनादस्तु षष्ठकः।

सप्तमो दुन्दुभेर्नादो भेरी नादोऽप्यथाष्टकः॥

नवमो मेघनादश्च दशमः सागरस्वनः॥

छिरिकोपनिषदि

छिन्निति प्रथमः चिनिचिनीति द्वितीयः।

घण्टानादस्तृतीयः। चतुर्थः शङ्खनादः॥

पञ्चमस्तन्त्रिनादः। षष्ठस्तालनादः॥

सप्तमो वेणुनादः। अष्टमो भेरी नादः॥

नवमो मृदङ्गनादः। दशमो मेघनादः॥

नवमं परित्यज्य दशममेवाभ्यसेत्॥ इति।

स्वेदस्तु प्रथमः प्रोक्तः द्वितीयः कम्प उच्यते।

तृतीयोऽद्भुत कम्पश्च चतुर्थः पिङ्गलोपमः॥

शरीरस्योर्ध्वगामित्वं पञ्चमं परिकीर्तितम्।

षष्ठञ्च दूरश्रवणं सप्तमं दूरदर्शनम्।

दिव्याहोरोऽष्टमं देवि नवमं खेचरी गतिः॥

जीवन्मोक्षं च दशमं त्रिकालज्ञानमेव च।
चिह्नान्येतानि दृश्यन्ते निर्विघ्नस्सतु योगिनः॥

आसनं सिद्ध सदृशं न कुम्भः केवलोपमः।
न खेचरी समामुद्रा न नाद सदृशो लयः॥

नादकोशार्ध मात्र स्यात् तत्कोशः प्रणवः स्मृतः।
सहस्रवायवस्तस्य कोशभूतस्तपोधने॥

न वेदैर्नैव वेदान्तैर्नैवोपनिषदादिभिः।
अर्धमात्रापरिज्ञानान्मुक्तिरेव न संशयः॥

कीर्तनैर्वेदपठनैर्मन्त्रैर्यज्ञैर्व्रतैर्जपैः।
अर्धमात्रापरिज्ञानं विनामुक्तिं न विन्दति॥

अर्धमात्रापरिज्ञानाद्यतेरन्यत्र किं फलम्।
अर्धमात्रापरिज्ञानाद्वेदान्त श्रवणेन किम्॥

अर्धमात्रास्वरूपं तु योगमार्गेण योगिनः।

जानन्ति नान्ये गिरिजे किं वक्तव्यं पुनः पुनः॥ इति।

लययोगश्चित्तलयः संकेतस्तु प्रजापते।

आदिनाथेन संकेतः साधकाः परिकीर्तिताः॥

p. 52)

प्रज्ञास्यात् हृदये चाथ तृतीया च तथोरसि।

कण्ठे मुखे नासिकाग्रे नेत्रे भ्रूमध्यमूर्धनि॥

श्रीदत्तः।

लयोलय इति प्राहुरीदृशं लक्षणं स्फुटम्।

तत्र सर्वसमाधाने लयो विषय विस्मृतिः॥

पतञ्जलिः

नाभिचक्रे हृदये मूर्धनि ज्योतिषि नासिकाग्रे जिह्वाग्रे तालु नीत्येवमादि पदेषु

। बाह्ये वा विषयेवृत्तिमात्रेण बन्ध इति। पूर्वयोगिभिः मूलाधारादिषु

प्राणलये चोक्तेऽपि प्राज्ञानाभ्यामिति उक्तवाक्यस्यैवमभिप्रायः।

आदिनाथे नादिपरमेश्वरेणा नाभेस्स्वाधिष्ठानत्वेनोक्तत्वात्।

प्राज्ञानाभ्यामिति। प्रथमनिर्दिष्टम्। तदुक्तं योगसारमञ्जर्याम्

नाभिचक्रं महेशानि स्वाधिष्ठानमितीरितम्। इति सौन्दर्यलहर्याम्। तव

स्वाधिष्ठाने हुतवहमिति। तवश्यामं मेघं कमपि मणिपूरमिति।
उत्तरत्र वक्ष्यमाण प्रकारेण नाभिचक्रं विचिन्त्य तन्मध्ये स्थित
देवस्यपञ्चोपचारपूजानन्तरं तद्देवन्तेजोरूपमिति विचिन्त्य तत्तेजोऽहमिति
विभाव्य तत्तेजोरूप परिणाम चित्तं यावत् तावत् नित्यमभ्यसेत्। तत्तेजः
स्वात्मनि अभेदेन यदा स्फुरति तदालययोगमिति संज्ञा भवति। एवमादि
नाभ्यादि स्थानेषू हनीयम्। लक्ष्यरूपं स्वयं भूत्वा ह्यनन्यविषयं
स्मृतिः। लय योगस्स इत्युक्तः पूर्वमभ्यस्य सूरिभिः॥

वासिष्ठे

या शक्तिरूदिता शीघ्रं याति तन्मयतामजः।
य एवतु स्थिति याति तन्मयो भवतिद्रुमः॥

भाविताशक्तिरात्मानमात्मतां नयति क्षणात्॥ इति।
लययोगस्य विज्ञातुरुच्यते पतञ्जलि भगवद्भिः।
नाभिचक्रे संयमं कृत्वा कायव्यूहं जानीयात्॥

अस्यार्थः

नाभिचक्रे संयमः चित्तलयं काय व्यूहं जानीयात्॥

अस्यार्थः

नाभिचक्रे संयमः चित्तलयं काय व्यूहं जानीयात्।
वातपित्तश्लेष्मेषुस्थितसप्तधातूनां व्यूहः। तेषां स्वरूपं जानाति।
एवमभ्यासशीलस्य वातादि जन्यदोषाः नश्यन्ति। युगपदनेकशरीरोत्पादक
सामर्थ्यं काय व्यूहः। समानजयाज्वलनं नाभिचक्रे समाने चित्तलयात्
अग्निप्रकाशः। हृदये चित्तसंवित् अस्मात् ज्ञानदर्शनं भवति। उरसि
चित्तलयाद्धैर्यं भवति। कण्ठकूपे चित्तलयात् क्षुत्पिपासा निवृत्तिः।
उदानलयाज्जल

p. 53)

कण्टकादिष्वननुषङ्गः। उदाने चित्तलयात् जलकण्ठक बाधा निवृत्तिर्भवति।
शरीराद्बहिर्गमनागमन प्रवृत्तिश्च भवति। कूर्मनाड्यात् स्थैर्यम्
कण्ठकूपादयः कूर्माकारनाडीस्तस्याश्चित्तलयात् स्थिरपदं लभते।

दत्तः- प्राणजयात्सर्वप्राणिनां प्राक्स्वरूपलाभः।
मुखे चित्तलयात् वाक्सिद्धिर्भवति।

श्रीदक्षिणामूर्तिः -

जिह्वाग्रे सरस्वत्याश्चित्तलयात् सर्वविद्याविशारदो भवति । नासाग्रे चित्तलयात्
हंससिद्धिः ।

दत्तः ।

नेत्रे चित्तलयात् सर्वरूपदर्शनम् ।
(सूर्ये चन्द्रे आकाशे पवने अग्नौ जले पृथिव्यां
शब्दस्पर्शरूपरसगंधादिषु वैनतेयसिंहे चित्तलयात् तत्तद्रूपयोगो
भवति ।) भ्रूमध्ये चित्तलयात् सायुज्यम् ॥

पतञ्जलिः । मूर्ध्नि ज्योतिषि सिद्धिदर्शनं सूर्ये चन्द्रे आकाशे पवने अग्नौ
जले पृथिव्यां शब्दस्पर्शरूपरसगन्धादिषु वैनतेये सिंहे चित्तलयात्
तत्तद्रूपयोगो भवति ॥

दत्तः ।

यस्मिल्लीनं यस्य चित्तं तत्तद्रूपं भवेद् ध्रुवम् ।
सोऽहं भाव वशान्नूनं यथा भ्रमरकीटवत् ॥

तदुक्तं गीतायाम्

यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेवरम् ।

तं तमेवैति कौन्तेय सदा तद्भावभावितः ॥ इति ।

स्वदेहभावं त्यक्त्वा लक्ष्यरूपसिद्धिकालमेव कालः ।

खेचरी मेलनं चैव लययोगश्च योगिनः ।

हठयोगं विनासिद्धिर्जायते न कदाचन ॥ इति ।

॥ इति योगसारसंग्रहे नादस्वरूपस्य लययोगस्य च निरूपणं नाम नवमोऽध्यायः ॥

अध्यायः ॥

नरप्रयत्नेन सरित्प्रवाहः निबन्धने नैव तटाकगोयथा ।

मरुत्प्रवाहश्च तथैव देहे निरूढमानो हठयोग उच्यते ॥

तदुक्तं शिवयोगे -

भवेदष्टांग योगेन मुद्राकरण बंधनैः ।

तथा केवलकुंभीव हठयोग वशानिलः ॥ इति ।

मनो वायु भरे देहे स्थिते निश्चलतस्तथा ।
चन्द्रसूर्यौ समौयातौ हठयोगस्य लक्षणम् ॥

संसारतापतप्तानां समाश्रयहठोहठः ।
अशेष योगजगतामाधारकमठोहठः ॥

सारविद्यापरं गोप्यं योगिनां सिद्धिमिच्छताम् ।

p. 54)

भवेद्वीर्यवती गुप्ता निर्वीर्या तु प्रकाशिता ॥

सुराज्ये धार्मिके देशे सुभिक्षे निरूपद्रवे ।
एकान्ते मठिकामध्ये स्थातव्यं हठयोगिनः (भिः) ॥

अध्याहार प्रयासश्च प्रजल्पो नियमग्रहः ।
जनसंघं च लौल्यञ्च षड्भिर्योगो विनश्यति ॥

उत्साहान्निश्चयाद्धैर्यात्तत्वज्ञानार्थदर्शनात् ।
जनसंघपरित्यागात् षड्भिर्योगः प्रसिध्यति ॥

सदादि नाथाय नमोऽस्तु तुभ्यं येनोपदिष्टा हठयोगविद्या ।
विराजते प्रोन्नतराजयोगमारोढुमिच्छोरधिरोहिणीव ॥

धौतिर्वस्तिर्नेतिश्चैव त्राटकं लौलिकं तथा ।
कपालधाति चैतानि षट्कर्मादि प्रचक्षते ॥

कर्मषट्कमिदं प्रोक्तं घटशोधनकारणम् ।
विचित्रगुणसंधायी पूज्यते योगपुंगवैः ॥

चतुरंगुलविस्तारं सिक्तं वस्त्रं शनैः शनैः ग्रसेत् ॥

ततः प्रत्याहरेच्चैतदुदितं धौतिकर्म तत् ।
कासश्वासप्लीह कुष्ठकफरोगाश्च विंशतिः ॥

धौतिकर्मप्रभावेण धावन्त्येव न संशयः ॥

उदर गतपदार्थमुद्वमन्ती पवनमपानमुदीर्य कण्ठनालम् ।
क्रमपरिचित वायुवेश्यवर्गो गजकरिणीति निगद्यते हठज्ञैः ॥

नाभिदघ्नं जले पायु न्यस्त तालोत्कटासनः।

आधाराकुञ्चनं कुर्यात् प्रक्षालं वस्ति कर्मतत्॥

गुल्मप्लीहोदरे वापि वातपित्तकफोद्भवाः।

वस्तिकर्मप्रभावेण वार्यन्ते सकलामयाः॥

यात्वीन्द्रियान्तः करणप्रसादं दद्याच्चकान्तिं दहनप्रदीप्तिम्।

अशेषदोषापचयं निहन्यादभ्यासमानं जलवस्तिकर्म॥

सूत्रं वितस्तिसुस्निग्धं नासानालैः प्रवेशयेत्।

मुखान्निर्गम एतैषां ततिसिद्धिर्निगद्यते॥

कपालशोधिनी सैव दिव्यसिद्धिप्रसाधिनी।

कण्ठोर्ध्वजाठरोगघ्नी जायते सुकरी नतिः॥

निरीक्ष्य निश्चल दृशा सूक्ष्मलक्ष्यं समाहितः।

अश्रुसंपातपर्यन्तमाचार्यैस्तकस्स्मृतः॥

घोटकं नेत्ररोगाणामिन्द्रियाणां कवाटकम्।

यत्नात्तु घोटकं गोप्य यथा हातकवत्तथा॥

अमन्दावर्त वेगेन तुन्दं सव्याजसव्यतः।

नतांसो भ्रामयेत् तेषां लौलि गौढैः प्रशस्यते॥

मन्दाग्नि सन्दीपन पाचनादि संदायि सानन्दकरी सदैव।

p. 55)

अशेषदोषामय शोषणी च हठक्रियामौलिरियं हिलौलि॥

भस्त्रीव लोहकारस्य रेचपूरौ च संभ्रमौ।

कपालभातिर्विख्याता कफदोषविशोषणी॥

षट्कर्मभिर्गतस्थौलय कफदोषमलादिकः।

प्राणायामं ततः कुर्यात् अनायासेन सिध्यति॥

हठयोगे प्रतिपादित सूर्यभेदिताकुम्भकानां स्वरूपं पूर्वमेव

प्राणायाम प्रकरणे प्रतिपादितम्। महामुद्रामहाबन्धो महावेगश्च

खेचरी।

ओड्याण पीठबन्धश्च ततो जालंधराभिधा॥

करणी विपरीतादि वज्रोली शक्ति चापलम्।
अन्ते सा खेचरी मुद्रा दशमुद्राः प्रकीर्तिताः॥

आदि नाथोदितामुद्राः अष्टैश्वर्यप्रदायकाः।
दुर्लभा सर्वसिद्धानां दुर्लभा त्रिदशैरपि॥

एकैका तासु मुख्या स्यात् महासिद्धिप्रदायिनी।
महामुद्रांप्रवच्छ्यामि वसिष्ठेनोक्तमादरात्॥

पादमूलेन वामेन योनिं संपीड्यदक्षिणम्।

पादं प्रसारितं कृत्वा कराभ्यां धारयेन्मुखे।
कण्ठे बंधं समारोप्यपूरयेद्वायुमूर्ध्वतः॥

यथादण्डाहतः सर्पो दण्डाकारः प्रजायते।
ऋज्वीभूता तदाशक्तिः कुण्डली सहसा भवेत्।
तथाष्टौ मणि रणावस्था जायन्ते द्विपुटा स्थिताः॥

न हि पथ्यमपथ्यं वा रसाः सर्वेऽपि नीरसाः।
अपि भुक्तं विषंघोरं पीयूषमिवजीर्यते॥

क्षयकुष्ठगुदावर्त गुल्मप्लीह पुरोगमाः ।
तस्य दोषां शमं (क्षयं) यान्ति महामुद्रां तु योऽभ्यसेत् ॥

कथितेयं महामुद्रा जरामृत्युविनाशिनी ॥
गोपनीयं प्रयत्नेन न देयं यस्य कस्यचित् ॥

पार्ष्णीं पादस्य वामस्य योनि स्थाने नियोजयेत् ।
वामोरूपरिसंस्थाप्य दक्षिणं चरणं तथा ॥

पूरयेन्मुखतो वायुं हृदये चिबुकं दृढम् ।
निभृत्य योनिमाकुञ्च्य मनोमध्ये नियोजयेत् ॥

रेचयेच्च शनैरेवं महाबन्धोऽयमुच्यते ।
अमुंयोनि महाबन्धं सर्वसिद्धि प्रदायकम् ॥

सव्याङ्गे च समभ्यस्य दक्षिणे च समभ्यसेत् ।
अयं च सर्वनाडीनामूर्ध्वंगति विबोधकः ॥

त्रिवेणी संगमद्वारा केदारं प्रापयेन्मनः ।

रूपलावण्यसम्पन्ना यथास्त्री पुरुषं विना ॥

p. 56)

महामुद्रो महाबन्धो महावेधं विना तथा।
महावेधं प्रवक्ष्यामि यथा तौ सिध्यतस्ततः॥

महाबन्धस्थितो योगी धृत्वापूरकमेवधीः।
वायुनागतिमाहृत्य निभृतं कण्ठ मुद्रया॥

समहस्त युगो भूमौ स्फिजासन्ताऽयेच्छनैः।
घटि द्वयं समाक्रम्य वायुः स्फुरति सत्वरः॥

सोमसूर्याग्नि संबन्धो जायते चामृतं च वै॥

मृतावस्था समुत्पत्तौ ततो वायुं विरेचयेत्।
महद्वेधोऽयमभ्यस्तो महासिद्धि प्रदायकः॥

वलीपलितवेगघ्नः सेव्यते साधकोत्तमैः।
महामुद्रा त्रयं गुह्यं जरामृत्यु निवारणम्॥

वह्नि वृद्धिकरं चैव ह्यणिमादि गुणप्रदम्।

अष्टधादीर्यचैतद्यां यामं यामं दिने दिने ॥

पुण्य चञ्चार सन्दायी पापौघ बिदुरं सदा ॥

साम्यक्छिक्षावतामेव प्रथमं स्वल्पसाधने ।

वह्निस्त्रीपथसेवानामादौवर्जनमाचरेत् ॥

च्छेदन दोहन चालैः कण्ठकाल क्रमेण वर्धयेत् तावत् ।

भ्रूमध्यं स्पृशति तदा नित्याभ्यासेन खेचरी सिद्धिः ॥

कपाल कुहरे सिद्धिजिह्वा प्रविष्टा विपरीतगा ।

भ्रुवोरन्तर्गता दृष्टिर्मुद्रा भवति खेचरी ॥

कलां पराङ्मुखी कृत्वा त्रिपथे परियोजयेत् ।

सा भवेत्खेचरीमुद्रा व्योमचक्रं तदुच्यते ॥

रसनामूर्ध्वगां कृत्वा क्षणं वा यदि तिष्ठति ।

क्षणेन मुच्यते योगी व्याधि मृत्यु जरादिभिः ॥

न रोग मरणं तस्य न निद्रा न क्षुधा तृषा ।

बध्यते न स कालेन लिप्यते न स कर्मणा ॥

बाध्यते न स केनापि यस्य मुद्रास्ति खेचरी।
चित्तं चरति वै यस्मात् जिह्वा चरति खे गता॥

तेनैवा खेचरी नाम मुनिसिद्धैर्नमस्कृता।
खेचर्या मुद्रितं येन विवरंलम्बकोर्ध्वतः॥

तस्य नक्षरते बिन्दुः कामिन्या श्लेषितस्य च।
चलितोऽपि यथाबिन्दुः संप्राप्तो योनिमण्डलम्॥

वज्रत्यूर्ध्वं यथाशक्ति निबद्धो योनिमुद्रया॥
ऊर्ध्वजिह्वा स्थिरो भूत्वा सोमपानं करोति यः।
मासार्धेन न सन्देहो मृत्युं जयति योगवित्॥

p. 57)

नित्यं सोमकलापूर्णं देही देहं न मुञ्चति।
गोमांसं भक्षयेन्नित्यं पिबेदमरवारुणीम्॥

कुलीनं तमहं मन्ये इतरे कुलघातकाः।
गोशब्देनोदिता जिह्वा तत्प्रवेशो हि तालुके॥
गोमांसभक्षणं तत्तु महापातक नाशनम्।

जिह्वा प्रवेशसंभूता वह्निनोत्तापिताखलु ॥

चन्द्रात्ति स्त्रवति यः सारस्सस्वेदोमरवारुणी ।
बन्धो येन सुषुम्नायां प्राणस्तुड्ढीयते यतः ॥

तस्या दुड्याणनामायं योगिभिः समुदाहृतः ।
उड्याणं कुरुते यस्मात् अविश्रान्तो महाखगः ॥

उड्याणं च तदेव स्यात् तत्र बन्धो निगद्यते ।
उदरे पश्चिमं ताणं नाभेरूर्ध्वं च कारयेत् ॥

उड्डियाणमिदं बन्धो मृत्युमातङ्ग केसरी ।
उड्डियान्तु सहजा गुरुणा कथितं सदा ॥

अभ्यसेदुड्डियाणं तु वृद्धोऽपि तरुणो भवेत् ।
नाभेरूर्ध्वमधश्चापि ताणं कुर्यात् प्रयत्नतः ।
षण्मासमभ्यसेन्नित्यं जयत्येव न संशयः ॥

सति पद्मासने पद्मौ कराभ्यां धारयेद् दृढम् ।
गुल्फ देशे समीपेऽथ गुदं तत्र प्रपीडयेत् ॥

पश्चिमे ताणमुदरे काययेद् हृदये गले।
शनैश्शनैस्तदा प्राणस्तुन्दस्संधिन्न गच्छति॥

सर्वेषामेव बन्धानां उमेसा उड्डियाण नामकः।
उड्डीयाणकृते बन्धे मुक्तिः स्वाभाविकी भवेत्॥

पार्ष्णिभागेन संपीड्य योनिमाकुञ्चयेद् गुदम्।

अपानमूर्ध्वमाकृष्यमूलबन्धोऽयमुच्यते।
अधो गतिरपानं वैह्यूर्ध्वगं कुरुते बलात्॥

आकुञ्चनेन तं प्राहुर्मूलबन्धं च योगिनः।
गुदं पाष्ण्या तु संपीड्य वायुमाकुंचयेद् बलात्॥

वारं वारं यथा चोर्ध्वं समायाति समीरणः।
प्राणापानौ नादबिन्दूमूलबंधो न चैकतः॥

गत्वा योगस्य संसिद्धिं गच्छतो नात्रसंशयः।
आपन प्राणयोरैक्यात् क्षयान्मूत्र पुरीषयोः॥

युवा भवति वृद्धोऽपि सततं मूलबंधनात्।
अपाने चोर्ध्वगे जाते प्रयाते वह्निमण्डले॥

p. 58)

तदानल शिखाशीघ्रं वर्धते वायुना सह॥

ततो यावद्वह्नपानौ प्राणमूर्ध्वस्वरूपकम्॥

तेनात्यन्तं प्रदीप्तस्य ज्वलनो देहिनस्तथा।
तेन कुण्डलिनीसुप्ता सन्तप्ता संप्रबुध्यते।
दण्डाहत भुजंगीष निश्वस्य ऋजुतां व्रजेत्॥

बिलप्रविष्टेव ततो ब्रह्म नाड्यन्तरं व्रजेत्॥
तस्मान्नित्यं मूलबन्धः कर्तव्यो योगिभिः सदा॥

पाताले यद्वियति सुषिरं मेरुमूले तदस्मिन्
तत्त्वचैतत् प्रवदति सुधीः संमुखं निम्नगानाम्।
चन्द्राधारा स्रवति वपुषस्तेन मृत्युर्नराणां
संबध्नीयात् सुकरणमृदा नान्यथा काय सिद्धिः॥

कण्ठमाकुञ्च्य हृदये स्थापयेद् दृढमिच्छया ।
बन्धो जालंधराख्योऽयममृताप्याय कारकः ॥

बध्नाति हि सिरो जालमधोगामी नभोजलम् ।
ततो जालंधरो बन्धः कण्ठदुःखौघनाशनः ॥

जालन्धरे कृते बन्धे कण्ठसंकोचलक्षणे ।
न पीयूषः पतत्यग्नौ न च वायुः प्रवाति हि ॥

कण्ठसंकोचने नैव द्विनाड्यो स्तम्भयेद् दृढम् ।
अयं बन्धो मया प्रोक्तः षोडशाधार बन्धनम् ॥

बन्धत्रयमिदं श्रेष्ठं महासिद्ध निषेवितम् ।
सर्वेषां हठ तन्त्राणां साधनं योगिनो विदुः ॥

अधस्यात् कुञ्चने नाशुकण्ठसंकोचने कृते ।
मध्ये पश्चिमताणेन स्यात्प्राणो ब्रह्मनाडिगः ॥

मूल स्थानं समाकुञ्च्य चोड्डियाणं तु कारयेत् ।
इडां च पिङ्गलां बध्वा वाहयेत् पश्चिमं पदम् ॥

अनेनैव विधानेन प्रयाति पवनो लयम् ।
ततो न जायते मृत्युर्जरा रोगादिकं तथा ॥

ऊर्ध्वनाभेरधस्तालुरूर्ध्वं भानुरधश्शशी ।
करिणी विपरीताख्या गुरुवाक्येन लभ्यते ॥

करिणी विपरीताख्या सर्वव्याधिविनाशिनी ।
नित्यमभ्यासयुक्तस्य जठराग्नि विवर्धिनी ।
आहारो बहुलस्तस्य संपाद्यः साधकस्य तु ॥

अल्पाहारो यदि भवेदग्निर्देहं दहेत् क्रमात् ।
अधः शिराश्चोर्ध्वपादः क्षणं स्यात् प्रथमे दिने ॥

p. 59)

वलिश्चपलितश्चैव षण्मासार्ध्वेन दृश्यते ॥

याममात्रं तु यो नित्यमभ्यसेत् स तु कालजित् ।
स्वेच्छया वर्तमानोऽपि योगोक्तैर्नियमैर्विना ॥

वज्रोलिं यो विजानाति स योगी सिद्धि भाजनम् ।

पुच्छं प्रगृह्य भुजगीं सुप्तामुद्बोधयेत् सुधीः ॥

निद्रां विहाय सा ॠज्वी ऊर्ध्वमुत्तिष्ठते हठात् ।
वितस्ति प्रमितं दीर्घं विस्तारं चतुरंगुलम् ॥

मृदुलं धवलं दिव्यं प्रोक्तं वेष्टनाम्बरलक्षणम् ।
भानोराकुञ्चनं कुर्यात् कुण्डलीं चालयेत् ततः ॥

मृत्यु वक्रगतस्यापि तस्य मृत्युभयं कुतः ।

नासादक्षिणमार्गवाहि पवनात् प्राणोऽतिदीर्घाकृतिः
चन्द्राम्भः परिपूरिता मृत तनुः प्राद्घण्टिकायां सदा ।
विद्यात्कान्ति विशालवह्नि वशगान् भ्रूरंध्रनाडीगणान्
तंकायं कुरुते सुवर्णरुचिरं पूर्णद्रुमस्कन्धवत् ॥

कुण्डलीं चालयित्वाथ कुर्याद् भस्त्रां विशेषतः ।
एवमभ्यासतो नित्यं यमिनः शक्यते यमः ॥

तदाभ्यसेत् सूर्यभेदमुज्जीयां शीतलीं तथा ।
एवमभ्यास युक्तस्य दिव्यकायं भवेद्ध्रुवम् ॥

मुहूर्तद्वयपर्यन्तं निर्भयाच्चालनादसौ।
ऊर्ध्वमाकुंचते किंचित् सुषुम्नां कुण्डलीं गताम्॥

तेन कुण्डलिनी शक्तिः सुषुम्नायाः समुद्धृताः।
जठाति तस्मात् प्राणोऽयं सुषुम्ना व्रजति स्वतः॥

तस्मात् संचालयेन्नित्यं शंभुगर्भामरुंधतीम्।
यस्याः सञ्चालनेनाशु योगीरोगैः प्रमुच्यते॥

येन संचालिताशक्तिः स योगी सिद्धचालनम्।
किमत्र बहुनोक्तेन कालं जयति लीलया।
वज्रोल्यादि त्रयं पूर्वं निन्दन्तं तत्ववादिभिः॥

कापालिकमतत्वेन योगसारेण लेखितम्।
इति मुद्रा दशप्रोक्ता चादिनाथेन शम्भुना।
करणे सर्वसिद्धिः स्यान्नचैकापि क्षयो भवेत्॥ इति।

॥ इति योगसारसंग्रहे हठयोग स्वरूपनिरूपणं नाम दशमोध्यायः॥

राजयोगं विना पृथ्वी राजयोगं विनानिशि ।
राजयोगं विना मुद्रा विचित्रापि न राजते ॥

p. 60)

न भेदः शिवयोगस्य राजयोगस्य तत्वतः ।
बहिर्मुद्रांकितं पूर्वं बहिर्योगं च तन्मतम् ॥

अन्तर्मुखाख्यमपरमन्तर्योगः स एव हि ।
राजयोगः स कथितस्स एव मुनिपुङ्गव ॥ इति ॥

नन्दिकेश्वरतारावलयाम्- बहिर्मुद्रापरिज्ञानाद्योगस्तारक उच्यते ॥

अन्तर्मुद्रापरिज्ञानादमनस्क इतीरितः ॥

बहिर्मुद्रापुरा प्रोक्ता चादिनाथेन शम्भुना ।
अन्तर्मुद्रां प्रवक्ष्यामि योगशांकरवर्तिनीम् ॥

राजयोगः समाधिश्चोन्मनी च मनोन्मनी ।
शिवयोगो लयस्तत्वं शून्याशून्यं निरञ्जनम् ।
अमनस्कं यथा चैतन्निरालम्बं निरञ्जनम् ।
जीवन्मुक्तिश्च सहजमित्यदिर्ह्येक वाचकम् ॥

राजानन्दीप्यमानन्तं परब्रह्माणमव्ययम् ।

देहिनं प्रापयेद्यस्तु राजयोगस्स उच्यते ॥

यदा संक्षीयते प्राणः मानसञ्च प्रलीयते ।

यदा समरसत्वं तत् समाधिरभिधीयते ॥

दृग् दृश्य विवेके -

मनसो वृत्ति शून्यस्य ब्रह्माकारतयास्थितिः ।

असंप्रज्ञातनामासौ समाधिरभिधीयते ॥ इति ।

व्यासभाष्ये -

विरामप्रत्ययाभ्यास पूर्वकसंस्कारशेषोऽन्यस्सर्ववृत्ति प्रत्यस्तमये

निरोध चित्तस्य समाधिरसं प्रज्ञातः ॥

उत्तरगीतायाम्

प्रमाशून्यं मनः शून्यं बुद्धिशून्यमनामयम् ।

सर्वशून्यं निराकारं समाधिस्थस्य लक्षणम् ॥

दत्तः

नेत्र त्रयोन्मेषनिमेष शून्यैर्वायुर्यमावर्जितरेचकपूरैः ।
मनश्च सङ्कल्पविकल्पशून्यैर्मनोन्मनीमग्नधियो भवन्ति ॥

उन्मन्यवस्थाधिगमाय विद्वन्नुपायमेकं तव निर्दिशामः ।
पश्यन्नुदासीनदृशाप्रपञ्च सङ्कल्पमुन्मूलय सावधानः ॥

नन्दिकेश्वरतारावल्याम् -

अन्तर्लक्ष्यंबहिर्दृष्टिर्निमेषोन्मेषवर्जितः ।
एषासाशांभवीमुद्रा सर्वतन्त्रेषु गोपिता ॥

शिवयोगे -

लक्ष्यलीनमनसा निलेन यो वर्तते चलित तारको भवेत् ।
खेचरीगमय शैवशांभवी मुद्रया सततयाजगद्गुरुः ॥

आदिनाथः -

विच्छिन्नसर्वसङ्कल्पो निश्शेषाशेषवर्जितः ।
स्वावगम्यो लयः कोऽपि जायते वागगोचरः ॥

योगशांकरे -

अन्तर्लक्ष्यविलीनचित्तपवनो योगी सदा वर्तते दृष्ट्या निश्चलतारया बहिरयः
पश्यन्न पश्यन्नपि ।
मुद्रेयं खलु शांभवी भवति सा युष्मत् प्रसादाद्गुरो
शून्याशून्यविवर्जितं स्मरति यत्तत्वं पदं शाम्भवम् ॥

p. 61)

गोरक्षः -

सुषिरोज्ञानजनकः पञ्चस्रोतस्समन्वितः ।
तिष्ठेत खेचरी मुद्रा तस्माच्छून्ये निरञ्जने ॥

सोमसूर्यद्वयोर्मध्ये निरालम्बन्तले पुनः ।
संस्थिता व्योमचक्रे या सा मुद्रा नाम खेचरी ॥

प्रणवचिन्तामणौ -

सा मया विदिता या माया साक्षाच्छिववल्लभा ।
पूरयेन्मारुतं दिव्यं सुषुम्ना पश्चिमे मुखे ॥

पुरस्ताच्चैवपूर्येत निश्चितं खेचरी भवेत् ।
निरालम्बे मनश्शून्ये व्योमचक्रे व्यवस्थिते ॥

निरालम्बं मनः कृत्वा न किञ्चिदपि चिन्तयेत् ।
कर्पूरमनले यद्वत् सैन्धवं सलिले यथा ।
सदा संदीयमानञ्च मनस्तत्वं विलीयते ॥

लयोलय इति प्राहुरीदृशं विद्धि लक्षणम् ।
अपुनर्वासनोत्थानं लयमित्युच्यते बुधैः ॥

परमेश्वरेण कुण्डल्या सहराजयोगं कुण्डलिनी प्रकरणे उच्यते ॥

॥ इति योगसारसंग्रहे राजयोगस्वरूपनिरूपणं नाम एकादशोध्यायः ॥

एवमभ्यास शीलस्य विघ्नाः प्रादुर्भवन्ति हि ।

वातपित्तादि रोगैश्च भूताद्यैर्विविधानि च ॥

तदुक्तं योगशांकरे -

प्रथमाभ्यास काले तु विघ्नास्युर्विविधा मुने ।
आलस्यं प्रथमो विघ्नः दुस्सङ्गश्च द्वितीयकः ।
मन्त्राणां साधनं ज्ञेयं तृतीयो विघ्नसंभवः ॥

चतुर्थो धातुवादः स्यात् पञ्चमं काव्यकल्पना ।
उपसर्गाः प्रवर्तन्ते दृष्टस्यात्मनि योगिनः ॥

काम्यक्रियास्तथा कामान् मानुषानभिवाञ्छति ।
स्त्रियोदानफलं मायां विद्यारूपं धनं दिवः ॥

देवत्वममरेशत्वं रसायनवधः क्रियाः ।
मरुत्प्रपतनं यज्ञो जलाग्न्यो रुपसेचनम् ॥

श्राद्धान्नादी निदानानि फलानि नियमास्तथा ॥

ततोपवास पूर्वञ्च देवताभ्यर्थनानि च ।

तेभ्यस्तेभ्यस्स्वकर्मभ्यः उपतृष्णाभि वाञ्छितम् ।
चित्तमित्थं प्रवृत्तं तु यत्नाद्योगी निवर्तयेत् ।
ब्रह्मसङ्गिमनः कुर्वन् उपसर्गाद्विमुच्यते ॥ इति ।

मार्कण्डेये -

उपसर्गैर्जितैरेभिरुपसर्गास्ततः पुनः ।
योगिनः संप्रवर्तन्ते सत्वराजसतामसाः ॥

p. 62)

प्रतिभाश्रवणो दैवो भ्रमावर्तौ तथापरौ ।
पञ्चैते योगिनो योगविघ्नाय कटुकोदयः ॥

देवार्थवाक्यशास्त्रार्थ विद्याशिल्पाद्यशेषतः ।
प्रतिभाति यदन्यच्च प्रतिपः स तु योगिनः ।
शब्दार्था नखिलान् वेत्ति शब्दं गृह्णाति यच्चवै ॥

यो जन्मानां सहस्रेभ्यः श्रवणस्याभि धीयते ।
मासान्ताद्वीक्षते चाक्षणा देवयोनि गणादयः ॥

उपसर्गं तमप्याहुर्देवमुन्मत्तवद्बुधः ।

भ्राम्यते यन्निरालंबं मनो दोषेण योगिनः ॥

समस्ताधारविभ्रंशो भ्रमरसपरिकीर्तितः ।
आवर्तयुवतो यस्य ज्ञानावर्तो यदाकुलः ॥

चित्तनाशकृतावक्त उपसर्गस्स उच्यते ।
ततोऽभ्यास परित्यागं प्रथमं विघ्न उच्यते ।
ततोऽभ्यास परित्यागं प्रथमं विघ्न उच्यते ॥

द्वितीयं संशयाख्यं च तृतीयं च प्रमत्तता ।
आलस्यं च चतुर्थं स्यात् निद्राकोपं च पञ्चमम् ॥

षष्ठं च विरतिर्भ्रान्ति दर्शनं सप्तमं स्मृतम् ।
विशेषं चाष्टमं चैव ह्यनाख्यं नवमं स्मृतम् ॥

अलब्धभूमिर्दशमं गोरक्षेण प्रकीर्तितम् ।
सर्वत्रानुपपत्तौ च देशकाल विवर्जिते ॥

असतां दर्शने योगं तस्मात् तु परिवर्जयेत् ॥ इति ॥

दत्तः।

न वेष्टधारिणं किञ्चित् कारणं न च तत्कथा।
क्रियैव कारणं सिद्धिः सत्वमेतत्तु सांकृते॥

शिश्नोदरार्थं योगस्य कथेयं वेष्टधारिणः।
अनुष्ठानविहीनास्तु पञ्चयन्ति जनानिह॥

उच्चावचैर्विप्रलोभैर्विन्दन्ति कुशलान्वितैः।
योगिनो वयमित्येवं मूढाः कामपरायणाः।
शनैः शनैस्तान् यो ज्ञात्वा योगाभ्यासविवर्जितान्॥

कृत्वार्थवञ्चनैरेवं वञ्चयेद्वेषधारिणः।
यतस्ते विघ्नभूतास्तु योगाभ्यासस्य सर्वदा॥

वर्जयेत्तान् प्रयत्नेन चेदृशी सिद्धिजाप्रयान्॥

योगसारमञ्जर्याम् -

भटभेदाश्च चत्वारो नदभेदास्तथैव च।

अंगशोषः क्षुधालस्यं कण्डूर्देह विवर्णता ।
भटस्य प्रत्ययास्त्वेते तेषां शृणु च भेषजम् ॥

p. 63)

मनो निर्विषयं कृत्वा त्रिमासममरीरसम् ।
देहमुद्वर्त्तयेत् तस्य देहवृद्धिः प्रजायते ॥

त्रिरुद्वर्तनं कुर्यात् दिवारात्रं तथैव च ।
रसनामूर्ध्वमायोज्य वज्रकन्दपरोन्मुखीम् ॥

तत्सुधांन्निहतस्सत्यं क्षुधालस्यं च नश्यति ॥

तत्सुधाममरीं देवि गृहीत्वा चांगमर्दनात् ।
तच्छरीरविवर्णत्वं कण्डूत्वं च विनश्यति ॥

नट भेदाश्च चत्वारो बहुधा संस्थिताः प्रिये ।
नेत्र रोगाङ्ग रोगश्च दाहो भ्रान्तिस्तथैव च ॥

भेदमेकं मया प्रोक्तं द्वितीयमधुना शृणु ।
तदन्तरुक्काल्प सत्वं देहलाघवनाशनम् ।
तृतीय भेदञ्च तथा शृणु देवि महाज्वरः ॥

शिरोरुक्कोष्णभेदश्च जिह्वाभ्रान्तिस्तथैव च ।
वमनं कासदोषश्च नेत्रान्धत्वं तथैव च ॥

दुर्जया च तथा निद्रा तेषां शृणु च भेषजम् ।
स्वमूलोच्छ्वाससम्पन्नामूर्ध्वं कुण्डलिनां न्यसेत् ।
निश्चलामूर्ध्वगां जिह्वां कृत्वा कुम्भकमाश्रयेत् ॥

शक्तिक्षोभान्महादेवि ज्वलनादि प्रभेदतः ।
यदाशृणोति तन्नादं तदामुक्तस्स उच्यते ॥ इति

चिन्तये मृतासक्तं स्वदेहं परमेश्वरि ।
अनेन देवि योगेन सर्वरोगैः प्रमुच्यते ॥

अनेनैव विधानेन द्विमासान्तं यदा चरेत् ।
तदा शृणोति कर्णान्तं महागजरवध्वनिः ॥

पूर्ववच्चिन्तयेद्देहं द्वितीयैर्मुच्यते गदैः ।
त्रिमासान्ते सिंहनादं शृणोति परमेश्वरी ॥

तृतीयदोषभेदाश्च मुच्यते नात्र संशयः ।
मेघनादमघोराख्यं चतुर्थे मासि पर्यये ॥

श्रुत्वा पूर्ववदभ्यस्य तुर्यदोषैः प्रमुच्यते ।
एवं स्थिरमतिर्ध्यानमभ्यसेच्च द्विकालकम् ॥

साधयेत् त्र्यब्दतस्सिद्धिर्जायते नात्र संशयः ॥ इति ।

दत्तः ।

स्निग्धां यवागूमत्युष्णां पीत्वा तत्रैव धारयेत् ॥

विघाते वचसो वाचां बाधिर्ये श्रवणेन्द्रिये ।
तथैवां पुफलं ध्यायेत् तृषार्तो रसनेन्द्रिये ॥

यस्मिन् यस्मिन् ऋजोदेशे तस्मिंस्तु कृषहारिणी ॥

धारयेद्धारणामुष्णोशीतांशीते विदाहिनी ।
कीलं शिरसि संस्थाप्य काष्ठं काष्ठेन धारयेत् ॥

p. 64)

वायुः काष्ठम्। कीलं कला। शनैः शनैः प्राणे धारणेनैव शान्तिः।

लुप्त स्मृत स्मृतिः सद्यो योगिनस्तेन जायते।
द्यावापृथिव्यो वाय्वाग्नि व्यापिनावसुधाधरा॥
अमानुषा सत्वजाता बाधास्त्वेति च कीर्तिताः॥

अमानुषां सत्वमन्तः योगिनं प्रविशेद्यदा।
वाय्वग्निधारणाच्चैनं देहसंस्था विनिर्दहेत्॥

एवं सर्वात्मना कार्यारक्षायोगनृपोविदः।
धर्मार्थकाममोक्षाणां शरीरं साधनं यतः॥

प्रवृत्ति लक्षणाख्याता योगिनो विस्मयात् तदा।
विज्ञानलयमाप्नोति तस्माद्गोप्य प्रवर्तयः॥

इति मार्कण्डेय पुराणे गोरक्षः॥

प्रस्वेदो जायते पूर्वं मर्दनं तेन कारयेत्।
ततोऽपि धारणाद्वायोः क्रमेणैव शनैः शनैः॥

कम्पो भवति देहस्य चासनस्थस्य योगिनः ।
ततोधिकतराभ्यासात् दर्दुरी जायते भृशम् ॥ ध्रुवम् ॥

यथा च दर्दुरो गच्छेदुत्प्लुत्योत्प्लुत्यभूतले ।
पद्मासनस्थितो योगी तथा गच्छति भूतले ॥

ततोऽधिकतराभ्यासात् भूमित्यागश्च जायते ।
पद्मासनस्थ एवासौ भूमिमस्पृश्य वर्तते ॥

निराहारो विचित्रं हि तथा सामर्थ्यमुद्भवेत् ।
अल्पं बाहुबलं भुक्त्वा योगीनव्यथते तथा ॥

अल्पमूत्रपुरीषः स्यादल्पनिद्रा च जायते ।
कीटो वा मूषिका लूता स्वेददुर्गन्धता नने ॥

एतानि सर्वदा तस्य न जायन्ते ततः पुनः ॥

ततोऽधिकतराभ्यासात् बलमुत्पद्यते भृशम् ।
येन भूचर सिद्धस्य भूचराणां गजक्षमः ।

व्याघ्रो लुलायोऽप्यश्वोवा गवयो गज एव वा ॥

सिंहो वायोगिना तेन म्रियते हस्तताडिता ।
कन्दर्पस्य यथारूपं तथा तस्यापि योगिनः ।
तस्मिन् काले महाविघ्नो योगिनः स्यात् प्रसादतः ।
तद्रूपविवशानार्यः कांक्षन्तेऽस्यसमागमम् ॥

यदिसङ्गं करोत्येवं बिन्दुस्तस्य विनश्यति ।
आयुः क्षयो बिन्दुहानिरसामर्थ्यं च जायते ॥

तस्मात् स्त्रीणां सङ्गवर्जं कुर्यादभ्यासमादरात् ।
योगिनोंगेषुगंधः स्यात् सततं बिन्दुधारणात् ॥
तस्मात् सर्वप्रयत्नेन बिन्दू रक्ष्यो हि योगिनाम् ॥

p. 65)

प्रणवचिन्तामणौ -

तथा च व्याधिभिस्त्यक्तस्तथा प्राणेजिते तथा ।
स्वेच्छया वर्तते देह आसनोदुच्चलिस्यति ॥

यावदासनमुत्सृज्य देहो व्योम न चाश्रयेत् ।

यावद्रोगाश्च विघ्नाश्च संभविष्यन्त्यनेकथा ॥

नागाः सुरेन्द्रकन्याश्च यक्षिण्यो सिद्धकन्यकाः ।
प्रार्थयिष्यन्ति ते देविहृच्छ्रयेण भृशातुराः ॥

शृणोति दिव्यवार्तां च दिव्यदर्शनमेव च ।
रसायनाद्यौषधं च स्वयमेव प्रवर्तते ॥

नृपाश्च पृथिवी दानैः बहुमानैश्च पुष्कलाः ।
योगिनः संप्रवर्तन्ते विघ्नार्थमितरेऽपि च ॥

यस्याज्ञा वर्तते देवि देवतिर्यङ्नरादिषु ।
एवं प्राप्तान् महाभोगान् देवासुरमहीभुजः ॥

तृणवत्तांस्त्यजन्योगी स परां सिद्धिमाप्नुयात् ॥ इति ।

धारणायां च सिद्धायां योगिनो यत तेजसः ।
विघ्नार्थमभिवर्तन्ते गुह्यका बलिकामुकाः ॥

योगसारमञ्जर्याम् -

अन्यथा वर्तमानस्य विघ्नं कुर्वन्ति दारुणाः।
रोगैर्बहुविधैर्देवि श्रमजैर्निद्रया तथा॥

प्रतिबन्धैश्च विविधैरविश्वासैश्च जृंभणैः।
तस्मात् तेषां बलिं दद्यात् यथावन्नियत्तात्मवान्॥

एककालं द्विकालं वा त्रिकालं वा बलिं क्षिपेत्।
अर्धरात्रे विशेषेण तद्यथा शृणुपार्वति॥

एकान्ते विजने देशे कृत्वा मण्दलमुत्तमम्।
ऐं व्यापकमण्डलाय ऐं। इति सकृद्दद्यात्॥

चतुरश्रं महेशानि मण्डलं कुसुमाक्षतैः।
तत्र मण्डलमाधाय साधारं पत्रमुत्तमम्॥

अर्धान्नं पूर्णसलिलं सपुष्पं साक्षतं गुहे।
बलिं दद्याच्च मन्त्रेण तर्जन्यासंप्रतर्पयेत्॥

सर्वभूतेभ्य इत्यन्ते हुंकारं सम्यगुच्चरेत्।

स्वाहान्तोऽयं महामन्त्रस्तारपञ्चकसंपुटः ॥

सर्वविघ्नविधातार्थमीरितः प्रथमं प्रिये ।
पूर्वस्यां दिशिभूतांश्च भूतनाथं च तर्पयेत् ॥

दक्षिणे सकलान् यक्षान् यक्ष कन्याश्च तर्पयेत् ।
पश्चिमे राक्षसान् बाले तथा राक्षस योषितः ॥

उत्तरे क्षेत्रपालं च तत्कन्याश्च प्रतर्पयेत् ।
ऊर्ध्वायां दिशि देवांश्च देवकन्याश्च तर्पयेत् ॥

p. 66)

मध्ये चराचरगुरुमीश्वरं भुवनैः सह ।
तत्र त्यान्योगिनी क्षेत्रनाथान् गुणकानपि ॥

तर्पयेत् पञ्चभूताद्यैर्भावयेत् परिवेष्टितम् ।
तत्परामृतसन्तृप्तं भावयेत् स चराचरम् ॥

अनेन बलिनातृप्ता योगिनः सिद्धिमुत्तमाम् ।
दिशन्ति भूतनाथास्ते चान्यथा विघ्नयन्ति च ॥

तस्मात् सर्वप्रयत्नेन बलिं दद्याद्विचक्षणः ।
ततो यत्नं प्रकुर्वीत मन्त्रयोगस्य योगवित् ॥ इति ।

प्राणायामेन योगशान्ति प्रकार उच्यते ॥

प्रणवचिन्तामणौ -

जिह्वया वायुमाकृष्य यः पिबेत् सततं नरः ।
श्रमदाह विनिर्मुक्तो भवेन्नीरोग भाक् क्रमात् ॥

जिह्वया वायुमाकृष्य जिह्वामूले निरोधयेत् ।
पिबेदमृतमव्यग्रं सकलं भद्रमश्नुते ॥

इडया वायुमाकृष्य भ्रुवोर्मध्ये निरोधयेत् ।
यः पिबेदमृतं शुद्धं व्याधिभिर्मुच्यते नरः ॥

नाडिभ्यां वायुमाकृष्य नेत्रद्वन्द्वे निरोधयेत् ।
नेत्ररोगा विनश्यन्ति तथाश्रोत्रे निरोधयेत् ॥

श्रोत्ररोगाविनश्यन्ति प्राणायाम बलेन तु ।

तथा वायुं समाकृष्य धारये च्छिरसिस्फुटम् ॥

शिरो रोगा विनश्यन्ति सत्यमुक्तं बृहस्पते ॥ इति

सूतसंहितायाम् - कुलार्णवे च -

ब्राह्मे मुहूर्ते अथवा संध्याकलेषु वा पुमान् ।

जिह्वया वायुमाकृष्य यः पिबेन्मन्त्रपूर्वकम् ।
त्रिमासात् तस्य कल्याणि वाक्सिद्धिर्जायते ततः ॥

काकचञ्चुपुटेवाथ पिकचञ्चु पुटेन वा ।
यः पिबेत् पवनं योगी सर्वरोगैः प्रमुच्यते ॥

षण्मासाभ्यासयोगेन सर्वरोगैः प्रमुच्यते ।
आत्मन्यात्मानमिलया कुण्डल्या यस्तु धारयेत् ।
क्षयरोगादयश्चापि नश्यन्ति त्रिदशार्चिते ॥

नासाभ्यां वायुमारोप्य नाभौ तुन्दस्य पार्श्वयोः ।
यो वहे देक घटिकां व्याधिभिः सोऽपि मुच्यते ॥

मासमेकं त्रिसन्ध्यासु जिह्वयारोप्यमारुतम् ।
यः पिबेत् त्रिदशाहारं धारयेत्तुन्द मध्यमे ॥

गुल्म प्लीहोदरस्लिष्ट त्रिदोषजनितान्यपि ।
तुन्दमध्यगतारोगाः सर्वे नश्यन्ति योगिनः ॥

p. 67)

ज्वराः सर्वे विनश्यन्ति श्लेष्माणि विविधान्यपि ।
शिवै किं बहुनोक्तेन वलीपलितनाशनम् ॥

एवं वा विजयोपायं प्राणस्य तु वरानने ॥ इति

रोगशन्ति मन्त्रमुपासनाक्रमश्चोच्यते-

योगसारमञ्जर्याम् -

आग्नेय्यां धारणाद्योगे रोमेवारुणधारणा ।
मूर्छायामभिघाते वा भूते प्रेताद्युपद्रवे ।
प्रजपेद् वैद्यनाथार्णं विषदोषे च दारुणे ॥

सर्वरोग प्रपीडासु सद्यो योगी सुखी भवेत्।
पिनाकी पीठगोमेदस्तथापावकमारुतौ॥

सार्पी स बिन्दुमद्बीजं मुच्चरेद्रोग नाशनम्।
जायन्ते वैद्यशब्दं च मेषो दण्डी च दण्डिनौ॥

व्योमसूर्याग्नि जायन्ते तारयोगान्महामनुः।
षड्दीर्घस्वरयुक्तेन बीजन्यासं स मुच्यते॥

प्रदश्यामृतमुद्रां च मन्त्रेण व्यापयेत् तनुम्।
कुन्देन्दु स्फटिका मलं त्रिणयनं दिव्यामृताच्छं घटं
बिभ्रद्दक्षकरे तथेतर करे सर्वौषधीनां रसैः।
पूर्णं पात्रवरं दधत्स्व शिरसि श्रीवैद्यनाथं प्रभुं
ध्यायन् व्याधिगणैः क्षणेन मनुजो मुक्तश्चिरं जीवति॥

एवं ध्यात्वा जपेन्मन्त्रं सप्तसाहस्रमादरात्।
मुच्यते सर्वरोगैश्च तथा भूताद्युपद्रवैः॥

मन्त्र

लं वं रं यं ऊं स्वाहा - वैद्यनाथाय नं हं घ्रीं स्वाहा ओं ॥ इति

।

अथवान्य प्रकारेण देवं धन्वन्तरिं स्मरेत् ।

प्रजपेत् तन्मनुं सर्व व्याधि पीडा विनाशनम् ॥

शुण्डिकाषायं पीत्वा सुस्निग्धं तद्धारणा बलात् ।

पूर्वोक्तमन्त्र स्मरणात् मुच्यते व्याधिभिश्शनैः ॥

सर्वोपसर्गशान्त्यर्थं वेदमृत्युञ्जयं जपेत् ।

पञ्चस्वरासनगतो देवि(वी)शिवरासनः ॥

बिन्दुमत्कादि सहितो भृगुस्तारादिरीरितः ।

मन्त्रो मृत्युंजयो देवि महामृत्यु विनाशनः ॥

त्र्यक्षरास्सर्वमन्त्राणां सुमहावीरहानलः ।

मन्त्रान्ते साध्य नामोत्त्वा प्रतिलोमेन चोच्चरेत् ॥

पुटितः पञ्चतारेण सम्यग् बुद्धिः करस्थिता ।

दण्डिना भृगुणा कुर्यात् षडंगं विधिपूर्वकम् ॥

दश शत दल पद्मं कोटिचन्द्रावदातं

करधृत वरमुद्रा पाशवेदाक्षसूत्रम्।

p. 68)

धृतशशधरखण्डोद्गीर्ण पीयूषवर्ष

प्लुतमिति परिभाष्य प्रोश्श्यते रोगजालैः॥

हृदय कमलमध्ये चन्द्रिकापूरमुक्ता

रजत कुमुदभासा सूक्ष्ममीशानमाद्यम्।

स्मरति यदि स रोगैर्विघ्न जालोपसर्गैः

प्रजनित कुभयाद्यैर्मुच्यते देवि योगी॥

गगन जलदभासा शूलखट्वाङ्ग घण्टा

कुलिशवरकपाला भीतिहस्तारविन्दम्।

सकलदुरित भूतप्रेत कूश्माण्ड वर्ग

ग्रसन निरतमीशंध्यायतः स्यादभीतिः॥

प्रजपेदष्टसाहस्त्रं ध्यात्वैवं परमेश्वरम्।

सर्वोपसर्गविघ्नाद्यै मुच्यते व्याधिभिः सह॥ इति।

मन्त्रस्तु मृत्युञ्जय त्र्यक्षरी।
जपेद्द्वादश लक्षन्तु य इदं मन्त्रमादरात्।
वलीपलित निर्मुक्तो ह्यजरा मरतां व्रजेत्॥

पूर्वोक्तासनमभ्यस्य समासीनो जितेन्द्रियः।
ध्यायेत् परतरं तत्वं निश्चले नान्तरात्मना॥

सर्वविघ्न निवृत्त्यर्थं पूर्वं ध्यायेन् महावपुः।
पाताल तल पादं च भुकटि व्योम देहकम्।
स्वर्गादिलोकशीर्षं च दिग्बाहुं देवतामयम्॥

आदित्य चन्द्रनयनं क्षेत्रस्त्रग्विभूषणम्।
समुद्रवसनं व्याप्तं ब्रह्माण्डपदमद्भुतम्॥

ब्रह्मादि तृणपर्यन्तं जगदेतच्चराचरम्।
स्वरोमकूपकं ध्यायेत् स्वदेहञ्च जगम्मयम्।
एवं ध्यायेन्महारूपं देविचित्त स्थिराप्तये॥

इति प्रध्यायतस्सम्यक् योगिनश्चित्तवृत्तयः।
शनैर्निश्चलतामेति दिव्यज्ञान विचिन्तनात्॥

एवं चित्तं स्थिरीकृत्य तच्चध्यानमुपक्रमेत्।
ध्यायेत् स्वहृदये पद्मं शिवशक्त्यात्मकं परम्॥

तारकं शक्तिनालं प्रासाद मनुकर्णिकम्।
अग्निमण्डल पत्राढ्यं सूर्यमण्डलकेसरम्॥

सोममण्डल किंजल्कं पराप्रासादकर्णिकम्।
शिवशक्तिसमायुक्तं चिन्तयेच्चिरमात्मवित्॥

तन्मध्ये परमेशानं ध्यायेदात्मविशुद्धये।
नीलजीमूतसंकाशं जटाबद्धमहोरगम्॥

बालेन्दुशेखरं भीमं हुंकारव्याप्तदिङ्मुखम्।

p. 69)

खड्गशूलाभयधरं नागपाशधरं विभुम्।
कपालघण्टासि महितं बिभ्राणं वरदं तथा॥

रक्ताम्बरधरं रक्तमाल्यं गन्धविभूषितम्॥

नागाष्टकमहाहारं गर्जन्तं भयनाशनम् ।
व्याघ्रचर्मपरीधानं सिंहचर्मोत्तरच्छदम् ॥

नूपुरच्छन्नहारादि भूषणैः परिभूषितम् ।
सोमसूर्याग्नि नयनं दंष्ट्रा निष्ट्यूतपावकम् ॥

ग्रसन्तमखिलं दोषविघ्नकोटि विभेदकम् ।
सर्वशत्रुक्षयकरं महामृत्युविनाशनम् ॥

वलीपलित दौर्भाग्य जरारोगविनाशनम् ।
सर्वसिद्धिकरं देवं भैरवं भक्तरक्षकम् ॥

माध्वीरससमापूर्ण नयनत्रयमण्डनम् ।
परमाह्लाद चेतस्कं सर्वलोक गुरुं हरम् ॥

ध्यायेदेकाग्रया बुद्धया सर्वविघ्नोपशान्तये ।
तद्वामरं स्थलगतां चण्डिकां दुःखनाशिनीम् ॥

कालाभ्राञ्जनसंकाशां बर्बरोर्ध्वशिरोरुहाम् ।
मुण्डस्रङ्मण्डितां कृष्णां सर्पकुण्डलमण्डिताम् ॥

रक्तगंधप्रसूनाद्यैर्भूषितां भूषणैरपि ।
षड्वक्रां द्वादशभुजां प्रतिवक्त्ररदच्छदाम् ॥

वज्रांकुशवरांचक्रखड्गखेटकत्रिशूलिनीम् ।
कार्तिकोद्दण्डमुसल वरदाभयधारिणीम् ॥

भद्रां त्रिणेत्रां भक्तार्तिभञ्जनीं चन्द्रशेखराम् ।
भक्ततापत्रयहरां कालग्रसनरूपिणीम् ॥

माध्वी पूर्णकपालाढ्यां नवयौवनगोचराम् ।
योगिनीगणसंजुष्टां भैरवीं भयहारिणीम् ॥

सर्वेप्सित फलप्राप्ति कारणां कारणत्रयीम् ।
एवं ध्यायेच्चिरं देवीं योगीयोग फलाप्तये ॥

सर्वोपद्रवशान्त्यर्थं सर्वाभीष्टफलाप्तये ।
अनेन ध्यान योगेन कालमृत्यु भयादपि ॥

मुच्यते परमेशानि न मयोक्तं मृषा भवेत् ।

असीत्ये तन् महाध्यानं त्यक्तोपद्रवसंशयः ॥

पुनर्ध्यायेन्महादेवं सर्वोपद्रवशान्तये ।
हृदम्बुजे महादेवं बालसूर्यसमप्रभम् ॥

देव्याश्लिष्ट तनुं देवं सुवर्ण समवर्णया ।
भस्मोद्धूलित सर्वांगं दधानं व्याघ्र चर्म च ॥

p. 70)

पद्मासनस्थितं शान्तं त्रिणेत्रं चन्द्रशेखरम् ।
स्वफालस्थलबालेन्दु स्यूत दिव्य सुधाप्लुतम् ॥

वरावभयमहाटंक मृगमुद्राधरं शिवम् ।
अक्षस्त्रक् पुस्तकधरं प्रसन्नं परमेश्वरम् ॥

जटामण्डलसंबंध महामणिफलान्वितम् ।
नवयौवनसम्पन्नं ग्रस्तलोकभयादिकम् ॥

सुमुखं चारुसर्वांगं गुप्तविज्ञानगोचरम् ।
पशुपाशुघ दलनं तारकं भववारिधेः ॥

सर्वज्ञगुणसामर्थ्य दायकं सर्वसिद्धिदम् ।
एवं ध्यायेन् महादेवं सर्वविघ्नोपशान्तये ॥

सर्वज्ञत्वप्रलब्ध्यै च सर्व सिद्ध्यैक हेतवे ।
अथवान्य प्रकारेण ध्यायेद्दुःखोपशान्तये ॥

शुद्धस्फटिकसंकाशं शरच्चन्द्रायुतप्रभम् ।
अक्षमालाधरं शान्तं प्रसन्नवदनं शुभम् ॥

त्रिशिखाभयसंयुक्तं रजतादि समप्रभम् ।
सर्वमृत्यूपशमनं वलीपलितनाशनम् ॥

दिव्यामृतमहावर्षैर्वर्षयन्तं समन्ततः ।
तत्सुधावर्षपातेन सहसा शीतलात्मना ॥

दुःखधर्मविनिर्मुक्तं भावयेदात्मनस्तनुम् ।
अनेन ध्यान योगेन मुच्यते दुःखबन्धनात् ॥

व्याधिभिश्चोपसर्गैश्च तथा गुह्यकभूपतेः ।
यदा समुत्थितं विघ्नं योगी पश्यति पार्वति ॥

तदाभूत बलि दद्यात् पूर्वोक्तविधिना सुधीः ।
पूर्वोक्तैर्जपहोमैश्च वक्ष्यमाणैश्च भेषजैः ॥

दानैर्होमैस्तथा ध्यानैश्शमयेद् विघ्नमुत्थितम् ॥

॥ इति योगसारसंग्रहे विघ्नशान्तिर्नामद्वादशोध्यायः ॥

आधारष्षण्णवत्युक्ता सर्वदेहेषु योगिभिः ।
तेषु संगृह्य वक्ष्यामि षडाधारान् यथाक्रमम् ॥

आधारं मणिपूरञ्च स्वाधिष्ठानमनावृतम् ।
विशुद्धिराज्ञाषट्चक्रे माधारणीतिकीर्तितम् ॥

रुद्ररहस्ये-

सर्वाधारा मही यस्मात् मूलाधारतया स्थिता ।
यदभावेन देहस्य पातः स्यादुद्गम स्थितेः ॥

याज्ञवल्क्ये

गुदात्तुद्ध्यंगुलादूर्ध्वं मेढ्रात्तुद्ध्यंगुलादधः ।
मूलाधारं तयोर्मध्यं मनुष्याणामितीरितम् ॥

p. 71)

चतुष्पदां तु हृन्मध्यं तिरश्चां तुन्दमध्यमम् ।

योगसारमञ्जर्याम्

यल्लिङ्गाधारमध्यस्थं मध्ये शक्त्यं कुरान्वितम् ।
यवमात्र प्रमाणं तु त्रिकोणाकारमुत्तमम् ॥
निष्कलं तत्पदं तेजः परस्मात् परसंज्ञिकम् ॥

प्रणवचिन्तामणौ

देहमध्ये शिखिस्थाने तप्तजाम्बूनदप्रभम् ।
त्रिकोणद्विपदानाञ्च चतुरश्रं चतुष्पदाम् ॥

वृत्तविहङ्गमानाञ्च षडश्रं सर्प जन्मनाम् ।
अष्टाश्रं स्वेदजानां तु तस्मिन् दीपवदुज्ज्वलम् ॥

ज्ञानविद्यायाम्

त्रिकोणरूपिणीं शक्तिर्बिन्दुरूपश्शिवः स्मृतः ।
अविनाभावसंबन्धस्तस्माद्बिन्दु त्रिकोणयोः ॥

योगार्णवं च

महीपद्मस्य मध्ये तु स्मरेत् पावकमण्डलम् ।
रजोगुणसमायुक्तं तन्मध्ये परमेष्ठिनम् ॥

इति बिम्बमहालिङ्ग शिवशक्ति निकेतनम् ।
शिवस्य जीवरूपस्य स्थानं तद्धिप्रकाशकम् ॥

यत्र कुण्डलिनी नाम्ना पराशक्तिः प्रतिष्ठिता ।
तस्माद् उत्पद्यते वायुस्तस्मादग्निः प्रजायते ॥

तस्माद् उत्पद्यते बिन्दुर्यस्मान्नादः प्रवर्तते ।
यस्माद् उत्पद्यते सूर्यस्तस्मादुत्पद्यते मनः ॥

तदेतत्कामरूपाख्यं पीठं कामफलप्रदम् ॥ इति ।

मूलाधारं त्रिधावृत्तं ब्रह्मचक्रं महीरुहम् ।
कन्दादधः स्थिताशक्तिर्बालसूर्यसमप्रभा ॥

चतुर्दलं चतुर्वर्णं तप्तजाम्बूनदप्रभम् ॥

चतुष्पदं परानन्दञ्चतुराम्नाय भूषितम् ।
षट्पञ्चाशत्कलाकीर्णं गन्धमात्रासमावृतम् ॥

महीचक्रस्य विस्तारमुक्तमेवं पुरातनैः ।
मणिभिः पूरितत्वेन मणिपूरकमिति स्मृतम् ॥

मणिभिः पूरितः सिन्धुस्तेनैव मणिपूरकः ।
वारुणं मण्डलं सत्वविष्णवधिष्ठानदैवतम् ॥

श्वेतध्वजसमायुक्तं बीजपूरसुधाप्लुतम् ।
इत्यागमेष्वद्भुतशुद्धिप्रकरणेषूक्तम् ॥ इति ।

दत्तः ।

अप्तत्वं विष्णुमाया विमलगुणमयं षड्रं षड्दलाब्जं
स्वच्छच्छाया षडर्णं शिवधनसहितं शक्तिभिः सेव्यमानम् ।
बीजस्थं बीजपूरं रतिपति निलयं चन्द्रखण्डस्वरूपं स्थानं
जीवागमानां दिनमणि मणिभिः पूरितं चक्रमेतत् ॥

p. 72)

द्विसमधिकपञ्चशत्कलाकीर्णमिति लहर्याम् ॥ योगदीपिकायाम् कुण्डलीं
ग्रन्थिं कृत्वा स्वमधिष्ठाय स्थित त्वात् स्वाधिष्ठानमिति ।

तदुक्तं योगयात्कल्क्ये

कन्दस्थानं मनुष्याणां देहमध्ये नवाङ्गुले ।
चतुरङ्गुलमुत्सेधमायामं चापि तत्समम् ॥

अण्डाकृतिसमाकारमग्निमण्डलमण्डितम् ।
द्वादशारयुतं चक्रं तेन देहप्रतिष्ठितम् ॥

चक्रेऽस्मिन् भ्रमते जीवः पुण्यपापप्रचोदितः ।
तन्तुपञ्जरमध्यस्थो यथा भ्रमति लूतिका ॥

जीवस्य मूलचक्रेऽस्मिन् अधःप्राणाश्चरन्त्यसौ ।

प्राणारूढो भवेज्जीवः सर्वभूतेषु सर्वदा ॥ इति

गोरक्षः । भारते च

समान व्यानयोर्मध्ये प्राणापानौ विचेरतुः ।
तस्मिन् सुप्ते प्रलीयेत समानो व्यान एव च ॥

अपानप्राणयोर्मध्ये उदानो व्याप्य तिष्ठति ।
तस्माच्छयानं पुरुषं प्राणापानौ न मुञ्चतः ॥ इति ।

तस्मात् स्वपन्तं पुरुषं प्राणा न जहन्तीति श्रुतेः ।

सौन्दर्यलहर्याम्

महीमूलाधारे कमपि मणिपूरे हुतवहं
स्थितं स्वाधिष्ठाने हृदिमरुतमाकाशमुपरि ॥ इति ।

मूलाधार स्वाधिष्ठानक्रमं ग्रद्रग्रन्थ्यादि विषयम् ॥

राशिचक्रप्रकरणे नाभिचक्रं द्वादशारमिति याज्ञवल्क्ये ।

संहारचक्रे भेदेन चक्रयुग्मस्य मध्यमे ।
सर्वेषां प्राणिनां देहे रुद्रमूर्तिः स्वयं स्थितः ॥

तदुक्तं योगशांकरे

ब्रह्माण्डव्यापिनीं पृथ्वीं तोयमध्ये विनिक्षिपन् ।
अग्नौ रसं च निक्षिप्य वायुमध्ये जलंक्षिपेत् ॥

आकाशे वायुमाकृष्य पुनरुत्सृज्यते शिव ॥ इति ।

मूलाधारस्वाधिष्ठानं रुद्रग्रन्थिरितीरितम् ।
मणिपूरानाहताख्यं विष्णुग्रन्थिरिति स्फुटम् ॥

विशुद्ध्याज्ञा ब्रह्मसंज्ञं ग्रन्थित्रयमुदाहृतम् ॥ इति ।

स्वाधिष्ठानं दशाराध्यं दशशक्तिसमन्वितम् ।
अग्निमण्डलमारक्तं रुद्राधिष्ठानदैवतम् ॥

त्रिकोण स्वस्तिकैर्युक्तं रंबीजं त्रिगुणान्वितम् ।

द्विषष्टिकरणैर्युक्तं स्वाधिष्ठानस्य मण्डलम् ॥

एतद् विलोमं यः कुर्यात् स योगी न विनश्यति ।
सृष्टि स्थित्यन्त कर्तासौ भवत्येव न संशयः ॥

p. 73)

आहतं न भवतीति अनाहतम् ।
आहत स्थूलमखिलं नाहतं येन हेतुना ।
तन्नाहतमिति प्रोक्तं हृदयं मुनिभिः पुरा ॥

शिवः

कन्दादुपरिभोगाग्रं सर्वेषां देहमध्यमे ।
विद्यान्नालं स्वयं भूत्वा हृत्पद्मस्य व्यवस्थिताम् ॥

तदुक्तं योगयाज्ञवल्क्येन -

कन्दोर्ध्वे कुण्डली स्थानं नाभेस्तिर्यगधोर्ध्वगः ॥ इति ।

नीलतोयदमध्यस्था विद्युल्लेखेव भास्वरा ।
नीवारशूकवत्तन्वी पीता भास्वत्यनूपमा ॥

तस्याश्शिखाया वह्निमध्ये परमात्मा व्यवस्थितः॥

योगसारमञ्जर्याम् -

तारकन्दं शक्तिनालं हृत्पद्मस्य व्यवस्थितम्।
अग्निमण्डलपत्राढ्यं सूर्यमण्डलकेसरम्॥

सोममण्डल किञ्जलकं पराप्रासादकर्णिकम्॥

आदिनाथः

ब्रह्मकन्दसमुद्भूतं ज्ञाननालं सुधीशोभनम्।
एश्वर्याष्टदलोपेतं परं वैराग्यकर्णिकम्॥

अष्टभूत्यनुजाकारं घृणिचन्द्रानलैर्युतम्।
पीठं कृत्वा पदाब्जस्य मूर्तित्रयसुसेवितम्॥ इति।

अधोभागे चतुष्पत्रमष्टपत्रं तथोपरि।
अष्टारं ध्यानयोगस्य भानुवत्रन्तुमातृके॥

षट्कोणवायुमाधूम्रं स्पर्शमात्रं समन्वितम् ॥

चतुःपञ्चाशत् किरणैः मण्डितं चेश्वरालयम् ।
विशेषेणैव शुद्धत्वात् सर्वभूतेषु सर्वदा ॥

विशुद्धं तेन विख्यातं शुद्धविज्ञानगोचरम् ।
विशुद्धं षोडशाराब्जं षोडशस्वरमण्डितम् ।
लम्बिकामूलमाश्रित्य घण्टिकायां व्यवस्थितम् ॥

आकारमण्डलं तत्र सदाशिवनिकेतनम् ।
पूर्णं कलाभिर्व्यष्टाभिर्व्यष्टाभिश्शक्तिभिस्तथा ॥

नीलजीमूतसंकाशमुदानेन निषेवितम् ।
वैखरी नाम वाग्देवी ततो जाता च विस्तृता ॥

अनुग्रहमिदं चक्रं दिग्देवैस्सेवितं सदा ।
तैजसस्वप्नवास्तत्र ब्रह्मोपनिषदीरितम् ॥

यज्ज्ञानात् जायते सर्वं तज्ज्ञानस्थानहेतुतः ।

आज्ञाचक्रमितिप्रोक्तं भ्रूमध्ये सर्वदेहिनाम्॥

कण्ठे किञ्चिद्विजानन्ति हृदये तु निकिञ्चन।

p. 74)

भ्रूमध्याज्ज्ञायते सर्वं तस्मादाज्ञेति गीयते।
तदुक्तमाश्वलायनोपनिषदि च।
नेत्रस्थं जागरितं विद्यात् कण्ठे स्वप्नं समादिशेत्॥ इति।
आज्ञाचक्रं भ्रुवोर्मध्ये द्विदलं द्व्यक्षरान्वितम्॥

शक्तिद्वयसमायुक्तं ब्रह्मग्रन्थि समन्वितम्।
कोलाटमण्डलं तत्र चन्द्रकोटिसमप्रभम्॥

राजसादि गुणाविष्टं नानावर्णप्रकाशकम्।
स विश्वनाम्ना विश्वेशस्तत्र जागर्ति देहिषु॥

तदुक्तं जाबालोपनिषदि

भ्रुवोर्घ्राणस्य च यः सन्धिस्स एव द्यौर्लोकस्य संधिर्भवत्येत द्वै
संधिं संध्यां ब्रह्मविद् उपासत इति।

सोऽविमुक्ते प्रतिष्ठित इति ॥ योगसारमञ्जर्याम् -

ललाटे परमेशानि दिव्या वाराणसी पुरी ।

आचार्यैः । तवाज्ञाचक्रैस्थन्तपनशशिकोटि द्युतिधरमिति ॥

आकाशादीनि भूतानि आधाराद्यङ्ग भेदतः ।

शब्दादि गुणभेदाश्च परिणामं प्रपेदिरे ॥

तदुक्तं वासिष्ठे

सर्वत्र पञ्चभूतानि षष्ठं किञ्चिन्न विद्यते ॥ इति ।

एवं ज्ञात्वा षडाधार द्वाराण्युद्घाटयेत्ततः ॥

सहस्रारं स्वरूपं कुण्डलिनी प्रकरणे उच्यते ॥

॥ इति योगसारसंग्रहे षडाधारनिरूपणं नाम त्रयोदशोध्यायः ॥

कुण्डलिनीस्वरूपमाह -

पिण्डाण्डान्तर चक्रमध्य सुषिराक्रान्ताब्ज तन्तूपमा

विद्युद्व्यक्तलतेव भाति तनुभृत् गर्भान्तरालैः सदा ।
मूलाधारगता त्रिमूर्ति जननी सर्वापर ब्रह्मणः
शक्तिः कुण्डलिनी त्रिलोक जननी वान्तामृतास्वादिनी ॥

कुण्डली सुफणी नागी चक्रीषष्ठी सरस्वती ।
ललनारसनाक्षेत्रा ललाटा शक्तिचालिनी ॥

राजीभुजंगी शेषा च कुजाह्वा सर्पिणी फणी ।
आधारशक्तिः कुटिला करलाप्राण वाहिनी ॥

अष्टवक्रा षडाधारा व्यापिनी कलनाधरा ॥

चिद्रूपा कुञ्चिका बाला दुर्विज्ञेया सुरासुरैः ।
दिक्कालाद्यनवच्छिन्ना सर्ववेदार्थगा शुभा ॥

परापराविभागेन परशक्तिरियं स्मृता ।
योगिनां हृदयां भोजे नृत्यन्ती नृत्तलालसा ॥

आधारसर्वभूतानां स्फुरन्ती विद्युदाकृतिः ।
शंखावर्तक्रमाद्देवि सर्वमन्त्रमयी शुभा ॥

p. 75)

सर्वतत्वमयी साक्षात् सूक्ष्मात् सूक्ष्ममयी विभुः ।
त्रियामा जननी देवी शब्दब्रह्मस्वरूपिणी ॥

चतुर्विंशत् सदर्णात्मा पञ्चाशद्वर्णरूपिणी ।
गुणितासर्वगात्रेषु कुण्डली परदेवता ॥

विश्वानना प्रबुद्धात्मा सूत्रे मणिमिमं जंगम् ।
एकधा गुणिताशक्तिस्सर्वविश्वप्रवर्तका ॥

सर्वमन्त्रप्रसूस्तच्छ्रीः सर्वतन्त्रस्वरूपिणी ।
इच्छाज्ञानक्रियात्मास्य तेजोरूपा गुणात्मिका ॥

पञ्चाशद्वारगुणिता पञ्चाशद्वर्णमालिका ।
अग्नीषोमात्मिका शुद्धा सोमसूर्याग्नि रूपिणी ॥

इति । कुण्डली नामानि ।

अथ तत्संप्रवक्ष्यामि कुण्डल्युत्थापन क्रमम् ।
दुर्लभं सर्वदुष्टानां साध्यानं स जपक्रमम् ॥

वामकेश्वर महातन्त्रे

भुजंगाकाररूपेण मूलाधारं समाश्रिता।
शक्तिः कुण्डलिनी प्रोक्ता विसतन्तु निभाशुभा॥

मूलकन्दं फणाग्रेण दष्ट्वा कमलवन्दवत्।
मुखेन पुच्छं संगृह्य ब्रह्मरंध्रसमन्विता॥

योगयाज्ञवल्क्ये

द्वादशारयुतं चक्रं नाभिदेशे प्रतिष्ठितम्।
तस्योर्ध्वे कुण्डली स्थानं नाभेस्तिर्यगधोर्ध्वगम्॥

अष्टप्रकृतिरूपासा त्वष्टधा कुण्डली कृता।
यथावद्वायुसंचारं ज्वलनादीनि नित्यशः॥

परितः कन्दपार्श्वेषु निरुध्येनं सदा स्थिता।
मुखेनैव समावेष्ट्य ब्रह्मरन्ध्रमुखं तथा॥

योगकाले त्वपानेन प्रबोधं या जलाग्निना ।
स्वनन्ती हृदयाकाशे नागरूपा महोज्ज्वला ॥

वायुर्वायुसखे नैव ततो याति सुषुम्नया ॥

प्रणवचिन्तामणौ

तत्रानलं वायुसखेन सार्धं धिया समारोप्य निरोधयेत् ततः ।
ध्यायन् सदा चक्रणमप्रबुद्धं नाभौ सदा कुण्डलिनं निविष्टम् ॥

नालं समावेष्ट्यमुखेन मध्यामन्यांश्च भोगेन सिरास्तथैव ।
स्वपुच्छमास्येन निगृह्य सम्यक् पदं च संयम्यमरुद्गणानाम् ॥

प्रबुद्ध नागेन्द्रवदुच्छ्वसन्ती सदाप्रबुद्धा प्रभया ज्वलन्ती ।
नाभौ सदा तिष्ठति कुण्डली सा तिर्यङ्मनुष्येषु तथेतरेषु ॥

उत्पत्ति नाश स्थिति हेतु भूतमाधारपद्मासन रन्ध्रपूर्णम् ।
योगेष्टसिद्धिप्रदमादिमूलं जानीहितं कुण्डलिनं निविष्टम् ॥

वायुना विवृतवह्नि शिखाभिः कन्दमध्यगतनाडिषु संस्थात् ।

कुण्डलीं दहति यत्स्वभिरूपं संस्मरन्नपरवस्तु न एव ॥

p. 76)

सन्तप्त वायुना तत्र वह्निना च प्रतापिता ।
प्रसार्य फणभृद्धोगी प्रबोधं याति सत्वरा ॥

बोधंगते चक्रिणि नाभिमध्ये प्राणान् सुसंभूय कलेबरेऽस्मिन् ।
चरन्ति सर्वे सह वह्नि नैव यथा पटेतन्तु गतिस्तथैव ॥

जित्वैवं चक्रिणी स्थानं तथाध्यानपरायणः ।
ततो नयेदपानन्तु नाभेरूर्ध्वमनुस्मरन् ॥

योगसारमञ्जर्याम्

वायुयदावायुसखेन सार्धं नाभिं त्वतिक्रम्यगतः शरीरम् ।
रोगाश्च नश्यन्ति बलाभिवृद्धिः कान्तिस्तदानीं भवन्ति प्रबुद्धा ॥

ब्रह्मरन्ध्रमुखं मन्त्रवायवः पावकेन सहयान्ति समूह्याः ।
केन चित्विह वदामि तवाहं वीक्षितं हृदि च दीपशिवावत् ॥

निरोधितः स्याद्धृदि तेन वायुनामध्ये तदा वायुसखेन सार्धम् ।

सहस्त्रपद्मस्य मुखं प्रविश्य कुर्यात्पुनस्त्वूर्ध्वमुखं द्विजेन्द्रे ॥

प्रबुद्ध हृदयाम्भोजे गौर्यस्मिन् ब्रह्मणः पुरे ।
बालात् श्रेणिवद्व्योम्नि विरराजसमीरणः ॥

आहुर्मध्ये सुषुम्नायाः संस्थितो हुतभुक्तदा ।
स जलाम्बुदमालासु विद्युल्लेखे वराजते ॥

निरुध्यनाडी द्वितयं सोमसूर्यात्मकं प्रिये ।
संप्राप्यकुम्भकावस्थां स्थिरचेता दृढासनः ॥

संरुध्य च मनः स्वान्ते मूलाधारधराधरे ।
हृत्कोणपुरमध्यस्थ वाह्निसूर्येन्दुमण्डले ॥

सुषुप्तभुजगाकारं सर्वमन्त्रमयीं पराम् ।
इलापिङ्गलयो ग्रन्थि भेदत्रयविभेदिनीम् ॥

षडम्बुजदरीमार्ग कवाटोद्घाटनक्षमाम् ।
शनैरुन्नीयतां मूलादाज्ञायां सन्निवेशयेत् ।
ततो रसनया भित्वा शिव द्वारार्गलं महत् ॥

ब्रह्मरंध्रे दृगाधाय स्थिरं कृत्वा मनो हृदि ।
तत्रापि मण्डलं देवी शृंगाटं सुमहोज्ज्वलम् ॥

त्रिकोणं तु विजानीयात् वह्निसूर्येन्दुगर्भकम् ।
तत्रेन्दु मण्डले देवी परमात्मा सदाशिवः ॥

यावन्नशक्त्या संयोगं प्राप्नोति परमेश्वरः ।
तावद् भ्रमयते विश्वं यन्त्रारूढं तु मायया ॥

शिवः

मूलाधारात् समुद्यन्ती शक्तिः कुण्डलिनी परा ।
स्वमन्त्रोच्चारणा देव सम्यगूर्ध्वमुखी तदा ॥

षड्ढुंकार स्वरोद्भिन्न षडंभुजकवाटिका ।

p. 77)

भित्वा ब्रह्मार्गलं दिव्यं स्वपते स्थानमेयुषी ।
वह्न्यर्कमण्डलं भित्वा द्रवन्ति चन्द्रमण्डलम् ॥

तदुद्भवामृता स्वादा परमानन्दनन्दिनी ॥

कुलयोषित् कुलंत्यक्त्वा परंपुरुषमेयुषी ।
निर्लक्ष्यं निर्गुणं चैव कुलरूपविवर्जितम् ॥

तत्र स्वच्छन्दरूपा तु परिरभ्य स्वकंपतिम् ।
विश्राम्य च चिरं कालं तद्भोगाह्लाद नन्दिता ॥

परमावृष्टिभिर्नित्यं सिञ्चन्ती योगिनस्तनुम् ।
यथा गतेनमार्गेण पुनरेति स्वकं पतिम् ॥

अनेन देवि योगेन मासाद्योगीश्वरो भवेत् ।
षण्मासादणिमादीनां सिद्धीनामधिपो भवेत् ॥

वत्सरात् पिबते नित्यं समुद्रमपि लीलया ।
अर्कानिल नलादीनां जलानां स्तम्भनं क्रमात् ॥

करोति लीलया योगी रुद्रशक्ति प्रभावतः ।
त्र्यब्दात्सर्वज्ञको भूत्वा वलीपलितवर्जितः ॥

महाबलो वज्रकायो जीवेदा चन्द्रतारकम् ।
शक्तिमन्त्रमहायोगः कथितस्तवसुव्रते ॥

वाञ्छाकल्पद्रुमाः सत्यं सत्यं यत्खेचरी पदे ॥

श्रीशिवः

स्थिरमासनमासीनः सकलीकृतविग्रहः ।
जितश्वासो जितमताः जितकर्मा जितेन्द्रियः ॥

नियोज्यघटिका यन्त्रे रसनां निश्चलात्मिकाम् ।
अधस्ताच्चिन्तयेच्चक्रमाक्रान्ताधारमण्डलम् ॥

तत्र मध्ये समुद्दीप्तां मूलशक्तिं विभावयेत् ।
प्राणान्निरुध्योर्ध्वमुखीन्नयेद् भित्वाषडंबुजम् ॥

एकीभूता हि नादाख्य चक्रभेदक्षमेण च ।
तटिद्वलयसंकाशां स्फुरत्किरणरूपिणीम् ॥

चिद्रूपां च निरालम्बे शून्य तेजो मये परे ।

ब्रह्मद्वारस्य गर्भान्ते विसर्गाख्ये विलीयते ॥

ततो रसनयोद्भिद्य प्रविशेद् ब्रह्मणः पदम् ।
तस्मिन् कुलामृतं दिव्यं पीत्वाभूयो विशेत्कुलम् ॥

तेन प्राशितमात्रेण परां सिद्धिमवाप्नुयात् ॥ इति ।

अथातः संप्रवक्ष्यामि मुद्रांखेचरिसंज्ञिकाम् ॥

यथा विज्ञातया मर्त्यो लोकेस्मिन्न जरामरः ।
मृत्युव्याधिजराग्रस्तं दृष्ट्वा लोकमिमं प्रिये ॥

बुद्धिं दृढतरं कृत्वा खेचरीं तु समभ्यसेत् ॥

p. 78)

प्रकटेन मयाप्रोक्तंमिदानीं खेचरीं शृणु ॥

यत्रास्ते च गुरुर्देव दिव्ययोगप्रसादकः ।
तत्र गत्वा च तेनोक्तां विद्यां संगृह्य खेचरीम् ।
न तया रहितो योगी खेचरी सिद्धि भाग्भवेत् ॥

खेचर्य खेचरीं युञ्जन् खेचरी बीज पूर्वया ।
खचराधिपतिर्भूत्वा खेचरीषु सदा चरेत् ।
खेचरावसथो वह्निरग्निमण्डलभूषितम् ॥

व्याख्यातं खेचरी बीजं तेन योगः प्रसिध्यति ।
मस्तकाख्यं महाचण्ड शिखी वह्निखवज्रभृत् ॥

पूर्वबीजयुताविद्या व्याख्याता ह्यतिदुर्लभा ।
षडंगविद्यां वक्ष्यामि तथाषट्स्वरभिन्नया ॥

कुर्याद्देवी यथा न्यायं सर्वविद्याप्ति हेतवे ।
सोमेशा नवमं वर्णं प्रतिलोमेन चोच्चरेत् ॥

तस्यात्रिंशकमाख्यातमक्षरं च स रूपकम् ।
तस्मादप्यष्टकं वर्णं विलोमेनावलं प्रिये ॥

ततस्तत्पञ्चमं देवि तदादिरविपञ्चमम् ।
इन्दोर्ह्रीं बिन्दुसंभिन्नं कूटोऽयं परिकीर्तितः ॥

गुरूपदेशलभ्यं च सर्वरोगप्रसिद्धिदम् ।

एतस्य देवजा माया विरूपकरणाश्रया ॥

स्वप्नेऽपि न भवेत् तस्य नित्यं द्वादश जप्यकः ।
यड्मरुपञ्चलक्षाणि जपेदपि सुयन्त्रितः ॥

तस्य श्रीखेचरी सिद्धिः स्वयमेव प्रवर्तते ॥ इति ।

आदिनाथः

एवं यस्य प्रबुद्धा सा तस्य सिद्धिर्भवेद्ध्रुवम् ।
सर्वशास्तार्थ वेत्तृत्वं सौभाग्यं परमन्ततः ॥

काव्यं च सर्वभाषाभिस्सालङ्कारपदोज्ज्वलम् ।
करोति लीलया योगी रुद्रशक्ति प्रबोधनात् ॥

अनेनैव प्रकारेण सर्वमन्त्राः स्फुरन्ति हि ।
रुद्रग्रन्थिं ततो भित्वा मणिपूरे समानयेत् ।
मणिपूरे यदा विष्टा शान्ति श्रीपुष्टि तुष्टयः ॥

आकर्षणं परक्षोभं भवन्त्येता हि सिद्धयः ।

मणीपूरात् समानाय्य स्वाधिष्ठाने प्रवेशयेत् ॥

योगंगते स्वात्मनि नाभिमध्ये प्राणान् सुसंभूय कलेवरेऽस्मिन् ।
स चरन्ति सर्वे सह वह्निनैव यथा पटे तन्तु गतिस्तथैव ॥

योगग्रन्थिं च भित्वाथ मण्डलं च भिनत्यथ ।
योगसारमञ्जर्याम्

अनाहतं तु संलीनो योगग्रन्थिविभेदनात् ॥

p. 79)

गिरीणां पातनं चैव देवि कुर्यान्मृत्योश्च वञ्छनम् ॥

प्रणवचिन्तामणौ

यदा विशुद्धमानीतं सामृतप्राशनं तदा ।
योगिनः संप्रवर्तन्ते ह्यणिमाद्यष्टसिद्धयः ॥

तदूर्ध्वे लम्बिकां भित्वानासाग्रं तु समानयेत् ।
नासाग्रे श्वाससंभिन्न भ्रूमध्ये सन्निवेशयेत् ॥

आज्ञास्थानगतो योगी सर्वं जानाति सर्वदा ॥

योगसारमंजर्याम्

श्वासेनसहितं जीवं तेजोरूपं ललाटके ।
गत्वालक्ष्यं ललाटस्थं प्रविशेत् सूर्यसन्निभम् ॥

कुञ्चिकाग्रं ततः सूक्ष्मं चिद्रूपाणि च सुस्थिरम् ।
उद्घाटयेत् ततो द्वारं शिवद्वारार्गलं महत् ॥

बिन्दुं द्विरर्गलं भित्वा दुर्भेद्यं त्रिदशैरपि ।
ब्रह्माण्डोदरमित्युक्तं योगिनीसिद्धिसेवितम् ॥

तदेतंगुलोत्सेधं कपाले संव्यवस्थितम् ।
शक्तिचक्रप्रवेशेन सर्वसिद्धिर्भवेद्ध्रुवम् ॥

आदिनाथः

अपानवृत्तिमाकृष्य प्राणो गच्छतिमध्यमे ।
राजते गगनां भोजे राजयोगस्तु तेन वै ॥

एतत् साधनमार्गस्य लक्षणं वक्ष्यतेऽधुना ।
प्राकाराणि शरीरस्य षड्वुत्तानत्वगादिभिः ॥

षडङ्गैष्षट्क वाटैस्तद्रक्षितं पञ्चवायुभिः ।
तन्मध्ये सुषिरं सूक्ष्मं तत्र लिङ्गं शिवालयम् ॥

तस्यशक्तिः स्थिताबाह्ये प्राकारद्वारमण्टपे ।
तटिद्वलयसंकाशां सुप्तांपतिविलोलुपाम् ॥

प्राकारपालकेनैव कवाटानां प्रभेदनम् ।
कृत्वातां प्रापयेच्छम्भुं तत्क्षणाद्ब्रह्मवर्त्मना ॥

पूरयेन्मारुतं दिव्यं सुषुम्ना पश्चिमे मुखे ।
शनैः संबोधये च्छक्तिं कुण्डली मनुनैवताम् ॥

पवनेनसमाकृष्य योजयेत् पतिना सह ॥ इति ।

शक्तिध्यानं विनायोगी शक्तिहीनः प्रजायते ॥
शक्तिध्यानप्रयोगेण शक्तियुक्तो भवेद् ध्रुवम् ॥

अथ मन्त्रोद्धारः

कुण्डलीश प्लदं देवि कुण्डलीशसमन्वितम् ।
कुण्डली कुण्डला बिन्दु नादमध्यस्थ लांछिताम् ॥

एतच्छक्ति मयं बीजं रहस्यं सुप्रकाशितम् ।
पञ्चलक्षं जपेदाशुसिद्धिर्भवति योगिनः ॥

ॐ कुण्डलीं कुण्डलीश कुण्डली कुण्डला ॐ ॥ इति ॥

बिन्दुः प्रणवः । नादं दीर्घस्वरः । तदुक्तं नादबिन्दुपनिषदि

p. 80)

बीजाक्षरं परं बिन्दु नादं तस्योपरिस्थितम् ॥ इति ।

नारसिंहतापनीये -

वेदादि मूलं सकलं स्वराणां त्रयोदशस्थं शशिबिन्दुरूपम् ।
वेदान्वितं सुप्तभुजंगरूपं यो वेत्ति विद्वान् स विमुक्तिमेति ॥ इति ।

योगिनीहृदये च

या मूलाद्दूरगाशक्तिः स्वाधारे बिन्दुरूपिणी।
तस्यामुत्पद्यते नादः सूक्ष्मरूपो दिवाकरः॥

स्थूलसूक्ष्मभेदेन बिन्दुनाथास्त्री विधः।

तदुक्तं शिवयोगे

स्थूलसूक्ष्मपरश्चेति त्रिविधो बिन्दुरद्रिजे।
स्थूलश्शुक्रात्मको बिन्दुः सूक्ष्मः पञ्चाग्नि रूपकः॥

सोमात्मकः परः प्रोक्तः स तु नित्यस्सदा शिवः॥

तदुक्तं शूलिनीकल्पे

शुक्रं प्रवृत्तमिति। सूक्ष्मपञ्चाग्नि रूपकः। पञ्चमात्रः प्रणवः।
सोमात्मकः परः। षोडशमात्रायुक्तः प्रणवः॥

अनयारहितो योगी न क्वचित्फलमाप्नुयात्।

बीजेन हि विनावृक्षः कथं संजायते भुवि ॥

तदेवाक्षरमध्यस्थं प्ररोहति कथं पुनः ।

सर्वयोगद्रुमस्यायं बीज भूतो महामनुः ॥

तदुक्तं कठवल्क्योपनिषदि -

सर्वे देवायत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति ।

यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण ब्रवीम्योमि त्येतत् ॥

अतः । स्थूलसूक्ष्मभेदेन बिन्दुशब्दः प्रणवस्यैव ॥

गोरक्षः । धूमोमरीचिः खद्योतः दीप ज्वालेन्दु भास्वरः ।

अमीकला महाबिन्दो बिन्दुविश्वविभासकः ॥ इति ।

आदिनाथः

एवं यस्य प्रबुद्धा सा तस्यसिद्धिः करस्थिता ।

सर्वशास्त्रार्थ वेत्तृत्वं सौभाग्यं परमन्ततः ॥

काव्यं च सर्वभाषाभिः सालंकार पदोज्ज्वलम्।
करोति लीलया योगी रुद्रशक्ति प्रबोधनात्॥

अनेनैव प्रकारेण सर्वमात्रान् स्फुरन्ति हि।
रुद्रग्रन्थिं ततो भित्वा विष्णुग्रन्थिंभिनत्यतः॥

ब्रह्मग्रन्थिं ततो भित्वा कमलानिभिनत्ति षट्।
सहस्रकमलेशक्तिश्शिवेन परिमोदते॥

मणिपूरे यदा विष्ठा शान्तिश्श्री तुष्टि पुष्टयः।
आकर्षणं परक्षोभो भवन्त्येव हि सिद्धयः॥

मणिपूरात्समानीय स्वाधिष्ठाने प्रवेशयेत्।
स्वाधिष्ठानात् समानीय चानाहत पदं नयेत्॥

योगसारमञ्जर्याम्

अनाहते तु संलीने योगग्रन्थिविभेदनात्।

p. 81)

गिरीणां पातनं देवि कुर्यान्मृत्योश्च वञ्छनम्॥

यदा विशुद्धमानीतः सा मृतप्राशनं तदा।
योगिनः संप्रवर्तन्ते ह्यणिमाद्यष्टसिद्धयः॥

तदूर्ध्वं लाम्भिकां भित्वा नासाग्रं तु समानयेत्।
नासाग्रे श्वाससंभिन्नं भ्रूमध्ये संनिवेशयेत्॥

आज्ञास्थानगतो योगी सर्वं जानाति सर्वदा।

योगसारमंजर्याम्

श्वासेन सहितं जीवं तेजोरूपं ललाटिके॥

गत्वालक्ष्यं ललाटस्थं प्रविशेत् सूर्यसन्निभम्।
कुञ्चिकाग्रं ततः सूक्ष्मं चिद्रूपाणि च सुस्थिरम्॥

उद्घाटयेत् ततो योगी द्वारं शिवद्वारार्गलं महत्।
बिन्दु द्विरर्गलं भित्वा दुर्भेद्यं त्रिदशैरपि॥

ब्रह्माण्डोदरमित्युक्तं योगिनी सिद्धि सेवितम्।

तदेतदंगुलोत्सेधं कपाले स व्यवस्थितम्॥

शक्तिचक्र प्रवेशेन सर्वसिद्धिर्भवेद्ध्रुवम्॥

आदिनाथः

अपानवृत्तिमाकृष्य प्राणो गच्छति मध्यमे।
राजते गगनाम्भोजे राजयोगस्तु तेन वै।
एतत् साधनमार्गस्य लक्षणं वक्ष्यतेऽधुना॥

प्राकाराणि शरीरस्य षडुक्तानि त्वगादिभिः।
तन्मध्ये सुषिरं सूक्ष्मं तत्रलिङ्गं शिवालयम्॥

तस्य शक्ति स्थिता बाह्ये प्राकारद्वारमण्टपे।
तटिद्वलयसंकाशां सुप्तांपति विलोलुपाम्॥

प्राकारपालके नैव कवाटानां प्रभेदनम्।
हुंकारं च षडिति पूर्वमेवोक्तम्।
कृत्वातां प्रापयेच्छम्भुं तत्क्षणाद्ब्रह्मवर्त्मना॥

पूरयेन्मारुतं दिव्यं सुषुम्ना पश्चिमे मुखे।
शनैः संबोधयेच्छक्तिं कुण्डली मनुनैवताम्॥

पवनेन समाकृष्य योजयेत् पतिना सह॥ इति।

शक्तिध्यानं विनाशक्त्या हीनो योगी प्रजायते।
शक्ति ध्यानप्रयोगेण शक्तियुक्तो भवेद्धुवम्॥ इति।

यदा तु योगिनो बुद्धिस्त्यक्तुं देहमिमं भवेत्।
तदा स्थिरासनो भूत्वा मूलाच्छक्तिं समुज्ज्वलाम्।
कोटि सूर्यप्रतीकाशां भावयेच्चिरमात्मवित्॥

आपादमस्त(मस्त)पर्यन्तं प्रसृतं जीवमात्मनः।
संहृत्य क्रमयोगेन मूलाधारात्पदं नयेत्॥

p. 82)

तत्र कुण्डलिनी शक्तिं संवर्तानिलसन्निभाम्।
जिह्वानलं चेन्द्रियाणि ग्रसन्तीं चिन्तयेद्धिया॥

संप्राप्य कुम्भकावस्थां तटिद्वलयभासुराम्।
मूलादुन्नीय देवेशि स्वाधिष्ठान पदं नयेत्।

तत्रस्थं जीवमखिलं ग्रसन्तं चिन्तयेच्चताम् ॥

तटित्कोटिप्रतीकाशां तस्मादुन्नीयसत्वरम् ।
मणिपूरपदं प्राप्य तत्र पूर्ववदाचरेत् ॥

समुन्नीयपुनः स्थानात् अनाहतपदं नयेत् ।
तत्रस्थित्वा क्षणं देवि पूर्ववद् ग्रथितं स्मरेत् ॥

तत्रापि चिन्तयेद् देवि पूर्ववद् योगमात्मवित् ।
तस्मादुन्नीयभ्रूमध्यं नीत्वा जीवं ग्रसन् स्मरेत् ॥

परामृत महाम्भोधौ विश्रामं सम्यगाचरेत् ।
तत्रस्थं परमं देवं शिवं परमकारणम् ।
शक्त्या सहसमायोज्य तयोरैक्यं विभावयेत् ॥

यदि वञ्चि तु मुद्युक्तः कालंकालविभागवित् ।
यावद्व्रजति तं कालं तावत् तत्र सुखं वसेत् ॥

ब्रह्मद्वारार्गलस्याधो देहे कालप्रयोजनम् ।
यदा देव्यात्मकः कालमति क्रान्तः प्रविश्यति ॥

तदा ब्रह्मार्गलं भित्वा शक्तिं मूलपदं नयेत्।
शक्ति देहान् प्रसूयन्ति स्वजीवं चेन्द्रियैः सह ॥

तत्तत्कर्माणि संयोज्य स्वस्था देहे सुखं भवेत्।
अनेन देवि योगेन वञ्चयेत् कालमागतम्।
यदा मानुष्यकं देहं त्यक्तुमिच्छा प्रवर्तते ॥

ततः परमसन्तुष्टः ब्रह्मस्थानगतं शिवम्।
शक्त्या संयोज्यनिर्भिद्य व्योमब्रह्मशिलं व्रजेत्॥

व्योमतत्वं महाव्योम्नि वायुतत्वमथानिले।
तेजस्तत्वं तथा तेजस्यप्तत्वं जलमण्डले॥

धरा तत्वं धराभागे निरालंबे मनः परे।
व्योमादि गुणतत्वेषु स्वेन्द्रियाणि निवेदयेत्॥

एवं सांसारिकं त्यक्त्वा परतत्वा वलं काः।
अदृष्टः परतत्वाद्यैर्भित्वा सूर्यस्यमण्डलम्॥

परतत्वे परेशानि शिवे लीनः शिवायते ।
न कल्पकोटि साहस्रैः पुनरावर्तनं भवेत् ॥

अनुग्रहायलोकानां यदि देहं न सन्त्यजेत् ।
प्रलयान्ते तनुं त्यक्त्वा स्वात्मन्ये वाति वर्तते ॥

p. 83)

इत्येषा खेचरीमुद्रा खेचराधिपतिर्भवेत् ।
जन्ममृत्युजरारोगवलीपलितनाशिनी ॥

अनया सदृशी विद्या क्वचिच्छास्त्रान्तरे न हि ॥

खेचरी मेलनं देवि सुगुप्तं न प्रकाशयेत् ॥ इति ।

योगसारमञ्जर्याम्

चुबुकं योजयेज्जिह्वां षोडशस्वरमण्डले ।
भ्रूमध्ये चक्षुषी न्यस्य जिह्वामूर्ध्वं प्रसारयेत् ॥

संप्राप्य कुम्भकावस्थामिडापिङ्गलरोधनात् ।
मूलशक्तिं समाबोध्यभित्वाषट्सरसी रूहान् ॥

तटित्सहस्रसङ्काशां ब्रह्माण्डोदर मध्यगाम्।
धमनि शिवामृताम्भोधौ सन्निवेश्य चिरं वसेत्॥

यथाब्रह्ममये धात्रि योगी वसति लीलया।
तथा तज्जीववद् देहं भाति स्फुरति तत्पदम्॥

अनेन देवि योगेन दिनसप्तकमाचरेत्।
यथा तथा स भवति जरामरणवर्जितः॥

मासमात्रप्रयोगेण जीवेदाचन्द्रतारकम्।
यदा ब्रह्मपुरं भित्वा योगी व्रजति लीलया॥

तदा शिवत्वमाप्नोति त्यक्त्वा देहमिमं प्रिये।
न पुनः पीयते मातुः स्तनं यद्भव हेतुकम्॥

इदं गुह्यतमं शास्त्रं सर्वेषां न प्रकाशयेत्।
अपरीक्षितवृत्तस्य स शीघ्रं नश्यति प्रिये॥

डम्भाहं कारहीनाय धार्मिकाय दृढाय च।

समक् शुश्रूषशीलाय दातव्यं मन्त्रपुष्पकम्॥

अविज्ञाय च यः कुर्यात् गुरुवाक्यामृतं विना।
भक्ष्यते सोऽथिराद्देवि योगिनीभिर्नसंशयः॥

य इदं परमं शास्त्रं ग्रन्थतश्चार्यतश्च हा।
गुरुवक्रात् तु लभ्येत स परां सिद्धिमाप्नुयात्॥

य इदं परमं गुह्यं खेचरी मेलनं वदेत्।
स एव हि गुरुर्देवि नान्योऽस्ति परमेश्वरि॥

बहुधा क्लिश्यमानाय भक्तायानन्य चेतसे।
एकान्ते विजने स्थाने प्रवक्तव्यं विपश्चिता॥

व्याख्यानकाले कर्तव्यः पूजाविधिरशाम्यतः।
भक्ष्यभोज्यादिभिर्युक्तं कस्तूरी चन्दनादिभिः।
पूजयेच्छास्त्रविधिना विद्यापुस्तकमादरात्॥

अथवा यद्यशक्तस्तु मानसेत घनामृतैः।
सन्तर्प्यपूज्यविधिना व्याख्यानं गुप्तमाचरेत्।

यस्य हस्ते स्थितं दिव्यं विद्यापुस्तकमीश्वरि ॥

p. 84)

तस्य मूर्तिगतं देवि सकलज्ञानसागरम् ।
यथार्थग्रन्थतश्चेदमर्थतश्च विदिष्यति ॥

अशेषेण जगद्धात्रि स एव परमेश्वरः ।
सर्वज्ञेन शिवेनोक्तमिदं जन्मार्बुदैरपि ॥

दुलभं शास्त्रसारं तु विद्याज्ज्ञानप्रकाशकम् ।
द्वावेव पुरुषौ लोके सिद्धः साधक एव च ।
अभ्यासे नैव सततं यस्यमुत्परिवर्तते ॥

अचिरान्मनसस्सिद्धिं स योगीसाधकः स्मृतः ।
सम्यगभ्यस्य विज्ञाय यः समं मेलनं चरेत् ॥

सर्वसाधारणत्वेन विकल्प कुटिलोज्झितः ।
कर्ताभर्ता च संहर्ता नित्यतृप्तो निरामयः ॥

पश्यत्यात्माविभेदेन जगदेतच्चराचरम् ।
स योगी सर्वविच्छ्रीमान् सिद्ध इत्युच्यते बुधैः ।

सहस्त्रारे महापद्मे स्थित्वा योगी विराजते ॥

तस्मात् सर्वप्रयत्नेन खेचरी मेलनं चरेत् ॥ इति । अयं भावः -

द्वादशान्तादि मूलाधारान्तं विभाव्य पराशक्तिः स्वयं
कुण्डलिन्यादि रूपं भूत्वा सर्वाधारेषु सर्ववर्णेषु सूत्ररूपेण स्थिता ।

तदुक्तं शारदातिलके

शंखावर्तक्रमाद्देवी सर्वमावृत्य तिष्ठति ॥ इति ।

दक्षिणामूर्ति कल्पे

सूत्रेमणिमयं जगत् ॥ इति ।

सूत्ररूपेण मणिरूपेण स्थिता भवति । इति । अनन्त व्रतसूत्रग्रंथि रूपेण
सूत्ररूपेण यथा तथा कमलानि कलाश्च निर्मितवती ।

तदुक्तं योगयाज्ञवल्क्ये -

अष्टप्रकृतिरूपा सा ह्यष्टधा कुण्डलाकृतिः ॥ इति ।

भगवद्गीतासु

भूमिरापो नलो वायुः खं मनोबुद्धिरेव च ।
अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥ इति ।

अत एवाधाराद्यष्ट पद्मेषु अष्टवक्रेण स्थिता । पृथिव्यादयः पञ्चमनो बुद्धिरहंकारा अष्टप्रकृतयः । भिन्नरूपत्वात् अष्टधाकुटिलीकृता । द्वादशान्ते गुरुपादुका युग्मस्य पीठरूपे स्थित पद्मस्य नालरूपेण कर्णिकारूपेण स्थितवती । एतदर्थं गुरुपादुका स्मरणा वसरे उच्यते । सहस्रारे सूक्ष्मसृष्ट्यर्थं जगत्पावनार्थं बुद्धिरूपेणपत्यासह स्थिता । तदुक्तं -

सहस्रारे पद्मे सह रहसि पत्या विहरसे ॥ इति ।

आज्ञाचक्रेण प्रज्ञायुक्तमनोरूपेण शंभुना सह स्थिता ।

तदुक्तं

तवाज्ञा चक्रस्थं तपन शशिकोटिद्युतिधरम् ॥ इति ।

p. 85)

विशुद्धे आज्ञाकाशरूपेण अमृतकुण्डलिरूपेण स्थिता ।

तदुक्तं

शशिकिरणसारूप्य सरणीति । अनाहते वायुरूपेण हृदयकमलस्य नालरूपेण स्थिता । सर्वकारणरूपेण स्वाधिष्ठाने स्थिता । स्वाधिष्ठानेदुग्धामृतवर्षेण जगत्प्लावनार्थं मणिपूरे स्थिता ।

(तदुक्तं याज्ञवल्क्ये

द्वादशारयुतं चक्रं तेन देहः प्रतिष्ठितः ।
चक्रेऽस्मिन् भ्रमते जीवः पुण्यः पापः प्रचोदितः ॥

सा शक्ति पुण्यपाप रूपत्वात्) स्थूलसृष्ट्यर्थं पत्यासह क्रीडयित्वा मूलाधारे स्थिता ।

तदुक्तं याज्ञवल्क्ये

द्वादशारयुतं चक्रं तेन देहः प्रतिष्ठितः।
चक्रेऽस्मिन् भ्रमते जीवः पुण्यपापप्रचोदितः॥

सा शक्तिः पुण्यपापरूपत्वात् सर्वकारणम्। अमृतवर्षेण स्वाधिष्ठाने दग्ध जगत्प्लावनार्थं मणिपूरे मेघरूपेण स्थिता। मणिपूराद्धृदये उड्डीयवर्षन्ती। तदुक्तं तव श्यामं मेघं कमपि मणिपूरेकशरणमिति। स्थूलसृष्ट्यर्थं पत्यासहक्रीडयित्वा मूलाधारे स्थिता।
तदुक्तं तवाधारे मूले सह समय चेति॥ एवं प्रवृत्तिः कुण्डलिन्याः इति।

॥ इति योगसारसंग्रहे कुण्डलिनी स्वरूपक्रियानिरूपणं नाम चतुर्दशोध्यायः॥

ब्रह्मचक्रे सुषुम्नाग्रे श्रीचक्रे चन्द्रमण्डले।
महापद्मवने यत्तद् योगपीठं प्रकीर्तितम्॥

तदुक्तं योगसारमञ्जर्याम्

पद्मेदशशताराढ्ये ब्रह्मचक्रे शिवात्मके।
श्रीचक्रं राजं बालार्ककोटि दीप्तं विभावयेत्॥ इति।

शिवः

महापद्मवनं यत्तत् योगपीठं प्रकीर्तितम् ।
कदम्बगोलकाकारं चक्रं तं बिन्दुरूपिणम् ॥

ब्रह्मरूपन्तु तत्रैव सुषुम्ना धारमण्डले ॥ इति ।

बीजे यथांकुरोद् भेदः तथा तारार्णमण्डलम् ॥

कदम्बगोलरूपेण सहस्रारे व्यवस्थितः ॥

परितश्च सुषुम्नाया अधश्चोर्ध्वं च सर्वशः ।
यद्यत् स्थितं च तत् सर्वं संक्षेपेण प्रकाश्यते ॥

सहस्राद्वितस्त्यन्तं द्वादशान्तमितीरितम् ।
तदेव श्रीगुरुस्थानं षोडशान्तमितीरितम् ॥

नृसिंह तापनीये

ओंकारं सर्वेश्वरं द्वादशान्ते षोडशान्ते इति ।

तन्त्रधारे च

ततः परममात्रास्तु तत्वातीतः परः शिवः ।
निष्कलो निर्मलो नित्यः शरद्वारि समप्रभः ॥

p. 86)

गम्योनैक क्रमेणैव स्वानुभूत्यैमहात्मभिः ।

ऊर्ध्वाम्नाये

ब्रह्मरंध्रसरसी रुहोदरे नित्यलग्नमवदातमद्भुतम् ।
कुण्डली कनककाण्डशोभितं द्वादशान्त सरसीरुहं भजे ॥

तस्य कन्दलितकर्णिका पुटे क्लृप्तरेखमकथादि संख्यया ।
कोणलक्षितहलक्षमण्डलं भावलक्ष्यमनलालयं भजे ॥

तत्पुटे घनतटित्कटादिमत्स्पर्धमानपाणे पाटलप्रभम् ।
भावयामि हृदि चिन्मयं सदाबिन्दुनादमणिपीठमण्डलम् ॥

ऊर्ध्वमध्यहुतभुक्शिखास्पदं चिद्विलासपरब्रह्मणास्पदम् ।
विश्वखस्मरमहायशोत्कटं भावयामि युगमादि हंसयोः ॥

द्वन्द्वमिन्दुमकरन्दशीतलं मानसं स्मरति मङ्गलास्पदम् ।
पादुकापरशिवात्मनो गुरोः पापनाशिनि पटीयसी मम ॥

मूर्ध्निशीतकरनिस्सरत्सुधा सिक्तमूर्तिरनिशं विराजते ॥ इति ।

योगसारमञ्जर्याम्

गुदात्तद्व्यष्टभागेषु वीणादण्डाख्य देहभृत् ।
दीर्घास्थि मूर्ध्निपर्यन्तं ब्रह्मनाडीति कथ्यते ॥

तस्थान्ते सुषिरं सूक्ष्मं ब्रह्मनाडी सूरया ।
इडापिंगलयोर्मध्ये सुषुम्नासूर्यमण्डले ॥

सर्वं प्रतिष्ठितं तस्मिन् सर्वं विश्वतो मुखम् ।
तद्गतास्सूर्यसोमोग्नि देवताः परमेश्वरः ॥

भूतालोकादिशः क्षेत्रसमुद्राः पर्वतास्तथा ।

द्वयोश्च निम्नगा वेद् शास्त्रविद्या कलाक्षराः ॥

स्वरामन्त्रपुराणाश्च गुणाश्चैतस्य सर्वशः ।
निजं जीवात्मना तेषां क्षेत्रज्ञः प्राणवाहनः ॥

सुषुम्नान्तर्गतं विश्वं तस्मिन् सर्वं प्रतिष्ठितम् ॥ इति ।

चिन्तातिमिर भास्करे

शरीरान्तर्गतोमेरुमाश्रित्यमणिदण्डवत् ।
सुषुम्ना वर्तते देहे बिसं निभा शुभा ॥

आब्रह्मस्तम्बपर्यन्तं तन्मध्ये वर्तते चिति ।
तावाद्यन्तप्रभास्यन्तश्चित्तमित्यभिधीयते ॥

तच्छिद्रघटमध्यस्थं दीपज्वालेव दीप्यसि ।
एवं जीवस्वरूपान्तं व्याप्तमुक्तं हि पुत्रके ॥ इति ।

याज्ञवल्क्ये

मूलाधाराग्रकोणस्य सुषुम्नाद्वादशान्तगा ।

मूलोर्ध्वच्छिन्नवंशाभाब्रह्मनाडीति कथ्यते ।
तस्यास्तु सुषिरं सूक्ष्मं तस्मिन् सर्वं प्रतिष्ठितम् ॥

मस्तकान्ते चतुःस्थानात् ऊर्ध्ववाङ्मानसोऽधिकम् ।
द्वादशान्तमितिख्यातं परमात्मा व्यवस्थितम् ॥

p. 87)

तस्मादधः स्थिता शक्तिः उन्मनी चतुरंगुले ।
समनानामया शक्तिः सा शक्तिस्तत्र सु स्थिता ॥

त्रियंगुलादधो लक्षभानु कान्तिप्रकाशिनी ।
शिरोग्रेह्यं गुलीस्थाने शक्तिः सैव च सुप्रभा ॥ इति ।

तन्त्रसारे -

तच्छिवात्तपराशक्तिः सहस्रांशेन जायते ।
शान्त्यादि बहुनोक्तेन सा शक्तिर्व्यपदिश्यते ॥

तदुक्तं मृगेन्द्रे

सा च कुण्डलिनी शंभोः शक्तिः शुद्धा इडात्मिका ॥

न तदात्मे स्थिता सैव वर्तमाना परिग्रहे ।
उपादानत्वते देहे तोः कुलाले मृत्तिका यथा इति ॥

सहस्रारे द्यंगुलाग्रे मणिभादण्डवत्स्थिता ।
पार्श्वद्वयोर्बिन्दुयुक्ता शक्तीस्तिष्ठति सर्वदा ॥

दण्डादधस्त्र्यंगुलाग्रे बिन्दुमध्येर्ध चन्द्रभा ।
निरोधिनीति विख्याता शक्तिस्तिष्ठति सर्वदा ॥ इति ।

अन्तसारे

अंगुलत्रितयेनन्तो ललाटे पादमात्रकम् ।
दिव्यलिङ्गस्समाकारो ह्यर्धचन्द्रसमप्रभः ॥

तदुक्तं योगसारमञ्जर्याम्

ललाटे परमेशानि दिव्यावाराणसी पुरी ।

अवर्णमन्त्रेनन्ताख्यो विरजा च सरस्वती ।
भ्रूमध्ये द्व्यंगुलावृत्ते दीपाकारसमप्रभा ॥

सितासितासरित्संगः स्थितस्सोमेश्वरः शिवः ।

तथा च श्रुतिः

यत्र गंगा च यमुना यत्र प्राची सरस्वती ।
यत्र सोमेश्वरो देवस्तत्रात्मा ह्यमृता कृतिः ॥

ततोंगुलिकाकोशे द्विमात्रेर्क शशिप्रभा ।
माया तत्वविषोरुद्रः कण्ठदेशे व्यवस्थितः ॥

दक्षिणामूर्तिकल्पे

नाभेरूर्ध्वें वितस्त्यन्ते हृदयं चतुरंगुलम् ।
तदन्ते संस्थिता मेधास्वरूपाग्निसमप्रभा ॥

नाभिमण्डलमध्ये तु इच्छाविद्या प्रतिष्ठिता ॥ इति ।

तदधो मणिपूराग्रे रत्यारतिपतिः स्थितः।
मूलाधारे स्थिता शक्तिः कुण्डली परदेवता॥

योगसारमंजर्याम्

अथ ब्रह्मार्गलद्वारं दुर्विज्ञेयं महेश्वरि।
कलञ्चतुष्।कं तत्रस्थं चतुर्वर्गात्मकं परम्॥

पूर्वभागेऽमृतानाम गुप्तं दक्षिणगोचरा।
शिवापश्चिमदिग्बागे परापर शिवोत्तरे॥

तद्वारं रसनाग्रेण भित्वापूर्वकलामृतम्।
यदापिबति वै योगी मासादर्धेश्वरो भवेत्॥

p. 88)

यथा गुप्तामृतं दक्षे योगी रसनया लिहेत्।
मासा देव न संदेहः साक्षादेवार्धेश्वरो भवेत्॥

तत्पश्चिमे कलापानात् तद्वत्कामेश्वरो भवेत्।
उत्तरस्थ कलापानात् परमेष्ठित्वमाप्नुयात्।
तदूर्ध्वे मण्डले लीनं ब्रह्मरंध्रे परामृतम्॥

तत्सुधापानमात्रेण जीवान्मुक्तः शिवो भवेत्।
तत्र चूलितलं प्रोक्तं केदारं प्राहुरीश्वरी॥

तत्र सोमकलाश्चाष्टौ विख्याता वीरवन्दिते।
अमृतामानदापूषा तुष्टिः पुष्टी रतिर्धृतिः॥

शशिन्यादि कलापानात् खेचरत्वं प्रजायते।
भ्रूमध्यन्नमयेत् प्रोक्तं तत्प्रोक्तं सोममण्डलम्।
चन्द्रिकादि कलाप्रोक्तं परामृतनिकेतनम्।
जिह्वया यस्य तत्पानं तस्य वज्रसमं वपुः॥

तदूर्ध्वं वज्रकन्दाख्यं शिलाखेचरिमध्यगम्।
ललाटं तं विजानीयात् तत्र देविकलाश्रयम्।
तत्प्रादिकलापानात् अस्त्रशस्त्रैर्न भिद्यते।
आचिन्त्यः सर्वविज्ञानैः विरूपा विषयान्वितैः॥

भैरवा भोगवेत् सत्यं वज्रकन्दप्रभावतः।
नासिकाधो धरोष्ठोर्ध्वे राजदन्तमहापथे॥

तत्रपूर्णामृताकामदायिनी च कला द्वयम् ।
संप्राप्य कुंभकावस्थां रसनाग्रेण संस्पृशेत् ॥

द्विमासं तत्सुधापानात् सर्वरोगो विनश्यति ।
गुदलिंगान्तरस्थानंमाधारपरिकल्पितम् ॥

तत्रपञ्चकलाः प्रोक्ताः प्रागुप्तपरमामृतः ।
सुधा सुधामयी प्राज्ञा कालघ्नी ज्ञानदायिनी ।
कलाः पञ्चसुधाधाराः कीर्तिताः सर्वसिद्धिदाः ॥

तत्रस्था परमाशक्तिर्मायाकुण्डलिनी शिवे ।
तत्राकुंचनयोगेन कुम्भकेन सुरार्चिते ॥

मूलशक्त्या समास्वाद्य तत्रगंशीतला मृतम् ।
सुषुम्नाया समुन्नीय स्वाधिष्ठानादि पंकजात् ।
तत्सुधावृष्टिसंसिक्तं स्मरेद् ब्रह्माण्डकावधि ॥

तत्रस्थममृतं गृह्यशक्तिः श्रीकुण्डली परा ।
सुषुम्नामार्गमासाद्य ब्रह्मधामान्तमेयुषी ॥

पञ्चमासप्रयोगेण पञ्चभूतजयं भवेत् ।
शिवसाम्यो भवेत् सत्यं त्रिकालाभ्यासयोगतः ॥

p. 89)

नाभिस्थानं हि मया देवी स्वाधिष्ठानं तदुच्यते ।
तत्र दिव्यामृतमयं कलात्रयमुदीरितम् ॥

सुषुम्ना परमाह्लादा विद्याचेति प्रकीर्तिता ।
पूर्ववत्कुम्भकावस्थां प्राप्यशक्तिं प्रबोध्य च ॥

तत्सुधापानमात्रेण पूर्वोक्तफलमश्नुते ।
गुदमेढ्रान्तरं यद्वै वेणुदण्डं तदुच्यते ॥

कलाचतुष्कं तत्रोक्तं परामृतरसायनम् ।
सुशीता च महावृष्टिः पलितघ्नी वलीक्षया ॥

तत्रशक्तिं समुद्बोध्यपूर्ववत्प्लावयेत् तनुम् ।
चतुर्मासप्रयोगेण पूर्वोक्त फलमश्नुते ॥ इति ।

योगशांकरे

अतः परं प्रवक्ष्यामि परामृतमहापथम्।
वज्रकन्दे ललाटे तु प्रज्वलच्चन्द्रसन्निभम्॥

यं गर्भञ्चतुरश्रं च तत्र देवः परश्शिवः।
देवतास्तमुपासन्ते योगिन्यश्शक्तिसंयुतम्॥

चूलीतले महादेवि लक्षसूर्यसमप्रभम्।
त्रिकोणमण्डले मध्यदेवं लिङ्गात्मकं शिवम्।
रं गर्भमध्यगं देवि स्वशक्त्यालिङ्गितं परम्॥

देवतागणसंजुष्टं भावये परमेश्वरीम्।
दक्षजङ्घे महाभागे षड्बिन्दुर्वलयान्वितम्॥

यं गर्भं धूम्रवर्णञ्च तत्रदेवं महेश्वरम्।
लिङ्गाकारं स्मरेद् देवि शक्तियुक्तं गणावृतम्॥

वामशंखेन्द्र चन्द्राभं स पद्मं मण्डलं शिवे।
यं गर्भं ठं पदं मध्ये तत्रलिङ्गं सुधामयम्॥

गोक्षीरधवलाकारं शरच्चन्द्रायुतप्रभम्।

स्वशक्त्यालिङ्गितं सर्वें देवतागण सेवितम् ॥

एवं देवी चतुर्दिक्षु स्थानान्युक्तानि वै मया ।
तेषां मध्ये महावृतं हं गर्भं तत्र पार्वति ।
खगोश्वरः परश्शब्दः स्वशक्त्या लिङ्गितस्थितः ॥

लिङ्गाकारो गणयुतः सूर्यकोटिसमप्रभः ।
पृथिव्य(धि)पतिर्बालः पश्चिमे सूर्यनायकः ॥

दक्षशंखे निलवति वामे जलपतिश्शिवः ।
मध्ये व्योमाधि पतिश्शम्भुः स्थानाः पञ्चमथोदिताः ॥

योगसारमञ्जर्याम्

व्योमाधिपस्य देवस्य शिरोर्ध्वे चतुरंगुलम् ।
ज्योतिर्मण्डलमध्यस्थं कोटिचन्द्रसमप्रभम् ॥

दिव्यामृतमयं भाण्डं मूलबंधकवाटकम् ।
ऊर्ध्वरुद्धमहाशैलमभेद्यममृतास्पदम् ॥

शीतलावृतमध्ये तु विलीनं लिङ्गमीश्वरम् ।
त्रयरेणुप्रतीकाशं कोटिचन्द्रसमप्रभम् ॥

हेयोपादेयरहितंमज्ञानतिमिरापहम् ।

p. 90)

अतीत्यपञ्चस्थानानि परतत्वोपलब्धये ।
परामृतघटाधारकवाटं कुम्भकान्वितम् ॥

मनसा सहवागीशीमूर्ध्ववक्त्रां प्रसारयेत् ।
स यद्यत् प्राणसञ्चारो योगीरसनया गलम् ॥

लीलयोद्घाटयेत् सत्यं सम्प्राप्य सहसामृतम् ।
शीतलेक्षुरसास्वादु तत्र क्षीरामृतं हि मम् ॥

योगपानं पिबेन्मध्यं दुर्लभं विबुधैरपि ।
तत्सुधावृष्टि सन्तृप्तो परावस्थामुपेत्य च ॥

उन्मन्या तत्र संयोगंक्तभ्यं ब्रह्माण्डकान्तरे ।
नादबिन्दुमयं मांसं योगीयोगेन बृंहयेत् ॥

एतद्रहस्यं देवेशि दुर्लभं परमेश्वरि ।

जिह्वाग्रे कोटिचन्द्राभां वागीशीं परिभावयेत् ॥

परामृतकलातृप्तः कवित्वं लभते क्षणात् ।

जिह्वाग्रे संस्थितां लक्ष्मीं परामृतविमोदिताम् ॥

ध्यायन् योगी महेशानि योगसाम्राज्यमाप्नुयात् ।

सहजाः पञ्चविख्याताः पिण्डेऽस्मिन् परमात्मके ॥

यदा संजायते देहं मातृहे पितृक्षयात् ।

तत्रसार्धं भवन्तिस्म देहवृद्धिमुपेयुषी ॥

आद्याकुण्डलिनी शक्तिः प्रथमा सहजा स्थिता ।

द्वितीया च सुषुम्नाख्या जिह्वा चैव तृतीयका ॥

तालुस्थानं चतुर्थञ्च ब्रह्मस्थानं च पञ्चमम् ।

उन्मन्या सहजा माया द्वितीयां सहजां विशेत् ॥

तृतीयां सहजामूर्ध्वं चतुर्थीं सहजां विशेत् ।

चतुर्थीं सहजां भित्वा सहजां पञ्चमीं विशेत् ॥

एवं भेदो मया प्रोक्तो दुर्विज्ञेयं कुलेश्वरि ।
मूलात् कुण्डलिनी शक्तिः सुषुम्नामार्गमागता ॥

कुलैकतन्तु प्रतिमा कोटिसूर्यसमप्रभा ।
प्रविशेद् घण्टिकामार्गं शिवद्वारार्गलं विशेत् ॥

एवं भेदो मया प्रोक्तो दुर्विज्ञेयो महेश्वरि ।
प्रविशेत् कोटि सूर्याभं धामस्वायंभुवं प्रिये ॥

तत्रामृत महाम्भोधौ शीतकल्लोलमालिनी ।
पीत्वाविश्राम्य च सुधां परमानन्दपूर्णया ।
बुद्ध्या तत्सुधया तृप्तमात्मदेहं प्रभावयेत् ॥

अनेन देवि योगेन जायते दिव्यदर्शनम् ।
खेचरित्वं भवेत् सद्यः सर्वदुःखक्षयो भवेत् ॥

वञ्चनं कालमृत्यूनां त्रैलोक्यैकमणिस्तथा ।
अणिमादि गुणोपेतः स सिद्धो जायते ध्रुवम् ॥

योगीन्द्रत्वमवाप्नोति मतिख्या हता भवेत्।
न च नागसहस्राणा बलेन सहितः स्वयम्॥

जायते शिववद्योगी सत्यं सत्यं मयोदितः॥

शिवः

मूलाधारात् समुद्भूता षट् कवाट विभेदिनी।
भित्वाब्रह्मार्गलं दिव्यं स्वपते स्थानमेयूषी॥

वह्न्यर्कमण्डलं भित्वा द्रवन्ती चन्द्रमण्डलम्।
तदुद्भवामृतास्वादा परमानन्दनन्दिता।
कुलयोषित्कुलं त्यक्त्वा परं पुरुषमेयुषी॥

निर्लक्ष्यं निर्गुणं चैव कुलरूपविवर्जितम्।
तत्र स्वच्छन्दरूपा तु परिरभ्यस्वकं पतिम्॥

विश्राम्य च चिरं कालं तद्भोगा ह्लाद नन्दिता।
परमा वृष्टिभिर्नित्यं सिञ्चन्ती योगिनस्तनुम्॥

यथा गतेन मार्गेण पुनरेति स्वकं पदम् ॥

॥ इति योगसारसंग्रहे सुषुम्ना कलानां स्वरूपनिरूपणं
नामपञ्चदशोध्यायः ॥

अथ शरीरे जीवस्थानानि जीवात्मस्वरूपं चोच्यते -

शिवयोगे

आधारे हृदये चैव शिरः स्थाने व्यवस्थितः ।
देहसङ्गस्स इत्युक्तश्शिवेन परमात्मना ॥

ब्रह्मोपनिषदि

नेत्रस्थं जागरितं विद्यात् कण्ठे स्वप्नं समादिशेत् ।
सुषुप्तं हृदयस्थं तु तुर्यं स्यान्मूर्ध्निसंस्थितम् ॥ इति ।

दत्तः

वायुस्तेजस्तथाकाशो त्रिविधो जीवसंज्ञकः ।

स जीवः प्राण इत्युक्तः वालाग्रशतकल्पितः ॥ इति ।

याज्ञवल्क्ये

न्यग्रोधबीजं शतधा विभज्य

तदेकभागस्य शतांशतुल्यम् ।

तस्यांशभागं मुनयो वदन्ति

तथैव जीवाख्यमितिप्रसिद्धम् ॥

मुण्डकोपनिषदि

एषोऽणुरात्मा चेतसा वेदितव्यो

यस्मिन् प्राणः पञ्चधासंविवेश ।

प्राणैश्चित्तं सर्वमेतं प्रजानां

यस्मिन् विशुद्धो भवत्येष आत्मा ॥

मनस्तेजो रूपस्तन्निरोधात् स्वरूपलाभाः उक्तस्थाने नियम्यासून् तत्र संयोजयेन् मनः ॥

मुहूर्तमभ्यसेन्नित्यं मृत्युमातङ्ग केसरी ।

प्राणसन्निरोधात् स्वरूप ज्ञानं सिध्यति ॥

ब्रह्मोपनिषदि

अतो निर्विषयस्यास्यमनसो मुक्तिरिष्यत इति ॥

उत्तरगीतासु - यथा जलंजलेक्षिप्तं क्षीरे क्षीरं घृते घृतम् ।

p. 92)

अविशेषं भवेत् तद्वत् जीवात्मपरमात्मनोः ॥

तथा च श्रुतिः - घटसंवृतमाकाशन्नीयमने घटो यथा ।
घटीनीयेतनाकाशं तद्वज्जीवो न भोषमः ।

कठवल्याम् - नायमात्मा प्रवचनेन लभ्यो न मेघया न बहुना श्रुतेन ।
यमेवैष वृणुते तेन लभ्यस्तथैवात्मा वृणुते तनूँस्वाम् ॥

तापनीये

ओमित्येकाक्षरमिदं सर्वं तस्योपव्याख्यानं भूतम् ।
भूतं भव्यं भविष्यदिति । सर्वमोंकारमेवयच्चान्यत्र कालोतीतम् ।

तदप्योंकार एव। सर्वं ह्येतद्ब्रह्म। अथमात्मा ब्रह्मासोऽयमात्मा चतुष्णात् जागरित स्थानो बहिः प्रज्ञः सप्ताङ्ग एकोनविंशति मुखः स्थूल भुग्वैश्वानरः प्रथमः पादः। स्वप्नस्थानोऽन्तः प्रज्ञः सप्ताङ्ग एकोनविंशतिमुखः चतुरात्मा प्राज्ञ ईश्वरः तृतीयः पादः। एष सर्वेश्वरः एष सर्वज्ञः एषोऽन्तर्याम्येषयोनिः सर्वस्य प्रभवाप्ययो हि भूतानां बहिः प्रज्ञम् ना प्रज्ञम् न प्रज्ञानघमदृष्टम्। अव्यवहार्यमग्राह्यमलक्षणम्। अचिन्त्यमव्यपदेश्यमेकात्मप्रत्ययसारं प्रपञ्चोपशमं शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेयः। य आत्मा शुद्धचैतन्यस्वरूपः शाश्वतो विभुः निर्विकारः स्वयं ज्योतिः स्वभावोर्कः प्रकाशयेत्।

वासिष्ठः

य आत्मा चिन्मयः स्वच्छः प्रवृत्त्युपचयोऽच्युतः।
हेयग्राह्योज्झितो देशकालजात्याद्यसंगतिः॥

अस्यां तुर्यावस्थायां स्थितिं प्राप्यविनाशिनी।
आनन्दैकात्मलीनत्वा महानन्दपदं गतः।
आद्यन्तरहितः सत्यं चिद्रूपो निर्विकल्पकः।
आत्मासंपूरिताकाशो जीवः स्याद्यः परात्परः॥

आत्मानमितरं चापि दृष्ट्या नित्याविभिन्नया।
सर्वं च ज्योतिरेवेति यः पश्यति स पश्यति॥

अवधूतगीतासु

एवं ज्ञात्वात्विमं मार्गं योगिनां(न्ते)वकल्पितम्।
विकल्पवर्जितात्वेषा स्वयं सिद्धिः प्रजायते॥

नाडीप्रकारोऽपि न यत्र किञ्चित् नमीशमात्मानमुपे हि शाश्वतम्।
न संयमी वा यदि वा न संयमी निष्कर्मको वा यदि वा स कर्मकः॥

आत्मप्रबोधात् स विमुच्यते ध्रुवं तमीशमात्मानमुपैति शाश्वतम्।
मनो न बुद्धिर्न शरीरमिन्द्रियं तन्मात्र भूतादि न भूतपञ्चकम्।

p. 93)

अहं कृतिश्चापि न येत् स्वरूपकं तमेक मात्मानमुपैति शाश्वतम्॥

तीर्थे वाप्यथ गेहे वा यत्र कुत्र मृतोऽपि वा।
योगी न पश्यते गर्भं परब्रह्मणि लीयते॥

तीर्थे वा श्वपच गृहे नष्टस्मृति परित्यजन् देहम् ।
ज्ञानसमकाल मुक्तः कैवल्यं याति हतशोकः ॥

कुलीपवित्रं जननी कृतार्था विश्वंभरा पुष्यवती च पृथ्वी ।
अपारसच्चित्सुखसागरेऽस्मिन् लीनं परेब्रह्मणि यस्य चेतः ॥

योगशास्त्रस्य सर्वेषां श्रद्धाभक्ति पुरस्सरम् ।
शतकृच्छ्र फलं नित्यं भवति श्रवणेन तु ॥

दिने दिने योगशास्त्रं यः पठेद् भक्ति संयुतः ।
तत्र श्रीः विपुला सद्यः अन्ते मुक्तिर्न संशयः ॥

॥ इति श्रीमद्योगसारसंग्रहे आत्मस्वरूपनिरूपणं नामषोडशोध्यायः ॥

यमादि षोडशपरैः कृत्यैरात्मस्थिति क्रमः ।
संप्रोक्तः षोडशाध्यायैः बहुसम्मतिभिर्दृढम् ॥

इति

॥ योगसारसंग्रहः सम्पूर्णः ॥

राज्ञसं मानषं लिङ्गं शयनं तद्द्वयं भवेत्  २२
स्वयम्भुवालयं चैव गाणवादिस्थितिर्भवेत्
अथवान्यप्रकारेण शयनं समखण्डकम्  २३
वर्धमानं स्थितं चैव आसीनं तु शिवाधिकम्
यानं त्रैराशिकं लिङ्गं कलयेत्तु विचक्षणः  २४
सुखासीनं स्थितं नृत्तं शयनं च चतुर्विधम्
पूजाकाले सुखासीनं अन्यकाले तु पूर्ववत्  २५
भवादि पञ्चविंशच्च शिवसोहोद्विशेषतः
तेषु विंशति संयोज्य शिवव्योमार्कमण्डले  २६
पञ्चसोहं तु लिङ्गेभ्य ---सततं वसेत्
शिवार्चनमिदं प्रोक्तं सायरक्षाविधिं शृणु  २७
इति चिन्त्यशास्त्रे शिवार्चनविधिर्नाम सप्तदश पटलः

नित्यार्चनविधिः

शिवार्चनं विधिं वक्ष्ये सर्वसिद्धिकरं परम्
पञ्चशुद्धिक्रमेणैव पूजयेच्छिवमव्ययम्  १
शौचमाचमनं स्नानं पादप्रक्षालनं तथा
पूजास्थाने स्थितः कुर्यादासनोपरि देशिकः  २
मण्डलं कारयेत्तत्र -----
-------------वृत्तं तन्मध्ये तु त्रिमण्डलम्
चतुरश्रमर्धचन्द्रं त्रिकोणं च षडश्रकम्  ३
सुवृत्तं च पृथिव्यादिमण्डलाकृतयः क्रमात्
पृथिव्यादीनि बीजानि शृणु प्रज्ञाहिताय वै  ४
मण्डले चतुरश्रे तु लकारं वज्रलाञ्चितम्
ध्यायेत्तद्धेमवर्णाभं -----
अर्धचन्द्रनिभं पद्मलाञ्छनेन तु लाञ्छितम्  ५

वकारं पूजितं वारि योनिमन्त्रं सदा प्रतम्
त्रिकोणं रक्तवर्णाभं कालानलशतोपमम् ६
स्वस्तिकेन तु संछन्नं रकारेणोज्ज्वलं शुभम्
षडश्र चैव रक्ताभं यकारेणैव लक्षितम् ७
आकाशमण्डलयुतं वृत्तं लाञ्छनबिन्दुकम्
लंकूळीशं महाबीजं हकारेणोज्ज्वलं हि नत् ८
ध्यायेत्सदाशिवाभासं ममले देवताः पृथक्
चन्द्रवारुणवह्नीश सदाशिवमयं पृथक् ९
ब्रह्मविष्णुमण्डलेशानं पृथङ्मूर्तिशिवस्तथा
सदाशिवगतो बिन्दुनादं ततोपरिक्रमात् १०
नादोपरि स्थिता शक्तिः शक्तिमध्ये शिवःपरः
शिवो ब्रह्म परं धाम परमात्मा सनातनः
तत्त्वं सूक्ष्मं परेशानं मुक्तिस्थानं निरञ्जनम् ११
---------------------महत्पदम्
पश्यन्ति सूरयः सर्वे सर्वसङ्कल्पवर्जिताः १२
पर्याय वाचकं नाम परब्रह्म इति त्रिधा
विष्णुर्ब्रह्मा शिवः साक्षात् वासुदेवस्सनातनः १३
आमनन्ति परं तत्त्वं पठन्ति मुनिसत्तमाः १४
एक एव महादेवः परमात्मा निरञ्जनः १४
गुरुप्रसादमार्गेण सिद्धान्तोक्तेन वर्त्मना
तस्मात्संछास्त्र सिद्ध्यर्थं गुरुवन्दनपूर्वकम् १५
सिद्धान्ते सर्व कर्माणि भूतशुद्धिं ततः कुरु
दहनाप्लावनं कुर्यान्नाडीशोधनकर्मणा १६
प्राणस्थितिः प्रकर्तव्यं प्राणापानेन सुव्रत
---------------------- तत्त्ववित् १७
निक्षिप्य ब्रह्मकमले शिवं हंसेन योगवित्

योगेन वायुनासाद्य नाडीशोधनमारभेत् १८
ध्यायेम्महेशतो ग्राह्यं पीताभासमनोपमम्
स्फटिकाभाङ्गमाभासज्वालया बिन्दुतोपमम् १९
हृत्पद्मनिलयं --------
---------ममलमहंकारं स तत्परम्
त्वं शब्दनिलयं योगि असिशब्दे व्यवस्थितम् २०
तत्त्वमस्यापि वाक्यार्थं साधनं सनकादिभिः
सब्रह्म सशिवस्सेन्द्रस्सोऽक्षरः परमस्वराट् २१
ऋतं सत्यमिति ख्यातं परं ब्रह्म परात्परम्
ऊर्ध्वरेतं विरूपाक्षं विश्वरूपमुमापतिम् २२
एवं सदाशिवं ध्यायेत् खे ब्रह्मपङ्कजं ततः
सदाशिवमजं ध्यात्वा प्राणायामं सदारभेत् २३
दहनाप्लावनार्थाय नाडीयजनमारभेत्
इडा च पिङ्गला चैव सुषुम्ना च त्रिधा भवेत् २४
विश्वस्याधारमत्यन्तं नाडीनां नायकत्रयम्
तस्मात्त्रयेण कर्तव्यं नाडी शुद्धिर्यथाक्रमम् २५
सूक्ष्मानन्दामृता चैव पिङ्गला माइडागुह
सूर्याग्निसोमसंयुक्ता पुनस्तत्त्रिविधा मता २६
रजस्तमस्सत्वमिति ब्रह्मरुद्रहरिस्तथा
ऋग्यजुस्साम च त्रीणि तस्मात्-------
-------------छुद्धिः प्रचक्षते २७
अकारं च उकारं च मकारं च त्रिधा भवेत्
बिन्दु चान्तर्गतो नाडी तुरीयं मुक्तिकारणम् २८
अकारो दक्षिणे भागे उकारो वामभागिकः
मकारो मध्यसंयुक्तस्तस्मात्त्रिः प्रदक्षिणम् २९
हकारो दक्षिणः पक्षः सकारो वामसंस्थितः

मध्ये नादमयस्थाने तस्मादन्तर्गतश्शिवः ३०
अविना दक्षिणं सव्यमुत्तरं वामसंयुतम्
विषुवद्वयोदयं मध्ये पुंस्त्री चैव नपुंसकम् ३१
शङ्करं दक्षिणं भागं वामभागमुमामयम्
सूक्ष्मं शिवमयं मध्ये त्रिःप्रकारं शिवामृतम् ३२
दक्षिणं बिन्दुसंयुक्तं वामं नादकलाकुलम्
मध्ये समरसं प्रोक्तं तदूर्ध्वे परमं पदम् ३३
तत्परं ब्रह्म परमं सर्वभूतेषु संस्थितम्
तेषां मध्ये महाशक्तिरन्तर्वेदि मनोन्मनीम् ३४
वागीशी परमानन्दज्योस्नादि ब्रह्मवारिणी
चैवकी वैखरी सूक्ष्मा पश्यन्ति मध्यमा सुधा ३५
स्वाहाकारी जगद्धात्री शब्दसंकुल---------
------------प्रणवं सङ्गीतं वादिनी स्थिता
श्रीमती च दयां सत्या विकल्परहिता शिवा ३६
योनिमध्ये गता नारी नारीनारायणस्थिता
स्थितिप्रलयसंयुक्ता सृष्टिमूला शिवप्रिया ३७
एभिर्नामयुता शक्तिरनन्ता नामकोटिका
तस्य मध्ये शिवस्थित्वा प्राणायामेन शोषयेत् ३८
उभाभ्यां तु बिपेद्वायुं संयम्य मनुना त्रिधा
गुदादनिलमुद्धृत्य प्रासादप्रणवेन तु ३९
दक्षिणेन पिबेत्पूर्वं कलामात्रेण मन्त्रवित्
कलाभिष्षोडशदशद्वादशाभिस्त्रिधोच्यते ४०
सूर्यसोमाग्निदैवत्यं निष्कलं शिवमव्ययम्
दक्षिणेऽर्ककलास्थानं वामे चन्द्रकला स्थितम् ४१
सकला सा समायुक्तं मध्ये वह्निसुषुम्नया
तस्य भेदमतो वक्ष्ये शृणु सर्वार्थसिद्धये ४२

अकारश्च इकारश्च उकारश्च तथैव च
ए ओ अमिति पुंलिङ्ग दक्षिणे वायुगोचरम्  ४३
आ ई ऐ औ अः स्थिता वामतो वायुगोचरम्
एताश्चन्द्रकला ज्ञेया अमृताश्चन्द्र संयुता  ४४
ऋ लृ लॄ सुषुम्नायां प्राणमध्ये विषुद्वयाम्
दक्षिणस्थानमन्त्रेण धारयेद्वायुमात्मनि  ४५
वह्निमण्डलमार्गेण तद्बीजेन समाधिना
वामेन विसृजेत्तत्र चन्द्रमध्येन बीजयुक्  ४६
युवां मनसाम -------- कलायुतम्
चन्द्रमण्डलमध्येन ज्योत्स्नाध्यानेन मुख्यधीः  ४७
नाभिचक्रगतं वायुं सुषुम्नाख्येन पूरयेत्
प्रणवध्यानमार्गेण हंसहंसेति कौदिता  ४८
औकारान्तमिदं मन्त्रं षण्णादमिति पठ्यते
रहस्यमेतद्विज्ञानं गोपनीयं प्रयत्नतः
परकाय प्रवेशस्य साधनं विषनाशनम्  ४९
एवं मृत्युञ्जयं मन्त्रं ओं जुं सः ओमिति स्मृतम्
मात्रा षोडशकेनैव पूरयेद्विधि चोदनात्  ५०
चतुष्षष्टि कृतं कुम्भं द्वात्रिंशन्मात्रया स्पृशेत्
एवं षोडशकेनैव प्राणायामेन शोधयेत्  ५१
नाडीशुद्धिमवाप्नोति सर्वपापैः प्रमुच्यते
प्रातः काले शुचिस्नात्वा हविष्याशी जितेन्द्रियः  ५२
धारयेन्मासमात्रेण पञ्चपातकनाशनम्
-------------पैः  ५३
ऋषिभिस्सततं योगं मयातीतं सनातनम्
आयुष्करं बलकरं यौवनं सजरापहम्  ५४
काशश्वासहरं पुच्छव्याधिनाशं सुखप्रदम्

वन्ध्यानां पुत्रजनकं वायस्थापनमुत्तमम् ५५
समाधियोगस्यारम्भं वैदिकैरपि पूजितम्
क्षयकासापस्माराणां संपर्कव्याधि नाशनम् ५६
कुष्ठघ्नं गौरवालस्याद्देहलाघवकारणम्
तस्मात्सर्वप्रयत्नेन प्राणायामं समभ्यसेत् ५७
पश्चादाकाशगमनं ब्रह्मयोगस्य कारणम्
निर्वाण निर्गुणं व्योमव्यापि प्रसाधकं च तत् ५८
एवं क्रमेण गुरुणा आज्ञायुक्तस्य सिद्ध्यति
प्लावयेदमृतेनैव स्वधामन्त्रेण मन्त्रवित् ५९
अकारादि क्षकारान्तान्यक्षराणि क्रमान्न्यसेत्
अकारं मूर्ध्नि विन्यस्य आकारं तु ललाटके ६०
इकारं दक्षिणे नेत्रे ईकारं वामनेत्रके
उकारं दक्षिणे कर्णे ऊकारं वामकर्णके ६१
ऋकारं दक्षिणे घ्राणे ॠकारं वामघ्राणके
ऌकारं दक्षिणे गण्डे ॡकारं वामगण्डके ६२
एकारमुत्तरौष्ठे च ऐकारमधरौष्ठके
ओकारमूर्ध्वदन्तेषु औकारमधोदन्तके ६३
अंकारं चैव जिह्वायां अःकारं तालुमध्यमे
एवं विधि क्रमेणैव विन्यसेत्षोडश स्वरान् ६४
कवर्गं दक्षिणे हस्ते चवर्गं वामहस्तके
टवर्गं दक्षिणे पादे तवर्गं वामपादके ६५
पफौ दक्षिणे पार्श्वे तु वामपार्श्वे बभौ न्यसेत्
नाभौ मकारं तस्योर्ध्वे यादिसान्तन्तु विन्यसेत् ६६
कक्षकुक्षौ त्रिकेन्यस्य हकारं हृदि विन्यसेत्
ळकारं गुदमूले तु क्षकारं गुह्यके न्यसेत् ६७
एवं विन्यस्य बीजानि शक्तिबीजं समुच्चरन्

शरीरान्ते ज तस्यान्ते तथैवं नन्दिकेश्वरः १५१
सप्तषड्वासनाकार्यं मनोवाक्कायकर्मसु
व्याप्यावृत्तिं करोत्येव तत्त्ववृत्तिं न मन्यते १५२
वासनाया विनाशेन शिवज्ञानं विशेषतः
नैवास्ति किञ्चित्कर्तव्यं वासनायुक्तकर्मसु १५३
वासना रागसंप्राप्तिरस्ति चेन्न स तत्त्ववित्
देशिकस्तत्वविज्ञानं ज्ञात्वा चैव प्रकाशकम् १५४
एवं तु तत्त्वज्ञानी स्यान्मूर्तितो मुक्त एव सः १५५
इति चिन्त्यशास्त्रे तत्त्वनिर्णयं अष्टत्रिंशत्पटलः

## तत्त्वनिर्णयम्

अथ वक्ष्ये विशेषेण तत्त्वनिर्णयमुत्तमम्
आधाराधेयकं युक्तं कल्पना भावकं विदुः १
कल्पनारहितं तत्र सन्मार्गज्ञानमुत्तमम्
श्रीनन्दिकेश्वर उवाच
हे भगवन् किमाधेयं सम्यक् वक्तुं त्वमर्हसि २
श्री भगवानुवाच
आधारं गुदमित्याहुः स्वाधिष्ठानं तु गुह्यकम्
मणिपूरकं नाभि सत्व मनाहतं हृदयं तथा ३
विशुद्धिः कण्ठदेशे तु आज्ञा भ्रूमध्यमेव च
षडाधारमिति ज्ञेय धारयेत्तु षडक्षरम् ४
तत्तज्ज्योति स्वरूपेण भावयेत्तन्त्रवन्तकम्
शब्दादीनि प्रवर्तन्ते श्रोत्रादि स्थानके क्रमात् ५
वागादि स्थानके सम्यग्वचनादि प्रवर्तते
प्राणस्त्वपानो व्यानश्चोदानस्समान एव च ६
नागः कूर्मश्च कृकरो देवदत्तो धनञ्जयः

प्राणाख्याज्ञायते हंसे इडापिङ्गलमध्यमे ७
चरे शरीरे संरक्ष्यं मध्यस्थं प्राणपादनम्
तत्प्राणाज्ञायतेऽपानो अपानान्तं चरेत्क्रमात् ८
मूत्रादिन्विसृजेत्तत्र कायं रक्षतु प्राणवत्
अपानाज्ञायते व्यानः कृत्स्नं कायमवाप्य च ९
सरोमपुलकां कृत्वा स्पर्शज्ञानस्य कारणम्
तद्व्यानाज्ञायते दानः कण्ठादधः स्थितो भवेत् १०
विज्ञाप्य षड्रसं तत्र तस्य वार्तासु कारणम्
समानो जायते दाना कण्डादधः समीपतः ११
तत्र स्थित्वान्नपानादि तथाग्नौ जुहुयात्क्रमात्
प्राणार्गो नाग एवा दक्षिणो संस्थितो भवेत् १२
हिक्का कर्म प्रकुर्वीत नागास्तत्र प्रकीर्तिताः
उपानाशेत्कर्म एको नेत्रद्वय समाश्रितम् १३
निमिषोन्मिषाभ्यां वै नेत्रे द्वाभ्यां स रक्षति
व्यानाच्च कृकरस्तत्र नासिकाभ्यन्तरे स्थितः १४
क्षुतं तत्र प्रकुर्वीत कृकराख्यः प्रकीर्तितः
उदानाद्देवदत्तख्यः व्याप्य पृष्ठं च पार्श्वके १५
व्याप्य तत्रैव कायं च कुरुते गमनागमौ
धनञ्जयः समानांशः कायस्थूलनकंपकृत् १६
प्राणादि दशवायुस्तु सुक्षेपाद्वक्ष्यतेऽधुना
एतेषां चैव सर्वेषां मनोभेद इति स्मृतः १७
एतन्मात्रा मनोवृत्ति मनोऽहंकारजं भवेत्
बुद्धिस्सोऽप्यहङ्कारश्चित्तं च क्रमशो भवेत् १८
चतुष्कारणसंयुक्ते विषये हूयते क्रमात्
विषयान्जनते येन तस्मात्तस्य तु लक्षणम् १९
शून्यचित्तविनिर्मुक्तमन्तरात्मा तथैव च

सुख चैतन्यमेवं तु परमात्मान लक्षणम्  २०
लक्ष्यलक्षणनिर्मुक्तचिन्त्याचिन्त्यविवर्जितम्
द्वैताद्वैतविनिर्मुक्तं चिन्त्या चिन्त्य विवर्जितम्  २१
द्वैताद्वैतविनिर्मुक्तं तत्त्वमित्थं गुरोर्मुखात्  २२
तत्त्वनिर्णयमेवोक्तं शृणु सन्मार्गलक्षणम्
इति चिन्त्यशास्त्रे तत्त्वनिर्णय एकोनचत्वारिंशत्पटलः

## सन्मार्गम्

अथ वक्ष्ये विशेषेण सन्मार्गचक्रमुत्तमम्
मण्डलं चाद्य भवनं चक्रपर्यायवाचकम्  १
भूमिशुद्धिं पुरा कृत्वा कुट्टिमोच्चाङ्गुलाङ्गुलम्
त्रिहस्तविस्तृतं प्रोक्तं दर्पणोदरसन्निभम्  २
गोमयेनोपलिप्याथ प्रोक्षयेद्धृदयेन तु
तच्चक्रं पद्मसंकाशं कर्णिकाकेसरान्वितम्  ३
दलं पञ्चविधिज्ञेयं मृदुवृत्तसमायुतम्
पञ्चदशशतं स्यात्तु दलं संख्याक्रमेण वै  ४
पञ्चविंशच्चतुर्विंशत्रिविंशद्वयविंशकम्
त्रिसप्तकं तु विज्ञेयं बाह्यादि क्रममेव हि  ५
कर्णिकोपरि बीजानां भूतसंख्या प्रकीर्तितम्
भूतादिज्ञानपर्यन्तं देवतैस्सह वक्ष्यते  ६
यत्कठिननं तत्पृथिवी यद्द्रवोऽप्याय उच्यते
यदुष्णयुक्तं तद्वह्नि वायुस्सञ्चरतिर्वतने ७
यत्सोषियुक्तं आकाशं महाभूतगणास्ततः
अस्थि त्वङ्मांसकायाश्च नाड्यस्तु परिकीर्तिताः  ८
पृथिव्यंशास्तथा ज्ञेयास्त्वम्बांशानि ततश्शृणु
मूत्रशोणितभेदाश्च मज्जा शुक्लं तथैव च  ९

जलांशमिति विज्ञेयं सर्वप्राणिषु संस्थितम्
क्षुधा तृष्णा च निद्रा च आलस्यं मैथुनं तथा १०
एते पञ्च गुणाः प्रोक्तास्तेजसोंशा इति स्मृताः
आस्ते शेतेऽध्वगमनं प्रसारणं निरोधनम् ११
इति पञ्च पशूनां वै वायोरंशाः प्रकीर्तिताः
लज्जा क्रोधा लोभश्च भयो क्रोधस्तथैव च १२
इति पञ्चगुणाश्चैव व्योमांश्च प्रकीर्तिताः
प्रोक्तं भूतगणास्त्वेवं गुणं त्वेषां तु पञ्चकम् १३
व्योम श्रोत्रं त्वक्च वायो स्यादक्षाग्नयप्सु जिह्विका
घ्राणो भू शब्द आकाशो वायो स्पर्शाग्निरूपकम् १४
रसोऽप्सु पृथिव्यां गन्ध एकद्वित्रिचतुश्शराः
आकाशादिषु वर्तन्ते पृथिव्या चैव पाणिकाः १५
पादोऽग्नौ वायुवाक्चैव सोपस्थौ गमनं भवेत्
पृथिव्यां वचनमादानमप्सुग्नौ गमां भवेत् १६
वायौ विसर्ग आनन्दो मनो भूमौ जले तु धीः
अहङ्कारो नलैर्यन्तु चित्ताख्यं वायुसम्भवम् १७
आत्मानुभवविज्ञेयं पञ्चभूतिक विस्तरम्
एतत्प्राकृतमुत्सृज्य शिवोऽहमिति भावयेत् १८
अथवान्यक्रमो भावो ह्यहं ब्रह्मेति कथ्यते
पञ्च शक्त्यात्मिकाशक्तिर्देवतां पञ्चमूर्तयः १९
पृथ्विया ब्रह्म अपां विष्णुरग्रे रुद्र इति स्मृतः
वायोर्महेश्वरश्चैव आकाशस्य सदाशिवः २०
सरस्वती श्रीर्भवानि तथा गौरी मनोन्मनी
पदमेकद्वयोर्मध्ये पञ्चमूर्तिः प्रकाशते २१
पीतं शुक्लं तथा रक्तं कृष्णं धूम्रं च वर्णकम्
ब्रह्मादीनां च वर्णानि भावयेन्मण्डलोपरि २२

चतुरश्रं अर्धचन्द्रं च त्रिकोणं च षडश्रकम्
सुवृत्तमिति विज्ञेयं मण्डलाकृतयः क्रमात्
ल व र य ह कारं तु ब्रह्मादीनां तु बीजकम्  २३
तद्बीज सम्भवादेव देवता योगतस्सुखः
बीजानामधिपश्चन्द्रश्चन्द्रो बिन्दुस्वरूपकः  २४
बिन्दुर्नादश्च शक्तिश्च परश्चैव परात्परम्
पञ्चज्ञानप्रदेशा हि ब्रह्मादीनां विशुद्धये  २५
अभेदलयमेरेयमेरेयमुभयात्मकम्
इदं पञ्चविधं लक्ष्यं स परानन्दसाधनम्  २६
विसूर्मिश्च विचित्रश्च विरतिश्च विपातकम्
विलक्षणं च पञ्चैते क्षणभूतं विनिर्दिशेत्  २७
निद्रासौख्यं सुतानन्दं सुरतानन्दमेव च
परं परात्परानन्दं पञ्चानन्दं विभावयेत्  २८
त्रिमात्रं च द्विमात्रं च एकमात्रं तथैव च
अर्धमात्रं परं सूक्ष्मं तस्यार्धं तु परात्परम्  २९
मात्रादैर्घ्यं भवेत्स्थूलं मात्रासूक्ष्मं महोदयम्
एतदभ्यासयोगेन सदोयमण्डितं ----  ३०
सहजज्ञानमेवं तु स्मरणं सर्वसिद्धिदम्
जन्मनीं चैव सन्मार्गो निस्सन्देहः प्रवर्तते  ३१

इति चिन्त्यशास्त्रे सहस्रग्रन्थे सन्मार्गचक्र चत्वारिंशत्पटलः

## समाधि

समाधिमधुना वक्ष्ये सर्वद्वन्द्वविवर्जितम्
ज्ञानमेव समाधिः स्यात्तत्त्वशुद्धिस्तथोच्यते  १
जाग्रत्स्वप्नसुषुप्तिश्च तत्सम्बन्धमनित्यतः
एतत्तुरीयातीतं तु आत्मनो नित्यमेव हि  २

जाग्रादि द्विविधं ज्ञेयं भवमोक्षगतं मतम्
सन्मार्गमध्यमं ज्ञेयं भवमार्गमधो भवेत् ३
तत्तु कर्मानुसारेण जाग्राद्यधोमुखं भवेत्
मुखं जाग्रमिति ज्ञेयं तस्मात्स्वप्नं हृदन्तकम् ४
हृदयादि समारभ्य नाभ्यतं तु सुषुप्तिकम्
तस्मादधस्तुरीयं तु तुर्यातीतं तु लिङ्गकम् ५
जाग्रादिस्थानमेवं हि प्रवर्तकमिहोच्यते
श्रोत्रत्वक् चक्षुजिह्वा च घ्राणं चैव तु पञ्चमम् ६
शब्दस्पर्शश्च रूपश्च रसोगन्धश्च पञ्चकम्
वाक्पाणिपादपायुश्च उपस्थं चैव पञ्चकम् ७
वचनादानगमनविसर्गानन्दपञ्चकम्
प्राणस्त्वपानो व्यानश्च उदानस्समान एव च ८
नागः कूर्मश्च कृकरो देवदत्तो धनञ्जयः
मनोबुद्धिरहङ्कारश्चित्तं क्षेत्रज्ञ एव च ९
पञ्चत्रिंशति वर्तन्ते जाग्रे तानि विनिर्दिशेत्
शब्दादि विषयादीनि प्राणादीनि मनादिकम् १०
एते चरन्ति वै स्वप्ने शेषाण्येव तु वर्जयेत्
जाग्रेद्विषयभुक्तिश्च प्रतिभा स्वप्न एव च ११
अयसोऽग्निसमायोगा वियोगेऽग्निरिवायसम्
तद्वच्चैतन्ययोगश्च वियोगकरणान्वितम्
प्राणयुक्तो मनश्चैव क्षेत्रज्ञश्च सुषुप्तिकम् १२
आत्मा प्राणस्तुरीयं तु तुर्यातीतं तु सर्वगम्
किन्तु गुह्यमिदं वक्ष्ये शृणु त्वं नन्दिकेश्वर १३
आत्मनो विषयो भोक्तुं प्रकृतिस्तस्य वर्धनम्
प्रकृत्या नियमानस्य सावस्था जाग्रदुच्यते १४
विना करणदेहानां व्यापारैरात्मनः क्वचित्

प्रवृत्तिर्मनसः स्वप्नस्तत्वभावेषु केवलम्  १५
स्व स्वद्विषय संभोगस्वेदखिन्नेयमात्मनि
मनः प्रकृतिनिश्चेष्टा सुषुप्तिर्नन्दिकेश्वर  १६
मनोव्यापारहीने तु चित्तभूतिगमागमे
तुरीयत्वं परावस्था तुरीयादि निरञ्जनम्  १७
दृष्टदर्शनदृश्यानां नष्टे यो दृष्टदर्शयोः
स्वसंवेद्यंवेद्यं परं ज्योति ज्ञप्तिरूपो महत्प्रभुः  १८
स्थूलसूक्ष्मसु सूक्ष्मं च अतिसूक्ष्मं तदाधिकम्
स्थूलं जाग्रामिति ज्ञेयं सूक्ष्मं स्वप्नमिहोच्यते  १९
सुषुप्तिस्तु सुसूक्ष्मं स्यात् अतिसूक्ष्मं तुरीयकम्
अधिकं तुरियातीतं एवं पञ्चविधं स्मृतम्  २०
स्वप्नं चैव सुषुप्तिश्च तुर्यं चाधिकमेव च
जाग्रास्थाने प्रदृश्यन्ते योगमभ्यस्यतः क्रमात्  २१
जाग्रे च दृश्यवृत्तिस्तु प्रत्याहारेण शाम्यति
धारणायां त्यजेत्स्वप्नं ध्यानेनैव सुषुप्तिकम्  २२
समाधिना तुरीयं तु तुर्यातीतं शिवेन तु
जाग्रादि पञ्चावस्थायामतीतज्ञानरूपकम्  २३
सद्गुरोरुपदेशेन स्वप्रकाशेन निश्चयः
एवं ज्ञात्वा विशेषेण समाधिं कारयेद्बुधः  २४
रूपशून्यमिति ज्ञेयं समाधिरभिधीयते
चित्तशुद्धिं स्थिरीकृत्वा शिवलक्षणमेव हि  २५
आनन्दशिवयोगस्तु शिवयोगं सदाभ्यसेत्
आनन्दो ब्रह्ममितिज्ञेयं जायते स्माच्चयमा चिरम्  २६
आनन्दाद्वर्धति तद्बा तस्मादानन्दमुच्यते
स्वरूपरहितं शून्यं न वर्णावर्णभावितम्  २७
ज्ञानादिरहितं बुद्धिश्चित्ताहङ्कारनाशनम्

भावनाशः परामुक्तिर्यत्तत्संसारनाशनम्
चिन्तया रहितं यच्च तन्नाशानमुक्तिरेव हि  २८
आनन्दान्तर्गता मुक्ताः केचिदानन्द एव हि
आनन्दो ब्रह्म एवेति शिववाक्यश्रुतिक्रमात्  ३०
आनन्दानन्द इत्युक्तं त्रैलोक्यं ज्ञानरूपकम्
योगं वक्ष्येऽन्यरूपं तु रूपयोगमरूपकम्  ३१
अरूपरूपनाशं तु रूपयोगं सुदर्शनम्
सुदर्शनस्पृशेल्लिङ्गं स्पर्शलक्षणमारभेत्  ३२
इति चिन्त्यशास्त्रे समाधिलक्षण एकचत्वारिंशत्पटलः

## समाधिराजन्

अथ वक्ष्ये विशेषेण समाधिराजमुत्तमम्
सन्ध्याकालेऽथवा काले सन्ध्यावन्दनपूर्वकम्  १
लिङ्गार्चनस्य काले तु लिङ्गार्चनमथाचरेत्
पश्चाद्योगं समभ्यस्य तत्काले योगमेव तु  २
योगिभिस्सर्वकालं स्याच्चन्द्रस्याङ्कं स्वनाशनम्
गुरोस्समीपदेशे तु वसेद्योगीसमीपतः  ३
सद्गुणोपेतशिष्येण सहितो वासमाचरेत्
सन्तानिकेन सहितो लिङ्गार्चनयुतेन च  ४
समाधिमभ्यस्यादायाद्योगी द्विविधिनाद्व्यधिकं यदिति
सहायो लिङ्गपूजां चाचार्यस्यावियोगिता  ५
शौचमाचमनं चैव प्रथमं च द्वितीयकम्
आसनं च तृतीयं च चोत्तराभिमुखस्थितिः  ६
चतुर्थं भस्मना स्नानं पञ्चमं रसभस्मकम्
षष्ठं रुद्राक्षमालाभिरुपवीतादि भूषणम्  ७

सप्तमं तु गुरुध्यानमष्टमं नाभिशोधनम्
नवमं दहनं चैव दशमं प्लावनं तथा  ८
एकादशं प्राणायामं सन्यासं द्वादशं भवेत्
मन्त्रन्यासं तु नन्दीश षडङ्गन्यासपूर्वकम्  ९
त्रयोदशं नाडिसंधानं सुषुम्ना च चतुर्दश
मूलाधारं पञ्चदशं षोडशं ब्रह्मनाडि वै  १०
अधिष्ठानं सप्तदशमष्टादशं मणिपूरकम्
एकोनविंशद्धृदयं विंशं चैव विशुद्धिकम्  ११
एकविंशच्च वा भूमिर्ज्ञानदेशमतः परम्
त्रयोविंशच्चन्द्रबिम्बं च चतुर्विंशं शिवपरम्  १२
स्थाणुलिङ्गं पञ्चविंशत् समाधिस्तदनन्तरम्
आनन्दं सप्तविंशच्च तद्भेदं च ततः शृणु  १३
पूर्वोक्तं च विना त्वस्य रत्नगर्भ शृणुष्व तत्
शिवाख्यं गुरुरूपं तु भावयेत्तु प्रयत्नतः  १४
रूपं च रूपवक्त्रं च आनन्दं गुरुरेव हि
प्रभावाद्वहते यस्तु सर्वदोषनिबर्हणम्  १५
मन्त्रध्यानं प्रकुर्वीत सदाशिववपुःस्वयम्
दद्याच्छिवमयं रूपं शिष्यो ध्यायन्समाहितः  १६
तत्तत्परतरं ज्ञेयं शिवाख्यं गुरुरूपकम्
एवं ध्यात्वा सदायोगी निश्चलेन समाहितः  १७
निवृत्तिं च प्रतिष्ठां च विद्यां शान्तिं तथैव च
शान्त्यतीतां क्रियां शक्तिं ज्ञानशक्तिं तथैव च  १८
इच्छाशक्तिं पराशक्तिं नवाधारेषु भावयेत्
आत्मतत्त्वं च विद्यां च शिवतत्त्वमनन्तरम्  १९
महेश्वरं च सादाख्यं बिन्दुं च तदनन्तरम्
नादं तु शक्ति शान्तं च क्रमादेतानि भावयेत्  २०

सरस्वतीं च गौरीं च लक्ष्मीं चैव भवानिकाम्
मनोन्मनीं च पूर्वोक्तां पश्चादेताश्च भावयेत् २१
सृष्ट्यादि सकला भूमौ अवधिं दश वारुणाः
तामसी मोहिनीत्यादि दश वा द्विकलाः स्मृताः २२
हृदि पादादिकां चैव भवेद्वायोश्चतुष्टयम्
रौरवाश्च दशान्तं च तापिन्यादि कलाः स्मरन् २३
शुद्धिकान्या व्योमकला शुद्धिश्शैवीं च भावयेत्
तत्र वामादि नवकं ध्यायेद्वै नन्दिकेश्वर २४
बिन्दुस्थाने तु जीविन्याद्याश्च षोडश भावयेत्
आज्ञास्थानेऽनया युक्ते कलाषोडशकं स्मरेत् २५
आनन्दिनी महानन्दीत्यादि सम्भावयेत्क्रमात्
चन्द्रस्थानेऽमृतता नादपष्पाश्च षोडश २६
रतिप्रीत्यादिनवकं तस्य मध्ये तु भावयेत्
मूलाधारे वसन्ताद्यास्तदूर्ध्वे बालषरामुखम् २७
ड फ पदाक्षरं चैव कराठान्तद्वादशं भवेत्
अकारादि क्षकारान्तं कर्णदेशे च पूर्ववत् २८
ह क्षवर्णद्वयं चापि तालुमूले विभावयेत्
स्वरांस्तत्रैव भ्रूमध्ये चन्द्रबिम्बे तु षोडश २९
एवं क्रमेण सञ्चिन्त्य प्रत्येकं षोडश स्वरान्
वाङ्मनोतीत मन्त्रैश्च ब्रह्मरन्ध्रं च भावयेत् ३०
मूलाधारं गुदं प्रोक्तं आधेयं परमं विदुः
हंसमन्त्रसमायुक्तं शक्तिबीज समन्वितम् ३१
प्रासादं च तदूर्ध्वे तु सञ्चिन्त्य तदनन्तरम्
अधिष्ठाने च प्रणवं नाभौ चिन्तमणिर्भवेत् ३२
मृत्युञ्जयं च हृदये शिवमन्त्रं च बिन्दुके
त्रिब्रह्मरूप ताल्वादि त्रिस्थानेषु च भावयेत् ३३

शिवबीजं तदूर्ध्वे तु शक्तिबीजं तु भावयेत्
न शिवेन विना शक्तिर्न शक्तिरहितश्शिवः ३४
स्थानं प्रति च यत्प्रोक्तं तेजोरूपं च भावयेत्
सकलीकृत्य च ध्यायेच्छिवयोगी सुनिर्मलः ३५
साधेयमेवं प्रोक्तं स्यात् ज्ञानदेशं तथोच्यते
ज्ञानदेशं तु ज्ञानाति त्रिदशैरपि दुर्लभम् ३६
नेत्रमध्ये ततश्चित्तं स्वकीयं सन्निवेशयेत्
सन्निवेश्य ततस्तिष्ठेदेकचित्तः प्रसन्नधीः ३७
ज्योतिराकारमेवं तु यावदास्ते प्रयत्नतः
तावन्निगत्य भूतात्मा देहादूर्ध्वे व्यवस्थितः ३८
पश्यते च जगत्कृत्स्नं स्वकायस्योपरि स्थितम्
सप्तलोकांश्च तत्रैव पश्यते योगचक्षुषा ३९
ज्ञानदेशस्य सार्धं तु स्थाणुलिङ्गं प्रकीर्तितम्
मूलाधारं समारभ्य ब्रह्मरन्ध्रावसानकम् ४०
समस्ततेजसां तेजः प्रदाने च प्रवीणकम्
षट्त्रिंशत्तत्त्वविज्ञानं तत्त्वनामादिकं स्वयम् ४१
अप्रमेयमसादृश्यं परं धाम महोदयम्
शान्तं तत्त्वमयं चैव तत्तत्त्वं जीवरूपकम् ४२
चिद्घनं सर्वगं सूक्ष्ममानन्दमचलं ध्रुवम्
विश्वाक्षं सर्वतो वक्त्रं सर्वाक्षं सर्व बाहुकम् ४३
सर्वस्पर्शं सर्वपादं सर्वशीर्षं सदोदयम्
सर्वज्ञानं सर्वकार्यं परं परतरं शिवम् ४४
बिन्दुस्तन्तुनिभं ज्योतिर्भावयेद्योगसत्तमः
कुण्डली जगदाधारः प्रथुनामर्धरूपिणी ४५
ज्योतिरूपान्नाद नाद नाद शक्तियुता वरः
नवकूटाक्षरेणैव ब्रह्मरन्ध्रान्तमुच्यते ४६

नीवारशूकवत्तन्वी पिङ्गरूपा तथैव च
तत्तदाधार पद्मानि सुभीत्या ब्रह्मरन्ध्रगाः ४७
अम्बुजं मुकुलं चैव तद्बोध्यामृतधारया
कलिन्दी च शिवं तत्र पूजयन्ती च कुण्डली ४८
क्रमुकादूर्ध्वदधश्चैव प्लावयन्ती च भावयेत्
कुर्यान्निपद्मचैतन्यं कर्तव्यमध योजयेत् ४९
एवं ध्यात्वा समाध्यन्तं कदा तत्रैव च चिन्तयेत्
समाधिर्वक्ष्यते सूक्ष्मो ह्याधाराधेयवर्जितम् ५०
जलान्तरगते रश्मौ ह्यणीयो दृश्यते रजः
तत्परं परमाणूनां परिमाणं प्रचक्षते ५१
रूपाणां चैव सर्वेषां परिमाण समूहकम्
एकैकं तु व्यपोह्यं तु कस्मिन् चित्तं नयेत्तदा ५२
शिवशक्त्यात्मकं सर्वं ज्ञानस्थाने लयं नयेत्
निरालम्बे मनस्तस्मिन् शैवं तेजश्च दृश्यते ५३
शिवबिम्बस्य तन्मध्ये मनोन्मीलितलोचनः
क्रमेणैवाग्रबलतः शैवज्योतिश्च दृश्यते ५४
अनाहते सुतच्छून्ये सुखितं च गतात्मनः
आद्यन्तशून्यरहितः शिवतेजः प्रकाशते ५५
प्रासादपञ्चनादेन प्लुतमुच्चारयेत्क्रमात्
ध्यातव्यं तु पराशक्त्या शान्त्यतीता प्रकाशते ५६
चक्रद्विषट्के सावर्ते नाभो दिष्वङ्गमुत्सरैः
स्थलादि क्रमशो मुक्तेष्वन्तं तस्यां मनोदयः ५७
चापल्यादि घ्नते हृद्यैः क्रमाद्दीर्घैर्निवेशितः
अन्येन विषयश्चैतत्तुल्लये लीयते शिवे ५८
द्वादशान्ते च हृदये घट्टनात्प्राणवायुना
दिनेऽन्यो भाविते योगे सर्वानन्दत्वमश्नुते ५९

आधारे वापि शक्तौ वा प्रोन्यास्मिन्नात्मनो लये
शक्त्याभीष्टस्य कंपादि क्षेपशान्तौ परस्थितः ६०
आशिरः प्राणमापूर्य ब्रह्मनाड्यवसानकम्
सविकल्पस्सदा योगात् परा शान्तिः शिवो भवेत् ६१
सूक्ष्मक्रमोत् क्रमं शान्तिमामूलात् ज्योतिरूपिणम्
ब्रह्मरन्ध्रे प्रशान्त्यन्तं ध्यायेत्तस्य शिवोदयः ६२
त्रिकुण्डलानष्टवक्त्रानारुह्योद्बोधना रुजम्
शक्तिकोशत्रयं भित्त्वा खेचरस्य तदूर्ध्वकम् ६३
महाश्रुतिगते व्योम्नि चन्द्रार्कादेर्निरम्बुदे
संयम्य चक्षुरेकाग्र्यो योगी पश्येत्स्वयं नभः ६४
शिवेकाख्य वनौषध्यागादो बद्धो मनो रसः
स्तम्भकुम्भादिसंक्षिप्तं कुर्याच्छिवसुकाञ्चनम् ६५
अध्यानं च समादाय स्थित्वा भुवि विशिष्यते
आनन्दश्च भवेद्योगी सर्वदा नन्दिकेश्वर ६६
अणिमाद्यष्टसिद्धिश्च सिद्ध्यत्येव न संशयः
आकाशगमनादीनि सर्वज्ञानसमृद्धयः ६७
भवन्ति सर्वभुवनं करामलकवद्वदेत्
योगदृष्ट्या तु सकलं पश्यते नु चराचरम् ६८
येषां वृष्टिनारानन्दं आनन्दं भवति ध्रुवम्
आनन्दलक्षणं वक्ष्ये शृणु त्वं नन्दिकेश्वरः ६९
दाराणां पुत्र संप्रोक्तं अपरं परमित्यपि
अपरं जीवितं प्रोक्तं मोहजीवितसंज्ञकम् ७०
लोकं च बीभदेवं च मोहानन्दमथोच्यते
दाराणां पुत्र पौत्रादि लब्ध्वा चानन्दनो जनः ७१
भक्ष्यभोज्यादिजनितं जीवितानन्दसंज्ञकम्
स्तुतिकीर्त्युदितानन्दं लौकीकानन्दमुच्यते ७२

सकलानां च सर्वेषां मोहानन्दस्थितं परम्
एतत्कारणरूपं तु प्रियाङ्गं लक्षणान्वितम् ७३
उत्तमं षोडशांशं स्यात् चतुर्विंशति मध्यमम्
द्वाविंशं त्वधमं ज्ञेयं शक्तिलक्षणसंयुतम् ७४
पञ्चविंशतिरानन्दमपरानन्दजं भवेत्
सर्वावयव संपूर्ण सर्वलक्षणसंयुता
सर्व शोभन संयुक्ता गुणशील समन्विता ७५
सर्वाभरण संयुक्ता सर्व गन्धानुलेपना
सुगन्ध पुष्प संयुक्ता प्रसन्नवदना सदा ७६
नाना लक्षण संयुक्ता क्षणवेदकरा परा
मोहानन्दस्य मूलं च जीविताद्याश्च लब्धवात् ७७
अपादेनन्दसंप्रतिस्सिद्धिरत्यैव चोच्यते
शब्दस्पर्शं च रूपं च रसो गन्धश्च पञ्चमः ७८
एकैक पञ्चधा ज्ञेया शब्दं पञ्चकमुच्यते
प्रियाणां गुप्तवचनं संयोग श्रवणं भवेत् ७९
गन्धश्छोद्याहतं तस्य श्रवणं च तदुद्भवम्
मितं च रागजनकं स्वात्मस्तुतिरतो भवेत् ८०
शब्दपञ्चकमेवं हि स्पर्श पञ्चकमुच्यते
प्रियाया स्पर्शनं चैव पुत्र सप्तं तथैव च ८१
सुहृदालिङ्गनं चैव गन्धवाह --- श्मितम्
यथेष्टकालशीतोष्ण स्पर्शनं चैव तु पञ्चकम् ८२
प्रियदर्शनमेवं तु प्रियां वीक्ष्या दिगम्बरम्
नृत्तादि दर्शनं चैव स्व हिरण्यादि दर्शनाम् ८३
पित्रादि दर्शनं चैव स्पर्शपञ्चकमीरितम्
भक्ष्यं भोज्यं च लेह्यं च पेर्हियं शोष्य पञ्चधा ८४
रसपञ्चकमेवं स्यात् रसकाले समुद्भवम्

मदगन्धञ्चोमञ्चामञ्च चन्दनादि सुगन्धकम्  ८५
पुष्पगन्ध सुधाघ्राण ---- पञ्चकमुच्यते
रागं वर्धति मूर्खाणां रागमुञ्चति पण्डिताः  ८६
समुपाय समोपेतं क्रीडान् सर्पैर्न दृश्यते
ज्ञानयोग समायुक्तस्तत्वादीय पञ्चगैः  ८७
पञ्चविंशतिरानन्दं अपरानन्दजं भवेत्
एवं बुध्यस्व नन्दीश परानन्दमथोच्यते  ८८
त्रिविधं तत्परानन्दं मोक्षकारणकं भवेत्
एतत्रयं परानन्द मोक्षकारणकं भवेत्  ८९
अगम श्रवणाज्ञानां गुरोस्तुतिपरं तथा
गुरो प्रियवचश्रावमुपतेश शतं तथा  ९०
एवं पञ्चकसंयुक्तं श्रवणानन्दजं भवेत्
लिङ्गस्पर्शनकं चैव भूत्यादि स्पर्शनं तथा  ९१
गुरुपादाम्बुजं दृष्ट्वा गुरोस्संस्पर्शनं तथा
ज्ञानदेशस्य संस्पर्शः स्पर्शपञ्चकमीरितम्  ९२
दर्शनं शिव लिङ्गस्य शिवयज्ञादि दर्शनम्
योगदृष्ट्यावलोकं च रूपपञ्चकसम्भवम्  ९३
गुरुप्रसादभक्ष्यादि गुरुपादाब्जजं जलम्
योगामृतरसास्वादं त्रिविधं रसमुच्यते  ९४
योगात्समुत्थितं गन्धं दिव्यगन्धमनौपमम्
ब्रह्मेन्द्रादिसुराणां च सर्वेषां जन्मकोटिभिः  ९५
अलब्धं मोक्षदं दिव्यं बोधानन्दमवाच्यकम्
कदा किञ्चिन्नकस्यापि दत्तवान् विदिशस्थिताम्  ९६
तत्स्मृत्वा जननी व्यालं परमानन्दजं परम्
एवं परात्परं ज्ञेयं वर्जनायीतभोजनम्  ९७
एतानि स्थूलसूक्ष्माणि सुसूक्ष्माणि भवन्ति वै

परात्परतं गुह्यं ग्राह्यग्राहकवर्जितम् ९८
रागारागविनिर्मुक्तं द्वैताद्वैतविवर्जितम्
चिन्त्याचिन्त्यविनिर्मुक्तं वाच्यवाचकवर्जितम् ९९
एवमानन्दसंप्राप्तौ मुक्तिरेव न संशयः
गुरुवक्त्रेण तत्सिद्धिरानन्दस्तु न संशयः १००
आनन्दं भावयेद्योगी सर्वक्लेशनिबर्हणम्
इति चिन्त्यशास्त्रे सहस्त्रग्रन्थे सादाख्यमखि समाधिराज
द्विचत्वारिंशत्पटलः

स्थूपि स्थापनम्

अथ वक्ष्ये विशेषेण मूर्तीनामष्टविधं परम्
शिखरस्तु शिला हर्म्ये इष्टिकाष्टविधं चैव १
दारुभिर्दारुहर्म्ये तु कथितः शुभमिष्यमिति
एकाद्यनेक भूमानां हर्म्याणां तु विशेषतः २
प्रासादस्याग्र ईशे च सौम्ये च वायुगोचरे
नवाष्ट सप्तकं पञ्च हस्तं वा --- मण्डपहस्तकम् ३
तद्विस्तारं समायामं चतुरश्रं समं गुरु
मण्टपं वा प्रपां वाथ षोडश स्तम्भ संयुतम् ४
चतुर्द्वारसमायुक्तं चतुस्तोरण संयुतम् ५
तरङ्ग वेष्टनं चैव वितानध्वजसमायुतम्
मुक्ता सृत् मालादिभिरलंकृत्य विशेषतः ६
मण्टपस्य त्रिभागैकं मध्यभागे तु वेदिका
वेदाङ्गुलोन्नतं वेदि उपवेदि स्युगाश्रयम् ७
शेषवेदि विशालं तु अङ्गुलं भानुमात्मकम्
भानुद्वयाङ्गुलोच्छ्रं तु दर्पणोदर सन्निभम् ८
महेश स्वग्निकुण्डानि चतुरश्राणि कल्पयेत्

एषां तत्त्वान्तर्भावात् तत्त्वविद्भिरेवं संज्ञा कृता इत्यर्थः॥

शारदायाम्॥

अग्निषोमात्मको देदो बिन्दुर्यदुभयात्मकः।

शुक्रमग्निरूपं रक्तं सोमरूपम्।

p. 57) स तदात्मकत्वाद्बिन्दुरूभयात्मक इत्यर्थः॥

तदुक्तं राघवभट्टधृतेन॥

कलाषोडशकश्चन्द्रः स्याद्द्वादशकलो रविः।

कलादशयुतो वह्निः कलाष्टत्रिंशदंशभुक्।

साम्प्रतं सम्भवन्तीह गर्भाधानस्य हेतवे।

अग्निषोमात्मकं तेन गीयते सचराचरम्।

कलांशकेन योगेन भूयाद् गर्भस्य सम्भवः॥

ब्रह्मज्ञानतन्त्रे प्रथमपटले॥

शिव उवाच॥

अस्थिमांसनखाश्चैव नाडीत्वक् चेति पञ्चमः।

पृथ्वीपञ्चगुणाः प्रोक्ता ब्रह्मज्ञानेन भाषितम्।

मलं मूत्रं तथा शुक्रं श्लेष्मा शोणितमेव च।

तोयं पञ्चगुणाः प्रोक्ता ब्रह्मज्ञानेन भाषितम्।

हासो निद्रा क्षुधा चैव भ्रान्तिरालस्यमेव च।

तेजःपञ्चगुणाः प्रोक्ता ब्रह्मज्ञानेन भाषितम्।

धारणं चालनं क्षेपः सङ्कोचः प्रसवस्तथा।

वायुपञ्चगुणाः प्रोक्ता ब्रह्मज्ञानेन भाषितम्।

कामक्रोधस्तथा लोभस्त्रपा मोहश्च पञ्चमः नमःपञ्चगुणाः प्रोक्ता ब्रह्मज्ञानेन भाषितम्॥

राघवभट्टधृतम्।

अस्थि मांसं त्वचं स्नायुरोम एवं तु पञ्चमं।

इति पञ्चविधा प्रोक्ता पृथिवी कठिनात्मिका।

लाला मूत्रं तथा शुक्रं शोणितं मज्ज पञ्चमम्।

अपां पञ्चगुणाते रुद्ररूपाः प्रकीर्त्तिताः।

क्षुधा तृष्णा भयं निद्रा आलस्यं क्षान्तिरेव च।

तृष्णात्मका गुणा एते तेजसः परिकीर्त्तिताः।

धारणं वलानं भुक्तिराकुञ्चनप्रसारणम्।

एते पञ्च गुणा वायोः क्रियारूपा व्यवस्थिताः।

रागद्वेषौ तथा लज्जा भयं मोहस्तथैव च।

व्योम्नः पञ्च गुणाः प्रोक्ताः शून्याख्ये शुषिरात्मनीति।

इति पञ्चभूतोद्भवास्थ्यादिकथनम्॥

शाक्तानन्दतरङ्गिण्याम्॥

प्राणापानसमानश्चोदानव्यानौ च वायवः।

नागः कूर्मोऽथ कृकरो देवदत्तो धनञ्जयः।

एते दशगुणाः प्रोक्ताः सर्वप्राणवशात्मनः॥

शारदातिलके॥

दक्षिणांशः स्मृतः सूर्यो वामभागो  निशाकरः।

नाडीर्दश विदुस्तासु मुख्यास्तिस्रः प्रकीर्तिताः।

p. 58) इडा वामतनोर्मध्ये सुषुम्ना पिङ्गला परे।

मध्या तास्वपि नाडी स्यादग्नीषोमस्वरूपिणी।

अत्रेडा वाममुष्काधःस्था धनुर्वक्रा वामनासापर्यन्तं गता।

एवं पिङ्गला दक्षिणाण्डाधःस्था धनुर्वक्रा दक्षिणनासान्तं गता।

पृष्ठवंशान्तर्गता सुषुम्ना इत्यर्थः।

एतदग्रे स्फुटीभविष्यति॥

तथा प्रपञ्चसारे।

ऊर्द्ध्वन्तु मरुतानुन्ना त्तस्मादपि मलद्वयी।

उभयात्मिक्यधोवृत्ता नाडी दीर्घा भवेदृजुः।

अवाङ्मुखी सा तस्याश्च भवेत् पक्षद्वये द्वयम्।

पक्षद्वये पार्श्वद्वये।

नाड्यस्ताः सन्निरुद्धा स्युः सप्तान्या नाडिका मताः।

तत्र या प्रथमा नाडी सा सुषुम्नेति कथ्यते।

या वामेडेति सा ज्ञेया दक्षिणा पिङ्गला मता॥

तथा काचिन्नाडी वहिर्वक्रा या मातुर्हृदि वध्यते।

यया स पुष्टिमायाति केदार इव कुल्यया।

मातुराहाररसजैर्धातुभिः पुष्यते क्रमात्।

क्रमवृद्धौ परं ज्योतिः कलाक्षेत्रज्ञतामियात्।

सक्षेत्रज्ञं मलं तत्तु सभूतं सगुणं पुनः।

सदोषं दूष्यसम्पन्नं जन्तुरित्यभिधीयते।

सभूतपञ्चकं सक्षेत्रज्ञमात्रसहितं तत् पूर्वोक्तमानवादिमलं जन्तुरित्युच्यते।

इत्यन्वयः।

किम्भूतं सगुणं सत्त्वादिगुणं सत्त्वादिगुणयुक्तं सदोषं वायुपित्तकफयुक्तं दूष्यसम्पन्नं सप्तधातूद्भवम्।

इति जन्तुलक्षणम्॥

फलकोषद्वयं तत्तु व्यक्तं पुंसो न तु स्त्रियाः।

नपुंसकस्य किञ्चित्तु व्यक्तिरत्रोपलक्ष्यते।

फलकोषद्वयमण्डकोषद्वयम्॥

निरुत्तरतन्त्रे प्रथमपटले॥

नाडीनां संवहो देवि  कञ्जयोनिः खगाण्डवत्।

तत्र नाड्यः समुत्पन्नाः सहस्राणां द्विसप्ततिः।

कञ्जस्य पद्मस्य योनिरूत्पत्तिस्थानं शालूकमिति यावत्।

प्रधानाः प्राणवाहिन्यो नाड्यत्रदश स्मृताः।

इडा च पिङ्गला चैव सुषुम्ना च तृतीयिका।

गान्धारी हस्तिजिह्वा च पूषा चैव यशस्विनी।

अलम्बुषा कुहुश्चैव शङ्खिनी च दश स्मृताः।

एवं नाडीमयं चक्रं विज्ञेयं शक्तिचक्रके।

p. 59) इडायाः पिङ्गलायाश्च मध्ये या सा सुषुम्निका।

इयञ्च त्रिगुणा ज्ञेया ब्रह्मविष्णुशिवात्मिका।

रजोगुणा च वज्राख्या चित्रिणी सत्त्वसंयुता।

तमोगुणा ब्रह्मनाडी कार्यभेदक्रमेण च।

तथा।

वायुर्भानुमयो ज्ञेयो मनश्चन्द्रात्मकं तथा।

प्राणोऽपानः समानश्चोदानव्यानौ च वायवः।

या वाममुष्कसम्बन्धा संश्लिष्यन्ती सुषुम्नया।

दक्षिणञ्चक्रमाश्रित्य धनुर्वक्रा हृदि स्थिता।

वामांशयन्त्रान्तरगा दक्षिणां नासिकामियात्।

तथा दक्षिणमुष्कस्था नासाया वामरन्ध्रगा।

तन्त्रान्तरे॥

षुषुम्नाकलिता याता मुष्कं दक्षिणमाश्रिता।

सङ्गता वामभागस्य यन्त्रमध्यं समाश्रिता।

दक्षिणं नासिकाद्वारं प्राप्नोति गिरिजात्मजे ।

वाममण्डमनुस्यूतामनन्या सव्यनासिकामिति।

अनयोः स्वरूपमुक्तं योगार्णवे।

इडा च शङ्खचन्द्राभा तस्या वामे व्यवस्थिता।

पिङ्गला सितरक्ताभा दक्षिणं पार्श्वमाश्रिता इति।

तन्त्रान्तरे इडायां संश्रितश्चन्द्रः पिङ्गलायां दिवाकर इति।

तास्वपि सुषुम्ना मुख्येत्यर्थः।

उक्तञ्च श्रीतत्त्वचिन्तामणौ॥

मेरोर्वाह्यप्रदेशे शशिमिहिरशिवे सव्यदक्षे निषणे मध्ये नाडी सुषुम्ना त्रितयगुणमयी चन्द्रसूर्याग्निरूपा।

अन्यत्रापि तयोः पृष्ठवंशं समाश्रित्य मध्ये सुषुम्ना स्थिता ब्रह्मरन्ध्रन्तु यावत्।

अन्यासां नामान्यपि शारदायाम्।

गाधारी हस्तिजिह्वाख्या सपूषालम्बुषा मता।

यशस्विनी शङ्खिनी च कुहुः स्युः सप्त नाडयः।

आसां स्थितिस्वरूपं योगार्णवे॥

इडापृष्ठे तु गान्धारी मयूरगलसन्निभा।

सव्यपादादिनेत्रान्ता गान्धारी परिकीर्तिता।

हस्तिजिह्वोत्पलप्रेक्षा नाडी तस्याः पुरः स्थिता।

सव्यभागस्य मूर्द्धादिपादाङ्गुष्ठान्तमाश्रिता।

पूषा तु पिङ्गलापृस्ठे नीलजीमूतसन्निभा।

याम्यभागस्य नेत्रान्ता यावत् पादतलं गता।

यशस्विनी शङ्खवर्णा पिङ्गला पूर्वदेशगा।

गान्धार्याश्च सरस्वत्या मध्यस्था शङ्खिनी मता।

p. 60) सुवर्णवर्णा पादादिवर्णान्ता सव्यभागके।

पादाङ्गुष्ठादिमूर्द्धान्तयाम्यभागे कुहुर्मता।

रावणा सरस्वती विश्वोदरी शङ्खिनी एता अपि प्रधानत्वेनोक्ताः।

उकञ्च।

ताश्च भूरितरास्तासु मुख्याः प्रोक्ताश्चतुर्दश।

सुषुम्नेडा पिङ्गला च कुहूरथ सरस्वती।

गान्धारी हस्तिजिह्वा च रावणा च यशस्विनी।

विश्वोदरी शङ्खिनी च ततः पूषा यशस्विनी।

अलम्बुषेति॥

शाक्तानन्दतरङ्गिणीधृतज्ञानभाष्ये॥

इडा च वामनासायां दक्षिणे पिङ्गला मता।

सुषुम्ना ब्रह्मरन्ध्रे च गान्धारी वामचक्षुषि।

दक्षिणे हस्तिजिह्वा च पूषा कर्णेऽथ दक्षिणे।

वामे यशस्विनी ज्ञेया मुखे चालम्बुषा मता।

कुहुश्च लिङ्गमूले स्यात् शङ्खिनी शिरसोपरि।

एवं द्वारं समाश्रित्य तिष्ठन्ति दश नाडिकाः।

क्षितिश्च वारि तेजश्च वायुराकाशमेव च।

स्थैर्यं गता इमे पञ्च वाह्याभ्यन्तर एव च॥

एवं प्रधाननाडीनिरूपणानन्तरं शाखारूपनाडी निरूपिता॥

शारदायां॥

नाड्योऽनन्ताः समुत्पन्नाः सुषुम्ना पञ्चपर्वसु।

सर्वाणि स्वाधिष्ठानमणिपूरकानाहतविशुद्धाज्ञान्तानि।

तत्राधोऽधोग्रन्थिमारभ्योर्ध्वोर्द्ध्वसर्वग्रन्थिपर्यन्तं समाप्तिः।

गणयितुमशक्यत्वादनन्ताः।

यदाहुः।

पूर्वोक्तायाः सुषुम्नाया मध्यस्थायाः सुलोचने ।

नाभिहृत्कण्ठतालूभ्रूमध्यपर्वसमुद्भवाः।

अधोमुखाः शिराः काश्चित् काश्चिदूर्द्ध्वमुखास्तथा।

परास्थिर्यग्गताः काश्चित्तत्र लक्षत्रयाधिकाः।

नाड्योऽर्द्धलक्षसंख्याताः प्रधानाः समुदीरिताः॥

तासु सर्वासु बलवान् प्राणो वायुः समन्ततः॥

विश्वसारे तु॥

नाभेः सकाशाज्जायन्ते नाड्यः क्षेत्रप्रपोषिक्ताः।

इडा तु वामभागे स्याद्दक्षिणे पिङ्गला मता।

मध्ये सुषुम्ना विज्ञेया चन्द्रसूर्यानलात्मिका।

नाड्योऽनन्ताः समुत्पन्नास्तस्याः पञ्चसु पर्वसु।

इति नाभेः सकाशादिति यदुक्तं तत्क्षेत्रपोषिका इत्यनेन रसादिचालनेन शरीरपुष्ट्यर्थं न तु ज्ञानध्यानाद्यर्थं वायुसाधनप्रकरणे एतत् स्पष्टीकरिष्ये।

p. 61) नरपतिजयचर्यास्वरोदयधृतब्रह्मब्रह्मजामलमपि शरीरपुष्ट्यर्थमे नाभौ कुण्डलिनी माह यथा महाशक्तिः कुण्डलिनी नाडीस्थाहिस्वरूपिणी।

ततो दशोर्द्धगा नाड्यो दश चाधोगतास्तथा द्वे द्वे तिर्य्यग्गते नाड्यौ चतुर्विंशतिसंख्यया।

सूक्ष्ममुख्यास्त्वतो नाड्यः सहस्राणां द्विसप्ततिः।

कुण्डलिन्यां महाशक्तौ मूलमार्गा भवन्त्यमी।

ताभ्यः सूक्ष्ममुखा नाड्यः शरीरं प्रतिपोषिकाः।

सप्त शतानि जायन्ते सप्तोत्तराणि संख्यया।

प्रधाना दश नाड्यस्तु दश वायुप्रवाहिकाः॥

योगियाज्ञवल्क्ये प्रथमध्यायेऽपि नाभिचक्रमुपक्रम्य।

कन्दमध्ये स्थिता नाडी सुषुम्नेति प्रकीर्तिता।

तिष्ठन्ति परितः सर्वाश्चक्रेऽस्मिन् नाडिकास्ततः।

नाडीनामपि सर्वासां मुख्या गार्गि  चतुर्दश॥

गार्गि इति याज्ञवल्क्यस्य स्त्रियाः सम्बोधनम्॥

इडा च पिङ्गला चैव सुषुम्ना च सरस्वती।

वारूणी चैव पूषा च हस्तिजिह्वा यशस्विनी।

विश्वोदरी कुहुश्चैव शङ्खिनी च पयस्विनी।

अलम्बुषा च गान्धारी मुख्याश्चैताश्चतुर्दश।

तासां मुख्यतमास्तिस्त्रस्तिसृष्वेकोत्तमोत्तमा।

मुक्तिमार्गे तु सा प्रोक्ता सुषुम्ना विश्वधारिणी।

कन्दस्य मध्यमे गार्गि  सुषुम्ना च प्रतिष्ठिता।

पृष्ठमध्ये तु तेनास्थ्ना सह मूर्ध्नि व्यवस्थिता।

मुक्तिमार्गे सुषुम्ना वैष्णवी स्थिता।

इडा च पिङ्गला चैव तस्याः सव्ये च दक्षिणे।

इडायां पिङ्गलायाञ्च चरतश्चन्द्रभास्करौ।

इडायां चन्द्रमा ज्ञेयः पिङ्गलायां दिवाकरः।

चन्द्रस्तामस इत्युक्तः सूर्यो राजस उच्यते।

विषभागो रवेर्भागश्चन्द्रभागोऽमृतं तथा।

तावेव तदधः सर्वं कालं रात्रिन्दिवात्मकम्॥

भोक्त्री सुषुम्ना कालस्य गुह्यमेतदुदाहृतम्।

p. 62) सरस्वती कुहुश्चैव सुषुम्ना पार्श्वयोः स्थिते।

गान्धारी हस्तिजिह्वा च इडायाः पृष्ठपूर्वयोः।

यशस्विनी च पूषा च पिङ्गला पृष्ठपूर्वयोः।

कुहुश्च हस्तिहिह्वा च मध्ये विश्वोदरी स्थिता।

यशस्विन्याः कुहोर्मध्ये वारुणी सा प्रतिष्ठिता।

पूषायाश्च सरस्वत्याः स्थिता मध्ये यशस्विनी।

गान्धार्याश्च सरस्वत्याः स्थिता मध्ये च शङ्खिनी।

अलम्बुषा च विप्रेन्द्रि  कन्दमध्यादधः स्थिता।

पूर्वभागे सुषुम्नायास्त्वामेढ्रान्तं कुहुः स्थिता।

अधश्चोर्द्ध्वश्च विज्ञेया वारुणी सर्वगामिनी।

यशस्विनी च याम्यस्य पादाङ्गुष्ठान्तमिष्यते।

पिङ्गला चोर्द्ध्वगा याम्ये नासान्तं विद्धि मे प्रिये ।

याम्ये पूषा च नेत्रान्ता पिङ्गलायाः सुपृष्ठतः।

पयस्विनी तथा गार्गि  याम्ये नेत्रान्तमिष्यते।

सरस्वती तथाचोर्द्ध्वं हस्तिजिह्वा प्रकीर्तिता।

आसव्यकर्णाद्द्विप्रेन्द्रि  शङ्खिनी चोर्द्ध्वमागता।

गाधारी सव्यन्तेत्रान्तमिडायाः सव्यतः स्थिता।

इडा च सव्यनासान्तं मध्यभागे व्यवस्थिता।

हस्तिजिह्वा तथा सव्यपादाङ्गुष्ठान्तमिष्यते।

विश्वोदरी तु सा नाडी तुन्दमध्ये व्यवस्थिता।

अलम्बुषा महाभागे  वायुमूला तथोर्द्धगा।

एतास्त्वन्याः समुत्पन्नाः शिवास्त्वन्याश्च ता अपि।

यदश्वत्थदले तद्वत् पद्मपत्रेषु चापि वा।

नाडीष्वतासु सर्वासु विज्ञातव्या तपोधने ॥

इति नाड्युत्पत्तिकथनम्।

आध्यात्मविवेके।

अस्यां शरीरं संख्या स्यात् षष्टियुक्तं शतत्रयम्।

त्रीण्येवास्थिशतान्यत्र धन्वन्तरिरभाषत।

द्वे शते त्वस्थिसन्धीनां स्यातामत्र दशोत्तरे।

पेशीस्नायुशिरासन्धिसहस्रद्वितयं मतम्।

नव स्नायुशतानि स्युः पञ्च पेशीशतान्यपि।

अधिका विंशतिः स्त्रीणां स्तनयोर्दिग्दिगीरिता।

शिराधमनिकानान्तु लक्षाणि नव विंशतिः।

सार्द्धानि स्युर्नवशती षट्पञ्चाशद्युता तथेति॥

इत्यस्थ्याद्युत्पत्तिकथनम्॥

रुद्रजामले सप्तदशपटले॥

p. 63) तिस्रः कोट्योऽर्द्धकोटी च यानि लोमानि मानुषे।

नाडीमुखानि सर्वाणि धर्मबिन्दुं क्षरन्ति च।

इति नाडीमुखस्थानकथनम्॥

इति श्रीप्राणतोषिण्यां प्रथमे सर्गकाण्डेऽन्नमयकोषात्मकमनुष्यदेहकथनं नाम चतुर्थः परिच्छेदः॥

एवं नाडीप्रभृतीनां निरूपणानन्तरं वायुप्रकरणस्यौचित्यात्तन्निरूप्यते॥

शारदातिलके॥

मूलाधारोद्गतः प्राणस्ताभिर्व्याप्नोति तत्तनुम्।

वायवोऽत्र दश प्रोक्ता वह्न्यश्च दश स्मृताः॥

ताभिर्नाडीभिः॥

तत्तनुमनुभूततनुम्॥

वायुनामानि तत्रैव।

प्राणाद्या मरुतः पञ्च नागः कूर्मो धनञ्जयः।

कृकरः स्याद्देवदत्त इति नामभिरीरिताः॥

प्राणाद्या इति प्राणापानव्यानोदानसमानाः।

यगियाज्ञवल्क्ये चतुर्थाध्यायेऽपि।

प्राणोऽपानः समानश्च उदानो व्यान एव च।

नागः कूर्मश्च कृकरो देवदत्तो धनञ्जयः।

एते नाडीषु सर्वासु चरन्ति दश वायवः।

एतेषु वायवः पञ्च मुख्याः प्राणादयः स्मृताः।

तेषु मुख्यतमावेतौ प्राणापानौ नरोत्तमे ।

प्राण एवैतयोर्मुख्यः सर्वप्राणभृतां सदा॥

एषां रूपाणि स्थानानि च योगार्णवे।

इन्द्रनीलप्रतीकाशं प्राणरूपं प्रकीर्तितम्।

आस्यनासिकयोर्मध्ये हृन्मध्यनाभिमध्यके।

प्राणालयमिति प्राहुः पादाङ्गुष्ठेऽपि केचन॥

अपानयत्यपानोऽयमाहारञ्च प्रलापितम्।

शुक्रं मूत्रं तथोत्सर्गमपानस्तेन मारुतः।

इन्द्रगोपप्रतीकाशः सन्ध्याजलदसन्निभः।

स च मेढ्रे च पायौ च उरुवङ्क्षणजानुषु॥

मेढ्रे लिङ्गे पायौ गुदे ऊरौ प्रसिद्धरूपे वङ्क्षणे उरुसन्धौ जानुनि प्रसिद्धरूपे
।

इन्द्रगोपो रक्तवर्णकीटविशेषः।

कापासियापोका इति ख्यातः।

जङ्घोदरकृकाट्याञ्च नाभिमूले च तिष्ठति॥

व्यानो व्यानशतोत्पन्नः सर्वव्याधिप्रकोपणः।

p. 64) महारजतसम्प्रेक्षो हारोपादानकारकः।

महारजतं काञ्चनम्।

हारोपादानकारक आहारग्राहक इत्यर्थः॥

स्वीयाक्षिकर्णयोर्मध्ये कट्यां वै गुल्फयोरपि।

कटिः प्रसिद्धाः।

गुल्फः पादग्रन्थिः।

घ्राणे गले स्फिगुद्देशे तिष्ठत्यत्र निरन्तरम्।

स्पन्दयत्यधरं वक्त्रं गात्रनेत्रप्रकोपणः।

उद्वेजयति चार्थानि तूदानो नाम मारुतः।

विद्युत्पावकवर्णः स्यादुत्थानासनकारकः।

पादयोर्हस्तयोश्चापि स तु सन्धिषु वर्तते॥

पीतं भक्षितमाघ्रातं रक्तापित्तकफानिलान्॥

समं नयति गात्रेषु समानी नाम मारुतः।

गोक्षीरसदृशाकारः सर्वदेहे व्यवस्थितः॥

योगियाज्ञवल्क्ये च॥

आस्यनासिकयोर्मध्ये हृन्मध्ये नाभिमध्यके।

प्राणालयमिति प्राहुः पादाङ्गुष्ठे च केचन।

अधश्चोर्द्ध्वं कुण्डलिन्याः परितः प्राणस।ंश्रयः।

अपाननिलयं केचिद् गुदमध्योरुजानुषु।

उदरे वृषणे कट्यां जङ्घे नाभौ वदन्ति हि।

गुदाधारद्वयोस्तिष्ठेन्मध्येऽपानप्रभञ्जनः।

स्थानेष्वेतेषु सततं प्रकाशयति दीपवत्।

उदानः सर्वसन्धिस्थः पादयोर्हस्तयोरपि।

समानः सर्वगात्रेषु सर्वं व्याप्य व्यवस्थितः॥

रायमुकुटस्तु॥

हृदि प्राणो गुदेऽपानः समानो नाभिदेशके।

उदानः कण्ठदेशस्थो व्यानः सर्वशरीरग इत्याह॥

उद्गारे ना इत्युक्तो नीलजीमूतसन्निभः॥

उन्मीलने स्थितः कूर्मो भिन्नाञ्जनसमप्रभः॥

कृकरः क्षुत्परश्चैव जवाकुसुमसन्निभः॥

विजृम्भणे देवदत्तः शुद्धस्फटिकसन्निभः॥

धनञ्जयस्तथा घोषे महारजतवर्णकः॥

ललाटे चोरसि स्कन्धे हृदि नाभौ त्वगस्थिषु।

नागाद्या वायवः पञ्च सहैव परिनिष्ठिताः॥

विश्वसारप्रथमपटले तु॥

प्राण आदौ हृदि स्थाने पद्मरागसमद्युतिः।

अपानो गुह्यदेशे च इन्द्रगोपसमः स्मृतः।

गोक्षीरधवलाकारः समानो नाभिदेशके।

उदानः कण्ठदेशे च धूम्रवर्णः प्रकीर्तितः।

p. 65) व्यानः सर्वेषु चाङ्गेषु ज्योतीरूपेण वर्तते॥

एतद्वचनानुसारेण पूर्वकथितरायमुकुटधृतं वचननमिति पूर्ववचनोक्तैतद्वचनोक्तरूपभेदस्त्वाम्नायादिभेदेन समाधेय इति॥

प्रपञ्चसारकारस्तु॥

धनञ्जयाख्यो देहेऽस्मिन् कुर्याद्बहुविधान् श्वसान्।

स तु लौकिकवायुत्वान्मृतञ्च न विमुञ्चतीति॥

अतव विश्वसारे।

मैथुनञ्चेच्छति यदा मैथुनञ्च तदा चरेत्।

काले धनञ्जयो वायु र्बीजं गर्भे च सञ्चयेत्।

निधायानिलमार्गे च पुनरेव प्रवेशयेदिति धनञ्जयवायुतो गर्भसञ्चार इत्युक्तम्।

अन्यैस्तु चत्वारो वायवोऽधिका उक्ता यथा।

वैरम्भणः स्थानमुख्यः प्रद्योतः प्रकृतस्तथा।

वैरम्भणादयस्तत्र सर्ववायुवशं गता इति।

नरपतिजयचर्यास्वरोदयधृतब्रह्मजामले॥

पिङ्गलेडासुषुम्नाभिर्नाडीभिस्तिसृभिर्बुधैः।

प्रकटो वयुसञ्चारो लक्ष्यते देहमध्यतः।

इडानाड्यां स्थितश्चन्द्रः पिङ्गला भानुवाहिनी।

सुषुम्ना शम्भुरूपा च शम्भुर्हंसस्वरूपकः।

हकारो निर्गमः प्रोक्तः सकारस्तु प्रवेशने।

हकारः शम्भुरूपः स्यात् सकारः शक्तिरुच्यते।

अत्र विशेषोऽग्रे वक्ष्यते।

शारदायां द्वितीयपटले॥

पिङ्गलायां स्थिता ह्रस्वा इडायां सङ्गताः परे।

सुषुम्नामध्यगा ज्ञेयाश्चत्वारो ये नपुंसकाः।

अत्र प्रकारः वामनासातो दक्षिणनासाप्रवेशप्रारम्भसमये देहवायुः कश्चित् काल मुभयत्र वहति स दक्षिणायणप्रारम्भसमयस्तदानीं ऋॡकारात्मकं ह्रस्वद्वन्द्वमुदेति।

एवं दक्षिणनासातो वामनासागमनकालेऽपि स उत्तरायणप्रारम्भकालस्तदानीं ॠॣरूपं दीर्घद्वन्द्वमुदेति।

तदुक्तं प्रयोगसारे॥

स्वरं सप्त समारभ्य चत्वारो ये नपुंसकाः।

ते सुषुम्नाश्रिते प्राणे प्रोद्यन्त्वयनसंक्रमे इति॥

जामले॥

शक्तिरूपः स्थितश्चन्द्रो वाम्नाडीप्रवाहकः।

दक्षनाडीप्रवाहे तु शम्भु रूपी दिवाकरः।

इति शरीरस्थवायुकथनम्॥

p. 66) शारदायाम्॥

अग्नयो दोषदूष्येषु संलीना दश देहेषु।

तेषां नामानि राघवभट्टधृतानि यथा॥

जृम्भको दीपकश्चैव विभ्रमो भ्रमशोभनः।

आवसथ्याहवनीयौ दक्षिणाग्निस्तथैव च।

अन्वाहार्यो गार्हपत्य इत्येते दश वह्नयः॥

भ्रमेण सह शोभन इति मध्यपदलोपिससासाश्रयणेन भ्रमशोभनश्चेति दशाग्निकथनम्॥

शारदायाम्॥

बुभुक्षा च पिपासा च प्राणस्य मनसः स्मृतौ।

शोकमोहौ शरीरस्य जरा मृत्युः षडूर्मयः॥

प्रपञ्चसारेऽपि॥

बुभुक्षा च पिपासा च शोकमोहौ जरामृती।

षडूर्मयः प्राणबुद्धिदेहधर्मेषु संस्थिता इति॥

ऊर्मीनामार्त्युत्पादकोऽवस्थाविशेषः॥

शारदायाम्॥

शुक्रात् स्नायुस्थिमज्जानस्त्वङ्मांसाश्रूणि शोणितात्।

पितुः शुक्रात् स्नाय्वादि।

शोणितान्मातुः शोणितात् त्वगादि।

षाट्कौषिकमिति प्रोक्तं सर्वदेहेषु देहिनाम्।

प्रपञ्चसारे द्वितीयपटलेऽपि॥

मज्जास्थिस्नायवः शुक्राद्रक्तात्त्वङ्मांसशोणितम्।

इति षाट्कौषिको नाम देहो भवति देहिनाम्।

वेदान्तविद्भिस्त्वपरप्रकारेण पञ्च कोषा उक्ता यथा पौर्णमास्यां
पञ्चकोषविवेकेऽष्टमप्रकरेणे विद्यानन्दस्वामिना।

पितृभुक्तान्नजाद्वीर्याज्जातोऽन्नेनैव वर्द्धते।

देहः सोऽन्नमयो नात्मा प्राक् चोर्द्ध्वं तदभावतः॥

पितृभुक्तेत्यत्रैकशेषेण मातृपितृभुक्तान्नजातादिति लभ्यते।

अन्नेन दुग्धाद्याहारेण प्राक् जन्मन इति शेषः।

मरणादूर्द्ध्वं तदभावतः देहाभावतः।

पूर्णो देहे बलं स्याद् यल्लक्षाणां यः प्रवर्तकः।

वायुः प्राणमयो नासावात्मा चैतन्यवर्जनात्।

लीना सुप्तौ वपुर्बोधे वाप्नुयादानखाग्रगा।

चिच्छायोपेतधीर्नात्मा विज्ञानमयशब्दभाक्।

भवतीति शेषः।

कर्तृत्वकरणत्वाभ्यां विक्रियेतान्तरिन्द्रियम्॥

विज्ञानमनसी अन्तर्वहिश्चैते परस्परमिति।

अत्र रामकृष्णपण्डितस्य व्याख्यानम्।

ननु मनोबुद्ध्योरन्तःकरणत्वाविशेषान्मनो-मयविज्ञानमयरूपेण नोमयविज्ञानमयरूपेण कोषद्वयकल्पना अनुपपन्नेत्याशङ्क्य कर्तृकरणत्वाभ्यां भेदसद्भावाद् घटत एव मनोमयत्वादिभेद इत्याह।

p. 67) कर्तृत्वेत्यादि अन्तरिन्द्रियमन्तःकरणं कर्तृत्वकरणत्वाभ्यां कर्तृरूपेण कर्णरूपेण च विक्रियेत विपरिणमेत इत्यर्थः।

एते कर्तृकरणे विज्ञानमनसी विज्ञानमनःशब्दवाच्ये भवतः।

एते च परस्परमन्तर्वहिर्भावेन वर्तेते।

अतः कोषद्वयत्वमुपपद्यते इत्यर्थः॥

कादिदन्तर्मुखा वृत्तिरानन्दप्रतिबिम्बभाक्।

पुण्यभोगे भोगशान्तौ निद्रारूपेण लीयते।

इदानीमानन्दमयस्यानात्मत्वं दर्शयितुं तत्स्वरूपमाह काचिदित्यादि।

पुण्यभोगे पुण्यकर्मफलानुभवकाले काचिद्धीवृत्तिरन्तर्मुखा सती
आनन्दप्रतिबिम्बभाक् आत्मस्वरूपस्यानन्दस्य प्रतिविम्बं भजते।

सैव भोगशान्तौ पुण्यकर्मफलभोगोपरमे सति निद्रारूपेण लीयते विलीना भवति।

सा वृत्तिरानन्दमय इत्यभिप्रायः।

एतेन मज्जामयोऽस्थिमयः स्नायुमयश्चर्ममयो मांसमयो रक्तमयश्चेति ये
षट्कोषास्तन्त्रविद्भिरुक्तास्ते तु वेदान्तविद्भिरन्नमयकोषान्तर्गतत्वेनैव पर्यवसिताः।

अधिकास्तु प्राणमयविज्ञानमयमनोमयानन्दमयेति चत्वार उक्ताः।

अतो दशकोषकोऽयं देह इत्यायातम्।

इति शरीरकोषविवरणम्॥

प्रपञ्चसारे॥

रसादितः क्रमात् पाकशुक्रान्तेषु तु धातुषु।

धातुषु रसादितः क्रमात् पाको भवतीत्यन्वयः।

शुक्रपाकात् स्वयं भिद्याज्जराणामष्टमी दशा।

क्षेत्रज्ञस्य तदा जन्तु केवलाश्रयमिष्यते।

यथा स्नेहः प्रदीपस्य यथाभ्रमशनित्विषः।

बहुद्वारेण कुम्भेन संवृतस्य हविर्भुजः।

यथा तेजः प्रसरति समीपालोकशक्तिमत्।

तथा देहावृतस्यापि क्षेत्रज्ञस्य महात्विषः।

इन्द्रियैः संविवर्द्धन्ते स्वं स्वमर्थग्रहं प्रति।

प्रदीपस्य प्रज्वलनसमये स्नेहस्तैलादिर्यथा प्रज्वलनार्थं शिखां प्रति प्रसरति स्वयमायाति यथा वा अशनित्विषो विद्युतो द्युतिसमयेऽभ्रं मेघो यथा व बहुच्छिद्रकुम्भावृतस्य वह्नेर्घृतभक्षणसमये समीपालोकशक्तिमन्निकटप्रकाशकशक्तियुक्तं तेजस्तथा देहावृतस्य कोषदशकाभ्यन्तरवर्तिन आत्मनः स्वं स्वं विषयग्रहणं प्रति इन्द्रियैः करणैस्तेजांसि संविवर्द्धन्ते प्रसरन्ति इत्यर्थः।

p. 68) यथा स्नेहमिति पाठे तु व्यक्त एवार्थस्तथापि व्याख्यायते।

प्रदीपस्य तेजो यथा स्नेहं विद्युतस्तेजो यथा मेघं बहुच्छिद्रपात्रावृतवह्नेर्यथा घृतं प्रति तेजः प्रसरति तथात्मनस्तेजांसि स्वं स्वं विषयग्रहणं प्रति प्रसरन्तीत्यर्थः।

संविवर्द्धन्ते इति बहुवचननिर्देशादेकदापि बहिन्द्रियैर्बह्वर्थग्रहणमिति सूचितम्।

अतव अन्तर्दृष्टिर्वहिरुपगतप्रेक्षणाच्छिन्नपाशः
प्रौढोल्लासाधिगतपरमब्रह्मनिर्विघ्नचेताः।

तत्तद्भावोदितमधुरगीः सुप्रसन्नान्तरात्मा स्मेरास्या मे भवतु सततं शाम्भवो काप्यवस्था॥

इत्यादि कुलयोगिनः प्रौढोल्लासप्रार्थना॥

अन्तर्दृष्टिर्बहिश्चक्षुरित्यादिवक्ष्यमाणकुलार्णववचनञ्च साधु सङ्गच्छते।

वैष्णवैरप्युच्यते।

पुङ्खानुपुङ्खविषये क्षणतत्परोऽपि धीरो न मुह्यति मुकुन्दपदारविन्दे।

सङ्गीतनृत्यगतितालवशं गतापि मौलिस्थकुम्भपरिरक्षणधीर्नटीव।

इत्यादि प्रत्यक्षसिद्धमपि कश्चिद् युगपद् गात्रं कण्डूयते एवं प्रेषयत्यपरं पश्यति च।

एतेन युगपदुभयविषयकज्ञानं न मन्यामह इति केषाञ्चिम्मतं प्रशस्यमप्रशस्यं वा सुधीभिर्निपुणं विभाव्य विचारणीयमित्यास्तां विस्तरः।

प्रकृतमनुसरामः।

इन्द्रियेषु पञ्चभूतस्थितिप्रकारमाहुः प्रपञ्चसारे आचार्याः॥

नभःश्रोत्रेऽनिलश्चर्मण्यग्निश्चक्षुष्यथोदकम्।

जिह्वायामवनी घ्राणे इत्थमर्थप्रवर्तनम्।

नभ आकाशं अनिलो वायुरुदकं जलमवनी पृथ्वी।

इदन्तु प्रधानतया उक्तम्।

वस्तुतस्तु प्रागुक्तपञ्चीकरणरूपेण पञ्चस्वपि पञ्च भूतानि सन्तीति पुरैवोक्तम्।

यदा पित्तं मरुन्नूनं विलीनं प्रविलापयेत्।

p. 69) धातुस्तदा क्रमाद्रक्तं लसीकां द्रावयेत् क्षणात्।

द्रुता सा तुलसीकाह्वा रोमकूपैः प्रवर्द्धते।

वहिः सर्वत्र कणशस्तथा स्वेदः प्रवर्तते।

यदा कफो मरुत्पित्तनुन्नो लीनः प्रवर्तते।

ऊर्ध्वद्रुतो द्रुतं वाष्पं प्रत्येकञ्च प्रवर्तते।

कफात्मिका तु विकृतिः कर्णशष्कुलिपूरिका।

गण्डमालादिकान् वापि कुर्याज्जन्तोस्तु कर्मजान्॥

शारदायाम्॥

इत्थं भूतस्तदा गर्भे पूर्वजन्मशुभाशुभम्।

स्मरंस्तिष्ठति दुःखात्मा छन्नदेहो जरायुणा॥

शाक्तानन्दतरङ्गिण्याम्।

नवमे मासि गर्भस्थः सर्वान् संस्मरते हृदा।

नवद्वारपुरे देही समयान् गमयेच्छनैः।

स्थितिप्रकारस्तु राघवभट्टधृते।

कृताञ्जलिर्ल्ललाटेऽसौ मातृपृष्ठमभिश्रितः।

अध्यास्ते सङ्कुचद्गात्रो गर्भे दक्षिणपार्श्वगः।

वामपार्श्वाश्रिता नाडीं क्लीवं मध्याश्रितं मतम्॥

विश्वसारे।

योनिदेशोद्भवं रन्ध्रं नाभिमूलमतः परम्।

गर्भाशयन्तु तं प्राहुः सर्वतन्त्रविदो जनाः।

कललं तत्र तिष्ठेद्वै तत्र गर्भः प्रजायते।

कर्मयोगात्मरूपेण निर्माणं विधिरादिशेत्॥

पूर्वार्जितकर्मफलं पूर्वपूर्वतरार्जितम्।

जीवः प्रवेशनं कुर्यात् पूर्वकर्मबुभुक्षया।

प्राक्तनकर्मफलं भोक्तुमिच्छया जीवोऽविद्योपाधिकः प्रवेशनं कुर्याद् गर्भ इति शेषः।

पूर्वकर्मफलं किम्भूतं पूर्वं पूर्वार्जितमित्यादि।

अयमाशयः।

कर्म त्रिविधं सञ्चितं प्रारब्धमागामि च।

तत्र सञ्चितस्य प्रायश्चित्तौषधादिना नाशः।

आगामिनश्च तपसा।

अत एव दोषप्रागभावासमकालीनदोषध्वंसवन्तः शिष्टा इति गोपीनाथतर्काचार्येण शिष्टलक्षणं कृतम्।

प्रारब्धस्य भोगं विना न गत्यन्तरमस्ति।

अतस्तत्फलभोगाय गर्भे जीवप्रवेशमाह।

उक्तञ्च प्रारब्धकर्मणां भोगादेव क्षय इति॥

शाक्तानन्दतरङ्गिण्याम्॥

सुकृतं दुष्कृतञ्चैव यत् कृतं पूर्वजन्मनि।

तत् सर्वं सकलं ज्ञात्वा ऊर्ध्वपादस्त्वधोमुखः।

गर्भे तु सम्प्रविष्टोऽसौ स्तिमिते घोरदर्शने॥

p. 70) स्तिमितेऽन्धकारे घोरदर्शने भयङ्करे।

अभ्यस्यामि शिवं ज्ञानं संसारार्णवतारणम्।

चिरयोगी ततो भूत्वा मुक्तो यास्यामि तत्पदम्।

एवं गर्भस्थितो जीवो गर्भयातनयार्दितः।

नित्यं भावयते चित्ते लब्धचैतन्यलक्षणः॥

विश्वसारे॥

इत्थम्भूतस्तदा गर्भः पूर्वजन्मशुभाशुभम्।

क्षणं तिष्ठेत् स्मरंस्तत्र निश्चेष्टो भवति ध्रुवम्।

शरीरे पञ्चाशदक्षरस्थितिं विना शब्दादिर्न निर्गन्तुमाननतः शक्तोऽतः शब्दब्रह्मप्रादुर्भावः गर्भं तेषां स्थानमुक्तम् तत्रैव।

पुरा कृतयुगे देवि।

कैलासे पर्वतोत्तमे।

त्वदीयपादयुगलं ध्यायेऽहं ध्यानयोगतः।

मम सिद्धिर्भवेत्तत्र युगान्ते कमलानने ।

परानन्दमयस्तत्र हस्तवाद्यो ममाभवत्।

तस्मिन्नेव क्षणे देवि  शब्दब्रह्मविभूषितः।

पटहश्चाभवत्तत्र ममानन्दविवृद्धये।

शब्दार्थकात्मनादेन द्रव्ययोगेन शब्यते।

पञ्चाशद्वर्णसंयुक्तं नादबिन्दुविभूषितम्।

पञ्चाशद्वर्णसंयुक्ता मातृका चक्रसंस्थिता।

षड्चक्राङ्कितमन्त्रा च मातृकान्तः शरीरिणाम्।

आधारे लिङ्गनाभौ हृदयसरजिजे तालूमूले ललाटे द्वे पत्रे षोडशारे
द्विदशदशदले द्वादशार्द्धे चतुष्के।

वासान्ते बालमध्ये डफकठसहिते कण्ठदेशे स्वरांश्च हक्षौ कोदण्डमध्ये
न्यसतु विमलधीर्न्यासकसम्पत्तिसिद्ध्यै।

देहे चतुर्दशभुवनस्थानमुक्तम् शाक्तानन्दतरङ्गिण्याम्।

पातालं भूधरा लोका आदित्यादिनवग्रहाः।

भूधरादिसप्तस्वर्गाश्च नागाश्च सर्वदेहिनाम्।

पिण्डमध्ये स्थिताः सर्वे स्थानं तेषां वदामि ते।

पादाधस्तात्तलं विद्यात्तदूर्द्ध्वं वितलन्तथा।

जानुनोः सुतलञ्चैव अतलं सन्धिरन्ध्रके।

तलातलं गुदमध्ये लिङ्गमूले रसातलम्।

पातालं कटिसन्धौ च पादादौ लक्षयेद्बुधः।

भूर्लोको नाभिदेशेच भुवोलोकस्तथा हृदि।

स्वर्लोकः कण्ठदेशे च महर्लोकश्च चक्षुषि।

जनलोकस्तदूर्द्धञ्च तपोलोको ललाटके।

p. 71) सत्यलोको महायोनौ भुवनानि चतुर्दश।

त्रिकोणे च स्थितो मेरुरूर्द्धकोणे च मन्दरः।

कैलासो दक्षिणे कोणे वामकोणे हिमालयः।

विन्ध्यो विष्णुस्तदूर्द्धे च सन्त्येते कुलपर्वताः।

अस्थिस्थाने महेशानि  जम्बुद्वीपो व्यवस्थितः।

मांसेषु च कुशद्वीपः क्रौञ्चद्वीपः शिरासु च।

शाकद्वीपः स्मृतो रक्ते प्राणिनां सर्वसन्धिषु।

तदूर्द्धं शाल्मलिद्वीपः प्लक्षश्च लोमसञ्चये।

नाभौ च पुष्करद्वीपः सागरस्तदनन्तरम्।

लवणोदस्तथा मूत्रे शुक्रे क्षीरोदसागरः।

मज्जा दधिसमुद्रश्च तदूर्द्धं घृतसागरः।

वशापः सागरः प्रोक्त इक्षुः स्यात् कटिशोणितम्।

शोणिते च सुरासिन्धुः कथिताः सप्त सागराः।

ग्रहाणां मण्डलञ्चैव शृणु वक्ष्यामि पार्वति ।

नादचक्रे स्थितः सूर्यो बिन्दुचक्रे च चन्द्रमाः।

लोचने मङ्गलः प्रोक्तो हृदि सोमसुतस्तथा।

उदरे च गुरुश्चैव शुक्रे शुक्रस्तथैव च।

नाभिस्थितोऽथ मन्दो वै मुखे राहुस्तथा स्थितः।

पादौ पाणौ च केतुश्च शरीरे तीर्थमण्डलम्।

विश्वसारे॥

शीर्षे मुखे तथा वाहौ हृदये चोदरे क्रमात्।

कटौ वस्तौ च गुह्योरुजानुजङ्घाङ्घ्रिषु स्थिताः।

मेषाद्या राशयो देहे तेषां रूपाण्यतः शृणु।

अरुणसितहरितपाटलपाण्डुविचित्राः सितेतरपिशङ्गौ।

पिङ्गलकर्वुरकमलिनारुचयो यथासंख्यम्।

हरितः श्यामलः।

सितेतरः कृष्णः।

पिशङ्गो नीलपीतमिश्रः।

कर्वुरः प्रसिद्धः।

वभ्रुः कपिलः ॥

मेषं वृषं समिथुनं कर्कटं सिंहमेव च।

कन्यां तुलां वृश्चिकञ्च धनुषं मकरं तथा।

कुम्भं मीनं न्यसेद् गात्रे ॐकाराद्यं नमोऽन्वितम्॥

अश्विनी भरणी चैव कृत्तिका रोहिणी तथा।

मृगशिरस्तथार्द्रा च पुनर्वसुरतः परम्।

पुष्याश्लेषा मघा चैव पूर्वफल्गुन्यतः परम्।

उत्तराफल्गुनी चैव हस्ता चित्रा ततः परा।

स्वाती विशाखानुराधा ज्येष्ठा मूला ततः परा।

p. 72) पूर्वाषाढा चोत्तरा च श्रवणाभिजितस्तथा।

धनिष्ठा शतभिषा चैव पूर्वभाद्रपदा तथा।

उत्तरभाद्रपदा चैव रेवत्यन्ताः समीरिताः।

मूर्ध्नि भ्रूयुगले चाक्ष्णोः कर्णयोर्नसि गण्डयोः।

ओष्ठयोर्दन्तपंक्तौ च जिह्वायां ग्रीवमूलके।

स्तनद्वन्द्वे तथा वक्षःपार्श्वयोर्नाभिदेशके।

नितम्बे च तथा पृष्ठे गुह्ये च पादयोः पुनः।

पादमेकं द्विनक्षत्रं राशीनां परिणामकृत्।

शरीरे राशिनक्षत्रकथनप्रयोजनन्तु प्रश्नकाले प्रष्टा यदङ्गे हस्तं दत्त्वा
पृच्छति तदङ्गे यो राशिः पतितः तेन वर्णादिकं ज्ञातव्यम् इत्याभिप्रायः॥

श्रीविद्याया राशिन्यासो नक्षत्रन्यासश्चानेनैवोक्त इति॥

शाक्तानन्दतरङ्गिणीघृतज्ञानभाष्ये।

शुक्रादुत्पद्यते रक्तं रक्ताद्बिन्दुसमुद्भवः।

प्राणतो वायुरुत्पन्नः कालाग्निः स्यादपानतः।

शुक्रतो नाभिरुत्पन्ना शुक्रादग्निसमुद्भवः।

अपानात् कालाग्निर्जातो नाभिस्थानस्थो वडवाग्निरूपो य आहारं पचति शुक्रसम्भूता वायुपित्तकफधातुस्था दशाग्नय इति भेदेन वह्न्युत्पत्तिर्द्विरुक्ता।

मांसतश्च मलोत्पत्तिर्मज्जा चापि ततो भवेत्।

शुक्रेणोत्पादिता जिह्वा नासिका सप्त देहिनाम्।

रक्तादुत्पद्यते नेत्रं वामञ्चैव तु दक्षिणम्।

प्राणादुत्पद्यते शून्यं घ्राणरन्ध्रद्वयं तथा॥

तत्त्वसारे षष्ठपटले॥

ईश्वर उवाच।

चन्द्रः सूर्यस्तथा वह्निः शरीरे दश नाडिकाः।

देहस्था वायवः पञ्च मनो बिन्दुस्तथैव च।

षट्चक्रं मेरुदण्डञ्च उड्डीयानं तथैव च।

जालन्धरः कामरूपः पूर्णग्रीवः श्रीहट्टकः॥

निर्वाणतन्त्रे प्रथमपटले॥

जान्तोराकारं ब्रह्माण्डं नानावर्ष्म च पार्वति ।

ब्रह्माण्डं विग्रहं प्रोक्तं स्थूलसूक्ष्मादिकं हि तत्।

मेरुपर्वतो मध्ये च देवि  सप्त कुलाचलाः।

मूलादिमस्तकान्तं हि सुमेरुर्नाम पर्वतः।

स्थितो मेरोरधोभागे व्यङ्गुलश्चोर्द्ध्वदेशतः।

भूर्लोकादि महेशानि  सप्तसर्गं क्रमेण हि।

व्यङ्गुलं सप्त पातालास्तिष्ठन्ति परमेश्वरीति।

p. 73) तत्त्वसारे॥

प्रकृतिः पुरुषो देहे ब्रह्मा विष्णुः शिवस्तथा।

नदाश्चैव समुद्राश्च भुवनानि चतुर्दश।

ब्रह्माण्डे ये गुणाः सन्ति ते तिष्ठन्ति कलेवरे।

तेषां सङ्क्षेपतः सर्वं प्रवक्ष्यामि शुचिस्मिते ।

मेरुपृष्ठे स्थितश्चन्द्रो द्विरष्टकलयान्वितः।

अहर्निशं तुषाराभां धारां वर्षत्यधोमुखः।

सुधांशुर्विविधस्त्रावी पीयूषबिन्दुरेव च।

बिन्दुरत्नस्य मध्येन देहसिद्धिः प्रजायते।

जवाकुसुमसङ्काशो वस्तिदेशे सुशोभने ।

शङ्खिनीमूलं संव्याप्य सूर्यस्तिष्ठति देहिनाम्।

द्वादशकलया सूर्यो वह्निर्दशकलात्मकः।

सर्वेषां देहिनां देहे सदा अन्नादिपाचकः।

तुषारं वर्षते चन्द्रो रविः शुष्यति सर्वदा।

संयोगेन स्थितः प्राणो वियोगे मरणं भवेत्।

ऊर्द्धं त्ववयवे रश्मिरधश्चन्द्रामृतं सदा।

अभ्यासं कामरूपस्य योगं योगविदो विदुः।

संयोगी च भवेद्योगी प्राणापानैकयोगतः।

प्राणश्चन्द्रमयः प्रोक्तोऽपानः सूर्यमयस्तथा।

अनयोः सङ्गमो मध्ये रजो रोगस्य साधनम्।

उड्डीयानं दृढं बद्धा कुर्याद्रेचकपूरकौ।

समानोदानयोर्योगः प्राणापानैकयोगतः।

कामरूपे त्रिभिर्योगं प्राणापानसमानकैः॥

नाभिशक्तिद्वयोर्मध्ये उड्डीयानः स उच्यते।

वस्तौ जालन्धरो ज्ञेयः कामरूपस्य गर्भके।

पूर्णग्रीवो भ्रुवोर्मध्ये श्रीहट्टस्तालूकोपरि॥

तथा।

नाभिमध्ये स्थितो ब्रह्मा हृदि मध्ये च केशवः।

शङ्करः शिरसि ज्ञेयस्त्रिस्थानं मुक्तिदायकम्॥

इति शरीरे तीर्थादिकथनम्॥

शाक्तानन्दतरङ्गिण्याम्॥

एतस्मिन्नन्तरे देवि  विश्वेषां गर्भसङ्कटे।

नवमे दशमे मासि प्रबलैः सूतिमारुतैः।

निःसार्यते वाण इव जन्तुश्छिद्रेण सज्वरः।

पीडार्दितः इत्यर्थः।

पातितोऽपि न जानाति मूर्च्छितोऽपि ततश्चपतिम्।

सूतिवातस्य वेगेन योनिरन्धस्य पीडनात्।

विस्मृतं सकलं ज्ञानं गर्भे यच्चिन्तितं हृदि॥

तत्र पापिनां जन्मसमये पीडाधिक्यं तदुक्तम् प्रपञ्चसारे द्वितीयपटले॥

p. 74) अथ पापकृतां शरीरभाजामुदरान्निष्क्रमितुं महान् प्रयासः।

नलिनोद्भवधीर्विचित्रवृत्ता नितरां कर्मगतिस्तु मानुषाणाम्।

नलिनोद्भवस्य ब्रह्मणः।

जायतेऽधिकसद्विग्नो जृम्भतेऽङ्गैः प्रकम्पितैः।

यात्युल्वणं निश्वसिति भीत्या रोदितुमिच्छति।

मूलाधारात् प्रथममुदितो यस्तु तारः पराख्यः पश्चात् पश्यत्यथ हृदयगो बुद्धियुङ्मध्यमाख्यम्।

वक्रे वैखर्यथ रुरुदिषोर्यस्य जन्तोः सुषुम्नाबद्धस्तस्माद्भवति पवनप्रेरितो वर्णसङ्गः।

जन्मानन्तरबालकरोदनस्याप्यव्यक्तवर्णात्मकत्वात् वर्णोत्पत्तिप्रकारं वदन्
कुण्डलिनीतः सामान्यतः सववर्णानामुत्पत्तिं दर्शितवान्।

श्रोतोमार्गस्याविभक्तत्वहेतोस्तत्रार्णानां जायते न प्रकाशः।

तावद् यावत्कण्ठमूर्द्धादिभेदो वर्णव्यक्तिस्थानसंस्था यतोऽतः।

जातोऽस्मीति यदा भावो मनोऽहङ्कारबुद्धिमान्।

जातश्चित्पूर्वको जन्तोः स्वभावः क्रमवर्द्धितः।

बध्नाति मातापित्रोस्तु ततो बन्धुषु च क्रमात्।

स पीत्वा बहुशं स्तन्यं मातरं स्तनपायिनीम्।

न रोदिति च तांवीक्ष्य तत्र स्यादितरेतरम्॥

शाक्तानन्दतरङ्गिण्यां॥

पञ्चैतान्यपि सृज्यन्ते गर्भस्थस्यैव देहिनः।

आयुः कर्म च वित्तञ्च विद्या निधनमेव च।

बालकश्च शिशुश्चैव गण्डः कैशोरकस्तथा।

अतः परन्तु युवकः प्रौढश्चैव ततः परम्।

अतिप्रौढस्तथा वृद्धस्त्वतिवृद्धस्ततः परम्।

पलितं मरणञ्चैव अवस्थाः परिकीर्त्तिताः॥

इत्येकादशावस्थाकथनम्॥

मरणानन्तरमपि तत्रैव॥

ततः स नरके याति स्वर्गे वा स्वेन कर्मणा।

देवत्वमथ मानुष्यं पशुत्वं पक्षितां तथा।

कृमित्वं स्थावरत्वञ्च जायते जन्मकर्मभिः॥

तथा।

कर्मणा जायते जन्तुः कर्मणैव प्रलीयते।

देहे विनष्टे तत्कर्म पुनर्देहं प्रपद्यते।

यथा धेनुसहस्रेषु वत्सो विन्दति मातरम्।

तथा शुभाशुभं कर्म कर्तारमनुगच्छति।

नन्वाशु विनाशिनः कथं कर्मणोऽमुत्र भोग इति सन्देहस्य निरसनाय सदृष्टान्तमुक्तम् कुलार्णवे पञ्चमखण्डे प्रथमोल्लासे॥

p. 75) इह यत् क्रियते कर्म तत्परत्रोपभुज्यते।

सिक्तमूलस्य वृक्षस्य फलं शाखासु दृश्यते इति॥

इति श्रीप्राणतोषिण्यां प्रथमकाण्डे मनुष्यजन्मकथनं नाम पञ्चमः परिच्छेदः।

प्रस्तुतं वर्णोत्पत्तिप्रकारं क्रमेण दर्शयति प्रपञ्चसारे॥

अवैशद्यान्मुखश्रोतोमार्गस्याविशदाक्षरम्।

अप्यव्यक्तं प्रलपति यदा सा कुण्डली तदा।

मूलाधारे विष्वनति सुषुम्नां वेष्टते मुहुः।

मुखश्रोत्रमार्गस्यावैषम्यादनैर्मूल्याद्धेतोर्यदा सा कुण्डली अविशदाक्षरमविस्पष्टमक्षरं यत्राव्यक्ते ध्वनाविति शेषस्तं प्रलपति अर्थात् कलभाषणादिकं करोति तदा मूलाधारे विष्वनति शब्दायते सुषुम्नाञ्च मुहुर्वेष्टते इत्यन्वयः।

कुण्डलीस्वरूपमुक्तम् शारदातिलके॥

ततश्चैतन्यरूपा सा सर्वगा विश्वरूपिणी।

शिवसन्निधिमागत्य नित्यानन्दगुणोदया॥

तिष्ठतीति परेणान्वयः।

शिवसन्निधीत्यनेन शक्तिशब्दवाच्येयमित्यायातम् अतः स्त्रीलिङ्गेन विशेषणानि।

यद्यपि शिवशक्त्योरेकात्मकत्वेनाभेदस्तथापि काल्पनिकं भेदमुरीकृत्य शिवसन्निधीत्युक्तम्॥

तदुक्तमभिनवगुप्तपादाचार्यैः॥

शक्तिश्च शक्तिमद्रूपाद्व्यक्तिरूपेण वाञ्छति।

तादात्म्यमनयोर्नित्यं वह्निदाहिकयोरिव।

गुणा नामुदयो यस्यां नित्यानन्दा चासौ गुणोदया चेति सा।

दिक्कालाद्यनवच्छिन्ना सर्वा सर्वार्थगा शुभा।

परापरविभागेन परा शक्तिरियं मता।

काचन परशक्तिः काचनापरशक्तिस्तद्विभागेनापीयं परशक्तिरेव॥

तदुक्तं भगवद्गीतायाम्।

भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च।

अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा।

अपरेयमिति त्वन्यां प्रकृतिं विद्धि मे पराम्।

जीवभूतां महावाहो  ययेदं धार्यते जगत्॥

शारदायम्॥

p. 76) योगिनां हृदयाम्भोजे नृत्यन्ती नृत्यमञ्जसा॥

अञ्जसा तत्त्वेनेत्यर्थः॥

आधारे सर्वभूतानां स्फुरन्ती विद्युदाकृतिः।

आधारे मूलाधारे भूतानां जन्तूनाम्॥

शङ्खावर्तक्रमाद्देवी सर्वमावृत्य तिष्ठति।

शङ्खमध्ये य आवर्त्तः स यथा शङ्खमावृत्य तिष्ठति तद्वदियमपि सर्वं शिवमावृत्य तिष्ठतीत्यर्थः।

कुण्डलीभूतसर्पाणामङ्गश्रियमुपेयुषी।

सर्ववेदमयी देवी सर्वमन्त्रमयी शिवा।

सर्वतत्त्वमयी साक्षात् सूक्ष्मात् सूक्ष्मतरा विभुः।

विभुः इयत्तया ज्ञातुमशक्या।

त्रिधामजननी देवी शब्दब्रह्मस्वरूपिणी।

त्रिधामेति चन्द्रसूर्याग्निरूपा।

द्विचत्वारिंशद्वर्णात्मा पञ्चाशद्वर्णरूपिणी॥

द्विचत्वारिंशदिति भूतलिपिमन्त्रमयी।

पञ्चाशदिति मातृकामयीत्यर्थः।

गुणिता सर्वगात्रेण कुण्डली परदेवता  विश्वात्मना प्रबुद्धा सा सूते
मन्त्रमयं जगत्।

सर्वगात्रेण सर्ववर्णेन गुणिता परस्परमिलिता सती मन्त्रमयं जगत् सूते
प्रकाशयतीत्यन्वयः॥

मूलाधारे सर्पवत् कुण्डलीभूता नाडी वर्तते तन्मध्यस्थायित्वादियं कुण्डली।

एकधा गुणिता शक्तिः सर्वविश्वप्रवर्तिनी।

सर्वविश्वेत्युभयोपादानात् शब्दार्थरूपोभयोत्पादिकेति सूचितम्॥

वेदादिबीजं श्रीबीजं शक्तिबीजं मनोभवम्॥

प्रासादं तुम्बुरुं पिण्डं चिन्तारत्नं गणेश्वरम्।

मार्तण्डभैरवं दौर्गं नारसिंहं वराहजम्।

वासुदेवं हयग्रीवं बीजं श्रीपुरुषोत्तमम्।

अन्यान्यपि च वीजानि तदोत्पादयति ध्रुवम्।

यदा भवति सा संविद्द्विगुणीकृतविग्रहा।

संहवर्णौ परात्मानौ शब्दार्थौ वासरक्षपे।

सृजत्येषा परा देवी तदा प्रकृतिपुरुषौ।

यद्यदन्यज्जगत्यस्मिन् युगं तत्तदजायत।

त्रिगुणीकृतसर्वाङ्गी चिद्रूपा शिवगेहिनी।

प्रसूते त्रैपुरं मन्त्रं मन्त्रं शक्तिविनायकम्।

पाशाद्यं त्र्यक्षरं मन्त्रं त्रैपुटं चण्डनायकम्।

सौरं मृत्युञ्जयं शक्तिं शाम्भवं विनतासुतम्।

p. 77) वागीशी त्र्यक्षरं मन्त्रं नीलकण्ठं विषापहम्।

मन्त्रं त्रिगुणितं देव्या लोकत्रयगुणत्रयम्।

धामत्रयं सा वेदानां त्रयं वणत्रयं शुभा।

त्रिपुष्करं स्वरान् देवी ब्रह्मादीनां त्रयं त्रयम्॥

त्रिपुष्करमिति ज्येष्ठमध्यमकनिष्ठत्वेन तीर्थत्रयम्।

स्वरानिति उदात्तानुदात्तसमाहारान्॥

वह्नेः कालत्रयं शक्तेस्त्रयं वृत्तित्रयं महत्।

नाडीत्रयं त्रिवर्गं सा यद्यदन्यत्त्रिधा मतम्॥

प्रपञ्चसारे द्वितीयपटलेऽपि॥

द्विचतुःपञ्चषट्सप्त चाष्टौ च दश एव च।

तथा द्वादशपञ्चाशद्भेदेन गुणयेत् क्रमात्।

यदा यदा त्रिगुणयेत्तदा त्रिगुणता विभुः।

शक्तिः कालाग्निनादात्मा गूढमूर्तिः प्रतीयते।

तदा तां तारमित्याहुर्व्योमात्मेति बहुश्रुताः।

तामेव शक्तिं ब्रुवते हरेत्यात्मिति चापरे।

त्रिगुणा सा त्रिदोषा सा त्रिवर्णा सा त्रयी स चा।

त्रिलोका सा त्रिमूर्तिः सा त्रिरेखा सा विशिष्यते।

एतेषां तारणात्तारः शक्तिस्तद्भूतशक्तितः।

यदा चतुर्धा गुणिता सूक्ष्मादिस्थानचारिका।

वाचिका जाग्रदादीनां करणानाञ्च सा तदा।

सा यदा पञ्चगुणिता पञ्चपञ्चविभेदिनी।

पञ्चानामक्षराणाञ्च वर्णानां मरुतां तथा।

मरुतां प्राणादीनां॥

गुणिता सा यदा षोढा कोषोमिरसभेदिनी।

तदा षड्गुणिताख्यस्य चन्द्रस्य च विभेदिनी।

यदा सा सप्तगुणिता तारहृल्लेखयोस्तथा।

भेदैरहाद्यैः शान्तान्तैर्विद्यते सप्तभिः पृथक्।

अकारश्चाप्युकारश्च मकारो बिन्दुरेव च।

नादः शक्तिश्च शान्तिश्च तारभेदाः समीरिताः।

हकारो रेफमाये च बिन्दुनादौ तथैव च।

शक्तिशान्तौ च सा प्रोक्ताः शक्तेर्भेदाश्च।

अङ्गेभ्योऽस्यान्तु सप्तभ्यः सप्तधा भिद्यते जगत्।

लोकाद्रिद्वीपपातालसिन्धुग्रहमुनीश्वरैः।

धात्वादिभिस्तथान्यैश्च सप्तसंख्याप्रभेदकैः।

यदाष्टधा सा गुणिता तदा प्रकृतिभेदिनी।

p. 78) दशधा गुणिता नाडी मर्मांशादिविभेदिनी।

द्वादशादिक्यापि यदा तदा राश्यर्कमूर्तियुक्।

मन्त्रश्च द्वादशार्णाख्यमभिधत्ते स्वरानपि।

तत्संख्यश्च तदा मन्त्रं शक्तिस्तद्गुणितात्मकम्।

पञ्चाशद्धाप्रगुणिता पञ्चाशद्वर्णभेदिनी।

पञ्चाशदंशगुणिताथ यदा भवेत् सा देवी तदात्मविनिवेशितदिव्यभावा।

सौषुम्नवर्त्मशुषिरोदितनादसङ्गात् पञ्चाशदीरयति पंक्तिश एव वर्णान्।

सुषुम्नापथरन्ध्रोद्गतध्वनेः सङ्गात् सा शक्तिः पञ्चाशतं वर्णान्
प्रेरयतीत्यर्थः॥

शारदायाम्॥

चतुःप्रकारगुणिता शाम्भवी शर्मदायिनी।

तदानीं पद्मिनीबन्धोः करोति चतुरक्षरम्।

चतुष्टयं गणेशानामात्मादीनां चतुष्टयम्।

ओजापूजादिकं पीठं धर्मादीनां चतुष्टयम्।

दलकादीन् गजान् देवि  यद्यदन्यच्चतुष्टयम्।

पञ्चधा गुणिता पत्नी शम्भोः सर्वार्थदायिनी।

त्रिपुरा पञ्चकूटं सा तस्याः पञ्चाक्षरद्वयम्।

पञ्चरत्नं महादेव्या सर्वकामफलप्रदम्।

पञ्चाक्षरं महेशस्य पञ्चवर्णं गरुत्मतः।

सम्मोहनान् पञ्च वाणान् कामान् पञ्च सुरद्रुमान्।

पञ्च प्राणादिकान् वायून् पञ्च वर्णान् महेशितुः।

मूर्तिः पञ्चकलाः पञ्च पञ्च ब्रह्म ऋचः क्रमात्।

सृजत्येषा परा शक्तिर्वेदवेदार्थरूपिणी।

षोढा सा गुणिता देवी धत्ते मन्त्रं षडक्षरम्।

षट्कूटं त्रिपुरामन्त्रं गाणपत्यं षडक्षरम्।

षडक्षरं हिमरुचेर्नारसिंहं षडक्षरम्।

ऋतून् वसन्तमुख्यान् षडामोदादीन् गुणाधिपान्।

कोषानूर्मांत्रसान् शक्तीर्डाकिन्याद्याः षडध्वनः।

यन्त्रं षङ्गुणितं शक्तेः षडाधारन्जीजनत्।

षड्विधं यज्जगत्यस्मिन् सर्वं तत् परमेश्वरी।

सप्तधा गुणिता नित्या शङ्करार्द्धशरीरिणी।

सप्तार्णं त्रिपुरामन्त्रं सप्तवर्णं विनायकम्।

सप्तकं व्याहृतीनां सा सप्तवर्णं सुदर्शनम्।

लोकान् गिरीन् सुरान् धातून् मुनीन् सप्त ग्रहान् द्विपान्।

p. 79) समिधः सप्त संख्याताः सप्त जिह्वा हविर्भुजः।

अन्यं सप्तविधं यद् यद् तत्तदस्यामजायत।

अष्टधा गुणिता शक्तिः शैवमष्टाक्षरद्वयम्।

अष्टाक्षरं हरेः शक्तेरष्टा क्षरद्वयं परम्।

भानोरष्टाक्षरं दौर्गमष्टार्णं परमात्मनः।

अष्टार्णं नीलकण्ठस्य वासुदेवात्मकं मनुम्।

यन्त्रं कामार्गलं दिव्यं देवीयन्त्रं घटार्गलम्।

गन्धाष्टकं शुभं देवीदेवानां हृदयङ्गम्।

ब्राह्म्याद्या भैरवान् सर्वान् मूर्त्तीराशा वसूनपि।

अष्टपीठं महादेव्या अष्टाष्टकसमन्वितम्।

चाष्टौ सा प्रकृतिर्विघ्नवक्रतुण्डादिकान् क्रमात्।

अणिमादिगुणानागान् वह्नेर्मूर्त्तीर्यमादिकान्।

अष्टात्मकं जगत्यन्यं सर्वं वितनुते तदा।

नवधा गुणिता नित्या सूते मन्त्रं तदात्मकम्।

नवकं शक्तितत्त्वानां तत्त्वरूपा महेश्वरी।

नवकं पीठशक्तीनां श्रृङ्गारादीन् रसान्नव।

माणिक्यादीनि रत्नानि नव वर्गयुतानि च।

नवकं प्राणदूतीनां मण्डलं नवकं शुभम्।

यद् यन्नवात्मकं लोके सर्वमस्यामुदञ्चति।

दशधा विकृता शम्भोर्भाविनी भवदुःखहा।

दशाक्षरी गणपतेस्त्वरिताया दशाक्षरम्।

त्रिपुरा दशकूटं सा त्रिपुराया दशाक्षरम्।

दशाक्षरं सरस्वत्या यक्षिण्याः सा दशाक्षरम्।

वासुदेवात्मकं मन्त्रमश्वारूढादशाक्षरम्।

नाम्ना पद्मावतीमन्त्रं वायुमन्त्रं दशाक्षरम्।

दशकं शक्तितत्त्वानां तत्त्वरूपा महेश्वरी।

नारीणां दशकं विष्णोरवतारान् दश क्रमात्।

दशकं लोकपालानां यद् यदन्यत् सृजत्यसौ।

एकादश क्रमात् संविद्गुणिता सा जगन्मयी।

रुद्रैकादशिनीमाद्यशक्तेरेकादशाक्षरम्।

एकादशाक्ऽरं वाण्या रुद्रानेकादश क्रमात्।

समुद्गिरति सर्वज्ञा गुणिता द्वादश क्रमात्।

नित्यामन्त्रं महेशाद्या वासुदेवात्मकं मनुम्।

राशीन् भानून् हरेर्मूर्तीर्यन्त्रं सद्वादशात्मकम्।

अन्यदेतादृशं सर्वं यत्तदस्यामजायत॥

p. 80) राघवभट्टधृतपदार्थादर्शे।

त्रयोदशधा गुणिता वागीश्वर्यश्वारूढामन्त्रं विश्वेदेवादिकञ्च।

चतुर्दशा गुणिता वासुदेवगोपालमन्त्रभुवनादिकम्।

पञ्चदशधा गुणिता नित्या शूलिनो मन्त्रतिथ्यादिकम्।

षोढशधा गुणिता चक्रमन्त्रस्वरकलादिकम्।

स्वरेति अकारादिविसर्गान्तम्।

सप्तदशधा गुणिता लघु पञ्चमी ताराविद्यामन्त्रादिकम्।

ऊनविंशतिधा कृष्णधरामन्त्रादिकम्।

विंशतिधा गुणिता रत्नधारोमामहेश्वरमन्त्रादिकम्।

एकविंशतिधा गुणिता बहुकनाममन्त्रयन्त्रादिकम्।

द्वाविंशतिधा गुणिता कृष्णान्नाधिपतिसुमुखीमन्त्रादिकम्।

त्रयोविंशतिधा गुणिता लघुश्यामापुरुषोत्तमहृदयङ्गममन्त्रादिकं सूते इति॥

शारदायाम्॥

चतुर्विंशतितत्त्वात्मा तदा भवति शोभना।

गायत्री सवितुः शम्भोर्गायत्री नदनात्मिका।

गायत्री विष्णुगायत्री गायत्री त्रिपुरात्मनः।

गायत्री दक्षिणामूर्तेर्गायत्री शम्भुयोषितः।

चतुर्विंशतितत्त्वानि तस्यामासन् परात्मनि।

तत्राप्यन्यदिति ज्ञेयम्॥

द्वात्रिंशद्भेदगुणिता सर्वमन्त्रमयी विभुः।

सूते मृत्युञ्जयं मन्त्रं नारसिंहं महामनुम्।

लवणाद्यं महामन्त्रं वरुणस्य महात्मनः।

हयग्रीवमनुं दौर्गं वाराहं वह्निनायकम्।

गणेशितुर्महामन्त्रं मन्त्रं सेनाधिपस्य सा।

मन्त्रं श्रीदक्षिणामूर्तेर्मालामन्त्रं मनोभुवः।

त्रिष्टुभं वनवासिन्या अघोराख्यं महामनुम्।

मन्त्रं सा देवकीसूनोर्मन्त्रं श्रीपुरुषोत्तमम्।

श्रीगोपालमनुं भूर्ममनुं तारामनुं क्रमात्।

महामन्त्रं महालक्ष्म्या मन्त्रं भूतेश्वरस्य सा।

क्षेत्रपालात्मकं मन्त्रं मन्त्रमापन्निवारकम्।

सूते मातङ्गिनीं विद्यां सिद्धिविद्यां शुभोदयाम्।

अनेन क्रमयोगेन गुणिता शिववल्लभा।

षड्विंशत्पञ्चतत्त्वानि शैवानि रचयत्यसौ।

अन्यान्मन्त्रांश्च यन्त्राणि शुभदानि प्रसूयते।

p. 81) अत्र प्रकरणे सूते अजीजनदित्यादि यदुक्तं तत् प्रकाशकत्वाभिप्रायेण प्रतीत्यभिप्रायेण वा।

अन्यथा सर्ववेदमयीत्यादि प्रागुक्तमनुपपन्नं स्यात्।

सर्वेषां मातृकारूपकुण्डल्यवयवात्मकत्वेन जन्मादि विरुद्धमिति सुधीभिः सुनिपुणेन मानसेन विवेचनीयम्।

अक्षरोत्पत्तिक्रममाहुः शारदायामाचार्याः॥

द्विचत्वारिंशता मूले गुणिता विश्वनायिकाः।

सा प्रसूते कुण्डलिनी शब्दब्रह्ममयी विभुः।

शक्तिं ततो ध्वनिस्तस्मान्नादस्तस्मान्निबोधिका।

ततोऽर्द्धेन्दुस्ततो बिन्दुस्तस्मादासीत् परा ततः॥

मूले मूलाधारे द्विचत्वारिंशता गुणिता विश्वनायिका कुण्डलिनी अनेन क्रमेण अकारादिसकारान्तां द्विचत्वारिंशदात्मिकां भूतलिपिमन्त्रात्मिकां वर्णमालिकां सूते इत्यन्वयः।

क्रममाह शक्तिमिति।

सा कुण्डलिनी शक्तिं सूते ततः शक्तेर्ध्वनिरासीदिति योजना।

ततो ध्वनेरित्यादि ज्ञेयम्।

अयञ्च क्रमः सर्वाक्षरोत्पत्तौ सैव सत्त्वप्रविष्टा रजोऽनुविद्धा सती
ध्वनिशब्दवाच्या अक्षरावस्था सैव तमोऽनुविद्धा नादशब्दवाच्या अव्यक्तावस्था
सैव तमःप्राचुर्यान्निबोधिकाशब्दवाच्या सैव
तत्त्वभयप्राचुर्यादर्द्धेन्दुशब्दवाच्या उक्तञ्च पदार्थादर्शे।

इच्छाशक्तिबलोद्धुष्टो ज्ञानशक्तिप्रदीपकः।

पुंरूपिणी च सा शक्तिः क्रियाख्या सृजति प्रभुः।

असावेव बिन्दुः स्थानान्तरगतः पराद्याख्यो भवति।

पश्यन्ती मध्यमा वाची वैखरी शब्दजन्मभूः॥

तत्र परा मूले पश्यन्ती स्वाधिष्ठाने मध्यमा हृदये वैखरी मुखे।

तदुक्तं पदार्थादर्शे॥

सुक्ष्मा कुण्डलिनी मध्ये ज्योतिर्मात्रास्वरूपिणी।

अश्रोत्रविषया तस्मादुद्गच्छत्यूर्द्ध्वगामिनी।

स्वयंप्रकाशा पश्यन्ती सुषुम्नामाश्रिता भवेत्।

सैव हृत्पङ्कजं प्राप्य मध्यमा नादरूपिणी।

p. 82) ततः सङ्कल्पमात्रा स्यादविभक्तोर्द्ध्वगामिनी।

सैवोरः कण्ठतालूस्था शिराघ्राणवदस्थिता।

जिह्वामूलोष्ठनिर्धूतसर्ववर्णपरिग्रहा।

शब्दप्रपञ्चजननी श्रोत्रग्राह्या तु वैखरी।

इच्छाज्ञानक्रियात्मासौ तेजोरूपा गुणात्मिका।

क्रमेणानेन सृजति कुण्डली वर्णमालिकाम्।

अकारादिसकारान्तां द्विचत्वारिंशदात्मिकाम्।

पञ्चाशद्वारगुणिता पञ्चाशद्वर्णमालिकाम्।

सूते तद्वर्णतो भिन्नाः कला रुद्रादिकान् क्रमात्।

कला रुद्राश्च पूर्वोक्ताः।

आदिशब्देन पञ्चाशत्कामाः कामशक्तयो गणेशास्तच्छक्तयः क्षेत्रपालाश्चोक्ताः

।

कामनामानि राघवभट्टधृतानि यथा॥

कामकामदकान्ताश्च कान्तिमान् कामगस्तथा।

कामचारश्च कामी च कामुकः कामवर्द्धनः।

रामो रमश्च रमणो रतिनाथो रतिप्रियः।

रात्रिनाथो रमाकान्तो रममाणो निशाचरः।

नन्दको नन्दनश्चैव नन्दी नन्दयिता पुनः।

पञ्चवाणो रतिसखः पुष्पधन्वा महाधनुः।

भ्रामणो भ्रमणश्चैव भ्रममाणो भ्रमोऽपरः।

भ्रान्तश्च भ्रामको भृङ्गी भ्रान्ताचारो भ्रमावहः।

मोहनो मोहको मोहो मोहवर्द्धन एव च।

मदनी मन्मथश्चैव मातङ्गी भृङ्गनायकः।

गायनी गीतिजश्चैव नर्तकः खेलकस्तथा।

उन्मत्तो मत्तकश्चैव विलासो लोभवर्द्धनः।

दाडीमीकुसुमाभश्च वामार्द्धे शक्तिसंयुतः।

सौम्या रक्ताम्बराः  सर्वे पुष्पवाणाक्षकार्मुके।

बिभ्राणाः सर्वभूषाढ्याः कामाः पञ्चाशदीरिताः॥

तच्छक्तिनामानि च तत्रैव॥

रतिः प्रीतिः कामिनी च मोहिनी कमलप्रिया।

विलासिनी कल्पलता श्यामला च शुचिस्मिता।

विस्मिताक्षी विशालाक्षी लेलिहाना दिगम्बरी।

वामा कुब्जाधरा नित्या कल्याणी मोहिनी तथा।

मदना च सुरश्रेष्ठा लापिनी मर्दिनी तथा।

कलहप्रिया तथैवकाक्षी सुमुखी नलिनी ततः।

जयिनी पालिनी चैव शिवा मुग्धा सविभ्रमा।

p. 83) चारुनेत्रा सुलोला च दीर्घजिह्वा रतिप्रिया।

लोलाक्षी श्रृङ्गिणी चैव पावना मादना तथा।

माला च हंसिनी विश्वतोमुखी नन्दिनी तथा।

रमणी च तथा कान्तिः कलकण्ठी वृकोदरी।

मेघश्यामा रुषोन्मत्ता एकपञ्चाशदीरिताः।

शक्तयः कुङ्कुमनिभाः सर्वाभरणभूषिताः।

नीलोत्परकरा ध्येयास्त्रैलोक्याकर्षणक्षमा इति॥

पञ्चाशद्गणेशास्तच्छक्तयश्च तत्रैव।

विघ्नेशो विघ्नराजश्च विनायकशिवोत्तमौ।

विघ्नहृद्विघ्नकर्ता च गणैकद्विसुदन्तकाः।

परतरं क्षेत्रं त्रिषु लोकेषु विद्यते। सत्यं सत्यं महादेवि शपथेन वदामि ते। संसारबहुलो देवि  मुक्तिमिच्छति यः पुनः। मामेव शरणं गत्वा तिष्ठेत् काश्यां स यन्त्रितः। स एव पतितो ज्ञानी स एव कुलपावनः। प्राणान्तेऽपि महादेवि  काश्या न निःसरेद्द्विजः। स एव परमो मूर्खः स एव कुलनाशनः। वृथैव मूर्खलोकेन काशीं प्राप्य त्यजेद् यदि। बहुभिर्जन्मभिः पुण्यैर्यदि काशीं लभेत् पुनः। तदा नैव त्यजेत् काशीं प्राणान्तेऽपि कदाचन। अनायासेन संसारसागरं यस्तितीर्षति। स गच्छेत् खड्ग  केनापि मम वाराणसीं पुरीम्। अन्नं दद्यादन्नपूर्णा ज्ञानं दद्यात् सरस्वती। प्राणान्ते मुक्तिदाताहं काश्यान्यं भावना किमु॥ वृन्दावनकाञ्च्यादिमाहात्म्यस्त्वत्र ग्रन्थगौरवभिया न लिखितम्। अन्वेषकैर्योगिनीतन्त्रे पूर्वखण्डे पञ्चदशपटलादिषु तदन्वेष्यमिति॥

श्रीप्राणतोषण्यां भक्तिकाण्डाभिधानं सप्तपरिच्छेदान्वितं पञ्चमकाण्डं समाप्तम्॥

षष्ठस्य ज्ञानकाण्डस्य निर्घण्टोऽत्र विधीयते। आदौ पञ्चमहायोगो यमादिस्तदनन्तरम्। षडङ्गयोगकथनं

p. 780) यमानां मुख्यकीर्त्तनम्। नियमानां तथा

मुख्यमासनं तदनन्तरम्। योगविद्या योगविघ्ना मठक्रिया

ततः परम्। प्राणायामस्य भेदश्च कुम्भकस्य ततः परम्।

प्राणायमक्रियाकालाश्चत्वारः परिकीर्त्तिताः।

श्रेष्ठमध्याधमत्वेन प्राणसिद्धेश्च लक्षणम्। श्रमोदकेन

तेनैव तनुमार्जनजं फलम्। नाडीशुद्धेश्च चिह्नानि

कुम्भसिद्धिफलं ततः। वर्जनीयानि योगे च ततः सिद्धिकराणि च।

अपथ्यपथ्ये योगस्य ततोऽवस्था मनोन्मनी। कुम्भकाः सप्तधा

भिन्ना नेत्यादि तदनन्तरम्। कर्माणि फलयुक्तानि धौत्यादीनि ततः

परम्। साधकाभ्यासजफलं तद्विघ्नकीर्त्तनं ततः।

घटावस्था तत्फलञ्च तद्विघ्नश्च ततः परम्। ततश्च

मुद्रादशकं सफलञ्च निरूपितम्।

एतदाद्यपरिच्छेदसमापनमतः परम्। पृथ्व्यादिधारणं तस्य

फलं ध्यानं ततः परम्।

समाधिस्तस्यापि फलं प्राणायामफलान्तरम्। तिथिभेदे

वामदक्षनासावायुगतिक्रमः। विपरीतगतेर्दोषो निर्गमे

चोपवेशने। वायोः कर्मविशेषे तु फलञ्च वामदक्षयोः।

वायोः कर्मविशेषेऽपि फलं प्रश्ने च दिक्स्थितेः। फलं

पूर्णशून्यभेदाद्गतिर्नाड्यास्तथैव च। अङ्गभेदे कार्यभेदे

पञ्चभूतादयस्ततः। तेषां शुभाशुभे चैव तत्कालस्य
निरूपणम्। भूतज्ञानं तदवस्थाः पञ्च बाल्यादिभेदतः।
तत्फलञ्च वारभेदे वामदक्षफलं ततः। दिग्गतिर्धमनी
वायौ स्वस्वनाडीफलं ततः। विपरीते वैपरीत्यं फलस्य
तदनन्तरम्। वृहन्नाडीपदे यात्रा शुभदा वातवेदतः।
यात्रापदानि च वहन्नाडीहस्तस्य मार्जनम्। तत्फलं
पूर्णरिक्ताङ्गभेदे कर्मनिरूपणम्। वामनासाश्रितं कर्म
दक्षनासाश्रितं तथा॥ सुषुम्नाश्रितकार्याणि
भूतरूपादिवेदनम्। भूतगतिः पञ्चभूतभेदे कार्यस्य
निर्णयः। प्रश्नस्य निर्णयो भूतैः शुभाशुभनिरूपणम्।
मूलादि चिन्ताविज्ञानं भूतैस्तात्कालिकी तथा। अवस्थेन्दोः

p. 781) सिद्धिकालः पृथ्व्यवस्थानिरूपणम्।
तत्त्वैर्नक्षत्रविज्ञानं निसर्गगतिनिर्णयः। गमनाद्यैर्गतेर्भेदो
वायोस्तत् न्यूनकारणाम्। फलञ्च तद्वदूर्द्ध्वादौ श्वासभेदे
जयाजयौ। तत्त्वेनास्त्रस्य घटनं तत्त्वैर्युद्धे जयादिकम्।
प्रवेशकाले लाभादिर्हानिर्निःसरणे तथा। शून्ये न
घातनिर्णातिर्भूतेन स्थाननिर्णयः। जयादिनिर्णयश्चैव
वशीकरणमेव च। गर्भज्ञानं वत्सरस्य शुभाशुभफलं
ततः। निदानादिपरिज्ञानं रोगस्य निर्णयस्ततः।

मृत्युजीवनविज्ञानं कालज्ञानं ततः परम्।

वर्षत्रयादिविज्ञानं जीवनस्य स्वकस्य च।

अरुन्धत्यादिविज्ञानमायुर्वृद्धिक्रिया ततः।

स्वरज्ञानप्रशंसेति परिच्छेदद्वितीयकम्॥ राजयोगप्रशंसा च

तद्भेदस्तिथिसंख्यकः। भेदानां लक्षणञ्चैव लक्षयोगस्ततः

परम्। तस्य पञ्चविधो भेदो राजयोगस्य लक्षणम्। हटयोगश्च

द्विविधो ज्ञानयोगस्तदन्तरम्। वाह्यलक्षं

तत्फलञ्चाकाशपञ्चकलक्षणम्।

षोडशाधारनिर्णीतिरष्टाङ्गविवृतिस्ततः।

पिण्डब्रह्माण्डयोरैक्यं पिण्डमध्ये जगत्स्थितिः।

राजयोगसिद्धिफलं पद्मसङ्केतमद्भुतम्।

अव्यक्तादेर्गुणाश्चैव योगादेशस्ततः परम्। योगाधिकारी योगस्य

सिद्धिकारणमेव च। योगभेदान्मन्त्रयोगो लययोगस्य विस्तृतिः।

कालपुरुषविज्ञानं तत्फलं तदनन्तरम्। रसनासाधनं तस्य

फलं नानाविधं ततः। परिच्छेदतृतीयस्य समाप्तिकीर्त्तनं

ततः। स्थूलसूक्ष्मक्रमेणैव ब्रह्माण्डस्य निरूपणम्।

सर्वदेवाश्रयो मेरुः सत्यलोकस्तदूर्द्धतः। अधो रसातलं तस्य

भुवनान्येवमेव च। आधारपद्मविस्तारः स्वाधिष्ठानस्य

वर्णनम्। तत्र वैकुण्ठगोलोकवर्णनं तदनन्तरम्।

मणिपूरवर्णनञ्चानाहतस्य च वर्णनम्। विशुद्धवर्णनं

तस्मादाज्ञाख्यवर्णनं ततः। सहस्रारवर्णनञ्चाधो वक्रे
गुरुदेवयोः। स्थितिवीजञ्च षट्चक्रप्रकारान्तरवर्णनम्।

p. 782) परिच्छेदचतुर्थस्य समापनमिति स्मृतम्॥ ज्ञानप्रकारं
ज्ञानस्य द्वैविध्यं द्वैतवर्जितम्। ज्ञानं
तत्फलनिर्देशोऽद्वैतज्ञानाकृतिस्ततः। तत्त्वज्ञानं
तत्प्रशंसात्मनः साक्षित्वनिर्णयः। रथित्वञ्च रथादित्वं
शरीरादेस्ततः परम्। भोक्तृमुक्तत्वनिर्णीतिरुत्तमादिनिरूपणम्।
ब्रह्मज्ञस्य ध्यानपूजाद्यभावस्तदनन्तरम्। आत्मनिरूपणं
ज्ञानं त्रिविधं ज्ञानकारणम्। निर्वाणसाधकं कर्म
शिववीजनिरूपणम्। पाशनिरूपणं जीवात्माभेददर्शनं
ततः। आत्मनो जन्ममरणाद्यभावदर्शनं पुनः।
पिण्डपदादिनिर्णीतिस्तत्र श्रवणजं फलम्। विद्यातत्त्वं
ब्रह्मविद्या प्रशंसार्जितपुण्यतः। ब्रह्मज्ञानं
परमात्मनिर्णयस्तदनन्तरम्। भिक्षुनिष्ठैव सा विद्या ब्रह्मणो
जगदुद्भवः। ब्रह्मज्ञानप्राप्तिफलं
ब्रह्ममन्त्रप्रशंसनम्। ब्रह्ममन्त्रोद्धृतिर्मन्त्रार्थचैतन्ये
तदर्चना। ब्रह्मस्तोत्रं तत्कवचं तन्नैवेद्यफलं ततः।
तदर्चकप्रशंसा च तन्मन्त्रस्य पुरस्क्रिया। अन्यान्यपि च वेद्यानि
यथास्थानं मनीषिभिः। परिच्छेदपञ्चमस्य समापनमिति

स्मृतम्। मात्रादिचक्रविंशञ्च बालादिचक्रमध्यगम्। तस्य
व्याख्यानमेतद्धि षष्ठच्छेदसमापनम्। सर्वतोभद्रचक्रञ्च
तद्याख्या प्रक्रियायुता। चक्रं शतपदं तस्मात् तद्याख्या
तदनन्तरम्। प्रश्नप्रवचने वाणी प्रणामो मन्त्र एव च।
प्रश्नस्य कथने तस्य सङ्केतस्तदनन्तरम्। प्रस्तारचक्रं तस्यापि
व्याख्यानं तदनन्तरम्। परिच्छेदसप्तमस्य समापनमिदं
कृतम्। यथास्थानमन्यदपि ज्ञेयं धीमद्भिरत्र तु॥
इदं विस्तृतसप्तभिर्ज्ञानकाण्डं परिच्छेदरूपैः प्रसूनैः
सुरम्यम्। बुधालोकतां गन्धमुग्धोऽनुवारं फलं किन्तु
गुर्वास्यलभ्यं नु विविद्धि। क्षमध्वं पण्डिता दोषं
परपिण्डोपजीविनः। ममाशुधादिकं सर्वं शोध्यं
युष्माभिरुत्तमः॥ आदेष्टृसत्वरतया पुनरीक्षितुं
नैतच्छक्यमुत्तमवचो रचितं ममेदम्। विज्ञापयानि सततं
p. 783) परिविक्ष्य सर्वं घोरा भवद्भिरतिसूक्ष्मधिया
विशोध्यम्॥

रुद्रजामले उत्तरखण्डे षड्विंशत्पटले। यथा॥

श्री-आनन्दभैरव्युवाच॥

त्रिगुणज्ञानविकलो न पश्यति दिवानिशम्। दिवा रात्रौ ज्ञानहेतौ न पश्यति कलेवरम्। इति कृत्या हि मरणं नृणां जन्मनि जन्मनि। तज्जन्मक्षयहेतोश्च मम योगं समभ्यसेत्।

पञ्चामरामहायोगं कृत्वा स्यादमरो नरः। तत् प्रकारं शृणु प्राणवल्लभ  प्रियदर्शन । तव भावेन कथये न कुत्रवद शङ्कर । यदि नो कस्य निकटे कथ्यते योगसाधनम्। विघ्ना घोरा वसन्त्ये व गात्रे योगादिकं कथम्।

योगयोगाद्भवेन्मोक्षस्तत्प्रकाशाद्धि नाशनम्। अतो न दर्शयेद् योगं यदीच्छेदात्मनो हितम्। कृत्वा पञ्चामरायोगं प्रत्यहं भक्तिसंयुतः। पठेत् श्रीकुण्डलीदेवीसहस्रनाम चाष्टकम्। महायोगी भवेन्नाथ  श्वासेन नात्र संशयः।

पञ्चामरायोगविद्या सर्वविद्याप्रकाशिनी कृत्वा पञ्चामरासिद्धिं ततोऽष्टाङ्गादिधारणा। आदौ पञ्चामरासिद्धिस्ततोऽल्पयोगसाधनम्। तत्प्रकारं प्रवक्ष्यामि सावधानावधारय। अहं जानामि संसारे केवलं योगपण्डिता । तत्साक्षिणी ह्यहं नाथ  भक्तानामुदयाय च। इदानीं कथये तेऽहममरायोगसाधनम्। एवं कृत्वा नित्यरूपी योगानामङ्कुरायते। योगकालेन पुरुषः सिद्धिमाप्नोति निश्चितम्। पञ्चामराविधानानि क्रमेण शृणु शङ्कर । नेतीयोगं हि सिद्धानां महाकफविनाशनम्। दन्तीयोगं प्रवक्ष्यामि

हृदयग्रन्थिभेदनम्। धौतीयोगं ततः पश्चात् सर्वं

मलविनाशनम्। नेतीयोगं हि परमं सर्वाङ्गोदरचालनम्।

क्षालनं परमं योगं नाडीनां क्षालनं स्मृतम्। एवं

पञ्चामरायोगं यमिनामतिगोचरम्। यमनियमकाले तु

पञ्चामराक्रियां यजेत्। अमरासाधनादेव अमरत्वं

p. 784) भवेद्ध्रुवम्। एतत्करणकाले च तथा पञ्चामराशनम्।

पञ्चामराभक्षणेन अमरो योगसिद्धिभाक्। तानि द्रव्याणि

वक्ष्यामि तवाग्रे परमेश्वर । येन हीना न सिध्यन्ति

कल्पकोटिशतेन च। एका तु अमरा दूर्वा तस्या ग्रन्थिं समानयेत्।

अन्या तु विजयादेवी सिद्धिरूपा सरस्वती। अन्या तु विल्वपत्रस्था

शिवसन्तोषकारिणी। अन्य तु योगसिद्धार्थे निर्गुणी चामरा मता।

अन्या तु कालतुलसी श्रीविष्णोः प्रियतोषणी। एताः पञ्चामरा

ज्ञेया योगसाधनकर्मणि। एतासां द्विगुणं ग्राह्यं

विजयापत्रमुत्तमम्। ब्राह्मणी क्षत्रिया वैश्या शूद्रा सर्वत्र

पूजिता। एतद्द्रव्याणि संगृह्य भक्षयेच्चूर्णमुत्तमम्।

तच्चूर्णभक्षसमये एतन्मन्त्रादिपञ्चकम्। पठित्वा भक्षणं

कृत्वा नरो मुच्येत सङ्कटात्। ॐ हरे अमरपुष्टे

त्वममृतोद्भवसम्भवे । अमरं मां सदा भद्रे  कुरुष्व

त्वं हरप्रिये । ॐ दूर्वायै स्वाहा। इति दूर्वायाः॥

पुनर्विजयामन्त्रेण शोधयेत् सर्वकन्यकाः॥ ओं संविदे ब्रह्म
इत्यादि॥ ओं ब्राह्मण्यै नमः स्वाहा॥ ओं सिद्धिमूलकरे
देवीत्यादि। अर्द्धं राजपुत्त्रवशङ्करि राजकन्ये त्रिशूलिनि।
ऐँक्षत्त्रियायै नमः स्वाहा। ओं अज्ञानेन्धनेत्यादि। ह्रीं
वैश्यायै नमः स्वाहा। ओं नमस्यामीत्यादि। श्रीं शूद्रायै
नमः स्वाहा। ओं कायसिद्धिकरे देवि विल्वपत्रनिवासिनि ।
अमरत्वं सदा देहि शिवतुल्यं कुरुष्व माम्। ओं शिवदायै नमः
स्वाहा। ओं निर्गुण्डि परमेशानि योगानामधिदेवते ।
सा मां रक्षतु अमरे भावसिद्धिप्रदे नमः। ओं शोकापहायै
नमः स्वाहा। ओं विष्णोः प्रिये महामाये कालज्वालनिवासिनि ।
तुलसि मां सदा रक्ष मामेकममरं कुरु। ओं ह्रीं श्रीं ऐं
ह्रीं अमरायै नमः स्वाहा। पुनरेकत्र आहृत्य सर्वासां
शोधनं चरेत्। ओं अमृते अमृतोद्भवे इत्यादि। धेनुमुद्रां

p. 785) योनिमुद्रां मत्स्यमुद्रां प्रदर्शयेत्।
तत्त्वमुद्राक्रमेणैव तर्पणं कारयेद्बुधः। अमन्त्रकं
सप्तवारं गुरुनाम्ना शिरेऽर्पयेत्। सप्तवारमिष्टदेव्या नाम्ना
मूर्ध्नि प्रदापयेत्। ततस्तर्पणमाकुर्यात् तर्पयामि नमो नमः।
एतद्वाक्यस्य पूर्वे तु इष्टमन्त्रं समुच्चरेत्। परदेवतां
समुद्धृत्य सर्वाद्यप्रणवं स्मृतम्। ततो मुखे प्रजुहुयात्

कुण्डानां नामपूर्वकम्। ओं वद वदेत्यादि
सर्वसत्त्ववशङ्करि। शत्रुकण्ठत्रिशूलिनि  स्वाहा। एतदुक्त्वा
आश्रमौ च वशी साधकसत्तमः। पञ्चामरारसानन्दः
कुलाचारविधिप्रियः। स्थिरचेता भवेद् योगो यदि पञ्चामरागतः।

दत्तात्रेयसंहितायां प्रथमाध्याये॥ यमश्च
नियमश्चैव आसनञ्च ततः परम्। प्राणायामश्चतुर्थः स्यात्
प्रत्याहारश्च पञ्चमः। षष्ठी तु धारणा प्रोक्ता ध्यानं
सप्तममुच्यते। समाधिरष्टमः प्रोक्तः सर्वपुण्यफलप्रदः।
एवमष्टाङ्गयोगञ्च याज्ञवल्क्यादयो विदुः। कलसाद्यास्तथा
सिद्धा हटं कुर्युस्तथा यथा॥ निरुत्तरतन्त्रे चतुर्थपटले॥
आसनं प्राणसंरोधः प्रत्याहारश्च धारणा।
ध्यानं समाधिरेतानि योगाङ्गानि वदन्ति षट्।
प्राणायामद्विषट्केन प्रत्याहारः प्रकीर्त्तितः।
प्रत्याहारद्विषट्केन जायते धारणा शुभा।
धारणाद्वादशप्रोक्तं ध्यानं ध्यानविशारदैः।
ध्यानद्वादशकैरेव समाधिरभिधीयते। यत् समाधौ परं
ज्योतिरुत्तरं विश्वतोमुखम्। तस्मिन् दृष्टे क्रिया काचिद् यातायातं
न विद्यते॥ दत्तात्रेयसंहितायाम्। यमा ये दश सम्प्रोक्ता
ऋषिभिस्तत्त्वदर्शिभिः। लघ्वाहारस्तु तेष्वेको मुख्यो भवति नापरे।

अहिंसा नियमेष्वेको मुख्यो भवति नापरे। चतुरशीतिलक्षेषु त्वासनेषूत्तमं शृणु। आदिनाथेन सम्प्रोक्तं पद्मासनमिहोच्यते। उत्तानौ चरणौ कृत्वा ऊरुसंस्थौ प्रयत्नतः ।

p. 786) ऊरुमध्ये तथोत्तानौ पाणी कृत्वा ततो दृशौ। नासाग्रे विन्यसेद्वक्त्रं दन्तमूलञ्च जिह्वया। उत्तोल्य चिवुकं वक्षः संस्थाप्य पवनं शनैः। यथाशक्त्या समाकृष्य पूरयेदुदरं शनैः। यथाशक्त्या समाकृष्य धारयेदुदरं शनैः। यथाशक्त्या ततः पश्चाद्रेचयेदुदरं शनैः। इदं पद्मासनं प्रोक्तं सर्वव्याधिविनाशनम्॥ ग्रहजामले त्रयोदशपटले॥ ऊर्वोरुपरि मेढ्रान्ते उभे पादतले तथा। पद्मासनं भवेदेतत् सर्वपापप्रणाशनम्। तथा। युवावस्थोऽपि वृद्धोऽपि व्याधितो वा शनैः शनैः। अभ्यासात् सिद्धिमाप्नोति योगे सर्वस्य तन्त्रता। ब्राह्मणः श्रमणो वापि वृद्धो वाप्यहितोऽपि वा। कापालिको वा चार्वाकः श्रद्धया सहितः सुधीः। योगाभ्यासरतो नित्यं सर्वसिद्धिमवाप्नुयात्। क्रियायुक्तः स सिद्धः स्यादक्रियस्य कथं भवेत्। शास्त्रस्य पाठमात्रेण कथं सिद्धिः प्रजायते। मुण्डो वा दण्डधारी वा काषायवसनोऽपि वा। नारायणवदो वापि जटिलो भस्मलेपनः। नमः शिवायवादी वा ब्रह्मर्चापूजकोऽपि वा।

स्थानद्वादशपूज्यो वा बहुवत्सलभाषितः। क्रियाहीनोऽथवा क्रूरः कथं सिद्धिमवाप्नुयात्। न वेशधारणं सिद्धेः कारणं न च तत्तथा। क्रियैव कारणं सिद्धेः सत्यमेतत्तु साङ्कृते। शिश्नोदरार्थं योगस्य कथं वा वेशधारिणः। अन्नपानविहीनास्तु वञ्चयन्ति जनान् किल। उच्चावचैर्विप्रलम्भैर्यजन्ते कृशमानवाः। योगिनी वयमित्येवं मुखभोगपरायणाः। शनैस्तथाविधानज्ञान् योगाभ्यासविवर्जितान्। कृतार्थान् वचनैरेव वर्जयेद्वेशधारिणः। एते चाविष्टभूताः स्युर्योगाभ्यासस्य सर्वदा। वर्जयेत्तान् प्रयत्नेन न ईदृशी सिद्धिदा क्रिया। प्रथमाभ्यासकालेषु प्रवेशस्य सदा मुने । आलस्यं प्रथमो विघ्नो द्वितीयस्तु प्रकथ्यते। पूर्वोक्तधूर्त्तगोष्ठी च तृतीयो मन्त्रसाधनम्।

p. 787) चतुर्थो धातुवादश्च पञ्चमः पापवादकः। एवं बहुविधा विघ्ना मृगतृष्णासमा मुखे। स्थिरा मनसि जायन्ते तास्तु ज्ञात्वा त्यजेत् सुधीः। तथा। सुशोभनं मठं कुर्यात् सूक्ष्मद्वारन्तु निर्व्रणम्। सुष्ठु लिप्तं गोमयेन सुधया वा प्रयत्नतः। दिने दिने सुसंमृष्टं सम्मार्जन्याप्यतन्द्रितैः। वासितञ्च सुगन्धेन धूपितं गुग्गुलादिभिः॥ ग्रहजामले द्वादशपटले॥

ईश्वर उवाच॥

हटविद्या परा गोप्या योगिनां सिद्धिमिच्छताम्। देवी वीर्यवती गुप्ता निर्वीर्या च प्रकाशिता। सुवाह्ये धार्मिके देशे सुभिक्षे निरुपद्रवे। एकान्तं मठमध्ये च स्थातव्यं हटयोगिनाम्। स्वल्पद्वारमरन्ध्रगर्त्तपिटकं नात्युच्चनीचायतं सम्यग्गोमयसान्द्रलिप्तममलं निःशेषवाह्योज्झितम्। वाह्ये मण्डपकूपवेदिरचितं प्राकारसंवेष्टितं प्रोक्तं योगमठस्य लक्षणमिदं संसारनिस्तारिणि ॥ एवंविधमठे स्थित्वा सर्वचिन्ताविवर्जितः। गुरुपदिष्टमार्गेण हटयोगं समभ्यसेत्॥ दत्तात्रेयसंहितायाम्॥

मलमूत्रादिभिर्दोषैरष्टादशभिरेव च। वर्जितो दारसम्बन्धं वस्त्रं वाऽजिनमेव च। नान्यत्रास्तरणासीनः परशङ्काविवर्जितः। तस्मिन् शस्तं समास्तीर्य आसनं विष्टरादिकम्। तत्रोपविश्य भेधावी पद्मासनसमन्वितः। समकायः प्राञ्जलिश्च प्रणम्य चेष्टदेवताम्। ततो दक्षिणहस्तस्याप्यङ्गष्ठेन तु पिङ्गलाम्। निरुध्य पूरयेद्वायुमिडया तु शनैः शनैः। यथाशक्त्या निरोधेन ततः कुर्याच्च कुम्भकम्। ततस्त्यजेत् पिङ्गलया शनैरेव न वेगतः।

पुनः पिङ्गलयाकृष्।य पूरयेदुदरं शनैः। धारयित्वा
यथाशक्ति रेचयेन्मारुतं शनैः। यया त्यजेत्तयापूर्य
धारयेदविरोधतः। एवं प्रातः समासीनः
कुर्याद्विंशतिकुम्भकान्। कुम्भकः सहितो नाम
सर्वग्रहविवर्जितः। मध्याह्नेऽपि तथा कुर्यात्
पुनर्विंशतिकुम्भकान्। एवं सायं प्रकुर्वीत

p. 788) पुनर्विंशतिकुम्भकान्। कुर्वीत रेककुम्भाभ्यां सहितान्
प्रतिवासरम्। कुर्यादेवं चतुर्वारमनालस्यो दिने दिने। एवं
मासत्रयं कुर्यान्नाडीशुद्धिस्ततो भवेत्॥ ग्रहजामले
त्रयोदशपटले॥ प्राणायामस्त्रिधा प्रोक्तो रेचकुम्भकपूरकैः।
सहितः केवलश्चेति कुम्भको द्विविधो मतः। रेचश्चापूर्य यः
कार्यः स वै सहितकुम्भकः। यावत्केवलसिद्धिः स्यात् सहितः
तावदभ्यसेत्। रेचकं पूरकं त्यक्त्वा सुखं यद्वायुधारणम्
। प्राणायामोऽयमित्युक्तः स वै केवलकुम्भकः।
गुरुपदिष्टमार्गेण प्राणायामं समाचरेत्। यावद्वायुः स्थितो
देहे तावज्जीवितमुच्यते। मरणं तस्य निष्क्रान्तिस्ततो वायुं
निबन्धयेत्। मलाकुलासुनाडीषु मारुतो नैव मध्यगः। कथं
स्यात्तन्मलीभावः कायशुद्धिः कथं भवेत्। शुद्धिमेति यदा
सर्वं नाडीचक्रं मलाकुलम्। तदैव जायते योगी

प्राणसंग्रहणे क्षमः। प्राणायामं ततः कुर्यान्नित्यं
सात्त्विकया धिया। तथा सुषुम्नापार्श्वस्था मलाः शोषं
प्रयान्ति हि। बद्धपद्मासनो योगी प्राणं चन्द्रेण पूरयेत्।
धारयित्वा यथाशक्ति पुनः सूर्येण रेचयेत्। प्राणं सूर्येण
चाकृष्य पूजयेदुदरं शनैः। विधिवत् कुम्भकं कृत्वा
पुनश्चन्द्रेण रेचयेत्। येन त्यजेच्च तेनैव पूरयेदनिरोधतः।
रेचयेच्च ततोऽन्येन रेचयेच्च न वेगतः। चन्द्रेण वामनासया
सूर्येण दक्षिणनासया  इत्यर्थः। प्राणं चेदिडया
पिबेन्नियमितं भूयोऽन्यथा रेचयेत् पीत्वा पिङ्गलया
समीरणमथो बद्धा त्यजेद्वामया। सूर्याचन्द्रमसोरनेन
विधिना विम्बद्वयं ध्यायतः शुद्धा नाडिगणा भवन्ति
यामिनो मासत्रयादूर्द्धतः॥ प्रातर्मध्यन्दिनं सायं
मध्यरात्रे च कुम्भकान्। चतुरशीतिपर्यन्तं चतुर्वारं
समभ्यसेत्। प्राणायामे महाधर्मो योगिनो मोक्षदायकः।
प्राणायामो दिवारात्रौ देवि  जलं परित्यजेत्। अधमे द्वादशी
मात्रा मध्यमे द्विगुणा स्मृता। उत्तमे त्रिगुणा ज्ञेया

p. 789) प्राणायामस्य निर्णये। कनीयसि भवेत् स्वेदः कम्पो भवति
मध्यमे। उत्तिष्ठत्युत्तमे प्राणी बद्धपद्मासनो मुहुः। जलेन
श्रमजातेन गात्रमार्जनमाचरेत्। दृढतालयुता दीप्तिस्तेन

गात्रस्य जायते। यदा तु नाडीशुद्धिः स्यात्तदा चिह्नानि वाह्यतः।
जायन्ते योगिनो देहे तानि वक्ष्याम्यशेषतः। शरीरलघुता
दीप्तिर्जठराग्निविवर्द्धनम्। कृशत्वञ्च शरीरस्य तस्य जायेत
निश्चितम्। पूर्वोक्तकाले कुर्वन्ति परमाभ्यासमेव च। ततः परं
यथेष्टन्तु शक्तिः स्याद्वायुधारणे। यथेष्टधारणाद्वायोः
सिद्धिः कुम्भस्य केवला। केवले कुम्भके सिद्धे रेचपूरकवर्जिते।
न तस्य दुर्लभं किञ्चित् त्रिषु लोकेषु दिद्यते॥

अथ कुम्भकसिद्धिफलम्॥ प्रस्वेदो जायते पूर्वं मर्दनं
तेन कारयेत्। ततस्तु धारणाद्वायोः क्रमेणैव शनैः शनैः।
कम्पो भवति देहस्य आसनस्थस्य योगिनः।
ततोऽधिकतराभ्यासाद्दार्दुरी जायते ध्रुवम्। यथैव दर्दुरो
गच्छेदुत्पत्योत्प्लुत्य भूतले। पद्मासनस्थितो योगी तथा गच्छति
भूतले। ततोऽधिकतराभ्यासाद्भूमित्यागश्च जायते।
पद्मासनस्थितो वासौ भूमिमुत्सृज्य वर्त्तते। निराधारो विचित्रं हि
तदा सामर्थ्यमुद्वहेत्। अल्पं वा बहु वा भुक्त्वा योगौ न व्यथते
क्वचित्। अल्पमूत्रपुरीषे तु अल्पनिद्रा च जायते। क्रिमयो वृश्चिका
नानास्वेदो दुर्गन्धता तनोः। एतानि सर्वख्यातस्य न जायते
कदाचन। अभ्यासकाले प्रथमे शस्तं क्षीराज्यभोजनम्।
ततोऽभ्यासे स्थिरीभूते न तादृङ्नियमग्रहः। यथा सिंहो गजो

व्याघ्रो भवेद्वश्यः शनैः शनैः। तथैव सेवितो वायुरन्यथा हन्ति साधकम्। प्राणायामेण युक्तेन सर्वरोगक्षयो भवेत्। अयुक्ताभ्यासयोगेन सर्वरोगसमुद्भवः। हिक्का श्वासश्च कासश्च शिरः कर्णाक्षिवेदना। भवन्ति विविधा दोषाः पवनस्य व्यतिक्रमात्॥ इति वायुव्यतिक्रमदोषः॥

दत्तात्रेयसंहितायाम्॥ तथा वर्ज्यानि वक्ष्यामि योगविघ्नकराणि च। लवणं सर्षपञ्चान्नमुष्णं रूक्षञ्च निन्दकम्। अतीव भोजनं त्याज्यं स्त्रिया सङ्गमनं बहु। अग्निसेवा तु सन्त्याज्या धूर्त्तगोष्ठो विशेषतः॥ ग्रहजामले। अत्याहारः प्रवासश्च प्रजल्पो नियमग्रहः। जनसङ्गश्च लौल्यञ्च षड्भिर्योगः प्रणश्यति॥ इति वर्जनीयानि॥ उत्साहान्निश्चयाद्धैर्यात्तत्त्वज्ञानाच्च साहसात्। जनसङ्गपरित्यागात् षड्भिर्योगो हि सिध्यति। तथा। कट्वम्लतिक्तलवणोष्णहरीतशाकाः सौवीरतैलबहुसर्षपमत्स्यमद्याः। आजादिमांसदधितक्रकुलत्थकोलाः पिन्याकहिङ्गुलसुनादिमपथ्यमस्मिन्॥ भोजनसहितं विद्यात् पुनरप्युष्णीकृतं भोज्यम्। अतिलवणाशनपललकन्दशाकोत्कटं दुष्टम्॥ वर्जयेद् दुर्जनप्रीतिं वह्नितापस्य सेवनम्। प्रातः

स्नानोपवासादि कायक्लेशविधिं तथा॥ इत्यपथ्यानि॥

तथा। गोधूमशालिकलाययवषष्टिकान्नं
क्षीराज्यखण्डनवनीतसितामधूनि।
शुण्ठीकणाकणफलादिकपञ्चशाकं दुग्धादिदिव्यमुदकञ्च
यमीन्द्रपथ्यम्॥ मिष्टं सुमधुरं स्निग्धं रम्यं
धातुप्ररोहणम्। मनोऽभिलषितं भोज्यं योगी भोजनमाचरेत्॥
इति पथ्यानि॥

दत्तात्रेयसंहितायाम्॥ उपायञ्च प्रवक्ष्यामि शीघ्रं
योगस्य सिद्धये। क्षीरं घृतञ्च मिष्टान्नं मिताहारश्च
शस्यते। षट्कर्मभिर्गतस्थौल्यः कफमेदोमलार्त्तिगः।
प्राणायामं ततः कुर्यादनायासेन सिध्यति। प्राणायामैरेव
सर्वे विशुष्यन्ति मलाः प्रिये । मेदःश्लेष्मादिकं न्यस्य
कर्मषट्कं न सम्मतम्। सुमनस्कात्मको भावो यदि वायुं

p. 791) समभ्यसेत्। षट्कर्मयोगमाप्नोति पवनाभ्यासतत्परः।
ब्रह्मादयोऽपि त्रिदशाः पवनाभ्यासतत्पराः। अतः सिद्धिं
गतास्ते च तस्मात्पवनमभ्यसेत्। यावद्बद्धो मरुद्देहे
तावच्चित्तं निराशयम्। त्राटकञ्चेद्भ्रुवोर्मध्ये

तावत्कालभयं कुतः। विधिवत् प्राणसंरोधान्नाडीचक्रे विशोषिते। सुषुम्नावदनं भित्त्वा मुखाद्विशति मारुतः। मारुते मध्यसञ्चारे मनःस्थैर्यं प्रजायते। यो मनःसुस्थिरीभावः सैवावस्था मनोन्मनी। तत्सिद्धये विशेषज्ञाश्चित्रान् कुर्वीत कुम्भकान्। विचित्रकुम्भकाभ्यासाद्विचित्रां सिद्धिमाप्नुयात्॥ अथ त्राटकम्॥ निरीक्षेन्निश्चलदृशा सूक्ष्मलक्ष्यं प्रयत्नतः। अश्रुसम्पातपर्यन्तं त्राटकं तन्महेश्वरि । यत्नतस्त्राटकं गोप्यं तथा हाटकपेटिका॥ विचित्रकुम्भकास्तु। सूर्यभेदनमुज्झाख्यं तमा शीत्कारशीतली। भस्त्रिका भ्रामरी मूर्च्छा प्लावनी सप्त कुम्भकाः। आदौ सूर्यभेदनम् ॥ आसने सुखदे योगी बद्ध्वा मुक्तासनं ततः। दक्षनाड्या समाकृष्य वह्निस्थं पवनं शनैः। आकेशाग्रान्नखाग्राद्वा निरोधावधि कुम्भयेत्। ततः शनैः सव्यनाड्या रेचयेत् पवनं सुधीः॥ अस्य फलम्॥ कपालशोधनं वातदोषघ्नं कृमिदोषहम्। पुनः पुनरिदं कार्यं सूर्यभेदनमुत्तमम्॥ १॥

अथ उज्झाख्यम्॥ मुखं संयम्य नासाभ्यां चाकृष्य पवनं शनैः। यथा लगति कण्ठान्ते हृदयावधि सस्वनः। पूर्ववत् कुम्भयेत् प्राणं रेचयेदिडया ततः॥ फलम्॥ स्लेष्मरोगहरञ्चैतदनलैर्दीप्तबन्धनम्।

नाडीजलोदराधातुगण्डादोषविनाशनम्। गच्छता तिष्ठता
कार्यमुड्डाख्यं कुम्भकन्त्विदम्॥ २॥

अथ शीत्कारः॥ शीत्कारञ्च सदा वक्रे घ्राणे चैव विजृम्भकम्।
एवमभ्यासयोगेन कामदेवो द्वितीयकः॥ फलम्॥
योगिनीचक्रमासाद्य सृष्टिसंहारकारकः। न क्षुधा न तृषा
निद्रा नैव मूर्च्छा प्रजायते। भवेत् स्वच्छन्ददेहश्च

p. 792) सर्वोपद्रववर्जितः। अनेन च विना सत्यं योगीन्द्रो
भूमिमण्डले। रसनाताद्दं मूलेन यः प्राणं सततं पिबेत्।
यत्नादूर्द्धं भवेत् सिद्धिः सर्वरोगक्षयो भवेत्॥ ३॥

अथ शीतली॥ जिह्वया वायुमाकृष्।य पूर्ववत् कुम्भकादितः।
शनैस्तु घ्राणरन्ध्राभ्यां रेचयेदनिलं प्रिये ॥ फलम्॥
गुल्मप्लीहादिकान् दोषान् ज्वरं रेतःक्षयं सुधाम्। तृष्णाञ्च
शीतली नाम कुम्भकोऽयं निहन्ति वै॥ ४॥

अथ भस्त्रिका॥ सम्यक् पद्मासनं बद्धा समग्रीवोदरं प्रिये ।
मुखं संयम्य यत्नेन प्राणं घ्राणेन रेचयेत्। तथैव
स्वशरीरस्थं पवनं चालयेत् स्फुटम्। तथा लगति

हृत्कण्ठकपाले श्वसनस्ततः। वेगेन पूरयेत् किञ्चित्
हृत्पद्मावधि मारुतम्। पुनर्विरेचयेत्तद्वत् पूरयेच्च पुनः पुनः।
यथैव लौहकारस्य भस्त्रां वेगेन चालयेत्। तथैव
स्वशरीरस्थं पवनं चालयेच्छनैः। यदा श्रमो भवेत् पूर्णो
बन्धने च तदा लघु। कारयेन्नासिकामध्यं तर्जनीभ्यां विना
दृढम्। कुम्भकं पूर्ववत् कृत्वा रेचयेदिडयानिलम्॥ फलम्॥
वातपित्तश्लेष्महरं शरीराग्निविवर्द्धनम्।
कुण्डलीरोधनञ्चक्रे भारघ्नं शुभदं शुचि।
ब्रह्मनाडीमुखे संस्थकफघ्नं मलनाशनम्।
सम्यग्ज्ञात्रं समुद्भूतं ग्रन्थित्रयविभेदनम्। विशेषेणैव
कर्त्तव्यं भस्त्राख्यं कुम्भकं त्विदम्॥ ५॥

अथ भ्रामरी॥ वेदोद्घोषं पूरकं भृङ्गनादं
भृङ्गीनादं रेचकं मन्दमन्दम्।
योगीन्द्राणामेवमभ्यासयोगाच्चिते जाता काचिदानन्दवल्ली॥ ६।

अथ मूर्च्छा॥ पूरकान्ते गाढतरं बद्धा जालन्धरं
शनैः। रेचयेन्मूर्च्छनाख्योऽयं मनोमूर्च्छा सुखप्रदा॥ ७
॥

अथ प्लावनी॥ अन्तःप्रवर्त्तिताधारमरुता पूरितोदरम्।

साक्षात्पयस्यगाधेऽपि प्लवते पद्मपत्रवत्॥ ८॥

रुद्रजामले उत्तरखण्डे॥ नेतीयोगविधानानि श्रृणुष्व

p. 793) वीरपूजित। येन सर्वमस्तकस्थकफानां दाहनं भवेत्।

सूक्ष्मसूत्रं दृढतरं प्रदद्यान्नासिकाविले। मुखरन्ध्रे

समानीय सन्धायैनं समाश्रयेत्। पुनः पुनः सदा योगी

यातायातेन घर्षयेत्। क्रमेण वर्द्धनं कुर्यात् सूत्रस्य

परमेश्वर । नेतीयोगेन नासाया रन्ध्रं निर्मलकं भवेत्।

वायोर्गमनकाले तु महासुखमिति प्रभो ॥ १॥

दन्तीयोगं ततः पश्चात् कुर्यात् साधकसत्तमः। दन्तधावनकाले

तु योगमेतं प्रकाशयेत्। दन्तधावनकाष्ठन्तु

सार्द्धहस्तैकसम्भवम्। नातिस्थूलं नातिसूक्ष्मं नवीनं

नम्रमुत्तमम्। अपक्कं यत्नतो ग्राह्यं मृणालसदृशं तरुम्।

गृहीत्वा दन्तकाष्ठं वत् प्रातःकाले प्रभक्षयेत्।

दन्तकाष्ठाग्रभागञ्च कनिष्ठाङ्गुलिपर्व च। एवं

दन्तावलीभ्याञ्च चर्वणं सुन्दरञ्चरेत्। तत् प्रक्षाल्य च नीरेण

शनैर्निर्गममाचरेत्। शनैः शनैः प्रकर्त्तव्यं

कायवाक्चित्तशोधनम्। यावन्न याति काष्ठाग्रं नाभिमूले
त्वनाकुलम्। तावत् सूक्ष्मतरं ग्राह्यमवश्यं प्रत्यहञ्चरेत्।
हृदये जलचक्रञ्च यावत् खण्डं न जायते। तावत्कालं सर्वदिने
प्रभाते रदसाधनम्। हृदये कफभाण्डस्यं खण्डनं
जायते ध्रुवम्। पवनागमने सौख्यं प्राप्नोति योगनिर्भरम्।
खेचरत्वं लवणजमम्लत्वं कुम्भकोद्भवम्। मिष्टत्वं
शाकदध्यन्नं द्विवारं रात्रिभोजनम्। अवश्यं योजयेद् योगी
यदि योगमिहेच्छति। एकभागं स्वस्ववीजं द्विभागं तण्डुलं
मतम्। उत्तमं पक्कमाहृत्य घृतदुग्धेन भक्षयेत्। अथवा
केवलं दुग्धं तर्पणं कारयेद्बुधः। कुण्डलीं
कुलरूपाञ्च दुग्धेन परितर्पयेत्। कुण्डलीतर्पणं योगी यदि
जानाति शङ्कर । अनायासेन योगी स्यात् स ज्ञानीन्द्रो
भवेद्ध्रुवम्॥

सप्तत्रिंशत्पटले॥

आनन्दभैरव्युवाच

धौतीयोगं प्रवख्यामि यत् कृत्वा निर्मलो भवेत्। अत्यन्तगुह्यं
योगञ्च समाप्तिकारणं नृणाम्। यदि नो कुरुते योगं तदा

मरणमाप्नुयात्। धौतीयोगं विना नाथ  कः सिध्यति महीतले।

सूक्ष्मात् सूक्ष्मतरं वस्त्रं द्वात्रिंशद्धस्तमानतः।

एकहस्तक्रमेणैव यः करोति शनैः शनैः।

यावद्द्वात्रिंशद्धस्तञ्च तावत्कालं क्रियाञ्चरेत्।

एतत्क्रियाप्रयोगेण योगी भवति तत्क्षणात्। क्रमेण मन्त्री सिद्धः

स्यात् कालजालं वशं नयेत्। एतन्मध्ये चासनानि शरीरस्थानि

चाचरेत्। दृढासने योगसिद्धिरिति तन्त्रार्थनिर्णयः। सिद्धे मनौ

परावाप्तिः पञ्चयोगासनेन च। पार्श्वे चाष्टाङ्गुलं वस्त्रं

दीर्घं द्वात्रिंशदीश्वर । एतत् सूक्ष्मं सुवसनं गृहीत्वा

कारयेद् यती। जितेन्द्रियः सदा कुर्यात् ज्ञानध्याननिषेवणम्।

अनाचारेण हानिः स्यादिन्द्रियाणां बलेन च।

महापातकमुख्यानां सङ्गदोषेण हानयः। सम्भवन्ति

महादेव  तव योग्यं सुकर्म च। वृद्धो वा यौवनस्थो वा बालो

वा यत्र तत्र वा एकवर्णाद्दीर्घजीवौ स्यादमरो लोकवल्लभः।

मन्त्रसिद्धिरिष्टसिद्धिः स सिद्धीनामधीश्वरः। शनैः शनैः

सदा कुर्यात् कालदोषविनाशनम्। हृदयग्रन्थिभेदेन

सर्वावयववर्द्धनम्। धौतीयोगोद्भवं कामं

महामरणकारणम्। तस्य त्यागं यः करोति सदैव देवविक्रमः।

दौतीयोगानन्तरं हि नेडणीकर्म चाचरेत्। नेडणीयोगमात्रेण

आसने नेडणोपमः। नेडणीसाधनादेव चिरजीवी निरामयः।

तत्कारणं प्रवक्ष्यामि सावधानाऽवधारय। भुक्त्वा
मुद्गान्नपक्कञ्च वारैकं प्रतिपालयेत्। प्रतिपालयेत् स्वोदरञ्च
कठिनाशाविवर्जितः। पुनः पुनश्चालनञ्च कुर्यात्
स्वोदरमध्यकम्। कुलालचक्रवत् कुर्याद् भ्रमणञ्चोदरस्य च।
सर्वाङ्गचालनादेव कुण्डलीशक्तिचालनम्। चालनात्
कुण्डलीदेव्याश्चेतना सा भवेत् प्रभो । एतस्यानन्तरं देव

p. 795) क्षालनं परिकीर्त्तितम्। नाडीनां क्षालनादेव
सर्वविद्यानिधिर्भवेत्। वायुसिद्धिर्भवेत्तस्य पञ्चभूतस्य
सिद्धिभाक्। मुण्डासनं हि सर्वत्र सर्वदा कारयेद्बुधः।
ऊर्द्ध्वपद्मासनं कृत्वा अधोहस्ते जपं चरेत्। तदा
त्रिदिनमाकर्त्तुं समर्थो मुण्डिकासनम्। तदा हि सर्वनाड्यश्च
वशीभूता न संशयः। नाडीक्षालनयोगेन सिद्धिमाप्नोति
साधकः नेडणीं यो न जानाति स कथं कर्त्तुमुद्यतः। स धीरो
मानसचरो मतिमान् स जितेन्द्रियः। यो नेडणीयोगसारं
कर्त्तुमुद्यमपारगः। स चावश्यं क्षालनञ्च
कुर्यान्नाड्यादिसाधनम्। नेडणीयोगमार्गेण
नाडीक्षालनतत्परः। भवत्येव महाकाल  राजराजेश्वरो यथा।
केवलं प्राणवायोश्च धारणात् क्षालनं भवेत्। विना
क्षालनयोगेन देहशुद्धिर्न जायते। क्षालनं नाडिकादीनां

कफपित्तादिनाशनम्। करोति यत्नतो योगी मुण्डासनानिलाशनात्।
वायुग्रहणमेवं हि नेडणीवशकालके। न कुर्यात् केवलं नाथ
अन्यकाले सदाचरेत्। यावन्नेडणीं न जानाति तवद्वायुं न
सम्पिबेत्। बहुतरं न संग्राह्यं वायोरोगमलादिकृत्। केवलं
श्वासगणनं यावन्नेडणी न सिद्ध्यति। पञ्चामरासाधनाच्च
पञ्चवायुवशो भवेत्॥

ग्रहजामले॥ मेदःश्लेष्माधिकः पूर्वं षट्कर्माणि
समाचरेत्। अन्यथा नाचरेत्तानि दोषाणामप्यभावतः। धौती च
गजकरिणी वस्ती लौली नती तहा। कपालभाती चैतानि षट् कर्माणि
महेश्वरि। कर्मषट्कमिदं गोप्यं घटशोधनकारणम्।
विचित्रगुणमाधाय पूज्यते योगिपुङ्गवः॥ तत्र धौती॥
चतुरङ्गुलविस्तारं हस्तपञ्चदशेन तु। गुरूपदिष्टमार्गेण
सिक्तं वस्त्रं शनैर्ग्रसेत्। ततः प्रत्याहरेच्चैतत् क्षालनं
धौतकर्म तत्। कासः श्वासः प्लीहा कुष्ठं कफरोगाश्च
विंशतिः। धौतीकर्मप्रसादेन शुध्यन्ते च न संशयः॥ १॥

p. 796) अथ गजकरिणी॥ उदरगतपदार्थमुद्वमन्ती
पवनमपानमुदीर्य कण्ठकाले। क्रमपरिचयस्य
पायुमार्गाद्गजकरिणीति निगद्यते सा॥ २॥

अथ वस्ती॥ नाभिनिम्नजले पायुं न्यस्य चलोत्कटासनम्। आधारानञ्चनं कुर्यात् क्षालनं वस्तिकर्म तत्। गुल्मप्लीहोदरा रोगा वातपित्तकफोद्भवाः। वस्तिकर्मप्रभावेण सर्वरोगक्षयो भवेत्। धात्विन्द्रियान्तःकरणप्रसादं दद्याच्च कान्तिं दहनप्रदीप्तिम्। अशेषदोषोपचयं निहन्यादभ्यस्यमानं जनवस्तिकर्म॥ ३॥

अथ लौली॥ भूम्यादावतिवेगेन तुन्दं सव्यापसव्यतः। नतांसो भ्रामयेदेषा लौली स्यात् परमेश्वरि ॥ फलम्॥ मन्दाग्निसन्दीपनपाचकादिसन्दीपकानन्दकरी सदैव। अशेषदोषामयशोषणी च हठक्रिया मौलिरियञ्च लौली॥ ४॥

अथ नती॥ सूत्रं वितस्तिमात्रन्तु नासानाले प्रवेशयेत्। मुखेन गणयेच्चैषा नती स्यात् परमेश्वरि ॥ फलम्॥ कपालशोधनी कण्ठ्या दिव्यदृष्टिप्रदायिनी। य ऊर्द्ध्वं जायते रोगो नमयत्याशु तं नती॥ एवञ्च नेती नतीति नाममात्रभेदः। नेती तु पूर्वमुक्ता॥ ५॥

अथ कपालभाती॥ भस्त्रेव लौहकारे च कर्णपूरौ ससम्भ्रमौ।

कपालभाती विख्याता कफदोषविनाशिनी। इति कपालभाती॥ ६॥

दत्तात्रेयसंहितायाम्॥ ततोऽधिकतराभ्यासाद्बलमुत्पद्यते भृशम्। येन भूचरसिद्धिः स्याद् भूचराणां जये क्षमः। व्याघ्रो द्द लापो वन्यो वा ऋक्षो वा गज एव वा। सिंहो वा म्रियते तेन योगिनो हस्तताडनात्। कन्दर्पस्य यथा रूपं तथा तस्यापि योगिनः। तस्मिन् काले महाविघ्नो योगिनः स्यात् प्रमादतः। तद्रूपवशगा नार्यः काङ्क्षन्ते तस्य सङ्गमम्। यदि सङ्गं करोत्येव विन्दुस्तस्य विनश्यति। आत्मक्षयो विन्दुहीनादसामर्थ्यञ्च जायते।

p. 797) तस्मात् स्त्रीणां सङ्गवर्जं कुर्यादत्यन्तमादरात्। योगिनस्तस्य सिद्धिः स्यात् सततं विन्दुधारणात्। तस्मात् सर्वप्रयत्नेन रक्ष्यो विन्दुर्हियोगिना। ततो रहस्यमाविष्टः प्रणवं प्लुतमात्रया। जपेत् पूर्वार्जितानां हि पापानां नाशहेतवे। सर्वविघ्नहरश्चायं प्रणवः सर्वदोषहा। एवमभ्यासयोगेन सिद्धिरारम्भसम्भवा। ततो भवेद् घटावस्था पवनाभ्यासिनः सदा। प्राणापानौ मनो वायु जींवात्मपरमात्मकौ। अन्योन्यस्याविरोधेन एवं सङ्घटते यथा। तद्वद् घटद्वयावस्था प्रसिद्धा योगिनां स्मृता। तत्र चिह्नानि यानि स्युस्तानि वक्ष्यामि कानिचित्। पूर्वं यः

कथितोऽभ्यासश्चतुर्द्धा तं परित्यजेत्। दिवा वा यदि वा रात्रौ मासमात्रं समभ्यसेत्। एकवारं प्रतिदिनं कुर्यात् केवलकुम्भकम्। प्रत्याहारो हि एवं स्यादेवं कुर्युर्हि योगिनः। इन्द्रियाणीन्द्रियार्थेभ्यो यत् प्रत्याहरते स्फुटम्। योगी कुम्भकमास्थाय प्रत्याहारः स उच्यते। यद्यत् पश्यति चक्षुर्भ्यां तत्तदात्मनि भावयेत्। यद्यत् शृणोति कर्णाभ्यां तत्तदात्मनि भावयेत्। जिह्वया यद्रसयति तत्तदात्मनि भावयेत्। त्वचा यदङ्गं स्पृशति तत्तदात्मनि भावयेत्। एवं ज्ञानेन्द्रियाणां हि तत्संख्याभिस्तु सङ्क्षयेत्। यामं यामं प्रतिदिनं योगी यत्नादतन्द्रितः। तदा विचित्रसामर्थ्यं जायते योगिनो ध्रुवम्। दूरश्रुतिर्दूरदृष्टिः क्षणाद्दूरगतिस्तथा। वाक्सिद्धिः कामचारत्वं तथाऽदृश्यपदं भवेत्। मलमूत्रोपलेपेन लौहानां स्वर्णता तथा। खेचरत्वं तथा स्याच्च सतताभ्यासयोगतः। तदा बुद्धिमता भाव्यं योगिना योगसिद्धये। एते विघ्ना महासिद्ध्यै न रमेत्तेषु बुद्धिमान्। न शीलयेत्तु कस्मैचित् स्वसामर्थ्यं हि सर्वदा। कदाचिद्दर्शयेन्मर्त्त्यो भक्तियुक्ताय वा पुनः। यथा मूर्खो यथा मूढो यथा वधिर एव वा। तथा वर्त्तेत लोकेषु

p. 798) स्वसामर्थस्य गुप्तये। नोचेत् शिष्या हि बहवो भवन्त्येव न

संशयः। स्वस्वकार्येषु योगीन्द्रं प्रार्थयन्ते जनाः सदा।
तत्कर्मकरणव्यग्रः स्वाभ्यासे शिथिलो भवेत्। अभ्यासेन विहीनस्तु
ततो लौकिकतां व्रजेत्। अविस्मृत्य गुरोर्वाक्यमभ्यासात्तदहर्निशम्।
एवं भवेद्घटावस्था सहजाभ्यासयोगतः। अनभ्यासेन
योगोऽयं वृथा गोष्ठ्या न सिध्यति। तस्मात् सर्वप्रयत्नेन
योगमेतं समभ्यसेत्। ततः परिचयावस्था जायतेऽभ्यासयोगतः।
वायुः परिचितो यत्नादात्मना सह कुण्डलीन्। बोधयित्वा
सुषुम्नायां प्रविशेदविरोधतः। वायुना सह चित्तन्तु प्रविशेत्तु
महापथम्। महापथं श्मशानञ्च सुषुम्नाप्येकमेव हि।
नाना मतान्तरे भेदाः फलभेदो न विद्यते। वर्त्तमानं
भविष्यञ्च भूतार्थञ्चापि वेत्यसौ। यस्य चित्तं सपवनं
सुषुम्नां प्रविशेद्दिवा। भव्याभव्ये च विज्ञाय योगी रहसि
यत्नतः। पञ्चधा धारणं कुर्यात् तत्तद्भूतभयापहम्॥

ग्रहजामले चतुर्दशपटले॥ सशैलवनधात्रीणां
यथाधारोऽहिनायकः। सर्वेषां हठतन्त्राणां तथाधारा हि
कुण्डली॥ अहिनायकोऽनन्तः॥ सुप्ता गुरुप्रसादेन यदा जागर्त्ति
कुण्डली। तदा पद्मानि सर्वाणि भिद्यन्ते ग्रन्थयोऽपि च। प्राणस्य
शून्यपदवी तदा राजपथायते। तदा चित्तं निरालम्बं तदा
कालस्य वञ्चनम्॥ शून्यपदवी सुषुम्ना तत्रैवोक्ता यथा॥

सुषुम्ना शून्यपदवी ब्रह्मरन्ध्रं महापथः। श्मशानं
शङ्खिनी मध्यमार्गश्चेत्येकवाचकम्॥ राजपथायत इत्यनेन
सुखगमनं व्यज्यते॥ तस्मात्सर्वप्रयत्नेन प्रबोधयितुमीश्वरीम्
। ब्रह्मरन्ध्रमुखे सुप्तां मुद्राभ्यासं समाचरेत्।
महामुद्रा महाबन्धो महावेदश्च खेचरी। उड्डीयानं
मूलबन्धो बन्धो जालन्धराभिधः। करणं विपरीताख्यं

p. 799) विञ्रिनीशक्तिचालनम्। इदन्तु मुद्रादशकं
जरामरणनाशनम्। देवेशि  कथितं
दिव्यमष्टैश्वर्यप्रदायकम्। वल्लभं सर्वसिद्धानां
दुर्लभं मरुतामपि। गोपनीयं प्रयत्नेन यथा रत्नकरण्डकम्
। कस्य चिन्नैव वक्तव्यं कुलस्त्रीसुरतं यथा॥

अथ महामुद्रा॥ दत्तात्रेयसंहितायाम्॥ महामुद्रां
प्रवक्ष्यामि भैरवोक्तां समादरात्। पार्ष्णिं वामस्य पादस्य
योनिस्थाने नियोजयेत्। प्रसाद्य दक्षिणं पादं हस्ताभ्यां
धारयेद्दृढं। चिवुकं हृदये न्यस्य पूरयेद्वायुना पुनः।
कुम्भकेन यथाशक्ति धारयित्वा च रेचयेत्। वामाङ्गेन
समभ्यस्य दक्षिणाङ्गेन चाभ्यसेत्। प्रसारितस्तु यः
पादस्तमूरूपरि विन्यसेत्॥ ग्रहजामले॥ पादमूलेन वामेन

योनिं सम्पीड्य दक्षिणम्। पादं प्रसारितं कृत्वा कराभ्यां
धारयेद् दृढम्। कण्ठे वक्रं समारोप्य
धारयेद्वायुमूर्द्धतः। यथा दण्डाहतः सर्पो दण्डाकारः
प्रजायते। ऋज्वीभूता तथा शक्तिः कुण्डली सहसा भवेत्। तदासौ
मरणावस्था जायते द्विपुटीश्रिता। अतः शनैः शनैरेव
रेचयेत्तं न वेगतः। इयं खद्द  महामुद्रा तव स्नेहात्
प्रकाश्यते॥ फलम्॥ महाक्लेशादयो दोषाः क्षीयन्ते
मरणादयः। महामुद्रा तु तेनैव समाख्याता महेश्वरि ।
चन्द्राङ्गेन समभ्यस्य सूर्याङ्गेन समभ्यसेत्। यावत्संख्या
भवेत्तुल्या ततो मुद्रां विसर्जयेत्। न हि पथ्यमपथ्यं वा रसाः
सर्वेऽपि नीरसाः। अपि भुक्तं विषं घोरं पीयूषमिव जीर्यति।
क्षयकुष्ठगुदावर्त्ता गुदप्लीहपुरोगमाः। तस्य दोषाः क्षयं
यान्ति महामुद्राञ्च योऽभ्यसेत्। कथितेयं महामुद्रा
जरामरणनाशिनी। गोपनीया प्रयत्नेन न देया यस्य कस्यचित्॥

अथ महाबन्धः॥ अयमेव महाबन्धो मुद्रां बद्धा
यमभ्यसेत्। महाबन्धस्थितो भूमौ स्फिचौ सन्ताडयेच्छनैः।

p. 800) अयमेव महाबन्धः सिद्धैरभ्यस्यते नरैः। पार्ष्णिं
वामस्य पादस्य योनिस्थाने नियोजयेत्। वामोरूपरि संस्थाप्य

दक्षिणं चरणं तथा। पूरयित्वा मुखे पाप हृदये चिबुकं

दृढम्। निष्पीड्य योनिमाकुञ्च्य मनोमध्ये नियोजयेत्। रेचयेच्च

शनैरेवं महाबन्धोऽयमुच्यते। अमुं योगी महाबन्धं

महासिद्धिप्रदायकम्। वामाङ्गञ्च समभ्यस्य दक्षाङ्गे

पुनरभ्यसेत्। अयञ्च सर्वनाडीनामूर्द्धं गतिनिरोधकः।

त्रिवेणीसङ्गमं धत्ते केदारं प्रापयेन्मनः।

रूपलावण्यसम्पन्ना यथा स्त्री पुरुषं विना।

महामुद्रामहाबन्धौ निष्फलौ वेधवर्जितौ॥ २॥

अथ महावेधः॥ महाबन्धस्थितो योगी कृत्वा

प्रकरमेकधा। वायुना गतिमावृत्य विधृतं कण्ठमुद्रया।

समस्तयुक्तो यो भूमौ स्फिचौ सन्ताडयेच्छनैः। पुटद्वयं

समाकृष्य वायुश्चरति सत्वरः। सोमसूर्याग्निसन्दग्धो जायते

चामृताय वै। मृतावस्था समुत्पन्ना ततो मृत्युभयं कुतः।

राजदण्डश्च जिह्वायां बन्धः शस्तो भवेद्धितः।

महावेधसमाभ्यासो महासिद्धिप्रदायकः। बन्धत्रयं

महागुह्यं जरामरणनाशनम्। वह्निवृद्धिकरं

चैवाणिमाद्यष्टगुणप्रदम्। अबाधं हरते पापं यामं

यामं दिने दिने। पुण्यसद्भारसभावं पापौघातिहरं सदा।

सम्यक् शिक्षावतामेव स्वप्नं प्रथमसाधने। वह्निं

स्त्रीपथसेवनमादौ मज्जनमाचरेत्॥ ३॥

अथ खेचरी॥ नाऽशनं सिद्धसदृशं न कुम्भः केवलोपमः। न खेचरीसमा मुद्रा न नादसदृशो लयः। छेदनं चालनं देहे कलाक्रमेण बर्द्धयेत्तावत्। सा यावद् भ्रूमध्यं स्पृशति साक्षात् खेचरीसिद्धिः॥ दत्तात्रेयसंहितायाम्॥ अन्तः कपालविवरे जिह्वां व्यावृत्य बन्धयेत्। भ्रूमध्यदृष्टिरप्येषा मुद्रा भवति खेचरी॥ ग्रहजामले॥ स्नुहीपत्रनिभं शस्त्रं सुतीक्ष्णं सिग्धनिर्मलम्। मर्यादायै ततस्तेन रोममात्रं समुच्छिनेत्। कृत्वा सैन्धवपथ्याभ्यां चूर्णिताभ्यां प्रवर्त्तते॥ पथ्या हरीतकी॥ पुनः सप्तदिने पराप्ते रोममात्रं समुच्छिनेत्। एवं क्रमेण षण्मासं नित्ययुक्तः समाचरेत्। षण्मासाद्रसनामूलशिराबन्धो विनश्यति॥ योगिनी वेणुवल्कलधारेणेदानीं रसनामूलमेवं क्रमेण छिन्दन्ति॥ अथ वागीश्वरीधाम शिरो वस्त्रेण वेष्टयेत्। शनैरुत्कर्षयेद् योगी कालवेलाविधानवित्। वागीश्वरीधाम जिह्वा तस्याः शिरोऽग्रभागः। वस्त्रप्रमाणमपि तत्रैव॥ वितस्तिप्रमितं दैर्घ्यं विस्तारं चतुरङ्गुलम्। मृदुलं धवलं प्रोक्तं वेष्टनालम्बनक्षणम् पुनः षण्मासमात्रेण पुनः सङ्कर्षणात् प्रिये । भ्रूमध्यावधि वर्द्धेत

तिर्यक्कर्णविलावधि। अधस्तच्चिवुकं मूलं प्रयाति क्रमकारिता।
क्रोशादूर्द्धं चङ्क्रमति तिर्यक् सङ्क्षावधि प्रिये । पुनः
संवत्सरे देवि  द्वितीये चैव लीलया। ब्रह्मरन्ध्रत आवृत्य तिष्ठेत्
पवनवन्दिते। सताद्द मूलं सङ्घृष्य सप्तवासरमात्मनि।
पूर्वोक्तेन प्रकारेण मलं सर्वं विशोधयेत्। अङ्गुल्यग्रेण
सङ्घृष्य जिह्वां तत्र निवेशयेत्। शनैः शनैर्मस्तकान्तं
महावज्रकवाटभित्। पूर्वं विजयतां विद्या विख्याता
भुवनत्रये। अस्यां षडङ्गं कुर्वीत तथा षड्चक्रभिन्नया। खे
निरस्तसकलक्रियाक्रमयाचिता चरति। शाश्वतोदये
सशिरोभूसमवायकारिणी॥ क्रमेणैव प्रकर्त्तव्याभ्यासेन
वरवर्णिनि । युगपद्विलये तस्य शरीरं विलयं व्रजेत्।
तस्माच्छनैः शनैः कार्योऽभ्यासिना योगकः प्रिये । एवं
वर्षत्रयं कृत्वा ब्रह्मद्वारं विशोद्धुवम्। षड्चक्राणि
विभेद्य शक्तिभुजगीं प्रोत्थाप्य मूलस्थितां भित्त्वा
ग्रन्थितमञ्च पश्चिमशिराः प्राकाररूपं महत्। नीत्वा
प्राणमहः शिरोऽपि विमलं निर्मथ्य चित्तेन तत् तल्लिङ्गं

p. 802) पिबतेन्दुमण्डलगलन्मुक्तः स साक्षाच्छिवः॥
नित्यं यस्तूर्द्धजिह्वो यदि पिबति पुमान् सप्तधारामृतौघं
सुस्वादं शीतलाङ्गं दुरितभयहरं क्षुत्पिपाशानिवारम्।

पिण्डस्थैर्यं हि तस्मान्मृड इव निवसन्मृत्युरोगात्तरेत्तु
दौर्भाग्यं याति नाशं प्रसरति सकलं त्रित्रिकालो भ्रमित्वा॥
कपालकुहरे जिह्वा प्रविष्टा विपरीतगा। भ्रुवोरन्तर्गता
दृष्टिर्मुद्रा भवति खेचरी। कलां पराङ्मुखीं कृत्वा त्रिपथे
परिवर्त्तयेत्। सा भवेत् खेचरीमुद्रा व्योमचक्रं तदुच्यते।
रसनामूर्द्धगां कृत्वा क्षणार्द्धं यस्तु तिष्ठति।
विषयान्मुच्यते योगी व्याधिमृत्युजरादिभिः। न रोगमरणं तस्य,
न निद्रा न क्षुधा तृषा। न च मूर्च्छा भवेत्तस्य यो मुद्रां
वेत्ति खेचरीम्। पिड्यते न स रोगेण लिप्यते न स कर्मणा। बाध्यते
न स कालेन यस्य मुद्रास्ति खेचरी। चित्तं चरति खे यस्मात् जिह्वा
चरति खे गता। तेनैषा खेचरी नाम मुद्रासननमस्कृता।
खेचर्यामुदितं येन विवरं लम्बिकोर्द्धकम्। तस्य न क्षरते
विन्दुः कामिन्याश्लेषितस्य च। चलितोऽपि यदा विन्दुः सम्प्राप्तो
योनिमण्डले। व्रजेत्तूर्द्धं हठाच्छक्त्या निबद्धो योनिमुद्रया।
ऊर्द्धजिह्वः स्थिरो भूत्वा सोमपानं करोति यः। मासार्द्धेन
न सन्देहो मृत्युं जयति योगवान्। इन्धनानि यथा वह्निस्तेन
वर्त्तिश्च दीपकः। तथा सोमलतापूर्णं देहं देही न मुञ्चति।
नित्यं सोमकलापूर्णं देहं देही न मुञ्चति। नित्यं
सोमकलापूर्णं शरीरं यस्य योगिनः। तक्षकेणापि दष्टस्य
विषं तस्य न सर्पति। तस्मादिदं प्रकुर्वीत नित्ययुक्तः समाहितः।

रसनां शोषयेदूर्द्ध्वं पिबेदमरवारुणीम्। कुलीनं तमहं
वन्दे इतरे कुलघातकाः। गोशब्देनोदिता जिह्वा तत्प्रवेशो हि ताद्द नि।
गोमांसभक्षणं तत्तु महापातकनाशनम्। जिह्वाप्रवेशदं
भूतवायुना स्थापितं खद्द । चन्द्राद् गलति संसारं

p. 803) तत्स्यादमरवारुणी। मूद्ध्र्नः षोडशपत्रपद्मगलितं
प्राणादवाप्तं हठादूर्द्ध्वास्यो रसनां नियम्य विवरे
शक्तिं परां चिन्तयेत्। तत्कल्लोलकलाजलञ्च विमलं धारामृतं
यः पिबेत् निर्दोषः स मृणालकोमलवपुर्योगी चिरं जीवति॥
चुम्बन्ती यदि लम्बिकाग्रमनिशं जिह्वा रसस्यन्दिनी सक्षारा
कटुकाथ दुग्धसद्दशी क्षीराज्यतुल्याथवा। व्याधीनां
हरणं जरान्तकरणं शास्त्राङ्गमोद्गीरणं तस्य
स्यादमरत्वमष्टगुणवत् सिद्धाङ्गनाकर्षणम्॥ एकं
सृष्टिमयं वीजं एका मुद्रा च खेचरी। एको देवो निरालम्बो
ह्येकावस्था मनोन्मनी। सुचिरं ज्ञानजनकं
पञ्चतत्त्वसमन्वितम्। तिष्ठन्ती खेचरीमुद्रा तस्मिन् शून्ये
निरञ्जने॥ ४॥

अथ मूलबन्धः॥ पार्ष्णिभागेन सम्पीड्य
योनिमाकुञ्चयेद्गुदम्। अपानमूर्द्ध्वमुत्थाप्य

मूलबन्धोऽयमुच्यते। अधोगतमपानञ्च ऊर्द्धङ्गं कुरुते
हठात्। आकुञ्चनेन तं वच्मि मूलबन्धं महेश्वरि ।
योनिपार्ष्णी तु सम्पीड्य वायुमाकुञ्चयेद्बलात्। वारं वारं
तथा चोर्द्धं समायाति समीरणः। प्राणादिनोदितो
विन्दुर्मूलंबन्धेन चैकतः। ततो योगस्य संसिद्धिः प्रमा तत्र
न संशयः। प्राणापानौ च पवनौ  मूलबन्धेन चैकताम्।
गत्वा योगस्य संसिद्धिं गच्छतो नात्र संशयः।
अपानप्राणयोरैक्यात् क्षयान्मूत्रपुरीषयोः। युवा भवति
वृद्धोऽपि सततं मूलबन्धनात्। अपाने चोर्द्धगे याते सम्प्राप्ते
योनिमण्डले। तदानना शिखा दीर्घा वर्द्धते वायुना हता। ततो
यातं बद्धयोनौ प्राणेषु च स्वरूपकम्। तैलाभ्यक्तं
प्रदीपन्तु ज्वलनो देहगस्तथा। तेन कुण्डलिनी सुप्ता सन्तप्ता
संविवर्द्धते। दण्डाहता भुजङ्गीव निश्वस्य ऋजुतां व्रजेत्।
विलं प्रविष्टैव ततो ब्रह्मनाड्यन्तरं व्रजेत्। तस्मान्नित्यम्
मूलबन्धः कर्त्तव्यः परमेश्वरि ॥ ५॥

p. 804) अथ उड्डीयानम्॥ बद्धो येन सुषुम्नायां प्राण उड्डीयते
ततः। तस्मादुड्डीयनाख्योऽयं ज्ञातव्यः परमेश्वरि ।
उड्डीनं कुरुते यस्मादधिश्रान्तो महाखगः। उड्डीयानं
तदेव स्यात् तत्र बन्धो निगद्यते। उदरे पश्चिमे भालं

नाभेरूर्द्धञ्च कारयेत्। उड्डीयानो ह्यसौ बन्धो

मृत्युमातङ्गकेशरी। उड्डीयानन्तु सहजं कथ्यते परमेश्वरि ।

अभ्यासेन वितन्द्रस्तु वृद्धोऽपि तरुणो भवेत्।

नाभेरूर्द्धमधश्चापि ताद्दं कुर्यात् प्रयत्नतः।

षण्मासाभ्यासतो मृत्युं जयत्येव न संशयः। सति वज्रासने

पादौ कराभ्यां धारयेद् दृढम्। फल्गुदेशसमीपे च बन्धं

तत्र प्रपीडयेत्। पश्चिमे ताद्द मुदरे कारयेद्धृददये गले। शनैः

शनैर्यथा प्राणस्तुन्दसिद्धिं स गच्छति। सर्वेषामेव

बन्धानामुत्तमोऽप्युड्डियानकः। उद्डीयाने महेशानि मुक्तिः

स्वाभाविकी भवेत्॥ दत्तात्रेयसंहितायाञ्च॥ उड्डीयानञ्च

सहजं मुनिभिः कथितं सदा। अभ्यसेद् यस्तु सत्त्वस्थो वृद्धोऽपि

तरुणायते। नाभेरूर्द्धमधश्चापि प्राणं कुर्यात् प्रयत्नतः।

षण्मासमभ्यसेन्मृत्युं जयत्येव न संशयः। मूलबन्धस्तु

यो नित्यमभ्यसेत् स तु योगवित्॥ ६॥

अथ जालन्धरबन्धः॥ ग्रहजामले॥ कण्ठमाकुञ्च्य

हृदये स्थापयेच्चिवुकं दृढम्। बन्धो

जालन्धराख्योऽयममृताव्ययकारकः॥ दत्तात्रेयसंहितायाञ्च

। कण्ठमाकुञ्च्य हृदये मारुतं धारयेद् दृढम्। जालन्धरे

बन्ध एष ह्यमृतद्वयपारगः। नाभिस्थाग्निकपालस्थं

सहस्रकमलच्च्युतम्। अमृतं सर्वदास्रावं विन्दुत्वं याति
देहिनाम्। यथाग्निश्च तदमृतं न पिबेच्च पिबेत् स्वयम्। याति
पश्चिममार्गेण एवमभ्यासतः सदा। अमृतं कुरुते देहं
जालन्धरमतोऽभ्यसेत्॥ ग्रहजामले॥ बध्नाति हि शिराजालमध्ये
गामि न भोजनम्। अतो जालन्धरो बन्धः कण्ठे
दुःखौघनाशनः। जालन्धरे कृते बन्धे कण्ठे सङ्कोचने कृते।

p. 805) न पीयूषं पचत्यग्नौ न च वायुः प्रधावति।
कण्ठसङ्कोचनेनैव द्वे नाड्यौ कुम्भयेद् दृढम्।
मध्यचक्रमिदं ज्ञेयं षोडशाधारबन्धनम्।
बन्धत्रयमिदं श्रेष्ठं महासिद्धनिषेवितम्। सर्वेषां
हठतन्त्राणां कुर्यात् साधनमीश्वरि । अथ आकुञ्चनेनाशु
कण्ठसङ्कोचने कृते। मध्ये पश्चिमताद्द ः स्यात् प्राणस्तु
मध्यनाडिगः। ब्रह्मस्थानस्थितो बोधः प्रयाति पवनालयम्।
ततो न जायते मृत्युर्नास्य जरादिकं तथा। मूलस्थानं
समाकुञ्च्य उड्डानाख्यन्तु कारयेत्। इडाञ्च पिङ्गलां बद्ध्वा
वाहयेत् पश्चिमां दिशम्। अनेनैव विधानेन प्राप्नोति पवनो
लयम्। ततो न जायते मृत्युर्जरारोगादिकं तथा॥

अथ विपरीतकरणम्। यत्किञ्चित् स्त्रवते चन्द्रादमृतं

दिव्यरूपिणम्। तत्सर्वं ग्रसते सूर्यस्तेन पिण्डो जरायुतः। तत्रास्ति करणं दिव्यं सूर्यस्य मुखबन्धनम्। गुरुपदेशतो ज्ञेयं न च शास्त्रार्थकोटिभिः। ऊर्द्धं नाभिरधस्ताद्द रूर्द्धं भानुरधः शशी। करणं विपरीताख्यं सर्वव्याधिविनाशनम् । नित्यमभ्याससंयुक्तं जठराग्निविवर्द्धनम्। स्वल्पाहारो निराहारः क्षुधार्त्तो बलहा भवेत्। आहारं बहुलं तस्य सम्पाद्य साधकस्य तु। अप्लाहारो यदि भवेदग्निर्देहं दहेत् क्षणात्। अधः शिराश्चोर्द्धपादः क्षणं स्यात् प्रथमे दिने। क्षणाच्च किञ्चिदधिकमभ्यसेद्धि दिने दिने। बलितं पलितञ्चैव षण्मासाद्धि विनाशयेत्। मासमात्रन्तु यो नित्यमभ्यसेत् स तु कर्णजित्॥ दत्तात्रेयसंहितायामपि॥ पक्षिणा गुदमायुज्य वाममार्गं चरेद्बलात्। वारं वारं यथा चोर्द्धं समायाति समीरणः। प्राणापानौ नादविन्दू मूलबन्धेन चैकताम्। महायोगस्य संसिद्धिं याति नास्त्यत्र संशयः। करणं विपरीताख्यं सर्वव्याधिविनाशनम्। नित्यमभ्यासयुक्तस्य जठराग्निविवर्द्धनम्। आहारा बहवस्तस्य स्वल्पाद्याः साङ्कृते ध्रुवम्। अल्पाहारो यदि भवेदग्निर्दाहं

p. 806) करोति वै। ऊर्द्धं राहुरधश्चन्द्रस्तथा दृष्टिश्च साङ्कृते । अधःशिराश्चोर्द्धपादः क्षणं स्यात् प्रथमे दिने।

क्षणात्तु किञ्चिदधिकमभ्यसेत्तु दिने दिने। बलिश्च पलितश्चैव षण्मासोर्द्धं न दृश्यते। याममात्रन्तु यो नित्यमभ्यसेत् स तु योगवित्॥

अथ वज्रोणी॥ वज्रोणी चामरोणी च सयोनी च त्रिधा मतः। तत्तासां लक्षणं वक्ष्ये कर्त्तव्यञ्च विशेषतः। स्वेच्छया वर्त्तमानोऽपि योगोक्तनियमं विना। वज्रोणीं यो विजानाति स योगी सिद्धिभाजनः। अधोभागे गतं विन्दुमभ्यासेनोर्द्ध्वमाहरेत्। चलितस्तु स्वकं विन्दुमूर्द्ध्वमाकृष्य रक्षयेत्। तत्र वस्तुद्वयं वक्ष्ये दुर्लभं यस्य कस्यचित्। क्षीरञ्चैव द्वितीयञ्च नारी च वशवर्त्तिनी। मेढ्रेण च शनैः सम्यक् कृत्वाकुञ्चनमभ्यसेत्। पुरुषो वापि नारी वा वज्रोणी सिद्धिमाप्नुयात्। प्रयत्नतः शराजालं फुत्कारैः कम्बु वर्द्धयेत्। शनैः शनैः प्रकुर्याच्च वायुसञ्चारकारणात्। भार्याभगगतं विन्दुमभ्यासेनोर्द्ध्वमाहरेत्। बलितं पलितं विन्दुं विन्दुमाकृष्य रक्षयेत्। एवनतु रक्षयन् विन्दुं मृत्यु जयति योगवान्। मरणं विन्दुपातेन जीवितं विन्दुधारणात्। सुगन्धिर्योगिनो देहो जायते विन्दुधारणात्। यावद्विन्दुः स्थितो देहे तावन्मृत्युभयं कुतः। मलायत्तं बलं पुंसां शुक्रायत्तञ्च जीवितम्। तस्माच्छुक्रं मलञ्चैव रक्षणीयं

प्रयत्नतः। ऋतुमत्या रजोऽप्येवं स्वयं विन्दुश्च रक्षयेत्।

मेढ्रादाकर्षयेदूर्द्ध्वं सम्यगभ्यासयोगतः

सहयोन्यमरोणी च वज्रोण्या एव भेदतः। वज्रोणी

मैथुनादूर्द्ध्वं स्त्रीपुंसोः साङ्गलेपनम्। आसीनयोः

सुखेनैव सूक्ष्मव्यापारयोः क्षणात्। सहयोनिरियं प्रोक्ता

श्रद्धया परमेश्वरि । पित्तोल्वणत्वात् प्रथमाञ्च धारां

विहाय निःसारतयान्त्यधाराम्। निषेवते शितलमध्यधारां

p. 807) कफोणिकैः खण्डमतेरमर्यः। अमरीं यः पिबेन्नित्यं

न्यासं कुर्वन् दिने दिने। वज्रोणीमभ्यसेदेवममरोणीति कथ्यते।

यक्षणाकुञ्चनेनोर्द्ध्वं या रजः सा हि योगिनी। अतीतानागतं

ज्ञातं खेचरी च प्रजायते। देहसिद्धिश्च लभते

वज्रोण्यभ्यासयोगतः। अयं शुभकरो योगो भोगान् भुङ्क्ते

विमुक्तिदः॥ ९॥

अथ शक्तिचालनम्॥ कुण्डलाङ्गी कुण्डलिनी भुजङ्गी

शक्तिरीश्वरी। कुण्डल्यरुन्धती देवी शब्दाः पर्यायवाचकाः।

गङ्गायमुनयोर्मध्ये बाला रण्डा तपस्विनी। बलादाकृष्य

गृह्णीयात्तद्विष्णोः परमं पदम्। पुच्छं प्रगृह्य भुजगीं

सुप्तामुद्बोधयेदपि। निद्रां विहाय सा ऋज्वी ऊर्द्ध्वमुत्तिष्ठते

हठात्। वज्रासनस्थितो योगी चालयित्वा तु कुण्डलीम्।
कुर्यादनन्तरं भस्त्रां कुण्डलीमाशु बोधयेत्।
मृत्युवज्रगतस्यापि ततो मृत्युभयं कुतः।
मुहूर्त्तद्वयपर्यन्तं निर्भयं चालनादसौ। ऊर्द्ध्वमाकर्षते
किञ्चित् सुषुम्नां कुण्डलीगताम्। तेन कुण्डलिनी तस्याः
सुषुम्नायाः समुद्गताः। जहाति नित्यं प्राणोऽयं सुषुम्नां
व्रजति स्वनः। तस्मात् सञ्चालयेन्नित्यं शब्दगर्भामरुन्धतीम्।
यस्याः सञ्चालनेनैव रोगी रोगैर्विमुच्यते। येन सञ्चालिता शक्तिः
स योगी सिद्धिभाजनः। किमत्र बहुनोक्तेन कालं जयति लीलया।
अभ्यासान्निःसृतां चैन्द्रीं सह नित्यं समाश्रयेत्।
धारयेत्तूत्तमाङ्गे च दिव्यदृष्टिप्रदायिकाम्। इति मुद्रा दश
प्रोक्तास्तव स्नेहान्महेश्वरि । एकैका चाशु यमिनां
महासिद्धिप्रदायिनी। राजयोगं विना पृथ्वी राजयोगं विना शिला
। राजयोगं विना निद्रा विचित्रापि न राजते। मारुतस्य विधिं सर्वं
मनोयुक्तं मनीषिणाम्। शिवापि मध्यमा नाडी दृढाभ्यासे च
योगिनाम्। आसने प्राणसंयोगे मुद्राभिः सकला भवेत्।

p. 808) उपसन्नेऽपि मुद्राणां राजयोगः समुद्रवत्।
रुद्राणाञ्चापरा मुद्रा तदा सिद्धिं प्रयच्छति॥

इति प्राणतोषिण्यां षष्ठे ज्ञानकाण्डे

पञ्चामरादिमुद्रादशकरूपग्रन्थिकथनं नाम प्रथमः

परिच्छेदः॥

दत्तात्रेयसंहितायाम्॥ पञ्चधारणानन्तरम्॥ पृथिवीधारं

वक्ष्ये पार्थिवेभ्यो भयावहम्। नाभेरधो गुदस्योर्द्धं

घटिकाः पञ्च धारयेत्। वायुं ततो भवेत् पृथ्वीधारणं

तद्भयापहम्। पृथिवीसम्भवात्तस्य न मृत्युर्योगिनो भवेत्।

नाभिस्थाने ततो वायुं धारयेत् पञ्च नाडिकाः। ततो जलभयं

नास्ति जलमृत्युर्न योगिनः। नाभ्यूर्द्धमण्डले वायुं धारयेत्

पञ्च नाडिकाः। आग्नेयी धारणा सेयं न मृत्युस्तस्य वह्निना।

न दह्यते शरीरं हि प्रक्षिप्ते वह्निकुण्डके। नाभिभ्रुवोर्हि मध्ये

तु प्रादेशद्वयसम्मिते। धारयेत् पञ्च घटिका वायुं सैव हि

वायववी। धारणात्तस्य वायोस्तु योगिनो न भयं भवेत्।

भ्रूमभ्यादुपरिष्टात्तु धारयेत् पञ्च नाडिकाः। वायुं योगी

प्रयत्नेन सेयमाकाशधारणा। आकाशधारणं कुर्वन्मृत्युं

जयति तत्त्वतः। यत्र तत्र स्थितो वापि सुखमत्यन्तमश्नुते। एवञ्च

धारणाः पञ्च कुर्याद्योगी विधानतः। ततो दृढशरीरस्य

मृत्युरस्य न विद्यते। इत्येवं पञ्चभूतानां धारणं यः

समभ्यसेत्। ब्रह्मणः प्रलये वापि तस्य मृत्युर्न विद्यते।

समभ्यसेत्तदा ध्यानं घटिकाः षष्टिमेव च। वायुं निरुध्य
तां ध्यायेद्देवतामिष्टसाधिनीम्। सगुणध्यानमेतत्
स्यादणिमादिसुखप्रदम्। निर्गुणं खमिव ध्यायेन्मोक्षमार्गः
प्रवर्त्तते। निर्गुणध्यानसम्पन्नः समाधिञ्च समभ्यसेत्।
दिनद्वादशकेनैव समाधिं समवाप्नुयात्। वायुं निरुध्य
मेधावी जीवन्मुक्तो भवेद्ध्रुवम्। समाधिः समतावस्था

p. 809) जीवात्मपरमात्मनोः। यदि स्याद्देहमुत्स्त्रष्टुमिच्छा
चेदुत्सृजेत् स्वयम्। परं ब्रह्मणि लीयेत त्यक्त्वा कर्म
शुभाशुभम्। अथ नोचेत् समुत्सृष्टं स्वशरीरं यदि प्रियम्।
सर्वलोकेषु विचरेदणिमादिगुणान्वितः। कदाचित् स्वेच्छया देवो
भूत्वा स्वर्गेऽपि सञ्चरेत्। मनुष्यो वापि यक्षो वा स्वेच्छयापि
क्षणाद्भवेत्। सिंहो व्याघ्रो गजो वापि स्यादिच्छातोऽन्यजन्मताम्।
यथेष्टमेव वर्त्तेतयोगी विद्वान्महेश्वरः। कविमार्गोपयुक्तं ते
साङ्कृतेऽष्टाङ्गयोगतः। सिद्धानां कपिलादीनां मतं
वक्ष्ये ततः परम्। अभ्यासभेदात्तद्भेदेन फलं तत्समं तथा।
इत्यनन्तरं जलन्धरादिरुक्तः। तेन दत्तात्रेयमते जलन्धरादिं
विनापि योगी भवतीति सुधीभिर्विभाव्यावगन्तव्यम्। पक्षिणा
गुदमायुज्य वाममार्गं चरेद्बलात्। वारं वारं यथा
चोर्द्ध्वं समायाति समीरणः। प्राणापानौ नादविन्दू

मूलबन्धेन चैकताम्। महायोगस्य संसिद्धिं याति नास्त्यत्र
संशयः। करणं विपरीताख्यं सर्वव्याधिविनाशनम्।
नित्यमभ्यासयुक्तस्य जठराग्निविवर्द्धनम्। आहारा बहवस्तस्य
सम्पाद्याः साङ्कृते  ध्रुवम्। अल्पहारो यदि भवेदग्निर्दाहं
करोति वै। ऊर्द्धं राहुरधश्चन्द्र तथा दृष्टिश्च साङ्कृते ।
अधःशिराश्चोर्द्धपादः क्षणात् स्यात् प्रथमे देने। क्षणात्तु
किञ्चिदधिकमभ्यसेत्तु दिने दिने। बलिश्च पलितश्चैव
षण्मासोर्द्धं न दृश्यते। याममात्रन्तु यो नित्यमभ्यसेत् स तु
योगवित्। वज्रोणीं ते प्रवक्ष्यामि योगिभिर्गोपितं सदा। अतीव
तद्रहस्यं हि न देयं यस्य कस्यचित्। लभ्यते यदि तस्यैकं
योगसिद्धिकरं परम्। क्षीरमङ्गरसं चेति द्वयोराद्यश्च
लभ्यते। तृतीयं बलिनां पुंसां स्त्रीभ्यः साध्यमुपागतः।
योगाभ्यासरता स्त्री च पुंसां यत्नेन साधयेत्। पुंसां स्त्री वा
तदन्यद्वा स्त्रीत्वं पुंस्त्वमपेक्षया। स

p. 810) प्रयोजनमात्रैकसाधनात् सिद्धिमाप्नुयात्। गलितो यदि
विन्दुस्तु मूर्द्ध्नि चाकृष्।य धारयेत्। एवं हि रक्षिते विन्दौ मृत्यं
जयति तत्त्वतः। मरणं विन्दुपातेन जीवनं विन्दुरक्षणात्।
विन्दुरक्षाप्रसादेन सर्वे सिध्यन्ति योगिनः। अमरोणिस्तु यथा स्यात्
सहयोनिस्ततो यथा। तदभ्यासक्रमो ज्ञेयः सिद्धानां

सम्प्रदायतः। एतैः सर्वैस्तु कथितैरभ्यसेत् कालयोगतः। ततो भवेद्राजयोगो नान्तरीभवति ध्रुवम्। न दिङ्मात्रेण सिद्धिः स्यादभ्यासो नैव जायते। राजयोगपदं प्राप्य सर्वसङ्कल्पभञ्जकम्। सर्वं कुर्यान्न वा कुर्याद् यथारुचि विचेष्टितम्। तथान्तरा च योगेन निष्पन्ना योगिनः क्रिया। तदावस्था हि नश्यन्ती भक्तिमुक्तिप्रदा भवेत्॥

प्राणायामस्य फलान्तरन्तु ग्रहयामले॥ आदौ चन्द्रः सिते पक्षे भास्करस्तु सितेतरे। प्रतिपत्क्रमतो हानिस्त्रीणि कृत्वोदयत्ययम् ॥ त्रिपुरासारमुच्चये तु॥ अमावास्यावध्युदयमाह यथा॥
आरभ्य दर्शं प्रथमामुदेति वामे पुटे त्रीणि दिनानि देवः।
वामेतरे त्रीणि ततो दिनानि पूर्णां तिथिं यावदथैवमेवम्॥
एकस्य पक्षस्य विपर्ययेण रोगाभिभूतिर्भवतीह पुंसाम्।
पक्षद्वये बन्दुसुहृद्विपत्तिः पक्षत्रये व्यत्ययतो मृतिः स्यात्॥
ब्रह्मजामले॥ चन्द्रोदये यदा सूर्यश्चन्द्रः सूर्योदये यदा।
अशुभं हानिरुद्वेगः शुभं सर्वं नियोजयेत्। चन्द्रोदये वामनाड्यां वायुगमननिरूपितसमये एवं सूर्योदये दक्षिणनाड्यां वायुगमननिरूपितसमये कर्मविशेषः। नासिकयोर्वायोः प्रवेशनिर्गमाभ्याञ्च शुभत्वमपि तत्रैव॥
यात्रादाने विवाहे च वस्त्रालङ्कारधारणे। शुभकर्मषु सर्वेषु

प्रवेशे च शशी शुभः। विग्रहद्यूतयुद्धेषु
स्नानभोजनमैथुने। व्यवहारे भये भङ्गे भानुनाडी
प्रशस्यते। मोहनं शान्तिकञ्चैव दिव्यौषधिरसायनम्।

p. 811) विद्यारम्भः स्थिरं कार्यं कर्त्तव्यञ्च निशाकरे।
दूरयुद्धे जयी चन्द्रः समासन्ने दिवाकरः। वहन्नाडीपदे चैव
यात्रा भवति सिद्धिदा॥ यस्यां नासिकायां
प्राणवायोर्गतिर्वक्ष्यते तदंशीयपादप्रसारणपूर्विका यात्रा
सिद्धिदा भवतीत्यर्थः। शयने च प्रसङ्गे वा युवत्यालिङ्गनेऽपि
वा। यः सूर्येण पिबेच्चन्द्रं स भवेन्मकरध्वजः॥ सूर्येण
दक्षिणनासिकास्थप्राणवायुना चन्द्रं नार्या
वामनासिकागतप्राणवायुं पिबति तत्सङ्गमकाले
स्वीयनिश्वासमतिनिविष्टः सन्नाकर्षयति। तत्फलं तत्रैव।
चन्द्रचारी विषं हन्ति सूर्यो बालां वशं नयेत्। सुषुम्नायां
भवेन्मोक्ष एको देवस्त्रिधा मतः। भुक्तमात्रेण मन्दाग्नी
स्त्रीणां वश्येऽथ कर्मणि। शयनं सूर्यवाहेन कर्त्तव्यं
सर्वदा बुधैः। शान्ते शोके विवादे च ज्वरिते मूर्च्छिते तथा।
सज्जनस्यापि बोधार्थे चन्द्रचारं प्रवाहयेत्। भुक्तमात्रादौ
वामपार्श्वेन श्रान्तादिषु दक्षिणपार्श्वेन शयनं कार्यमिति
तात्पर्यम्। चतुर्दिक्षूर्द्धमधस्ताच्चान्यतरस्थानमाश्रित्य यदि

दूतः पृच्छति तदा कस्यां नाड्यां वायुगतिः शुभेत्याह॥
ऊर्द्ध्ववामाग्रतो दूतो ज्ञेयो वामपथस्थितः। पृष्ठे दक्षे
तथाधस्तात् सूर्यवाहगतो मतः। पूर्णनाडीगतो दूतो यत्
पृच्छति शुभाशुभम्। तत्सर्वं सिद्धिमाप्नोति शून्ये शून्यं न
संशयः। आदौ शून्यगतः पृच्छेत् पश्चात् पूर्णो विशेद् यदि।
तदा सर्वार्थसिद्धिः स्यादिति जानीहि निश्चितम्॥ इदानीं
प्राणवायोः प्रवेशनिर्गमाभ्यां विशेषमाह॥ प्रवेशकाले
यद्धूतो वाञ्छति स्वप्रयोजनम्। तत्सर्वं सिद्धिमाप्नोति निर्गमे
नास्ति सुन्दरम्॥ कर्मविशेषे नाडीविशेषगतिमाह॥ मारणं
मोहनं स्तम्भं विद्वेषोच्चाटनं तथा।
प्रेरणाकर्षणक्षोभं भानुनाड्युदये कुरु। शान्तिकं
पौष्टिकं क्षेमं दिव्यौषधिरसायनम्। योगाभ्यासादिकर्माणि
कर्त्तव्यानि निशाकरे॥ त्रिपुरासारसमुच्चये॥ भूतानामुदयं

p. 812) द्वयोरपि बुधः संलक्षयेत् पक्षयोस्तत्रादौ वसुधोदयं
निहितधीर्घ्राणस्य दण्डस्पृशि। देवेऽधःस्पृशि वारिणो
हुतवहस्योर्द्ध्वा गतिश्चोदयं तिर्यक्संस्पृशि मारुतस्य परितः
पृष्ठे मरुद्वर्त्मनः॥ देवे प्राणवायौ॥ फलं जामले॥
पृथ्वीजले शुभे तत्त्वे तेजो मिश्रफलोदयम्। हानिमृत्युकरौ
पुंसामुभयौ व्योममारुतौ।

कर्मविशेषे भूतोदयफलम् त्रिपुरासारे॥

वश्यस्तम्भनयोः प्रशस्त उदयो भूमेर्जलस्योदयः शस्तः

शान्तिकपौष्टिकादिषु शुभेष्वह्नाय वह्नेः पुनः।

शत्रोर्मारणदारणादिकरणे उच्चाटनोच्छेदयोर्वायोः

शान्तिकनिर्विषीकरणयोर्व्योम्नो हितश्चोदयः॥

कियत्कालमेकनाडीगतो वायुर्भवति तत्रापि पञ्चभूतोदयः केन

ज्ञेय इत्यपेक्षायां नाडीगतिकालं स्थानक्रमेण

भूतोदयञ्चाह जामले॥ एकैकस्य कलाः पञ्च क्रमेणैवोदयन्ति

ताः। पृथिव्यापस्तथा तेजो वायुराकाशमेव च। मध्ये पृथ्वी

त्वधश्चाप ऊर्द्ध्वं वहति चानलः। तिर्यग्वायुप्रवाहश्च नभो

वहति सङ्क्रमे॥ प्रपञ्चसारेऽपि॥ पुटयोरुभयोश्च

दण्डसंस्था पृथिवी तोयमधः कृशानुरूर्द्धम्। पवनस्त्वथ

पार्श्वगोऽपि मध्ये गगनं भूतगतिस्तनूद्भवेयम्॥ तत्रापि

बाल्याद्यवस्थाभेदमाह॥ रुद्रजामले उत्तरखण्डे

एकादशपटले॥ स्वकीयनासिकाग्रस्थं पञ्चमं परिकीर्त्तितम्।

यन्नासापुटमध्ये तु वायुर्भ्रमति भैरव ।

तन्नासाप्यूर्द्धमध्ये तु भावाभावं विचारयेत्। आकाशं

वायुरूपं हि तैजसं प्रभो । पार्थिवं क्रमशो ज्ञेयं

बाल्यास्तादिक्रमेण तु। वामोदये शुभा वामा दक्षिणे पुरुषः

शुभः। वायूनां गमनं ज्ञेयं गगनावधिरेव च। केवलं
मध्यदेशे तु गमनं पवनस्य च। तदाकाशं
विजानीयाद्बाल्यभावं प्रकीर्त्तितम्। तिर्यग्गतिस्तु नासाग्रे
वायोरुदयमेव च। केवलं भ्रमणं ज्ञेयं सर्वमङ्गलमेव

p. 813) च। किशोरं तद्विजानीयाद्वायो तिर्यग्गतौ विभो ।
केवलार्द्धनासिकाग्रे वायुर्गच्छति दण्डवत्। तत्तैजसं
विजानीयात्तेजसा बलवान् भवेत्। यौवनं तद्विजानीयात्
कर्मसिद्धिर्भवेद्ध्रुवम्। यदावाप्य गच्छतीह
नासापुटमनाकुलम्। जलोदयं विजानीयात् तदा व्यामोहमेव च।
तद्वृद्धगतभावश्च विलम्बोऽधिकचेष्टया। प्राप्नोति परमां
प्रीतिं वारुणार्णोदयेऽरुणम्। यदधो गच्छति क्षिप्रं
किञ्चिदूर्द्ध्वमगोचरम्। यदा करोति प्राग्बालं तदा रोगाद्
बलोदयः पृथिव्या उन्नतं भाग्यं रोगार्त्तिपरिपीडितम्। अस्तमितं
महादेव  अनुलोमविलोमतः। पवनो गच्छति क्षिप्रं
वामदक्षिणभेदतः। वामनासापुटं याति पृथिवी जलमेव च।
सदा फलाफलं दातुमुदिता कुलमण्डले। तयोर्वै वायवी शक्तिः
फलभागं तदा लभेत्। इत्यवस्थाभेदतत्फलकथनं तत्रैव॥
यद्येवं वामभागे तु बालायाः प्रश्नकर्मणि। यदि तत्र पुमान्
प्रश्नं करोति वामगामिनी। तदा रोगमवाप्नोति

कर्महानिर्भवेद्धुवम्। यदि वायूदयो वामे दक्षिणे पुरुषः स्थितः। तदा कुफलमाप्नोति द्रव्यागमनदुर्लभम्। अकस्माद्द्रव्यहानिः स्यान्मनोगतफलापहम्। सुहृद्भङ्गं विवादश्च भिन्ने भिन्नोदयाच्छुभम्। केवलं वरुणस्यैव पुरुषो दक्षिणे शुभः। अशुभं पृथिवीदक्षे भेदोऽयं वरदुर्लभः। सदोदयं दक्षिणे च वायोस्तैजस एव च। आकाशस्य विजानीयाच्छुभाशुभफलं प्रभो । यदि भाग्यवशादेव वायोर्मन्दगतिर्भवेत्। दक्षनासामध्यदेशे तदा वामोदयं शुभम्। तदा वामे विचारश्च वायुतेजःस्वरस्य च। ज्ञात्वोदयं विजानीयान्मिश्रे हानिः स्वरे भयम्। एवं स्वभुवनागारे यदि गच्छति वायवी। तस्मिन् काले पुमान् वामदक्षभागस्थसम्मुखः । तदा कन्यादानफलं यथा प्राप्नोति मानवः तदा

p. 814) वायुप्रसादेन प्राप्नोति धनमुत्तमम्। देशान्तरशुभा वार्त्ता आयाति पुत्त्रसम्पदः। इति स्त्रीपुंसभेदेन फलकथनम्॥

सूक्ष्मस्वरोदये॥ गुरुशुक्रबुधेन्दूनां वासरे वामनाडिकाः। सिध्यन्ति सर्वकार्येषु कृष्णपक्षे विशेषतः अर्काङ्गारकसौराणां वासरे दक्षनाडिका। स्मर्त्तव्या चिरकामेण शुक्लेनैवोदयः स्थितः। क्रमादेकैकनाड्यास्तु

तत्त्वानां पृथगुद्भवः। अहोरात्रस्य मध्ये तु ज्ञेया
द्वादशसंक्रमाः। वृषकर्कटकन्यालिमृगमीननिशाकरे। मेषे
सिंहे च धनुषि तुलायां मिथुने घटे। उदयो दक्षिणे ज्ञेयः
शुभाशुभविनिर्णयः। इति वारादिभेदेन
नाडीविशेषफलकथनम्॥ तिष्ठेत् पूर्वोत्तरे चन्द्रो भानुः
पश्चिमदक्षिणे। दक्षनाड्याः प्रवाहे तु न गच्छेद्दक्षपश्चिमे।
इति नाडीविशेषेण दिग्ज्ञानम्॥ वामाचारप्रवाहे तु न गच्छेत्
पूर्व उत्तरे। परिपन्थी भवेत्तस्य गतोऽसौ न निवर्त्तते। तस्मादत्र न
गन्तव्यं बुधैः सर्वहितैः शुभैः। तदा तत्र तु
सञ्जातमृत्युरेव न संशयः॥ इति वहन्नाडीकस्य
दिग्विशेषगमननिन्दा॥ शुक्लपक्षे द्वितीयायामर्के वहति
चन्द्रमाः। प्रदृश्यते महाँलाभः पुंसः सौम्यं प्रजायते।
सूर्योदये यदा सूर्यश्चन्द्रे चन्द्रोदयो भवेत्। सिध्यन्ति
सर्वकार्याणि दिवारात्रिगतान्यपि॥ इति स्वस्वनाडीफलकथनम्॥
चन्द्रकार्ये यदा सूर्यः सूर्यश्चन्द्रोदये भवेत्। उद्वेगः कलहो
हानिः शुभं सर्वं निधारयेत्॥ इति विपरीतनिन्दा॥ सूर्यस्य वाहे
प्रवदन्ति जालम् एकासने युक्तमनस्थिरञ्च। श्वासेन युक्तस्य तु
शीतरश्मेः प्रवाहकाले फलमन्यदस्याम्॥ यदि प्रत्यूषकाले तु
विपरीतोदयो भवेत्। चन्द्रस्थाने स्थिते चार्के रविस्थाने च चन्द्रमाः
। प्रथमे मानसोद्वेगं धनहानिं द्वितीयके। तृतीये गमनं

ज्ञेयमिष्टनाशं चतुर्थके। पञ्चमे राज्यविभवं षष्ठे
सर्वार्थनाशनम्। सप्तमे व्याधिदुःखानि अष्टमे मृत्युमृच्छति॥

p. 815) इति दिनभेदेन विपरीतफलम्॥ कालत्रयं विनानिष्टं
विपरीतं यदा भवेत्। तदा दुष्टफलं प्रोक्तं
किञ्चिन्न्यूनेऽतिशोभनम्। प्रातर्मध्याह्नयोश्चन्द्रः सायंकाले
दिवाकरः। तदा नित्यं जयोलाभो विपरीतन्तु दुःखदम्॥ इति
कालभेदेन कालफलम्। वामे वा दक्षिणे वापि यत्राप्याक्रम्यते
स्वरः। कृत्वा तत्पदमाद्यञ्च यात्रा भवति सिद्धिदा॥ इति
वहन्नाडीकस्य यात्राफलम्॥ चन्द्रः सम्पदकार्याणि रविन्तु
विषमं सदा। पूर्णपादं पुरः कृत्वा यात्रा भवति सिद्धिदा।
सप्तपादाः शनौ शुक्रे ज्ञातव्याश्च विचक्षणैः। चन्द्रो
रविपदं रुद्र  कुजमन्दं तथैव च। सार्द्धं सदा गुरुपदौ
ज्ञातव्यौ च विचक्षणैः॥ इति वारभेदे पादयात्राभेदः॥
लोकानां शीघ्रं गन्तुञ्च कुशलायाङ्गमिष्यते। परदले यथा
ग्राह्यो हानिश्च कलहागमे। यदङ्गं वहते नाडी ग्राह्यं
गतिकरं नृणाम्। चन्द्रचारे चतुष्पादं पञ्चपादञ्च भास्करे
॥ इति वारभेदे पादयात्राभेदः॥

एवञ्च गमनं श्रेष्ठं साधयेद्भुवनत्रयम्।

यत्राङ्गे चरते वायुस्तदङ्गस्य करस्तथा। सुप्तोत्थितमुखं
श्रेष्ठं लभते वाञ्छितं फलम्। न हानिः कलहो नैव
कण्टकैर्नापि भिद्यते। निवर्त्तते सुखेनव सर्वोपद्रववर्जितः॥ इति
वहन्नाडीहस्तेन मुखमार्जनफलम्। गुरुर्बन्धुर्नृपश्चात्मा
अन्येऽपि शुभदायिनः। पूर्णाङ्गे खड्ग कर्त्तव्या
कार्यसिद्धिर्मनीषिभिः। ऐरी चौराम्वुवर्णाद्या
अन्येषाञ्चादिविग्रहः। कर्त्तव्या खड्ग रिक्तायां जयलाभः
सुखार्थिभिः। दूरदेशे निधातव्यं गमनन्तु हिमद्युतेः। तेभ्यो
न देयो दीप्ते च भवनावर्त्तनञ्च न। तत्किञ्चित् पूर्वमुद्दिष्टं
लाभादिसमरागमम्। तत्सर्वं पूर्वनाडीषु जायते निर्विकल्पकम्
। शून्यं नाडीविपरीतं यत् पूर्वं प्रतिपादितम्। जायते

p. 816) नान्यथा चैव यथा सर्वज्ञभाषितम्। हव्यवाहे
खलोच्चाटे देवविद्यादिवञ्चके। कुपितः स्वाद्विठो वाद्याः
पूर्णस्थाः स्युर्भयङ्कराः॥ इति पूर्णरिक्तफलम्॥ दूराध्वनि
शुभश्चन्द्रो निर्विघ्नेऽभीष्टसिद्धिदः। प्रवेशकार्यहेतुषु
सूर्यः शीघ्रं प्रशस्यते। चन्द्रचारी विषं हन्ति सूर्ये बाला
वशं नयेत्। सुषुम्नायां भवेन्मोक्ष एको देवः स्थिरास्थितः। स
योगी योगता नाडी योगस्थानेऽपि योग्यता। कार्यानुबन्धनं
जीवं कथमूर्द्धं समाचरेत्। शुभाशुभानि कार्याणि

क्रियतेऽहर्निशं यदा। तदा कार्यानुरोधेन कार्यं
नाडीप्रचालनम्॥ इति नाडीचालनकारणम्। चालनन्तु गुरुतो
ज्ञातव्यम्॥

अथेडास्थिरकर्माणि दूराध्वगमने तथा। आश्रमे
हर्म्यप्रासादे वस्तूनां सङ्ग्रहेऽपि च।
वापीकूपतडागादिप्रतिष्ठान्ते तु देवयोः। यात्रादाने विवाहे च
वस्त्रालङ्कारभूषणे। शान्तिकं पौष्टिकञ्चैव
दिव्यौषधिरसायनम्। स्वामिसन्दर्शने यात्रावाणिज्यानाञ्च
सङ्ग्रहे। गृहप्रवेशे सेवायां कृषीणां वीजवापने।
शुभकर्माणि सन्धौ च निर्गमे वा शुभः शशी॥ इति कर्मविशेषे
कर्मनाडीफलम्॥ विद्यारम्भादिकार्येषु बान्धवानाञ्च
दर्शने। जनमुखे च धर्मे च दीक्षायां मन्त्रसाधने।
कालव्याधिचिकित्सायां स्वामिसम्बोधने तथा। गजाश्वारोहणे
धन्विगजाश्वानाञ्च बन्धने। परोपकरणे चैव निधीनां
स्थापने तथा। गीतवाद्यादिनृत्याद्यैर्गीतशास्त्रविचारणे।
पुरग्रामनिवासे च तिलकच्छत्रधारणे। शान्तिशोके विषादे च
ज्वरिते मूर्च्छितेऽपि वा। स्वजने स्वामिसम्बन्धे
धान्यादेर्दारुसङ्ग्रहे। स्त्रिया आनन्दभूषाणां
विष्टरागमने तथा। गुरुपूजाविषादानाञ्चालनञ्च वरानने ।

इडायां सिद्धिदं प्रोक्तं योगाभ्यासादिकर्म च॥ इति कर्मविशेषे नाडी॥ तत्रापि वर्जयेद्वायुस्तेज आकाशमेव च।

p. 817) सर्वकर्माणि सिध्यन्ति दिवा रात्रौ गतानि च। सर्वत्र शुभकार्येषु चन्द्रचारः प्रशस्यते।

अथ पिङ्गला। कठिनक्रूरविद्यानां पठने पाठने तथा। स्त्रीसङ्गवेश्यागमने महानौकादिरोहणे। इष्टकार्ये सुरापाने वीरमन्त्र उपासने। बहुलध्वंसदेशादिविषदानादिवैरिणाम्। शास्त्राभ्यासे च गमने मृगादिपशुविक्रमे। इष्टकाकाष्ठपाषाणे रत्नघर्षणदारुणे। गीताभ्यासे यन्त्रतन्त्रे दुर्गपर्वतरोहणे। द्यूते चौरगजाश्वादिरथवाहनसाधने। व्यायामे मारणोच्चाटे षट्कर्मादिषु साधने। रक्षिणीयक्षवेतालविश्वभूतादिसंग्रहे। खरोष्ट्रमहिषादीनां गजस्यारोहणे तथा। नदीजलौघतरणे भेषजे लेखने मणेः। मारणं मोहनं स्तम्भविद्वेषोच्चाटनं वशम्। प्राण आकर्षणे दाने चक्रविक्रयणे तथा। खड्गहस्ते वैरियुद्धे भोगे वा राजदर्शने। भोजने व्यवहारे च क्रूरे दीप्ते रविः शुभः। भुक्तमात्रे च मन्दाग्नौ स्त्रीणां वश्यार्थकर्मणि। शयनं सूर्यबाहेन

कर्त्तव्यं सर्वदा बुधैः। क्रूराणि सर्वकर्माणि चराणि विविधानि
च। तानि सिध्यन्ति सूर्येण नात्र कार्या विचारणा। इति कर्मविशेषे
पिङ्गलाफलम्॥

अथ सुषुम्ना॥ क्षणं वामे दक्षे यदा वहति मारुतः।
सुषुम्ना सा च विज्ञेया सर्वकार्यहरा शुभा। तस्यां नाड्यां
स्थितो वह्निर्ज्वलन्ति कालरूपिणः। विषमं तं विजानीयात्
सर्वकार्यविनाशनम्। यदानुक्रममुल्लङ्घ्य तस्यां नाड्यां
द्वयं वहेत्। तदा तस्य विजानीयादशुभं समुपस्थितम्। क्षणम्
वामे क्षणं वायुर्विषमं भावमादिशेत्। विपरीतफलं
ज्ञेयं ज्ञातव्यञ्च वरानने । उभयोरेव सञ्चारी विषमं
तं विदुर्बुधाः। न कुर्यात् क्रूरसौम्यानि तत्सर्वं निष्फलं
भवेत्। जीविते मारणप्रश्ने लाभालाभौ जयाजयौ। विषमे

p. 818) वैपरीत्यस्य स स्मरेज्जगदीश्वरम्। ईश्वरं चिन्तितं
कार्यं योगाभ्यासादिकर्म च। अन्यत् किञ्चिन्न कर्त्तव्यं
जयलाभसुखादिभिः। सूर्येण वहमानायां सुषुम्नायां
मुहुर्मुहुः। शापं दद्याद्वरं दद्यात् सर्वदा च तदन्यथा।
नाड्यसंक्रमणे काले तत्त्वसंक्रमणे तथा। शुभं किञ्चिन्न
कर्त्तव्यं पुण्यदानादि कोटिधा  विषमद्वितीयायां त्रिस्थोऽपि

मनसापि न चिन्तयेत्। यात्राहानिकरी तस्य मृत्युकाले न संशयः।
पुरोनासोर्द्ध्वतश्चन्द्रो दक्षोर्द्ध्वे पृष्ठतो रविः।
पूर्णारिक्तविवेकोऽयं ज्ञातव्यो देशिकैः सदा।
ऊर्द्ध्ववामाग्रतो दूतो ज्ञेयो वामपथि स्थितः। पृष्ठे दक्षे
तथाधस्तात् सूर्यवाहो गतो मतः। अनादि विषमं
सन्धिनिराहारं निराकुलम्। परं सूक्ष्मं विलीयन्ते सा सन्ध्या
सन्धिरुच्यते। विषवत् सन्धिकाप्रश्नः सा सन्ध्या सन्धिरुच्यते। न
वेदं वेदमित्याह वेदो वेदो निगद्यते। परमात्मा हि यत्रास्ति स
वेदो वेद उच्यते। इति नाडीत्रयभेदनिर्णयः॥

श्रीदेव्युवाच॥

देवदेव महादेव सर्वसंसारतारक । स्थितं त्वदीयहृदये
रहस्यं वद मे प्रभो ।

श्रीशिव उवाच॥

स्वरज्ञानरहस्यन्तु न किञ्चिदिष्टदेवता। स्वरज्ञानरतो योगी स
योगी परमो मतः। पञ्चतत्त्वाद्भवेत् सृष्टिस्तत्त्वे तत्त्वं विलीयते।
पञ्चतत्त्वात् परं तत्त्वं तत्त्वात्मानं निरञ्जनम्।

तत्त्वानां नाम विज्ञेयं सिद्धियोगेन योगिनः। भूतानां
दुष्टचिह्नानि जानन्ति हि सुरोत्तमाः। पृथिव्यापस्तथा तेजो
वायुराकाश एव च। पञ्चभूतात्मकं सर्वं यो जानाति स
पूजकः। सर्वलोकस्य जीवेन न भेदं भिन्नतत्त्वकम्।
भूर्ल्लोकसत्यपर्यन्तं नाडीभेदं पृथक् पृथक्। भूर्लोको
नाभिः सत्यं मस्तकं तत्र तल्लोकावस्थानात्। वामे वा दक्षिणे

p. 819) वापि उदयश्च प्रकीर्त्तितः। अष्टधा धातुविज्ञानं शृणु
वक्ष्यामि सुन्दरि । प्रथमे तत्त्वसंख्यायां द्वितीये
श्वाससन्धिषु। तृतीये स्वरचिह्नानि चतुर्थे प्राणमेव च।
पञ्चतत्त्वस्य वर्णः स्यात् षष्ठे च स्थानमेव च। सप्तमे
स्वादुसंयुक्तं अष्टमे गतिलक्षणम्। एवमष्टविधं प्राणं
विषमं तत् चराचरम्। स्वरात्परतरं देवि नान्यत् स्थातुं
कदाचन। निरीक्षितव्यं यत्नेन यदा प्रत्यूषकालतः। कालस्य
वञ्चनार्थाय कर्म कुर्वन्ति योगिनः।
श्रुत्योरङ्गुष्ठयोर्मध्याङ्गुल्योर्नासापुटद्वये। वदने
प्रान्तगोपान्तेऽङ्गुलं देशे दृगद्वयोः। अस्या भूतपृथिव्यादि
तत्त्वज्ञानं भवेत् क्रमात्।
पीतश्वेतारुणश्यामविन्दुभिर्निरुपाधिकम्। दर्पणे च समालोक्य
तत्र श्वासं विनिक्षिपेत्। आकारन्तु विजानीयात्तत्त्वभेदं

विचक्षणः। इति भूतप्रक्रिया॥ चतुरस्त्रमर्द्धचन्द्रं कौण्यं
वर्त्तुलसम्मितम्। विन्दुभिस्तु न विज्ञेयं साकारैस्तत्त्वलक्षणम्।
मध्ये अर्द्धञ्च पश्चादर्द्धञ्च वहतेऽनलः।
तीर्थवायुप्रवाहञ्च नभो वहति संक्रमे। इति
भूतज्ञानप्रकारः। आपः श्वेताः क्षितिः पीता रक्तवर्णो
हुताशनः। मारुता नीलजीमूता आकाशं सर्ववर्णकम्। इति
भूतरूपाणि। स्कन्धद्वये स्थितो वह्निर्नाभिमूले प्रभञ्जनः।
जानुदेशे क्षितिस्तोयं पादान्ते मस्तके नभः॥ इति
स्थानविशेषस्थतत्त्वेन भूतज्ञानम्॥ महीयं मधुरस्वादुः
काषायं मधुरं जलम्। तिक्तं तेजः समीरोऽम्लमाकाशं
कटुकं तथा। इति भूतरसाः। अष्टाङ्गुलं
वहेद्वायुरनलश्चतुरङ्गुलम्। द्वादशाङ्गुलं माहेयं
षोडशाङ्गुलं वारिणः। इति भूतगतिः। ऊर्द्धमृत्युरधः
शान्तिस्तिर्यगुच्चाटनं तथा। मध्ये स्तम्भं विजानीयान्नभः
सर्वत्र मध्यमम्। पृथिव्यां स्थिरकर्माणि चरकर्माणि वारुणे।
तेजसि क्रूरकर्माणि मारणोच्चाटनेऽनिले। व्योम्निकिञ्चिन्न

p. 820) कर्त्तव्यं मध्यमो योगसेवया। इति भूतविशेषे
षट्कर्मविशेषः। शून्ये तु सर्वकार्येषु नात्र कार्या विचारणा।
पृथ्वीजलाभ्यां सिद्धिः स्यान्मृत्युवह्नौ क्षयोऽनिले। नभस्यं

निष्फलं सर्वं ज्ञातव्यं तत्त्ववेदिभिः। चिरलाभा क्षितिर्ज्ञेया तत्क्षणात्तोयतत्त्वतः। हानिः स्याद्वह्निवाताभ्यां नभस्यं विफलं लभेत्। पीतश्योणैर्मध्यवाही तनुपीवरवद्भूतिः। कवोष्णः पार्थिवो वायुः स्थिरकार्यप्रसाधकः। अधोवाही गुरुध्वानः शीघ्रगः शीणभासितः। यः षोडशाङ्गुलो वायुः स पापः शुभकर्मकृत्। आवर्त्तगश्च चोष्णश्च स्वर्णाभश्चतुरङ्गुलः। ऊर्द्धवाहो च यः क्रूरकर्मकारी च तैजसः। उष्णशीतः कृष्णवर्णस्तिर्यग्गाम्यष्टमाङ्गलः। वायुः पवनसमो ज्ञेयश्चरकर्मसु सिद्धिदः। यः समीरस्य पवनः सर्वतत्त्वगुणावहः। आवर्त्तं तं विजानीयाद् योगिनां योगदायकम्। पीतञ्चैव चतुष्कोणं मधुरं मध्यमाश्रितः। भोगदं पार्थिवं तत्त्वं प्रवाहे द्वादशाङ्गुलम्। श्वेतमर्द्धेन्दुसङ्काशं स्वादुकाषायमादकम्। लाभकृद्वारुणं तत्त्वं प्रवाहे षोडशाङ्गुलम्। रक्तत्रिकोणतिक्तः स्यादूर्द्धमार्गप्रवाहकः। दीप्तञ्च तैजसं तत्त्वं प्रवाहे चतुरङ्गुलम्। नीलञ्च वर्त्तुलाकारं स्वाद्वम्लं तीर्यगाश्रितम्। चपलं मारुतं तत्त्वं प्रवाहेऽष्टाङ्गुलं स्मृतम्। वर्णाकारं स्वादुवहमव्यक्त सर्वगामिनम्। मोक्षदं नाभसं तत्त्वं सर्वकार्येषु निष्फलम्॥ इत्यङ्गुनिविशेषगत्या भूततत्फलम्॥

पृथ्वीजले शुभे तत्त्व तेजो मिश्रफलोदयम्। हानिमृत्युकरौ पुंसामुभौ च व्योममारुतौ। अपूर्वपश्चिमे पृथ्वी तेजश्च दक्षिणे तथा। वायुश्च उत्तरे ज्ञेयो मध्यकोणगतं नभः। चन्द्रे पृथ्वीजले स्यातां सूर्ये अग्निर्यदा भवेत्। तदा सिद्धिर्नसन्देहः सौम्ये सौम्येषु कर्मषु। लाभः पृथ्वीकृतो न स्यान्निशायां लाभकृज्जलम्। वह्नौ मृत्युः क्षितौ वायुर्नभः

p. 821) स्थानं दहेत् क्वचित्। जीवितव्ये जये लाभे कृष्याञ्च धनकर्मणि। मन्त्रार्थी युद्धप्रश्ने च गमनागमने तथा। आयाति वारुणे शत्रुस्तत्रस्थेऽपि शुभः क्षितौ। प्रयाति वायुतो नित्यं हानिर्मृत्युर्नभोऽनिले॥ इति भूतविशेषे फलविशेषः॥

पृथिव्यां मूलचिन्ता स्यात् मूलमाकाशतो वहेत्। तेजसि धातुचिन्ता स्यात् जीवः स्याज्जलवातयोः॥ इति भूतविशेषेण मूलजीवादिनिर्णयः॥ पृथिव्यां बहुपादः स्याद् द्विपादस्यैव वायवे। तेजसि च चतुष्पादो नभसः पादवर्जितः। इति भूतविशेषेण बहुपादादिनिर्णयः। कुजे वह्नीरवौ पृथ्वी सौरिरापः प्रकीर्त्तितः। वायुस्थले स्थितो राहुर्दक्षरन्ध्रप्रवाहकः। जले चन्द्रो बुध पृथ्वी गुरौ वातः सितेऽनिलः। वामनाड्यां स्थिताः सर्वे

सर्वकार्येषु निश्चितम्। पार्थिवे मूलविज्ञानं जीवज्ञानं तथा जले। अग्नौ च धातुविज्ञानं व्योम्नि शून्यं विनिर्दिशेत्॥ इति भूतभेदेन धात्वादि॥ तुष्टिपुष्टिरतिक्रीडाजपहास्यं धराजले। वायौ तेजशि सुप्तज्ञो यत्तत् कल्पं प्रवासिनाम्। ततो मृत्युश्च आकाशे चन्द्रावस्थाः प्रकीर्त्तिताः। द्वादशैताः प्रयत्नेन ज्ञातव्या देशिकैः सदा। पूर्वस्यां पश्चिमायां वै उत्तरस्यां यथाक्रमम्। पृथिव्यादीनि तत्त्वानि बलिष्ठानि विनिर्दिशेत् । पृथिव्यापस्तथा तेजो वायुराकाश एव च॥ पृथिवी पलपञ्चाशत् चत्वारिंशदपस्तथा। तेजस्त्रिंशद्विजानीयाद्वायुश्च विंशतिर्नभः। नभोऽपि विंशतिपलमिति काकाक्षिगोलकन्यायेनोभयत्र सम्बध्यते॥ पृथिवी चिरकाले च लाभश्चापो भवेत् क्षणात्। जायते पवनैस्तुल्यः सिद्धयोऽग्नौ भविष्यति। इति तत्त्वेन प्रश्नफलकालनिर्णयः॥ पृथ्वीपञ्च अपां वेदागुणास्तेजो द्विवायवः। नभश्चैकगुणश्चैव तत्त्वज्ञानमिदं भवेत्। इति पञ्चभूतेषु

p. 822) शब्दादिगुणपरिमाणम्॥ यत्कारकृत् प्रस्फुटिता विदीर्णा अतीता धरा। ददाति सर्वकार्येषु अवस्थासदृशं फलम्। इति पृथिव्यवस्था। घनिष्ठा रेवती ज्येष्ठानुराधा श्रवणा तथा। अभिजिच्चोत्तराषाढा पृथ्वीतत्त्वमुदाहृतम्। पूर्वाषाढा

तथाश्लेषा मूलार्द्रा चैव रोहिणी। उत्तरभाद्रपदा तोयं आपस्तत्त्वन्त्वभीष्टदम्। भरणी कृत्तिका पुष्या मघा पूर्वा च फल्गुनी। पूर्वभाद्रपदास्वाती तेजस्तत्त्वमिति प्रिये । विशाखोत्तरफल्गुन्यौ हस्ता चित्रा पुनर्वसुः। अश्विनी मृगशीर्षा च वायुस्तत्त्वमुदाहृतम्॥ इति पञ्चभूतनक्षत्राणि॥ बहन्नाडीस्थितो भूतो यदि पृच्छेच्छुभाशुभम्। तत् सर्वं सिद्धिमायाति शून्ये शून्यं न संशयः। इति पूर्णनाड्यादिगतस्य प्रश्नफलम्॥ तत्त्वैरामो जयं प्राप्तः सतत्त्वे च धनञ्जयः। कौरवा निहताः सर्वे मूर्द्धतत्त्वविपर्य्यये। जन्मान्तरस्य संस्कारात् प्रसादादथवा गुरोः। कैश्चित्तु ज्ञायते तत्त्वं वासनाविमलात्मभिः। कायनगरमध्ये तु मारुतो रक्षपालकः। प्रवेशे दशभिः प्रोक्तो निर्गमे द्वादशाङ्गुलम्। गमने च चतुर्विंशं नेत्रवेदाश्च धावने। धावने जवेन गमने। मैथुने पञ्चषष्टिश्च शयने च शताङ्गुलम्। प्राणस्य सा गतिर्देवि  स्वभावाद् द्वादशाङ्गुला। भोजने वचने चैव गतिरष्टादशाङ्गुला॥ इति कार्यविशेषे प्राणानां वहिर्गतिनिर्णयः॥

एकाङ्गुलिकृते न्यूने प्राणनिष्कामता मता। आनन्दस्तु द्वितीये च कविशक्तिस्तृतीयके। वाचाशक्तिश्चतुर्थे तु दूरदृष्टिस्तु

पञ्चमे। षष्ठे आकाशगमनं खण्डवेश्च सप्तमे। अष्टमे
सिद्धयश्चाष्टौ नवमे निधनं न च। दशमे दशमूर्त्तिः
स्याच्छायानाश एकादशे। द्वादशे हंसचारश्च
गङ्गामृतरसं पिबेत्। आनखाग्रं प्राणपूरकस्य भक्ष्यञ्च

p. 823) भोजनम्। एवं प्राणविधिः प्रोक्तः सर्वकार्यफलप्रदः।
ज्ञातव्यो गुरुवाक्येन न विद्याशास्त्रकोटिभिः। प्रातश्चन्द्रो रविः
सायं यदि दैवेन लभ्यते। मध्याह्ने मध्यरात्रौ च परं
तत्त्वं प्रवर्त्तते। दूरयुद्धे जयी चन्द्रः समासन्ने दिवाकरः।
यात्रादाने विवाहे च प्रवेशे नगरादिके। शुभकार्येषु सर्वेषु
चन्द्रचारः प्रशस्यते॥ अयनतिथिदिनेशस्तूपतत्त्वेन युक्तो यदि वहति
कदाचिद्दैवयोगेनपुंसः। स जयति रिपुसैन्यं स्तम्भमात्रे
स्वरेण प्रभवति स च विज्ञः केशवस्यापि लोकम्॥ जीववक्षे
जीववक्षं जीवाङ्गे परिधाय च। जीवो जयति यो युद्धे जीवो जयति
मेदिनीम्। भूमौ जले च कर्त्तव्यं गमनं शस्त्रिकर्मसु।
वह्निवायुप्रदीप्तेषु पुनर्नैव भविष्यति। इति तत्त्वविशेषेण गतेः
शुभाशुभफलम्॥

जीवेन शस्त्रं बध्नीयात् जीवेनैव विकाशयेत्। जीवे च
प्रक्षिपेच्छस्त्रं युद्धे जयति सर्वथा। आकर्षे प्राणपवनः

समासे हेतुवाहनः। समोत्तरे पदं दद्यात् सर्वकार्याणि साधयेत्

। अपूर्णे शत्रुसंग्रामे पूणवसु वनं तथा कुरुते

पूर्णतत्त्वस्थो जयत्येको वसुन्धराम्। या नाडी वहते चाङ्गे

तद्वामे व्याधिदेवता। सन्मुखेऽपीदृशी तेषां

सर्वकार्यफलप्रदा। आदौ च कुरुते मुद्रां पश्चाद्युद्धं

समाचरेत्। सर्वमुद्रा कृता येन तेषां सिद्धिर्न संशयः।

यन्त्रप्रवाहेऽपि यथा सूर्यावाहे भटाः समाः। जाते हि

योधकामः समीरणतत्त्वयोर्वादम्। स प्रापित एषु नीतस्य न

प्रातःकालद्रीटा। यदि सम्बहे वायुयुद्धं यदा तदा सदापेतः

॥ जयत्येव न सन्देहः शत्रुश्च यदि चाग्रतः। यत्र नाड्यां

वहेद्वायुस्तदंशं प्राणमेव च। आकृष्य गच्छेत् कर्णान्तं

जयत्येव पुरन्दरम्। प्रतिपक्षं यदारभ्य पूर्णो

ज्ञेयोऽभिरक्षितम्। न तस्या रिपुभिः शक्तिर्बलिष्ठैरपि हन्यते।

अङ्गुष्ठतर्जनीमध्ये पादाङ्गुष्ठे तथा धनुः।

p. 824) युद्धकाले च कर्त्तव्यं लक्षयोधजयो भवेत्। निशाकरे

रवौ चारे मध्ये यस्य समीरणः। स्थितो रक्षेद्दिगन्तानि

जयाकाङ्क्षी नरः सदा। श्वासप्रवेशकाले तु दूतो जल्पति

वाञ्छितम्। तस्यार्थाः सिद्धिमायान्ति निर्गमेणैव सुन्दरि ॥ इति

श्वासप्रवेशकाले प्रश्नफलम्॥

लाभादीनि स्वकार्याणि पृष्टानि कीर्त्तितानि च। सजीवे सति सिध्यन्ति हानिर्निःसरणे भवेत्। नरो दक्षः स्वकीयश्च स्त्रिया वामः प्रशस्यते। कुम्भको युद्धकाले च त्रयो नाडी स्त्रियो गतिः। हकारस्य सकारस्य विना भेदं स्वरः कथम्। सोऽहं हंसः पदेनैव जीवो जपति सर्वदा। वामे वा यदि वा दक्षे यदा पृच्छति पृच्छकः। तत्र घातो न जायेत शून्ये घातं विनिर्दिशेत्। भूरात्मनो भवेद्घातः पदस्थानं जले भवेत्। ऊरुस्थलेऽग्निर्भवनं कटिस्थानेन वायुना। शिरःस्थात्मखतत्त्वेन ज्ञातव्यो घातनिर्णयः। एवं पञ्चविधो घातः स्वरप्रश्ने प्रकाशितः। इति तत्त्वेन घातस्थाननिर्णयः॥ युद्धोदये कृतप्रश्ने पूर्णस्य प्रथमो जयः। रिक्ते चैव द्वितीयेषु जयी भवति नान्यथा। पूर्णनाडीगतप्रश्ने शून्ये गततदग्रतः। शून्यस्थानेऽग्रतः शत्रुर्म्रियते नात्र संशयः। वामाचारे समा नासा यस्य तस्य जयो भवेत्। पृच्छको दक्षिणे भागे विजयो दक्षिणा शिरा। यदि पृच्छति चन्द्रस्थस्तदा सन्धानमादिशेत्। पृच्छेद् यदा तु सूर्यस्थस्तदा जानीहि विग्रहम्॥ इति वामदक्षिणभेदेन प्रश्ने सन्धिविग्रहकथनम्॥

पार्थिवे च भवेद् युद्धं सन्धिर्भवति वारुणे। जयो हि

तैजसे भङ्गो मृत्युर्वायौ च नाभसे। इति तत्त्वविशेषेण
युद्धादिज्ञानम्॥

निवर्त्तिकाप्रमादाद्वा यदा न ज्ञायतेऽनिलः। प्रश्नकाले
यदि कुर्याद् बद्धयुद्धेन बुद्धिमान्। निश्चलां धारणां
ज्ञात्वा पुष्पहस्ते निपातयेत्। पूर्णाङ्गे पुष्पपतनं शून्ये वा

p. 825) तत्फलं वदेत्। तत्फलं पूर्णरिक्तफलम्। तिष्ठन्नुपविशन्
वापि प्राणमाकर्षयन्निजम्। मनोभङ्गः कृतो येन सर्वकार्येषु
जीवति। जीवेन स्थापयेद्वायुर्जीवेनावस्थयेत् पुनः। जीवेन क्रियते
नित्यं युद्धे जयति सर्वथा। स्वरज्ञानी फलादग्र्यं निष्फलं
कोटिधा भवेत्। इह लोके परेणैव स्वरज्ञानी बली सदा।
दशशतायुतं लक्ष्मीर्देशाधिपचलं क्वचित्। शतक्रतुः
सुरेन्द्राणां बलं कोटिगुणं भवेत्।

श्रीदेव्युवाच।

परस्परं मनुष्याणां युद्धे प्रोक्तो जयस्तथा। समे युद्धे
समुत्पन्ने मनुष्याणां कथं जयः।

श्रीशिव उवाच।

ध्यायेत्तत्त्वं स्थिरे जीवे जुहुयात् स्थिरसङ्गमम्।
इष्टसिद्धिर्भवेत्तस्य महालाभो जयस्तथा। निराकारं
समुत्पन्नं साकारं सकलं जगत्। तस्याकारं निराकारं
ज्ञाने भवति तन्मयम्॥ इति ज्ञानयुद्धविजयप्रकरणम्॥

अथ वशीकरणम्॥

श्रीदेव्युवाच।

नरयुद्धं हिमयुद्धं त्वयोक्तञ्च महेश्वर । इदानीं वद
देवश  वशीकरणमुत्तमम्।

श्रीशिव उवाच।

चन्द्रसूर्येण चन्द्रस्य स्थापयेज्जीवमण्डले। आजन्मवशगा
वामा कथितोऽयं तपोधनैः। जीवेन गृह्यते जीवा जीवो जीवस्य
दीयते। जावस्थानगतो जीवो बालाजीवाशुकारकः।
रात्र्यस्तयामवेलायां प्रसुप्ते कामिनीजने। ब्रह्मवीज पिबेद्यस्तु

बालाजीवहरस्तु सः। अष्टाक्षरं जपित्वा तु तस्मिन् काले रते सति। तत्
क्षणाद्दीयते चन्द्रो मोहमायाति कामिनी। समये वा प्रसङ्गे वा
युवत्यालिङ्गनेऽपि वा। तत्क्षणाद्दापयेदाशु मोहयेत् कामिनीन्तु
सः। यः सूर्येण पिबेच्चन्द्रं स भवेन्मकरध्वजः। शिव
आलिङ्ग्यते शक्त्या प्रसङ्गे दक्षिणेऽपि वा। सप्त नव त्रयः पञ्च
रवौ सङ्गस्तु सूर्यके। चन्द्रे दिवातुरीयाष्टे वश्या भवति कामिनी
॥ सूर्याचन्द्रौ समौ कृत्वा सर्वाकृत्यधरोष्ठयौः।

p. 826) महापद्मे मुखं प्रोच्य वारं वारमिदं चरेत्।
अध्यानमिति पादस्य यावन्निद्रावशं गता।
पश्चाज्जाग्रतबेलायां चोष्य ते गलचक्षुषी। अनेन विधिना कामी
वशयेत् सर्वकामिनीः। इदं वचनमन्यस्मिन् इत्याज्ञा परमेश्वरि
॥ इति वशीकरणम्॥

अथ गभप्रकरणम्। ऋतुकाले भवेन्नारी पञ्चमेऽह्नि यदा
शुचिः। सूर्याचन्द्रमसौ योगो जीवेन पुत्रसम्भवः। शङ्खावली
गवां दुग्धं पृथ्वधी वहते यदा। भर्त्तुरग्रे वदेद्वाक्यं
गर्भं देहि त्रिभिर्वचः। ऋतुस्नाता पिबेन्नारी ऋतुदानन्तु योजयेत्।
रूपलावण्यसम्पन्नं नरसिंहं प्रसूयते।
सुषुम्नासूर्यगन्धेन ऋतुज्ञानन्तु योजयेत्। अङ्गहीनः

पुमांस्तत्र जायते कृमिविग्रहः। विषमाङ्के दिवा रात्रौ
विषमाङ्के दिनाधिपः। चन्द्रनेत्राग्नितत्त्वेषु बन्ध्या
पुत्त्रमवाप्नुयात्। रत्यारम्भे रविः पुंसां रत्यन्ते च
सुधाकरः। अनेन कर्मयोगेन नादण्डे देवदण्डकः।
रत्यारम्भे रविः पुंसां स्त्रियाश्चैव सुधाकरः। उभयोः
सङ्गमे प्राप्ते बन्ध्या पुत्त्रमवाप्नुयात्॥ इति
पुत्त्रकन्याजन्मनिदानम्॥ चन्द्रनाडी वहेत् प्रश्ने गर्भे कन्या
यदा भवेत्। सूर्ये भवेत्तदा पुत्रो द्वयोर्गर्भो विहन्यते। चन्द्रः
स्त्री पुरुषः सूर्यो मध्यमार्गे नपुंसकः। शून्ये शून्यं
युगे युग्मं गर्भपातश्च संक्रमे। सूर्यभागे कृते
पुत्रश्चन्द्रवारे तु कन्यका। विषमे गर्भपातः स्याद्द्वयोरथ
नपुंसकः। तत्त्वैरथ विजानीयात् कथितं तत्तु सुन्दरि ॥ इति प्रश्ने
गर्भे पुत्रादिज्ञानम्॥ गर्भाधानं मारुते स्यात् सुदुःखी दिव्ये
ख्यातो वारुणे सौख्ययुक्तः। गर्भस्रावः स्वल्पजीवी च वह्नौ
भोगी भव्यः पार्थिवेऽनर्थयुक्तः॥ धनवान् सौख्ययुक्तश्च
भोगवान् गर्भसंस्थितः। सोत्तमो वरुणे तत्त्वे व्योम्नि गर्भो
विनश्यति। माहेन्द्रे जायते पुत्रो वरुणे दुहिता भवेत्। शेषेषु

p. 827) गर्भहानिः स्याज्जातमात्रस्य वा मृतिः। रविमध्ये
गतश्चन्द्रश्चन्द्रमध्ये गतो रविः। ज्ञातव्यो गुरुतः शीघ्रं न

विद्याशास्त्रकोटिभिः॥ इति गर्भप्रकरणम्॥

अथ संवत्सरप्रकरणम्। चैत्रशुक्लप्रतिपदि

प्रातस्तत्त्वविभेदतः। पश्येद्भावी क्षणो योगी दक्षिणे

चोत्तरायणे। चन्द्रोदयस्य वेलायां वहमानोऽठ तत्त्वतः।

पृथिव्यापस्तथा वायुः सुभिक्षं सर्वशस्यगम्। तेजोव्योम्नि

भयं घोरं दुर्भिक्षं कालतत्त्वतः। एवं तत्त्वफलं

ज्ञेयं वर्षे मासे दिने तथा। मध्यमो भवति क्रूरो दुष्टः

सर्वत्र कर्मषु। देशभङ्गो महारोगः क्लेशकष्टादिदुःखदः।

मेषसंक्रान्तिवेलायां स्वरभेदं विचारयेत्। संवत्सरफलं

ब्रूयाल्लोकानां तत्त्वचिन्तकः। पृथिव्यादिगतत्त्वानां

दिनमासाब्दजं फलम्। भोजनञ्च तथा दुष्टं

व्योममारुतवह्निभिः। सुभिक्षं वा प्रवृद्धिः स्याद् बहुशस्या

वसुन्धरा। बहुवृष्टिस्तथा सौख्यं पृथ्वीतत्त्वं वहेद् यदि।

दुर्भिक्षं राष्ट्रभङ्गः स्याद् वेगोत्पत्तिः सुदारुणा।

अल्पादल्पतरा वृष्टिरग्नितत्त्वं वहेद् यदि। उत्पातोपद्रवौ

भीतिरल्पवृष्टिः स्युरीतयः। मेषसंक्रान्तिवेलायां वायुतत्त्वं

वहेद् यदि। मेषसंक्रान्तिवेलायां व्योमतत्त्वं वहेद् यदि। तत्रापि

सूरिभिर्ज्ञेयः शस्यादीनामुपद्रवः। पूर्वपूर्वतरस्यैव

श्वासतत्त्वेन सिद्धिदः। सूर्यश्चन्द्रो यथाभूते संग्रहे

सर्वसिद्धिदः। विषमे वह्नितत्त्वस्य ज्ञायते केवलं नभः। तत्
कुर्याद्वस्तुसंग्राही द्विमासे च महार्घ्यता। रवौ संक्रमणे
नाडी गलते च प्रसर्पति। सोऽनिले वह्नियोगे च रौरवं जगतीतले॥ इति
संवत्सरप्रकरणम्॥

अथ रोगप्रकरणम्। महीतले सरोगश्च जले च जलमातरः।
असौ शून्यगतो दूतः पश्चात् पूर्णे विशेत् यदि। मूर्च्छितोऽपि
ध्रुवं जीवेद् यदर्थं परिपृच्छति। यस्मिन्नङ्गे स्थितो
जीवस्तत्रस्थः परिपृच्छति। तदा जीवति जीवोऽसौ यदि रोगैरुपद्रुतः।
दक्षिणे यदि वा वामे दुःखरौद्राक्षरो वदेत्। तदा जीवति जीवोऽसौ
चन्द्रः समफलः क्रमात्। जीवाकारे च वह्न्यात्मा जीवाकारं
विलोक्य च। जीवस्थो जीवितप्रश्ने तस्य स्यात् जीवितं फलम्।
वामाचारस्तदा दक्षे प्रवेशे यत्र वाहने। तत्रस्थः पृच्छते
दूतस्तस्य सिद्धिर्न संशयः। प्रश्ने चाधः स्थितो जीवो न्यूनं
जीवो हि जीवति। ऊर्द्ध्वाचारस्थितो जीवो जीवो याति यमालयम्।
विपरीताक्षरप्रश्नं रिक्तायां पृच्छको यदि। विपर्ययश्च
विज्ञेयो विषमस्थोदये सति। चन्द्रस्थाने स्थितो जीवः सूर्यस्थाने च
पृच्छकः। तदा प्राणविमुक्तोऽसौ यदि रोगैरुपद्रुतः।
पिङ्गलायां स्थितो जीवो वामे दूतस्तु पृच्छति। तदापि म्रियते रोगी
यदि त्राता महेश्वरः। एकस्य भूतस्य विपर्ययेण

रोगाभिभूतिर्भवतीह पुंसाम्। तयोर्द्वयोर्बन्धसुहृद्विपत्तिः
पक्षत्रयव्यत्ययतो मृतिः स्यात्॥

अथ कालज्ञानम्। मासादौ वत्सरादौ तु पक्षादौ च
यथाक्रमम्। ज्ञेयं कालं परीक्षेत् वायुचारबलात् सुधीः।
पञ्चभूतात्मकं दीपं शशिस्नेहेन सिञ्चितम्। रक्षयेत्
सूर्यवातेन तेन जीवः स्थिरो भवेत्। मारुतं बन्धयित्वा तु
सूर्यं बन्धयते यदि। अभ्यासाजीवितो जीवः सूर्यकालेऽपि वञ्चते
। गगनात् स्त्रवते चन्द्रः कायपद्मानि सिञ्चयेत्। शशाङ्कं
वारयेद्रात्रौ दिवाचार्यो दिवाकरः। इत्यभासे ततो नित्यं स योगी
नात्र संशयः। अहोरात्रं यदैकत्वं वहते यस्य मारुतः। तदा
तस्य भवेदायुः सम्पूर्णं वत्सरत्रयम्। अहोरात्रद्वयं यस्य
पिङ्गलायाः सदागतिः। तस्य वर्षद्वयं प्रोक्तं जीवितं
तत्त्ववेदिभिः। त्रिवारं वहते यस्य पिङ्गलायां सदागतिः। तदा
संवत्सरं चायुः प्रवदन्ति मनीषिणः। सदागतिर्वायुः। रात्रौ

p. 829) चन्द्रो दिवा सूर्यो वहेद् यस्य निरन्तरम्। जानीयात्तस्य वै
मृत्युः षण्मासाभ्यन्तरे भवेत्। एकादिषोडशाहानि यदि
भानुर्निरन्तरम्। वहेदस्य च वै मृत्युः शेषाहेन च मासिके।
सम्पूर्णं वहते सूर्यचन्द्रमाश्च न दृश्यते। पक्षेन जायते

मृत्युः कालज्ञानेन भाषितम्। सम्पूर्णं वहते चन्द्रः सूर्यो
नैव च दृश्यते। मासेन जायते मृत्युः कालज्ञानेन भाषितम्।
मूत्रं पुरीषं यस्यैव समकाले प्रवर्त्तते। तदासौ चलितो ज्ञेयो
दशाहे म्रियते ध्रुवम्। अरुन्धतीं ध्रुवञ्चैव विष्णोस्त्रीणि
पदानि च। गतायुषो न पश्यन्ति चतुर्थं मातृमण्डलम्। अरुन्धती
भवेज्जिह्वा ध्रुवो नासाग्रमेव च। भ्रुवौ विष्णुपदं ज्ञेयं
तारकं मातृमण्डलम्। नवध्रुवं सप्तघोषं पञ्चतत्त्वां
त्रिनासिकाम्। जिह्वामेकविलां दृष्ट्वा म्रियते वा नरो ध्रुवम्।
कोणमत्स्याङ्गतुल्यन्तु किञ्चित्पिण्डं निरीक्षयेत्। यदा न दृश्यते
विन्दुर्दशाहेन नरो मृतः॥ इति कालज्ञानम्॥

अथ नाडीज्ञानम्। इडा गङ्गेतिविज्ञानं पिङ्गला
यमुनानदी। मध्ये सरस्वतीज्ञेया प्रयागो योगतस्त्रिभिः। आदौ
साधनमाख्यातं सद्यः प्रत्ययकारकम्। बद्धपद्मासनो योगी
विदध्यादुड्डियानकम्। पूरकं कुम्भकञ्चैव रेचकञ्च
तृतीयकम्। ज्ञातव्यं योगिभिर्नित्यं देहसंसिद्धिहेतवे। पूरकं
कुरुते पृथ्वी धातुसाम्यं तथैव च। कुम्भकं स्तम्भनं
कुर्यात् जीवरक्षाविवर्द्धनम्। रेचको हरते पापं
कुम्भाद्योगपदं व्रजेत्। पश्चात् संग्रामवत्तिष्ठेन्नतु बन्धे च
कारयेत्। कुम्भयेत् सहजं वायुर्यथाशक्त्या प्रयत्नतः। रेचयेत्

चन्द्रमार्गेण सूर्येण पूरयेत् सुधीः। चन्द्रमाः पिबते सूर्यं
सूर्यः पिबति चन्द्रकम्। अन्योन्यकालभावेन जीवेदाचन्द्रतारकम्।

p. 830) यत्राङ्गे वहते नाडी तन्नाडीबोधनं कुरु।
मुखबद्धमुन्मोचयन् वै परानाञाय तेषु वा।
मुखनासिककर्णानामङ्गुलीभिर्निरुध्येत्। तत्त्वोदयमिति ज्ञेयं
सम्मुखीकरणं प्रिये । तस्य रूपगतं नेदं
मण्डलीलक्षणन्त्विदम्। यो वेत्ति मानवो लोके स क्षुद्रोऽपिच योगवित्।
निराशीर्निष्फलो योगी न किञ्चिदपि चिन्तयेत्। वासनामुन्मनीकृत्य
कालं जयति लीलया। यस्य या शंसिता शक्तिः सिद्धस्य
गुणगह्वरम्। बद्धपद्मासनस्थो हि गुदवायुं निरुद्धयेत्।
विमुञ्चेत प्राणकाद्यं कुम्भकत्रयमानिले। शक्त्या प्राणे
निरुद्धे विवरमुपगतं ब्रह्मचक्रे च नित्या निक्षेपाकाशमार्गे
शिवचरणरता यान्ति ते केऽपि धन्याः॥ एतज्जानाति यो योगी एतत्
पठति नित्यशः। सर्वदुःखविनिर्मुक्तो लभते वाञ्छितं फलम्।
स्वरज्ञानं शिवे यस्य लक्ष्मीः पदतले भवेत्। प्राणवत्
सर्वदेवानां ब्रह्माण्डे भास्करो यथा।
मर्त्यलोकेऽयमापूज्यः स्वरज्ञानी पूमानपि। नाडीत्रयं
विजानाति तत्त्वज्ञानं तथैव च। नैव तेन भवेत्तूल्यं
लक्षकोटिरसायनम्। एकाक्षरप्रदातारं नाडीभेदेन भेदकम्।

पृथिव्यां नास्ति तद्द्रव्यं यद्दत्त्वा चात्रृणी भवेत्। स्वरतत्त्वं
तथा युद्धं दिव्यवश्यत्रयन्तथा। एवं प्रवर्त्ततेलोके
प्रसिद्धं सिद्धियोगिभिः। एतत् तन्त्रं महाभागे  पठनात्
सिद्धिदायकम्। सुस्थासनं समासीनो नीरजायतलोचने । चिन्तयेत्
परमात्मानं यो वदेत् स भविष्यति॥

इति श्रीप्राणतोषिण्यां षष्ठे ज्ञानकाण्डे
स्वरज्ञानरूपशाखाकथनं नाम द्वितीयः परिच्छेदः॥

अथ राजयोगः॥ योगस्वरोदये।

ईश्वर उवाच।

राजयोगं प्रवक्ष्यामि श्रृणु सर्वत्र सिद्धिदम्। गुह्याद्गुह्यतरं
देवि  नानाधर्मं परात्परम्  राजयोगेन देवेशि  नृपपूज्यो
भवेन्नरः। राजयोगी चिरायुश्च अष्टैश्वर्यमयो भवेत्॥
पञ्चदशप्रकारोऽयं राजयोगः॥ क्रियायोगो ज्ञानयोगः
कर्मयोगो हठस्तथा। ध्यानयोगो मन्त्रयोग उरयोगश्च वासना।
राजत्येतद् ब्रह्मवशीव एभिश्च पञ्चदशधा। इदानीं
लक्षणञ्चैषां कथयामि श्रृणु प्रिये ।

ध्यानपूजादानयज्ञजपहोमादिका क्रिया। क्रियामुक्तिमयो योगः

सपिण्डिसिद्धिदायकः। यत्कारोमीति सङ्कल्पं कार्यारम्भे मनः

सदा। तत्साङ्गाचरणं कुर्वन् क्रियायोगरतो भवेत्।

क्षमाविवेकवैराग्यशान्तिसन्तोषनिस्पृहाः। एतन्मुक्तियुतो योऽसौ

क्रियायोगो निगद्यते। मात्सर्यं ममता माया हिंसा च

मदगर्विता। कामः क्रोधो  भयं लज्जा लोभो मोहस्तथाऽशुचिः।

रागद्वेषौ घृणालस्यश्रान्तिदम्भक्षमाभ्रमाः। यस्यैतानि न

विद्यन्ते क्रियायोगी स उच्यते। स एव मुक्तः स ज्ञानी चण्डि  नाशेन

ईश्वरः। क्रियामुक्तिकरो योऽसौ राजयोगः स मुक्तिदः।

ज्ञानयोगं प्रवक्ष्यामि तज्ज्ञानी शिवतां व्रजेत्। पठनात्

स्मरणाद्ध्यानान्मण्डनात् ब्रह्मसाधकः।

तद्भेदस्यैकसन्धानमष्टैश्वर्यमयो भवेत्। त्रितीर्थं यत्र

नाडी च त्रिपुण्यं परमेश्वरि । स्वदेहे यो न जानाति स योगी

नामधारकः। नवचक्रं कलाधारं त्रिलक्षं व्योमपञ्चकम्

। स्वदेहे यो न जानाति स योगी नामधारकः। एषोऽस्य विश्वरूपस्य

राजयोगो मतो बुधैः। विशेषं कथयिष्यामि शृणु चैकमनाः

सति । मूलकन्दे स्थले चैका नाडी तेजस्वती परा। गुदोर्द्धे सा

त्रिभागाभूदिडा नाम शशिप्रभा। शक्तिरूपामहानाडी

ध्यानात् सर्वार्थदायिनी। दक्षिणेऽपि कुलाख्येति पुंरूपा

सूर्यविग्रहा। मध्यभागे सुषुम्नाख्या ब्रह्मविष्णुशिवात्मिका

। शुद्धचित्तेन सा विज्ञा विद्युत्कोटिसमप्रभा।

p. 832) भुक्तिमुक्तिप्रदा ध्यानादणिमादिगुणप्रदा। सुषुम्नान्तः समाश्रित्य नवचक्रं यथा शृणु। मूलाधारं चतुष्पत्रं गुदोर्द्ध्वे वर्त्तते महत्। तन्मध्ये स्वर्णपीठे तु त्रिकोणं मण्डलं परम्। तत्र वह्निशिखाकारा मूर्त्तिः सर्वत्र सिद्धिदा। अस्या ध्यानं मनोमध्ये विना पीठेन वाङ्मयम्। सर्वशास्त्राणिसङ्कर्षं सदा स्फुरति योगवित्। लिङ्गमूले तु पीठाभं स्वाधिष्ठानन्तु षड्दलम्। तन्मध्ये बालसूर्याभं महज्ज्योतिः सुसिद्धिदम्। ध्यानाच्च वर्द्धते आयुः कन्दर्पसमतां व्रजेत्। तृतीयं नाभिदेशे तु दिग्दलं परमाद्भुतम्। महामेघप्रभं तत्तु कोटिविद्युत्समन्वितम्। कल्पान्ताग्निसमं ज्योतिस्तन्मध्ये संस्थितं स्वयम्। तस्य ध्यानाच्चिरायुः स्यादरोगो जगतां वरः। सर्वपापविनिर्मुक्तो जगत्क्षोभकरो महान्। अनाहतमष्टपीठं चतुर्थकमलं हृदि। सूर्यपत्रं महाज्योतिर्महासूक्ष्मन्तु चाक्षुषम्। सूर्यपत्रं द्वादशदलम्। तन्मध्येऽष्टदलं पद्ममूर्द्धवक्रं महाप्रभम्। प्राणवायोः स्थलञ्चास्य लिङ्गाकारन्तु कर्णिका। कालिकाख्या कर्णिकेयं अस्या मध्ये तु कुण्डली। पद्मवत्याः प्रभाङ्गुष्ठप्रमाणा रत्नसन्निभा। तस्यासङ्गी जीव इति अनन्तो

बलरूपतः। अस्य ध्यानं जगद्वश्यं खेचरीसर्वगो भवेत्।
भवन्ति वश्या देवाद्याश्चिन्ताकर्त्तुर्न चान्यथा। इष्टानिष्टो
भवेद्वश्यः सत्यं सत्यं न संशयः। इष्टसिद्धिर्भवेत्तस्य
सर्वज्ञादिगुणोदयः। कलापत्रं पञ्चमन्तु विशुद्धं
कण्ठदेशतः। अस्य मध्ये पुमानेकः कोटिचन्द्रसमप्रभः।
नश्यन्त्यसाध्यरोगा हि सहस्रायुश्च चिन्तनात्। आज्ञाख्यं
षष्ठकं चक्रं भ्रुवोर्मध्ये द्विपत्रकम्। अग्निज्वालानिभं
ज्योतिः पुंसः स्त्रीतो विवर्जितम्। ध्यानाच्चास्य
सर्वसिद्धिरजरामरतां व्रजेत्। चतुःषष्टिदलं ताद्द मध्ये
चक्रन्तु मध्यमम्। पीयूषपूर्णं कोटीन्दुसन्निभं

p. 833) चामृतस्थली। तन्मध्ये घटिकासंज्ञा कर्णिका
रक्तसन्निभा। सह चेन्दुकला तत्रामृतधारां स्रवत्यसौ।
एतद्ध्यात्वामृतैः स्नात्वा सदा योगात् प्रमुच्यते।
उन्मादज्वरपित्तादिदाहशूलादिवेदनाः। नश्यन्ति च शिरोदुःखं
जाड्यभावोऽपि नश्यति। सद्योध्यानाद्भुक्तविश्वं
जिह्वाजाड्यञ्च नश्यति। ब्रह्मरन्ध्रेऽष्टमं चक्रं शतपत्रं
महाप्रभम्। जालन्धरं नाम पीठं एतत्तु परिकीर्त्तितम्।
सिद्धपुंसः स्थलं ज्ञात्वा अग्निधूमनिभा शिखा।
आदिमध्यान्तहीना स्त्रीपुंमूर्त्तिवर्त्तते परा। अन्तज्ञानी

भवेद्ध्यानादाकाशेऽपि समागमः। निरन्तरं सर्ववेत्ता इत्यूचानो महान् भवेत्। जगन्मध्ये स्थितो जन्तुर्जगद्बाधाविवर्जितः। नवमन्तु महाशून्यं चक्रन्तु तत्परात्परम्। तदुपरि परं किञ्चिन्नास्ति किञ्चिन्महापरम्। महाचक्रं सिद्धचक्रं पूर्णगौर्यादिसंज्ञकम्। तन्मध्ये वर्त्तते पद्मं सहस्रदलमद्भुतम्। ऊर्द्धवक्रं महावक्रे वर्णशोभापदं महत्। सर्वकल्याणसम्पूर्णमस्य तुल्यं न विद्यते परिमाणं वक्तमस्य मनसा वचसा न हि। त्रिकोणकर्णिका तत्र वर्त्तते जगदीश्वरि । कला सप्तदशी तत्र वर्त्तते परमेश्वरि । निरञ्जनकला सा तु कोटिसूर्यसमप्रभा। कोटिचन्द्रप्रभा चैव शीतोष्णादिविवर्जिता। अस्य ध्यानात् साधकस्य मनोदुःखं भवेन्न हि। अनन्तपरमानन्दस्थानं ज्ञेयं तदूर्द्धतः। ऊर्द्धगतकला तत्र तस्य ध्यानाद्भवेदिति। इति सिद्धिराजयोगं स्त्रीणां भोगं महासुखम्। गीतवाद्यविनोदादि सशिवं वर्द्धते क्षितौ। ध्यानं निरन्तरञ्चास्य पुण्यपापे स्थिरे न हि। निजरूपस्य दृष्टिः स्याद्दूरस्यार्थञ्च पश्यति॥

सुखसाध्यं लक्षयोगमिदानीं शृणु पार्वति । पञ्चधा लक्षयोगश्च ऊर्द्धलक्षादिभेदतः। ऊर्द्धलक्षः अधोलक्षो वाह्यलक्षस्तथैव च। मध्यलक्षस्तथा ज्ञेयोऽनन्तलक्षस्तथैव

p. 834) च। लक्षणं श्रृणु चैषां हि फलं ज्ञात्वा महेश्वरि ।
आकाशे दृष्टिमास्थाय मन ऊर्द्धन्तु कारयेत्। ऊर्द्धलक्षो
भवेदेष परमेशस्य चैकता। नासिकोपरि देवेशि
द्वादशाङ्गुलमानतः। दृष्टिः स्थिरा तु कर्त्तव्या अधो
लक्षमिमं भज। अथवा नासिकाग्रे तु स्थिरा दृष्टिरियं भवेत्।
स्थिरा दृष्टिश्चिरायुः स्यात्तथासौ स्थिरदृष्टिमान्। वाह्यलक्षं
स्वयं ज्ञेयं याति तत्त्वनिवासिनाम्। कामिनान्तु
वहिर्दृष्टिश्चिन्तादिषु सुसिद्धिदा। एषा वाह्यमध्यलक्षा इष्टचिन्ता
निराकुलम्। अन्तर्लक्षं श्रृणु शुक्रदिग्विदिगादिवर्जितम्।
चलज्जाग्रत्सुषुप्तेषु भोजनेषु च सर्वदा। सर्वावस्थासु देवेशि
चित्तं शून्ये नियोजयेत्। कर्त्ताकारयिता शुन्यः मूर्त्तिमान् शून्य
ईश्वरः। हर्षशोकघटस्थोऽयं जन्म मृत्यु लभेत् स्वयम्।
घटस्थाचिन्त्ययोर्मूर्त्तिर्हतचिन्तास्वरूपधृक्। विषयं
विषवद्दुष्टं त्यक्त्वा ज्ञात्वा तु मारुतम्। संज्ञाशून्यमना
भूत्वा पुण्यपापैर्न लिप्यते। बाह्यमभ्यन्तरं खं हि
अन्तर्लक्षमिति स्मृतम्। एतद्ध्यानात् सदा किञ्चित् दुःखं न
स्याच्छिवो भवेत्। शून्यन्तु सच्चिदानन्दं निःशब्दं
ब्रह्मशब्दितम्। सशब्दं ज्ञेयमाकाशमिति भेदद्वयन्त्विह।
इदानीं कथयिष्यामि राजयोगस्य लक्षणम्। राजयोगे कृते पुंभिः

सिद्धिचिह्नं भवेदिति। परिपूर्णं भवेच्चित्तं जगत्स्थोऽपि

जगद्बहिः। न क्षोभो जन्म मृत्युश्च न दुःखं न सुखं तथा।

भेदाभेदौ मनःस्थौ न ज्ञानं शीलं कुलं तथा।

प्रकाशकुशसम्बन्धिप्रसङ्गोऽयं निरन्तरम्।

सर्वप्रकाशकोऽसौ तु नष्टभेदादिरेव च। अस्य जातेर्न चिह्नञ्च

निष्कलोऽयं निरञ्जनः। अनन्तोऽयं महाज्योतिर्वाञ्छांभोगं

ददाति च। अस्य चित्ते नानुरागो विरागो न भवेदिति। राज्य प्राप्तेऽपि नो

हर्षो हानौ दुःखं भवेन्नहि। क्वचिद्वस्तुनि देशस्य निःस्वने

p. 835) केषु कुत्रचित्। विद्याविद्यामित्रशत्रौ समा दृष्टिश्च सर्वशः

। भोगासक्तादिकर्त्तृत्वेन मनो नो भवेत् खवत्। लोकमध्ये भवेत्

कर्त्ता मनोमध्येऽपि निष्क्रियः। एषोऽपि राजयोगीति सुखे दुःखे

समस्तथा। हर्षशोकौ न जात्वेषां नोद्वेगो लोकसङ्गमे।

नित्योल्लासे निराकारे निरासने निरात्मनि। मनसा निश्चलो भूत्वा

सदा तिष्ठेत् समोऽपि च। यथाकाशे भ्रमन् वायुराकाशं व्रजते

स्वयम्। तथाकाशे मनो लीनं राजयोगक्रिया मता।

जगत्संसर्गनिर्लेपं पद्मपत्रजलं यथा॥

इदानीं हठयोगस्तु कथ्यते हठसिद्धिदः। कृत्वासनं

पवनाशं शरीरे रोगहारकम्। पूरकं कुम्भकञ्चैव रेचकं

वायुना भजेत्। इत्थं क्रमोत्क्रमं ज्ञात्वा पवनं साधयेत्

सदा। धौत्यादिकर्मषट्कञ्च प्रकुर्याद्धठसाधकः।

एतन्नाड्यान्तु देवेशि  वायुपूर्णं प्रतिष्ठितम्। ततो मनो

निश्चलं स्यात्तत आनन्द एव हि। हठयोगान्न कालः

स्यान्मनोनाशो भवेद् यदि। इदानीं हठयोगस्य द्वितीयं

भेदमच्छृणु। आकाशे नासिकाग्रे तु सूर्यकोटिसमं स्मरेत्।

श्वेतं रक्तं तथा पीतं कृष्णमित्यादिरूपतः। एवं ध्यात्वा

चिरायुः स्यादङ्गाजननवर्जितम्। शिवतुल्यो महात्मासौ

हठयोगप्रसादतः। हठाज्ज्योतिर्मयो भूत्वा ह्यन्तरेण शिवो

भवेत्। अतोऽयं हठयोगः स्यात् सिद्धिदः सिद्धसेवितः। इदानीं

ज्ञानयोगस्य लक्षणं कथ्यते शिवे । यज्ज्ञात्वा

ज्ञानसम्पूर्णः शिवः स्यान्न पुनर्भवः। एकमेव जगत्

पश्येद्विश्वात्मा विश्वभावनः। इति कृत्वा तु वै युक्तो

ज्ञानयोगं समाचरेत्। यत्र तत्र स्थितो वापि सर्वज्ञानमयं

जगत्। य एवमस्ति बोधेन सोऽपि ज्ञानाधिकारवान्। प्राप्नोति

शाम्भवीमन्त्रान् सदा नित्यपरायणः। यथा न्यग्रोधवीजं हि

क्षितौ वप्तुर्द्रुमायते। आदावेकस्ततोऽनेकः

p. 836) स्वभावाच्छादनादिभिः। वर्द्धतेऽहर्निशं वृक्षः

पत्रपल्लवविस्तृतः। स्नेहपुष्पफलैर्वीजैर्विस्तारोऽयं स्वभावतः

। तथासौ निर्मलो नित्यो निर्विकारो निरञ्जनः। एकोऽनेकः खयं

भूयान् साधनाद् बहुधा स्थितः। पञ्चतत्त्वमयो

बुद्धिमायाहङ्कारविक्रियः। एवं बहुविधं विश्वं

लोकालोकसुविस्तरम्। एकमेव न चान्वोऽस्ति यो जानाति स तत्त्ववित्।

स्थावराः पर्वताद्या हि जङ्गमाः खेचरादयः।

जङ्गमस्थावराकारः संसारः स्यात् स ईश्वरः। स्वभावलीलया

भाति शून्येऽसौ शून्यबुद्धितः। यद्दृष्टं विषयं वस्तु

तद्दृश्यमिति कथ्यते। यो दृष्टातीतः सोऽदृश्यस्तदा दृष्टं हि

मन्यते। स्वतनूभेदमेवन्तु संसारं दुःखसङ्कुलम्।

यत्नाद्दूरं परित्यज्य ज्ञानयोगो भवेत् सुधीः। ज्ञानसंयोग

एकस्तु एकस्तु ज्ञानयोगवान्। अतो हि ज्ञानतोऽभिन्नं ज्ञेयं

ज्ञानात् पृथक् पृथक्। दूरीकृत्यैवमापृथ्वी भेदवाक्येन

दर्शनात् । ज्ञानयोगी भवेद् येन ज्ञानयोगस्तु चैककः। एवं

ज्ञानान्महेशानि  कालजित् शिवतां व्रजेत्। स्वभावभेदमेतत्

शृणु देवि  प्रयत्नतः। यच्छ्रुत्वा सर्वबोधः स्यात् मुक्तिदः

सिद्धिवाञ्छितः। आत्मनो वा पृथिव्याद्याः स्वभावः

किञ्चिदुच्यते। आत्मैव पृथिवी धात्री कोमला च क्वचिद्दृढा।

क्वचिन्मनोहरा सा च विमला च मलामला। दुर्गन्धा च सुगन्धा

च निर्गन्धा गन्धमोहिनी। स्वर्णरूपा धातुरूपा चित्रा रत्नमयी

परा। क्वचित् श्वेता क्वचिद्रक्ता क्वचित् पीता च कृष्णला। ऊर्वरा

ऊर्वरा सा तु विषामृतमयी सदा। तथा च
देवगन्धर्वकिन्नराद्याः खगादयः। सुखसम्पिण्डितो रोगी
तथैव क्रोधशान्तधीः। अशेषरूपबलितो नानाबुद्धिरतः स्वयम्
। देवतत्त्वं भूतशक्त्या जीवसंज्ञा भ्रमात्मिका। ज्ञानयोगी
निर्विकारो निस्ताप एक ईश्वरः। आत्मैकमूर्त्तिमान् भूत्वा निर्विकल्पो

p. 837) निरञ्जनः। सुखी दुःखी मोहयुक्तोऽनन्तचेताः स्वभावतः
। स्त्रीपुंरूपी महान् सो हि परस्परविमोहितः। अमनस्कः
स्वीयभावात् ज्ञानयोगी निराकुलः। स्रक्चन्दनादिवामासु
स्वभावाद्भोगमिच्छुकः। सुखात्मकैः सुखस्थाय
परदुःखाय सञ्चितिः। आत्मना मनसा पश्च्यां
पुत्त्रादिरत्नसम्पदौ। असारसारणात्तर्हि ज्ञानधीर्मनसा भवेत्।
आत्माविवेकमागम्य चलच्चित्तं महाकुलम्। विषयान्धतमो
दृष्ट्वा नो वेत्ति परमात्मनः। अमायात्मा तत्त्वातीतः
सत्सन्धानविवर्जितः। सुखी दुःखी जन्म मृत्युं याति सत्यं पुनः
पुनः। वैराग्यादिधनं त्यक्त्वा विषवद् दुःखकृद्धियः।
कोटिसूर्यसमात्मेति ज्ञानयोगाद्विमुच्यते। रवी तेजो घृतं दुग्धे
तिले तैलं स्वभावतः। शशमिन्दौ कुले शाखं क्षारे च लवणं
यथा। तथा ब्रह्मणि संसारो ह्यखण्डपरिपूर्वके। इदानीं
वाह्यलक्षाणि सिद्धिदानि शृणु प्रिये । धारणाख्या तु चैतानि

ज्ञातव्यानि विशेषतः। लीलया भावयेल्लीनं ज्योतिःपूर्णं

महापरम्। अथवा तत्र देवेशि  धूम्राकारं षडङ्गुलम्।

अथवाष्टाङ्गुलं रक्तं नासिकोपरि लक्षयेत्।

द्वादशाङ्गुलमानं वा पृथ्वीतत्त्वन्तु पीतभम्। लक्षयेदथवा

तत्र कोटिसूर्यसमप्रभम्। तेजः पुञ्जं महाकाशं

तत्तद्ध्यानाच्छिवो भवेत्। आकाशमध्ये आकाशोपरितो

दृष्टिसुस्थिरम्। कृत्वा ध्यानाद्विना सूर्यं चण्डसूर्यन्तु पश्यति

। अथवा लक्षमेतत्तु कर्त्तुर्वहिः शिवोपरि। ऊर्द्ध्वं

सप्तदशाङ्गुल्यं प्रमाणं तेजसा प्रभम्। अथवा

पृथिवीतत्त्वं तप्तकाञ्चनसन्निभम्। दृष्टिरग्रे तु कर्त्तव्यं

लक्षमेतद्यतात्मनाम्। उक्तानां यस्य कस्यैव एकशः करणं

प्रिये । बलीपलितहीनः स्यादौषधेन विना तथा। सर्वरोगाणि

नश्यन्ति मित्रवच्च वशी रिपुः। जीवेद्वर्षसहस्रन्तु सर्वलोकेषु

पूजितः। जिह्वाग्रे प्रभवेद्विद्या विना शास्त्रावलोकनात्।

p. 838) मूलकन्दोत्थतलतो ब्रह्मनाडीसमुद्भवा। श्वेतवर्णा

ब्रह्मरन्ध्रपर्यन्तमेव तिष्ठति। एषा तु ब्रह्मरन्ध्राख्या

तन्मध्ये वर्त्तते परा। पद्मतन्तुममाकारा कोटिसूर्यतडित्प्रभा

। चलत्यूर्द्ध्वं महामूर्त्तिरस्य ध्यानाद्भवेच्छिवः।

अणिमाद्यष्टसिद्धिस्तु समग्रेण प्रसीदति। ललाटोपरि वा ध्यात्वा

चन्द्रं वा ज्योतिरीश्वरम्। नाशयेत् कुष्ठरोगादीन् महायुष्मान्
शिवः परः। भ्रुवोर्मध्येऽथवा ध्यात्वा अर्कन्तु तेज ईश्वरम्।
स्थिरदृष्टौ राजपूज्यो जीवन्मुक्तः शिवो यथा।
आत्मानमात्मरूपं हि ध्यात्वा यो निष्क्रियो भवेत्।
निराशीर्यततत्त्वोऽयं इतरो न नृपस्थितिः।

इदानीं शृणु नाडीनां भेदं वक्ष्यामि सिद्धिदम्।
मेरुवाह्ये इडानाम्नी पिङ्गलया समन्विता। सुषुम्ना
भानुमार्गेण ब्रह्मद्वारावधि स्थिता। सरस्वती सुगन्धा तु
गान्धारी हस्तिजिह्वका। ज्ञातव्या कर्णयोर्मध्ये नेत्रयोश्च
तथान्तिमा। पूषा चालम्बुषा चेति मूलस्था कुत्रचित् तथा।
लिङ्गद्वारादिडामार्गे ब्रह्मस्थानावधि प्रिये । नाड्यन्तं
प्रतिलोमेषु सहस्राणां द्विसप्ततिः। इदानीं देहमध्यस्थाः
कथ्यन्ते दश वायवः। कार्यकारणभावेन कथ्यन्ते तानि
चिह्नतः। प्राणवायुर्हृदि स्थित्वा श्वासोच्छ्वासं करोति सः।
असिकान्तं पीतमीशं करोति योगसंज्ञकः। अपानो गुददेशस्थः
करोत्याकुञ्चनं स तु। स्तम्भनञ्च तथापानः समानो
नाभिमण्डले। तोषकादिपोषकन्तु नाडीनां रूचिदायकः।
दीप्ताग्निमध्येऽपि तथा समानाख्या महापरा। ताद्दृ मध्ये
उदानस्तु अश्नाति पिबतीति च। शरीरं सकलं व्याप्य व्यानवायुः

प्रतिष्ठितः। शरीरे चालनं तेषु करोति स्थापयत्यपि। नेत्रमध्ये

कूर्मनामा निमेषोन्मेषकृदयम्। उद्गारे नाग आख्यातः

ऊर्द्धवायुः प्रचालने। कृकरः क्षुत्करो ज्ञेयो देवदत्तो

p. 839) विजृम्भणे। धनञ्जयः सच्चिदाकारो मृतदेहं न मुञ्चति

। यद्यपि सर्गकाण्डे सर्वमेतदुक्तं तथापि

कार्यकारणभावज्ञापनाय पुनर्निर्दिष्टमिति न पुनरुक्तम्।

इदानीं मध्यलक्षन्तु कथ्यते सिद्धिकारकम्। श्वेतं

रक्तं तथा पीतं धूम्राकारन्तु नीलभम्।

अग्निज्वालासमानाभा विद्युत्पुञ्जसमप्रभा।

आदित्यमण्डलाकारमथवा चन्द्रमण्डलम्। ज्वलदाकाशतुल्यं

वा भावयेद्रूपमात्मनः। एतज्ज्योतिर्मयं देहं मनोमध्ये तु

लक्षयेत्। एतेषाञ्च कृते लक्षे नानादुःखं प्रणश्यति। मनसस्तु

मलो याति महानन्दो भवेत्ततः। कथ्यते तु देव्यधुनाकाशं

पञ्चभिर्लक्षणैः। आकाशन्तु महाकाशं पराकाशं

परात्परम्। तत्त्वाकाशं सूर्यकाशमाकाशं पञ्चलक्षणम्।

सवाह्याभ्यन्तरे नित्यं निराकाशन्तु निर्मलम्। कर्त्तव्यं

लक्षमाकाशं साधयेत् साधनं विना। घनान्तरालसदृशं

पराकाशं तथैव च। कल्पान्ताग्निसमं ज्योतिर्महाकाशं

स्मरेत्तथा। कोटिकोटिप्रदीपाभं तत्त्वाकाशं स्मरेत्तथा।
सूर्याकाशं तथा कोटिसूर्यविन्दुसमं स्मरेत्। सवाह्याभ्यन्तरे
चैवमाकाशं लक्षयेत्तु यः। शिववद्विहरेद्विश्वे
पापपुण्यविवर्जितः। एतेषाञ्चैव लक्षेण कर्मद्वाराऽघमाहरेत्
। नवचक्रं कलाधारं द्विलक्षं व्योमपञ्चकम्। समग्रं यो
न जानाति स योगी नामधारकः। षोडशाधारभेदन्तु शृणु देवि
 विशेषतः। अङ्गुष्ठपादयोस्तेजः सलक्षस्थिरदृष्टिमान्।
पादाङ्गुष्ठे य आधारः प्रथमो योगतत्त्वतः। द्वितीयं
पादमूलन्तु पादमूलपरं स वै। पादस्य पार्ष्णी संस्थाप्य
बलवान् प्रभवेन्मुनिः। पादमूलेऽथवा पादाङ्गुष्ठमूलं
विधारयेत्। तृतीयन्तु गुदाधारो गुदसङ्कोचनक्रिया।
विकाशाकुञ्चनं तस्य स्थिरवायौ च मृत्युजित्। लिङ्गाधारं
चतुर्थन्तु लिङ्गसङ्कोचनन्तु च। लिङ्गसङ्कोचनाभ्यासात्

p. 840) पश्चिमादण्डमध्यगः। वज्रनाडीति तन्मध्ये
पुनरभ्यसयं स्तथा। सञ्चारो वायुमनसोरतिसञ्चार इति त्रिधा।
ग्रन्थित्रयविभेदस्तु तद्भेदो ब्रह्ममार्गतः। ब्रह्मपद्मो
वायुपूर्णो भूत्वा तिष्ठति योगिराट्। वीर्यस्तम्भो भवेत्तेन
साधयेत्तु सदा युवा। मूलाधारे ब्रह्मपद्मे षद्द्मे च तथा
तथा। पञ्चमं जठराधारं तदा बन्धयति क्रमात्। मृत्युना

भङ्गसिद्धोऽयं मृत्योरेव क्षयङ्करः। अनेन

पश्चिमादूर्द्धं वायुः कुर्याद्विशालधीः। बन्धोऽयं

बुद्धिमनसोः पञ्चमाधारकालजित्। नाभ्याधारो भवेत्

षष्ठस्तत्र प्राणं समभ्यसेत्। स्वयमुत्पद्यते नादो नादतो

मुक्तिदन्ततः। सप्तमो हृदयाधारस्तस्मिन् वायुनिबन्धनात्।

ऊर्द्धक्राणि पद्मानि विकसन्ति महान् भवेत्।

कण्ठाधारोऽष्टमस्तत्र कण्ठसङ्कोचलक्षणः। जालन्धराख्यो

बन्धः स्यात्तस्मिन् सति मरुद्दृढः। नवमो घण्टिकाधारस्तत्र

जिह्वाग्रमग्रतः। सम्पिवत्यमृतं तस्माद् योगजिन्मृत्युजित्परः।

दशमस्ताद्द काधारस्तत्र जिह्वाग्रतः कृते। चलने दोहने चैव जिह्वा

जडति लम्बिता। नासिकाप्राप्तजिह्वेयं ताद्द लग्ना भवेत्ततः।

एकादशी भवेज्जिह्वा तलजाधार ईश्वरि । जिह्वाग्रमथने तस्मिन्

पानीयं मधुरं भवेत्। तत्पीतेषु कविर्गीतिज्योतिश्छन्दोविदां

वरः। दन्ताधारो द्वादशेति सर्वरोगक्षयङ्करः।

धारयेद्दन्तयोर्मध्ये जिह्वाग्रञ्च बलादपि।

धृत्वार्द्धघटिकामात्रं सर्वरोगन्तु नाशयेत्। नासाधारस्ततो

ज्ञेयो नासालक्षस्त्रयोदशः। मनःस्थिरकरो यस्तु वायुस्थिरकरो

महान्। नासापुटे स्थिरा दृष्टिराधारोऽयं चतुर्द्दशः।

कृतेऽस्मिन् स्वीयतेजः स्यात् प्रत्यक्षं षड्मासतः। पार्थिवं

त्रुटति क्षिप्रं प्रत्यक्षं स्वीयतेजसा। पञ्चदशो भ्रुवोर्मध्ये

स्थिरदृष्टिस्तथा ध्रुवम्। अस्मिन् दृष्टिः स्थिरा कोटिः किरणानि स्फुरन्ति हि। नेत्राधारः षोडशोऽयमङ्गुल्यग्रेण चालयेत्।

p. 841) पृथ्वीमध्ये तु यत्किञ्चिद्वर्त्तते जठरानलः। प्रत्यक्षं तद्भवेत्सर्वं तदाभ्यासान्न संशयः। सर्वज्ञः प्रभवेत्तेन इति आधारषोडशः॥

इदानीं योगमष्टाङ्गं शृणु लक्षणसंयुतम्। यमश्च नियमश्चैव चासनं प्राणसंयमः। प्रत्याहारो धारणा च समाधिश्च विशेषतः। अष्टाङ्गयोग एभिस्तु चैतेषां लक्षणं शृणु। शान्तिः सन्तोष आहारो निद्राल्पा मनसो दमः। शून्यान्तःकरणश्चेति यमा इति प्रकीर्त्तिताः। चापल्यन्तु दूरे त्यक्त्वा मनःस्थैर्यं विधाय च। एकत्र मेलनं नित्यं प्राणमात्रेण सा मतिः। सदोदासीनभावस्तु सर्वत्रेच्छाविवर्जनम् । यथालाभेन सन्तुष्टः परमेश्वरमानसः। मानदानपरित्याग एते तु नियमा इति। आसनानि च तावन्ति यावन्तो जीवजन्तवः। प्राणायामस्त्रिधा चेति बहुधा प्रथमं शृणु। आसने प्राणसंयामे न शक्ताः सुकुमारकाः। महापुण्यप्रभावेण शक्यते तु महात्मना। इडां शशिप्रभां ध्यात्वा मन्देन्दुना तु पूरयेत्। पूरयित्वा यथाशक्ति ध्यानयोगी तु कुम्भयेत्।

महाज्योतिर्मनो भूत्वा वायुः पूर्णकलेवरः। शक्तित्रासन्तु

सन्त्रास्य रेचयेद्वायुमर्हितः। पिङ्गलामर्कवर्णान्तु

त्यजेद्ध्यात्वा शनैः शनैः। अयं पतङ्गः

काष्ठाग्निप्रत्यासेन पुनः पुनः। कृत्वा कलेवरं शुद्धं

कुर्याद्यत्नैर्महात्मना। मनो निवार्य संसारे विषयकार्यै

तथैव च। मनोविकारभवश्चैव त्यक्त्वा शून्यमयो भवेत्।

प्रत्यहारो भवत्येव सर्वनिन्दाचमत्कृतः। ध्यानन्तु द्विविधं

प्रोक्तं स्थूलसूक्ष्मविभेदतः। स्थूलं मन्त्रमयं विद्धि

सूक्ष्मन्तु मन्त्रवर्ज्जितम्। समाधिर्निश्चला बुद्धिः

श्वासोच्छ्वासादिवर्जितः। पिण्डब्रह्माण्डयोरैक्यं

शृण्विदानीं प्रयत्नतः। ब्रह्माण्डे सन्ति ये चाण्डाः

पिण्डमध्येऽपि ते स्थिताः। तलं पादाङ्गुष्ठतले तस्योपरि

p. 842) तलातलम्। महातलं गुल्फयोर्मध्ये गुल्फोपरि रसातलम्।

सुतलं जङ्घयोर्मध्ये वितलं जानुमध्यकम्।

ऊर्वोर्मध्येऽतलं प्रोक्तं सप्तपातालमीरितम्। तलं तलातलञ्चेति

महातलरसातलम्। सप्तपातालमेतत्तु सुतलं वितलातलम्। इदानीं

पिण्डमध्ये तु सप्तलोकं शृणु प्रिये । मूलाधारे तु भूर्लोको

लिङ्गाग्रे तु भुवस्ततः। स्वर्लोको लिङ्गमूले तु मेरुमूले महस्तथा

। मेरुच्छिद्रे जनोलोको मेरुनाड्यां तपस्तथा। कमले मर्त्त्यलोकस्तु

इति लोकः पृथक् पृथक्। भूर्भुवः स्वर्महश्चेति जनश्चैव तपस्तथा। सप्तमः सत्यलोकस्तु सप्तलोक इति स्मृतः। सप्तलोकैस्तु पातालैर्भुवनानि चतुर्दश। अथ ब्रह्माण्डमध्यस्थाश्चत्वारो लोकपालकाः। पिण्डमध्ये तु तान् ज्ञात्वा सर्वसिद्धीश्वरो भवेत्। इन्द्रो ब्रह्मा विष्णुरीशश्चत्वारश्चात्मदेवताः। मूलाधारे चतुष्पत्रे गजारूढो महानिति। सृष्टिकर्त्ता च तत्रैव स्वाधिष्ठाने महान् हरिः। मणिपूरे शूलपाणिरष्टसिद्धीश्वरो महान्। ताद्दृ द्वारे ताद्दृ मध्ये ललाटे वक्षकण्ठके। शृङ्गाटिका कपाले च लम्बिका ब्रह्मरन्ध्रके। नवचक्रमूर्द्ध्वचक्रञ्च त्रिकूटेत्येकविंशतिः। ब्रह्माण्डानि वसन्तीति ज्ञातव्यानि प्रयत्नतः। सप्त द्वीपानि कथ्यन्तेऽधुना तानि शृणु प्रिये । जम्बूद्वीपस्तु मज्जायां शाकद्वीपस्तु मध्यमः। शाल्मद्वीपः शिरोमध्ये मांसमध्ये कुशस्तथा। त्वचि क्रौञ्चो लोममध्ये गोमयद्वीप ईरितः। नखमध्ये तथा श्वेतः सप्तद्वीपा वसुन्धरा। जम्बूः शाकस्तथा शाल्मः कुशः क्रौञ्चश्च गोमयः। श्वेतः सप्तेति खण्डानि सप्तखण्डैर्वसुन्धरा। गुप्तान्येतानि रूपाणि देहमध्ये स्थिराणि च। समुद्राः सप्त कथ्यन्ते पिण्डमध्ये व्यवस्थिताः। लवणेक्षुसुरासर्पिर्दधिदुग्धजलान्तकाः। लवणं स्वेदमध्ये तु इक्षूरक्ते मधु त्वचि। सर्पिर्मेदो वसा मध्ये दधि क्षीरं ललाटके

।

p. 843) वीर्यमध्येऽमृतो ज्ञेयः पादे कूर्मः स्थितो महान्।
इदानीन्तु नवद्वारे नव खण्डानि संश्रृणु। पाय्वादौ भारतं
खण्डं काश्मीरं त्रिकमण्डद्द म्। द्विजखण्डमेकपादं
खण्डं वक्ष्ये समण्डलम्। कैवर्त्तं गर्त्तगान्धारं
नवखण्डमिति स्थितम्। इदानीं पर्वताश्चाष्टौ कथ्यन्ते श्रृणु
यत्नतः। मेरुदण्डे सुमेरुस्तु पीठमध्ये हिमालयः।
वामस्कन्धे तथा दक्षे मलयो मन्दराचलः। विन्ध्यस्तु दक्षिणे
कर्णे वामे मैनाक ईश्वरि । ललाटे मध्यदेशे तु श्रीशैलः
परमेश्वरि । तथा ब्रह्मकपाटस्थः कैलासः पर्वतो महान्।
सुमेरुर्हिमवान् विन्ध्यो मलयो मन्दरस्तथा। श्रीशैलो
मैनाकश्चेति कैलासोऽष्टौ च पर्वताः। अपरे पर्वताः सर्वे
अङ्गुलीमध्यवासिनः। शरीरे नवनाडीस्था नर्मदा च महेश्वरि
। इडायां यमुना देवि  पिङ्गलायां सरस्वती। सुषुम्नायां
वहेद्गङ्गा चान्योन्यासु च नाडिषु। गङ्गा सरस्वती गोदा
नर्मदा यमुना तथा। कावेरी चन्द्रभागा च वितस्ता च इडावती।
द्विसप्ततिसहस्रेषु नदीनदपरिस्रवः। इतस्ततो देहमध्ये ऋक्षश्च
सप्तविंशतिः। योगाश्च राशयश्चैव ग्रहाश्च तिथयस्तथा।
लहरीषु मीनमनी चावाहनं स्थापनं तथा। सर्वाङ्गेषु च
देवेशि  समग्रं ऋक्षमण्डलम्। त्रयस्त्रिंशत्कोटयस्तु निवसन्ति च

देवताः। तथा पीठानि सर्वाणि देहमध्ये स्थितानि च। हृदये व्योममध्ये तु अनन्ताद्यास्तु वासुकिः। उदरे व्योममध्ये तु परे नागा वसन्ति हि। गन्धर्वकिन्नराः शूरा विद्याधराप्सरादयः। अनेकतीर्थवर्णाश्च गुह्यकाश्च वसन्ति हि। अनन्तसिद्धयो बुध्या प्रकाशो वर्त्तते हृदि। मेघस्य मण्डलं ज्ञेयम् अश्रुपाते तथैव च। चन्द्रार्कौ नेत्रयोर्मध्ये जङ्घा लोमसु साक्षिणः। तृणगुल्मादिकञ्चापि विश्वरूपं स्मरेत्ततः। समग्रदर्शनान्मुक्तः स्वर्गभोगञ्च मत्सुखम्।

p. 844) तदेतच्चिन्तया याति रोगशोकविवर्ज्जितः। यत्कर्मा कर्मणा शङ्का मनोमध्ये भवेद्बहिः। तत्कर्मकरणं मुक्तिरित्याह भगवान् शिवः। यस्य दर्शनमात्रेण रोगशोकविवर्जितः। परमानन्दचित्तः स्यात्तपस्वी चैव कीर्त्तितः। सप्तद्वीपा भवेद्दृष्टा तत्त्वज्ञानं ततो भवेत्। सर्वभावं विजानीयाद् वज्रदेहो भवेत्तथा। सर्पदष्टे विषं न स्यात् क्षुधा निद्रा तृषा तथा। उष्णता शीतता चेति वाक्सिद्धिः स्यान्न संशयः। विद्युत्पातेऽपि देहस्य क्वचिद्धानिर्न जायते। ततोऽसौ वायुयोगी स्याद्दृष्ट्वा पृथ्वीकुलान्वितः। अणिमाद्यष्टसिद्धिः स्यान्महापद्मोदयस्तथा। आगच्छन्ति समीपे च निधयो नात्र संशयः। यत्रेच्छा गमनं तत्र स्वर्गे मर्त्त्यैरसातले।

स्फुरत्याज्ञाख्यः सर्वत्र समीपे परमेश्वरः। कारणे हारणे
शक्तो रक्षणेऽपि च पार्वति । आत्ममध्ये मनो नित्यं निर्जने निवसेत्
सुधीः। कृत्वात्ममनसोरैक्यं प्राप्नोति परमं पदम्। चन्द्रः
सूर्यः स्थिरो यावत् तावद्देहस्थितिस्तथा। तावदेकं समाभाष्य
प्राप्नोति च सदागतिः। स भवेत् कविता धीरा निश्चला शान्तिरेव च।
गुरुपादप्रसादेन तदैक्यं याति सिद्धिभाक्। अधुना कमलानान्तु
शृणु सङ्केतमद्भुतम्। अनेकाकारभेदोत्थं कं स्वरूपन्तु
निर्मलम्। कमलं तेन विख्यातं त्रिविधं तत्त्वदेहकम्।
तत्राधारश्चतुष्पत्रे सत्त्वरजस्तमोदयः। एतद्भावस्थितश्चात्मा
साध्वसाधुकरो भवेत्। अस्मिन् सति स्थिरे चित्ते यमो वन्दीव गच्छति।
अनाहतो द्वितीयं यत्कथ्यते शृणु श्रद्धया। अनाहते महापीठे
चतुरस्रसमन्वितम्। वर्त्ततेऽष्टदलं पद्ममधोवक्रन्तु सत्पुरम्।
स्पर्शशब्दरूपरसगन्धा बुद्धिर्मनस्तथा। अहङ्कारः
क्रमादेते तत्राष्टदलसंस्थिताः। सपर्या पृथगाकारा वर्त्तते
तत्र निश्चितम्। ध्यानादात्मप्रकाशोऽस्य प्रकाशं कमलं ततः
।
p. 845) यथा सूर्यप्रकाशेन ऊर्द्धवक्रं प्रकाशितम्।
आत्मध्यानात् सदा तत्र आयुर्वृद्धिर्द्दिने दिने। शक्तिप्रसन्नता
स्याच्च रोगशोकविवर्जितः। यस्य मुद्राभ्यासशाली सम्यक् सिद्धा
च खेचरी। चिदानन्दमयं चित्तं चेतना चन्द्रिकान्विता।

परमात्मा महासूर्यः सूर्य एकः प्रकाशकः।

प्रकाशानन्दयोरैक्यं कर्त्तव्यञ्च निरन्तरम्। दीप्तस्तथा

महाज्योतीरविर्भाति परं पदम्। सदोदितं मनःसूर्यं

चन्द्रज्योतिरिवेक्षते। तन्मध्ये नाभिकर्तेति करणं ना कुलाकुलम्।

अव्यक्तन्तु परं तत्त्वमनित्यं वर्त्तते सदा। एको नाम पुमानस्ति

तस्मात्तस्मात् परं पदम्। तस्मात्तु परमं शून्यं तस्मात्

स्यात्तु निरञ्जनम्। एते पञ्चगुणोपेताः कथ्यन्ते तद्गुणं यथा।

निर्गुणत्वं निर्मलत्वं परिपूर्णत्वमेव च। व्यापकत्वं

केवलत्वं आनन्दस्य गुणा इति। निराकारत्वनित्यत्वनिजत्वञ्च

निरञ्जनम्। निर्णिकेतनता चेति तत्पदस्येति तद्गुणाः।

लीनताशीर्णतामूर्च्छातोयमण्डलता इति। गुणाः पञ्च

समाख्याताः शून्यस्य परमस्य वै। स्वभावं सहजं सत्यं

शान्तिः शान्तिस्वरूपतः। इति। निरञ्जनगुणाः पञ्च एतज्ज्ञानी

महेश्वरः। विद्योत्पत्तिस्तदानीन्तु कथ्यते श्रृणु यत्नतः।

आनन्दपरमात्मेति परमानन्द एकतः।

प्रबोधपरमानन्दचित्तोत्पत्तिप्रबोधवान्। चिदुदयात् प्रकाशश्च

एषां पञ्च तथैव च। अविनाश्योऽक्षयोऽभेदोऽदाह्यो ह्यखाद्य

एव च। एते पञ्च गुणाः प्रोक्ता अनादो नादवैरिणा।

किरणस्फूर्त्तिविस्फूर्त्तिहर्षवत् परमात्मना। तेतु पञ्च प्रकारेण

गुणाः पञ्च प्रकीर्त्तिताः। विचारश्च प्रभोल्लासा विभावश्च

लयस्तथा। प्रबोधस्य गुणाः पञ्च कीर्त्त्यन्ते तेन हेतुना।
अभ्यासकर्तृकमनाः सर्वतत्त्वप्रभा तथा। चिदुदयस्य पञ्चेति
गुणा ज्ञेया विशेषतः। बोधनं समयत्वञ्च विस्मृतिः

p. 846) सकलप्रभा। प्रकाशस्य गुणाः पञ्चचैते ज्ञानकराः
शुभाः। एतज्ज्ञाने ततश्चैषां ज्ञानमुत्पद्यते महत्।
आकाशात् पवनो वायोस्तेजस्तेजस एव च। जलं जलात्तथा पृथ्वी
एषां पञ्चगुणास्तथा। अगोचराद्वयानन्तग्राह्यमेषां
तथात्मनः। सञ्चारश्चालनं शेषे पञ्चधूम्राभमम्बरे।
उष्मप्रकाशरक्ताभज्वालादाहस्तु तेजसा। प्रकाशादेव
शैथिल्यमधुता श्वेततज्जले। स्थूलसाकारकाठिन्यगन्धं
पातमृदौ तथा। महाभूतानि पञ्चेति देहमध्येऽधुना शृणु।
महाभूतानि पञ्चेति पृथ्वीतेजो मरुत् खकम्। एतेषाञ्च तथा
पञ्चगुणस्थानं शृणु प्रिये । अस्थि मांसं लोम नाडी त्वक् चेति
पृथिवीगुणाः। क्षुधातृष्णालस्यनिद्रा ग्लानिश्च पञ्च वारिणः।
रोगो लज्जा भयोद्वेगौ धारणा च मरुद्गुणाः। एतज्ज्ञानेनैव
तेषां बुद्धिरुत्पद्यते शुभा। यद्यपि सर्गकाण्डे
पृथ्व्यादेर्गुणा उक्तास्तथाप्येतज्ज्ञानेनेत्यनेन
कार्यकारणभावदर्शनाय पुनरुच्यन्ते। मनो
बुद्धिरहङ्कारश्चित्तं चैतन्यमेव च। एते पञ्चप्रकाराश्च

अन्तःकरणसम्भवाः। मननामननं ज्ञेयं बुद्ध्यादिपञ्च

पञ्च तु। विवेकशान्तिसन्तोषक्षमावैराग्यतेति च। एते पञ्चगुणा

बुद्धेरहङ्कारगुणान् शृणु। अहम्भावमहञ्चादियुगान्तं

हिंसनं तथा। वृत्तिः स्मृतिर्मतिस्त्याज्यं निराशं चैतिका गुणाः

। निःस्पृहता द्वेषताधैर्यं विमर्षचिन्तनं तथा।

चित्तेर्गुणास्त्रयो जीवगुणान् शृणु महेश्वरि । आस्था श्रद्धा

कृपा भक्तिः सत्यं सत्त्वगुणा इति। त्यागो भोगश्च श्रद्धा च

सार्थवस्तुस्पृहा तथा। रसो पञ्चगुणाः चैते तामसस्य गुणान्

शृणु। प्रमोदः स्वादकलहौ विवादो भ्रान्तिवर्द्धनम्।

वञ्चनञ्च तथा शोकस्तामसस्य गुणा इमे। स्वप्नजाग्रत्सुषुप्तानि

चैतन्यं जीवका गुणाः। एतादृशि सति तत्त्वं चैतन्यात्तद्भवेदिति।

p. 847) प्रकृतीच्छा क्रिया माया वचः पञ्च गुणा इति। आशा

तृष्णास्पृहाकाङ्क्षामिथ्यान्तं प्रकृतेरिति। उन्मादो वासना

वाञ्छा चेक्षिता च गुणाः प्रिये । शरणं सत्कुलाचारः

कार्यनिश्चय उच्यते। इदं योगरहस्यञ्च न वाच्यं

मूर्खसन्निधौ॥

योगदेशस्तु तत्रैव॥ उत्पातरहिते देशे कण्टकादिविवर्जिते।

अभ्यस्यते सदा योगः समः स्यात् सुखदुःखयोः। सुराजनि

समाश्रित्य कर्त्तव्यो निरुपद्रवे। देशे तु सर्वशस्याढ्ये
लोभमोहविवर्जिते। स्तुतिर्निन्दा न कर्त्तव्या साधुना सत्यवादिना॥
योगानधिकारिणमाह तत्रैव॥ मनोमध्ये दया नास्ति सदा यः
कलहप्रियः। स्वकार्यलोभने शीलो गुरुकार्यपराङ्मुखः। एतस्मै
च न दातव्यं वक्तव्यं तस्य सन्निधौ। नञुभयत्र सम्बध्यते
न वक्तव्यमित्यर्थः। योगाधिकारिणोऽपि तत्रैव॥
भावाभावविनिर्मुक्तः सर्वग्रहविवर्जितः। सदानन्दमयो योगी
सदाभ्यासी सदा भवेत्। विरुद्धे दुःखदेशे च
विरूपेऽतिभयानके। एतदनिष्टसंस्पर्शे न्यूनाधिके बलाधिके।
एवम्भूतस्य कर्माणि सङ्कल्परहितानि च। एवं गच्छन् स्वपन्
पश्यन् पापपुण्यैर्न लिप्यते। उत्पन्नतत्त्वबोधः स्यात् सदा शीलस्य
सर्वदा। परे दृष्टिविलं न स्याद् विविधानि मृतानि च।
अन्तःकरणमेतस्ययोगिनो निष्क्रियं तु स। सर्वदा सहजस्तस्य
निष्कलाध्यात्मवादिनः। यदा प्रयत्ननिष्पाद्यं ग्राह्यं
सर्वमकारणम्। यस्य चित्ते हठं नास्ति सहजानन्दनिर्भरम्।
कर्त्तव्या च स्थिरा दृष्टिस्तेनैव परमं स्थिरम्। मनः स्थिरञ्च
तेनैव कर्त्तव्यं तत्परं पदम्। इदानीं योगमाहात्म्यं कथ्यते
यद्भवेत्ततः। गुरोरनुग्रहाच्छास्त्रपाठादाचारतस्तथा।
वेदान्तार्थरहस्यार्थसर्वज्ञानादुपासनात्।
आसनाद्धारणाद्ध्यानाल्लयषट्कर्मसाधनात्।

आसनाच्चतुरशीतिवैराग्यत्यागसम्भवात्।

p. 848) हठयोगाद्वरौषध्यात् मुद्रासाधनमानतः।

वनवासाद्बहुक्लेशात्तथा मन्त्रादिसाधनात्।

बहुदानतपस्तीर्थसेवनाद् दानशिक्षणात्। सन्ध्यात्रयग्रहेणाथ

षडदर्शग्रहणात्तथा। शिरोम्ण्डगतो न्यासाद् योगतत्त्वञ्च

विद्यते। गुरुपादोदकं शिष्टसेविना सत्यवादिना।

कन्यास्त्र्यादिदृष्टिपातहर्षगतिविवर्त्तनात्। प्रसादात् सद्गुरोः सम्यक्

प्राप्नोति परमं पदम्। न गुरोरधिकं तत्त्वं यत्तस्मात् परमं

पदम्। निमेषार्द्धेन तस्यैव आज्ञापालनतो भवेत्।

महानन्दशतप्राप्तिस्तस्मै श्रीगुरवे नमः।

नानाविकल्पविभ्रान्तिनाशञ्च कुरुते तु यः। सद्गुरुः स तु विज्ञेयो

न तु वैरप्रकल्पकः। अत एव महेशानि  सद्गुरुः शिव आदितः।

सत्यवादी च सच्छीलो गुरुभक्तो दृढव्रतः। स्वल्पाचाररतात्मा यो

दानादिशीलसंयुतः। कापट्यलोभविन्यासौ

महावंशसमुद्भवः। ईदृशः सद्गुरुस्तस्य सङ्गतौ यत्नवान्

भवेत्। तदेव मनसः शान्तिं प्राप्नोति परमं पदम्॥

दत्तात्रेयसंहितायां प्रथमाध्यये तु॥ योगो हि बहुधा

ब्रह्मन्  तत्सर्वम् कथयामि ते। मन्त्रयोगो लयश्चैव

हठयोगस्तथैव च। राजयोगश्च सर्वेषां योगानामुत्तमः

स्मृतः॥ इति योगभेदः॥

आरम्भश्च घटश्चैव तथा परिचयः स्मृतः।

निष्पत्तिश्चेत्यवस्था च चतुर्द्धा परिकीर्त्तिता। इति योगावस्था।

एतेषां विस्तरंवक्ष्ये इत्थं श्रोतुमिहेच्छसि। अङ्गेषु

मातृकान्यासपूर्वं मन्त्रं जपन् सुधीः। एवञ्च मन्त्रसिद्धिः

स्यान्मन्त्रयोगः स उच्यते। मृदुस्तत्राधिकारी स्याद्द्वादशाब्दैस्तु

साधनात्। प्रायेण लभते ज्ञानं सिद्धिश्चैवाणिमादिका।

अल्पबुद्धिरयं योगः सेवते साधकाधमः। मन्त्रयोगश्च यः

प्रोक्तो योगानामधमः स्मृतः॥ इति मन्त्रयोगः॥

लययोगश्चित्तयोगात् सङ्केतैश्च प्रजायते। आदिनाथेन

सङ्केतानन्तकोटिः प्रकीर्त्तिता।

साङ्कृतिरुवाच।

भगवन्नादिनाथस्य कोऽयं रूपः स उच्यताम्॥

दत्तात्रेय उवाच॥

देवदेवस्य नामेदं आदिनाथश्च भैरवः। स्वशरीरैश्च
देवोऽयं लीलया च विरिञ्चिभिः। श्रीकण्ठपर्वते गौर्या सह
प्रथमनायकः। महेन्द्रपर्वते चैव कदलीवनगोचरे। गिरिकूटे
चित्रकूटे सपादनियुते गिरौ। कृपयैकैकसंयुक्तं शवरेभ्येऽपि
दत्तवान्। तानि सर्वाणि वक्तुं हि न शक्नोमि तु विस्तरात्। कानिचित्
कथयिष्यामि सहजाभ्यासतः सुखम्। तिष्ठन् गच्छन् स्वपन्
भुञ्जन् शून्यं ध्यायेदहर्निशम्। अयमेको हि सङ्केत
आदिनाथेन भाषितः। नासाग्रदृष्टिमात्रेण परमः परिकीर्त्तितः।
शिवः पद्मे तु भर्गस्य ध्यानं मृत्युञ्जयः परः। हुँ।
भ्रूमध्ये दृष्टिमात्रेण परः सङ्केत उच्यते।
विभूतिलेपलाभोऽपि उत्तमः परिकीर्त्तितः। स्वस्य
दक्षिणपादस्याङ्गुष्ठेन लयमुत्तमम्। उत्तमः शरवद्भूमौ
शयनञ्चोक्तमुत्तमम्। शिथिले निर्जने देशे कुर्याच्चेत्
सिद्धिमाप्नुयात्। एवञ्च बहुसङ्केतान् कथयामास शङ्करः।
सङ्केतैर्बहुभिः पुण्यैर्यस्य चित्तं लयं गतम्। स एव लययोगः
स्याद् हठयोगं ततः शृणु। इति॥ अत्र सर्वयोगोत्तमत्वेनादौ
हठयोग उक्तः। मन्त्रयोगस्तु साधनरूपतया योगप्रकरणेन
लिखित इति। शिवागमे पञ्चमपटले॥

अथातः सम्प्रवक्ष्यामि कालपूरुषलक्षणम्। येत

विज्ञानमात्रेण त्रिकालज्ञो भवेन्नरः। कालोदरस्थितश्चापि येनोपायेन लक्ष्यते। तद्वदामि समासेन यथोद्दिष्टं शिवागमे। एकान्ते निर्जने गत्वा कृत्वादित्यन्तु पृष्ठतः। निरीक्षेत्तु निजां छायां कण्ठदेशे समाहितः। ततश्चाकाशं वीक्षेत तत्र पश्यति शङ्करम्। ॐ ह्रीं परमात्मने नमः। अष्टोत्तरशतं जप्त्वा ततः पश्यति शङ्करम्। शुद्धस्फटिकसङ्काशं नानारूपधरं हरम्। षण्मासाभ्यासयोगेन भूधराणां पतिर्भवेत्। वर्षद्वयेन हे नाथ  कर्त्ता हर्त्ता स्वयं प्रभुः।

p. 850) त्रिलोकत्वमवाप्नोति परमानन्ददायकम्। सन्तताभ्यासयोगेन नास्ति किञ्चित् सुदुर्लभम्। तद्रूपं कृष्णवर्णञ्च यः पश्येद्व्योम्नि निर्मले। षण्मासान्मृत्युमाप्नोति स योगी नात्र संशयः। पीते व्याधिस्तथा रक्ते नीले हत्यां विनिर्दिशेत्। नानावर्णस्वरूपेऽस्मिन्नुद्वेगो जायते महान्। पादगुल्फोदराणाञ्च विनाशो मृत्युमादिशेत्। अर्द्धवर्षेण वर्षेण क्रमाद्वर्षद्वयेन च। विनष्टे दक्षिणे बाहौ स्वबन्धुर्म्रियते ध्रुवम्। वामबाहौ तथा भार्या विनश्यति न संशयः। शिरोदक्षिणबाहूनां विनाशे मृत्युमादिशेत्। अशिरोमासमरणं विना जङ्घे दिनैर्नरः। अष्टाभिः

स्कन्धनाशे तु शरीरार्द्धे तु तत्क्षणात्। योगार्णवे॥ प्रातः
पृठगते रवावनिमिषं छायां गते स्वां चिरं दृष्ट्वोर्द्धं
नयनेन यं सितनरं छायानरं पश्यति।
तत्कर्णांसकरास्यपार्श्वहृदयाभावे क्षणेऽर्काश्वदिक्
भूवाणाक्षिसमाः शिरोविगमतो मासांस्त्वसौ जीवति।

ज्ञानसारे द्वितीयाध्याये॥ रसनामर्द्धगां कृत्वा
कलार्द्धं योऽवतिष्ठते। क्षणेन मुच्यते देवि
व्याधिमृत्युजरादिभिः। रसना त्वन्तरे नित्यं यावद्ब्रह्मविलं
गता। अमृतं रसनाग्रेण पीयमानं विचिन्तयेत्। मासार्द्धं
जीयते मृत्युः सत्यं सत्यं हि पार्वति । सर्वव्याधिविनिर्मुक्तो
योगीन्द्रो नात्र संशयः। रसनाताद्द मूले च वायुं पीत्वा शनैः
शनैः। षण्मासाभ्यन्तरे देवि  महायोगी भविष्यति।
रसनास्वादसम्भेदं विशेषं श्रृणु पार्वति   क्षीरेण नश्यति
व्याधिः कटुकण्डुविनाशनम्। सुस्वादेन महादेवि
बालपापविनाशनम्। घृतस्वादनमात्रेण अमरत्वं लभेन्नरः।
मधुस्वादरसाच्चैव शास्त्रमुद्गिरते स तु।
मिष्टान्नखण्डखाद्यानि लड्डूकस्वादवर्त्तिनि।

p. 851) एवमादीन्यनेकानि कामधेनुरुपस्थिता। दिव्यकन्यां

रमेन्नित्यमाकृष्टिर्जायते सदा। अणिमादिगुणोपेत ऊर्द्धरेताः प्रजायते। हिक्कां दद्यात् सदा वक्रे घ्राणञ्चैव विजृम्भते। एवमभ्यासयोगेन कामदेवो द्वितीयकः। योगिनीगणमासाद्य सृष्टिसंहारकारकः। न क्षुधा न तृषा निद्रालस्यं देवि प्रजायते। भवेच्च स्वर्गगामीव सर्वदोषविवर्जितः॥

इति श्रीप्राणतोषिण्यां षष्ठे ज्ञानकाण्डे राजयोगरूपपल्लवकथनं नाम तृतीयः परिच्छेदः॥

योगज्ञानार्थं क्षुद्रब्रह्माण्डत्वेन शरीरमुक्तम्। निर्वाणतन्त्रे दशमपटले यथा॥ कथितं वाह्यदेशस्य ब्रह्माण्डस्य तु लक्षणम्। तन्मध्ये वर्त्तते साक्षाद्भुवनानि चतुर्दश। तदेव विग्रहं देवि महाब्रह्माण्डमध्यगम्। एवं बहुविधं देवि तत्र ब्रह्माण्डके स्थितम्। वृहद्ब्रह्माण्डे ये सर्वे तेऽपि यस्य शरीरिणः। पृथिव्यां तेऽपि वर्त्तन्ते जन्तोराकारविग्रहाः महाब्रह्माण्डमध्ये तु वृहद्ब्रह्माण्डमेव च। तन्मध्ये जन्तवो देवि तन्मध्ये भुवनानि च। दृष्टिमात्रेण भेदोऽस्ति स्थूलसूक्ष्मादि भेदतः। महाब्रह्माण्डके यद्यत् प्रकारं परमेश्वरि तत्तत्सर्वं हि देवेशि वृहद्ब्रह्माण्डमध्यतः॥ चतुर्थपटले॥ शृणु देवि

प्रवक्ष्यामि वृहद्ब्रह्माण्डलक्षणम्। मेरुः पर्वतमध्ये च सर्वदेवाश्रयः प्रिये । महाधीरा नदी तत्र मध्यदेशे तु सा स्थिता। सुमेरोश्चोर्द्धदेशे च सत्यलोको वरानने । अधोभागे महेशानि प्रतिष्ठति रसातलम्। एवं क्रमे मेरुमध्ये भुवनानि चतुर्दश। पातालसप्तकस्योर्द्धे ब्रह्मपद्मं महेश्वरि । आधारचक्रं तत् पद्मं धरामध्ये चतुर्दलम्। पद्ममध्ये वीजकोशे क्षितिचक्रं मनोहरम्। बलयाकाररूपेण समुद्राः सप्त संस्थिताः। जम्बूद्वीपं मध्यदेशे चतुष्कोणं मनोहरम्।

p. 852) त्रिकोणं मदनागारं कन्दर्पश्चाधिदेवता। इन्द्ररूपं हि लंबीजं गजेन्द्रवाहनं शिवे । त्रिकोणे मदनागारे लिङ्गरूपी महेश्वरः। मायाशक्तिर्महेशानि भुजगाकाररूपिणी। तयैव वेष्टितं लिङ्गं सार्द्धत्रिबलयाकृति। लिङ्गच्छिद्रं स्ववक्रेण समाच्छाद्य सदा स्थितम्। इन्द्रवीजं वरारोहे लिङ्गस्य वामदेशके। सुसिद्धं ब्रह्मसदनं नादोपरि सुसुन्दरम्। तत्रैव निवसेद् ब्रह्मा सृष्टिकर्त्ता प्रजापतिः। वामभागे च सावित्री वेदमाता सुरेश्वरी। तस्याः प्रसादमासाद्य सृष्टिं वितनुते सदा। यद्रूपं ब्रह्मसदनं लक्षयोजनविस्तृतम् तत् सर्वं परमेशानि ऋग्वेदाख्या मयोदितम्। त्रिकोणं परमेशानि द्विषष्टिकुण्डलाहिवत्। तदेव पर्वतं

प्रोक्तं सर्वदेवाश्रयं हि तत्। त्रिकोणमध्ये तद्वाह्ये
पश्यापूर्वं वरानने । स्थावरं पर्वतं पश्य कीटं
पशुमनुत्तमम्। खगं नगादिकं देवि  नास्ति किं पृथिवीतले।
त्रिकोणवाह्ये गिरिजे  पर्वतं बहुरूपकम्। नीलाचलं
मन्दराख्यं पर्वतं चन्द्रशेखरं। हिमालयं सुवेलञ्च
मलयं भस्मपर्वतम्। चतुष्कोणे वसेद्देवि  एतत् सप्तकुलाचलम्।
तृणगुल्मलतादीनि नानारूपाणि तत्र वै। जायन्ते च म्रियन्ते च
पूर्वोक्तेनैव वर्त्मना॥ इति मूलाधारकथनम्॥

पञ्चमपटले॥

शिव उवाच॥

एतत् पद्मस्योर्द्धदेशे भीमाख्यं पङ्कजं शुभम्।
पत्रषड्कं तथा वृत्तं चतुर्द्वारविभूषितम्। पद्ममध्ये
वीजकोषे भुवोलोकं मनोहरम्। सिन्दूरसदृशं रक्तवर्णेन
भूषितं तदा। तस्योर्द्धे निवसेद्विष्णुः श्रीवाण्यौ वामदक्षिणे
। ब्रह्मणा सृज्यते लोकः पाल्यते चक्रपाणिना। वैकुण्ठं नाम तत्
स्वर्गं नानादेवालयं हि तत्। वैकुण्ठस्य दक्षभागे गोलोकं
सर्वमोहनम्। तत्रैव राधिका देवी द्विभुजो मुरलीधरः।

नारदाद्यैः सुरगणैः शोभितं वेदपारगैः।
वैकुण्ठसदृशं स्थानं नास्ति ज्ञाने च मामके। अग्रे मध्ये
तथा वामे ज्योतिषां परिपश्यति। नानाभोगयुताः सर्वे
नानारत्नोपशोभिताः। इन्द्राद्या देवताः सर्वा यथा सर्वं
प्रपश्यति। तथैव भूमिगाः सर्वे तिष्ठन्ति स्तुतिहेतवे।
महातत्त्वमयं लोकं वेदबाहुविराजितम्। पीताम्बरं
शान्तमूर्त्तिं वनमालाविराजितम्। एवं सर्वं भक्तजनं
वैकुण्ठे चोपशोभितम्। विष्णुशब्दं विष्णुगणं वैष्णवं
विष्णुरूपकम्। विष्णुनाम विना नास्ति वैकुण्ठे परमेश्वरि ।
यद्रूपं गोलकं धामं तद्रूपं नास्ति मामके। ज्ञाने वा
चक्षुषोः किं वा ध्यानयोगेन विद्यते। शुद्धतत्त्वमयं देवि
नानादेवेन शोभितम्। मध्यदेशे गोलकाख्यं
श्रीविष्णोर्लोभमन्दिरम्। श्रीविष्णोः सत्त्वरूपस्य यत् स्थलं
चित्तमोहनम्। तस्य स्थानस्य महात्म्यं किं मया कथ्यतेऽधुना
। तत्रैव सततं भाति द्विभुजो मुरलीधरः। तदा सत्त्वमयो
विष्णुर्भुवनं पाति निश्चितम्। वैष्णवस्य महामोक्षो यत्रैव
परमेश्वरि । इति स्थानस्य माहात्म्यं संक्षेपेण मयोदितम्।
विस्तारेण न शक्नोमि जन्मान्तरशतेन च। वीजकोषस्य वाह्ये तु
वेष्टितं तोयमण्डलम्। प्रमाणं सुन्दरं तोयं यथा
क्षीरोदसागरम्। धूम्रस्य ज्योतिषाकारं कोटिचन्द्रसमप्रभम्।

बलयाकाररूपेण सुशुभ्रं तोयमण्डलम्। गङ्गादिसरितः सर्वास्तथैव भान्ति सुन्दरि । इन्द्रादिदेवताः सर्वाः स्तूयमाना निरन्तरम्। गन्धर्वयक्षनागादिकुष्माण्डा भैरवास्तथा। नानासुखविलासेन सदा चैकाग्रचेतसः। विष्णुगानं प्रकुर्वन्ति स्तुतिभक्तिपरायणाः। वेदगानं प्रकुर्वन्ति चतुर्वक्त्रेण वेधसा। मालवाद्याश्च षड्रागाः षट्त्रिंशद्रागिणी तथा। वेदगाने च भावन्तो मूर्त्तिमन्तः सदैव हि। मालवेनैव रागेण सामगानं सदा प्रिये । मल्लारेण सदा पूर्वं वसन्तेन तथा पुनः। हिल्लोलेन यजुः पाठं सदा कुर्वन्ति वेधसा। कर्णाटेनैव ऋग्वेदं श्रीरागेण तथा शिवे । निर्दिष्टपाठमेतत्तु अनिर्दिष्टमतः परम्। अत्रैव सन्ति ते रागाः सहस्राणि च षोडश। मुरारेर्मुलरीगानात् सर्वस्तालः प्रजायते। तेन तालेन रागेण सदा गायन्ति वेधसा। तद्रागस्य विभागं हि कुर्वन्ति मुनयो जनाः वसन्ताद्याश्च ऋतवस्तिष्ठन्ति तत्र सन्ततम्। नानाऋतुप्रसूनेन भूषितं मुरलीधरम्। तत्रैव राधिका देव नानासुखविलासिनी। वदन्ती मुरलीगानं कुरु कान्त  प्रमोहणम्। येन शब्देन कामस्य उत्पत्तिर्जायते सदा। तद्रागश्चैव तत्तालं कुरु गानं प्रयत्नतः। एवमानन्दसंयुक्ता महावेशविलासिनी। वामभागे सदा भाति राधिका भक्तवत्सला। तथा। आदौ राधां ततः कृष्णं जपन्ति ये च मानवाः। सद्गतिं चैव तेषां हि दास्यामि नात्र संशयः

। गुरुणा भावमार्गेण मन्त्रमार्गेण चैव हि। ये जना मां भजन्त्येव ते नरा मत्समाः सदा। या नारी मामभेदेन भजते पुरुषं तथा। तत्समाना च सा नारी जायते नात्र संशयः। भक्त्या वाप्यथवाऽ।भक्त्या जपन्ति युगलं यदि तव भक्त्या प्रदास्यामि मद्गतिं श्रृणु राधिके ॥ इति स्वाधिष्ठानकथनम्॥

षष्ठपटले॥ एतत्पद्मस्योर्द्धदेशे महापद्मं सुदुर्लभम्। दशपत्रं नीलवर्णं सहजं घोररूपकम्। डादिफान्तैः सचन्द्रैश्च पङ्कजञ्चातिशोभनम्॥ तन्मध्ये वीजकोषे निवसति सततं वह्निवीजं सुसिद्धम् वाह्ये तत् त्रैपुराख्यं नवतपननिभं स्वस्तिकं तत्त्रिभागे॥ स्वर्लोकाख्यमिदं देवि  सर्वदेवप्रपूजितम्। साकारं वह्निवीजञ्च सदैव मेषवाहनम्। रुद्रालयं हि तत्रैव महामोहस्य नाशनम्। भद्रकाली महाविद्या वामभागे सुशोभिता। भद्रकाली महाविद्या सदा संहारकारिणी।

p. 855) ब्रह्मणा सृज्यते लोकः पाल्यते विष्णुरूपिणा। परो देवो रुद्ररूपः सदा संहारकारकः। संहरेद्रुद्ररूपस्तु भद्रकालिकया सह। रुद्रस्य भाषणाद्देवि  किं न सिध्यति भूतले । यद्रूपं कथितं पूर्वं गोलोकं सर्वमोहनम्। तस्माद्वै

सर्वतोभावे रुद्रलोकं चतुर्गुणम्। महामोक्षप्रदं नित्यं रुद्रं भस्माङ्गभूषणम्। भ्द्रकाली महाविद्या रुद्रस्य वामदेशके। ततः कालीं महाविद्यां सदैव मुरलीधरः। आराध्य वहुयत्नेन वैकुण्ठाधिपतिर्भवेत्। गोलोकाधिपतिर्देवि स्तुतिभक्तिपरायणः। कालीपादप्रसादेन स भवेल्लोकपालकः। लोकानां रक्षनार्थाय सस्त्रीको मुरलीधरः। समाराध्य भद्रकालीं गोलोके निवसेत् सदा। प्रसादं कालिकायाश्च विष्णुना भुज्यते सदा। अतश्च पालको विष्णुर्महासत्त्वपरायणः॥ इति मणिपूरकथनम्॥

सप्तमपटले॥ एतत्पद्मस्योर्द्धदेशे विमलं पद्ममुत्तमम् । शोभितं द्वादशिः पत्रैः शोणबन्धूकसन्निभम्। वाञ्छन्ति रिक्तफलदं सिद्धिसिन्दूरसोदरम्। पद्ममध्ये वीजकोषे षट्कोणमण्डलं शुभम्। मण्डलस्य मध्यदेशे वायुवीजं मनोहरम्। सवीजं वायुवीजेन वेदबाहुविराजितम्। लोकत्रयस्य ईशानमीश्वरं सर्वपूजितम्। या विद्या भुवनेशानी त्रिषु लोकेषु पूजिता। ईश्वरस्य वामभागे सा देवी परितिष्ठति। महर्ल्लोकमिदं भद्रे पूजास्थानं सुरेश्वरि ॥ तत्रैव मानसं योगं कुरुते योगविद्वरः। सिन्दूरारक्तचार्वङ्गी स्फाटिकैर्निर्मिता यतः। अतश्च मानवाः सर्वे ज्योतिषं परिपश्यति। सर्वावयवसंयुक्ता

देवास्तिष्ठन्ति सन्ततम्। भूमिगाः परिपश्यन्ति चक्राकारं हि तैजसम्। स्वर्लोकगामिनः सर्वे परिपश्यन्ति साकृतिम्। अङ्गभेदं न पश्यन्ति स्थूलरूपनिरीक्षणम्। यथैव भूमिगा लोकाः प्रसरन्ति महीतले। तथैव देवताः सर्वाः स्वर्गे तिष्ठन्ति पार्वति ।

p. 856) भूर्लोके निवसेद्ब्रह्मा भुवोलोके जनार्द्दनः। स्वर्लोके निवसेच्छम्भुः सदा संहारकारकः। ब्रह्मादीनाञ्च ईशानः सर्वकर्त्ता च ईश्वरः। सर्वस्वामिस्वरूपश्च सर्वकर्ता च ईश्वरः । गोलोकं कथितं देवि  यद्रूपं शोभितं सदा। तस्माच्छतगुणं देवि  महर्लोकं सुसुन्दरम्। विस्तीर्णञ्च शतगुणं सर्वं शतगुणं शिवे । महर्लोकस्य माहात्म्यं किं वक्तुं शक्यते मया। महर्लोके वसेद्यो हि सामान्यभावतत्परः। तस्मादेव शतैकांशं गोलोके मुरलीधरम्। तदाज्ञां प्राप्य सहसा सृज्यते पद्मयोनिना। तदाज्ञया पाति लोकान् द्विभुजो मुरलीधरः। एवं हि रुद्ररूपेण संहरत्यखिलं जगत्। सर्वकर्त्ता यतो देवो ह्यत एव महेश्वरि । ईश्वरः सर्वकर्त्ता च निर्गुणश्चाचलः शिवः। भुवनेशीं समासाद्य सर्वस्वामी च ईश्वरः। अत एव महेशानि  स एव मोक्षदायकः। विश्वमाता च सा देवी विश्वपालनकारिणी। मोक्षदा सर्वलोकानां मुक्तिदा विश्वमातृका। भुवनेशीं विना

ईशः किञ्चित् कर्तुं न शक्यते। अत एव हि सा देवी मोक्षदा सर्वरूपिणी। इत्यनाहतकथनम्।

अष्टमपटले॥

शङ्कर उवाच।

अस्योर्द्ध्वे निर्मलं पद्मं सर्वमोहनकारणम्। षोडशैः पत्रकैर्युक्तं मोहान्धाकारनाशनम्। धूममध्ये यथा वह्निस्तथा ज्योतिर्मयं प्रिये । पद्ममध्ये वराटे च जनोलोकं सुसुन्दरम्। महामोहान्धशमनं तद्वाह्ये चन्द्रमण्डलम्। देववृन्दैर्गाथकैश्च मुनिभिः परिशोभितम्। गोलोकस्य लक्षगुणमिदं स्थानं सुदुर्लभम्। दैर्घ्येण च मयोक्तञ्च विस्तीर्णञ्च तथा पुनः। सर्वं लक्षगुणं देवि गोलोकान्नात्र संशयः। वीजकोषे मणिद्वीपे षट्कोणं यन्त्रमुत्तमम्। यन्त्रमध्ये च वृषभं महासिंहार्द्धदेहकम्।

p. 857) तस्योपरि महागौरी दक्षभागे सदाशिवः। त्रिनेत्रं पञ्चवक्त्रश्च प्रतिवक्त्रे त्रिलोचनः। विभूतिभूषिताङ्गश्च रजताद्रिसहोदरः। व्याघ्रचर्मधरो देवोऽणिमादिभिर्विभूषितः।

लोकानामिष्टदाता च लोकानां भयनाशनः। लोकानां भुक्तिजनको लोकानां मुक्तिदायकः। सदानन्दकरो देवश्चार्द्धनारीश्वरो विभुः। क्वचित् ज्योतिर्मयो देवः क्वचिदाकारवर्जितः। देवानां पूज्यरूपश्च देवानां स्वामिरूपकः। भक्तस्य मुक्तिदो नित्यं विष्णुत्वदायकः प्रभुः। विल्वपत्रैः पूजकस्य निजसायुज्यदायकः। गोलोकाधिपतिं कृत्वा भक्तं रक्षति यः शिवः। तस्य देवस्य माहात्म्यं विस्तारेण च चण्डिके । या गौरी लोकमाता च ब्रह्मार्द्धाङ्गस्वरूपिणी। त्रिगुणा सा महादेवी गुणैकेन पिनाकधृक्। तस्याः सङ्गं समासाद्य सर्वकर्ता सदाशिवः॥ इति विशुद्धस्थानकथनम्॥

नवमपटले॥

शङ्कर उवाच॥

एतत् पद्मस्योर्द्ध्वदेशे ज्ञानपद्मं सुदुर्लभम्। पद्मद्वयसमायुक्तं पूर्णचन्द्रस्य मण्डलम्। पद्ममध्ये वीजकोषे स्मरेच्चिन्तामणेः पुरीम्। तन्मध्ये नवकोणञ्च यन्त्रं परमदुर्लभम्। शम्भुवीजं हि तन्मध्ये साकारं हंसरूपकम्। हंसः परं ब्रह्मरूपः साकारः शिवरूपकः

। तारश्चञ्चूर्वरारोहे  निर्गमागमपक्षवान्।

शिवशक्तिपदद्वन्द्वं विन्दुत्रयविलोचनम्। विहारश्चास्य हंसस्य

हेमपङ्कजपूजिते। एवं हंसो मणिद्वीपे तस्य क्रोडे परः शिवः।

वामभागे सिद्धकाली सदानन्दस्वरूपिणी। तस्याः

प्रसादमासाद्य सर्वकर्त्ता महेश्वरः। तपोलोकमिदं भद्रे

सर्वलोकस्य दुर्लभम्। यत्र ब्रह्मादयो देवा ध्यानं कुर्वन्ति

सर्वदा। मनसापि न लभ्येत योगेन तपसा न च। तपोलोकं

गोलोकस्य चतुर्लक्षणं शिवे । ब्रह्मलोकेषु ये देवा वैकुण्ठे ये

सुरादयः। शम्भुलोके वसेद् यो हि ते च भक्तिपरायणः।

p. 858) तपसापि न लभ्येत तपोलोकगतिः शिवे । तपोलोकसमो नास्ति

लोकमध्ये सुलोचने । सालोक्यं हि महर्लोके सारूप्यं जनलोकके।

सायुज्यं च तपोलोके निर्वाणं हि तदूर्द्ध्वके। ततो ब्रह्मादयो

देवास्तपोलोकार्थिनः सदा। इति ते कथितं कान्ते  क्रमषट्कस्य

लक्षणम्। यज्ज्ञानादमरत्वञ्च जीवन्मुक्तश्च साधकः।

यज्ज्ञात्वा जननीगर्भं न विशेत्तु कदाचन॥ इति

ज्ञानस्थानकथनम्॥

दशमपटले॥

शङ्कर उवाच।

ज्ञानपद्मस्योर्द्ध्वदेशे सहस्रदलपङ्कजम्। अधोवक्त्रं
महापद्मं सुमेरोर्मध्यसंस्थितम्। शुक्लं रक्तं तथा पीतं
कृष्णं हरितमेव च। विचित्रचित्ररूपेण नानावर्णेन शोभितम्।
शुक्लं क्षणात् क्षणाद्रक्तं क्षणात् पीतं सुशोभितम्। यस्मिन्
क्षणे शुक्लवर्णं हरितं वर्णमुत्तमम्। चित्ररूपञ्च चार्वङ्गि
 धत्ते कस्मिन् क्षणे क्षणे। एवं नानाविधं देवि  तत् पद्मं
शोभितं सदा। यथैव धाम गोलोकं प्रतिपत्रे तथैव हि।
गोलोकाधिपतिस्तत्र भक्तिभावपरायणः। कैलासाधिपतिर्देवि
ध्यानयोगं सदाभ्यसेत्। एवं ब्रह्मादयो देवा
इन्द्राद्यास्त्रिदिवेश्वराः। स्तुतिभक्तिपराः सर्वे दीनभावे सदा
स्थिताः। लक्षं लक्षं महेशानि  तत्रैव मुरलीधरः।
शतलक्षं तत्र रुद्रो ब्रह्मा लक्षशतं प्रिये । प्रत्यहं
परमेशानि  ब्रह्माण्डा बहवोऽभवन्। तन्मध्ये स्थापयेद्
ब्रह्मा तत्रैव कमलापतिम्। शिवं बहुविधाकरं तत्रैव
स्थापयेत्ततः। एवं हि परमेशानि  नानाशक्तिं प्रविन्यसेत्।
प्रतिब्रह्माण्डमध्ये तु ब्रह्मादिदेवतात्रयम्। नानाशक्तियुतं
कृत्वा ब्रह्माण्डस्थापनञ्चरेत्। ब्रह्मपद्मे पृथिव्यान्तु वर्त्तन्ते
मानुषादयः। ते सर्वे देवि  ब्रह्माण्डस्तन्मध्ये भुवनानि च।

p. 859) पातालसप्तकं तत्र तत्रैव स्वर्गसप्तकम्। एवं चक्रे

सर्वदेहे भुवनानि चतुर्द्दश। प्रतिदेहं परेशानि  ब्रह्माण्डं

नात्र संशयः॥ तथा। स्थानं बहुविधाकारं सर्वदेहस्य

चाश्रयम्। तन्मध्ये सत्यलोकञ्च महारुद्रस्य कारणम्।

दशकान्तेन स्वर्णेन निर्मितं चक्रपाणिना। दिक्षु तोयमण्डलञ्च

तथा पूर्णेन्दुमण्डलम्। परितः पारिजातानि मध्ये कल्पद्रुमः

पुनः। कल्पद्रुमस्य निकटे ज्योतिर्मन्दिरमेव च। ओं

उद्यदादित्यसङ्काशं चतुर्द्वारविभूषितम्।

मन्दवाद्यसमायुक्तं गन्धपुष्पैरलङ्कृतम्। तन्मध्ये वेदिका

देवि  रत्नसिंहासनं प्रिये । महाकाली परमात्मा

चणकाकाररूपतः। माययाच्छादितात्मासौ तन्मध्ये

समभागतः। महारुद्रः स एवात्मा महाविष्णुः स एव हि।

महाब्रह्मा स एवात्मा नाममात्रविभेदकः।

एकमूर्त्तिस्त्रिनामानि ब्रह्मविष्णुमहेश्वराः। नानाभावे मनो

यस्य तस्य मोक्षो न विद्यते। ब्रह्माण्डास्तत्र जायन्ते लक्षं

लक्षं सुलोचने । तत्र ब्रह्मा तत्र विष्णुस्तत्र रुद्रः प्रविन्यसेत्।

एवं ब्रह्माण्डनिर्माणं कृत्वा विष्णुः सनातनः। स

जीवमूर्त्तिं निर्माय तथा जन्तोश्च विग्रहम्। एवं ब्रह्माण्डं

विविधं नित्यं सृजति निर्गुणम्। निर्गुणे विष्णुरूपश्च

सिद्धिकारणमेव हि। केचिद्वदन्ति स ब्रह्मा कैश्चिद्विष्णुः प्रकथ्यते। केचिद्रुद्रो महापूर्व एकदेवो निरञ्जनः। आद्याशक्तियुतो देवश्चणकाकाररूपकः। इन्द्रजालस्य दीपाभं चन्द्रसूर्याग्निरूपकम्। महाज्योतिर्निराकारं गोलोकं सुमुखं त्वथ। सत्यलोके वीजकोषे चिन्तामणिगृहे शुभे। ध्यायेन्निरञ्जनं देवि  रत्नसिंहासनोपरि। तस्यान्तिके निजगुरुं पूजाध्यानपरायणः। सकान्तं पूजयेद्देवि  रजताचलसोदरम् सुरक्तां चारुवदनां स्वप्रकाशस्वरूपिणीम्। एवं कान्तायुतं देवं स्वमूर्ध्निस्थं विचिन्तयेत्। यथा

p. 860) दर्पणमध्ये तु परिपश्यन्ति पर्वतम्। सहस्रारे महापद्मे तथा देवं विचिन्तयेत्। एवं ब्रह्ममयं ह्येतत् परं मोक्षमयं प्रिये । निर्गुणस्यालयं साक्षान्महाकालालयं शिवे । यत्रैव वर्त्तते नित्यं निराकारश्च निश्चलः। यस्य रूपं परानन्दं परापरजगत्पतिः। नित्यानन्दपरा देवी काली कालप्रकाशिनी। आद्याशक्तिर्महाकाली देवनिर्वाणकारिणी। जायते च क्षितौ वृक्षो यथा पृथ्व्यां विलीयते। तोयात्तु वुद्बुदं जातं यथा तोये विलीयते। जलदे तडिदुत्पन्ना लीयते च यथा घने। तथा ब्रह्मादयो देवाः कालिकाया भवन्ति। तथा प्रलयकाले तु पुनस्तस्यां प्रलीयते। शक्तिज्ञानं विना देवि  मुक्तिर्हास्याय

कल्प्यते। एकांशेन भवेद्ब्रह्मा एकांशेन जनार्द्दनः।

एकांशेन भवेच्छम्भुः कालिकायाः सुलोचने । अपरा सा

महाकाली नद्यादीनां समुद्रवत्। गोष्पदे च तथा तोयं

ब्रह्माद्या देवतास्तथा। गोष्पदं किं विजानीयात् समुद्रस्य

जलं शिवे । तेन ब्रह्मा न जानाति विष्णुः किं वेत्ति शङ्करम्।

सृष्टिकर्त्ता यथा काल्या जन्यन्ते च सुरादयः। तथा प्रलयकाले तु

पुनस्तस्यां प्रलीयते। अतो निर्वाणदा काली पुमान् स्वर्गप्रदायकः

। दक्षिणस्यां दिशि स्थाने संस्थितश्च रवेः सुतः। कालीनाम्ना

पलायेत भीतियुक्तः समन्ततः। अतः सा दक्षिणानाम्नी त्रीषु

लोकेषु गीयते। निर्गुणः पुरुषः काल्या सृज्यते द्द प्यते यतः। अतः सा

दक्षिणानाम्नी त्रिषु लोकेषु गीयते। वश्यविद्या महाविद्या कालिका

जगदम्बिका। साकाररूपा सा काली चणकाकाररूपिणी।

हस्तपादादिरहिता सोमसूर्याग्निरूपिणी। तस्याः स्थानं कथितं

सत्यलोकं वरानने । यत् स्थानं सर्वदेवस्य प्रार्थनीयं

सदानघे । तस्य स्थानस्य माहात्म्यं किं मया कथ्यतेऽधुना

।

p. 861) सहस्रदलपद्मस्य चैकपत्रे सुलोचने । सहस्रं गोलकं

धाम ततो वक्तुं न शक्यते। जन्मान्तरसहस्रेण जिह्वाकोटिशतेन

च। तद्वक्तुं न हि शक्नोमि एकपत्रस्य शोभनम्। अतस्त्वं हि

वरारोहे विरता भाव पार्वति । किञ्जल्कमध्ये या शोभा किं

वक्तुं शक्यते मया। तन्मध्ये कर्णिका देवि तन्मध्ये वीजकोषकम्। वीजकोषस्य मध्ये तु सुधासागर उत्तमः। लक्षयोजनविस्तारः सुशोभं तोयमुत्तमम्। तन्मध्ये तु मणिद्वीपं सहस्त्रयोजनं प्रिये । परितः पारिजाताश्च कदम्बवनमुत्तमम्। मध्ये कल्पद्रुमस्तत्र ज्योतिर्मन्दिरमुत्तमम् । चतुर्द्वारसमायुक्तं हेमप्राकारभूषितम्। मन्दवाद्यसमायुक्तं गन्धधूपसमन्वितम्। देवकन्यासहस्त्राणि परिचर्यापराणि च। तन्मध्ये वेदिका देवि पञ्चाशदक्षरात्मिका। तस्योपरि महेशानि रत्नसिंहासनं शिवे । महाकाली महारुद्रश्चणकाकाररूपकः। इन्द्रजालस्य दीपाभं महाज्योतिः सनातनम्। शाक्तानन्दतरङ्गिण्यां चतुर्थोल्लासधृतसमयाचारतन्त्रे॥

देव्युवाच॥

देवदेव महाबाहो सृष्टिस्थितिलयात्मक । मूर्ध्नि पद्मं सहस्त्रारं रक्तवर्णमधोमुखम्। तस्य मध्यस्थितं ध्यायेद्गुरुं शान्तं सशक्तिकम्। मूलाधारे महाशक्तिं कुण्डलीरूपधारिणीम्। अधोवक्त्रे क्रमेणैव सर्वपद्मेषु भावना। तदा कथं भवेत्तत्र चिन्तनं गुरुदेवयोः। आधारे च

स्थितस्तत्र अधोभागे कथं भवेत्॥

महादेव उवाच।

यथा युक्तं त्वया देवि  कथितं वीरवन्दिते । एवमेवात्र सन्देहो जायते नात्र संशयः। कथ्यते परमेशानि सन्देहच्छेदकारणम्। तानि पद्मानि देवेशि  सुषुम्नान्तःस्थितानि च। परंब्रह्मस्वरूपाणि शब्दब्रह्ममयानि च। तत् सर्वं पङ्कजं देवि  सर्वतोमुखमेव च। प्रवृत्तिश्च निवृत्तिश्च द्वौ

p. 862) भावौ जीवसंस्थितौ। प्रवृत्तिमार्गः संसारी निवृत्तिः परमात्मनि। प्रवृत्तिभावचिन्ताया मध्ये वक्राणि चिन्तयेत्। निवृत्तियोगमार्गेण सदैवोर्द्ध्वमुखानि च। एवमेव भावभेदाद् हृत्सन्देहो न जायते॥

श्रीतत्त्वचिन्तामणौ तु विशेष उक्तो यथा॥ मेरोर्वाह्यप्रदेशे शशिमिहिरशिरे। सव्यदक्षेण सन्ने मध्ये नाडी सुषुम्ना त्रितयगुणमयी चन्द्रसूर्याग्निरूपा। धुस्तूरस्मेरपुष्पग्रथिततमवपुः कन्दमध्याच्चिरस्था वज्राख्या मेढ्रदेशोच्छिरसि परिणता मध्यमे स्याज्ज्वलन्ती॥

तन्मध्ये चित्रिणी सा प्रणवविलसिता योगिनां योगगम्या

लूतातन्तूपमेया सकलसरसिजान्मेरुमध्यान्तराले। भित्त्वा

देदीप्यते तद्ग्रथनरचनया शुद्धबोधप्रबोधा तन्मध्ये

ब्रह्मनाडी हरमुखकुहरादादिदेवान्तरास्था॥

विद्युन्मालाविलासा मुनिमनसि लसत्तन्तुरूपा सुसूक्ष्मा

शुद्धज्ञानप्रबोधा सकलसुखलसच्छुद्धभावाद्यभावा।

ब्रह्मद्वारं तदास्ये प्रविलसितसुधासाररम्यप्रदेशम्

ग्रन्थिस्थानं तदेतद्वदनमिति सुषुम्नाख्यनाड्या लपन्ति॥

अथाधारपद्मं सुषुम्नास्यलग्नं ध्वजाधोगुदोर्द्ध्वं

चतुःशोणपत्रम्।

अधोवक्त्रमुद्यत्सुवर्णाभरम्यैर्वकारादिशान्तैर्युतं

वेदवर्णैः॥ अमुष्मिन् धरायाश्चतुष्कोणचक्रं

समुद्भासिशूलाष्टकैरावृतं तत्। लसत्पीतवर्णं

तडित्कोमलाङ्गं तदम्भःसमास्ते धरायाः स्ववीजम्॥

चतुर्बाहुभूषं गजेन्द्रादिरुढं तदङ्के

नवीनार्कतुल्यप्रकाशम्। शिशुः सृष्टिकारी

लसद्वेदबाहुर्मुखाम्भोजलक्ष्मीश्चतुर्भागवेदः॥ वसेदत्र

देवी च डाकिन्याभिख्या लसद्वेदबाहूज्ज्वला रक्तनेत्रा।

समानोदितानेकसूर्यप्रकाशा प्रकाशं वहन्ती सदा

शुद्धबुद्धेः॥ वज्राख्या वक्त्रदेशाद्विलसति सततं

कर्णिकामध्यसंस्थं कोणं तत् त्रैपुराख्यं तडिदिव विलसत्

कोमलं कामरूपम्। कन्दर्पो नाम वायुर्विलसति सततं तस्य

मध्ये समन्तात् जीवेशो बन्धुजीवप्रकरमपि हसन् कोटिसूर्य

प्रकाशः॥ तन्मध्ये लिङ्गरूपी द्रुतकमलकणाकोमलः

पश्चिमास्यो ज्ञानध्यानप्रकाशः प्रथमकिशलयाकाररूपः

स्वयम्भूः।

उद्यत्पूर्णेन्दुविश्वप्रकरकरचयस्निग्धसन्तानहासी काशीवासी

विलासी विलसति सरिदावर्तरूपप्रकाशी॥ तस्योर्द्धे

विषतन्तुशोकविलसत्सूक्ष्मा जगन्मोहिनी ब्रह्मद्वारमुखं

मुखेन मधुरं सञ्छादयन्ती स्वयम्। शङ्खावर्त्तनिभा

नवीनचपलामालाविलासास्पदा सुप्ता सर्पसमा शिवोपरि

लसत्सार्द्धत्रिवृत्ताकृतिः॥ कूजन्ती कुलकुण्डली च मधुरं

मत्तालिमालास्फुटं वाचं

कोमलवाक्यबन्धरचनाभेदाविभेदक्रमैः।

श्वासोच्छ्वासविभञ्जनेन जगतां जीवो यया धार्यते सा

मूलाम्बुजगह्वरे विलसति प्रोद्दामदीप्तावलिः॥ तन्मध्ये परमा

कलातिकुशला सूक्ष्मातिसूक्ष्मा परा नित्यानन्दपरस्परातिचपला

मालालसद्दीधितिः। ब्रह्माण्डादिकटाहमेव सकलं यद्भासया

भासते सेयं श्रीपरमेश्वरी विजयते नित्यप्रबोधोदया॥

ध्यात्वैतन्मूलपद्मान्तरपथविलसत्कोटिसूर्यप्रकाशम्

वाचामीशो नरेन्द्रः स भवति सहसा सर्वविद्याविनोदी। आरोग्यं तस्य नित्यं निरवधि स महानन्दंचित्तात्मरात्मा वाक्यैर्वाक्यप्रबन्धैः। सकलसुरगुरुन् सेवते शुद्धशीलः। सिन्दूरपूररुचिरारुणपद्ममन्यत् सौषुम्नमध्यघटितं ध्वजमूलदेशे। अङ्गच्छदैः परिवृतं तडिदाभवर्णैर्वाद्यैः सविन्दुलसितैश्च पुरन्दरान्तैः॥ तस्यान्तरे प्रविलसद्वियदप्रकाशमम्भोजमण्डलमथो वरुणस्य तस्य। अर्द्धेन्दुरूपलसितं शरदिन्दुशुभ्रं वङ्कारवीजममलं मकराधिरूढः॥ तस्याङ्कदेशशयितो हरिरेव पायान्नीलप्रकाशरुचिरश्रियमादधानः। पीताम्बरः प्रथमयौवनगर्भधारी श्रीवत्सकौस्तुभधरो धृतवेदबाहुः॥

p. 864) अत्रैव भाति सततं खलू राकिणी सा नीलाम्बु जोदरसहोदरकान्तिशोभा। नानायुधोद्यतलसत्सतताङ्गलक्ष्मीर्दिव्याम्बराभरणभूषित-मत्तचित्ता॥

अथ ज्ञानप्रशंसा॥ निगमकल्पद्रुमे तृतीयपटले॥ ज्ञानेन लभते मोक्षं ज्ञानेन पापनाशनम्। ज्ञानेन वीरकर्मा च ज्ञानेन पशुभावनम्। ज्ञानेन दिव्यभावी च

सुप्रभेदम्

अथ योगपादे-नाडी चक्रविधिपटलः

p. 291) अथातः संप्रवक्ष्यामि योगपादं समासतः।

तस्यपादस्य पूर्वे तु नाडीचक्रक्रमं शृणु॥ १-१॥

द्विसप्तति सहस्राणि नाडयस्तु प्रकीर्तिताः।

नाडीभिर्व्यावृते देहे जीर्णाश्वत्थस्य पत्रवत्॥ १-२॥

अशीतिश्च चतुश्चैव शतसाहस्रभेदकैः।

शरीरे क्रीडते देवाः स्वेच्छया परमेश्वरम्॥ १-३॥

भूतग्रामैश्चतुर्भिश्च सर्वयोनि समुद्भवम्।

अण्डजं स्वेदजञ्चैव उत्बीजञ्च जरायुजम्॥ १-४॥

अण्डजाताश्चये भावास्त्वण्डजास्ते प्रकीर्तिताः।

स्वेदजाताश्चये भावास्वेदजास्तु प्रकीर्तिताः॥ १-५॥

भूमौ तु तोयबीजाभ्यां मुत्भिदाश्चेति कीर्तिताः।

इल्वयुक्ताश्चये जाताः कीर्तितास्ते जरायुजाः॥ १-६॥

भूतग्रामैश्चतुर्भिश्च नराद्याषड्विधो भवेत्।
नरश्चैव मृगश्चैव पशुः पक्षीतथैव च॥ १-७॥

सरीस्रपः स्थावरश्च षड्विधं योनिसंभवम्।
वाचा वदन्ति यद्वाण्या ते नरास्त्विति कीर्तिताः॥ १-८॥

ऊर्ध्वपुच्छन्तु तद्वृद्धिं मृगं विद्याद्विनायक।
अधोदीर्घाश्च ये पुच्छाः पशुजातिरुदीरिता॥ १-९॥

द्विपक्षाः पक्षिरित्याहु सरतीतिसरीस्रपः।
स्थापितं स्थावरं प्रोक्तं षड्विधं भूतमेव च॥ १-१०॥

अथ्यन्ते योनि भेदानि क्षेत्रं स्यात् भूमिकं शृणु।
पृथिव्यादीनि तत्वानि यत्र तिष्ठन्ति तल्लये॥ १-११॥

लयस्थानं तदाख्यातं तत्वातीतं परात्परम्।
तस्माच्छिन्नं समुत्पन्न तस्माच्छक्तिरजायत॥ १-१२॥

p. 292) तस्मान्नादिं समुत्पन्नं तस्मात् बिन्दुसमुद्भवम्।

तस्मात् सदाशिवं प्रोक्तं सृष्ट्यर्थं पञ्चधा भवेत्॥ १-१३

॥

तस्मादात्मा समुत्पन्नं सहजं मलसंयुतम्।

क्षेत्रज्ञन्तं विजानीयाच्छक्तिस्थन्तु तथोच्यते॥ १-१४॥

तस्मादुपरिवेशस्य शुद्धावस्थोनुकीर्तिताः।

शुभाशुभ वरप्राप्तौ तत्र गच्छन्ति जायते॥ १-१५॥

मायाद्यवनि पर्यन्तं देहबद्धोत्र दृश्यते।

कर्मोदये तु जननं कर्मान्ते मरणं स्मृतम्॥ १-१६॥

सुखदुःखनिमित्ताय शरीरग्रहणं कृतम्।

शरीरं द्विविधं प्रोक्तं पुंसत्व स्त्रीत्वमेव च॥ १-१७॥

लिङ्गेन लांच्छितं पुंस्त्वं स्त्रीत्वं योन्याभिलांच्छितम्।

लिङ्गमीशमयं प्रोक्तं योनिः शक्तिमयं स्मृतम्॥ १-१८॥

तस्माद्वै शिवशक्तिस्तु सर्वमेतत् चराचरम्।

तच्छरीरं द्विधाप्रोक्तं स्थूलं वै सूक्ष्ममेव च॥ १-१९॥

पृथिव्यापस्तथा तेजोवायुराकाशमेव च।

शुक्रं बीजां शमित्युक्तं क्षेत्रांशं श्रोणितं स्मृतम्॥

१-२०॥

अस्थि स्नायुश्चमज्जा च पित्रजंस्त्रयमेव तु।

त्वङ्मांसशोणितञ्चैव मातृजं त्रिकमेव च॥ १-२१॥

इत्थं षड्कौशिकं प्रोक्तं शरीरान्तैस्तु जायते।

नखदन्तश्च रोमाणि केशाश्च नाडयस्तथा॥ १-२२॥

शब्दस्पर्शश्च रूपश्च रसोगन्धश्च पञ्चधा।

एतैर्भूतगणैर्युक्तं स्थूलं शरीरकं भवेत्॥ १-२३॥

शूक्ष्मस्य गोलकां विद्धि तच्छुभाशुभसाधनम्।

जननमरणञ्चैव कर्मणा जायते ततः॥ १-२४॥

एवं स्थूलशरीरञ्च संक्षेपाद्वर्णितं मया।

श्रोत्रं त्वक्चक्षुजिह्वा च घ्राणं बुद्धीन्द्रियं विदुः॥ १-२५

॥

वाक्पादपाणि पायुश्चोपस्थं कर्मेन्द्रियं स्मृतम्।
प्राणः समानोदानश्च अपानोव्यान एव च॥ १-२६॥

नागः कूर्मश्चक्रकरो देवदत्तोधनञ्जयः।
मनोबुद्धिरहंकारश्चित्तोन्तः करणं स्मृतम्॥ १-२७॥

p. 293) मदमात्सर्यमानादि सूक्ष्मशारीरकं भवेत्।
इदं शरीरं लिङ्गं हि तयोर्जन्म ततः शृणु॥ १-२८॥

शुक्लं रक्तेन संभाव्य जनन्याश्चोदरे स्थितम्।
कर्मादौ सकलं ग्राह्यं प्राप्यते सुषिराशयम्॥ १-२९॥

क्षेत्रांशैश्चैव बीजांशैः शरीरव्याप्ततोगतः।
रक्ताधिक्क्यात् स्त्रीप्रजा च शुक्लाधिक्यात् पुमान् भवेत्॥ १-३०॥

यदिशुक्लसमंरक्तं जायते तु नपुंसकम्।
भजने तु यथा बिदुर्वद्धते तु शनैः शनैः॥ १-३१॥

पुन्नागमुकुलाकारं गर्भाशयगतं तथा।
मरणादीनि कर्माणि निमित्तानि वरेण तु॥ १-३२॥

आयुष्यं विभवं कर्मविद्या च निधनं सुखम्।
षट्कं संप्राप्य तत्रैव ततो गर्भाशयं विशन्॥ १-३३॥

गुणाश्चैव त्रिदोषाश्च जन्तूनान्तत्र संभवाः।
सत्वं रजस्तमश्चैव गुणत्रयमिहोच्यते॥ १-३४॥

सत्यं ज्ञानं तपोमौनं स्मृतिर्मेधाधृतिः क्षमा।
उत्साहो निश्चयन्धैर्यमेवं वै सात्विकं गुणम्॥ १-३५॥

दर्पं महदहंकारं विषादं प्रियवाचकम्।
उद्योगंमात्सरं प्रोक्तं रजसंगुणमुच्यते॥ १-३६॥

आलस्यं मोहनिद्राश्च चापलं ही नवृत्तिकम्।
पापिष्ठं परनिन्दा च तामसं गुणलक्षणम्॥ १-३७॥

गुणानान्तु समावस्था मूलप्रकृतिरुच्यते।
संक्षेपात् त्रिगुणं प्रोक्तं त्रिदोषांश्च शृणुष्वमत्॥ १-३८॥

वातं पित्तंकफश्चैव रोगाणामधिपा स्मृताः।

सर्वजन्तुषु सामान्यं समंवाधिकमेव च॥ १-३९॥

एवमादीनि चान्यानि संविशेत् सुषिराशयम्।

गर्भाशयगते काले वायुनाभिद्यते यथा॥ १-४०॥

तदा रूपद्वयङ्गत्वा वर्धते तु शनैः शनैः।

पञ्चाहे तु दशाहे तु पत्मपत्रस्थतोयवत्॥ १-४१॥

मासान्ते चाक्षफलवद् विमासां मृफलाकृतिः।

त्रिमासेऽष्टाङ्गुलं दीर्घञ्चतुर्मासे शिरोभवेत्॥ १-४२॥

p. 294) हस्तौ चैव तु पादौ च पञ्चमासे प्रकीर्तितम्।

नखाङ्गुल सपादौ च गुल्भौ च नलकौ तथा॥ १-४३॥

जंघेजानु तथा चोरुकटिस्फिक् जघनं तथा।

स्तनपार्श्वोदरारभ्य कक्षौ वक्षाभुजावुभौ॥ १-४४॥

पादयोर्हस्तयोरेखा ह्यंगुष्ठे नखपर्वगाः।

गलः कर्णौ च जिह्वा च ओष्ठौ दन्ताश्च नासिका॥ १-४५॥

नयनं भ्रूललाटश्च शिरः केशादयस्तथा।
एतान्यङ्गानि सर्वाणि जायते षष्ठमासिके॥ १-४६॥

सप्तमासेन्न पानौ च नाभिनालेन भुज्यते।
प्रसूयते वा तन्मासे वायुना न प्रसूयते॥ १-४७॥

अष्टमासे समुत्थाय वीणादण्डं समाश्रितम्।
संप्राप्याष्टगुणैश्वर्य मणिमादिकमत्र वै॥ १-४८॥

त्रिकालन्तु विजानाति ज्ञानात् सर्वं प्रकाशते।
जायते चाष्टमे मासे जातश्चोत्तमजीवती॥ १-४९॥

जायते नवमे मासे दशमासे तु वा पुनः।
ततस्त्वेकादशे मासे मायया प्रेरितो जनः॥ १-५०॥

बोद्धव्यं शक्तिना काचित् श्रमदाहक्षुधादिकान्।
एवमादीनि वर्द्धन्ते क्रमेणैव शनैः शनैः॥ १-५१॥

तत्र भूत्वान्न वीर्यैण वर्धन्ते सप्तधातवः।

अन्नद्रवसमुत्पन्न रसाद्वै श्रोणितं स्मृतम्॥ १-५२॥

श्रोणितान्मांसमुत्पन्नं मांसान्मेदः समुत्भवम्।

मेदसोस्थि समुत्पन्नं तस्मात् मज्जातु संभवम्॥ १-५३॥

मज्जाशुक्लं समुत्पन्न मित्येते सप्तधातवः।

शरीरन्धातुभिः प्राप्तं धातुभिः शब्दराशयः॥ १-५४॥

शब्दादिविषयं ज्ञानं द्विमासोपरिपूर्णके।

पञ्चविंशति तत्त्वानि वक्ष्यते तु समासतः॥ १-५५॥

भूतानि भूतमात्राणि ततो बुद्धिन्द्रियाणि च।

कर्मैन्द्रियाणि विघ्नेश तथान्तः करणानि च॥ १-५६॥

अव्यक्तेन समायुक्तं पञ्चविंशदुदाहृतम्।

पृथिव्यादीनि तत्वानि प्राप्यते त्वखिलान्तनुम्॥ १-५७॥

p. 295) पृथिव्यापस्तथा तेजोवायुराकाश एव च।

महाभूतानि चोक्तानि तेषां भेदं श्रृणुष्वहि॥ १-५८॥

यत् कठिनं तत्पृथिवी यद्द्रव्यं ह्याप उच्यते।

यदुष्णञ्चेत्ततो वह्निर्वायुः सञ्चरति त्विह॥ १-५९॥

अवकाशं यदा काशं महाभूतगणास्त्विमे।

अस्थित्वङ्मांसकेशाश्च नाडयस्त्विह कीर्तिताः॥ १-६०॥

पृथिव्यं शास्तथा ज्ञेयास्त्वाप्यंशाश्च ततः श‍ृणु।

कफः शोणितमूत्राणि मज्जाशुक्लन्तथैव च॥ १-६१॥

द्रव्यांशकमिति ज्ञेयं सर्वप्राणि च संस्थितम्।

क्षुधानिद्रा च कृष्णा च आलस्यं मैथुनं तथा॥ १-६२॥

एते पञ्चगुणा प्रोक्ता तेजोंशा इति संस्थिताः।

आस्ते शेते च गमनं प्रसाराणि निरोधनम्॥ १-६३॥

एते पञ्चगुणा प्रोक्ता वाय्वंशा सुप्रकीर्तिताः।

कामक्रोधश्च लोभश्च भयोमोहसथैव च॥ १-६४॥

पञ्चैतेनुगुणा प्रोक्ता व्योमांशास्तु प्रकीर्तिताः।

प्रोक्तं भूतगुणञ्चैवं गुणन्तेषान्तु वक्ष्यते॥ १-६५॥

शब्दस्पर्शञ्चरुपञ्च रसंगन्धञ्च पञ्चधा।
आकाशस्य गुणं शब्दं वायोस्तु स्पर्शनं गुणम्॥ १-६६॥

तेजसस्तु गुणं रूपं रसमापगुणं स्मृतम्।
पृथिव्यास्तु गुणं गन्धं भूमिकादीनि विन्यसेत्॥ १-६७॥

विषयं त्विति विख्यातं भूतानाङ्गुणमुच्यते।
शब्दादिविषयं पुण्यं भूमौ तु विनिवर्द्धते॥ १-६८॥

चतुर्गुणाः प्रवर्धन्ते त्रिगुणस्त्वथ वह्निके।
वायोश्च द्विगुणं प्रोक्तमाकाशस्यैकमेव तु॥ १-६९॥

विषयाणि तथोक्तानि बुद्धिन्द्रियाणि ततः श्रृणु।
श्रोत्रत्वक्चक्षुजिह्वा च घ्राणं बुद्धिन्द्रियाणि च॥ १-७०॥

शब्दादिविषयाणाञ्च साधनन्ते प्रकीर्तितम्।
बुद्धीन्द्रियाणामेतेषां देवभूतात्मकं श्रृणु॥ १-७१॥

p. 296) श्रोत्रमध्यात्ममित्युक्तं श्रोतव्यमधि भूतता।

शिवहस्ताधि दैवन्तु त्वगेवाध्यात्मकं विदुः॥ १-७२॥

स्पर्शनञ्चाधिभूतः स्याद् वायुस्तत्राधिदैवतम्।

चक्षुरध्यात्ममित्युक्तं द्रष्टव्यमधिभूतता॥ १-७३॥

सूर्यस्तत्राधिदैवत्य जिह्वाचाध्यात्मकं विदुः।

रसज्ञात्वधिभूतन्तु वरुणश्चाधिदेवता॥ १-७४॥

घ्राणमध्यात्ममित्युक्तं घ्रातव्यमधि भूतता।

बृहस्पत्यधिदैवञ्च प्रातः शक्तिरिति स्मृतम्॥ १-७५॥

बुद्धीन्द्रियाणि चोक्तानि शृणु कर्मेन्द्रियाणि च।

वागध्यात्मकमित्युक्तं वक्तव्यमधि भूतता॥ १-७६॥

सरस्वत्यधिदैवत्यं वाणिरध्यात्मकं ततः।

दातव्यमधिभूतश्च शक्रस्तत्राधिदेवता॥ १-७७॥

पादमध्यात्मकं प्रोक्तं गमनञ्चाधि भूतता।

शक्राधिदैवतं प्रोक्तं वायुरध्यात्मकं विदुः॥ १-७८॥

* * * मधिभूतः स्यात् मित्रस्तत्राधि दैवतम्।

उपस्थोध्यात्ममित्युक्तमानन्दमधिभूतता॥ १-७९॥

प्राजापत्याधिदैवत्यं क्रियाशक्तिरिति स्मृता।

कर्मेन्द्रियाणि चोक्तानि ततोन्त करणं श्रृणु॥ १-८०॥

मनोहङ्कारबुद्धि च चित्तोन्तः करणं विदुः।

मनोध्यात्ममिति प्रोक्तमन्तव्यमधिभूतता॥ १-८१॥

सोमाधि दैवमित्युक्तो हङ्कारोध्यात्मकं विदुः।

अधिभूतमहंकारं रुद्रमूर्त्यधिदैवतम्॥ १-८२॥

बुद्धिरध्यात्ममित्युक्तं बोद्धव्यमधिभूतता।

क्षेत्रज्ञस्याधिदैवं स्याच्चित्तमध्यात्मकं स्मृतम्॥ १-८३॥

चैतन्यमधिभूतं हि ईश्वरश्चाधिदैवतम्।

मन्यते तंमनो ज्ञात्वा अहङ्कारमहंकृतम्॥ १-८४॥

बोद्ध्यत्वात् बुद्धिरेवं हि चिन्तत्वाच्चित्तमुच्यते।

मनश्च द्विविधं प्रोक्तं चलाचलमिति स्मृतम्॥ १-८५॥

p. 297) अहङ्कारं त्रिधाज्ञेयं भूतवैकारि तेजसम्।

वक्ष्यते तु समासेन भूतसारसमुद्भवम्॥ १-८६॥

शब्दतन्मात्रमादौ तु गन्धतनात्रमर्थके।

एतानि पञ्चमात्राणि भूतानां सृष्टिरुच्यते॥ १-८७॥

स्यात्तैजस अहंकारे इन्द्रियाणि समुद्भवम्।

वैकारिकमहङ्कारे इन्द्रियाणि समुद्भवम्॥ १-८८॥

वैकारिकमहंकारे अधिदेवाः समुद्भवम्।

बुद्धिरष्टविधा ज्ञेया धर्माधर्मादिरष्टधा॥ १-८९॥

चित्तमेक विधं ज्ञेयं तच्चान्तः करणं विदुः।

चतुर्भिरन्तः करणैश्चतुर्विंशतिरुच्यते॥ १-९०॥

उपादानन्तु तेषां वै चाव्यक्तमिति निन्दितम्।

अव्यक्तस्य तु धर्मः स्यात् त्रिगुणं संप्रकीर्तितम्॥ १-९१॥

तामसं राजसञ्चैव सात्विकञ्च तृतीयकम्।
तामसेयान्ति नरकं राजसे स्वर्गमुच्यते॥ १-९२॥

सात्विके मोक्षमित्युक्तं तस्मात् सात्विकमुच्यते।
सात्विके सर्वकर्माणि एक चित्तस्तु सात्विकम्॥ १-९३॥

तस्मात् सर्वप्रयत्नेन सात्विकङ्गुणमाश्रये।
पञ्चविंशति तत्वानि समासात् कीर्तितानि तु॥ १-९४॥

तेभ्य एकादशं तत्वं समासात् च्छृणु सांप्रतम्।
पुंरागोनियती विद्याकलाकलस्तथैव च॥ १-९५॥

शुद्धविद्याशुद्धकला शुद्धमायान्तथैव च।
आत्मतत्वञ्च विद्याञ्च शिवतत्वमतः परम्॥ १-९६॥

एकादशानि तत्वानि शरीरे संस्थितानि तु।
कञ्चुकत्रयमाविश्य शनैः कालेन वित्तमः॥ १-९७॥

आलिंग्यते नियतिना आत्मवद्भाववर्तकः।
प्रकृतिः पौरुषं यस्मान् तस्मात् पुरुष उच्यते॥ १-९८॥

बालार्कशतसाहस्त्र भागैकं तत्र चिद्विदुः।

सञ्जिव इति विख्यातः संसारी चेति चोच्यते॥ १-९९॥

प्रधानादि विशेषान्तं व्यापं वै परिशक्तिना।

कलाशक्तिरितिख्याता चानमु?क्तैस्तु कारणा॥ १-१००॥

p. 298) धर्माधर्माधिसंबन्धा दाणवं सहजं स्मृतम्।

इत्येवमादि संबन्धाच्छरिरेषु व्यवस्थिताः॥ १-१०१॥

संबन्धास्तस्य जीवस्य दुःखत्रयमिहोच्यते।

आध्यात्ममधिभूतञ्च अधिदैविकमेव च॥ १-१०२॥

त्रिविधं दुःखमाप्नोति तेषामाध्यात्मकं श्रृणु।

आध्यात्मकं द्विधाप्रोक्ता शरीरं मानसं तथा॥ १-१०३॥

गुल्मारशोति सारञ्च ज्वरशूलाद्यनेकधा।

नरमृगपिशाचैश्च गोपक्षीचोरराक्षसैः॥ १-१०४॥

प्रोक्तं शरीरकं दुःखं मानसं श्रृणु सुव्रत।

शोकासूयावमानेर्ष्या मासाध्यादिभिरेव च॥ १-१०५॥

एवं मानसमाख्यातमाधिभौतिकमुच्यते।
शीतोष्णवातवर्षैश्च विद्युदाशनिमारुते॥ १-१०६॥

एतैर्भूतैस्तु जन्दुःखमाधिदैविकमुच्यते।
गर्भजन्मजरा ज्ञानमृत्युर्नरकजं तथा॥ १-१०७॥

प्रोक्तं दुःखत्रयं ह्येवमेषु स्थानेषु भूज्यते।
ततोदराग्निना गर्भे मातृशीलेन बाध्यते॥ १-१०८॥

गर्भात् कोटिगुणं दुःखं योनि यंत्रे प्रपिडनम्।
एवमादीनिदुःखानि शरीरीभुज्यते क्रमात्॥ १-१०९॥

जाग्रत् स्वप्नं सुषुप्तिश्च तुर्यावस्था ततः शृणु।
इन्द्रियाणि गताबुद्धिः कृत्वा कर्माण्य शेषतः॥ १-११०॥

करणी यानि सर्वाणि दृश्यन्ते जाग्रदेव तु।
करणानि चेंद्रियाणि बध्वावै वाश्रयं भवेत्॥ १-१११॥

निद्रामाश्रयते बुद्धिर्मन्यते पूर्वकर्मकम्।

एवं स्वप्नं विजानीयात् सुषिपिञ्च ततः श्रृणु॥ १-११२॥

करणानि गृहीत्वा तु बुद्धिश्चैतन्यमागता।

तदाश्रये तु काले तु कर्माण्य प्रतिबुध्यति॥ १-११३॥

सुषिप्तिरिति विख्याता तुरीयं करणं विना।

जाग्रोमुखगतो जीवस्वप्ने कर्णं समाश्रितः॥ १-११४॥

p. 299) सुषुप्तौ हृदमाश्रित्य तुर्ये सर्वगत स्मृतः।

एवं व्यवस्थितो देहे नाडयश्च तत श्रृणु॥ १-११५॥

नाभिमूलन्तु हृन्नाल नाडयश्चक्रवत् तथा।

तिर्यगूर्ध्वमधश्चैव व्याप्तितातैस्तु सर्वतः॥ १-११६॥

चक्रवत्संस्थिता ह्येताः प्रधानश्चाष्टविंशतिः।

तेषु प्रधानभूतास्तु इडादिदशनाडयः॥ १-११७॥

इडयाविमाशोषा पृथिवी आपनी तथा।

तेजोवती वायुवी च गमनीमर्दनी तथा॥ १-११८॥

रोदनीरक्तवागि च मृद्वंगी श्रिंगिणी तथा।

शब्दा स्पर्शा च पूर्णा च सद्रूपारसधारिणी॥ १-११९॥

सर्वाङ्गेषु स्थिता ह्येता प्रधानाश्चाष्ट विंशतिः।

तासुनाडीषु चान्तस्थाः प्राणादि दशवायवः॥ १-१२०॥

प्राणापानस्तथाव्यान उदानश्च समानकः।

नागकूर्माश्चक्रकरो देवदत्तोधनञ्जयः॥ १-१२१॥

दशप्राणा इति प्रोक्ता वायवः समुदहृताः।

वायूनान्तु नवानाञ्च प्रभुः प्राणप्रकीर्तिताः॥ १-१२२॥

निश्वासोछ्वासकासैश्च प्राणीनामुदरे स्थिताः।

इन्द्र निलप्रतिकाशप्राणरूपसुकीर्तिताः॥ १-१२३॥

नादसंयुक्त जीवान्त जीवमाश्रित्य नित्यशः।

स्थान हृन्नाभिनासाग्रं पादाङ्गुष्ठान्तमाश्रितः॥ १-१२४

॥

अपान पृष्ठमाश्रित्य वामदक्षिणनिर्गमम्।

प्राणस्य लक्षणं प्रोक्तमपानञ्च ततः शृणु॥ १-१२५॥

अपानो जीवमाश्रित्य तद्वर्णश्चैंद्रकोपवत्।

स्थानन्तु मेढ्रमुले तु गुदमूलन्तु निर्गमम्॥ १-१२६॥

नाभेरधस्तात् स्थानन्तु मेढ्रमूले तु निर्गमम्।

पुरीषोत् सर्गमात्रादि प्राणापानाश्च निर्गमम्॥ १-१२७॥

प्राणापानोपहे नित्यं शरीराख्यं महारथम्।

दीपान्तस्थ प्रभु प्राणोरक्षाङ्कृत्वा महामनुम्॥ १-१२८॥

p. 300) व्यानं सकलमाश्रित्य स्पर्शादीनी प्रबोधकः।

गोक्षीरसमवर्णं स्यात् स्थानं सर्वाङ्गसन्धिषु॥ १-१२९॥

उदानच्छक्तिरोगाणामुद्भवन्तत्र कारयेत्।

विद्युत्पावक सङ्काशान्तस्य वर्णं प्रकीर्तितम्॥ १-१३०॥

स्थानं पार्श्वौ च कर्णौ च चक्षुषोर्घ्राणयोस्तथा।

समान वायोर्वर्णन्तु अतसी कुसुमप्रभम्॥ १-१३१॥

स्कन्धे मूर्धनि जिह्वाश्च जंघयोर्गुल्भयोस्तथा।

अन्नपानरसन्नित्वा चा पादतलमस्तकम्॥ १-१३२॥

अशेषानन्नपानादीन्वैश्विनराग्नि संयुतम्।

तत्रा शयाख्य कुण्डे तु हुतं तत्रैव कारयेत्॥ १-१३३॥

तत्र नागसुवर्णन्तु मार्ताण्डोदय सन्निभम्।

हित्काञ्चरोमहर्षादिन् गेयभक्तिञ्च कारयेत्॥ १-१३४॥

उदयञ्च ललाटञ्च स्थानन्नासादि चासनम्।

कुन्दपुष्पसमाकारं कूर्मवायोः प्रकीर्तितम्॥ १-१३५॥

नेत्रपक्षौ तु संप्राप्य निमीलोन्मीलनङ्कुरु।

कृकरस्य तु वर्णं स्यात् भिन्नाञ्जनसमप्रभम्॥ १-१३६॥

क्षुधादिकुरुते नित्यं नासाग्रे तु व्यवस्थितम्।

देवदत्तस्य वर्णं स्यात् शुद्धस्फटिक सप्रभम्॥ १-१३७॥

मुखं पृष्ठञ्च पादञ्च पार्श्वञ्चैव विशेषतः।

उत्थाप्यशयनासीनं विज्रंभणमतः परम्॥ १-१३८॥

धनञ्जयस्य वर्णस्यां नीलाञ्जनसमप्रभम्।
धनञ्जयस्थितो देहममृतस्यापिमुञ्चति॥ १-१३९॥

पश्चात् तु ब्राह्मणं कृत्वा शरीरं भिद्यते गतः।
इत्येते दशवायूनां प्राणादीनां प्रचक्षते॥ १-१४०॥

इडादिनाडयस्तत्र शरीरेव्या प्रतस्तथा।
नाडीमध्ये ततो वायुः सञ्चरेत् क्रमशस्तथा॥ १-१४१॥

कुण्डल्याख्या महानाडी नाभिमध्ये प्रकीर्तिताः।
अष्टवर्तुलमेवन्तु कुण्डलीनाडिसुप्तवत्॥ १-१४२॥

नाभेरूर्ध्वं भवेत् पद्मं तटाकाब्जं तु पुष्पवत्।
तस्य मध्ये स्थितो जीवः सूर्यकोटिसमप्रभः॥ १-१४३॥

p. 301) तस्यान्तस्थं समाख्यातं सूर्यसोमाग्निकुण्डलम्।
तेषां मध्ये स्थितो देवः सूर्यायुतसमप्रभम्॥ १-१४४॥

वामपार्श्वे इडानाडी पिंगलादक्षनाडिका।

सुषुम्ना मध्यमे चैव यावदङ्गुष्ठकान्तका॥ १-१४५॥

गान्धारी दक्षिणे नेत्रे हस्ति जिह्वा च वामके।

पूषा वै दक्षिणे कर्णे वामकर्णे यशस्विनी॥ १-१४६॥

अलंपुष्पन्तु मेढ्रुन्तु कुहूश्चैव गुदे स्थिता।

शखिनी नासिमध्ये तु दशनाडी ह्यवस्थिता॥ १-१४७॥

अशेषानाडयः सर्वाश्चक्रवद् व्यावृतस्तनुम्।

चक्रवद् वा वृतोयस्मान् नाडीचक्रमिहोच्यते॥ १-१४८॥

नाडीचक्रमिदं प्रोक्तं कालचक्रमथ शृणु॥

इति नाडीचक्रविधिपटलः प्रथमः॥ १॥

अथ कालचक्रविधिपटलः

अथातः संप्रवक्ष्यामि कालचक्रस्यलक्षणम्।

कालञ्च कुरुते यस्मात् कालमेवमुदाहृतम्॥ २-१॥

प्राणीनाञ्चैव देवानां विनाशोत्पत्तिकारणम्।
अमूर्तिं कालमाख्याता दृष्वादष्टन्तु लक्षणम्॥ २-२॥

त्रिविधं कालमाख्यातं शिवेन परिभाषितम्।
सृष्टिकालं स्थितिकालं संहारञ्चेति कीर्तितम्॥ २-३॥

शिवाद्यवनि पर्यन्तं सृष्टिरेवमुदाहृतम्।
या स्थितिः सर्वभूतानां शिवाद्यानन्तक स्थितम्॥ २-४॥

पृथिव्यादि शिवान्ताये लयङ्गच्छेत् परापरम्।
तदा संहारमेवोक्तं त्रिविधं कालनिर्णयम्॥ २-५॥

त्रिषुकालेषु वर्तन्तेतीतानां गमं ततः।
वर्तमानाख्यकं कालमुच्यते वै पृथक् पृथक्॥ २-६॥

p. 302) यदा शेषं समाप्तन्तु तदा तीतमिति स्मृतम्।
सापेक्षकञ्च यत्काले तदा नागतमुच्यते॥ २-७॥

असमाप्तं यदारब्धं वर्तमानमुदाहृतम्।

तत्कालमव बोद्धव्यं देवादीनामुदाहृतम्॥ २-८॥

युगपत् सृष्टि संहारौ स्थितिकाले निवर्तते।

केचित् कालात् सृजन्त्येव केचित् कालात् भ्रमन्ति च॥ २-९॥

मनुष्य पितृदेवानां कालसंख्यान्ततः शृणु।

कालञ्च द्विविधं प्रोक्तं स्थूलं सूक्ष्मन्तथैव च॥ २-१०॥

मौक्तिकं (मौकिकं) स्थूलमाख्यातं योगिनां

सूक्ष्ममेव च।

स्थूलञ्च द्विविधंवत्स चंद्रादित्यस्य चारणम्॥ २-११॥

चंद्रस्य वर्तनाकालोमनुष्याणां प्रकीर्तितम्।

सूर्यस्य वर्तनाकालो देवानान्तु प्रकीर्तितम्॥ २-१२॥

कालचक्रे तु वर्तन्ते भास्करादि ग्रहास्थथा।

द्वादशारयुते चक्रे मेषाद्याराशयोरवेः॥ २-१३॥

पट्टिकायाञ्च नाभौ च मध्ये वायुः प्रकीर्तिताः।

मेरुमूर्ध्निगतश्चक्रं ब्रह्माण्डे संव्यवस्थितम्॥ २-१४॥

कुलालचक्रवन्नित्यं भ्रामस्तत्रैव देवताः।
मेरुं प्रदक्षिणं कृत्वा नक्षत्राणि ग्रहाणि च॥ २-१५॥

सूर्योदयास्तमायान्तमहरेवविदुर्बुधाः।
अस्तमयादुदयान्तं निशा चैवमुदाहृतम्॥ २-१६॥

अहर्निशिद्वयोपेतमहोरात्रमिति स्मृतम्।
दिवाप्रातरहश्चैव प्रोक्तः पर्यायवाचकाः॥ २-१७॥

शर्वरीरजनीसायं निशिनक्तन्तु रात्रिकम्।
हायादि देवतानान्तु पितृणां प्रातरादिकम्॥ २-१८॥

मनुष्याणामहोरात्रमितिशास्त्रेसु निश्चितम्।
मनुष्याणां हितार्थाय सर्वसंपत्कराय च॥ २-१९॥

पूर्वाह्णे चैव मध्याह्ने चापराह्णेर्धयामके।
तस्मात् सर्वप्रयत्नेन चतुःसन्धिषु पूजयेत्॥ २-२०॥

यामं प्रतिविशेषेण पूजयेदष्टसन्धिषु।
यामार्धं सन्धिरित्युक्तमहोरात्रन्तु पूजयेत्॥ २-२१॥

p. 303) मनुष्याणां दिनं प्रोक्तं पञ्चपञ्चदशाहकः।
पक्षद्वयिशुक्लपक्षः कृष्णपक्षस्तथैव च॥ २-२२॥

एकराशिगतौ यत्र चन्द्रादित्यौ सहैव तु।
तत्रामावास्याचेत्युक्तं तत्पक्षं शुक्लमुच्यते॥ २-२३॥

सप्तराशिगतश्चंद्रं तत्र पूर्णकलामतः।
पौर्णमासी ततः प्रोक्तः कृष्णः पञ्चदशाहकः॥ २-२४॥

पक्षद्वयं तथा मासोमासाद्वादशवत्सरम्।
वर्षश्चैवाब्द् पर्याय वाचकाः परिकीर्तिताः॥ २-२५॥

शताब्दन्तु मनुष्याणामायुष्यं समुदीरितम्।
मृगाणां सर्वजातीनां शताब्दायुः प्रकीर्तितम्॥ २-२६॥

नराणाञ्चैव चायुष्यं शतञ्चैव प्रकीर्तितम्।
एवमुक्तं मनुष्याणां पितृकालं ततः श्रृणु॥ २-२७॥

मनुष्याणामहोरात्रं पितृणां घटिका भवेत्।
त्रिंशत्घटिमहोरात्रं शुक्लपक्षन्तु वासरम्॥ २-२८॥

निशिकृष्णं विजानीयात् पितृणां तदहर्न्निशम्।
पूर्वसन्धिरमावास्या मध्याह्नश्चाष्टमी भवेत्॥ २-२९॥

पौर्णमास्यपराह्णन्तु अष्टमीचार्धयामकम्।
दिवसैर्द्वादशैर्मासं मासैर्द्वादशवत्सरम्॥ २-३०॥

अमावास्यान्तु या पूजा पितृणान्तु प्रसादद्।
पितृकालमिदं प्रोक्तं मनुष्याणां हिताय वै॥ २-३१॥

देवानां वक्ष्यते कालस्तुट्यादि प्रलयान्तकम्।
तुटिलवनिमेषाश्च काष्ठा चैव कला तथा॥ २-३२॥

क्षणं मुहूर्तं घटिका सन्धिर्यामस्त्वहर्निशि।
दिवसः पक्षमासौ च ऋतुस्त्वयनवत्सराः॥ २-३३॥

युगमन्वन्तरौ कल्पं महाकल्पप्रलयस्तथा।

तुट्यादिप्रलयान्तञ्च लक्षणं श्रृणु सांप्रतम्॥ २-३४॥

स्वस्थान राक्षिकोन्मील उन्मीलन्तु निमेषकम्।

निमेषस्य चतुर्भागन्तुटीरेवमुदाहृतम्॥ २-३५॥

तुटिद्वयलवं विद्धि लवद्वयनिमेषकम्।

निमिषोदश पञ्चैव काष्ठाः सा त्रिंशतिः कला॥ २-३६॥

p. 304) कलार्धस्तु क्षणं प्रोक्तं क्षणद्वयं मुहूर्तकम्।

तदर्द्धं घटिका प्रोक्ता सर्वकार्यन्तया कृतम्॥ २-३७॥

सत्रिपादत्रिघटिका सन्धिरित्युच्यते बुधैः।

सन्धिद्वयन्तथायाम चतुर्यामन्दिवा स्मृतम्॥ २-३८॥

तदहर्मात्र विज्ञेय महोरात्रं दिनं स्मृतम्।

दिनपञ्चदशः पक्षो मासः पक्षद्वयं तथा॥ २-३९॥

पूर्वपक्षोपरश्चैव तौपक्षद्वयमुच्यते।

मासद्वयं ऋतुः प्रोक्तमयनं वै ऋतुस्त्रयम्॥ २-४०॥

अयनद्वयमब्दं हि अहोरात्रन्तु दैविकम्।

देवानान्तु दिवाप्रोक्तं मकरादि ऋतुस्त्रयम्॥ २-४१॥

ऋतुस्त्रयं कुलीरादि निशि चैवमुदाहृतम्।

संक्रान्ति विषुवे चैव अयने च प्रकीर्तिताः॥ २-४२॥

अन्यराशि गते भानौ राशिमध्ये तु संक्रमः।

तुलामेषगते सूर्ये विषुवे तत्प्रकीर्तितौ॥ २-४३॥

कुलीरेमकरे प्राप्ते दक्षिणश्चोत्तरायणम्।

उत्तरायण संक्रान्तिः पूर्वाह्णमिति कीर्तितम्॥ २-४४॥

चैत्रे विषु च मध्याह्ने अपराह्ने तु दक्षिणे।

अश्वयुक् विषुवं प्रोक्तं देवानामर्धरात्रिकम्॥ २-४५॥

चतुः सन्धिषु तस्माद्वै देवेशेषं प्रपूजयेत्।

नित्यसन्धिर्मनुष्याणां पितृणामाससन्धिकम्॥ २-४६॥

अब्दसन्धिषु देवाश्च पूजयेत् तु यथा विधि।

इत्थं भूतमहोरात्रं देवानां तु प्रकीर्तितम्॥ २-४७॥

प्रोक्तमब्द् क्रमं ह्येवं युगमानन्तु वक्ष्यते।
अण्डजाति युगाद्यैव केचित् शास्त्रे प्रकीर्तिताः॥ २-४८॥

चतुर्युगन्तु शास्त्रे तु शिवेन परिभाषितम्।
तृतयुगन्तु त्रेता च द्वापरन्तु कलिस्तथा॥ २-४९॥

कृतश्चतुः सहस्राब्दं सन्धिरष्टशतं भवेत्।
सन्ध्याशतं तथा ज्ञेयस्त्रेतार्धं पादहीनका॥ २-५०॥

p. 305) चतुःशतः सहस्रो वा द्वापरश्चेति कीर्तिताः।
कलियुगञ्च ऊर्धस्थो वर्धते तु पुनः पुनः॥ २-५१॥

एतैर्द्वादशसाहस्रैरब्दैरेव चतुर्युगाः।
सप्तत्येक समावर्त्यामन्वन्तरमिहोच्यते॥ २-५२॥

अशीति सहस्रैर्वर्षैः पञ्चाशद्विसहस्रकैः।
दिव्यसंवत्सरेणैव ज्ञेयमन्वन्तरं तथा॥ २-५३॥

स्वायंभुवमनुः पूर्वं स्वारोचिषमतः परम्।

उत्तमरैव तश्चैव तापसञ्चक्षुषं तथा॥ २-५४॥

वै वस्वतञ्च सा वर्णमेरु सा वर्णमेव च।
दक्ष सा वर्णमेवं हि ब्रह्म सा वर्णमेव च॥ २-५५॥

रुद्र सा वर्णमित्युक्तं रौल्यंभौत्यञ्चतुर्दश।
इत्येवन्तवसं क्षेपात् मनवः परिकीर्तिताः॥ २-५६॥

नाभिकल्पन्तु तत्कालं ब्रह्मणोयदि भावयेत्।
पञ्चैव कालमेवञ्च कल्पं ब्रह्मादि वा भवेत्॥ २-५७॥

कल्पमेवं समाख्यातं महाकल्पं ततः शृणु।
त्रयस्त्रिंशच्च देवाद्यास्त्रिशतं त्रिसहस्रकम्॥ २-५८॥

देवानां लयमित्युक्तं तद्रात्रौ तु प्रकल्पयेत्।
ब्रह्मणस्तदहोरात्रं तदा चेन्द्रालयं भवेत्॥ २-५९॥

शतत्रयं षष्टिदिनं ब्रह्मवर्षमुदाहृतम्।
षष्टित्रिंशच्च चक्राणां लयं तत्र पुनः पुनः॥ २-६०॥

तेन वत्सरमानेन शताब्दं ब्रह्मणोलयम्।

यावत्ब्रह्मलयं तावद् विष्णोस्तु तदहर्न्निशि॥ २-६१॥

ब्रह्मणात्रिशतं षष्टि लयंतत्र पुनः पुनः।

तेनमानेन बोद्धव्या शताब्दमीश्वरस्य तु॥ २-६२॥

ईश्वरस्तु लयं यत्तु निमेषं हि सदाशिवे।

ततो वृघ्याशतं वर्षात् सदाशिवलयं स्मृतम्॥ २-६३॥

बिन्दोर्नादस्य तद्वंशात् लयं तत्रैव चोच्यते।

नादमूर्तिलयं यावच्छक्ताच्छक्तेर्दिनं तथा॥ २-६४॥

p. 306) दिनवृघ्याशतं कान्त तावच्छक्ति स्थितः सदा।

यदा शक्तेर्लयं विद्धि यावत् परदिनं तु यत्॥ २-६५॥

तत्सङ्ख्यानिशताब्दन्तु परस्यैवलयं भवेत्।

प्रथमं शक्तिकं शान्तं शिवः पर्यायवाचकः॥ २-६६॥

परापरस्य तं ज्ञातं विनाशोत्पत्तिकारणम्।

देवानां कालमित्युक्तं तत्वानां कालमुच्यते॥ २-६७॥

पृथिव्यादि शिवान्तञ्च सत्वकालं प्रकीर्तितम्।
ईश्वरस्य लयं यावदात्मनस्तुलयं भवेत्॥ २-६८॥

सदाशिवलयं यावत् नादान्तं लयमेव च।
ततः शक्तेर्लयं यावल्लयङ्गच्छेच्छिवान्तकम्॥ २-६९॥

तत्वानां लयमेवोक्तं सूक्ष्मकालं ततः श्रृणु।
श्वासैस्तु त्रुटिभिः प्राणो घटिका प्राणषड्कके॥ २-७०॥

अहोरात्रं ततः षष्टि घटिकादिर्विशेषतः।
पूर्ववद्दिनवृद्ध्या तु पक्षादीनि विवर्धयेत्॥ २-७१॥

सूक्ष्मकालेन योगेन देव ब्रह्मादिकालयः।
ज्ञानिनां योगिनाञ्चैव सूक्ष्मकालं प्रकीर्तितम्॥ २-७२॥

कालचक्रमिदं प्रोक्तमाधाराधेयकं श्रृणु।

इति कालचक्रविधिपटललो द्वितीयः॥ २॥

अथ आधाराधेयविधिपटलः

अथातः संप्रवक्ष्यामि आधाराधेयलक्षणम्।

आधारं स्थानमित्युक्तमाधेयमधि दैवतम्॥ ३-१॥

आधाराधेय संबन्धाद्योगमित्यभिधीयते।

योगं बहुविधं वत्स आधाराणां बहुत्वतः॥ ३-२॥

योगिनां योगमित्युक्तं ज्ञानिनां ज्ञानमेव च।

वक्ष्येहमधुनायोगं संक्षेपान्नतु विस्तरात्॥ ३-३॥

p. 307) योगिनां साधकं पूर्वं मच्छृणुष्व हि साधके।

प्रथमञ्चासनञ्चैव द्वितीयं योगपट्टिका॥ ३-४॥

तृतीयमक्षमाला च वेणुदण्डञ्चतुर्थकम्।

कमण्डद्द विजानीयात् पञ्चमन्तु विशेषतः॥ ३-५॥

तेषान्तु लक्षणं वक्ष्ये चासनं कूर्मवत् कृतम्।

खादिरोदेवदारू च मधुको बिल्व एव च॥ ३-६॥

अथवा याज्ञिकै वृक्षैः कृत्वा कूर्मासनं तथा।

पादोनं वा तदर्द्धं वा त्रिविधं त्वासनं तथा॥ ३-७॥

दर्पणोदरसङ्काशमधस्तादवदं तथा।

आसनं त्वेवमाख्यातं योगाभ्यासे विनायक॥ ३-८॥

व्याघ्राजीनं तु प्रधमा कृष्णाजिनं द्वितीयकाः।

अथवा तन्तुना कार्या त्रिविधायोगपट्टिका॥ ३-९॥

विस्तारन्त्र्यङ्गुलं प्रोक्तं नमानमुपवीतवत्।

जपमालाशिरोमाला हृंमाला बाहुमालका॥ ३-१०॥

कर्णपृष्ठात् तु नाभ्यन्ता उरोमाला इति स्मृताः।

शिरोमाला तु तन्नाहा भुजमालाभुजासमा॥ ३-११॥

जपमालां समानेन संख्यामात्रं श‍ृणुष्व हि।

पञ्चविंशति रुद्राक्षैर्मोक्षार्थिनाञ्जपं स्मृतम्॥ ३-१२॥

षड्विंशति शिवार्थञ्च ज्ञानार्थं शत्रुनाशनम्।

सप्तविंशति इत्यर्थं पुष्ट्यर्थमष्टविंशतिः॥ ३-१३॥

त्रिंशज्जयार्थिनां कार्यं दशपञ्चाभिचारकः।

जपमालासमाख्याता जपमालाविधिं शृणु॥ ३-१४॥

प्रणवं सर्वमन्त्रेषु सर्वमुच्चार्यते यतः।

प्रणवं संप्रवक्ष्यामि संक्षेपान्न तु विस्तरात्॥ ३-१५॥

अकारञ्च उकारञ्च मकारं बिन्दुरूपकम्।

अकारं ब्रह्मदैवत्यमुकारं विष्णु दैवतम्॥ ३-१६॥

मकारं रुद्र दैवत्यं बिन्दोरीश्वर एव हि।

नादं सदाशिवं प्रोक्तमित्येते अधिदेवताः॥ ३-१७॥

p. 308) अकारं तु हृदिस्थानं उकारं कर्णदेशकम्।

तादृ मध्यं मकारं स्यात् बिन्दोश्चैव ललाटकम्॥ ३-१८॥

तस्योपरि च नादस्य स्थानं ह्येवं प्रकीर्तितम्।

अकारादि त्रयोवर्णास्त्वनुस्वार विसर्गकौ॥ ३-१९॥

पञ्चवर्णाः प्रशस्यन्ते अकाराक्षर संभवाः।

* * * * * * * * उकाराद्यापि संभवा॥ ३- २०॥

कादिभामक्षिकारेता यकारान्यस्तु बिन्दुके।

जाताना देशकारान्यास्त्वेते पञ्चाशति स्मृताः॥ ३-२१॥

प्रणवं सर्ववर्णाख्यं सर्वदेवमयं विदुः।

ऋषिः सनत्कुमारस्तु ओंकारः शुक्लवर्णकः॥ ३-२२॥

गायत्रीच्छन्द इत्युक्तं तस्य वै शिवतत्वकः।

ओमित्येकाक्षरं * * * * * * * * वा हिनाम्॥ ३-२३॥

प्रणवन्तु समास्योक्ता स्मृतपञ्चाक्षरं श्रृणु।

नमःशिवाय पञ्चार्णमेतत् पञ्चाक्षरं स्मृतम्॥ ३-२४॥

वाचिकायस्तु विज्ञेयस्तद्वाच्यस्य शिवः स्मृतः।

जपं शक्तिप्रदंशस्तं मल्लयोमुक्तिरिष्यते॥ ३-२५॥

ऋषिच्छन्दोवर्णतत्वा देवतास्तु श्रृणु क्रमात्।

काश्यपः कौशिकश्चैव भारद्वाजस्तु गौतमः॥ ३-२६॥

आत्रेयस्तु न कारादि मुनयः क्रमशस्तथा।

अनुष्टुप् त्रिष्टुप् ब्रहति जगत्यति जगत्यपि॥ ३-२७॥

च्छन्दांसिहि समाख्याता वर्णाद्यैश्चक्रमाच्छृणु।

रक्तं कृष्णन्तथा श्यामं पीतं स्फटिकसन्निभम्॥ ३-२८॥

पृथिव्यादीनि तत्वानि तेषां तत्वं प्रकीर्तितम्।

सद्यादि पञ्चवक्त्राणि तेषां देवाः प्रकीर्तिताः॥ ३-२९॥

प्रणवेन समायुक्तं जपकाले तथोच्यते।

तदा षडक्षरं प्रोक्तं स्त्रीशूद्रादैस्तु वर्जितम्॥ ३-३०॥

जपश्चतुर्विधं प्रोक्तं सर्वेषां जपकांक्षिणाम्।

मानसञ्चैव कण्ठेष्यमुपांशु व्यक्तमेव च॥ ३-३१॥

p. 309) व्यक्तंदशगुणोपांशु स्तस्मात् कण्ठेष्यकं शतम्।

सहस्रं मानसं तस्मादङ्गुल्यादि जपं श्रृणु॥ ३-३२॥

अङ्गुल्या जपसंख्यातु तुल्या एकफलं तथा।

पर्वणाष्टगुणं प्रोक्तं दीपेशतगुणाधिकम्॥ ३-३३॥

शतसङ्ख्याकुशग्रन्थी प्रवालैस्तु सहस्रकम्।
मणिभिर्दशसाहस्रं मौक्तिकैर्ल्लक्षमुच्यते॥ ३-३४॥

पद्माक्षैः कोटिगुणितं रुद्राक्षैस्तु न विद्यते।
रुद्राक्षैस्तु ततोत्पत्तिं श्रृणुत्वं वक्ष्यतेऽधुना॥ ३-३५॥

दिव्यवर्षसहस्रन्तु चक्षुरुन्मीलितं मया।
मुञ्चन्ति मम नेत्राणि श्रितरुद्राक्षमुच्यते॥ ३-३६॥

एकवक्त्रं शिवः साक्षादनन्तन्धारणे फलम्।
सन्धार्यमृयते यस्तु सयाति परमाङ्गतिम्॥ ३-३७॥

द्विवक्त्रं शक्तिरित्युक्तं त्रिवक्त्रं नादमेव च।
चतुर्वक्त्रन्तु बिन्दु स्यात् पञ्चवक्त्रं सदाशिवम्॥ ३-३८॥

षड्वक्त्रमीश्वरं प्रोक्तं रुद्रः सप्तमुखं स्मृतम्।
अष्टवक्त्रं स्मृतो विष्णुर्नववक्त्रश्चतुर्मुखम्॥ ३-३९॥

नववक्त्रैकवक्त्रान्तं फलं शतगुणोत्तरम्।

हस्ते कर्णेशिखेकण्ठे सन्धार्यं सहभस्मना॥ ३-४०॥

सर्वपापात् प्रमुच्यन्ते शिवसायुज्यमाप्नुयात्।

दर्शनं पापनाशन्तु स्पर्शनं सर्वसिद्धिदम्॥ ३-४१॥

सर्वाङ्गधारणात् पुण्यं रुद्राक्षं धारयेत् सदा।

प्रयाणकाले रुद्राक्षं भक्षयित्वा मृयन्ति ये॥ ३-४२॥

ते रुद्र पदमाप्नोति पुनर्जन्म न विद्यते।

तस्मात् सर्वप्रयत्नेन जप्यं रुद्राक्षकैः सदा॥ ३-४३॥

जपकालश्च देशश्च वक्ष्यते तु समासतः।

पूर्वाह्णे चैव मध्याह्ने चापराह्णेर्धरात्रिके॥ ३-४४॥

p. 310) चतुष्कालं त्रिकालं वा तद्देशन्तु ततः श्रृणु।

नदीतटाकतीरे वा गोष्ठे देवालयेपि वा॥ ३-४५॥

वने वाथ गिरौ देशे पुण्यस्थाने ग्रहे जपेत्।

देशमेवं समाख्यातं जपसंख्यां ततः श्रृणु॥ ३-४६॥

सहस्रं वा तदर्धं वा तदर्धं वा शताष्टकम्।

जपेन् नित्यं सदायोगी सर्वपापविनाशकृत्॥ ३-४७॥

सयाति जपमात्रेण शिवलोकमथाक्षयम्।

जपसंख्या विधिप्रोक्तो वेणुदण्डविधिं शृणु॥ ३-४८॥

विप्राणान्तु शिरोत्सेधं क्षत्रियाणां ललाटके।

वैश्यानां नासिकोत्सेधं शूद्रादीनान्तु वर्जयेत्॥ ३-४९॥

वेणुदण्डमृजुं स्निग्धं वक्रकोटरवर्जितम्।

दण्डस्यैव विधिः प्रोक्ता कमण्डल्लु विधिं शृणु॥ ३-५०॥

पूरितञ्चाढकैः श्रेष्ठं मध्यं त्रिप्रस्थपूरितम्।

द्विप्रस्थपूर्णमधमं मानमेवं कमण्डलोः॥ ३-५१॥

सौवर्णं रजतं वापि ताम्रं वा मृण्मयं तु वा।

यदुक्तं शिल्पशास्त्रेषु तत्तदुक्ता तु कारयेत्॥ ३-५२॥

शैवाना साधनं प्रोक्तं पञ्चधा समुदाहृतम्।

योगाष्टकांगौ वक्ष्यामि श्रृणुष्वेकाग्र मानसः॥ ३-५३॥

यमनियमासनञ्च प्राणायामं ततः परम्।
प्रत्याहारञ्च ध्यानञ्च धारणा च समाधिकम्॥ ३-५४॥

अष्टाङ्गमिति विज्ञेयं योगिनां योगसाधनम्।
अहिंसा सत्यमस्तेयं ब्रह्मचर्यपरिग्रहम्॥ ३-५५॥

यमन्तु पञ्चधा प्रोक्तं नियञ्च ततः श्रृणु।
शौच सन्तोषकात्तच्च तपःस्वध्यायमेव च॥ ३-५६॥

ईश्वर प्रणिधानञ्च नियमं पञ्चधा स्मृतम्।
गोमुखं स्वस्तिकञ्चैव पद्मञ्चैवार्धचन्द्रकम्॥ ३-५७॥

वीरयोगासनञ्चैव षड्विधश्चासनं स्मृतम्।
वामजानूपनिन्यस्य दक्षिणञ्जानुमण्डलम्॥ ३-५८॥

p. 311) द्वयोः पादतले चैव न्यसेत् द्वौपृष्ठ पार्श्वयोः।
एवं कृत्वा तु सुस्निग्धं गोमुखीलक्षणान्वितम्॥ ३-५९॥

ऊरूपार्श्वे तलौ न्यस्त्वा जंघामघ्नन्तु स्वस्तिकम्।

ऊरूपरितले न्यस्त्वा पद्मासनमिहोच्यते॥ ३-६०॥

गुल्फत्रयं समं कृत्वा तलेगुह्ये च विन्यसेत्।

अर्द्धचन्द्रं समाख्यातं वीरासनं ततः शृणु॥ ३-६१॥

द्विभुजं पतितं वामपादं दक्षिणतोपरि।

स्थिरं वीरासनं प्रोक्तं योगासनं ततः शृणु॥ ३-६२॥

शरीरञ्जानु संबन्धं योगपट्टिकया वृतम्।

कूर्परौ चैव विन्यस्तं योगासनमिहोच्यते॥ ३-६३॥

कृत्वा चैवैकमेतेषां ततो योगं समाचरेत्।

योगाभ्यासस्य पूर्वे तु प्राणायामत्रयं कुरु॥ ३-६४॥

रेचकं पूरकञ्चैव कुंभकं योगमभ्यसेत्।

योगाभ्यासस्य पूर्वे तु प्राणायामत्रयं कुरु॥ ३-६५॥

रेचकं पूरकञ्चैव कुंभकञ्च द्वितीयकम्।

रेचकं रविबिंबं स्यात् पूरकं चन्द्रमण्डलम्॥ ३-६६॥

आग्नेयं कुंभकं ज्ञेयं सकायोच्यान पूजयेत्।
रेचनाद्रेचकं प्रोक्तं पूरणात्पूरकं ततः॥ ३-६७॥

कुंभकन्तु निरोधेन प्रणवेनाभ्यसेत्त्रयम्।
रेचकात् द्वादशं मात्रं तन्मात्रं पूरकं स्मृतम्॥ ३-६८
॥

कुंभकं द्वादशं मात्रमिहशास्त्रे तु निश्चितम्।
रेचकं ब्रह्मदैवत्यं पूरकं विष्णुदैवतम्॥ ३-६९॥

कुंभकं रुद्रदैवद्यमधि देवास्त्रयं स्मृतम्।
रेचकं पूरकञ्चैव योगिनान्तु अहर्निशि॥ ३-७०॥

सूतकं प्रोतकं मुक्त्वा कुंभकेन तु पूरयेत्।
प्राणायामक्रमं प्रोक्तं प्रत्याहारं ततः श्रृणु॥ ३-७१॥

p. 312) इन्द्रियाणीन्द्रियार्थेषु प्रतिस्थाने व्यवस्थितः।
यावत् तावत् स्थितीभूतः प्रत्याहारः स उच्यते॥ ३-७२॥

आधारेषु च संकल्प्य यथासनं स्वरूपकम्।

ध्यानमेवं विजानीयात् सर्वदुःखनिवारणम्॥ ३-७३॥

आधारलक्षणं वक्ष्ये संक्षेपान्नतु विस्तरात्।

नाभेस्तु चतुरंगुल्य मधस्तादग्निमण्डलम्॥ ३-७४॥

कदंबपुष्पवज्जुष्टं पत्रं जुष्टं त्रिकोणकम्।

मूलाधारमधः प्रोक्तं द्वितीयं नाभिमूलके॥ ३-७५॥

भुजङ्गवलयाकारमष्टवर्तुलमेव च।

कुण्डलाख्या महानाडी भानुमण्डलमुच्यते॥ ३-७६॥

नाभेरूर्ध्वन्तु यत्पद्मं चंद्रमण्डलमुच्यते।

हृदये कर्णमूले तु ताद्द मूले ललाटके॥ ३-७७॥

मूर्ध्निस्थाने तु संकल्प्य ध्यायेत् पद्मकपुष्पवत्।

हृत् पद्मलक्षणं वक्ष्ये यथा वदनुपूर्वशः॥ ३-७८॥

नाभौ तन्नालमूलन्तु ऊर्ध्वनालमधोमुखम्।

कदलीपुष्पवत् पद्ममष्टपत्रं सकर्णिकम्॥ ३-७९॥

इहशास्त्रेन वा धारं हृत्पद्मेन समायुतम्।

आधारलक्षणं प्रोक्तमाधेयञ्च ततः शृणु॥ ३-८०॥

आधेयं यत्प्रयुक्तञ्च समाधीत्येवमिश्रितम्।

इडा च पिङ्गला चैव वीणादण्डस्य पार्श्वयोः॥ ३-८१॥

सुषुम्ना मध्यगा तत्र मध्ये तु सुषिरं तथा।

जीवप्राणसमायुक्तास्तेषु मध्येषु सञ्चरेत्॥ ३-८२॥

सञ्चरन्निह तत्काले आधारेषु व्यवस्थितम्।

संयुक्ते योगमाख्यातं योगी खगं समाश्रयेत्॥ ३-८३॥

मूलाधारे ततस्त्वग्नि संयुक्ते योगमभ्यसेत्।

योगाभ्यासेन तद्योगी अग्निलोकन्तु संस्पृशेत्॥ ३-८४॥

तदूर्ध्वे भास्करन्ध्यात्वा रविलोकमवाप्नुयात्।

एवं ध्यात्वा तदूर्ध्वे तु चंद्रलोकं स गच्छति॥ ३-८५॥

p. 313) ब्रह्माणं हृदये स्मृत्वा ब्रह्मलोकमवाप्नुयात्।

विष्णुं ध्यात्वा तदूर्ध्वे तु कण्ठमूले व्यवस्थितम्॥ ३-८६॥

पुरुषं व्यापयेद्योगी योगाभ्यासेन तत्गुणैः।
ताद्द मूले स्मरेद्रुद्रं रुद्रलोकपदेच्छया॥ ३-८७॥

पुरुषोपरिवेशान्तं व्यापकं स्वेन तेजसा।
ललाटे ईश्वरं ध्यात्वा तल्लोकं तदवाप्नुयात्॥ ३-८८॥

सदाशिवन्तु शिरसि ध्यात्वा तत्रैव भूज्यते।
हृत्पद्ममध्यं गत्वा तु बिन्दुनादञ्च शक्ति च॥ ३-८९॥

चतुरङ्गुलमात्रेण दीपाकारं विचिन्तयेत्।
चतुस्थानेषु संपूज्य तत्तत्स्थान स्वरूपकैः॥ ३-९०॥

शिरोपरिन्यसेत् ब्रह्ममव्ययं निष्कलान्वितम्।
तस्माद्योग समायुक्तो योगीयोगफलं लभेत्॥ ३-९१॥

अणुमात्रं लभेद्यस्मादणिमेत्यभिधीयते।
सहस्रैर्वा यथा गत्वा मूलवर्णप्रदेशकम्॥ ३-९२॥

स्वेच्छया लभते यस्मात् तस्मात् सा लघिमा स्मृता।

भूमौ मनो जपं कृत्वा पूज्यते शास्त्रवादिभिः॥ ३-९३॥

सर्वत्र पूजितो यस्मात् तस्मात् सा महिमा भवेत्।

सर्वद्रव्याणि संप्राप्तिः प्राप्तिरेषामुदाहृता॥ ३-९४॥

प्रकाम्येषु शरीरेषु प्रकाशन्तु प्रवेशिता।

सूर्यादिष्वनवाप्तत्वादीशत्वं समुदाहृतम्॥ ३-९५॥

यदीशत्वन्तु तत्रैव तदीशित्वं विधीयते।

शिवसायुज्य सामर्थ्यात्तच्छिवत्वमिति स्मृतम्॥ ३-९६॥

अणिमाद्यष्ट सिद्धिञ्च लभेद्योगी विशेषतः।

सालोक्यादि चतुर्थश्च प्राप्यते योगी लक्षणम्॥ ३-९७॥

p. 314) सालोक्यञ्चैव सामीप्यं सा रूप्यं सा युज्यकं

तथा।

ध्यानलोकन्तु संप्राप्य सा लोक्यन्तद्विधीयते॥ ३-९८॥

तद्देवस्यं समीपत्वात् सामीप्यमिति चोच्यते।

तत्तद्रूपन्तु लब्ध्वा तत् सारूप्यमिति च स्मृतम्॥ ३-९९॥

शिवे संयोजितं रूपं सा युज्यमिति कत्थ्यते।
योगं समासात् संप्रोक्तं ज्ञानपादं ततः शृणु॥ ३-१००॥

तद्योगपादं क्रमशः प्रमाणैर्यत्प्रोक्तमत्रैव
समासतस्तत्। नाडी तु चक्रन्त्वथ कालचक्रमाधारयुक्तं
पटलत्रयेण॥ ३-१०१॥

इति आधाराधेय विधिपटलस्तृतीयः॥ ३॥

इति सुप्रभेदेयोगपादः समाप्तः

ॐ

शिवमयम्

सुप्रभेदम्

आचार्याय प्रदातव्यं भक्तिपूर्वं नृपेण तु ।

इति कालोत्तरे राजाभिषेकपटलः एकोनविंशतिः पटलः ॥ १९ ॥

॥ श्रीः ॥

ईश्वर उवाच-

p. 93)

नाभिचक्रमिदं सूक्ष्मं प्रवक्ष्याम्यनुपूर्वशः ।
नाभेरधस्तात्कन्दं तु अङ्कुरास्तत्र निर्गताः ॥ १ ॥

द्विसप्तति सहस्राणि नाभिमध्येऽप्यव स्थिताः ।
तिर्यगूर्ध्वमधैश्चैव व्यापितं तैस्तु सर्वतः ॥ २ ॥

चक्रवत् संस्थिता ह्येताः प्रधाना त्रात्रिंशनाड्यधः ।
इडा च पिङ्गला चैव सुषुम्ना च तथैव च ॥ ३ ॥

गान्धारि हस्तिजिह्वा च पूषा चैव यशस्विनी ।
अलम्बुषा कुहूश्चैव शङ्खिनी पालिनी तथा ॥ ४ ॥

ह्वादिनी मोहिनी चैव कम्पिनी पुनिनी शुभा ।
विकृतिर्विषमा मान्या हंसिनी विश्वमालिनी ॥ ५ ॥

अङ्गिनी घोषिणी चैव तेजिनी रसवाहिनी ।
वाहिनी धरणी चैव रसभैमी रसक्रिया ॥ ६ ॥

शीतवीर्याश्चौष्ण वीर्या * * * * * * * * ।
स्पर्शनावशिका चैव प्रोक्ता द्वात्रिंशनाडिका ॥ ७ ॥

प्राणोपानः समानश्च उदानो व्यान एव च ।
नागः कूर्मश्च कृकरो देवदत्तो धनञ्जयः ॥ ८ ॥

दश प्राणवहा नाड्यो द्वात्रिंशत्तु षडानन ।
अष्टाविंशतिकोट्यस्तु नाड्यस्तु वहते सदा ॥ ९ ॥

सर्वेषामपि वायूनां प्रधानैर्दशवायुभिः ।
प्राणापानमयो प्राणा विस * * * * पूरणं प्रति ॥ १० ॥

नित्यमापूरयत्येषः प्राणिनामुरसि स्थितम् ।
निश्वासोच्छ्वास कार्शैश्च प्राणो जीवं समाश्रितः ॥ ११ ॥

p. 94)

प्रयाणं कुरुते यस्मात् तस्मात्प्राणः प्रकीर्तितः ।
वायुस्तेजस्तथाकाशं तृतीयं जीव संस्थितम् ॥ १२ ॥

पुर्यष्टकसमायुक्तं पुरुषो हृदि संस्थितः ।
पुरुषो जीवः प्राणं च त्रिविधा देहपारगाः ॥ १३ ॥

जीवतत्त्वसमायुक्तं धर्मज्ञानं प्रवर्तते ।
रजसा सहसंयुक्तं भुञ्जते विषयान् प्रति ॥ १४ ॥

तमसा सह संयुक्तं ततः पापं प्रवर्तते ।
जपध्यानं समाधिश्च ज्ञानदेवार्चनं तथा ॥ १५ ॥

इष्टां पूर्तां च विविधां दानानि विविधानि च ।
वेदसिद्धान्ताध्ययनं योगशास्त्राणि चैव हि ॥ १६ ॥

यमनियमादि शौचं च देवालयसहादि च ।
तटाक मुदकप्रयागोभिर्वस्त्रादि दानकम् ॥ १७ ॥

भूमिरत्नं गजाश्वौ च तिलकन्यादिदानकम् ।
पुरुषः सत्त्वस्संयुक्तो धर्मज्ञानं प्रवर्तते ॥ १८ ॥

गीतं नृत्तं च वाद्यं च हिरण्यगोभूमिसंग्रहम् ।
दासीदासमनड्वाहमजं महिषमेव च ॥ १९ ॥

शब्दादिविषयान् भोगान् स्त्रीसंग्रहणमेव च ।
वज्रं मरतकं पद्मरागं मौक्तिकविद्रुमौ ॥ २० ॥

गन्धपुष्पादिधूपं च वस्त्रशय्यादिरेव च ।
गृहोपस्करणान्यानि कटाहोलूखलादिभिः ॥ २१ ॥

रजोगुणसमायुक्तः पुरुषः सर्वसंग्रहः ।
रजतो? गुणमेवं तु समासात्कथितं तव ॥ २२ ॥

p. 95)

आलस्य काममिश्रा च अतिनिद्रा च मैथुनम् ।
चौर्यं पिशुनता चैव तस्करोपाधमेव च ॥ २३ ॥

अज्ञानमतिधूर्तं च परस्वहरणं तथा ।
सदा चानृतवादित्वं गोधान्यं भूमिचोरता ॥ २४ ॥

सदा हिंसा परक्षुद्रं वार्धरुष्यं मृगघातकम् ।
निष्ठुरः सर्वभूतानां देवब्राह्मणदूष?णम् ॥ २५ ॥

तामसैश्च गुणैर्युक्तं पुरुषः कुरुते सदा ।

ब्रह्मविष्णु महेशाश्च शक्राद्याः सर्वदेवताः ॥ २६ ॥

आदित्त्या वसवो रुद्राः सत्त्वेनैवाव संस्थितः ।
गन्धर्वाश्चारणा यक्षा सिद्धविद्याधरादयः ॥ २७ ॥

नागाश्च गरुडाश्चैव किन्नराश्च महर्षिका ।
पिशाचभूतवेताला शबराश्च पुलिन्दकाः ॥ २८ ॥

तमोगुणेन संयुक्ताः पुरुषाः पूर्वतोमुखाः ।
सगोत्रसिद्धा मुनयः सिद्धा वै संशितव्रताः ॥ २९ ॥

पुरुषायत्तजीवं तु इन्द्रनीलमणिप्रभम् ।
अङ्गुष्ठमात्रं पुरुषं मण्डलत्रयमध्यगम् ॥ ३० ॥

अङ्गुष्ठार्धार्धजीवं तु अधस्तात्पुरुषस्य तु ।
तदर्धं तु प्रमाणं तु तस्यार्धं प्रमाणसंस्थितम् ॥ ३१ ॥

जीवमध्ये प्रमाणं तु राजावर्तमणिप्रभम् ।
तस्य मध्ये ह्यपानस्तु इन्द्रकोपक संनिभः ॥ ३२ ॥

व्यानस्तस्य च मध्ये तु गोक्षीरसदृशप्रभः ।
उदानस्तस्य मध्ये तु तुषाररजतप्रभः ॥ ३३ ॥

p. 96)

समानस्तस्य मध्ये तु शरदिन्दुसमप्रभः ।
नागस्तस्य च मध्ये तु मार्ताण्डोदयसप्रभः ॥ ३४ ॥

कूर्मस्तस्य च मध्ये तु अतसीकुसुमप्रभः ।
कृकरस्तस्य मध्ये तु किञ्जल्कसदृशप्रभः ॥ ३५ ॥

तस्य मध्ये देवदत्तो जपाकुसुमसन्निभः ।
धनञ्जयस्तस्य मध्ये गोक्षीरसदृशप्रभः ॥ ३६ ॥

प्राणो हृन्नाभिनासाग्रं पादाङ्गुष्ठान्तमाश्रितः ।
अपानो मेढ्रगुदयोः मुण्डल्यादौ च संस्थिताः ॥ ३७ ॥

व्यानस्तु सर्वसिद्धौ तु जान्वो गुल्फैश्च बाहुषु ।
कृकरस्तु ललाटे तु गलकूर्परपाणिषु ॥ ३८ ॥

उदानः पार्श्वयोश्चैव कटीवक्षसिसन्धिषु ।
वृषणौ ऊरुजानू च जङ्घे पृष्ठे च बाहुषु ॥ ३९ ॥

समानः सर्वमङ्गेषु श्रोत्रनासौ तु चक्षुषी ।
जिह्वायां तालुरन्ध्रे च जठरे नाभिपादयोः ॥ ४० ॥

हस्तयोरुभयोश्चैव अङ्गुलीषु च सर्वशः।

समानः सर्वमङ्गेषु व्याप्यते च * * * * ॥ ४१ ॥

* * * न्यत्य पानस्तु आहारमनुजाघमः।

वैश्वानरसुपाकं तु अन्नपानाद्यभक्षकैः ॥ ४२ ॥

विष्ठा शुक्लं च मूत्रं च वायुक्षोभं च सर्वशः।

अधोनयति सर्वं तु अपानस्तेन कीर्तितः ॥ ४३ ॥

व्यानो व्यानोशयं इ* * ने व्याधिप्रकोपकः।

वातं पित्तं च श्लेष्माणं त्रिकोपसान्निपातकम् ॥ ४४ ॥

p. 97)

प्रमेहकुष्ठगुल्मैश्च ज्वरशोष भगन्धरान्।

आरोपां बाह्ययागं च महोदरं पाण्डुरोगकम् ॥ ४५ ॥

सर्वव्याधिप्ररोहं च यतस्तस्माद्विनार्थितम्।

स्वनयत्यधरं वज्रं (क्रं) गोत्रतेत्र प्रकोपनम् ॥ ४६ ॥

श्रोत्रा घ्राणं च रसनं त्वचं पादौ च पाणी च।

पादको पायूपस्थत्वापूरकं रेचकं तथा ॥ ४७ ॥

उद्वेदयति मर्माणि उदानो नाम मारुतः।
प्रीतिर्विनाशकथनं जार्धक्यं च जराश्च हि॥ ४८॥

पीतं भक्षितमाघ्रातं रक्तपित्तकफानि च।
समस्तगतिगात्राणि ज्वरकुष्ठप्रमेहकान्॥ ४९॥

क्षयगुल्मोदराणी च सर्वव्याधिजरानपि।
अधिकं न कुरुते वायुः सर्वभूत हितेषु च॥ ५०॥

समं नयति गात्राणि समानो नाम मारुतः।
उद्गारो नाग इत्युक्तः कूर्म उन्मीलने स्थितः॥ ५१॥

कृकरस्तु क्षुते चैव देवदत्तो विजृम्भते।
धनञ्जयस्थितो वाक्षो मृतस्यापि न मुञ्चति॥ ५२॥

दश प्राणवहा नाड्यो द्वात्रिंशत्परिकीर्तिताः।
जीवः प्राणः सुषुम्नायां चलतो सर्वकालिके॥ ५३॥

इडायां पिङ्गले वत्स समानोदानचारकौ।
अल्पवृक्षे या कुम्बां चापान एव तु सञ्चरेत्॥ ५४॥

व्यानो वै चक्षुषोः कण्ठे नासास्ये चापि सञ्चरेत्।

मुखे नासे च नेत्रे च नागः कूर्मस्तु सञ्चरेत्॥ ५५॥

p. 98)

कूर्मः कृकरो देवदत्तो श्रोत्रयोः सञ्चरेत्सदा।
देवदत्तो धनञ्जय पादमेढ्रे च सञ्चरेत्॥ ५६॥

शेषेषु सर्वनाडीषु दश प्राणे वहेत्सदा।
चक्रवत्संस्थिता नाड्यः तेषु मध्येषु चानिलः॥ ५७॥

दशारं चक्रमेतत्तु अष्टदिग्द्वारकारका।
ऊर्ध्वाधश्च द्वयोद्वारं नाडीचक्रं प्रकीर्तितम्॥ ५८॥

सौर्यः कलाः षोडशैताः तथा चन्द्रकला भवेत्।
द्वे द्वे कटी भवेद्वत्स इडा पिङ्गलकावपि॥ ५९॥

द्वेचार्धक घटिका वत्स वामदक्षिणतश्चरेत्।
दक्षिणे पञ्चघटिका वामके पञ्च चैव च॥ ६०॥

चक्रे तु पटले वत्स * * * * प्रवक्ष्यते।

(ग्रन्थपातः)

इदानीमुद्देशमात्रं तु कथितं हि षडानन।

दशारपङ्कजे नित्यं पुरुषा घटिकाद्वयम्॥ ६१ ॥

वामे पञ्चदले वह्निः दक्षिणे पञ्च वै पुनः ।
उत्तरं दक्षिणे चैव वामदक्षिणसंस्थितम्॥ ६२ ॥

मध्ये तु विषुवं प्रोक्तं पुटद्वयविनिःसृतम् ।
संक्रान्तिर्विषुवं चैव अहोरात्राध(य)नानि च ॥ ६३ ॥

अधिमासमृणं चैव औमत्रात्रं धनं तया ।
* * * त्रं भवेद्धिक्का अधिमासो विजृम्भिका ॥ ६४ ॥

ऋणं च जायते कासं निश्वासो धनमुच्यते ।
संक्रान्तिः पुनरध्यैव संस्थानात् स्थानमेव तु ॥ ६५ ॥

p. 99)

इडा चैव सुषुम्ना च अमा चैव समन्विता ।
सुषुम्नामध्येष्वेषङ्गे एषा संक्रान्तिरुच्यते ॥ ६६ ॥

कटीमूलाद्विनिष्क्रान्ते इडा वै पिङ्गला उभे ।
नाभिग्रन्थिं समाश्रित्य वा दक्षिणसंस्थितौ ॥ ६७ ॥

पुनर्भूग्रन्थिमाश्रित्य गलगान्धौ तु संगतौ ।

मूर्ध्निग्रन्थिं समाश्रित्य नासापुटविनिःसृतौ ॥ ६८ ॥

द्वादशाङ्गुलं संविश्य नासाग्रात्कौतुकं पिबेत् ।
परवेदिकदेहे तु परमात्मनि संविशेत् ॥ ६९ ॥

कालाग्निरुद्रं निष्ठान्ते सुषुम्ना षोडशान्तका ।
मध्यमे उभयोश्चैव ब्रह्मरन्ध्रे तु विश्रिता ॥ ७० ॥

गान्धारी हस्तिनी चैव मूला चैव समारभेत् ।
समाहृतौ नाभिग्रन्थौ तु पुनर्भ्रूग्रन्थिसंगतौ ॥ ७१ ॥

गलग्रन्थिं पुनर्गत्वा कं पीत्वा द्वादशाङ्गुलात् ।
दर्शनं सर्ववस्तूनां पुनर्वै मध्यसंविशेत् ॥ ७२ ॥

पूषा यशस्विनी चैव शूल * * * * * * ।
विनिर्ग * * स * * पुनर्भ्रूग्रन्थिसंगतौ ॥ ७३ ॥

गलग्रन्थिं समाश्रित्य मूर्ध्नि ग्रन्थौ तु संगतौ ।
पुनःश्रोत्रद्वये चैव गत्वा चैव तु संविशेत् ॥ ७४ ॥

खं पीत्वा द्वादशान्ते तु तन्मार्गे पुनराविशेत् ।
मध्ये देहं तु संविश्य सर्वशब्दं शृणोति तम् । ७५ ॥

अलंपुरुषा कुहूश्चैव मेढ्रपायुविनिर्गता ।
शङ्खिनी द्वौ मालिनी तु कन्दमूलौ समाश्रितौ ॥ ७६ ॥

p. 100)

अधस्ताद्गतौ तु तौ वत्सालम्बुषा च कुहूस्तथा ।
शङ्खिन्मूर्ध्वमधश्चैव ऊर्ध्वं नाभेर्विनिर्गता ॥ ७७ ॥

अधस्ताद्वायुमेढ्रा तु शङ्खिनी तु विनिर्गता ।
ह्लादिनी मोहिनी चैव कम्पिनी मेघनी शुभा ॥ ७८ ॥

नाभिमूलाद्विनिष्क्रान्तात् दक्षिणं पादमागता ।
कटिग्रन्थिं समावेश्य जानुग्रन्थिं तु संगतौ ॥ ७९ ॥

गुल्फग्रन्थिं तु संगत्य पञ्चाङ्गुलिषु निर्गता ।
विकृतिर्विषमामात्या हंसिनी विश्वमालिनी ॥ ८० ॥

वामपादे विनिष्क्रान्तात् कन्दमूलात्समागता ।
कटिग्रन्थौ तु वाश्लिष्य जानुग्रन्थिं समाश्रिता ॥ ८१ ॥

गुल्फग्रन्थिं तु संगत्य पञ्चाङ्गुलिषु निर्गता ।
गगिनी घोषणी चैव तेजिनी रसवाहिनी ॥ ८२ ॥

धरणी चेति पञ्चैते कन्दाच्चैव तु निर्गता ।
नाभिग्रन्थौ तु संगत्य हृदयग्रन्थिसंगता ॥ ८३ ॥

गलग्रन्थिं समाश्रित्य कक्षग्रन्थिं समाश्रिता ।
दक्षिणे तु करे सन्धिकूर्परग्रन्थिसंगताः ॥ ८४ ॥

मणिग्रन्थिं पुनश्श्लिष्य पञ्चाङ्गुलिषु निर्गताः ।
धरणी रसभोजी च संक्रियाशीतवीर्यका ॥ ८५ ॥

उष्णवीर्या तु पञ्चैते कन्दाच्चैव विनिर्गताः ।
नाभिग्रन्थिं समाश्रित्य हृदयग्रन्थिमाश्रिता ॥ ८६ ॥

गलग्रन्थिं समाश्रित्य वामबाहुर्विनिर्गता ।
बाहुकूर्परग्रन्थिं तु मणिग्रन्थिं समाश्रिता ॥ ८७ ॥

p. 101)

पञ्चाङ्गुलीषु वै वत्स निर्गताः पञ्चनाडिकाः ।
स्पर्शावकाशिका चैव वामदक्षिण पार्श्वगाः ॥ ८८ ॥

द्वात्रिंशन्नाडिका वत्स प्राणाद्या वायुवारकाः ।
महानाडी महाबद्धा द्वात्रिंशन्नाडिकाः पराः ॥ ८९ ॥

द्विसप्तति सहस्राणां मध्यमानाडिका शुभाः ।
अष्टाविंशतिकोटिस्तु प्रधानास्ते प्रकीर्तिताः ॥ ९० ॥

जीर्णे पिप्पलपत्रे वा तिर्यगूर्ध्वमधः स्थिताः ।
रोमकूपेषु सर्वेषु नाड्यस्तेषु प्रकीर्तिताः ॥ ९१ ॥

सर्वं सञ्चरते जीवः प्राणैस्तु सहिताश्च तु ।
क्षेत्रज्ञः पुरुषः स्वस्थः अज्ञो भोगसमन्वितः ॥ ९२ ॥

सुखप्रियो दुःखद्वेषी हृत्सरोरुहकोटरे ।
क्षेत्रज्ञो जीवप्राणैश्च सर्वप्राणिषु सर्वदा ॥ ९३ ॥

ब्रह्मादिस्तम्भपर्यन्तं क्रीडते भगवान् शिवः ।
शुष्क पत्रमिवाकाशे नीयते वायुना यथा ॥ ९४ ॥

तथा भ्राम्यति जीवोऽसौ प्राणाद्यु(द्धृ)त्पङ्कजे शिवगुह ।
पतन्त्युत्पतते शान्तो विग्रहे च पुनः पुनः ॥ ९५ ॥

साक्षाद्वै मध्यदेहस्तु सर्वकार्यविवर्जितः ।
शाश्वतः पुरुषः सूक्ष्मो निरालम्बः परः शिवः ॥ ९६ ॥

हृत्पङ्कजे स्थितपुरुषो जीवप्राणः सुसङ्गतः ।

* * * * चन्द्रदले आग्नेये तु तथैव च ॥ ९७ ॥

चतुष्करो याम्यदले नैर्-ऋते तु तथैव च ।

वरुणे दिग्दले चैव वायव्ये तु तथैव च ॥ ९८ ॥

p. 102)

सौम्ये चतुर्घटिका ऐशान्ये तु तथैव च ।

एवं द्वात्रिंशद्घटिका संचरेत्पुरुषो महान् ॥ ९९ ॥

करणत्रयेण वै वत्स नवद्वारेषु संचरेत् ।

अष्टभागैकभागं तु द्वात्रिंशच्चरतोः सदा ॥ १०० ॥

शतभागैकभागं तु द्विसप्तति सहस्रकाः ।

परते तव महासेन सेन्द्राश्चैव? पलभ्यते ॥ १०१ ॥

अष्टाविंशतिकोटिस्तु नाभिषु संचरेद्गुह ।

नवनाड्यः सहस्रांशं चरते तेषु नाडिषु ॥ १०२ ॥

मध्यदेहे स्थितो देवो निर्विकारो निरञ्जनः ।

सर्वज्ञः सर्वगः शान्तः सर्वदा सर्वतोमुखः ॥ १०३ ॥

परं ब्रह्म स विज्ञेयो व्योमव्यापी सदाशिवः ।

परमात्मा महाहेतु क्षेत्रज्ञो हृदि संस्थितः ॥ १०४ ॥

अन्तरात्मा द्वादशान्तः सर्वभूते व्यवस्थितः ।

मरणकाले तु वै वत्स नाडीमध्ये तु संस्थितः ॥ १०५ ॥

पुनर्हृदयमात्मेषु संविदा सर्वमेव हि ।

इत्येतद्वायवं बृन्दं हितचक्रे प्रतिष्ठितम् ॥ १०६ ॥

निश्वासोश्वासकाशैश्च * * * * * * सनमुरमथः कम्पते वायुतश्च ।

नित्यानित्यानि जन्म व्यसनयति तरमथोवने बाल्याभावादा * * * न्तेव * * * *

जननमरणजैः* * * * * क्रीडते सर्वतत्त्वैः ॥ १०७ ॥

नीडीचक्रं यथावस्थं कथयामि तवाखिलम् ।

ऊर्ध्वः प्राणोऽप्यधः प्रोक्त अपानो रात्रिरेव च ॥ १०८ ॥

p. 103)

ऐन्द्राद्वारुणसंगे तु दक्षिणायनमुच्यते ।

दक्षिणे चाश्वयुग्मेषु उत्तरे चैत्रके विषु ॥ १०९ ॥

त्रिंशद्दिवसं महासेन सूर्यश्चान्ये तु मासके ।

सम्यक्संक्रमते देव संक्रान्तिस्तेन मु(उ)च्यते ॥ ११० ॥

चन्द्रक्षयममावास्थां वृद्धिस्तु पूर्णमासिकः।
अमावास्यादितो दोमावासी तेन उच्यते ॥ १११ ॥

चन्द्रस्य षोडशकलो देवैरापीयते गुह।
पञ्चदश * सौ नित्यं कलापूर्णस्तु चन्द्रमाः ॥ ११२ ॥

पञ्चदशपूर्वपक्षैककला एकैका वर्धते।
कलापूर्णे पौर्णमासी तत्र विद्भिरुदाहृता ॥ ११३ ॥

अमावास्यासिनी वाली ऊर्ध्वे वै पौर्णमासिके।
चन्द्रादित्यौ पौर्णसेवी व * * * * * स्यं तु ॥ ११४ ॥

चन्द्रादित्य समायोगममावास्यां विदुर्बुधाः।
सर्वं संहृत्य मतिमान् प्राणानां हृदये गुह ॥ ११५ ॥

प्रासादे नैव बीजेन कण्ठतालुश्च रन्ध्रकः।
भ्रुवोर्मध्ये तु मूर्धौ तु नयेत्प्राणं तु बुद्धिमान् ॥ ११६ ॥

हित्वार्गलकपालं तु जीव ऊर्ध्वं तु गच्छति।
सदाशिवपदं गत्वा न भूयो जन्मचाप्नुयात् ॥ ११७ ॥

इति कालोत्तरे नाडिचक्रपटलः विंशतिः ॥ २० ॥

॥ श्रीः ॥

ईश्वर उवाच-

p. 104)

कलाचक्रं प्रवक्ष्यामि कालज्ञानं परं शुभम् ।
स्वस्थानराक्षनीमेषश्चतुर्भागोपलक्षितः ॥ १ ॥

कालस्त्रुटिरिति वदन्ति तज्ज्ञानात् निष्क्रमस्थितः ।
त्रिटिद्वयं क्षणं प्रोक्तं तृतीयं क्षणिकं भवेत् ॥ २ ॥

त्रुटिचतुष्कं निमेषं तु निमेषार्धं च तच्छृणु ।
त्रुटिर्द्वात्रिंशत्कला ज्ञेया कलाष्टं करणं भवेत् ॥ ३ ॥

करणाष्टकृतं वासि विधिरेषा प्रचोदिता ।
अतीतानागतं चैव वर्तमानं तथैव च ॥ ४ ॥

लाभालाभं सुखं दुःखं * * * * * * * * ।
* * मस्ति ज्ञानविज्ञानं मृत्युपञ्चकं तथा ॥ ५ ॥

दशारं चक्रमाख्यातं सर्वप्राणिषु वर्तते ।

ऐन्द्रमाग्नेययाम्यं च नैर्-ऋतं वारुणं तथा ॥ ६ ॥

वायव्यस्याथ सौम्यं च ऐशान्यमष्टकं भवेत् ।
ऊर्ध्वं च नवमं प्रोक्तं अधाश्च दशमं भवेत् ॥ ७ ॥

पुष्यमासे तु संप्राप्ते मार्गशीर्षक उच्यते ।
तत्संक्रान्तौ परिक्षेतश्वासं चैव षडानन ॥ ८ ॥

सामं तु पञ्चघटिका दक्षिणं पञ्च एव हि ।
षष्ट्युच्छ्वासो भवेत्प्राणः षट्प्राणो घटिका भवेत् ॥ ९ ॥

षष्टिघटिकाहोरात्रं जपसंख्यां करोति सः ।
पञ्चघटिका भवेद्वामे सर्वारिष्टविवर्जितम् ॥ १० ॥

सप्तघटिका चरेद्वामे किञ्चिदुष्ण समन्वितः ।
अशीत्यायुर्हवत्येव सम्यक् ज्ञानेन वै बुधः ॥ ११ ॥

p. 105)

अष्टघटिका भवेद्वामे परुषयुक्तं सुखोष्णतः ।
सप्तति चैव आयुष्यं शिवेन परिभाषितम् ॥ १२ ॥

नवघटिका वामे तु उष्णमीषत्समन्वितः ।

चरते मुहुर्मुहुर्वत्स समाः षष्टिं स जीवति ॥ १३ ॥

दशघटिका इडायां तु चरते च मुहुर्मुहुः ।
पञ्चत्रिंशत्स जीवेत्तु इति शास्त्रस्य निश्चयः ॥ १४ ॥

चतुर्दशघटिकायामेव देहं स एव हि ।
त्रिंशत्संवत्सरं जीवेत् हृन्नाभिजठराश्रितः ॥ १५ ॥

चतुर्दशार्धघटिका वहते वाममेव हि ।
सप्तविंशत्संवत्सरं जीवतीति षडानन ॥ १६ ॥

पादहीनं चतुर्दशघटिका वहते इडाम् ।
षड्विंशत्संवत्सरं तस्य जीवितं वै नरस्य तु ॥ १७ ॥

दिनार्धं दिवसं चैव अहोरात्रं तथैव च ।
सार्धयुग्मगुणां वतानादित्यवसुषोडशान् ॥ १८ ॥

पञ्चम्यः पञ्चविंशद्दिवसगति रूपारोहते पञ्चवृद्धः
तस्यादेकोत्तरेण त्रिगुणितदशकं त्र्यक्षरं यावदेव ।
काले पौषे समाप्ते त्रिनयनशशिना षट्त्रियुग्मे कलेशा-
स्तास्ते हानिशेषास्तिशिदिगुषु गुणर्धेन्दवो जीवितस्या ॥ १९ ॥

पुनरन्यत्प्रवक्ष्यामि कालचक्रं समासतः ।
उत्तरायणवामे तु तस्य ज्योतिर्न दृश्यते ॥ २० ॥

संवत्सरत्रयं कृत्वा जीवत्येव षडानन ।
दक्षिणायनवामे च ऊर्ध्वज्योतिस्तु दृश्यते ॥ २१ ॥

p. 106)

संवत्सद्वयामृत्युः प्राप्यते नात्र संशयः ।
वामे चैव अधोज्योतिर्न दृश्यते चार्ध * * के ॥ २२ ॥

वत्सरैकं स जीवेत कालविद्भिरुदाहृतः ।
वामदक्षिणतज्ज्योतिर्दृश्यते ब्राह्मिके यदा ॥ २३ ॥

षण्मासं तस्य वै जीव ईश्वरेण प्रभाषितम् ।
दक्षिणे दक्षिणे ज्योतिर्दृश्यते नार्धरात्रके ॥ २४ ॥

त्रिमासा मृत्युमाप्नोति वायुना नात्र संशयः ।
दक्षिणे चोत्तरे ज्योतिर्बाह्ये चैव न दृश्यते ॥ २५ ॥

मासान्मरणमाप्नोति सर्वे न तु षडानन ।
गुल्फाज्जीवो न दृश्येत पादयोस्तु यदा नरः ॥ २६ ॥

घर्घरावयुतं तस्य नात्र कार्या विचारणा ।
कूर्परस्य अधोभागे जपं यस्य न विद्यते ॥ २७ ॥

दशाहान्मरणं तस्य कालविद्भिरुदाहृतः ।
समुद्रघोणोन श्राव्यो यत्र बिन्दुं न पश्यति ॥ २८ ॥

पञ्च * * * * * * * * * * * * * * ।
वायसो लीयते मूर्ध्नि श्वानो वा यदि लीयते ॥ २९ ॥

त्रयस्त्रिंशत्सजीवोऽसौ चरते च इला मुहुः ।
पञ्चत्रिंशच्च घटिका स जीवति न संशयः ॥ ३० ॥

करीषगलेरन्त्री रक्तवस्त्रयुतेन * * च ।
दण्डेन प्रहरेत्पुरुषः सप्ताहान्मरणं भवेत् ॥ ३१ ॥

रक्ताम्बरधरा नारी रक्तमाल्यानुलेपना ।
आलिङ्गनं भवेत्स्वप्ने जाग्रे वा यदि पश्यति ॥ ३२ ॥

p. 107)

दशाहान्मरणं तस्य नात्र कार्या विचारणा ।
रजस्वला चोष्ट्ररूढा विधवामुण्डितश्शिरः ॥ ३३ ॥

आश्लिष्यते वै स्वप्ने च जाग्रे वा यदि पश्यति ।
अष्टहानि स जीवेत इति शास्त्रस्य निश्चयः ॥ ३४ ॥

शाक्यं शपणकं वापि स्वप्ने वा जापातेऽपि वा ।
आलिङ्गनं भवेद्यस्य तस्य मृत्युर्न संशयः ॥ ३५ ॥

खरूरूढस्तु वै स्वप्ने मार्गं वा दक्षिणं नयेत् ।
रक्ताम्बरधर भूत्वा रक्तमाल्यानुलेपनः ॥ ३६ ॥

ज्वरेण मृत्युमाप्नोति नात्र कार्या विचारणा ।
ऊर्ध्वदीपं च पश्येत चञ्चलं वापि शाम्यति ॥ ३७ ॥

मासान्मरणमाप्नोति इति सत्यं षडानन ।
अधोज्योतिर्न पश्येत मध्यदेहे तु वै बुधः ॥ ३८ ॥

सप्तविंशद्दिनान्मृत्युरिति सद्भिरुदाहृतम् ।
याम्यादिदिग्दले ज्योतिरतसीकुसुमप्रभम् ॥ ३९ ॥

त्रयस्त्रिंशद्दिनान्मृत्युवतिरोगेण नित्यशः ।
नैर्-ऋत्यां दिग्दले ज्योतिः राजावर्तमणिप्रभम् ॥ ४० ॥

दृश्यते चार्धरात्रे च मृत्युर्मासं न संशयः ।

वारुणे दिग्दले ज्योतिर्दृश्यते स्फटिकप्रभम् ॥ ४१ ॥

चत्वारिंशद्दिनान्मृत्युः शास्त्रज्ञैः समुदाहृतः ।
वायव्यां दिग्दले ज्योतिः हरिद्रारससन्निभम् ॥ ४२ ॥

न दृश्यते यदा रात्रौ पञ्चाहान्मरणं भवेत् ।
मध्याह्ने तु अमावास्यां महद्भाण्डे जले गुह ॥ ४३ ॥

p. 108)

सुषिरा सूर्यबिम्बे तु दृश्यते घटिकैकतः ।
तस्य मृत्युर्ध्रुवं नित्यं त्रिपक्षान्निश्चयं भवेत् ॥ ४४ ॥

अमावास्यां घृते मायां चक्षुरूपं न पश्यति ।
तस्य मृत्युर्न संदेहो नात्र कार्या विचारणा ॥ ४५ ॥

गङ्गायमुनाभ्यां च घटिकात् घटिकां वहेत् ।
अष्टादशदिनान्मृत्युरिति शास्त्रस्य नित्यशः ॥ ४६ ॥

महत्सु तापे मध्याह्ने गगने दशपादतः ।
ध्वयापुरुषमापश्येत् त्रिमासान्मरणं भवेत् ॥ ४७ ॥

पुरुषः पाण्डराकारो दृश्यते गगने महत् ।

षण्मासान्मृत्युमाप्नोति सशिवस्तं न पश्यति ॥ ४८ ॥

पूर्वाह्ने चाष्टमपदे पुरुषं वै न पश्यति ।
कबन्धं दृश्यते तस्य त्रिमासान्मरणं भवेत् ॥ ४९ ॥

वामहस्ता कृष्णवर्णा गगने दृश्यते महत् ।
जाग्रे वा यदि वा स्वप्न त्रिमासं तस्य जीवितम् ॥ ५० ॥

खड्गहस्ता कृष्णवर्णा पाशहस्ता सुदारुणा ।
शिरस्युपरि गगने दृश्यते नररूपका ॥ ५१ ॥

द्विप * * * * प्नोति इति प्राहुर्मनीषिणः ।
छिन्ननासा कृष्णवर्णा पाशखड्गधरा महत् ॥ ५२ ॥

रक्ताम्बरधरा नारी रक्तमाल्यानुलेपना ।
गगने दृश्यते वत्स पाशेनैव तु बध्यते ॥ ५३ ॥

खड्गेन प्रहरेच्छासौ पञ्चाहान्मरणं भवेत् ।
कृष्णश्वा तु सुषुम्नाग्रे प्रविशेद्गृहमेव वा ॥ ५४ ॥

p. 109)

त्र्यहान्मरणमाप्नोति इति सत्यं षडानन ।

* * * * वालिपानं भवेच्चैव मुहुर्मुहुः ॥ ५५ ॥

पक्षान्मरणमाप्नोति इति शास्त्रस्य निश्चयः ।
रथेन करयुक्तेन रक्तवस्त्रवृतेन च ॥ ५६ ॥

रक्तमाल्याम्बरधरो दक्षिणायनमाश्रितः ।
यदि वा यदि वा स्वप्ने स पक्षान्मरणं भवेत् ॥ ५७ ॥

महोल्कापतितं मध्याह्ने चन्द्रादित्यमथापि वा ।
अकामो भूमिकम्पं वा दशाहान्मरणं भवेत् ॥ ५८ ॥

झनझन घनघनस्तनवाथ अशनिर्वा तटिध्वनिः ।
यदि पश्येन्मध्यदेहे द्विदिनेन स जीवति ॥ ५९ ॥

कौशिकं पिङ्गलं वापि बिलाव(डाल)ध्वनिमेव वा ।
मध्यदेहे यदा पश्येत् विशे * * * * * * ॥ ६० ॥

दशाहामध्यमाप्नोति मधुमेहेन वै ध्रुवम् ।
शास्ता स्वरं वा शास्तारं हृदये मध्यदेहके ॥ ६१ ॥

मुहुर्मुहुर्विरोत्तत्र भूलोकान्मरणं दश ।
कृष्णां गवां शृङ्गयोर्द्वे गृहीत्वा धावते यदि ॥ ६२ ॥

जठरेशूलं मुहुस्तत्र आक्षेपान्मरणं भवेत्।
कोदण्डे शाश्वतस्थाने मूर्धान्ते द्वादशाङ्गुले ॥ ६३ ॥

बिन्दुदेशेन दृश्येत दिनानि त्रीणि जीवति।
मृत्युनाश्रितं ध्यानं च सांप्रतं शृणु षण्मुख ॥ ६४ ॥

मध्यदेहे सपत्नी तु कर्णिकायां * * * *।
प्रासादं चन्द्रबिम्बेन संपुटीकृत्य बुद्धिमान्॥ ६५ ॥

p. 110)

आत्मप्रासादकबलं सदा ध्यायेत्समाहित।
विवत्सरेण वै वत्स मृत्युनाशनमुत्तमम्॥ ६६ ॥

ध्यायेद्वै द्वादशाब्दं तु सहस्राब्दं सजीवति।
इन्द्रकोपनिभं ध्यायेत् प्रासादं शशिबिम्बकम्॥ ६७ ॥

आत्मानं संपुटीकृत्य चतुर्थेन तु पण्डितः।
बिन्दुनादशिखाक्रान्तं घटिका सप्तमा भवेत्॥ ६८ ॥

वत्सरानेकविंशं तु पञ्चसहस्त्रं स जीवति।
शङ्खकुन्देन्दुधवलं प्रासादं मध्यदेहके ॥ ६९ ॥

इन्दुना संपुटीकृत्य घटिका दश प्रत्यहम् ।
द्वात्रिंशद्वत्सरं ध्यायेत् षट्सहस्रं स जीवति ॥ ७० ॥

गोक्षीरधवलप्रख्यं प्रासादं मध्यदेहके ।
तस्य मध्ये तु चात्मानं चन्द्रबिम्बेन संपुटेत् ॥ ७१ ॥

द्वादशं घटिका वत्स त्रयोविंशत्तु वत्सरान् ।
स जीवेत्सप्तसाहस्रं वत्सरं तु षडानन ॥ ७२ ॥

द्रुतचामीकरप्रख्यं प्रासादान्मध्यदेहके ।
अधोर्ध्वं चन्द्रबिम्बेन सम्पुटीकृत्य बुद्धिमान् ॥ ७३ ॥

हृत्पिण्डं शातकुम्भेन घटिका पञ्चदशो भवेत् ।
चतुर्विंशद्वत्सरं तु सहस्राष्टौ स जीवति ॥ ७४ ॥

हृत्पद्मकोटरे धीमान् प्रासादं शङ्खसन्निभम् ।
तस्य मध्ये तु चात्मानं चतुर्थेन तु संपुटेत् ॥ ७५ ॥

पञ्चविंशद्वत्सरांस्तु घटिका षोडशो भवेत् ।
नव सहस्रं स जीवेत इति सत्यं षडानन ॥ ७६ ॥

p. 111)

प्रासादं चिन्तयेन्नित्यं हिमकुन्देन्दुसन्निभम् ।
स चतुर्थेन वै हन्त बिन्दुनादसमन्वितम् ॥ ७७ ॥

अमृतेन प्लावयेत्तत्र प्रासादं शशिना युतम् ।
सप्तदश घटिका ध्यायेत् षड्विंशति तु वत्सरान् ॥ ७८ ॥

अयुतं जीवति वै तत्र मन्त्रवीर्यप्रभावतः ।
हृत्पद्मे मण्डले तत्र क्षेत्रज्ञं संपुटेन्नरः ॥ ७९ ॥

प्रासादं मध्ये भावयेत् चतुर्थेन तु धीमता ।
बिन्दुयुक्तो तु मेधावी सप्तविंशतिवत्सरान् ॥ ८० ॥

अष्टादश घटिकासु एकचित्तेन भावयेत् ।
अयुतं द्विसहस्रं तु स जीवेन्नात्र संशयः ॥ ८१ ॥

कोदण्डद्वयमध्ये तु चन्द्राग्निरविमध्यगम् ।
प्रासादं चिन्तयेद्वत्स हृदये सव्यमध्यगम् ॥ ८२ ॥

प्रजापतेर्द्वादशेनैव बिन्दुयुक्तेन संपुटेत् ।
जपासुमसमप्रख्यं नित्यमेव विचिन्तयेत् ॥ ८३ ॥

प्रासादमुच्चरेद्धीमान् मात्राषोडशमेव च ।
* * * * * * * * एकचित्तेन बुद्धिमान् ॥ ८४ ॥

एकोनविंशद्घटिकामात्रे चैव सदा न्यसेत् ।
पञ्चदश सहस्रं तु स जीवति षडानन ॥ ८५ ॥

सुषुम्नाग्रे चिन्तयेत्पद्मं अष्टपत्रं सकर्णिकम् ।
प्रासादं चिन्तयेत्तत्र षोडशस्वरभूषितम् ॥ ८६ ॥

ध्यायेद्भृङ्गनिभं वत्स शशिना संपुटेत्सदा ।
बिन्दुयुक्तेन वै वत्स चतुर्थेन समन्वितम् ॥ ८७ ॥

p. 112)

प्लावयेदमृतेनैव आपूर्य तु समाहितः ।
होमकूपेषु सर्वेषु कृष्णरूपं विचिन्तयेत् ॥ ८८ ॥

मूर्धादितलपर्यन्तमिति कृष्णममृतं स्मरेत् ।
पलितस्तम्भनं ह्येतत् वत्सरैकोनविंशति ॥ ८९ ॥

विंशद्घटिका नित्यं तु अभ्यसेत्प्रयतो नरः ।
अयुतद्वयं स जीवेत ब्रह्मचर्यव्राते स्थितम् ॥ ९० ॥

सुषुम्नान्ते चतुरङ्गुल्ये श्वेतपद्मं सुशोभनम् ।

शतदलं चन्द्रबिम्बेन संपुटीकृत्य बुद्धिमान् ॥ ९१ ॥

प्रासादं चिन्तयेन्मध्ये अमृतेनैव प्लावयेत् ।

कालाग्निशिवपर्यन्तमिति श्वेतं विचिन्तयेत् ॥ ९२ ॥

मृत्युञ्जयमिदं योगं त्रिंशद्वत्सरमभ्यसेत् ।

जरामरण निमुक्तमयुतत्रयं स जीवति ॥ ९३ ॥

शङ्खगोक्षीरधवलं सहस्रदलपद्मकम् ।

आत्मानं तत्र मध्ये तु प्रासादाग्रे विचिन्तयेत् ॥ ९४ ॥

सप्तवर्गचतुर्थेन बिन्दुनाद समन्वितम् ।

चन्द्रबिम्बामृतेनैव विग्रहं प्लावयेत्ततः ॥ ९५ ॥

पञ्चत्रिंशत्समा वत्स द्वात्रिंशद्धटिका स्मरेत् ।

अयुतं चतुर्थकं जीवेत् द्विरष्टवर्णकृतिः ॥ ९६ ॥

तस्योर्ध्वं चतुरङ्गुल्यं अयुतं दलशोभितम् ।

तस्य मध्ये तु प्रासादं शशिना संपुटीकृतम् ॥ ९७ ॥

स्रवन्तममृतं ध्यायेत् सुषुम्ना भिन्नमस्तकम् ।

तेन प्लावितमात्मानं आपूर्यन्तं विचिन्तयेत् ॥ ९८ ॥

p. 113)

द्वात्रिंशद्वत्सरं ध्यायेत् द्वात्रिंशद्धटिका (भवेत्त्) भवेत् ।
अयुतं पञ्चकं जीवेन्नात्र कार्यं विचारणा ॥ ९९ ॥

शतस्सहस्रदलं पद्ममतिश्वेतं तु निर्मलम् ।
प्रासादं चिन्तयेद्विद्वान् आत्मानं तस्य मध्यगम् ॥ १०० ॥

शशिना संपुटीकृत्य योगपीठमधोमुखम् ।
स्रवन्तममृतं ध्यायेत् आपूर्य प्लावयेद्बुधः ॥ १०१ ॥

पञ्चत्रिंशद्वत्सरं ध्यायेत् घटिका तावदेव तु ।
गोक्षीरधवलं सौम्यमापादतलमध्यगम् ॥ १०२ ॥

आपूर्यं चिन्तयेद्योगी लक्षमेकं स जीवति ।
रेचकं तु परित्यज्य पूरकं तु सदाभ्यसेत् ॥ १०३ ॥

किञ्चिन्निर्व्याण मायान्तमथ सा मृत्युनाशनम् ।
आत्मनासिकयाभ्यन्तं जठराभ्यन्तरान्तकम् ॥ १०४ ॥

स्फटिक प्रथमं सूक्ष्ममाधारं चिन्तयेद्बुधः ।

तस्य मध्ये तु चात्मानं शशिना संपुटीकृतम् ॥ १०५ ॥

समरसं भावयेत्तत्र मृत्युनाशनमुत्तमम् ।
खमध्ये कुरुचात्मानं आत्ममध्ये तु खं कुरु ॥ १०६ ॥

अशरीरात्मकः कृत्वा न किञ्चित् विचिन्तयेत् ।
साक्षान्मृत्युञ्जयो योगो महाप्रलयं स जीवति ॥ १०७ ॥

रक्तबुद्बुदसंकाशमाकाशं बिन्दुदैवकम् ।
समरसी भावयेद्योगी तेन मृत्युविनाशनम् ॥ १०८ ॥

* * * * * * * * उत्तरे नर?सन्निभम् ।
समरसं भावयोगी मृत्युनाशनम् ॥ १०९ ॥

p. 114)

कदम्बगोलकाकारं रक्तबुद्बुदसन्निभम् ।
तस्य मध्ये तु चात्मानं सततं भावयेद्बुधः ॥ ११० ॥

* * * * * * * * * * न किञ्चिदपि चिन्तयेत् ।
मृत्युञ्जयं परं ह्येतत् अम्बरत्वमवाप्नुयात् ॥ १११ ॥

अच्छस्फटिक संकाशं बिन्दुरी(रु)पमनौपमम् ।

समरसीभावयोगेन मृत्युनाशनमुत्तमम् ॥ ११२ ॥

गोक्षीर धवल प्रख्यं बिन्दुरूपं सुनिर्मलम् ।
मध्यदेहे तु सततं समरसं भावयेद्बुधः ॥ ११३ ॥

एषमृत्युञ्जयो योगमजराजरमाप्नुयात् ।
चुलुकां वा पिबेत्प्रातः सोमामृतजलोषितम् ॥ ११४ ॥

ध्यात्वा प्रासादममृतं मृत्युं जित्वा न संशयः ।
स्वरेण पेषयेच्चन्द्रः चन्द्रमध्ये शिवं भवेत् ॥ ११५ ॥

शिवमध्येन? चात्मानमभ्यसेन्मध्य शुके? ।
रेचकं पूरकं त्यज्य कुम्भकं तु समभ्यसेत्? ॥ ११६ ॥

स्मरसीन्द्रमवस्थाय मृत्युनाशनमुत्तमम् ।
अकारं मूर्ध्नि विन्यस्य आकारं तु ललाटको ॥ ११७ ॥

इ ई च क्षुद्वये न्यस्य उ ऊ श्र * *? योन्र्यसेत् ।
ऋ ॠ सा?माद्वये न्यस्य ऌ ॡ गण्डंद्वये न्यसेत् ॥ ११८ ॥

ए ऐ  लोलुद्वये न्यस्य ओ औ ओष्ठद्वये न्यसेत् ।
अं अः दन्तद्वये न्यस्य * *? तं विन्यसेद्बुधः ॥ ११९ ॥

कवर्गं दक्षिणहस्ते चवर्गं वामके न्यसेत् ।
टवर्गं दक्षिणे पार्श्वे?मवर्गं वामपादके ॥ १२० ॥

p. 115)

पपौ दक्षिणपार्श्वे तु बभौ वै वामपार्श्वके ।
हकारं हृदये न्यस्य मकारं नाभिदेशतः ॥ १२१ ॥

यकारं त्वक्प्रदेशेषु रेफं रुधिरदेशतः ।
लकारं मांसदेशे तु वकारं मेददेशके ॥ १२२ ॥

शकारमस्थिदेशे तु षकारं मज्जदेशतः ।
सकारं शुक्लमित्युक्तं हकारं मेढ्रदेशतः ॥ १२३ ॥

लकारं वृषणयोर्न्यस्य वकारं पादमध्यगे ।
बिन्दुयुक्तेन सर्वं तु न्यसेदेता ननुक्रमात् ॥ १२४ ॥

एवं त्यक्त्वा विधानेन पश्चाद्ध्यानं समारभेत् ।
सर्वकर्मसु मेधावी मातृकां न्यस्य तत्त्वतः ॥ १२५ ॥

अर्चनं जपनं ध्यानसमाधिं हुतमेव च ।

इति कालोत्तरे अयुतक्षयसंहितायां कालचक्रपटलः एकविंशतिः ॥ २१ ॥

॥ श्रीः ॥

ईश्वर उवाच-

स्पर्शयोगं प्रवक्ष्यामि भावयोग समाधनम्? ।

सर्वव्यापिवरं? शुभ्रं वयसः स्थापनं परम् ॥ १ ॥

वलीपलीमलाशं च सदा सौम्यायवर्धनम् ।

यद्वयसि स्पर्शाभ्य? वपनबीजः? पद्यनन ॥ २ ॥?

तद्वयसि मेधावि? नात्र कार्या विचारणा ।?

कलियुगे * * *? तु शास्त्रोक्त तु समारभेत् ॥ ३ ॥

p. 116)

षडंशे द्वापरे प्रोक्तं त्रेतायां तु त्रिंशकम् ।

कृतयुगे सिद्धिमाप्नोति शास्त्रोक्तं च न संशयः ॥ ४ ॥

शुभदेशे तु वै वत्स समं कृत्वा प्रयत्नतः ।

नैमिशे पुष्करे वापि कुरुक्षेत्रे सुखप्रदे ॥ ५ ॥

गङ्गाद्वारे प्रयागे वा गङ्गासागरसंगमे ।

अष्टभासे प्रभासे वा देवदारुवनेऽपि वा ॥ ६ ॥

कैलासमन्दरे वापि मेरुपर्वतमस्तके ।
हिमवद्धेमकूटे च निषेधे नीलपर्वते ॥ ७ ॥

महेन्द्रमलये सह्ये विन्ध्यपर्वतमस्तके ।
श्रीशैलेस्वामिशैले वा गोदावर्यां सरस्वतौ ॥ ८ ॥

गोकर्णे शङ्कुकर्णे वा कन्यातीर्थे तु कारयेत् ।
सिन्धुसरस्तीरे वा सरस्वत्यास्तटेपि वा ॥ ९ ॥

* * * * * * * * समाधिस्थानमारभेत् ।
ब्राह्मणस्य महीश्वेता रक्तभूमिस्तु भूपतेः ॥ १० ॥

वैश्यस्य वसुधा पीतां कृष्णभूमिश्चतुर्थके ।
विप्रस्य घृतगन्धातु रक्तगन्धा नृपस्य तु ॥ ११ ॥

वैश्यस्य मूत्रगन्धा तु शूद्रं विष्टेनुगन्धिनी ।
वर्णं गन्धं रसं ज्ञात्वा योगवेश्म समारभेत् ॥ १२ ॥

दीक्षास्थानं शिवस्थानं स्नपनस्थानमेव च ।
योगस्थानानि सर्वाणि विधिरेष प्रकीर्तितः ॥ १३ ॥

प्रासाद् मण्डपं वापि कूटं वा गृहमेव वा ।
त्रिभूमिं वा द्विभूमिं वा एकभूमिमथापि वा ॥ १४ ॥

p. 17)

मृददादृष्टया केशैर्वा कारयेद्भवनं शुभम् ।
कवाटार्गलसंयुक्तं प्राकारैर्दीर्घकैर्युतम् ॥ १५ ॥

कुसुमद्रुमसंकीर्णं पनसाम्रादिभिर्युतम् ।
नालिकेरैः कमुकैश्च पुंनागवकुलैर्युतम् ॥ १६ ॥

शमी बिल्वपलाशाद्यैः कुशाकाशादिभिर्युतम् ।
गावो वसेयुः सप्ताहं मपतिर्दशभिर्नव ॥ १७ ॥

लक्ष्मीखचितचैत्यादि अग्रे चोरादिवर्जितम् ।
उत्तरे तु जलग्रामं पश्चिमे पद्ममण्डपम् ॥ १८ ॥

दक्षिणे तु बहिस्थानं सत्यस्थानं तु पूर्वके ।
बर्बरैश्च पुलिन्दैश्च किरातैश्च विवर्जितम् ॥ १९ ॥

कुथचेलाजिनास्तीर्णं प्राङ्मुखो वाप्युदङ्मुखः ।
* स्ति? त्वासनं बद्धा नाडीशोधनमारभेत् ॥ २० ॥

उरुस्थोत्तानचरणः सव्ये न्यस्येतरं करः ।
तालुस्था चलजिह्वा च संवृतास्यः सुनिश्चयः ॥ २१ ॥

नासाग्रदिक्समासीनो दन्तैर्दन्तेन संस्पृशन् ।
प्रणिपत्य शिवं शान्तं योगीन्द्रः शशिशेखरम् ॥ २२ ॥

भवं भवकरं योगमारभेदनुपूर्वशः ।
नासाग्रे शशभृद्बिम्बंवत् ज्योत्स्नाजालवितानितम् ॥ २३ ॥

नीय तुरीयसंयुक्तं चन्द्रमध्ये तु संस्थितम् ।
पञ्चाकृत्याथ निष्क्रम्य इडया वर्मणा सह ॥ २४ ॥

आपूर्य रेचयेत्पश्चात् पिङ्गाया चाग्निवर्मणा ।
यद्द्वितीयं बिन्दुयुक्तं त्रिकोणे अनलायुते ॥ २५ ॥

p. 18)

पूर्ववत्पुरतो ध्यात्वा ज्वरज्वालावलीयुतम् ।
पूर्ववत्पूरयेन्नाड्या प्राणं दक्षिणया गुह ॥ २६ ॥

तद्वद्विरेचयेत्पश्चात् इडायां शनकैः क्रमात् ।
त्रिचतुः सवनं मासं पक्षं वै मासमभ्यसेत् ॥ २७ ॥

नाडीविशुद्धिमाप्नोति पृथक् चिह्नोपलक्षितम् ।
ईषद्वैशेषिकोपायं मानसप्रणवेन च ॥ २८ ॥

रेचकाद्यांश्च क्रम? पूर्ववत्सततोऽन्यथा ।
मासत्रिकं त्रिषवणेष्वनया शुद्धिरीरिता ॥ २९ ॥

शरीरलघुतादीप्तिः वह्नौ जठरवर्जितः ।
ज्ञानाभिव्यक्तिरित्येतच्छिन्नं तच्छुद्धिसूचकम् ॥ ३० ॥

इ *? शुद्धा लिखान्तस्था नाडीमार्गौ जितानसः ।
* * * न? समानस्तु व्यानोऽथोदान एव च ॥ ३१ ॥

कला? कर्मश्च कृकरो देवदत्तो धनञ्जयः ।
एतेषां विजयं वत्स * * * * * * र्णकान् ॥ ३२ ॥

प्राणे ** भिनासाभूपादाङ्गुष्ठान्तगोचरा ।
नीलवर्णप्रतीकाशं रेफादि बिन्दुसंयुतम् ॥ ३३ ॥

हृदादिस्थानयोगेन पादाङ्गुष्ठान्तरेचकम् ।
रेचकं पूर्वकं चैव कुम्भकं तु सदाभ्यसेत् ॥ ३४ ॥

प्रथमं द्वात्रिंशमात्रं तु पूरकं चाभ्यसेद्बुधः ।
कुम्भकस्तु चतुष्षष्टिदिवसः शिव संयुतम् ॥ ३५ ॥

कुम्भकाम् द्विगुणं रेचकं शनैरेव विरेचयेत् ।
* * * * समभ्यस्य द्विगुणं पुनराचरेत् ॥ ३६ ॥

p. 119)

चतुर्थे वत्सरे वत्स द्वात्रिंशद्गुरुराचरेत् ।
पञ्चमे वत्सरेमन्त्री चतुष्षष्टिगुणं भवेत् ॥ ३७ ॥

सर्वप्राणजयोपायं वर्षितं हि षडानन ।
मरूद्विजयमार्गेण विकल्पं केशवेन च ॥ ३८ ॥

अङ्गुष्ठानाभिनासाग्रं स्थानेष्वेष्वपि धारणम् ।
गत्यागतिप्रयोगोऽयं पूर्ववत्क्रमशोऽपरम् ॥ ३९ ॥

पूरकादिविवृद्ध्या तद्रेचकाग्रास संश्रियान् ।
उक्तः क्रमाद्द्विवर्षोऽयं केशवेनानुवर्णितम् ॥ ४० ॥

कृष्णः कानिष्ठकः पुना?युपार्ष्णिं समाश्रितम् ।
वि * *? जानुगुल्फं च उभौ सन्धिश्च पृष्ठसौ ॥ ४१ ॥

* ? प्रतिलोमस्थः पृष्ठे बिन्दुनियोजितः ।

* *? तु संयुक्तः पूरकादीन् स पूर्ववत् ॥ ४२ ॥

* *? कादिकयाज्ज्ञेयो वालप्रस्थो नियोगतः ।

अ * * कं? शवोऽप्येवमभ्यासः परिगीयते ॥ ४३ ॥

गतात्मनिः? प्रयोगो वा रोगवान् स्थानयोगतः ।

इति रेचकः प्रस्थानः? पूरके हंससंश्रियात् ॥ ४४ ॥

विजयोपाय इत्याहं ईश्वरः शिवसंयुतः ।

हृन्नाभिः सर्वसिद्धिस्थः कटिकूर्परजानुकः ॥ ४५ ॥

द्वात्रिंशत्सन्धिदेशेषु शुक्लवर्णः प्रकीर्तितः ।

सौम्यन्बी?जसमोपेतं प्रासादं बिन्दुसंयुतम् ॥ ४६ ॥

समाधिस्थान संरोधो *? ने विजयवर्णितम् ।

अनारतः क्रियायोगात् रेचकः पूर्वयोः क्रमात् ॥ ४७ ॥

p. 120)

हस्तमात्रद्वयाद्याति विजयं शीघ्रमेव च ।

हृत्कण्ठतालुभ्रूमध्ये कर्णयोरक्षयोरपि ॥ ४८ ॥

मूर्ध्ना तु कार्टिकः पृष्ठः इति संस्थानिलोहितः।
प्रसादेन तु संयुक्तः अनिलात्तु तृतीयकः॥ ४९॥

पार्श्वयोरुभयोर्वत्स हस्तयोरुभयोरपि।
करयोरुभयोश्चैव कक्षयोरुभयोरपि॥ ५०॥

उदानस्थानमेवं तु वर्णरूपमथा शृणु।
भृङ्गवर्णं उदानस्तु यकारस्थोत्तरद्वयम्॥ ५१॥

जङ्घोरु मणिबाहू च कण्ठकूपे हृदि स्थितः।
न? कुक्षिश्च पृष्ठश्च सर्वाङ्गसर्वसन्धिषु॥ ५२॥

इकारं रक्तवर्णं तु शिवेन तु समायुतम्।
पूर्वत्पूरकं चैव रेचकं कुम्भकं तु वा॥ ५३॥

गत्यागतिप्रयोगेण व्यानोदानजयं भवेत्।
यकारादिचतुर्थं तु भान्तमेव तु पञ्चमम्॥ ५४॥

प्राणादिबीजसंयुक्तं प्रासादेन न संशयः।
प्रासादेन तु देवेन नाथादिविजयं कुरु॥ ५५॥

पूरकं कुम्भकं चैव रेचकं च तथा कुरु।

प्रतिलोमक्रमं कुर्यात् केशवस्य तु धीमतः ॥ ५६ ॥

हृत्कण्ठनाभि चक्षूषि सर्वाङ्गं च धनञ्जयः ।
सर्ववायुजयमिच्छेत् विद्याभ्यासप्रयोगतः ॥ ५७ ॥

प्राणावृत्तिमपानेन संयोज्योत्कृष्य संहृदि ।
उदानमानीय तत्रैव व्यानेन तु समन्वितम् ॥ ५८ ॥

p. 121)

समानं तत्र वानीय नागं कूर्मं तथैव च ।
कृकरं देवदत्तं च धनञ्जय कृष्यतत्त्ववित् ॥ ५९ ॥

* * * * * * * * प्रासादेन समन्वितम् ।
कर्णतालुमुखं * * * * * * * * * * ॥ ६० ॥

नासाग्रनेत्रं भ्रूमध्ये ललाटतटमूर्धनि ।
कृत्वा कुर्यात्तदूर्ध्वं वै सर्वशक्तिं नयेत्पुनः ॥ ६१ ॥

बिन्दुनादं न * * * * * * * * * ।
ततो नयेच्छिवपदं शाश्वतं मोक्षमव्ययम् ॥ ६२ ॥

इत्येवं सर्ववायूनां युगपज्जयमार्गतः ।

पवनं जयमार्गोऽयं तन्त्रेऽस्मिन् विजये परे ॥ ६३ ।

सप्तमार्गप्रकारं तु स्पर्शयोगः प्रवक्ष्यते ।
पूरकं रेचकं चैव कुम्भकोऽप्यधरे परः ॥ ६४ ॥

प्रत्याहारो निरोधश्च स्वभेदास्त्वभिसंमताः ।
नासामुखैर्ब्रह्मरन्ध्रैः यद्वायुं पूरयेदिह ॥ ६५ ॥

कोणस्य पूरकं वायुप्रासादेन समाहितः ।
देशकलाद्यवच्छिन्नं कर्तव्यो विजितात्मना ॥ ६६ ॥

संपूर्णकुम्भवद्वायुः अङ्गुष्ठान्मूर्ध्निदेशतः ।
कुम्भकं तु स विज्ञेयः स्पर्शयोगे तु सप्तमम् ॥ ६७ ॥

मूर्ध्नि ललाटभ्रूमध्य * *? तालुरन्ध्रयोः ।
कर्णहृज्जठर नाभिगलेमेढ्रे च मामुनि? ॥ ६८ ॥

जठरे स्फिचो च चरणाषड्गुष्ठौ रेचयेत्क्रमात् ।
कुम्भकात्त्रिगुणः वत्स षड्गुणं नवगुणं तु वा ॥ ६९ ॥

p. 122)

द्वादशं षोडशं वापि वत्सराद्रेचयेत् क्रमात् ।

अपामात्पूरकस्तद्वत् कुम्भकस्थं तिरोधनात्॥ ७० ॥

नाभिहृत्कण्ठदेशेषु कालसंख्या समन्वितः।
वानप्रस्थश्चार्दनोक्त रूपमकुम्भः प्रकीर्तितः॥ ७१ ॥

रेचितस्य बहिः कुम्भो वायुकुम्भो वनोमतः? ।
अपानादूर्ध्वमाकृष्य हृदयादिषु धारणम्॥ ७२ ॥

उत्तरस्तु स विज्ञेयो विपरीतस्ततोऽधरः।
अङ्गुष्ठादि च मूर्धान्तं पूर्वोक्तस्थानमागतः॥ ७३ ॥

* ?नात्स्थानान्तरोत्कर्षः प्रत्याहारो निगद्यते।
देहं वासान्तरं व्याप्तं निर्वाणे तु लयं गतः॥ ७४ ॥

निरोधस्तु स विज्ञेयो मृत्युनाशनमेव हि।
एवं वै सर्ववायूनां विजयोपायसंग्रहः॥ ७५ ॥

अथवा सर्ववायूनां देहमध्ये तु सर्वभेत्।
प्रासादेन तु कूटेन पूरयित्वा तु कुम्भकम्॥ ७६ ॥

निर्गगे? रेचयेद्वत्स लघूयाय विनिर्णयम्।
समा? प्रच्छदनं पूर्वं अं किंचित्स्पर्शं तु कोष्ठके॥ ७७ ॥

पुनर्वै पूरकं कुर्यात् कुम्भकं तदनन्तरम् ।
निर्वाणे जीर्णस्पर्शं तु केशवेन तु वर्णितम् ॥ ७८ ॥

नाभिहृत्कर्णकेशेषु * * * * *? संयुतः ।
वानरच्छ * *?मुक्तं * * * * * * * * * तम्? ॥ ७९ ॥

रेचिकस्य बहिस्तम्भां * * * * * परोमतः ।
अपि वोर्ध्वं समुत्कृष्य नाभिदेशे तु धारणम् ॥ ८० ॥

p. 123)

तवर्गं वरुणाचारे पवर्गं वायुचारके ।
यवर्गमुत्तराचारे रवर्गमीशानचारके ॥ ८१ ॥

प्रासादं नाभिचारे तु षकारं न मिरुच्यते ।
क्रमात्सञ्चिन्त्य वै वत्स आपूर्य कुम्भकेन च ॥ ८२ ॥

नादं बिन्दुं च शक्तिं च महेशं च सदाशिवम् ।
शिवं नयेत्पुनर्वत्स ? निरुपद्रववैभवम् ॥ ८३ ॥

चक्राधारमिदं वत्स स्पर्शनानाजयं परम् ।

इति कालोत्तरे स्पर्शयोगे दशवायुचक्रध्यानपटलो द्वाविंशत्तमः ॥ २२ ॥

॥ श्रीः ॥

ईश्वर उवाच-

मन्सालोच्य सर्वं तु संरोध्य प्रतिशर्वरी ।

मध्यदेहे तु चित्तं तु शिवे परमकारणे ॥ १ ॥

ततस्तन्मयतां याति शिव एव न संशयः ।

कपालरन्ध्रे रेच * * * * * गमेव च ॥ २ ॥

अनुमानं प्रवक्ष्यामि बीजं वर्णं च दैवतम् ।

प्रासादं चिन्तयेन्नाभौ नादबिन्दुसमन्वितम् ॥ ३ ॥

निरुद्धसर्ववायुंश्च नाभिमध्ये तु स्थापयेत् ।

पूरकः तु इडायां वा सुषुम्नायां तु पूरयेत् ॥ ४ ॥

हृत्सरोरुहमध्ये तु राजावर्तमणिप्रभम् ।

संचिन्त्य मनसा युक्तं द्वारोद्घाटनमुत्तमम् ॥ ५ ॥

p. 124)

तालुरन्ध्रेण संयोज्य सुषुम्ना तु नयेच्छनैः ।

हृत्कण्ठतालुभ्रूमध्य सुषुम्नायां नयेच्छिवम् ॥ ६ ॥

मनसस्पर्शयुक्तेन पूरावू(पू)रित वै निलः ।
उद्घाटित शिखद्वारः प्रासादेन तु शक्तिः ॥ ७ ॥

आसने तु विते योगे प्राणायामेवमिर्जितः ।
परकायं प्रवेशायोपायं यत्नेन चाभ्यसेत् ॥ ८ ॥

हृत्सरोरुहसंलीनं मण्डलत्रय मध्यगः ।
गुणत्रयसमोपेतो जीवोऽहं स स्वरूपधृक् ॥ ९ ॥

साष्टपद्मापसव्ये तु स वेनोकारलक्षितः ।
मकारं मध्यदेहे तु नादबिन्दुर्विरोधस(तः) ॥ १० ॥

धर्माधर्मेक्षणं पुरुषः पुर्यष्टकसमायुतः ।
चिद्देहं सर्वशुक्लं तु वर्णेनैव समायुतम् ॥ ११ ॥

रजस्तमोस्य वंश्यस्तु मञ्चेदं पङ्कजासनम् ।
ब्रह्मग्रन्थिं विनिर्भिद्य गच्छेद्वायुपुरात्ततः ॥ १२ ॥

पिङ्गलायां विशेद्योगी हृत्सरोरुहकर्णिकाम् ।
तत्र स्थित्वा समस्तानि स्वस्वस्थाने निवेशयेत् ॥ १३ ॥

प्राणापानसमानश्च उदानोव्यान एव च ।

नागः कूर्मस्तथा प्रोक्तः कृकरो देवदत्तकः ॥ १४ ॥

धनञ्जयश्च दशमः स्वस्वस्थाने निवेशयेत् ।

श्रोत्रं त्वक्चक्षुषीजिह्वा घ्राणश्चैव तु पञ्चमः ॥ १५ ॥

बुद्धीन्द्रियाणि पञ्चैव स्वस्वस्थाने निवेशयेत् ।

वाक्पादौ पाणिपायूवा उपस्थश्चैव तु पञ्चमः ॥ १६ ॥

p. 125)

कर्मेन्द्रियाणि पञ्चैव स्वस्वस्थाने निवेशयेत् ।

मनोबुद्धिरहंकारो महानन्तश्चतुष्टयम् ॥ १७ ॥

हृदये निवेदयेद्वत्स उपर्युपरि बुद्धिमान् ।

एतेन देहयोगेन पूर्ववन्मोदते वशीन् ॥ १८ ॥

देहान्त्यराण्यनेकानि विशेदेकोपदेच्छया ।

इति प्रवेशनविधिः मृतदेहस्य षण्मुख ॥ १९ ॥

जीवदेहप्रवेशनं प्रवक्ष्यामि समासतः ।

पूर्वोक्तद्वारं निष्क्रम्य शक्तिबीजपुरस्सरम् ॥ २० ॥

वायुद्वारेण चाविश्य नाभिचक्र समाश्रितः।
महामायेन निर्गच्छेत् पूर्वोक्तपयबीजतः॥ २१॥

नाभिचक्रं ततो गच्छेत् सुषुम्नाया समाहितः।
मण्डलाश्रयमध्ये तु हृत्सरोरुहकर्णिकम्॥ २२॥

तत्र तत्प्राणसंचारं निरुध्यात्मीयचानिलैः।
यावद्विगत चेष्टस्तु तावदेव निरोधयेत्॥ २३॥

असौ पतति भूमौ तु तावत्तिष्ठेत्सुधीरतः।
इन्द्रियाणि समस्तानि प्राणादिकचतुष्टयम्॥ २४॥

आशाक्रियां निरोध्येत स्वस्वस्थाने तु पण्डितः।
देहान्तेन विनिर्मुक्तो संविभक्तेन्द्रियः क्रमात्॥ २५॥

तिष्ठेत् सर्वेषु कार्येषु पूर्वदेहं यथा परम्।
* * * * वै वत्स सहस्रदेहं विशेद्बुधः॥ २६॥

स्वदेहजीर्णे तु मतिमान् अन्यदेहं विशेत्सदा।

इति कालोत्तरे स्पर्शयोगविधाने मृतकार्यजीवकार्यप्रधानं नाम त्रयोविंशतिः पटलः॥ २३॥

p. 126)

॥ श्रीः ॥

ईश्वर उवाच-

अथ वै ज्ञानवैराग्यं संस्कारात्सत्यमेव हि ।
महायोगं प्रवक्ष्यामि सर्वकामार्थसाधनम् ॥ १ ॥

ज्ञानसागरविस्तीर्णाच्छिवस्यैव अनुग्रहात् ।
पद्ममध्ये प्रविश्यैतत्प्रासादाख्यं शिवं पदम् ॥ २ ॥

तत्र स्वं मण्डलं ध्यायेत् कूपैः प्रकृतिरूपकम् ।
शशाङ्कमण्डलं तत्र किञ्चिद्धीनं विचिन्तयेत् ॥ ३ ॥

पुरुषात्मकं तस्योपरि ज्योतिरूपमनौपमम् ।
कृशानुमण्डलं पूर्वं त्रिकोणं बीजमन्त्रतः ॥ ४ ॥

तस्योपरि चन्द्रबिम्बं यच्चतुर्थेन संयुतम् ।
अग्निबिम्बत्रयं हीनं सूर्यमण्डलमुत्तमम् ॥ ५ ॥

सूर्यबिम्बान्मन्त्रयोगी चन्द्रबिम्बमनुत्तमम् ।
तस्योपरिष्टात्पुरुषं पञ्चविंशक संयुतम् ॥ ६ ॥

राजावर्तमणिप्रख्यं अतसीकुसुमप्रभम् ।
माणिक्यवत्प्रभादिव्यं किञ्चिद्भृङ्ग समप्रभम् ॥ ७ ॥

अङ्गुष्ठमात्रमुत्सेधं बालार्कशतकल्पितम् ।
ईश्वराख्यं तु तत्तत्त्वं तेनेदं प्रेर्यते जगत् ॥ ८ ॥

तन्मध्ये तु शिखा तन्वी स्फुरत्सौदामिनीप्रभा ।
विद्याशक्तिं तु तामाहुः तत्परः परमः शिवः ॥ ९ ॥

एवं क्रमाद्विचिन्त्याथ चेतसा शिव तन्मयः ।
तिष्ठेत्समभ्यसंस्तावं निरुद्धाशेषवृद्धिकान् ॥ १० ॥

p. 127)

चेतस्तन्मयतां याते तावत्तद्भावभावतः ।
इति साक्षात्कृताशेषः सर्गसंहारकारकः ॥ ११ ॥

तत्र त्वं प्राप्य वै सम्यक् ब्रह्मरन्ध्राद्विनिर्गतः ।
रश्म्यहः शुक्लपक्ष षण्मासोत्तरवत्सरान् ॥ १२ ॥

सुरालयसमुद्भाव स्वच्छशाङ्ककलितक्रमः ।
एते द्वादशादित्यास्तु रुद्रैकादश ईश्वरः ॥ १३ ॥

नवशक्ति नवालक्ष्मी सावित्री धरणीति च ।
ईश्वरस्य महाशक्तिर्मनोन्मनी परावरा ॥ १४ ॥

मूर्तिर्द्वादशशक्तिस्तु अधिष्ठित महादशाः ।
तेन नीतं शिवं गच्छेद्विगताशेष कल्मषः ॥ १५ ॥

नित्यं विशुद्धं संतृप्तमानन्दमनिलं ध्रुवम् ।
सर्वज्ञं सत्यसंकल्पं सर्वकारणकारणम् ॥ १६ ॥

शिवरूपं परं प्राप्य सर्वसंक्लेशनाशनम् ।
जिताशेषामरुद्वृत्तैः मोक्षोपायस्तु वर्णितः ॥ १७ ॥

पूर्वतत्त्वकृताभ्यासादन्यदेव तु देशिकः ।
अनेन याति निर्वाणं मृत्युर्देहे व्यवस्थितः ॥ १८ ॥

उक्तसमासक्तचित्तो तेन वायुजयं विना ।
स्वेच्छयानिर्गतो देहात् मुक्तिं याति यथानरः ॥ १९ ॥

दिव्योपायं प्रवक्ष्यामि बीजसारसमन्वितम् ।
तृतीयवर्गमन्त्रस्थमथो वह्निमरुद्धृतम् ॥ २० ॥

दशषष्ठस्वरोपेतं बिन्दुशेखरभूषितम् ।
विन्यस्य नाभौ बीजेशं हृदिन्यस्य तथा परम् ॥ २१ ॥

p. 128)

यत्तृतीयसुसंयुक्तं पूर्ववर्णेन संयुतम् ।
वर्णं वर्णेश्वरं पश्चादर्वाक् शिरसि विन्यसेत् ॥ २२ ॥

पूर्ववर्ण समायुक्तं हृदयादि क्रमान्न्यसेत् ।
प्रासादेन तु संयुक्तं पवित्रैरङ्गसंयुतम् ॥ २३ ॥

मध्यदेहे न्यसेद्वत्स समरसं भावमाश्रयेत् ।
मनोयात्यमहीभावं ततो निर्वाणमाप्नुयात् ॥ २४ ॥

निर्वाणं मृत्युनाशं तु अयं वै एकमेव तु ।
मृत्युञ्जयमिदं योगं मध्ये देहे तु भावयेत् ॥ २५ ॥

पूर्वं हृदयनाभिं तु तत्तो गच्छेत्तु मध्यगम् ।
शिवस्य परतो ध्यायेत् पश्चिमद्वारमुत्तमम् ॥ २६ ॥

संपूज्य विधिवद्देवं ध्यायेन्नित्यमतन्द्रितः ।
सर्वज्ञं सर्वकर्तारं सर्वतोऽक्षि शिरोमुखम् ॥ २७ ॥

सकलीकृत्य चात्मानं ध्यायेच्छिवमनामयम् ।
ज्योतिरूपं परं दिव्यमष्टदिगीशसंयुतम् ॥ २८ ॥

ध्यायेद्यामस्तन्त्रित्वात् पूरकादिविवर्जितम् ।
मृत्युञ्जयं परं ह्येतत् षण्मासाभ्यासयोगतः ॥ २९ ॥

अष्ट प्रत्ययमाप्नोति त्रिमासान्नात्र संशयः ।
अथवा * * * * * * * ब्रह्मणः पदम् ॥ ३० ॥

तत्त्वान्तर्गतवित्तः सन् जपेदष्टोत्तरं शतम् ।
क्षणात्प्राप्नोति तत्स्थानं यत्तन्निर्वाण संज्ञितम् ॥ ३१ ॥

परमं ध्येयमेवं हि तन्मार्गस्येन * * * ।
* * * * * रामन्त्री शिवं तत्स्थैक मानसः ॥ ३२ ॥

p. 129)

एवं वशीकृतप्राणो धारणादिसमभ्यसेत् ।
धारणा शिवतत्त्वादौ वृत्तिरोधं चरेषु तत् ॥ ३३ ॥

तद्वृत्तिसन्ततध्यानं तदर्थाभासमात्रकम् ।
स्वरूपेणैव शून्यं तत् समाधिर्योग उच्यते ॥ ३४ ॥

इति तृतीय निवृत्तिरेकस्मिन् द्विजोत्तम (?) ।
उक्तस्थि * सनासीनो विरेच्य पवनं शनैः ॥ ३५ ॥

पूरयेद्वै इडायां तु पादाङ्गुष्ठान्तमादितः ।
पादाङ्गुष्ठे चिरं रुद्ध्वा मनस्तत्रैव संस्थितः ॥ ३६ ॥

पार्ष्णिदेशे तथा गुल्फे जङ्घाजानुद्वये क्रमात् ।
ऊरौ च मेढ्रे नाभौ च इति कर्णे तु धारयेत् ॥ ३७ ॥

तालुरन्ध्रे भ्रुवोर्मध्ये सुषुम्नान्ते द्वादशे स्थितः ।
घटिकार्धं क्रमादूर्ध्वं शिवे यामस्तु संस्थितः ॥ ३८ ॥

मृत्युञ्जयमिदं वत्स साक्षान्निर्वाणमृच्छति ।
अभ्यसेद्वत्सरं चैक मयुतायुर्भविष्यति ॥ ३९ ॥

यावद्ब्रह्मपुरं तस्मात् नयेदुक्तेन वर्त्मना ।
पादाङ्गुष्ठान्तमानीय मध्यदेहे तु संस्थितः ॥ ४० ॥

ततो विरेचयेद्वायुं प्राणसंस्थेन वर्त्मना ।
पूर्वोक्तस्थानयोगेन धारणा घटिका भवेत् ॥ ४१ ॥

यामं निरुद्ध्य ऊर्ध्वाधस्ततो मृत्युं जयिष्यति ।

इत्युक्ता धारणा दिव्या मृत्युनाशनमेव हि ॥ ४२ ॥

याममभ्यस्य चिद्योगी प्राप्नोति परमं शिवम् ।
अतः परं प्रवक्ष्यामि धारणां मोक्षदायिनीम् ॥ ४३ ॥

p. 130)

अणिमादिगुणैश्वर्यं षड्भिर्मासैर्न संशयः ।
ऊर्ध्वाधस्तिर्यगप्येव जगद्व्याप्तं चराचरम् ॥ ४४ ॥

प्रक्षिपेत्क्रमयोगेन मनसा भुवनत्रयम् ।
भुवनानां सप्तकं वापि प्रक्षिपेत्पिण्डमध्यमे ॥ ४५ ॥

त्रिमण्डले तु वै वत्स प्रासादं बीजसंयुतम् ।
आनीय शनकैश्चित्तद्वीपार्णवनगैर्युतम् ॥ ४६ ॥

जम्बूद्वीपेन संक्षिप्य तत्प्राप्तिं प्राप्य योगतः ।
आनीय तं क्षिपेच्चेतः पिण्डस्ये परमात्मनि ॥ ४७ ॥

सर्वकालेषु वै वत्स सर्वलोकस्य मूर्धनि ।
मण्डलत्रयमध्ये तु मनस्पर्शं तु तत्र तु ॥ ४८ ॥

सप्तलोकसमस्तं च षण्मासात्तत्र पश्यति ।

सर्वज्ञत्वमवाप्नोति सर्वगं शिवमाप्नुयात्॥ ४९॥

मृत्युञ्जयं भवेत्तस्य वत्सरान्नियतं भवेत्।
ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरः शिव एव च॥ ५०॥

अमापञ्चकधाराणां तत्तदेव भविष्यति।
हृत्सरोरुहमध्यस्थो ब्रह्मा ध्यातश्चतुर्मुखः॥ ५१॥

बुद्धितत्त्वात्मको रक्तः प्रणवेन स्वबीजतः।
चतुर्मुखश्चतुर्बाहुः सृष्टिकारणमुत्तमम्॥ ५२॥

ज्ञानेनाप्रतीपे नैव वैराग्येन च संयुतः।
ऐश्वर्येणा धर्मेण वरदाभयपाणिना॥ ५३॥

बिभ्रत्कमण्डलं सव्येऽपसव्ये चाक्षसूत्रकम्।
हंसारूढस्तथा राधं मृत्ज्ञानग्रन्थिभेदनम्॥ ५४॥

p. 131)

तारकज्ञान निर्वृत्तिं ऐश्वर्यमखिलं तथा।
विशेषयोगसंसिद्धिर्विविधा योगसंभवम्॥ ५५॥

अभिमानात्मकश्यामा चतुर्वक्त्रोऽष्टबाहुकः।

बिन्दुमत्पृष्ठनादेन हृदि ध्यातस्त्रिशूलधृक् ॥ ५६ ॥

कालाग्निं सर्वहस्तेन बिभ्रदाजगवं शरम् ।
खड्गं परशुं कालाग्निं सभुजङ्गसमानगः ॥ ५७ ॥

शशाङ्कधारिणं देवं कृत्तिवासं त्रिलोचनम् ।
ऐश्वर्यादिगुणोपेतं हृदि ध्यानगुणाष्टकम् ॥ ५८ ॥

ध्यानमात्रेण वै वत्स प्रकृतिर्वश्यकं तथा ।
मृत्युञ्जयमवाप्नोति सदा सद्भावभावितः ॥ ५९ ॥

यथाभिमतसिद्धिश्च सर्ववस्तुषु योगिनः ।
संवत्सरकृतात्पापात् शिवलोकमवाप्नुयात् ॥ ६० ॥

इति कालोत्तरे स्पर्शयोग धारणामार्गे कालाग्निरुद्रब्रह्मध्यानश्चतुर्विंशति पटलः ॥ २४ ॥

॥ श्रीः ॥

ईश्वर उवाच-

अष्टाङ्गस्पर्शयोगश्च शृणु वक्ष्यामि संप्रतम् ।
यमनियमौ चासनं प्राणायामस्तथैव च ॥ १ ॥

प्रत्याहारं धारणा च ध्यानं समाधिरेव च ।
एतदष्टाङ्गमुद्दिष्टं स्पर्शयोगं विदुर्बुधाः ॥ २ ॥

p. 132)

यमादिप्राणयामान्तं बहिरङ्गं चतुष्टयम् ।
प्रत्याहारात्समाध्यन्तमन्तरङ्गमुदाहृतम् ॥ ३ ॥

अहिंसा सत्यमस्तेयं ब्रह्मचर्यं क्षमाधृतिः ।
दया ज्ञानं स्वरूपाणां अन्तरङ्गं विभागतः ॥ ४ ॥

यमाश्च दर्शया प्रोक्तास्तन्त्रेऽस्मिन् विजये शुभे ।
शौचं सन्तोषश्च तपःस्वाध्यायेश्वरपूजने ॥ ५ ॥

सिद्धान्तश्रवणं चैव जपं हुतं च श्रीमति ।
नियमं दशधा प्रोक्तं सर्वशास्त्रेषु पूजितम् ॥ ६ ॥

यावत्सिद्धिस्पर्शयोगं जयं तावदनुष्ठितम् ।
आसनं विंशति प्रोक्तं तन्त्रेऽस्मिन् विजये शुभे ॥ ७ ॥

पद्मकं स्वस्तिकं चैव गोमुखं विकटं तथा ।
सूचिं वै एकपादं तु कुक्कुटं वीरमेव च ॥ ८ ॥

पद्मासनं चैकपृष्ठं कूर्मं विमलमेव च ।
दण्डं विदण्डं गोकर्णं सिंहासनमतः परम् ॥ ९ ॥

वृत्तं चोत्कुटिकं चैव गजास्यं गजकर्णकम् ।
आसनं विंशतिः प्रोक्तं वाञ्चितैकं समभ्यसेत् ॥ १० ॥

स्थिरं सुखासनं प्रोक्तं सर्वतन्त्रेषु पूजितम् ।
यथा काकादिभाण्डानां त्रिपादे सम्यगास्थिता ॥ ११ ॥

समाधिं चिरकालस्थ सुखांसुखमाश्रितः ।
तस्मात्सर्वप्रयत्नेन आसनं सर्वमभ्यसेत् ॥ १२ ॥

स्वर्गापवर्गफलदं प्राणायामेन वै गुह ।
सर्ववेदफलं चैव सर्वयज्ञफलं च यत् ॥ १३ ॥

p. 133)

सर्वदानफलं चैव सर्वतीर्थफलं च यत् ।
प्राणायामेन वै वत्स शिवार्चनफलं भवेत् ॥ १४ ॥

मृद्वासरोपरि कुशं प्रावरणाजिनं ततः ।
तस्योपरि सुखासीनः प्राङ्मुखो वाप्युदङ्मुखः ॥ १५ ॥

अतिभुक्तिमभुक्तिं च वर्जयित्वा समासतः ।
निवाते निर्भये गेहे कृमिकीटादिवर्जिते ॥ १६ ॥

समग्रीवाशिरो भूत्वा दन्तैर्दन्तान संस्पृशन् ।
नासाग्रदृक्समासीना दिशश्चा नवलोकयन् ॥ १७ ॥

नाडीनां शोधनं कृत्वा मद्वितीयेन मन्दिरे ।
दक्षिणं पूरयित्वा तु वामेनैव तु रेचयेत् ॥ १८ ॥

वारुणं मण्डलं वत्सं ल द्वितीयेन संयुतम् ।
पूर्ववत्पूरयेद्धीमान् वामेन तु समाहितः ॥ १९ ॥

पादाङ्ष्ठात्समारभ्य यावत्प्राणमिडैव तु ।
दक्षिणे पिङ्गले चैव रेचयेत्सर्वमेव हि ॥ २० ॥

एवं वै पञ्च षट्सप्त षण्मासं वत्सरं तु वा ।
नाडीशुद्धिमवाप्नोति ग्रन्थिस्त्रिदोष वर्जितम् ॥ २१ ॥

प्राणायामं भवेत्पश्चात् प्रासादेन तु षण्मुख ।
पूर्वं षोडशमात्रं तु पूरयेदुदराद्बुधः ॥ २२ ॥

चतुष्षष्टिमात्रं कुम्भकं संपूर्णं कुम्भवद्भवेत् ।
रेचयेन्मूर्ध्निवायुं च द्वात्रिंशं मात्रया गुह ॥ २३ ॥

एवं प्राणायाममस्तु रेचपूरककुम्भकः ।
षोडश प्राणायामैस्तु नित्यं षोडशमेव च ॥ २४ ॥

p. 134)

परां गतिं समाप्नोति प्राणायामेन वै गुह ।
प्राणादिविजयं पश्चात् बीजं वर्णं च सारगम् ॥ २५ ॥

यकारं प्राणबीजं तु नीलजीमूतसप्रभम् ।
रकारं चापानमेवं तु स्फुरद्धृदयसप्रभम् ॥ २६ ॥

लकारंमपान इत्युक्तं शाकं बन्धूकसन्निभम् ।
पकारं उदान इत्युक्तं वारुणं शङ्खसन्निभम् ॥ २७ ॥

भकारं समानं इत्युक्तं स्फटिकाभं शिवं भवेत् ।
हृन्नाभिनासिकर्णश्च पादाङ्गुष्ठं तु संस्थितम् ॥ २८ ॥

प्राणस्य स्थानमित्युक्तं ब्रह्मग्रन्थिमुरस्तथा ।
अपानमेढ्रपायू च ऊरू वं क्षणजानुनी ॥ २९ ॥

उदरे जङ्घयोश्चैव कटिदेशे नाभिमूलके ।
व्यानश्रोत्रौ च चक्षुश्च ध्यानयोर्गलदेशतः ॥ ३० ॥

पार्श्वयोश्च कुकाट्यश्च स्थितेश्च गुल्फयोरपि ।
उदानः सर्वसिद्धिस्थः पादौ हस्तौ च चाङ्गुली ॥ ३१ ॥

समानः सर्वदेहे तु पादाङ्गुष्ठादिकान्तकम् ।
द्वासप्तति सहस्राणि नाडिमार्गेषु संस्थितः ॥ ३२ ॥

अष्टाविंशति कोटीषु रोमकूपेषु संस्थितः ।
समानप्राण एकं तु जीवस्तौ * * मेव हि ॥ ३३ ॥

शनैःसमस्तमाकृष्य हृत्सरोरुहकोटरे ।
पूर्ववत्पूरयित्वातु कुम्भकं पूर्ववद्भवेत् ॥ ३४ ॥

रेचकं पूर्ववत्कृत्वा कर्णे वै तालुरन्ध्रके ।
कोदण्ड द्वयमध्ये तु ब्रह्मरन्ध्रे तु शक्तिमत् ॥ ३५ ॥

p. 135)

रश्मिर्नज्योत्स्नानादं च बिन्दुं माहेश्वरं पदम् ।
सदाशिवं शिवं पश्चात् तयोर्देवेन देशिकः ॥ ३६ ॥

ततो निर्वाणमायाति मृत्युं जित्वा न संशयः।
सृष्टिमार्गं नयेत्पश्चात् शिवश्चैव तु यामके ॥ ३७ ॥

सदाशिवे षट् घटिका * श घटिकापञ्चकम्।
बिन्दोर्वै चतुर्घटिका नादे चैव त्रयं भवेत् ॥ ३८ ॥

ज्योत्स्नायां तु द्विघटिका अशरेकेन संस्थितः।
रश्मिरर्धघटिकेन तदर्धं शक्तिगोचरे ॥ ३९ ॥

भ्रूमध्ये तालुरन्ध्रे च * * * * नस्थिर्गुह।
हृदये शिवार्धं कुर्वीत प्राणायामेन देशिकः ॥ ४० ॥

संवत्सरत्रयं ह्येवं प्रासादेन तु सोऽभ्यसेत्।
बहिरङ्गे प्रसादं तु प्राणायामं तु षण्मुख ॥ ४१ ॥

मृत्युञ्जयमवाप्नोति ततो वायुजयं भवेत्।
प्रसरं तु प्रवक्ष्यामि सोपानं धारणस्य तु ॥ ४२ ॥

मनो मारुतयुक्तेन सर्वमाकृष्य मन्त्रवित्।
पादाङ्गुष्ठे चिरं रुध्य घटिकात्रयमेव हि ॥ ४३ ॥

सर्वाङ्गुष्ठेन द्विगुणं प्रासादेनैव दण्डतः।

ततो गुल्फं तु सव्ये तु सव्यं चैवापसव्यके ॥ ४४ ॥

घटिकाषट्कमेकैकं निरुध्य कुम्भकमेव तु ।
जङ्घयोश्चैव मध्ये तु उपविन्मूले तु रोधयेत् ॥ ४५ ॥

यावन्निरोधयेत्तत्र सर्वमाकृष्य चानिलम् ।
घटिकाष्टकं निरोद्धव्यं परकुम्भकसंस्थितम् ॥ ४६ ॥

p. 136)

पुनरूरुद्वये वत्स स्पर्शमाकृष्य रोधयेत् ।
द्वारसंख्यां निरोद्धव्यं प्रासादेन तु देशिकः ॥ ४७ ॥

पायुमूले मेढ्रमूले आकृष्य स्पर्शनाद्गुह ।
सम्यङ्निरोधयेन्नित्यं मनोमारुतसक्तया ॥ ४८ ॥

पायुमूले मेढ्रमूलं तत्क्षणं नश्यते गुह ।
पुनर्वै कुण्डलीमध्ये नाभिमध्ये तु कुण्डली ॥ ४९ ॥

दिक्संख्यां घटिका रोध्य स्पर्शमाकृष्य मन्त्रवित् ।
प्रासादेन तु बीजेन रोधयेत् * * नन्ततः ॥ ५० ॥

प्रत्याहारे प्रधानं तु कुण्डलीस्थानमुत्तमम् ।

अष्मीलं प्लहगुल्फं च वातरोगांश्च नाशयेत् ॥ ५१ ॥

बाह्यायामं विद्रुधिं च आक्षेपं च धनुर्गुह ।
अशीतिर्वातजाद्रोगात् प्रत्याहारेण नाशयेत् ॥ ५२ ॥

पुनर्वै हृदये मन्त्री * * * * * * * * ।
प्रासादयेत्समस्तं च घटिकैकादशे स्थितः ॥ ५३ ॥

बलीपलितनाशं च मृत्युनाशनमेव च ।
कण्ठ(र्ण)कूपं निरुध्याथ सर्वमाकृष्य योगवान् ॥ ५४ ॥

इडायां पूरयित्वा तु * * * * * * * * ।
द्वादशं घटिकं वापि तदर्धं वा निरोधयेत् ॥ ५५ ॥

क्षुत्पिपासे विनश्यन्ति तृष्णां उष्णज्वरं तथा ।
तालुरन्ध्रे निरोद्धव्यमनिलं मरुता युतम् ॥ ५६ ॥

त्रयोदशं घटिकां वाथ योधशक्तिमथापि वा ।
सर्वद्वार प्रधानस्तु प्रासादं च तृतीयकम् ॥ ५७ ॥

p. 137)

सविसर्गेण वै वत्स सर्ववृत्तिं निरोधयेत् ।

सर्वव्याधिहरं ह्येतत् पित्तं श्लेष्मं च वातजम् ॥ ५८ ॥

मृत्युञ्जयं परं ह्येतत् तालुरन्ध्रे च बुद्धिमान् ।
सदा तत्सर्वमाकृष्य कोदण्डद्वयमध्यगम् ॥ ५९ ॥

प्रासादं हंससंवृत्तं आकृष्य स्पर्शनः सुखी ।
चतुर्दशघटिकां वत्स तदर्द्धं वा निरोधयेत् ॥ ६० ॥

रेच्यरेचकशक्तिश्चेत् सततं रोधयेद्गुह ।
सर्वज्ञत्वमवाप्नोति वेदशास्त्राणि विन्दति ॥ ६१ ॥

सप्तलोकाश्च तत्रैव पश्यते योगचक्षुषा ।
सुषुम्नाग्रे रोधयेत्पश्चात् आकृष्य स्पर्शनं ततः ॥ ६२ ॥

प्रासादे चन्द्रबिम्बेन मनोमारुतयुक्तया ।
यामत्रयं निरोध्यं तु आकृष्याकृष्य मन्त्रवित् ॥ ६३ ॥

कृष्णभृङ्गनिभेनैव रोमकूपेषु प्लावयेत् ।
सपत्नस्तम्भमेवं तु मृत्युनाशनमेव च ॥ ६४ ॥

सर्वस्पर्शनं तत्रैव मनसा तु निरोधयेत् ।
निरोध्य प्लावयेदमृतैश्शनैश्शनैः शिवचन्द्रकौ ॥ ६५ ॥

रत्यग्निज्योत्स्नायां पश्चादाकृष्य वायुभिः ।
निरोधयेत्ततः सर्वान् शिवचन्द्रेण संयमी ॥ ६६ ॥

षोडश सप्तदशे चैव ततोऽष्टादश वै घटी ।
सर्वं निरुद्ध्य मतिमान् अमृतत्वेन प्लावयेत् ॥ ६७ ॥

घटिकां सहस्रं आयुष्यं लभते नात्र संशयः ।
रहस्यमेतदाख्यातं प्रत्याहारं सुदुर्लभम् ॥ ६८ ॥

p. 138)

अग्रवायुजयाद्वत्स परकायप्रवेशनम् ।
मृते जीवे च सर्वं तु तज्जनात्संप्रवेशनम् ॥ ६९ ॥

एकोनविंशद्घटिका प्रासादं हंसचन्द्रकम् ।
आपादतलपर्यन्तं कादिनादित्रयेन तु ॥ ७० ॥

प्लावयेदमृतेनैव अयुतायुर्भवेन्नरः ।
नादस्थाने चरं रोध्य घटिका चैक विंशतिः ॥ ७१ ॥

अनिलं समस्तं वै वत्स आकृष्यं तत्र रोधयेत् ।
महानादशिवेनैव शशिना च समन्वितम् ॥ ७२ ॥

प्लावयेत्खादिपादान्तं अयुतद्वयं स जीवति ।

पुनः सदा च वै वत्स आयुष्यं सर्ववायुभिः ॥ ७३ ॥

धिया संरोधयेत्तत्र घटिकात्रिंशतिं गुह ।

पुनराप्याययेद्वत्स शिवश्चक्रेण हंसदः ॥ ७४ ॥

लक्षकोटिं स जीवेत प्लावयेत्सर्वविग्रहम् ।

एवं पूर्वे प्रत्याहारं सुखं वायुजयं भवेत् ॥ ७५ ॥

आरोहं अवरोहं च स्थानात्स्थानं तु वै गुह ।

इडया पिङ्गला चैव पूरकं तु क्रमेण तत् ॥ ७६ ॥

रोपयेत पुनर्धीमान् सगुणं दुर्गमात्रयम् ।

इति कालोत्तरे प्रत्याहारपटलः पञ्चविंशतितमः ॥ २५ ॥

॥ श्रीः ॥

ईश्वर उवाच-

p. 139)

धारणां वायुजां वक्ष्ये भुक्तिमुक्तिफलप्रदाम् ।

सह सौभाग्यमाप्नोति धनमायुर्बलं श्रियम् ॥ १ ॥

एकान्ते निर्जने स्थाने वातातपविवर्जिते ।
चत्वारिं बहिरङ्गानि अत्यज्य च यथाविधि ॥ २ ॥

प्रत्याहाराजि न स्पर्शधारणा च समभ्यसेत् ।
पृथिव्यादिपञ्चवक्रं धारयेत्पूर्वमेव हि ॥ ३ ॥

महच्चक्रं धारयेत्पश्चादीश्वरादि पुनर्भवेत् ।
पृथिवीं धारयेद्वत्स त्रिकालं वा द्विकालकम् ॥ ४ ॥

पृथिवी सिद्ध्यते योगी सार्वभौमत्वमाप्नुयात् ।
शब्दस्पर्शं च रूपं च रसो गन्धश्च पञ्चमः ॥ ५ ॥

पञ्चभिस्तु गुणैर्युक्तं ध्यायेत्पृथिविमण्डलम् ।
मृत्युञ्जयमवाप्नोति सर्वैश्वर्यसमृद्धिदम् ॥ ६ ॥

एवं ध्यायेद्विधिवत् अर्धचन्द्राब्जसंस्थितम् ।
गोक्षीरं धवलं सौम्यं शङ्खकुन्दसमप्रभम् ॥ ७ ॥

हृषष्ठ बिन्दुसंयुक्तं ब्रह्मरन्ध्रं तु ध्याययेत् ।
अधोमुखममृतं ध्यायेत् ध्यायेच्चैवं ततो गुह ॥ ८ ॥

तेन प्लावितमात्मानं आपूर्यकुम्भके स्थितम् ।
पूर्वात्तु द्विगुणं वत्स ध्यानं सम्यग्व्यवस्थितम् ॥ ९ ॥

मृत्युञ्जयमवाप्नोति सर्वव्याधिविवर्जितम् ।
स्थावरं जङ्गमं चैव कृत्तिमं विमताशमम् ॥ १० ॥

अजरामृतत्वमाप्नोति ध्यानं वारुणं मण्डलम् ।
शब्दस्पर्शं च रूपं च रसं चैव चतुर्गुणम् ॥ ११ ॥

p. 140)

चतुर्गुणयुतं भद्रं वारुणं मण्डलं स्मरेत् ।
आग्नेयं मण्डलं ध्यायेत् त्रिकोणं स्वस्तिकैर्युतम् ॥ १२ ॥

ज्वाला मालासहस्त्रैश्च रक्तवर्णं हुताशनम् ।
षष्टमे दशसंयुक्तं बिन्दुयुक्तं षडानन ॥ १३ ॥

उदाराग्निं चिन्तयेद्देव त्रिगुणेनानु संयुतम् ।
शब्दस्पर्शं च रूपं च अग्निबिम्बं विचिन्तयेत् ॥ १४ ॥

पूर्ववत्कुम्भकं कुर्यात् कुम्भकं चैव पूर्ववत् ।
रेचकं पूर्ववत्कुर्यात् अनिलं मनसा जयेत् ॥ १५ ॥

अशीतिर्वातजान् रोगान् श्लेष्मजान् सप्तसप्ततिम् ।
तत्क्षणान्नश्यते वत्स सिंहस्येव यथा गजः ॥ १६ ॥

वर्तुलं कृष्णवर्णं च बिन्दुलाञ्छनलाञ्छितम् ।
गभस्ति दैवतं वत्स द्विगुणेन समन्वितम् ॥ १७ ॥

शब्दस्पर्शसमायुक्तं द्वितीयेन समन्वितम् ।
बिन्दुशेखरमारूढं कण्ठकूपे तु ध्याययेत् ॥ १८ ॥

सर्ववायुं तत्रैव युगपद्ध्याययेद्गुह ।
इडायां पिङ्गलायां तु सुषुम्नायां च पूरयेत् ॥ १९ ॥

कुम्भकं पूर्ववत्कृत्वा रेचकं तु शनैर्भवेत् ।
एवं वै ध्याययेद्वत्स सर्ववायुजयं भवेत् ॥ २० ॥

मनोजयत्वमाप्नोति सर्वगत्वं च जायते ।
हृत्सरोरुहजं ये तु आकाशं मेचकप्रभम् ॥ २१ ॥

शुद्धस्फटिकसंकाशं शब्दैकगुणसंयुतम् ।
परमेश्वरं चाधिदैवं सर्वकारणकारणम् ॥ २२ ॥

p. 141)

अष्टवर्गं चतुर्थं तु बिन्दुशेखरभूषितम् ।
ध्यायेद्व्योमं शिरोमध्ये शिवाधारं सुनिर्मलम् ॥ २३ ॥

समस्तवायुं तत्रैवाधिया चैव निरोधयेत् ।
पूर्ववत्पूरकं कुर्यात् कुम्भकं रेचकं तथा ॥ २४ ॥

सर्वज्ञत्वमवाप्नोति सर्ववायुजयं भवेत् ।
महाचक्रं पुनर्ध्यायेत् सर्वदेवैरनुष्ठितम् ॥ २५ ॥

षट्त्रिंशद्दलसंयुक्तं कर्णिकाकेसरान्वितम् ।
महापद्ममिदं वत्स शिवपद्मं सुशोभनम् ॥ २६ ॥

प्रासादं कर्णिकायां तु सर्वविद्येश्वरेश्वरम् ।
केसराष्टोत्तरशतं पृथग्देवं प्रकल्पयेत् ॥ २७ ॥

विद्येश्वराष्टभिश्चैव द्वादशादित्यकाश्च वै ।
वसवश्चाष्ट ते चैव अष्टौ चैव गणेश्वरान् ॥ २८ ॥

लोकपालान् दश चैव अस्त्राणां च तथैव च ।
रुद्रमातृगणानां च यक्षविद्याधरास्तथा ॥ २९ ॥

गन्धर्वाश्चारणास्सिद्धा किं पुरुषा गरुडास्तथा ।

मरुद्गणाः पितृगणाः किन्नराप्सरसस्तथा ॥ ३० ॥

ऋषिराक्षसा सुराश्च यातुधानाश्च पन्नगाः ।

नागाश्च विविधाश्चैव नक्षत्रग्रहराशयः ॥ ३१ ॥

देवपत्न्यः ऋषिपन्त्यश्च तथा देवकुमारकाः ।

देवकन्या ऋषिकन्या भूता वै क्षेत्रपालकाः ॥ ३२ ॥

एते षट्त्रिंशत्पत्रेषु कल्पयित्वा यथा क्रमम् ।

महाबाह्येन विन्यस्य त्रिगुणीकृत्य वेष्टयेत् ॥ ३३ ॥

p. 142)

बिन्दुयुक्तेन वै सर्वं बिन्दुशेखरभूषितम् ।

व्यञ्जनानि च सर्वं तु गम्यकं * * * * * * ॥ ३४ ॥

श्रुत्वा मात्रेण लभ्येत गुरुप्रसादात्तु लभ्यते ।

* * * * * * सूक्ष्म बाह्याभ्यन्तर संस्थितम् ॥ ३५ ॥

प्रासादं सकलं विद्या महेशश्चात्र दृश्यते ।

सकलं निष्कलं सुप्तं सुषुप्तं तु सदाशिवम् ॥ ३६ ॥

प्रासादे बिन्दुदेवं तु * * * * * * * * ।
बिन्दुं तु वै शिवं विद्यात् तुरीयं परिकीर्तितम् ॥ ३७ ॥

तदेव सर्वव्यापीनि निष्कलं निर्मलं शिवम् ।
वाच्यवाचकरहितं हेयोपादेनशून्यकम् ॥ ३८ ॥

नित्यं सर्वगतं ब्रह्म स्वसंवेद्यं शिवं पदम् ।
कारणं सर्वदेवानां अक्षरक्षरवर्जितम् ॥ ३९ ॥

आधारे चिन्तयेद्देवं समाधिस्थस्य योगिनः ।
सुसंवेद्यहितं ब्रह्म कुमारी स्त्रीसुखं सदा ॥ ४० ॥

अयोगी नैव जानाति जात्यन्धो हि यथा घटम् ।
घटो नियतिनाकाशं तद्वज्जीवो नभोपमम् ॥ ४१ ॥

श्रोत्रं विना शृणोत्यन्यश्चक्षुर्नास्ति स पश्यति ।
प्राणं विना स जीवेति त्वग्विना स्पर्शं तु विन्दति ॥ ४२ ॥

जिह्वां विना रसं विन्देत् वह्निना प्रलपन्ति च ।
पाणिर्नास्ति सगृह्णाति पादो नास्ति स गच्छति ॥ ४३ ॥

वायुं विनापि चोत्सर्गं सर्वकालेषु वै गुह ।

मेढ्रं विनापि चानन्दं सर्वमेव हि नित्यशः ॥ ४४ ॥

p. 143)

मनो नास्ति ससंकल्पे त्रैलोक्ये सचराचरम् ।
अहंकारं विना वत्स अहंकृतः स्वयमेव च ॥ ४५ ॥

महानासि महत्त्वं च तस्थुषा रूपमव्ययम् ।
प्रकृतिं विना महादेवो जगत्सर्वं प्रजायते ॥ ४६ ॥

पुर्यष्टकसमायुक्तं पुरुषो नास्ति चेष्टक ।
चर * * * दे सर्वं जोषते भुञ्जतेऽपि च ॥ ४७ ॥

पिबते गृह्णते चैव पश्यते स्पृशतेऽपि च ।
गच्छति स्वं नृत्यति च गायते प्लवतेऽपि सः ॥ ४८ ॥

त्रिलक्षाशीति साहस्रं ब्रह्मादिस्तम्भसंज्ञितम् ।
ओत प्रोतेन वै वत्स परिपूर्णेन वै सदा ॥ ४९ ॥

शून्यं शून्येन भावेन इति त्वं भावयिष्यसि ।
देहे शून्यपदं ध्यात्वा मोक्षयिष्यसि षण्मुख ॥ ५० ॥

ऊर्ध्वशून्यमधश्शून्यमध्यशून्यं निरामयम् ।

खशून्यं शक्तिशून्यं च नास्तिशून्यं च वै गुह ॥ ५१ ॥

मातृशून्यं बिन्दुशून्यं महेशं च सदाशिवम् ।
ब्रह्मा विष्णुश्च रुद्रश्च सर्वशून्यं च भावयेत् ॥ ५२ ॥

षट्त्रिंशत्तत्त्वशून्यं च आधाराधेयशून्यकम् ।
त्वमहं शून्यमेवं हि सर्वां नास्तीति भावतः ॥ ५३ ॥

स्वयं वेद्यसमाधीना ग्राह्यो देवः शिवः परः ।
निर्बीजमिदं समाधिर्दृश्यते तु षडानन ॥ ५४ ॥

मध्यदेहं परं ब्रह्म बाह्याभ्यन्तरसंस्थितः ।
पुष्पेषु गन्धवन्नित्यं तिले तैलमिव स्थितम् ॥ ५५ ॥

p. 144)

दध्नो घृतमिव ज्योतिः काष्ठे वह्निरिव स्थितः ।
गुरुवक्रप्रसादेन लभ्यते सर्वतोमुख ॥ ५६ ॥

इति कालोत्तरे धारणाविधिः षड्विंशतिः पटलः ।

॥ श्रीः ॥

ईश्वर उवाच-

भावयोगं प्रवक्ष्यामि * * योगं सुदुर्लभम् ।
ध्यानं धारणरहितं जपहोमविवर्जितम् ॥ १ ॥

तिथिर्न राशिर्नक्षत्रं नियमो नोपवासकम् ।
यस्य कालश्च स्थानं च आसनानि च षण्मुख ॥ २ ॥

धारणाप्रत्याहारं च कुलक्षादिविवर्जितम् ।
* * * * श्च तीर्थं च न स्नानं शौचमेव च ॥ ३ ॥

रेचकं पूरकं चैव कुम्भकं च विवर्जयेत् ।
न वर्णं नवबीजं च सकलं निष्कलं न च ॥ ४ ॥

हृत्पीडा नावनाभिं च न भ्रवोर्मध्य एव तु ।
इडा च पिङ्गला चैव सुषुम्नाप्राणिरेव च ॥ ५ ॥

* * * * * ति पद्य बाह्याभ्यन्तरसंस्थितम् ।
अष्टाविंशत्कोटिरूपकूपे संचरते सदा ॥ ६ ॥

ब्रह्मादि स्तम्भ पर्यन्तं ते पार्थे सचराचरम् ।
योगसूर्य * * * * * * * * * * * * य ॥ ७ ॥

आधारे ग्रन्थिमूले तु व्योमव्यापि परं शिवम्।
ज्योतिरूपं परं तत्त्वमेतत्प्रोत व्यवस्थितम्॥ ८॥

p. 145)

क्षेत्रज्ञं तत्र संवेश्य शिवक्षेत्रज्ञके क्षिपेत्।
अशरीरं मनः कृत्वा न किञ्चिदपि चिन्तयेत्॥ ९॥

विद्युद्दामप्रतीकाशं अन्तस्थावोष्ठ एव च।
अकारादिक्षकारान्तं मन्त्रैः षोडशभिर्युतम्॥ १०॥

पृथक् पृथक् न्यसित्त्वा तु सर्वबिन्दुसमन्वितम्।
अवश्यं पूर्वदले व्यस्य शेषान्वै क्रमशो न्यसेत्॥ ११॥

पञ्चब्रह्म शिवाङ्गं च कणिकायां तु मध्यगम्।
हुतभुङ्मण्डलं वत्स त्रिकोणं यद्द्वितीयकम्॥ १२॥

ज्वालामाला * * * * * * * * * * * * ।
तस्य मध्ये सूर्यबिम्बं जपाकुसुमसन्निभम्॥ १३॥

सान्तं बिन्दु समायुक्तं रजोगुणसमायुतम्।
किञ्चिद्धीनमग्निबिम्बात् सूर्यमण्डलमुत्तमम्॥ १४॥

ल द्वितीयेन संयुक्तं बिन्दुशेखरभूषितम् ।
सूर्यबिम्बाद्धीनधरं चन्द्रबिम्बमनुत्तमम् ॥ १५ ॥

पूर्णचन्द्रनिभं वत्स श्वेतपद्मोपरि न्यसेत् ।
सत्वेन तु * * * * * * * * क विन्यसेत् ॥ १६ ॥

सत्त्वं रजस्तमश्चैव मण्डले मण्डले न्यसेत् ।
मण्डलत्रयमध्ये तु पुरुषं पञ्च विंशकम् ॥ १७ ॥

अङ्गुष्ठमात्रं पुरुषं पुर्यष्टकसमायुतम् ।
अङ्गुष्ठमात्रं सदृशं राजावर्त मणिप्रभम् ॥ १८ ॥

तस्य मध्ये महेशानं षड्विंशकमुदाहृतम् ।
द्रुतचामीकरप्रख्यं हृद्बीजं तु त्रिरभ्यसेत् ॥ १९ ॥

p. 146)

सदाशिवं तस्य मध्ये तु प्रसादहृदयान्वितम् ।
विद्युदर्कनिभाभासं सूक्ष्मरूपं तु चिन्तयेत् ॥ २० ॥

तस्य मध्ये परं देवं सदाशिवमनामयम् ।
सप्तविंशकदेवं हि ध्यायेत्सततमीश्वरम् ॥ २१ ॥

तस्य मध्ये शिवं वत्स अष्टाविंशकमुत्तमम् ।
सर्वज्ञं सर्वगं शान्तं योगिगम्यं परापरम् ॥ २२ ॥

कल्पनारहितं शान्तं निर्विकल्पं निरञ्जनम् ।
ध्यानमात्रेण वै वत्स गच्छेन्मोक्षमनामयम् ॥ २३ ॥

तस्य वामे तु सततं विष्णुं ध्यायेत्सनातनम् ।
चतुर्भुजं द्विनेत्रं च शङ्खचक्रगदाधरम् ॥ २४ ॥

सर्वलक्षणसंयुक्तं श्यामवर्णं किरीटिनम् ।
वाग्भवं विष्णुरूपं तु ध्यायेन्नित्यं सयन्त्रितम् ॥ २५ ॥

विष्णुरूपमवाप्नोति अणिमाद्यष्टसाधनम् ।
तस्य दक्षिणपार्श्वे तु चतुर्मुखं चतुर्भुजम् ॥ २६ ॥

पद्म किञ्जल्क सदृशं कृष्णाजिनधरं शुभम् ।
कमण्डलुं चाक्षसूत्रं दधानं सृष्टिकारणम् ॥ २७ ॥

रजोगुणसमायुक्तं ब्रह्माणं लोककारणम् ।
विष्णुं सत्त्वगुणोपेतं नारायणमनामयम् ॥ २६ ॥

तमोगुणसमायुक्तं संहारं रुद्रमेव हि ।
ब्रह्माणं चिन्तयेद्वत्स सर्ववृत्तिनिरोधनात् ॥ २९ ॥

सृष्टिकर्ता भवेन्नित्य मणिमाद्यष्ट साधयेत् ।
इन्द्रमग्निं यमं वरुणं सोमं गन्धर्वं तथा ॥ ३० ॥

p. 147)

ध्यायेद्वै पद्ममध्ये तु तत्तत्फलमाप्नुयात् ।
पूरकं कुम्भकं चैव सर्ववृत्तिनिरोधनम् ॥ ३१ ॥

रेचकं वर्धयेद्विद्वान् निर्वाण स्पर्शजीर्णकम् ।
चक्रवर्ती चाष्टमूर्ति रुद्रैकादश एव च ॥ ३२ ॥

आदित्यान् वसवश्चैव गणेशान् सर्व एव च ।
ध्यायेद्रव्यग्रमनसा तत्तत्पदमवाप्नुयात् ॥ ३३ ॥

समाधिमार्गं वक्ष्यामि तच्छृणुष्व हि षण्मुख ।
तदर्धमात्रं निर्हासं रूपशून्यं तु भावयेत् ॥ ३४ ॥

प्राकृतं भावमुत्सृज्य शिवमेवं तु भावयेत् ।
अथवा समरसीभावं समाधिस्तेन चोच्यते ॥ ३५ ॥

आत्ममध्ये शिवं कुर्यात् शिवमध्ये चात्ममेव तु ।
सदाशिवमहं भूत्वा न किञ्चिदपि चिन्तयेत् ॥ ३६ ॥

सूक्ष्मं सर्वगतं ब्रह्ममानन्दमचलं ध्रुवम् ।
तिर्यग्गतं परं तत्त्वमहमेव तु तद्भवेत् ॥ ३७ ॥

रेचकं पूरकं त्यज्य कुम्भकं तु समभ्यसेत् ।
मध्ये चैव तु वै वत्स साक्षाच्छिवमनामयम् ॥ ३८ ॥

दृष्टं मृश्यत्वं भावं तु परम * * * स्सदा ।
जाग्रत्स्वप्नविहीनं तु सुषुप्तं च विवर्जयेत् ॥ ३९ ॥

ज्योतीरूपं परं दिव्यं प्रलयानलवर्चसम् ।
शिवाकाशं परं सूक्ष्मं सर्वज्ञं सर्वतोमुखम् ॥ ४० ॥

गुह्यं पवित्रमग्राह्यमानन्दमचलं ध्रुवम् ।
गुहाशयमनादिं च सर्वद्वन्द्वविवर्जितम् ॥ ४१ ॥

p. 148)

एकं विभुं कारणमप्रमेयमचिन्त्यकम् ।
सूक्ष्मं शिवं कारणमप्रतर्क्यमनामयम् ॥ ४२ ॥

क मध्ये कुरु चात्मानमात्मा मध्ये तु खं कुरु ।
अशरीरात्मकः कृत्वा न किञ्चिदपि चिन्तयेत् ॥ ४३ ॥

एतद्रहस्यमाख्यातं मृत्युनाशनमुत्तमम् ।
सरोरुहमध्ये तु सूर्यकोटिसमप्रभम् ॥ ४४ ॥

कदम्बगोलकाकारं विद्या वि * * * शुभे ।
तत् वै मध्ये तु चात्मानं कुरु नित्यं षडानन ॥ ४५ ॥

आत्ममध्ये तु खं कुर्यात् न किञ्चिदपि चिन्तयेत् ।
एष मृत्युञ्जयो योगः समरसीभावमाश्रितः ॥ ४६ ॥

कण्ठकूपे परस्थानं क्षुत्तृष्णानाशनं परम् ।
तालुरन्ध्रे परं ज्ञानं विद्युत्पावक स प्रभम् ॥ ४७ ॥

कदम्बगोलके वत्स व्योमशक्ति स्वमीश्वरम् ।
गुणसंख्या स्मरेन्नित्यं मृत्युनाशनमुत्तमम् ॥ ४८ ॥

कोदण्डमध्ये नित्यं हि मण्डलत्रय मध्यगे ।
भुवनानि सप्त तत्रैव प्रक्षिप्य शिवमध्यगे ॥ ४९ ॥

तन्मध्ये कुरु चात्मानं नात्ममध्ये ततः कुरु ।

चक्षुषे दृश्यते योगस्सप्तलोकान् समुच्छ्रयः ॥ ५० ॥

सर्वज्ञत्वामवाप्नोति समरसी भावयोगतः ।
ब्रह्मरन्ध्रे तु मेधावी भू संख्यां तु विमिश्रयेत् ॥ ५१ ॥

व्योमशक्तिं न्यसेत्तत्र कदम्बगोलं तु तत्र तु ।
तन्मध्ये शिवरूपं तु स्फुरत्सौदामिनीप्रभम् ॥ ५२ ॥

p. 149)

प्रेङ्खन्यह्नि निभे वत्स शुद्धं मरतकप्रभम् ।
तत्र कृत्वा तु चात्मानं षट्कौशिके तु विग्रहे ॥ ५३ ॥

परं ब्रह्मत्वमाप्नोति समरसीभावयोगतः ।
इत्थं भूसंख्यमासे तु वत्सरत्रयभावनात् ॥ ५४ ॥

बलीफलितनाशं च मृत्युवञ्चनमेव च ।
तस्योर्ध्वे चतुरङ्गुल्ये रश्मिसंज्ञा तु गोलके ॥ ५५ ॥

व्योमशक्तिस्थमध्ये तु सूक्ष्मस्फटिकसन्निभम् ।
अमृतं चिन्तयेत्प्राज्ञः अनन्तश्चाक्षयोः शिवम् ॥ ५६ ॥

तन्मध्ये कुरु चात्मानं आत्ममध्ये तु तं कुरु ।

अशरीरं मनः कृत्वा न किञ्चिदपि चिन्तयेत् ॥ ५७ ॥

समरसीभावयोगेन मृत्युवञ्चनमुत्तमम् ।
ज्योत्स्नासंख्याकलक्षेत्र * कदम्बस्य गोलके ॥ ५८ ॥

व्योमशक्तिं न्यसेत्तत्र शक्तिमध्ये शिवं न्यसेत् ।
शिवमध्ये कुरु चात्मानं शिवमात्मान्वितम् कुरु ॥ ५९ ॥

चन्द्रोकोटिसमप्रख्यं समरसीभावयोगतः ।
षण्मासाभ्यासयोगेन मृत्युनाशनमुत्तमम् ॥ ६० ॥

प्रभुशक्तिं गोलमध्ये तु व्योमशक्तिं तु निक्षिपेत् ।
तन्मध्ये तु परं ब्रह्म शिवं परमनायकम् ॥ ६१ ॥

तन्मध्ये कुरु चात्मानं आत्ममध्ये तु तं कुरु ।
अशरीरं मनः कृत्वा न किञ्चिदपि चिन्तयेत् ॥ ६२ ॥

समरसीभावयोगेन लक्ष्मीं जीवेन्न संशयः ।
नादं महेश्वरं तत्त्वं गोलकं परमं पदम् ॥ ६३ ॥

p. 150)

ज्ञानशक्तिं न्यसेत्तत्र तन्मध्ये तु शिवं क्षिपेत् ।

तन्मध्ये कुरु चात्मानं आत्ममध्ये तु तं कुरु ॥ ६४ ॥

समरसी भावयोगेन प्लावयेदमृतमुत्तमम् ।
कोटिलक्षं स जीवेत शिवेन परिभाषितम् ॥ ६५ ॥

सुषुम्नाग्राप्त विज्ञानं एकैकं चतुरङ्गुलम् ।
सप्तमं परमं तत्त्वं शिवं परमनायकम् ॥ ६६ ॥

नित्यं सव्यगतं शून्यं निर्विकल्पं निरञ्जनम् ।
सव्याश्रयमचिन्त्यं च सर्वज्ञं सर्वतोमुखम् ॥ ६७ ॥

योगिगम्यं निरालम्बं सूर्यकोटिसमप्रभम् ।
प्रभुशक्ति ज्ञानशक्तिं च विद्याशक्तिनिरामयम् ॥ ६८ ॥

व्योमशक्तिं परं ज्ञानं * * नीति प्रकीर्तितम् ।
तेषां मध्ये शिवं सूक्ष्मं सर्वकारणकारणम् ॥ ६९ ॥

तन्मध्ये कुरुचात्मानं तदात्मनि सदा कुरु ।
अशरीरं मनः कृत्वा न किञ्चिदपि चिन्तयेत् ॥ ७० ॥

समरसी भावयोगेन सर्वमृत्युविनाशनम् ।
महाप्रलयसहस्रं तु स जीवति न संशयः ॥ ७१ ॥

आधारे चिन्तयेदेवं शुद्धमाणिक्कसन्निभम्।
नाभेरधस्तात्प्रादेशं मध्ये देशं प्रकीर्तितम्॥ ७२॥

फलकाद्वयमध्ये तु वृषवह्निं तु मस्तके।
ऊरुद्वयात्तु चोर्ध्वे तु तुटीभट्टीभवादयः॥ ७३॥

चतुरङ्गुलमात्रं तु मध्यदेहमुदाहृतम्।
चतुश्शक्तिं न्यसेत्तत्र मध्ये शिवं क्षिपेत्॥ ७४॥

p. 151)

अशरीरं मनः कृत्वा न किञ्चिदपि चिन्तयेत्।
समरसीभावयोगेन अभ्यसेत्सततं सुखी॥ ७५॥

तस्य मृयुर्न विद्येत्प्रयुतकल्पं स जीवति।

इति कालोत्तरे द्वादशसहस्रसंहितायां सप्तविंशतिः पटलः॥ २७॥

॥ श्रीः॥

ईश्वर उवाच-

षडध्वानं प्रवक्ष्यामि तत्त्वतः शृणु षण्मुख।

दुःस्वप्ने दुर्जनस्पर्शे रुद्रवेश्मनि भोजने ।

इति कालोत्तरे पञ्चगव्यपटलः षष्टितमः ॥ ६० ॥

॥ श्रीः ॥

ईश्वर उवाच-

सर्वज्ञता तृप्तिरनादि बोधः स्वतन्त्रता नित्यमलुप्तशक्तिः ।
अनन्तशक्तिश्च विभोर्विधिज्ञाः षडाहुरेताश्च महेश्वरस्य ॥ १ ॥

वज्रकवाटस्य विधि प्रवक्ष्याम्यनुपूर्वतः ।
मृत्युञ्जयपरं ह्येतत्सूक्ष्मात्सूक्ष्मतरं परम् ॥ २ ॥

p. 319)

गुह्याद्गुह्यतरं गुह्यं गृहीतव्यं प्रयत्नतः ।
नाख्यातं ब्रह्मणे पूर्वं नाख्यातं विष्णवेपि च ॥ ३ ॥

नाख्यातं सर्वदेवानां नाख्यातं स्वसुताय च ।
वज्रकवाटोपदेशं नाख्यातं यस्य कस्यचित् ॥ ४ ॥

तव स्नेहान्मया दिव्यं उपदेशं परं महत् ।
धाताखगपतिद्वयं कवाटस्तम्भ उच्यते ॥ ५ ॥

ऊर्ध्वोत्तरं गणनाथं यतोत्तरं वृषभमुच्यते ।
योनिभ्रमरो वत्स ते कौलौ परिकीर्तितौ ॥ ६ ॥

काख्यामूकाश्चतुर्थं तु जगद्ध्योनिलमूर्ध्वसौ ।
विष्णुरुद्रशिखाक्रान्तं कवाटं वामनासके ॥ ७ ॥

पटकोशं प्रवक्ष्यामि सांप्रतं शृणु षण्मुख ।
षोडशं पञ्चपुटकोशौ प्रकीर्तितौ ॥ ८ ॥

बिन्दुनादं च सहितं विसर्गादिमुदाहृतम् ।
सविसर्गं विजानीयात्कोशमन्तः प्रकीर्तितम् ॥ ९ ॥

हरस्य मे तदाख्यातं एकवक्रं कवाटकम् ।
भद्रकालीं परं बीजं दक्षिणस्तम्भ उच्यते ॥ १० ॥

रौद्री काली परं बीजं वामस्तम्भमुदाहृतम् ।
जपाकुसुम सप्रख्यं दक्षिणस्तम्भमुच्यते ॥ ११ ॥

विद्युत्पतनसंकाशं वामस्तम्भमुदाहृतम् ।
प्रथमं दक्षिणस्तम्भं तुषाररजतप्रभम् ॥ १२ ॥

प्रथमं सव्य * * * किञ्जल्क सदृशप्रभम् ।

द्रुतजाम्बूनदप्रख्यं वज्रकवाटवर्णकम् ॥ १३ ॥

p. 320)

पुटं किञ्जल्कसंकाशं कोशं पञ्चदलप्रभम् ।

काश्मीरसदृशप्रख्यं योनिबीजस्य वर्णकम् ॥ १४ ॥

भ्रमरं बीजवर्णं तु भ्रमरं सदृशप्रभम् ।

द्वितीयं दक्षिणस्तम्भ महारजतसप्रभम् ॥ १५ ॥

द्वितीययोनि भ्रमरं बीजं स्वर्णमिहोच्यते ।

सन्ध्याम्बदनिभप्रख्यं योनिबीजं मुदाहृतम् ॥ १६ ॥

भ्रमरबीजमिदं वत्स शुद्धचामीकरप्रभम् ।

पुटवर्णं पावकनिभं जपानिभं कोशमुच्यते ॥ १७ ॥

व * * * रमाख्यातं वामनासापुटे त्विह ।

दक्षिणे दक्षिणे नासापुटे तु वज्रकवाटमुच्यते ॥ १८ ॥

इडा च पिङ्गला चैव प्रोक्तं वज्रकवाटकम् ।

सुषुम्नाकवाटं वक्ष्यामि मृत्युनाशनमुत्तमम् ॥ १९ ॥

सुषिरं गृह्यं महासेन एकारस्वरसंयुतम् ।
बिन्दुमस्तकमाक्रान्तं वामस्तम्भमुदाहृतम् ॥ २० ॥

पुनर्वै सुषिरं गृह्य एकारस्वर संयुतम् ।
बिन्दुमस्तकमाक्रान्तं दक्षिणस्तम्भमेव हि ॥ २१ ॥

त्रयोदशेन संयुक्तं बिन्दुमस्तकभूषितम् ।
स्वबीजेन महासेन ऊर्ध्वोत्तरमुदाहृतम् ॥ २२ ॥

गगनत्रयोदशान्तं च बिन्दुमूर्तिविभूषितम् ।
अथोत्तरं विजानीयात्प्रयत्नेन तु कारयेत् ॥ २३ ॥

श्वेतं कृष्णं तथा रक्तं हरितं वर्णमेव हि ।
भवशर्वतथेशान पशुपतिर्नामदेवता ॥ २४ ॥

p. 321)

रुद्रो देवस्तथा भीमो महादेवः सदाशिवः ।
इडायामधिदैवं हि प्रोक्तं वज्रकवाटके ॥ २५ ॥

महादेवो हरोरुद्रः शंकरो नीललोहितः ।
शूलपाणिः कृत्तिवासाः कपर्दी मेघवाहनः ॥ २६ ॥

पिङ्गलायाधिदेवं हि मया प्रोक्तं षडानन ।
गङ्गाधरो विरुपाक्षो नीलग्रीवो वृषध्वजः ॥ २७ ॥

श्रीकण्ठो नीलकण्ठश्च कालकण्ठः कपालधृत् ।
उमापतिश्च नवमः सुषुम्नावज्रशिष्टके ॥ २८ ॥

चतुर्थं च तृतीयं च मायानलसमन्वितम् ।
पिङ्गलावज्रकवाटं रहस्यमिदमुत्तमम् ॥ २९ ॥

गोक्षीरसदृशप्रख्यं शुद्धस्फटिकसन्निभम् ।
महेश वरदं ह्येतद्रहस्यं वज्रकवाटकम् ॥ ३० ॥

कुब्जकान्तं चतुर्थं संवर्तदग्निमथोयुतम् ।
मायोर्ध्वं तु संस्थितं च बिन्दुनादसमन्वितम् ॥ ३१ ॥

गान्धार्या वज्रकवाटं तु तवस्नेहात्प्रकाशितम् ।
त्रयोदशं वामस्तम्भं शक्रचापसमप्रभम् ॥ ३२ ॥

कुब्जकन्तु द्वितीयं तु दक्षिणं स्तम्भमेव हि ।
सन्ध्याम्बुद समप्रख्यमीषच्छशि समप्रभम् ॥ ३३ ॥

योनिमण्डनिभं पञ्च पञ्चमस्वरमेव हि ।

भ्रमरं षष्ठमेवं तु तव पोर(ट?) समप्रभम् ॥ ३४ ॥

कुब्जकोटप्रभं विद्यादेकारस्वरभूषितम् ।
भिन्नाञ्जनसमप्रख्यं सर्वसिद्धिकरं परम् ॥ ३५ ॥

p. 322)

कुब्जकान्तं द्वितीयं तु मायानलसमन्वितम् ।
बिन्दुमस्तकमाक्रान्तमतसी कुसुमप्रभम् ॥ ३६ ॥

पितृपादो ह्येकपादोऽनेकपादेकनेत्रकम् ।
उग्रः शान्तः सुशान्तश्च पिनाकी त्रिदशेश्वरः ॥ ३७ ॥

वज्रकवाटगन्धार्थं तव स्नेहादुदाहृतम् ।

इति कालोत्तरे कज्रकवाटलक्षणपटलः एकषष्टितमः ॥ ६१ ॥

॥ श्रीः ॥

ईश्वर उवाच-

हस्तिजिह्वाकवाटं तु प्रवक्ष्यामि समासतः ।
चतुर्थस्य चतुर्थं तु जातवेदसमन्वितम् ॥ १ ॥

उपरिष्टाच्चतुर्थोनि भूषितं बिन्दुसंयुतम्।
वज्रकवाटमेकं तु यत्सुरैरपि दुर्लभम्॥ २॥

चतुर्थस्य प्रथमं वत्स बिन्दुशेखरभूषितम्।
कवाटस्तम्भवामे तु इन्द्रक्रोपकसन्निभम्॥ ३॥

मार्ताण्डोदयसंकाशं कवाटबीजं सुदुर्लभम्।
चतुर्थस्य द्वितीयं तु बिन्दुशेखरभूषितम्॥ ४॥

सिन्दूरसदृशप्रख्यं दक्षिणस्तम्भमुच्यते।
भ्रमरयोनी इमौ वत्स ते च द्वौ परिकीर्तितौ॥ ५॥

अशोकबन्धूकनिभौ तेऽथ द्वौ वर्णितावुभौ।
अथ वै पुटबीजन्तु बिन्दुशेखरभूषितम्॥ ६॥

गोक्षीरधवलप्रख्यं वर्णितं परिकीर्तितम्।
चतुर्थादि प्रयोक्तव्यं त्रयोदशसमन्वितम्॥ ७॥

p. 323)

बिन्दुशेखरमारूढं रक्तबुद्बुदसन्निभम्।
कोशं वै हस्तिजिह्वायाः कवाटस्य हि षण्मुख॥ ८॥

अथोत्तरं तु तो तौ तु विद्युत्पावकसन्निभौ ।
पूषाकवाटं वक्ष्यामि येन मृत्युञ्जयं भवेत् ॥ ९ ॥

पञ्चमस्य चतुर्थं तु अथ वह्निसमायुतम् ।
ऊर्ध्वं वै प्रभुशक्तिस्तु बिन्दुनाद समन्वितम् ॥ १० ॥

सूर्यकोटिसमप्रख्यं सर्वमन्त्राग्रनायकम् ।
वज्रकवाटमेवं तु सर्वमृत्युविनाशनम् ॥ ११ ॥

पञ्चमस्य प्रथमं च मध्ये बिन्दुविभूषितम् ।
पूषाया वामस्तम्भः स्याद्बिसिनीपत्रसन्निभम् ॥ १२ ॥

पञ्चमस्य तृतीयं तु बिन्दुशेखरभूषितम् ।
दक्षिणस्तम्भमित्याहुः शुद्धं मरतकप्रभम् ॥ १३ ॥

उत्तरोर्ध्वं तु यो विद्यादथोत्तरं तु होमयेत् ।
रक्तोत्पलनिभप्रख्यं मितं नीलोत्पलस्य तु ॥ १४ ॥

भ्रमरयोनिनिभौ द्वौ तु भिन्नाञ्जनसमप्रभम् ।
फं फट् तौ द्वौ पटकोशौ तुषाररजतप्रभौ ॥ १५ ॥

वज्रकवाटमाख्यातं वै लोचने यशस्विनी ।

विधानं तु प्रवक्ष्यामि वत्स त्वं शृगु सांप्रतम् ॥ १६ ॥

कवाटस्तम्भं समाख्यातं वामस्तम्भमुदाहृतम् ।
जारं बिन्दुशिखाक्रान्तं तृतीयस्वरसंयुतम् ॥ १७ ॥

बिन्दुशेखरपीठं वा रजपाकरथ प्रभम् ।
लले भ्रमरयोनी द्वौ अतसी भृङ्गसन्निभम् ॥ १८ ॥

p. 324)

पञ्चदशं षोडशं च शङ्खशुद्धिसमप्रभम् ।
पुटकोशौ समाख्यातौ महदग्रौ च सिद्धिदौ ॥ १९ ॥

अलं वज्रकवाटं तु प्रवक्ष्यामि समासतः ।
अनिलाच्चतुर्थं संगृह्य हुताशनसमन्वितम् ॥ २० ॥

उपरिञ्जनशक्तिस्तु शिवनारायणान्वितम् ।
सूर्यायुत समप्रख्यं अलंवज्रकवाटकम् ॥ २१ ॥

वरुणं बिन्दुसमाख्यातं वामस्तम्भमुदाहृतम् ।
शुद्धस्फटिकसंकाशं धूमज्योतिस्वरूपिणम् ॥ २२ ॥

अमृताद्द्वितीयं बीजं तु शङ्खकुन्देन्दु सन्निभम् ।

बिन्दुमस्तकमाक्रान्तं दक्षिणस्तम्भमुच्यते ॥ २३ ॥

अमृतं गर्भसंयुक्तं उत्तरोत्तरमुच्यते ।
द्वादशस्वरसंयुक्तं अथोत्तरमेव च ॥ २४ ॥

शङ्खकुन्दसमप्रख्यं उभौ वर्णौ च कीर्तितौ ।
त्रयोदशान्तदन्तश्च भ्रमरयोनी प्रकीर्तितौ ॥ २५ ॥

मृणालं गोक्षीरवर्णौ वाग्बीजं तु प्रकीर्तितौ ।
विसर्गकोशमाख्यातं तदूर्ध्वं कोकिलोद्भवम् ॥ २६ ॥

विसर्गममृतं ज्ञेयं मृत्युवञ्जनमुत्तमम् ।
वरुण रूपं तु * * अमृताधारमुच्यते ॥ २७ ॥

मुक्तानीहारनिभौ द्वौ बीजस्य च षण्मुख ।
वज्रकवाटमाख्यातं अलंबुषायाः प्रकीर्तिताः ॥ २८ ॥

कुहवज्रकवाटं तु सांप्रतं शृणु षण्मुख ।
विचित्रं विस्तरं सूक्ष्मं परं विश्वस्य साधनम् ॥ २९ ॥

p. 325)

संप्रदायं परह्येतन्मृत्युवञ्जनमुत्तमम् ।

षष्टमं नारसिंहस्य त्रैलोक्यं विस्मयं परम् ॥ ३० ॥

शडबालमथो युक्तं मयाचोपरि भूषितम् ।
शिखाहरि हराचोक्तन्द्रुतचामीकरप्रभम् ॥ ३१ ॥

सप्तमस्य कवाटं तु यत्पुरैरपि दुर्लभम् ।
पान्तं बिन्दुसमायुक्तं किञ्जल्कसदृशप्रभम् ॥ ३२ ॥

वामे कवाटस्तम्भं तु हरिद्रारससन्निभम् ।
लान्तान्तं वा विजानीयात्सर्वमृत्युविनाशनम् ॥ ३३ ॥

राकारस्वरसंयुक्तं सौभाग्येन समन्वितम् ।
उत्तरोत्तरमेवाहुः अङ्गुष्ठसदृशप्रभम् ॥ ३४ ॥

एकारस्वरसंयुक्तं षट्चत्वारिंश एव वा ।
पिण्डारकसमप्रख्यं अधरोत्तरमुच्यते ॥ ३५ ॥

भ्रमरयोनिं बिन्दुमस्तक एव च ।
मञ्जिष्ठा कर्णिकाराभौ रक्तौ बीजस्य सन्निभौ ॥ ३६ ॥

विसर्गादि विसर्गं च पुरकोशौ प्रकीर्तितौ ।
गोरोचनानिशाभौ च समासात्परिकीर्तिता ॥ ३७ ॥

कुहवज्रकवाटं तु आख्यातमसुवरावृतम् ।
शङ्खिनीवज्रकवाटं शृणु षण्मुख तत्त्वतः ॥ ३८ ॥

अतिगुह्यं परं सूक्ष्मं रहस्यं स्वप्रकाशितम् ।
ईशवर्गाद्वितीयं तु कृशानुभयसंयुतम् ॥ ३९ ॥

मिथ्याचोर्ध्वं तु संवेष्ट्यं प्रलयस्थिति संयुतम् ।

p. 326)

श्वेतपङ्कजसंकाशं हिमकुन्देन्दुसप्रभम् ॥ ४० ॥

मेढ्रस्यैव तु मूले तु घटयेत्सुसमाहितः ।
जीवबिन्दुसमायुक्तं वामस्तम्भमुदाहृतम् ॥ ४१ ॥

जीवदीर्घ समायुक्तं दक्षिणस्तम्भमुच्यते ।
* * * * निभौ द्वौ तु वर्णतः परिकीर्तितौ ॥ ४२ ॥

एकादशस्वरसंयुक्तं शुक्लवर्णौ प्रकीर्तितौ ।
जीवो वा द्वादशोपेत शशिवर्णः प्रकीर्तितः ॥ ४३ ॥

ऊर्ध्वोत्तरं पूर्वं स्यात् परश्चाधरोत्तरम् ।

योनिभ्रमरबीजन्तु त्रयोदश चतुर्दश ॥ ४४ ॥

इन्द्रायुधसमप्रख्यौ उभौ तौ वर्णकीर्तितौ ।
शं शं पुटहो हं शं हि शङ्खकुन्दसमप्रभौ ॥ ४५ ॥

शङ्खिनीवज्रकवाटमाख्यातं तव षण्मुख ।
संघट्य च विधानेन पूर्वं संवत्सरं गुह ॥ ४६ ॥

पश्चान्मृत्युञ्जयं योगं अभ्यसेद्वत्स राष्ट्रकम् ।
अजरामरत्वमाप्नोति इति सत्यं षडानन ॥ ४७ ॥

इति कालोत्तरे वज्रकवाटलक्षणपटलो द्विषष्टितमः ॥ ६२ ॥

॥ श्रीः ॥

ईश्वर उवाच-

वज्रकवाटैः संघट्य दशद्वारेषु धीमतः ।
कवाटस्तम्भैरुत्तैर्योनिभ्रमरमेव च ॥ १ ॥

पटकोशैः समस्तैश्च अव्यग्रेण षडानन ।

p. 327)

पश्चान्मृत्युञ्जयं योगमभ्यसेदेकमानसः ॥ २ ॥

एकान्ते निर्जने देशे वातातपविवर्जिते ।
न दंशमशकाकीर्णे सर्वोपद्रववर्जिते ॥ ३ ॥

सुदृढे मालिकायां तु प्रासादभवनेषु वा ।
अपवर्गे शुभे श्लिष्टे संकटे सुमनोहरे ॥ ४ ॥

पूषैकशयने शुभ्रे दिव्ये समदिने शुभे ।
आस्तीर्यास्तरणे दिव्ये हस्तमात्रायते शुभे ॥ ५ ॥

विस्तारं रत्निमात्रं तु पुरुषैकसुखासने ।
पूर्वाह्णे प्राङ्मुखो भूत्वा मध्याह्ने चोत्तरामुखः ॥ ६ ॥

अपराह्णे पश्चिममुखो भूत्वा योगं समभ्यसेत् ।
स्वस्तिकं चासनं बद्ध्वा पद्मासनमथापि वा ॥ ७ ॥

समग्रीवशिरो भूत्वा समोदरहृदि स्थितिः ।
समपार्श्वोभ्युरश्चैव दन्तैर्दन्तान्न संस्पृशेत् ॥ ८ ॥

गजजिह्वां तु कृत्वा तु नासाग्रमवलोकयेत् ।
कपालाङ्गद्व्यङ्गुलत्वादधस्ताच्चक्रमुत्तमम् ॥ ९ ॥

इदं चक्रं न जानन्ति विष्णुब्रह्मादयः सुराः ।
ऋषिविद्याधरैः सिद्धैः किं पुनः क्षुद्रमानसैः ॥ १० ॥

श्वेतपद्मं परं शुद्धं षोडशैर्दलशोभितम् ।
कर्णिकाकेसरोपेतं वितस्तिमात्रं तु विस्तरम् ॥ ११ ॥

कर्णिकाचतुरङ्गुल्यं अङ्गुलोत्सेधमुत्तमम् ।
अतिगुह्यं परं सूक्ष्मं मृत्युनाशनबीजकम् ॥ १२ ॥

प्रवक्ष्यामि सुखोपायं शृणु षण्मुख तत्त्वतः ।

p. 328)

अष्टादशमहाबीजं शङ्खकुन्देन्दुसन्निभम् ॥ १३ ॥

प्रलयानलसंयुक्तं प्रलयोदरसंयुतम् ।
त्रयोदशान्तसंयुक्तं षष्ठेन तु समन्वितम् ॥ १४ ॥

बिन्दुनादसमायुक्तं मृत्युनाशनमुत्तमम् ।
एतदेव परं ब्रह्म एतदेव परं शिवम् ॥ १५ ॥

एतन्मृत्युञ्जयं बीजं रहस्यं परमद्भुतम् ।

तस्य सारं प्रवक्ष्यामि मृत्युनाशनमेव च ॥ १६ ॥

द्वात्रिंशदुद्धृतं वत्स प्रतिलोमं षडानन ।
संहाररुद्रसंयुक्तं कृशानुन्तत्सुखायतम् ॥ १७ ॥

प्रलयोदकसंयुक्तं त्रयोदशान्तेन संयुतम् ।
बिन्दुनादशिखायुक्तं तस्याधारमुदाहृतम् ॥ १८ ॥

खगौ पूर्वदले न्यस्य खागभ्रशदले न्यसेत् ।
खिङ्गिं चाग्निदले न्यस्य खीगी च वितयैर्न्यसेत् ॥ १९ ॥

खुगुद्वै वैवस्वतदले खुगूद्वै भृङ्गराजके ।
खृगृद्वै तु निर्-ऋतदले खृगृसुग्रीवगोचरे ॥ २० ॥

ख्लृग्लृद्वौ बाण-इवे ख्लृग्लृ शेषदले न्यसेत् ।
खे गे वायुदले न्यस्य खै गै वा मुख्यदले न्यसेत् ॥ २१ ॥

खो गो सोमदले न्यस्य खौ गौ अतिथिगोचरे ।
खं गं ईशदले न्यस्य खः गः जयदले न्यसेत् ॥ २२ ॥

सर्वे बिन्दुसमायुक्ताः सर्वे नादसमन्विताः ।
विसर्गौ विसर्जनीयौ स राजा देशिकोत्तमः ॥ २३ ॥

सर्वे भृङ्गनिभा वत्स आधाराधेयमेव तु ।

p. 329)

अतसीकुसुमप्रख्यं विशेषं बीजमीश्वरम् ॥ २४ ॥

मृत्युञ्जयं श्वेतवर्णं उच्चारे श्वेतवर्णकम् ।

ह्रस्वाश्चेति निभा वत्स दीर्घा मरतकप्रभाः ॥ २५ ॥

विसर्गं गोक्षीरधवलं शङ्खकुन्देन्दुसप्रभम् ।

शशिनी संपुटी कृत्य बिन्दुयुक्तेन षण्मुख ॥ २६ ॥

यवर्गस्य चतुर्थं तु कालानलसमन्वितम् ।

श्वेतपद्मोपरिस्थं तु पूर्णचन्द्रसुशोभनम् ॥ २७ ॥

अथ पद्मोपरिष्टात्तु षट्पदं श्यामवर्णकम् ।

अतिकृष्णं रोमकूपे तु मृत्युं पलितनाशनम् ॥ २८ ॥

म्न्त्रोदरं तु क्षेत्रज्ञं मृत्युं पलितनाशनम् ।

मन्त्रोदरं तु क्षेत्रज्ञं नयेद्धृल्लेखया बुधः ॥ २९ ॥

पद्मकोटरमध्ये तु बीजकोटरमध्यमे ।

श्वेतं समुद्रफेनाभं सततं चिन्तयेद्बुधः ॥ ३० ॥

त्रिसन्ध्यमेकं चतुर्यामे चतुर्घटिकमभ्यसेत् ।

* * चतुष्टये जीवे वलीपलितवर्जितः ॥ ३१ ॥

द्विरष्टवर्षाकृतिर्भूत्वा विचरेत्कामदेववत् ।

घटिकाद्वयं त्रिसन्ध्यं तु ध्यायेन्मरतकप्रभम् ॥ ३२ ॥

आत्मानं त्रयसंवेश्य संपुटीकृत्य चेन्दुना ।

पुनर्वै रोमकूपे तु मयूरगलवद्भवेत् ॥ ३३ ॥

अमृतेन रोमकूपे तु पूरयेद्देशिकोत्तमः ।

त्रिसन्ध्यायां द्विनाडीं तु चतुर्थामे षडानन ॥ ३४ ॥

* * * घटिकान्यसेन् मृत्युनाशनमुत्तमम् ।

p. 330)

वज्रकवाटे घट्टयित्वा दशवारं समा भवेत् ॥ ३५ ॥

हृत्सरोरुहमध्ये तु पुरुषं पञ्चविंशकम् ।

कपालपात्रे चानीय वर्णिके * * * * * ॥ ३६ ॥?

अमृताख्ये परिजीने उदरे मृत्युनाशने ।

निक्षिप्य संपुटे धीमान् पूरयित्वा समाहितः ॥ ३७ ॥

तत्रैव स्पर्शनं जीर्णं मन्त्रमुद्धार्य वै गुह ।
चतुर्थे * * * * * मायान्निर्बिन्दुसंयुतम् ॥ ३८ ॥

मयूरगुलिकप्रख्यं नीलजीमूत सप्रभम् ।
युगपत्क्रमशो वापि पलीपलितनाशनम् ॥ ३९ ॥

स जीवेत् पञ्चसहस्रं तु द्विरष्टवर्षाकृतिः ।

इति कालोत्तरे वज्रकवाटलक्षणे कवाटरन्ध्रधारणपटलः त्रिषष्टि नमः ॥ ६३ ॥

॥ श्रीः ॥

ईश्वर उवाच-

भ्रुवोर्मध्ये महापद्मं महारजतसप्रभम् ।
दलैः षोडशभिर्युक्तं प्रलयाग्निसमन्वितम् ॥ १ ॥

कल्पान्तानलसंयुक्तं कल्पान्तादित्यसंयुतम् ।
चतुर्दशसमोपेतं षष्ठेन तु समन्वितम् ॥ २ ॥

हरिहरसमायुक्तं कूटं वै मृत्युनाशनम् ।
कोटिसूर्यसमप्रख्यं महामाणिक्यसन्निभम् ॥ ३ ॥

कर्णिकायां न्यसेद्देवं परमादित्यरूपकम् ।
विष्णुं ब्रह्मागमेवाहुः शिवमाहुर्मनीषिणः ॥ ४ ॥

p. 331)

अतिरहस्यं परं गुह्यं परमात्मस्वरूपकम् ।
आर्य आत्मा जगतः तस्थुषश्च परं महत् ॥ ५ ॥

सर्वेषामिडादिदेवानां आदित्यादित्य उच्यते ।
सर्वं माहेश्वरं रूपं हितमादित्यरूपकम् ॥ ६ ॥

वाञ्छितं चाभ्यसेद्वत्स मृत्युनाशनमुत्तमम् ।
प्रजापतिरष्टमं बीजं हुतभुग्बिन्दुसंयुतम् ॥ ७ ॥

अगस्त्योदकसंयुक्तं स्थितिसंहारसंयुतम् ।
अनाधारमिदं बीजं सर्वदुःखविनाशनम् ॥ ८ ॥

संपुटीकृत्य शशिना यच्चतुर्थेन धीमता ।
मायाग्निबिन्दुसंयुक्तं संपुटीकृत्य चिन्तयेत् ॥ ९ ॥

षडब्दमभ्यसेद्वत्स त्रिकालं नित्यमेव च ।
षष्टिर्घटिकयोगीन्द्रः कालस्तदवलम्ब्य तु ॥ १० ॥

दलेषु बीजान् वक्ष्यामि समासाच्छृणु षण्मुख ।
पूर्वादारभ्य विधिना न्यसेत्सर्वान्समाहितः ॥ ११ ॥

द्वौ द्वौ चैकदले न्यस्य अव्यग्रेण तु सुव्रत ।
अभिमुखं मन्त्रराजस्य स्थाप्य च ध्याययेद्गुह ॥ १२ ॥

चजन्यसेद्विन्दुदले मार्ताण्डोदय सप्रभम् ।
चाजान्यसेद्भृङ्गदले किञ्जल्कसदृशप्रभौ ॥ १३ ॥

चिजिन्यसेदग्निदले काश्मीरसदृशप्रभौ ।
चीजीन्यसेद्वितथे तु बालार्कसदृशप्रभौ ॥ १४ ॥

छुजु वरुणदले न्यस्य बन्धूककुसुमप्रभौ ।
छूजू शेषे तु विन्यस्य काकवर्णसमप्रभौ ॥ १५ ॥

p. 332)

छे जे वायुदले न्यस्य भृङ्गवर्णसमप्रभौ ।
छै जै बल्लाटके न्यस्य कुजवर्णसमप्रभौ ॥ १६ ॥

छोजो सोमे तु विन्यस्य नन्द्या वर्तसमप्रभौ ।
छौ जौ अदितौ विन्यस्य नीवारसदृशप्रभौ ॥ १७ ॥

छं जमीशे तु विन्यस्य मुक्ताफलसमप्रभौ ।
छः जः जटेन्यसेद्द्वौ तु शुद्धस्फटिकसन्निभौः ॥ १८ ॥

एतत्सर्वं न्यसेन्मनाङ्न्यस्य ध्यायेन्मुहुर्मुहुः ।
इन्द्रं नासापुटीकृत्य ध्यायेन्नित्यमतन्त्रितः ॥ १९ ॥

पूरयित्वा तु विधिवत् कुम्भकेन तु भावयेत् ।
भावयेत्तु पृथङ्मन्त्री मृत्युं जीयान्न संशयः ॥ २० ॥

तद्बीजममृतं ध्यात्वा रोमकूपेषु भृङ्गवत् ।
सम्यग्गं यं दशद्वारं वापितान् संयह्लुं प्रति ॥ २१ ॥

मयूरगलकप्रख्यं अमृतं भृङ्गसन्निभम् ।
रोमकूपेषु सर्वेषु पूरयित्वा तु चिन्तयेत् ॥ २२ ॥

त्रिसन्ध्यं षट्च षण्णाडीं चतुर्थं वामके गुह ।
अव्यग्रेणैव मनसा भावयेद्वत्सराष्ट्रकम् ॥ २३ ॥

पलितस्तम्भयोगन्तु रहस्यं न प्रकाशितम् ।

रविचन्द्राग्निमध्यस्थं पद्मस्योपरिकर्णिके ॥ २४ ॥

जीवेशं धारयेन्नित्यं घटिका सप्त एव च ।
घटिकाद्वयं दलं बीजैः क्रमाद्वर्णं सदैवतम् ॥ २५ ॥

रुद्रांश्चैकादश चैव द्वादशादित्या एव च ।
वसवश्चाष्टभिश्चैव अश्विनौ द्वौ यथाक्रमम् ॥ २६ ॥

p. 333)

अतिशुक्रं परं सूक्ष्मं आत्मतन्त्रं निवेशयेत् ।
सर्वे ते धवलप्रख्यां मृत्युनाशनकर्मणि ॥ २७ ॥

सर्वे ते भृङ्गवर्णास्तु पलितस्तम्भे षडानन ।
शङ्खकुन्देन्दुधवलं मोक्षार्थं चिन्तयेत्सदा ॥ २८ ॥

वश्ये तु रक्तवर्णं स्यादाकर्षेण तुश्यामकम् ।
विद्वेषणे धूम्रवर्णं उच्चाटे कृष्णवर्णकम् ॥ २९ ॥

स्तम्भे तु पीतवर्णं स्यात् मोहने कालवर्णकम् ।
छेदने शिक्रोशिनिभं चाष्टवर्णं तु भेदने ॥ ३० ॥

आवेश्यामवर्णकं तु सेनास्तम्भे तु रक्तकम् ।

ज्वालामालासहस्रैश्च दाभश्चन्त्रुंमाहवे ॥ ३१ ॥

कालाग्नीव संचिन्त्य शत्रुसेनाविनाशिनी ।
मस्तके शास्त्रोभ्यशिखाबन्धन्तु रज्जुना ? ॥ ३२ ॥

घृंक्षेन्नाशेन वै वत्स सदाक्रान्ते हृदि स्थितिः ।
आकर्षणे प्रयोगोयं वश्ये वादेन घट्टयेत् ॥ ३३ ॥

आग्नेयेन तु वश्यं स्यादाकर्षो वायुवह्निना ।
उच्चाटने विशेषेण वायव्येन षडानन ॥ ३४ ॥

वायुवह्निसमायोगाद्विद्वेषो याति निश्चयम् ।
स्तम्भे माहेन्द्रमेवोक्तं मोहे वायव्येशानतः ॥ ३५ ॥

वह्निमाहेन्द्रसंयोगादाहवे जयमाप्नुयात् ।
अग्निमण्डलमध्यस्थं तन्मध्येशक्रमण्डलम् ॥ ३६ ॥

त्रैलोक्यबीजं तन्मध्ये परिवारैश्च संयुतम् ।
ज्वालामालासहस्रैश्च दहेत्परचमूं गुह ॥ ३७ ॥

p. 334)

दशगुणं महासेन रथवाजिगजानपि ।

विजित्वा परसेनां तु सुपुरे सुखमेधते ॥ ३८ ॥

इति कालोत्तरे वज्रकवाटलक्षणे भ्रुवोर्मध्यधारणसेनास्तम्भपटलश्चतुः षष्टितमः ॥ ६४ ॥

॥ श्रीः ॥

ईश्वर उवाच-

तालुरन्ध्ररुतं चान्नं षोडशैर्दलशोभितम् ।
कर्णिकाकेसरोपेतं तुषाररजतप्रभम् ॥ १ ॥

वितस्तिमात्रविस्तारं कर्णिकाचतुरङ्गुलम् ।
उत्सेधं कर्णिकायां तु ईषच्चामीकरप्रभम् ॥ २ ॥

तत्रमध्ये स्थितं देवं शङ्खचक्रगदाधरम् ।
ध्यायेन्नारायणं देवं शङ्खगोक्षीरसन्निभम् ॥ ३ ॥

अङ्गुष्ठमात्रमचलं निर्विकल्पं निरञ्जनम् ।
सर्वज्ञं सर्वगं शान्तं सर्वतोक्षिशिरोमुखम् ॥ ४ ॥

प्राजापतेर्द्वादशं गृह्य कल्पान्तेन समन्वितम् ।
कल्पोदकसमायुक्तं स्थितिसंहार संयुतम् ॥ ५ ॥

साक्षादमृतरूपं तु नारायणमनामयम् ।
स्थितिं रूपं परं ह्येतत् सोमरूपमिदं परम् ॥ ६ ॥

कर्णिकायां न्यसेद्देवं सर्वकारणकारणम् ।
मृत्युञ्जयमिदं वत्स सतताभ्यासयोगतः ॥ ७ ॥

तस्याधारं प्रवक्ष्यामि तत्त्वतः शृणु षण्मुख ।
प्रजापतेस्त्रयोदशं गृह्य द्विमात्रेण च संयुतम् ॥ ८ ॥

p. 335)

अत्युष्णेन समोपेतं महारोगसमन्वितम् ।
अतिशीतेन संयुक्तं रुद्रविष्णुसमन्वितम् ॥ ९ ॥

अमृताधारमेवं तु साक्षाद्गरुडरूपिणम् ।
विषसंहरणं बीजं स्थावरं जङ्गमं च यत् ॥ १० ॥

कृत्रिमं चोपवीतं च अन्नपानादियोजितम् ।
द्वौ कूटेन महासेन वासुकेर्विषनाशनम् ॥ ११ ॥

मूर्ध्नि च हृदि नाभौ च रेण्यै विषनाशनम् ।
कूटमुच्चार्य मतिमान् तिस्रोरेखास्तु कारयेत् ॥ १२ ॥

ओष्ठकेनादिविक्रम्य निर्विषं भवति क्षणात् ।
रात्रौ चाष्टोत्तरशतं जप्त्वा निश्शङ्कया जपेत् ॥ १३ ॥

विषान्तन्नाकृते देहे पिशाचभूतग्रहादिभिः ।
अभिमन्त्र्यान्नेन भोक्तव्यं पादं चैवोचिदंशकम् ॥ १४ ॥

सप्ताभिमन्त्रितं कृत्वा सुखजीर्णकृतं विषम् ।
परिवारं तस्य वक्ष्यामि सांप्रतं शृणु षण्मुख ॥ १५ ॥

ठड न्यसेदिन्द्रदले गोक्षीरसदृशप्रभौ ।
ठाडान्यसेद्भृङ्गवत्स बन्धूककुसुमप्रभौ ॥ १६ ॥

ठि डि न्यसेदग्निदले अशोककुसुमप्रभौ ।
ठी डी वितथे न्यसेद्भद्र अतसीकुसुमप्रभौ ॥ १७ ॥

ठु डु न्यसेद्याम्यदले विष्णुक्रान्तिसमप्रभौ ।
ठू डू न्यसेद्भृङ्गराज भृङ्गवर्णसमप्रभौ ॥ १८ ॥

ठृ डृ न्यसेन्नैर्-ऋत्यां तु नीलजीमूत सप्रभौ ।
ठॄ डॄ न्यसेत्कर्णिकार समप्रभौ ? ॥ १९ ॥

p. 336)

ठ्लृ ड्लृ न्यसेद्वारुण्यां तु गोक्षीरसदृशप्रभौ ।
ठ्लॄ ड्लॄ न्यसेच्च शेषे तु माञ्जिष्ठ सदृशप्रभौ ॥ २० ॥

ठे डे न्यसेन्मारुते तु नीलोत्पल समप्रभौ ।
ठै डै न्यसेन्मुख्ये तु पाटलीकुसुमप्रभौ ॥ २१ ॥

ठो डो न्यसेद्वै सोमे तु कुन्दपुष्प समप्रभौ ।
ठौ डौ न्यसेदेदि तौ तु जपाया कुसुमप्रभौ ॥ २२ ॥

ठं डं न्यसेदीशे तु नन्द्यावर्त समप्रभौ ।
ठः डः द्वे द्विन्यसेज्जये जपाकुसुम सप्रभौ ॥ २३ ॥

च सप्तमं वरं बीजं मृत्युवञ्चनकरं परम् ।
सुपूर्णं चन्द्रवत्साक्षाल्लसच्चन्द्रं षडानन ॥ २४ ॥

आदित्यबिम्बबीजा हि प्रशंसन्ति मनीषिणः ।
तस्माद्वै वर्तुलाकारं च शब्दस्य षडानन ॥ २५ ॥

ऋग्यजुः सामाथर्वमयं बिम्बं बीजं षडानन ।
तत्रस्थं पुरुषो यजुर्भासस्समुदाहृतम् ॥ २६ ॥

शुचोरत्नि समुद्दिष्टं तद्बीजं परमेश्वरीम् ।
ब्रह्मा हरिर्हरश्चैव त्रयस्त्रयोऽस्त्रं योजयेत् ॥ २७ ॥

अग्नित्रयं समुद्दिष्टं भूर्भुवस्स्वलोक हि ।
सवनत्रयं त्रिसन्ध्यं च त्रिगुणं च त्रिवर्गकम् ॥ २८ ॥

अग्निष्टोमादिकं सर्वं जगत्स्थावरजङ्गमम् ।
तस्मात्सर्वप्रयत्नेन तद्बीजं चाभ्यसेत्सदा ॥ २९ ॥

संवत्सरान्तकं वत्स अभ्यसेदजरामरम् ।
जपं यानं प्रकर्तव्यं त्रिसन्ध्यं घटिकात्रयम् ॥ ३० ॥

p. 337)

संपूर्णकुम्भवत्तिष्ठेन्निर्वाणस्पर्शजीर्णकम् ।
एतद्द्वादशवद्वत्सरानभ्यसेच्च समाहितः ॥ ३१ ॥

लक्षद्वादशकं जीवेनात्र कार्या विचारणा ।
षोडशाब्दं चार्धरात्रे घटिकाष्टकमभ्यसेत् ॥ ३२ ॥

पूरकं कुम्भकं कृत्वा * चैकन्तु विसर्जयेत् ।
शाश्वते स्पर्शनं जीर्णं शनैश्शनैर्देशिकोत्तमः ॥ ३३ ॥

एवं शाश्वतयोगं तु संप्रदायेन विन्दति ।

इति कालोत्तरे पञ्चषष्टितमः पटलः ॥ ६५ ॥

॥ श्रीः ॥

ईश्वर उवाच-

कर्णरूपं महारूपं मृत्युनाशनमुत्तमम् ।
देवासुरमुनीन्द्राश्च यक्षविद्याधरादयः ॥ १ ॥

चारणाप्सरसः सिद्धाः गन्धर्वाः पन्नगादयः ।
सर्वे मृत्युं जयिष्यन्ति जपध्यानेन नित्यशः ॥ २ ॥

तत्र युक्तेन पद्मेन सदा कुम्भकपूरणात् ।
शङ्खकुन्दनिभप्रख्यं षोडशैर्दलकैर्युतम् ॥ ३ ॥

द्वादशाङ्गुलमात्रं तु विस्तारं पङ्कजस्य तु ।
नालं अष्टाङ्गुलं विद्यात् कर्णिका चतुरङ्गुलम् ॥ ४ ॥

कर्णिका केसरश्चैव द्रुतचामीकरप्रभम् ।
तस्य मध्ये महादेवं चतुर्वक्त्रं चतुर्भुजम् ॥ ५ ॥

त्रिनेत्रं शङ्खवर्णं तु चतुरङ्गुलमायतम् ।
पद्मकोटरमध्ये तु आसीनं परमेश्वरम् ॥ ६ ॥

p. 338)

अमृतरूपं परं दिव्यं सकलस्य हृदि स्थितम् ।
प्रजापतेः षोडशं गृह्य चण्डरुद्रसमन्वितम् ॥ ७ ॥

महाचण्डामलयुतं चण्डमारुतसंयुतम् ।
चण्डवारियुतं दिव्यं त्रयोदशान्त * * * ॥ ८ ॥

षष्ठेन तु समायुक्तं बिन्दुनादसमन्वितम् ।
अमृतकूटमिदं वत्स मृत्युनाशनमुत्तमम् ॥ ९ ॥

जपध्यानेन नित्यं हि श्रद्धाभक्तिसमन्वितम् ।
मृत्युंजयमवाप्नोति नात्र कार्याविचारणा ॥ १० ॥

आलस्यन्नरपशुभिः मृत्युं सर्वे जिघांसति ।
तस्मात्सर्वप्रयत्नेन कृतकूटं समभ्यसेत् ॥ ११ ॥

अमृतकूटबीजेन सर्वो मृत्युं जयिष्यति ।
तस्याधारं प्रवक्ष्यामि मृत्युवञ्चनकाम्यया ॥ १२ ॥

प्रजापतेः सप्तदशं संहारेण समन्वितम्।
प्रलयानलसंयुक्तं प्रलयानलसप्रभम्॥ १३॥

महासन समायुक्तं त्रयोदशान्त समन्वितम्।
षष्ठं त्रयोदशान्तं च सर्वकूटेषु योजयेत्॥ १४॥

वज्रकवाटलक्षणेषूक्तानुक्तेषु चैव हि।
बिन्दुनादं च षष्ठं च त्रयोदशान्तं तथैव च॥ १५॥

* लं वह्निं चलुलं च वारुणं योजयेद्बुधः।
शुद्धस्फटिकसंकाशं समु * * समन्वितम्॥ १६॥

अमृतबीजनिभं वत्स सर्वकालेषु चिन्तयेत्।
परिवारान् प्रवक्ष्यामि मृत्युनाशनकाङ्क्षया॥ १७॥

p. 339)

तथा चैन्द्रे दले * * * * * * * * प्रभौ।
तयोर्द्वयं भृशं न्यस्य सदा भद्र समप्रभम्॥ १८॥

तिथिविन्यसद्दग्नौ तथेषु किणिहीकुमुदप्रभौ।
क्रतुद्वयं यजेद्भृत्ये भृङ्गराजसमप्रभौ॥ १९॥

तू थू द्वयं याम्यं तु अतसी कुसुमप्रभौ ।
तृ थृ भृङ्गदले चैव विन्यसेच्चैव सन्निभौ ॥ २० ॥

तॄ थॄ द्वयकं चैव नैर्-ऋत्यां वा त्ऌ थ्ऌ ।
वारुण्यां तुर्हन्यस्य हंसवर्ण समप्रभौ ॥ २१ ॥

त्ॡ थ्ॡ शेषं तु विन्यस्य कुमुदाभौ प्रकीर्तितौ ।
ते थे वायुदले न्यस्य मयूरग्रीवसन्निभौ ॥ २२ ॥

तै थै मुखदले न्यस्य चणपुष्पसमप्रभौ ।
तो थो सोमदले न्यस्य श्वेतधुर्धूरसन्निभौ ॥ २३ ॥

तौ थौ अतिथिदले न्यस्य निर्गुण्डी कुसुम प्रभौ ।
तं थं ऐशानदले न्यस्य माधवीकुसुमप्रभौ ॥ २४ ॥

तः थः जलदले न्यस्य वनमालानिभप्रभौ ।
एवं सम्यङ्न्यसित्वा तु मानसेन समाहितः ॥ २५ ॥

हंसकुन्देन्दुधवलं मन्त्रराजमनुस्मरन् ।
कवाटान् सम्यग्घट्टयित्वा संपुटीकृत्य चेन्दुना ॥ २६ ॥

त्रिकाले तु स्मरेन्नित्यं घटिका षट्षडानन ।
अर्धरात्रेण घटिकान्तं नयेत्सुसमाहितः ॥ २७ ॥

निच्छिद्रं संपुटीकृत्य सूर्यकुम्भं तु कुण्ठयेत् ।
अन्यद्भृङ्गनिभं ध्यात्वा सकृष्णेन तु धूपयेत् ॥ २८ ॥

p. 340)

रोमकूपेषु सर्वेषु अमृतेनैव प्लावयेत् ।
पठित स्तम्भभोगन्तु त्रिदशैरपि दुर्लभम् ॥ २९ ॥

अष्टादशसंवत्सरानेकभागेन भावयेत् ।
लक्षमष्टादश संवत्सरं जीवति नात्र संशयः ॥ ३० ॥

नागबलं लभेद्धीमान् द्विरष्टवर्षमयं त्विति ।
बिन्दुना संपुटीकृत्य मन्त्रराजमनुस्मरेत् ॥ ३१ ॥

गोक्षीरधवलं सौम्यं प्रत्यहं तु त्रिकालतः ।
नासिकाभ्यां पूरयेत्तु कुम्भकं कर्णरूपके ॥ ३२ ॥

निर्वाणे जीर्णं सततं स्पर्शं सर्वं षडानन ।
सुषुम्नान्तर्गतं नित्यं शाश्वतं जीर्णयेद्गुह ॥ ३३ ॥

शिवयोगमिदं दिव्यं रहस्यं न प्रकाशितम् ।
क्षुद्दाहं नश्यते शीघ्रं श्रमं तस्य न विद्यते ॥ ३४ ॥

कुम्भवत्तिष्ठते * * * * र्णेषु न विद्यते ।
वामायामभ्यसेद्देवं अमृतमग्नेस्तु स्रावयेत् ॥ ३५ ॥

यामं यामार्धमेवं तु मन्त्रराजमनुस्मरेत् ।
सुभुक्तवत्तिष्ठते वत्स अष्टभासन्न संशयः ॥ ३६ ॥

क्षुत्प्रीतिकारयोगं तु योगिना संप्रकीर्तितम् ।
इडायां पूरयेत्कूपे मन्त्रराजेन धीमतः ॥ ३७ ॥

अमृतं स्रावयेदग्नौ कुण्डल्यान्ते तु सुव्रत ।
मासमेकं प्रयोगेण क्षुत्तृष्णानां तु नाशयेत् ॥ ३८ ॥

अष्टौ तु चिन्तयेत्सत्यं मन्त्रराजेन संयुतम् ।
आत्मा वै संपुटीकृत्य ज्योतिर्मण्डलमध्यमे ॥ ३९ ॥

p. 341)

सर्व सूर्य इव ध्यायेन्निद्रानिर्वृतिमाप्नुयात् ।
राजसं तामसं त्यज्य सत्य(त्त्व?) मेकेन वर्तते ॥ ४० ॥

अक्ष्णोर्वै मन्त्रराजे तु घटिकाः पञ्च भावयेत्।
अक्षिमण्डल मध्ये तु भास्करं परमं स्मरेत्॥ ४१॥

जाग्रमेतद्भवेत्सर्वं स्वप्नं सुषुप्तिनाशनम्।
निद्रानिर्वृतियोगोयं पुरुषात्ममिदं परम्॥ ४२॥

क्षुन्निद्रापायते नित्यं योगविघ्नकरौ हितौ।
स्वप्नेन्द्रियं प्रवर्तेत तस्मिन्निद्रां निरोधयेत्॥ ४३॥

प्रधानेन्द्रियं हि रक्षेत यस्मात्तस्मिन्निरोधयेत्॥
निद्रामूलं सर्वदुःखं क्षुन्मूलं सर्वदुःखकम्॥ ४४॥

काममूलं विनाशं हि कामाद्द्वेषो भविष्यति।
द्वेषात्क्रोधात्समुत्पन्नं तस्मान्नष्टौ न संशयः॥ ४५॥

सत्यं यशस्तपोदानं बलं शौचं शिवार्चनम्।
ध्यानं जपः समाधिश्च क्रोधान्नश्यति तत्क्षणात्॥ ४६॥

कामक्रोधं * * * * * मोण्डभंतथैव च।
आक्रोशालस्यमसत्यं हि रक्षा वै शून्यमेव च॥ ४७॥

क्षुधा निद्रा च मात्सर्यं मोहाद्द्वेष्यश्च स्नेहिताः।

तर्कं च सर्वकालेषु वर्जयेत् षोडश गुह ॥ ४८ ॥

इति कालोत्तरे वज्रकवाटलक्षणे कर्णरूपधारणाक्षुत्पिपासानिद्रानिवृत्तिपटलः षष्टितमः ॥

६६ ॥

p. 342)

॥ श्रीः ॥

ईश्वर उवाच-

हृत्सरोरुहमध्ये तु भावयेदमृतनायकम् ।

हृदये सर्वमर्त्यानां क्षेत्रज्ञस्तत्र तिष्ठति ॥ १ ॥

पुर्यष्टकसमायुक्त मधश्चोर्ध्वं च गच्छति ।

शब्दः स्पर्शश्च रूपं च रसोगन्धस्तथैव च ॥ २ ॥

मनोहंकारबुद्धिश्च पुर्यष्टकमिति स्मृतम् ।

पुर्यष्टके शरीरं तु क्षेत्रज्ञस्य षडानन ॥ ३ ॥

चतुर्विंशतितत्त्वानां पुरुषो नायको भवेत् ।

पञ्चविंशतिमेवाहुः सर्वशास्त्रेषु पण्डितः ॥ ४ ॥

पुरुषः पुद्गलो धीमान् पशुर्यज्ञपंचविंशकम् ।

क्षेत्रज्ञो भोगभोक्तात्मा चेतनो देहिलिङ्गकः ॥ ५॥

तथा लिङ्गशरीरेण हृदयेश्वर एव च।
जङ्घादि प्रकृतेर्नायकस्सुखदुःखात्मकः स्मृतः ॥ ६ ॥

वायुनाम ततः सप्तविंशत्क्षेत्रं षडानन।
दश प्राणैः समोपेतः दशद्वारेषु संचरेत् ॥ ७ ॥

भ्रुवोर्मध्ये मूर्ध्नि मध्ये कण्ठे चैवोरसी तथा।
हृदये नाभिमध्ये तु गुदेवृषणयोरपि ॥ ८ ॥

सं * * * * वृष्णे ऊरौ त्रिकटिकेषु च।
जङ्घे त्रिकटिके चैव गुल्पयोश्च पदान्तरे ॥ ९॥

तर्जनीपादाङ्गुष्ठयोर्मलमध्ये च मर्मिका।
सद्यो मरणमेवाहुः शास्त्रज्ञैः समुदाहृतः ॥ १० ॥

p. 343)

मर्माश्रयं कालान्तरे मरणन्नात्र संशयः।
कण्टकैर्वा प्रहरे * * * * मुष्टिभिर्नरान् ॥ ११ ॥

बाहुकूर्परयोर्मध्ये त्रिकटि मर्ममुदाहृतम्।

हस्तिजिह्वायां मूले तु स * * त मुदाहृतम् ॥ १२ ॥

तत्र तत्र * * * * * * * * * * ।
अमृतबीजं तत्र तत्र स्मरेदेकाग्रमानसः ॥ १३ ॥

समे मृत्युंजयं ह्येतत् हंसहंसेति कीर्तितम् ।
देहात्क्षेत्रज्ञो निष्क्रान्तः बहिराकाशमाश्रितः ॥ १४ ॥

पुनर्न प्रविशेच्चान्ते मरगान्तं विदुर्बुधाः ।
वज्रकवाटैः संघट्य सर्वद्वारेषु पण्डितः ॥ १५ ॥

पुनर्निष्क्रमणं नास्ति क्षेत्रज्ञस्तत्र तिष्ठति ।
तत्रैव संपुटीकृत्य हृत्सरोरुहकर्णिके ॥ १६ ॥

अमृतकोटरमध्ये तु क्षेत्रज्ञं क्षिप्त (प्र?) संपुटे ।
मृत्युस्तत्र न प्रविशेत् द्वारा भावात् षडानन ॥ १७ ॥

कवाटैः संछाद्य नवद्वारं तस्मान्मृत्युं न याति च ।
कवाटाच्छादनादेव संपुटादेव नित्यशः ॥ १८ ॥

तत्र मृत्युर्न प्रविशेत् पुन्निष्कामणं न च ।
मृत्युं पाशेन बद्ध्वा तु पुरुषस्य गले गुह ॥ १९ ॥

नयेद्यमस्य सदनं वर्म प्राणि सदा नरात् ।
तस्मात्सर्वप्रयत्नेन गृहेद्वज्रकवाटकैः ॥ २० ॥

गुरुप्रसादेन मतिमान् कवाटैश्चारयेत्सदा ।
अपवर्गे तु सुदृढे नरः कश्चित्स तिष्ठति ॥ २१ ॥

p. 344)

शत्रुचौरैर्भयं तत्र यमभयं च न विद्यते ।
तद्वज्रकवाटैराच्छाद्य तस्य मृत्युर्न विद्यते ॥ २२ ॥

तस्मात्मृत्युंजयं योगं हृदये सम्यगाचरेत् ।
सुश्वेतपङ्कजं दिव्यं षोडशदलशोभितम् ॥ २३ ॥

वितस्तिमात्रं विस्तारं हृदयं सर्वदेहिनाम् ।
कमलं प्रादेशमात्रं तु चतुरङ्गुलं कर्णिका ॥ २४ ॥

नालमष्टाङ्गुलं विद्यात् कर्णिकोत्सेधमङ्गलम् ।
सत्त्वं रजस्तमश्चैव सोमसूर्याग्निमण्डले ॥ २५ ॥

तेषु तु मध्ये स्थितं पुरुषं कराङ्गुष्ठस्य मात्रकम् ।
क्रियाशक्त्यधिष्ठितात्मा पुरुषं पञ्चविंशकम् ॥ २६ ॥

एकविंशत्परं बीजं अमृतं मृत्युनाशनम् ।
महासंहारसंयुक्तं महानलसमन्वितम् ॥ २७ ॥

महानीलसमायुक्तं महावारिसमन्वितम् ।
त्रयोदशान्तसंयुक्तं षष्ठस्वरसमन्वितम् ॥ २८ ॥

बिन्दुनादसमोपेतं अमृतकूटमिदं परम् ।
आत्मानं विन्यसेत्स्कन्दकूटबीजस्य कोटरे ॥ २९ ॥

संपुटीकृत्यशशिना चतुर्थं हंस संयुतम् ।
* * * जे * * * न पश्चाद्धंसेन संपुटे ॥ ३० ॥

वज्रकवाटैः संघट्य दशद्वारसमन्वितम् ।
हितं त्रिसन्ध्यं षड्घटिकैः समाधिं कारयेद्बुधः ॥ ३१ ॥

मृत्युञ्जयाख्यमन्त्रस्य सिद्धिः पूवापरेण तु ।
षड्विंशद्वत्सरं धायेत्परयामं समस्तकम् ॥ ३२ ॥

p. 345)

षड्विंशल्लक्षं जीवेत इति शास्त्रस्य निश्चयः ।
हृत्सरोरुहमध्ये तु गुणत्रयाख्यमण्डले ॥ ३३ ॥

तेषां चोपरि शक्तिस्तु शक्तिमध्ये तु कूटकम् ।
कूटमध्ये तु चात्मानं प्राणैः संयमं मन्त्रवित् ॥ ३४ ॥

संपुटीकृत्य चन्द्रेण पश्चाद्धंसेन संपुटेत् ।
वज्रकवाटैर्दशद्वारान् पिधाय सम्यग्विधानतः ॥ ३५ ॥

समाधिं कारयेत्पश्चात्समरसीकृत विग्रहः ।
देवानां मृत्युञ्जयमिदं उपायं चात्र वर्णितम् ॥ ३६ ॥

त्रिंशत्संवत्सरं वत्स चतुःसन्ध्यं सप्तनाडिकम् ।
अभ्यसेदेकचित्तेन अर्धरात्रे तु वै दश ॥ ३७ ॥

त्रिंशल्लक्षं भवेदायुर्नात्र कार्या विचारणा ।
परिवारान्प्रवक्ष्यामि सर्वकामार्थसाधनम् ॥ ३८ ॥

फ फ ऐन्द्रदले न्यस्य रक्तपुद्धु?जसन्निभौ ।
फा फा न्यसेद्भ्रमरदले किञ्जल्कसदृशप्रभौ ॥ ३९ ॥

फि फि न्यसेत्तु नल्ले तु अशोककुसुमप्रभौ ।
फी फी न्यसेद्वितथे मञ्जिष्ठ सदृशप्रभौ ॥ ४० ॥

फु फु न्यसेद्वै याम्ये तु कालमेघसमद्युति ।

फू फू द्वयेऽर्कन्न्यसेद्भृङ्गे भृङ्गवर्णनिभावुभौ ॥ ४१ ॥

ऋ फृ द्वये नैर्-ऋत्यां तु कृष्णलोहनिभावुभौ ।

फॄ फॄ न्यसेत्सुग्रीवे नीलाम्बुज समप्रभौ ॥ ४२ ॥

फ्लृ फ्लृ द्वये वै वारुण्यां शुद्धस्फटिक सन्निभौ ।

फ्लॄ फ्लॄ शेषे तु विन्यस्य बिसिनी पत्रसन्निभौ ॥ ४३ ॥

p. 346)

फे फे वायुदले न्यस्य पीनवक्षौ समप्रभौ ।

फै फै मुख्ये तु विन्यस्य पिशाचपुष्पसमप्रभौ ॥ ४४ ॥

फो फो सोमे तु विन्यस्य मुक्ताफलसमप्रभौ ।

फौ फौ अदिते तु विन्यस्य दधिमण्डलसप्रभौ ॥ ४५ ॥

फं फं न्यसेद्वत्स ऐशान्ये तु समाहितः ।

फः फः द्वये न्यसेज्जये सिन्दूरसदृशप्रभौ ॥ ४६ ॥

एवं संस्थाप्य विधिना पश्चादमृतधारिणम् ।

धारणां प्रथमं कुर्यात् ध्यानं वै त * * * * ॥ ४७ ॥

समाधिं च ततः कुर्यात् शनैः शनैः सुसमाहितः ।
रेचकं पूरकं चैव कुम्भकं सममाचरेत् ॥ ४८ ॥

सिद्धं योगमिदं वत्स स्पर्शयोगं तु धारणम् ।
पूरकं कुम्भकं चैव रेचकं तु विसर्जयेत् ॥ ४९ ॥

शाश्वते स्पर्शं जीर्णं स्यात् ध्यानमेतदुदाहृतम् ।
रेचकं पूरकं त्यज्य कुम्भकं तु परित्यजेत् ॥ ५० ॥

शिवमेव स्वयं भाव्य समाधिस्तेन उच्यते ।
प्राकृतं भावमुत्सृज्य शिवोऽहमिति भावयेत् ॥ ५७ ॥

एतत् समाधिरुद्दिष्टः * * * * मनीषिणाम् ।
शिवमेव स्वयं भाव्य स्वयमेव शिवो भवेत् ॥ ५२ ॥

समरसीभाव योगेन तत्समाधिरिहोच्यते ।
स्वरूपशून्यमिति भाव्यं शिव एव सदा भवेत् ॥ ५३ ॥

समाधिरेतत्विज्ञेयं शास्त्रविद्भिरुदाहृतम् ।
तदर्धमात्रं निर्भ्रासं स्वरूपं शून्यं भावयेत् ॥ ५४ ॥

p. 347)

समाधिमेतच्छंसन्ति योगशास्त्रविशारदाः ।
साक्षान्मृत्युंजयोपायं तव स्नेहादुदाहृतम् ॥ ५५ ॥

अजरामरत्वमाप्नोति सत्यं सत्यं षडानन ।
शिवस्य मरणं नास्ति जननं च जरादयः ॥ ५६ ॥

साधकस्य भवेद्वत्स तद्ध्यानं नित्यमेव हि ।
शिव एव भवेत्साक्षाज्जरामरणवर्जितः ॥ ५७ ॥

शिवसंप्रदायमेवोक्तं न देयं यस्य कस्यचित् ।

इति कालोत्तरे वज्रकवाटलक्षणे हृदयधारणाध्यानसमाधिपटलः सप्तषष्टितमः ॥ ६७ ॥

॥ श्रीः ॥

ईश्वर उवाच-

नाभिमध्ये महापद्मं सर्वमृत्युविनाशनम् ।
सर्वशान्तिकरं बीजमाधिव्याधिविनाशनम् ॥ १ ॥

महामारीप्रशमनं महाक्षयविनाशनम् ।
प्रमोहान् विंशतिशमनं कुष्ठाष्ठकदशाहरम् ॥ २ ॥

पञ्चगुल्मान् पञ्चव्यूहानष्ठीलान्पञ्चनाशनम् ।

भगन्धरान् पञ्चहरं रा * * * न्हरन्दश ॥ ३ ॥

पाण्डुरोगानष्टहरं स्वसात्पञ्चशरं हरम् ।

प्रत्यश्यायान् पञ्चहरं कासान्पञ्चहरं परम् ॥ ४ ॥

अशीतिवातजान् रोगान्नाशनं कूटधारणात् ।

षट्सप्ततिश्चाक्षिरोगा * * * * * * गकान् ॥ ५ ॥

p. 348)

पञ्चाशाच्चहृद्रोगान् * * * * नष्टविंशतिः ।

अष्टादशपित्तरोगात्रोगान्वै दशश्लेष्मवान् ॥ ६ ॥

नाभिसन्धारणाद्ध्यानात् * * * * * * क्षणान् ।

मूत्रकृच्छ्रान् षोडशविधान्मूत्ररोगान्दशैव तम् ॥ ७ ॥

मूत्रातिसारान्पञ्चैव सोमरोगांश्चतुरोऽपि वा ।

तुनिः परितुनिश्चैव अर्शान्निषट्त्रिधानपि ॥ ८ ॥

महाज्वराष्टकं चैव * * * * * * * * ।

अष्टादश सहस्राणि * * चान्नाशयेत्क्षणात् ॥ ९ ॥

कुमारगृहा द्वादश सहस्राच्छशनिषट्सहस्रकान्।
पूतनां पञ्च सहस्रं अपस्माराष्टसहस्रकान्॥ १० ॥

दशकोटिरक्षः संधानसुरान् शतकोटि च।
महासंहारदेवं च धारणान्नाशयन्ति च॥ ११ ॥

मार्ताण्डोदयसंकाशं षोडशैर्दलशोभितम्।
वितस्तिमात्रं पञ्चकर्णिका चतुरङ्गुलम्॥ १२ ॥

नालमष्टाङ्गुलं विद्यात् कर्णिकोत्सेधमङ्गुलम्।
पञ्चविंशत्परं बीजं जगद्योनिं परात्परम्॥ १३ ॥

प्रलयस्थिति सृष्टीनां कर्तारं परमेश्वरम्।
सर्वमन्त्राणि बीजांश्च वेदाश्चोपनिषदस्तथा॥ १४ ॥

मूर्ध्नि स्थितं परं बीजं सर्वमन्त्रप्रशोधनम्।
प्रलयद्वयं ततोद्धृत्य प्रलयाग्निं ततोद्धरेत्॥ १५ ॥

प्रलयानलं ततोद्धृत्य प्रलयाम्बुदं ततोद्धृतम्।
त्रयोदशान्तं संगृह्य षष्ठस्वरसमन्वितम्॥ १६ ॥

p. 349)

शिवनारायणोपेतं मन्त्रराजमिदं परम् ।
संख्यातं सर्वशास्त्रेषु कर्णात्कर्णगतं परम् ॥ १७ ॥

तस्याधारं परं सूक्ष्मं ह तृतीयं सुदुर्लभम् ।
तदादिबीजं संयुक्तं तदन्तेन समन्वितम् ॥ १८ ॥

तदेतद्योज्य पुनर्वत्स तच्चतुर्थेन संयुतम् ।
वाग्भवाच्चतुर्दशं योज्य वाग्भवात्षष्टमेव च ॥ १९ ॥

स्मृतिसंहार संयुक्तं तस्याधारमुदाहृतम् ।
परिवारान् प्रवक्ष्यामि दलैः षोडशसंस्थितान् ॥ २० ॥

मधद्वयं च कदले सुरचापार्कसन्निभौ ।
माद्या भृङ्गदले न्यस्य कुन्दस्य कुसुमप्रभौ ॥ २१ ॥

मिधिद्वयं न्यसेन्नीले हेमनीलोत्पलप्रभौ ।
मीधीद्वयं वितथे तु जपापाङ्गन स प्रभौ ॥ २२ ॥

मधुद्वयं न्यसेद्याम्ये इन्द्रकोपकसन्निभौ ।
मधूद्वयं भृङ्गराजे चम्पकाभृङ्गसन्निभौ ॥ २३ ॥

मृधृद्वयं निर्-ऋत्यां तु अशोकाल समप्रभौ ।
मृधृद्वयं सुग्रीवे रक्तकोकिलसन्निभौ ॥ २४ ॥

म्लृ ध्लृ द्वयं वारुण्यां तु बन्धूकाङ्गार स प्रभौ ।
म्लॄ ध्लॄ द्वयं शोषे तु विद्युच्चस्तासमप्रभौ ॥ २५ ॥

मेंधे वायुदले न्यस्य कपोते चटकप्रभौ ।
मैंधै मुख्ये न्यसेद्द्वौ तु तित्तिरीयकसन्निभौ ॥ २६ ॥

मो धो सोमे नसेद्द्वौ तु श्येनमाषसमप्रभौ ।
मौ धौ अदिते विन्यसेत् तु पिङ्गलौ कौशिकप्रभौ ।

p. 350)

मं धं ईशे तु विन्यस्य न्यासग्रन्थसमन्वितम् ॥ २७ ॥

मः धः द्वये न्यस्य वराटकोटरसन्निभौ ।
मन्त्रराजस्य वर्णं हि महामेरुसमप्रभम् ॥ २८ ॥

आकाशबीजं सेनानि कृष्णाञ्जनं धराधरम् ।
जुंसहंसेन संपुट्य ध्यायेत्कनकपर्वतम् ॥ २९ ॥

त्रिंशत्संवत्सरं वत्स त्रिसन्ध्यं घटिकाष्टकान् ।

अर्धरात्रे ध्यायेत्तु घटिका द्वादशं गुह ॥ ३० ॥

अमरत्वमवाप्नोति कोटि षट्कं स जीवति ।
येन येन हि भावेन युज्यते यत्र वाहकः ॥ ३१ ॥

तेन तन्मयतां याति ह्रस्वरूपो मणिस्तथा ।
शरीरं यत्र इत्याहुः शरीरस्थो महेश्वरः ॥ ३२ ॥

महेश्वरात्परं नास्ति सिद्ध्यते सृतिसागरे ।
लाकुलै पाञ्चरात्रे च गारुडे भूततन्त्रके ॥ ३३ ॥

भैरवे मातृतन्त्रे च योगशास्त्रे च कामिके ।
एतद्बीजसमं नास्ति पञ्चाङ्के च प्रपञ्चके ॥ ३४ ॥

शैवसिद्धान्तमार्गेण दशाष्टादशसागरे ।
तस्मात्सर्व प्रयत्नेन कूटराजमनुस्मरेत् ॥ ३५ ॥

मृत्युनाशं पुरा पुण्यहंसं वै संपुटेत्पुनः ।
पुनः सोमेन संपुट्य समरसी भावमाश्रयेत् ॥ ३६ ॥

रहस्यमेतत्संप्रदायं न कथं यस्य कस्यचित् ।
नाभौ हंसेन वै वत्स जपाकुसुमसन्निभौ ॥ ३७ ॥

पञ्चगुल्मानपोहन्ति मासार्धेन षडानन ।

p. 351)

नाभेरधस्तात्कूटेन बालार्कसदृशेन च ॥ ३८ ॥

अष्ठीलान्पञ्चदशं स्यात्षोडशाहेन धीमता ।
नाभौ चोत्तरपश्चिमे च अभ्यसेदिन्द्रकोपवत् ॥ ३९ ॥

पञ्च प्लीहान् विनश्यन्ति पञ्चविंशद्दिनेन च ।
मासमेकं चाभ्यसेत्क्षुधा नागं च नाशयेत् ॥ ४० ॥

सुपुष्टः सुभगः श्रीमान् विचरेत्कामदेववत् ।
भानुमण्डलमध्यस्थं मन्त्रराजं सदा न्यसेत् ॥ ४१ ॥

मार्ताण्डोदयवर्णाभं मण्डलैकं समभ्यसेत् ।
* * * ष्टादशाह्नन्ति साक्षान्मार्ताण्डवत्स्थितः ॥ ४२ ॥

कैलासमपि वै वत्स षण्मासाभ्यासयोगतः ।
आदित्य इव वै देहं भवते मन्त्रतेजसा ॥ ४३ ॥

ऊरुप्रदेशे देवेश जल * द्वह्नि देशिके ।

चित्तेन * * * * * मासमेकन्निरन्तरम् ॥ ४४ ॥

ऊरुस्तम्भविनाशाय वह्निमण्डलमध्यकम् ।

जानुप्रदेशे देवेशमग्निमण्डलमध्यगम् ॥ ४५ ॥

सप्तविंशद्दिनं ध्यायेत् सप्तवातप्रणाशनम् ।

माहेन्द्रं वह्निमध्यस्थं * * योर्नाभिमूलतः ॥ ४६ ॥

वं क्षणे त्रिकटे चैव कण्ठे वै कक्षयोरपि ।

ध्यायेद्वै मन्त्रराजानं बाह्यायामविनाशनम् ॥ ४७ ॥

इडायां पिङ्गलायां च सुषुम्नायां तथैव च ।

गान्धारहरिजिह्वा च पूषा चैव यशस्विनी ॥ ४८ ॥

अलंपूषा कुहूश्चैव शङ्खिनी दशमी च वा ।

p. 352)

ध्यायेत्तन्मन्त्रराजानं बाह्यायामविनाशनम् ॥ ४९ ॥

आक्षिप्तं स्वप्नवातं च मन्त्रराजेन नाशनम् ।

द्वादशारं तु संघट्य भृङ्गं चानलवारुणम् ॥ ५० ॥

तन्मध्ये मन्त्रराजानं चिन्तयेत्सप्त वै घटिः।
सोमो रोगविनाशाय योगमेतं समभ्यसेत्॥ ५१॥

वायव्याग्नेयमाहेन्द्र वारुणे च स्थितं प्रभुम्।
चिन्तयेन्मेढ्रमूले तु मूत्रकृच्छ्रविनाशनम्॥ ५२॥

माहेन्द्रे वारुणे वत्स मन्त्रराजं तु मध्यगम्।
मेढ्रमूले तु पार्श्वे तु मूत्रमस्थिषु चिन्तयेत्॥ ५३॥

मूत्रसारं मूत्रदोषं दशाहा नाशयेद्गुह।
सोमसूर्याग्निमध्यस्थं मन्त्रराजं जपाप्रभम्॥ ५४॥

जठरे चिन्तयेद्वत्स सप्ताष्टदिनमेव वा।
अतिसारं विषूचीं च नाशयेत्सन्निपातजान्॥ ५५॥

इति कालोत्तरे वज्रकवाटलक्षणे मन्त्रराजनाभिध्यान पटलः सर्वव्याधि निवारणपटलश्चाष्टषष्टितमः॥ ६८॥

॥ श्रीः॥

ईश्वर उवाच-

नाभेरधस्ताद्द्‍यङ्गुल्यं(ल्यें) नाडीकन्दं प्रतिष्ठितम् ।
तन्मध्ये संस्थितं पद्मं चतुरङ्गुलमात्रतः ॥ १ ॥

द्‍यङ्गुलं कर्णिकामात्रं ज्वलत्कनकसन्निभम् ।
तस्य मध्ये परं देवं देवेशं भुवनेश्वरम् ॥ २ ॥

सर्वज्ञं सर्वगं शान्तं सर्वतो क्षिशिरो मुखम् ।

p. 353)

सकलं निष्कलं देव मनौपम्यसुरेश्वरम् ॥ ३ ॥

ब्रह्मादिस्तम्भपर्यन्तं सृष्टिस्थितिलयात्मकम् ।
उद्भिदः स्वेदजाश्चैव अण्डजाश्च जरायुजाः ॥ ४ ॥

चतुर्विधमभूद्ग्रामं चराचरमिदं जगत् ।
लक्षञ्चतुरभीतिश्च पृथग्योनिषु तिष्ठति ॥ ५ ॥

समस्तेषु पदार्थेषु तिष्ठतेन च लिप्यते ।
तदुत्पन्नं जगत्सर्वं तमसश्च चराचरम् ॥ ६ ॥

अमृतेशं प्रवक्ष्यामि मृत्युनाशनमुत्तमम् ।
धर्मार्थकाममोक्षं च त्रैलोक्यं चैव साधनम् ॥ ७ ॥

चतुश्चत्वारिंशतितमः माहेशं तत्र जायते।
सर्वसंहारबीजं तु सर्वसव्यूहनं युतम्॥ ८॥

सर्वं सद्योनिसंयुक्तं सर्वोदकसमायुतम्।
स्थितिसंहारसंयुक्तं त्रैलोक्य नायकं परम्॥ ९॥

द्रुतचामीकरप्रख्यं महारजतसप्रभम्।
तस्य ध्यानं प्रवक्ष्यामि सद्योमृत्युविनाशनम्॥ १०॥

पञ्चचत्वारिं * * * य सप्तेन समन्वितम्।
हुतभुक्पवनः सोमषष्ठश्चैव चतुर्दशम्॥ ११॥

हरिहरसमायुक्तं भुवनेश्वरकूटकम्।
समरे त्रैलोक्यसिद्धिस्तु किंपुनर्मृत्युनाशनम्॥ १२॥

यौ बीजौ सर्वलोके वा शान्तिः पुष्टिः प्रवर्तते।
वैश्यमाकर्षणं चैव सेनास्तम्भं च षण्मुख॥ १३॥

महासेनजयश्चैव महासौभाग्यवर्धनम्।

p. 354)

जपो योगश्च ध्यानं च समाधिश्च चतुर्विधम् ॥ १४ ॥

चतुष्टयं येन वै वत्स मृत्युनाशनमाप्नुयात् ।
जपोयोगो गुणध्यानं ध्यानान्मृत्युं जयिष्यति ॥ १५ ॥

ध्यानाच्छतगुणं वत्सस्समाधिः शाश्वतं पदम् ।
समाधिनिष्ठस्तस्य तस्य तिष्ठति वै शिवः ॥ १६ ॥

आहूतं संप्लवं यावतावत्तिष्ठति भूतले ।
अक्षयो ह्यजरे देवस्सर्वज्ञः सर्वगः प्रभुः ॥ १७ ॥

समाधिस्थो नरो लोके तस्य मृत्युर्न विद्यते ।
परिवारान् प्रवक्ष्यामि मन्त्रराजस्य षण्मुख ॥ १८ ॥

लयद्वयं न्यसेदैन्द्रे कुब्जकुन्दसमप्रभम् ।
लावाद्वयं भ्रंशे न्यसेड्डाडिमि कुमुदप्रभम् ॥ १९ ॥

लिविद्वयं न्यसेदग्नौ करवीरार्कसन्निभौ ।
लीवीद्वयं न्यसेद्वितथे शङ्खाशोकसमप्रभौ ॥ २० ॥

लुवुद्वयं न्यसेद्याम्ये सिन्दूरस्फटिकप्रभम् ।
लूवूद्वयं न्यसेद्भृङ्गे पक्षिमुक्ताफलप्रभौ ॥ २१ ॥

लृ वृ द्वयं निर्-ऋत्यां तु बन्धूककुन्दसन्निभौ ।
लॄ वॄ द्वयं तु सुग्रीवे द्रुतरजतसप्रभौ ॥ २२ ॥

ॡ व्ॡ द्वये दले गैरिकस्फटिकप्रभौ ।
ॡ व्ॡ द्वौ शेषे न्यसेत् धीमान् माक्षीर सन्निभौ ॥ २३ ॥

लेवे पायौ न्यसेद्वत्स * * * * * सन्निभौ ।
लै वै मुख्य न्यसे * * * * * कुसुमप्रभौ ॥ २४ ॥

लो वो द्वन्द्वं न्यसेद्वत्स सोमे तु जपासन्निभौ ।

p. 355)

लौ वौ न्यसेदतीते तु विद्रुमस्फटिकप्रभौ ॥ २५ ॥

लं वं न्यसेदथेशाने मार्ताण्डसदृशप्रभौ ।
लः वः क्षिप्रं जयेद्वत्स क * रन्द्रसमप्रभौ ॥ २६ ॥

मूलबीजचयो लोके महाश्चर्यफलप्रभौ ।
सूर्यकोटि समप्रख्यौ चन्द्रकोटिसमप्रभौ ॥ २७ ॥

शिवशक्तिमयौ द्वौ * * * कामार्थसाधकौ ।

मृत्युञ्जयो प्रयोक्तव्यो जपादिषु चतुष्टये ॥ २८ ॥

मृत्युञ्जयत्रयेणैव हंसबीजेन षण्मुख ।
संपुटीकृत्य मतिमान् प्रासादं गर्भे तु निक्षिपेत् ॥ २९ ॥

सर्वकूटे तु वै वत्स प्रासादगर्भे विनिक्षिपेत् ।
प्रासादगर्भे चात्मानं शक्त्या कृष्णेन योजयेत् ॥ ३० ॥

दशस्थानेषु सर्वेषु दशप्राणयुतेन तु ।
प्रासादगर्भे संयोज्य पश्चात्संपुटमारभेत् ॥ ३१ ॥

रेचकं कुम्भकं त्यज्य कुम्भकं तु विसर्जयेत् ।
समरसीभावयोगेन नित्यमेवं सदाभ्यसेत् ॥ ३२ ॥

अथ च द्वै चतुःसन्ध्यं घटिकाष्टौ पृथक् पृथक् ।
विशेषमर्धरात्रेषु घटिका द्वादशैव तु ॥ ३३ ॥

समस्सी भावयोगेन समाधिं सम्यगाचरेत् ।
त्रिंशद्वत्सरं नित्यं अभ्यसेत्सुसमाहितः ॥ ३४ ॥

आभूतसंप्लवं यावत्तावद्वै शिववद्भवत् ।
बलिपलितनिर्मुक्तौ द्विरष्टवर्षकाकृतिः ॥ ३५ ॥

गोक्षीरसदृशप्रख्यं प्राणदं चामरेचकम् ।
शशिना पार्श्वयोः पुष्या अतश्चोर्ध्वं त्रियक्षकैः ॥ ३६ ॥

p. 356)

हंसेन तस्य बाह्ये तु संपुटीकृत्य चान्तयेत् ।
आत्मानं शिवशक्त्या तु हृदयादाकृष्य तत्र तु ॥ ३७ ॥

प्रासादगर्भं संयोज्यं प्रासादं वहनगर्भके ।
समरसीभावयोगेन मृत्युनाशनमाप्नुयात् ॥ ३८ ॥

प्रासादगर्भे चात्मानं प्रासादं भवनगर्भके ।
त्र्यक्षरं संपुटं विद्यात् त्र्यक्षरं चेन्दुना पुटेत् ॥ ३९ ॥

पुनर्जीवेन मुख्येन हृल्लेखामनुसंपुटेत् ।
बीजमुख्येन संपुट्य संपुटेदेकपादतः ॥ ४० ॥

संपुटेद्धंसबीजेन चतुर्दिक्षु समाहितः ।
बहिरन्तः प्रसादेन संपुटेत्तत्र वित्तमः ।
संपुच्चैकादशं चैवं सर्वं मृत्युञ्जयं भवेत् ॥ ४१ ॥

उदरे सर्वकार्याणि महामृत्युविनाशनम् ।

मन्त्रस्य नाभिदेशे तु आयु * मृत्युनाशनम् ॥ ४२ ॥

मन्त्रस्य शाश्वतस्थाने संहारं मृत्युनाशनम् ।
मन्त्रस्य मेढ्रदेशे तु प्रजालाभं तथावधि ॥ ४३ ॥

जानुस्थाने मनुशक्त्या शक्त्याधारमिहोच्यते ।
मन्त्रं हि देवतारूपं देवरूपं च मन्त्रकम् ॥ ४४ ॥

मन्त्रदेवस्य ऊर्ध्वौ तु आत्मानं नाममेव वा ।
विशेषमृत्युर्वै वत्स नास्ति चोरभयं सदा ॥ ४५ ॥

मन्त्रस्य मन्त्रके घने * * * * * * * * ।
आत्मानं प्रक्षिपेत्तत्र नाम वा तत्र निक्षिपेत् ॥ ४६ ॥

p. 357)

महामृत्युविनाशाय पार्श्वयोर्मन्त्रसंयुतम् ।
पतत्स्थानेषु वै वत्स अन्ते मृत्युभयं भवेत् ॥ ४७ ॥

मन्त्रस्य बाह्यस्थानेषु अपमृत्युविनाशनम् ।
संपुटा वेष्टितं चैव विदर्भं क्षिप्तमेव च ॥ ४८ ॥

प्रक्षिप्तं गोलसंश्लिष्टं विशिक्रष्टाक्रान्तसंयुतम् ।

संघट्टं बन्धनं चैव बाह्याभ्यन्तरव्यापकम् ॥ ४९ ॥

एवं च दशमार्गं तु आत्माज्ञानार्थ संज्ञितम् ।
बीजकूटाक्षरेणैव बलं मन्त्रेषु यन्त्रके ॥ ५० ॥

पद्मे चक्रे च मतिमान् योजयेन्मन्त्रपारगान् ।

इति कालोत्तरे द्वादशसहस्रसंहितायां वज्रकवाटलक्षणे नाभेरस्ताद्धारणपद्मविधान मृत्युञ्जयपटलस्सप्तषष्टितमः ? ॥

॥ श्रीः ॥

ईश्वर उवाच-

तस्य च द्व्यङ्गुलाधस्तान्महापद्मं सुशोभनम् ।
समाधिश्च परं दिव्यं सर्वदेवेश्वरेश्वरम् ॥ १ ॥

सर्वज्ञं सर्वगं शान्तं सर्वात्मा सर्वतोमुखम् ।
तत्पद्मकर्णिकामध्ये आसीनं हि सदाशिवम् ॥ २ ॥

प्रादेशमात्रकं पद्मं सुदृढेन समप्रभम् ।
कर्णिकाचतुरङ्गुल्यं केशरोमनखप्रभम् ॥ ३ ॥

षट्चत्वारिंशदुद्धृत्य त्रैलोक्यनायकं परम्।
त्रैलोक्यमोहनं देवं त्रैलोक्यस्य च स्थापनम्॥ ४॥

* * * * * रूपं तु त्रैलोक्यस्य च जीवनम्।
त्रैलोक्यसंहारबीजं महासौभाग्यवर्धनम्॥ ५॥

p. 358)

महालक्ष्मीस्वरूपं तु महासौभाग्यवर्धनम्।
स्त्रीरूपं हि परं * * * * * * नौपमम्॥ ६॥

ब्रह्मादिस्तम्भ पर्यन्तं जीवनं तस्य तेजसा।
अधः प्रलयानलोपेतं महासंहारसंयुतम्॥ ७॥

महागभस्तिसंयुक्तं महावारिसमन्वितम्।
*ष्ठेन तु पुनर्युक्तं मिथ्या सम्यक्समन्वितम्॥ ८॥

सदाशिवस्य रूपं हि सद्योमृत्युविनाशनम्।
तस्याधारं प्रवक्ष्यामि सद्यः प्रत्ययकारकम्॥ ९॥

विद्याशक्तिस्वरूपं तु सद्यो मृत्युविनाशनम्।
सप्तचत्वारिंशद्बीजं द्वादशादित्यरूपकम्॥ १०॥

तद्बीजात्कोटिशक्तिस्तु वामाद्या जायते तु तत्।
बडबानलं रुद्ररूपं बडवानलसंयुतम्॥ ११॥

कल्पान्तानलसंयुक्तं कल्पान्तोदक संयुतम्।
विसर्गा तृतीय संयुक्तं * * * * * * * ॥ १२॥

विसर्गादिकादशोपेतं मन्मथानलसंयुतम्।
मुरारिचोर्ध्व  संयुक्तं तस्याधारमुदाहृतम्॥ १३॥

अभ्यासं चैव कूटाभ्यां अभ्यासान्मृत्युनाशनम्।
दशद्वारं सम्यक्संघट्य वज्रकवाटैर्दशभिरपि॥ १४॥

मृत्युञ्जयत्रयेणैव ओं जुं स चैव संपुटेत्।
ततो हंसेन संपुट्य ततो वै बीजमुख्यतः॥ १५॥

ततो वै चैकपादेन हृल्लेखा च ततः पुटेत्।
आधाराधेयकूटेषु प्रासादातेषु विन्यसेत्॥ १६॥

p. 359)

प्रासादान्तेषु क्षेत्रज्ञः शक्त्या कूटेन विन्यसेत्।
उपायमेतत् परं गुह्यं रहस्यं न प्रकाशयेत्॥ १७॥

मृत्युञ्जये प्रधानं हि संप्रदायेषु चोत्तमम्।
जाम्बूनदसमप्रख्यं बन्धूककुसुमप्रभम्॥ १८॥

क्वचिन्नीहार सप्रख्यं क्वचिदग्नि समप्रभम्।
क्वचित्तटित्समप्रख्यं क्वचिन्माणिक्यसप्रभम्॥ १९॥

क्वचिन्मरतक प्रख्यं क्वचिद्वज्र समप्रभम्।
क्वचिज्ज्योति समप्रख्यं क्वचिन्मुक्ताफलप्रभम्॥ २०॥

क्वचिन्मार्ताण्ड संकाशं क्वचिदिन्दु समप्रभम्।
क्वचिदिन्द्रायुध प्रख्यं इन्द्रकोपकसन्निभम्॥ २१॥

क्वचिज्जपानिभप्रख्यं क्वचित्पद्मसमप्रभम्।
महारजतसप्रख्यं मध्याह्नरवि स प्रभम्॥ २२॥

क्वचित्सिन्दूर संप्रख्यं क्वचित्स्फटिकसन्निभम्।
एवं सदाशिवं रूपं अनुभवस्य तु भासते॥ २३॥

शिवशक्तिनिपातस्य श्रद्धाभक्तिसमन्वितः।
गुरुभक्ति प्रसादेन स्वानुभवं हि जायते॥ २४॥

जपसिद्धिः धारणासिद्धिः ध्यानसिद्धिः षडानन ।

गुरुप्रसादाल्लभते समाधिर्ध्यानमेव च ॥ २५ ॥

मृत्युञ्जयो भवेत्क्षिप्रं गुरुप्रसादेन षण्मुख ।

धर्मार्थकाममोक्षांश्च गुरुप्रसादेन साधयेत् ॥ २६ ॥

पिता कोटिसहस्राणि माता शतसहस्रकैः ।

पुत्रभ्रातृकलत्रैश्च खर्वकोटिशतानि च ॥ २७ ॥

p. 360)

शिवाधिकः स वै वत्स गुरुरेको विशिष्यते ।

तस्मात्सर्वप्रयत्नेन प्रथमं पूजयेद्गुरुम् ॥ २८ ॥

हैमाभरणवस्त्रैश्च गोभूमिकाञ्चनादिभिः ।

अलंकृता गजाश्चैव दासीदासैश्च पूजयेत् ॥ २९ ॥

मिकत्र बहुनोक्तेन किं बह्वक्षरमालया ।

गुरुं शिवं च विद्यां च पूजयेत्त्रयमादरात् ॥ ३० ॥

तेषु सर्वेषु वै वत्स प्रधानं गुरुमेव हि ।

सदाशिवस्य स्थाने तु संपुटीकृत्य भावयेत् ॥ ३१ ॥

अजरामरत्वमाप्नोति शिववद्विचरेन्महिम् ।
विंशत्संवत्सरं भद्र त्रिसन्ध्यं सप्तनाडिकम् ॥ ३२ ॥

पलूपलित निर्मुक्तो द्विरष्टवर्षकाकृतिः ।
दशहस्तिबलं प्राप्य अनङ्ग इव क्रीडते ॥ ३३ ॥

त्रिंशद्वर्षं त्रिगुणं च चत्वारिंशच्चतुर्गुणम् ।
पञ्चाशद्वत्सात्पञ्चगुणं भवति योगिनः ॥ ३४ ॥

यावत्समाश्चाभ्यधिकं तावत्कल्पान्तं जीवति ।
परिवारान् प्रवक्ष्यामि मन्त्रराजस्य सांप्रतम् ॥ ३५ ॥

पूर्वादारभ्य सेनादि विन्यसेत्सुसमाहितः ।
श्लृ ष्लृ श्लॄ ष्लॄ शेषे चैव तान्यन्तरेषु कल्पयेत् ॥ ३६ ॥

शै षै शो षो चैव पश्चात्कल्पयित्वा तु सुव्रत ।
शौ षौ शं षं शः षः चैव कल्पयित्वा तु भावयेत् ॥ ३७ ॥

सर्वे कुन्देन्दुनिभाः शङ्खगोक्षीरसन्निभाः ।
भावयेद्विधिवद्वत्स मृत्युं जित्वा न संशयः ॥ ३८ ॥

एतच्चक्रं महासेन उत्तमं परमं महत् ।

देवासुरा न जानन्ति तव स्नेहात्प्रकाशितम् ॥ ३९ ॥

महच्छ्रियमवाप्नोति महत्सौभाग्यमाप्नुयात् ।
अयुतं जपेत्पश्चिमद्वारे लोके वश्यमवाप्नुयात् ॥ ४० ॥

* * * येन स्त्रीवश्यं भवते नात्र संशयः ।
जपेदयुतत्रयेणैव राजवश्यं भवेद्गुह ॥ ४१ ॥

पुरुषवश्यं भवेत् क्षिप्रं * * * श्च शतेन च ।
नागवश्यं शतैः षष्टिहस्तिवश्यं त्रिधाशितिः ॥ ४२ ॥

ग्रामवश्यं भवेद्वत्स लक्षजापेन साधकः ।
नगराणां शतं वत्स भवेत्पश्यन्ति लक्षकैः ॥ ४३ ॥

इति कालोत्तरे द्वादशसहस्रसंहितायां वज्रकवाटलक्षणे सदाध्यात्मपटलोऽष्टषष्टितमः ॥

॥ श्रीः ॥

ईश्वर उवाच-

नाभेरधस्थादङ्गुल्यादष्टाङ्गुलमुदाहृतम् ।
शाश्वतं स्थानमेवाहुः * * * * * * हृतम् ॥ १ ॥

ब्रह्माविष्णुसुराः सर्वे लोकपालादयः स्मृताः ।
इन्द्राग्नियमनिर्-ऋतिवरुणा वायुरेव च ॥ २ ॥

सोमेशान गुहाश्चैव न जानन्ति स्थानमुत्तमम् ।
रुद्रैकादशकाः सर्वे द्वादशादित्या एव च ॥ ३ ॥

अष्टौ तु वसवश्चैव न जानन्ति हि शाश्वतम् ।
मनुर्दक्षो वसुश्चैव काश्यपो नारदस्तथा ॥ ४ ॥

p. 362)

विश्वामित्रो वसिष्ठश्च गौतमो भार्गवस्तथा ।
वाल्मीकी वामदेवश्च पराशरव्यासभार्गवाः ॥ ५ ॥

अङ्गिरा अत्रिर्दक्षश्च कृ * स्यलिखिनश्च च ।
शाश्वतं स्थानमेते हि न जानन्ति कदाचन ॥ ६ ॥

अतिगुह्यं परं सूक्ष्मं सूक्ष्मात्सूक्ष्मतरं परम् ।
अधस्तान्मेढ्रमूलं तु ऊर्ध्वाधस्तान्महानलः ॥ ७ ॥

दक्षिणा कटिफलका * * राकठिपीठकात् ।
हिन्द्रकाद्दक्षिणं पूर्वा पश्चिमोत्तरकङ्कटात् ॥ ८ ॥

धिष्णीयं दक्षिणं पश्चिमात् यात्पूर्वोत्तरं गुह ।
एते चैवाष्टसीमान्ते तत्स्थानं चतुरङ्गुलम् ॥ ९ ॥

कदम्बगोलकाकारं शाश्वत स्थानमेव च ।
नाभेरधस्तादष्टाङ्गुलं त्रिकोणाकारमुत्तमम् ॥ १० ॥

तत्स्थानं कौलकाबाहु * * * शुद्धकोजनाः ।
सर्वज्ञः परिपूर्णश्च सर्वात्मा सर्वतोमुखः ॥ ११ ॥

शिवस्य परिपूर्णस्य ज्ञानं शाश्वतमुत्तमम् ।
निष्कलं निर्मलं नित्यं निष्प्रपञ्चमलक्षणम् ॥ १२ ॥

अपृथक्यन्निरालम्ब्यमानन्दमचलं ध्रुवम् ।
कल्पनारहितं शून्यं मनसोतीतगोचरम् ॥ १३ ॥

हेयोपादेयरहितं सर्वाङ्गं च विवर्जितम् ।
* * * * * * * * बाह्याभ्यन्तर संस्थितम् ॥ १४ ॥

अस्तिनास्तित्वरहितं स्वस्ववेद्यं परं महत् ।
गुरुप्रसादेन वत्सः परतत्त्वं हि वन्दति ॥ १५ ॥

तत्र स्थितं महापद्मं सूर्यकोटिसमप्रभम् ।
द्वात्रिंशद्दलसंयुक्तं कर्णिकाकेसरान्वितम् ॥ १६ ॥

तस्य मध्ये स्थितं शान्तं शिवं परमकारणम् ।
जीवन्तं सुषिरं गृह्य अथ संहारसंयुतम् ॥ १७ ॥

शान्तं वह्निसमायुक्तं युगान्तानिल संयुतम् ।
सुशान्ताम्बु समायुक्तं त्रयोदशान्तेन संयुतम् ॥ १८ ॥

षष्ठस्वरसमायुक्तं शिवनारायणात्मकम् ।
महामायोर्ध्व संयुक्तमूर्ध्ववह्नि समायुतम् ॥ १९ ॥

एतद्वै शिवकूटं तत्तव स्नेहादुदाहृतम् ।
श्वेतं कृष्णं तथारक्तं हरितं पारावतप्रभम् ॥ २० ॥

श्यामं मञ्जिष्ठसंकाशं तुषाररजतप्रभम् ।
शुद्धकुन्देन्दु संकाशं कूटमेकादशात्मकम् ॥ २१ ॥

एकादशं महावर्णश्वेतादिक्रमं शोधयेत् ।
अनुच्चार्यं त्रिशकैर्वत्स ब्रह्मविष्णुपुरन्दरैः ॥ २२ ॥

गुरुप्रसादेन चोच्चार्य अन्यथा शतवर्षकैः ।

आधार मध्ये पद्मेतु चिन्तयेत् सुसमाहितः ॥ २३ ॥

तस्याधारं प्रवक्ष्यामि तत्त्वतः शृणु षण्मुख ।
शान्तं दान्तं समुद्धृत्य कालानलसमन्वितम् ॥ २४ ॥

मरुद्वारिसमायुक्तं विसर्गाद्यदि संयुतम्
वाद्भवात्षष्ठमं बीजं सृष्टिप्रलयसंयुतम् ॥ २५ ॥

सत्याधारमिदं वत्स मृत्युवञ्चनकारकम् ।
सत्त्वं रजस्तमश्चैव सोमसूर्याग्निमेव च ॥ २६ ॥

p. 364)

आत्मानश्चान्तरात्मानं परमात्मानमेव च ।
पृथिव्यापस्तथा तेजो वायुराकाशमेव च ॥ २७ ॥

श्रोत्रं त्वक्चक्षुर्जिह्वा च घ्राणश्चैव तु पञ्चमम् ।
वाक्पादपाणिपायूपस्थं चैव तु पञ्चमम् ॥ २८ ॥

शब्दः स्पर्शश्च रूपं च रसोगन्धश्च पञ्चमः ।
मनोहंकारश्च महान् प्रकृतिः पुरुषस्तथा ॥ २९ ॥

रागो माया च विद्या च कालो नियति विग्रहे ।

शुद्धमाया शुद्धकला सदाशिवशिवस्तथा ॥ ३० ॥

चतुश्चत्वारिंशत्कला कर्णिकोपरि कल्पयेत् ।
तेषां मध्ये महाशक्तिः हृल्लेखा परमेश्वरी ॥ ३१ ॥

तस्योपरि न्यसेद्देवं शिवकूटमनामयम् ।
हण्डरूपं ह क्षेत्रज्ञं कूटमध्ये तु निक्षिपेत् ॥ ३२ ॥

* * ना पूर्वं संपुटय त्र्यक्षरेण पुनः पुटेत् ।
पुनर्वै बीज मुख्येन पुनर्वै चैकपादतः ॥ ३३ ॥

पुनर्वै मल्लबीजेन पुनर्वै झल्लबीजतः ।
पुनर्वै घट्टबीजेन पुनर्वैधारबीजतः ॥ ३४ ॥

पुनर्वै योक्तबीजेन * * * * * * * * ।
पुनर्वै संहारबीजेन इन्द्रेण वरुणेन च ॥ ३५ ॥

श्रिया पुरुषजीवेन धरण्या केशवेन च ।
मायानलसमायुक्तं बिन्दुनादसमन्वितम् ॥ ३६ ॥

एकैकेन तु बीजं हि अग्निमायासमन्वितम् ।
बिन्दुनादसमाक्रान्तं सर्वबीजेषु सुव्रत ॥ ३७ ॥

p. 365)

दशवज्रकवाटैश्च सम्यग्घट्टविधानवित् ।
चिन्तयेदमृतं बीजं समरसीकृतविग्रहम् ॥ ३८ ॥

साक्षान्मृत्युञ्जयोपायं तव स्नेहात्प्रकाशितम् ।
अजरामरत्वमाप्नोति वत्सरत्रयकालतः ॥ ३९ ॥

न जपेन न हीमेन न च मन्त्रैर्न पूजया ।
सर्वदा चिन्तयेत्कूटं कल्पकोटिं स जीवति ॥ ४० ॥

न नियमं यमन्नैव आसनन्नास्ति षण्मुख ।
प्राणायामं तत्र नास्ति प्रत्याहारं च वर्जयेत् ॥ ४१ ॥

ध्यानधोरणको नास्ति समाधिर्नास्ति तत्त्वतः ।
रेचकं पूरकं नास्ति कुम्भकं नास्ति वस्तुतः ॥ ४२ ॥

समस्तप्राणसंज्ञिकान्नास्ति सत्यं षडानन ।
सत्यमेकं परञ्चैव आलम्बं चैवमेव तत् ॥ ४३ ॥

समसीभावतत्त्वं च समाधिं चैकवस्तुतः ।
एक एव शिवः सर्वं जगत्स्थावरजङ्गमम् ॥ ४४ ॥

अभ्यसेदेकचित्तेन महाकल्पं स जीवति ।
शिवकूटरहस्यं तु मृत्युवञ्चनकं परम् ॥ ४५ ॥

अष्टधा शिवभेदं तु शिवकूटे प्रदर्शितम् ।
सकलं निष्कलं शून्यं कलाढ्यं समलङ्कृतम् ॥ ४६ ॥

क्षपणं क्षयमन्त्रस्थं कर्णोष्टं चाष्टमं स्मृतम् ।
सदाशिवस्वरूपं हि प्रासादं परिकीर्तितम् ॥ ४७ ॥

शिवकूटं शिवमेवाहुः तत्त्वज्ञैः समुदाहृतम् ।
अष्टाविंशद्देवकोटिश्शिवकूटे तु संस्थिताः ॥ ४८ ॥

p. 366)

अष्टाविंशच्छक्तिकोटिश्शिवकूटे तु संस्थिताः ।
अष्टाविकल्पदेवं तु तिर्यग्योनिं च पञ्चमम् ॥ ४९ ॥

मानुषं चैकधातुश्चतुर्दश भुवनं भवेत् ।
जरायुजाण्डजेभ्यस्तु तथा च स्वेदजोद्भिजैः ॥ ५० ॥

योनिश्चतुर्विधान्तेषु शक्तिकूटे तु संस्थिताः ।
तेषां सर्वेषु भूतेषु चतुराशीतिलक्षके ॥ ५१ ॥

पशवश्च मृगाश्चैव नराश्च पक्षिणो गजाः ।
व्यालाश्चैव तु वै वत्सं जरायुजास्तु कीर्तिताः ॥ ५२ ॥

वायसा हंसकारण्डाश्येन गन्धाश्च यूषकाः ।
कृकला सर्वगौरादि गोधाश्चैव तु कोकिलाः ॥ ५३ ॥

अङ्गजा खगजारण्या पक्षिणश्चापि सर्वशः ।
कृमिः कुन्दः पिपीलिका यूकामत्कुणमक्षिकाः ॥ ५४ ॥

क्षुद्रदंशाश्च मशकाः सरीसृपाश्च स्वेदजाः ।
वृक्षावल्यश्च गुल्माश्च तृणसंघाश्च चोद्भिजाः ॥ ५५ ॥

एतानि सर्वभूतानि सकलं परिपठ्यते ।
निवृत्तिश्च प्रतिष्ठा च विद्याशान्तिस्तथैव च ॥ ५६ ॥

केचिच्छंसन्ति वै वत्स सकलं परिपठ्यते ।
श्रुतिस्मृतिविधानं तु करपादादिरूपकम् ॥ ५७ ॥

तद्वै सकलमित्याहुः वेदिकाश्च मनीषिणः ।
ब्रह्मादि स्तम्भपर्यन्तं सर्वभूत हृदि स्थितम् ॥ ५८ ॥

सकलं सर्वदेहस्थं शिवतत्त्वं प्रकीर्तितम् ।
केचित्सिद्धान्तिका ऊचुः प्राप्तिरेकं शिवः स्मृतम् ॥ ५९ ॥

p. 367)

* * * तदुत्पत्तिस्तदात्मकं सर्वमेव हि ।
मदभिप्रायमेवं हि ओतं प्रोतं च सर्वतः ॥ ६० ॥

सकलं तद्विजानीयादिति सत्यं षडानन ।
त्वया निष्क्रमते देही देह * * * * * तः ॥ ६१ ॥

अतश्चोर्ध्वं च तिर्यक् च वक्तव्या पञ्च ते जगत् ।
निष्कलं तं विजानीयाः षड्वर्णरहितः शिवः ॥ ६२ ॥

निश्वासो श्वासनं हुत्वा स्वयं देहन्तु * * * ।
ऊर्ध्वशून्यमधःशून्यं मध्यशून्यं निरामयम् ॥ ६३ ॥

ख शून्यं बिन्दुशून्यं च नादशक्तिं च शून्यकम् ।
सर्वशून्यं निरालम्बं अन्धकारमिवस्थितम् ॥ ६४ ॥

शून्यं तं तु विजानीयात् शिवतत्त्वमुदाहृतम् ।
शब्दस्पर्शरूपं च रसो गन्धश्च शून्यकम् ॥ ६५ ॥

अहंकारं मनः शून्यं महानपि सुशून्यकम् ।
सत्त्वं रजस्तमः शून्यः नादबिन्दुकलामयम् ॥ ६६ ॥

कलास्यन्तं विजानीयाच्छिवतत्त्वमुदाहृतम् ।
भूताकाशं चिदाकाशं हीनन्तत्त्वस्थ संहितम् ॥ ६७ ॥

खमलंकृतं विजानीयाच्छिवतत्त्वं प्रकीर्तितम् ।
शक्त्याकाशमनाकाशं बिन्द्वाकाश * * * * ॥ ६८ ॥

क्षपणं तं विजानीयाच्छिव तत्त्वं प्रकीर्तितम् ।
रुद्रस्सदाशिवाकाशं हीनावै तं तुरीयकम् ॥ ६९ ॥

p. 368)

क्षयान्तस्थं विजानीयाच्छिवतत्त्वं प्रकीर्तितम् ।
शिवाकाशविनिर्मुक्तं गहनं मूलनाशनम् ॥ ७० ॥

कण्ठोष्ठं तं विजानीयाच्छिवतत्त्वं प्रकीर्तितम् ।
शिवकूटे चाष्टतत्त्वं हि तव स्नेहात्प्रकाशितम् ॥ ७१ ॥

परिवारान् प्रवक्ष्यामि सर्वसिद्धिकरान् परान् ।
हसलक्षं न्यसेत्प्रथमे हासालाक्षं न्यसेत्ततः ॥ ७२ ॥

हिंसि * * न्यसेत्तदनु ही सी ली न्यसेत्ततः।
हु सु लु क्षु न्यसेत्पश्चात् हूसूलूक्षू न्यसेत्ततः॥ ७३॥

हृ सृ लृ क्षृ न्यसेद्वत्स हॄ सॄ लॄ क्षॄ न्यसेत्पुनः।
ह्लृ स्लृ ल्लृ क्ष्लृ पुनर्न्यसेत् ह्लॄ स्लॄ ल्लॄ क्ष्लॄ ततो न्यसेत्॥ ७४॥

पश्चात् है सै लै क्षै ततो न्यसेत्।
हो सो लो क्षो न्यसेत् तदनु हौ सौ लौ क्षौ पुनन्यसेत्॥ ७५॥

हं सं लं क्षं न्यसेत्पश्चात् हः सः लः क्षः ततो न्यसेत्।
एवं वै सर्वबीजानां द्वात्रिंशद्दलके न्यसेत्॥ ७६॥

न्यस्त्वा तु विधिवत्सम्यक् सर्वं समरसी भवेत्।
समरसीभावयोगेन मृत्युंजित्वा न संशयः॥ ७७॥

गृहस्थो ब्रह्मचारी च वानप्रस्थोऽथ भिक्षुकः।
यत्र तत्र स्थितो वत्स अभ्यसेच्छिवमादरात्॥ ७८॥

समरसीभावयोगेन सर्वसंपुटमेव च।
शुद्धो वापि अशुद्धो वा स्नातो वाऽस्नात एव वा॥ ७९॥

क्षेत्रे वा विग्रहे वापि सभायां देववेश्मनि।

आसीने गमने वापि अभुक्ते वापि भुक्तके ॥ ८० ॥

p. 369)

पश्यञ्च्छृण्वन् स्पृशञ्जिघ्रमनुदानं तु लेह्यकान् ।
शोष्यन् नृत्यन् क्रीडन् हि स्वपन्सन्निमिषोन्मिषन् ॥ ८१ ॥

तावत्स्थागतो वापि * * * * * * * * * ।
शाश्वते शिवकूटं हि चिन्तयेत्समरसीबुधः ॥ ८२ ॥

तस्य मृत्युर्न विद्येते कृशान्तः कालयमेन च ।

इति कालोत्तरे वज्रकवाटलक्षणे शाश्वतस्थान शिवकूट * * * * एकोनषष्टितमः ॥

॥ श्रीः ॥

ईश्वर उवाच-

लभ्यते शाश्वतं ज्ञानं गुरुप्रसादेन षण्मुख ।
यमं नियमं चासनं प्राणायामन्त * * * ॥ १ ॥

प्रत्याहारो धारणा च समाधिर्ध्यानमेव च ।
गुरुप्रसादेन लभते दिव्यं योगं षडानन ॥ २ ॥

सत्यं यज्ञं तपोदानं नित्यमिन्द्रियनिग्रहम्।

गुरुप्रसादाल्लभते राज्यं चैव षडानन॥ ३॥

आकाशगमनं चैव परकायप्रवेशनम्।

मनोजवत्वं तु ज्ञानं गुरुप्रसादेन लभ्यते॥ ४॥

अणिमा लघिमा चैव महिमा गरिमा तथा।

प्राप्तिः का प्राकाम्यमीशत्वं वशित्वं चाष्टसिद्धयः॥ ५॥

गुरुप्रसादेन लभते सर्वमृत्युञ्जयानपि।

धर्ममर्थं च कामं च मोक्षं चैव षडानन॥ ६॥

गुरुप्रसादेन लभ्यते श्रद्धाभक्तियुतश्च हि।

देवत्वं ब्रह्मविष्णुत्वं रुद्रत्वं च षडानन॥ ७॥

p. 370)

साक्षात्सदाशिवत्वं च गुरुप्रसादेन लभ्यते।

गुरुर्माता पिता भार्या गुरुः पुत्रः पिता सखा॥ ८॥

गुरु * * * * * * * * * * * * * * ।

* * * जाधनभूमि * * * * * * * मथापि वा॥ ९॥

ओमिके स्वास्थिता भक्तिस्त व्यक्तुं प्रग् * * * * ।
प्रमादाच्छिवलोपं स्याद्गुरुलोपं न कारयेत् ॥ १० ॥

गुरुलोपात्तुरक * यावदाभूतसंप्लवम् ।
शिवलोपे निष्कृतिः स्याद्गुरुलोपेन निष्कृतिः ॥ ११ ॥

शिवलोपं सत्यलोपं च महापातकपञ्चसु ।
पितृहा मातृहा चैव ब्रूणहा मातृहापि च ॥ १२ ॥

प्रायश्चित्तं तु विहितं * * * सर्वपण्डितैः ।
गुरुलोपी कृतघ्नश्च प्रायश्चित्तन्न विद्यते ॥ १३ ॥

तस्मात्सर्व प्रयत्नेन गुरुद्रव्यं न लोपयेत् ।
लङ्घनं भक्षणं लोपं वञ्चनं च न कारयेत् ॥ १४ ॥

ज्ञानार्चनवदं दीपं नृत्तगीतोत्सवादिषु ।
तद्भोजनं समस्तं हि विष्ठामेव तु भोजनम् ॥ १५ ॥

सद्यः पतति सेनानिः नरकन्नैव गच्छति ।
तस्मात्सर्वप्रयत्नेन गुरुभोज्यं सदाश्नुते ॥ १६ ॥

गुरोस्तुशेषममृतं शास्त्रज्ञैः समुदीरितम् ।

परोक्षे निवेद्य भुञ्जीयाच्चतुरा ग्रामसंस्थिता ॥ १७ ॥

तैः पूर्वं गुरोर्नमस्कृत्वा पश्चादेवं हि वन्दयेत् ।
देवालयो गुरुर्यत्र तिष्ठते वै षडानन ॥ १८ ॥

p. 371)

पूर्वं गुरुं वन्दयित्वा पश्चाद्देवं वन्दयेत् ।
देवदिव्यगुरोर्दिव्यं दिव्यं चण्डेश्वरस्य च ॥ १९ ॥

त्रिविधं पतनं दुष्टं दानलङ्घनभक्षणम् ।
न निन्द्यात्कारणं देवं न शास्त्रं तेन भाषितम् ॥ २० ॥

न गुरुं साधकं चैव समयं च न लङ्घयेत् ।
न लङ्घयेत निर्माल्यं स्फुतिष्ठेन्न तु नग्न?गः ॥ २१ ॥

नोदत्याया हि भाषेत न च नग्नस्स्वपेन्नरः ।
ना कार्यं न खलै भूमिं न चिरं पर्वते वसेत् ॥ २२ ॥

(ईन्चोम्प्लेते यावन्मातृकं लिखितम् ।)

(कालोत्तरम् शिवागम)

इत्यघोरशिवाचार्यविरचितायां मृगेन्द्रवृत्तिदीपिकायामध्वप्रकरणं समाप्तम्॥

विद्यापादस्समाप्तः।

॥ श्रीः॥

अथेदानीं योगपादः।

(श्रीमन्नारायणकण्ठकृतवृत्तिसहितः)

अत्र तावत् अस्मात्प्रविततताद्बन्धात्परसंस्थानिरोधकात्। दीक्षैव मोचयत्यूर्ध्वं शैवं धाम नयत्यपीति श्रुतेर्दीक्षाया एव निरतिशयकैवल्यावाप्तिहेतुत्वात् तस्याश्च सर्वस्या एव पशुपाशेश्वर-स्वरूपनिरूपणोपायगतेन समस्ताध्वव्याप्तिप्रदर्शकेन मन्त्रमन्त्रेश्वरादिमाहात्म्यनिश्चायकेन ज्ञानेन विना निष्पादयितुमशक्यत्वात्तदेव बोधको विद्यापादस्सपरिच्छदः पशुपाशेश्वरस्वरूपनिरूपणाय प्रथममुक्तः। ततः क्रियापादोप्यनेकविधसाङ्गदीक्षाविधिप्रदर्शनायोपदिष्टः। सम्प्रति तु ज्ञानक्रियाक्रमज्ञेनापि साधकपुत्रकादिना

समाध्याद्यनभ्यासादनात्मविदा सता

यथोपदिष्टस्वस्वव्यापारानुठानं सम्पादयितुं न शक्यमिति

प्राणायामाद्यङ्गसहितो योगज्ञप्तये योगपादप्रक्रमः। अत्र च

प्रक्षीणपाशस्याणोः परमेश्वरस्वरूपावभासनं तात्पर्यमिति

तन्त्रवस्तुत्रयेण पशुपाशेश्वरलक्षणेन सम्बन्धो व्यवस्थापितः।

प्रयोजनं च तदुपन्यस्तं ज्ञेयम्। सौत्रोऽपि सम्बन्धः त्रिपदार्थं

चतुष्पादमित्युद्देशसूत्रप्रक्रमाल्लब्धः। वाक्यात्मकश्च

चर्यायोगक्रियापादैर्विनियोगोऽभिधास्यते इत्यादिभिर्वाक्यै। प्राकरणिकोऽपि

समयिनः पुत्रकस्य गृहीताभिषेकयोश्च साधकाचार्ययोः अवश्योपयोगि

योगप्रकरणमित्युक्तमेतत्। पाटलिकस्त्वनन्तर पादपटलान्ते

सुरयोगिजुष्टमित्यनेनोपक्षिप्तः॥

अथानात्मवतां मत्वा

स्वाधिकारं सुदुष्करम्।

यतेरन्नात्मवन्तो ये

देशिकाद्या जिगीषवः॥ १॥

आत्मा विद्यते येषां ते आत्मवन्तः आत्मारामत्वेन नियुक्तत्वात्

साक्षात्कृताऽऽत्मस्वरूपाः। नित्ययोगे मतुप्। किञ्चैवंविधानां

देशिकपुत्रकसमयिसाधकानां निजनिजाधिकारकरणमर्थं दुष्करं

बुध्वा ते दिशिकप्रभृतय उत्तरोत्तरभूमिका जयैषिणः तदर्थं यतेरन्

प्रयत्नवन्तस्स्युः इति विधौ लिङ्।

अथ तावत्किमिदमात्मवत्वं नामेत्याह।

तदात्मवत्वं योगित्वं

जिताक्षस्योपपद्यते।

प्राणायामाद्यनुष्ठाना -

ज्जिताक्षत्वं शनैश्शनैः॥ २॥

युज्यते शिवत्वलक्षणया स्वस्वरूपाभिव्यक्त्याऽवश्यमिति योगी। तस्य

भावो योगित्वं आत्मवत्वाविनाभावि। अत एव युजिर्योग

इत्यस्माद्धातोर्योगशब्दो ज्ञेयः। न तु युज्समाधाविति। अस्य

तदङ्गत्वेनेष्टत्वात्। एतच्च जिताक्षस्येति तस्य वशीकृतेन्द्रियग्रामस्यान्यदपि

कार्यन्निर्वहति। किं पुनर्योगित्वम्। तथा चाहुः। इन्द्रियाणां विचरतां

विषयेष्वपहारिषु। संयमी यत्नमातिष्ठेद्विद्वान् यन्तेव वाजिनां इति।

जितेन्द्रियस्यत्वचिरादेव स्वरूपलाभः। उक्तं च सनकेन

इन्द्रियाणीन्द्रियार्थांश्च तन्मात्राणि मनस्तथा। नियम्य गतिसङ्कल्पः

परमात्मनि लीयते इति। कथं तज्जिताक्षत्वं स्यादित्याह

प्राणायामाद्यनुष्ठानादिति।

वक्ष्यमाणलक्षणप्राणायामाद्यङ्गसप्तकाभ्यासाज्जितेन्द्रियत्वं

शनैः क्रमेण भवति। द्वितीयश्शनैश्शब्दोऽभ्यासविषये

शनैर्वक्ष्यमाणमात्राविवर्धनक्रमेण प्राणायामादयोऽनुष्ठेयाः।

यस्मादतिमात्रमभ्यस्यतां

वातगुल्मगुदोदावर्तोर्ध्वश्वासोन्मादस्मृतिमोषादयो योगविघ्नहेतवो दोषा

उद्भवेयुः॥ २॥

अथ साङ्गं योगमुपदेष्टुमाह।

प्राणायामः प्रत्याहारो

धारणा ध्यानवीक्षणे।

जपस्समाधिरित्यङ्गान्य -

ङ्गी योगोऽष्टमस्स्वयम्॥ ३॥

प्राणायामादीनि सप्ताङ्गानि। योगस्तु स्वयमष्टमोऽङ्गित्वेन ज्ञेयः

॥ ३॥

अथैषां प्राणायामादीनां लक्षणं वक्ति।

प्राणः प्रागुदितो वायुः

आयामोऽस्य प्रखेदनम्।

प्रेरणाकृष्टिसंरोध

लक्षणः क्रतुदोषनुत्॥ ४॥

प्राणनादिवृत्तिभेदादेकस्याऽपि वायोः

प्राणापानादिपञ्चभेदत्वं तद्वृत्तयश्च विद्यापादे प्रदर्शिताः।

तादृग्विधस्य तस्य वायोः खेदनं स्वातन्त्र्यभावादाधिक्येन बहिः

प्रेरणम्। तस्यैवचान्तः तथाकर्षणं संरोधश्च कुंभीकरणं

रेचनप्रवेशनविरामः एवंलक्षणं यत्प्राणादीनां प्रखेदनं स

प्राणायामः। क्रतुशब्देनेन्द्रियाणि सङ्कल्पो वा तेषां दोषाः

विहिताननुष्ठाननिषिद्धाचरणकृताः तान्नुदत्युपशमयतीति तद्दोषनुत्।

उक्तं हि दह्यन्ते ध्मायमानानां धातूनां हि यथा मलाः।

प्राणायामैस्तथा दोषाश्शाम्यन्तीन्द्रियगोचरा इति॥ ४॥

अथ प्रत्याहारस्य लक्षणम् -

ततस्सुखलवास्वादे

तेषां वृत्तस्य चेतसः।

प्रत्याहारो विधातव्यः

सर्वतो विनिवर्तनम्॥ ५॥

ततः प्राणायामाभ्यासादनन्तरं प्रत्याहारः कार्यः।
किंरूपोसावित्याह तेषामिति तेषामिन्द्रियाणां सम्बन्धी वैषयिको
यस्सुखलव आनन्दलेशस्तदास्वादे वृत्तस्य तत्परस्य चेतसस्सर्वेभ्यः
एवेन्द्रियार्थेभ्यः प्रत्याहरणं प्रत्याहारः विधेयः॥ ५॥

इत्थमनुष्ठितः किं स्यादित्याह।

तेनेन्द्रियार्थसंसर्ग
विनिवृत्तेश्चितो मतिः।
धारणायोग्यतामेति -
पदे स्वेच्छाप्रकल्पिते॥ ६॥

तेन प्रत्याहारेण चितश्चित्तस्येन्द्रियार्थसंयोगात्प्रत्याहृतत्वा-द्या
विनिवृत्तिः स्वव्यापारविरतिस्तस्या हेतुभूतायाः स्वेच्छाप्रकल्पिते पदे
वक्ष्यमाणधारणायोग्यतां मतिरभ्येति। नचात्र मतिर्बुद्धिः अपि तु
मननं मतिस्सङ्कल्पाख्यश्चेतसो व्यापारः तस्यैव धारणाश्रवणात्।
यदाह पतञ्जलिः देहबलश्चित्तस्य धारणा इति। तथा धारणासु
मनसोयोग्यतेति॥ ६॥

ध्यानं वक्तुमाह -

चिन्ता तद्विषया ध्यानं
तच्चादिष्टं मुहुर्मुहुः॥ ६॥

धारणारुद्धस्य चित्तस्य त्रिनेत्रपञ्चवक्त्राद्याकारविषया या चिन्ता तद्ध्यानम्। तच्चादिष्टमिति हेमालिहिमरत्नाभवक्त्राम्बुज-चतुष्टयम् इत्यादिनाऽवसरान्तरेषु मुहुर्मुहुरुक्तम्॥ ६॥

अथ समाधेर्लक्षणम् -

तदेकतानतामेति
स समाधिर्विधीयते॥ ७॥

तद्ध्यानमेकतानतां ध्येयैकनिर्भासत्वं यदाभ्येति तदा समाधिरिति शास्त्रेषु प्रदृश्यते यदाह पतञ्जलिः तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिरिति॥ ७॥

वृत्तिः।

जपस्य लक्षणं कथयति।

जपस्तद्भाषणं ध्येय
सम्मुखीकरणं मुने॥ ७॥

मानसस्यान्तस्संजल्परूपस्योपांशुसंज्ञस्य च
स्वसंवेद्यलघुध्वनेर्भाष्यस्य च श्रूयमाणस्य मन्त्रस्य
ध्येयसम्मुखीकरणाय १आवर्तनं जप इत्युक्तम्॥ ७॥

१। प्रत्ययादिप्रकरणे द्वाविंसश्लोकः।

ऊहमिदानीं लक्षयितुमाह -

ऊहोऽभिवीक्षणं वस्तु
विकल्पानन्तरोदितः॥ ८॥

यत्तदूहं मतिः पुंसां भ्रमत्यन्धेव मार्गति। तत्कुर्वन्नुच्यते
प्राण इत्यनेन विद्यापादे प्राणाख्यस्य वायोस्सौक्ष्म्याच्च
तक्ष्यन्नुदन्नूहन् यदुक्तं तथा च श्रीमत्स्वायम्भुवे तदनूहःप्रवर्तते।
इति स ऊहो वीक्षणात्मकः तत्तद्भूमिकावाप्तितो लब्धे वस्तुनि

असन्तोषकृताद्विकल्पात्समनन्तरमुदित उद्भूतो ज्ञेयः॥ ८॥

अथ कस्मिन्नूहोऽसौ कार्ये योगिन उपयोगीत्याह।

यदा वेत्ति पदं हेय
मुपादेयं च तत्स्थितेः।
तत्पोषकं विपक्षं च
यच्च तत्पोषकं परम्॥ ९॥

तस्योहस्य स्थितिरवस्थानं ततो हेतोः क्रमेण यदेति यस्मादर्थे
यस्मात्कारणाद्योगी समुत्पद्यमानः यथावस्थितसकलवस्त्ववभास-नया
हेयं पदं तस्य च पोषकं तद्विपक्षकं विपक्षपोषकं च वेत्ति। यथा
उपादेयं तत्पोषकं विपक्षकं विपक्षपोषकं च जानाति अत एव
प्रकृष्टं योगाङ्गम्। यथोक्तं मालिनीविजये योगाङ्गत्वे समानेऽपि तर्को
योगाङ्गमुत्तमम्। हेयाद्यालोचनायेति श्रीमत्स्वायम्भुवेऽपि अनेन
लक्षयेद्योगी योगसिद्धिप्रवर्तकम्। निरोधकं च यद्वस्तु बहुधा
संव्यवस्थितम् इति॥ ९॥

इत्थं योगाङ्गान्युक्त्वा फलमेषामभिधातुमाह।

येषु व्यस्तसमस्तेषु

कृतयत्नस्य योगिनः।

विभान्ति शक्तयो विश्वं

व्याप्य भानोरिव त्विषः॥ १०॥

न तमीष्टे नरः कश्चित्

न रक्षोदानवामराः।

रोरुचानमतीत्यैतान्

दृक्क्रियाप्राणरोचिषा॥ ११॥

येषु प्राणायामादिष्वङ्गेषु व्यस्तसमस्तेषु कृताभ्यासस्य योगिनः सर्वाश्शक्तयो विवस्वत इव दीप्तयो विश्वं व्याप्य भान्ति भ्राजन्ते। सर्वकार्येषु अयमव्याहतसामर्थ्यस्स्यादित्यर्थः। नच तं अत्युग्रतेजस्त्वात् देदीप्यमानं संतं राक्षसदानवत्रिदशमनुजेभ्यः कश्चिदप्याक्रामति । प्रकृष्टैर्ज्ञानक्रियावीर्यतेजोभिरेतान् अतीत्यातिक्रम्य स्थितत्वादिति। रोरुचानमिति विशेषणद्वारेण हेतुः॥ १० - ११॥

अत्र मुनिः प्रश्नयति -

निवृत्तेर्मनसो हेतुः

संसर्गात्प्राणखेदनम्।

निवृत्तिर्धारणादीनां

मूलं सर्वस्य तत्ततः॥

विस्तरेण सुरश्रेष्ठ

विप्रकृष्टं च यत्स्थितम्।

यदन्यत्साधनं किञ्चित्

योगसिद्धेश्च कथ्यताम्॥ १२ - १३॥

इन्द्रियार्थसंसर्गान्मनसो या निवृत्तिः तस्याः किल प्राणायामाः

कारणत्वेनेष्यन्ते। प्राणादिजयाद्धि मनसो वश्यता भवति। सा च मनस

इन्द्रियार्थेभ्यो निवृत्तिः धारणादीनां हेतुः ततश्च हेतोस्तत्प्राणखेदनं

सर्वस्य धारणादेर्मूलमिति कृत्वा विस्तरेणोच्यताम्।

यच्चान्यद्योगसिद्धेर्विप्रकृष्टं अङ्गाङ्गितया साधनं स्थितं

हितमितजीर्णाशननिर्बाधस्थानासनादि शौचादि वा तदपि

भगवन्नमरेश्वरास्मभ्यमभिधीयतामिति मुनेः प्रश्नः॥ १२ - १३॥

अथात्रोत्तरम् -

न शक्यं विस्तराद्वक्तुं

तत्प्रसंगभयाद्विधेः।

प्रश्नस्यावश्यवाच्यत्वात्

तथाप्युद्देश उच्यते॥ १४॥

विधिप्रकाशकत्वेनोपचारात् शास्त्रेऽपि विधिव्यपदेशः। विस्तरेण वक्तव्येऽभिधीयमाने शास्त्रस्यातिविस्तरप्रसङ्गस्स्यात् इति विस्तरेण तावदभिधेयं वक्तुमयुक्तं यथायथं विस्तरभीरवो हि श्रोतारः तथापि अवश्यवक्तव्यत्वात्प्रश्नस्योद्देशस्संक्षिप्तसकलविधिनिरू-पणं क्रियते॥ १४॥

तत्रादितस्तदङ्गतया स्थितं शौचं संक्षेपतो वक्तुमाह।

मूत्राद्युत्सृज्य विधिव
देकार्धदशसप्तभिः।
मृद्भिर्लिंगगुदासव्य
हस्तयुग्मानि शौचयेत्॥ १५॥
द्विर्व्रती त्रिरपः पीत्वा
द्विर्विमृज्याननं स्पृशेत्।
खबाहुनाभिहृत्कानि
द्विस्त्रिर्वा शौचिताधरः॥ १६॥

विण्मूत्रोत्सर्गं विधिवदिति सामान्यशास्त्रविध्यनतिक्रमेण कृत्वा।

यथोक्तं वासिष्ठे अवकुण्ठितशिराः भूमिमयज्ञीयैस्तृणैरन्तरितां कृत्वा मूत्रपुरीषे कुर्यात्। उदङ्मुखोऽहनि नक्तं दक्षिणाभिमुख इति ततः एकपञ्चदशसप्तसंख्याभिर्मृद्भिः यथासंख्यं शिश्नं पायुं वामहस्तं उभौ च पाणी शौचयेत्। द्विर्व्रतीति। समयिपुत्रकादीनां चतुर्णामपि चर्यापादे व्रतित्वं वक्ष्यति। ततश्चायमव्रतिविषयश्शौचविधिः। व्रतीतु तदेव द्विगुणमाचरेत् त्रिरपः पीत्वेति आचम्य द्विश्चास्यं परिमृज्य खानि इन्द्रियच्छिद्राणि बाहुनाभिहृच्छिरांसि च स्पृशेत्। द्वौ वारौ त्रीन् वारान् वाऽधरोष्ठौ क्षालयेत्॥ १५ - १६॥

तदनन्तरं च -

हितजीर्णाशनस्वस्थः
त्रिकुड्यावेष्टिते गृहे।
बाधाशून्ये वनादौ वा
स्वासनस्थ उदङ्मुखः॥ १७॥
नमस्कृत्य महेशानं
उमास्कन्दगणाधिपान्।
ऋजुग्रीवशिरोवक्षाः।
नासाग्राहितदृग्द्वयः॥ १८॥

पार्ष्णिभ्यां वृषणौ रक्षन्

दन्तैर्दन्तानसंस्पृशन्।

विष्टब्धदेहो दन्ताग्रे

जिह्वामादाय सुस्थितः॥

रेचयेच्छक्तिपर्यन्तं

नासापुटेन मारुतम्॥ १९॥

हितं पीडारहितं जीर्णे परिणामप्राप्तौ अशनं यस्य स एवम्। स्वस्थः अत एव धातुसाम्यादिना। त्रिभिः कुड्यैः प्राकारैः आवृते निश्शब्दे गृहे निर्बाधे वा वने गिरिगुहादौ वा सुखावस्थितिहेतुत्वात् सुष्ठु शोभने चेलाजिनाद्युत्तरे आसने पीठपट्टादौ स्थितः यद्वा अभ्यासवशात् सुष्ठु स्थैर्यसुखहेतौ आगमान्तरेषूपदिष्टलक्षणे पद्मस्वस्तिकार्धचन्द्रादिके योगासने तिष्ठतीति स्वासनस्थः। उत्तरदिङ्मुखः। परमेश्वरं देवीं गुहं गणेशं च नत्वा। सुस्पष्टकण्ठशिरोवक्षाः स्वनासिकाप्रान्तनिहितदृष्टिः व्यवहितोत्तराधरदन्तपङ्क्तिः। पार्ष्णिभ्यां मुष्कपीडं उद्घातवशात् उत्प्लुतौ वारयन् अकुञ्चितशरीरः सुस्थितो दन्तप्रान्तनिहितजिह्वस्सन् यथशिक्ति दक्षिणेन नासापुटेन वायुं शरीरान्तस्थनाडीसंशोधनार्थं रेचयेत् बहिः क्षिपेत्॥ १९॥

स रेचकस्तदभ्यासात्

वेधविक्षिप्तकर्मसु।

क्रमशश्शक्ततामेति

विकृष्टविषयेष्वपि॥ २०॥

उक्तलक्षणस्य रेचकस्याभ्यासात् क्रमेण व्यवहित विषयेष्वपि वेधकर्मसु विक्षिप्तकर्मसु च विशारुताकारणरूपेषु योगी शक्ततां प्राप्नोति॥ २०॥

अथ पूरकलक्षणम् -

बाह्येन वायुना मूर्तेः

यथाशक्तिप्रपूरणम्।

पूरकस्सतदभ्यासा -

त्सुगुर्वपि विकर्षयेत्॥ २१॥

बहिष्ठेन मारुतेन यथाशक्ति मूर्तेः प्रकर्षेण पूरणं पूरकः। तस्मिन्नभ्यस्ते सुष्ठु गरिष्ठमपि शिलाद्याकर्षणशक्तो भवेत्॥ २१॥

कुम्भकं कथयितुमाह -

त्यागसंग्रहणे हित्वा

निरोधः कुम्भकस्स्मृतः।

रोधशक्तिस्तदभ्यासात्

व्यक्तिमेत्यनिवारिता॥ २२॥

रेचनात्मकं त्यागं पूरणरूपं सङ्ग्रहणं त्यक्त्वाऽन्तस्थस्य

वायोर्निरोधात् कुम्भकः। तदभ्यासात् अव्याहतरोधशक्तिः

अभिमतवस्तुस्तम्भनसामर्थ्यं व्यज्यते॥ २२॥

तथास्य चरतो विद्वान्

सोमसूर्येशवर्त्मसु।

तद्धर्मयोग्यतां बुद्ध्वा

योगी संसाधयेन्मतम्॥ २३॥

तदभ्यासात् विधेयत्वेनास्य वायोः चरतः प्रचारज्ञो योगी

मध्यवामदक्षिणनाडीचारेषु चिकीर्षितवस्त्वानुगुण्यं निश्चित्य

यथाऽस्मिन् कर्मणि दक्षिणश्चरन् श्रेष्ठः अमुष्मिन् मध्यमः एतस्मिंस्तु

सौम्यः प्रशस्तः इत्येवं मत्वाऽभीष्टं योगी साधयेत्॥ २३॥

तथाहि -

पूरकं कुम्भकं वाऽपि

भजेच्चन्द्रपथि स्थिते।

पुष्टिं मृत्युंजयाद्यर्थं

स्वात्मनोऽन्यस्य रेचकम्॥ २४॥

अनग्निज्वलने वृक्ष

शोषणे बीजनाशने।

स्तोभोन्मादविषोद्दीप्ति

मुखेषु॥ ॥ ॥टु रेचकम्॥ २५॥

ध्यानार्चनजपाद्येषु

देहत्यागे च शांकरे।

कुम्भको रेचकश्रेष्टा

दीक्षा संस्थापनेषु च॥ २६॥

वामनाड्यवस्थिते मरुति कुम्भकपूरकौ पुष्ट्यर्थं आत्मन

आप्यायनार्थं मृत्युञ्जयाद्यर्थमित्यादिग्रहणात्॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥च कुर्यात्।

(यदुक्तं) परस्य पुष्ट्याद्यर्थं वा वामस्थं रेचकं भजेत्। इति।

यदात्वनग्निज्वलनवृक्षशोषणनिर्बीजीकरणस्तोभोन्मादविषोद्दीपन-

प्रमुखकार्याणि कर्तुमिष्टानि तदानीं सौरमार्गस्थेन चारेण रेचकं

कुर्यात्। स्थोभः स्वल्पस्य विषज्वालादेर्बहलीकरणं शाङ्कर इति

शिवाश्रयसौषुम्नमार्गस्थविषुवति कर्तव्यतयोक्तं

यत्तद्ध्यानार्चनजपादिकार्यं उत्क्रान्तिर्वा तद्विषये दीक्षासंस्थापने

कुम्भकरेचकाविष्टौ। संस्थापनं प्रतिष्ठापनम्॥ २६॥

अथैषां रेचकादीनां अभ्यासाय कालपरिमाणं प्रति नियमं

वक्तुमाह।

यवीयान् मध्यमो ज्येष्ठ

स्सतालैर्द्वादशादिभिः।

तालो द्वादशभिर्जानु

परिणाहपरिभ्रमैः॥ २७॥

हस्तेन जानुमण्डलपरिभ्रमणं यावत्या कालमात्रया क्रियते

तावतीभिर्द्वादशभिः तालाख्यः कालांशो ज्ञेयः। तैश्च

तालैर्द्वादशभिः कनिष्ठः प्राणायामः। चतुर्विंशत्यामध्यमः

अष्टाचत्वारिंशताश्रेष्ठः। तथोक्तं श्रीसर्वज्ञानोत्तरे तालद्वादशको

ज्ञेयः प्राणायामस्तु कन्यसः। मध्यश्चतुर्भिर्विंशत्या

श्रेस्ठस्तद्विगुणो भवेत्। इति॥ २७॥

इत्थं प्रतिनियमप्राणरेचककुम्भकपूरकसमुदायरूपो यः

प्राणायामः।

सोऽपि ध्यानजपोपेत

स्सगर्भोऽन्यस्तदुज्झितः।

यथा सगर्भस्स्थैर्याय

मनसो न तथेतरः॥ २८॥

सोऽप्ययं प्राणायामो ध्यानेन जपेन युक्तः। सगर्भाख्यया

ज्ञेयः। यस्तु विनैव ध्यानजपाभ्यां क्रियते स निर्गर्भः। यथा च

मनसस्स्थैर्यहेतुत्वं सगर्भस्य न तथा निर्गर्भस्येति

सगर्भप्राणायामार्थं अभ्यासः कार्यं इति तात्पर्यं॥ २८॥

प्रातर्निशाकृतं पापं

दिनान्ते च दिवाकृतम्॥ २९॥

प्रभाते कृतोऽयं सगर्भप्राणायामः निशाकृतं पापं हन्ति।

दिनान्ते तु कृतः स दिवाकृतं हन्ति ग्रहस्थेनेति सम्बन्धः॥ २९॥

एवं च किञ्चिन्निर्गर्भेण प्राणायामेन प्रयोजनम्। अतः किं

तेनेत्याह।

हन्त्यगर्भोऽपि देवानां

प्रचलत्वं प्रधावताम्॥ २९॥

देवानां मनस्सहितानामिन्द्रियाणां विषयेषु अनाद्यविद्यावशात्

प्रकर्षेण धावतां एष निर्गर्भः प्राणायामः सातत्येन क्रियमाणः

प्रचलत्वं प्रकृष्टवेगवत्वं हन्ति। इन्द्रियजयकारीत्यर्थः॥ २९॥

किं च -

स्नातो भवति तीर्थेषु

सर्वक्रतुषु दीक्षितः।

पोतः पितृणां पश्शश्वत्

सगर्भमिममाचरेत्॥ ३०॥

यस्तु नियुक्तत्वेन इमं जपध्यानयुक्तं सगर्भमभ्यस्यति स

सर्वतीर्थेषु स्नातस्य समस्ताध्वरेषु दीक्षितस्य च फलं लभते। पितृणां

च संसारोत्तरणे पोतः प्लवो भवति। तत्प्रसादात्तेऽपि भवाब्धिं

समुत्तरन्तीत्यर्थः॥ ३०॥

सगर्भतामेव वक्तुमाह -

ध्यायेदध्वान्तकं देवं

जपेत्तद्वाचकं सदा।

क्षित्यादीन्यथ तत्वानि

तद्रूपाणि कृतानि वा॥ ३१॥

सर्वाधिष्ठातृत्वेन हेतुनाऽध्वनः पर्यन्तवर्तिनं परमेश्वरं सकलकारणातीतं परमार्थत्वेन ध्यायेत्। तस्य च वाचकमन्त्रं जपेच्छब्दार्थरूपाववियुक्तौ प्राणायामसमये कुर्यादित्यर्थः। यदि वा धारणाफलं लिप्सुः पृथिव्यादीनि परमेश्वरस्वरूपाश्रयत्वेन च ध्यायेत् । सकलचिदचिद्भावाधिष्ठातृत्वेन तथा भगवतस्सर्वदा सर्वत्रावस्थितेः॥ ३१॥

अथ पृथिव्यादितत्वध्याने किं भगवद्भावनयेत्याह -

यस्मान्नाचेतनं तत्वं

सिद्धमप्युपकारकम्।

शैवं वपुरिति ध्याये

दतो यद्यत्समीहितम्॥ ३२॥

यतः किल स्वभावजडं पृथिव्यादिवस्तुजातं

शिवस्वरूपाधिष्ठानं विना कृतध्यानाभ्यासतस्सिद्धमपि नोपकारकं

अतः पारमेश्वरमेवैतत्सर्वं वपुरिति ध्यायेत्। अतः यद्यत्किमप्यभिप्रेतं

अचिद्रूपमपि वस्तु ध्यायेत्॥ ३२॥

यतश्चैवमतः -

सिद्धये धारणादीनां

वृत्तीनामनिलस्य च।

सगर्भं कुम्भकं विद्वान्

आतिष्ठेदविखिन्नधीः॥ ३३॥

धारणादीनां योगाङ्गानां प्राणादिवृत्तीनां च प्रागुक्तानां

प्रणयनाद्यर्थानां सिद्ध्यर्थं सगर्भं कुम्भकाभ्यासं

अनुद्विग्नबुद्धिस्सन्नातिष्ठेत् आचरेत्॥ ३३॥

अयमर्कगुणं कालं

कृतचित्तव्यवस्थितिः।

प्राप्नोति धारणाशब्दं

धारणासिद्धिदानतः॥ ३४॥

अयं सगर्भः कुम्भकः द्वादशगुणं कालं चित्तवृत्तिनिरोधेन
कृतस्सन् धारणाव्यपदेशं लभते। कुत इत्याह धारणासिद्धिदानतः
धारणासम्बन्धिनीं सिद्धिं तथाऽभ्यस्यमानो ददाति॥ ३४॥

स्थित्यर्थो धारणाशब्दः
स्थानार्थोप्युपचारतः॥ ३५॥
स्थानं प्राथमिकस्येमा -
न्यवन्यादीनि नेतरत्॥ ३५॥

प्राथमिकस्य प्रथमाभ्यासवृत्तस्याऽऽरुक्षोः पृथिव्यादीनि तत्वानि
अभ्यासस्य स्थानं नत्वन्यदप्रत्यक्षमहदहङ्कारादितत्व-
जातमुपलभ्यमानपृथ्व्यादितत्वाभ्यासपूर्वस्तु तत्तदभ्यासस्सुगम एवेति
सर्वयोगशास्त्रेषूपदेशक्रमः॥ ३५॥

अथैषामेव रूपाकृतिप्रयोजनलांछनान्यभिधत्ते -

तानि हेमहिमज्योतिः
कृष्णस्वछानि रूपतः।

वेद्यर्धमण्डलत्र्यश्र

वृत्तपद्माकृतीनि तु॥ ३६॥

स्थैर्याप्यायनविप्लोष

प्रेरणाशून्यताप्तये।

भवन्ति वज्रकज्वाला

बिन्दुशून्यान्वितानि तु॥ ३७॥

तानि पृथिव्यादीनि पञ्चतत्वानि यथासंख्यं रूपतः पीतसितो-
ज्वलकृष्णस्वच्छानि संस्थानाच्चतुरश्रार्धेन्दुत्रिकोणपरिवर्तुल-
पद्माकाराणि क्रमाच्च वज्रेण वारिजेन ज्वालया बिन्दुना शून्येन च
लांछितानि स्थैर्याद्यर्थं भवन्ति। तत्साधकानि सम्पद्यन्त इत्यर्थः॥ ३७॥

तानि च -

बाधकान्यनुवर्तीनि

मध्यस्थान्यवगत्य च।

योगी व्यस्तसमस्तानि

बिभृयादिष्टसिद्धये॥ ३८॥

पृथिव्यादीन्येव मित्रामित्रमध्यस्थत्वेन व्यस्तसमस्तानि बुद्ध्वा तेषु

कार्येष्विष्टसिद्ध्यर्थं योगी धारयेत्॥ ३८॥

अथ धारणरूपतत्फलजिज्ञासया मुनिः प्रश्नयति।

क्व देशे धारणारूपं

चिन्तनीयं विपश्चिता।

किञ्च व्यस्तसमस्तानां

फलं ब्रूहि सुरेश्वर॥ ३९॥

धारणासु यदेतद्रूपं हेमहिमज्योतिःकृष्णस्वच्छत्वादिनोप-

दिष्टं तत् कस्मिंस्थाने तद्विदा चिन्त्यम्। आसां च धारणानां

व्यस्तसमस्तानां फलं सुराधिनाथास्मभ्यमादिशेति प्रश्नार्थः॥ ३९॥

अर प्रतिवचनम् -

हृदि चेतसि विक्षिप्ते

धारयेत्क्षितिमर्थवित्।

जलं पिपासितः कण्ठे

मन्देऽग्नौ जठरेऽनलम्॥ ४०॥

प्राणादिवृत्तिसिद्ध्यर्थं

हृत्कण्ठादिषु मारुतम्।

विषाद्यभिभवे व्योम

तेषु यत्रोपयोगवत्॥ ४१॥

चेतसो यदा विक्षिप्तता स्यात् तदा प्रयोजनज्ञो योगी हृत्प्रदेशे पार्थिवीं धारणां स्थैर्यकारणत्वेनोक्तां धारयेत्। दुर्वारया तृषा तु यदा बाधितस्स्यात् तदा वारुणीं धारणां कण्ठे बिभृयात्। आप्यायनार्थं तस्याः प्रोक्तत्वात्। जाठरस्याग्नेर्मान्द्ये सति तत्सन्धुक्षणार्थं जठरे प्रागुक्ताम् आग्नेयीं बध्नीयात्। प्राणादिवृत्तीनां प्रागभिहितानां प्रणयनाद्यानां सिद्ध्यर्थं स्वाधीनत्वे सति तत्तत्फलसम्पादकत्वाय पूर्वोक्तेष्वेव हृत्कण्ठादिषु स्थानेषु वायवीं धारयेत्। विषोन्मादव्याध्याद्यभिभूयमानस्तु तेष्वेव हृदयादिषु मध्यात् अन्यतमे स्थाने व्योमधारणां बध्नीयात्। यत्र वा विषाद्युपघातवत्यङ्गे तथा धारणाद्युपयोगवत् सप्रयोजनं तस्मिन् धारयेत्॥ ४१॥

इदानीं परस्परमेषां पृथिव्यादीनां मध्यस्थारातिमित्रत्वं विवेचयन् सर्वसाधारणत्वमाकाशस्य तावत्प्रथममभिधात्तुमाह।

खं समस्तेषु भूतेषु

वायुवारी शिखिक्षिती।

वार्यग्नी भूमिपवनौ

वारिक्ष्मे चाऽनलानिलौ॥ ४२॥

मध्यस्थारातिमित्राणि

चतुष्के युग्मयुग्मशः।

परिज्ञायेति मतिमान्

योजयेदिष्टसिद्धये॥ ४३॥

आकाशस्तावद्व्यापकत्वात् अन्तर्वर्तित्वेन सर्वेषामवकाशदायि-त्वेन च मित्रमेषां ज्ञेयम्। वायुवारीशिखिक्षितीत्यादेश्चतुष्कत्रया-देकैकस्मिन् चतुष्के यथाक्रमं (युग्मयुग्मश इति। द्वयं द्वयं क्रमान्मध्यस्थारातिमित्राणि एतानि बोद्धव्यानि। तथाहि वायुवारी शिखिक्षितीत्याद्ये चतुष्के जलपवनयोः क्षित्यग्न्योश्च परस्परं न मित्रत्वं व शत्रुभावः इति मध्यस्थत्वमेषां बोद्धव्यम्। वार्यग्नी भूमिपवनाविति अत्राऽपि मध्यमचतुष्के बाध्यबाधकभावेन परस्परमेषाञ्चतुर्णाम् अवस्थितेः अरातित्वं शत्रुता। वारिक्ष्मे - चानलानिलावित्यत्र तु तृतीयेऽस्मिन् चतुष्के भूजलयोर्वाय्वग्न्योश्चान्यो-न्यपोषकत्वान्मित्रत्वमित्येवं परिज्ञाय बुध्वा प्राज्ञो योगी तथातथा साधकत्वेन वा यथावसरमिष्टसिद्ध्यर्थे एतान् प्रयुञ्जीत॥ ४२ - ४३॥

अथ विद्यापादान्तर्गतप्रत्ययादिविचारप्रकरणे प्राणादिवायूनां स्वरूपोक्तौ स्थानं यद्यस्य धारणे। जयः फलं वाच्यशेषं पत्या स्कन्धे समीरितम् इति यदुक्तं ततः प्राणादिवृत्तीनां स्थानं साधारणं फलं च ज्ञातुं मुनिः प्रश्नयति।

कानि प्राणादिवृत्तीनां
स्थानान्यस्मिन् शरीरके।
जितासु तासु किं वा स्यात्
इति ब्रूहि सुरोत्तम॥ ४४॥

प्राणापानादिवृत्तीनां प्रणयनापनयनाद्यानां कानि स्थानानि येषु तज्जयः कार्यः। तासु च प्राणादिवृत्तिषु जितास्वस्मिन् शरीरे किं फलिष्यतीति भगवन्निन्द्राऽस्माकमाचक्ष्वेति प्रश्नार्थः। व्यापकस्याप्यात्मनः तत्कृतमव्यापकत्वं कुत्सितत्वं वा द्योतयितुं कप्रत्ययः॥ ४४॥

अत्रोत्तरम्।

तस्य हृत्कण्ठनाभ्यङ्ग
पृष्ठदेशेषु धारणात्।

जयः प्रणयनादीनां

वृत्तीनां योगिनो भवेत्॥ ४५॥

तस्य प्रागुक्तस्य प्राणादिरूपतया स्थितस्य वायोः हृदादिपृष्ठान्तेषु पञ्चसु स्थानेषु रोधात्प्रणयनादीनां प्राणादिवृत्तीनां जयो भवति योगिनः॥ ४५॥

जितप्रणयनो धत्ते

स्वेच्छया देहमात्मनः।

जितापनयनोऽश्नाति

शकृदादिजहाति न॥ ४६॥

विजितोन्नयनोऽभ्येति

वाग्वशित्वादिकान् गुणान्।

समानवृत्तिविजयात्

भवेत्त्यक्तजरो वशी॥ ४७॥

वपुर्विहारवशिता

भवेद्विनमने जिते।

पंकाम्बुकण्टकासङ्गो

वीर्यमक्षयमद्भुतम्॥ ४८॥

जिता प्रणयनाख्या प्राणवृत्तिर्येन स एवंविधो योगी यावद्रुचि

स्वेच्छया स्वदेहं धारयति। वृत्तिः प्रणयनं नाम यत्तज्जीवनमुच्यत इति

प्रणयनस्य जीवनरूपत्वेनोक्तत्वात्। जितात्वपनयनाख्यापानवृत्तिर्येन

सताद‍ृग्विधो योगी अश्नन्नपि निर्मलदेहो भवति। अपानजयाद्धि

विण्मूत्रादिमलभावेन नास्य पानाशनादि परिणमति। अपि तु

रसधातुभावेनैव। अन्तश्शकृदादिमलोझित एवैष सम्पद्यते। सर्वदेहिनां

हि रसमलधातुभावेनान्नपानपरिणतिर्भवति। विजिता

चोन्नयनाख्योदानवृत्तिर्येन असौ कवित्ववक्तृत्वरूपवाक्स्वातन्त्र्यप्रभृतीन्

गुणान् प्राप्नोति। येन तु समानवृत्तिर्विजिता स सर्वदा जरावर्जितस्सर्वसहः

सर्वस्वदेहो भवति। विनमनाख्यव्यानवृत्तिव्यापारे कृतजयः स्वेच्छया

वपुषि विहरति। ब्रह्मरन्ध्रेण श्रवणच्छिद्रादिना वा

मरुत्प्रेषणाकर्षणादौ शक्तस्स्यादित्यर्थः। तथा

कर्दमजलकण्टकाद्युपविष्टोपि तैरसम्पर्काश्रयरूपः अविनश्वरं चास्य

बलं सञ्जायते॥ ४८॥

एवमानुषङ्गिकप्रश्नप्रतिवचनादनन्तरं प्रकृतमभिधीयते।

धारणाद्वादश ध्यानं

दिव्यालोकप्रवृत्तिदम्।

समाधिरणिमादीना

द्वादशैतानि कारणम्॥ ४९॥

द्वादशभिः सगर्भैः कुम्भकैः धारणा पूर्वमुक्ता। ताश्च द्वादश ध्यानं ज्ञेयम्। तच्च दिव्यामलौकिकीमालोकप्रवृत्तिं प्रकाशाविर्भूतिं ददातीति दिव्यालोकप्रवृत्तिदमिति तदभ्यासस्य फलमुक्तम्। एतानि च द्वादश ध्यानानि समाधिरित्युच्यते। सत्वणिमादिदिव्यसिद्धिकारणम्। अन्यस्तैवंविधसमाधेरणिमाद्याविर्भावस्स्यात्॥ ४९॥

प्राणायामं विनाप्येवं
वश्यात्मा चेतसि स्थितः।
समभ्यस्यन्नवाप्नोति
गुणानुक्ताननन्तरम्॥ ५०॥

एवमनेन प्रकारेणाऽऽत्मनि नित्ययुक्ततया वश्यात्मा योगी विनापि प्राणायामेन क्वचिदपि देशे कृतिनिरोधायां चित्तवृत्तौ स्थित एव तदभ्यस्यन् स आनन्तर्येणैतान् गुणान् अणिमादीन् लभते॥ ५०॥

किञ्च -

यद्यद्वस्तु यथोद्दिष्ट

क्रमयोगात्प्रपद्यते।

तत्र तत्रास्य चिद्व्यक्तिः

तद्व्याप्तिविषया भवेत्॥ ५१॥

इति बाह्ये स्थिते सर्व -

माकलय्येव चक्षुषा।

सर्वान् पदार्थान् सन्त्यज्य

शिवतत्त्वं समभ्यसेत्॥ ५२॥

यथोक्तक्रमाभ्यासात् यद्यत्पृथिव्यादिशिवान्ततत्वं प्रतिपद्यते

धारणादिना स्वात्मीकरोति तत्रतत्रास्य योगिनः तद्व्याप्तिविषया

स्वसंविद्व्यक्तिर्भवति। तथाहि आदौ पृथिव्यादितत्वानां

शिवमन्त्रमहेश्वरमन्त्रेश्वरमन्त्रविज्ञानाकलप्रलयाकलसकलैः

सप्तभिश्शक्तिमद्भिरेतावतीभिरवैतच्छक्तिभिस्स्वरूपेण पृथिव्यादीनां

सहैकैकस्य पञ्चदशप्रकारतया जाग्रदादिपिण्डस्थादिरूपतया च यावती

व्याप्तिः यथोक्तं - श्रीमच्चिच्छक्तिभेदेन धरातत्वं विभिद्यते।

स्वरूपसहितं तच्च विज्ञेयं दश पञ्च च।

शिवादिसकलात्मानश्शक्तिमन्तः प्रकीर्तिताः। तच्छक्तयश्च विज्ञेयाः

तद्वदेव विचक्षणैः। एवं जलादिमूलान्तं तत्त्वव्रातमिदं महत्।

पृथक्भेदैरिमैर्भिन्नमित्यादि। तदेवं तद्व्याप्तिकस्य योगिनः

संवित्तावतीत्येवं श्रीमत्कामिकतन्त्रे श्रुतम्। यद्वाह्यं तस्मिं स्थिते सर्वं वस्तु स्वदृग्गोचरतां प्राप्तं बुध्वा शिवव्यतिरिक्तान् सर्वानेव तान् पदार्थान् सर्वाध्वपर्यन्तवर्तिशिवपदप्राप्तिहेतुत्वात् विद्याप्रभृतींस्त्यक्त्वा शिवतत्वमभ्यस्येत् तदेकनिष्ठस्स्यात्। हेयान् पदार्थान् सन्त्यज्येति पाठे स्पष्ट एवार्थः॥ ५२॥

शिवगर्भान् समातिष्ठन्
प्राणायामादिकानपि।
जहाति जन्तुर्यः प्राणान्
स शिवत्वं प्रपद्यते॥ ५३॥

आस्तां तावद्व्याप्तिविषया विद्यक्तिर्वक्ष्यमाणैकान्तविधिं विनाऽपि परमेश्वरध्यानजपगर्भान् प्राणायामान् कुर्वन्यो जन्तुः प्राणान् त्यजति स शिवतामेति अपवृज्यत इत्यर्थः॥ ५३॥

अथाऽत्र मुनिः -

रूपं परं महेशस्य
ध्यातुं शक्यं न जातुचित्।
वैचित्र्यात्कल्पितं भ्रान्त्यै

तत्रास्था चेतसः कथम्॥ ५४॥

निष्कलस्वरूपस्य तावत् भगवतस्स्वरूपं निराकारत्वे सति नीरूपत्वात्
ध्यातुं न शक्यम्। यदाहुः आकारवांस्त्वं नियमादुपास्यः न
वस्त्वनाकारमुपैति बुद्धिः। अथास्य परमार्थतो रूपासम्भवेऽपि
ध्यायिनां चित्तवृत्तिनिबन्धनाकारविशेषकल्पना तस्यैतत्कल्पितं रूपं
श्वेतपीतरक्तादिवैचित्र्यात् भ्रान्त्यै स्यात्। कथं तत्र चेतस आस्था स्थितिः
कल्पितत्वेनासत्यरूपविषये स्वभावचञ्चलस्य चेतसः कथं नियमनमिति
प्रश्नः॥ ५४॥

अथात्र समाधिः -

पार्थिवाप्ये विचित्रांके
न ध्येये धारणे तदा।
तथाप्याभासतस्सिद्धाः
श्रूयन्ते योगिनस्तयोः॥ ५५॥

सत्यं अरूपस्य भगवतस्स्वरूपं उक्तेन क्रमेण ध्यातुमशक्यं
तत्र तु निरालम्बनोपदेशक्रमेण तत्स्वरूपावाप्तिर्भविष्यति। यत्तु -
वैचित्र्यात्कल्पितं भ्रान्त्यै इत्युक्तं न तावद्युक्तं आगमोपदिष्टस्य

ध्यानस्य परमार्थत्वेन वैकल्पिकत्वानुपपत्तेः।

तदुपदिष्टतत्तद्विविधविध्यनुष्ठानस्य वैकल्पिकत्वाभ्युपगमे सति

दीक्षादेरप्यसत्यत्वात् आनर्थक्यमिति कृतमागमेन किञ्च वैचित्र्यात् ध्येयं

प्रति ध्यानमशक्यमिति यदुच्यते तदास्तां तावत्।

परमेश्वराकृतिचिन्तनमयेऽप्येते सुस्पष्टपार्थिववारुणाख्ये द्वे धारणे

सकलसामान्ययोगशास्त्रप्रसिद्धे। ते अपि विचित्ररूपवज्राङ्कितत्वात्

सितसलिलोत्पललांच्छितत्वाच्च न ध्येये ध्यातुं न शक्ये। न

चैवमत्राभ्युपगमो युक्तः यतस्तयोः पार्थिवाप्ययोः धारणयोस्तथातथा

रूपवैचित्र्ये सत्यपि साभ्यासानां योगिनां अनेकास्सिद्धयश्श्रूयन्ते

तथैवमागमोपदिष्टस्य

धारणाफलस्यानेकसास्त्राभ्यासयोगिलब्धस्याऽपि येयं प्रतीतिः तस्यां

सत्यामपि॥ ५५॥

भोगविप्लुतचित्तस्य

कथं स्याच्चित्तसंस्थितिः।

नाधिकृत्याधिरक्ताणून्

प्राहेदं साधनं हरः॥ ५६॥

अथोच्यते जन्मसहस्राङ्गीकृतविविधभोगाभ्यासविक्षिप्तचेतसां

कथमतिचञ्चलस्य चेतसः संस्थितिः

सम्यङ्निरुद्धसकलवृत्तित्वेनावस्थानं स्यात्। यथोक्तं
श्रीमद्भगवद्गीतायां - चञ्चलं हि मनः कृष्ण प्रमाथि बलवद्दृढम्
। तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करम्। तथा - अपि
चण्डानलोद्धूततरङ्गस्य महोदधेः। शक्यते प्रसरो रोद्धुं विषयेभ्यो
न चेतस इति। नैतद्युक्तं। यतो नेदं योगाख्यं साधनमविरक्तान्
जन्तूनधिकृत्य परमेश्वर आदिदेश अपि तु
प्रचुरवैराग्यनिर्झरनिर्धूतभवभोगस्पृहाकलङ्काः तेष्वेवं
सुचिरसञ्जातनिस्सारसंसारभोगविजुगुप्साः परमत्रेति। न चाभ्यासवतां
किमपि दुष्प्रापं दृष्टेऽपि सम्भवति॥ ५६॥

अतश्च -

शक्यते विषयं कर्तुं
जगद्प्यखिलं शनैः।
किमु चित्रं वपुर्दान्तैः
वैराग्याभ्यासशालिभिः॥ ५७॥

वैराग्येण नैस्पृह्येणाभ्यासेन च पुनः पुनस्तदासेवनात्मकेन
शलन्ते शोभन्त इति वैराग्याभ्यासशालिनः दान्ताश्चोपशमयुक्ताः
एवंविधैर्योगिभिश्शनैश्शनैः निखिलमपि जगत् धारणाव्याप्तिक्रमेण

गोचरीकर्तुं शक्यते। किंपुनर्ध्येयं चित्रं पारमेश्वरं वपुरिति॥ ५७॥

इत्येवं सालम्बनयोगमुपदिश्य प्रकृष्टमनालम्बनमुपदेष्टुं

भूमिकां विरचयति -

केयं वा रूपकेयत्ता

सर्वाधिष्ठानयोगिनः।

सर्वदा सर्वभूतानां

सर्वाकारोपकारिणः॥ ५८॥

स्थानरूपप्रमाणानि

परिकल्प्य स्वचेतसा।

यत्रोपरमते चित्तं

तत्तद्ध्येयं पुनः पुनः॥ ५९॥

यद्वा सर्वाधिष्ठानयोगिनः परमेश्वरस्येयमेव श्वेतादि-वर्णा

दशभुजा पञ्चवक्त्राद्याकृतिर्ध्यातव्येति कोऽयमेवंविधं रूपं प्रति

नियमः न कश्चिदित्यर्थः। विततवैभवविजृभवतः

परिमितस्थानोपासनमसमीचीनमेव किल भगवतः। अतश्च बहिरन्तर्-

वाऽविचलितचेतसा स्थानरूपप्रमाणाकृत्यादि परिकल्प्य यत्र यत्र

भावशरीरे भूतशरीरे वा चित्तमुपशाम्यति तत्र तत्र भूयोभूयः

प्रयत्नवता गुरूपदेशसमधिगतयुक्तिना ध्यातव्यम्। उक्तञ्च पारमेश्वरे

नेन्द्रियाणि न च प्राणो न मनो धिषणेषणा। नाहमस्मि न चान्योऽस्मि

चित्तस्य प्रलयस्ततः। चित्तक्षयः परावाप्तिरिति सत्यं गणाम्बिके। इति॥ ५८ - ५९॥

अथास्यैव फलमाह -

तेनास्य चेतसस्स्थैर्यं

सविशेषगुणं शनैः।

उन्मील्य योगसंस्कारं

हतविघ्नस्य जायते॥ ६०॥

तत्राऽऽस्था चेतसः कथमिति यत् प्राक् पर्यनुयुङ्क्त। तदर्थमिदम्।

तेनामुना प्रागुक्तेन योगेनास्य योगिनो निर्विघ्नस्य

सतश्चेतसस्स्थैर्यमचाञ्चल्यं पररूपविश्रान्तेरतिविलक्षणं जायते।

कीदृशं तत्स्थैर्यमित्याह सविशेषगुणं सविशेषास्सातिशया गुणाः

प्रागुक्ता अणिमादयो यत्र। तत्तथा। किं कृत्वैतत्तूत्पाद्यत इत्याह

शनैर्योगसंस्कारं तत्स्वरूपं प्रकाश्य तद्वासनाधिष्ठितत्वात्

तद्व्यवहारावस्थितस्यास्य निर्विघ्नस्य सतस्तत्रैव चित्तस्थैर्यं जायत

इत्यर्थः॥

एवमातिष्ठतस्सम्यक्

विनैवाऽऽकारकल्पनाम्।

अकिञ्चिच्चित्तकस्याऽस्य

रूपमुन्मीलति स्वकम्॥ ६१॥

सर्वार्थदृक्क्रियारूप -

मानन्दमयमव्ययम्।

यत्प्राप्य न पुनर्दुःख

योगमेत्यशिवावहम्॥ ६२॥

एवमेनं प्रागुक्तं योगविधिं सम्यक्

शुद्धाभ्यासाद्यतिशयवशेनाऽऽकारकल्पनां विनाप्यनुतिष्ठतो

योगिनोऽकिञ्चिच्चित्तकस्य किञ्चिदप्यचिन्तयतः चित्तक्षयात्स्वात्मन्येव

निस्तरङ्गमहोदधिप्रशान्तेऽवस्थितस्य स्वकं निजरूपमुन्मीलति विकसति

अपरिमितं सम्पद्यते प्रसरन्निरावरणनिजस्वरूपो भवतीत्यर्थः। कीदृक्

स्वकं रूपन्मुन्मीलतीत्याह सर्वार्थदृक्क्रियारूपमित्यादि सर्वार्था

सर्वविषया दृक् ज्ञानं क्रिया च व्यापाररूपा ते एव रूपं यस्य यतः।

ज्ञानक्रिये शिवे प्रोक्ते सर्वार्थे निर्मले परे इति

यच्छिवरूपमागमेषूपदिष्टं अनुरूपमाह्लादसुन्दरमव्ययं

चाविनश्वरं अस्य योगिनो एवमभ्यस्यतोऽभिव्यज्यते यत्प्राप्ते

जन्ममरणाद्यशिवमश्रेय आवहतीत्यशिवावहं संसारलक्षणं

दुःखयोगं नैति न प्राप्नोति। उक्तं च श्रीमदवधूतगुरुणा। यथा नीता

रसेन्द्रेण घातवश्शात-कुम्भताम्। पुनरावृत्तये न स्युः

तद्वत्तन्मतचोदिताः। इति॥ ६२॥

अत्र स्वरूपप्रशंसापूर्वकं अतिरहस्यतया सर्वान्

प्रत्यप्रकाश्यत्वमभिधातुमाह।

एतत्समस्तगुह्यानां

गुह्यं सिद्धामरस्तुतम्।

साक्षादालोचनं शम्भो -

रत्युत्पादनमुत्तमम्॥ ६३॥

नाल्पकालोषितायैतत्

देयं नातिप्रमादिने।

नामेधिने नातपसे

यश्च नाभ्यर्चयेच्छिवम्॥ ६४॥

यत एतत्सर्वेषां रहस्यानामप्यतिशयेन गूहनीयं

निरतिशयनिश्रेयसावाप्तिहेतुत्वात् अत एव च सिद्धैरमरैश्चाभिष्टुतम्।

साक्षात्परमेश्वरतेजसः प्रकाशकत्वादत्युत्कृष्टं पावनं

पवित्रताहेतुः तस्मादेतन्नाल्पकालोषिताय। अनतिचिरोपसन्नत्वात्

अविज्ञातनिरतिशयश्रद्धाक्तियोगाय शिष्याय नातिप्रमादिने सप्रमादाय नचाप्रज्ञाय ज्ञानयोगयोरपिरक्षितुमशक्यत्वात् नाप्यतपसे नियमरहिताय न च यः परमेश्वरार्चनं करोति एतयोरप्रमादित्वाजडत्वे सत्यपि तपोविरहात् भक्त्ययोगतश्चानधिकृतत्वम्॥ ६४॥

तदेवं अस्याऽपि योगविधेः भुक्तिमुक्तिलक्षणं फलमवगन्तव्यं इत्येतदुपसंहाराय परस्तादभिधास्यमानचर्यापादोपक्षेपायचायं श्लोकः।

अस्याभ्यासाद्दिव्यसिद्ध्यंशुजालै
रिष्टान् लोकान् रोरुचानो विहृत्य।
काले हित्वाऽपास्रवं देहमास्ते
स्वात्मन्येवाश्चर्यचर्याधिवासः॥ ६५॥

अस्य निरालम्बनस्य योगस्याभ्यासः पुनः पुनः सेवनं तस्माद्दिव्या अलौकिक्यः चतुष्षष्टिगुणा अणिमादिसिद्धयः येषां ते दिव्यसिद्धयः अंशुजालाः शक्तिप्रसराः तैरोरुचानः विततत्तेजःपुञ्जत्वाद्देदीप्यमानस्सन् अभिप्रेतान् लोकान् यथेच्छं विहृत्येति तेषु स्वर्गादिलोकेषु विहरणं क्रीडालक्षणं निर्वर्त्यापगतानि बाह्यविषयैकग्रहणप्रवणानि अन्तरात्मोपलम्भपराङ्मुखानि आस्रवन्ति बहिस्स्वातन्त्र्येण गच्छन्तीति

आस्रवशब्दवाच्यनीन्द्रियाणि यस्मात्तमपास्रवं परिहृतबहिर्वृत्तित्वेन सर्वदान्तर्मुखसमग्रेन्द्रियग्रामं दिव्यमपि देहं यथाभिमते कस्मिंश्चिदपि काले हित्वा सन्त्यज्य स्वस्वरूपे एवाऽऽस्ते निर्वृतो भवतीत्यर्थः। कीदृशस्सन्नित्याह आश्चर्यचर्याधिवास इति आश्चर्यप्रधाना सा आश्चर्यचर्या अत्यद्भुतत्वात्प्रमेयं स्थित्यादिपञ्चविधकृत्य कर्तृत्वं तस्या अधिवास उपाश्रयः परमेश्वरवदिच्छामात्रसम्पाद्ये पञ्चविधे स्थित्यादिव्यापरे शक्तोऽपि स्वात्मन्येवाऽऽस्ते। करणीयस्याभावादित्येतद्विवेचितप्रायं विद्यापाद एवेति॥

संक्षिप्तोक्तिस्स्फुरति विततं स्फारयन्ती प्रमेयं
पौर्वापर्यक्रमविमृशनात्पौनरुक्त्यं न किञ्चित्।
नातिव्याप्तिः प्रकृतकथनान्नैवचाव्याप्तिरित्थं
योगस्साङ्गो जयति गदितश्श्रीमृगेन्द्रागमेऽस्मिन्॥

इति श्रीभट्टविद्याकण्ठात्मजश्रीभट्टनारायणकण्ठविरचितायां मृगेन्द्रवृत्तौ योगपादस्समाप्तः।

॥ शुभम्॥

यागोपयुक्त द्रव्याणि संग्रहेद् गुरुदेवतः ॥ १०-५० ॥

वर्णमन्त्रेण जुहुयादाज्याहुति सहस्रकम् ।
यदस्येति च मन्त्रेण कुर्यादेकाहुतिं शुभम् ॥ १०-५१ ॥

अग्नेरालिङ्गनं कृत्वा नृत्तरूपं विचिन्तयेत् ।
पवित्रारोपणं प्रोक्तं योगध्यानक्रमं शृणु ॥ १०-५२ ॥

इति मकुटतन्त्रे क्रियापादे पवित्रारोपणविधिर्नाम दशमः पटलः ॥ १० ॥
अथ मकुटे योगध्यानविधिपटलः ॥

यमनियमासनञ्च प्राणायामन्ततः परम् ।
प्रत्याहारञ्च ध्यानञ्च धारणाथ समाधिकम् (-थिकम्) ॥ ११-१ ॥

प्रथमं तु यमं प्रोक्तं द्वितीयं नियमं तथा ।
त्रितीयमासनं प्रोक्तं प्राणायामं ततः परम् ॥ ११-२ ॥

प्रत्याहारं पञ्चमञ्चद्ध्यानं वै षष्ठमुच्यते ।
सप्तमं धारणा प्रोक्तं समाधिश्चाष्टमं स्मृतम् ॥ ११-३ ॥

अष्टाङ्गमिति विज्ञेयं योगिनां योगसाधनम् ।
अहिंसा सत्यमस्तेयं ब्रह्मचर्यपरिगृहे ॥ ११-४ ॥

यमन्तु पञ्चधा प्रोक्तं नियमञ्च तत शृणु ।
शौचं सन्तोषकं तत्र (त्रत्र) तपस्वाध्यायमेव च ॥ ११-५ ॥

ईश्वर प्रणिधानञ्च नियमं पञ्चधा स्मृतम् ।
गोमुखं स्वस्तिकञ्चैव पद्मञ्चैवार्द्ध चन्द्रकम् ॥ ११-६ ॥

वीरं योगासनं प्रोक्तं षड्विधञ्चासनं क्रमात् ।
प्राणायामञ्च पूर्वोक्तं प्रत्याहार क्रमं शृणु ॥ ११-७ ॥

इन्द्रियार्थेषु यत् कर्म प्रतिस्थानं व्यवस्थितम् ।
यावत् तावत् स्थिरीभूतं प्रत्याहारस्स उच्यते ॥ ११-८ ॥

आधारेषु च संकल्प्यं यथा ध्यान स्वरूपकम् ।
ध्यानमेवं विजातीयाद् धारणाञ्च ततः शृणु ॥ ११-९ ॥

आधारन्धारणं प्रोक्तमाधेयस्तु समाधिकम् ।
धारणा द्विविधा प्रोक्ता ध्यानस्यैव क्रमं शृणु ॥ ११-१० ॥

p. 181) आधाराधे संकल्पं धारं ध्यान स्वरूपकम् ।
ऊर्ध्वाधमधमं शून्यमधः शून्यं निरामयम् ॥ ११-११ ॥

सर्वशून्यं निराकारं समाधिश्चित्तकारणम् ।
योगाधार क्रमं वक्ष्ये विशेषेण महेश्वर ॥ ११-१२ ॥

नाभेस्तु चतुरङ्गुल्यमथस्तादग्निमण्डलम् ।
कदंब पुष्पवद् वर्णं चाष्ट पत्रं त्रिकोणकम् ॥ ११-१३ ॥

मूलधारमिदं प्रोक्तं द्वितीयं नाभिमूलकम् ।
भुजङ्गवलयाकारमष्टवर्तुलमेव च ॥ ११-१४ ॥

कुण्डल्याख्या महानाडी भानुमण्डलमुच्यते ।
हृदये कण्ठमूले वा तालुमूले ललाटके ॥ ११-१५ ॥

मूर्धस्थानेषु संकल्प्य ध्यायेत् पद्मानि पूर्ववत् ।
हृत्पद्मलक्षणं वक्ष्ये विशेषेण महेश्वर ॥ ११-१६ ॥

नाभौ तन्नालमेवं चाप्यूर्ध्व नालमथोमुखम् ।

कद्लीपूष्पवत् पत्रमष्टपत्रं सकर्णिकम् ॥ ११-१७ ॥

आधार लक्षणं प्रोक्तमाधेयञ्च ततः शृणु ।
आधेयं यत्प्रयुक्तञ्च समाधीत्येव मन्त्रितः ॥ ११-१८ ॥

इडा च पिङ्गला चैव वीणादण्डस्य पार्श्वयोः ।
सुषुम्ना मध्यगा तत्र तन्मध्ये सुक्षिरं तथा ॥ ११-१९ ॥

जीवः प्राणसमायुक्तः तन्मध्येषु च सञ्चरेत् ।
ससञ्चरति तत्काले ह्याधारेषु व्यवस्थितः ॥ ११-२० ॥

संयुक्तं योगमाख्यातं संयोगञ्च समाश्रयेत् ।
मूलाधारेऽग्नि संयुक्तं संयुक्तो योगमभ्यसेत् ॥ ११-२१ ॥

योगाभ्यासेन तद्योगी चाग्निलोकमवाप्नुयात् ।
तदूर्ध्वे भास्करं ध्यात्वा रविलोकमवाप्नुयात् ॥ ११-२२ ॥

p. 182) चन्द्रं ध्यात्वा तदूर्ध्वे तु चन्द्रलोकमवाप्नुयात् ।
सदा नृत्तन्तु हृदये शिवलोके महीयते ॥ ११-२३ ॥

नादं ध्यात्वा तदूर्ध्वे तु कण्ठमूले व्यवस्थितः ।
तालुमूले स्मरेन् रुद्रं (न्रुद्रं) रुद्रमूले परेच्छया ॥ ११-२४ ॥

पादादिमूर्धपर्यन्तं व्यापकत्वेन तेजसा ।
भ्रुवोर्मध्ये परावारमीश्वरन्तं विचिन्तयेत् ॥ ११-२५ ॥

शिरोपरि भवेन्नृत्तं ध्यात्वा मध्ये महेश्वर ।
हृत्पद्ममध्यमे ध्यात्वा बिन्दुनादमनुस्मरन् ॥ ११-२६ ॥

चतुरङ्गुलमात्रेण दीपाकारन्तु चिन्तयेत् ।
शिरोपरि भवेन्नृत्तं ध्यात्वा मध्ये महेश्वर ॥ ११-२७ ॥

अणिमा महिमा चैव गरिमा लघिमा तथा ।
प्राप्तिः प्राकाम्यमीशित्वं वशित्वञ्चाष्ट सिद्धयः ॥ ११-२८ ॥

* * * * त्यजेत् स्थूलं अणुमात्रं शरीरतः ।
अणिमानं लभेद् यस्मादणिमेत्यभिधीयते ॥ ११-२९ ॥

सहस्रे वा तथा गत्वा मूलवर्णप्रभेदकम् ।
स्वच्छायां लभते यस्मात् तस्मात् तत्र प्रवेशयेत् ॥ ११-३० ॥

मानं मनोजवं कृत्वा पूज्यते स्थानवासिभिः ।
सम्यक् प्रपूजितो यस्मात् तस्मात् तमभिभावयेत् ॥ ११-३१ ॥

सर्वद्रव्यमनुप्राप्य प्राप्तिरेषा प्रकीर्तिता ।
प्राकाम्येषु शरीरेषु प्राणानां तु प्रवेशनात् ॥ ११-३२ ॥

सूर्यादि भवन प्राप्तिस्तदीशित्वमुदाहृतम् ।
यद् वशित्वं तु तत्रैव तद्वशिवं विधीयते ॥ ११-३३ ॥

शिवसायुज्य सामर्ध्यात् तच्छिवत्वमिति स्मृतम् ।
अणिमाद्यष्ट सिद्धीश्च लभेद् योगी विशेषतः ॥ ११-३४ ॥

p. 183) सालोक्यादिचतुष्कञ्च क्रमाद् वक्ष्ये महेश्वर ।
* * * * * * * * ध्यातालोकं तु संप्राप्तम् ॥ ११-३५ ॥

सालोकेन च संप्राप्तिः सालोक्यं तु विधीयते ।
तद् देवस्य समीपस्थं सामीप्यमिति चोदितम् ॥ ११-३६ ॥

तत् तद्रूपस्य संप्राप्तिः सारूप्यमिति विश्रुतम् ।

ज्ञानात् सायुज्यमेवोक्तं तोयेतोयं यथा तथा ॥ ११-३७ ॥

एते गुणाः प्रवर्तन्ते योगाभ्यासकृतश्रमैः ।

तस्माद् योगं समादाय सर्वदुख्खबहिष्कृतम् ॥ ११-३८ ॥

योगाद् ध्यानं सदा कृत्वा ज्ञानात्  तन्मयतां व्रजेत् ।

ज्ञानात् स्वरूपं परमं हंसमन्त्रं समुच्चरन् ॥ ११-३९ ॥

प्राणिनां देहमध्ये तु स्थितोहंसः सदाशिवः ।

हंस एव परं नृत्तं हंस एव तु शक्तिकम् ॥ ११-४० ॥

हंस एव परं वाक्यं हंस एव तु वैदिकम् ।

हंस एव परोरुद्रो हंस एव परात् परम् ॥ ११-४१ ॥

सर्वदेवस्य मध्यस्थो हंस एव महेश्वर ।

कूटस्थो हंस एव स्यान्नात्रकेति व्यवस्थिता ॥ ११-४२ ॥

पृथिव्यादि शिवान्तन्तु अकाराद्याश्चवर्णकाः ।

मात्रकारहितामन्त्रार्द्दश्यन्तेन तु कुत्रचित् ॥ ११-४३ ॥

हंसो ज्यातिरनौपद्यं मध्ये देहं व्यवस्थितम्।
दक्षिणामुखमाश्रित्य ज्ञानमुद्रां प्रकल्पयेत्॥ ११-४४॥

सदा समाधीं कुर्वित हंसमन्त्रमनुस्मरन्।
निर्मलं स्फटिकाकारं दिव्यरूपमनौपमम्॥ ११-४५॥

मथ्यदेशे परं हंसं ज्ञानमुद्रा स्वरूपकम्॥

इति मकुटे तन्त्रे योगपादेधोग लक्षणविधिर्नाम एकादशः पटलः॥ ११॥
अथ मकुटे आचार्यलक्षणविधिपटलः

आचार्यलक्षणं वक्ष्ये शृणुष्वेवं महेश्वर।
ऊर्ध्वशैवकुले जातः समर्धः सगुरुः स्मृतः॥ १२-१॥

शिवशास्त्रार्थ तत्वज्ञो ज्ञानशास्त्र विशारदः।
सर्वावयव संपूर्णः सर्वलक्षणलक्षितः॥ १२-२॥

शिखीवा मुण्डितो वाऽपिजटिलोवा विशेषतः।
गृहस्थो ब्रह्मचारी वा भौतिकब्रह्मचारिणः॥ १२-३॥

इत्थं धर्माद् विशिष्टाज्जगति तनुभृतां भोगमोक्षोपलब्ध्यै
विद्यादेहस्य शम्भोर्वदनसरसिजव्यक्तविश्वागमार्थैः।
नित्याद्यं कर्मचक्रं सविधिकमखिलं यत्र दृश्यं यथाव-
ज्जीर्णोद्धारावसानं सुरगुरुविबुधस्तं क्रियापादमूचे ॥ ५२ ॥

इति श्रीमदीशानशिवगुरुदेवपद्धतौ सिद्धान्तसारे उपरिभागे
क्रियापादे जीर्णोद्धारपटलाश्चतुष्षष्टितमः ॥

समाप्तः क्रियापादः

॥ श्रीः ॥

ईशानशिवगुरुदेवपद्धतिः।

श्रीमदीशानशिवगुरुदेवमिश्रविरचिता।

(तुरीयो योगपादः)

अथ प्रथमः पटलः।

अथ मोक्षस्तु संसिध्येत् सम्यग् ज्ञानेन देहिनः। ज्ञानं जायेत

वैराग्याद् वैराग्यं च स्वभावतः ॥ १ ॥

स्वभावो नाम संसारस्वरूपस्य निरूपणम् ।
संसारस्त्वात्मबुद्धिः स्याद् देहे स्वत्वेन वस्तुषु ॥ २ ॥

देहोऽपि द्विविधो ज्ञेयः स्थूलसूक्ष्मप्रभेदतः । पृथिव्यादीनि
भूतानि श्रोत्राद्याधारकान्यपि ॥ ३ ॥

वागादिकर्मेन्द्रियाणि वातपित्तकफास्तथा ।
त्वगसृङ्मांसमेदोस्थिमज्जाशुक्लैश्च नाडिभिः ॥ ४ ॥

मूलाधारे कुण्डलिन्यां नाभिहृत्कण्ठमूर्धसु ।
चतुष्षडष्टजगतीविकाराक्षिच्छदाम्बुजैः ॥ ५ ॥

युक्तं स्थूलशरीरं स्यात् सूक्ष्मं पुर्यष्टकात्मकम् ।
तत्तच्छब्दादयः पञ्च मनो बुद्धिरहङ्कृतिः ॥ ६ ॥

देहद्वयं तु साध्यात्मं साधिभूताधिदैवतम् ।

तद्यथा -

श्रोत्रादयश्च वागाद्यास्तथाध्यात्मानि वै पृथक् ॥ ७ ॥

शब्दादिवक्तव्यादीनामधिभूतत्वमिष्यते। खवायुतेजांसि
जलं पृथिवी च तथानलः॥ ८॥

इन्द्रो विष्णुश्च मित्रश्च प्र(दे? जे) शश्चाधिदैवतम्।
अध्यात्मानि मनो बुद्धिरहंकारश्च तत्त्रयम्॥ ९॥

p. 617)

मन्तव्यं चैव बोद्धव्यं मानश्चैवाधिभूतकम्। चन्द्रो जीवो
विरिञ्चिश्चाप्यधिदैवा?न्यनुक्रमात्॥ १०॥

गुणत्रयमयी या सा प्रकृतिः पुरुषस्तथा। रागो
विद्यादितत्त्वानि मायान्तान्यखिलानि तु॥ ११॥

मलं कर्म च माया च सर्वमस्य प्रवर्तकम्। जाग्रत् स्वप्नः
सुषुप्तिश्चेत्यवस्थात्रितयं तथा॥ १२॥

कामः क्रोधश्च लोभश्च मोहश्च मदमत्सरौ। षडूर्मय इमे
व्याप्ये मोहाब्धौ व्यापकाः स्मृताः॥ १३॥

एवम्भूतं शरीरं यदाममृत्कुम्भसन्निभम्। जन्मादिभिः
षड्विकारैरध्यस्तमतिनश्वरम्॥ १४॥

अस्वतन्त्रं कर्मवशात् प्रविशन् निर्विशन्नपि । प्रवसन्नपि
संसारे भ्रमत्यात्मा ह्यलक्षितः ॥ १५ ॥

शरीराणि तथैतानि पञ्चधा मानसानि च ।
जरायुजान्यण्डजानि स्वेदजान्युद्भिदान्यपि ॥ १६ ॥

तत्र देवादिदेहाः स्युर्मानसाश्चाजरायुजाः । जरायुजा
मनुष्याणां पशूनां च भवन्ति हि ॥ १७ ॥

सरीसृपाहिविहगशरीराण्यण्डजानि तु ।
जरायुजाश्चाण्डजाश्च देहाः स्युर्जलचारिणम् ॥ १८ ॥

स्वेदजाः क्रिमयः प्रोक्ताः स्थावराश्चोद्भिदा मताः । सर्वे
स्वकर्मवशगा भवन्ति न भवन्ति च ॥ १९ ॥

मृतिजन्मजले घोरे सुखदुःखझषाकुले । शोकमोहादिकलिले
त्वगाधे भवसागरे ॥ २० ॥

उन्मज्जन्तो निमज्जन्तः पुण्यपापैकबन्धनैः । निबद्धा देहिनः
सर्वे स्वर्गभूनरकादिषु ॥ २१ ॥

मांसासृक्पूयविण्मूत्रस्नायुमज्जास्थिपञ्जरे । त्वचावृते

शरीरेऽस्मिन् सौन्दर्यं स्मर्यते कुतः ॥ २२ ॥

अस्थिपञ्जरसारेऽस्मिन् मूत्रश्लेष्ममलाशये ।

मांसकेशनखस्नायुरुधिरत्वक्समावृते ॥ २३ ॥

p. 618)

देहे चेत् प्रीयते कश्चित् प्रीयते नरकेऽपि सः ।

यद्वाप्यज्ञानिभिर्देहे सुखबुद्ध्यात्र भण्यते ॥ २४ ॥

शब्दादीन्द्रियसौख्यान्यप्यन्वयव्यतिरेकतः । असाराणि

यथागीतं मत्तोन्मत्तप्रलापवत् ॥ २५ ॥

वादयन्तश्च दृश्यन्ते यथोन्मत्ता विकुर्वते । स्वर्णसौख्यं

तथोपाधेरुपाध्यन्तरसङ्गमात् ॥ २६ ॥

व्रणादेस्तु यथापूयमूत्रादेर्निर्गमात् सुखम् ।

पामकण्डूतिसौख्यं वा तत्तुल्यं सुरते सुखम् ॥ २७ ॥

चक्षुरिन्द्रियसौख्यं यन्नृत्तकान्तादिदर्शने ।

उन्मत्तचेष्टितान्नृत्तं न किञ्चिदपि हीयते ॥ २८ ॥

स्वक्षी सुनासा सुमुखी सुदतीत्यादिदर्शने। सौख्यं
त्वगस्थिमांसादौ कतरत् स्यान्मनोहरम्॥ २९॥

आस्वाद्येषु पदार्थेषु रसनेन्द्रियचापलात्। क्षुत्तृण्णिवृत्त्या
सौहित्यं दुःखापायो न तत् सुखम्॥ ३०॥

निद्रादुःखं यदि लसैत् सौख्यं स्वापे सुखं यथा।
तदात्मसुखमुद्दिष्टं करणानां तु संहृतौ॥ ३१॥

घ्रेयेष्वपि सुगन्धेषु यत्नात् प्राप्येषु दृश्यते। अयत्नेन
वनादौ च प्राप्तुं तच्छक्यते सुखम्॥ ३२॥

गर्भवासे च जनने बाल्ये वास्य कुतः सुखम्। अस्वतन्त्रस्येव
परैर्यन्त्रितस्येव पक्षिणः॥ ३३॥

यौवनेऽनिष्टसंयोगादिष्टलाभे वियोगतः।
रागाद्याक्रान्तचित्तस्य कुतः सौख्यं शरीरिणः॥ ३४॥

वार्धक्येऽण्प्र?समर्थस्य विषयांस्तु बुभुत्सतः।
प्रक्षीणेन्द्रियवृत्तेस्तु रोगरागाद्युपद्रवैः॥ ३५॥

पीड्यमानस्य तत्सौख्यं कुतो वास्य मरिष्यतः। म्रियमाणस्य

यद् दुःखे नरकेऽपि न तद् भवेत् ॥ ३६ ॥

ततः पापकृतां दुःखं यमलोकाय गच्छताम् । तद्दर्शनेन
पततां पतितानां पतिष्यताम् ॥ ३७ ॥

p. 619)

नरकेषु प्रसिद्धं हि दुःखं तस्मान्न भण्यते । यदि
पुण्यकृदेव स्यात् स्वर्गे देवादिदेहवान् ॥ ३८ ॥

विमानादिषु दिव्येषु भोगेषूपनतेष्वपि । दृष्ट्वा (पापा?
त्वल्पां) श्रियं दीप्तामन्येषामात्मनोऽधिकाम् ॥ ३९ ॥

सन्तप्त एष विषयान् भुङ्क्ते दुःखं धिया वहन् । ततोऽपि
क्षीणपुण्यानां पतनाद्यवलोक्य तु ॥ ४० ॥

यादृशं हृदये दुःखं न तद् वर्णयितुं क्षमम् । अथ
राज्यादिषु सुखं स्याच्चेत् सन्ध्यादिदुःखिनः ॥ ४१ ॥

पुत्रेभ्योऽपि भयं यस्य तस्य सौख्यं कुतो भवेत् ।

अत्र पराशरः -

यावतः कुरुते जन्तुः संबन्धान् मनसः प्रियान्। तावन्तोऽस्य निखन्यन्ते हृदये शोकशङ्कवः॥

यद् यद् गृहे तन्मनसि यत्रतत्रावतिष्ठतः।
[नाशदाहापहरणं तत् तस्यास्यैव तिष्ठति इति विष्णुपुराणे पठ्यते।] नाशव्ययादिभीत्या क्व परिग्रहवतां सुखम्॥

इति।

तथा चाहुः -

यतो यतो निवर्तते ततस्ततः सुखी भवेत्। निवर्तनाद्धि सर्वतो न वेत्ति दुःखमण्वपि॥

इति।

तथापि तृष्णया जन्तुः पीड्यमानो दिवानिशम्।
अर्थाद्यार्जनवैतृष्ण्यं न कदाचिन्निगच्छति॥

तथाचोक्तं -

जीर्यन्ति जीर्यतः केशा दन्ता जीर्यन्ति जीर्यतः।
चक्षुश्श्रोत्रे च जीर्येते तृष्णैका निरुपद्रवा॥

यत् पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः ।
नालमेकस्य तु यतस्तां तृष्णां दुरतस्त्यजेत् ॥

p. 620)

अतो न कर्मणा कार्यं प्रजया वा धनेन वा ।
त्यागेनैवामृतत्वं हि प्राप्तुं शक्यं मनीषिभिः ॥ ४२ ॥

तस्माद् धर्मार्थकामेभ्यो मोक्ष एव विशिष्यते । अस्थिरत्वात्
त्रिवर्गाणां दुस्संपादतयापि च ॥ ४३ ॥

अलमलमतिविस्तरेण । प्रस्तुतमेवानुसन्धीयते ।

इत्थं विज्ञाय संसारमसारं तद्विरागतः । मोक्षमार्गः
परो योगः साङ्गः साध्यो विपश्चिता ॥ ४४ ॥

स च सन्न्यसनात् सम्यग् योगः प्राप्यो न चान्यथा । सन्न्यासो
मुण्डनान्न स्याद् दण्डादेर्ग्रहणादपि ॥ ४५ ॥

काषायावरणाद्यं च मुण्डनं दण्डधारणम् ।
यदन्यदप्येवमाद्यं देहस्योक्तं न देहिनः ॥ ४६ ॥

जडस्येह शरीरस्य घटकुड्यादिधर्मणः।
वेषलङ्घनमात्रेण देही मोक्षं कथं व्रजेत्॥ ४७॥

अत एव शरीरस्य कर्तृत्वं नापि भोक्तृता। शरीरकर्मणां
कर्ता संस्कार्यस्तत्फलार्थिभिः॥ ४८॥

अत एव हि सन्न्यासस्त्यागः स्यात् काम्यकर्मणाम्। काम्यानां
कर्मणां न्यासं सन्न्यासं कवयो विदुः॥ ४९॥

लोकार्थपुत्रैषणाभ्यो निवृत्तो यः सदैव हि।
स्ववर्णाश्रमयुक्तानां तथा स्वसमयस्य तु॥ ५०॥

विहितानां तु धर्माणां तत्फलेप्वनपेक्षया।
ईस्वरार्पणबुद्ध्या तु करणं न्यास इष्यते॥ ५१॥

तद्वान् यतिश्च सन्न्यासी न स्यात् केवलमुण्डितः। ज्ञेयः स
नित्यसन्न्यासी यो न द्वेष्टि न काङ्क्षति॥ ५२॥

ब्रह्मचारी गृहस्थो वा वानप्रस्थोऽथवा यतिः। चीरवासा
जटी वापि द्विदण्डो वाथ [ख: स] मुण्डितः॥ ५३॥

विवासाः शुक्लवस्त्रो वा काषायवसनोऽथवा। कर्मसन्न्यासनं

कृत्वा साङ्ख्योगं समाश्रितः ॥ ५४ ॥

p. 621)

शिवानुग्रहमासाद्य योगी मोक्षमवाप्नुयात् । विज्ञाय संसारमसारमेवं वैराग्यतोऽनुग्रहतश्च शम्भोः । संप्राप्य योगं तु गुरूपदेशाद् योगी विमुक्तिं न चिरादुपैति ॥ ५५ ॥

इति श्रीमदीसानशिवगुरुदेवपद्धतौ सिद्धान्तसारे उपरिभागे योगपादे योगलक्षणं नाम प्रथमः पटलः ॥

अथ द्वितीयः पटलः ।

अथ योगस्तु विज्ञेयो गुणैश्वर्यविमुक्तिदः । चित्तवृत्तिनिरोधं तु योगमाह पतञ्जलिः ॥ १ ॥

युजेर्धातोः समाधौ तु क्षेत्रज्ञपरमात्मनोः । युक्तिर्योगः समुद्दिष्टस्तथाचाह महामुनिः ॥ २ ॥

मनो हि सर्वभूतानां कारणं बन्धमोक्षयोः । वृत्तिहीनं मनः कृत्वा स्वात्मानं परमात्मनि ॥ ३ ॥

परमात्मा [रात्मना स] समायोज्य योगं कु * * * * । * * * *
विमुक्तः [कः क्ति] स्यान्मुख्योऽयं योग इष्यते ।

इति ।

सम्यक् सिवगतं चित्तं यदा न चलति स्थिरम् ।
शिवत्वव्यक्तभावस्य कैवल्यं योग इष्यते ॥ ३ ॥

तच्च रागादिदोषाणां वर्जनेन प्रकाशते । ते च नश्यन्ति
रागाद्या योगान्गानां निषेवणात् ॥ ४ ॥

योगाङ्गानि च तान्यष्टौ प्रवदन्ति हि तद्विदः ।

तद्यथा -

यमाश्च नियमास्तद्वदासनं प्राणसंयमाः ॥ ५ ॥

प्रत्याहारा धारणाश्च ध्यानानि च समाधयः । यमाः
पञ्चप्रकाराः स्युर्नियमाश्चैव पञ्चधा ॥ ६ ॥

आसनानि च पञ्च स्युः प्राणायामास्तु नैकधा । प्रत्याहाराः
पञ्चविधा धारणा बहुधा स्मृताः ॥ ७ ॥

p. 622)

ध्यानानि नैकधा त्वकः समाधिरथवा त्रिधा। अहिंसा
सत्यमस्तेयं ब्रह्मचर्यापरिग्रहौ॥ ८॥

यमाः पञ्चविधास्तेषां पृथग्भेदा भवन्ति हि।
मनोवाक्कर्मभिर्हिंसास्त्रिविधाः प्राणिनामिह॥ ९॥

ताभ्यो निवृत्तिं सर्वत्र अहिंसां परिचक्षते। सत्यं
यथार्थकथनं सर्वभूतहितं च यत् [तत् परपीडाकरं
सत्यं यदा] ॥ १०॥

परपीडाकरं सत्यमेवं सय्तं विदुर्बुधाः। असत्यमपि
भूतानां हितं चेत् सत्यमेव तत्॥ ११॥

परपीडाकरं सत्यं यदा मौनं तदा भजेत्। अन्यैः
परिगृहीतानां त्यक्तानां वाश्रमादिषु॥ १२॥

निक्षिप्तानां तृणानां वा कर्मणा मनसा गिरा।
परार्थानामनादानमस्तेयं परमं स्मृतम्॥ १३॥

ब्रह्मचर्यमिति प्राहुरिन्द्रियाणां तु संयमम्।

तत्राप्युपस्थविषयनिवृत्तिं तु विशेषतः ॥ १४ ॥

किन्तु

दर्शनस्पर्शनापेक्षासङ्कल्पाभाषणादिभिः ।
योषित्संभोगवैमुख्यं ब्रह्मचर्यं परं विदुः ॥ १५ ॥

तत्रापि च गृहस्थानां स्वदारान्नव्यतिक्रमात् ।
ऋतुस्नाताभिगमनं ब्रह्मचर्यं परं स्मृतम् ॥ १६ ॥

अ[कः आ]र्जनक्षयसंरक्षाहिंसादोषादिदर्शनात् ।
अस्वीकरणमर्थानां मुख्यः स्यादपरिग्रहः ॥ १७ ॥

भिक्षूणामयमुद्दिष्ट अन्येषामन्यथा स्मृतः । ब्रह्मचारी
गृहस्थो वा वानप्रस्थोऽथवा मुनिः ॥ १८ ॥

सकुटुम्बस्तु यस्तस्य गुर्वादीनां तु पुष्टये ।
असत्प्रतिग्रहेभ्यस्तु निवृत्तिरपरिग्रहः ॥ १९ ॥

॥ एवं यमाः ॥

नियमाः सौचसन्तोषौ स्वाध्यायस्तप एव च ।

तद्वदीश्वरपूजेति पञ्च भिन्नास्तु ते पुनः ॥ २० ॥

p. 623)

शौचं तु शुद्धिर्विज्ञेया मनोवाक्कायकर्मणाम् ।

अचिन्तनमकृत्यानां यत् तच्छौच तु मानसम् ॥ २१ ॥

अक्लौ(नं? बं) वाचिकं स्यात् तु कायिकं तु मृदा जलैः ।

मलानां क्षालनञ्चान्तःकरणस्य विशोधनम् ॥ २२ ॥

पापानामननुष्ठानं कर्मिणां सौचमिष्यते ।

वर्णाश्रमादिधर्माणामविरोधागतेन तु ॥ २३ ॥

धनधान्यादिना वृत्त्या तृप्तिः सन्तोष उच्यते ।

(ग)तेष्वननुसोकः स्याद् भविष्यार्थेष्वलोलता ॥ २४ ॥

वर्तमानेष्वसक्तिश्च सन्तोषः परिपठ्यते ।

हर्षागमेष्वनुत्सेकः शोकस्थानेष्वशोकता ॥ २५ ॥

समता चापि सर्वेषु सोऽपि सन्तोष उच्यते । प्रणवस्य

तथाभ्यासस्तथोपनिषदामपि ॥ २६ ॥

तत्फलानभिसन्धानात् स्वस्वमन्त्रजपोऽपि च । स्वाध्याय इति

निर्दिष्टस्त्रिविधोऽपि च योगिनाम् ॥ २७ ॥

तथाचाहुः -

स्वाध्यायाद् योगमासीत योगात् स्वाध्यायमात्मनि ।
स्वाध्याययोगसम्पत्त्या परमात्मा प्रकाशते ॥

शब्दब्रह्म च तद् ब्रह्म वेदितव्ये उभे अपि । शब्दब्रह्मणि
निष्णातः परं ब्रह्माधिगच्छति ॥

इति ।

एकभुक्तोपवासाद्यैः कृच्छ्रचान्द्रायणादिभिः । कर्शनं तु
शरीरस्य यत्तत्तप उदाहृतम् ॥ २८ ॥

तत्राप्यनशनं नेष्टं नेष्टमत्यशनं तथा ।
व्रतचोदितकालाशी तपस्वी योगभाग् भवेत् ॥ २९ ॥

तथाचाह भगवान् -

नात्यश्नतस्तु योगोऽस्ति नचैकान्तमनश्नतः ।
नचातिस्वप्नशीलस्य जाग्रतो नापि चार्जुन ॥

p. 624)

युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु । युक्तस्वप्नावबोधस्य योगो भवति दुःखहा ॥

इति ।

आभ्यन्तरैस्तथा बाह्यैर्द्रव्यैर्गन्धादिभिः क्रमात् ।
चोदिताराधनं शम्भोर्यत् तदीश्वरपूजनम् ॥ ३० ॥

तत्राप्यनभिसन्धाय फलं भक्त्योपपत्तितः । देवस्येष्टस्य यजनं कर्मणा मनसापि च ॥ ३१ ॥

योगिनां योगसिध्यर्थं शस्तमीस्वरपूजनम् । याज्ञवल्क्यो वसिष्ठश्च योगाचार्यौ महामुनी ॥ ३२ ॥

पृथग्यमांश्च नियमान् दसभेदानिहोचतुः । अहिंसा सत्यमस्तेयं ब्रह्मचर्यं दयार्जवम् ॥ ३३ ॥

क्षमा धृतिर्मिताहारः शौचं चेति यमादयः । तपः सन्तोष आस्तिक्यं दानमीश्वरपूजनम् ॥ ३४ ॥

सिद्धान्तश्रवणं चैव ह्रीर्मतिश्च? जपो हुतम् ।

एते तु नियमाः। इति

॥ नियमाः ॥

आसनान्यपि चोक्तानि बहुधा पूर्वपद्धतौ ॥ ३५ ॥

तेषां पञ्चैव शस्तानि योगसिद्धिकराणि वै। स्वस्तिकं
पद्मसंज्ञं च भद्रं योगासनं तथा ॥ ३६ ॥

गोमुखं चेति तेषां तु लक्षणं पृथगुच्यते।

उपविस्य तु विष्टरेऽथ जान्वोर्विवरेऽङ्गुष्ठनिपीडनं
विधाय। ऋजुमध्यगलक्षणाग्रकायो भवति स्वस्तिकमासनं
निविष्टम् ॥ ३७ ॥

चरणाग्रयुगं तथोपरिष्टादधिरोप्योरुयुगस्य मूलदेशे।
उपविस्य पुरेव पद्मसंज्ञं कथितं तद्विपरीततस्तु भद्रम् ॥
३८ ॥

अधिरोप्य तु दक्षिणाङ्घ्रिमूरावथ सव्यं चरणं तु
दक्षिणोरौ। अधिरोप्य पुरेव सूपविष्टो यदि योगासनमिष्टदं

तदाहुः ॥ ३९ ॥

वृषणे तु निगृह्य वामजङ्घापदगुल्फे त्वधिरूढसस्फिगुरूः
। उपरिस्थितदक्षिणोरुजानुः खलु योगी स तु गोमुखासनस्थः ॥
४० ॥

॥ आसनानि ॥

p. 625)

प्राणस्य धारणं देहे प्राणायाम इतीरितः ॥ ४१ ॥

स च नैकविधः प्रोक्तो योगशास्त्रविसारदैः । पूरकः
कुम्भकश्चैव रेचकश्चेति ते त्रयः ॥ ४२ ॥

प्राणसंयमनानां तु खात्यान्यङ्गान्यनुक्रमात् । (?)
त्रिभिरङ्गैर्युतस्त्र्यंग स्याकुत्पूरकं विना (?) ॥ ४३ ॥

नासापुटेन वामेन पूरयेदुदरेऽनिलम् ।
निर्दिष्टोद्घातमात्राभिर्विज्ञेयः स तु पूरकः ॥ ४४ ॥

पूरितस्याथवा वायोः केवलस्य निरोधतः । संपूर्णकुम्भवत्
तिष्ठेद् यदासौ कुम्भकः स्मृतः ॥ ४५ ॥

वामेतरेण घ्राणेन (मा? म)रुतः पूरितस्य तु । शनैः
क्रमेण यो मोक्षो रेचकः परिपठ्यते ॥ ४६ ॥

तत्र षोडशमात्रस्तु सामान्यः पूरको मतः । कुम्भकः
षष्टिमात्रः स्यात् पञ्चोद्घातस्तु संस्मृतः ॥ ४७ ॥

युग्मोद्घातो रेचकः स्याच्चतुर्विंशतिमात्रकः । प्राणायामो
ह्ययं मन्दो मध्योऽस्माद् द्विगुणो भवेत् ॥ ४८ ॥

त्रिगुणस्तूत्तमो ज्ञेयः क्रमेणाभ्यासयोगतः । अगर्भाश्च
सगर्भाश्च प्राणायामास्तु ते स्मृताः ॥ ४९ ॥

अन्तर्मन्त्रजपोपेताः प्राणायामाः सगर्भकाः ।
अन्तर्जपविहीना ये ते त्वगर्भा इति स्मृताः ॥ ५० ॥

प्राणयामादगर्भात् तु सगर्भः श्रेष्ठ उच्यते ।

तद्यथा -

कुम्भीकृत्योदरे वायुं स्वस्वमन्त्रं धिया जपेत् ॥ ५१ ॥

प्राणायामं सगर्भं तु कुर्यात् तद्गतमानसः। एकाक्षरः
स्वमन्त्रश्चेत् तस्य स्याद् द्विशतं जपः॥ ५२॥

प्रत्यक्षरविवृद्ध्यात्वा त्रिंशद्वर्णाननुक्रमात्। भावयि[खः
हापयि]त्वायतप्राणः प्राणायामं समाचरेत्॥ ५३॥

p. 626)

अष्टार्णादिप्रकृत्यन्तं तत्राप्येकैकलोपतः। प्राणायामा
विधातव्यास्तत्तद्ध्यानोपबृंहिताः॥ ५४॥

तत्र विज्ञाय देहं च नाडीर्वायुं च तत्स्थितम्। तच्छुद्धिं
च विधायाथ प्राणायामं समाचरेत्॥ ५५॥ तद्यथा -

षण्णवत्यङ्गुलो देहो देहो लब्धान्गुलैः स्वकैः। ऊर्ध्वं
शरीरादधिकं प्राणः स्याद् द्वादशाङ्गुलम्॥ ५६॥

मेढ्रादूर्ध्वं द्व्यङ्गुलं तु देहमध्यमुदीरितम्। मूलाधारः
स च त्र्यस्रो देवादीना नृणामपि॥ ५७॥

पश्वादीनां तु वेदाश्रस्त्वण्डजानां तु वर्तुलम्।
चतुष्पदानां हृन्मध्ये क्रोडमध्येऽण्डजन्मनाम्॥ ५८॥

मूलादूर्ध्वं मनुष्याणां नाभिकन्दो नवाङ्गुलात्।
नाभिचक्रं तदूर्ध्वं तु द्वादशारमसुस्थितिः॥ ५९॥

नाभेरधस्तात् कन्दाख्ये कुण्डलिन्यष्टवर्तुला।
प्रसुप्तभुजगाकारा चतुरङ्गुलविस्तृता॥ ६०॥

द्वासप्ततिसहस्राणि नाड्यस्तन्मध्यनिर्गताः।
अष्टाविंशतिसंख्याः स्युस्तासां मुख्यास्तु नाडयः॥ ६१॥

तासां च दश वै श्रेष्ठा इडाद्यास्तास्वपि त्रयम्। इडा
पिङ्गा सुषुम्ना च गान्धारी हस्तिजिह्विका॥ ६२॥

सुयशालम्बुषा पूषा कुहूश्चैव च शङ्खिनी। एतास्विडा
पिङ्गला च सुषुम्ना चोत्तमाः स्मृताः॥ ६३॥

तासामथ सुषुम्नाख्या ब्रह्मनाडी परा स्मृता।

इति नाडीदशकम्॥

विमला घोषणी पृथ्वी ततस्त्वाप्यायनी मता॥ ६४॥

तेजोवती वायवी च गगना चैव रोधनी। रसावाहा च

मृद्वङ्गी स्रंसनी? चापि मर्शनी ॥ ६५ ॥

शब्दस्पर्शवहे दूर्णा सुरूपा रसधारणी । सर्वगा चेति निर्दिष्टा नाडयोऽष्टादश क्रमात् ॥ ६६ ॥ पृ । ६२७)

अथ प्राणादयः पञ्च नागाद्याश्चापि पञ्च हि । प्राणस्तु हृत्पद्मगत आसनाद्धृदयस्थितिः ॥ ६७ ॥

निःश्वसोच्छ्वासकासादीन् कुर्वन् वक्षः समाश्रितः । प्रयाणं कुरुते नित्यं य(स्या? स्मात्) प्राणः प्रकीर्तितः ॥ ६८ ॥

अवाङ्मूत्रमलादीनामपानो[कः नां व्यानो ह](?) हस्तादिसन्धिगः । हानोपादानकर्मा च तस्माद् व्यान इति स्मृतः ॥ ६९ ॥

ऊर्ध्वं नयत्युदानस्तु नाभेराशिरसि स्थितः । गात्रनेत्रविकाराद्यं कर्मोदानस्य तु स्मृतम् ॥ ७० ॥

समानः सर्वकायं तु व्याप्य सन्धिषु च स्थितः । त्वगसृङ्मांसमेदोस्थिसंस्था नागादिवायवः ॥ ७१ ॥

ललाटिकोरश्शङ्खांसनाभिस्थास्ते त्वनुक्रमात् (?) ।

अथ वर्णाः -

नीलेन्द्रगोपगोक्षीरविद्युदर्केन्दुसप्रभाः ॥ ७२ ॥

कुन्दभिन्नाञ्जनार्काश्मकुसुम्भकुसुमोपमाः ।
आहारपचनाद्यन्तं प्राणकृत्यमितीरितम् ॥ ७३ ।

पोषणाद्यं समानस्य कर्मेति परिपठ्यते । उद्गाराद्यं तु
नागस्य कूर्मस्योन्मीलनादिकम् ॥ ७४ ॥

कृकरस्य क्षुतं कर्म जृम्भाद्यं देवदत्तजम् । धनञ्जयस्य
शो(भा? षाद्यं) मृतं च न विमुञ्चति ॥ ७५ ॥

मध्येन तु शरीरस्य सुषुम्ना सूत्रवत् स्थिता ।
बिन्दोर्मूर्धानमासाद्य ब्रह्मरन्ध्रेण निर्गता ॥ ७६ ॥

इडा च पिङ्गला चैव वामतोऽस्याश्च दक्षिणे । सुषुम्नायां
स्थिते वामदक्षिणप्राणयोः सृते [ख: स्मृ] ॥ ७७ ॥

इडापृष्ठात्तु गान्धारी सव्यनेत्रविनिर्गता । हस्तिजिह्वा च
वामाङ्घ्रेरङ्गुष्ठाग्राद् विनिर्गता ॥ ७८ ॥

सुयशा दक्षिणस्याङ्घ्रेज्यिष्ठकाग्रान्तनिर्गमा । अलम्बुषा त्वधो नाभेः पायुमूलान्तनिर्गमा ॥ ७९ ॥

p. 628)

पूषा तु पिङ्गला[खः कुण्डला]पृष्ठाद् दक्षिणश्रोत्रनिर्गता । नाड्यो विमलाद्यास्तु दश हस्ताग्रनिर्गताः ॥ ८० ॥

कुहूस्तु पिङ्गलापृष्ठाद् दक्षिणा[कः णो]क्षिविनिर्गता । विश्वोदरोदरं याता सरस्वत्यपि मेढ्रगा ॥ ८१ ॥

अन्तस्सुषिरसंयुक्ताः सर्वा अपिच नाडयः । पूर्णरक्ताश्च ताः सर्वाः पद्मतन्तुवि * * * ॥ ८२ ॥

तासां शाखोपशाखानां भेदस्तु बहुधा स्मृतः । देहाद् बहिर्निर्गताग्रा रोमसंज्ञाः शरीरगाः ॥ ८३ ॥

श्मश्रूणि मुखजातानि केशाः शिरसि निर्गताः । तिस्रः कोट्योऽर्धकोटिश्च केशरोमाणि देहगाः ॥ ८४ ॥

जरायुजानां देहेषु पशूनां त्रिगुणाः स्मृताः । पक्षिणां तु ततोऽर्धार्धं सिरारोमाणि संख्यया ॥ ८५ ॥

सिरारोमादिनियमो नहि कीटादिजातिषु। स्थावराणामपि तथा
सर्वे ते प्राणिनः [ना] स्मृताः॥ ८६॥

एवं नाडीर्विदित्वा तु प्राणायामं समाचरेत्।

एवं यमाश्च नियमा (नि? श्च) तथासनानि प्राणादयश्च
पवना अपि नाडिचक्रम्। योगस्य या[खः हा]नि बहिरङ्गतयोदितानि
सेव्यानि तानि विदितानि यथोपदेशम्॥ ८७॥

इति श्रीमदीशानशिवगुरुदेवपद्धतौ सिद्धान्तसारे उपरिभागे
योगपादे योगलक्षणादिपटलो द्वितीयः॥

अथ तृतीयः पटलः।

अथ योगं विविदिषुः प्राप्य योगविदं गुरुम्।
शुश्रूषार्थप्रदानाद्यैराराध्य परितोष्य च॥ १॥

तस्माद् विज्ञाय योगं तु दत्त्वा तु गुरुदक्षिणाम्। अनुज्ञातस्तु
गुरुणा गत्वा देशं मनोरमम्॥ २॥

p. 629)

पुण्यक्षेत्रनदीतीर्थवनसानुमदादिकम्। तत्रास्त्रमे मठे

वाथ प्राज्य[क: ण्य]मूलफलोदके ॥ ३ ॥

ग्रामे देवालये वापि स्वगृहे वा मनोरमे । परिशुद्धा(त्म)वान्
योगी निस्संगो विजितेन्द्रियः ॥ ४ ॥

स्ववर्णाश्रमकर्माणि चोदितानि समाचरन् । युक्ताहारविहारस्तु
युक्तस्वप्नावबोधनः ॥ ५ ॥

शान्तस्त्रिषवणस्नायी सर्वत्र समदर्शनः ।
पिचुतूलादिसंपूर्ण आसने सोत्तरच्छदे ॥ ६ ॥

विशुद्धे सम्यगासीनो विजितासनमास्थितः । विनायकं गुरुं
चाथ नमस्कृत्य ततः शिवौ ॥ ७ ॥

ऋजुकायशिरोग्रीवः कृत्वान्तर्यजनं हृदि । योगं युञ्जीत
मतिमान् न द्रुतं न विलम्बितम् ॥ ८ ॥

अथ ये ग्रन्थयः पञ्च भूतशुद्धौ प्रदर्शिताः ।
हृत्कण्ठतालुभ्रूमध्यब्रह्मरन्ध्रस्थिताः क्रमात् ॥ ९ ॥

तानूर्ध्ववायुना भित्त्वा मुक्त्वा दक्षिणनासया ।
वामनासापुटेनाथ पूरयेन्मरुतोदरम् ॥ १० ॥

पूरकस्तु स विज्ञेयो मात्राषोडश(का? को) विधिः ।
निरुन्ध्यान्निर्गमं तस्य कुम्भकाख्यः स तु स्मृतः ॥ ११ ॥

स चापि षष्टिमात्रः स्याद् रेचकस्तस्य रेचनात् । पिधाय
वामघ्राणं तु दक्षिणेनैव रेचयेत् ॥ १२ ॥

स तु रेचक उद्दिष्टो मानं तेषां निगद्यते । पूरके
द्व्यष्टमात्राभिर्नाभिपद्मे चतुर्मुखम् ॥ १३ ॥

अकारमूर्तिमगुणं समाधिस्थं चतुर्भुजम् । कुम्भके च
चतुष्षष्टिमात्रामात्रं तु धारयेत् ॥ १४ ॥

उकारमूर्तिं शङ्खाभं वासुदेवं हृदम्बुजे ।
शङ्खचक्रधरं सौम्यं समाधिस्थं चतुर्भुजम् ॥ १५ ॥

किरीटिनं स्मरेच्छत्त्या यावत् तावत् तु कुम्भयेत् । रुद्रं
मकारमूर्तिं तु भ्रूमध्यकमले स्मरन् ॥ १६ ॥

p. 630)

शुक्लवर्णं समाधिस्थं चतुर्बाहुं त्रिलोचनम् ।
एणटङ्कधरं सौम्यमिन्दुमौलिं कपर्दिनम् ॥ १७ ॥

मात्राद्वादशमात्रं तु दक्षिणेनैव रेचयेत्। अथ प्रणवतो
वायुं समापूर्य भ्रुवोऽन्तरात्॥ १८॥

बिन्दुमत्यक्षरे तस्मिन् नियम्यात्मानमात्मनि। मनसा तपदोङ्कारं
जपेन्मात्रत्रयाधिकम्॥ १९॥

एष प्राणजयोपायो दृष्टादृष्टफलप्रदः।
भूतशुद्ध्युक्तमार्गेण प्राणायामास्तु पञ्च ते॥ २०॥

शोषणाद्यास्त्रयश्च स्युः सहैतान् पृथगाचरेत्।
सन्ध्ययोर्वायुमाकृष्य पिबन् वाग्ग्मी च जायते॥ २१॥

व्याधयो ह्यस्य नश्यन्ति मासान् मासैस्तु वा क्रमात्। बधिरो
मूर्ध्न्यथात्मानमाधायापूर्य मारुतम्॥ २२॥

पिधाय सर्वद्वाराणि व्योमेन्दोरमृताप्लुतम्। कर्णाभ्यां
विसृजेद् वायुं बाधिर्यादेष मुच्यते॥ २३॥

पार्श्वयोर्वाथ नाभौ वा धारयेद् गुल्मशूलनुत्। यत्र यत्र
रुजा देहे तत्र तत्र तु मारुतम्॥ २४॥

आरोप्य प्राणनियमात् तं तं रोगं व्यपोहति। अथापानं
समुत्कृष्य वह्निस्थाने नियोजयेत्॥ २५॥

निरुन्ध्याच्च षडक्षाणि ततो नादः प्रवर्तते।
नाभेरामूर्धतो वीणाध्वनिर्नादः प्रवर्तते॥ २६॥

सुषुम्नयोर्ध्वङ्गमया तच्छ्रुत्वासौ विमुच्यते। ब्रह्मरन्ध्रेण
तस्याथ प्राणोऽप्युच्चरतीच्छया॥ २७॥

हृदयाम्भोरुहान्तःस्थः प्राणो हंस इतीरयन्। उच्छ्वासं
जनयेच्छश्वदहोरात्रे तु संख्यया॥ २८॥

षष्ट्युछ्वासः स्मृतः प्राणः षट् प्राणा घटिका स्मृता।
घटिकानां स्मृतः षष्ट्या त्वहोरात्रस्तु मानुषः॥ २९॥

श्वासनिःश्वासविच्छेदः प्राणायामात् प्रवर्तते। अथोदरे
नाभिपद्मे ध्यात्वा तु चतुराननम्॥ ३०॥

p. 631)

अकारमूर्तिमिडया पूरयेन्मरुतोदरम्। कुम्भीकृत्य यथापूर्वं
धियैव प्रणवं जपन्॥ ३१॥

स्थिरीकृत्य तु संहृत्य रेचयेद् दक्षिणेन तु। अथवा
हृदयाब्जस्थं वासुदेवं चतुर्भुजम्॥ ३२॥

शङ्खचक्रधरं सौम्यं शुक्लवर्णं किरीटिनम्।
चतुर्बाहुमुदारस्थमुकारमयविग्रहम्॥ ३३॥

स्मरञ्जपन् धिया तारं पूर्ववत् पूरकुम्भकौ। रेचकं च
विधाय स्यात् प्राणायामस्तु वैष्णवः॥ ३४॥

भ्रुवोरन्तरतोऽम्भोजे मकारमयविग्रहम्। भस्माङ्गरागधवलं
रुद्रं ध्यायंस्त्रिलोचनम्॥ ३५॥

सूपविष्टं चतुर्बाहुं पूर्ववत् प्रणवं जपेत्।
पूरकाद्यैर्यथापूर्वं रौद्रोऽयं प्राणसंयमः॥ ३६॥

बिन्दुस्थानेऽम्बुजासीनमष्टबाहुं चतुर्मुखम्। ईश्वरं
प्रोक्तरूपादिं ध्यायंस्तारं जपन् धिया॥ ३७॥

पूरकाद्यैर्यथापूर्वं प्राणायामोऽयमैश्वरः। तथैव
मूर्ध्नि कमले ध्यायन् देवं सदाशिवम्॥ ३८॥

तारं जपन् धिया प्राग्वत् प्राणानायम्य पूर्ववत्।

सर्वदोषहरोऽयं स्यात् सादेशः प्राणसंयमः ॥ ३९ ॥

कारणाधीशसंयुक्ताः पञ्चैते प्राणसंयमाः ।
सर्वकल्मषदोषघ्नाः सर्वे सर्वार्थसाधकाः ॥ ४० ॥

योगसिद्धिकराः पञ्च प्राणायामा भवन्ति हि । अथ
हृत्पद्ममध्ये वा वि(न्दू? न्दौ) वा व्योमपङ्कजे ॥ ४१ ॥

सूर्यादिमण्डलाधीशतत्त्वतत्त्वेशमूर्तिभिः ।
पुर्यष्टकाष्टच्छदने स्वस्वाङ्गावरणान्विते ॥ ४२ ॥

यो यो यस्या देवताया भक्तस्तां तत्र संस्मरन् । तत्तन्मन्त्रं
जपन् बुद्ध्या पूरकादिक्रमेण तु ॥ ४३ ॥

प्राणसंयमनं कुर्वन् योगसिद्धिमवाप्नुयात् । अथवा
हृदयाब्जादौ पश्यञ् ज्योतिर्निरञ्जनम् ॥ ४४ ॥

p. 632) ब्रह्मादिकारणोपाधिनिर्मुक्तं चिद्घनं सिवम् ।
ध्यायंस्त्रिमात्रं चिन्मात्रप्रणवं वा धिया जपन् ॥ ४५ ॥

प्राणायामं प्रकुर्वीत न चिरात् सिद्धिमश्नुते मूलाब्जात्
कुण्डलिन्यास्तु ध्यायञ्च्छक्तिं विनिर्गताम् ॥ ४६ ॥

विद्युल्लेखोपमामूर्ध्वन्गमामा व्योमपन्कजा(न्? त्) ।
परमामृतनिःष्यन्दैः प्लाव्यमानां ततोऽपि हि ॥ ४७ ॥

निवृत्तां पुनरायान्तीं मूलाम्भोजं पुनः पुनः ।
सुषुम्नयोर्ध्वं गच्छन्तीममृतासारवर्षिणीम् ॥ ४८ ॥

ध्यायञ्च्छक्तिं परां सूक्ष्मां चिन्मात्र(प्रणवं) तु वा ।
जपन् धिया यथापूर्वं प्राणानायम्य योगवित् ॥ ४९ ॥

योगसिद्धिमवाप्नोति नचिरान्नात्र संसयः । अथवा
प्रणवाद्यां तु सप्तव्याहृतिपूर्विकाम् ॥ ५० ॥

गायत्रीं सिरसोपेतां त्रिः पठन् मनसा हृदि । व्योम्नि वा
परमात्मानं सावित्रीं सूर्यमेव वा ॥ ५१ ॥

ध्यायन् प्रागुक्तमार्गेण पूरकादिक्रमेण तु । प्राणसंयमनं
कुर्वन् योगी सिद्धिमवाप्नुयात् ॥ ५२ ॥

षड्भिर्द्वादसभिस्चाथ तथा षोडसभिः क्रमात् ।
मनोवाक्कर्मजानीह पातकानि विनासयेत् ॥ ५३ ॥

प्राणायामस्ततस्चापि द्विगुणैस्त्रिगुणैरपि ।
अष्टोत्तरसतस्यापि (?) भ्रूणहत्यां च नासयेत् ॥ ५४ ॥

अत्र याज्ञवल्क्यवसिष्ठौ -

अपि भ्रूणहनं मासात् पुनात्यहरहः कृतः । ऋतुत्रयात्
पुनात्येनं जन्मान्तरकृतादघात् ॥ वत्सरादिह सर्वज्ञो
ब्रह्मविच्चापि जायते । प्रस्वेदकम्पोत्थानानां जननाः
कुंभकाः (पुनः) ॥

कनिष्ठमध्यस्त्रेष्ठाः स्युः फलं तेषां च तादृसम् ।
प्राणायामैः क्रमाभ्यस्तैर्विजिताः स्युस्च वायवः ॥

p. 533) निःस्वासोच्छ्वसनाद्यं च विना ज्ञानं च सक्यते ।
विनैव पूरकं तद्वद् रेचकं च विनैव तु ॥ कुम्भकेनैव
सुचिरमपि तिष्ठेज्जितानिलः । मनोजव(इ?ग)तिस्च स्याद्
दूरादर्थांस्च पस्यति ॥

खेचरो द्वादसाब्देन जरापलितवर्जितः । चिरजीवी च भवति
ततो द्विगुणवत्सरैः ॥

ऋषिगन्धर्वदेवादीन् पस्यत्याभाषतेऽपि च । ततोऽपि

द्विगुणैर्वर्षैर्लभते चाणिमादिकान् ॥

प्राणायामाधिकारः ।

इन्द्रियाणां यथास्वं स्वं विषयं परिधावताम् ।
बलादाहरणं तेषां प्रत्याहारं प्रचक्षते ॥ ५५ ॥

कर्मणां वि(जि? हि)तानां तु नित्यादीनां विधिं विना । मनसा
ह्यनुष्ठानं प्रत्याहारं विदुर्बुधाः ॥ ५६ ॥

अथवाष्टादसस्थानेष्वाकृष्याधाय मारुतम् । स्ववसे
स्थापनं केचित् प्रत्याहारं वदन्ति हि ॥ ५७ ॥

तानि तानि स्थानानि -

पादान्गुष्ठद्वयं गुल्फे जन्घे जानूरुपायवः । मेढ्रं
कटिस्ततः कन्दो नाभी हृदयवक्षसी ॥ ५८ ॥

कण्ठकूपं तथा तालु घ्राणं नेत्रे भ्रुमध्यकम् । मूर्धा
चाष्टादसैतेषु स्थानात् स्थानं क्रमेण तु ॥ ५९ ॥

आहृत्य धा?रणं वायोः प्रत्याहारः स्मृतो बुधैः । अनेन

रोगसान्तिः स्यादायुषो वर्धनं तथा ॥ ६० ॥

प्रत्याहाराधिकारः ।

यमाद्यैः पञ्चभिः (क?)स्तैर्विसुद्धस्य तु योगिनः ।
आत्मन्यवस्थितिं बुद्धेर्धारणं सम्प्रचक्षते ॥ ६१ ॥

प्रदेसावस्थितं देहे बुद्धेस्तु मरुता सह । * * * * * * * * * * *
* * * * * ॥ ६२ ॥

p. 534)

* * * * * * * * * * * * * * * * । * * * * * भूतेषु ब्रह्मादीन्
कारणेस्वरान् ॥ ६३ ॥

जान्वादिभूतसुद्ध्युक्तमार्गेण स्वस्वबीजतः । स्मृत्वा बुद्धिं
तु तत्रैव प्रतीत्यन्तरवर्जिताम् ॥ ६४ ॥

संस्थाप्य प्राणसहितां धारणाभिस्च पञ्चभिः ।
त्रिभिस्त्रिभिर्भवे * * * * * * * * * * ॥ ६५ ॥

ब्रह्मादीन् कारणेसांस्तु स्वैःस्वैः संयोज्य कारणैः ।
प्रणवाक्षरसम्भेदात् क्षित्याद्यैर्मण्डलाक्षरैः ॥ ६६ ॥

निष्कले द्वादसान्तस्थे सिवे संयोज्य चिद्धने। तन्मयं च स्वमात्मानं सर्वगं? सर्ववेदिना ॥ ६७ ॥

* * * * * * * * * * * * * * * * । * * * * * * * * * * * * * * * भाक् ॥ ६८ ॥

धारणाधिकारः।

अथ ध्यानं द्विधा प्रोक्तं सकलं निष्कलं तथा। साकारं सकलं ध्यानं निराकारं तु निष्कलम् ॥ ६९ ॥

चतुर्भुजादिसुक्लादिद्वित्र्यक्षैकाननादिभिः।
भेदैरिष्टसुराकारस्मरणं हृदयादिषु ॥ ७० ॥

साकारध्यानमुद्दिष्टं निराकारमथोच्यते। हृत्पद्मे वा भ्रुवोर्मध्ये बिन्दौ वा द्वादसान्तगे ॥ ७१ ॥

लैन्गिकं परमं ज्योतिर्ध्यायेदन्गुष्ठमात्रकम्।
कदम्बगोलकाकारं भाभासितदिगन्तरम् ॥ ७२ ॥

तस्मान्नीवारसूकाभं ज्योतिरूर्ध्वं सुषुम्नया। निर्गतं

द्वादसान्तस्थसिवेनाप्येकतां गतम् ॥ ७३ ॥

स्वेदेहरोमकूपेभ्यो निर्यज्ज्योतिस्सिखोज्ज्वलम् । विस्वमावृत्य तु व्याप्तं ध्यायेन्निस्चलमानसः ॥ ७४ ॥

ध्यानानामुत्तमं त्वेतद् योगस्चायं परो मतः । एवं सन्त[खः त]तयुक्तात्मा योगी निर्धूतबन्धनः ॥ ७५ ॥

p. 635) अणिमादिगुणैस्वर्याण्यधिगम्याप्यविस्मितः ।
षडूर्मिभिरसंस्पृष्टो मैत्रादिगुणवर्जितः ॥ ७६ ॥

क्षमादमसमोपेतः सर्वभूतानुकम्पकः । छित्त्वा गुणमयान् पासान् परं निर्वाणमृच्छति ॥ ७७ ॥

धारणानां द्वादसकैरायतं ध्यानमिष्यते । ध्यानाद् द्वादसकायामः समाधिर्भवति स्फुटम् ॥ ७८ ॥

ध्यानाधिकारः ।

समाधिः समभावः स्याज्जीवात्मपरमात्मनोः ।
तद्वच्छिवाह्वयं ब्रह्म परंज्योतिः सुनिर्मलम् ॥ ७९ ॥

एकं ज्ञानघनं सान्तं सर्वकारणकारणम् ।
अवस्थात्रयनिर्मुक्तं षड्भावविकृतेः परम् ॥ ८० ॥

सर्वानुग्राहकं विस्वव्यापि नित्यं निरञ्जनम् ।
आकासादिमहाभूतैः सब्दाद्यैर्विषयैरपि ॥ ८१ ॥

दसेन्द्रियमनोबुद्धिसाहन्कारगुणैरपि । प्राणादिभिः प्रकृत्या
च पुरोगाभ्यामविद्यया ॥ ८२ ॥

नियत्या कलया कालमायाभ्यां च विवर्जितम् ।
सादेसेस्वरविद्याभिः सत्तया चाखिलकारणम् ॥ ८३ ॥

नादान्तभासकं सस्वत् पञ्चकृत्यैकहेतुमत् । अनाद्यन्तं पर
सूक्ष्मं तद् योऽहं सोऽहमित्यपि ॥ ८४ ॥

चित्ताधानं सिवे सम्यक् स समाधिरिति स्मृतः । यदा समरसं
चित्तं सर्वत्र समदर्सनात् ॥ ८५ ॥

रागादिदोषरहितं हेयोपादेयनिःस्पृहम् । आहितं स्याच्छिवे
सस्वत् समाधिः परमः स्मृतः ॥ ८६ ॥

अनात्मबुद्धिदेहेऽस्मिन्नस्वबुधिस्च वस्तुषु । एषणात्रयमुक्तस्य

कर्मपुत्रार्थवर्जनात् ॥ ८७ ॥

सर्वारम्भपरित्यागात् सर्वसन्गविवर्जनात्। सर्वव्यापिनि चिन्मात्रे सिवेनैक्येन भावना ॥ ८८ ॥

p. 636)

अविच्छेदेन सततं समाधिः पा(समोचनः)। * * * * * * * * * * * * त एव वा ॥ ८९ ॥

जिघ्रतो मौनिनो वाचं ब्रुवतः सयितस्य वा। आसीनस्यापि मिषतो मीलिताक्षस्य तिष्ठतः ॥ ९० ॥

जाग्रतः स्वपतो वापि स्वप्नान् वा परिपस्यतः। गच्छतोऽपि यदा चेतः समाधिस्थस्य निस्चलम् ॥ ९१ ॥

करणानां तु संहारादव्यक्तिर्विषयेष्वपि। स योगः परमो ज्ञेयस्तद्वान् योगीन्द्र उच्यते ॥ ९२ ॥

ऐस्वर्याण्यणिमादीनि योगस्यावान्तरं फलम्। अष्टैस्वर्यगुणा योगस्यान्तराया भवन्ति हि ॥ ९३ ॥

ते(ष? षु)योग * * * * * * * नाभिरोचयेत्। फलं हि मोक्षो योगस्य

तस्मात् तदभिरोचयेत् ॥ ९४ ॥

एवं सान्गोऽत्र योगस्तु समासात् संप्रदर्सितः । संस्मृत्य
योगसास्त्रेभ्यः सिवानुग्रहतः स्फु(टम्) ॥ ९५ ॥

* * * त्र हि मुख्यमित्थमुदितं भोगा यतो वाञ्छिताः
पस्वादिप्रविचारचारुविसदज्ञानक्रियायोगतः ।
अष्टैस्वर्यगुणास्तथैव सुलभं निःस्रेयसं स्रेय(सा)
तामीसानसिवोऽभ्यधाद् सुरगुरुः सिद्धान्ततापद्धतिम् ॥ ९६ ॥

इति स्रीमदीसानसिवगुरुदेवपद्धतौ सिद्धान्तसारे उपरिभागे
योगपादे प्राणायामादिपटलस्तृतीयः ।

योगपादः समाप्तः ॥

समाप्ता चेयमीसानसिवगुरुदेवस्य कृतिः
सिद्धान्तसारपद्धतिः ॥

सुभं भूयात् ॥

सर्वज्ञानोत्तरम्

त्रन्स्च्रत्_ त०३३४

चोपिद् फ़्रोम् द्। ५५५०   ओफ़् गोव्ट्। मद्रस्

प्। १)

श्रीगुरुभ्यो नमः

सर्वज्ञानोत्तरम्। योगपादम्॥

नमः शिवायशक्त्यै च विन्दवे शाश्वताय च।

गुरवे च गणेशाय कार्तिकेयाय धीमते॥ १॥

अतः परं प्रवक्ष्यामि योगमन्त्रकितस्तुतम्।

शान्तस्य * * * * * * * * * * *

* * ॥ २॥

युक्ताहार विहारस्य युक्तचेष्टस्य कर्मसु ।
उक्त स्वप्नावबोधस्य तत्त्वतः शृणु षण्मुख ॥ ३ ॥

योध्यातायश्च तद्ध्यानं तद्वैर्यान्न प्रयोजनम् ।
सर्वाण्येतानि यो वेत्ति स योगं योक्तु मर्हति ॥ ४ ॥

आत्माध्याता मतोध्यानं ध्येयः सूक्ष्मो महेश्वरः ।
यत्परा परमैश्वर्यमेतद्ध्यान प्रयोजनम् ॥ ५ ॥

मानामानौ समौ कृत्वा सुखदुःखे समे तथा ।
हर्षं भयं विषादं च सत्यजन् योगमभ्यसेत् ॥ ६ ॥

शून्यागारे मठे रम्ये देवतायतने शुभे ।
नदीतीरे विविक्तेन्त गृहे घोरवनेपि वा ॥ ७ ॥

प्रच्छन्ने च विविक्ते च निश्शब्दे जनवर्जिते ।
योगदोष विनिमुक्ते निर्विकल्पे निरातपे ॥ ८ ॥

स्नात्वा शुचि रूपस्पृश्य प्रणम्य शिरसा शिवम्।
योगाचार्यान्नमस्कृत्य योगं युञ्जीत * * * ॥ ९॥

पद्मकं स्वास्तिकं नापि उपस्थाप्यां जलिं तथा।?
पीठार्धतर्धचन्द्रं वा कर्मतो? भद्रमेव वा॥ १०॥

पृ। २)

आसनं रुचिरं वद्ध्वोर्ध्वकायः समं शिरः।
सर्वसंगान् परित्यज्यात्मसस्थं मनोगुह॥ ११॥

न दन्तैः संस्पृशेद् दन्तान् सृक्विण्या च न जिह्वया।
किञ्चित् कुञ्चित नेत्रस्तु शिवं सम्यक्तदोच्चरेत्॥ १२॥

*? य स यति तत्वानि तन्मात्राद्यानि देहिनाम्।
पुनर्विनंशिकश्चैवास्त्र युक्तष्षडानन॥ १३॥

न पृथक् हृदयं तस्य न शिरो न शिखागुह।
वर्मास्त्र नेत्रसहितं तस्मादेव प्रवर्तते॥ १४॥

प्राणापानौ समौ कृत्वा सुषुम्नान्तर चारिणौ ।
तयोर्वृत्तिर्निरुध्यात्मा शिवं ध्यायेद् विचक्षणः ॥ १५ ॥

अविनाभावसंयुक्तो ज्योतीरूपं सुनिर्मलम् ।
सुसूक्ष्मं व्यापकं नित्यं निर्विकल्पं सदा बुधः ॥ १६ ॥

उत्तमा मध्यमा मन्दास्संसर्गास्त्रिविधाः स्मृताः ।
प्राणायामांश्च तान् कुर्यात् पूरकुम्भक रेचकान् ॥ १७ ॥

प्राणायामैर्दहेद्दोषान् धारणाभिर्दिस्तुतम् ।
प्राणायामो भवादेय पूरको देहपूरकः ॥ १८ ॥

पिधाय सर्वद्वाराणि निश्वासोच्छ्वासवर्जितः ।
संपूर्ण कुम्भवत् तिष्ठेत् प्राणायामस्सकुम्भकः ॥ १९ ॥

ततोर्ध्वं रेचयेद् वायुं मृतु निच्छ्वास संयुतम् ।
रेचकस्त्वेष विख्यातः प्राणसंशयकारकः ॥ २० ॥

पृ । ३)

प्रसार्यचाग्रहस्तं तु जानुं कृत्वा प्रदक्षिणम्।

च्छोटिका ततो दद्यान्मनन्नैष्टा त्वभिधीयते॥ २१॥

मात्रा द्वादश विज्ञेयाः प्रमाणं तालसंज्ञकम्।

तालद्वादशकं ज्ञेयं प्राणायामस्तु आन्यसम्॥ २२॥

मध्यमश्चतविंश ज्येष्ठ * * द्विगुणो भवेत्।

एकैकां वर्धमात्रां प्रत्यहं योगवित्तमः॥ २३॥

नत्वरेण विलम्बेन क्रमेणैव विवर्धयेत्।

प्राणायामोत्तमोयत्त द्विगुणा धारणा मता॥ २४॥

धारणाद्विगुणो योगो योगोपि द्विगुणी कृतः।

योगसिद्धिरिति ज्ञेया शिवेन परमात्मना॥ २५॥

तदानु पश्यते सूक्ष्मं गन्धतन्मात्रमात्मनि।

रसं तेजस्परिशंति च शब्दतन्मात्रमेव च॥ २६॥

पश्यते कर्मयोगेन वर्णभावैः पृथग्विधैः।

अहंकार मनोबुद्धिं गुणमव्यक्त पौरुषम्॥ २७॥

अभिव्यक्तानि जानीयात् स्वधर्मगुण लक्षणात्।
विद्यां कलां ततः कालं मायां विद्यां ततः पराम्॥ २८॥

दृष्ट्वानु क्रमशः सर्वान् पुनरस्त्रेण भेदयेत्।
विद्येश्वरं ततस्तत्वं तथा सादाशिवं परम्॥ २९॥

भित्वा तु क्षुरिकास्त्रेण ततः सूक्ष्मं शिवं विशेत्।
अमृतात्मा शिवः साक्षात् तस्मिन्निष्टस्तु योगवित्॥ ३०॥

पृ। ४)

सर्वज्ञस्सर्वगस्सूक्ष्मस्सर्वेशस्सर्वकृद् भवेत्।
सर्वेष्वेव स शास्त्रेषु ज्ञेयं वस्तु चतुष्टयम्॥ ३१॥

पशुः पाशः पतिश्चैव शिवश्चेति यथाक्रमम्।
ज्ञात्वा तु तत्व सद्भावं तन्त्रसारं तु दुर्लभम्॥ ३२॥

सर्वथा वर्तमानोपि गृह्णाति न पुनस्तनुम्॥ ३३॥

॥ इति योगपादः समाप्तः ॥

पशुपाशविधानं हि श्रोतुमिच्छामि तत्वतः ।
संयोगं च तथा तेषां कथयस्व महेश्वर ॥ १ ॥

आद्याः पाशास्ततस्तेषां जीव आद्यस्तु किन्तु वै ।
का पाशाः कोमलाः प्रोक्ताः कस्माद्बन्धः पुमानिति ॥ २ ॥

पतिश्च किं विधो ज्ञेयस्साधिकार पदे स्थितः ।
शिवश्च कीदृशः प्रोक्तो योधिकार विवर्जितः ॥ ३ ॥

ईश्वरः

पशुरात्मा स्वतन्त्रश्च चिन्मात्रो मनदूषितः ।
सममूढो नित्यसंसारी किञ्चिद् ज्ञानीश्वरो क्रितः ॥ ४ ॥

ताम्रस्यैव तु हेमत्वमन्तर्लूनं यथा स्थितम् ।
अन्तर्लूनं तथा ज्ञेयं शिवत्वं पुद्गलस्य तु ॥ ५ ॥

श्रीः

योगप्रकरणम् सर्वज्ञानोत्तरवृत्तिः

अतः परं प्रवक्ष्यामि योगं

योगस्यारब्दकार्याक्षिप्तमलादिक्षपणोपायत्वात्पदार्थसंबन्धः

पतिपदार्थतया पाटलिकः संबन्धः। * द्विहेतुत्वात् शुचिशब्देन

सूचितः प्रकरणसंबन्धो योगकाण्डतया सूत्रसंबन्धः

समुच्चयपदेनैव वाक्यात्मकोऽपि योगि योगात्मकान् गुणानि *

भिर्वाक्यैः। अतश्चर्याकाण्डादनन्तरं योगं संक्षेपतः

प्रकर्षाद्वक्ष्यामि। कस्यायं योगसंस्कार अत-आह-

एकाकिनस्तु शान्तस्य यतचित्तस्य विरागिणः निस्पृहस्य।

उक्ताहारविहारस्य उक्तचेष्टस्य कर्मसु। उक्तस्वप्नोवबोधस्य तत्त्वतः

श्रृणु षण्मुख। पुरुषस्यैवायं संस्कारको न * * तं

जलानामिवचित्तस्येत्यर्थः। शिवयोगस्य सर्वज्ञत्वादि प्रकाशकात्।

कीदृशस्य एकाकिनः सर्वसङ्गपरित्यागादपरिग्रहस्य

संन्यासाश्रमः शान्तस्य हिंसादिरहितस्य

यमनियमयुक्तस्येत्यर्थः। चित्तसंयमो हि यमो

नियमश्चेंद्रियसंयमः। यदाह पतञ्जलिः -

अहिंसां सत्यमस्तेयं ब्रह्मचर्यापरिग्रहः यमाः।

शौचसंतोषस्वाध्यायेश्वर प्रणिधानानि नियमा इति॥

अत एव यतचित्तस्य प्राणायामप्रत्याहाराभ्यां वशीकृत * * *

पलक्षितसर्वज्ञः यस्य शक्तिपादवशात् विरागिणः

p. 2) संसारवैराग्ययुक्तस्य निस्पृहस्य वैहिका भोगविमुखस्य

युक्ताहारविहारस्य यदु * मन्मृगेन्द्रेमिलं जीर्णाशनस्वस्थेत्यादि।

किं च। सर्वकर्मसु युक्तचेष्टस्य उचितकरण इति यावत्।

उक्तस्वप्नावबोधश्चोक्तकालानति * मयस्य? तस्य तं योग ध्येय

ध्यातृ संबन्धात्मकस्त्वतः श्रृणु। न तु पतञ्जलादेरिव

समाधिरूपं तस्य योगाङ्गत्वेन श्रुते यदुक्तं श्रीमन्मतङ्गे -

प्राणायामस्तथा ध्यानं प्रत्याहारोऽय धारणम्।

नर्कश्चैव समाधिश्च षडङ्गो योग उच्यते इति॥

अत एव युजिन् योग एव इत्यस्माद्धातोर्योगशब्दोन तु युज

समाधाविति। एतदेव सूचयन् ज्ञानिन एव योगाधिकार इत्याह योध्यो

यच्चत ध्यानं तद्वै ध्यानप्रयोजनम्। सर्वाण्येतानि यो सयोगं

योक्तुमर्हति। च शब्दा ध्येयं चेत्यर्थः। यदाह -

आत्मा ध्याता मनो ध्यानं ध्येयः सूक्ष्मो महेश्वरः।

यत्परं परमैश्वर्यमेतध्यान प्रयोज * ननं मनः।

यथावध्येय वस्तुस्वरूपालोचनं चिन्तेत्यर्थः। ततो ध्यानमुच्येते।

यच्छ्रूयते तद्रूपचिन्तनं ध्यानमिति ननु मनश्चित्तमिति व्या * यं

तस्य योगाङ्गत्वेनाप्रसिद्धेः। उपलक्षणं चैतत् अन्यान्यपि

यागाङ्गान्यं गिनं च योगं ज्ञात्वा योगाभ्यासः कार्यः।

p. 3) किं च।

मानामानौ समौ कृत्वा सुखदुःखे समे तथा।

हर्षं भयं विषादं च संत्यज्य योगमभ्यसेत्॥

यदाहुः -

न हृष्यत्युपकारेण नापकारेण कुप्यति।
यः समः सर्वभूतेषु जीवन्मु * * * म इष्यत इति॥

अथ योगस्थानम्-

शून्यागारे मठे रम्ये देवतायतने शुभे।
नदीतीरे विविक्ते वा गृहे घोरवनेऽपि वा॥

प्रच्छन्ने च विविक्ते च निः * तनवर्जिते।
योगदोषविनिर्मुक्ते निर्विकल्पे निरातपे॥

योगदोषा पिपीलिकादयः। निर्विकल्प इति परकीयत्वादि विकल्परहिते॥

योगाभ्यासोपक्रमः।

स्नात्वा शुचिरूपस्पृश्य प्रणम्य शिरसा शिवम्।
योगाचार्यं नमस्कृत्य योगं युञ्जीत मानवः॥

योगासनान्याह -

पद्मस्वस्तिकं वापि उपस्थायाञ्जलिं तथा।

पीठार्थमर्धचन्द्रं वा सर्वतोभद्रमेव च॥

आसनं रुचितं बध्वा पद्माद्यासनलक्षणम्।

संहितान्तरो देवध *॥

अथकरणमाह -

p. 4) ऊर्ध्वकायः समशिराः।

सर्वसंगान्परित्यज्य आत्मसंस्थमनोगुहः।

कुर्यादित्यध्याहारः?।

ततश्च सर्वसंगान्परित्यज्य आत्मसंस्थं मनः कुर्यादिति

विषयेभ्यः समस्तेन्द्रियाधिष्ठातुर्मनसः प्रत्याहरणं कुर्यादिति

यावत्। अनेन प्रत्याहाराख्यं योगाङ्गं संक्षेपात् ज्ञेयम्। किं च

तदानीं न दंतैः संस्पर्शेद्दन्तान् सृक्कण्यौ च न जिह्वया,

किंचित्कुञ्चितनेत्रस्तु शिवं सम्यक् नदोच्चरेत्। प्रत्याहारकाले

विबीजात्मकमूल * * मनसा स्मरेदित्यर्थः। अथतदुच्चारप्रयोजनम्।
सोद्वासयति तत्वानि तन्मात्राद्यानि देहिनाम्। अयमभिप्रायः।
छांदसो।

विसर्जनीयलोपात् * ति शिवमन्त्रो श्वक्ष्यमाणवत्।
सगर्भप्राणायामपूर्वं शिवाधिष्ठिततत्वाद्यनेनोच्चार्यमाणः।
समाधिलाभक्रमेण तत्त्वानि तावत्प्रकाशयति। मन *
त्रानुसंधानेन शिवाधिष्ठिताभिमतत्वयोजना॥ तत्तत्साक्षात्कारो
भवतीति यावत् तन्मात्रा माद्यानि यानि पृथिव्यादीनि भूतानि तन्मा
वाद्या एषामिन्द्रियादीनां तानि सर्वाणितत्त्वानि
श्रीमन्मतङ्गाद्युक्तवत्प्रकाशयतीति वेदितव्यम्। तानि च तत्त्वानि।
तस्यैव च शास्त्रस्यानुसं(धाना)त् बन्धकत्वान्निवर्तत इत्याह-

पुनर्विनाशकश्चैव असंयुक्तः षडाननः। तेषामिति शेषः।
p. 5) तदानीं चाङ्गानामपि तदुद्भूतत्वात् पृथगुच्चारणयोगीत्याह
। न पृथक् हृदयं तस्य शिरो न शिखा गुह। चर्मास्त्र नेत्रसहितं
तस्मादेव प्रवर्तते। अथ प्राणायामस्यापि सगर्भतां प्रय * नु
कुंभक प्राणायामपूर्वकं ध्यानं कार्यमित्याह।

प्राणापानौ समौ कृत्वा सुषुम्नान्तरचारिणौ।

तयोर्वृत्तिं निरुध्यात्मा शिवं ध्यायेद्वि * गः॥

प्राणायामस्य सगर्भतोक्तां श्रीमन्मृगेन्द्रेऽपि।
सोऽपि ध्यानजपोपेतः सगर्भो न्यस्तदुज्झित इति॥

अथ ध्यानस्यैव प्रकर्षावस्थात्मकं समा * * * ह

अविनाभावसंयुक्तो ज्योतीरूपं सुनिर्मलम्।
सुसूक्ष्मव्यापकं नित्यं निर्विकल्पं सदा बुधः॥

निर्विकल्पमिति ध्येयाकारस्फुटीभावेन ध्यात्रादि * * गेरहितमित्यर्थः
। यदाह पतञ्जलिः। प्रत्ययै तानता ध्यानं तदेव
स्वरूपशून्यमेव समाधिरिति। इत्थं सगर्भनिगर्भभेदेन
प्राणायामानां द्वैविध्ये * न्यथा त्रैविध्यमाह।
उत्तमामध्यमामन्दाः सगर्भास्त्रिविधाः स्मृताः। सगर्भा
इत्युपलक्षणम्। अगर्भाणामप्युत्तमादि भेदं चानन्तरमेव
वक्ष्यति। * * रांतरेणापि त्रैविध्यमाह।

प्राणायामांश्च तान् कुर्यात् पूरककुम्भकरेचकान्। सगर्भाणां
प्राणायामादीनां समाधिलाभक्रमेण तत्त्वजयस्योक्त * * *

p. 6) अगर्भाणां फलमाह -

प्राणायामैर्बहिर्दोषान् धारणाभिस्तु किल्विषम्।

प्रत्याहारेण संसृज्य ध्यानेनानश्वरान्गुणान्॥

यावच्छरीरभावि * * णि मादीन् गुणानित्यर्थः। अनश्वरः अशून्यः

शरीरः स्थैर्यमपि जायत इति सिद्धम्। अथ पूरकादिलक्षणमाह -

उदरं पूरयित्वा तु वायुना या * * प्सितम्।

प्राणायामो भवेदेव पूरको देहपूरकः

विधाय सर्वद्वाराणि निश्वासोच्छ्वासवर्जितः।

संपूर्णकुम्भवत्तिष्ठेत्प्राणायामः स कुम्भकः।

तदो * रेचयेद्वायुं मृदुनिश्वाससंयुतम्।

रेचकस्त्वेषविख्यातः प्राणसंशयकारकः।

पूरकरेचकौवामदक्षिणनाडीभ्यां कार्यावित्युक्तं

प्राणसंशयकारक इत्युत्क्रान्तिदशायां ग्रन्थिछेदपूर्वं

रेचकस्य प्राणवियोगहेतुत्वादुच्यते।

तेषामेव कालभेदादुत्तमादि भेदमाह।

प्रसार्यं चाग्रहस्तं तु जानु कृत्वा प्रदक्षिणम्॥

छोटिकां तु ततो दद्यान्मात्रैषा त्वभिधीयते।
मात्राद्वादशविज्ञेयः प्रमाणं तालसंज्ञकम्।
तालद्वादशकं ज्ञेयं प्राणायामस्तु कस्यसः।
मध्यमस्तु चतुर्विंशत् ज्येष्ठो द्विगुणो भवेत्॥
तेषां चानुष्ठानविधिः।

p. 7) एकैकान्वर्धयेन्मात्रां प्रत्यहं योगवित्तमः।
सत्वरेण विलम्बेन क्रमेणैव विवर्धयेत्॥

इदानीं हृदयादिस्थानेषु ध्येयस्वरूपविषये निबद्धस्य मनसो
धारणादिकालमाह।

प्राणायामोत्तमो यत्तद्विगुणा धारणामता।
धारणाद्विगुणो योगो योगोऽपि द्विगुणी कृतः।
योगसिद्धिरिति ज्ञेया शिवेन परमात्मना॥

अत्र योगशब्देन ध्येयस्वरूपचिन्तनमपि।
ध्यात्रा सह ध्येयस्थ संबन्ध इति कृत्वाध्यानमुच्यते।

योगसिद्धिशब्देन तु समाधि। धारणाध्यानसमाधीनां

योगाङ्गानां क्रमेण प्राप्ते श्रवणात्।

ननु श्रीमन्मृगेन्द्रे धारणादीनां कालाधिक्यं श्रूयते

उक्तं हि तत्र -

अयमर्कगुणः कालः कृतचित्तव्यवस्थितिः।

प्राप्नोति धारणाशब्दो धारणा सिद्धिदानतः॥

धारणा द्वादश ध्यान दिव्यालोकप्रवृत्तितः।

समाधिमणिमादीनां द्वादशैतानि कारणमिति॥

सत्यं क्रियाभेदस्य तन्त्रभेदहेतुत्वादविरोधः अङ्गी तु योगो

ध्येयवस्तुसाक्षात्कारात्मको विशेषसंबन्ध इत्याह। तदानु पश्यते

सूक्ष्मं गन्धतन्मात्रमात्मनि।

रसं तेजश्च स्पर्शं च सब्दतन्मात्रमेव च।

पश्यते क्रमयोगेन वर्णभावैः पृथग्विधैः॥

p. 8) अहंकारं मनोबुद्धिगुणमव्यक्तपूरुषम्।

अभिव्यक्तानि जानीयात् स्वधर्मगुणलक्षणम्॥

विद्यां कलां ततः कालमायां विद्यां ततः परम्।
दृष्ट्वानुक्रमशः सर्वान् पुनरस्त्रेण भेदयेत्॥

विद्येश्वरं ततस्तत्वं ततस्सादाशिवं परम्।
हित्वार्कं तु क्षुरिकास्त्रेण ततः सूक्ष्मं शिवं विशेत्॥

अत्र च भूतानां स्थूलानामस्य प्रत्यक्षेणापि विज्ञातुं
शक्यत्वात् केवलयोगसाक्षात्कार्याणि तन्मात्रादीन्युच्यन्ते
परमार्थतः पृथिव्यादिस्वरूपमपि सूक्ष्मयोगेन
साक्षात्कर्तव्यमित्युक्तं श्रीमन्मतङ्गादौ।

ततश्च पृथिव्यादीनि शिवान्तानि तत्त्वान्येवं साक्षात्कृत्य
प्रागुक्तवन्मूलयुक्तेन क्षूरिकास्त्रेण भेदयेज्जयेत्।
बन्धकत्वान्निवर्तयेदित्यर्थः। उक्तं हि प्राक् सोद्भासयति तत्त्वानि
तन्मात्राद्यानि देहिनाम् पुनर्विनाशकश्चैव अस्त्रयुक्तः षडाननेति।
एवमेतानि सालम्बनेन योगेन निष्कले शिवे स्वात्मानं युज्यादित्यर्थः।
अत्र च तत्वजयोपयोगित्वेन शास्त्रान्तरोक्तं तर्काख्यमपि
योगाङ्गमर्थसिद्धिमेव यच्छ्रूयते-ऊहोऽन्तरङ्गो योगस्येति। अथ

योगफलं दर्शयति।

अमृतात्मा शिवः साक्षात् तस्मिन्विष्ठस्तु योगवित्।
सर्वज्ञः सर्वगः सूक्ष्मः सर्वेशः सर्वकृद्भवेत्।

ननु। यद्येवं योगेनैव मुक्तिसिद्धेर्दीक्षाया अप्यानर्थक्यप्रसङ्गः।

p.9) तन्न एवं विधस्य शिवयोगस्य दीक्षाया विनानुष्ठानासिद्धेरारब्धकार्यकर्मक्षिप्तमलादिनिवर्तन एव चरितार्थत्वादनधिकारिणां शिवशास्त्रं विना समस्ततत्त्वविषयज्ञानाद्यभावाच्च। अत एव मात्रप्रसङ्गात् ज्ञेयं वस्तुदर्शयति।

सर्वेष्वेव शास्त्रेषु ज्ञेयं वस्तुचतुष्टयम्।
पशुः पाशः पतिश्चैव शिवश्चेति यथाक्रमम्।

पतिरधिकारावस्थं शिव एवातश्च पतिपदार्थः सैव सोपाधिका निरूपाधिकाभ्यां भेदद्वयमुपचारादुच्यत इति वक्ष्यामः। ततश्च ज्ञानस्यापि दीक्षाद्यङ्गत्वान्मोक्षहेतुत्वं परंपरया सिद्धमित्याह।

ज्ञात्वा तु तत्त्वसद्भावं तत्रसारं तु दुर्लभम्।

सर्वथावर्तमानोऽपि गृह्णाति न पुनस्तनुम्॥

इति लक्षद्वयाध्यापक श्रीमदघोरशिवाचार्यविरचितायां

शीमत्सर्वज्ञानोत्तरवृत्तौ योगप्रकरणम्॥

न बिन्दुर्न शिखामात्राप्यस्त्रवशस्य षण्मुख।
स विसर्गास्तथा दीप्ता घोरकर्मकरा स्मृताः॥ २०॥

एकत्रिंशान्तिकं वर्णं सप्तमस्वरयोजितम्।
ककारार्धयुतं कृत्वा क्षरिकास्त्रं प्रकीर्तितम्॥ २१॥

एते मन्त्राश्शिखास्सूक्ष्माः परमाः सर्वकामिकाः।
सर्वैरेभिः सदा कुर्याच्छिवीकरणमात्मनः॥ २२॥

यदा यदा समाचामे मन्त्रन्यासं यदा तदा।
कुपितकरकायेषु मन्त्रिमन्त्रार्य सिद्धये॥ २३॥

इति श्रीसर्वज्ञानोत्तरे क्रियापादे प्रासादमन्त्रोद्धारप्रकरणम्॥
अथातः संप्रवक्ष्यामि शिवीकरणमुत्तमम्।
यत्कृत्वा तु नरः सम्यक् शिवो भवति नान्यथा॥ १॥

देहं संशोधयेत् पूर्वं धारणाभिस्तु पञ्चभिः।
शुद्धदेहस्ततो भूत्वा शिवमन्त्रान् नियोजयेत्॥ २॥

सुषिम्नान्तर्वहिः शक्ति विन्यसेद् व्योमरूपिणीम्।
तस्य मध्ये तु हुंकारं ज्वलन्तं पावकप्रभम्॥ ३॥

प्राणापानसमायुक्ते तस्मिन् चित्तं निवेशयेत्।

पृ। २८)

उत्छ्?टान्तेस्त्र मोक्षस्तु हुंकारेण समन्वितः॥ ४॥

ग्रन्थिभेदं कुरुष्वेवं पुनः साधानमारभेत्।
सन्निरुद्धे कृते सम्यक् गूर्ध्वं वायुः प्रवर्तते॥ ५॥

योद्धात इति विख्यातः स्वेच्छया तु कनीयः *।
पूरकेणोपसंहृत्य हृदयेन तु मन्त्रवित्॥ ६॥

सान्तबीजमयं जीवं न्यसेधूंकारमूर्धनि।
हुंकारस्य शिखान्तस्य पुरुषं बीजविग्रहम्॥ ७॥

ध्यात्वा त्वेकाकिनं सूक्ष्मं बिन्दुभूतं निरामयम्।

ततः संयोजयेद् योगी शिवे परमकारणे ॥ ८ ॥

शिवातीते सदाशान्ते शुद्धस्फटिक निर्मले ।
एकेनोद्घात मात्रेण एकलक्षस्सुमन्त्रितः ॥ ९ ॥

एकीभावसमायुक्तः प्रविशेच्छिवमव्ययम् ।
बीजवृत्याशिखेलून तत्व वृत्या तु तत्ववित् ॥ १० ॥

* म्यदीनि विजानीयादनिलानि विशोधयेत् ।
हृदा तु पार्थिवं बीजं वारुणं शिरसा सह ॥ ११ ॥

नियुक्तं शिखयाग्नेयं वायव्यं कवचान्वितम् ।
होकार मन्त्रसंयुक्तं मण्डलेषु प्रयोजयेत् ॥ १२ ॥

एतास्तु धारणा ज्ञेय ऐंद्राद्या देशिकोत्तमैः ।
वैन्दवास्तु कलास्ताश्च निवृत्याद्याः प्रकीर्तिताः ॥ १३ ॥

प्रधंदारण भेदेन प्रणवेत्वेकधा स्थिताः ।

प्। २९)

ज्ञानत्वैतास्तु कलासम्यक् स्थूल सूक्ष्मविमिश्रकाः ॥ १४ ॥

ततो ध्यानं प्रकुर्वीत देह संशोधनाय च।

चतुरश्रं समंपीतं वज्रांग वज्राङ्कं कठिनं गुरुम्॥ १५॥

लकारासनमारूढं हृद्बीजमध्यतः स्थितम्।

उद्घातैः पञ्चभिर्युक्तं वायुभूत विशोधयेत्॥ १६ ॥

अर्धचन्द्रं द्रवं सौम्यं शुद्धकुन्देन्दु समप्रभम्।

वारुणं मंडं ध्यायेत् मध्ये कमलभूषितम्॥

वकारासन मध्यस्थं शिरोबीजमधोमुखम्।

युक्तं चतुर्भिरुद्घातैः वह्निभूतं विशोधयेत्॥ १८ ॥

विषानल महावेग कालपाशविनाशनम्।

वर्षन्तं तमभिध्यायेत् नादमानं सुशीतलम्॥ १९॥

डाडिमी कुसुम प्रख्य मध्यशृंगाटकाङ्कितम्।

त्र्ययश्रमर्चस्सुसम्पन्नमाग्नेयं मण्डलं स्मरेत्॥ २० ॥

रकारासनमारूढं शिखाख्यं बीजमुत्तमम्।
उद्घातै स्त्रिभिः संयुक्तं जलभूतं विशोधयेत्॥ २१ ॥

शोधयन्तं स्वकंदेहं निर्दहन्तमकल्मषम्।
सकृष्णं बिन्दुभूतं * * * * * * * *
* ॥ २२ ॥

वायव्यमण्डलं ध्यायेत् पादादारभ्य चञ्चलम्।
यकारासन् संविष्टं कवचं वायुविग्रहम्॥ २३ ॥

शोधयेत् पार्थिवं भूतं उद्घात द्वय योजितम्।
ततः सञ्चिन्तयेद् व्योमं समलं सर्वतोमुखम्॥ २४ ॥

पृ। ३०)

नित्यं सर्वगतं शान्तं बिन्दुशक्तिविभूषितम्।
ओंकारासंविष्टं हकारं नाहसंविलम्॥ २५ ॥

कोनोघातमात्रेण शून्यभूतं विशोधयेत्।
मण्डलं बीजसंयुक्तं ध्यानेन विविधेन च॥ २६॥

प्राणायामैर्मतं सम्यक् धारणेत्यभिधीयते।
यायेव धारणाधार्य जगत्सर्वं हि तन्मयम्॥ २७॥

यदात्मकं च योगीन्द्रास्तत्तत्कर्मजलं ययुः।
एवं संशुद्ध देहस्त्वमृतीभूतो विधानवित्॥ २८॥

ततो निरुक्षयेन् मार्गं का नाडी वहते मम।
यस्मिन् चरति पुद्गलः * * * * * * * * ॥ २९॥

तत्रान्तर्देह विनासमन्तर्य जनमेव च।
देहस्तस्य विदेहस्य जाक्षिभूतस्य कर्मसु॥ ३०॥

नित्योदितस्य कुर्वीत सदासन्निहितस्य तु।
वामनासा पुटे या तु इडासा परिकीर्तिता॥ ३१॥

दक्षिणे पिङ्गला ज्ञेया सुषुम्ना मध्यत स्थिता।

यस्मिन्नभ्यधिको वायुस्सानाडी सर्वकामदा॥ ३२॥

इडानाड्यां वहन्त्यां च म दिवस्थान प्रकल्पयेत्।
पिङ्गला नाडि पद्मं तु सुषुम्ना मूर्ध्नि योगवित्॥ ३३॥

हृदयेच्चा विधानं तु नाभौ भौमं प्रकल्पयेत्।
मूर्ध्नान्ते शिवं ध्यायेत् वरदं सर्वतोमुखम्॥ ३४॥

पृ। ३१)

रात्रौ संपूजयेद् देवं दिवाहोमं च कारयेत्।
सन्ध्यासु च ततो ध्यानं दिवा रात्रौ जप स्मृतम्॥ ३५॥

दिवा तु तामसं कुर्याज्जपो रात्रौ तु राजसम्।
सन्ध्यायां सात्विकः प्रोक्तो जपः सर्वार्थसाधकः॥ ३६॥

विस्पष्टस्तामसः प्रोक्तो राजसोपांशुरुच्यते।
मनसा सात्विकं विधात् जपं जप्यविदां विदुः॥ ३७॥

तामसं क्रूरकर्माणां वश्यादिषु च राजसम्।

सात्विकं दिव्यसिद्धीनां जपं युज्याद्विचक्षणः ॥ ३८ ॥

प्राणपत्ति निरोधेन यो जपः क्रियते सदा ।

स जपः सात्विकः प्रोक्तो भोग मोक्ष फलप्रदः ॥ ३९ ॥

नं तु द्विविधं कुर्यात् स्थूला सूक्ष्मं सदाबुधः ।

ध्यानेन हि परां सिद्धिं प्राप्नुवन्ति हि योगिनः ॥ ४० ॥

स्थूल मन्त्रमयं प्रोक्तं सर्वावयवसंयुतम् ।

द्विमार्गावस्थितं ध्यायेत् पूजाग्नौ होमवित्तमः ॥ ४१ ॥

केवलं शिवबीजं तु सर्वावयववर्जितम् ।

न जातिरूपं परं शुद्धं तत्सूक्ष्मं परिकीर्तितम् ॥ ४२ ॥

दक्षिणायनमित्युक्तं निशा सोमात्मिका गुह ।

अहस्तु विमलं प्रोक्तं सौरमेयोत्तरायणम् ।

सन्ध्या तु विषुवं प्रोक्तं वुत्तरेण * * * * ? ॥ ४३ ॥

उत्तरेण वहन्तस्य दक्षिणायनमादिशेत् ।

प्। ३२)

दक्षिणेनोत्तरं विद्यां मध्ये तु विषुवं भवेत्॥ ४४॥

समीभूते यदा वायुःश्चरते संपुटद्वये।
विषुवं तु विजानीयात् पुण्यमन्त्रो भयात्मकम्॥ ४५॥

विषुवं चन्द्रमाहेन्द्रांद्या दक्षिणायनमाश्रिताः।
इडाख्यान्तर्गतां ध्यायेत् पितृयाने शिखिद्ध्वज॥ ४६॥

ब्रह्मावह्नी रविर्वायुरुत्तरायणमाश्रिताः।
पिंगलान्तर्गतं ध्यायेद् देवयानं तदुच्यते॥ ४७॥

अनन्तेशश्चरुद्रश्च सदाशिव शिवौ तथा।
सुषुम्नान्तर्गतं ध्यायेद् विषुवे च विचक्षणः॥ ४८॥

धर्मज्ञानं च वैराग्यमैश्वर्यञ्च चतुष्टयम्।
योगपीठं च पद्मं च प्रणवेन तु विन्यसेत्॥ ४९॥

तत्वं विन्यसेत् पूर्वं कर्णिकायां विचक्षणः ।

व्यापयन्ति मधश्चोर्ध्वं पुनः शक्ति नियोजयेत् ॥ ५० ॥

ततश्चाकर्षयेज्जीवं शिवीभूतं निरामयम् ।

पूरकेण शिखान्तस्थं शिवबीजमयंपरम् ॥ ५१ ॥

स्थापयेत शिखामध्ये ज्योतीरूपं सुनिर्मलम् ।

अमृते वा प्लाव्यमानमुपरिष्टात् समं ततः ॥ ५२ ॥

ततोस्य मन्त्रविन्यास सूक्ष्मदेहस्य षण्मुख ।

यथा भवति तत्वेन तच्छृणुष्व यथाक्रमम् ॥ ५३ ॥

शान्तौ करतलौ कृत्वा करशाखासु पञ्चसु ।

प्। ३३)

ईशानादीनि ब्रह्माणि कनिष्ठादिषु योजयेत् ॥ ५४ ॥

ततोङ्गानि नियुंजीत हृदयादि ततो पुनः ।

प्रासादं विन्यसेत् पञ्चव्यापिनं सर्वतोमुखम् ॥ ५५ ॥

ततश्चालभनं कुर्यात् पादादारभ्य मूर्ध * ? ।
ईशानं पञ्चधा मूर्ध्नि वक्त्रंवक्त्र चतुष्टये ॥ ५६ ॥

दीप्ततेजस्सितोक्तानां पञ्चमं प्रणवेन तु ।
हृदाद्यंगैरघोरं तु गुह्यवामं प्रकल्पयेत् ॥ ५७ ॥

पादादारभ्य सर्वाङ्गैः सद्योजातं तु विन्यसेत् ।
हृदि श्रीवातदानौ च नाभ्यां च जठरे तथा ॥ ५८ ॥

पृष्ठे ह्युरसि मन्त्रज्ञो विन्यसेद् बहुरूपिणम् ।
गुह्ये चैव तथालिङ्गे ऊर्वोर्वैजानुनोस्तथा ॥ ५९ ॥

जंघयोश्च स्फिचोत्कट्यां पार्श्वे वामकला न्यसेत् ।
पादयोर्हस्तयोश्चैव नासायां शिरसा तथा ॥ ६० ॥

बाह्येश्चैव च मन्त्रज्ञ सद्योजात कलान्यसेत् ।
नेत्रं नेत्रेषु विन्यस्य पुनरंगानि योजयेत् ॥ ६१ ॥

हृदयं हृदयेद् विन्यस्य शिरः शिरसि विन्यसेत्।
शिखायां तु शिखाद्या तु कवचं स्तनमध्यतः॥ ६२॥

अस्त्रं हस्तप्रदेशे तु ततोध्यानं समाश्रयेत्।
शिवस्य यादृशं रूपं तादृशं चिन्तयात्मनि॥ ६३॥

शिवमन्त्रन्यासमिदमात्मानं तु सदा कुरु।

पृ। ३४)

प्राकृतं भावमुत्सृज्य शिवोहमिति भावयेत्।
यथान्तर्देह विन्यासस्तथा बाह्येपि षण्मुख॥ ६४॥

बाह्ययागं यथा वक्ष्ये सूक्ष्मदेहान्तरे तथा।
तथा वै शिष्य देहे तु अग्नौ होमे तथैव च॥ ६५॥

इति श्रीसर्वज्ञानोत्तरे क्रियापादे परमीकरणप्रकरणम्॥

अतः परं प्रवक्ष्यामि बाह्ययाग विधिक्रमम्।
सर्वकामप्रदं गुह्यं सर्वपापहरं परम्॥ १॥

XXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXX
X
X title: nirvaa.nayogottara
X
X copied from manuscript c 4246 of banares hindu university
X
X
X data entered by the staff of muktabodha
X under the supervision of mark s.g. dyczkowski
X
X revision 0: april 7, 2012
X
XXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXX

वायुना चलते तोयं क्षोभयन्तं पुनः पुनः ।

निश्चलत्वं न चास्तीति तथा चित्तेति दुर्लभम् ॥ १ ॥

ॐ भगवन्देवदेवेश लोकनाथजगत्पते ।

सङ्क्षेपात् कारणं ब्रूहि यत्र चित्ते सुनिश्चलम् ॥ २ ॥

साधु साधु महाप्राज्ञ दृष्टं ते बुद्धि कौशलम् ।

कथयामि न सन्देहः पुत्र स्नेहाद्विशेषतः ॥ ३ ॥

p. 86a) त्रिविधं कारणं प्रोक्तं स्थूलं सूक्ष्मं परं च यत् ।
स्थूलेन रञ्जिता देवा महामाया वशी कृताः ॥ ४ ॥

कारणं तु प्रवक्ष्यामि शृणुष्वेक मनागुह ।
तालुमध्ये तु करणं निश्श्वासोच्छ्वासवर्जितम् ॥ ५ ॥

नाभिहृद्धाममध्यस्थं कन्दगो वन्दनं मनाक् ।
तालुसंज्ञा भवेत् तस्य यतो वा चाप्रवर्तिनम् ॥ ६ ॥

तत्र स्थाने कृता बुद्धिश्चित्रं तत्र सुनिश्चलम् ।
निश्चलं तु यदा चित्तं तदा दृष्टिः प्रवर्तते ॥ ७ ॥

सा च दृष्टिः पराज्ञेया त्रैलोक्यं पश्यते क्षणात् ।
अगम्यं गम्यते चैव अलक्ष्यं लक्ष्यते तदा ॥ ८ ॥

अनादनादमध्यस्था व्यक्ताव्यक्तं सुनिश्चलम् ।
तदा प्रवर्तते निद्रा योगध्यानपरायणा ॥ ९ ॥

p. 86b) आनन्दं भक्षयेद् यस्तु अमृतामृतसम्भवम्।
प्रवर्तते निरानन्दं निश्चलस्थाववर्जितम्॥ १० ॥

निरौपम्यं निराभासं ध्यानधारणवर्जितम्।
शून्यं कृत्वा ततो दृष्टिं शून्यं चैव तु लक्षयेत्॥ ११ ॥

शून्यं शून्यं पुनः शून्यं त्रिशून्यमुच्यते क्षणात्।
सर्वं शून्यं निराभास सामरस्यं तदा भवेत्॥ १२ ॥

घृते घृतं यथा क्षिप्तं क्षीरे क्षीरं तथैव च।
केवलत्वं यदा प्राप्तं न किञ्चिदपि चिन्तयेत्॥ १३ ॥

निस्कामोच्छ्वासिकांस्त्यक्त्वा पूरकश्चामृती भवेत्।
कुम्भकं च यदाप्रोक्तं योगिनां योगधारणात्॥ १४ ॥

निवृत्तिर्यत्र जायेत सर्वं शून्यं प्रवर्तते।
शून्यमध्यगतं शून्यं स्थितं व्योमनि व्योमवत्॥ १५ ॥

p. 87a) न रक्तं न च वा पीतं न शुक्लं कृष्णमेव च।

सर्वैर्गुणैर्विनिर्मुक्तः स्थानातीतं परापरम् ॥ १६ ॥

पूरकं च त्वया प्रोक्तं कुम्भकं च पुनः पुनः ।
नमामि दुर्लभं देवं कथं जानन्ति मानवाः ॥ १७ ॥

वायुना पूरकं कृत्वा कुम्भकं कुम्भवत् पुनः ।
माया ह्येषा कृता वत्स येन मुह्यन्ति जन्तवः ॥ १८ ॥

कुम्भकं च इदं कृत्वा हृत्स्थानं रूपवर्जितम् ।
अन्तः शरीरसंस्थं तु न बाह्यं तु कदाचन ॥ १९ ॥

सर्वं स परमं नाम पूरकं चेदमुच्यते ।
तत्रोत्पन्नं यथाकाशं निश्चलस्थानवर्जितम् ॥ २० ॥

इदं शान्तं तथा पुत्र ब्रूह्येनं च स्वतन्त्रतः ।
नन्दिना क्रियते मुद्रा ओष्ठौ तत्र प्रपीडितौ ॥ २१ ॥

p. 87b) शिवं ध्यात्वा मुनीन्द्रैस्तु न किञ्चिदपि चिन्तयेत् ।
सन्तुष्टोहं महाभोगिर्कथितं ते स्वतन्त्रतः ॥ २२ ॥

मयातीतं परं शान्तं वाग्जाल परिवर्जितम् ।
मद्भावसन्धिमाख्यातं भावयेच्च पुनः पुनः ॥ २३ ॥

अभावे भावना चात्र महार्थ हितलोचनः ।
न शक्नोमि महाभोगिन्यदि जन्मशतैरपि ॥ २४ ॥

भावयेत् परमानन्दं यः स्वं वेदसमुक्तितम् ।
अनन्तं शून्यमित्युक्तं हृच्छून्यं रूपवर्जितम् ॥ २५ ॥

नान्तः शरीरे संस्था तु न बाह्ये तु कदाचन ।
सर्वं समरसं नाम निष्ठाशून्यं प्रवर्तते ॥ २६ ॥

परे शून्ये प्रलीनास्ते स्वरूपं नैव विद्यते ।
मनोबुद्धिरहङ्कारं स्थितं माद्वीकशूलवत् ॥ २७ ॥

p. 88a) इन्द्रियाणि तु शून्यानि परे शून्ये लयं गताः ।
परे शून्ये यदालीनः स्वरूपं नैव दृश्यते ॥ २८ ॥

तूर्यैः पटरुनादैश्च जनकोलाहलैस्तथा ।
युक्ति तत्त्वस्य निष्णातो न मनः परिचाल्यते ॥ २९ ॥

मयाबन्धं कृतं वत्स स्थानं ध्यानं चराचरम् ।
केवलस्य कुतः स्थानं ध्यानं तस्य न विद्यते ॥ ३० ॥

धारणादि न चास्तीति सर्वशून्यं च निर्गुणम् ।
निर्गुणं च परं भित्त्वा भित्त्वा चैव मया कृतम् ॥ ३१ ॥

स्वेच्छया स रसं नाम अत्युच्छिन्नं समन्ततः ।
धनुर्धरो यथा शूर आकर्णं पूरयेच्छरः ॥ ३२ ॥

लक्ष्यं भित्वा ततो लक्ष्यमेवं योगी सताहितः ।
न धनुर्न च वा काण्डं लक्ष्यं पुरुषमेव च ॥ ३३ ॥

एवं ज्ञात्वा परं तत्त्वं स्थितं व्योमनि व्योमवत् ।
p. 88b) आपूर्यान्यतमं काण्डं स्तम्भ दृष्टि व्यवस्थितम् ॥ ३४ ॥

इदं तत्त्वं यदा प्राप्तं न किञ्चिदपि चिन्तयेत् ।

न चित्तं न च वा बुद्धिर्न स्थानं वर्णमेव च ॥ ३५ ॥

न च ध्यानं न वा ध्येयं न ग्रन्थिर्वायुमेव च ।
न ग्रन्थं न च वा ग्रन्थी न बिन्दुं नादमेव च ॥ ३६ ॥

न लक्ष्यं न च वा लक्षी न शिखा तुर्यमेव च ।
तेदौ मध्यं यदा प्राप्त न किञ्चिदपि चिन्तयेत् ॥ ३७ ॥

न वायुं न च वा काशं न वह्निं सलिलं तथा ।
न सोमं न च वा सूर्यं न ब्रह्मा विष्णुरेव च ॥ ३८ ॥

न रुद्रं न च वा कालमीश्वरं शिवमेव च ।
अनाख्यं च निराभासं निस्तत्त्वं च निराश्रयम् ॥ ३९ ॥

छन्नं सर्वगतं शान्तं स्थितं व्योमेषु व्योमवत् ।
तदा प्रवर्तते किञ्चित् पश्यमेन पुनः पुनः ॥ ४० ॥

p. 89a) तन्मानं च पुनः कृत्वा स्थूलं शून्ये प्रलीयते ।
सूक्ष्मं शून्यं यदा प्राप्तं परे शून्ये प्रलीयते ॥ ४१ ॥

तस्मिन् स्थाने शुभे प्राप्ते निश्चले निर्गुणे तथा ।
तत्रैव धारयेच्चित्तं यदन्योस्तीति कारणम् ॥ ४२ ॥

एषा सा परमाकाष्ठा परं चित्तं तथैव च ।
एषा सा परमा बुद्धिः परा चापि प्रवर्तते ॥ ४३ ॥

योगिनस्तु ततः प्रश्नं पतते नात्रसंशयः ।
इदं विष्णुर्विजानीयात् पाशः क्रोधेन च्छिद्यते ॥ ४४ ॥

महतां सर्वदेवानां मत्वादेवश्च कीर्तितः ।
तारयेच्च प्रजाः सर्वास्तुम्बुरुस्तेन चोच्यते ॥ ४५ ॥

ईश्वरत्वे तथापीष ईश्वरत्वं प्रकीर्तितम् ।
हरते सर्वपापानि हरो देवः प्रकीर्तितः ॥ ४६ ॥

लयनं सर्व जातीनां लयनाल्लिङ्गमुच्यते ।
एवं सर्वगतं देवं ब्रह्मरूपो न निर्मलः ॥ ४७ ॥

क्रिमिकीटपतङ्गेषु स्थावरे जङ्गमेषु च।
यत्किञ्चिद्वाङ्मयं सर्वं सृष्टिदेवं पकीर्तितम्॥ ४८॥

तस्य देवातिदेवस्य शक्तिर्नादयते जगत्।
एवं सर्वगतं शून्यं हृदये तत्र लक्षयेत्॥ ४९॥

यदि सर्वगतं देव शून्यं ब्रूहि किमुच्यते।
अथ शून्यं परं ब्रह्मलक्षणं ग्रहणं कुतः॥ ५०॥

भगवन्देवदेवेश चन्द्रार्धकृतशेखर।
एतत् प्रश्नं परं गुह्यं प्रसादं कुरु शूलभृत्॥ ५१॥

षडङ्गेन तु योगेन हृद्यं शून्यं तु ग्राहयेत्।
पूर्णं निवर्तनं तेन पूर्णं भावं च लक्षयेत्॥ ५२॥

पूर्णाहुतिं ततो दद्याद्दीक्षाकाले समाश्रिते।
p. 90a) भावितात्मा स योगेन सिद्धिः खेचरतां व्रजेत्॥ ५३॥

प्राणायामं तथा ध्यानं प्रत्याहारं च धारणा।

तर्कश्चैव समाधिश्च षडङ्गो योग उच्यते ॥ ५४ ॥

एतज्ज्ञान मयं प्रोक्तं ज्ञेयं शून्यं प्रकीर्तितम् ।
इन्द्रियाश्च ततः शून्यं चित्तं शून्यं तथैव च ॥ ५५ ॥

बुद्धिशून्यं विजानीयादात्मशून्यं ततः पुनः ।
अग्निशून्यं ततः कृत्वा धर्मशून्यं च निष्कलम् ॥ ५६ ॥

निर्धुमं च परं शून्यं कुम्भमध्ये जलं यथा ।
हिमकाले तु संप्राप्ते विवर्णं निश्चलं भवेत् ॥ ५७ ॥

एवं खंकाष्ठधूस्तद्वत्खतिष्ठे द्विनियोजयेत् ।
इदं तत्वं यदाप्राप्तं पश्यते? जन्म बन्धनात् ॥ ५८ ॥

p. 90b) न प्रवर्तेत चाद्वैतं गृहस्थस्य कदाचन ।
इन्द्रियेभ्यो यतः सक्तः सक्तोमात्सर्य एव च ॥ ५९ ॥

अविद्या ग्राहयेद्रागमतरागं पुनः पुनः ।
तस्मान्निवर्तते तत्वं चित्तं येन न निर्जितम् ॥ ६० ॥

निर्जितं च यदा चित्तं तदा श्रेयः प्रवर्त्तते ।
शान्तो दान्तो जितक्रोधो भिक्षाशी विगत स्पृहः ॥ ६१ ॥

इदं तु योगिने दृष्ट्वा नन्दनीयः प्रयत्नतः ।
दर्शनान्मोचयेत् पापं स्पर्शनाद्दीक्षितो भवेत् ॥ ६२ ॥

आलापात्गात्र?संपर्काद्भोजनाच्छयनासनात् ।
कुलानद्धरते स्कन्द दशपूर्वान्दशापरान् ॥ ६३ ॥

पक्वं चैव प्रतिज्ञानं घटिका च चतुर्विधाम् ।
प्रथमं धूलि भेदं च द्वितीयं हृच्छेदबन्धनम् ॥ ६४ ॥

p. 91a) तृतीयं ग्रन्थि भेदं च चतुर्थं परमुच्यते ।
चित्तसम्बोधमात्रेण कथं गृह्णन्ति तत्पदम् ॥ ६५ ॥

केन वा गृह्यते चित्तं कस्मिन् स्थाने प्रलीयते ।
देवदेव महादेव सर्वस्तत्त्वार्थभेदक ॥ ६६ ॥

ब्रूहि मे परमं ज्ञानं येन सिद्ध्यन्ति साधकाः ॥

खटिका प्रोच्यते मोक्षमुद्धरेत् ग्रन्थि भेदतः ।
खमिव परमं ज्ञात्वा खटिकेषा प्रकीर्तिता ॥ ६७ ॥

चित्तं चित्ते तु सङ्गृह्य बुद्धौ बुद्धिं तथैव च ।
सा तु बुद्धिः पराज्ञेया तत्वमार्गानु सारिणी ॥ ६८ ॥

शृणु शून्यस्य वै लक्ष्यं धरं विशति तत्क्षणात् ।
प्रविष्टे च परे तत्वे समत्वं जायते क्षणात् ॥ ६९ ॥

p. 91b) समत्वं च यदा प्राप्तं परानन्दं प्रजायते ।
परानन्दं यदा प्राप्तं न किञ्चिदपि चिन्तयेत् ॥ ७० ॥

प्रविशेत् तन्मयो भूत्वा शिवबीजेन साधकः ।
तदा न श्रूयते शब्दं शङ्खभेरी स दुन्दुभिः ॥ ७१ ॥

ताडितं च न बिन्देत ततस्तन्मयतां गतः ।
एतत् ते परमं गुह्यं परं ज्ञेयं न संशयः ॥ ७२ ॥

इदं प्रत्ययमापन्नं तत्गुरुः पाशहा भवेत्।
पुष्पं पत्रं फलं तोयं यो दीक्षां कुरुते नरः॥ ७३॥

नवनाभं ततो यागं कृतं तेन न संशयः।
अन्यथा कुरुते दीक्षां तत्गुरुर्ब्रह्महा भवेत्॥ ७४॥

भावनायास्तथा शैव द्वैतं चैवमशेषतः।
क्लिश्यन्ते ते महामूढाः संसारे च पुनः पुनः॥ ७५॥

द्वैतं चैव महाद्वैतं द्वैतैकत्वं तथैव च।
p. 92a) अद्वैतं न च वा द्वैतमतिर्मे परमार्थतः॥ ७६॥

वंशं नाममयाज्ञातं त्वत्प्रसादान्महेश्वर।
महारथं कीदृशं च जटा वै कीदृशी भवेत्॥ ७७॥

भास?नाम किमुत्पन्नं किं वा खट्वाङ्गमुच्यते।
संक्षेपाद्वददेवेश येन मोक्षं ध्रुवं भवेत्॥ ७८॥

भावयेच्चापरं शून्यमनन्तं परिवर्जितम् ।
भवच्छेदकरं शान्तं परं कस्मतदुच्यते ॥ ७९ ॥

जटावत् स्नापयेच्चित्तं जटा ह्येताः प्रकीर्तिताः ।
महास्नानं तदा प्रोक्तं महाव्रतं तदुच्यते ॥ ८० ॥

नास्ति तत्परमानन्दं चित्तकं चित्तवर्जितम् ।
ततः खकाष्टवत्तिष्ठेत् खट्वाङ्गं तादृशं भवेत् ॥ ८१ ॥

p. 92a) एवं गूढं विजानीयात् गुहवासी तथोच्यते ।
न नाम ग्रहणान् मुक्तो न काय तमनाच्छुचिः ॥ ८२ ॥

चित्तं धामयते प्राज्ञो मोक्ष इत्यभिधीयते ।
व्रतस्या चरणं कृत्वा योगं तत्र समभ्यसेत् ॥ ८४ ॥

मयातीते परंब्रह्म लोकत्रयविवर्जितम् ॥ ८५ ॥

व्रतेन सहिता योगाः स्वयं प्रोक्ता महेश्वर ।
योगहीन व्रतामुढा मुद्रा पञ्चक भूषिताः ॥ ८६ ॥

एतन्मे संशयं ब्रूहि येन निस्संशयो भवेत्॥ ८७ ॥

व्रतेन सहिता योगाः सर्वं सिद्धि प्रदाः शुभाः।
योगहीनव्रतामूढा न मुच्यन्ति कदाचन ॥ ८८ ॥

व्रतस्य चरणं कृत्वा लोकयात्रा विवर्जितम्।
p. 93a) निस्पृहो निस्पृहे नित्यं समलोष्टाश्म काञ्चनः ॥ ८९ ॥

शब्दं स्पर्शं रसं रूपं गन्धं चैव तु पञ्चमम्।
एतामुद्रा महत्यश्च मुच्यते चतुरं जगत्॥ ९० ॥

इति मुक्तो व्रजेन्मोक्षं यत्र देवो निरञ्जनः॥

इ * श्री * वं * द्धा * नि * ण * गो * रं * मा * म्॥

शिवं भवतु॥

अथ वक्ष्ये महादेव अथर्ववेदलक्षणम् ।
सर्ववर्णस्य सारं हि शक्त्याचारसमन्वितम् ॥ १७-१ ॥

अथर्ववेदादुत्पन्नं सामवेदं तमोगुणम् ।
सामवेदाद्यजुर्वेदं महासत्त्वसमुद्भवम् ॥ १७-२ ॥

रजोगुणमयं ब्रह्मा ऋग्वेदं यजुषः स्थितम् ।
मृणालसूत्रसदृशी अथर्ववेदरूपिणी ॥ १७-३ ॥

अथर्वे सर्ववेदाश्च जलखेचरभूचराः ।
निवसन्ति महा विद्या कुलविद्या महर्षयः ॥ १७-४ ॥

समाप्तिपत्रशेषार्थं समीपं लोकमण्डले ।
शक्तिचक्रसमाक्रान्तं दिव्यभावात्मकं शुभम् ॥ १७-५ ॥

तत्रैव वीरभावञ्च तत्रैव पशुभावकम् ।
सर्वभावात् परं तत्त्वमथर्वं वेदपत्रकम् ॥ १७-६ ॥

द्विबिन्दुनिलयस्थानं ब्रह्माविष्णुशिवात्मकम् ।
चतुर्वेदान्वितं तत्त्वं शरीरं दृढणिमीतम् ॥ १७-७ ॥

चतुर्विंशतितत्त्वानि सन्ति गात्रे मनोहरे ।
ब्रह्मा रजोगुणाक्रान्तः पूरकेणाभिरक्षति ॥ १७-८ ॥

विष्णुः सत्त्वगुणाक्रान्तः कुम्भकैः स्थिरभावनैः ।
हरस्तमोगुणाक्रान्तो रेचकेणापि विग्रहम् ॥ १७-९ ॥

अथर्ववेदचक्रस्था कुण्डली परदेवता ।
एतन्माया तु यो नैव ब्रह्मविष्णुशिवेन च ॥ १७-१० ॥

शरीरं देवनिलयं भक्तं ज्ञात्वा प्रवक्ष्यति ।
सर्ववेदमयी देवी सर्वमन्त्रस्वरूपिणी ॥ १७-११ ॥

सर्वयन्त्रात्मिका विद्या वेदविद्याप्रकाशिनी ।
चैतन्या सर्वधर्मज्ञा स्वधर्मस्थानवासिनी ॥ १७-१२ ॥

अचैतन्या ज्ञानरूपा हेमचम्पकमालिनी ।
अकलङ्का निराधारा शुद्धज्ञानमनोजवा ॥ १७-१३ ॥

सर्वसङ्कटहन्त्री च सा शरीरं प्रपाति हि ।

तस्याः कार्यमिदं विश्वं तस्याः पुण्यानि हन्ति हि ॥ १७-१४ ॥

तस्याश्चैतन्यकरणे सदा व्याकुलचेतसः ।
महात्मानः प्रसिद्ध्यन्ति यदि कुर्वन्ति चेतनाम् ॥ १७-१५ ॥

तस्या अनुग्रहादेव किं न सिद्ध्यति भूतले ।
षण्मासाभ्यासयोगेन चैतन्या कुण्डली भवेत् ॥ १७-१६ ॥

सा देवी वायवी शक्तिः परमाकाशवाहिनी ।
तारिणी वेदमाता च बहिर्याति दिने दिने ॥ १७-१७ ॥

द्वादशाङ्गुलमानेन आयुः क्षरति नित्यशः ।
द्वादशाङ्गुलवायुश्च क्षयं कुर्याद्दिने दिने ॥ १७-१८ ॥

यावद् यावद् बहिर्याति कुण्डली परदेवता ।
तावत्तावत्खण्डलयं भवेद्धि पापमोक्षणम् ॥ १७-१९ ॥

यदा यदा न क्षरति वायवी सूक्ष्मरूपिणी ।
बाह्यचन्द्रे महादेव आग्नेयी सोममण्डले ॥ १७-२० ॥

मूलाधारे कामरूपे ज्वलन्ती चण्डिका शिखा।
यदा शिरोमण्डले च सहस्रदलपङ्कजे॥ १७-२१॥

तेजोमयी सदा याति शिवं कामेश्वरं प्रभुम्।
अच्युताख्यं महादेवं तदा ज्ञानी स योगिराट्॥ १७-२२॥

यदि क्षरति सा देवी बाह्यचन्द्रे मनोलये।
तदा योगं समाकुर्यात् यावत् शीर्षेण गच्छति॥ १७-२३॥

यदि शीर्षे समागम्यामृतपानं करोति सा।
वायवी सूक्ष्मदेहस्था सूक्ष्मालयप्रिया सती॥ १७-२४॥

तदेव परमा सिद्धिर्भक्तिमार्गो न संशयः।
चतुर्वेद ज्ञानसारं अथर्वं परिकीतीतम्॥ १७-२५॥

अथर्ववेदविद्या च देवता वायवी मता।
तस्याः सेवनमात्रेण रुद्ररूपो भवेन्नरः॥ १७-२६॥

केवलं कुम्भकस्था सा एका ब्रह्मप्रकाशिनी।

भैरव उवाच

केन वा वायवी शक्तिः कृपा भवति पार्वति ॥ १७-२७ ॥

स्थिरचेता भवेत् केन विवेकी वा कथं भवेत् ।
मन्त्रसिद्धिर्भवेत् केन कायसिद्धिः कथं भवेत् ॥ १७-२८ ॥

विस्तार्य वद चामुण्डे आनन्दभैरवेश्वरी ।

आनन्दभैरवी उवाच

शृणुष्वैकमनाः शम्भो मम प्राणकुलेश्वर ॥ १७-२९ ॥

एकवाक्येन सकलं कथयामि समासतः ।
श्रद्धया परया भक्त्या मनोनियमतत्परः ॥ १७-३० ॥

स प्राप्नोति पराशक्तिं वायवीं सूक्ष्मरूपिणीम् ।
धैर्यक्षमामिताहारी शान्तियुक्तो यतिर्महान् ॥ १७-३१ ॥

सत्यवादी ब्रह्मचारी दयाधर्मसुखोदयः ।

मनसः संयमज्ज्ञानी दिगम्बरकलेवरः ॥ १७-३२ ॥

सर्वत्र समबुद्धिश्च परमार्थविचारवित् ।
शरशाया भूमितले वायवीं परमामृतम् ॥ १७-३३ ॥

य एवं पिबति क्षिप्रं तत्रैव वायवी कृपा ।
गुरुसेवापरे धीरे शुद्धसत्त्वतनुप्रभे ॥ १७-३४ ॥

भक्ते अष्टाङ्गनिरते वायवी सुकृपा भवेत् ।
अतिथिं भोजयेद्यस्तु न भुक्ता स्वयमेव च ॥ १७-३५ ॥

सर्वपापविनिर्मुक्तो वायवी सुकृपा ततः ।
अन्तरात्मा महात्मा यः कुरुते वायुधारणम् ॥ १७-३६ ॥

देवगुरौ सत्यबुद्धिर्वायवी सुकृपा ततः ।
एककालो वृथा याति नैव यस्य महेश्वर ॥ १७-३७ ॥

वायव्यां चित्तमादाय तत्रानिलकृपा भवेत् ।
विचरन्ति महीमध्ये योगशिक्षानिबन्धनम् ॥ १७-३८ ॥

प्राणायामेच्छुको यो वा वायवी सुकृपा ततः।
प्रतिवत्सरमानेन पीठे पीठे वसन्ति ये॥ १७-३९॥

वायवीं प्रजपन्तीह वायवी सुकृपा ततः।
अल्पाहारी निरोगी च विजयानन्दनन्दितः॥ १७-४०॥

वायवीं भजतो योगी वायवी सुकृपा भवेत्।
अन्तर्यागे पीठचक्रे चित्तमाधाय यत्नतः॥ १७-४१॥

नामनिष्ठो धारणाख्यो वायवी सुकृपा ततः।
पशुभाव समाक्रान्तः सदा रेतोविवर्जीतः॥ १७-४२॥

शुक्रमैथुनहीनश्च वायवी सुकृपा ततः।
अकालेऽपि सकालेऽपि नित्यं धारणतत्परः॥ १७-४३॥

योगिनामपि सङ्गी यो वायवी सुकृपा ततः।
बन्धुबान्धवहीनश्च विवेकाक्रान्तमानसः॥ १७-४४॥

शोकाशोकसमं भावं वायवी सुकृपा ततः।
सर्वदानन्दहृदयः कालज्ञो भौतसाधनः॥ १७-४५॥

मौनधारणजापश्च वायवी सुकृपा ततः ।
निर्जनस्थाननिरतो निश्चेष्टो दीनवत्सलः ॥ १७-४६ ॥

बहुजल्पनशून्यश्च स्थिरचेताः प्रकीतीतः ।
हास्य सन्तोषहिंसादिरहितः पीठपारगः ॥ १७-४७ ॥

योगशिक्षासमाप्त्यर्थी स्थिरचेताः प्रकीतीतः ।
मत्कुलागमभावो ज्ञो महाविद्यादिमन्त्रवित् ॥ १७-४८ ॥

शुद्धभक्तियुतः शान्तः स्थिरचेताः प्रकीतीतः ।
मूलाधारे कामरूपे हृदि जालन्धरे तथा ॥ १७-४९ ॥

ललाटे पूर्णगिर्याख्ये उड्डीयाने तदूर्ध्वके ।
वाराणस्यां भ्रुवोर्मध्ये ज्वलन्त्यां लोचनत्रये ॥ १७-५० ॥

मायावत्यां सुखवृत्ते कण्ठे चाष्टपुरे तथा ।
अयोध्यायां नाभिदेशे कट्यां काञ्च्यां महेश्वर ॥ १७-५१ ॥

पीठेष्वेतेषु भूलोके चित्तमाधाय यत्नतः ।

उदरे पूरयेद् वायुं सूक्ष्मसङ्केतभाषया ॥ १७-५२ ॥

पादाङ्गुष्ठे च जङ्घायां जानुयुग्मे च मूलके ।
चतुर्दले षड्दले च तथा दशदले तथा ॥ १७-५३ ॥

दले द्वादशके चैव सिद्धिसिद्धान्तनिर्मले ।
कण्ठे षोडशपत्रे च द्विदले पूर्णतेजसि ॥ १७-५४ ॥

कैलासाख्ये ब्रह्मरन्ध्रपदे निर्मलतेजसि ।
सहस्रारे महापद्मे कोटिकोटिविधुप्रभे ॥ १७-५५ ॥

चालयित्वा महावायुं कुम्भयित्वा पुनः पुनः ।
पूरयित्वा रेचयित्वा रोमकूपाद्विनिर्गतम् ॥ १७-५६ ॥

तिस्रः कोटयर्धकोटि च यानि लोमानि मानुषे ।
नाडीमुखानि सर्वाणि धर्मबिन्दुं च्यवन्ति हि ॥ १७-५७ ॥

यावत्तद्बिन्दुपातश्च तावत्कालं लयं स्मृतम् ।
तावत्कालं प्राणयोगात् प्रस्वेदाधमसिद्धिदम् ॥ १७-५८ ॥

सूक्ष्मवायुसेवया च किन्न सिद्ध्यति भूतले।

लोमकूपे मनो दद्यात् लयस्थाने मनोरमे॥ १७-५९॥

स्थिरचेता भवेत् शीघ्रं नात्र कार्या विचारणा।

वायुसेवां विना नाथ कथं सिद्धिर्भवेद् भवे॥ १७-६०॥

स्थिरचित्तं बिना नाथ मध्यमापि न जायते।

स्थाने स्थाने मनो दत्वा वायुना कुम्भकेन च॥ १७-६१॥

धारयेन्मारुतं मन्त्री कालज्ञानी दिवानिशम्।

एकान्तनिर्जने स्थित्वा स्थिरचेता भवेद् ध्रुवम्॥ १७-६२॥

स्थिरचित्तं विना शम्भो सिद्धिः स्यादुत्तमा कथम्॥ १७-६३॥

निवार्ह्य पञ्चेन्द्रियसञ्ज्ञकानि यत्नेन धैर्यायतिरीश्वरस्त्वम्।

प्राप्नोति मासत्रयसाधनेन विषासवं भोक्तुमसौ समर्थः॥ १७-६४॥

मासत्रयाभ्याससुसञ्चयेन स्थिरेन्द्रियः स्यादधमादिसिद्धिः।

सा खेचरी सिद्धिरत्र प्रबुद्धा चतुर्थये मासे तु भवेद्विकल्पनम्॥ १७-

६५॥

तदाधिकारी पवनाशनोऽसौ स्थिरासनानन्दसुचेतसा भुवि ।
प्रकल्पने सिद्धिं यथार्थगामिनीमुपेति शीघ्रं वरवीरभावम् ॥ १७-
६६ ॥

सा वयवी शक्तिरनन्तरूपिणी लोभावलीनां कुहरे महासुखम् ।
ददाति सौख्यं गतिचञ्चलं जयं स्थिराशयत्वं सति शास्त्रकोविदम्
॥ १७-६७ ॥

षण्मासयोगासननिष्ठदेहा वायुश्रमानन्दरसाप्तविग्रहः ।
विहाय कल्पान्वितयोगभावं श्रुत्यागमान् कर्तुमसौ समर्थः ॥ १७-६८ ॥

स्थिरचेता महासिद्धिं प्राप्नोति नात्र संशयः ।
संवत्सरकृताभ्यासे महाखेचरतां व्रजेत् ॥ १७-६९ ॥

यावन्निर्गच्छति प्रीता वायवी शक्तिरुत्तमा ।
नासाग्रमववार्यैव स्थिरचेता महामतिः ॥ १७-७० ॥

चण्डवेगा यदा क्षिप्रमन्तरालं न गच्छति ।
सर्वत्रगामी स भवेत् तावत्कालं विचक्षणः ॥ १७-७१ ॥

यदि शीर्षादूर्ध्वदेशे द्वादशाङ्गुलकोपरि ।
गन्तुं समर्थो भगवान् शिवतुल्यो गणेश्वरः ॥ १७-७२ ॥

सर्वत्रगामी प्रभवेत् खेचरो योगिराड् वशी ।
इति सिद्धिर्वत्सरे स्यात् स्थिरचित्तेन शङ्कर ॥ १७-७३ ॥

योगी भूत्वा मनःस्थैर्यं न करोति यदा भुवि ।
कृच्छ्रेर्ण पदमारुह्य प्रपतेन्नारकी यथा ॥ १७-७४ ॥

अत एव महाकाल स्थिरचेता भव प्रभो ।
तदा मां प्राप्स्यसि क्षिप्रं वायवीमष्टसिद्धिदाम् ॥ १७-७५ ॥

यदि सिद्धो भवेद् भूमौ वायवीसुकृपादिभिः ।
सदा कामस्थिरो भूत्वा गोपयेन्मातृजारवत् ॥ १७-७६ ॥

यदा यदा महादेव योगाभ्यासं करोति यः ।
शिष्येभ्योऽपि सुतेभ्योऽपि दत्वा कार्यं करोति यः ॥ १७-७७ ॥

तदैव स महासिद्धिं प्राप्नोति नात्र संशयः ।

संवत्सरं चरेद्धर्मं योगमार्गं हि दुर्गमम्॥ १७-७८ ॥

प्रकाशयेन्न कदापि कृत्वा मृत्युमवाप्नुयात्।
योगयोगाद् भवेन्मोक्षो मन्त्रसिद्धिरखण्डिता ॥ १७-७९ ॥

न प्रकाश्यमतो योगं भुक्तिमुक्तिफलाय च।
नित्यं सुखं महाधर्मं प्राप्नोति वत्सराद् बहिः ॥ १७-८० ॥

आत्मसुखं नित्यसुखं मन्त्रं यन्त्रं तथागमम्।
प्रकाशयेन्न कदापि कुलमार्गं कुलेश्वर ॥ १७-८१ ॥

यद्येवं कुरुते धर्मं तदा मरणमाप्नुयात्।
योगभ्रष्टो विज्ञानज्ञोऽजड। मृत्युमवाप्नुयात्॥ १७-८२ ॥

येन मृत्युवशो याति तत्कार्यं नापि दर्शयेत्।
दत्तात्रेयो महायोगी शुको नारद एव च॥ १७-८३ ॥

येन कृतं सिद्धिमन्त्रं वर्णजालं कुलार्णवम्।
एकेन लोकनाथेन योगमार्गपरेण च॥ १७-८४ ॥

तथा मङ्गलकार्येण ध्यानेन साधकोत्तमः।

उत्तमां सिद्धिमाप्नोति वत्सराद् योगशासनात्॥ १७-८५॥

आदौ वै ब्रह्मणो ध्यानं पूरकाष्टाङ्गलक्षणैः।

कुर्यात् सकलसिद्ध्यर्थमम्बिकापूजनेन च॥ १७-८६॥

ऋग्वेदं चेतसि ध्यात्वा मूलाधारे चतुर्द्दले।

वायुना चन्द्ररूपेण धारयेन्मारुतं सुधीः॥ १७-८७॥

अथर्वान्निर्गतं सर्वं ऋग्वेदादि चराचरम्।

तेन पूर्णचन्द्रमसा जीवेनार्यामृतेन च॥ १७-८८॥

जुहुयादेकभावेन कुण्डलीसूर्यगोऽनले।

कुम्भकं कारयेन्मन्त्री यजुर्वेदपुरःसरम्॥ १७-८९॥

सर्वसत्त्वाधिष्ठितं तत् सर्वविज्ञानमुत्तमम्।

वायव्याः पूर्णसंस्थानं योगिनामभिधायकम्॥ १७-९०॥

पुनः पुनः कुम्भयित्वा सत्त्वे निर्मलतेजसि।

महाप्रलयसारज्ञो भवतीति न संशयः॥ १७-९१॥

रेचकं शम्भुना व्याप्तं तमोगुणमनोलयम् ।
सर्वमृत्युकुलस्थानं व्याप्तं धर्मफलाफलैः ॥ १७-९२ ॥

पुनः पुनः क्षोभनिष्ठो रेचकेन निवर्तते ।
रेचकेन लयं याति रेचनेन परं पदम् ॥ १७-९३ ॥

प्राप्नोति साधकश्रेष्ठो रेचकेनापि सिद्धिभाक् ।
रेचकं वह्निरूपञ्च कोटिवह्निशिखोज्ज्वलम् ॥ १७-९४ ॥

द्वादशाङ्गुलमध्यस्थं ध्यात्वा बाह्ये लयं दिशेत् ।
चन्द्रव्याप्तं सर्वलोकं सर्वपुण्यसमुद्भवम् ॥ १७-९५ ॥

रेचकाग्निर्दहतीह वायुसख्यो महाबली ।
तत् शशाङ्कजीवरूपं पीत्वा जीवति वायवी ॥ १७-९६ ॥

आग्नेयी दह्यति क्षिप्रं एष होमः परो मतः ।
एतत् कार्यं यः करोति स न मृत्युवशो भवेत् ॥ १७-९७ ॥

एतयोः सन्धिकालञ्च कुम्भकं तत्त्वसाधनम् ।

तदेव भावकानाञ्च परमस्थानमेव च ॥ १७-९८ ॥

महाकुम्भकलाकृत्या स्थिरं स्थित्त्वा च कुम्भके ।
अथर्वगामिनीं देवीं भावयेदमरो महान् ॥ १७-९९ ॥

अनन्तभावनं शम्भोरशेषसृष्टिशोभितम् ।
अथर्वं भावयेन्मन्त्री शक्तिचक्रक्रमेण तु ॥ १७-१०० ॥

आज्ञाचक्रे वेददले चतुर्दलसुमन्दिरे ।
अथर्वयोगिनीं ध्यायेत् समाधिस्थेन चेतसा ॥ १७-१०१ ॥

ततोऽच्युताख्यं जगतामीश्वरं शीर्षपङ्कजे ।
प्रपश्यति जगन्नाथं नित्यसूक्ष्मसुखोदयम् ॥ १७-१०२ ॥

आज्ञाचक्रे शोधनमशेषदलमथर्वं परिकीतीतम् ।
ज्योतिश्चक्रे तन्मध्ये योगमार्गेण सद्विलम् ॥ १७-१०३ ॥

प्रपश्यति महाज्ञानी बाह्यदृष्ट्या यथाम्बुजम् ।
कालेन सिद्धिमाप्नोति ब्रह्मज्ञानी च साधकः ॥ १७-१०४ ॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने भावार्थनिर्णये
पाशवकल्पे। मूलपद्मोल्लासे भूमिचक्रस्वर्गचक्रतुलाचक्र
वारिचक्रसारसङ्केते। सिद्धमन्त्रप्रकरणे भैरवभैरवीसंवादे
एकविंशः पटलः॥ २१॥

अथ द्वाविंशः पटलः

श्रीनन्दभैरवी उवाच

शृणु शम्भो प्रवक्ष्यामि षट्चक्रस्य फलोदयम्।
यज्ज्ञात्वा योगिनः सर्वे चिरं तिष्ठन्ति भूतले॥ २२-१॥

मूलाधारं महापद्मं चतुर्दलसुशोभितम्।
वादिसान्तं स्वर्णवर्णं शक्तिब्रह्मपदं व्रजेत्॥ २२-२॥

क्षित्यप्तेजोमरुद्व्योममण्डलं षट्सु पङ्कजे।
क्रमेण भावयेन्मन्त्री मूलविद्याप्रसिद्धये॥ २२-३॥

मूलपद्मोर्द्ध्वदेशे च स्वाधिष्ठानं महाप्रभम्।

षड्दलं राकिणीं विष्णुं कणीकायां स्मरेद्यतिः ॥ २२-४ ॥

षड्दलं बादिलान्तं च वर्णं ध्यात्वा सुराधिपः ।
कन्दर्पवायुना व्याप्तलिङ्गमूले भजेद्यतिः ॥ २२-५ ॥

तदूर्ध्वे नाभिमूले च मणिकोटिसमप्रभम् ।
दशदलं योगधर्मं डादिफान्तार्थगं भजेत् ॥ २२-६ ॥

लाकिनीसहितं रुद्रं ध्यायेद्योगादिसिद्धये ।
महामोक्षपदं दृष्ट्वा जीवन्मुक्तो भवेद् ध्रुवम् ॥ २२-७ ॥

बन्धूकपुष्पसङ्काशं दलद्वादशशोभितम् ।
कादिठान्तार्णसहितमीश्वरं काकिनीं भजेत् ॥ २२-८ ॥

तदूर्ध्वे षोडशोल्लासपदे साक्षात् सदाशिवम् ।
महादेवीं साकिनीगं कण्ठे ध्यात्वा शिवो भवेत् ॥ २२-९ ॥

विशुद्धाख्यं महापुण्यं धर्मार्थकाममोक्षदम् ।
धूम्रधूमाकरं विद्युत्पुञ्जं भजति योगिराट् ॥ २२-१० ॥

आज्ञानामोत्पलं शुभ्रं हिमकुन्देन्दुमन्दिरम् ।
हंसस्थानं बिन्दुपदं द्विदलं भ्रूकुटे भजेत् ॥ २२-११ ॥

लक्षवर्णद्वयाढ्यं यद् बिन्दुयुक्तं मनोलयम् ।
तयोः स्त्रीपुंप्रकृत्याख्यं कोटिचन्द्रोज्ज्वलं भजेत् ॥ २२-१२ ॥

कण्ठे षोडशपत्रे च षोडशस्वरवेष्टितम् ।
अकारादिविसर्गान्तं विभाव्य कुण्डलीं नयेत् ॥ २२-१३ ॥

आज्ञाचक्रे समानीय कोटिचन्द्रसमोदयाम् ।
कण्ठाधारां कुण्डलिनीं जीवन्मुक्तो भवेदिह ॥ २२-१४ ॥

यदि श्वासं न त्यजति बाह्यचन्द्रमसि प्रभो ।
भ्रूमध्ये चन्द्रनिकरे त्यक्त्वा योगी भवेदिह ॥ २२-१५ ॥

सूक्ष्मवायूद्गमेनैव त्यजेद् वायुं मुहुर्मुहुः ।
सहस्रादागतं मूले मूलात्तत्रैवमानयेत् ॥ २२-१६ ॥

चन्द्रः सूर्ये लयं याति सूर्यश्चन्द्रमसि प्रभो ।
यो बाह्ये नानयेत् शब्दं तस्य बिन्दुचयो भवेत् ॥ २२-१७ ॥

यावद् बाह्ये चन्द्रमसि मनो याति रविप्लुते।
अन्तर्गते चन्द्रसूर्ये न तस्य दुरितं तनौ॥ २२-१८॥

केवलं सूक्ष्मवायुस्थं वायवीशक्तिलालितम्।
मानसं यः करोतीति तस्य योगादिवर्द्धनम्॥ २२-१९॥

प्राप्ते यज्ञोपवीते यः श्रीधरो ब्राह्मणोत्तमः।
योगाभ्यासं सदा कुर्यात् स भवेद्योगिवल्लभः॥ २२-२०॥

यावत्कालं स्थितं बिन्दुं बाल्यभावे यथा यथा।
तथा तथा योगमार्गं बिन्दुपातान्मरिष्यति॥ २२-२१॥

तथापि यदि मासं वा पक्षं वा दशभिर्दिनम्।
यदि तिष्ठति बिन्दूग्रः साक्षादभ्यासतो जयी॥ २२-२२॥

कामानलमहापीडाविशिष्टः पुरुषो यदा।
तत्कामादिसंहरणे विना योगेन कः क्षमः॥ २२-२३॥

समसंसर्गगूढेन कामो भवति निश्चितम्।

तत्कामात् क्रोध उत्पन्नो महाशत्रुवीनाशकृत्॥ २२-२४ ॥

क्रोधाद् भवति सम्मोहः सम्मोहात् स्मृतिविभ्रमः ।
स्मृतिभ्रंशाद् बुद्धिनाशो बुद्धिनाशाद् विनाशनम्॥ २२-२५॥

अतः सम्बुद्धिमाधार्य मूलादिब्रह्ममण्डले ।
ध्यात्वा श्रीनाथपादाब्जं सिद्धो भवति साधकः॥ २२-२६ ॥

ईश्वरस्य कृपाचिन्हमादौ शान्तिर्भवेद् हृदि ।
शान्तिभिर्जायते ज्ञानं ज्ञानान्मोक्षमवाप्नुयात्॥ २२-२७ ॥

शान्तिवीद्या प्रतिष्ठा च निवृत्तिरिति ताः स्मृताः ।
चतुर्व्यूहस्ततो देवः प्रोच्यते परमेश्वरः॥ २२-२८ ॥

इदं ज्ञानमिदं ज्ञेयमिति चिन्तासमाकुलाः ।
पठन्त्यहनीशं शास्त्रं परतत्त्वपराङ्मुखाः॥ २२-२९॥

शिरो वहति पुष्पाणि गन्धं जानाति नासिका ।
पठन्ति मम तन्त्राणि दुर्लभा भावबोधकाः॥ २२-३० ॥

यज्ञोपवीतकाले तु पशुभावाश्रयो भवेत् ।

यावद्योगं न सम्प्राप्तं तावद् वीराचरं न च ॥ २२-३१ ॥

आचारो विनयो विद्या प्रतिष्ठा योगसाधनम् ।

तस्यैव जायते सिद्धिरिष्टपादाम्बुजे मतिः ॥ २२-३२ ॥

देवे गुरौ महाभक्तिर्यस्य नित्यं विवर्धते ।

संवत्सरात्तस्य सिद्धिर्भवत्येव न संशयः ॥ २२-३३ ॥

वेदागमपुराणानां सारमालोक्य यत्नतः ।

मनः संस्थापयेदिष्टपादाम्भोरुहमण्डले ॥ २२-३४ ॥

चेतसि क्षेत्रकमले षट्चक्रे योगनिर्मले ।

मनो निधाय मौनी यः स भवेद् योगवल्लभः ॥ २२-३५ ॥

मनः करोति कर्माणि मनो लिप्यति पातके ।

मनःसंयमनी भूत्वा पापपुण्यैर्न लिप्यते ॥ २२-३६ ॥

श्री भैरव उवाच

वद कान्ते रहस्यं मे येन सिद्धो भवेन्नरः।
तत्प्रकारं विशेषेण योगिनामप्यगोचरम्॥ २२-३७॥

यत्रैव गोपयेद्यद्यदानन्देन निरीक्षयेत्।
पूजयेद् भावयेच्चैव वर्जयेन्न जुगुप्सयेत्॥ २२-३८॥

क्रमेण वद तत्त्वञ्च यदि स्नेहोऽस्ति मां प्रति।
न ज्ञात्वापि च भूतत्त्वं योगी मोहाश्रितो भवेत्॥ २२-३९॥

आनन्दभैरवी उवाच

त्रैलोक्ये योगयोग्योऽसि षट्चक्रभेदने रतः।
त्वमेव परमानन्द महाधिष्ठाननिर्मल॥ २२-४०॥

सङ्घातयेन्महावीर एतान्दोषान् महाभयान्।
कामक्रोधलोभमोहमदमात्सर्यसञ्ज्ञकान्॥ २२-४१॥

सङ्घातयेन्महावीरो विकारं चेन्द्रियोद्भवम्।
निद्रालज्जादौर्मनस्यं दशकालानलान् प्रभो॥ २२-४२॥

सङ्गोपयेन्महावीरो महामन्त्रं कुलक्रियाम् ।
मुद्राक्षसूत्रतन्त्रार्थं गोपिनां वीरसङ्गमम् ॥ २२-४३ ॥

अत्याचारं भैरवाणां योगिनीनां च साधनम् ।
नाडीग्रथनमानञ्च गोपयेन्मातृजारवत् ॥ २२-४४ ॥

न निन्देत् प्राणनिधने देवतां गुरुमीश्वरम् ।
सुरां विद्यां महाक्षेत्रं पीठं योगाधिकारिणम् ॥ २२-४५ ॥

योगिनी जडमुन्मत्तं जन्मकर्मकुलक्रियाम् ।
प्रयोगे धर्मकर्तारं न निन्देत् प्राणसंस्थितौ ॥ २२-४६ ॥

पत्नीं भ्रातृवधूञ्चैव बौद्धाचारञ्च योगिनीम् ।
कर्म शुभाशुभञ्चैव महावीरो न निन्दयेत् ॥ २२-४७ ॥

निरीक्षयेन्न कदापि कन्यायोनिं दिने रतिम् ।
पशुक्रीडां दिग्वसनां कामिनीं प्रकटस्तनीम् ॥ २२-४८ ॥

विग्रहं द्यूतपाशार्थं क्लीबं विष्ठादिकं शुचौ ।
अभिचारभारञ्च क्रियामप्रमत्तस्य नेक्षयेत् ॥ २२-४९ ॥

पूजयेत्परया भक्त्या देवतां गुरुमीश्वरम् ।
शक्तिं साधुमात्मरूपं स्थूलसूक्ष्मं प्रयत्नतः ॥ २२-५० ॥

अतिथिं मातरं सिद्धं पितरं योगिनं तथा ।
पूजयेत् परया भक्त्या सिद्धमन्त्रं सुसिद्धये ॥ २२-५१ ॥

भावयेदेकचित्तेन साधूक्तं योगसाधनम् ।
गुरोर्वाक्योपदेशं च स्वधर्मं तीर्थदेवताम् ॥ २२-५२ ॥

कुलाचारं वीरमन्त्रमात्मानं परमेष्ठिनम् ।
भावयेद्विधिविद्यां च तन्त्रसिद्धार्थनिर्णयम् ॥ २२-५३ ॥

वर्जयेत् साधकश्रेष्ठोऽगम्यागमनादिकम् ।
धूर्तसङ्गं वञ्चकञ्च प्रलापमनृताशुभम् ॥ २२-५४ ॥

वर्जयेत् पापगोष्ठीयमालस्यं बहुजल्पनम् ।
अवेदकर्मसञ्चारं गोसवं ब्राह्मणस्य च ॥ २२-५५ ॥

जुगुप्सयेन्न कदापि विण्मूत्रं क्लेदशोणितम् ।

हीनाङ्गीं पिशितं नाथ कपालाहरणादिकम्॥ २२-५६ ॥

सुरां गोपालनञ्चैव निजपापं रिपोर्भयम्।
जुगुप्सयेन्न सुधर्म्मं यदि सिद्धिमिहेच्छति ॥ २२-५७ ॥

समयाचारमेवेदं योगिनां वीरभाविनाम्।
गुर्वाज्ञया यः करोति जीवन्मुक्तो भवेद् भुवि ॥ २२-५८ ॥

वृथा धर्म वृथा चर्यं वृथा दीक्षा वृथा तपः।
वृथा सुकृतमाख्येति गुर्वाज्ञालङ्घनं नृणाम्॥ २२-५९ ॥

ब्राह्मणक्षत्रियादीनामादौ योगादिसाधनम्।
पश्चात् कुलक्रिया नाथ योगविद्याप्रसिद्धये ॥ २२-६० ॥

विना भावेन वीरेण पूर्णयोगी कुतो भवेत्।
आदौ कुर्यात् पशोर्भावं पश्चात् कुलविचारणम्॥ २२-६१ ॥

मम तन्त्रे महादेव केवलं सारनिर्णयम्।
अकस्माद् भक्तिसिद्ध्यर्थं कुलाचारं च योगिनाम्॥ २२-६२ ॥

ब्राह्मणानां कुलाचारं केवलं ज्ञानसिद्धये ।
ज्ञानेन जायते योगी योगादमरविग्रहः ॥ २२-६३ ॥

भूत्वा योगी कुलीनश्च योगाभ्यासमहनीशम् ।
षट्चक्रं भूतनिलयं भावयेद् भावसिद्धये ॥ २२-६४ ॥

मूलपद्मस्योद्र्ध्वदेशे लिङ्गमूले महाशुचिः ।
स्वाधिष्ठाने महापद्मं षद्दले वायुना यजेत् ॥ २२-६५ ॥

एतत् षड्दलवर्णानां भावनां यः करोति हि ।
तस्य साक्षाद् भवेद्विष्णुः राकिणीसहितः प्रभो ॥ २२-६६ ॥

स्वाधिष्ठानषड्दलस्य कणीकामध्यमण्डले ।
दलाष्टकं भावयित्वा नागयुक्तं स ईश्वरः ॥ २२-६७ ॥

अष्टौ नागा अष्टदले प्रतिभान्ति यथारुणाः ।
जलस्योपरि पद्मे च ध्यायेत्तन्नागवल्लभाम् ॥ २२-६८ ॥

अनन्तं वासुकिं पद्मं महापद्मं च तक्षकम् ।
कुलीरं कर्कटं शङ्खं दक्षिणादौ दले भजेत् ॥ २२-६९ ॥

अष्टदलोपरि ध्यायेत् कर्णीकावृत्तयुग्मकम् ।

तदूर्ध्वे षड्दलं वादिलान्तयुक्तं सबिन्दुकम् ॥ २२-७० ॥

पूर्वादिक्रमयोगेन दक्षिणावर्त्तवायुना ।

पुनः पुनः कुम्भयित्वा ध्यायेत् षड्वर्णवायवीम् ॥ २२-७१ ॥

केशरं युगलं ध्यायेत् कुलोर्ध्वे साकृतिं मुदा ।

अष्टदले षड्दले च विभाव्य योगिराड् भवेत् ॥ २२-७२ ॥

अष्टदलस्योर्ध्वदेशे वृत्तयुग्मं मनोहरम् ।

तस्योपरि पुनर्ध्यायेत् षड्दले वादिलान्तकम् ॥ २२-७३ ॥

दलाष्टकाधो ध्यायेद्यो वृत्तयुग्मं मनोहरम् ।

वृत्ताधोमण्डलाकारं वं बीजं व्याप्य तिष्ठति ॥ २२-७४ ॥

वृत्तलग्नं समाव्याप्तं यं बीजं विद्युदाकरम् ।

कोटिसूर्यसमाभासं विभाव्य योगिनां पतिः ॥ २२-७५ ॥

यान्तबीजकलानां तु अधः षट्कोणमण्डलम् ।

षट्कोणे दक्षिणादौ च भावयेद् यादिलान्तकम्॥ २२-७६॥

तत्षट्कोणमध्यदेशे षट्कोणं धूम्र मण्डलम्।
तत्कोणे दक्षिणादौ च द्रव्यादिषट्कमाश्रयेत्॥ २२-७७॥

द्रव्यं गुणास्तथा कर्म सामान्यं सविशेषकम्।
समवायं क्रमेणैव षट्कोणेषु विभावयेत्॥ २२-७८॥

पूर्वादिक्रमयोगेन दक्षिणावर्तवायुना।
सर्वत्र भावयेन्मन्त्री कुम्भयित्वा पुनः पुनः॥ २२-७९॥

द्रव्यषट्कोणमध्ये तु षट्कोणं चारुतेजसम्।
कोणे कोणे च षड्वर्गान् भावयेत् स्थिरचञ्चलान्॥ २२-८०॥

तन्मध्ये च त्रिकोणे च राकिणीसहितं हरिम्।
कोटिचन्द्रमरीचिस्थं ध्यायेद्योगी विशालधीः॥ २२-८१॥

षड्दलान्तर्गतं पद्मं योगिनामपि साधनम्।
यो नित्यं कुरुतेऽभ्यासं तस्य योगः प्रसिद्ध्यति॥ २२-८२॥

एतच्चक्रप्रसादेन नीरोगी निरहङ्कृतः ।

सर्वज्ञो भवति क्षिप्रं श्रीनाथपदभावनात् ॥ २२-८३ ॥

ज्योतीरूपं योगमार्गं सूक्ष्मातिसूक्ष्मनिर्मलम् ।

त्रैलोक्यकामनासिद्धिं षट्चक्रे भावयेद्धरिम् ॥ २२-८४ ॥

यो हरिः शेषशम्भुश्च यः शम्भुः सूक्ष्मरूपधृक् ।

सूक्ष्मरूपस्थितो ब्रह्मा ब्रह्माधीनमिदं जगत् ॥ २२-८५ ॥

एकमूर्तीस्त्रयो देवा ब्रह्मविष्णुपितामहाः ।

मम विग्रहसंश्लिष्टाः सृजत्यवति हन्ति च ॥ २२-८६ ॥

प्राणायामोद्गता एते योगविघ्नकराः सदा ।

प्राणायामेन निष्पीड्य प्रसभं सिद्धिमाप्नुयात् ॥ २२-८७ ॥

अकारं ब्रह्मणो वर्णं शब्दरूपं महाप्रभम् ।

प्रणवान्तर्गतं नित्यं योगपूरकमाश्रयेत् ॥ २२-८८ ॥

उकारं वैष्णवं वर्णं शब्दभेदिनमीश्वरम् ।

प्रणवान्तर्गतं सत्त्वं योगकुम्भकमाश्रयेत् ॥ २२-८९ ॥

मकारं शाम्भवं रूपं बीजभूतं विधूद्गतम् ।
प्रणवान्तस्थितं कालं लयस्थानं समाश्रयेत् ॥ २२-९० ॥

वर्णत्रयविभागेन प्रणवं परिकल्पितम् ।
प्रणवाज्जायते हंसो हंसः सोऽहं परो भवेत् ॥ २२-९१ ॥

सोऽहं ज्ञानं महाज्ञानं योगिनामपि दुर्लभम् ।
निरन्तरं भावयेद्यः स एव परमो भवेत् ॥ २२-९२ ॥

हं पुमान् श्वासरूपेण चन्द्रेण प्रकृतिस्तु सः ।
एतद्धंसं विजानीयात् सूर्यमण्डलभेदकम् ॥ २२-९३ ॥

विपरीतक्रमेणैव सोऽहं ज्ञानं यदा भवेत् ।
तदैव सूर्यगः सिद्धः स्वधास्वरप्रपूजितः ॥ २२-९४ ॥

हकारार्णं सकारार्णं लोपयित्वा ततः परम् ।
सन्धिं कुर्यात्ततः पश्चात् प्रणवोऽसौ महामनुः ॥ २२-९५ ॥

एतद् हंसं महामन्त्रं स्वाधिष्ठाने मनोगृहे ।

मनोरूपं भजेद्यस्तु स भवेत् सूर्यमध्यगः ॥ २२-९६ ॥

हंसं सूर्यं विजानीयात् सोऽहं चन्द्रो न संशयः ।
विपरीतो यदा भूयात्तदैव मोक्षभाग् भवेत् ॥ २२-९७ ॥

यदि हंसमनोरूपं स्वाधिष्ठाने हरेः पदे ।
विभाव्य श्रीगुरोः पादे नीयते नात्र संशयः ॥ २२-९८ ॥

सोऽहं यदा शक्तिकूटं अकाराकारसम्पुटम् ।
कृत्वा जपति यो ज्ञानी स भवेत् कल्पपादपः ॥ २२-९९ ॥

जपहोमादिकं सर्वं हंसेन यः करोति हि ।
तदैव चन्द्रसूर्यं स्यात् हंसमन्त्रप्रसादतः ॥ २२-१०० ॥

एतज्जपं महादेव देहमध्ये करोम्यहम् ।
एकविंशसहस्राणि षट्शतानि च हंमनुः ॥ २२-१०१ ॥

पुंरूपेण हकारञ्च स्त्रीरूपेण सकारकम् ।
जप्त्वा रक्षां करोतीह चन्द्रबिन्दुशतेन च ॥ २२-१०२ ॥

प्रणवान्तं महामन्त्रं नित्यं जपति यो नरः।
वायुसिद्धिर्भवेत्तस्य वायवी सुकृपा भवेत्॥ २२-१०३॥

बृहद् हंसं प्रवक्ष्यामि येन सिद्धो भवेन्नरः।
कामरूपी क्षणादेव वाक्सिद्धिरिति निश्चितम्॥ २२-१०४॥

आदौ प्रणवमुच्चार्य ततो हंसपदं लिखेत्।
तत्पश्चात् प्रणवं ज्ञेयं ततः परपदं स्मरेत्॥ २२-१०५॥

तर्पयामि पदस्यान्ते प्रणवं फडिति स्मरेत्।
एतद्धि हंसमन्त्रस्तु वीराणामुदयाय च॥ २२-१०६॥

बृहद् हंसप्रसादेन षट्चक्रभेदको भवेत्।
षट्चक्रे च प्रशंसन्ति सर्वे देवाश्चराचराः॥ २२-१०७॥

योगसिद्धिं विघाताय भ्रमन्ति योगिनस्तनौ।
यदि हंसं बृहद्धंसं जपन्ति वायुसिद्धये॥ २२-१०८॥

तदा सर्वे पलायन्ते राक्षसान्मानुषा यथा॥ २२-१०९॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने भावनिर्णये
पाशवकल्पे षट्चक्रसारसङ्केते योगशिक्षाविधिनिर्णये
सिद्धमन्त्रप्रकरणे ।
भैरवीभैरवसंवादे द्वाविंशः पटलः ॥ २२ ॥

अथ त्रयोविंशः पटलः

श्रीभैरवी उवाच

अथातः सम्प्रवक्ष्यामि ब्रह्ममार्गमनुत्तमम् ।
यद् यज्ज्ञात्वा सुराः सर्वे जयाख्याः परमं जगुः ॥ २३-१ ॥

न तन्तेजःप्रकाशाय महतां धर्मवृद्धये ।
योगाय योगिनां देव भक्षप्रस्थनिरूपणम् ॥ २३-२ ॥

योगाभ्यासं यः करोति न जानातीह भक्षणम् ।
कोटिवर्षसहस्रेण न योगी भवति ध्रुवम् ॥ २३-३ ॥

अतो वै भक्षमाहात्म्यं प्रवदामि समासतः ।
यज्ज्ञात्वा सिद्धिमाप्नोति स्वाधिष्ठानादिभेदनम् ॥ २३-४ ॥

आदौ विवेकी यो भूयाद् भूतले परमेश्वर।
स एव भक्षनियमं गृहेऽरण्ये समाचरेत्॥ २३-५॥

वाय्वासनदृढानन्दपरमानन्दनिर्भरः।
मिताहारं सदा कुर्यात् पूरकाह्लादहेतुना॥ २३-६॥

तदा पूरकसिद्धिः स्याद् भक्षणादिनिरूपणात्।
उदरं पूरयेन्नित्यं कुम्भयित्वा पुनः पुनः॥ २३-७॥

निजहस्तप्रमाणाभिः पूरयेत् पूर्णमेव च।
तत्पूरयेत् स्थापयेन्नाथ विश्वामित्रकपालके॥ २३-८॥

हंसद्वादशवारेण शिलायामपि घर्षयेत्।
नित्यं तत्पात्रपूर्णं च पाकेनैकेन भक्षयेत्॥ २३-९॥

तण्डुलान् शालिसम्भूतान्कपालप्रस्थपूर्णकान्।
दिने दिने क्षयं कुर्याद् भक्षणादिषु कर्मसु॥ २३-१०॥

हंसद्वादशवारेण जपेन संक्षयं चरेत्।

शिलायां तत्कपालं च वर्द्धयेत् पूरकादिकम्॥ २३-११ ॥

यावत्कालं क्षयं याति निजभक्षणनिर्णयम्।
तत्कालं वायुनापूर्य नोदरं काकचञ्चुभिः॥ २३-१२ ॥

आकुञ्चयेत् सदा मूले कुण्डली भक्षधारणात्।
तत्रसम्पूरयेद्योगी भक्षप्रस्थावनाशनात्॥ २३-१३ ॥

कालक्रमेण तत् सिद्धिमवाप्नोति जितेन्द्रियः।
यत्स्थानं भक्षणस्यैव तत्स्थाने पूरयेत्सुखम्॥ २३-१४ ॥

पुनः पुनर्भक्षणेन भक्षसिद्धिमुपैति हि।
विना पूरकयोगेन भक्षणं नापि सिद्ध्यति॥ २३-१५ ॥

अथवान्यप्रकारेण भक्षत्यागं विनिर्णयम्।
येन हीना न सिद्ध्यन्ति नाडीचक्रस्थदेवताः॥ २३-१६ ॥

द्वात्रिंशद् ग्रासमादाय त्रिपर्व्वाणि यथास्थितम्।
अर्द्धग्रासं विहायापि नित्यं भक्षणमाचरेत्॥ २३-१७ ॥

सदा सम्पूरयेद् वायुं भावको गतभीर्महान्।
भक्षस्थाने समायोज्य पिबेद् वायुमहनीशम्॥ २३-१८॥

चतुःषष्टिदिने सर्वं क्षयं कृत्वा ततः सुधीः।
पयोभक्षणमाकुर्यात् स्थिरचेता जितेन्द्रियः॥ २३-१९॥

पयः प्रमाणं वक्ष्यामि हस्तप्रस्थत्रयं त्रयम्।
शनैः शनैर्वीजेतव्याः प्राणा मत्तगजेन्द्रवत्॥ २३-२०॥

षण्मासाज्जायते सिद्धिः पूरकादिषु लक्षणम्।
क्रमेणाष्टाङ्गसिद्धिः स्यात् यतीनां कामरूपिणाम्॥ २३-२१॥

बद्धपद्मासनं कृत्वा विजयानन्दनन्दितः।
धारयेन्मारुतं मन्त्री मूलाधारे मनोलयम्॥ २३-२२॥

अथासनप्रभेदञ्च शृणु मत्सिद्धिकाङ्क्षणाम्।
येन विना पूरकाणां सिद्धिभाक् न महीतले॥ २३-२३॥

अधो मुण्डासनं वक्ष्ये सर्वेषां प्राणिनां सुखम्।
ऊर्द्ध्वमार्गे पदं दत्त्वा धारयेन्मारुतं सुधीः॥ २३-२४॥

सर्वासनानां श्रेष्ठं हि ऊद्र्ध्वपादो यदा चरेत्।
तदैव महतीं सिद्धिं ददाति वायवी कला॥ २३-२५॥

एतत्पद्मासनं कुर्यात् प्राणवायुप्रसिद्धये।
शुभासनं तदा ध्यायेत्पूरयित्वा पुनः पुनः॥ २३-२६॥

ऊरुमूले वामपादं पुनस्तद्दक्षिणं पदम्।
वामोरौ स्थापयित्वा च पद्मासनमितिस्मृतम्॥ २३-२७॥

सव्यपादस्य योगेन आसनं परिकल्पयेत्।
तदैकासनकाले तु द्वितीयासनमाभवेत्॥ २३-२८॥

पृष्ठे करद्वयं नीत्वा वृद्धाङ्गुष्ठद्वयं सुधीः।
कायसङ्कोचमाकृत्य धृत्वा बद्धासनो भवेत्॥ २३-२९॥

बद्धपद्मासनं कृत्वा वायुबद्धं पुनः पुनः।
चिबुकं स्थापयेद्यत्नाद् ह्लादितेजसि भास्करे॥ २३-३०॥

इत्यासनं हि सर्वेषां प्राणिनां सिद्धिकारणम्।

वायुवश्याय यः कुर्यात् स योगी नात्र संशयः॥ २३-३१॥

स्वभावसिद्धिकरणं सर्वेषां स्वस्तिकासनम्।
वामपादतले कुर्यात्पाददक्षिणमेव च॥ २३-३२॥

सव्यापसव्ययोगेन आसनद्वयमेव च।
सर्वत्रैवं प्रकारं च कृत्वा नाडीव सारमेत्॥ २३-३३॥

आसनानि शृणु ह्येतत्त्रिंशतासंख्यकानि च।
सव्यापसव्ययोगेन द्विगुणं प्रभवेदिह॥ २३-३४॥

चतुःषष्ट्यासनानीह वदामि वायुसाधनात्।
द्वात्रिंशद्बिन्दुभेदाय कल्पयेद् वायुवृद्धये॥ २३-३५॥

कार्मुकासनमाकृत्य उदरे पूरयेत् सुखम्।
तदा वायुर्वशो याति कालेन सूक्ष्मवायुना॥ २३-३६॥

कृत्वा पद्मासनं मन्त्री वेष्टयित्वा प्रधारयेत्।
करेण दक्षिणेनैव वामपादान्तिकं तटम्॥ २३-३७॥

सव्यापसव्यद्विगुणं कार्मुकासनमेव च ।
कार्मुकद्वययोगेन शरवद् वायुमानयेत् ॥ २३-३८ ॥

कुक्कुटासनमावक्ष्ये नाडीनिर्मलहेतुना ।
मत्कुलागमयोगेन कुर्याद् वायुनिषेवणम् ॥ २३-३९ ॥

निजहस्तद्वयं भूमौ पातयित्वा जितेन्द्रियः ।
पद्भ्यां बद्धं यः करोति कूर्परद्वयमध्यतः ॥ २३-४० ॥

सव्यापसव्ययुगलं कुक्कुटं ब्रह्मणा कृतम् ।
बद्धं कृत्वा अधःशीर्षं यः करोति खगासनम् ॥ २३-४१ ॥

खगासन प्रसादेन श्रमलोपो भवेद् द्रुतम् ।
पुनः पुनः श्रमादेव विषयश्रमलोपकृत् ॥ २३-४२ ॥

लोलासनं सदा कुर्याद् वायुलोलापघातनात् ।
स्थिरवायुप्रसादेन स्थिरचेता भवेद्द्रुतम् ॥ २३-४३ ॥

पद्मासनं समाकृत्य पादयोः सन्धिगह्वरे ।
हस्तद्वयं मध्यदेशं नियोज्य कुक्कुटाकृतिः ॥ २३-४४ ॥

निजहस्तद्वयद्वन्द्वं निपात्य हस्तनिर्भरम्।

कृत्वा शरीरमुल्लाप्य स्थित्वा पद्मासनेऽनिलः॥ २३-४५॥

स्थित्वैतदासने मन्त्री अधःशीर्षं करोति चेत्।

उत्तमाङ्गासनं ज्ञेयं योगिनामतिदुर्लभम्॥ २३-४६॥

एतदासनमात्रेण शरीरं शीतलं भवेत्।

पुनः पुनः प्रसादेन चैतन्या कुण्डली भवेत्॥ २३-४७॥

सव्यापसव्ययोगेन यः करोति पुनः पुनः।

पूरयित्वा मूलपद्मे सूक्ष्मवायुं विकुम्भयेत्॥ २३-४८॥

कृत्वा कुम्भकमेवं हि सूक्ष्मवायुलयं विधौ।

मूलादिब्रह्मरन्ध्रान्ते स्थापयेल्लयगे पदे॥ २३-४९॥

एतत् शुभासनं कृत्त्वा सूक्ष्मरन्ध्रे मनोलयम्।

सूचीरन्ध्रे यथासूत्रं पूरयेत् सूक्ष्मवायुना॥ २३-५०॥

एतत् क्रमेण षण्मासान् पूरकस्यापि लक्षणम्।

महासुखं समाप्नोति योगाष्टाङ्गनिषेवणात् ॥ २३-५१ ॥

अथ वक्ष्ये महादेव पर्वतासनमङ्गलम् ।
यत्कृत्वा स्थिररूपी स्याद् षट्चक्रादिविलोपनम् ॥ २३-५२ ॥

योन्यासनं पर्वतेन योगं योगफलेऽनिलम् ।
तत्कालफललन्तावत् खेचरो यावदेव हि ॥ २३-५३ ॥

पादयोगेन चक्रस्य लिङ्गाग्रं यो नियोजयेत् ।
अन्यत्पदमूरौ दत्त्वा तत्र योन्यासनं भुवि ॥ २३-५४ ॥

तत्र मध्ये महादेव बन्द्धयोन्यासनं शृणु ।
यत्कृत्वा खेचरो भूत्वा विचरेदीश्वरो यथा ॥ २३-५५ ॥

कृत्वा योन्यासनं नाथ लिङ्गगुह्यादिबन्धनम् ।
मुखनासानेत्रकर्णकनिष्ठाङ्गुलिभिस्तथा ॥ २३-५६ ॥

ओष्ठाधरं कनिष्ठाभ्यामनामाभ्याञ्च नासिके ।
मध्यमाभ्यां नेत्रयुग्मं तर्ज्जनीभ्यां परैः श्रुती ॥ २३-५७ ॥

कृत्त्वा योन्यासनं नाथ योगिनामति दुर्लभम्।

कृत्त्वा यः पूरयेद् वायुं मूलमाकुञ्च्य स्तम्भयेत्॥ २३-५८॥

सव्यापसव्ययोगेन सिद्धो भवति साधकः।

शनैः शनैः समारुह्य कुम्भकं परिपूरयेत्॥ २३-५९॥

अरुणोदयकालाच्च वसुदण्डे सदाशिव।

सव्यापसव्ययोगेन गृह्णीयाद्वायुगानिलम्॥ २३-६०॥

द्वितीयप्रहरे कुर्याद् वायुपूजां मनोरमाम्।

एतदासनमाकृत्य सिद्धो भवति साधकः॥ २३-६१॥

अथान्यदासनं वक्ष्ये यत्कृत्वा सोऽमरो भवेत्।

मत्साधकः शुचिः श्रीमान् कुर्याद्दत्त्वा निराविले॥ २३-६२॥

भेकानामासनं योगं निजवक्षसि सम्मुखम्।

निधाय पादयुगलं स्कन्धे बाहू पदोपरि॥ २३-६३॥

ध्यायेद्धि चित्पदं भ्रान्तमासनस्थः सुखाय च।

यदि सर्वाङ्गमुत्तोल्य गगने खेचरासनम्॥ २३-६४॥

महाभेकासनं प्रोक्तं सर्वसिद्धिप्रदायकम् ।

महाविद्यां महामन्त्रं प्राप्नोति जपतीह यः ॥ २३-६५ ॥

एतत् प्रभेदं वक्ष्यामि करोति यः स चामरः ।

एकपादमूरौ बद्ध्वा स्कन्धेऽन्यत्पादरक्षणम् ॥ २३-६६ ॥

एतत्प्राणासनं नाम सर्वसिद्धिप्रदायकम् ।

वायुमूले समारोप्य ध्यात्त्वाऽऽकुञ्च्य प्रकारयेत् ॥ २३-६७ ॥

केवलं पादमेकञ्च स्कन्धे चारोप्य यत्नतः ।

एकपादेन गगने तिष्ठेत् स दण्डवत् प्रभो ॥ २३-६८ ॥

अपानासनमेतद्धि सर्वेषां पूरकाश्रयम् ।

कृत्त्वा सूक्ष्मे शीर्षपद्मे समारोप्य च वायुभिः ॥ २३-६९ ॥

तदा सिद्धो भवेन्मर्त्त्यः प्राणापानसमागमः ।

अपानासनयोगेन कृत्त्वा योगेश्वरो भुवि ॥ २३-७० ॥

समानासनमावक्ष्ये सिद्धमन्त्रादिसाधनात् ।

एकपादमूरौ दत्त्वा गुह्येऽन्यल्लिङ्गवक्रके ॥ २३-७१ ॥

एतद् वीरासनं नाथ समानासनसंज्ञकम् ।
इत्याकृत्य जपेन्मन्त्रं धृत्वा वायुं चतुर्दले ॥ २३-७२ ॥

कुण्डलीं भावयेन्मन्त्रं कोटिविद्युल्लताकृतिम् ।
आत्मचन्द्रामृतरसैराप्लुतां योगिनीं सदा ॥ २३-७३ ॥

वीरासनं तु वीराणां योगवायुप्रधारणम् ।
यो जानाति महावीरः स योगी भवति ध्रुवम् ॥ २३-७४ ॥

अथ वक्ष्ये महाकाल समानासनसाधन ।
भेदक्रमेण यज्ज्ञात्वा वीराणामधिपो भवेत् ॥ २३-७५ ॥

समानासनमाकृत्य वृद्धाङ्गुष्ठं करेण च ।
एकेन सोऽधिकारी स्यात् स्वरयोगादिसाधने ॥ २३-७६ ॥

आसनं यो हि जानाति वायूनां हरणं तथा ।
कालादीनां निर्णयं तु स कदाचिन्न नश्यति ॥ २३-७७ ॥

कालेन लभ्यते सिद्धिः कालरूपो महोज्ज्वलः।

साधकैर्योगिभिर्ध्येयः सिद्धवीरासनात्मना॥ २३-७८॥

अथ वक्ष्ये नीलकण्ठ ग्रन्थिभेदासनं शुभम्।

ज्ञात्वा रुद्रो भवेत् क्षिप्रं सूक्ष्मवायुनिषेवणात्॥ २३-७९॥

कृत्वा पद्मासनं मन्त्री जङ्घयोः हृदये करौ।

कूर्परस्थान पर्यन्तं विभेद्य स्कन्धधारणम्॥ २३-८०॥

भित्वा पद्मासनं मन्त्री सहस्त्रार्द्धेन घाटनम्।

येन शीर्षं भावनम्रं सर्वाङ्गुलिभिराश्रमम्॥ २३-८१॥

ग्रन्थिभेदासनञ्चैतत् खेचरादिप्रदर्शनम्।

कृत्त्वा सूक्ष्मवायुलयं परमात्मनि भावयेत्॥ २३-८२॥

अथान्यासनमावक्ष्ये योगपूरकरक्षणात्।

कृत्त्वा पद्मासनं पादा अङ्गुष्ठजङ्घयोः स्थितम्॥ २३-८३॥

हस्तमेकं तु जङ्घायाः कार्मुकं कूर्परोर्द्धकम्।

पद्मासने समाधाय अङ्गुष्ठं परिधावयेत्॥ २३-८४॥

कार्मुकासनमेतद्धि सव्यापसव्ययोगतः।

पद्मासनं वेष्टयित्वा अङ्गुष्ठाग्रं प्रधावयेत्॥ २३-८५॥

यः करोति सदा नाथ कार्मुकासनमुत्तमम्।

तस्य रोगादिशत्रूणां क्षयं नीत्वा सुखी भवेत्॥ २३-८६॥

अथ वक्ष्येऽत्र संक्षेपात् सर्वाङ्गासनमुत्तमम्।

यत्कृत्वा योगनिपुणो विद्याभिः पण्डितो यथा॥ २३-८७॥

अधो निधाय शीर्षं च ऊर्द्ध्वपादद्वयं चरेत्।

पद्मासनं तु तत्रैव भूमौ कूर्परयुग्मकम्॥ २३-८८॥

दण्डे दण्डे सदा कुर्यात् श्रमशान्तिपरः सुधीः।

नित्यं सर्वासनं हित्वा न कुर्याद् वायुधारणम्॥ २३-८९॥

मासेन सूक्ष्मवायूनां गमनं चोपलभ्यते।

त्रिमासे देवपदवीं त्रिमासे शीतलो भवेत्॥ २३-९०॥

अथ वक्ष्ये महादेव मयूरासनमुत्तमम्।

भूमौ निपात्य हस्तौ द्वौ कूर्परोपरि देहकम् ॥ २३-९१ ॥

कूर्परोपरि संस्थाप्य सर्वदेहं स्थिराशयः ।
केवलं हस्तयुगलं निपात्य भुवि सुस्थिरः ॥ २३-९२ ॥

एतदासनमात्रेण नाडीसम्भेदनं भवेत् ।
पूरकेण दृढो याति सर्वत्राङ्गाश्रयेण च ॥ २३-९३ ॥

अथान्यदासनं कृत्त्वा सर्वव्याधिनिवारणम् ।
योगाभ्यासी भवेत्क्षिप्रं ज्ञानासनप्रसादतः ॥ २३-९४ ॥

दक्षपादोरुमूले च वामपादतलंतथा ।
दक्षपादतलं दक्षपार्श्वे संयोज्य धारयेत् ॥ २३-९५ ॥

एतज्ज्ञानासनं नाथ ज्ञानाद्विद्याप्रकाशकम् ।
निरन्तरं यः करोति तस्य ग्रन्थिः श्लथी भवेत् ॥ २३-९६ ॥

सव्यापसव्ययोगेन मुण्डासनमिति स्मृतम् ।
कृत्वा ध्यात्वा स्थिरो भूत्वा लीयते परमात्मनि ॥ २३-९७ ॥

गरुडासनमावक्ष्ये येन ध्यानं स्थिरं भुवि ।
सर्वदोषाद्विनिर्मुक्तो भवतीह महाबली ॥ २३-९८ ॥

एकपादमुरौ बद्ध्वा एकपादेन दण्डवत् ।
जङ्घापादसन्धिदेशे ज्ञानव्यग्रं व्यवस्थितम् ॥ २३-९९ ॥

एतदासनमाकृत्य पृष्ठे संहारमुद्रया ।
आराध्य योगनाथं च सदा सर्वेश्वरस्य च ॥ २३-१०० ॥

अथान्यदासनं वक्ष्ये येन सिद्धो भवेन्नरः ।
अकस्माद् वायुसञ्चारं कोकिलाख्यासनेन च ॥ २३-१०१ ॥

ऊर्द्ध्वे हस्तद्वयं कृत्वा तदग्रे पादयोः सुधीः ।
वृद्धाङ्गुष्ठद्वयं नाथ शनैः शनैः प्रकारयेत् ॥ २३-१०२ ॥

पद्मासनं समाकृत्य कूर्परोपरि संस्थितः ।
अथ वक्ष्ये वीरनाथ आनन्दमन्दिरासनम् ॥ २३-१०३ ॥

यत्कृत्वा अमरो धीरो भवत्येवेह साधकः ।
हस्तयुग्मं पाददेशे पादयुग्मं प्रदापयेत् ॥ २३-१०४ ॥

प्रकृत्य दण्डवत् कौल नितम्बाग्रे प्रतिष्ठति ।

खञ्जनासनमावक्ष्ये यत्कृत्वा सुस्थिरो भवेत् ॥ २३-१०५ ॥

पृष्ठे पादद्वयं बद्ध्वा हस्तौ भूमौ प्रधारयेत् ।

भूमौ हस्तद्वयं नाथ पातयित्वानिलं पिबेत् ॥ २३-१०६ ॥

पृष्ठे पादद्वयं बद्ध्वा खञ्जनेन जयी भवेत् ।

अथान्यदासनं वक्ष्ये साधकानां हिताय वै ॥ २३-१०७ ॥

पवनासनरूपेण खेचरो योगिराड्भवेत् ।

स्थित्वा बद्धासने धीरो नाभेरधःकरद्वयम् ॥ २३-१०८ ॥

ऊद्र्ध्वमुण्डः पिबेद् वायुं निरुद्धयेत यमाविले ।

अथ सर्पासनं वक्ष्ये वायुपानाय केवलम् ॥ २३-१०९ ॥

शरीरं दण्डवत्तिष्ठेद्रज्जुबद्धस्तु पादयोः ।

वायवी कुण्डली देवी कुण्डलाकारमङ्गुले ॥ २३-११० ॥

मण्डिता भूषणाद्यैश्च वक्ष्ये सर्पासनस्थितम् ।

निद्रालस्यभयान् त्यक्त्वा रात्रौ कुर्यात्पुनः पुनः ॥ २३-१११ ॥

सर्वान् विघ्नान् वशीकृत्य निद्रादीन् वायुसाधनात् ।
अथ वक्ष्ये काकरूपस्कन्धासनमनुत्तमम् ॥ २३-११२ ॥

कलिपापात् प्रमुच्येत वायवीं वशमानयेत् ।
निजपादद्वयं बद्ध्वा स्कन्धदेशे च साधकः ॥ २३-११३ ॥

नित्यमेतत् पदद्वन्द्वं भूमौ पुष्टिकरद्वयम् ॥ २३-११४ ॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने भावासननिर्णये
पाशवकल्पे षट्चक्रसारसङ्केते सिद्धमन्त्रप्रकरणे
भैरवीभैरवसंवादे । त्रयोविंशः पटलः ॥ २३ ॥

अथ चतुर्विंशः पटलः

आनन्दभैरवी उवाच

अथ वक्ष्ये महादेव योगशास्त्रार्थनिर्णयम् ।
येन विज्ञानमात्रेण षट्चक्रग्रन्थिभेदकः ॥ २४-१ ॥

पर्व्वातिरिक्तदिवसे कुर्यात् श्रीयोगसाधनम् ।
कालिकाकुलसर्वस्वं कला कालसमन्वितम् ॥ २४-२ ॥

आसनं विधिना ज्ञानं कोटिकोटिक्रियान्वितम् ।
शतलक्षसहस्राणि आसनानि महीतले ॥ २४-३ ॥

स्वर्गे पातालमध्ये तु सम्मुक्तानि महर्षीभिः ।
भेदाभेदक्रमेणैव कुर्यान्नित्यं सदासनम् ॥ २४-४ ॥

तत्प्रकारं च विविधं यत्कृत्त्वा सोऽमरो भवेत् ।
अमरः सिद्ध इत्याहुरष्टैश्वर्यसमन्वितम् ॥ २४-५ ॥

प्रतिभाति स एवार्थो मूलमन्त्रार्थवेदिनः ।
अमरास्ते प्रशंसन्ति सर्वलोकनिरन्तरम् ॥ २४-६ ॥

देवाः श्रीकामिनीकान्ताः प्रभवन्ति जगत्त्रये ।
कालं हि वशमाकर्त्तुं नियुक्तो यश्च भावकः ॥ २४-७ ॥

ते सर्वे विचरन्तीह कोटिवर्षशतेषु च ।

तत्तदासननामानि शृणु तत्साधनानि च ॥ २४-८ ॥

येन विज्ञानमात्रेण साक्षादीशस्य भक्तिमान् ।
अथ कूर्मासनं नाथ कृत्वा वायुं प्रपूरयेत् ॥ २४-९ ॥

कामरूपो भवेत् क्षिप्रं कलिकल्मषनाशनम् ।
समानासनमाकृत्य लिङ्गाग्रे स्वीयमस्तकम् ॥ २४-१० ॥

नितम्बे हस्तयुगलं भूमौ सङ्कोचितः पतेत् ।
कुम्भीरासनमावक्ष्ये वायूनां धारणाय च ॥ २४-११ ॥

तिष्ठेत् कुण्डाकृतिर्भूमौ करौ शीर्षोपरि स्थितौ ।
पदोपरि पदं दत्त्वा शीर्षोपरि करद्वयम् ॥ २४-१२ ॥

तिष्ठेत् कुण्डाकृतिर्भूमौ कुम्भीरासनमेव तत् ।
अथ मत्स्यासनं पृष्ठे हस्तोपरि कराङ्गुलिः ॥ २४-१३ ॥

पादयुग्मप्रमाणेन वृद्धाङ्गुष्ठस्य योजनम् ।
मकरासनमावक्ष्ये वायुपानाय कुम्भयेत् ॥ २४-१४ ॥

पृष्ठे पाදद्वयं दत्त्वा हस्ताभ्यां पृष्ठबन्धनम् ।
अथ सिंहासनं नाथ कूर्परोपरि जानुनी ॥ २४-१५ ॥

स्थापयित्वा ऊद्र्ध्वमुखो वायुपानं समाचरेत् ।
अथ वक्ष्ये महादेव कुञ्जरासनमुत्तमम् ॥ २४-१६ ॥

करेणैकेन पादाभ्यां भूमौ तिष्ठेत् शिरः करः ।
व्याघ्रासनमथो वक्ष्ये क्रोधकालविनाशनम् ॥ २४-१७ ॥

एकपादं शीर्षमध्ये मेरुदण्डोपरि स्थितम् ।
भल्लूकासनमावक्ष्ये यत्कृत्त्वा योगिराड् भवेत् ॥ २४-१८ ॥

नितम्बे च पादगोष्ठी हस्ताभ्यामङ्गुलीयकम् ।
अथ कामासनं वक्ष्ये कामसङ्गेन हेतुना ॥ २४-१९ ॥

गरुडासनमाकृत्य कनिष्ठाग्रं स्पृशोद्भवम् ।
वर्त्तुलासनमावक्ष्ये यत्कृत्त्वा भैरवो भवेत् ॥ २४-२० ॥

आकाशस्थितपादाभ्यां पृष्ठदेशं निबन्धयेत् ।
अथ मोक्षासनं वक्ष्ये यत्कृत्त्वा मोक्षमन्दिरम् ॥ २४-२१ ॥

दक्षहस्तं दक्षपादं केवलं स्थापयेत्सुधीः।

अथ मालासनं नाथ यत्कृत्वा वायवीप्रियः॥ २४-२२॥

शुभयोगं समाप्नोति एकहस्तस्थितो नरः।

अथ दिव्यासनं वक्ष्ये पृष्ठं हस्तेन बन्धयेत्॥ २४-२३॥

एकहस्तमध्यदेशं भूमिहस्तञ्च नासया।

अर्द्धोदयासनं नाथ सर्वाङ्गं खे नियोजयेत्॥ २४-२४॥

केवलं हस्तयुगलं भूमिमालोक्य नासया।

अथ चन्द्रासनं वक्ष्ये पादाभ्यां स्वशरीरकम्॥ २४-२५॥

पुनः पुनः धारयेद् यो वायुधारणपूर्वकम्।

अथ हंसासनं वक्ष्ये शरीरेण पुनः पुनः॥ २४-२६॥

भूमौ सन्ताडयेत् श्वासैः प्राणवायुदृढः सुधीः।

अथ सूर्यासनं वक्ष्ये पृष्ठात् पादेन बन्धनम्॥ २४-२७॥

पृष्ठे भेदान्वितं पादं तस्य हस्तेन बन्धयेत्।

अथ योगासनं वक्ष्ये यत्कृत्वा योगिराड् भवेत्॥ २४-२८॥

सर्वाः पादतलद्वन्द्वं स्वाङ्गे बद्ध्वा करद्वयम्।
गदासनमतो वक्ष्ये गदाकृतिर्वसेद् भुवि॥ २४-२९॥

ऊद्र्ध्वबाहुर्भवेद्येन कायशोधनहेतुना।
अथ लक्ष्म्यासनं वक्ष्ये लिङ्गाग्रेऽङ्घ्रितलद्वयम्॥ २४-३०॥

गुह्यदेशे हस्तयुग्मं तलाभ्यां बन्धयेद् भुवि।
अथ कुल्यासनं वक्ष्ये यत्कृत्वा कौलिको भवेत्॥ २४-३१॥

एकहस्तं मस्तकस्थोऽधः शीर्षेऽभिन्नगे करम्।
ब्राह्मणासनमावक्ष्ये यत्कृत्त्वा ब्राह्मणो भवेत्॥ २४-३२॥

एकपादमूरौ दत्त्वा तिष्ठेद् दण्डाकृतिर्भुवि।
क्षत्रियासनमावक्ष्ये यत्कृत्त्वा धनवान् भवेत्॥ २४-३३॥

केशेन पादयुगलं बद्ध्वा तिष्ठेदधोमुखः।
अथ वैश्यासनं वक्ष्ये यत्कृत्वा सत्यवान्भवेत्॥ २४-३४॥

वृद्धाङ्गुष्ठेन यस्तिष्ठेत् हस्तयुग्मं स्वकोरसि ।
अथ शूद्रासनं वक्ष्ये यत्कृत्वा सेवको भवेत् ॥ २४-३५ ॥

धृत्वाङ्गुष्ठद्वयं योज्यं नासाग्रपादमध्यके ।
अथ जात्यासनं वक्ष्ये येन जातिस्मरो भवेत् ॥ २४-३६ ॥

हस्ताङ्घ्रियुग्मं भूमौ च गमनागमनं ततः ।
पाशवासनमावक्ष्ये कृत्त्वा पशुपतिर्भवेत् ॥ २४-३७ ॥

पृष्ठे हस्तद्वयं दत्त्वा कूर्पराग्रे स्वमस्तकम् ।
एतेषां साधनादेव चिरजीवी भवेन्नरः ॥ २४-३८ ॥

संवत्सरं साधनाद्वै जीवन्मुक्तो भवेद् ध्रुवम् ।
श्रीविद्यासाधनं पश्चात् कथितव्यं तब प्रभो ॥ २४-३९ ॥

आसनं योगसिद्ध्यर्थं कायशोधनहेतुना ।
इदानीं शृणु देवेश रहस्यं कोमलासनम् ॥ २४-४० ॥

योगसिद्धिविचाराय रहस्यं चर्मासनं शुभम् ।
अथ नरासनं वक्ष्ये षोडशादिप्रकारकम् ॥ २४-४१ ॥

येन साधनमात्रेण योगी भवति साधकः।
प्रकारं षोडशप्रोक्तं मत्कुलागमसम्भवम्॥ २४-४२॥

येन साधनमात्रेण साक्षाद्योगी महीतले।
एकमासाद् भवेत्कल्पो द्विमासे द्रुतकल्पनम्॥ २४-४३॥

त्रिमासे योगकल्पः स्याच्चतुर्मासे स्थिराशयः।
पञ्चमासे सूक्ष्मकल्पे षष्ठमासे विवेकगः॥ २४-४४॥

सप्तमासे ज्ञानयुक्तो भावको भवति ध्रुवम्।
अष्टमासेऽन्नसंयुक्तो जितेन्द्रियकलेवरः॥ २४-४५॥

नवमे सिद्धिमिलनो दशमे चक्रभेदवान्।
एकादशे महावीरो द्वादशे खेचरो भवेत्॥ २४-४६॥

इति योगासनस्थश्च योगी भवति साधकः।
नरासनं यः करोति स सिद्धो नात्र संशयः॥ २४-४७॥

तत्प्रकारं प्रवक्ष्यामि येन सिद्धो भवेत्प्रभो।

अधोमुखं महादेव नरासनस्य साधने ॥ २४-४८ ॥

करणीयं साधकेन्द्रैर्योगशास्त्रार्थसम्मतैः ।
अक्षीणं यौवनोद्दामं सुन्दरं चारुकुन्तलम् ॥ २४-४९ ॥

लोकानां श्रेष्ठमेवं हि पतितं रणसम्मुखे ।
तत्सर्वं हि समानीय मङ्गले वासरे निशि ॥ २४-५० ॥

चन्द्रसूर्यासनं कृत्वा साधयेत्तत्र कौलिकः ।
अथान्यत् सम्प्रवक्ष्यामि सर्वसिद्धिप्रकारकम् ॥ २४-५१ ॥

भेकासनं यः करोति स एव योगिनीपतिः ।
अथान्यत् सम्प्रवक्ष्यामि यत्कृत्वा योगिराड् भवेत् ॥ २४-५२ ॥

तत्सर्वोत्तरशिरसि स्थित्वा चन्द्रासने जपेत् ।
अथान्यत् तत्प्रकारञ्च महाविद्यादिदर्शनात् ॥ २४-५३ ॥

मत्सरे गौरवर्णे च तत्र शैलासने जपेत् ।
अथान्यत्तत्प्रकारं च योगिकौलो न संशयः ॥ २४-५४ ॥

यद्येवं मिरयते सोऽपि तदा भद्रासने जपेत्।

तत्तत्साधनकाले च एवं कुर्याद्दिने दिने॥ २४-५५॥

नृत्यवाद्यगीतरागभोगोनविंशतौ दिने।

चतुर्दशं न वीक्ष्येत भैरवाणां भयाद्र्दनात्॥ २४-५६॥

मनोनिवेशमात्रेण योगी भवति भैरव।

स्वेच्छासनं समाकृत्य मन्त्रं जपति यो नरः॥ २४-५७॥

महासारो वीतरागः सिद्धो भवति निश्चितम्।

अथान्यत् शवमाहात्म्यं शृणुष्वावहितो मम॥ २४-५८॥

तत्सर्वं गृहमानीयाच्छाद्य शार्दूलचर्मणा।

तत्र मन्त्री महापूजां कृत्वा प्रविश्य संजपेत्॥ २४-५९॥

पद्मासनस्थस्तस्यैव झटिद् योगी न संशयः॥ २४-६०॥

एतत्प्रकाररासनमाशु कृत्वा।

जितेन्द्रियो योगफलार्थविज्ञः।

भवेन्मनुष्यो मम चाज्ञया हि।

सिद्धो गणोऽसौ जगतामधीशः ॥ २४-६१ ॥

मूलखड्गयष्टिपरडितरवारादिना युतम् ।
॥ ॥ भूतसर्पराजव्याघ्रं सद्यो मृतं यजेत् ॥ २४-६२ ॥

यस्य मृत्युर्भवेन्नाथ भैरवस्य सुरापतेः ।
रणे सम्मुखयुद्धस्य तदानीय जपं चरेत् ॥ २४-६३ ॥

तत्र कौलासनं कृत्वा अथवा कमलासनम् ।
महाविद्यामहामन्त्रं जप्त्वा लिङ्गमवाप्नुयात् ॥ २४-६४ ॥

एतत्सर्वं न गृह्णीयाद् यदीच्छेदात्मनो हितम् ।
कुव्याधिमरणं कुष्ठं स्त्रीवश्यं पतितं मृतम् ॥ २४-६५ ॥

दुर्भीक्षमृतमुन्मत्तमव्यक्तलिङ्गमेव च ।
हीनाङ्गं भूचरवृद्धं पलायनपरं तथा ॥ २४-६६ ॥

अन्यद्यो यद् विचारेण हत्त्वा लोकं जपन्ति ये ।
ते सर्वे व्याघ्रभक्षा स्युः खादन्ति व्याघ्ररूपिणः ॥ २४-६७ ॥

पर्युषितं तथाश्वस्थमधिकाङ्गं कुकिल्बिषम् ।

ब्राह्मणं गोमयं वीरं धामीकं सन्त्यजेत् सुधीः ॥ २४-६८ ॥

स्त्रीजनं योगिनं त्यक्त्वा साधयेद्वीरसाधनम् ।

तदा सिद्धो भवेन्मन्त्री आज्ञया मे न संशयः ॥ २४-६९ ॥

तरुणं सुन्दरं शूरं मन्त्रविद्यं समुज्ज्वलम् ।

गृहीत्वा जपमाकृत्य सिद्धो भवति नान्यथा ॥ २४-७० ॥

मनुष्यशवहृत्पद्मे सर्वसिद्धिकुलाकुलाः ।

तत्र सर्वासनान्येव सिद्ध्यन्ति नात्र संशयः ॥ २४-७१ ॥

अथान्यत्तत्प्रकारं तु यत्कृत्वा योगिराट् भवेत् ।

कोमलाद्यासने स्थित्वा धारयन् मारुतं सुधीः ॥ २४-७२ ॥

तत्कोमलासनं वक्ष्ये शृणुष्व मम तद्वचः ।

अवृद्धकं मृतं बालं षण्मासात् कोमलं परम् ॥ २४-७३ ॥

तद्विभेदं प्रवक्ष्यामि गर्भच्युत महाशवम् ।

तद्धि व्याघ्रत्वचारूढं कृत्वा तत्र जपेत् स्थितः ॥ २४-७४ ॥

षण्मासानन्तरं यावद्दशमासाच्च पूर्वकम् ।

मृतं चारुमुखं बालं गर्भाष्टमपुरःसरम् ॥ २४-७५ ॥

एकहस्ते द्विहस्ते वा चतुर्हस्ते समन्ततः ।

विशुद्ध आसने कुर्यात् संस्कारं पूजनं ततः ॥ २४-७६ ॥

पूर्णे पञ्चमवर्षे च साधको वीतभीः स्वयम् ।

हीनवीतोपनयनो यो मृतस्तं हि कोमलम् ॥ २४-७७ ॥

गर्भच्युतफलं नाथ शृणु तत्फलसिद्धये ।

अणिमाद्यष्टसिद्धिः स्यात् संवत्सरस्य साधनात् ॥ २४-७८ ॥

मृतासने जपेन्मन्त्री महाविद्याममुं शुभम् ।

अचिरात्तस्य सिद्धिः स्यान्नात्र कार्या विचारणा ॥ २४-७९ ॥

अथान्यत् शवमाहात्म्यं शृणु सिद्धिश्च साधनात् ।

साधको योगिराट् भूत्वा मम पादतले वसेत् ॥ २४-८० ॥

दशसंवत्सरे पूर्णे यो मिरयेत शुभे दिने ।

शनौ मङ्गलवारे च तमानीय प्रसाधयेत्॥ २४-८१॥

तत्र वीरासनं कृत्त्वा यो जपेद् भद्रकालिकाम्।
अथवा बद्धपद्मे च स सिद्धो भवति ध्रुवम्॥ २४-८२॥

अथ भावफलं वक्ष्ये येन शवादिसाधनम्।
अकस्मात् प्राप्तिमात्रेण शवस्य विहितस्य च॥ २४-८३॥

यं पञ्चदशवर्षीयं सुन्दरं पतितं रणे।
तमानीय जपेद्विद्यां निशि वीरासने स्थितः॥ २४-८४॥

शीघ्रमेव सुसिद्धिः स्यात् खेचरी वायुपूरणी।
धारणाशक्तिसिद्धिः स्यात् यः करोतीह साधनम्॥ २४-८५॥

अथ षोडशवर्षीयं सर्वसिद्धिकरं नृणाम्।
भोगमोक्षौ करे तस्य शवेन्द्रस्य च साधनात्॥ २४-८६॥

एवं क्रमेण पञ्चाशद् वर्षीयं सुन्दरं वरम्।
आनीय साधयेद्यस्तु स योगी भवति ध्रुवम्॥ २४-८७॥

शवं रणस्थमानीय साधयेत्सुसमाहितः।

इन्द्रतुल्यो भवेन्नाथ रणस्थशवसाधनात्॥ २४-८८॥

यदि सम्मुखयुद्धे वा शृणु पट्टीशघातनम्।

शवमानीय वीरेन्द्रो जपेद्वीरासनस्थितः॥ २४-८९॥

तत् शवं तु महादेव पूजार्थं निजमन्दिरे।

देवालये निर्णये च स्थापयित्वा जपं चरेत्॥ २४-९०॥

तत्र वीरासनं किं वा योनिमुद्रासनादिकम्।

पद्मासनं तथाकृत्य वायुं धृत्वा जपं चरेत्॥ २४-९१॥

मासैकेन भवेद्योगी विप्रो गुणधरः शुचिः।

सूक्ष्मवायुधारणज्ञो जपेद् यौवनगे शवे॥ २४-९२॥

शवसाधनकालेन यद्यत् कर्म करोति हि।

तत्कर्मसाधनादेव योगी स्यादमरो नरः॥ २४-९३॥

आनन्दभैरवी उवाच

कालक्रियादिकं ज्ञात्त्वा सूक्ष्मानिलनिधारणम् ।
साधको विचरेद्वीरो वीराचारविवेचकः ॥ २४-९४ ॥

शवादे रणयातस्य क्रियामाहात्म्यमुत्तमम् ।
शृणु सङ्केतभाषाभिः शिवेन्द्रचन्द्रशेखर ॥ २४-९५ ॥

एकहस्तार्द्धमाने तु भूम्यधोविधिमन्दिरे ।
संस्थाप्य सुशवं नाथ मायादवगतः प्रभो ॥ २४-९६ ॥

एकाहं जगदाधारा आधारान्तर्गता सती ।
पतिहीना सूक्ष्मरूपादधरादिचराचरम् ॥ २४-९७ ॥

मदीयं साधकं पुण्यं धर्मकामार्थमोक्षगम् ।
प्रकरोमि सदा रक्षां धात्रीरूपा सरस्वती ॥ २४-९८ ॥

केवलं तदभावेन शम्भो योगपरायण ।
मग्ना संसारकरणात्त्वयि त्वञ्चाहमेव च ॥ २४-९९ ॥

यद्यत्पदार्थनिकरे तिष्ठसि त्वं सदा मुदा ।
तत्रैव संस्थिरा हृष्टा चाहमेव न संशयः ॥ २४-१०० ॥

एतद्भावं त्वं करोषि कस्य हेतोस्तव प्रिया।
वामाङ्गे संस्थिरा नित्यं कामक्रोधविवर्जीता॥ २४-१०१॥

आनन्दभैरव उवाच

किं प्रयोजनमेवं हि शवादीनाञ्च साधनात्।
यदि ते श्रीपदाम्भोजमधून्मत्तो भवेद्यतिः॥ २४-१०२॥

त्रैलोक्यपूजिते भीमे वाग्वादिनीस्वरूपिणी।
शवसाधनमात्रेण केन योगी भवेद्वद॥ २४-१०३॥

आनन्दरस लावण्यमन्द हासमुखाम्बुजे।
योगी भजति योगार्थं केन तत्फलमावद॥ २४-१०४॥

आनन्दभैरवी उवाच

यदि शङ्कर भक्तोऽसि मम जापपरायणः।
तथापि शवभावेन शववत् शवसाधनम्॥ २४-१०५॥

रात्रियोगे प्रकर्त्तव्यं दिवसे न कदाचन।
शवे स्थिरो यो बभूव स भक्तो मे न संशयः॥ २४-१०६॥

मे शवाकृतिमद्द्रव्यं मम तुष्टिनिबन्धनम्।
ममाज्ञापालने योग्यः कुर्याद् वीरः शवासनम्॥ २४-१०७॥

यद्यहं तत्र गच्छामि तदैव स शिवो भवेत्।
निःशेषत्यागमात्रेण शवत्वं प्रलयं तनोः॥ २४-१०८॥

यः करोति भावराशिं मयि देव्यां महेश्वर।
त्रैलोक्यपूजितायां तु स शिवः शवमाश्रयेत्॥ २४-१०९॥

अधिकारी तु भक्तस्य पालनं परपृष्ठतः।
करोमि कामिनीनाथ सन्देहो नात्र भूतले॥ २४-११०॥

यदाहं त्यज्यते गात्रं पशूनां मारणाय च।
तदैते च मृताः सर्वे जीवन्ते केन हेतुना॥ २४-१११॥

तदाहुतिमहाद्रव्यं शवेन्द्रं रणहानिगम्।
आनीय साधयेद्यस्तु स स्थिरो मे सुभक्तिगः॥ २४-११२॥

सदा क्रोधी भवेद्यस्तु स क्रूरो नात्र संशयः।

स कथं वीररात्रौ च साधयेद् विह्वलः शवम्॥ २४-११३॥

भयविह्वलचेता यः स क्रोधी नात्र संशयः।

नास्ति क्रोधसमं पापं पापात् क्षिप्तो भवेत् शवे॥ २४-११४॥

यो भक्तः पापनिर्मुक्तः सिद्धरूपी निराश्रयः।

विवेकी ध्याननिष्ठश्च स्थिरः संसाधयेत् शवम्॥ २४-११५॥

यावत्कालं स्थिरचित्तं न प्राप्नोति जितेन्द्रियः।

तावत्कालं नापि कुर्यात् शवेन्द्रस्यापि साधनम्॥ २४-११६॥

शवमानीय तद्द्वारे तेनैव परिखन्य च।

तद्दनात्तद्दिनं यावत् यद्बद्ध्वा व्याप्य साधयेत्॥ २४-११७॥

एवं कृत्वा हविष्याशी महाविद्यादिसाधनम्।

जितेन्द्रियो मुदा कुर्याद् अष्टाङ्गसाधनेन च॥ २४-११८॥

तदष्टाङ्गफलं ह्येतत् यत्कृत्त्वा सिद्धिभाग् भवेत्।

नाडीमुद्राभेदकञ्च कुलाचारफलान्वितम् ॥ २४-११९ ॥

अष्टाङ्गसाधनादेव सिद्धरूपो महीतले ।
पश्चादन्यस्वर्गगामी भवेन्न भूतलं बिना ॥ २४-१२० ॥

आदौ भूतलसिद्धिःस्याद्भुवोलोकस्य सिद्धिभाक् ।
जनलोकस्य सिद्धीशस्तपोलोकस्य सिद्धिभाक् ॥ २४-१२१ ॥

सत्यलोकस्य सिद्धीशः पश्चाद् भवति साधकः ।
एवं क्रमेण सिद्धिः स्यात् स्वर्गादीनां महेश्वर ॥ २४-१२२ ॥

अष्टाङ्गसाधनार्थाय देवा भवन्ति भूतले ।
भूतले सिद्धिमाहृत्य गच्छन्ति ब्रह्ममन्दिरे ॥ २४-१२३ ॥

क्रमेणैवं विलीनास्ते अतो भूतलसाधनम् ।
भूतले शवमास्थाय ब्रह्मचारी दिवा शुचिः ॥ २४-१२४ ॥

निशायां पञ्चतत्त्वेन दिवसेऽष्टाङ्गसाधनम् ।
जितेन्द्रियो निवीकारो वित्तवानपरो नरः ॥ २४-१२५ ॥

शवं संसाधयेद्धीरश्चिन्तालस्यविवर्जीतः।

चिन्ताभिर्जायते लोभो लोभात् कामः प्रपद्यते॥ २४-१२६॥

कामाद्भवति सम्मोहो मोहादालस्य सञ्चयः।

आलस्यदोषजालेन निद्रा भवति तत्क्षणात्॥ २४-१२७॥

महानिद्राविपाकेन मृत्युर्भवति निश्चितम्।

अपक्षनिद्राभङ्गेन क्रोधो भवति निश्चितम्॥ २४-१२८॥

तत्क्रोधाच्चित्तविकलो विकलात् श्वासवर्द्धनः।

वृथायुः क्षयमाप्नोति विस्तरे श्वाससंक्षये॥ २४-१२९॥

बलबुद्धिक्षयं याति बुद्धिहीनो जडात्मकः।

जडभावेन मन्त्राणां जपहीनो भवेन्नरः॥ २४-१३०॥

जपहीने श्वासनाशः श्वासनाशे तनुक्षयम्।

अतस्तनुं समाश्रित्य जपनिष्ठो भवेत् शुचिः॥ २४-१३१॥

अष्टाङ्गधारणेनैव सिद्धो भवति नान्यथा।

अष्टाङ्गलक्षणं वक्ष्ये साक्षात् सिद्धिकरं परम्॥ २४-१३२॥

जन्मकोटिसहस्राणां फलेन कुरुते नरः।
यमेन लभ्यते ज्ञानं ज्ञानात् कुलपतिर्भवेत्॥ २४-१३३॥

यो योगेशः स कुलेशः शिशुभावस्थनिर्मलः।
नियमेन भवेत् पूजा पूजया लभते शिवम्॥ २४-१३४॥

यत्र कल्या ण सम्पूर्णा सम्पूर्णः शुचिरुच्यते।
आसनेन दीर्घजीवी रोगशोकविवजीतः॥ २४-१३५॥

ग्रन्थिभेदनमात्रेण साधकः शीतलो भवेत्।
प्राणायामेन शुद्धः स्यात् प्राणवायुवशेन च॥ २४-१३६॥

वशी भवति देवेश आत्मारामेऽपि लीयते।
प्रत्याहारेण चित्तं तु चञ्चलं कामनाप्रियम्॥ २४-१३७॥

तत्कामनाविनाशाय स्थापयेत् पदपङ्कजे।
धारणेन वायुसिद्धिरष्टसिद्धिस्ततः परम्॥ २४-१३८॥

अणिमासिद्धिमाप्नोति अणुरूपेण वायुना।

ध्यानेन लभते मोक्षं मोक्षेण लभते सुखम् ॥ २४-१३९ ॥

सुखेनानन्दवृद्धिः स्यादानन्दो ब्रह्मविग्रहः ।
समाधिना महाज्ञानी सूर्याचन्द्रमसोर्गतिः ॥ २४-१४० ॥

महाशून्ये लयस्थाने श्रीपदानन्दसागरः ।
तत्तरङ्गे मनो दत्त्वा परमार्थविनिर्मले ॥ २४-१४१ ॥

श्रीपादमूतीमाकल्प्य ध्यायेत् कोटिरवीन्दुवत् ।
श्रीमूतीं कोटिचपलां समुज्ज्वलां सुनिर्मलाम् ॥ २४-१४२ ॥

ध्यायेद्योगी सहस्रारे कोटिसूर्येन्दुमन्दिराम् ॥ २४-१४३ ॥

श्रीविद्यामतिसुन्दरीं त्रिजगतामानन्दपुञ्जेश्वरी ।
कोटयर्कायुत तेजसि प्रियकरीं योगादरीं शाङ्करीम् ।
तां मालां स्थिरचञ्चलां गुरुघनां व्यालाचलां केवलां
ध्यायेत् सूक्ष्मसमाधिना स्थिरमतिः सश्रीपतिर्गच्छति ॥ २४-१४४ ॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने भावनिर्णये
पाशवकल्पे षट्चक्रसारसङ्केते योगविद्याप्रकरणे

मन्त्रसिद्धिशक्त्युपाये। भैरवीभैरवसंवादे चतुर्वींशः पटलः
॥ २४ ॥

## अथ पञ्चविंशः पटलः

आनन्दभैरव उवाच

वद कान्ते रहस्यं मे तत्त्वावधानपूर्वकम्।

यद् यज्ज्ञात्वा महायोगी प्रविशत्यनलाम्बुजे॥ २५-१॥

यदि स्नेहदृष्टिरस्ति मम ब्रह्मनिरूपणम्।

योगसारं तत्त्वपथं निर्मलं वद योगिने॥ २५-२॥

आनन्दभैरवी उवाच

शृणु प्राणेश वक्ष्यामि योगनाथ क्रियागुरो।

योगाङ्गं योगिनामिष्टं तत्त्वब्रह्मनिरूपणम्॥ २५-३॥

एतत् सृष्टिप्रकारञ्च प्रपालनविधिं तथा।

असंख्यसृष्टिसंहारं वदामि तत्त्वतः शृणु॥ २५-४॥

त्वमेव संहारकरो वरप्रियः प्रधानमेषु त्रितयेषु शङ्कर।

संहारभावं मलभूतिनाशनं प्रधानमाद्यस्य जगत्प्रपालनम्॥ २५-५॥

तत्राधनं मेरुभुजङ्गमङ्गं सृष्टिप्रकारं खलु तत्र मध्यमम्।

तत्पालनञ्चेति मयैव राज्ये संहाररूपं प्रकृतेर्गुणार्थकम्॥ २५-६॥

एतत्त्रयं नाथ भयादिकारणं तन्नाशनाम्ने प्रणवं गुणात्मकम्।

त्रयं गुणातीतमनन्तमक्षरं सम्भाव्य योगी भवतीह साधकः॥ २५-७॥

अव्यक्तरूपात् प्रणवाद्धि सृष्टिस्तल्लीयते व्यक्ततनोः समासा।

सूक्ष्माद्यकारात् प्रतिभान्ति खे सदा प्रणश्यति स्थूलकलान्निरक्षरात्॥ २५-८॥

अतीव चित्रं जगतां विचित्रं नित्यं चरित्रं कथितुं न शक्यते।

हंसाश्रितास्ते भववासिनो जना ज्ञात्वा न देहस्थमुपाश्रयन्ते॥ २५-९॥

देहाधिकारी प्रणवादिदेव मायाश्रितो निद्रित एष कालः।

प्रलीयते दीर्घपथे च काले तदा प्रणश्यन्ति जगत् स्थिता जनाः॥ २५-१०॥

कालो जगद्भक्षक ईशवेशो तरी तु जीर्णा पतिहीनदीना।

स एव मृत्युवीहितं चराचरं प्रभुञ्जति श्रीरहितं पलायनम्॥ २५-११॥

पञ्चेन्दुतत्त्वेन महेन्द्रसृष्टिः प्रतिष्ठिता यज्ञविधानहेतुना।

सदैव यज्ञं कुरुते भवार्णवे निःसृष्टिकाले वरयज्ञसाधनम्॥ २५-१२॥

हिताहितं तत्र महार्णवे भयं विलोक्य लोका भयविह्वलाः सदा।

विशन्ति ते कुत्सितमार्गमण्डले अतो महानारकिबुद्धिहीनाः॥ २५-१३॥

मायामये धर्मकुलानले भवे लीनो हरेर्याति पथानुसारी।

मिरयेत कालानलतुल्यमृत्युना कथं तु योगी कथमेव साधकः॥ २५-१४॥

यः साधकः प्रेमकलासुभक्त्या स एव मूर्खो यदि याति संसृतौ।

संसारहीनः प्रियचारुकाल्याः सिद्धो भवेत् कामदचक्रवर्ती॥ २५-१५॥

वसेन्न सिद्धो गृहीणीसमृद्ध्यां महाविपद्दुःखविशोषिकायाम्।

यदीह काले प्रकरोति वासनां तदा भवेन्मृत्युरतीव निश्चितम्॥ २५-१६॥

कृपावलोक्यं वदनारविन्दं तदैव हे नाथ ममैव चेद्यदि।

सदैव यः साधुगणाश्रितो नरो ध्यात्वा निगूढमतिभागगद्गतः ॥ २५-१७ ॥

स एव साधुः प्रकृतेर्गुणाश्रितः कृती वशी वेदपुराणवक्ता ।

सत्त्वं महाकाल इतीह चाहं प्रणिश्चयं ते कथितं श्रिये मया ॥ २५-१८ ॥

गुणेन भक्तेन्द्रगणाधिकानां साक्षात् फलं योगजपाख्यसङ्गतिम् ।

अष्टाङ्गभेदेन शृणुष्व कामपेरमाय भावाय जयाय वक्ष्ये ॥ २५-१९ ॥

मायादिकं यः प्रथमं वशं नयेत् स एव योगी जगतां प्रतिष्ठितः ।

रविप्रकारं यमवासनावशे शृणुष्व तं कालवशार्थकेवलम् ॥ २५-२० ॥

सर्वत्र कामादिकमाशु जित्वा जेतुं समर्थो यमकर्मसाधकः ।

कामं तथा क्रोधमतीव लोभं मोहं मदं मात्सरितं सुदुष्टकृतम् ॥ २५-२१ ॥

अतो मया द्वादश शब्द घातकं वशं समाकृत्य महेन्द्रतुल्यम् ।

सर्वत्र वायोर्वशकारणाय करोति योगी सचलान्यथा भवेत् ॥ २५-२२ ॥

अहिंसनं सत्यसुवाक्यसुप्रियमस्तेयभावं कुरुते वसिष्ठवत् ।

सुब्रह्मचर्यं सुदृढार्ज्जवं सदा क्षमाधृतिं सेवसुसूक्ष्मवायुनः ॥ २५-२३ ॥

तथा मिताहारमसंशयं मनः शौचं प्रपञ्चार्थविवर्जनं प्रभो ।

करोति यः साधकचक्रवर्ती वाद्योत्सवाज्ञानविवर्जनं सदा ॥ २५-२४ ॥

वशी यमद्वादशसंख्ययेति करोति चाष्टाङ्गफलार्थसाधनम् ।

वरानना श्रीचरणारविन्दं सत्त्वादशाच्छन्नत्रिनेत्रगोचरम् ॥ २५-२५ ॥

तपश्च सन्तोषमनस्थिरं सदा आस्तिक्यमेवं द्विजदानपूजनम् ।

नितान्तदेवार्चनमेव भक्त्या सिद्धान्तशुद्धश्रवणं च ह्रीर्मतिः ॥ २५-२६ ॥

जपोहुतं तर्पणमेव सेवनं तद्भावनं चेष्टनमेव नित्यम् ।

इतीह शास्त्रे नियमाश्चतुर्दशा भक्तिक्रियामङ्गलसूचनानि ॥ २५-२७ ॥

पूर्वोक्तयोन्यासनमेव सत्यं भेकासनं बद्धमहोत्पलासनम् ।

वीरासनं भद्रसुभकासनं च पूर्वोक्तमेवासनमाशु कुर्यात् ॥ २५-२८ ॥

सर्वाणि तन्त्राणि कृतानि नाथ सूक्ष्माणि नालं वशहेतुना मया ।

तथापि मूढो यदि वायुपानमाहृत्य योनौ भ्रमतीह पातकी ॥ २५-२९ ॥

प्राणानिलानन्दवशेन मत्तो गजेन्द्रगामी पुरुषोत्तमं स्मृतम् ।

तस्यैव सेवानिपुणो भवेद्वशी ब्रह्माण्डलोकं परिपाति यो बली ॥ २५-३० ॥

वदामि देवादिसुरेश्वर प्रभो सूक्ष्मानिलं प्राणवशेन धारयेत् ।

सिद्धो भवेत् साधकचक्रवर्ती सर्वान्तरस्थं परिपश्यति प्रभुम् ॥ २५-३१ ॥

आनन्दभैरव उवाच

वद कान्ते महाब्रह्मज्ञानं सर्वत्र शोभनम् ।

येन वायुवशं कृत्त्वा खेचरो भूभृतां पतिः ॥ २५-३२ ॥

साधको ब्रह्मरूपी स्यात् ब्रह्मज्ञानप्रसादतः ।

ब्रह्मज्ञानात् परं ज्ञानं कुत्रास्ति वद सुन्दरि ॥ २५-३३ ॥

आनन्दभैरवी उवाच

शृणुष्व योगिनां नाथ धर्मज्ञो ब्रह्मसञ्ज्ञक ।

अज्ञानध्वान्तमोहानां निर्मलं ब्रह्मसाधनम् ॥ २५-३४ ॥

ब्रह्मज्ञानसमो धर्मो नान्यधर्मो विधीयते ।

यदि ब्रह्मज्ञानधर्मी स सिद्धो नात्र संशयः ॥ २५-३५ ॥

कोटिकन्याप्रदानेन कोटिजापेन किं फलम् ।

ब्रह्मज्ञानसमो धर्मो नान्यधर्मो विधीयते ॥ २५-३६ ॥

सरोवरसहस्रेण कोटिहेमाचलेन च ।

कोटिब्राह्मणभोज्येन कोटितीर्थेन किं फलम् ॥ २५-३७ ॥

कामरूपे महापीठे साधकैर्लभ्यते यदि ।

ब्रह्मज्ञानसमो धर्मो नान्यधर्मो विधीयते ॥ २५-३८ ॥

ब्रह्मज्ञानं तु द्विविधं प्राणायामजमव्ययम् ।

भक्तिवाक्यं शब्दरसं स्वरूपं ब्रह्मणः पथम् ॥ २५-३९ ॥

प्राणायामं तु द्विविधं सुगर्भञ्च निगर्भकम् ।

जपध्यानं सगर्भं तु तदा युक्तं निगर्भकम् ॥ २५-४० ॥

अव्ययालक्षणाक्रान्तं प्राणायामं परात् परम् ।

ब्रह्मज्ञानेन जानाति साधको विजितेन्द्रियः ॥ २५-४१ ॥

तत्प्रकारद्वयं नाथ मालावृत्तिं जपक्रमम् ।

मालावृत्तिद्वादशकं जपक्रमं तु षोडश ॥ २५-४२ ॥

नासिकायां महादेव लक्षणत्रयमनुत्तमम् ।

पूरकं कुम्भकं तत्र रेचकं देवतात्रयम् ॥ २५-४३ ॥

एतेषामप्यधिष्ठाने ब्रह्मविष्णुशिवाः प्रजाः ।

त्रिवेणी सङ्गमे यान्ति सर्वपापापहारकाः ॥ २५-४४ ॥

ईडा च भारती गङ्गा पिङ्गला यमुना मता ।

ईडापिङ्गलयोर्मध्ये सुषुम्ना च सरस्वती ॥ २५-४५ ॥

त्रिवेणीसङ्गमो यत्र तीर्थराजः स उच्यते ।

त्रिवेणीसङ्गमे वीरश्चालयेत्तान् पुनः पुनः ॥ २५-४६ ॥

सर्वपापाद् विनिर्मुक्तः सिद्धो भवति नान्यथा ।

पुनः पुनः भ्रामयित्वा महातीर्थे निरञ्जने ॥ २५-४७ ॥

वायुरूपं महादेवं सिद्धो भवति नान्यथा ।

चन्द्रसूर्यात्मिकामध्ये वह्निरूपे महोज्ज्वले ॥ २५-४८ ॥

ध्यात्वा कोटि(रवि)करं कुण्डलीकिरणं वशी ।

त्रिवारभ्रमणं वायोरुत्तमाधममध्यमाः ॥ २५-४९ ॥

यत्र यत्र गतो वायुस्तत्र तत्र त्रयं त्रयम् ।

इडादेवी च चन्द्राख्या सूर्याख्या पिङ्गला तथा ॥ २५-५० ॥

सुषुम्ना जननी मुख्या सूक्ष्मा पङ्कजतन्तुवत् ।

सुषुम्ना मध्यदेशे च वज्राख्या नाडिका शुभा ॥ २५-५१ ॥

तत्र सूक्ष्मा चित्रिणी च तत्र श्रीकुण्डलीगतिः ।

तया सङ्ग्राह्य तं नाड्या षट्पद्मं सुमनोहरम् ॥ २५-५२ ॥

ध्यानगम्यापरं ज्ञानं षट्शरं शक्तिसंयुतम् ।

ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः ॥ २५-५३ ॥

ततः परशिवो नाथ षट्शिवाः परिकीतीताः ।

डाकिनी राकिणी शक्तिर्लाकिनी काकिनी तथा ॥ २५-५४ ॥

साकिनी तत्र षट्पद्मे शक्तयः षट्शिवान्विताः ।

मूलाधारं स्वाधिष्ठानं मणिपूरं सुपङ्कजम् ॥ २५-५५ ॥

अनाहतं विशुद्धाख्यमाज्ञाचक्रं महोत्पलम् ।

आज्ञाचक्रादिमध्ये तु चन्द्रं शीतलतेजसम् ॥ २५-५६ ॥

प्रपतन्तं मूलपद्मे तं ध्यात्वा पूरकानिलम् ।

यावत्कालं स्थैर्यगुणं तत्कालं कुम्भकं स्मृतम् ॥ २५-५७ ॥

पिङ्गलायां प्रगच्छन्तं रेचकं तं वशं नयेत् ।

अङ्गुष्ठैकपर्वणा च दक्षनासापुटं वशी ॥ २५-५८ ॥

धृत्वा षोडशवारेण प्रणवेन जपं चरेत् ।

एतत्पूरकमाकृत्य कुर्यात्कुम्भकमद्भुतम् ॥ २५-५९ ॥

चतुःषष्टिप्रणवेन जपं ध्यानं समाचरेत् ।

कुम्भकानन्तरं नाथ रेचकं कारयेद् बुधः ॥ २५-६० ॥

द्वात्रिंशद्वारजापेन मूलेन प्रणवेन वा ।

द्विनासिकापुटं बद्ध्वा कुम्भकं सर्वसिद्धिदम् ॥ २५-६१ ॥

कनिष्ठानामिकाभ्यां तु वाममङ्गुष्ठदक्षिणम् ।

पुनर्दक्षिणनासागेर वायुमापूरयेद् बुधः ॥ २५-६२ ॥

मनुषोडशजापेन कुम्भयेत् पूर्ववत्ततः ।

ततो वामे रेचकञ्च द्वात्रिंशत्प्रणवेन तु ॥ २५-६३ ॥

पुनर्वामेन सम्पूर्य षोडशप्रणवेन तु ।

पुनर्दक्षिणनासाग्रे द्वादशाङ्गुलमानतः ॥ २५-६४ ॥

कुम्भयित्वा रेचयेद्यः सर्वत्र पूर्ववत् प्रभो ।

प्राणायामत्रयेणैव प्राणायामैकमुत्तमम् ॥ २५-६५ ॥

द्विवारं मध्यमं प्रोक्तं मध्यमं चैकवारकम् ।

त्रिकालं कारयेद्यत्नात् अनन्तफलसिद्धये ॥ २५-६६ ॥

प्रातर्मध्याह्नकाले च सायह्ने नियतः शुचिः ।

जपध्यानादिभिर्मु(र्यु)क्तं सगर्भं यः करोति हि ॥ २५-६७ ॥

मासात् सल्लक्षणं प्राप्य षण्मासे पवनासनः ।

तालुमूले समारोप्य जिह्वाग्रं योगसिद्धये ॥ २५-६८ ॥

त्रिकाले सिद्धिमाप्नोति प्राणायामेन षोडश ।

सदाभ्यासी वशीभूत्त्वा पवनं जनयेत् पुमान् ॥ २५-६९ ॥

षण्मासाभ्यन्तरे सिद्धिरिति योगार्थनिर्णयः ।

योगेन लभ्यते सर्वं योगाधीनमिदं जगत् ॥ २५-७० ॥

तस्माद् योगं परं कार्यं यदा योगी तदा सुखी ।

बिना योगं न सिद्धेऽपि कुण्डली परदेवता ॥ २५-७१ ॥

अथ योगं सदा कुर्यात् ईश्वरीपाददर्शनात् ।

योगयोगाद् भवेन्मोक्ष इति योगार्थनिर्णयः ॥ २५-७२ ॥

मन्त्रसिद्धीच्छुको यो वा सैव योगं सदाभ्यसेत् ।

मात्रावृत्तिं प्रवक्ष्यामि काकचञ्चुपुटं तथा ॥ २५-७३ ॥

सूक्ष्मवायु भक्षणं तत् चन्द्रमण्डलचालनम् ।

त्र्यावृत्तिश्चैव विविधं तन्मध्ये उत्तमं त्रयम् ॥ २५-७४ ॥

वर्णं सचन्दं संयुक्तं मूलं त्र्यक्षरमेव वा ।

जानुजङ्घामध्यदेशे तत्तत्सर्वासनस्थितः ॥ २५-७५ ॥

वामहस्ततालुमूलं भ्रामयेद् द्वादशक्रमात् ।

द्वादशक्रमशः कुर्यात् प्राणायामं हि पूर्ववत्॥ २५-७६॥

मात्रावृत्तिक्रमेणैव जपमष्टसहस्रकम्।

प्राणायामद्वादशैकैर्भवेत्तदष्टसहस्रकम्।

कृत्वा सिद्धीश्वरो नाम निष्पापी चैकमासतः॥ २५-७७॥

त्रिसन्ध्यं कारयेद्यत्नाद् ब्रह्मज्ञानी निरञ्जनः।

भवतीति न सन्देहः सदाभ्यासी हि योगिराट्॥ २५-७८॥

योगाभ्यासाद् भवेन्मुक्तो योगाभ्यासात् कुलेश्वरः।

योगाभ्यासाच्च संन्यासी ब्रह्मज्ञानी निरामयः॥ २५-७९॥

सदाभ्यासाद् भवेद्योगी सदाभ्यासात् परन्तपः।

सदाभ्यासात् पापमुक्तो विधिविद्याशकृत् शकृत्॥ २५-८०॥

काकचञ्चुपुटं कृत्वा पिबेद्वायुमहनीशम्।

सूक्ष्मवायुक्रमेणैव सिद्धो भवति योगिराट्॥ २५-८१॥

बद्धपद्मासनं कृत्वा योगिमुद्रां विभाव्य च।

मूले सम्पूरयेद् वायुं काकचञ्चुपुटेन तु॥ २५-८२॥

मूलमाकुञ्च्य सर्वत्र प्राणायामे मनोरमे।

प्रबोधयेत् कुण्डलिनीं चैतन्यां चित्स्वरूपिणीम्॥ २५-८३॥

ओष्ठाधरकाकतुलं दन्ते दन्ताः प्रगाढकम्।

बद्ध्वा वा यद् यजेद् योगी जिह्वां नैव प्रसारयेत्॥ २५-८४॥

राजदन्तयुगं नाथ न स्पृशेज्जिह्वया सुधीः।

काकचञ्चुपुटं कृत्वा बद्ध्वा वीरासने स्थितः॥ २५-८५॥

तालुजिह्वामूलदेशे चान्यजिह्वां प्रयोजयेत्।

तदुद्भूतामृतरसं काकचञ्चुपुटे पिबेत्॥ २५-८६॥

यः काकचञ्चुपुटके सूक्ष्मवायुप्रवेशनम्।

करोति स्तम्भनं योगी सोऽमरो भवति ध्रुवम्॥ २५-८७॥

एतद्योगप्रसादेन जीवन्मुक्तस्तु साधकः।

जराव्याधिमहापीडारहितो भवति क्षणात्॥ २५-८८॥

अथवा मात्रया कुर्यात् षोडशस्वरसम्पुटम्।

स्वमन्त्रं प्रणवं वापि जप्त्वा योगी भवेन्नरः॥ २५-८९॥

अथवा वर्णमालाभिः पुटितं मूलमन्त्रकम्।

मालासंख्याक्रमेणैव जप्त्वा कालवशं नयेत्॥ २५-९०॥

वदने नोच्चरेद्वर्णं वाञ्छाफलसमृद्धये।

केवल जिह्वया जप्यं कामनाफलसिद्धये॥ २५-९१॥

नाभौ सूर्यो वह्निरूपी ललाटे चन्द्रमास्तथा।

अग्निशिखास्पर्शनेन गलितं चन्द्रमण्डलम्॥ २५-९२॥

तत्परामृतधाराभिः दीप्तिमाप्नोति भास्करः।

सन्तुष्टः पाति सततं पूरकेण च योगिनाम्॥ २५-९३॥

ततः पूरकयोगेन अमृतं श्रावयेत् सुधीः।

कुर्यात्प्रज्वलितं वह्निं रेचकेन वराग्निना॥ २५-९४॥

अथ मौनजपं कृत्वा ततः सूक्ष्मानिलं मुदा।

सहस्रारे गुरुं ध्यात्वा योगी भवति भावकः॥ २५-९५॥

प्राणवायुस्थिरो यावत् तावन्मृत्युभयं कुतः।

ऊर्ध्वरेता भवेद्यावत्तावत्कालभयं कुतः॥ २५-९६॥

यावद्बिन्दुः स्थितो देहे विधुरूपी सुनिर्मलः।

सदागलत्सुधाव्याप्तस्तावन्मृत्युभयं कुतः॥ २५-९७॥

आनन्दभैरव उवाच

वद कान्ते कुलानन्दरसिके ज्ञानरूपिणि।

सर्वतेजोऽग्रदेवेन येन सिद्धो भवेन्नरः॥ २५-९८॥

महामृता खेचरी च सर्वतत्त्वस्वरूपिणी।

कीदृशी शाङ्करीविद्या श्रोतुमिच्छामि तत्क्रियाम्॥ २५-९९॥

अध्यात्मविद्यायोगेशी कीदृशी भवितव्यता।

कीदृशी परमा देवी तत्प्रकारं वदस्व मे॥ २५-१००॥

आनन्दभैरवी उवाच

यस्य नाथ मनस्थैर्यं महासत्त्वे सुनिर्मले।

भक्त्या सम्भावनं यत्र विनावलम्बनं प्रभो॥ २५-१०१॥

यस्या मनश्चित्तवशं स्वमिन्द्रिय।

स्थिरा स्वदृष्टिर्जगदीश्वरीपदे।

न खेन्दुशोभे च विनावलोकन।

वायुः स्थिरो यस्य बिना निरोधनम्॥ २५-१०२॥

त एव मुद्रा विचरन्ति खेचरी पापाद्विमुक्ताः प्रपिबन्ति वायुम्।

यथा हि बालस्य च तस्य वेष्टी निद्राविहीनाः प्रतियान्ति निद्राम्॥ २५-१०३॥

पथापथज्ञानविवजीता ये धर्मार्थकामाद्धि विहीनमानसाः।

विनावलम्बं जगतामधीश्वर एषैव मुद्रा विचरन्ति शाङ्करी॥ २५-१०४॥

ज्ञाने साध्यात्मविद्यार्थं जानाति कुलनायकम्।

अध्याज्ञाचक्रपद्मस्थं शिवात्मानं सुविद्यया॥ २५-१०५॥

अध्यात्मज्ञानमात्रेण सिद्धो योगी न संशयः।

षट्चक्रभेदको यो हि अध्यात्मज्ञः स उच्यते॥ २५-१०६॥

अध्यात्मशास्त्रसङ्केतमात्मना मण्डितं शिवम्।

कोटिचन्द्राकृतिं शान्तिं यो जानाति षडम्बुधे॥ २५-१०७॥

स ज्ञानी सैव योगी स्यात् सैव देवो महेश्वरः।

स मां जानाति हे कान्त विस्मयो नास्ति शङ्कर॥ २५-१०८॥

मम सर्वात्मकं रूपं जगत्स्थावरजङ्गमम्।

सृष्टिस्थितिप्रलयगं यो जानाति स योगिराट्॥ २५-१०९॥

अध्यात्मविद्यां विज्ञाप्य नानाशास्त्रं प्रकाशितम्।

तच्छास्त्रजालयुग्मा ये तेऽध्यात्मज्ञाः कथं नराः॥ २५-११०॥

त्रिदण्डी स्यात्सदाभक्तो वेदाभ्यासपरः कृती।

वेदादुद्भवशास्त्राणि त्यक्त्वा मां भावयेद्यदि॥ २५-१११॥

वेदाभ्यासं समाकृत्य नानाशास्त्रार्थनिर्णयम्।

समुत्पन्नां महाशक्तिं समालोक्य भजेद्यतिः॥ २५-११२॥

सर्वत्र व्यापिकां शक्तिं कामरूपां निराश्रयाम्।

व्यक्ताव्यक्तां स्थिरपदां वायवीं मां भजेद्यतिः॥ २५-११३॥

यस्या आनन्दमतुलं ज्ञानं यस्य फलाफलम् ।

योगिनां निश्चयज्ञानमेकमेव न संशयः ॥ २५-११४ ॥

यस्याः प्रभावमात्रेण तत्त्वचिन्तापरो नरः ।

तामेव परमां देवीं सर्पराजसु कुण्डलीम् ॥ २५-११५ ॥

तामेव वायवीं शक्तिं सूक्ष्मरूपां स्थिराशयाम् ।

आनन्दरसिकां गौरीं ध्यायेत् श्वासनिवासिनीम् ॥ २५-११६ ॥

आनन्दं ब्रह्मणो रूपं तत्त्वदेहे व्यवस्थितम् ।

तस्याभिव्यञ्जकं द्रव्यं योगिभिः परिपीयते ॥ २५-११७ ॥

तद्द्रव्यस्थां महादेवीं नीलोत्पलदलप्रभाम् ।

मानवीं परमां देवीमष्टादशभुजैर्युताम् ॥ २५-११८ ॥

कुण्डलीं चेतनाकान्तिं चैतन्यां परदेवताम् ।

आनन्दभैरवीं नित्यां घोरहासां भयानकाम् ॥ २५-११९ ॥

तामेव परमां देवीं सर्ववायुवशङ्करीम् ।

मदिरासिन्धुसम्भूतां मत्तां रौद्रीं वराभयाम् ॥ २५-१२० ॥

योगिनीं योगजननीं ज्ञानिनां मोहिनीसमाम् ।

सर्वभूतसर्वपक्षस्थितिरूपां महोज्ज्वलाम् ॥ २५-१२१ ॥

षट्चक्रभेदिकां सिद्धिं तासां नित्यां मतिस्थिताम् ।

विमलां निर्मलां ध्यात्त्वा योगी मूलाम्बुजे यजेत् ॥ २५-१२२ ॥

एतत्पटलपाठे तु पापमुक्तो विभाकरः ।

यथोद्र्ध्वरेता धर्मज्ञो विचरेत् ज्ञानसिद्धये ॥ २५-१२३ ॥

एतत्क्रियादर्शनेन ज्ञानी भवति साधकः ।

ज्ञानादेव हि मोक्षः स्यान्मोक्षः समाधिसाधनः ॥ २५-१२४ ॥

यदुद्धरति वायुश्च धारणाशक्तिरेव च ।

तन्मन्त्रं वर्द्धयित्वा प्राणायामं समाचरेत् ॥ २५-१२५ ॥

प्राणायामात् परं नास्ति पापराशिक्षयाय च ।

सर्वपापक्षये याते किन्न सिद्ध्यति भूतले ॥ २५-१२६ ॥

प्राणवायुं महोग्रं तु महत्तेजोमयं परम् ।

प्राणायामेन जित्वा च योगी मत्तगजं यथा ॥ २५-१२७ ॥

प्राणायामं विना नाथ कुत्र सिद्धो भवेन्नरः ।

सर्वसिद्धिक्रियासारं प्राणायामं परं स्मृतम् ॥ २५-१२८ ॥

प्राणायामं त्रिवेणीस्थं यः करोति मुहुर्मुहुः ।

तस्याष्टाङ्गसमृद्धिः स्याद्योगिनां योगवल्लभः ॥ २५-१२९ ॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने भावनिर्णये पाशवकल्पे षट्चक्रसारसङ्केते सिद्धमन्त्रप्रकरणे प्राणायामोल्लासे भैरवीभैरवसंवादे पञ्चविंशः पटलः ॥ २५ ॥

अथ षडविंशः पटलः

आनन्दभैरवी उवाच

शृणु प्राणेश सकलं प्राणायामनिरूपणम् ।

प्राणायामे जपं ध्यानं तत्त्वयुक्तं वदामि तत्॥ २६-१ ॥

प्रकारयेयमुल्लासं प्राणायामेषु शोभितम्।

देवताविधिविष्णवीशास्ते तु मध्यममध्यमाः॥ २६-२ ॥

रजस्तमोगुणं नाथ सत्त्वे संस्थाप्य यत्नतः।

कामक्रोधादिकं त्यक्त्वा योगी भवति योगवित्॥ २६-३ ॥

रजोगुणं नृपाणां तु तमोगुणमतीव च।

अधिकं तु पशूनां हि साधूनां सत्त्वमेव च॥ २६-४ ॥

सत्त्वं विष्णुं वेदरूपं निर्मलं द्वैतवर्जितम्।

आत्मोपलब्धिविषयं त्रिमूर्तीमूलमाश्रयेत्॥ २६-५ ॥

सत्त्वगुणाश्रयादेव निष्पापी सर्वसिद्धिभाक्।

जितेन्द्रियो भवेत् शीघ्रं ब्रह्मचारिव्रतेन च॥ २६-६ ॥

प्राणवायुवशेनापि वशीभूताश्चराचराः।

तस्यैव कारणे नाथ जपं ध्यानं समाचरेत्॥ २६-७ ॥

वक्ष्यामि तत्प्रकारं जपध्यानं विधिद्वयम्।

एतत्करणमात्रेण योगी स्यान्नात्र संशयः॥ २६-८ ॥

जपं च त्रिविधं प्रोक्तं व्यक्ताव्यक्तातिसूक्ष्मगम्।

व्यक्तं वाचिकमुपांशुमव्यक्तं सूक्ष्ममानसम्॥ २६-९ ॥

तत्र ध्यानं प्रवक्ष्यामि प्रकारमेकविंशतिम्।

ध्यानेन जपसिद्धिः स्यात् जपात् सिद्धिर्न संशयः॥ २६-१० ॥

आदौ विद्यामहादेवीध्यानं वक्ष्यामि शङ्कर।

एषा देवी कुण्डलिनी यस्या मूलाम्बुजे मनः ॥ २६-११ ॥

मनः करोति सर्वाणि धर्मकर्माणि सर्वदा ।

यत्र गच्छति स श्रीमान् तत्र वायुश्च गच्छति ॥ २६-१२ ॥

अतो मूले समारोप्य मानसं वायुरूपिणम् ।

द्वादशाङ्गुलकं बाह्ये नासाग्रे चावधारयेत् ॥ २६-१३ ॥

मनःस्थं रूपमाकल्प्य मनोधर्मं मुहुर्मुहुः ।

मनस्तत् सदृशं याति गतिर्यत्र सदा भवेत् ॥ २६-१४ ॥

मनोविकाररूपं तु एकमेव न संशयः ।

अज्ञानिनां हि देवेश ब्रह्मणो रूपकल्पना ॥ २६-१५ ॥

अव्यक्तं ब्रह्मरूपं हि तच्च देहे व्यवस्थितम् ।

धर्मकर्मविनिर्मुक्तं मनोगम्यं भजेद्यतिः ॥ २६-१६ ॥

पद्मं चतुर्दलं मूले स्वर्णवर्णं मनोहरम् ।

तत्कणीकामध्यदेशे स्वयम्भूवेष्टितां भजेत् ॥ २६-१७ ॥

कोटिसूर्यप्रतीकाशां सुषुम्नारन्ध्रगामिनीम् ।

ऊद्र्ध्वं गलत्सुधाधारामण्डितां कुण्डलीं भजेत् ॥ २६-१८ ॥

स्वयम्भूलिङ्ग परमं ज्ञानं चिरविवर्द्धनम् ।

सूक्ष्मातिसूक्ष्ममाकाशं कुण्डलीजडितं भजेत् ॥ २६-१९ ॥

पूर्वोक्तयोगपटलं तत्र मूले विभावयेत् ।

कुण्डलीध्यानमात्रेण षट्चक्रभेदको भवेत् ॥ २६-२० ॥

ध्यायेद् देवीं कुण्डलिनीं परापरगुरुप्रियाम् ।

आनन्दां भुवि मध्यस्थां योगिनीं योगमातरम्॥ २६-२१ ॥

कोटिविद्युल्लताभासां सूक्ष्मातिसूक्ष्मवर्त्मगाम्।

ऊर्द्ध्वमार्गव्याचलन्तीं प्रथमारुणविग्रहाम्॥ २६-२२ ॥

प्रथमोद्गमने कौलीं ज्ञानमार्गप्रकाशिकाम्।

प्रति प्रयाणे प्रत्यक्षाममृतव्याप्तविग्रहाम्॥ २६-२३ ॥

धर्मोदयां भानुमतीं जगत्स्थावरजङ्गमाम्।

सर्वान्तस्थां निवीकल्पाञ्चैतन्यानन्दनिर्मलाम्॥ २६-२४ ॥

आकाशवाहिनीं नित्यां सर्ववर्णस्वरूपिणीम्।

महाकुण्डलिनीं ध्येयां ब्रह्मविष्णुशिवादिभिः॥ २६-२५ ॥

प्रणवान्तःस्थितां शुद्धांशुद्धज्ञानाश्रयां शिवाम्।

कुलकुण्डलिनीं सिद्धिं चन्द्रमण्डलभेदिनीम्॥ २६-२६ ॥

मूलाम्भोजस्थितामाद्यां जगद्योनिं जगत्प्रियाम्।

स्वाधिष्ठानादिपद्मस्थां सर्वशक्तिमयीं पराम्॥ २६-२७ ॥

आत्मविद्यां शिवानन्दां पीठस्थामतिसुन्दरीम्।

सर्पाकृतिं रक्तवर्णां सर्वरूपविमोहिनीम्॥ २६-२८ ॥

कामिनीं कामरूपस्थां मातृकामात्मदायिनीम्।

कुलमार्गानन्दमयीं कालीं कुण्डलिनीं भजेत्॥ २६-२९ ॥

इति ध्यात्वा मूलपद्मे निर्मले योगसाधने।

धर्मोदये ज्ञानरूपीं साधयेत् परकुण्डलीम्॥ २६-३० ॥

कुण्डलीभावनादेव खेचराद्यष्टसिद्धिभाक्।

ईश्वरत्वमवाप्नोति साधको भूपतिर्भवेत् ॥ २६-३१ ॥

योगाभ्यासे भावसिद्धौ स्मृतो वायुर्महोदयः ।

प्राणानामादुनीवार्यो यत्नेन तं प्रचालयेत् ॥ २६-३२ ॥

प्रतिक्षणं समाकृष्य मूलपद्मस्थ कुण्डलीम् ।

तदा प्राणमहावायुर्वशी भवति निश्चितम् ॥ २६-३३ ॥

ये देवाश्चैव ब्रह्माण्डे क्षेत्रे पीठे सुतीर्थके ।

शिलायां शून्यगे नाथ सिद्धाः स्युः प्राणवायुना ॥ २६-३४ ॥

ब्रह्माण्डे यानि संसन्ति तानि सन्ति कलेवरे ।

ते सर्वे प्राणसंलग्नाः प्राणातीतं निरञ्जनम् ॥ २६-३५ ॥

यावत्प्राणः स्थितो देहे तावन्मृत्युभयं कुतः ।

गते प्राणे समायान्ति देवताश्चेतनास्थिताः ॥ २६-३६ ॥

सर्वेषां मूलभूता सा कुण्डली भूतदेवता ।

वायुरूपा पाति सर्वमानन्दचेतनामयी ॥ २६-३७ ॥

जगतां चेतनारूपी कुण्डली योगदेवता ।

आत्ममनःसमायुक्ता ददाति मोक्षमेव सा ॥ २६-३८ ॥

अतस्तां भावयेन्मन्त्री भावज्ञानप्रसिद्धये ।

भवानीं भोगमोक्षस्थां यदि योगमिहेच्छसि ॥ २६-३९ ॥

वायुरोधनकाले च कुण्डली चेतनामयी ।

ब्रह्मरन्ध्रावधि ध्येया योगिनं पाति कामिनी ॥ २६-४० ॥

वायुरूपां परां देवीं नित्यां योगेश्वरी जयाम् ।

निर्विकल्पां त्रिकोणस्थां सदा ध्यायेत् कुलेश्वरीम् ॥ २६-४१ ॥

अनन्तां कोटिसूर्याभां ब्रह्मविष्णुशिवात्मिकाम् ।

अनन्तज्ञाननिलयां यां भजन्ति मुमुक्षवः ॥ २६-४२ ॥

अज्ञानतिमिरे घोरे सा लग्ना मूढचेतसि ।

सुप्ता सर्पासना मौला पाति साधकमीश्वरी ॥ २६-४३ ॥

ईश्वरीं सर्वभूतानां ज्ञानाज्ञानप्रकाशिनीम् ।

धर्माधर्मफलव्याप्तां करुणामयविग्रहाम् ॥ २६-४४ ॥

नित्यां ध्यायन्ति योगीन्द्राः काञ्चनाभाः कलिस्थिताः ।

कुलकुण्डलिनीं देवीं चैतन्यानन्दनिर्भराम् ॥ २६-४५ ॥

ककारादिमान्तवर्णां मालाविद्युल्लतावृताम् ।

हेमालङ्कारभूषाङ्गीं ये मां सम्भावयन्ति ते ॥ २६-४६ ॥

ये वै कुण्डलिनीं विद्यां कुलमार्गप्रकाशिनीम् ।

ध्यायन्ति वर्षसंयुक्तास्ते मुक्ता नात्र संशयः ॥ २६-४७ ॥

ये मुक्ता पापराशेस्तु धर्मज्ञानसुमानसाः ।

तेऽवश्यं ध्यानमाकुर्वन् स्तुवन्ति कुण्डलीं पराम् ॥ २६-४८ ॥

कुलकुण्डलिनीध्यानं भोगमोक्षप्रदायकम् ।

यः करोति महायोगी भूतले नात्र संशयः ॥ २६-४९ ॥

त्रिविधं कुण्डलिनीध्यानं दिव्यवीरपशुक्रमम् ।

पशुभावादियोगेन सिद्धो भवति योगिराट् ॥ २६-५० ॥

दिव्यध्यानं प्रवक्ष्यामि सामान्यानन्तरं प्रभो ।

आदौ सामान्यमाकृत्य दिव्यादीन् कारयेत्ततः ॥ २६-५१ ॥

कोटिचन्द्रप्रतीकाशां तेजोबिम्बां निराकुलाम् ।

ज्वालामालासहस्राढ्यां कालानलशतोपमाम् ॥ २६-५२ ॥

द्रंष्ट्रकरालदुर्धर्षां जटामण्डलमण्डिताम् ।

घोररूपां महारौद्रीं सहस्रकोटिचञ्चलाम् ॥ २६-५३ ॥

कोटिचन्द्रसमस्निग्धां सर्वत्रस्थां भयानकाम् ।

अनन्तसृष्टिसंहारपालनोन्मत्तमानसाम् ॥ २६-५४ ॥

सर्वव्यापकरूपाद्यामादिनीलाकलेवराम् ।

अनन्तसृष्टिनिलयां ध्यायन्ति तां मुमुक्षवः ॥ २६-५५ ॥

वीरध्यानं प्रवक्ष्यामि यत्कृत्वा वीरवल्लभः ।

वराणां वल्लभो यो हि मुक्तो भोगी स उच्यते ॥ २६-५६ ॥

वीराचारे सत्त्वगुणं निर्मलं दिव्यमुत्तमम् ।

सम्प्राप्य च महावीरो योगी भवति तत्क्षणात् ॥ २६-५७ ॥

वीराचारं बिना नाथ दिव्याचारं न लभ्यते ।

ततो वीराचारधर्मं कृत्वा दिव्यं समाचरेत् ॥ २६-५८ ॥

वीराचारं कोटिफलं वारैकजपसाधनम् ।

कोटिकोटिजन्मपापदुःखनाशं स भक्तकः ॥ २६-५९ ॥

कुलाचारं समाचारं वीराचारं महाफलम् ।

कृत्वा सिद्धिश्च वै ध्यानं कुलध्यानं मदीयकम् ॥ २६-६० ॥

कुलकुण्डलिनीं देवीं मां ध्यात्वा पूजयन्ति ये ।

मूलपद्मे महावीरो ध्यात्वा भवति योगिराट् ॥ २६-६१ ॥

कालीं कौलां कुलेशीं कलकलकलिजध्यानकालानलार्कां ।

कल्योल्कां कालकवलां किलिकिलिकलिकां केलिलावण्यलीलाम् ।

सूक्ष्माख्यां संक्षयाख्यां क्षयकुलकमले सूक्ष्मतेजोमयीन्ता ।

माद्यन्तस्थां भजन्ति प्रणतगतजनाः सुन्दरीं चारुवर्णाम् ॥ २६-६२ ॥

अष्टादशभुजैर्युक्तां नीलेन्दीवरलोचनाम् ।

मदिरासागरोत्पन्नां चन्द्रसूर्याग्निरूपिणीम् ॥ २६-६३ ॥

चन्द्रसूर्याग्निमध्यस्थां सुन्दरीं वरदायिनीम् ।

कामिनीं कोटिकन्दर्पदर्पान्तकपतिप्रियाम् ॥ २६-६४ ॥

आनन्दभैरवाक्रान्तामानन्दभैरवीं पराम् ।

भोगिनीं कोटिशीतांशुगलद्गात्रमनोहराम् ॥ २६-६५ ॥

कोटिविद्युल्लताकारां सदसद्व्यक्तिवजीताम् ।

ज्ञानचैतन्यनिरतां तां वीरा भावयन्ति हि ॥ २६-६६ ॥

अस्या ध्यानप्रसादेन त्वं तुष्टो भैरवः स्वयम् ।

अहं च तुष्टा संसारे सर्वे तुष्टा न संशयः ॥ २६-६७ ॥

प्राणायामान् स करोति साधकः स्थिरमानसः ।

ध्यात्वा देवीं मूलपद्मे वीरो योगमवाप्नुयात् ॥ २६-६८ ॥

वीरभावं सूक्ष्मवायुधारणेन महेश्वर ।

साधको भुवि जानाति स्वमृत्युं जन्मसङ्कटम् ॥ २६-६९ ॥

मासादाकर्षणीसिद्धिर्वाक्सिद्धिश्च द्विमासतः ।

मासत्रयेण संयोगाज्जायते देववल्लभः ॥ २६-७० ॥

एवञ्चतुष्टये मासि भवेद्दकपालगोचरः ।

पञ्चमे पञ्चबाणः स्यात् षष्ठे रुद्रो न संशयः ॥ २६-७१ ॥

वीरभावस्य माहात्म्यं कोटिजन्मफलेन च ।

जानाति साधकश्रेष्ठो देवीभक्तः स योगिराट् ॥ २६-७२ ॥

वीराचारं महाधर्मं चित्तस्थैर्यस्य कारणम् ।

यस्य प्रसादमात्रेण दिव्यभावाश्रितो भवेत् ॥ २६-७३ ॥

स्वयं रुद्रो महायोगी महाविष्णुः कृपानिधिः ।

महावीरः स एवात्मा मोक्षभोगी न संशयः ॥ २६-७४ ॥

अथ नाथ महावीर भावस्नानं कुलाश्रयम् ।

यत्कृत्वा शुचिरेव स्यात् शुचिश्चेत् किं न सिद्ध्यति ॥ २६-७५ ॥

कुलस्नानं महास्नानं योगिनामतिदुर्लभम् ।

कृत्वा जितेन्द्रियो वीरः कुलध्यानं समाचरेत् ॥ २६-७६ ॥

स्नानं तु त्रिविधं प्रोक्तं मज्जनं गात्रमार्जनम् ।

मन्त्रज्ञानादिभिः स्नानमुत्तमं परिकीतीतम् ॥ २६-७७ ॥

तत्प्रकारं शृणु प्राणवल्लभ प्रियकारक ।

स्नानमात्रेण मुक्तः स्यात् पापशैलादनन्तगः ॥ २६-७८ ॥

स्नानञ्च विमले तीर्थे हृदयाम्भोजपुष्करे ।

बिन्दुतीर्थेऽथवा स्नायात् सर्वजन्माघमुक्तये ॥ २६-७९ ॥

इडासुषुम्ने शिवतीर्थकेऽस्मिन् ज्ञानाम्बुपूर्णे वहतः शरीरे ।

ब्रह्मादिभिः स्नाति तयोस्तु नीरे किं तस्य गाङ्गैरपि पुष्करैर्वा ॥ २६-८० ॥

इडामलस्थाननिवासिनी या सूर्यात्मिकायां यमुना प्रवाहिका ।

तथा सुषुम्ना मलदेशगामिनी सरस्वती मज्जति भक्षणार्थकम् ॥ २६-८१ ॥

मनोगतस्नानपरो मनुष्यो मन्त्रक्रियायोग विशिष्ट तत्त्ववित् ।

महीस्थतीर्थे विमले जले मुदा मूलाम्बुजे स्नाति च मुक्तिभाग् भवेत् ॥ २६-८२ ॥

सर्वादितीर्थे सुरतीर्थपावनी गङ्गा महासत्वविनिर्गता सती ।

करोति पापक्षयमेव मुक्तिं ददाति साक्षादतुलार्थपुण्यदा ॥ २६-८३ ॥

सर्गस्थं यावदातीर्थं स्वाधिष्ठाने सुपङ्कजे ।

मनो निधाय योगीन्द्रः स्नाति गङ्गाजले तथा ॥ २६-८४ ॥

मणिपूरे देवतीर्थे पञ्चकुण्डं सरोवरम् ।

एतत् श्रीकामनातीर्थं स्नाति यो मुक्तिमिच्छति ॥ २६-८५ ॥

अनाहते सर्वतीर्थं सूर्यमण्डलमध्यगम् ।

विभवः सर्वतीर्थानि स्नाति यो मुक्तिमिच्छति ॥ २६-८६ ॥

विशुद्धाख्ये महापद्मे अष्टतीर्थं समुद्भवम् ।

कैवल्यमुक्तिदं ध्यात्वा स्नाति वीरो विमुक्तये ॥ २६-८७ ॥

मानसं बिन्दुतीर्थञ्च कालीकुण्डं कलात्मकम् ।

आज्ञाचक्रे सदा ध्यात्वा स्नाति निर्वाणसिद्धये ॥ २६-८८ ॥

एतत् कुले प्रियस्नानं कुर्वन्ति योगिनो मुदा ।

अतो वीराः सत्त्वयुक्ताः सर्वसिद्धियुताः सुराः ॥ २६-८९ ॥

नाना पापं सदा कृत्वा ब्रह्महत्याविनिर्गतम् ।

कृत्वा स्नानं महातीर्थे सिद्धाः स्युरणिमादिगाः ॥ २६-९० ॥

स्नानमात्रेण निष्पापी शक्तः स्याद्वायुसङ्ग्रहे ।

तीर्थानां दर्शनं येषां शक्तो योगी भवेद् ध्रुवम् ॥ २६-९१ ॥

अथ सन्ध्यां महातीर्थे कुलनिष्ठः समाचरेत् ।

कुलरूपां योगविद्यां योगयोगाद् यतीश्वरः ॥ २६-९२ ॥

शिवशक्तौ समायोगो यस्मिन् काले प्रजायते ।

सा सन्ध्या कुलनिष्ठानां समाधिस्थे प्रजायते ॥ २६-९३ ॥

शिवं सूर्यं हृदि ध्यात्वा भालशक्तीन्दुसङ्गमम् ।

सा सन्ध्या कुलनिष्ठानां समाधिस्थे प्रजायते ॥ २६-९४ ॥

अथवेन्दुं शिवं ध्यात्वा हृत्सूर्यशक्तिसङ्गमम् ।

संयोगविद्या सा सन्ध्या समाधिस्थे प्रजायते ॥ २६-९५ ॥

इति सन्ध्या च कथिता ज्ञानरूपा जगन्मयी ।

सा नित्या वायवी शक्तिः छिन्नभिन्ना विनाशनात् ॥ २६-९६ ॥

तत्त्वतीर्थे महादेव तर्पणं यः करोति हि ।

त्रैलोक्यं तपीतं तेन तत्प्रकारं शृणु प्रभो ॥ २६-९७ ॥

मूलाम्भोजे कुण्डलिनीं चन्द्रसूर्याग्निरूपिणीम् ।

समुत्थाप्य कुण्डलिनीं परं बिन्दुं निवेश्य च ॥ २६-९८ ॥

तदुद्भवामृतेनेह तर्पयेद् देहदेवताम् ।

कुलेश्वरीमादिविद्यां स सिद्धो भवति ध्रुवम् ॥ २६-९९ ॥

चन्द्रसूर्यमहावह्निसम्भूतामृतधारया ।

तर्पयेत् कौलिनीं नित्याममृताक्तां विभावयेत् ॥ २६-१०० ॥

एतत्परपदा काली स्त्रीविद्यादिप्रतर्पणम् ।

कृत्वा योगी भवेदेव सत्यं सत्यं कुलेश्वर ॥ २६-१०१ ॥

मूले पात्रं चान्द्रमसं ललाटेन्द्वमृते न च ।

सम्पूर्य ज्ञानमार्गेण तर्पयेत्तेन खेचरीम् ॥ २६-१०२ ॥

सुधासिन्धोर्मध्यदेशे कुलकन्यां प्रतर्पयेत् ।

मदिरामृतधाराभिः सिद्धो भवति योगिराट् ॥ २६-१०३ ॥

तत्र तीर्थे महाज्ञानी ध्यानं कुर्यात् प्रयत्नतः ।

तद्गर्भमभ्यसेन्नित्यं ध्यानमेतद्धि योगिनाम् ॥ २६-१०४ ॥

स्वीयां कन्यां भोजयेद्वै परकीयामथापि वा ।

परितोषाय सर्वेषां युवतीं वा प्रतोषयेत् ॥ २६-१०५ ॥

स्तोत्रेणानेन दिव्येन तोषयेत् शङ्कर प्रभो ।

सहस्रनाम्ना कौमार्याः स्तुत्वा देवीं प्रतोषयेत् ॥ २६-१०६ ॥

यः करोति पूर्णयज्ञं पञ्चाङ्गं जपकर्मणि ।

पुरश्चरणकार्यं च प्राणायामेन कारयेत् ॥ २६-१०७ ॥

प्राणवायुः स्थिरो गेहे पूजाग्रहणहेतुना ।

येऽन्तरस्थं न कुर्वन्ति तेषां सिद्धिः कुतः स्थिता ॥ २६-१०८ ॥

अतोऽन्तर्यजनेनैव कुण्डलीतुष्टमानसा ।

यदि तुष्टा महादेवी तदैव सिद्धिभाक् पुमान् ॥ २६-१०९ ॥

अभिषिच्य जगद्धात्रीं प्रत्यक्षपरदेवताम् ।

मूलाम्भोजात् सहस्रारे पूजयेद् बिन्दुधारया ॥ २६-११० ॥

गलच्चन्द्रामृतोल्लासिधारयासिच्य पार्वतीम् ।

पूजयेत् परया भक्त्या मूलमन्त्रं स्मरन् सुधीः ॥ २६-१११ ॥

अर्च्चयन्विषयैः पुष्पैस्तत्क्षणात्तन्मयो भवेत् ।

न्यासस्तन्मयताबुद्धिः सोऽहंभावेन पूजयेत् ॥ २६-११२ ॥

मन्त्राक्षराणि चिच्छक्तौ प्रोतानि परिभावयेत् ।

तामेव परमे व्योम्नि परमानन्दसंस्थिते ॥ २६-११३ ॥

दर्शयत्यात्मसद्भावं पूजाहोमादिभिर्विना ।

तदन्तर्यजनं ज्ञेयं योगिनां शङ्कर प्रभो ॥ २६-११४ ॥

अन्तरात्मा महात्मा च परमात्मा स उच्यते ।

तस्य स्मरणमात्रेण साधुयोगी भवेन्नरः ॥ २६-११५ ॥

अमायमनहङ्कारमरागममदं तथा ।

अमोहकमदम्भञ्च अनिन्दाक्षोभकौ तथा ॥ २६-११६ ॥

अमात्सर्यमलोभश्च दशपुष्पाणि योगिनाम् ।

अहिंसा परमं पुष्पं पुष्पमिन्द्रियनिग्रहः ॥ २६-११७ ॥

दया पुष्पं क्षमा पुष्पं ज्ञानपुष्पं च पञ्चमम् ।

इत्यष्टसप्तभिः पुष्पैः पूजयेत् परदेवताम् ॥ २६-११८ ॥

अथ होमविधिं वक्ष्ये पुरश्चरणसिद्धये ।

सङ्केतभाषया नाथ कथयामि शृणुष्व तत् ॥ २६-११९ ॥

आत्मानमपरिच्छिन्नं विभाव्य सूक्ष्मवत् स्थितः ।

आत्मत्रयस्वरूपं तु चित्कुण्डं चतुरस्रकम् ॥ २६-१२० ॥

आनन्दमेखलायुक्तं नाभिस्थज्ञानवह्निषु ।

अर्द्धमात्राकृतिर्योनिभूषितं जुहुयात् सुधीः ॥ २६-१२१ ॥

इतिमन्त्रेण तद्वह्नौ सोऽहंभावेन होमयेत् ।

बाह्यनारीविधिं त्यक्त्वा मूलान्तेन स्वतेजसम् ॥ २६-१२२ ॥

नाभिचैतन्यरूपाग्नौ हविषा मनसा स्रुचा ।

ज्ञानप्रदीपिते नित्यमक्षवृत्तिर्जुहोम्यहम् ॥ २६-१२३ ॥

इति प्रथममाहुत्या मूलान्ते सञ्चरेत् क्रियाम् ।

द्वितीयाहुतिदानेन होमं कृत्वा भवेद्वशी ॥ २६-१२४ ॥

धर्माधर्मप्रदीप्ते च आत्माग्नौ मनसा स्रुचा ।

सुषुम्ना वर्त्मना नित्यमक्षवृत्तिं जुहोम्यहम् ॥ २६-१२५ ॥

स्वाहान्तं मन्त्रमुच्चार्य आद्ये मूलं नियोज्य च ।

जुहुयादेकभावेन मूलाम्भोरुहमण्डले ॥ २६-१२६ ॥

चतुर्थे पूर्णहवने एतन्मन्त्रेण कारयेत् ।

एतन्मन्त्रचतुर्थं तु पूर्णविद्याफलप्रदम् ॥ २६-१२७ ॥

अन्तनीरन्तरनिरन्धनमेधमाने ।

मायान्धकारपरिपन्थिनि संविदग्नौ ।

कस्मिंश्चिदद्भुतमरीचिविकासभूमौ

विश्वं जुहोमि वसुधादिशिवावसानम् ॥ २६-१२८ ॥

इत्यन्तर्यजनं कृत्वा साक्षाद् ब्रह्ममयो भवेत् ।

न तस्य पुण्यपापानि जीवन्मुक्तो भवेद् ध्रुवम्॥ २६-१२९॥

ज्ञानिनां योगिनामेव अन्तर्यागो हि सिद्धिदः।

अथान्तः पञ्चमकारयजनं शृणु शङ्कर॥ २६-१३०॥

अन्तर्यजनकाले तु दृढभावेन भावयेत्।

त्वां मां नाथैकतां ध्यात्वा दिवारात्र्यैकतां यथा॥ २६-१३१॥

सुराशक्तिः शिवो मांसं तद्भक्तो भैरवः स्वयम्।

तयोरैक्यसमुत्पन्न आनन्दो मोक्षनिर्णयः॥ २६-१३२॥

आनन्दं ब्रह्मकिरणं देहमध्ये व्यवस्थितम्।

तदभिव्यञ्जकैर्द्रव्यैः कुर्याद् ब्रह्मादितर्पणम्॥ २६-१३३॥

आनन्दं जगतां सारं ब्रह्मरूपं तनुस्थितम्।

तदभिव्यञ्जकं द्रव्यं योगिभिस्तैः प्रपूजयेत्॥ २६-१३४॥

लिङ्गत्रयं च षट्पद्माधारमध्येन्दुभेदकः।

पीठस्थानानि चागत्य महापद्मवनं व्रजेत्॥ २६-१३५॥

मूलाम्भोजो ब्रह्मरन्ध्रं चालयेदसुचालयेत्।

गत्वा पुनः पुनस्तत्र चिच्चन्द्रः परमोदयः॥ २६-१३६॥

चिच्चन्द्रः कुण्डलीशक्तिः सामरस्यमहोदयः।

व्योमपङ्कजनिस्पन्दसुधापानरतो नरः॥ २६-१३७॥

मधुपानमिदं नाथ बाह्ये चाभ्यन्तरे सताम्।

इतरं मद्यपानं तु योगिनां योगघातनात्॥ २६-१३८॥

इतरं तु महापानं भ्रान्तिमिथ्याविवजीतः।

महावीरः सङ्करोति योगाष्टाङ्गसमृद्धये ॥ २६-१३९ ॥

पुण्यापुण्यपशुं हत्वा ज्ञानखड्गेन योगवित् ।

परशिवेन यश्चित्तं नियोजयति साधकः ॥ २६-१४० ॥

मांसाशी स भवेदेव इतरे प्राणिघातकाः ।

शरीरस्थे महावह्नौ दग्धमत्स्यानि पूजयेत् ॥ २६-१४१ ॥

शरीरस्थजलस्थानि इतराण्यशुभानि च ।

महीगतस्निग्धसौम्योद्भवमुद्रामहाबलाः ॥ २६-१४२ ॥

तत्सर्वं ब्रह्मकिरणे आरोप्य तर्पयेत् सुधीः ।

तत्र मुद्राभोजनानि आनन्दवर्द्धकानि च ॥ २६-१४३ ॥

इतराणि च भोगार्थे एतद्धि योगिनां परम् ।

परशक्त्यात्ममिथुनसंयोगानन्दनिर्भराः ॥ २६-१४४ ॥

मुक्तास्ते मैथुनं तत्स्यादितरे स्त्रीनिषेवकाः ।

एतत्पञ्चमकारेण पूजयेत् परनायिकाम् ॥ २६-१४५ ॥

पुरश्चरणगूढार्थसारमन्त्रप्रपूजनम् ।

एतद्योगं सदाभ्यसेद् निद्रालस्यविवजीतः ॥ २६-१४६ ॥

प्राणवायुरयं कुर्यात् कालकारणवारणात् ।

एतत्क्रियां प्राणवशे यः करोति निरन्तरम् ॥ २६-१४७ ॥

तस्य योगसमृद्धिः स्यात् कालसिद्धिमवाप्नुयात् ॥ २६-१४८ ॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने भावनिर्णये सूक्ष्मयोगसिद्ध्यधिकरणे पाशवकल्पे

षट्चक्रसारसङ्केते सिद्धिमन्त्रप्रकरणे भैरवभैरवीसंवादे षड्विंशः पटलः ॥ २६ ॥

अथ सप्तविंशः पटलः

आनन्दभैरव उवाच

विविधानि त्वयोक्तानि योगशास्त्राणि भैरवि ।

सर्वरूपत्वमेवास्या मम कान्ते प्रियंवदे ॥ २७-१ ॥

योगाष्टाङ्गफलान्येव सर्वतत्त्वजलानि च ।

इदानीं श्रोतुमिच्छामि शक्तितत्त्वक्रमेण तु ॥ २७-२ ॥

पूर्वोक्तप्राणवायूनां हरणं वायुधारणम् ।

प्रत्याहारं धारणाख्यं ध्यानं समाधिमावद ॥ २७-२ ॥

आनन्दभैरवी उवाच

शृणु लोकेश वक्ष्यामि प्राणायामफलाफलम् ।

न गृह्णीयाद्विस्तरं तु स्वल्पं नैव तु कुम्भयेत् ॥ २७-४ ॥

शनैः शनैः प्रकर्तव्यं सङ्घातञ्च विवर्जयेत् ।

पूरकाह्लादसिद्धेश्च प्राणायामशतं शतम् ॥ २७-५ ॥

वृद्ध्यै प्राणलक्षणं तु यस्मिन् यस्मिन् दिने गतिः ।

कृष्णपक्षे शुक्लपक्षे तिथित्रिंशत्फलोदयः ॥ २७-६ ॥

शुक्लपक्षे इडायां तु कृष्णपक्षेऽन्यदेव हि ।

कुर्यात् सर्वत्र गमनं सुषुम्ना बहुरूपिणी ॥ २७-७ ॥

तिथित्रयं सितस्यापि प्रतिपदादिसम्भवम् ।

तद्द्वयं दक्षनासायां वायोर्ज्ञेयं महाप्रभो ॥ २७-८ ॥

चतुर्थीं पञ्चमीं षष्ठीं व्याप्योदयति देवता ।

वामनासापुटे ध्येया वायुधारणकर्मणि ॥ २७-९ ॥

सप्तमीमष्टमीञ्चैव नवमीं व्याप्य तिष्ठति ।

वामनासापुटे ध्येया साधकैः कुलपण्डितैः ॥ २७-१० ॥

दशम्येकादशीं चैव द्वादशीं व्याप्य तिष्ठति ।

वायुर्दक्षिणनासाग्रे ध्येयो योगिभिरीश्वरः ॥ २७-११ ॥

त्रयोदशीं व्याप्य वायुः पौर्णमासीं चतुर्दशीम् ।

वामनासापुटे ध्येयः संहारहरणाय च ॥ २७-१२ ॥

कृष्णपक्षफलं वक्ष्ये यज्ज्ञात्वा अमरो भवेत् ।

कालज्ञानी भवेत् शीघ्रं नात्र कार्या विचारणा ॥ २७-१३ ॥

प्रतिपद्द्वितीयामस्य तृतीयामपि तस्य च ।

पिङ्गलायां समावाप्य वायनीःसरते सदा ॥ २७-१४ ॥

चतुर्थीं पञ्चमीं षष्ठीं वामे व्याप्य प्रतिष्ठति ।

सप्तमीमष्टमीं वायुर्नवमीं दक्षिणे ततः ॥ २७-१५ ॥

दशम्येकादशीं वायुर्व्याप्य भ्रमति सर्वदा ।

वामे च दक्षिणेऽन्यानि तिथ्यादीनि सदानिशम् ॥ २७-१६ ॥

यदा एतद्व्यस्तभावं समाप्नोति नरोत्तमः ।

तदैव मरणं रोगं बन्धुनाशं त्रिपक्षके ॥ २७-१७ ॥

भिन्नजन्मतिथिं ज्ञात्वा तस्मिन् काले विरोधयेत् ।

आरभ्य जन्मनाशाय प्राणायामं समाचरेत् ॥ २७-१८ ॥

यदा प्रत्ययभावेन देहं त्यक्त्वा प्रयच्छति ।

तदा निरुध्य श्वसनं कालाग्नौ धारयेदधः ॥ २७-१९ ॥

यावत् स्वस्थानमायाति तावत्कालं समभ्यसेत् ।

यावन्न चलते देहं यावन्न चलते मनः ॥ २७-२० ॥

क्रमादभ्यसतः पुंसो देहे स्वेदोद्गमोऽधमः ।

मध्यमं कम्पसंयुक्तो भूमित्यागः परस्य तु ॥ २७-२१ ॥

षण्मासाद्भूतदर्शी स्यात् दूरश्रवणमेव च ।

संवत्सराभ्यासयोगा योगविद्याप्रकाशकृत् ॥ २७-२२ ॥

योगी जानाति सर्वाणि तन्त्राणि स्वक्रमाणि च ।

यदि दर्शनदृष्टिः स्यात्तदा योगी न संशयः ॥ २७-२३ ॥

प्रत्याहारफलं वक्ष्ये यत्कृत्वा खेचरो भवेत् ।

ईश्वरे भक्तिमाप्नोति धर्मज्ञानी भवेन्नरः ॥ २७-२४ ॥

उत्तमस्य गुणप्राप्तिर्यावच्छीलनमिष्यते ।

तावज्जपेत् सूक्ष्मवायुः प्रत्याहारप्रसिद्धये ॥ २७-२५ ॥

इन्द्रियाणां विचरतां विषयेषु निवर्तनम् ।

बलादाहरणं तेभ्यः प्रत्याहारो विधीयते ॥ २७-२६ ॥

नान्यकर्मसु धर्मेषु शास्त्रधर्मेषु योगिराट् ।

पतितं चित्तमानीय स्थापयेत् पादपङ्कजे ॥ २७-२७ ॥

दुर्निवार्यं दृढचित्तं दुरत्ययमसम्मतम् ।
बलादाहरणं तस्य प्रत्याहारो विधीयते ॥ २७-२८ ॥
एतत् प्रत्याहारबलात् योगी स्वस्थो भवेद् ध्रुवम् ।
अकस्माद् भावमाप्नोति भावराशिस्थिरो नरः ॥ २७-२९ ॥
भावात् परतरं नास्ति भावाधीनमिदं जगत् ।
भावेन लभ्यते योगं तस्माद्भावं समाश्रयेत् ॥ २७-३० ॥
अथ धारणमावक्ष्ये यत्कृत्वा धैर्यरूपभाक् ।
त्रैलोक्यमुदरे कृत्वा पूर्णः तिष्ठति योगिराट् ॥ २७-३१ ॥
अङ्गुष्ठगुल्फजानूरुसीमनि लिङ्गनाभिषु ।
हृद्ग्रीवाकण्ठदेशेषु लम्बिकायां तथा नसि ॥ २७-३२ ॥
भ्रूमध्ये मस्तके मूर्ध्नी द्वादशान्ते यथाविधि ।
धारणं प्राणमरुतो धारणेति निगद्यते ॥ २७-३३ ॥
सर्वनाडीग्रन्थिदेशे षट्चक्रे देवतालये ।
ब्रह्ममार्गे धारणं यद् धारणेति निगद्यते ॥ २७-३४ ॥
धारणं मूलदेशे तु कुण्डलीं नासिकातटे ।
प्राणवायोः प्रशमनं धारणेति निगद्यते ॥ २७-३५ ॥
तत्र श्रीचरणाम्भोजमङ्गले चारुतेजसि ।
भावेन स्थापयेच्चित्तं धारणाशक्तिमाप्नुयात् ॥ २७-३६ ॥
अथ ध्यानं प्रवक्ष्यामि यत् कृत्वा सर्वगो भवेत् ।
ध्यानयोगाद् भवेन्मोक्षो मत्कुलागमनिर्गमः ॥ २७-३७ ॥

समाहितेन मनसा चैतन्यान्तर्वर्तीना।

आत्मन्यभीष्टदेवानां योगध्यानमिहोच्यते॥ २७-३८॥

श्रीपदाम्भोरुहद्वन्द्वे नखकिञ्जल्कचित्रिते।

स्थापयित्वा मनःपद्मं ध्यायेदिष्टगणं महत्॥ २७-३९॥

अथ समाधिमाहात्म्यं वदामि तत्त्वतः शृणु।

यस्यैव कारणादेव पूर्णयोगी भवेन्नरः॥ २७-४०॥

समत्वभावना नित्यं जीवात्मपरमात्मनोः।

समाधिना जयी भूयादान्दभैरवेश्वर॥ २७-४१॥

संयोगसिद्धिमात्रेण समाधिस्थं महाजनम्।

प्रपश्यति महायोगी समाध्यष्टाङ्गलक्षणैः॥ २७-४२॥

एतत्समाधिमाकृत्य योगी योगान्वितो भवेत्।

अथ चन्द्रे मनः कुर्यात् समारोप्य विभावयेत्॥ २७-४३॥

एतदष्टाङ्गसारेण योगयोग्यो भवेन्नरः।

योगयोगाद् भवेन्मोक्षो मन्त्रसिद्धिरखण्डिता॥ २७-४४॥

योगशास्त्र प्रकारेण सर्वे वै भैरवाः स्मृताः।

योगशास्त्रात् परं शास्त्रं त्रैलोक्ये नापि वर्तते॥ २७-४५॥

त्रैलोक्यातीतशास्त्राणि योगाङ्गविविधानि च।

ज्ञात्वा या पश्यति क्षिप्रं नानाध्यायेन शङ्कर॥ २७-४६॥

कामादिदोषनाशाय कथितं ज्ञानमुत्तमम्।

इदानीं शृणु वक्ष्यामि मन्त्रयोगार्थनिर्णयम्॥ २७-४७॥

विश्वं शरीरमाक्लेशं पञ्चभूताश्रयं प्रभो ।

चन्द्रसूर्याग्नितेजोभिः जीवब्रह्मैकरूपकम् ॥ २७-४८ ॥

तिस्रः कोट्यस्तदर्धेन शरीरे नाड्यो मताः ।

तेषु मुख्या दश प्रोक्तास्तासु तिस्रो व्यवस्थिताः ॥ २७-४९ ॥

प्रधाना मेरुदण्डेऽत्र सोमसूर्याग्निरूपिणी ।

नाडीत्रयस्वरूपेण योगमाता प्रतिष्ठिता ॥ २७-५० ॥

इडा वामे स्थिता नाडी शुक्ला तु चन्द्ररूपिणी ।

शक्तिरूपा च सा नाडी साक्षादमृतविग्रहा ॥ २७-५१ ॥

दक्षिणे पिङ्गलाख्या तु पुंरूपा सूर्यविग्रहा ।

दाडिमीकुसुमप्रख्या विषाख्या परिकीर्तीता ॥ २७-५२ ॥

मेरुमध्ये स्थिता या तु सुषुम्ना बहुरूपिणी ।

विसर्गाद्बिन्दुपर्यन्तं व्याप्य तिष्ठति तत्त्वतः ॥ २७-५३ ॥

मूलाधारे त्रिकोणाख्ये इच्छाज्ञानक्रियात्मके ।

मध्ये स्वयंभूलिङ्गं तं कोटिसूर्यसमप्रभम् ॥ २७-५४ ॥

तदूर्ध्वे कामबीजं तु कलाशान्तीन्दुनायकम् ।

तदूर्ध्वे तु शिखाकारा कुण्डली ब्रह्मविग्रहा ॥ २७-५५ ॥

तद्बाह्ये हेमवर्णाभं वसुवर्णचतुर्दलम् ।

द्रुतहेमसमप्रख्यं पद्मं तत्र विभावयेत् ॥ २७-५६ ॥

तदूर्ध्वेऽग्निसमप्रख्यं षड्दलं हीरकप्रभम् ।

वादिलान्तं तु षड्वर्णसहितं रसपत्रकम् ॥ २७-५७ ॥

स्वाधिष्ठानाख्यममलं योगिनां हृदयङ्गमम्।

मूलमाधारषट्कानां मूलाधारं प्रकीतीतम्॥ २७-५८॥

स्वशब्देन परं लिङ्गं स्वाधिष्ठानं स्वलिङ्गकम्।

तदूर्ध्वे नाभिदेशे तु मणिपूरं महाप्रभम्॥ २७-५९॥

मेघाभं विद्युताभं च बहुतेजोमयं ततः।

मणिमद्भिन्नतत्पद्मं मणिपूरं शशिप्रभम्॥ २७-६०॥

कथितं सकलं नाथ हृदयाब्जं शृणु प्रिय।

दशभिश्च दलैर्युक्तं डादिफान्ताक्षरान्वितम्॥ २७-६१॥

शिवेनाधिष्ठितं पद्मं विश्वालोकनकारकम्।

तदूर्ध्वेऽनाहतं पद्मं हृदिस्थं किरणाकुलम्॥ २७-६२॥

उद्यदादित्यसङ्काशं कादिठान्ताक्षरान्वितम्।

दलद्वादशसंयुक्तमीश्वराद्यसमन्वितम्॥ २७-६३॥

तन्मध्ये बाणलिङ्गं तु सूर्यायुतसमप्रभम्।

शब्दब्रह्ममयं वक्ष्येऽनाहतस्तत्र दृश्यते॥ २७-६४॥

तेनानाहतपद्माख्यं योगिनां योगसाधनम्।

आनन्दसदनं तत्तु सिद्धेनाधिष्ठितं परम्॥ २७-६५॥

तदूर्द्ध्वं तु विशुद्धाख्यं दलषोडशपङ्कजम्।

वर्णैः षोडशभिर्युक्तं धूम्रवर्णं महाप्रभम्॥ २७-६६॥

योगिनामद्भुतस्थानं सिद्धिवर्णं समभ्यसेत्।

विशुद्धं तनुते यस्मात् जीवस्य हंसलोकनात्॥ २७-६७॥

विशुद्धं पद्ममाख्यातमाकाशाख्यं महाप्रभम् ।

आज्ञाचक्रं तदूर्द्ध्वे तु अथीनाधिष्ठितं परम् ॥ २७-६८ ॥

आज्ञासंक्रमणं तत्र गुरोराज्ञेति कीतीतम् ।

कैलासाख्यं तदूर्ध्वे तु तदूर्ध्वे बोधनं ततः ॥ २७-६९ ॥

एवंविधानि चक्राणि कथितानि तव प्रभो ।

तदूर्द्धवस्थानममलं सहस्रारारम्बुजं परम् ॥ २७-७० ॥

बिन्दुस्थानं परं ज्ञेयं गणानां मतमाशृणु ।

बौद्धा वदन्ति चात्मानमात्मज्ञानी न ईश्वरः ॥ २७-७१ ॥

सर्वं नास्तीति चार्वाका नानाकर्मविवजीताः ।

वेदनिन्दापराः सर्वे बौद्धाः शून्याभिवादिनः ॥ २७-७२ ॥

मम ज्ञानाश्रिताः कान्ताश्चीनभूमिनिवासिनः ।

आत्मानमपरिच्छिन्नं विभाव्य भाव्यते मया ॥ २७-७३ ॥

श्रीपदाब्जे बिन्दुयुग्मं नखेन्दुमण्डलं शुभम् ।

शिवस्थानं प्रवदन्ति शैवाः शाक्ता महर्षयः ॥ २७-७४ ॥

परमं पुरुषं नित्यं वैष्णवाः प्रीतिकारकाः ।

हरिहरात्मकं रूपं संवदन्ति परे जनाः ॥ २७-७५ ॥

देव्याः पदं नित्यरूपाश्चरणानन्दनिर्भराः ।

वदन्ति मुनयो मुख्याः पुरुषं प्रकृतात्मकम् ॥ २७-७६ ॥

पुंप्रकृत्याख्यभावेन मग्ना भान्ति महीतले ।

इति ते कथितं नाथ मन्त्रयोगमनुत्तमम् ॥ २७-७७ ॥

योगमार्गानुसारेण भावयेत् सुसमाहितः।

आदौ महापूरकेण मूले संयोजयेन्मनः॥ २७-७८॥

गुदमेढ्रन्तरे शक्तिं तामाकुञ्च्य प्रबुद्धयेत्।

लिङ्गभेदक्रमेणैव प्रापयेद्बिन्दुचक्रकम्॥ २७-७९॥

शम्भुलाभां परां शक्तिमेकीभावैवीचिन्तयेत्।

तत्रोत्थितामृतरसं द्रुतलाक्षारसोपमम्॥ २७-८०॥

पाययित्वा परां शक्तिं कृष्णाख्यां योगसिद्धिदाम्।

षट्चक्रभेदकस्तत्र सन्तर्प्यामृतधारया॥ २७-८१॥

आनयेत्तेन मार्गेण मूलाधारं ततः सुधीः।

एवमभ्यस्यमानस्य अहन्यहनि मारुतम्॥ २७-८२॥

जरामरणदुःखाद्यैर्मुच्यते भवबन्धनात्।

तन्त्रोक्तकथिता मन्त्राः सर्वे सिद्धयन्ति नान्यथा॥ २७-८३॥

स्वयं सिद्धो भवेत् क्षिप्रं योगे हि योगवल्लभा।

ये गुणाः सन्ति देवस्य पञ्चकृत्यविधायिनः॥ २७-८४॥

ते गुणाः साधकवरे भवन्त्येव न चान्यथा।

इति ते कथितं नाथ मन्त्रयोगमनुत्तमम्॥ २७-८५॥

इदानीं धारणाख्यञ्च शृणुष्व परमाञ्जनम्।

दिक्कालाद्यनवच्छिन्नं त्वयि चित्तं निधाय च॥ २७-८६॥

मयि वा साधकवरो ध्यात्वा तन्मयतामियात्।

तन्मयो भवति क्षिप्रं जीवब्रह्मैकयोजनात्॥ २७-८७॥

इष्टपादे मति दत्वा नखकिञ्जल्कचित्रिते।

अथवा मननं चित्तं यदा क्षिप्रं न सिद्ध्यति॥ २७-८८॥

तदावयवयोगेन योगी योगं समभ्यसेत्।

पादाम्भोजे मनो दद्याद् नखकिञ्जल्कचित्रिते॥ २७-८९॥

जङ्घायुग्मे तथारामकदलीकाण्डमण्डिते।

ऊरुद्वये मत्तहस्तिकरदण्डसमप्रभे॥ २७-९०॥

गङ्गावर्त्तगभीरे तु नाभौ सिद्धिबिले ततः।

उदरे वक्षसि तथा हस्ते श्रीवत्सकौस्तुभे॥ २७-९१॥

पूर्णचन्द्रामृतप्रख्ये ललाटे चारुकुण्डले।

शङ्खचक्रगदाम्भोजदोर्दण्डपरिमण्डिते॥ २७-९२॥

सहस्रादित्यसङ्काशे किरीटकुण्डलद्वये।

स्थानेष्वेषु भजेन्मन्त्री विशुद्धः शुद्धचेतसा॥ २७-९३॥

मनो निवेश्य श्रीकृष्णे वैष्णवो भवति ध्रुवम्।

इति वैष्णवमाख्यातं ध्यानं सत्त्वं सुनिर्मलम्॥ २७-९४॥

विष्णुभक्ताः प्रभजन्ति स्वाधिष्ठानं मनः स्थिराः।

यावन्मनोलयं याति कृष्णे आत्मनि चिन्तयेत्॥ २७-९५॥

तावत् स्वाधिष्ठानसिद्धिरिति योगार्थनिर्णयः।

तावज्जपेन्मनुं मन्त्री जपहोमं समभ्यसेत्॥ २७-९६॥

अतः परं न किञ्चिच्च कृत्यमस्ति मनोहरे।

विदिते परतत्त्वे तु समस्तैनीयमैरलम्॥ २७-९७॥

अत एव सदा कुर्यात् ध्यानं योगं मनुं जपेत्।

तमः परिवृते गेहे घटो दीपेन दृश्यते॥ २७-९८॥

एवं स यो वृतो ह्यात्मा मनुना गोचरीकृतः।

इति ते कथितं नाथ मन्त्रयोगमनुत्तमम्॥ २७-९९॥

कृत्वा पापोद्भवैर्दुःखैर्मुच्यते नात्र संशयः।

दुर्लभं विषयासक्तैः सुलभं योगिनामपि॥ २७-१००॥

सुलभं न त्यजेद्विद्वान् यदि सिद्धिमिहेच्छति।

ब्रह्मज्ञानं योगध्यानं मन्त्रजाप्यं क्रियादिकम्॥ २७-१०१॥

यः करोति सदा भद्रो वीरभद्रो हि योगिराट्।

भक्तिं कुर्यात् सदा शम्भोः श्रीविद्यायाः परात्पराम्॥ २७-१०२॥

योगसाधनकाले च केवलं भावनादिभिः।

मननं कीर्त्तनं ध्यानं स्मरणं पादसेवनम्॥ २७-१०३॥

अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम्।

एतद्भक्तिप्रसादेन जीवन्मुक्तस्तु साधकः॥ २७-१०४॥

योगिनां वल्लभो भूत्वा समाधिस्थो भवेद्यतिः॥ २७-१०५॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने भावार्थनिर्णये पाशवकल्पे षट्चक्रसारसङ्केते सिद्धमन्त्रप्रकरणे भैरवीभैरवसंवादे सप्तविंशः पटलः॥ २७॥

अथाष्टाविंशः पटलः

सौकासूक्ष्मसुखपिरया गुणनिका दीक्षा च सूक्ष्माख्यका ।

मामन्ध्यं मम कन्दवासिनि शिवे सन्त्राहि सन्त्राहिकम् ॥ ३२-४० ॥

एतत्स्तोत्रं पठित्वा त्रिभुवनपवनं पावनं लौकिकानाम् ।

राजा स्यात् किल्विषाग्निः क्रतुपतिरिह यः क्षेमदं योगिनां वा ॥ ३२-४१ ॥

सर्वेशः सर्वकर्ता भवति निजगृहे योगयोगाङ्गवक्ता ।

शाक्तः शैवः स एकः परमपुरुषगो निर्मलात्मा महात्मा ॥ ३२-४२ ॥

प्रणवेन पुटितं कृत्वा यः स्तौति नियतः शुचिः ।

स भवेत् कुण्डलीपुत्रो भूतले नात्र संशयः ॥ ३२-४३ ॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने मूलचक्रसारसङ्केते

भैरवभैरवीसंवादे कन्दवासिनीस्तोत्रं नाम द्वात्रिंशः पटलः ॥ ३२ ॥

अथ त्रयस्त्रिंशः पटलः

श्री आनन्दभैरवी उवाच

अथ वक्ष्ये महादेव कुण्डलीकवचं शुभम् ।

परमानन्ददं सिद्धं सिद्धवृन्दनिषेवितम् ॥ ३३-१ ॥

यत्कृत्वा योगिनः सर्वं धर्माधर्मप्रदर्शकाः ।

ज्ञानिनो मानिनो धर्मा विचरन्ति यथामराः ॥ ३३-२ ॥

सिद्धयोऽप्यणिमाद्याश्च करस्थाः सर्वदेवताः ।

एतत् कवचपाठेन देवेन्द्रो योगिराड् भवेत्॥ ३३-३॥

ऋषयो योगिनः सर्वे जटिलाः कुलभैरवाः।

प्रातःकाले त्रिवारं च मध्याह्ने वारयुग्मकम्॥ ३३-४॥

सायाह्ने वारमेकं तु पठेत् कवचमेव च।

पठेदेवं महायोगी कुण्डलीदर्शनं भवेत्॥ ३३-५॥

कुलकुण्डलीकवचस्य ब्रह्मेन्द्र ऋषिर्गायत्री छन्दः, कुलकुण्डली देवता सर्वाभीष्टसिद्ध्यर्थे विनियोगः॥

ओं ईश्वरी जगतां धात्री ललिता सुन्दरी परा।

कुण्डली कुलरूपा च पातु मां कुलचण्डिका॥ ३३-६॥

शिरो मे ललिता देवी पातूग्राख्या कपोलकम्।

ब्रह्ममन्त्रेण पुटिता भ्रूमध्यं पातु मे सदा॥ ३३-७॥

नेत्रत्रयं महाकाली कालाग्निभक्षिका शिखाम्।

दन्तावलीं विशालाक्षी ओष्ठमिष्टानुवासिनी॥ ३३-८॥

कामबीजात्मिका विद्या अधरं पातु मे सदा।

लृयुगस्था गण्डयुग्मं माया विश्वा रसपिरया॥ ३३-९॥

भुवनेशी कर्णयुग्मं चिबुकं क्रोधकालिका।

कपिला मे गलं पातु सर्वबीजस्वरूपिणी॥ ३३-१०॥

मातृकावर्णपुटिता कुण्डली कण्ठमेव च।

हृदयं कालपृथ्वी च कङ्काली पातु मे मुखम्॥ ३३-११॥

भुजयुग्मं चतुर्वर्गा चण्डदोर्द्दण्डखण्डिनी।

स्कन्धयुग्मं स्कन्दमाता हालाहलगता मम ॥ ३३-१२ ॥

अङ्गुल्यग्रं कुलानन्दा श्रीविद्या नखमण्डलम् ।

कालिका भुवनेशानी पृष्ठदेशं सदावतु ॥ ३३-१३ ॥

पार्श्वयुग्मं महावीरा वीरासनधराभया ।

पातु मां कुलदर्भस्था नाभिमुदरमम्बिका ॥ ३३-१४ ॥

कटिदेशं पीठसंस्था महामहिषघातिनी ।

लिङ्गस्थानं महामुद्रा भगं मालामनुपिरया ॥ ३३-१५ ॥

भगीरथपिरया धूम्रा मूलाधारं गणेश्वरी ।

चतुर्दलं कक्ष्यपूज्या दलाग्रं मे वसुन्धरा ॥ ३३-१६ ॥

शीर्षं राधा रणाख्या च ब्रह्माणी पातु मे मुखम् ।

मेदिनी पातु कमला वाग्देवी पूर्वगं दलम् ॥ ३३-१७ ॥

छेदिनी दक्षिणे पातु पातु चण्डा महातपा ।

चन्द्रघण्टा सदा पातु योगिनी वारुणं दलम् ॥ ३३-१८ ॥

उत्तरस्थं दलं पातु पृथिवीमिन्द्रपालिता ।

चतुष्कोणं कामविद्या ब्रह्मविद्याब्जकोणकम् ॥ ३३-१९ ॥

अष्टशूलं सदा पातु सर्ववाहनवाहना

चतुर्भुजा सदा पातु डाकिनी कुलचञ्चला ॥ ३३-२० ॥

मेढ्रस्था मदनाधारा पातु मे चारुपङ्कजम् ।

स्वयम्भूलिङ्ग चार्वाका कोटराक्षी ममासनम् ॥ ३३-२१ ॥

कदम्बवनमापातु कदम्बवनवासिनी ।

वैष्णवी परमा माया पातु मे वैष्णवं पदम्॥ ३३-२२॥

षड्दलं राकिणी पातु राकिणी कामवासिनी।

कामेश्वरी कामरूपा श्रीकृष्णं पीतवाससम्॥ ३३-२३॥

वनमालां वनदुर्गा शङ्खं मे शङ्खिनी शिवा।

चक्रं चक्रेश्वरी पातु कमलाक्षी गदां मम॥ ३३-२४॥

पद्मं मे पद्मगन्धा च पद्ममाला मनोहरा।

रादिलान्ताक्षरं पातु लाकिनी लोकपालिनी॥ ३३-२५॥

षड्दले स्थितदेवांश्च पातु कैलासवासिनी।

अग्निवर्णा सदा पातु गणं मे परमेश्वरी॥ ३३-२६॥

मणिपूरं सदा पातु मणिमालाविभूषणा।

दशपत्रं दशवर्णं डादिफान्तं त्रिविक्रमा॥ ३३-२७॥

पातु नीला महाकाली भद्रा भीमा सरस्वती।

अयोध्यावासिनी देवी महापीठनिवासिनी॥ ३३-२८॥

वाग्भवाद्या महाविद्या कुण्डली कालकुण्डली।

दशच्छदगतं पातु रुद्रं रुद्रात्मकं मम॥ ३३-२९॥

सूक्ष्मात् सूक्ष्मतरा पातु सूक्ष्मस्थाननिवासिनी।

राकिणी लोकजननी पातु कूटाक्षरस्थिता॥ ३३-३०॥

तैजसं पातु नियतं रजकी राजपूजिता।

विजया कुलबीजस्था तवर्गं तिमिरापहा॥ ३३-३१॥

मन्त्रात्मिका मणिग्रन्थिं भेदिनी पातु सर्वदा।

गर्भदाता भृगुसुता पातु मां नाभिवासिनी ॥ ३३-३२ ॥

नन्दिनी पातु सकलं कुण्डली कालकम्पिता ।

हृत्पद्मं पातु कालाख्या धूम्रवर्णा मनोहरा ॥ ३३-३३ ॥

दलद्वादशवर्णं च भास्करी भावसिद्धिदा ।

पातु मे परमा विद्या कवर्गं कामचारिणी ॥ ३३-३४ ॥

चवर्गं चारुवसना व्याघ्रास्या टङ्कधारिणी ।

चकारं पातु कृष्णाख्या काकिनीं पातु कालिका ॥ ३३-३५ ॥

टकुराङ्गी टकारं मे जीवभावा महोदया ।

ईश्वरी पातु विमला मम हृत्पद्मवासिनी ॥ ३३-३६ ॥

कर्णीकां कालसन्दर्भा योगिनी योगमातरम् ।

इन्द्राणी वारुणी पातु कुलमाला कुलान्तरम् ॥ ३३-३७ ॥

तारिणी शक्तिमाता च कण्ठवाक्यं सदावतु ।

विप्रचित्ता महोग्रोग्रा प्रभा दीप्ता घनासना ॥ ३३-३८ ॥

वाक्स्तम्भिनी वज्रदेहा वैदेही वृषवाहिनी ।

उन्मत्तानन्दचित्ता च क्षणोशीशा भगान्तरा ॥ ३३-३९ ॥

मम षोडशपत्राणि पातु मातृतनुस्थिता ।

सुरान् रक्षतु वेदज्ञा सर्वभाषा च कर्णीकाम् ॥ ३३-४० ॥

ईश्वरार्द्धासनगता प्रपायान्मे सदाशिवम् ।

शाकम्भरी महामाया साकिनी पातु सर्वदा ॥ ३३-४१ ॥

भवानी भवमाता च पायाद् भ्रूमध्यपङ्कजम् ।

द्विदलं व्रतकामाख्या अष्टाङ्गसिद्धिदायिनी ॥ ३३-४२ ॥

पातु नासामखिलानन्दा मनोरूपा जगत्पिरया ।

लकारं लक्षणाक्रान्ता सर्वलक्षणलक्षणा ॥ ३३-४३ ॥

कृष्णाजिनधरा देवी क्षकारं पातु सर्वदा ।

द्विदलस्थं सर्वदेवं सदा पातु वरानना ॥ ३३-४४ ॥

बहुरूपा विश्वरूपा हाकिनी पातु संस्थिता ।

हरापरशिवं पातु मानसं पातु पञ्चमी ॥ ३३-४५ ॥

षट्चक्रस्था सदा पातु षट्चक्रकुलवासिनी ।

अकारादिक्षकारान्ता बिन्दुसर्गसमन्विता ॥ ३३-४६ ॥

मातृकार्णा सदा पातु कुण्डली ज्ञानकुण्डली ।

देवकाली गतिप्रेमा पूर्णा गिरितटं शिवा ॥ ३३-४७ ॥

उड्डीयानेश्वरी देवी सकलं पातु सर्वदा ।

कैलासपर्वतं पातु कैलासगिरिवासिनी४८ ॥

पातु मे डाकिनीशक्तिर्लाकिनी राकिणी कला ।

साकिनी हाकिनी देवी षट्चक्रादीन् प्रपातु मे ॥ ३३-४९ ॥

कैलासाख्यं सदा पातु पञ्चानन तनूद्भवा ।

हिरण्यवर्णा रजनी चन्द्रसूर्याग्निभक्षिणी ॥ ३३-५० ॥

सहस्रदलपद्मं मे सदा पातु कुलाकुला ।

सहस्रदलपद्मस्था दैवतं पातु खेचरी ॥ ३३-५१ ॥

काली तारा षोडशाख्या मातङ्गी पद्मवासिनी ।

शशिकोटिगलद्रूपा पातु मे सकलं तमः ॥ ३३-५२ ॥

वने घोरे जले देशे युद्धे वादे श्मशानके ।

सर्वत्र गमने ज्ञाने सदा मां पातु शैलजा ॥ ३३-५३ ॥

पर्वते विविधायासे विनाशे पातु कुण्डली ।

पादादिब्रह्मरन्ध्रान्तं सर्वाकाशं सुरेश्वरी ॥ ३३-५४ ॥

सदा पातु सर्वविद्या सर्वज्ञानं सदा मम ।

नवलक्षमहाविद्या दशदिक्षु प्रपातु माम् ॥ ३३-५५ ॥

इत्येतत् कवचं देवि कुण्डलिन्याः प्रसिद्धिदम् ।

ये पठन्ति ध्यानयोगे योगमार्गव्यवस्थिताः ॥ ३३-५६ ॥

ते यान्ति मुक्तिपदवीमैहिके नात्र संशयः ।

मूलपद्मे मनोयोगं कृत्वा हृदासनस्थितः ॥ ३३-५७ ॥

मन्त्रं ध्यायेत् कुण्डलिनीं मूलपद्मप्रकाशिनीम् ।

धर्मोदयां दयारूढामाकाशस्थानवासिनीम् ॥ ३३-५८ ॥

अमृतानन्दरसिकां विकलां सुकलां शिताम् ।

अजितां रक्तरहितां विशक्तां रक्तविग्रहाम् ॥ ३३-५९ ॥

रक्तनेत्रां कुलक्षिप्तां ज्ञानाञ्जनजयोज्ज्वलाम् ।

विश्वाकारां मनोरूपां मूले ध्यात्वा प्रपूजयेत् ॥ ३३-६० ॥

यो योगी कुरुते एवं स सिद्धो नात्र संशयः ।

रोगी रोगात् प्रमुच्येत बद्धो मुच्येत बन्धनात् ॥ ३३-६१ ॥

राज्यं श्रियमवाप्नोति राज्यहीनः पठेद्यदि ।

पुत्रहीनो लभेत् पुत्रं योगहीनो भवेद्वशी ॥ ३३-६२ ॥

कवचं धारयेद्यस्तु शिखायां दक्षिणे भुजे ।

वामा वामकरे धृत्वा सर्वाभीष्टमवाप्नुयात् ॥ ३३-६३ ॥

स्वर्णे रौप्ये तथा ताम्रे स्थापयित्वा प्रपूजयेत् ।

सर्वदेशे सर्वकाले पठित्वा सिद्धिमाप्नुयात् ॥ ३३-६४ ॥

स भूयात् कुण्डलीपुत्रो नात्र कार्या विचारणा ॥ ३३-६५ ॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने सिद्धिविद्याप्रकरणे षट्चक्रप्रकाशे भैरवीभैरवसंवादे कन्दवासिनीकवचं नाम त्रयस्त्रिंशः पटलः ॥ ३३ ॥

अथ चतुस्त्रिंशः पटलः

आनन्दभैरवी उवाच

अथ भेदान् प्रवक्ष्यामि हिताय जगतां प्रभो ।

निर्मलात्मा शुचिः श्रीमान् ध्यानात्मा च सदाशिवः ॥ ३४-१ ॥

स मोक्षगो ज्ञानरूपी स षट्चक्रार्थभेदकः ।

त्रिगुणज्ञानविकलो न पश्यति दिवानिशम् ॥ ३४-२ ॥

दिवारात्र्यज्ञानहेतोर्न पश्यति कलेवरम् ।

इति कृत्वा हि मरणं नृणां जन्मनि जन्मनि ॥ ३४-३ ॥

तज्जन्मक्षयहेतोश्च मम योगं समभ्यसेत् ।

पञ्चस्वरं महायोगं कृत्वा स्यादमरो नरः ॥ ३४-४ ॥

तत्प्रकारं शृणुष्वाथ वल्लभ पिरयदर्शन ।

तव भावेन कथये न कुत्र वद शङ्कर ॥ ३४-५ ॥

यदि लोकस्य निकटे कथ्यते योगसाधनम् ।

विघ्ना घोरा वसन्त्येव गात्रे योगादिकं कथम् ॥ ३४-६ ॥

योगयोगाद् भवेन्मोक्षः तत्प्रकाशाद्विनाशनम् ।

अतो न दर्शयेद् योगं यदीच्छेदात्मनः शुभम् ॥ ३४-७ ॥

कृत्वा पञ्चामरा योगं प्रत्यहं भक्तिसंयुतः ।

पठेत् श्रीकुण्डलीदेवीसहस्रनाम चाष्टकम् ॥ ३४-८ ॥

महायोगी भवेन्नाथ षण्मासे नात्र संशयः ।

पञ्चमे वा योगविद्या सर्वविद्याप्रकाशिनी ॥ ३४-९ ॥

कृत्वा पञ्चस्वरा सिद्धिं ततोऽष्टाङ्गादिधारणा ।

आदौ पञ्चस्वरा सिद्धिस्ततोऽन्या योगधारणा ॥ ३४-१० ॥

तत्प्रकारं प्रवक्ष्यामि सावधानावधारय ।

अहं जानामि संसारे केवलं योगपण्डितान् ॥ ३४-११ ॥

तत् साक्षिणी ह्यहं नाथ भक्तानामुदयाय च ।

इदानीं कथये तेऽहं मम वा योगसाधनम् ॥ ३४-१२ ॥

एवं कृत्वा नित्यरूपी योगानामष्टधा यतः ।

ततः कालेन पुरुषः सिद्धिमाप्नोति निश्चितम् ॥ ३४-१३ ॥

पञ्चामरा विधानानि क्रमेण शृणु शङ्कर ।

नेतीयोगं हि सिद्धानां महाकफविनाशनम्॥ ३४-१४॥

दन्तियोगं प्रवक्ष्यामि पश्चाद् हृदयभेदनात्।

धौतीयोगं ततः पश्चात् सर्वमलविनाशनात्॥ ३४-१५॥

नेलीयोगमपरं सर्वाङ्गोदरचालनात्।

क्षालनं परमं योगं नाडीनां क्षालनात् स्मृतम्॥ ३४-१६॥

एतत् पञ्चामरायोगं यमिनामतिगोचरम्।

यमनियमकाले तु पञ्चामराक्रियां यजेत्॥ ३४-१७॥

अमरा साधनादेव अमरत्वं लभेद् ध्रुवम्।

एतत्करणकाले च तथा पञ्चामरासनम्॥ ३४-१८॥

पञ्चामराभक्षणेन अमरो योगसिद्धिभाक्।

तानि द्रव्याणि वक्ष्यामि तवाग्रे परमेश्वर॥ ३४-१९॥

येन हीना न सिद्ध्यन्ति कल्पकोटिशतेन च।

एका तु अमरा दूर्वा तस्या ग्रन्थिं समानयेत्॥ ३४-२०॥

अन्या तु विजया देवी सिद्धिरूपा सरस्वती।

अन्या तु बिल्वपत्रस्था शिवसन्तोषकारिणी॥ ३४-२१॥

अन्या तु योगसिद्ध्यर्थे निर्गुण्डी चामरा मता।

अन्या तु कालितुलसी श्रीविष्णोः परितोषिणी॥ ३४-२२॥

एताः पञ्चस्वराः ज्ञेया योगसाधनकर्मणि।

एतासां द्विगुणं ग्राह्यं विजयापत्रमुत्तमम्॥ ३४-२३॥

ब्राह्मणी क्षत्रिया वैश्या शूद्राः सर्वत्र पूजिताः।

एतद्द्रव्याणि सङ्ग्राह्य भक्षयेच्चूर्णमुत्तमम् ॥ ३४-२४ ॥

तच्चूर्णभक्षसमये एतन्मन्त्रादिपञ्चमम् ।

पठित्वा भक्षणं कृत्वा नरो मुच्येत सङ्कटात् ॥ ३४-२५ ॥

ओं त्वं दूर्वेऽमरपूज्ये त्वं अमृतोद्भवसम्भवे ।

अमरं मां सदा भद्रे कुरुष्व नृहरिप्रिये ॥ ३४-२६ ॥

ओं दूर्वायै नमः स्वाहा इति दूर्वायाः ।

पुनर्वीजयामन्त्रेण शोधयेत् सर्वकन्यकाः ।

ओं संविदे ब्रह्मसम्भूते ब्रह्मपुत्रि सदाऽनघे ।

भैरवाणां च तृप्त्यर्थे पवित्रा भव सर्वदा ॥ ३४-२७ ॥

ओं ब्राह्मण्यै नमः स्वाहा ।

ओं सिद्धिमूलकरे देवि हीनबोधप्रबोधिनि ।

राजपुत्रीवशङ्करि शूलकण्ठत्रिशूलिनि ॥ ३४-२८ ॥

ओं क्षत्रियायै नमः स्वाहा ।

ओं अज्ञानेन्धनदीप्ताग्नि ज्ञानाग्निज्ज्वालरूपिणि ।

आनन्दाद्याहुतिं कृत्वा सम्यक्ज्ञानं प्रयच्छ मे ॥ ३४-२९ ॥

ह्रीं ह्रीं वैश्यायै नमः स्वाहा ।

ओं नमस्यामि नमस्यामि योगमार्गप्रदर्शिनि ।

त्रैलोक्यविजये मातः समाधिफलदा भव ॥ ३४-३० ॥

श्रीं शूद्रायै नमः स्वाहा ।

ओं काव्यसिद्धिकरी देवी बिल्वपत्रनिवासिनि ।

अमरत्वं सदा देहि शिवतुल्यं कुरुष्व माम्॥ ३४-३१॥

ओं शिवदायै नमः स्वाहा।

निर्गुण्डि परमानन्दे योगानामधिदेवते।

सा मां रक्षतु अमरे भावसिद्धिप्रदे नमः॥ ३४-३२॥

ओं शोकापहायै नमः स्वाहा।

ओं विष्णोः पिरये महामाये महाकालनिवारिणी।

तुलसी मां सदा रक्ष मामेकममरं कुरु॥ ३४-३३॥

ओं ह्रीं श्रीं एं क्लीं अमरायै नमः स्वाहा।

पुनरेव समाकृत्य सर्वासां शोधनञ्चरेत्॥ ३४-३४॥

ओं अमृते अमृतोद्भवेऽमृतवर्षीणि अमृतमाकर्षय।

आकर्षय सिद्धिं देहि स्वाहा।

धेनुमुद्रां योनिमुद्रां मत्स्यमुद्रां प्रदर्शयेत्।

तत्त्वमुद्राक्रमेणैव तर्पणं कारयेद् बुधः॥ ३४-३५॥

अमन्त्रकं सप्तवारं गुरोर्नाम्ना शिवेऽर्पयेत्।

सप्तकञ्च स्वेष्टदेव्या नाम्ना शुद्धिं प्रदापयेत्॥ ३४-३६॥

ततस्तर्पणमाकुर्यात्तर्पयामि नमो नमः।

एतद्वाक्यस्य पूर्वे च इष्टमन्त्रं समुच्चरेत्॥ ३४-३७॥

परदेवतां समुद्धृत्य सर्वाद्यप्रणवं स्मृतम्।

ततो मुखे प्रजुहुयात् कुण्डलीनामपूर्वकम्॥ ३४-३८॥

ओं एं वद वद वाग्वादिनि मम जिह्वाग्रे स्थिरीभव।

सर्वसत्त्ववशङ्करि शत्रुकण्ठत्रिशूलिनि स्वाहा।

एतज्जप्त्वा साश्रमी च वशी साधकसत्तमः।

पञ्चामरा शासनज्ञः कुलाचारविधिपिरयः॥ ३४-३९॥

स्थिरचेता भवेद्योगी यदि पञ्चामरागतः।

नेतीयोगविधानानि शृणु कैलासपूजिते॥ ३४-४०॥

येन सर्वमस्तकस्थकफानां दहनं भवेत्।

सूक्ष्मसूत्रं दृढतरं प्रदद्यात् नासिकाबिले॥ ३४-४१॥

मुखरन्ध्रे समानीय सन्धानेन समानयेत्।

पुनः पुनः सदा योगी यातायातेन घर्षयेत्॥ ३४-४२॥

क्रमेण वर्द्धनं कुर्यात् सूत्रस्य परमेश्वर।

नेतीयोगेन नासाया रन्ध्रं निर्मलकं भवेत्॥ ३४-४३॥

वायोर्गमनकाले तु महासुखमिति प्रभो।

दन्तीयोगं ततः पश्चात्कुर्यात् साधकसत्तमः॥ ३४-४४॥

दन्तधावनकाले तु योगमेतत् प्रकाशयेत्।

दन्तधावनकाष्ठञ्च सार्धहस्तैकसम्भवम्॥ ३४-४५॥

नातिस्थूलं नातिसूक्ष्मं नवीनं नम्रमुत्तमम्।

अपक्वं यत्नतो ग्राह्यं मृणालसदृशं तरुम्॥ ३४-४६॥

गृहीत्वा दन्तकाष्ठं वै योगी नित्यं प्रभक्षयेत्।

दन्तकाष्ठाग्रभागञ्च कनिष्ठाङ्गुलिपर्वतः॥ ३४-४७॥

एवं दन्तावलिभ्याञ्च चर्वणं सुन्दरं चरेत्।

ततः प्रक्षाल्य तोयेन शनैर्गीलनमाचरेत्॥ ३४-४८॥

शनैः शनैः प्रकर्त्तव्यं कायावाक्चित्तशोधनम्।

यावदभिन्नकाष्ठाग्रं नाभिमूले त्वनाक्षतम्॥ ३४-४९॥

तावत् सूक्ष्मतरं ग्राह्यमवश्यं प्रत्यहञ्चरेत्।

हृदये जलचक्रञ्च यावत् खण्डं न जायते॥ ३४-५०॥

तावत्कालं सर्वदिने प्रभाते दन्तधावनम्।

हृदये कफभाण्डस्य खण्डनं जायते ध्रुवम्॥ ३४-५१॥

पवनागमने सौख्यं प्रयाति योगनिर्भरम्।

खेचरत्वं स लभताम् अम्लानञ्च कटूद्भवम्॥ ३४-५२॥

मिष्टान्नं शाकदध्यन्नं द्विवारं रात्रिभोजनम्।

अवश्यं सन्त्यजेद्योगी यदि योगमिहेच्छति॥ ३४-५३॥

एकभागं मुद्गबीजं द्विभागं तण्डुलं मतम्।

उत्तमं पाकमाकृत्य घृतदुग्धेन भक्षयेत्॥ ३४-५४॥

अथवा केवलं दुग्धं तर्पणं कारयेद् बुधः।

कुण्डलीं कुलरूपाञ्च दुग्धेन परितर्पयेत्॥ ३४-५५॥

कुण्डलीतर्पणं योगी यदि जानाति शङ्कर।

अनायासेन योगी स्यात् स ज्ञानीन्द्रो भवेद्ध्रुवम्॥ ३४-५६॥

यमनियमपरो यः कुण्डलीसेवनस्थो

विभवविरहितो वा भूरिभाराश्रितो वा।

स भवति परयोगी सर्वविद्यार्थवेद्यो।

गुणगणगगनस्थो मुक्तरूपी गणेशः ॥ ३४-५७ ॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने षट्चक्रप्रकाशे भैरवभैरवीसंवादे पञ्चामरासाधनं नाम चतुस्त्रिंशः पटलः ॥ ३४ ॥

अथ पञ्चत्रिंशः पटलः

आनन्दभैरवी उवाच

अथ वक्ष्ये महाकाल रहस्यं चातिदुर्लभम् ।

यस्य विज्ञानमात्रेण नरो ब्रह्मपदं लभेत् ॥ ३५-१ ॥

आकाशे तस्य राज्यञ्च खेचरेशो भवेद् ध्रुवम् ।

धनेशो भवति क्षिप्रं ब्रह्मज्ञानी भवेन्नरः ॥ ३५-२ ॥

योगानामधिपो राजा वीरभद्रो यथाकविः ।

विरिञ्चिगणनाथस्य कृपा भवति सर्वदा ॥ ३५-३ ॥

यः करोति पञ्चयोगं स स्यादमरविग्रहः ।

धौतीयोगं प्रवक्ष्यामि यत्कृत्वा निर्मलो भवेत् ॥ ३५-४ ॥

अत्यन्तगुह्यं योगं च समाधिकरणं नृणाम् ।

यदि न कुरुते योगं तदा मरणमाप्नुयात् ॥ ३५-५ ॥

धौतीयोगं विना नाथ कः सिद्ध्यति महीतले ।

सूक्ष्मात्सूक्ष्मतरं वस्त्रं द्वात्रिंशद्धस्तमानतः ॥ ३५-६ ॥

एकहस्तक्रमेणैव यः करोति शनैः शनैः ।

यावद् द्वात्रिंशद्धस्तञ्च तावत्कालं क्रियाञ्चरेत् ॥ ३५-७ ॥

एतत्क्रिया प्रयोगेण योगी भवति तत्क्षणात् ।

क्रमेण मन्त्रसिद्धिः स्यात् कालजालवशं नयेत् ॥ ३५-८ ॥

एतन्मध्ये चासनानि शरीरस्थानि चाचरेत् ।

दृढासने योगसिद्धिरिति तन्त्रार्थनिर्णयः ॥ ३५-९ ॥

सिद्धे मनौ परावाप्तिः पञ्चयोगासनेन च ।

पार्श्वे चाष्टाङ्गुलं वस्त्रं दीर्घे द्वात्रिंशदीश्वर ॥ ३५-१० ॥

एतत् सूक्ष्मं सुवसनं गृहीत्वा कारयेद् यतिः ।

जितेन्द्रियः सदा कुर्याद् ज्ञानध्याननिषेवणः ॥ ३५-११ ॥

कुलीनः पण्डितो मानी विवेकी सुस्थिराशयः ।

धौतीयोगं सदा कुर्यात्तदैव शुचिगो भवेत् ॥ ३५-१२ ॥

अनाचारेण हानिः स्यादिन्द्रियाणां बलेन च ।

महापातकमुख्यानां सङ्गदोषेण हानयः ॥ ३५-१३ ॥

सम्भवन्ति महादेव कालयोगं सुकर्म च ।

वृद्धो वा यौवनस्थो वा बालो वा जड एव च ॥ ३५-१४ ॥

करणाद्दीर्घजीवी स्यादमरो लोकवल्लभः ।

मन्त्रसिद्धिरष्टसिद्धिः स सिद्धीनामधीश्वरः ॥ ३५-१५ ॥

शनैः शनैः सदा कुर्यात् कालदोषविनाशनात् ।

हृदयग्रन्थिभेदेन सर्वावयववर्धनम् ॥ ३५-१६ ॥

तदा महाबलो ज्ञानी चारुवर्णो महाशयः।

धौतीयोगोद्भवं कामं महामरणकारणम्॥ ३५-१७॥

तस्य त्यागं यः करोति स नरो देवविक्रमः।

श्वासं त्यक्त्वा स्तम्भनञ्च मनो दद्यान्महानिले॥ ३५-१८॥

श्वासादीनाञ्च गणनमवश्यं भावयेद् गृहे।

प्राणायामविधानेन सर्वकालं सुखी भवेत्॥ ३५-१९॥

वायुपानं सदा कुर्यात् ध्यानं कुर्यात्सदैव हि।

प्रत्याहारं सदा कुर्यात् मनोनिवेशनं सदा॥ ३५-२०॥

मानसादिप्रजाप्यञ्च सदा कुर्यान्मनोलयम्।

धौतीयोगान्तरं हि नेलीङ्कर्म चाचरेत्॥ ३५-२१॥

नेलीयोगमात्रेण आसने नेलोपमः।

नेलीसाधनादेव चिरजीवी निरामयः॥ ३५-२२॥

अन्तरात्मा सदा मौनी निर्मलात्मा सदा सुखी।

सर्वदा समयानन्दः कारणानन्दविग्रहः॥ ३५-२३॥

योगाभ्यासं सदा कुर्यात् कुण्डली साधनादिकम्।

कृत्वा मन्त्री खेचरत्वं प्राप्नोति नात्र संशयः॥ ३५-२४॥

तत्प्रकारं प्रवक्ष्यामि सावधानावधारय।

भुक्त्वा मुद्गान्नपक्वञ्च बारैकं प्रतिपालयेत्॥ ३५-२५॥

प्रपालयेत्सोदरञ्च कटिनासाविवजीतः।

पुनः पुनश्चालनञ्च कुर्यात् स्वोदरमध्यकम्॥ ३५-२६॥

कुलालचक्रवत् कुर्यात् भ्रामणञ्चोदरस्य च ।
सर्वाङ्गचालनादेव कुण्डलीचालनं भवेत् ॥ ३५-२७ ॥
चालनात् कुण्डलीदेव्याश्चैतन्या सा भवेत् प्रभो ।
एतस्यानन्तरं नाथ क्षालनं परिकीतीतम् ॥ ३५-२८ ॥
नाडीनां क्षालनादेव सर्वविद्यानिधिर्भवेत् ।
सर्वत्र जयमाप्नोति कालिकादर्शनं भवेत् ॥ ३५-२९ ॥
वायुसिद्धिर्भवेत्तस्य पञ्चभूतस्य सिद्धिभाक् ।
तस्य कीतीस्त्रिभुवने कामदेवबलोपमः ॥ ३५-३० ॥
सर्वत्रगामी स भवेदिन्द्रियाणां पतिर्भवेत् ।
मुण्डासनं हि सर्वत्र सर्वदा कारयेद् बुधः ॥ ३५-३१ ॥
ऊद्र्ध्वे मुण्डासनं कृत्वा अधोहस्ते जपं चरेत् ।
यदि त्रिदिनमाकर्तुं समर्थो मुण्डिकासनम् ॥ ३५-३२ ॥
तदा हि सर्वनाड्यश्च वशीभूता न संशयः ।
नाडीक्षालनयोगेन मोक्षदाता स्वय भवेत् ॥ ३५-३३ ॥
नाडीयोगेन सर्वार्थसिद्धिः स्यान्मुण्डिकासनात् ।
मुण्डासन यः करोति नेर्ल्लिसद्धिगो यदि ॥ ३५-३४ ॥
नेलीसाधनगतो नेलीसाधनोत्तमः ।
तदा क्षालनयोगेन सिद्धिमाप्नोति साधकः ॥ ३५-३५ ॥
नेलीं यो न जानाति स कथं कर्त्तुमुत्तमः ।
स धीरो मानसचरो मतिमान् स जितेन्द्रियः ॥ ३५-३६ ॥

यो नेली योगसारं कर्त्तुमुत्तमपारगः।

स चावश्य क्षालनञ्च कुर्यात् नाड्यादिशोधनात्॥ ३५-३७॥

नेलीयोगमार्गेण नाडीक्षालनपारगः।

भवत्येव महाकाल राजराजेश्वरो यथा॥ ३५-३८॥

पृथिवीपालनरतो विग्रहस्ते प्रपालनम्।

केवलं प्राणवायोश्च धारणात् क्षालनं भवेत्॥ ३५-३९॥

विना क्षालनयोगेन देहशुद्धिर्नजायते।

क्षालनं नाडिकादीनां कफपित्तमलादिकम्॥ ३५-४०॥

करोति यत्नतो योगी मुण्डासननिषेवणात्।

वायुग्रहणमेवं हि नेलीवशकालके॥ ३५-४१॥

न कुर्यात् केवलं नाथ अन्यकाले सदा चरेत्।

यावन्नेलीं न जानाति तावत् वायुं न संपिबेत्॥ ३५-४२॥

बहुतरं न सङ्ग्राह्यं वायोरागमनादिकम्।

केवलं श्वासगणनं यावन्नेली न सिद्ध्यति॥ ३५-४३॥

पञ्चस्वरा प्रकथिता योगिनी सिद्धिदायिका।

पञ्चस्वरसाधनादेव पञ्चवायुर्वशो भवेत्॥ ३५-४४॥

प्रतापे सूर्यतुल्यः स्यात् शोकदोषापहारकः।

सर्वयोगस्थिरतरं संप्राप्य योगिराड् भवेत्॥ ३५-४५॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने षट्चक्रप्रकाशे भैरवभैरवी संवादे

पञ्चस्वरयोगसाधनं नाम पञ्चत्रिंशः पटलः ॥ ३५ ॥

## अथ षडस्त्रिंशः पटलः

श्रीनन्दभैरवी उवाच

अथ कान्त प्रवक्ष्यामि कुण्डलीचेतनादिकम् ।

सहस्त्रनामसकलं कुण्डलिन्याः प्रियं सुखम् ॥ ३६-१ ॥

अष्टोत्तरं महापुण्यं साक्षात् सिद्धिप्रदायकम् ।

तव प्रेमवशेनैव कथयामि शृणुष्व तत् ॥ ३६-२ ॥

विना यजनयोगेन विना ध्यानेन यत्फलम् ।

तत्फलं लभते सद्यो विद्यायाः सुकृपा भवेत् ॥ ३६-३ ॥

या विद्या भुवनेशानी त्रैलोक्यपरिपूजिता ।

सा देवी कुण्डली माता त्रैलोक्यं पाति सर्वदा ॥ ३६-४ ॥

तस्या नाम सहस्त्राणि अष्टोत्तरशतानि च ।

श्रवणात्पठनान्मन्त्री महाभक्तो भवेदिह ॥ ३६-५ ॥

एहिके स भवेन्नाथ जीवन्मुक्तो महाबली ॥ ३६-६ ॥

अस्य श्रीमन्महाकुण्डलीसाष्टोत्तरसहस्त्रनामस्तोत्रस्य ब्रह्मर्षीर्जगतीच्छन्दो भगवती श्रीमन्महाकुण्डलीदेवता सर्वयोगसमृद्धिसिद्ध्यर्थे विनियोगः ॥

कुलेश्वरी कुलानन्दा कुलीना कुलकुण्डली ।

श्रीमन्महाकुण्डली च कुलकन्या कुलप्रिया ॥ ३६-७ ॥

वाराहीतन्त्रे -

तारं वाणीं ततो लज्जां वह्निजायां ततः परम्।
पुनस्तारञ्च वाराही चण्डीमन्त्रः समीरितः॥ ७५॥

इति श्रीमज्ज्ञानानन्दपरमहंसविरचिते कौलावलीनिर्णये विंशोल्लासः॥ २०॥

## एकविंश उल्लासः

### अवधूताश्रमनिरूपणम्

अथातः सम्प्रवक्ष्यामि अवधूतक्रमं शृणु।
चतुर्थाश्रमिणां मध्ये अवधूताश्रमो महान्॥ १॥

केवलं कुलयोगेन तस्य मोक्षः प्रजायते।
यदि न स्यात्तदा चैव शृणु यत् कथयामि ते॥ २॥

ज्ञान भावे च सम्पन्ने सम्प्रार्थ्यं निजकौलिकीम्।
तदाज्ञया विमुक्तः स्यात्तां सम्पूज्य कुलान्तरे॥ ३॥

कुण्डलीशक्तिविवरे तदा योगं समभ्यसेत्।

निर्द्वन्द्वो निरहङ्कारः शुद्धनाडीजितेन्द्रियः ॥ ४ ॥

मृद्वासने समासीनः षट्कसंयमने रतः ।
बद्धपद्मासनो योगी योगं युञ्जीत यत्नतः ॥ ५ ॥

ऊर्वोरुपरि वीरेन्द्रः कृत्वा पादतले उभे ।

p. 531)

अङ्गुष्ठौ तु निबध्नीयाद्धस्ताभ्यां व्युत्क्रमेण तु ॥ ६ ॥

पद्मासनं भवेदेतत् सर्वेषामेव पूजितम् ।

मुलाधारचक्रकथनम्

गुदात्तु ब्यङ्गुलादूर्ध्वमधोमेढ्रात्तु ब्यङ्गुलम् ॥ ७ ॥

एकाङ्गुलं तु तन्मध्ये देहमध्यं प्रकीतितम् ।
कन्दमस्ति शरीरेऽस्मिन् पुण्यापुण्यविवर्जितः ॥ ८ ॥

तन्तुपञ्जरमध्यस्थो यथा भ्रमति सूतिकः ।
जीवस्तु मूलचक्रेऽस्मिन् अधःप्राणश्चरत्यसौ ॥ ९ ॥

प्राणारूढो भवेज्जीवः सर्वदेहेषु सर्वदा ।
तत्र नाड्यः समुत्पन्नाः सहस्राणां द्विसप्ततिः ॥ १० ॥

मेरुदण्डबहिः पार्श्वे चन्द्रसूर्यात्मिके शुभे ।
इडा च पिङ्गला चैव वामदक्षिणतः स्थिते ॥ ११ ॥

कन्दमध्याद् द्वयोर्मध्ये सुषुम्ना सुप्रतिष्ठिता ।
पृष्ठमध्यगता सा तु सह मूर्ध्नि व्यवस्थिता ॥ १२ ॥

p. 532)

ऋज्वीभूता तु वज्राख्या ज्वलन्ती विश्वधारिणी ।
मुक्तिमार्गे सदा गुप्ता मेढ्रमूर्ध्नि व्यवस्थिता ॥ १३ ॥

तस्याश्चान्तर्गता नाडी चित्राख्या योगिवल्लभा ।
पञ्चवर्णोज्ज्वला देवी पञ्चभूतनिवासिनी ॥ १४ ॥

पञ्चदेवैर्युता देवी पञ्चतत्त्वप्रकाशिनी ।
पूरयित्वा तु विच्छिन्ना चित्रा सा ग्रन्थिरूपिणी ॥ १५ ॥

तयैव ग्रथितं सर्वं मूलादि पद्मपञ्चकम् ।
तस्या मध्ये ब्रह्मनाडी मृणालतन्तुरूपिणी ॥ १६ ॥

ब्रह्मरन्ध्रं तु तन्मध्ये हरवक्त्रं सदाशिवम् ।

गुदमेढ्रान्तरे ग्रन्थि सुषुम्ना सन्धिरुत्तमा ॥ १७ ॥

आधारे च गुदस्थाने पङ्कजञ्च चतुर्दलम् ।

सुवर्णाभं वादिसान्तं हेमवर्णं सुशोभनम् ॥ १८ ॥

कलिकारूपकं पद्मं पृथिवीपद्मिनीयुतम् ।

तरुणारुणसङ्काशां शूलखट्वाङ्गकौ ततः ॥ १९ ॥

वामे खड्गं सुराकुम्भं दधानामुग्रदंष्ट्रिणीम् ।

p. 533)

दुग्धाभां संस्थितां ध्यायेत् डाकिनीं लोचनत्रयाम् ॥ २० ॥

कर्णिकायां स्थिता योनिः कामाख्या योगिवल्लभा ।

अपानाख्यं हि कन्दर्पं आधारे च त्रिकोणके ॥ २१ ॥

स्वयम्भूलिङ्गं तन्मध्ये पश्चिमाभिमुखं भवेत् ।

बन्धूकपुष्पसङ्काशं सूर्यकोटिसमप्रभम् ॥ २२ ॥

भ्रमन्तं योनिमध्ये च शिशिरं शशभृत्समम् ।

तस्योर्ध्वे कुण्डली शक्तिरष्टधा कुण्डलाकृतिः ॥ २३ ॥

अष्टप्रकृतिरूपा सा नाभेस्तिर्यगधो गता ।
अधोवक्त्रस्थितादेवी ऊर्ध्वपुच्छाऽतिशोभना ॥ २४ ॥

अकारादिक्षकारान्ता कुण्डलीत्यभिधीयते ।
सा च विद्युल्लताकारा मृणालतन्तुसन्निभा ॥ २५ ॥

p. 534)

परिस्फुरति सर्वात्मा सुप्ताऽहिसदृशाकृतिः ।
ब्रह्मद्वारमुखं नित्यं मुखेनावृत्य तिष्ठति ॥ २६ ॥

येन मार्गेण गन्तव्यं ब्रह्मद्वारं निरामयम् ।
मुखेन श्वासं प्रविष्टा ब्रह्मरन्ध्रं मुखं तदा ॥ २७ ॥

मस्तके मणिवद्भिन्नस्वयम्भूलिङ्गवेष्टिनी ।
नान्यः पन्था द्वितीयोऽस्ति शरीरे परमस्य च ॥ २८ ॥

मूलाधारे कामरूपं पीठं परमदुर्लभम् ।
अधोवक्त्राणि पद्मानि मूलादीनि यथाक्रमात् ॥ २९ ॥

मूलाधारचक्रम् तध्यानफलम्

गुदात्तु द्व्यङ्गुलादूर्ध्वमधो मेढ्रात्तु द्व्यङ्गुलात्।
चतुरङ्गुलविस्तारं कन्दमूलं खगाण्डवत्॥ ३० ॥

एकाङ्गुलं तु तन्मध्ये चतुरस्रं त्रिकोणकम्।
एवं ध्यात्वा च वीरेन्द्रः स्थिरचित्तः स्थिरेन्द्रियः॥ ३१ ॥

आकुञ्चयेद् गुदमूलं चिबुकं हृदयोपरि।
नव द्वाराणि संयम्य कुक्षिमापूर्य वायुना॥ ३२ ॥

शब्दबीजेन तां देवीं दृढविभ्रामयेत्ततः।
वायुना भिद्य तद्वक्रं ऊर्ध्ववक्रं तु कारयेत्॥ ३३ ॥

p. 538)

उद्घाटयेत् कपाटं तु यथा कुञ्चिकया दृढम्।
उल्लासोज्ज्वलकारस्य शिखा याति समुज्ज्वला॥ ३४ ॥

मूलचक्रं ततो भित्त्वा ब्रह्मद्वारं विभेदयेत्।
ऊर्ध्वं भित्त्वा तु लिङ्गं वै इतरं पुष्करं ततः॥ ३५ ॥

मूलाधारे सन्ततं ध्यानयोगात्
स्तम्भक्षोभावुत्प्लुतिर्दार्दुरीव।
भूमित्यागः खेचरत्वं क्रमेण

नृणामेते षड्गुणाः सम्भवन्ति ॥ ३६ ॥

कान्तिप्रकर्षो वपुषोऽपि
नादव्यक्तिः प्रदीप्तिः जठरानलस्य ।
लघुत्वमङ्गस्य निजेन्द्रियाणां
पटुत्वमारोग्यमदीनता च ॥ ३७ ॥

स्वाधिष्ठानचक्रम् तद्ध्यानफलम्

मूलादिपद्मषट्कञ्च कलिकासदृशं शुभम् ।
स्वाधिष्ठानं महापद्मं लिङ्गमूले रसच्छदम् ॥ ३८ ॥

p. 536)

बन्धूक पुष्पसङ्काशं सदा जलसमन्वितम् ।
सिन्दूरप्रस्फुरद्वर्णैर्बादिलान्तैश्च मण्डितम् ॥ ३९ ॥

शूलं वज्रं तथा पद्मं डमरुं करपङ्कजैः ।
दधानां श्यामवर्णाञ्च राकिणीं त्रितयान्विताम् ॥ ४० ॥

रक्तधात्वेकनाथां तां चिन्तयेत्तत्र साधकः ।
विचिन्त्य स्थिरचित्तेन अधिष्ठानं प्रभेदयेत् ॥ ४१ ॥

इह वेत्ति निधाय मानसं स्वं

विविधश्चाश्रुतशास्त्रजालमुच्चैः ।

अवधूतजरामयः स मर्त्यः

सुचिरं जीवति वीतमृत्युभीतिः ॥ ४२ ॥

वपुषोऽशुचिता जनस्य शश्वत्

परमां शुद्धिमिहातनोति पुंसाम् ।

शरदम्बुजपेलवस्य देहे

दृढरुद्धो घनताञ्च शीतरश्मिः ॥ ४३ ॥

मणिपूरचक्रम् तद्ध्यानफलम्

तदूर्ध्वे सव्यदक्षाभ्यां चिन्तयेत् साधकोत्तमः ।

पद्ममध्ये स्थितं शुद्धं विद्युताभं त्रिकोणकम् ॥ ४४ ॥

p. 537)

तन्मध्ये चिन्तयेद् देवं ब्रह्माणं हंसवाहनम् ।

रक्तवर्णं चतुर्वक्त्रं दधतञ्च त्रिलोचनम् ॥ ४५ ॥

चिन्तयेत् कूर्चपद्मे च अक्षमालां कमण्डलुम् ।

ब्रह्मसत्त्वाक्षमोङ्कारं स्थितं नाभेरधः सदा ॥ ४६ ॥

नाभौ नीलनिभं पद्मं मणिपूरं दशास्रकम् ।
विद्युत्पुञ्जस्फुरद्वर्णैर्डादिफान्तैश्च मण्डितम् ॥ ४७ ॥

वह्निना संयुतं तत्र लाकिनीं मांसधातुगाम् ।
मानसं संविभाव्याथ भेदयेत्तदनन्तरम् ॥ ४८ ॥

स्थानेऽस्मिन्निहितात्मनः सुकृतिनः पातालसिद्धिं परां
खड्गस्याप्रतिमस्य साधनमपि स्यादीप्सितञ्च क्षितौ ।
रूपं भूमिविसर्जनं परपुरे शक्तः प्रवेष्टुं जरा-
हानिश्चाखिलदुःखरोगशमनं कालस्य वा वञ्चनम् ॥ ४९ ॥

अनाहतचक्रम् तद्ध्यानफलम्

अनाहतं हृदि ध्यायेत् पिङ्गाभं द्वादशच्छदम् ।
द्रुतस्वर्णप्रभावर्णैः कादिठान्तैश्च मण्डितम् ॥ ५० ॥

p. 538)

मेदःस्थां काकिनीं तत्र पीताभां मत्तरूपिणीम् ।
अभयं डमरुं शूलं पाशञ्च करपङ्कजैः ॥ ५१ ॥

दधानां चारुरुपाञ्च नानाभरणभूषिताम् ।
तत्रैवाङ्गुष्ठमात्मानं प्रदीपकलिकोपमम् ॥ ५२ ॥

तत्र सञ्चिन्तयेद् देवं नारायणं निरञ्जनम् ।
शुद्धस्फटिकसङ्काशं वाणीलक्ष्मीविभूषितम् ॥ ५३ ॥

वैनतेयसमारूढं शङ्खचक्रगदाधरम् ।
पीताम्बरधरं शान्तं वनमालाविभूषितम् ॥ ५४ ॥

पूर्णशैलं महापीठं तत्रैव परिचिन्तयेत् ।
प्रभेदयेत्ततः पश्चात् साधकः स्थिरमानसः ॥ ५५ ॥

एतस्मिन् सततं निविष्टमनसः स्थाने विमानस्थिताः
क्षुभ्यन्त्यद्भुतरूपकान्तिकलिता दिव्यस्त्रियो योगिनः ।
ज्ञानञ्चाप्रतिमं त्रिकालविषयं क्षोभः पुरस्य श्रुति-
दूरादेव च दर्शनञ्च खगतिः स्याद्योगिनीमेलनम् ॥ ५६ ॥

विशुद्धचक्रम् तद्ध्यानफलम्

विशुद्धं षोडशारञ्च धूम्राभं कण्ठदेशके ।

p. 539)

तदन्ते व्योमबीजञ्च शुक्लं हैमगजस्थितम् ॥ ५७ ॥

तरुणारुणसङ्काशैः स्वरैश्च परिमण्डितम् ।
आकाशसहितं पद्मं शाकिनीं परिचिन्तयेत् ॥ ५८ ॥

अस्थिसंस्थां चतुर्बाहुं पञ्चवक्त्रां त्रिलोचनाम् ।
पाशाङ्कुशौ पुस्तकञ्च ज्ञानमुद्राञ्च धारिणीम् ॥ ५९ ॥

दंष्ट्रिणीमुग्ररूपाञ्च सदा मधुमदाकुलाम् ।
अर्धनारीश्वरं देवं नानामणिविभूषितम् ॥ ६० ॥

चन्द्रचूडं त्रिनयनं वराभयकरं शुभम् ।
ध्यात्वैवं चक्रराजं तु भेदयेत् साधकोत्तमः ॥ ६१ ॥

स्थानेऽत्र संसक्तमना मनुष्य-
स्त्रिकालदर्शी विगताधिरोगः ।
जित्वा जरामञ्जननीलकेशः
क्षितौ चिरं जीवति वीतमृत्युः ॥ ६२ ॥

इह स्थाने चित्तं सततमवधायात्तपवनो
यदि क्रुद्धो योगी चलयति समस्तं त्रिभुवनम् ।
न च ब्रह्मा विष्णुर्न च हरिहरो नैव खमणि-
स्तदीयं सामर्थ्यं शमयितुमलं नापि गणपः ॥ ६३ ॥

p. 540)

आज्ञाचक्रम् तद्ध्यानफलम्

द्विदलं हक्षवर्णाभ्यां शुभाभ्यां परिमण्डितम् ।
विद्युत्कोटिप्रभं चक्रं भ्रुवोरूर्ध्वे मनोन्मनी ॥ ६४ ॥

बिन्दुयुक्तं सर्ववर्णं सर्वपद्मेषु चिन्तयेत् ।
योनिमध्ये स्थितं लिङ्गमितरं तरुणारुणम् ॥ ६५ ॥

जालन्धरं महापीठं हाकिनीं तत्र चिन्तयेत् ।
बिन्दुस्थां हाकिनीं शुक्रमेदोमज्जास्वरूपिणीम् ॥ ६६ ॥

अक्षमालाञ्च डमरुं कपालं पुस्तकं तथा ।
चापं मुद्रां दधानाञ्च शुक्लां नेत्रत्रयान्विताम् ॥ ६७ ॥

पद्ममध्येऽन्तरात्मानं प्रभारूपं हि कारणम् ।
ओङ्कारज्योतिषं कल्पप्रदीपाभं जगन्मयम् ॥ ६८ ॥

बालसूर्यप्रतीकाशां सदा बिन्दुमदक्षरम् ।
ततः सङ्क्षोभणद्वारे ध्यायेत् पद्मं सुशोभनम् ॥ ६९ ॥

p. 541)

ध्यानयोगनिरतस्य जायते पूर्वजन्मकृतकर्मणां स्मृतिः।
तत्र बिन्दुनिलये च दूरतो दर्शनश्रवणयोः समर्थता ॥ ७० ॥

इह सन्निहितस्वचित्तवृत्तिः प्रतिमायाः प्रतिजल्पनं करोति।
गमनञ्च पुरे परेषां पुनरुत्थानमप्यहो मृतस्य ॥ ७१ ॥

निरालम्बां मुद्रां निजगुरुमुखेनैव विदिता-
मिह स्थाने कृत्वा स्थिरनिशितधीः साधकवरः।
सदाऽभ्यासात् पश्यत्यमरनिलयानन्तरखिला-
मुडुश्रेणीं विष्णोरपि पदमुडूनामपि पतिम् ॥ ७२ ॥

भेदान्ते पद्मषट्कं च प्रस्फुटञ्चोर्ध्ववक्त्रकम्।
भवत्येव न सन्देहोऽप्यथ स्यात् साधकस्य च ॥ ७३ ॥

तदूर्ध्वे चार्धचन्द्रे च भानुमण्डलमुत्तमम्।
मकारबिन्दुरूपेण तदूर्ध्वे चन्द्रमण्डलम् ॥ ७४ ॥

बिन्दोरुपरि नादं हि शुद्धस्फटिकसन्निभम्।
चेतसा सम्प्रपश्यन्ति नादान्ते वृषभध्वजम् ॥ ७५ ॥

शुद्धस्फटिकसङ्काशं कपर्दशशिभूषणम्।

p. 542)

व्याघ्राम्बरं तु तन्मध्ये अधोमुखं सशक्तिकम् ॥ ७६ ॥

स्थाने ह्यत्र परीतञ्च वरदाभयपाणिकम् ।
प्रसन्नवदनं शान्तं सर्पयज्ञोपवीतिनम् ॥ ७७ ॥

नादोपरि महादेवं पश्यन्ति ज्ञानचक्षुषा ।
नान्यत् पश्यन्ति तत्रैव अन्तरं वृषभध्वजम् ॥ ७८ ॥

पुरत्रयविनिष्क्रान्तो यत्र वायुः प्रलीयते ।
तत्र संस्थं मनः कृत्वा तद्ध्यानमीश्वरं विदुः ॥ ७९ ॥

विभाव्य साधकश्रेष्ठो भेदयेत्तदनन्तरम् ।
शङ्खिनीनालं संस्थाप्यव्याप्तिशून्यं विभर्ति यः ॥ ८० ॥

अमृतोदधिसङ्काशं शतयोजनविस्तृतम् ।
चन्दनोद्यानमध्यस्थं वेदिकां तु तदन्तरे ॥ ८१ ॥

तन्मध्ये स्फटिकं ध्यायेत् पश्चिमाननमम्बुजम् ।
स्रवन्तममृतं नित्यं देव्यङ्गे कमलान्तरे ॥ ८२ ॥

p. 543)

सहस्रारपद्मवर्णनम्

सहस्रारपद्मं विसर्गादधस्ता-
दधो वक्त्रमारक्तकिञ्जल्कपुञ्जम् ।
कुरङ्गेण हीनस्त्रिशृङ्गस्तदन्तः
स्फुरद्रश्मिजालः सुधांशुः समास्ते ॥ ८३ ॥

तदन्तर्गतं ब्रह्मरन्ध्रं सुसूक्ष्मं
यदाधारभूतं सुषुम्णाख्यनाड्याः ।
तदेतत् पदं दिव्यमत्यन्तगुह्यं
सुरैरप्यगम्यं सुगोप्यं सुयत्नात् ॥ ८४ ॥

एतत् कैलाससञ्ज्ञं परमकुलपदं बिन्दुरूपी स्वरूपी
यत्रास्ते देवेदवो भवभयतिमिरध्वंसहंसो महेशः ।
भूतानामादिदेवो रसविसरसितां सन्ततामन्तरङ्गे
सौधीं धारां विमुञ्चन्नभिमत फलदो योगिनां योगगम्यः ॥ ८५ ॥

स्थानस्यास्य ज्ञानमात्रेण पुंसां
संसारेऽस्मिन् सम्भवो नैव भूयः ।
भूतग्रामं सन्ततन्यासयोगात्
कर्तुं हर्तुं स्याच्च शक्तिः समग्रा ॥ ८६ ॥

स्थाने परे हंसनिवासभूते-

कैलासनाम्नीह विधाय चेतः ।

p. 544)

योगी गतव्याधिरधःकृताधि-

वाधश्चिरं जीवति मृत्युमुक्तः ॥ ८७ ॥

स्थानेऽस्मिन् क्षयवृद्धिभावरहिता नित्योदिताऽधोमुखी

बालादित्यनिभप्रभाशशभृतः साऽस्ते कला षोडशी ।

बालाग्रस्य विखण्डितस्य शतधा चैकेन भागेन या

सूक्ष्मत्वात् सदृशी निरन्तरगलत्पीयूषधाराधरा ॥ ८८ ॥

एतस्याः परतः स्थिता भगवती भूताधिदेवाधिपा

निर्वाणाख्यकलाऽर्धचन्द्रकुटिला सा षोडशान्तर्गता ।

बालाग्रस्य सहस्रधा विगलितस्यैकेन भागेन या

सूक्ष्मत्वात् सदृशी त्रिलोकजननी या द्वादशार्कप्रभा ॥ ८९ ॥

निर्वाणाख्यकलापदोपरिगता निर्वाणशक्तिः परा

कोट्यादित्यसमप्रभाऽतिगहना बालाग्रभागस्य या ।

कोट्यंशेन समा समस्तजननी नित्योदिता निर्मला

नित्यानन्दपदस्थलोरुविगलद्धारा निरालम्बना ॥ ९० ॥

p. 545)

एतस्याः परतः परात्परतरं निर्वाणशक्तेः पदं

शैवं शाश्वतमप्रमेयममलं नित्योदितं निष्क्रियम् ।

तद्विष्णोः पदमित्युशन्ति सुधियः केचित् पदं ब्रह्मणः

केचिद्धंसपदं निरञ्जनपदं केचिन्निरालम्बनम् ॥ ९१ ॥

आरोप्याऽरोप्य शक्तिं कमलजनिलयादात्मना साकमेषु

स्थानेष्वाज्ञावसानेष्ववहितहृदयश्चिन्तयित्वा क्रमेण ।

नीत्वा नादावसानं खगत कुलमहापद्मसद्मान्तरस्थां

ध्यायेच्चैतन्यरूपामभिमतफलसम्प्राप्तये शक्तिमाद्याम् ॥ ९२ ॥

साक्षाल्लाक्षारसाभं गगनगतमहापद्मसद्मस्थहंसां

पीत्वा दिव्यामृतौघं पुनरपि च विशेन्मध्यदेशं कुलस्य ।

चक्रे चक्रे क्रमेणामृतरसविसरैस्तर्पयेत् देवतास्ता

हाकिन्याद्याः समस्ताः कमलजपदगां तर्पयेत् कुण्डलीं ताम् ॥ ९३ ॥

कुण्डली कुण्डलाकारानक्रीभूता निवासिनी ।

इडा च पिङ्गला चैव सुषुम्नानिलयं व्रजेत् ॥ ९४ ॥

शक्तिं भैरवसंयोगादमृतानन्दमानयेत् ।

p. 546)

चन्द्रमार्गेण वायुञ्च पिबेत्तञ्च शनैः शनैः ॥ ९५ ॥

कुम्भकञ्च यथाशक्त्या सुर्यमार्गेण रेचयेत् ।
सूर्यमार्गे पिबेद्वायुं चन्द्रमार्गेण रेचयेत् ॥ ९६ ॥

शून्यञ्च प्रतिविम्बचन्द्रसदृशं सूक्ष्मातिसूक्ष्मं परं
सर्वं व्याप्य तमोमयं जगति सद्धामप्रकाशं परम् ।
दृश्यादृश्यविनाशभेदसकलं ज्योतिर्मयं सर्वतो
ध्यात्वा तच्च पदं तु साधकवरैः दूरीकृतश्चान्तकः ॥ ९७ ॥

एवमभ्यस्यमानस्य अहन्यहनि निश्चितम् ।
जरामरणदुःखाद्यैर्मुच्यते भवसागरात् ॥ ९८ ॥

योनिमुद्राबन्धफलकथनम्

चतुर्विधा तु या सृष्टिर्यस्यां योनौ प्रजायते ।
पुनः प्रलीयते यस्यां कालाग्न्यादिशिवान्तकम् ॥ ९९ ॥

योनिमुद्रा परा ह्येषा बन्धस्तस्याः प्रकीर्तितः ।
तस्यास्तु बन्धमात्रेण तन्नास्ति यन्न साधयेत् ॥ १०० ॥

p. 547)

अन्यथा जप्यते यस्तु अन्यथा कुरुते तु यः।
नासौ तत्फलपात्रञ्च सत्यं सत्यं न संशयः॥ १०१॥

छिन्ना बन्धाश्च ये मन्त्राःकीलिताः स्तम्भिताश्च ये।
दग्धाः सन्त्रासिता हीना मलिनाश्च तिरस्कृताः॥ १०२॥

भेदिता भ्रमसंयुक्ताः सुप्ता सम्मुर्च्छिताश्च ये।
वृद्धा बालास्तथा प्रौढास्तथा यौवनगर्विताः॥ १०३॥

अरिपक्षे स्थिता ये च निर्वीर्याः सत्त्ववर्जिताः।
अंशकेन विहीनाश्च खण्डशः शतधा कृताः॥ १०४॥

विधिनानेन संयुक्ताः प्रभवन्त्यचिरेण तु।
सिद्धिमोक्षप्रदाः सर्वे साधकेन नियोजिताः॥ १०५॥

यद्यदुच्चरते मन्त्री वर्णरूपं शुभाशुभं।
तत्तत् सिध्यत्यसन्देहो योनिमुद्रानिबन्धनात्॥ १०६॥

दीक्षयित्वा विधानेन अभिषिच्य सहस्रधा।
ततोऽधिकारी भवति तन्त्रेऽस्मिन् साधकोत्तमः॥ १०७॥

ब्रह्महत्यासहस्राणि त्रैलोक्यमपि घातयेत्।

नासौ लिप्यति पापेन योनिमुद्रानिबन्धनात् ॥ १०८ ॥

p. 548)

तस्मादभ्यसनं नित्यं कर्तव्यं पुण्यकाङ्क्षिभिः ।
अयासाज्जायते सिद्धिरभ्यासान्मोक्षमाप्नुयात् ॥ १०९ ॥

सम्वित्तिं लभतेऽभ्यासात् योगोऽभ्यासात् प्रवर्तते ।
मन्त्राणां सिद्धिरभ्यासादभ्यासाद्वायुसाधनम् ॥ ११० ॥

कालवञ्चनमभ्यासात्तथा मृत्युञ्जयो भवेत् ।
एतद्भेदं विजानाति स याति परमं पदम् ॥ १११ ॥

तदष्टधा तु जीवोऽसौ बहिर्याति दिने दिने ।
दिनेशाङ्गुलिमानेन तदर्धञ्चोपवासतः ॥ ११२ ॥

त्रिगुणं रतिकाले च द्विगुणं भोजनाद् बहिः ।
अत ऊर्ध्वं वहेद्वायुस्त्रिगुणं यदि दैवतम् ॥ ११३ ॥

न्यूनं धत्ते ततः प्राणः शरीरं परिमुञ्चति ।
शरीरसमतां नीत्वा न्यूनं वा साधकोत्तमः ॥ ११४ ॥

कुम्भयित्वा अधोवायुं कुण्डलीमुखवर्त्मनि ।

योजयित्वा ततो जीवं कुण्डल्या सहितं सुधीः ॥ ११५ ॥

गमागमं कारयित्वा सिद्धो भवति नापरः ।
पीयते खाद्यते यत्तु तत्सर्वं कुण्डलीमुखे ॥ ११६ ॥

हुत्वा सिद्धिमवाप्नोति न च बन्धेन बाध्यते ।

p. 549)

अवधूताचारकथनम्

भिक्षा कार्या न च स्वार्थं कुण्डल्याः प्रकृतेः पुनः ॥ ११७ ॥

रे मातर्देहि मे भिक्षां कुण्डलीं तर्पयाम्यहम् ।
अवधूताश्रमे स्थित्वा भैरवानन्दतत्परः ॥ ११८ ॥

भैरवोऽहं न चान्योऽस्मि न चान्यो मत्परः क्वचित् ।
तन्त्रमन्त्रार्चनं सर्वं मयि जातं न चान्यथा ॥ ११९ ॥

शिवोऽहं भैरवानन्दो मत्तोऽहं कुलनायकः ।
रक्तमाल्याम्बरधरो हेतुयुक्तः सदा भवेत् ॥ १२० ॥

एवं भिक्षां व्रजन् भिक्षुर्भैरवानन्दतत्परः ।

येन केनापि वेशेन येन केनाऽप्यलक्षितः ॥ १२१ ॥

यत्र कुत्राश्रमे तिष्ठन् कुलयोगीश्वरः सदा ।
उन्मत्तमुकजडवत् विरले लोकमध्यगे ॥ १२२ ॥

p. 550)

क्वचिच्छिष्टः क्वचिद्भ्रष्टः क्वचिद् भूतपिशाचवत् ।
नानावेशधरो योगी विचरेत्तु महीतले ॥ १२३ ॥

सर्वस्पर्शो यथा वायुर्यथाकाशश्च सर्वगः ।
सर्वभक्षो यथा वह्निस्तथा योगी सदा शुचिः ॥ १२४ ॥

तथा म्लेच्छगृहान्नादि योगीहस्तगतं शुचि ।
क्षीयते न च पापेन बध्यते न च जन्मना ॥ १२५ ॥

यद्वन्मन्त्रबलोपेतः क्रीडन् सर्पैर्न दंश्यते ।
तथा ज्ञानपरो योगी क्रीडन्निन्द्रियपन्नगैः ॥ १२६ ॥

पूजयन्ति महादेवीं कुलाङ्गकृष्टिमात्रतः ।
गन्धं पुष्पञ्च ताम्बुलं नैवेद्यं यत्र यद्भवेत् ॥ १२७ ॥

मनसा तत् समुत्सृज्य बाह्यतः कुलवारिणा ।

आत्मन्येव समायोज्य देवीरूपकुलेश्वरः ॥ १२८ ॥

p. 551)

न पूजा नापि तन्नाम न निष्ठा न व्रतादिकम् ।
पूर्णोऽहं भैरवश्चाहं नित्यानन्दोऽहमव्ययः ॥ १२९ ॥

निरञ्जनस्वरूपोऽहं निर्विकारो ह्यहं प्रभुः ।
सर्वशास्त्राभियुक्तोऽहं सर्वमन्त्रार्थपास्याः ॥ १३० ॥

अस्मत्परतरो देशो न जातो न जनिष्यति ।
आनन्दरूपवान् भूत्वा सर्वेषां प्रियकारक ॥ १३१ ॥

न योगी न भोगी न वात्मा न काङ्क्षी
न वीरो न धीरो न वा साधकेन्द्रः ।
सदानन्दपूर्णो धरण्यां विवेकी
चिराज्ज्ञातधूतो द्वितीयो महेशः ॥ १३२ ॥

श्रुतौ कुण्डलेऽसृग् गले मुण्डमाला
करे पानपात्रं मुखे हन्त हाला ।
परित्यक्तकर्मा लयन्यस्तधर्मा
विरक्तोऽवधूतो द्वितीयो महेशः ॥ १३३ ॥

p. 552)

वामे रामा रमणकुशला दक्षिणे पानपात्रं

मध्ये न्यस्तं मरिचसहितं शूकरस्योष्णमांसम् ।

स्कन्धे वीणा ललितसुभगा सद्गुरूणां प्रपञ्चः

कौलो धर्मः परमगहनो योगिनामप्यगम्यः ॥ १३४ ॥

इति श्रीमज्ज्ञानानन्दपरमहंसविरचिते कौलावलीनिर्णये एकविंशोल्लासः समाप्तः ॥ २१ ॥

*****************************************************************************************************
*****************************************************************************************************
** MUKTABODHA INDOLOGICAL RESEARCH INSTITUTE
** www.muktabodha.org
**
** "sriitattvacintaama.ni -Chapters 6 through 10- by Puur.naananda
**
** Critically edited from original manuscripts
** with original commentary by Bhuvanmohan Sa.mkhyatirtha
** and with notes by Chintamani Bhattacharya
**
** First published in Calcutta, 1936
**
**
** Data entered by the staff of Muktabodha
** under the supervision of Dr. Mark S.G. Dyczkowski
**
**
** Velthius transliteration
** revision 1 December 11, 2007
**
*
*
*****************************************************************************************************
****************************************************************************************************

(तत्र रुद्रमूर्तेरवस्थितिः)

ध्यायेन्मेषाधिरूढं नवतपननिभं वेदबाहूज्ज्वलाङ्गं

तत्क्रोडे रुद्रमूर्तिर्निवसति सततं शुद्धसिन्दूररागः।
भस्माऽलिप्ताङ्गभूषाभरणसितवपुर्वृद्धरूपी त्रिनेत्रो
लोकानामिष्टदाताऽभयलसितकरः सृष्टिसंहारकारी॥ २१॥

प्रकाशे इति विशेषणेन पद्मस्य नीलवर्णता प्रतीयते प्रागुक्तशाक्तानन्दतरङ्गिणीवचनेन तु रक्तवर्णत्वं स्पष्टमुक्तम्। गन्धर्वतन्त्रे पञ्चमपटले तु

तदूर्ध्वे नाभिदेशे तु मणिपूरं महत् पुरम्।
हेमाभं वैद्युताभञ्च बहुतेजोमयं तथा॥

इत्यनेन हेमाभत्वादिकं पद्मस्य विशेषणत्वेनोपपादितम्। एवञ्च स्थिते स्वरूपभेदे, श्रीनाथस्याज्ञया ध्यानार्थम् एकतरः पक्षः समाश्रयणीय इति तत्त्वम्।
मणिपूरपदव्युत्पत्तिमाह गन्धर्वतन्त्रे पञ्चमपटले

मणिमद्भिन्नं तं पूरं मणिपूरं ततो विदुः। इति।

अयमस्य निष्कर्षः स्वाधिष्ठानोर्ध्वे नाभिमूले गाढजलधरप्रभदशदलं मणिपूराख्यं कमलम्। दलानि चोर्ध्वनादबिन्दुसहितैर्नीलप्रभाभास्वरैः ड-ढ-ण-त-थ-द-ध-न-प-फ-रूपैर्दशभिर्वर्णैरुपेतानि। पद्मस्य कर्णिकायामरुणारुणप्रभाभास्वरं त्रिकोणं रंबीजगर्भं स्वस्तिकाख्यद्वारत्रययुक्तं वह्निमण्डलमिति।

२१। पूर्वश्लोके तत्र वह्नेः स्वबीजमित्युक्तम्, तदेव वह्निबीजं विशेषयति

ध्यायेदित्यादिना। तद् वह्निबीजं कीदृशमित्यत आह  मेषाधिरूढं मेषवाहनम्, तथा

नवतपननिभं तरुणारुणरागं रक्तवर्णमित्यर्थः, तथा वेदबाहूज्ज्वलाङ्गं

वेदैश्चतुर्भिर्बाहुभिरुज्ज्वलं शोभमानमङ्गं यस्य बाहुचतुष्टयेन

काञ्चनशोभामावहदित्यर्थः। एवंविधं वह्निबीजं ध्यायेदिति पूर्वेण सम्बन्धः।

अत्र रामवल्लभादिभिर्मेषाधिरूढं छागवाहनमिति व्याख्यातम्। तदसत्

छागस्थः साक्षसूत्रोऽग्निरित्यादिनाऽन्यत्र तस्य छागवाहनत्वेऽभिहितेऽपि

मेषस्थं साक्षसूत्रञ्च शक्तिहस्तं स्मरेत् ततः।

इति कालीचरणकृतषट्चक्रटीकाधृतवचनेन प्रकृते वह्निबीजस्य मेषवाहनत्वेनैव

ध्यानस्याभिधानात् प्रसिद्धार्थपरित्यागेनार्थान्तरकल्पनस्यानौचित्याच्च मेषवाहनत्वेन

ध्यान-

(p. 197) (अत्र पद्मे लाकिनीशक्तेस्वस्थितिरेतत्पद्मचिन्तनफलञ्च)

तत्रास्ते लाकिनी सा सकलशुभकरी वेदबाहूज्ज्वलाङ्गी

श्यामा पीताम्बराद्यैर्विविधविरचनालङ्कृता मत्तचित्ता।

ध्यात्वैतन्नाभिपद्मं प्रभवति नितरां संहृतौ पालने वा

वाणी तस्याननाब्जे विलसति सततं ज्ञानसन्दोहलक्ष्मीः ॥ २२ ॥

(अनाहतपद्मं तत्कर्णिकायां वायुमण्डलञ्च)

तस्योद्ध्वे हृदि पङ्कजं सुललितं बन्धूककान्त्युज्ज्वलं
काद्यैर्द्वादशवर्णकैरुपकृतं सिन्दूररागाञ्चितैः ।
नाम्नाऽनाहतजीवितं सुरतरुं वाञ्छातिरिक्तंप्रदं
वायोर्मण्डलमत्र धूमसदृशं षट्कोणशोभान्वितम् ॥ २३ ॥

मेव समीचीनमिति पश्यामः । अत्र वह्निबीजस्य स्थितेस्तत्र वह्नेरपि स्थितिरित्यवधेयम्,
मन्त्रदेवतयोरभेदस्य सर्वतन्त्रसिद्धत्वेन वह्निबीजस्थितिं वदता ग्रन्थकृता
वह्निदेवतास्थितेरप्यभिधानात् । एवं सर्वत्र ।

तत्र रुद्रावस्थितिमाह  तत्क्रोड इति । तस्य वह्निबीजस्य क्रोडे । अत्र लोकानामिष्टदाता
वरद इत्यर्थः ।

तदयमस्य निष्कर्षः  प्रागुक्तत्रिकोणस्थितं वह्निबीजं मेषवाहनं
तरुणारुणशोणं चतुर्भुजञ्च । वह्निबीजमध्ये तु वृद्धो रुद्रो निरुक्तविशेषणविशिष्टो निवसतीति
।

२२ । तत्र लाकिनीशक्तेः स्थितिमाह  तत्रास्त इति । अत्र पद्मकर्णिकायं सा

सर्वतन्त्रप्रसिद्धा लाकिनीशक्तिरास्ते। लाकिनीं विशेषयति  सकलेत्यादिना। पीताम्बराद्यैः पीतवस्त्रादिभिरलङ्करणसाधनैरित्यर्थः, या विविधा विचित्रप्रकारा विरचना वेशविन्यासः तया अलङ्कृता। पीताम्बराद्यैरुपलक्षिता तथा विविधविरचनालङ्कृता इति वा। एतन्मणिपूरचक्रचिन्तनफलमाह  ध्यात्वैतदिति।

२३। एवं मणिपूरचक्रं निरूप्याऽनाहतचक्रमाह  तस्योद्ध्र्व इति। तस्य मणिपूरपद्मस्य ऊर्द्ध्वे हृदि हृदयप्रदेशे नाम्ना अनाहतमीरितम् अनाहतसंज्ञयाभिहितमित्यर्थः पङ्कजं ध्यायेदित्यर्थः। पङ्कजं विशेषयति सुललितमित्यादिना। सुललितं सुस्निग्धं बन्धूक

(p. 198) (तत्र वायुबीजं तत्रेशस्थितिश्च)

तन्मध्ये पवनाक्षरञ्च मधुरं धूमावलीधूसरं
ध्यायेत् पाणिचतुष्टयेन लसितं कृष्णाधिरूढं परम्।
तन्मध्ये करुणानिधानममलं हंसाभमीशाभिधं
पाणिभ्यामभयं वरञ्च दधतं लोकत्रयाणामपि॥ २४॥

कान्त्युज्ज्वलं बन्धूककुसुमवदरुणवर्णम्, तथा सिन्दूररागाञ्चितैः सिन्दूरवद्रक्तवर्णैः काद्यैः ककारादिभिष्ठकारान्तैः क-ख-ग-घ-ङ-च-छ-ज-झ-ञ-ट-ठ रूपैर्द्वादशवर्णैरुपकृतम् उपकरणविशिष्टं युक्तमित्यर्थः। अत्र उपहितमिति कालीचरणटीकायां उपहृतमिति च रामवल्लभटीकायां पाठो दृश्यते तयोरपि तत्र तत्र

युक्तमित्येवार्थः, तथा वाञ्छातिरिक्तप्रदं सुरतरुम् अन्यः कल्पवृक्षो वाञ्छितमेव वस्तु प्रार्थिनेऽर्पयति एतत्पङ्कजरूपकल्पवृक्षस्तु वाञ्छितादप्यधिकं ददातीति तात्पर्यम्। वायोरिति। अत्र पद्मकर्णिकायां धूमसदृशंधूम्रवर्णं वायोर्मण्डलं ध्यायेत्। किम्भूतम्? षट्कोणशोभान्वितम्। एतेन वायुमण्डलं षट्कोणमिति दर्शितम्। व्यक्तमाह निर्वाणतन्त्रे सप्तमपटले

एतत्पद्मस्योद्ध्वंदेशे विमलं पद्मसुन्दरम्।
शोभितं द्वदशैः पत्रैः शोणवर्णसमन्वितम्।
पद्ममध्ये बीजकोषे षट्कोणमण्डलं शुभम्।
मण्डलस्य मध्यदेशे वायुबीजं मनोहरम्॥ इति।

एवञ्च बीजकोषान्तःषट्कोणे वायुबीजस्थितिरिति गम्यते। अनाहतपदव्युत्पत्तिमाह तन्त्रसारे

शब्दब्रह्ममयं शब्दोऽनाहतस्तत्र दृश्यते।
अनाहताख्यं पद्मं तन्मुनिभिः परिकीर्त्यते॥ इति।

अत्र शब्दब्रह्ममयमिति प्रक्रान्तपद्मविशेषणम्।

अयमस्य निष्कर्षः  मणिपूरोद्ध्वें हृदये बन्धूककुसुमशोणं सुस्निग्धं

द्वादशदलं चतुर्थमनाहताख्यं पद्मम्, तस्य च दलेषु एकैकशः सिन्दूरसवर्णाः क-ख-ग-घ-ङ-च-च-छ-ज-झ-ञ-ट-ठ-रूपान् द्वादश वर्णान् कर्णिकायां धूमधूम्रं षट्कोणं वायुमण्डलं ध्यायेदिति ।

२४ । तन्मध्य इति । तस्य वायुमण्डलस्य मध्ये पवनाक्षरं यम् इति वायुबीजं

(p. 199) (एतत्पद्मकर्णिकायां काकिनीशक्तेरवस्थितिः)

अत्रास्ते खलु काकिनी नवतडित्पीता त्रिनेत्रा शुभा
सर्वालङ्करणान्विता हितकरी सम्यग् जनानां मुदा ।
हस्तैः पाशकपालशोभनवरान् संबिभ्रती चाभयं
मत्ता पूर्णसुधारसार्द्रहृदया कङ्कालमालाधरा ॥ २५ ॥

ध्यायेदिति शेषः । वायुबीजं विशेषयति  मधुरमित्यादिना । मधुरं माधुर्यविशिष्टम् आनन्दमयमित्यर्थः ।

अनाहताख्यं पद्मं तन्मुनिभिः परिकीर्त्यते ।
आनन्दसदनं तच्चु पुरुषाधिष्ठितं परम् ॥

इति तन्त्रसारवचनात् । धूमावलीधूसरमिति धूमपुञ्जधूसरवर्णं पाणिचतुष्टयेन लसितं चतुर्बाहुं कृष्णाधिरूढं कृष्णसारवाहनं परं श्रेष्ठमिति

विशेषणचतुष्टयं वायुबीजस्य। अत्र वायुबीजस्थित्या समानवर्णवाहनवायुदैवतस्थितिरपि पूर्ववदुन्नेया।

एवं वायुबीजस्य स्वरूपं निरूप्य तदन्तरीश्वरावस्थितिमाह-तन्मध्य इति। तन्मध्ये वायुबीजमध्ये ईशाभिधम् ईश्वराख्यं शिवं चिन्तयेदित्यर्थः।

ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः।

इत्यादि ईश्वराख्यस्याऽनाहतपद्माधिष्ठातृत्वावधारणात्। ईशं विशेषयति हंसाभमित्यादिना। हंसाभं शुक्लवर्णं तथा पाणिभ्यां लोकत्रयाणामपि अभ्यं वरञ्च दधतं विदधानमित्यर्थः।

तथाचायमस्य निष्कर्षः प्रागुक्तवायुमण्डलान्तर्धूमधूम्रं कृष्णसारवाहनं चतुर्भुजं वायुबीजम्। तदन्तर्वराभयकरं शुक्लवर्णं करुणामयम् ईश्वराभिधानं शिवं ध्यायेदिति।

२५। अत्र पद्मे पद्मकर्णिकायामित्यर्थः काकिनीशक्तिरास्ते। अत्राविशेषेणोक्तावपि ईशपार्श्वे काकिन्याः स्थितिरवधेया रुद्रजामलोत्तरखण्डे सप्तपञ्चाशत्तमपटले

ईश्वरं योगिनामीशं ध्यायेद् हृत्पद्ममण्डले।

इत्यनेनेश्वरध्यानमभिधाय

तत्पार्श्वे ध्यानमाकुर्यात् काकिनीं परमेश्वरीम्।

इत्यनेन काकिन्या ईश्वरपार्श्ववर्तित्वप्रतिपादनादिति ध्येयम्। सा कीद्रशीत्याह  नवेत्यादि।
पूर्णसुधारसार्द्रहृदया  पूर्णः पूर्णानन्दकरो यः सुधारसः सहस्रारान्तराल

(p. 200) (एतत्पद्मकर्णिकान्तस्त्रिकोणाकारा शक्तिर्वाणलिङ्गञ्च)

एतन्नीरजकर्णिकान्तरलसच्छक्तिस्त्रिकोणाभिधा
विद्युत्कोटिसमानकोमलवपुः सास्ते तदन्तर्गता।
वाणाख्यः शिवलिङ्गकोऽपि कनकाकाराङ्गरागोज्ज्वलो
मौलौ सूक्ष्मविभेदयुङ्मणिरिव प्रोल्लासलक्ष्म्यालयः॥ २६॥

वर्तिशिवशक्तिसामरस्यगलितामृतरसः तेनार्द्रं हृदयं यस्यास्तथाभूता तदुक्तं
रुद्रजामलोत्तरे सप्तपञ्चाशत्तमपटले

त्रैगुण्यललितां सूक्ष्मां वराभयकराम्बुजाम्।
सुधापानरतां मत्तां परिपूर्णां कुलेश्वरीम्॥ इति।

रहस्यमिदं सहस्रारव्याख्याने विशदीकरिष्यामः। स्पष्टमन्यत्।

अयमस्य निष्कर्षः  एतत्पद्मकर्णिकायां त्रिनेत्रा चतुर्भुजा पीतवर्णा शुभकारिणी नानालङ्करणकृतवेशविन्यासा आनन्देन साधकानां हितं सम्पादयन्ती पाशकपालवराभयकरा मदमत्ता सहस्रारगलितामृतरसेनार्द्रीकृतहृदया कङ्कालमालिनी काकिनीशक्तिः शोभत इति।

२६। अनाहतपद्मस्यास्य कर्णिकायां त्रिकोणाकारशक्तेर्बाणाख्यलिङ्गस्य चावस्थितिमाह  एतदित्यादिना। एतस्य अनाहताख्यस्य नीरजस्य पद्मस्य या कर्णिका तस्या अन्तरे वायुबीजादधस्तात् लसन्ती या शक्तिः सा त्रिकोणाभिधा त्रिकोणाकारतया त्रिकोणेति नाम्ना प्रसिद्धा आस्ते। अत्र शक्तेस्त्रिकोणाकारत्वाभिधानात् त्रिकोणस्य योनिरुपतया तस्याऽधोमुखत्वमिति सूच्यते। शक्ते रूपमाह  विद्युदिति। विद्युत्कोटिसमानं कोटिकोटिविद्युत्समानतेजःपुञ्जं कोमलञ्च वपुर्यस्यास्तादृशी। तदन्तर्गता तस्य त्रिकोणस्यान्तर्गता इत्यर्थः। अत्र त्रिकोणशक्त्योरभेदेऽपि तदन्तर्गतेति पदमौपचारिकं तदभिन्नेत्यर्थः। रुद्रजामले सप्तपञ्चाशत्तमपटले

तत्पीठध्याननिकरे त्रिकोणां परिचिन्तयेत्।<br>
पीठशक्तिं सुवर्णाढ्यां विद्युत्कोटिसमोदयाम्।<br>
काकिनीसदृशीं मत्तां पूर्णान्तःकरणोद्यताम्॥

इत्यनेन त्रिकोणशक्त्योरभेदाभिधानात्। यत्तु कालीचरणेन तदन्तर्गत इति पाठं वाणाख्यः शिवलिङ्गक इत्यस्य विशेषणत्वेनाङ्गीकृत्य

(p. 201) (एतदनाहतपद्मचिन्तनफलम्)

ध्यायेद् यो हृदि पङ्कजं सुरतरुं शर्वस्य पीठालयं
देवस्यानिलहीनदीपकलिकाहंसेन संशोभितम्।
भानोर्मण्डलमण्डितान्तरलसत्किञ्जल्कशोभाकरं
वाचामीश्वर ईश्वरोऽपि जगतां रक्षाविनाशक्षमः॥ २७॥

तिकोणान्तर्वाणलिङ्गं कनकाभरणैर्युतम्।

इत्यादिवचनं स्वमतसमर्थनानुकूलमुदाहृतं तदपि त्रिकोणाकारशक्तिदक्षपार्श्वे वाणाख्यलिङ्गस्थितिपरत्वेन व्याख्येम्, रुद्रयामलोत्तरखण्डे सप्तपञ्चाशत्तमपटले त्रिकोणशक्तिमुपक्रम्य

तद्दक्षिणे पार्श्वभागे चिन्तयेद् वाणलिङ्गकम्।
सुवर्णशुद्धसङ्काशं निर्मलं चारुतेजसम्।
महालक्ष्मीप्रियानन्दं सर्वाकारं निरञ्जनम्।
ज्ञानयोगोदयं ब्रह्मरूपिणं बहुरूपिणम्।
प्रदीपकलिकाकारं चिन्तयेदीश्वरं शिवम्॥

इत्यनेन तद्दक्षे वाणलिङ्गस्थितेरभिधानात्। एवञ्च वाणाख्य इत्यादेरयमर्थः निरुक्तत्रिकोणशक्तिदक्षभागे वाणाख्यः शिवलिङ्कोऽपि आस्ते। स कीदृशः? कनकाकाराङ्गरागोज्ज्वलः कनकवदुज्ज्वलकान्तिः। तथा मौलौ मस्तके सूक्ष्मविभेदयुक् सूक्ष्मच्छिद्रयुक्तो मणिरिव, मणेरुपरि सूक्ष्मं छिद्रमिव वाणशिरसि सूक्ष्मो बिन्दुः प्रकाशत इत्यर्थः। प्रोल्लासेति। प्रकृष्ट उल्लासो यस्यास्तादृशी या लक्ष्मीस्तस्या आश्रयः शोभातिशयविशिष्ट इत्यर्थः। शृङ्गाररसोल्लासवानिति वा।

तथा चायमस्य निष्कर्षः  निरुक्ताऽनाहतकमलकर्णिकायां वायुबीजादधः कोटिविद्युद्दीप्ता कोमला च त्रिकोणाकारा शक्तिः, तद्दक्षिणपार्श्वे कनकोज्ज्वलकान्तिः सार्द्धचन्द्रबिन्दुशिरस्कः शोभातिशयसम्पन्नो वाणलिङ्गाख्यः शिवो वर्तत इति।

२७। अथाऽनाहतपद्मस्यावशिष्टं स्वरूपं चिन्तनफलञ्चाह  ध्यायेदिति। यः साधको हृदि पङ्कजमनाहताख्यं ध्यायेत्, स वाचामीश्वरः बृहस्पतितुल्यः सर्वशास्त्रार्थवेत्ता वाक्पटुश्च भवति। तथा जगतां रक्षाविनाशक्षम ईश्वरोऽपि भवति। अत्रापिशब्देन सृष्टेरपि संग्रहः, ततश्च सृष्टिस्थितिसंहारक्षमो भवतीत्यर्थः। यद्वा

(p. 202) योगीशो भवति प्रियात् प्रियतमः कान्ताकुलस्यानिशं
ज्ञानीशोऽपि कृती जितेन्द्रियगणो ध्यानावधानक्षमः।
गद्यैः पद्यपदादिभिश्च सततं काव्याम्बुधारावहो

लक्ष्मी रङ्गणदैवतं परपुरे शक्तः प्रवेष्टुं क्षणात्॥ २८॥

न केवलं वाचामीश्वरः जगतामपि ईश्वरः अधिपतिर्भवति, कीदृशः ? रक्षाविनाशक्षमः । एतत्पद्मध्यानफलभूतमाधिपत्यमधिगम्य भगवत्सृष्टस्य जगतः पालनं विनाशञ्च कर्तुं प्रभवतीत्यर्थः। पद्मं कीदृशमित्यत आह सुरतरुं कल्पवृक्षस्वरूपम् अभीष्टसम्पादकमित्यर्थः। तथा देवस्य द्योतनशीलस्य शर्वस्य पीठालयं निवासस्थानम् । तथा अनिलहीनदीपकलिकाहंसेन अनिलहीना निर्वाता या दीपकलिका वायुसञ्चाररहितनिष्कम्पदीपशिखा तदाकारेण हंसेन जीवात्मना संशोभितम्। निवातनिष्कम्पदीपशिखानिश्चलो जीवात्मा हृत्पद्मेऽस्मिन् वर्तत इत्यर्थः। तथा भानोर्मण्डलेन सूर्यमण्डलेन मण्डितम् अन्तरं येषां तथाभूता अत एव लसन्तः अरुणकिरणसम्पर्केण शोभाविशेषं वहन्तः ये किञ्जल्काः केशराः तेषां या शोभा तस्या आकरम् आधारभूतमित्यर्थः। रुद्रयामलोत्तरखण्डे सप्तपञ्चाशत्तमपटले अनाहतपद्मं प्रकृत्य

एतेषां ध्यानमाकृत्य वागीशो भवति क्षणात्।
राज्यसिद्धिं तत्र नाथ चिन्तयेत्तत्प्रसिद्धये।
तत्र भानोर्मण्डलञ्च चिन्तयेत् साधकाग्रणीः॥
पद्मकिञ्जल्कमध्ये तु चिन्तयेदरुणायुतम्।
मासैकसाधनादेव योगी स्याच्छीतलाङ्कधृक्॥

इत्यादिना पद्मस्य कर्णिकान्तर्भानुमण्डलचिन्तनमुपदिश्य केशरेष्वपि सूर्यायुतचिन्तनाभिधानात् प्रकृतेऽपि केशराणां भानुमण्डलमण्डितत्वमुपपद्यत एव ।

एवञ्चायमस्य निष्कर्षः  प्रागुक्तवाणलिङ्गादधो निरुक्तरूपो जीवात्मा, पद्मस्य कर्णिकान्तः सूर्यमण्डलं किञ्जल्कानामभ्यन्तरप्रदेशाश्च सौरकिरणनिकरपरिशोभिता इति ।

२८ । श्लोकान्तरेण फलान्तरमाह  योगीश इति । यः साधकः पद्ममिदं प्रागुक्तक्रमेण चिन्तयेत् स योगीशः योगिश्रेष्ठो भवति । तथा अनिशं कान्ताकुलस्य प्रियात्

(p. 203) (विशुद्धपद्मम् तत्कर्णिकायां नभोमण्डलस्थितिश्च)

विशुद्धाख्यं कण्ठे सरसिजममलं धूमधूम्रावभासं
स्वरैः सर्वैः शोणैर्दलपरिलसितैर्दीपितं दीप्तबुद्धेः ।
समास्ते पूर्णेन्दुप्रथिततमनभोमण्डलं वृत्तरूपं
हिमच्छायानागोपरि लसिततनोः शुक्लवर्णाम्बरस्य ॥ २९ ॥

प्रियतमः अतिशयेन प्रिय इत्यर्थः । ज्ञानिशः ज्ञानिनां श्रेष्ठः । अत्र योगीश-ज्ञानीशपदद्वयेन कर्मज्ञानोभयाधीशत्वं प्रदर्शितम् । अपिशब्दस्तथार्थे । कृती पण्डितः । जितेन्द्रियगणः जितः इन्द्रियगणो येन, एतेन ज्ञानोदयाद् विषयासक्तिराहित्येन बीजरूपेण स्थितानामपि वासनानां सर्वथापगमादिन्द्रियजयः सुतरामेव भवतीत्युक्तम् । तदुक्तं श्रीमद्भगवद्गीतायाम्

विषया विनिवर्तन्ते निराहारस्य देहिनः।
रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तते॥ इति।

तथा ध्यानावधानक्षमः ध्याने ब्रह्मस्वरूपचिन्तने यत् अवधानं सुतरामभिनिवेशस्तत्र क्षमो भवति। काव्याम्बुधारावहः निरन्तरकाव्यामृतरसास्वादनविदग्धः। तथा लक्ष्मी रङ्गणदैवतं लक्ष्म्या रङ्गणस्य क्रीडनस्य दैवतं देवता नारायणस्तत्सदृश इत्यर्थः। वृन्दारका दैवतानि पुंसि वेत्यमरः। दन्त्यनकारवत् पाठे तु तस्य लक्ष्मीः अङ्गनदैवतं भवतीति। स परपुरे परशरीरे क्षणात् प्रवेष्टुं शक्तः। एतच्चिन्तनेन परकायप्रवेशयोग्यतां लभत इत्यर्थः।

२९। एवमनाहतपद्मं निरूप्य विशुद्धाख्यं पद्ममाह-विशुद्धेति। पद्मस्यास्य विशुद्धसंज्ञाहेतुमाह शाक्तानन्दतरङ्गिण्यां चतुर्थोल्लासे

विशुद्धिस्तन्यते यस्माज्जीवस्य हंसलोकनात्।
विशुद्धपद्ममाख्यातमाकाशाख्यं महाद्भुतम्॥ इति।

कण्ठे कण्ठप्रदेशे विशुद्धाख्यं विशुद्धाभिधानं सरसिजं पद्मं समास्ते। सरसिजं विशेषयति  अमलमित्यादिना। अमलं मलरहितम्। तथा धूमधूम्रावभासं धूमवत् धूम्रः अवभासो दीप्तिर्यस्य तथाभूतम्। एतेन धूम्रवर्णमिदं पद्ममित्युक्तं

भवति। पत्रेषु वर्णानां संस्थितिं विशेषणप्रदर्शनमुखेनाह  स्वैरैरिति। दलपरिलसितैः दलेषु

(p. 204) (तत्र सदाशिवस्थितिः)

भुजैः पाशाभीत्यङ्कुशवरलसितैः शोभिताङ्गस्य तस्य
मनोरङ्के नित्यं निवसति गिरिजाभिन्नदेहो हिमाभः।
त्रिनेत्रः पञ्चास्यो ललितदशभुजो व्याघ्रचर्माम्बराढ्यः
सदापूर्वो देवः शिव इति च समाख्यानसिद्धिप्रसिद्धः॥ ३०॥

षोडशसु परिलसितैः शोभमानैः शोणैः रक्तवर्णैः सर्वैः स्वरैः अकारादिविसर्गान्तषोडशस्वरैरित्यर्थः दीप्तबुद्धेः अनवरतयोगाभ्यासविशुद्धमतेः साधकस्य सम्बन्धे दीपितम्। निरन्तरयोगानुशीलननिरस्तमलाः समुन्मीलितज्ञानप्रकर्षाः साधका एव रहस्यमिदमवगन्तुं प्रभवेयुरित्यर्थः।

अत्र दलपरिलसितैरित्येतावन्मात्रेणानुक्तायामपि दलसंख्यायां स्वरैः सर्वैरित्यनेन पत्रेषु षोडशस्वराणां स्थितेरभिधानाद् दलानामपि षोडशसंख्याकत्वमवगम्यते। तेनैकैकस्मिन् दले एकमेकं स्वरं चिन्तयेदित्यर्थः। व्यक्तमाह शाक्तानन्दतरगिण्यां चतुर्थोल्लासे

कण्ठदेशे विशुद्धाख्यं धूम्रवर्णं मनोहरम्।

अकारादिस्वरोपेतैर्दलैः षोडशभिर्युतम्॥ इति।

कर्णिकायां नभोमण्डलस्थितिमाह  पूर्णेति। पूर्णेन्दुप्रथिततमनभोमण्डलं पूर्णचन्द्रसदृशभास्वरशुक्लवर्णं नभोमण्डलं समास्ते। मण्डलस्याकारमाह वृत्तरूपमिति वृत्ताकारमित्यर्थः।

परश्लोके मनोरङ्के इत्यनेनाभिधास्यमानं मनुं विशेषयति  हिमेत्यादिना। मनोः कीदृशस्य? हिमच्छायायुक्तो यो नागः श्वेतवर्णहस्ती तस्य उपरि लसिता तनुर्यस्य तादृशस्य, तथा शुक्लाम्बरस्य शुक्लवर्णपरीधानस्येति।

३०। भुजैरिति। पाशाभीत्यङ्कुशवरलसितैर्भुजैः चतुर्भिरिति शेषः। अत्र पाशादीनां चतुर्णामभिधानाद् भुजानामपि चतुःसंख्याकत्वं बोध्यम्। तथाच निरुक्तलक्षणैर्भुजैः शोभितमङ्गं यस्य तादृशस्य मनोः हं इत्यात्मकस्य नभोबीजस्य अङ्के क्रोडे सदापूर्वो देवः शिवः सदाशिवो देवः इत्यस्य समाख्यानस्य या सिद्धिस्तया प्रसिद्धः नित्यं कालाद्यनवच्छिन्नं यथा स्यात्तथा निवसति। अत्र नभोबीजस्थितेरभिधानान्नभसोऽपि स्थितिः पूर्ववदुन्नेया। सदाशिवं विशेषयति  त्रिनेत्र इत्यादिना। गिरिजाभिन्नदेहः

(p. 205) (एतत्पद्मकर्णिकायां शाकिनीशक्तेश्चन्द्रमण्डलस्य चावस्थितिः)

सुधासिन्धोः शुद्धा निवसति कमले शाकिनी पीतवस्त्रा

शरं चापं पाशं सृणिमपि दधती हस्तपद्मैश्चतुर्भिः।
सुधांशोः संपूर्णं शशपरिरहितं मण्डलं कर्णिकायां
महामोक्षद्वारं श्रियमभि मतशीलस्य शुद्धेन्द्रियस्य॥ ३१॥

गिरिजया भिन्नः सम्भिन्नः देहो यस्य सः अर्द्धनारीश्वर इत्यर्थः। सदाशिवस्य दशभुजत्वं वृषवाहनत्वञ्चाह महानिर्वाणतन्त्रे चतुर्दशपटले

गङ्गाधरं दशभुजं शशिशोभितमस्तकम्।
हिमकुन्देन्दुसङ्काशं वृषासनविराजितम्।

इत्यनेन।

३१। सुधेति। अस्मिन् कमले कर्णिकायां शाकिन्याख्या शक्तिर्निवसति। सा च सुधासिन्धोः सुधासमुद्रादपि शुद्धा शुक्लवर्णा। अनेनामृतादपि साधकानां तृप्तिसम्पादिकेत्यपि सूच्यते। कर्णिकायां चन्द्रमण्डलस्थितिमाह-सुधांशोरिति। कर्णिकायां सुधांशोश्चन्द्रस्य शशपरिरहितं निषकलङ्कं संपूर्णं मण्डलं विलसतीत्यर्थः। एवञ्च कर्णिकायां नभोमण्डलचन्द्रमण्डलयोरुभयोः स्थितेरभिधानात् कर्णिकान्तर्नभोमण्डलमध्ये चन्द्रमण्डलं तत्र नभोबीजं तत्रार्द्धनारीश्वरः सदाशिवः शाकिनीशक्तिश्चेत्यवधेयम्। मण्डलं विशेषयति  महेति। श्रियं योगलक्ष्मीमभि लक्षीकृत्य मतं प्रशस्तं शीलं यस्य तादृशस्य योगाभ्यासपरायणस्येत्यर्थः अत एव

एव शुद्धेन्द्रियस्य योगाभ्यासविशुद्धमनसः साधकस्य महामोक्षद्वारम्
निर्वाणमुक्तिहेतुभूतमित्यर्थः ।

अत्र पद्मकर्णिकायां वृत्तरूपनभोमण्डलान्तर्गतनभोबीजान्तः सदाशिवस्थितिमाह ।
निर्वाणतन्त्रेऽष्टमपटले तु

पद्ममध्ये वराटे च जनर्लोकं सुसुन्दरम् ।
महामोहान्ध्यशमनं तद्बाह्ये चन्द्रमण्डलम् ।
तथा- बीजकोषे मणिद्वीपे षट्कोणचक्रमुत्तमम् ।
यन्त्रमध्ये च वृत्ताभं महासिंहासनं ततः ।

(p. 206) (एतत्पद्मचिन्तनफलम्)

इह स्थाने चित्तं निरवधि विनिधायात्मसंपूर्णयोगः
कविर्वाग्मी ज्ञानि स भवति नितरां साधकः शान्तचेताः ।
त्रिलोकानां दर्शी सकलहितकरो रोगशोकप्रमुक्त-
श्चिरञ्जीवी जीवी निरवधिविपदां ध्वंसहंसप्रकाशः ॥ ३२ ॥

(भ्रूमध्ये द्विदलमाज्ञापद्मं तत्कर्णिकायां हाकिनीशक्तेरवस्थितिश्च)

आज्ञाख्यानाम्बुजं तद्धिमकरसदृशं ध्यानधामप्रकाशं
हक्षाभ्यां वै कलाभ्यां प्रविलसितवपुर्नेत्रपत्रं सुशुभ्रम् ।

तन्मध्ये हाकिनी सा शशिसमधवला वक्त्रषट्कं दधाना
विद्यां मुद्रां कपालं डमरुजपवतीं बिभ्रती शुभ्रचित्ता ॥ ३३ ॥

तस्योपरि सदा गौरी दक्षभागे सदाशिवः ।
त्रिनेत्रः पञ्चवक्त्रश्च प्रतिवक्त्रे त्रिलोचनः ।
विभूतिभूषिताङ्गश्च रजताचलसोदरः ।
व्याघ्रचर्मधरो देवो मणिमालाविभूषितः ।
तथा- सर्वानन्दकरो देवो अर्द्धनारीश्वरो विभुः ।

इत्यादिना बीजकोषबाह्ये चन्द्रमण्डलं बीजकोषान्तः षट्कोणचक्रं तन्मध्ये वृत्तं तदन्तः सिंहासनं तत्रार्द्धनारीश्वरः सदाशिव इति क्रमो दृश्यते ।

३२ । इहेति । आत्मसंपूर्णयोगः आत्मनि संपूर्णो योगो यस्य सः । स्पष्टमन्यत् ।

३३ । एवं विशुद्धचक्रमभिधायाज्ञाचक्रमाह  आज्ञेति । तत् प्रसिद्धमाज्ञेत्याख्यानं यस्य तथाभूतं नेत्रपत्रं द्विदलम् अम्बुजं वर्तत इति शेषः । अस्याज्ञानामबीजमाह शाक्तानन्दतरङ्गिण्यां चतुर्थोल्लासे

आज्ञासंक्रमणन्तत्र गुरोराज्ञेति विश्रुतम् । इति ।

अत्र विशेषतोऽनभिधानेऽपि एतदम्बुजस्यावस्थितिर्भ्रूमध्य इति ज्ञेयम्। तदुक्तं शाक्तानन्दतरङ्गिण्यां चतुर्थोल्लासे

आज्ञा नाम भ्रुवोर्मध्ये चक्रञ्च द्विदलं परम्। इति।

(p. 207) (आज्ञापद्मकर्णिकायां मनसः, कर्णिकान्तस्त्रिकोणे इतराख्यशिवस्य प्रणवस्य च स्थितिः)

एतत्पद्मान्तराले निवसति च मनः सूक्ष्मरूपं प्रसिद्धं
योनौ तत्कर्णिकायां त्वितरशिवपदं लिङ्गचिह्नप्रकाशम्।
विद्युन्मालाविलासं परमकुलपदं ब्रह्मसूत्रप्रबोधं
वेदानामादिबीजं स्थिरतरहृदयश्चिन्तयेत्तत् क्रमेण॥ ३४॥

हिमकरसदृशं शुक्लवर्णम्। तथा ध्यानस्य धाम्ना प्रकाशो यस्य तथाभूतम्। तथा कलाभ्यां हक्षाभ्यां कलाशब्देन देवतोच्यते। अत्र कलाया बीजभूते वर्णे कलात्वोपचारः। तथाच तत्तदुपास्यदेवताकारणीभूताभ्यां हकारक्षकारवर्णाभ्यां प्रविलसिते वपुषी ययोस्तथाभूते नेत्रपत्रे यस्य तादृशम् अत एव सुशुभ्रम् अतिशयेन शुभ्रमित्यर्थः। हिमकरसदृशमित्यनेन पद्मस्य स्वतः शुभ्रत्वम् सुशुभ्रमित्यनेन च शुभ्रवर्णहकारक्षकारसंयोगात् शुभ्रत्वस्यातिशय्यमिति सूचितम्।

एतत्कर्णिकायां हाकिनीशक्तेरवस्थितिमाह तन्मध्य इति। तस्य पद्मस्य मध्ये

कर्णिकायां सा प्रसिद्धा हाकिनीशक्तिर्विलसतीत्यर्थः। तां विशेषयति  शशीत्यादिना। शशिसमधवला एतेनास्याः शीतलकिरणत्वं धावल्यञ्चोक्तम्। विद्यामिति। हस्ते विद्या मुद्रादिकं दधती। जपवटीं जपमालाम्। तथा शुभ्रचित्ता शुभ्रं चित्तं यस्याः सा।

तथाच भ्रुवोर्मध्य आज्ञापद्मं शुक्लवर्णं द्विदलं दलयोर्हक्षरूपवर्णद्वयमतिशुभ्रम्। पद्मस्य कर्णिकायां हाकिनीशक्तिः षड्वक्त्रा शुक्लवर्णा विद्यावराभयकपालडमरुजपवटीसमलङ्कृतषड्भुजा विराजत इति फलितम्।

३४। एतदिति। एतत्पद्मस्य आज्ञाख्यस्य अन्तराले कर्णिकाले मनो निवसति। मनः कीदृशमित्याह  सूक्ष्मरूपमतीन्द्रियम्। अतीन्द्रियञ्चेत्तस्यास्तित्वे किं मानमित्यत आह- प्रसिद्धमिति सर्वशास्त्रपसिद्धमित्यर्थः। एतत् कर्णिकान्तस्त्रिकोणे इतराख्यशिवलिङ्गस्थितिमाह- योनाविति। तत्कर्णिकायां योनौ योन्याकारत्रिकोणे इतरशिवपदं इतराख्यशिवरूपं वस्तु वर्तते इतरशिवस्याकारं निरूपयति  लिङ्गेति, लिङ्गाकारमित्यर्थः।

अत्र स्थितं प्रणवं निरूपयति  विद्युदिति। इतः प्रभृति सर्वाण्येवादिबीजमित्यस्य विशेषणानि। विद्युन्मालाविलापं विद्युच्छ्रेणीसदृशकान्तिविशिष्टं, परमकुलपदम् अत्र

(p. 208) (एतच्चिन्तनफलम्)

ध्यानात्मा साधकेन्द्रो भवति परपुरे शीघ्रगामी मुनीन्द्रः
सर्वज्ञः सर्वदर्शी सकलहितकरः सर्वशास्त्रार्थवेत्ता।

अद्वैताचारवादी विलसति परमापूर्वसिद्धिप्रसिद्धो
दीर्घायुः सोऽपि कर्ता त्रिभुवनभवने संहृतौ पालने च ॥ ३५ ॥

कुलशब्देन त्रिकोणाकारशक्तिरुच्यते। तथाच परमं कुलं शक्त्यात्मकं त्रिकोणं पदं स्थानं यस्य तथाभूतम् एतेन निरुक्तेतरशिवोद्ध्र्वे त्रिकोणे वेदादिबीजस्य स्थितिरभिहिता। तथा ब्रह्मसूत्रप्रबोधं ब्रह्मसूत्रस्य ब्रह्मनाड्याः प्रबोधो यस्मात् तत्। अस्यैव प्रणवस्य तेजसा ब्रह्मनाड्यन्तःस्थितानां ज्ञानमुपजायत इत्यर्थः। स्थिरतरहृदयः साधकः एवंविधं वेदानामादिबीजं प्रणवं तत् निरुक्तं हाकिन्यादिकं क्रमेण चिन्तयेदित्यर्थः।

अत्र यद्यपि तन्मध्ये चित्रिणी सा प्रणवविलसितेत्यादि-तृतीयश्लोके प्रणवविलसितेत्यनेन चित्रिण्या एव प्रणवविलसितत्वमुक्तं तथापि आज्ञाचक्रस्थितेन प्रणवेन चित्रिण्यन्तःस्थिताया ब्रह्मनाड्या अपि प्रणवविलसितत्वमुन्नेयम् अतो ब्रह्मसूत्रप्रबोधमिति सुष्ठूपपद्यते। न च ब्रह्मसूत्रपदमत्र चित्रिणीनाडीबोधकमिति वाच्यं तत्साधकप्रमाणाभावात्।

तथाच तस्याज्ञानाम्नः पद्मस्य कर्णिकायां मनः, कर्णिकान्तस्त्रिकोणे इतराख्यं शिवलिङ्गं, तदूद्र्ध्वत्रिकोणे विद्युन्मालासदृशदीप्तिशाली प्रणवो वर्तत इति फलितम्।

३५। एतच्चिन्तनफलमाह  ध्यानामेति। ध्यानात्मा एतत्पद्मध्याननिष्ठः साधकेन्द्रः साधकश्रेष्ठः परपुरे शीघ्रगामी भवति, ध्यानप्रभावेण तूर्णं परकायप्रवेशक्षमो भ्वतीत्यर्थः। तथा मुनीन्द्रो मननशीलानां श्रेष्ठः सर्वज्ञः

सर्ववेत्ता सर्वदर्शी एकत्र स्थितोऽपि करतलकलितामलकफलवदखिलजगदवलोकनक्षम, इत्यर्थः, सकलहितकरः कायमनोवाग्भिः सर्वेषां हितसाधकः सर्वशास्त्रार्थवेत्ता च भवतीत्यर्थः। अद्वैताचारवादी सर्वं खल्विदं ब्रह्मेत्यादिश्रुतिप्रतिपाद्यं यद् ब्रह्माद्वैतज्ञानं तत्र य आचारः जीवात्मपरमात्मनोरभेदचिन्तनादिरूपो योगस्तं वदतीति । स्वयं ब्रह्माद्वैतमनुभूय तस्यैव पारमार्थिकतां प्रमाणयतीत्यर्थः। परमा प्रकृष्टा अपूर्वा इतरयोगिभिः पूर्वमनधिगता या सिद्धिस्तया प्रसिद्धः तथा दीर्घायुस्त्रिभुवनभवने त्रिभुवनस्य सृष्टौ संहारे पालने च कर्ता भवतीत्यर्थः।

(p. 209) (आज्ञाचक्रे प्रणवघटकवर्णानामवस्थितिः)

तदन्तश्चक्रेऽस्मिन्निवसति सततं शुद्धबुद्धान्तरात्मा
प्रदीपाभज्योतिः प्रणवविरचनारूपवर्णप्रकाशः।
तदूर्ध्वे चन्द्रार्द्धस्तदुपरि विलसद्बिन्दुरूपी मकार-
स्तदाद्ये नादोऽसौ रसधवलसुधाधारसन्तानहासी॥ ३६॥

(आज्ञाचक्रे प्रणवस्वरूपचिन्तनफलम्)

इह स्थाने लीने सुसुखसदने चेतसि पुरं
निरालम्बां बद्ध्वा परमगुरुसेवासुविदिताम्।
सदाऽभ्यासाद् योगी पवनसुहृदां पश्यति कला
स्ततस्तन्मध्यान्तः प्रविलसितरूपानपि पदान्॥ ३७॥

३६। पूर्वं वेदानामादिबीजमित्यनेन प्रणवस्य चिन्तनमुपदिष्टम्, तमेव प्रणवं विशेषयति  तदन्तरिति। अस्मिन्नाज्ञाचक्रे तदन्तस्तस्य निरुक्तत्रिकोणस्यान्तः प्रणवस्य विरचनारूपेण स्थितो यो वर्णः अकारोकारसङ्घातरूप ओकारस्तस्य प्रकाशो निवसतीति सम्बन्धः तमेव वर्णं विशेषयति। शुद्धबुद्धान्तरात्मस्वरूपः तथा प्रदीपाभज्योतिः प्रदीपाभंज्योतिर्यस्य सः प्रकाशशील इत्यर्थः। तदूद्र्ध्वे चन्द्रार्द्धः अर्द्धचन्द्राकारचिह्नम्, तदुपरि अर्द्धचन्द्रोद्र्ध्वे विलसन् शोभमानो यो बिन्दुस्तद्रूपधारी मकारो निवसति मकार एव बिन्दुरूपेण तत्र वर्तत इत्यर्थः। तदाद्ये निरुक्तबिन्दुरूपिणो मकारस्याद्ये स्थितोऽसौ नादः रसधवलसुधाधारसन्तानहासी रसधवलः पारदश्वेतः तथा सुधाधारश्चन्द्रः तस्य सन्तानो विस्तारः तमुपहसितुं शीलमस्येति तादृशः। ततश्च रसधवलश्चासौ सुधाधारसन्तानहासी चेति कर्मधारयः। एतेन नादस्यातिशयशुक्लत्वमुक्तम्।

एवञ्च निरुक्तः प्रणवोऽकारोकारनादबिन्दुमयः अन्तरात्मस्वरूपः प्रदीपशिखोज्ज्वलः श्वेतवर्णश्चेति फलितम्।

३७। इहेति। सुसुखसदने निरवच्छिन्नानन्दधामनि इह स्थाने आज्ञाचक्रस्थितप्रणवमभितश्चेतसि लीने सति परमगुरुसेवासुविदितां गुरुपरम्परापरिप्राप्तयोगाभ्यास-

(p. 210) (अत्र वह्निकणावान्तरभेदाः परमशिवस्थितिश्च)

ज्वलद्दीपाकारं तदनु च नवीनार्कबहुल-
प्रकाशं ज्योतिर्वा गगनधरणीमध्यमिलितम् ।
इह स्थाने साक्षाद् भवति भगवान् पूर्णविभवो-
ऽव्ययः साक्षी वह्नेः शशिमिहिरयोर्मण्डल इव ॥ ३८ ॥

कुशलो गुरुः परमगुरुस्तस्य सेवया सुविदितां सम्यगधिगतां निरालम्बां निर्नास्ति
आलम्बः विषयसंस्पर्शो यत्र तथाभूतां विषयसम्बन्धोच्छेदकारिणीं पुरं
योनिमुद्रां खेचरीमुद्रां वा मनःस्थैर्यसम्पादिनीं बद्ध्वा सदाऽभ्यासात्
निरन्तरप्रणवानुशीलनाद् योगी जनः पवनसुहृदां वह्नीनां कलाः अंशान्
स्फुलिङ्गानित्यर्थः पश्यति । इह योगं विदधतो योगिन इतस्ततो विसृमरवह्निकणायमानं
ज्योतिर्मानसप्रत्यक्षतामापद्यत इत्यर्थः । तत इति । निरुक्ताभ्यासानन्तरं तन्मध्यान्तः
तन्मध्यं पद्ममध्यस्थितं त्रिकोणं तदन्तः प्रविलसितं प्रकर्षेण शोभमानं रूपं
येषां तथाभूतान् पदान् प्रणवघटकवर्णानपि पश्यतीत्यर्थः ।

३८ । पूर्वश्लोके पवनसुहृदां पश्यति कला इत्युक्तं तत्र विशेषमाह-ज्वलदिति । तदनु
निरुक्तवह्निकणदर्शनसमनन्तरं ज्योतिः पश्यतीति पूर्वेण सम्बन्धः । कीदृशं
तज्ज्योतिरित्याकाङ्क्षायामाह ज्वलद्दीपाकारमिति । ज्वलतो दीपस्याकार इव आकारो यस्य
तथाभूतं ज्योतिरित्यर्थः । तथा नवीनार्कबहुलप्रकाशं नवीनार्कः प्रातःकालीनसूर्यः
तद्वद् बहुलः प्रचुरः प्रकाशो यस्य तादृशं नवोदयमानसूर्यसदृशदीप्तिविशिष्टम्, तथा
गगनधरणीमध्यमिलितम्, अत्र गगनशब्देन

प्रागुक्तशङ्खिनीनाड्यूद्र्ध्वसहस्राराधःस्थशून्यभागो बोध्यः। धरणीशब्देन च अमुष्मिन् धरायाश्चतुष्कोणबीजम् इत्युक्तमूलाधारस्थधरामण्डलं बोध्यम्। एवञ्च गगनधरण्योर्निरुक्तयोर्मध्ये मिलितं सहस्रारान्मूलाधारपर्यन्तं परिव्याप्तं तज्ज्योतिरित्यर्थः।

इहेति। इह स्थाने निरुक्तायामाज्ञाचक्रकर्णिकायां वह्नेः अग्नेः शशिमिहिरयोश्चन्द्रसूर्ययोश्च मण्डले इव भगवान् परमशिवः साक्षाद् भवति स्वयं वर्तते। यथा सहस्रारकमलस्थवह्निचन्द्रसूर्यमण्डलेषु परमशिवो वर्तते तद्वदत्रापीत्यर्थः। परमशिवं विशेषयति  पूर्णेति। पूर्णः सर्वव्यापकः विभवः विभुत्वं सृष्टि-स्थिति-संहारकर्तृत्वं

(p. 211) (अत्र प्राणत्यागस्य फलम्)

इह स्थाने विष्णोरतुलपरमामोदमधुरे
समारोप्य प्राणान् प्रमुदितमनाः प्राणनिधने।
परं नित्यं देवं पुरुषमजमाद्यं त्रिजगतां
पुराणं योगीन्द्रः प्रविशति च वेदान्तविदितम्॥ ३९॥

यस्य सः। अयमेव भगवान् परमशिवः सर्वप्रपञ्चानां सृष्टिस्थितिसंहारान् स्वविभवेन निर्वर्तयतीत्यर्थः। तथाऽव्ययः सर्वत्राविकृतरूपः, तथा साक्षी द्रष्टा निर्लेप इत्यर्थः। अत्रेदमवधेयम्, परमार्थतः सृष्ट्यादिकर्तृत्वं शक्त्या एव

तस्याः पुनः पुनः सृष्टिर्जायते लीयते सदा।

इत्यादि-गन्धर्वतन्त्रतृतीयपटलवचनेन शक्त्या एव सृष्ट्यादिकर्तृत्वाभ्युपगमात्। एवञ्च स्वाभिन्नशक्तिकृतप्रपञ्चसृष्ट्यादिकं कूटस्थरूपेण पश्यतीति साक्षीत्यनेन सूचितम्। आज्ञाचक्रेऽपि परमशिवस्थितिमाह निर्वाणतन्त्रे नवमपटले

एवं हंसो मणिद्वीपे तस्य क्रोडे परः शिवः।
वामभागे सिद्धकाली सदानन्दस्वरूपिणी॥ इति।

३९। अत्र प्राणत्यागस्य फलमाह इहेति। योगीन्द्रः प्राणनिधने प्राणत्यागकाले प्रमुदितमनाः ब्रह्मनिर्वाणं मे भविष्यतीति प्रकर्षेण हृष्टमानसः सन् परमामोदमधुरे निरवच्छिन्नानन्दसन्तानरमणीये इह विष्णोर्व्यापकस्य भगवतः स्थाने आज्ञाचक्रे प्राणान् समारोप्य योगानुशासनक्रमेण प्राणानां लयं विधाय परं पुरुषं प्रविशति निर्वाणमुक्तिं लभते इत्यर्थः। पुरुषं विशेषयति-देवमिति। प्रपञ्चादिरूपेण द्योतनशीलम्। अजं नित्यम्, तथा त्रिजगतामाद्यं कारणभूतमित्यर्थः। पुराणं पुराणपुरुष इत्याख्यया सर्वशास्त्रेषु प्रसिद्धम्। तथा वेदान्तविदितम् यतो वाचो निवर्तन्ते अप्राप्य मनसा सहेत्यादिश्रुतिभिरवाङ्मनसगोचरत्वनिरूपणात् तदवगमासम्भवेऽपि सर्वं खल्विदं ब्रह्मं ब्रह्मविद् ब्रह्मैव भवति इत्यादिश्रुतिभिर्विदितं ब्रह्मप्रतिपादकश्रुतिमात्रगम्यमित्यर्थः।

अत्र विष्णुशब्देन व्यापको भगवान् परमशिव एव बोध्यः। निर्वाणतन्त्रे नवमपटले

(p. 212) (आज्ञाचक्रोद्र्ध्वे शिवशक्तिरूपो महानादस्तद्दर्शनफलञ्च)

लयस्थानं वायोस्तदुपरि च महानादरूपं शिवार्द्धं
शिवाकारं शान्तं वरदमभयं शुद्धबुद्धिप्रकाशम्।
यदा योगी पश्येद् गुरुचरणयुगाम्भोजसेवासुशील-
स्तदा वाचां सिद्धिः करतलकमले तस्य भूयात् सदैव ॥ ४० ॥

आज्ञाचक्रूपे तपोलोके परमशिवस्यैव स्थितेरभिधानात्। अस्य निर्वाणमुक्तिदातृत्वमाह तत्रैव-

सालोक्यं महर्लोके स्यात् सारूप्यं जनलोकके।
सायुज्यं तपोलोकेषु निर्वाणं हि तदूद्र्ध्वके ॥ इति।

४०। एवमाज्ञाचक्रं निरूप्य तदूद्र्ध्वे शिरःस्थितसहस्त्रदलकमलादधो महानादं निरूपयति लयस्थानमिति। गुरुचरणयुगाम्भोजसेवासुशीलः गुरोर्योगानुशीलनविशुद्धमतेः श्रीगुरुदेवस्य चरणाम्भोजयोः सेवया ततो योगाभ्यासेनेत्यर्थः शुद्धं दृढतरचित्तैकाग्र्यपरिपूर्णं शीलं स्वभावो यस्य तादृशो

योगी तदुपरि निरुक्ताज्ञाचक्रस्योद्ध्वे यदा महानादरूपं महानादस्य रूपं स्वरूपं पश्येत्, तदा तस्य करतलकमले सदैव वाचां सिद्धिर्भूयादिति सम्बन्धः। महानादरूपं निरूपयति  लयस्थानमित्यादिना। वायोर्लयस्थानं महानादादेव वायोरुत्पत्तेः कारणभूते महानाद एव तस्य लयसम्भवादित्यर्थः। तथा शिवाद्ध्वर्वम् अत्र शिवोऽर्द्धनारीश्वरस्तदर्धं शक्तिस्तद्रूपं शक्तिरूपमित्यर्थः, तथा शिवाकारं शिवरूपम्। एवञ्च शिवार्द्धशिवाकारमित्येताभ्यां शिवशक्तिमयोऽयं नाद इत्युक्तं भवति। तदुक्तं शारदायां प्रथमपटले

बिन्दुः शिवात्मको बीजं शक्तिर्नादस्तयोर्मिथः।
समवायः समाख्यातः सर्वागमविशारदैः॥ इति।

राघवभट्टेनापि

एवमालोक्य सर्गादौ सच्चिदानन्दरूपिणीम्।
समस्ततत्त्वसङ्घातस्फूर्त्यधिष्ठानरूपिणीम्।
व्यक्तां करोति नित्यां तां प्रकृतिं परमः पुमान्॥

इति पाञ्चरात्रवचनमुल्लिख्य तस्या एव नादबिन्दू सृष्ट्युपयोगावस्थारूपौ इत्यभिधाय,

(p. 213) (सहस्रारपद्मम्)

तदूर्ध्वे शङ्खिन्या निवसति शिखरे शून्यदेशे प्रकाशं
विसर्गाधः पद्मं दशशतदलं पूर्णपूर्णेन्दुशुभ्रम्।
अधोवक्त्रं कान्तं तरुणरविकलाकान्तकिञ्जल्कपुञ्जं
ललाटाद्यैर्वर्णैः परिलसितवपुःकेवलानन्दरूपम्॥ ४१॥

नादात्मना प्रबुद्धा सा निरामयपदोन्मुखी।
शिवोन्मुखी यदा शक्तिः पुंरूपा सा तदा स्मृता॥

इत्युक्तम्।

सा तत्त्वसंज्ञा चिन्मात्रज्योतिषः सन्निधेस्तदा।
विचिकीर्षुर्घनीभूता क्वचिदभ्येति बिन्दुताम्।

इति राघवभट्टधृतवचनेनापि शिवशक्त्योरभेद एव प्रतिपद्यते। शान्तं सौम्यमूर्तिम्
तथा शुद्धबुद्धिप्रकाशं शुद्धाया ज्ञानोज्ज्वलाया बुद्धेः प्रकाशो यस्मात्
तथाभूतं ब्रह्मज्ञानसम्पादकमित्यर्थः।

४१। अथ शिरसि स्थितं सहस्रदलकमलं निरूपयति  तदूर्ध्वे इति।
निरुक्तमहानादोर्ध्वे शङ्खिन्यास्तन्नामकनाड्याः शिखरे अग्रभागे शून्यदेशे
शून्याकारस्थाने तथा विसर्गाधः ब्रह्मरन्ध्रस्थिताद् विसर्गात् प्रकृतेरधःप्रदेशे

दशशतदलं सहस्रदलं पद्मं निवसतीति सम्बन्धः। विसर्गस्य ब्रह्मरन्ध्रे स्थितिमाह कङ्कालमालिनीतन्त्रे द्वितीयपटले

ततो वायुर्महानादो ब्रह्मरन्ध्रं ततः परम्।
तस्मिन् रन्ध्रे विसर्गञ्च नित्यानन्दं निरञ्जनम्॥ इति।

विसर्गस्य प्रकृतिवाचकत्वन्तु

बिन्दुः पुरुष इत्युक्तो विसर्गः प्रकृतिः स्मृतः।

इत्यनेन पूर्वमेव [१।१।टी०] प्रदर्शितम्।

पद्मं विशेषयति-प्रकाशमित्यादिभिः। प्रकाशं प्रकाशस्वरूपम्।
शून्यदेशप्रकाशमिति पाठे तु शून्यदेशे प्रकाशो यस्य तथाभूतमित्यर्थः। तथा पूर्णपूर्णेन्दु

(p. 214) (तत्कर्णिकायां चन्द्रमण्डलं तदन्तस्त्रिकोणं तदन्तः परंबिन्दुश्च)

समास्ते तस्यान्तः शशपरिरहितः शुद्धसम्पूर्णचन्द्रः
स्फुरज्ज्योत्स्नाजालः परमरसचयस्निग्धसन्तानहासः।
त्रिकोणं तस्यान्तः स्फुरति च सततं विद्युदाकाररूपं

तदन्तः शून्यं तत् सकलसुरगणैः सेवितञ्चातिगुह्यम् ॥ ४२ ॥

शुभ्रं परिपूर्णचन्द्रवदतिशयशुक्लवर्णम् । तदुक्तं कङ्कालमालिनीतन्त्रे द्वितीयपटले

सहस्रारं नित्यपद्मं शुक्लवर्णमधोमुखम् ॥ इति ।

निर्वाणतन्त्रे दशमपटले तु सहस्रारं प्रकृत्य

शुक्लं रक्तं तथा पीतं कृष्णं हरितमेव च ।
नानाविचित्ररूपेण नानावर्णेन शोभितम् ॥

शुक्लं क्षणे क्षणे रक्तं क्षणे पीतं सुशोभनम् ।
कस्मिन् क्षणे कृष्णवर्णं हरितं वर्णमुत्तमम् ॥

चित्ररूपञ्च चार्वङ्गि धत्ते कस्मिन् क्षणे प्रिये ।
एवं नानाविधैर्देवि तत् पद्मं शोभितं सदा ॥

इत्यादिना तस्य क्षणभेदेन वर्णभेदानाह । अधोवक्रमधोमुखम् । कान्तं कमनीयाकृतिम्
। तथा तरुणरविकलाकान्तकिजल्कपुञ्जम्, तरुणस्य रवेर्याः कलाः
प्रातःकालीनसूर्यमरीचयः तद्वत् कान्तः कमनीयो रक्तभास्वर इत्यर्थः किञ्जल्कपुञ्जः

केशरसमूहो यस्य तथाभूतम्, तथा ललाटाद्यैः ललाटादिषु विन्यस्तैरकारादिक्षकारान्तैः पञ्चाशद्वर्णैः प्रविलसितं वपुर्यस्य तादृशम्। मातृकान्यासे ललाटे अंनम इत्यादिक्रमदर्शनाल्ललाटद्यैरित्यनेनाकाराद्यैरित्यर्थो लभ्यते। व्यक्तमाह कङ्कालमालिनीतन्त्रे द्वितीयपटले सहस्रारं प्रकृत्य

अकारादिक्षकारान्तैः स्फुरद्वर्णैर्विराजितम्। इति।

तथा शाक्तानन्दतरङ्गिण्यां चतुर्थोल्लासे

मातृकाक्षरसम्भूतं सहस्रारं सरोरुहम्। इति।

तथा केवलानन्दरूपं निरवच्छिन्नानन्दस्वरूपं तत् पद्ममित्यर्थः।

अत्रेदमवधेयम् पद्मेऽस्मिन् पत्राणां विंशतिरावर्तनानि, प्रत्यावर्तनञ्च पञ्चाशत् पत्राणि, तेषु प्रतिपञ्चाशत्पत्रेषु अकारादिक्षकारान्ताः पञ्चाशद्वर्णाः शोभन्त इति।

४२। एतत्पद्मकर्णिकायां चन्द्रमण्डलावस्थितिमाह-समास्त इति। तस्य

(p. 215) (परंबिन्दोर्गोप्यत्वं परमशिवस्थितिश्च)

सुगोप्यं तद् यत्नादतिशयपरमामोदसन्तानराशेः
परं कन्दं सूक्ष्मं सकलशशिकलाशुद्धरूपप्रकाशम्।
इह स्थाने देवः परमशिवसमाख्यानसिद्धिप्रसिद्धः
स्वरूपी सर्वात्मा रसविरसमितोऽज्ञानमोहान्धहंसः॥ ४३॥

पद्मस्यान्तर्मध्ये कर्णिकायामित्यर्थः। शशपरिरहितः अत एव शुद्धो निर्मलः संपूर्णचन्द्रः चन्द्रमण्डलं समास्ते। चन्द्रं विशेषयति स्फुरदिति। स्फुरज्ज्योत्स्नाजालः स्फुरन्ति ज्योत्स्नाजालानि यस्मात् तथाभूतः। तथा परमरसचयस्निग्धसन्तानहासः परमरसचयेन परमामृतसमूहेन स्निग्धः सन्तानो विस्तारो यस्य तथाभूतो हासो विकाशो यस्य तादृशः परमरमणीयामृतप्रवाहेणानन्दं जनयन्नित्यर्थः।

निरुक्तचन्द्रमण्डलाभ्यन्तरे ध्येयं त्रिकोणमाह-त्रिकोणमिति। तस्यान्तश्चन्द्रमण्डलमध्ये विद्युदाकाररूपं विद्युत्सदृशदीप्तिमत् त्रिकोणं समास्ते। तदन्तरिति तस्य त्रिकोणस्यान्तर्मध्ये अतिगुह्यं यथा स्यात्तथा सकलसुरगुणैः सेवितं शून्यं परंबिन्दुरूपं स्फुरतीति सम्बन्धः।

४३। सुगोप्यमिति। तन्निरुक्तं शून्यं यत्नात् सुगोप्यं साधकैर्यस्मै कस्मैचिन्न प्रकाशनीयमित्यर्थः। शून्यं विशेषयति अतिशयेति। अतिशयपरमामोदसन्तानराशेः अतिशयः परमामोदसन्तानराशिर्यत्र तस्य महामोक्षस्येत्यर्थः, परं कन्दं

प्रधानमूलभूतम्। सूक्ष्मं दुर्लक्ष्यम्, तथा सकलशशिकलाशुद्धरूपप्रकाशम्, अत्र कलाशब्देन वक्ष्यमाणा निर्वाणकला गृह्यते, तथाच कलया निर्वाणकलया सह वर्तमाना या शशिकला तया शुद्धरूपः प्रकाशो यस्य तथाभूतम्। सूक्ष्मतमस्यापि निरुक्तपरंबिन्दुरूपस्य प्रागुक्तत्रिकोणान्तःस्थिताभ्याममाकलानिर्वाणकलाभ्यां प्रकाशो भवतीत्यर्थः।

एतत्कर्णिकायां परमशिवस्य स्थितिमाह-इहेति। इह स्थाने एतत्पद्मकर्णिकान्तः स्थितचन्द्रमण्डलमध्यवर्तिनो हंसपीठापरनाम्नोऽन्तरात्मन उपरि इत्यर्थः, परमशिवसमाख्यानसिद्धिप्रसिद्धः परमशिव इति यत् समाख्यानं तस्य या सिद्धिः सर्वतन्त्रेषु निष्पत्तिः तया प्रसिद्धः परमशिव इति नाम्ना ख्यात इत्यर्थः। देवः यतेः स्वात्मज्ञानं दिशतीति परेण सम्बन्धः। परमशिवं विशेषयति  स्वरूपीत्यादिना।

(p. 216) स्वरूपी परब्रह्मरूपः सर्वात्मा सर्वेषामात्मा जीवात्मस्वरूपः। अत्र स्वरूपी सर्वात्मेति पदद्वयेन सर्वजीवात्मस्वरूपोऽपि परमात्मस्वरूपं न जहातीति प्रतिपादितम्। तथा रसविरसमितः रसं परमानन्दरसं विरसं तद्विलक्षणं शिवशक्तिसामरस्यानन्दरसञ्च इतः प्राप्तः। स्वरूपेणावस्थितोऽपि शक्तिसमागमरसमनुभवतीत्यर्थः। अयमेव परशिवः श्रीगुरुस्वरूप इति प्रथमश्लोकव्याख्याने प्रतिपादितं परश्लोके च प्रतिपादयिष्यते।

अत्र शाक्तानन्दतरङ्गिण्यां चतुर्थोल्लासे आज्ञाचक्रमभिधाय-

तदूद्ध्र्वे तु महेशानि पद्ममूद्ध्र्वमुखं सदा।
तस्योपरि महेशानि ध्यायेत् सदाशिवं प्रभुम्।

इति वचनमभिधाय ऊद्ध्र्वमुखमिति
अधोमुखसहस्रदलपद्मान्तर्गतोद्ध्र्वमुखद्वादशदलपद्मोपरि सदाशिवं ध्यायेदित्युक्तम्।
पादुकापञ्चकस्तोत्रेऽपि

ब्रह्मरन्ध्रसरसीरुहोदरे नित्यलग्नमवदातमद्भुतम्।

इत्यादिना

तस्य कन्दलितकर्णिकापुटे क्लृप्तरेखमकथादिरेखया।

इत्यादिना चाधोमुखसहस्रदलकमलस्याधस्तादूद्ध्र्वमुखद्वादशदल-
कमलकर्णिकान्तरकथादित्रिकोणे श्रीगुरुरूपस्य परमशिवस्य स्थितिमाह। परन्तु
शाक्तानन्दतरङ्गिण्यां चतुर्थोल्लासेऽन्यत्र

सहस्रारं महापद्मं नादबिन्दुत्रयान्वितम्।
अकथादित्रिरेखासु हलक्षत्रयकोणके॥

तन्मध्ये परबिन्दुञ्च सृष्टिस्थितिलयात्मकम् ।

वामावर्तेन विलिखेदकथादि त्रिकोणकम् ॥

इत्यादिना

सहस्रारान्तरे शून्ये दिव्यतोरणशोभिते ।

इत्यादि-पूर्वोपदर्शितमहाकालीतन्त्रप्रथमपटलवचनेन च सहस्रारपद्म एव परमशिवस्य स्थितिरुक्ता । एवञ्च विभिन्नतन्त्रपर्यालोचनया प्रस्थानद्वयावगतेः स्वस्वगुरुसम्प्रदायानुसारेणैकतरः कल्पः समाश्रयणीय इति सिद्धान्तः । श्रीभगवत्पूर्णानन्दपरमहंसपादानान्तु सहस्रार एव परमशिवस्य स्थितिरभिमता, मूले द्वादशदलकमलस्य लेशतोऽप्यनभिधानादित्यवधेयम् ।

(p. 217) सुधाधारासारं निरवधि विमुञ्चन्नतितरां

यतेः स्वात्मज्ञानं दिशति भगवान् निर्मलमतेः ।

समास्ते सर्वेशः सकलसुखसन्तानलहरी-

परीवाहो हंसः परम इति नाम्ना परिचितः ॥ ४४ ॥

४४ । सुधाधारासारमिति । निरुक्तः परमशिवः सुधाधारासारं सुधाधारा

अमृतप्रवाहः तद्वत् सारं श्रेष्ठं मन्त्रात्मकवाक्यमित्यर्थः। एवञ्च सुधाधारासारम् अमृतवदानन्दविधायकं वाक्यं मन्त्रात्मकं निरवधि सर्वदा अतितरां साधकानां पुरुषार्थलाभाय विमुञ्चन् श्रीगुरुरूपेणोच्चरन् निर्मलमतेः परमानुरक्तिसहकृतश्रीगुरुचरणसेवाविशुद्धचेतसो यतेः साध्यदेवतायां नियतमनसः साधकस्य स्वात्मज्ञानं स्वं जीवात्मा, आत्मा परमात्मा तयोर्ज्ञानं तत्त्वमसीत्यादिश्रुतिसिद्धं जीवात्मपरमात्मनोरभेदज्ञानं दिशति उपदिशतीत्यर्थः। अत्रेदमवधेयम्  निरुक्तः परशिव एव श्रीगुरुरूपो दीक्षागुरुरूपेण धरायामवतीर्यामृतमयतत्तदुपास्यदेवतातत्तन्मन्त्रदीक्षया साधकानां परमपुरुषार्थं निर्वर्तयतीति। एतच्च

मनुष्यचर्मणा नद्धः साक्षात् परशिवः स्वयम्।

इत्यादि-कुलार्णवत्रयोदशपटलोक्तैरन्यैश्च प्रमाणैर्विस्तरतः प्रतिपादितं दशशतदलपद्मप्रोल्लसत्पूर्णचन्द्र इत्यादि-प्रथमप्रकाशप्रथमश्लोकटीयायामस्माभिरिति नेह प्रपञ्च्यते।

समास्त इति। परमशिवस्याधस्तात् सर्वेशः सर्वेषामीश्वरः हंसः पुंप्रकृत्यात्मकोऽन्तरात्मा समास्ते। पुंप्रकृत्यात्मकान्तरात्मनो हंसत्वन्तु एतद्ग्रन्थप्रथमश्लोकव्याख्याने

हंकारो बिन्दुरित्युक्तो विसर्गः स इति स्मृतः।

इत्यादि-प्रपञ्चसारवचनेनोपपादितम्। हंसः कीदृश इत्यत आह-
सकलसुखसन्तानलहरीपरीवाहः सकलसुखानां यः सन्तानो विस्तारः तस्य या लहरी श्रेणी तस्याः परीवाहो निःसरणं यस्मात् तथाभूतः निरवच्छिन्नप्रचुरसुखसम्पादक इत्यर्थः। एतेन तत एव विलक्षणसुखपरीवाहस्योदयात्तस्यापि तादृशसुखमयत्वमुन्नेयम्, धनधातुः प्रचुरतरधनशालित्ववत्। तथा परम इति नाम्ना परिचितः। परम इति तस्य नामान्तरं परमहंस इति वा।

(p. 218) (एतत्पद्मकर्णिकायां सर्वेषां देवानामवस्थितिः)

शिवस्थानं शैवाः परमपुरुषं वैष्णवगणा
लपन्तीति प्रायो हरिहरपदं केचिदपरे।
पदं देव्या देवीचरणयुगलानन्दरसिका
मुनीन्द्रा अप्यन्ये प्रकृतिपुरुषस्थानममलम्॥ ४५॥

(एतत्पद्मज्ञानफलम्)

इह स्थानं ज्ञात्वा नियतनिजचित्तो नरवरो
न भूयात् संसारे पुनरपि न बद्धस्त्रिभुवने।
समग्रा शक्तिः स्यान्नियतमनसस्तस्य कृतिनः
सदा कर्तुं हर्तुं खगतिरपि वाणी सुविमला॥ ४६॥

४५। एतदेव सर्वदेवतानिवासस्थानमित्याह-शिवस्थानमिति। शैवाः शिवोपासका एतत् शिवस्थानमिति लपन्ति, वैष्णवगणाः परमपुरुषस्य विष्णोः स्थानमिति लपन्ति। अपरे हरिहरोभयोपासका हरिहरपदमेतदिति लपन्ति, देवीचरणयुगलानन्दरसिकाः शाक्ता इत्यर्थः, देव्याः पदं स्थानमिति लपन्ति, अन्ये मुनीन्द्रा योगिश्रेष्ठा अपि एतदमलं प्रकृतिपुरुषस्थानमेतदिति लपन्तीत्यर्थः। एतेन स्वस्वोपास्यानां सर्वेषामेव देवानां स्थानमेतदित्यवगन्तव्यम्।

४६। एतत्पद्मज्ञानफलमाह  इहेति। इह अस्मिन् सहस्रदलकमले स्थानम् इष्टदेवतावस्थितिं ज्ञात्वा, स्वेष्टदेवतावस्थितिरत्रैवेति विदित्वेत्यर्थः। अत्र इदं स्थानं ज्ञात्वेति कालीचरणधृतः पाठः। नियतनिजचित्तः नियतं स्वस्वाभीष्टदेवे नियुक्तं निजचित्तं येन तादृशो नरवरः साधकश्रेष्ठः न भूयात् संसारे पुनर्जन्मपरिग्रहं न करोतीत्यर्थः, तत्र हेतुमाह बद्धस्त्रिभुवने इति स्वर्गे मर्त्ये पाताले वा बद्धो न भवति शुभाशुभसकलकर्मक्षयाद् भोगहेतुभूतकर्मान्तरानुदयाच्चेति भावः। तथा तस्य कृतिनः सदा कर्तुं स्वाभीष्टकार्याणि सम्पादयितुं हर्तुमनभीष्टानि परिहर्तुञ्च समग्रा सकलकार्यसम्पादिका शक्तिः स्यात्। तथा तस्य खगतिराकाशगमनं सुविमला वाणी च स्यादिति सम्बन्धः।

(p. 219) (एतत्पद्मकर्णिकान्तस्त्रिकोणे चन्द्रकलायाः स्थितिः)

अत्रास्ते शिशुसूर्यसोदरकला चन्द्रस्य सा षोडशी

शुद्धा नीरजसूक्ष्मतन्तुशतधाभागैकरूपा परा।
विद्युद्दामसमानकोमलतनुर्नित्योदिताधोमुखी
पूर्णानन्दपरम्परातिविगलत्पीयूषधाराधरा॥ ४७॥

(तच्चन्द्रकलान्तर्निर्वाणकलायाः स्थितिः)

निर्वाणाख्यकला परात् परतरा साऽस्ते तदन्तर्गता
केशाग्रस्य सहस्रधा विभजितस्यैकांशरूपा सती।
भूतानामधिदैवतं भगवती नित्यप्रबोधोदया
चन्द्रार्द्धाङ्गसमानभङ्गुरवती सर्वार्कतुल्यप्रभा॥ ४८॥

४७। निरुक्तसहस्रदलकमलान्तर्वर्तित्रिकोणे अमाकलावस्थितिमाह-अत्रास्त इति। अत्र कर्णिकान्तस्त्रिकोणे सा प्रसिद्ध चन्द्रस्य षोडशभागैकभागरूपा शिशुसूर्यसोदरकला प्रातःकालीनसूर्यसदृशी रक्तवर्णेत्यर्थः अमानाम्नी कला आस्ते। अमाकलास्वरूपमाह तिथितत्त्वधृतस्कन्दपुराणीयप्रभासखण्डे-

अमा षोडशभागेन देवि प्रोक्ता महाकला।
संस्थिता परमा माया देहिनां देहधारिणी॥ इति।

कलां विशेषयति शुद्धेति। शुद्धा कलङ्करहिता। नीरजेति।
नीरजसूक्ष्मतन्तोरतिसूक्ष्ममृणालसूत्रस्य शतधाभागैकरूपा शतभागैकभागरूपा

तथा परा परशक्तिरूपा। विद्युद्दामसमानकोमलतनुः विद्युन्मालासदृशकोमलोज्ज्वलकान्तिविशिष्टा। नित्योदिता क्षयोदयरहितत्वान्नित्यप्रकाशशालिनीत्यर्थः। अधोमुखी अधोवक्त्रा। पूर्णा व्यापिनी आनन्दपरम्परा अविच्छिन्नानन्दधारा यस्याः सा। तथा अतिविगलन्तीं पीयुषधारां धरतीति तथाभूता प्रचुरामृतस्राविणीत्यर्थः। एवंभूता अमानाम्नी कला सहस्रदलकमलकर्णिकान्तस्त्रिकोणे वर्तत इत्यर्थः।

४८। अमाकलान्तर्वर्तिनीं निर्वाणकलामाह  निर्वाणेति। तदन्तर्गता तस्या अमाकलाया अन्तर्गता सा मुक्तिदातृत्वेन प्रसिद्धा निर्वाणकला आस्ते। निर्वाण

(p. 220) (तदन्तर्बिन्दुस्वरूपाया निर्वाणशक्तेरवस्थितिः)

एतस्या मध्यदेशे विलसति परमापूर्व निर्वाणशक्तिः
कोट्यादित्यप्रकाशा त्रिभुवनजननी कोटिभागैकरूपा।
केशाग्रस्यातिगुह्या निरवधिविगलत्प्रेमधाराधरा सा
सर्वेषां जीवभूता मुनिमनसि मुदा तत्त्वबोधं वहन्ती॥ ४९॥

दायिनी कला प्रकृतिरिति निर्वाणकलाशब्दनिरुक्तिः। तां विशेषयति। परादिति, परात् परतरा श्रेष्ठा। परा परतरेति कालीचरणधृतः पाठः। तत्र तु परा अमाकला ततः परतरा निर्वाणकलेत्यर्थः। सहस्रधाविभजितस्य केशाग्रस्य एकांशरूपा केशाग्रसहस्रभागैकभागरूपा अतिशयसूक्ष्मेत्यर्थः। अत्र विभजितस्येति

छन्दोऽनुरोधादाकारलोप आर्षः। सती अतिसूक्ष्मतया दुर्विज्ञेयत्वेऽपि सर्वतन्त्रसिद्धत्वात्
सद्रूपा। भूतानां प्राणिनामधिदैवतं चैतन्यस्वरूपा। नित्यप्रबोधोदया नित्यप्रबोधो
ब्रह्मज्ञानं तस्य उदयो यस्या ब्रह्मज्ञानदायिनीत्यर्थः।
चन्द्रार्द्धाङ्गसमानभङ्गुरवती अर्द्धचन्द्रवत् कुटिलाकारा। तथा सर्वार्कतुल्यप्रभा
द्वादशादित्यसदृशप्रकाशशालिनीत्यर्थः। अमाकला-निर्वाणकलयोः स्वरूपमाह
कङ्कालमालिनीतन्त्रे द्वितीयपटले

अत्र नित्योदिता वृद्धिक्षयहीना अमाकला।
तन्मध्ये कुटिला निर्वाणाख्या सप्तदशी कला॥ इति।

४९। निर्वाणकलान्तर्निर्वाणशक्तेरवस्थितिमाह  एतस्या इति। एतस्या निर्वाणकलाया
मध्यदेशे परमा परब्रह्मस्वरूपा तथा अपूर्वा नास्ति पूर्व यस्याः सा
निखिलप्रपञ्चसृष्टेरादौ वर्तमानत्वादित्यर्थः निर्वाणशक्तिः विलसतीति सम्बन्धः।
निर्वाणशक्तिं विशेषयति  कोटयादित्यप्रकाशा अनन्तादित्यसदृशदीप्तिशालिनी, तथा
त्रिभुवनजननी स्वर्गमर्त्त्यपातालरूपभुवनत्रयप्रसविनी। तथा केशाग्रस्य
कोटिभागैकरूपा सूक्ष्मतमेत्यर्थः। अत एवातिगुह्या सूक्ष्मतया दुर्विज्ञेया।
निरवधिविगलत्प्रेमधाराधरा निरवधि अनवरतं विगलन्ती स्रवन्ती या प्रेमधारा
सामरस्यानन्दजनिता परमामृतधारा तां धरतीति तथाभूता। सर्वेषामिति, सर्वेषां
प्राणिनां जीवभूता जीवात्मस्वरूपा। तथा मुदा हर्षेण मुनिमनसि योगिनां हृदये
तत्त्वबोधं वहन्ती परं बिन्दुरूपा निर्वाणशक्तिर्विलसतीत्यन्वयः।

(p. 221) (निर्वाणशक्तेरन्तः परब्रह्मस्थानम्)

तस्या मध्यान्तराले शिवपदममलं शाश्वतं योगगम्यं
नित्यानन्दाभिधानं सकलसुखमयं शुद्धबोधप्रकाशम्।
केचिद् ब्रह्माभिधानं पदमिति सुधियो वैष्णवं तल्लपन्ति
केचिद्धंसाख्यमेतत् किमपि सुकृतिनो मोक्षवर्त्मप्रबोधम्॥ ५०॥

(कुण्डलिन्युत्थापनक्रमः)

हूङ्कारेणैव देवीं यमनियमसमभ्यासशीलः सुशीलो
ज्ञात्वा श्रीनाथवक्त्रात् क्रममपि च महामोक्षवर्त्मप्रकाशम्।

अत्र एतस्या मध्यदेशे इत्यनेन निर्वाणकलान्तर्निर्वाणशक्तिस्थितेरभिधानेऽपि नादोपरि तस्याः स्थितिरित्यवधेयम्। तदुक्तं कङ्कालमालिनीतन्त्रे द्वितीयपटले

निर्वाणाख्यान्तरगता वह्निरूपा निबोधिका।
नादोऽव्यक्तस्तदुपरि कोट्यादित्यसमप्रभा।
निर्वाणशक्तिः परमा सर्वेषां योनिरूपिणी॥ इति।

५०। निरुक्तनिर्वाणशक्त्यन्तः शिवस्थानमाह  तस्या इति। तस्या निर्वाणशक्त्या मध्यान्तराले अभ्यन्तरस्थशून्ये अमलं निर्मलं मायामलरहितमित्यर्थः, शिवपदं

परब्रह्मस्थानं वर्तते। तस्य स्वरूपमाह शाश्वतं नित्यस्वरूपम्, योगिगम्यं योगिभिः स्वनुष्ठितयोगमात्रवेद्यं नित्यानन्दाभिधानं नित्यश्चासावानन्दश्चेति नित्यानन्दः तत्स्वरूपत्वान्नित्यानन्द इत्यभिधानं लोकव्यवहारो यस्य तत्, सच्चिदानन्दं ब्रह्मेत्यादिश्रूतेर्नित्यानन्द इति नाम्नैव साधकास्तं कीर्तयन्तीत्यर्थः। तथा सकलसुखमयं सकलानां सुखमयं सर्वे साधकाः सुखमयत्वेनैव तदनुभवन्तीत्यर्थः। तथा शुद्धबोधप्रकाशं शुद्धबोधस्य तत्त्वज्ञानस्य प्रकाशो यस्मात् तत्, शुद्धं बोधं प्रकाशयतीति शुद्धबोधप्रकाशमिति वा।

सम्प्रदायभेदेनास्य संज्ञाभेदानाह  केचिदिति। केचित् सुधियो वैदान्तिकाः तत् शिवपदं परब्रह्माभिधानं लपन्ति कथयन्ति। अपरे वैष्णवाः तद्वैष्णवं पदं लपन्ति। केचित् योगिनस्तत् हंसाख्यं हंसनामकं लपन्ति। अन्ये तु किमपि अनिर्वचनीयम् आत्मप्रबोधम् आत्मसाक्षात्कारस्थानं मोक्षरूपमालपन्तीत्यर्थः। एवञ्च सम्प्रदायभेदेन संज्ञाभेदेऽपि शैवशाक्तवैष्णवादीनां सर्वेषामेवोपासकानां चरमलक्ष्यभूतं पदमिदमित्यवधेयम्।

(p. 222) ब्रह्मद्वारस्य मध्ये विरचयति सतां शुद्धबुद्धस्वभावो
भित्त्वा तल्लिङ्गरूपं पवनदहनयोराक्रमेणैव तप्ताम्॥ ५१॥

५१। एवं सहस्रदलकमलपर्यन्तमभिधाय सहस्रारे कुण्डलिन्या उत्थापनस्य क्रममुपदिशति  हुङ्कारेणेति। यमनियमसमभ्यासशीलः यमानां अहिंसा

सत्यास्तेयब्रह्मचर्यापरिग्रहा यमा इत्युक्तलक्षणानां नियमानां
शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमा इत्युक्तलक्षणानाञ्च योगाङ्गानां
यः समभ्यासः सम्यग् दीर्घकालादरनैरन्तर्यसत्कारपूर्वकमनुष्ठानं तदेव शीलं
यस्य तथाभूतः अनवरतकठोरतरयोगाभ्यासपरायण इत्यर्थः सुशीलः
योगप्रतिबन्धकीभूतानुष्ठानपरित्यागेन शिष्टतया प्रसिद्धयोगी श्रीनाथवक्त्राद् गुरुमुखान्
महामोक्षवर्त्मप्रकाशं महामोक्षवर्त्मनो निर्वाणमुक्तिमार्गस्य प्रकाशो यस्मात्
तादृशं क्रमं मुलाधारतः सहस्रारे कुण्डलिन्युत्थापनस्येतिकर्तव्यतां ज्ञात्वा
शुद्धबोधस्वभावः शुद्धबोधे केवलज्ञानस्वरूपे परे ब्रह्मणि स्वो भावो यस्य
तथाभूतः श्रीगुरुकृपया स्वयं ब्रह्मरूपतामापन्न इत्यर्थः। तां प्रसिद्धां देवीं
कुण्डलिनीं पवनदहनयोराक्रमेणैव पवनः पूरकयोगेण देहाभ्यन्तरे समाहृतः
कुम्भकयोगेन धृतश्च, दहनः निरुक्तपवनोद्दिप्तो मूलाधारकर्णिकान्तर्गतत्रिकोणस्थः
कामाग्निः, तयोराक्रमणेन तप्तां तां प्रसिद्धां देवीं मूलाधारस्थितां कुण्डलिनीं
स्वयम्भूलिङ्गं वेष्टयित्वा स्थितां सार्द्धत्रिवलयाकारां प्रसुप्तभुजगरूपिणीं
जागरयित्वेत्यर्थः तल्लिङ्गरूपं स्वयम्भूलिङ्गच्छिद्रं भित्त्वा ब्रह्मद्वारस्य ब्रह्मद्वारं
तदास्ये प्रविलसति सुधासाररम्यप्रदेशम् इत्येतत्प्रकाशीयतृतीयश्लोकोक्तस्य
ब्रह्मनाडीमुखस्थितस्य मध्ये विरचयति स्थापयतीत्यर्थः। ब्रह्मनाडी तु तृतीयश्लोकेऽभिहिता
। यत्तु केनचित् टीकाकारेण नड् गतावितिधातोर्नाडीति पदं निष्पाद्य ब्रह्मनाडीशब्दस्य
कुण्डलिन्याः परमशिवसन्निधिगमनपथरूपचित्रिणीनाड्यन्तर्गतशून्यभाग इत्यर्थममूलकं
कल्पयित्वा न तु चित्रिणीमध्ये नाड्यन्तरमस्तीति निष्कर्ष इत्युक्तम् तन्न

ईडा च पिङ्गला चैव सुषुम्णा चित्रिणी तथा।

ब्रह्मनाडी च तन्मध्ये पञ्च नाड्यः प्रकीर्तिताः॥

इति तोडलतन्त्राष्टमोल्लासवचनेन निरुक्तानां पञ्चानामन्यतमत्वेन ब्रह्मनाड्या निरूपणात्। कुण्डलिन्याः स्वरूपन्तु पूर्वमेवोपदर्शितम्। श्लोकेनानेन मूलाधाराद् ब्रह्मद्वारपर्यन्तं कुण्डलिन्या उत्थापनक्रमो दर्शितः। हूङ्कारेण कुण्डलिन्या उत्थापनस्य क्रममाह शाक्तानन्दतरङ्गिण्यां चतुर्थोल्लासे

(p. 223) (कुण्डलिनीयोगप्रकारः)

भित्त्वा लिङ्गत्रयं तत् परमरसशिवे सूक्ष्मधाम्नि प्रदीप्ते

सा देवी शुद्धसत्त्वा तडिदिव विलसत्तन्तुरूपा सुसूक्ष्मा।

ब्रह्माख्यायाः शिरायाः सकलसरसिजं प्राप्य देदीप्यते तन्-

मोक्षाख्यानन्दरूपं घटयति सहसा सूक्ष्मतालक्षणेन॥ ५२॥

हूङ्कारवर्णसम्भूता कुण्डली परदेवता।

विभर्ति कुण्डली देहमात्मानं हंसमन्त्रतः॥

प्रवृद्धवह्निसंयोगे मनसा मारुतैः सह।

ऊद्ध्र्व नयेत् कुण्डलिनीं जीवात्मसहितां पराम्॥ इति।

तथा-

षट्चक्रसन्धिमार्गेण सुषुम्णावर्त्मना तथा।
हंसेन मनुना देवीं सहस्रारं समानयेत्॥ इति।

अत्र हुङ्कारेणैवेत्यादिपूर्ववचनेन हूङ्कारेण कुण्डलिन्या उत्थपनमभिहितम्।
षट्चक्रसन्धिमार्गेणेत्याद्युत्तरवचनेन तु हंसमन्त्रेणेति क्रमभेदो दृश्यते।
कङ्कालमालिनीतन्त्रे द्वितीयपटले

आकृष्य प्रणवेनैव जीवात्मानं नगेन्द्रजे।
कुण्डलिन्या सह प्राणं गन्धमादाय साधकः।
सोऽहन्तु मनुना देवीं स्वाधिष्ठानं समानयेत्॥

इत्यनेन हृदयाज्जीवात्मानं प्रणवेन मूलाधारे नीत्वा हंसमन्त्रेण जीवात्मना सह
कुण्डलिन्या उत्थापनमुपदिष्टम्।

हृदयाद्धंसमनुना नीत्वा जीवं मुखाम्बुजे।
हूङ्कारेण समुत्थाप्य कुण्डलीं परदेवतात्॥

इति कालीकुलामृतवचनेन तु हंसमनुना जीवात्मनो मूलाधारनयनं हूङ्कारेण

जीवात्मसहितायाः कुण्डलिन्या उत्थपनमिति लभ्यते। एवञ्च पूर्वपूर्वप्रमाणपर्यालोचनया प्रणवेन जीवात्मानं कुण्डलिन्यां नीत्वा हंसमन्त्रेणोत्थापनमित्येकः कल्पः, हंसमन्त्रेण जीवात्मानं तत्र नीत्वा हूङ्कारेणोत्थापनमित्यपर इत्यवगम्यते। ग्रन्थकृता तु हूङ्कारेणैवेत्येवकारेण द्वितीय एव कल्पः स्वाभिमतत्वेनोपदर्शित इति सिद्धान्तः।

५२। अथ सहस्रारे कुण्डलिनीयोजनक्रममाह  भित्त्वेति। सा देवी निरुक्त

(p. 224) (प्रागुक्तबिन्दुमयशिवे कुलकुण्डलीयोजनक्रमः)

नीत्वा तां कुलकुण्डलीं लयवशाज्जीवेन सार्द्धं सुधी-
र्मोक्षे धामनि शुद्धपद्मसदने शैवे परे स्वामिनि।
ध्यायेदिष्टफलप्रदां भगवतीं चैतन्यरूपां परां
योगीशो गुरुपादपद्मयुगलालम्बी समाधौ यतः॥ ५३॥

लक्षणा कुण्डलिनी तल्लिङ्गत्रयं मूलाधारचक्रस्थितं स्वयम्भूलिङ्गम्, अनाहतचक्रस्थं वाणाख्यलिङ्गम्, आज्ञाचक्रस्थम् इतराख्यलिङ्गञ्चेति त्रितयमित्यर्थः, भित्त्वा लिङ्गैरेतैः कृतं सहस्रारगमनपथसंरोधमपाकृत्य ब्रह्माख्यायाः शिराया निरुक्तब्रह्मनाड्याः सम्बन्धि सकलसरसिजं प्राप्य मूलाधारतः स्वाधिष्ठानं ततो मणिपुरं ततोऽनाहतमित्येवंक्रमेण निरुक्तपद्मानि गत्वा शुद्धसत्त्वा तुरीयचैतन्यस्वरूपा तथा तडिदिव विद्युत्सदृशदीप्तिशालिनी सूक्ष्मतालक्षणेन सूक्ष्मतास्वरूपेण विलसत्तन्तुरूपस्वरूपा विलसतः शोभमानस्य तन्तोर्मृणालसूत्रस्य रूपमिव स्वरूपं यस्याः तथाभूता सा देवी

कुण्डलिनी प्रदीप्ते प्रकृष्टदीप्तिशालिनि, तथा सूक्ष्मधाम्नि सूक्ष्मं धाम तेजो यस्य तादृशे परमरसशिवे तस्या मध्यान्तराले शिवपदममलं शाश्वतं योगिगम्यम् इत्युक्तपरंबिन्दुरूपे शिवे परमशिवे इति वा। क्रमेण गत्वेत्यर्थः। सहसा मोक्षाख्यानन्दरूपं साधकानां निरवच्छिन्नानन्दरूपां मुक्तिं घटयति निर्वर्तयतीत्यर्थः।

५३। अथ निरुक्तपरंबिन्दुरूपशिवे कुण्डलिनीयोजनस्य क्रममाह-नीत्वेति। गुरुपादपद्मयुगलालम्बी श्रीगुरुचरणसरोरूहैकशरणः समाधां चित्तवृत्तिनिरोधलक्षणे योगे यतः तदेकनिष्ठ इत्यर्थः, योगीशः योगिश्रेष्ठः तां निरुक्तलक्षणां कुलकुण्डलीं जीवेन सार्द्धं

हृदयाद्धंसमनुना नीत्वा जीवं मुखाम्बुजे।

इत्यादि पूर्वोपदर्शितकालीकुलामृतवचनानुसारेण अनाहतचक्रात् मूलाधारे नीतेन जीवेन जीवात्मना सार्द्धं शैवे परंबिन्दुरूपे परे श्रेष्ठे स्वामिनि स्वामिसमीपे। यद्वा परे शैवे परशिवरूपे स्वामिनि तत्सन्निधाने लयवशात् लयक्रमेण नीत्वा। स्वामिनः स्थानं विशेषणप्रदर्शनमुखेनाह  शुद्धेति। शुद्धं पद्मं सहस्रारपद्मं सदनं यस्य तथाभूते सहस्रारवर्तिनीत्यर्थः, तथा मोक्षे धामनि मुक्तिसम्पादके स्थाने इत्यर्थः। जीवात्मना सह कुण्डलिन्या उन्नयनमाह  शाक्तानन्दतरङ्गिण्यां चतुर्थोल्लासे

(p. 225) प्रवृद्धवह्निसंयोगे मनसा मारुतैः सह ।
ऊद्र्ध्वं नयेत् कुण्डलिनीं जीवात्मसहितां पराम् ॥ इति ।

एवं सहस्रारे कुण्डलिनीयोगमभिधाय तस्या ध्यानप्रकारमाह  ध्यायेदिति । इष्टफलप्रदां स्वाभीष्टफलदायिनीमिष्टदेवतारूपामित्यर्थः परां परंबिन्दुरूपां परशिवरूपां वा, तथा चैतन्यरूपाम्, एतेनास्याः परंबिन्दुरूपत्वचैतन्यरूपत्वयोः तद्रूपेण शिवेनाभिन्नरूपतां चिन्तयेदित्यर्थादुक्तं भवति । व्यक्तमाह शाक्तानन्दतरङ्गिण्यां चतुर्थोल्लासे कुण्डलिनीं प्रकृत्य

मूलाधारान्महेशानि सहस्रारे समानयेत् ।
शम्भुगतां परां शक्तिमेकीभावं विचिन्तयेत् ।
ध्यायेत् कुण्डलिनीं तत्र इष्टदेवस्वरूपिणीम् ॥ इति ।

अत्र मूले लयवशादित्युक्तम् । लयक्रमेणोन्नयनप्रकारस्तु मूलाधारकमलकर्णिकान्तर्गतत्रिकोणगह्वरस्थितायां कुण्डलिन्यामनाहतचक्राज्जीवात्मानं हंसमन्त्रेण समानीय निरुक्तत्रिकोणस्थितानामैन्द्रबीजब्रह्मकामदेवादीनां पृथिव्यां पृथिव्याश्च स्वकारणभूते गन्धतत्त्वे विलयं विधाय जीवात्मानं कुण्डलिनीं गन्धतत्त्वञ्च हूङ्कारेण स्वाधिष्ठाने विलापयेत् । तदुक्तं कङ्कालमालिनीतन्त्रे द्वितीयपटले मूलाधारपद्मं प्रकृत्य

तत्कर्णिकायां देवेशि त्रिकोणमतिसुन्दरम्।

तथा- त्रिकोणाख्ये तु देवेशि लङ्कारं चिन्तयेत्तथा।

ब्रह्माणं तत्र सञ्चिन्त्य कामदेवञ्च चिन्तयेत्॥

इत्याद्यभिधाय

एतानि गिरिजे मातः पृथ्वीं नीत्वा गणेश्वरि।

तन्मध्ये लिङ्गरूपन्तु कुण्डलीवेष्टितं प्रिये॥

इत्यादिना स्वयम्भूलिङ्गकुण्डलिन्योः स्वरूपं निर्णीय

पूर्वोक्तां पृथिवीं धन्यां गन्धे नीत्वा महेश्वरि।

आकृष्य प्रणवेनैव जीवात्मानं नगेन्द्रजे॥

कुण्डलिन्या सह प्राणं गन्धमादाय साधकः।

सोऽहन्तु मनुना देवि स्वाधिष्ठाने प्रवेशयेत्॥ इति।

अत्र वचने यत् प्रणवेनाकर्षणं सोऽहमित्यनेनोत्थापनमुपदिष्टं तन्मतान्तरम्, नेदं पूर्णानन्दसम्मतमिति विस्तरतः प्रतिपादितं हूङ्कारेणैव देवीमित्याद्येकपञ्चाशत्तमश्लोकटीकायाम्। इति कुण्डलिन्याः स्वाधिष्ठानोन्नयनप्रक्रिया।

(p. 226) ततश्च तत्र कर्णिकान्तःस्थितवारुणबीजविष्णुशक्त्यादीनां जले जलस्य च स्वकारणभूते रसतत्त्वे लयं विधाय तद्रसतत्त्वं जीवात्मानं कुण्डलिनीञ्च हूङ्कारेण मणिपूरे विलापयेत्। तदुक्तं तत्रैव

तत्कर्णिकायां वरुणं तत्रापि भावयेद्धरिम्।
युवानं राकिणीं शक्तिं चिन्तयित्वा वरानने॥

रसनेन्द्रियपूपस्थं जलञ्च कामलालसे।
एतानि गन्धञ्च शिवे रसे नीत्वा वरानने॥

जीवात्मानं कुण्डलिनीं रसञ्च मणिपूरके।
नीत्वा परमयोगेण तत् पद्मं दिग्भवं प्रिये॥

इति मणिपूरोन्नयनप्रक्रिया।

ततश्च तत्कर्णिकान्तर्विलसद्वह्निबीजरुद्रलाकिनीशक्त्यादीनां तेजसि तेजसश्च स्वकारणभूते रूपतत्त्वे लयं विधाय तद्रूपतत्त्वं जीवात्मानं कुण्डलिनीञ्च अनाहतचक्रे विलापयेत्। तदुक्तं तत्रैवानाहतपद्मं प्रकृत्य

तत्कर्णिकायां सुश्रोणि वह्निं सञ्चिन्त्य साधकः।

तत्र रुद्रः स्वयं कर्ता संहारे सकलस्य च ॥

लाकिनीशक्तिसंयुक्तं भावयेत्तं मनोहरम् ।
तत्र चक्षुरिन्द्रियञ्च ध्यात्वा तेजोमयं शिवे ॥

एतद्रसञ्च सुभगे रूपे नीत्वा महाभगे ।
जीवात्मानं कुण्डलिनीं रूपञ्चानाहते नयेत् ॥ इति ।

इति अनाहतोन्नयनप्रक्रिया ।

ततश्चानाहतचक्रकर्णिकान्तरालस्थवायुबीजेश्वरकाकिनी-शक्त्यादीनां वायौ वायोश्च स्पर्शतत्त्वे लयं विधाय तत् स्पर्शतत्त्वं जीवात्मानं कुण्डलिनीञ्च निरुक्तविशुद्धचक्रे विलापयेत् । तदुक्तं तत्रैव अनाहतचक्रं प्रकृत्य

तत्कर्णिकायां वायुञ्च जीवस्थाननिवासिनम् ।
तत्र योनेर्मण्डलञ्च वाणलिङ्गविराजितम् ॥

काकिनीशक्तिसंयुक्तं तत्र वायुं त्वगिन्द्रियम् ।
एतानि रूपं संयोज्य स्पर्शे त्वमलकारिणि ।
जीवं कुण्डलिनीं स्पर्शं विशुद्धे स्थापयेत्ततः ॥ इति ।

इति विशुद्धचक्रोन्नयनप्रक्रिया।

ततश्चैतत् षोडशदलकमलकर्णिकान्तरालस्थितानामाकाश-बीजसदाशिवशाकिनी-

(p. 227) (पुनः कुण्डलिन्या मूलाधारप्रापणममृतधारया स्वेष्टदैवततर्पणञ्च)

लाक्षाभं परमामृतं परशिवात् पीत्वा ततः कुण्डली
पूर्णानन्दमहोदयात् कुलपथान्मूले विशेत् सुन्दरी।
तद्दिव्यामृतधारया स्थिरमतिः सन्तर्पयेद्दैवतं
योगी योगपरम्पराविदितया ब्रह्माण्डभाण्डे स्थितम्॥ ५४॥

शक्त्यादीनाम् आकाशे आकाशस्य च शब्दतत्त्वे लयं विधाय तच्छब्दतन्मात्रं जीवात्मानं कुण्डलिनीञ्च निरुक्ताज्ञाचक्रे विलापयेत्। तदुक्तं तत्रैव विशुद्धं प्रकृत्य

तत्कर्णिकायामाकाशं शिवञ्च शाकिनीयुतम्।
वाचं श्रोत्रञ्च आकाशे संस्थाप्य नगनन्दिनि॥

एतानि स्पर्शं शब्दे वै नीत्वा शङ्करि मत्प्रिये।
जीवं कुण्डलिनीं शब्दमाज्ञाचक्रे निधापयेत्॥ इति।

इत्याज्ञाचक्रोन्नयनप्रक्रिया।

ततश्चाज्ञाचक्रकर्णिकान्तःस्थितानामितरशिवहाकिनी-शक्त्यादीनां सर्वेषां मनसि लयं विधाय जीवात्मानं कुण्डलिनीं मनश्च सहस्रारे नयेत्।

तदुक्तं तत्रैव  जीवात्मानं कुण्डलिनीं मनश्चापि महेश्वरि।
सहस्रारे महापद्मे मनश्चापि (?) नियोजयेत्॥ इति।

अत्र निरुक्तशब्दतत्त्वस्याहङ्कारेऽहङ्कारस्य महत्तत्वे महत्तत्त्वस्य हिरण्यगर्भाख्य सूक्ष्मप्रकृतौ तस्याश्च परबिन्दौ विलापनं कर्तव्यमिति लयक्रमः। तदुक्तं कालीचरणकृतषट्चक्रटीकाधृतमन्त्रतन्त्रप्रकाशे

अहङ्कारे हरेद् व्योम सशब्दं तन्महत्यपि।
महच्च सर्वशक्तीनामव्यक्ते कारणे परे॥

सच्चिदानन्दरूपं यद् वैष्णवं कारणं परम्।
पृथिव्यादिक्रमात् सर्वं तत्र लीनं विचिन्तयेत्॥ इति।

एवञ्च सर्वेषामेव पृथिव्यादीनां तदाश्रितानाञ्च स्वस्वकारणे लय इति फलितम्।

५४। पुनः कुण्डलिन्याः सहस्रारान्मूलाधारप्रापणमाह-लाक्षाभमिति। ततः सा कुण्डलिनी परशिवात् लाक्षाभं लाक्षासदृशवर्णविशिष्टं परमामृतं परशिवसामरस्यामृतं पीत्वा नित्यानन्दमहोदयात् नित्यानन्दस्य महान् उदयो यत्र तथाभूतात् तस्मात्, कुलपथादिति ल्यब्लोपे पञ्चमी। निरुक्तसहस्रारगमनपथं प्राप्य पुनर्मूले मूलाधारचक्र

(p. 228) रूपस्वावासस्थाने विशेत् प्रविशति। येन क्रमेण पूर्वं सहस्रारं गता तेनैव क्रमेण प्रत्यावृत्य पुनः सार्द्धत्रिवलायाकारेण स्वयम्भूलिङ्गं वेष्टयित्वा तिष्ठतीत्यर्थः। व्यक्तमाह शाक्तानन्दतरङ्गिण्यां चतुर्थपटले सहस्रारं प्रकृत्य

सदाशिवो महादेवो यत्रास्ते परमेश्वरि।
तत्र गत्वा महादेवी कुण्डली परदेवता॥

देवीं रूपवतीं कामसमुल्लासविहारिणीम्।
मुखारविन्दगन्धेन मोदितं परमं शिवम्॥

प्रबोध्य परमेशानि तत्रोपरि वसेत् प्रिये।
शिवस्य मुखपद्मं हि चुचुम्बे कुण्डली शिवे॥

सदाशिवेन देवेशि क्षणमात्रं रमेत् प्रिये।

अमृतं जायते देवि तत्क्षणात् परमेश्वरि ॥

तदुद्भवामृतं देवि लाक्षारससमोपमम् ।
तेनामृतेन देवेशि तर्पयेत् परदेवताम् ॥

षट्चक्रदेवतास्तत्र सन्तर्प्यामृतधारया ।
आनयेत्तेन मार्गेण मूलाधारं पुनः सुधीः ॥

इति । सहस्रारान्मूलाधारे कुण्डलिन्या अवतरणस्य क्रमोऽपि स्फुटं प्रदर्शितस्तत्रैव

सदा षोडशवर्षीयां पीनोन्नतपयोधराम् ।

इत्यादि कुण्डलीध्यानमभिधाय

एवं ध्यात्वा जपेन्मन्त्रं शतमष्टोत्तरं शिवे ।
मातृकामालया जप्त्वा आज्ञाचक्रं समानयेत् ॥

तत्रेतरशिवलिङ्गेन योजयेत् कुण्डलीं पराम् ।
ध्यात्वा ब्रह्ममयीं तत्र शतमष्टोत्तरं जपेत् ॥

ततो विशुद्धौ तां नीत्वा शिवेन सह योजयेत्।
तामिष्टदेवतां ध्यात्वा जपेदष्टशतं प्रिये॥

हृत्पद्मे तां ततो नीत्वा वाणेन सह योजयेत्।
देवीरूपाञ्च तां ध्यात्वा जपेदष्टोत्तरं शतम्॥

मणिपूरे तु तां नीत्वा शिवेन सह योजयेत्।
देवीरूपान्तु तां ध्यात्वा शतमष्टोत्तरं जपेत्॥

स्वाधिष्ठाने तु तां नीत्वा शिवेन सह योजयेत्।
योजयित्वा जपेन्मन्त्रं देवीं ध्यात्वा प्रियंवदे॥

(p. 229) (षट्चक्रक्रमज्ञानफलम्)

ज्ञात्वैतत् क्रममुत्तमं यतमना योगी समाधौ युतः
श्रीदीक्षागुरुपादपद्मयुगलामोदप्रवाहोदयात्।
संसारे न हि जन्यते न हि कदा संक्षीयते संक्षये
पूर्णानन्दपरम्पराप्रमुदितः शान्तः सतामग्रणीः॥ ५५॥

(एतत्षट्चक्रप्रकरणाध्ययनफलम्)

योऽधीते निशि सन्ध्ययोरथ दिवा योगी स्वभावस्थितो

मोक्षद्वारनिदानमेतदमलं शुद्धं सुगुप्तक्रमम्।
श्रीमच्छ्रीगुरुपादपद्मयुगलालम्बी यतान्तर्मना-
स्तस्यावश्यमभीष्टदैवतपदे चेतो नरीनृत्यते॥ ५६॥

इति श्रीपूर्णानन्दपरमहंसविरचिते श्रीतत्त्वचिन्तामणौ
योगविवरणं नाम षष्ठः प्रकाशः॥ ६॥

शतमष्टोत्तरं जप्त्वा मूलाधारे तु तां नयेत्।
तत्र लिङ्गं स्वयम्भूञ्च ध्यायेत् कुन्दसमप्रभम्॥ इत्यादि।

निरुक्तामृतधाराकरणकेष्टदेवतातर्पणमाह-तदिति। स्थिरमतिर्निरुक्तयोगानुष्ठाने दृढप्रत्ययविशिष्टो योगी योगपरम्पराविदितया निरन्तरयोगाभ्यासानुभूतस्वरूपया तद्दिव्यामृतधारया पूर्वमभिहितयेत्यर्थः। दैवतम् इष्टदेवीं सन्तर्पयेत्। दैवतं विशेषयति-ब्रह्माण्डभाण्डे स्थितमिति। ब्रह्माण्डस्य भाण्डं पात्रं योनिरूपमित्यर्थः कुण्डलिनी तत्र स्थितमित्यर्थः।

५५। एवं षट्चक्रप्रक्रियामभिधाय तज्ज्ञानफलमाह ज्ञात्वेति। समाधौ युतः समाधिनिष्ठो योगी एतत् श्रीदीक्षागुरोः पादपद्मयुगले य आमोदप्रवाहः तत्सेवयाधिगता ब्रह्मज्ञानानन्दपरम्परा तस्य उदयात् एतत्क्रमं प्रागुक्तप्रक्रियां ज्ञात्वा संसारे न जन्यते नोत्पद्यते, संक्षयेऽपि प्रलयकालेऽपि न संक्षीयते। स नित्यानन्दपरम्परया धारा

वाह्किब्रह्मस्वरूपानन्दानुभवेन शान्तः सतामग्रणीश्च भवति।

५६। एतत्षट्चक्रप्रकरणाध्ययनफलमाह  योढीत इति। यः श्रीमत् श्रीगुरु-

(p. 230) पादपद्मयुगलम् आलम्बितुं शीलमस्य सः तथा यतान्तर्मना यतम् अन्तरात्मनि मना यस्य तथाभूतः योगी स्वभावस्थितः स्वस्मिन् आत्मनि भावो यस्य तादृशः सन्, निशि रात्रौ सन्ध्ययोः प्रातः सायञ्च, अथवा दिवा मोक्षद्वारनिदानमेतद् योगविवरणं अधीते तस्य योगिनः अभीष्टदैवतपदे स्वेष्टदेवताचरणे चेतो नरीनृत्यते। एतद्योगप्रभावेण स्वेष्टदेवतास्वरूपावलोकनात् तत्र चित्तमतिमात्रमुल्लासमधिगच्छतीत्यर्थः।

सप्तमः प्रकाशः

(कुण्डानां लक्षणानि, भेदाः, मेखलादिस्वरूपम्, वर्णभेदेन कुण्डभेदाः, कुण्डकरणासम्भवे स्थण्डिले होमविधानम्, स्रुक्स्रुवयोर्लक्षणञ्च)

(कुण्डस्वरूपनिरूपणप्रतिज्ञा)

कुण्डानां लक्षणं वक्ष्ये यथातन्त्रानुसारतः।

(चतुरस्त्रकुण्डम्)

हस्तमात्रमितं सूत्रं परितो लाञ्छयेत्ततः॥ १॥

**********************************************************************
**
** akulaviiratantram of the school of Matsendryanatha edited by P.C. Bagchi, Calcutta, 1934
**
**
** Data entered by the staff of Muktabodha
**
*
*
**
** Encoded in Velthius transliteration
************************************************************************************
***********

[आ]

श्रीमच्छन्दपादकेभ्यो नमः।

श्रीमीनसहजानन्दं स्वकीयाङ्गसमुद्भवम्।

सर्वमाधारगम्भीरमचलं व्यापकं परम्।

मायामलविनिर्मुक्तं मीननाथं नमाम्यहम्॥

अथातः सम्प्रवक्ष्यामि अकुलवीरं महद्भूतम्।

गुह्याद् गुह्यतरं गुह्यं सिद्धसद्भावसन्ततिः॥ १॥

अनुग्रहाय लोकानां सिद्धनाथेन भाषितम्।
गोपनीयं प्रयत्नेन यदीच्छन् शाश्वतं पदम्॥ २॥
संसारार्णवमग्नानां भूतानां महदाश्रयम्।
यथा नदीनदाः सर्वे सागरे समुपागताः॥ ३॥
तथा अकुलवीरेषु सर्वधर्मा लयङ्गताः।
सर्वाधारमशेषस्य जगतः सर्वदा प्रभुः॥ ४॥
सहजानन्दं न विन्दन्ति सर्वधर्मसमासृताः।
अजानन्तमलैर्ग्रस्ता महामायान्धच्छादिताः॥ ५॥
शास्त्रजालेन सन्तुष्टा मोहितास्त्यजयन्तितताः (?)।
न विन्दन्ति पदं शान्तं कौलानां निष्कलं गुरुम्॥ ६॥
संवादयन्ति ये केचिन् न्यायवैशेषिकास्तथा।
बौधास्तु अरिहन्ता ये सोमसिद्धन्तवादिनः॥ ७॥



मीमांस पञ्चस्त्रोताश्च वामसिद्धान्तदक्षिणाः।
इतिहासपुराणञ्च भूततत्वन्तु गारुडम्॥ ८॥
एभिः शैवागमैः सर्वैः परोक्षञ्च क्रियान्वितैः।
सविकल्पसिद्धिसञ्चारं तत् सर्वं पापबन्धवित्॥ ९॥
विकल्पबहुलाः सर्वैर्मिथ्यावादा निरर्थकाः।
न ते मुञ्चन्ति संसारे अकुलवीरविवर्जिताः॥ १०॥
सर्वज्ञं सर्वमासृत्य सर्वतो हितलक्षणम्।

सर्वेषां सिद्धिस्तत्रस्था सर्वसिद्धिश्च तत्र वै ॥ ११ ॥

यत्रासौ अकुलवीरो दृश्यते सर्वतोमुखम् ।

तं विदित्वा परं रूपं मनो निश्चलतां व्रजेत् ॥ १२ ॥

शब्दरूपरसस्पर्शगन्धश्चैवात्र पञ्चमम् ।

सर्वभावाश्च तत्रैव प्रलीणाः प्रलयं गताः ॥ १३ ॥

भावाभावविनिर्मुक्त उदयास्तमनवर्जितः ।

स्वभावमतिमतं शान्तं मनो यस्य मनोमयम् ॥ १४ ॥

अकुलवीरमिति ख्यातं सर्वाधारपरापरम् ।

नाधारलक्षभेदन्तु न नादगोचरे पठेत् ॥ १५ ॥

हृदि स्थाने न वक्त्रे च घण्टिका तालरन्ध्रके ।

न इडा पिङ्गला शान्ता न चास्तीति गमागमे ॥ १६ ॥

न नाभिचक्रकण्ठे च न शिरे नैव मस्तके ।

तथा चक्षुरुन्मीलने च न नासाग्रनिरीक्षणे ॥ १७ ॥

न पूरककुम्भके तत्र रेचके (च) तथा पुनः ।

न बिन्दुभेदके ग्रन्थौ ललाटे न तु वह्निके ॥ १८ ॥

(p. 86)

प्रवेशनिर्गमे नैव नावाहनविसर्जनम् ।

न करणैर्नासनं मुद्रैर्नामासे भिन्नतालुके (?) ॥ १९ ॥

न निरोधो न चोद्धारो नातीतां चालनं न हि ।

न प्रेर्यप्रेरकश्चैव न स्थानन्नैव चाश्रयम् ॥ २० ॥

न चात्मनैव तद् ग्राह्यं ग्राह्यातीतपदं भवेत्।

एतत् पक्षविनिर्मुक्तं हेतुदृष्टान्तवर्जितम्।

सबाह्याभ्यन्तरन्तत्र एकोच्चारं चराचरम्॥ २१॥

न दूरे न च वै निकटे न भरितो न च रिक्तक(ः)।

न उन्नो न सोऽधिक एभिः पक्षैर्विवर्जितम्॥ २२॥

यश्च विंशात्मको ह्येष पुद्गल नास्ति यत्र वै।

यत्र लक्षं न विद्येत अकुलवीर स उच्यते॥ २३॥

यस्यैवं संस्थितं कश्चित् समरस संस्थितः।

स ब्रह्मा सो हरिश्चेशः स रुद्रो स च ईश्वरः॥ २४॥

स शिवः परमदेवः स सोमार्काग्निकस्तथा।

स च सांख्यः पुराणाश्च अर्हन्तबुद्ध एव च॥ २५॥

स्वयं देवी स्वयं देवः स्वयं शिष्यः स्वयं गुरुः।

स्वयं ध्यानं स्वयं ध्याता स्वयं सर्वत्र देवता॥ २६॥

यादृशेन तु भावेन पुरुषो भावयेत् सदा।

तादृशं फलमा(व)प्नोति नात्र कार्यविचारणात्॥ २७॥

अस्यैव हि नामानि पृथग्भूतानि योगिभिः।

अनाम तस्य गीयन्ते भ्रान्तिज्ञानविमोहितैः॥ २८॥

धर्माधर्मसमाक्लिष्टाविकल्पतमश्छादिताः।

तेन मुञ्चन्ति संसारं नरकं योनिसंकुलम्॥ २९॥

अकुलवीरं महद्भूतं यदा पश्यन्ति सर्वगम्।

स बाह्याभ्यन्तरे नित्यं एकाकारं चराचरम्॥ ३०॥

निस्तरङ्गं निराभासं पदभेदविवर्जितम्।

सर्वावयवनिर्मुक्तं निर्लयं निर्विकारजम्॥ ३१॥

अदृष्टनिर्गुणं शान्तं तत्त्वातीतं निरञ्जनम्।

सर्वज्ञं परिपूर्णञ्च स्वभावश्चैवमक्षयम्॥ ३२॥

कार्यकारणनिर्मुक्तमचिन्त्यमनामयम्।

मायातीतं निरालम्बं व्यापकं सर्वतोमुखम्॥ ३३॥

समत्वं एकभूतञ्च ऊहापोहविवर्जितम्।

अकुलवीरं महद्भूतम् अस्तिनास्तिविवर्जितम्॥ ३४॥

न मनो न च वै बुद्धिर्न चिन्ताचेतनादिकम्।

न कालः कलनाशक्तिर्न शिवो न च इन्द्रियः॥ ३५॥

न भूते गृह्यते सो हि न सुखं दुःखमेव च।

न रसो हि न सुखं दुःखमेव च (?)॥ ३६॥

न रसो विरसश्चैव न कृतो न च जायते।

न च्छाया न च तापस्तु न शीतो न च उष्णवान्॥ ३७॥

न (दृश्यते मन्) स्तत्र उदयास्तमनवर्जितम्।

न सीमा दृश्यते तत्र न च तीर्थ्यं न चैव हि (?)॥ ३८॥

अद्वैतमचलं शान्तं संगदोषविवर्जितम्।

निराकुलं निर्विकल्पञ्च निबद्धञ्च मलक्षणम्॥ ३९॥

अनाथं सर्वनाथञ्च उन्मना मदवर्जितम् ।

अनिगूढमसन्धिञ्च स्थावरं जङ्गमेव च ॥ ४० ॥

(p. 88)

ज्वलज्ज्वलनभूम्या च आपोञ्चैव तथैव च ।

सर्वं समरसं पूर्णं अकुलवीरन्तु केवलम् ॥ ४१ ॥

यस्यैषा संस्थिता मुक्तिः स मुक्तो भवबन्धनात् ।

न तस्य मातापिता (वा)बान्धवं न च देवता ॥ ४२ ॥

न यज्ञं नोपवासञ्च न क्रिया वर्णभेदकम् ।

त्यक्त्वा विकल्पसंघातम् अकुलवीरलयं गताः ॥ ४३ ॥

न जपो नार्चनं स्नानं न होमं नैव साधनम् ।

अग्निप्रवेशनं नास्ति हेमन्तभृगु नोदनम् ॥ ४४ ॥

नियमोऽपि न तस्यास्ति नोपवासो विधीयते ।

पितृकार्यं न करोताति तीर्थयात्राव्रतानि च ॥ ४५ ॥

धर्माधर्मफलं नास्ति न स्नानं नोदकक्रिया ।

स्वयं त्यज सर्वकार्याणि लोकाचाराणि यानि च ॥ ४६ ॥

समयाचारविचारञ्च कृतका बन्धकानि तु ।

संकल्पञ्च विकल्पञ्च ये चान्ये किल धर्मिणः ॥ ४७ ॥

भवे योगी निराचारो पशुचारविवर्जितः ।

सिद्धिश्च विविधाकारा पाताले च रसायनम् ॥ ४८ ॥

प्रत्यक्षञ्च या लब्धं न गृह्णीयात् कदाचन ।

सर्वञ्च पाशजालञ्च अधोमार्गप्रदायकः ॥ ४९ ॥

एतेषु मोचना नास्ति अकुलवीरविवर्जिताः ।

यथा मृताः (न) जानन्ति स्वादं कटुमधुरस्य तु ॥ ५० ॥

तथा अकुलवीरन्तु न जानन्ति स्वभावगम् ।

यथा मदिरा महान्तस्य कथितं नेवशकृते (?) ॥ ५१ ॥

अगे ८९ तो ९६ मिस्सिन्ग्

(p. 97)

रहस्यपरमानन्दमतिगुह्यं सुगोपितम् ।

लोकानां च हितार्थाय सिद्धनाथेन भाषितम् ॥ ३९ ॥

निर्विकल्पं पदं शान्तं यत्र लीनं परापरम् ।

मोक्षस्य तन्महास्थानं मन्त्ररूपविवर्जितम् ॥ ४० ॥

तत्रैव सृष्टिरूपेण पुनस्तत्र लयं गता ।

किन्तेन बहुनोक्तेन सर्वबन्धविवर्जितम् ॥ ४१ ॥

अकुलवीरं यदा लब्धं तदा किं कौलिकैः क्रमैः ।

लब्ध्वा तु मोक्षसद्भावम् अकुलवीरं मलापहम् ॥ ४२ ॥

कौलमार्गे द्वयो सन्ति कृतका सहजा तथा ।

कुण्डली कृतका ज्ञेया सहजा समरसे स्थिता ॥ ४३ ॥

प्रेर्यप्रेरकभावस्था कृतका साऽभिधीयते ।

ततः स पातयेद् भूमौ मुद्रामन्त्रैर्नियोजितैः ॥ ४४ ॥

आहुते पतने चान्ये कर्णजापेन धूपकैः ।

एतत् साध्यमिदं तत्त्वं (एतद्) ध्यानञ्च धारणा ॥ ४५ ॥

अनेकैः कर्मसंघातैः नानामार्गविभावनैः ।

विकल्पकल्लोल्लोला उद्भ्रान्ता भ्रान्तचेतसः ॥ ४६ ॥

हृदि शोकेन सन्तप्ता व्यासङ्गाच्च महाभयैः ।

हर्षविषादसम्पन्ना शोच्यमाना मुहुर्मुहुः ॥ ४७ ॥

तावद्भ्रमन्ति संसारे कल्पाकल्पैर्भवार्णवैः ।

दग्धबीजेषु संभूतिर्यथा नैव प्रजायते ॥ ४८ ॥

मूलच्छिन्ने यथा वृक्षे न प्ररोहं विद्यते ।

अकुलवीरगतं भिन्नं नानाभावानुबन्धनैः ॥ ४९ ॥

(p. 98)

न बध्यते यथा विमले रसं विप्रलयं गतम् ।

तद्वद्कुलवीरे च सत्त्वे भ्राभ्राख्य यद्गतः (?) ॥ ५० ॥

तिमिरेण यथाच्छन्नमुदितार्कं न पश्यति ।

अज्ञानमनस्तद्वद् भ्रान्तिजालविमोहिता ॥ ५१ ॥

अकुले वीरे च सम्प्राप्ते सर्वमेतद्विनश्यति ।

दधिमध्ये यथा सर्पिः काष्ठे चाग्निः स्थितो यथा ॥ ५२ ॥

पुष्पे गन्धस्तिले तैलं वृक्षे छाया समाश्रिता ।

मद्यमध्ये यथानन्दं दीपे प्रभा समाश्रिता ॥ ५३ ॥

पद्ममध्ये च कुण्डल्या अङ्गप्रत्यङ्गमेव च ।

रक्तार्थाकुलवीरे (?) च तत्सर्वं विनियोजितम् ॥ ५४ ॥

भावाऽभावादिसंयुक्तैः प्रत्ययैर्दृष्टिगोचरैः ।

अकुलवीरं न जानन्ति कृतकैर्मोहितात्मनः ॥ ५५ ॥

पाशजालनिबद्धाश्च महामायाविमोहिताः ।

न जानन्ति पदं शान्तमचिन्त्यं नित्यसम्भवः ॥ ५६ ॥

सर्वव्यापिभावस्थं स्थानवर्णविवर्जितम् ।

सर्वभूतस्थितं ह्येकमध्येयं ध्येयवर्जितम् ॥ ५७ ॥

स च सर्वगतो भावः स्थिरे पूर्णे निरन्तरे ।

तत्र मनो विलीनन्तु अचलं भवतन्मयम् ॥ ५८ ॥

मनोवृद्धिस्तथा चिन्त्यं क्षिप्ता तन्मयतां गता ।

यथा तिष्ठति तत्त्वस्थः शिवनिष्कलमव्यये ॥ ५९ ॥

तदा तन्मयतां याति निर्मलं निश्चलं पदम् ।

अकुलवीरं महद्भुतमेकवीरं च सर्वगम् ॥ ६० ॥

(p. 99)

दुर्लभं सुरसिद्धानां योगिनीनाञ्च गोचरम् ।

केचिद् वदन्तीदं धर्ममिदं शास्त्रमिदं तपः ॥ ६१ ॥

अयं लोकमिमं स्वर्गमिदं साध्यमिदं फलम् ।

इदं ज्ञानञ्च विज्ञानं शुद्धाशुद्धमिदं परम् ॥ ६२ ॥

ज्ञेयञ्च तत्त्वकूटञ्च यत्र ध्यानञ्च धारणा ।

तदासौ योगिनी ह्येकः नान्यस्तु हि द्वितीयकः ॥ ६३ ॥

(अ)नागतन्तु गतञ्चैव न गच्छेन्न च तिष्ठति।

न भूतं न भविष्यञ्च स्थितिप्रलयवर्जितम्॥ ६४॥

न चाहं प्रचितैर्दोषैः लिप्यते न कदाचन।

नाहं कश्चिन्न मे कश्चिन्न बद्धो न च बाधकः॥ ६५॥

न मुक्तो वै न च न मुक्तमे (?) मोक्षस्य च स्पृहा।

गच्छंस्तिष्ठन् स्वपन् जाग्रद्भूञ्जानो मैथुनेऽपि वा॥ ६६॥

भयदारिद्रशोकैश्च विविधैर्भक्षणैस्तथा।

चिकित्सा नैव कुर्वीत इन्द्रियार्थैः कदाचन॥ ६७॥

आचरेत् सर्ववर्णैस्तु न तु भक्ष्यं विचारयेत्।

एवं स चरते योगी यथारण्ये हुताशनः॥ ६८॥

पिण्डबधाञ्च नानास्ति अवस्था मूर्खवासनाम् (?)।

सोमशून्यस्तथा वह्निप्राणायामविवर्जितम्॥ ६९॥

अप्रमेयनिराभासं धारणाध्यानवर्जितम्।

येन जन्मसहस्राणि भक्त्या संपूजितो गुरुः॥ ७०॥

(p. 100)

ते लभन्ति महाज्ञानं अकुलवीरन्तु मोक्षदम्।

योगिनीराकिणीचक्रे यस्य भक्तिः सुनिश्चला॥ ७१॥

अकुलवीरं महद्भूतं गम्भीरं गहनामयम्।

पिण्डातीतं यदा ज्ञेयमपिण्डं पिण्डवर्जितम्॥ ७२॥

पदव्यञ्जननिर्मुक्तं विमलं सततोदितम्।

तल्लीने तन्मयात्मानं विन्दते श्वाश्वतं पदम्॥ ७३॥

चिन्तातीतं भवेत् सो हि योगसंयोगवर्जितम्।

निर्वाणं वासनाहीनं तृप्तात्मा च निरामयः॥ ७४॥

तेन लब्धा न सन्देहोऽमला मलच्छेदनाः।

तस्य प्रवर्तते क्षिप्रं तस्यैव सर्वसर्वगम्॥ ७५॥

वेदसिद्धान्तशास्त्राणि नानाविधानि शिखानि च।

तानि सर्वाणि मोहानि कायक्लेशैर्निरर्थकम्॥ ७६॥

विद्याहङ्कारग्रस्तास्तु गर्विताः कुगतिं गताः।

अनर्थेन च सन्तुष्टा बहुग्रन्थार्थचिन्तकाः॥ ७७॥

अकुलवीरं न विन्दन्ति कृतकैर्मोहितात्मनः।

गर्वितानां कुतो ज्ञानं ग्रन्थकोटिशतैरपि॥ ७८॥

कर्पूरकुङ्कुमादीनां वस्त्रताम्बूलमेव च।

खरवद्भवति तद्भारं सर्वं तस्य निरर्थकम्॥

अकुलवीरञ्च देहस्थं यदा पश्यति सर्वगम्॥ ७९॥

धर्माधर्मफलं नास्ति नोदकं तीर्थसेवना।

न क्रिया सत्यशौचं वा कर्मकाण्डे न भावना॥ ८०॥

(p. 101)

न तस्य कर्मकर्माणि लोकाचाराणि यानि च।

चरिताः समयाचारा जनैर्भ्रान्तिविमोहितैः॥ ८१॥

अकुलवीरं न जानन्ति किं विशिष्टं कुतः स्थितम्।

कृतका बन्धना लोके कल्पिताश्च कुपण्डितैः ॥ ८२ ॥

संकल्पविकल्पञ्च कलाकर्माणि यानि च ।

सिद्धयो विविधा लोके पातालं च रसायनम् ॥ ८३ ॥

प्रत्यक्षञ्च यदा लब्धं न विगृह्णीयात् कदाचन ।

सर्वे ते पाशबद्धश्च अधोमार्गप्रदायकाः ॥ ८४ ॥

न चैतैर्मुक्तिः संसारे अकुलं वीरवर्जिताः ।

यथा मदिरमानन्दं कथितं नैव जायते ॥ ८५ ॥

तद्वदकुलवीराख्यं स्वसंवेद्यनिरोपणम् ।

न जानन्ति नरा मूढाः सारात् सारतरं परम् ॥ ८६ ॥

तावद् भ्रान्तिविमुग्धात्मा यावत्तलं न विन्दति ।

चिन्तातीते यदा योगी स योगी योगचिन्तकः ॥ ८७ ॥

विरक्ता वासना यस्य तृप्तात्मा च निरामयः ।

तावद् भ्रमन्ति मोहात्मा नानाभावानुबन्धनैः ॥ ८८ ॥

यावत् सममेकत्वं परमानन्दं न विन्दति ।

मूर्खाणां च यथाशास्त्रं कुमारीसुरतिं यथा ॥ ८९ ॥

अकुलवीरं विन्दन्ति कथ्यमानैः कुमारिकाः ।

दिशदेशविनिर्मुक्तं स्थानवर्णविवर्जितम् ॥ ९० ॥

(p. 102)

निराकुलं निर्विकल्पं निर्गुणञ्च सुनिर्मलम् ।

अनाथं सर्वनाथञ्च प्रमादोन्मादवर्जितम् ॥ ९१ ॥

घननिविडनि(ः)सन्धिस्थावरे जङ्गमेषु च ।

जले ज्वलने तथा पवने भूम्याकाशे तथैव च ॥ ९२ ॥

सर्वत्र समरसं भरितमकुलवीरन्तु केवलम् ।

तं ज्ञातं येन देहस्थं स मुक्तः सर्वबन्धनात् ॥ ९३ ॥

न तस्य क्रियाबन्धेन न वेद्यं न च वेदना ।

न यज्ञो नोपवासश्च न चर्या न क्रियोदयः ॥ ९४ ॥

न वर्णो वर्णभेदश्च अकुलवीरं यदागतम् ।

न जापो नार्चनाग्नीनां न होमो नैव साधनम् ॥ ९५ ॥

नाग्निप्रवेशनन्तस्य मन्त्रपूजाचरणोदकम् ।

नियमाश्च न तस्यास्ति क्षेत्रपीठे च सेवनैः ॥ ९६ ॥

न क्रिया नार्चनाकार्यैर्न तीर्थानि व्रतानि च ।

निरालम्बपदं शान्तं तथातीतं निरञ्जनम् ॥ ९७ ॥

सर्वज्ञपरिपूर्णञ्च स्वभावेन विलक्ष्यते ।

कार्यकारणनिर्मुक्तमचिन्तितञ्च अनामयम् ॥ ९८ ॥

मायातीतं निरालम्बं व्यापकं सर्वतोमुखम् ।

स्वदेहे संस्थितं शान्तमकुलवीरं तदुच्यते ॥ ९९ ॥

समस्तमेकदाभूतं द्वैताभावविवर्जितम् ।

अकुलवीरं महद्भूतमस्तिनास्तिविवर्जितम् ॥ १०० ॥

(p. 103)

मनोबुद्धिचित्तस्तचित्ता नैव स्वचेतना (?) ।

न कालकलना चैव न शक्तिश्च न चेन्द्रियः ॥ १०१ ॥

न भूते गृह्यते सो हि न दुःखं सुखमेव च ।

न रसोऽधिरसश्चैव कृतकं नैव कारकम् ॥ १०२ ॥

न च्छाया नातपो वह्निर्न च शीतोष्णवेदना ।

न दिनं रात्रिमित्युक्तमुदयास्तमनवर्जितम् ॥ १०३ ॥

न मनो दृश्यते तत्र नोर्द्धमध्यं च ज्ञायते ।

अक्षोभ्यमचलं शान्तमीदृशं तत्त्वनिर्णयम् ॥ १०४ ॥

यादृशेन तु भावेन पुरुषो भावयेत् सदा ।

तादृशं फलमाप्नोति नात्र कार्यविचारणात् ॥ १०५ ॥

एवञ्च कुलसद्भावमवाच्यं परमामृतम् ।

अगम्यं गम्यते कस्माद् भ्रान्तिज्ञानविमोहिताः ॥ १०६ ॥

न दूरे निकटे चैव प्रत्यक्षं न परोक्षता ।

न भरितो न रिक्तो वा निपुणो नापि चाधिकः ॥ १०७ ॥

एतत् पक्षविनिर्मुक्तो हेतुदृष्टान्तवर्जितः ।

कृतकैर्मोहिता मूढाः कर्मकाण्डरतास्तु ये ॥ १०८ ॥

न तेषां मुक्तिः संसारे नरके योनिसंकुले ।

अकुलवीरं महद्भूतं यदा पश्यति सर्वगम् ॥ १०९ ॥

सबाह्याभ्यन्तरैकत्वं सर्वत्रैव व्यवस्थित(म्) ।

निस्तरङ्गं निराभासं पदच्छेदविवर्जितम् ॥ ११० ॥

सर्वावयवनिर्मुक्तं निर्विकारञ्च निर्मलम् ।

अदृश्यं निर्गुणं नित्यं निर्णिरोधञ्च निश्चलम् ॥ १११ ॥

(p. 104)

न ध्यानं धारणा नैव न स्थानं वर्णमेव च ।

न रेचकं पूरकञ्चैव नरोद्घातञ्च (?) कुम्भकम् ॥ ११२ ॥

न चान्तमादिमध्यस्थं न सतो वृद्धिरेव च ।

ग्राह्यग्राहकनिर्मुक्तग्रन्थातीतञ्च यद्भवेत् ॥ ११३ ॥

एतैः सर्वैर्विनिर्मुक्तं हेतुदृष्टान्तवर्जितम् ।

सबाह्याभ्यन्तरैकत्वं सर्वत्रैव व्यवस्थितम् ॥ ११४ ॥

समरसानन्दरूपेण एकाकारं चराचरे ।

ये च ज्ञातं स्वदेहस्थमकुलवीरं महद्भूतम् ॥ ११५ ॥

यस्या (?) वशं स्थितः कश्चित् समरसं रससंस्थितम् ।

स ब्रह्मा स हरिश्चैव स रुद्रश्चै(वे)श्वरस्तथा ॥ ११६ ॥

स शिवः शाश्वतो देवः स च सोमार्कशङ्करः ।

स विशाख्यो मयूराक्षो अर्हन्तो बुधमेव च ॥ ११७ ॥

स्वयं देवि स्वयं देवः स्वयं शिष्यः स्वयं गुरुः ।

स्वयं ध्यानं स्वयं ध्याता स्वयं सर्वेश्वरो गुरुः ॥ ११८ ॥

सर्वज्ञः सर्वमासृत्य सर्वतो हितलक्षणः ।

सर्वयोगिनी तत्रस्था सर्वे सिद्धाश्च तत्र वै ॥ ११९ ॥

सर्वं सर्वार्थकं चैव सर्वज्ञानश्च तत्र वै ।

यथासौ महार्थञ्च अकुलवीरमिति स्मृतम् ॥ १२० ॥

शब्दः स्पर्शो रसो रूपं गन्धो वद्याणिपम च (?) ।
सर्वे भीराश्च (?) तत्रैव ये प्रलीनाः प्रलयं गताः ॥ १२१ ॥
नाधारे ध्येयलक्ष्ये च न नादगोचरे परे ।
न हृदि नाभिकण्ठे वा वक्रे घण्टिकरन्ध्रयोः ॥ १२२ ॥

(p. 105)

न इडा पिङ्गला चैव सुष्मणा च गमागमैः ।
न नाभिचक्रे कण्ठे च न शिरे बिन्दुके तथा ॥ १२३ ॥
चक्षुकर्णोन्मीलनं नैवं नासिकाग्रनिरीक्षणे ।
न पूरके कुम्भके चैव रेचके च तथा पुनः ॥ १२४ ॥
न बिन्दुभेदग्रन्थौ च ललाटे न च चन्द्रमाः ।
प्रवेशे निर्गमे चैव शिखा ऊद्र्ध्वे न बिन्दुके ॥ १२५ ॥
न करैर्न सरैर्मुद्रैः नाकाशे वायुमण्डले ।
न चापे चन्द्रसूर्ये च भावाभावे समागमे ॥ १२६ ॥
अनौपम्यं निरालम्बं पक्षापक्षविवर्जितम् ।
अज्ञानमलग्रस्तात्मा महामायाविमोहिताः ॥ १२७ ॥
शास्त्रार्थेन विमुढात्मा मोहिता विदुषो जनाः ।
न विदन्ति पदं शान्तं कैवल्यं निष्क्रियं गुरुम् ॥ १२८ ॥
संख्यादयश्च ये केचित् न्यायवैशेषिकास्तथा ।
बौद्धारहन्ताश्च ये केचित् सोमसिद्धान्तदक्षिणाः ॥ १२९ ॥
मीमांसा पञ्चरात्रञ्च वामदक्षिणकौलिकाः ।

इतिहासपुराणानि भूततत्त्वञ्च गारुडम् ॥ १३० ॥

एते चैव समाः सर्वे केचित् वा(ऽपि) क्रियान्विताः ।

विकल्पसिद्धिदाः सर्वे तद्विदुर्न च पण्डिताः ॥ १३१ ॥

विकल्पबहुलाः सर्वे मिथ्यावादनिरर्थकाः ।

न ते मुच्यन्ति संसारे अकुलवीरविवर्जिताः ॥ १३२ ॥

यानि कानि च स्थानानि गिरिर्नगरसागरम् ।

सर्वत्र संस्थितं नित्यं स्थावरे जङ्गमेषु च ॥ १३३ ॥

(p. 106)

पञ्चभूतात्मकं सर्वे यत् किञ्चित् सचराचरम् ।

शिवाद्यदेवपर्यन्तं सर्वं तत्रैव संस्थितम् ॥ १३४ ॥

ईदृशं योगिनं दृष्ट्वा उपसर्पन्ति ये नराः ।

गन्धैः पुष्पैश्च धूपैश्च खानपानादिभक्षणैः ॥ १३५ ॥

तर्पयन्ति च ये भक्तास्त्रिविधैश्चैवान्तरात्मना ।

तेऽपि बन्धैः प्रमुच्यन्ति मुक्तिमार्गी न (?) काङ्क्षिणः ॥ १३६ ॥

ब्रह्मेन्द्रविष्णुरुद्रञ्च अरहन्ता बुद्धमेव च ।

विषाख्यो मयूराक्ष (?) ये च ऋषयस्तपोधनाः ॥ १३७ ॥

देवादिभ्यो नरेन्द्राश्च ये चान्ये मोक्षकाङ्क्षिणः ।

ते (सर्वे) मोक्षमिच्छन्ति अकुलवीरन्तु मोक्षदम् ॥ १३८ ॥

अथान्यं संप्रवक्ष्यामि भिन्नावस्थां स्वभावगः ।

पूर्वं यदुक्ता सर्वे अन्वयमार्गे त्वकौलिके (?) ॥ १३९ ॥

* * * * * * * * * * * * * * * * * |

* * * * * * * * * * * नात्र संशयः।

परमामृतसन्तृप्ताः सहजानन्दं च केवलम्॥ १४०॥

न जरास्तेषां न मृत्युश्च न शोको दुःखमेव च।

सर्वव्याधिहरश्चैव न पुनर्भवसंभवः॥ १४१॥

अकुलवीरं स्थितं दिव्यं सिद्धनाथप्रसादतः।

सर्वतः सर्वदा शुद्धः सर्वतः सर्वदा प्रभुः॥ १४२॥

इति मच्छेन्द्रपादावतारिते कामरूपिस्थाने योगिनी प्रसादाल्लब्ध(म्) अकुलवीरं समाप्तम्॥

ओं नमो महाभैरवाय ॥

कालानलाद् व्योमकलावसानं

ग्रस्तं यया संङ्करकालस्त्रग्रं

तस्थौं? तदा तेजमयीमवस्थां

तां नौमि नित्यं महतीं स्वरूपां ।

नमस्यामि चतुःपीठपीठ देव्यां कुलेश्वरं ।

सिद्धः पादासु योगिन्यो गुरुपंक्तिक्रमेन तु ॥

शाकिन्यः सर्वयोगिन्यो क्षयं वद विप्रराट् ।

पूर्वाधार्याश्च ये केचित् प्रणिपत्यावतारयेत् ॥

कुलं च कुलभद्रं च कुलाचारं कुलक्रमं ।

युज्यं युजाभिघातञ्च वदिष्यामि यथार्थतः ॥

रूपातीतं च रूपं च पदं पिण्डमनुक्रमात् ।
सिद्धाम्नायक्रमाज्जातं दिव्यं दिव्यन्नियवितं? ॥

यत् तदाढ्यं परगत्वं? निराभासं निरामयं ।
उपलब्धिस्वभावन्तु सुपचारेण शीत?यति ॥

तस्येच्छा निर्गता शक्तिश्चिद्रूपा तु कुलालया ।
तद्धर्मधर्मिणी सा तु अग्राश्चागुणं? चित्परा ॥

तत्वभासास्करन्ती च रिजुरेख च कुण्डली ।
गिरोरौद्रीमधो ज्येष्ठा मध्ये चैव तु अम्बिका ।

१ब्)

अतो नादं विनिःक्रान्तं निरुद्धं विश्वरूपिणं ।
पंचबिन्दुकृताटोपं पंचचण्डैरधिष्ठितं ॥

पीताश्वेतं तथा रक्तं कृष्णं वै धूम्रमेव च ।

पंचवर्णात्मकं देवं पृथिव्यादिषु संस्थितं ॥

तेजोभूतस्य मध्यस्थं काच्छाशक्तिप्रबोधकं ।
तद्गतं? गतैजा माया ज्ञानाख्या बिन्दुमालिनी ॥

क्रियाख्या मातृका जाता *? दिस्थांत?मनुक्रमात् ।
बिन्दुद्वयसामयोगादष्टधा संप्रकीर्तिता ॥

कुण्डलाख्या पराशक्तिरवर्णा वर्णातां गतां ।
सृष्टिरूपा तु सा ज्ञेया सृजन्ती तत्वसंख्यया ॥

स्कणेन जनिता सृष्टिवर्णकोटिरनेकधा ।
पंचासद्वर्णसंयोगात् सानि परिकीर्तिता ॥

कुर्वन्ती कर्मसंघातामश्वरीन्तनुमाश्रिता ।?
अवर्गे तु शिरस्तस्य करवर्गा द्विहस्तयोः ॥

* *? पादो समाख्यातो भैरव स महात्मनः ।
उभौ कुक्षौ पृष्ठवशौ? रात्रो? हृदि यथाक्रमं ॥

त्वचं रक्तं तथा मान्सं स्नायुं चैव यवर्गजं ।

२अ)

अस्थिमेदं च शुक्रञ्च प्राणं शषसहादिकं ।

क्ष?कारं क्रोधमुद्दिष्टं प्रज्वलन्तं महद्भुतं ॥

अकुलात् कुलमुत्पन्नं सर्वज्ञं सांभवं क्रमं ।

कुलाष्टकविभागेन अष्टाष्टकमनेकधा ॥

विद्या मन्त्राश्च मुद्राश्च मण्डलाश्च वधा परा ।

अत्रोत्पनानि सर्वाणि जग स्थावरजंगमं ॥

अघोरः परमोघोरः घोररूपस्तदाननः ।

भीमो वै भीषणश्चैव वमन पिवनस्तथा ॥

कुलसिद्धास्तु विदुषो सर्वतन्त्रावतारकाः ।

तैस्त्वंवतारिता ये तु तेषां संख्या न विद्यते ॥

आनन्दश्चावलिश्चैव प्रभुर्योगिस्तथैव च ।
अतीतश्चैव पादश्च षट् प्रकाराः कुलस्थिताः ॥

संज्ञाभेदेन मन्तव्याः स्वमार्गे चावलिक्रमं ।
स्थानभेदाश्रमं चैव गोत्रसन्तानमेव च ॥

गुरुपंक्तिक्रमोघं च ज्ञातव्यं सस्फुतं कुले ।

योगपीठे क्रमोदयो नाम प्रथमः पटलः ॥

देव्यादनन्तरं वक्ष्ये दिव्यादिव्यमनुक्रमात् ।
ज्ञातव्यं सिद्धिकामैस्तु मा * *? पश्चिमाद्भुतं ॥

या सा शक्ति कुकाराख्या अघोरस्यानुवर्तिनी ।
तेषावतारितं दिव्यं माम्नायं चतुराश्रयं ॥?

* * * * * * * * * * * *
* * * *? ।
* * * * * * * * * * * *
* * * *? ॥

* * * * * * * * * *? गेंषु

प्रतिष्ठितं ।

दक्षिणो जालसंज्ञन्तु उत्ति आणन्तु पश्चिमे ॥

दशमे * * * * * * * * * * *

* *?
* * * * * * * * * * * *

* * * *? ॥

* * * * * * * * * * * *

* * * *? ।

विमलं प्रथम? भेदं सर्वज्ञं च द्वितीयकं ॥

तृतीयं योग नामं च सिद्धसंज्ञां चतुर्थकं ।?

पंचमं समयञ्चैव * * * * * * *

*? ॥

* * * * * * * *? विद्यापीठस्य कीर्तितं

।

भेदोद्भेदाधिकारं च तस्येच्छा?संप्रवतते ॥

विमलं कामयाख्यातं सर्वज्ञं दक्षिणं तथा ।
* * * * * * * * * * * *
*? महेन्द्रके ॥

३अ)

कोंकणे समया चैव अधिकार पदेस्थिता ।
एवं भेदोपभेदानि गृहसंज्ञावलिस्तथा ॥

युगानुरूप भावेन अधिकार क्रमागतं ।
शिलाशेखरमध्यस्था कुदांवानामविश्रुता? ॥

गुहावासी? महासिद्धः सिद्धं यस्य कुलात्मकं ।
मन्थानं कौलिकं भेदं तत्र देव्यां विनिर्गता ॥

सामगानाम चतुष्कं तु कौमारमहतां गता ।
ज्ञातव्या गुरुवक्रान्तु कौमारे तु महाम्बिका ॥

सामगो लोकच्छेदं? च कौमारं च महांविका ।
कौमार शिखराशीनं देवदेवं जगद्गुरं ॥

तत्र स्थित्वा तु देवेन पंचसिद्धावतारिता।
श्रीकंठ शंकरोनन्त सादाख्या विमलो महान्॥

* * * * * * * * * * * *?
न विद्यते।
कुलपंचविभागेन आयानं पृथिवी तले॥

समजखिषु संज्ञेन परात् परतरागतं।
षट्प्रकारगतं शुद्धं सिद्धं सिद्धावतारितं॥

अधिकारगतानान्तु स्थानसंज्ञा भवन्ति हि।
गुहाश्च त्रीणि विज्ञेया अष्टौ ते मठिको तु सा॥

गृहां चत्वारि संज्ञा च सैवाधिकरणे महान्।
कौमारे तु गुहा श्रेष्टा नितंचार द्वितीयका॥

कदम्बानामविख्याता गुहात्रेशाक्यविश्रुता।
पंचवर्षसहस्राणि क्रीडानंदेकलालसं॥

तत्र सिद्धसमुत्पन्नो ओंकारो नामविश्रुतं।

ऊर्द्धरेतादुराधर्षः सिद्धयोगेन्द्रपूजितः॥

आलासमठिकां सुष्क?म् तथा पालासपालके।

वलोहके पुनश्चासौ कल्पश्चानंतु? संस्थितः॥

संखिकामठसंज्ञन्तु चंद्रद्वीप च विश्रुता।

उत्तरे कामरूपस्य स्वतमियामाठाश्रमं॥

महेन्द्रे राजपर्णिस्तु मठिकां राज्यसंज्ञकां।

त्रिकुटे चन्द्रपूर्वाञ्च मठिकाश्रममुत्तमं॥

गृहं चंद्रपुरं प्रोक्तं * *? गिर्या द्वितीयकं।

कुलालाख्या तृतीयन्तु उडि? आणं चतुर्थकं॥

गृहे भेदक्रमाम्नायमाज्ञासिद्धं क्रमोदयं।

४अ)

अभिषिक्तास्तु ये तत्र मुक्ता सर्वत्वसंख्यया।

दीपदर्पणपुष्पेण तोयेन परिसिञ्चिताः ॥

कवोह्लादेन तृप्तास्तु योजनानां गमैरपि ।

दर्शनात् स्यनाच्चैव संत्राषाह्लादनादपि ॥

संक्रमेत महाज्ञानं भवबन्धविमोचकं ।

प्रभुणा भावरूपेण सृष्टं ज्ञानमनेकधा ॥

प्रत्यक्षमत्रनिहितमाज्ञासिद्धं महोदयं ।

योगिनीसिद्धसंदोहं मन्त्रपीठविनिर्गतं ॥

निर्णयसर्वसंक्षेपादाज्ञासमयगोचरे ।

योगपीठे क्रमोदयो नाम द्वितीयः पटलः ॥

अथ आज्ञाविभूत्यर्थं मंत्राणां संग्रहं परं ।

योगपीठस्य मध्यस्थं देव्या प्रश्नं पुरोद्भवान्? ॥

एतत् सर्वविदित्वा तु निर्मलाश्च व्रवीहि मे ।

गुप्तमेतत् सदा कार्य कुशलैः कुलदेहिकैः ॥

एकान्ते विजने रम्ये गृहमध्ये गुहातुरे ।
पुष्पप्रकरसंकीर्णे गन्धधूपानुमादिते ॥

आचार्यप्रमुखं शिष्यः एकचित्ताव्यवस्थितः ।

४ब्)

उद्धरेत परापानि कालिकीं कुल * * *? ।
* *? सुतप संश्लिष्टां दीर्घबिन्दुरलंकृतां ॥

योगपीठेमिदं प्रोक्तं हृदयं कौलिकापरं ।
अस्थिर *? समायुक्तं वामे वाहुं? प्रदीपितं ॥

अर्द्धद्धासुतसंयुक्तं योगदं लक्षणान्वितं ।
रक्तप्राणं तथा मेड्रं? वामविन्दन्तु लक्षणं ॥

मोक्षदं भोगदं चैव वाग्विधानायकेवलं ।
वामकुक्षिञ्च रक्तं च द्विजे च हृदयेन तु ॥

खगशी हृदयं प्रोक्तं वाचासिद्धि प्रवर्तकं ।

प्राणं शुक्र तथा रक्तं अधरोर्द्धं स वा गतं ॥

पञ्चाक्षर मयीं सिद्धां सुरासुर सुदुर्लभं ।

कर्णात्कर्णगतां देवी आम्नाये सिद्धसंततौ ॥

चतुःपीठसमायुक्ता सिद्ध् वृन्द?समन्वितां ।

बालकौमारवृद्धस्थां ज्ञातव्यां वरदायिका ॥ १ ॥

वज्र सिद्धेश्वरी नाम विद्यामन्त्रसमुद्धरेत् ।

प्रेत्यद्भुतां? महारौद्रां विश्वसंहारकारिणी ॥

५अ)

योगपीठसमादौ च वाग्विधानमतः परं ।

प्राणं विसर्गसंदुद्धं हरकर्णे स बिन्दुकं ॥

खगसं च पुनः कुक्षिं पूर्वोक्ता केवला तु सा ।

दक्षपादादि संक्रोधं विसर्गेन समन्वितं ॥

वज्रसिद्धेश्वरी नाम सप्ताक्षरसमन्विता ।
सर्वग्वं सिद्धिसंताने सिद्धामातासुरक्षिता ॥ २ ॥

अथ विश्वा प्रवक्षामि ज्वालामालिनि विश्रुतां ।
योगिनी हृदयोक्ष?मारक्षितव्या प्रयत्नतः ॥

वाग्विधानं पुरोद्धृत्य शोणितं च चतुर्गुणः ।
प्राणं वै वामकर्णे तु हृदयेन समन्वितं ॥

कुक्षियात गतं पूर्वं रक्षणीय कुलान्वये ।
योगिनी सिद्धसद्भावमत्यन्त परमं भवेत् ॥ ३ ॥

प्राणं शुक्रं खगेसं च एकीकृत्वा प्रयत्नतः ।
कुलाकुल पदं ह्येतत् हृदय योगिनी कुले ॥

परापर विभागं च पीठस्थं पीठसंयुतं ।
योगदं भोगदं चैव खेचरी पदमुत्तमं ॥ ४ ॥

ओंकारपीठमध्यस्थां एकवक्त्रां चतुर्भुजां ।

५ब्)

सर्वावयवसंपूर्णां हारकेयूरशोभितां ।

जटामुकुटशोभाढ्यं? * * * * *?

धारिणीं ॥

रक्तवर्णानि तं वाद्या योवनोद् भिन्नलालसां ।

प्रसन्नवदनां सौम्यंमिद चित्रा? तु लोचनां ॥

नानारत्नविचित्रांगीं कर्णकुण्डलभूषितां ।

काषद्वसितमानान्तु भग्नपुष्टि महद्भुतां ॥

संखहस्तां महासौम्यां खड्गपाशकपालधृक् ।

दिव्य क्रमस्य मध्यस्थां योगिनी महती स्थितां ॥

एवं विधान्तु तां देवी महावृन्दसमन्विताम् ।

कुपूर्णा च कुकामा च कुजाला च तृतीयका ॥

शंखरामरहस्ताश्च त्रिनेत्रीं यौवनोद्धतां ।
एवंत्यं परमां देव्यां शृंगाटपुरमध्यगां ॥

पूजयेत् परया भक्त्या पुष्पगन्धानुलेपनैः ।
खण्डखाद्यादितः पाशैर्लड्डुकाशोक वर्तिभिः ॥

मत्स्यमान्सा स वै देव्यैः पूजयेत् परमेश्वरी ।
जालपीठे पदस्थान्तु नीलमेघांजन प्रभां ॥

षड्भुजा ह्येकवक्त्रां तु शुक्लकेशं दिगम्बरा ।

६अ)

हारकेयूरशोभाढ्यां वलकुण्डलमण्डितां ।
नृत्यमानां महाभीमां मदिरानन्दविह्वलां ॥

कांची कलापशोभाढ्यां नूपुरैर्घुर्घुरान्वितां ।
संवर्तमिव गर्जन्ती ज्वाला चर्चितविग्रहां ॥

असिसूलधरा भीमा पाशकट्टारिकोद्यतां ।

महामटकहस्तौ द्वौ कण्ठ पादोद् वृतौ महान ॥

चर्चमानां तथा चावा? पिवन्ती शोणितोङ्सरं ।
एवं विधा महादेवी चक्रग्रीवामधामुखीं ॥

स्वष्टदेवाद्धृतां? सातां क्रीडमाना वलोत्कटां ।
चर्चा? चैव तु चामुण्डा स्त्रक्ष्याघोरीनामुखी तथा ॥

रैवती? रेच? पूर्णा च लक्ष्मी काली प्रकीर्तिताः ।
मुक्तकेसा स्वदिग्वासा पी * * * * * * *? ॥

महासवशिरोग्रस्ता कटारिकोद्यतविग्रहा ।
* * * * * * * * * * * * *?
थवा पि वा ॥

क्षुरिकशूलपृष्ठे तु पंक्तिभूतां यजेतु तं ।
सुगन्धि कुसुमैर्दिव्यैः प्रापणैर्विविधैस्तथा ॥

लेह्य चोष्यादिभिर्भक्षैः * *? नानाविधैः शुभैः ।
पूजयेत् परमां देव्यां गुरुपंक्ति क्रमेण तु ॥

६ब्)

अचिरादुपलम्बेत? पराव्याप्तिरखण्डिता ।
अनन्तरं पूर्णपीठे वज्रसिद्धेश्वरी मता ॥

रूपक्रमे स्थिता देव्या एकवक्त्रा चतुर्भुजां ।
सूर्यकोटिप्रतीकाशा प्रलयानलसंयुता ॥

योगिन्यष्टसमोपेता अष्टपत्रोपरिस्थिता ।
सूलासिव्यग्रहस्ता तु मटके तु कपालधृक् ॥

नितम्बाम्बाढ्या महानम्रा यौवनोन्मत्तलालसा ।
हारकेयूरशोभाढ्या मुकुटोज्वलविग्रहा ॥

रत्नकोटिकृताटोपा नेत्रत्रितयशोभिता ।
क्षयानलप्रतीकाशा ज्योतिरूपा महाद्युति ॥

अखण्डमण्डलाकारा नित्यानन्दैक निर्भरा ।

मंगला चर्चिका नाम योगश्वर्या तृतीयका ॥

हरसिद्धिसुभट्टार किलकिलार तथापरा ।
कलारात्री भीषणा च देव्या या वरणे स्थिता ॥

वटुकं गुरुपंक्तिञ्च विघ्नेशं पूजयेत् क्रमात् ।
नैवेद्यदीपपुष्पैस्तु अलिफल्गु सुगन्धिभिः ॥

पूजयेत् परया भक्त्या पूर्णपीठे स्थिता महान् ।

७अ)

सिद्धयोगेश्वरी नाम कामरूपे स्थिता महान् ।
रूपातीतातितति योगेन स्वरूपेण प्रकाशिता ॥

द्विभुजाचैक वक्रे च नेत्र त्रितय शोभिता ।
सोमार्का कर्णपुरे तु महामुकुटशोभिता ॥

विश्वक्षारविलिप्ताङ्गी दिग्वासा यौवनोद्वहा ।
हारनूपुरकेयूरै महामेखलमण्डिता ॥

वैदुर्यपादुकारुढा दिव्यसिंहासने स्थिता।
आज्ञानन्द * * * *? माविसन्ती जगत्त्रयं॥

रक्ताकराला चण्डाक्षी महोच्छुक्ष्मा प्रकीर्तिता।
दिव्यरूप धराः सर्वास्चतुष्टेवं कुलाकुलं॥

व्यापि भूतं जयेत् सर्वं सर्वसंवृतवृत्तिना।
तत्वग्राममये यन्त्र एकीकृत्वा विलाप एत॥

गुरुरागो गुरुर्देव्यं गुरुः कर्मम्विनाशयेत्।
गुरुरूपेण मन्तव्या पराव्याप्ति सदोदिता॥

एवं ज्ञात्वा यजेद् देवी गन्धधूपश्रगादिभिः।
पूर्वोक्तैर्भक्षमानैश्च प्रणिपत्यक्षमापयेत्॥

ध्यानं पश्चात् प्रयुंजीत यथाशास्त्र प्रचोदितं।

७ब्)

सुद्धस्फटिकसंकासं वज्रद्वार गतो महान्।
मण्डपञ्चाति दीप्तञ्च चतुस्तम्भं सुशोभितं॥

ध्वजापताकरचितं चन्द्रकोटिसमप्रभं।
तन्मध्यसंस्थितां देवीं चतुर्भिः परिवारितां॥

नास्तितावगतात्मा च इदमस्ति विचिन्तयेत्।
अब्दार्थे नाब्दमेकेन सिद्धः स्वच्छन्दतां व्रजेत्॥

योगिनी सिद्धसद्भावं ज्ञात्वा शिष्यै प्रकाशयेत्।

योगपीठे क्रमोदयो नाम तृतीयः पटलः॥

शक्त्यानन्दसमाविष्टा देव्याप्रष्टः सुरेश्वरः।
षोढन्यासविधानन्तु प्रवक्ष्ये शृणु भैरवि॥

पूर्वोक्त स्थान स्तम्भे तु पुष्पप्रकरशोभितं।
अलिफल्गु समायुक्तं गन्धधूपसमन्वितं॥

अलिंनामण्डलं कृत्वा हस्त्रमात्रप्रमानतः।
वामोर्द्धे दक्षिणं हस्तं वामावर्तेन भ्रामयेत्॥

व्यापकं शब्दमुच्चार्य सद्ये? पुष्पं प्रदापयेत्।
मेखला त्रिगुणं कृत्वा मण्डलोपरिमण्डलं॥

८अ)

आज्ञारूप उच्चार्य अग्रै पुष्पं प्रदापयेत्।
समयाम्यस्त देहस्तु षोडान्यासेन यन्त्रितः॥

अनन्तमण्डलं मध्ये ऊर्द्धमहन्तमण्डलं।
यदा व्याप्ति मण्डले दक्षे अग्रे चाखण्डमण्डले॥

शून्यमण्डलकं वामे पंचैते परिकीर्तिताः।
ततोर्द्धे षोडशान्याहु मेखलोपरिपूजयेत्॥

घटमण्डलके नाम तथा चाक्षयमण्डलं।
प्रभामण्डलकं चान्यंत् सूर्यमण्डलमेव च॥

मण्डलानां चतुष्कदं दक्षादौपंक्तिरूपकं ।
स्वेतपुष्पैः समभ्यर्च्य एकैकं तु अक्रमात् ॥

सोममण्डलमुच्चार्य अग्निमण्डलमेव च ।
पंचरत्नति नामेन महावोमेति मण्डलं ॥

चतुष्कदं पुनस्त्वग्रे पीतपुष्पैः प्रपूजयेत् ।
तृधाकौलिक नामेन पंचतत्वेति मण्डलं ॥

तृशून्यमण्डलं चैव आत्ममण्डलमेव च ।
पूजयेद् वाममार्गैरक्तपुष्पैः सुशोभनैः ॥

विद्यामण्डलमुच्चार्य तथा विजयमण्डलं ।

८ब्)

भुवनालोक्यनामेन सिद्धः योगेशिमण्डलं ।
ऊर्द्धे वै पङ्क्तिभूतास्तु कृष्णपुष्पैस्तु पूजयेत् ॥

अष्टवर्गा न्यसेत् तत्र पूर्वादीशानकावधिं ।

मध्ये वै गुरवस्तत्र नवात्मानेन लक्षयेत् ॥

वटुकं चैव विघ्नेशं मण्डलद्वानि पूजयेत् ।
गन्धधूपादि दीपैश्च नैवेद्यादि यथाक्रमं ॥

कृतांजलि पुटो भूत्वा सर्वकर्मं निवेदयेत् ।
प्रार्थयेच्च ततोनाथं किन्तु देवा * *? दद ॥

त्वदीयपादभक्तोस्मि संसारे विरतात्मनः ।
दयाकुरु स्वमे नाथा त्वन्यादशरणागत ॥

अधिकार पदस्थोहं तवाज्ञामनुवर्तकः ।
क्रमं चैव तु शिष्याणां कथिस्यामि तवाज्ञया ॥

प्रवेशयेत् ततशिष्यं सुभक्तदं भवजितं ।
प्रणामं तत्र कर्तव्यं त्रिविधैनातुरात्मना ॥

उद्धरेत् मन्त्रग्रामन्तु यथाशास्त्र उदाहृतं ।
यमयरलवशयसफलंक्षः ॥

एते द्वादशवर्णास्तु उष्टार्द्धे? तु भूसिताः।
बिन्दुनादयुताव कृत्वा इकारादौ नियोजिता॥

९अ)

न्यस्तव्या क्रमसो ज्ञात्वा विलोमेनोपदेशतः।
गुदमेढ्रसनाडिश्च वक्रप्राणौ च तथैव च॥

चक्षुकण्ठ न्यसेप्येवं भ्रूमध्ये तु ललाटयो।
न्यस्तव्यास्तु क्रमेणैव संहारणोपदेशतः॥

सृष्टिमार्गैं पुनर्न्यस्त्वा यथोदिष्टावदाम्यहं।
षष्ठबिन्दु युता सर्वे या दिक्षा तु मनुक्रमात्॥

सृष्टिक्रमेण मन्तव्याः स विसर्गे न दायितां।
तप्ताद्यालोहपिण्डस्तु हतस्फुलिंगसंकुला॥

स्थाने स्थाने प्रदीप्यन्ता मन्त्रोच्चारेण संयुताः।
न्यस्तव्या क्रमयोगेन संहारं सृष्टिपूर्वकं॥

सकृन्न्यासे कृते देहे ब्रह्महत्यां व्यपोहति।
मोक्षप्रत्ययसंवित्ति आत्मन्यस्य परस्य च॥

जीवो जाति यथा देहे ऊर्द्ध्वेनोत्क्रमेनं भवेत्।
सद्यो निर्वाणमिच्छन्ति विरक्तस्य च आत्मनि॥

रोगसोकभयत्रस्तो व्याधिदुःखैस्तु पीडितः।
तस्य कुर्याद् विधि ह्येषा स न्यस्तं पूर्वमात्मनि॥

९ब्)

मन्त्रयागं क्रियाकर्मं सुकृतं दुःकृतं त्यजेत्।
सर्वभावोपपन्नस्य मोक्षमार्गसमुच्छ्रकः॥

तस्य भूता विधे ह्येषा अन्यथा पापकृन्मनः।
पूजयेत् तादिशं कंतु विलोमेनोपदेशतः॥

गुरुपूजा क्रमेणैव वीरभोज्यादनन्तरं।
न्यस्था षोडशवाराणि आत्मनस्य परस्य वा॥

संहारसृष्टियोगेन स्वात्म देहे नियोजयेत् ।
संहारसाध्य देहे तु सृष्टिन्यास परित्यजेत् ॥

मन्त्रोच्चारपदेनैव यथोदिष्टं वदाम्यहं ।

ओं हंसपरं ब्रह्मणे सदाशिवं व्रजविलय प्रमुच्च त्रिपिण्डपिण्ड त्यज
पिण्डपिण्डे त्रिमूर्ति मूर्ति त्यज मूर्ति मूर्ते त्रिकोशकोश त्यज कोश कोश ।
तृपक्षपक्षत्यज पक्षपक्षम्वास्वतं व्रजनित्यं व्रज
महासिद्धयोगेश्वरी सत्येन सर सर निसर निसर प्रणामप्राप्ते तद्यथा
घम घम मस्त्रां? ।

एवमुच्चारयेद् यावत् कंपते देहपंजरं ।

१०अ)

तृसप्तोच्चारणात् सम्यक् सुद्धिभिघ्याति तत्क्षणात् ।
जीवोजाति परस्तेषां व्यापकत्वं न संशयः ॥

सुशिवो व्यापको भूत्वा सत्यमेतत् कुलान्वये ।

आत्मपुष्टिनिमित्यर्थं मृत्युंजयति धावतः ॥

जयेत् सहस्त्रमेकन्तु ध्यानयुक्तसमाहितः ।
क्षीरोदार्ण्णव मध्यस्थं सितपद्ममुदाहृतं ॥

तत्रारूढं स्वमात्मानं विशेदकुलसाग
निग्रहो तादृशेन तु पद्मेन उपरिष्टेन घट्टितं ।

प्लावयेत तदात्मानं सिच्यमानन्तु विप्रुषैः ।
अनेन ध्यानमात्रेण सद्यः कालं व्यपोहति ॥

प्रणवन्तु समुद्धृत्य काष्ट चैव स बिन्दुकं ।
षष्ठस्वरसमारूढं षांतं तन्तु विसर्गजं ॥

जीवस्य रक्षणार्थन्तु एतत् सर्वं प्रकीर्तितं ।
अन्यथा कुरुते यस्तु समुत्योपरिभूयते ॥

इति क्रमोदये चतुर्थः पटलः ॥

अथोत्संगगतां देवी समयाख्या कुलेश्वरि ।
पदबीजसमायुक्तां यथामुक्तावदाम्यहं ॥

मातावीरावलीनां तु पीठेशीं पीठवन्दितां ।
सर्वमन्त्रात्मिकां देवीं समयाख्यां कुलेश्वरि ॥

नमो भगवत्यै समुच्चार्य षडक्षर पदं भवेत् ।
खगेशेन सदादार कुब्जिकायै समुद्धरेत् ॥

पञ्चाक्षरं भवदेतत पदं चैव द्वितीयकं ।
पुनः प्राणं त्रिधा कृत्वा आसमवह्नि दापयेत् ॥

द्विचतुर्थसमायुक्तं चतुर्दशशोपरिस्थितं ।
बिन्दुसंभिन्नमूर्द्धन्तु त्र्यक्षरन्तु तृतीयकं ॥

पञ्चवर्गान्ति मावर्णाः पञ्चमेकादशे युतं ।
पञ्चाक्षर पदं ह्येतच्चतुर्थपरिकीर्तितं ॥

अघोरामुखि पंचमेकं पदं पञ्चाक्षरं भवेत् ।

च्छां च्छीं च पदमुच्चार्य षष्ठं युग्माक्षरं भवेत् ॥

किणि किणीति शब्देन चतुरक्षरसप्तमं ।
विच्चे त्यष्टमवां? प्रोक्षं पदभेद क्रमेण तु ॥

कौलभाशोदिते यच्च? द्वातृशाक्षरमालिकां ।
मोषनीया? प्रयत्नेन दष्टानां भक्तिवर्जितां ॥

११अ)

कार्य वापि अकार्ये च उक्तानुक्तेषु वस्तुसु ।
समयाख्यां जपेद् यस्तु तस्य पापं न विद्यते ॥

यः प * * सुद्धभावात्मा समयाख्यां कुलेश्वरीं ।
जयन्तस्य न तद्वस्तु यन्न सिध्यति भूतले ॥

एषा राजेश्वरी देवी योनिरूपा महाम्बिका ।
चतुःपीठेषु सामान्या अत्र सर्वप्रतिष्ठितं ॥

राजेश्वरी परामात्य समयाचारनिर्गता ।

निराचारपदस्थेन सिद्धयन गुरुवक्रगा ॥

कमलाख्या महादूती हृदिस्था संप्रवर्तते ।
कुलदीपाशिरस्तस्या षद्विधाध्वविशोधिका ॥

वर्चराख्याशिखा देव्या तृतत्वोर्द्धे व्यवस्थिता ।
च्छादयन्ती समतान्तु वहुरूपासुवर्मना ॥

वृद्धानाम भवेन् नेत्रं तेजोदेदीप्यवर्चसं ।
अस्त्रं वै कोङ्कणे सान्या षडश्रं पिङ्गलोचनं ॥

षट्पत्रं स्वासनाशीनं देव्यावृन्दं महावल ।
उत्तरं षट्कनामेन देव्या संज्ञाः प्रकीर्तिताः ॥

११ब्)

प्रथमपदसमायुक्तं हृदिकमलायै हृदिं न्यसेत् ।
कुलदीपायी शिरशे खगसादौ समायुतं ॥

सप्तायुमं भवेदस्तं कोंकणेसारसंयुतं ।

तृतीयं पदमादौ तु चर्चराख्या शिखा भवेत्॥

चतुःपञ्चसमायुक्तं कवचं तु वहुरूपया।
षट्पदन्तु भवेन् नेत्रं वृद्धा नामेन संयुतं॥

सप्तायुगं? भवेदस्तं कोंकणेशानसंयुतं।
एवं निष्पन्न देहस्तु व्यक्तत्वं भजने तु सः॥

सिद्धक्रमक्रमायातं गुरुवक्त्रा तु संस्थितः।
ज्ञातव्यं निश्चितं ह्येतत् पश्चिमाम्नाय सन्ततौ॥

एतत् कौलिक भासाया मुदितन्तु स प्रत्ययं।
सस्फुटगुरुवक्त्रस्थं विकोणस्थं? न सिद्ध्यति॥

कौलिकोयं? समाख्यातः सिद्धमार्गः सुदुर्लभः।
गोपनीयं प्रयत्नेन कर्णाकर्णान्तसंचरेत्॥

परापरं तु यद्वक्त्रं पदं षष्ठन्तु विन्यसेत्।
पंचमन्तु पदं देव्या ऊर्द्ध्ववक्त्रं प्रकीर्तितं॥

१२अ)

चतुष्कं चतुभिर्योज्यं पूर्वादौ पश्चिमावधिं।
एषाराज्येश्वरा देवी निसृतासिद्धसन्ततौ॥

सकलस्था तु सोच्चारा असेसार्थविशोधिका।
यान्त्यते नैव देहेन खेचरत्वं तदाग्निता॥

अक्षराक्षरसंतानं योजयेल्लक्षसंख्यया।
वीरेशगुण तुल्या मोहर्ता कर्ता क्रमत्युद्ध? ॥

अथ सामान्य रूपेण तदाभूचरतां व्रजेत्।
कुपितः पातये च्छैलां शोषयेज्जलधीश्वरान्॥

स्थाप्ये च्छैल वृक्षांश्च दारयेद्धरणी तलं।
भूचरीणां पतित्वं च क्षड? कर्मोपजीविनां॥

कुरुते विविधाश्चर्यं पक्षकन्याश्च कर्षयेत्।
एकवीराविधानेन तन्नास्तियं न साधयेत्॥

यत्र तिष्ठत्यशौदेशे तत्र विघ्नः पलायते ।
देव्या हृदिसमुद्भूतं पंचरत्नं विराजते ॥

योगिनीनां वलं सर्वं सारभूतं विनिर्गतं ।
ललाटवक्त्रकण्ठे तु गुह्यां घोरत्न पञ्चकं ॥

१२ब्)

रक्षणीयं प्रयत्नेन देव्या भण्डारमुत्तमं ।
शसपथ न समुद्धृत्य पार्थिवेनान्तरी कृतं ॥

षष्ठबिन्दु युता सर्वे दीपितास्तु पृथक् पृथक् ।
चिन्तामनीति नामेन चिन्तितार्थ फलप्रदा ॥ १ ॥

वागेश्वरेण स दीप्ता अमुतेन तु रोधिता ।
विज्ञेया भुक्तिमुक्तिस्तु मोक्षलक्ष्मी न संशयः ॥ २ ॥

खगगेन तु ते रुद्धा आदिमध्यानुदीपिताः ।
समयाख्या भवेद् देवी गुह्यकौलिकमुत्तमं ॥

चतुष्कलेन सुदीप्ता फडन्तेन तु रोदिता ।
अमरिका नाम विख्याता योगिन्या फट् मेलके ॥

देव्या पदन्तु चतुर्थन्तु उर्द्धतं यदनु नामिकां ।
तेन युक्तास्तु कर्तव्या रत्नाश्चैव पृथक् पृथक् ॥

साकिणी मेलके सर्वाः फण?नाकर्षयेन् महान् ।
यस्य यस्य तु या व्याप्ति दर्शयत्यखिलं महत् ॥

रत्नप्रभा च मतुल देव्यातेज समुद्भवं ।
गोपनीयं प्रयत्नेन अन्यशास्त्ररतेसु च ॥

नवात्मान मयं सर्व क्रमशुद्धि क्रमेण तु ।

१३अ)

एकोच्चारगतं सर्वं लक्षितव्यं गुरो मुखात् ।
येन येन यथा प्राप्तं मण्डलेसं कुलेश्वरं ॥

तेन तेन तथा पूज्यं नाम पादा तु संयुतं।
प्राणं रक्षं तंथा क्रोधं मलम्नायुस्तथैव च॥

वायुवित्तयुतं षयं? कुलसं संप्रकीर्तितं।
नवात्मकोषमुच्चार्य महाभैरव रूपिणे॥

वीरेश्वरायेति पुनः संज्ञा पादा तु संप्रतं।
मण्डलान्तरमध्यस्थं कुलचक्रसमन्वितं॥

पुज्यं वै तत्र देवेश गुरुरूपमहेश्वरं।
सारभूतमिदं तत्र स प्रकास्यं प्रकासितं॥

यथेष्टचेष्टपाने च वक्तव्यन्तु कदाचन।
नाडेरधः स्थितं दिव्यं षडारं चक्रमुत्तमं॥

तन्मध्यसंस्थितामातां देव्याषट्कसमन्विता।
षट्वक्रां महातेजां दशधाङ्कां महावलां॥

कपालमालाभरणं वेर्वरोर्द्ध शिरोरुहां।

कपालखट्वाङ्गधरां दशवाहु महायुधां ॥

इषत्कराल वदनांस्तथाक्षी विरलद्विजा ।
महाप्रेतसमारूढां मदिरानन्दविह्वलां ॥

१३ब्)

इन्द्रनीलप्रतीकाशां यौवनोन्मत्तलालसां ।
नितम्बाढयां सुरूपांश्च हारनूपुरशोभितां ॥

पिवन्ती मदिरां दिव्यां कपालकरभूसितं ।
डमरुं वीरघंटां च शूलखट्वाङ्गधारिणीं ॥

पाशाङ्कुशधरां देवीं अम्बस्तत्र वरप्रदां ।
देव्यारूपधराः सर्वाः षडते योगमातरः ॥

षट्पत्र आसनासीना कर्णिकोपरिसंस्थितं ।
देव्योत्संगमतं देवता *? रूपं विभावयेत् ॥

पूजये दिव्य पुष्पैस्तु सुगन्धैर्द्धुप अक्षतैः ।

नैवेद्यैर्गन्धधूपैश्च भक्षलेह्यसुरासवैः ॥

पूजयेत् परया भक्त्या गुरुपंक्ति क्रमे स्थितां ।
योगिनी गुह्यसद्भावं स गोप्यं गुह्यमुत्तमं ॥

शोषनीयं प्रयत्नेन यदीच्छेच्चिरजीवितं ।
अन्यथा यस्तु जन्येत स पशुन्नात्रसंशयः ॥

कुलेस्याङ्ग संपन्नं चण्डासुं चण्डरूपिणं ।
संवर्तानलसंकाशं सूर्यकोटिसमप्रभं ॥

१४अ)

घोरघोरतरं रौद्रं चण्डरूपं भयानकं ।
देव्याङ्गङ्गसमुत्पन्नं महान्तं सिद्धसंततौ ॥

पूर्वकल्पसमुद्दिष्टं सिद्धयोगीश्वरी मते ।
अधुनासर्वसंवृत्तं अत्र किञ्चिदुदाहृतं ॥

ऐं ह्रां ह्रीं ह्रौं प्रस्फुर २ घोर घोरतरतनु रूप चट चट प्रचट

प्रचट कह हव मव मघातय घातय हूं हूं हूं फट् फट् फट् ठ
ठ ।

पञ्चासाक्षरमुदिष्टं विश्वसंहारकारिकं ।
महाविघ्नप्रसमनं सदा विजयवर्द्धनं ॥

दीक्षानिर्वानकादीनि स कृत्स्नं स्मरणाद् भवेत् ।
सप्तोच्चार कृते सम्यक् वर्जन्या स फलं लभेत् ॥

असुद्धं शोधयेत् सर्वं यस्येदं हृदिसंस्थितं ।
सर्वभावविनिर्मुक्तः सिद्धभावं स गच्छती ॥

सप्तलक्ष कृते जाप्ये तन्नास्ति यन्न साधयेत् ।
कम्पन्ति भुवनात् सर्वा न त्रैलोक्यासुरडामरं ॥

क्षुम्बन्ति सप्तपाताला अप्सरो दैत्य कन्यकाः ।
पुस्पं मुञ्चन्ति वै तस्य साधु साधु वदन्ति च ॥

१४ब्)

धन्यस्थन्तु महावीर सिद्धिं गृह्णश्च? चोत्तमां ।
एवं मुक्ता तु ते सर्व करे गृह्णन्ति साधकं ॥

प्रविशन्ति पुरं दिव्यं स्वकं स्थानं मरीचयः ।
तत्र भक्त्वा महाभागा न लीयते परमं पदं ॥

इति योगपीठे क्रमोदयो नाम पञ्चमः पटलः ॥

मातृणां हृदयानन्दं श्लोक द्वादशकं भवेत् ।
गुरुवक्त्रोपदेशन ज्ञात्वा सिद्ध्यति नान्यथा ॥

वागीश्वरं पुरोद्धृत्य वर्ण वै योनिजं तथा ।
प्राणं विसर्गसंरुद्धं द्विधा भूतन्तु कारयेत् ॥

चतुष्कलं खगसं च क्रोधविसर्गसंयुतं ।
अनेन क्रमयोगेन भिन्ना तु कुल पद्धति ॥

अजा चक्रेश्वरी रेखा द्वितीयाकादितशितगा ।
यादिसान्ता तृतीया तु निर्वीह क्रमयोजितां ॥

गोपणीयं प्रयत्नेन मातृणां वचनं यथा ।
एतस्मिन् पठिते सिद्धिः क्षुन्यन्ते मातरः सदा ॥

आज्ञावेशः प्रजाये तु कविर्भवन्ति नान्यथा ।?

१५अ)

आज्ञा वेधात्मिका सिद्धिः पठितेस्मिन् प्रवर्तते ॥

क्षिद्यन्ति योनयः सर्वा क्षुन्यन्तीति न संशयः ।
द्वादशानि तु श्लोका?नि कर्णात्कर्णन्तु संचरेत् ॥

अन्यथा विखते यस्तु स महापातकी भवेत् ।?
गुरुद्रोहं कृतं तेन अचिचीनरकं व्रजेत् ॥

तस्मात् सर्वप्रयत्नेन लेखकेनैव लेखयेत् ।
षोढाश्लोकास्तथाप्यस्तुं कुलविद्या कुल क्रमात् ॥

दिषट्कं क्रमेणैव ज्ञात्वासिद्धयति नान्यथा ।
तादिषट्कविभागं च वदिष्यामि तयाधुने ॥

येन विज्ञात मात्रेण? निग्रहानुग्रहक्षमः ।

भरलक सहयोथैतं चक्रं परय चित्त युताग्र सर्वे तद्भाविताः
षष्ठकृतासनेन । षडक्षरैः षट्क निवेशनर ।

एतच्चक्र महाचक्र निग्रहानुग्रहेश्वरं ।
योगिनीनां पदं सर्वं रक्षणार्थं कुलान्वये ॥

आदिवर्णं द्विधा कृत्वा द्विषष्ठ न नियोजितौ ।
बिन्दु युक्तास्तुते सर्वे संज्ञाया पदान्त योजितांः ॥

१५ब्)

षट्पुत्र आसनासीना पूजिता सिद्धसंततौ ।
षोडान्यास कृते सम्यक् अन्यथा च विलोमकृत् ॥

स्वादिस्थाने स्थितं दिव्यं चक्रं किंजल्क शोभितं ।
दाडिमी कुसुमप्रक्षं जवाहिङ्गुलुकोपमं ॥

तादृग्रूपेण तादेव्य षडारे चक्रसंस्थिताः ।
पिवन्ती रुधिरौ घारि कपालकरभूसितांः ॥

तन्मध्य स्थित?मात्मान भैरवाकाररूपिणं ।
एवन्ताः परमादेव्यः पूजिता ध्यायितासती ॥

ददन्ति इप्सितान् कामान् कर्मसिद्धिं च स्वाश्वतीं ।
मूलविद्याविभागं च वदिस्यामि स प्रत्ययं ॥

गुरुवक्रोपदेशेन योगिना वक्रसस्थितां ।
साकिनीनान्तु मानैया हिडिम्बामति निर्गतां ॥

गोपितव्या प्रयत्नेन योगिनीनान्तु सम्मता ।
योगपीठन्तु वागीसं प्राणं पञ्चमबिन्दुकं ॥

खगेशासननिर्मुक्तं मस्तकेन विवर्जितं ।
उद्धरेत् क्रमयोगेन पतिता दक्षिणा कटिः ॥

१६अ)

कूटषट्कं समुद्धृत्य डरलकसहयोथितं ।
चतुर्थं त्रिगुणं कृत्वा चतुष्कल फडन्वितं ॥

सप्ताक्षरा समादेवी निवृता शाकिनी मतां ।
तस्मिं भूतेसु विस्तीर्णा अत्र किञ्चिदुदाहृतां ॥

इन्द्रनील निभा देवी छादयन्तीमिवाश्वरां ।
विश्वव्याप्तमिदं सर्वम्वत्तयात्मा? दारितं नभः ॥

भुजैर्द्वादशकोपेता एकवक्त्रां त्रिलोचनां ।
वर्वरोर्द्ध सिरोपेतां मुण्डमालाविभूषितां ॥

कपालमालाभरणां अस्थिमेखलशोभितां ।
महोदयं कृतौ कर्णौ महाप्रेत कृतासरां ॥

पिबन्तीममृतं दिव्यं कपारकलभूषितां ।
वामाङ्गुल्या तु वक्त्रस्थां दंष्ट्रा कुरु च भास्वरां ॥

सूलखट्वाङ्गधारिण्यां मुण्डकट्टारिकोद्यतां ।

घंटाडमरु शब्देन क्षोभितं भुवनोदरं ॥

सूर्यम्बामकरे देव्यापरेशत फणः फणिः ।
लेलिहानो परे खड्ग साधके वरदायिनी ॥

षड्योगिनी कुलान्तस्थां नरचर्मावगुण्ठितां ।

१६ब्)

पशुप्राणहरीं देवीं *व? ग्रन्थि निकृन्तनीं ।
तारणी साधकानन्तु विज्ञानकरणी परां ॥

एवं विधा महादेवी ध्यातव्या साधकैस्सदा ।
ददाति इप्सिता क्वामान योगिनी संघमेलकं ॥

स्मसाने पर्वते वापि गृहमध्ये गुहान्तरे ।
यत्र कुत्र स्थिरो वापि कन्दरी घातवर्जिनि ॥

महापल मयी कृत्वा गुटिकां पञ्चभि युतां ।
मुखे कृत्वा भुजपुष्पा? लक्षमेकं समादितः ॥

क्षुम्बन्ति षट्क योगिन्यो विद्याशब्दविमोहिता ।
दर्शयेत् स्वात्मिकां व्याप्ति इत्याज्ञा पारमेश्वरीं ॥

निग्रहन्तु विशेषेण वदिस्यामि यथार्थतः ।
डादिसंज्ञाविलोमेन विलोमेनोपदेशतः ॥

ऐं ह्वीं श्रीं हां हीं हूं कुसुममालिनां ये इदं प्रधान धातुं
शुक्रं शुक्र २ देवदत्तस्य आणिमारि सर्वसत्रूणां वसंकरी स्वाहा ॥ १ ॥

ऐं ह्वीं श्रीं यां यीं यूं यक्षिणी ये जंभय जंभय सर्वशत्रूणां
देवदतानां अस्थिभंजय २ आणिमारिवसी कुरु २ स्वाहा ॥ २ ॥

१७अ)

ऐं ह्वीं श्रीं सां सीं सूं संखिनीये संखग्रहेन स्नायुं *
*? २ सर्वशत्रूणां देवदतानां आणिमारिवशी कुरु २ स्वाहा ॥ ३ ॥

ऐं ह्वीं श्रीं कां कीं कूं कारिणीये कायं मान्सं गृह्न २ मेदं
शत्रूणां देवदत्तानां आणिमारि वसी कुरु २ स्वाहा ॥ ४ ॥

ऐं ह्रीं शीं लां लीं लूं लाकिनीये सर्वशत्रूणां देवदत्तानां
आणिमारिवशी कुरु २ मान्सं भक्ष स्वाहा ॥ ५॥

ऐं ह्रीं श्रीं रां रीं रूं राकिणीये आणिमारिवीसी कुरु २ सर्वशत्रूणां
देवदत्तानां रक्तधातुं गृह्ण २ साधय २ स्वाहा ॥ ६ ॥

ऐं ह्रीं श्रीं डां डीं डुं डाकिणीये सर्वशत्रूणां देवदत्तानां
अणिमारि वशी कुरु २ त्वच धातुं गृह्ण २ स्वाहा ॥ ७ ॥

शतं शतं जपित्वा तु एकैकायाः समर्पयेत् ।
गृह्णं त्वेदं मयादत्तं अत्राज्ञा पारमेश्वरी ॥

१७ब्)

एषदुष्टादुरात्मा च द्वेष्टारो मम नित्यसः ।
गृह्णन्तु देवताः क्षिप्रं मयादत्तं महापशुं ॥

आष्टयदि प्रसास्त्रि प्रमाणं यदि चान्वयं तेन सत्येन गृह्ण तु
मयादत्तं मरीचयः ॥

ततो गृह्नन्तिता देव्यः शीघ्रसंहारयन्तितं ।
सप्तमेहनिसंप्राप्ते मयते नात्र संशयः ॥

ब्रह्मणालिप्यमात्मानं सोढान्यासमुपन्तितं ।
ध्यानं पश्चात् प्रयुञ्जीत भैरवाकाररूपिणं ॥

भैरवोहमिति स्मृत्वा ततः कर्मसमारभेत् ।
रक्तेन मण्डलं कृत्वा कृष्णेच्छाशाद् भवेन तु ॥

महास्थि चूर्णसंगृह्य आलिखेच्चक्रमुत्तमं ।
षट्प्रकारं सुसंपूर्णं वक्रलांच्छनलांच्छितं ॥

एवं कृत्वा विधिः सम्यक् ततो देव्यः समर्चयेत् ।
कृष्णवर्णा महारौद्राः दंष्ट्राकुचभासुरा ॥

यौवनोन्मादसंयुक्ता मुक्तकेशादि शम्बराः ।
एवं ध्यात्वा ददेदर्घं सोणिते गन्धमक्षतैः ॥

१८अ)

स्वागतन्तु ततः कृत्वा आसनं तत्र दापयेत्।
पश्चाद्विष्टरमादाय पञ्चासुभ? समन्वितं॥

पुष्पं धूपं तथा गन्धं नैवेद्यादि पवित्रकैः।
महातैलेन दीयन्तु कृष्णवर्ति सुशोभितं॥

ध्यात्वा साध्यं ततस्त्वग्रै उत्तानं प्रेतरूपिणं।
पतितं चक्र मध्ये तु मुक्तकेशदिगम्बरं॥

सप्तसप्तजपित्वा तु एकैकस्य निवेदयेत्।
गृह्ण गृह्णेति साचार्य हस्त चक्रा ग्रहालयेत्॥

संहरेत् तत्क्षणार्द्धेन इत्याज्ञा पारमेश्वरी।
साकिनीनां मते पूर्व कीर्तितं विधिविस्तरं॥

पाशपीठे तु संवृत्य सारभूतं सुनिश्चितं।
गोपनीयं प्रयत्नेन अन्यशास्तरतस्य च॥

आज्ञाश्रवणशिष्ये तु दातव्यं कृत निश्चये ।

इति योगपीठे क्रमोदयो नाम षष्ठः पटलः ॥

पूजाव्याप्ति क्रमेणैव क्रमशुद्धि क्रमागतं ।
षट्प्रकारगतं शुद्धं प्रव्रवीमि यथोदितं ॥

चतुष्कं पंचकं चैव षट्कं चतुष्कपंचकं ।

१८ब्)

चतुष्कं तु पुनस्तत्र षट्प्रकारं प्रकीर्तितं ।
पिंडं पदं तथा रूपं रूपातीतं चतुष्टयं ॥

पिण्डं कुण्डलिनी शक्तिः नाभिमेढ्रातुरे स्थिता ।
उड?हेमप्रतीकाशा तप्ताय स समप्रभा ॥

त्रिपर्वा च त्रिमात्रस्था त्रिधाशक्तिस्तु शोज्वला ।
उडि-आणं तु तं पीठं पीठेसी सहसंयुतं ॥

पूजनीयं प्रयत्नेन मन्त्रोच्चारसमन्वितं ।
पदस्था परमा शक्तिश्चारस्थाचाररूपिणी ॥

चरते शिव पर्यन्तं शक्तिमार्गा वलम्बिणी ।
मायाजाल पदस्थं च द्विमात्रा सहसंस्थितं ॥

अष्टपत्रं समान्तस्थं पीठं तज्जालकेश्वं ।
पीठेसी संस्थिता घोरा मोहयन्ती चराचरं ॥

सूर्यायुतप्रतीकाशा ज्योतिरूपां महाद्युति ।
पीठं वै पीठ माता च हृत्प्रदेशे व्यवस्थिता ॥

पूजनीया प्रयत्नेन सत्वे विघ्ननिवृत्तये ।
रूपस्थं पूर्णपीठन्तु सूर्यकोटि समप्रभं ॥

सत रुद्र समाकारमति दीप्तं सुभासुरं ।
विद्याचारसमायुक्तं योगिनी रूपसंस्थितं ॥

व्याप्तिभूतं जयेत् सर्वं पीठम्वै पारमेश्वरं।

रूपातीतं महाव्याप्तिर्यां पंचार्थं प्रसूयिका॥

कृत्वोपलब्धि मात्रं तु शांभवीय पदान्तरे।

किञ्चिद्वेत्ति नवावेत्ति निमेसोन्मेसस्पन्दनं॥

इच्छास्वरूपमं नन्दं कामरूपं प्रकीर्तितं।

तत् स्वरूपा भवभवं दिच्छा पीठेशी तु महावला॥

भक्षयन्ती कलासर्वां कामरूपां कलेश्वरीं।

एतच्चतुष्कमाख्यातं पंचकं कथयामि ते॥

नित्यानन्द करं सर्वं भवावन्धविमोचकं।

विद्या तत्व समुत्पन्नं पञ्चकं तु विभक्ष्यते॥

शक्तिरात्मा तथाहंसो वायुर्ष्णैजः? प्रकीर्तितः।

एतत् तत् पंचकं प्रोक्तं विमलादि स लक्षणं॥

सुद्धव्योमायुजाजाता तारका उल्क सन्निभा।

विमलाख्यं समुत्पन्नं संगिनी शक्तिरव्यया ॥

तस्येच्छामनुवर्तिन्यो आत्मतत्व व्यवस्थिता ।
वुभुजे विषयात् सर्वान् स्पन्दने देहमध्यगा ॥

सुखदुःसमंयन्ति भावाभाव विकल्पते ।

१९ब्)

सर्वभूतान्तरस्था तु सर्वज्ञा तु पुलिन्दिका ।
हन्सहन्सा वदेन् नित्यं देहस्थावरजंगमे ॥

वरते देहमध्ये तु जगत् स्थावरजंगमं ।
सर्वगासर्वमूर्तिस्था सर्वज्ञं गुणसंयुता ॥

नदते नादरूपेण यागसंज्ञेति सावरी ।
प्राणोपानसमानस्था उदानव्यानसंयुता ॥

दशनाडी कृता धारा सिद्धसंज्ञेति चम्पका ।
गोधामुखसमाकारा वडवाभमनीन्द्रियं ॥

तडिद् विद्युत् समाभासं लम्बन्तं वह्नि सन्निभं ।

द्रावयेत् पाशया * *? पदपिण्डान्तरे स्थिता ॥

समयाचार भेदेन जगद् योनि महाम्बिका ।

पञ्चकन्तु समाख्यातं दिव्यंदिव्यैर्न्न शोधितं ॥

यद् चक्रस्य विभागन्तु वदिस्यामि यथोदितं ।

आधारं प्रथमं चक्रं स्वाधिष्ठानं द्वितीयकं ॥

तृतीयं मतिपूरं तु नादरूपं चतुर्थकं ।

विशुद्धं पञ्चमं प्रोक्तं आज्ञारूपं तु पञ्चमं ॥

षट्प्रकार क्रमं ज्ञात्वा कोनसिद्ध्यति लीलया ।

मुलाधारं चतुस्थानं द्रुतहेमसमप्रभं ॥

२०अ)

भ्रमन्तं चक्रवेगेन लक्षितव्यं गुरोर्मुखात् ।

स्वाधिष्ठानं महारत्नं षडारं चक्रमुत्तमं ॥

दाडिमी कुसुमप्रक्षं द्योतयन्तं दिशोदश ।
दशवायु समोपेतं दशनाडिसमन्वितं ॥

कुन्देन्दु तु हि नाडा संपूरयन्तं महद्भुतं ।
यथा मठीमनाः सूत्रै एकत्र ग्रथितं महान् ॥

तथा ते सर्व तत्वानि दृश्यते मणिपूरके ।
द्वादशारं महातेजं द्वादशादित्यवर्चसं ॥

परं ब्रह्मणि शब्दाख्यं हृदिस्थन्तु अनाहतं ।
पूर्णचन्द्रसमाकारं कलैः षोडशभिर्वृतं ॥

एवन्तु ममृतं दिव्यं विसुद्धं शुद्धतेजसं ।
शिवस्य परिपूर्णस्य तस्येच्छासंप्रवर्तने ॥

अदृष्टविग्रहात् शातात् तदाज्ञा पारमेश्वरी ।
षट्प्रकारसमुद्दिष्टं रहस्यं गुह्यमुत्तमं ॥

गोपितव्यं महागुह्यं अकथ्य चान्यशासने ।
चतुष्कन्तु पुनर्वीक्ष्य मोक्षमार्गसुनिश्चितं ॥

अनेन ज्ञातमात्रेण भवबन्धे प्रमुच्यते ।
या सा देव्या फलाकारा चक्षुरग्रे व्यवस्थिता ॥

२०ब्)

समन्ता सर्वतो भद्रा दृश्यते गगनान्तरे ।
ब्रह्मरन्ध्र गता व्योम्नि गृहच्छिद्रान्तररश्मिभिः ॥

तद्रूपेण दानेन्यवं? प्रत्यक्षं संप्रवर्तते ।
सूर्यविम्बनिभाकारं कूटस्थाने व्यवस्थितं ॥

तीव्रोग्रगक्षिवेदेन? वेधितो व्याप्ति दायकं ।
जले वुद्बुदसंकाशं वज्रद्वारे व्यवस्थितं ॥

क्षीरधारा युतं दृष्ट्वा अचिराद् व्याप्ति दायकं ।
एतद् देव्या चतुष्कन्तु सामाशानावकीर्तितं ॥

अज्ञात्वा वन्धमुद्दिष्टं ज्ञात्वा मुच्यति मोचति ।
शब्दस्पर्शरसोपेतं गन्धश्चैव तु पंचमं ॥

पंचतन्मात्रमादेव्यः समजखसुसंज्ञका ।
पूर्वं चतुष्कं यत्प्रोक्तं पीठेसी पीठसंयुतं ॥

सिद्धपादक्रमेणैव गुरुंपङ्क्त्यावशानगं ।
एवं विधिविधानेन दिव्योघक्रमसन्ततिः ॥

सस्फुटं गुरु वक्रस्थं अन्यथा न कदाचन ।
गुरुवश्य प्रशादेन प्राप्यते परमं पदं ॥

अन्यथा नैव जानाति सास्त्रकोटि शतैरपि ।

२१अ)

तस्मात् सर्वप्रयत्नेन गोपयेत विचक्षणः ।
अन्यथा वदते यस्तु स पशु योगिनी कुले ॥

आत्मशिष्येषु भक्तेषु दंतमायाविजिते ।

लोल्यचापल्य निर्मुक्ते सत्यवादि जितेन्द्रियै ॥

दृढभक्ते तु दातव्यं आज्ञा पालन तत्परे ।
निश्चिते निस्पृहे गुप्ते निसर्गे कान्त वासिनैः ॥

न दुष्टे च पले देयं न शठिदूषके तथा ।
कामिने क्रोधिने चैव कपटव्रतधारिणि ॥

न देयं कौलिके सारं यदिच्छेच्चिरजीवितं ।
देव्यायाः सिद्धसद्भावं कथनान्मरणं भवेत् ॥

भक्षन्ति योगिनी तस्य षडेतस्तु महावलाः ।

योगपीठे क्रमोदयो नाम सप्तमं पटलः समाप्तः ॥

इति श्रुत्वा परानन्दं देव्याकृष्णमनोच्छका ।
पतिता दण्डवद्भूमौ शस्तपादान्न संस्थिताः ॥

भगवन्न्यास संस्कारं वक्रमहांसि तत्वतः ।

दीक्षाकर्मविभागन्तु समयांश्च तथा वद ॥

ऊचुस्थेवं पुनः शान्तं कथयामि समासतः ।
पूरोक्ते स्थानके गुप्ते पंचगव्योपलेपिते ॥

२१ब)

सुधूपधूपितं कृत्वा पुष्पप्रकरसंकुले ।
वस्तुना गुण्ठयित्वा तु चण्डोदय सुशोभिते ॥

श्रग्दामालम्बयित्वा तु तोरणं चूतपल्लवैः ।
एवं कृत्वा विधिं सम्यक् ततः कर्मसमारभेत् ॥

शुक्लाम्बर धरा भूत्वा आचार्यसुसमाहितः ।
पञ्चगव्यं ततः प्रास्य अस्त्रमन्त्रेण मन्त्रवित् ॥

अलिनाद्यस्तु मन्त्रेण प्रोक्षयेद् यागमण्डपं ।
सर्वविद्यासमुच्चार्य दिशावन्धन्तु कारयेत् ॥

प्रोक्षयेत् सर्वद्रव्याणि यासार्थैं आगतानि वै ।

न्यासं कृत्वा प्रयत्नेन भैरवाकाररूपिणं ॥

षोडाद्वादशकं सर्वं श्लोकद्वादशमेखला ।
पंचरत्न कृताटोपं तद्गुहा वलिभूषितं ॥

ध्यानं पश्चात् प्रयुञ्जीत प्राणायामसमन्वितं ।
ज्वलन्तं पावकाकारं भश्मीभूतं विचिन्तयेत् ॥

चन्द्रमण्डलमध्यस्थं कलाषोडशभूषितं ।
वर्षन्तं मम्तुतो? पञ्चक्षीरधारैः परप्सरैः? ॥

शुद्धस्फटिकसंकाशं कदम्बगोलका कृतिं ॥ ३ ॥

कृत्वा पात्रस्य संस्कारं सेषाल? द्वौमृतेन तु ।
गण्डसंदक्षिणे नैव पञ्चरत्यैः समालभेत् ॥

गायत्र्या मन्त्रितं कृत्वा स्नानं ते नैव कारयेत् ॥ ३ ॥

२२अ)

रुद्रयन्त्र तदात्मानं निःसृतं दिव्यं रूपिणं ।
सृष्टिरूपं समुत्सृज्य मुद्राबन्धन्तु कारयेत् ॥

समदृक्समकायस्तु मूर्द्ध चक्र व्यवस्थितः ।
रेच्यवायुं प्रत्नेन पुनराकृष्य धारयेत् ॥

आक्रम्यमूलचक्रन्तु संघट्टे कंदमूर्द्धगं ।
ऊर्णतन्तु निभा तत्र कन्दाद्भिन्ना विनिर्गता ॥

भिन्दे ग्रन्थि कपाटानि अर्गलायाश्च संस्थिता ।
बिन्दुमध्या गतादूर्द्धं प्रत्यक्षमुपजायते ॥

विरजा नामविख्याता मुद्रेयं सृष्टिरूपिणी ।
लग्नैग्रन्थि त्रयेणैव विश्वव्याप्तिरखण्डिता ॥

व्याप्तिभूतं जयेत् सर्वं दिव्योघक्रमवद्धतिं ।
नान्यथा हृत्प्रदेशे तु ललाटे ब्रह्मरन्ध्रयोः ॥

वाक्पाणिमक्षिणी कर्णौ विभज्य परमे वहि ।

मध्ये दक्षे तथा वामे अग्रैश्चैव विशुद्धिगं ॥

ओजपूका क्रमेणैव पूजितव्या प्रयत्नतः ।
माप्तसवहु? क्रमेणैव सम्भुमावरणस्थितं ॥

पूजितव्या यथावस्थ कुलाकुल क्रमेण तु ।
ज्ञानषट्कं यथावस्थ स्थाने स्थाने व्यवस्थितः ॥

पूजयेन् मनसा सर्वं दक्षादौ व्याप्ति पूर्वकं ।

२२ब)

आधारं गुदमित्याहु स्वाधिष्ठानन्तु लिङ्गजं ॥

मणिपूरन्तु नाभिस्थं हृदिस्थन्तु अनाहतं ।
विशुद्धि लम्बिकान्तस्था आज्ञाकुट सुकीर्तिता ॥

ललाटे वक्रमध्ये तु भारती शंखिकान्तरे ।
सामामाना क्रमेनैव पूजितव्या यथोदिता ॥

दिव्या तु पंचके स्थाने समजसिसुपूजयेत्।
क्रमि उपचय सिद्धा शृङ्गाटाकृतिमस्तके॥

गुरुपंक्ति ललाटे तु दक्षादौ वामकावधिं।
डरलकसहयन्त्र यच्चक्रं पूर्वमुद्धृतं॥

पूजितव्यं प्रयत्नेन कर्णयै घ्राणवक्त्रयोः।
चिबुके कण्ठ देशे तु भ्रामणी नाभि संस्थिता॥

एतत् क्रम महादिव्यं गुरुवक्रान्तु लम्बने।
ब्रह्मरंध्रे ललाटे तु भ्रूमध्ये कण्ठ वक्त्रयोः॥

हृदिनाभौ तथा लिङ्गं यत्तच्चक्रमुदाहृतं।
ब्रह्माण्याद्या कुलाषुच्च पूजितव्या यथाक्रमं॥

गन्धपुष्पसुगन्धी निम्बात्य? देहं प्रपूजयेत्।
ध्यानं पश्चात् प्रयुञ्जीत निश्चले नान्तरात्मना॥

स्वाधिस्थान पुरान्तस्थं महावृन्दं सदोदितं।

२३अ)

रक्ताम्वरधराः सर्वे मौक्षिकाभरणोज्वला।
द्विरष्टाकृतयः सर्वे पिबन्ति मदिरासवं॥

द्विभुजा एकवक्राश्च हारकुण्डल *? शोभा।
शंखपद्मधरा सर्वे त्रिनेत्रा मदिरालसाः॥

तदावस्था तदात्मानं तेन रूपेण चिन्तयेत्।
देहस्थं जननं कृत्वा वहिस्थं वाह्यतः स्थित परं॥

शोभने योगपीठे तु रक्तवस्त्रेण छादिते।
तस्योपरि समादाय निर्मलं दर्पणं शुभं॥

कर्पूरं मृगनाभिश्च काश्मीरं चन्दनं तथा।
रोचनाध्रं सपुष्पं च कुण्डगोलालिमिश्रितं॥

एकीभूत्वा तु ते सर्व लेपयेद् दर्पणं शुभं।
आलिखेद् योगपीठन्तु नादविन्दुकलान्वितं॥

वर्तुलं तस्य मध्ये तु षट्प्रकारोपरिस्थितं।
सिन्दूरं हिङ्गुलं रक्तं रजस्तत्रैव पातयेत्॥

सुधूपधूपितं कृत्वा आसनं तत्र कल्पयेत्।
न्यस्तव्या मात्रिका तत्र आदिक्षान्तमनुक्रमात्॥

अजारेषा तु या पूर्वा ब्रह्मं तत्राधिदेवता।

२३ब्)

द्वितीया कादितान्तस्थां हन्त्रिस्थित्रापि संस्थितः।
यो दिसा तादृती या च रुद्रस्तत्राधिदैवतं॥

त्रिप्रकारक्रमं प्रोक्तं त्रिमात्रा त्रियथान्वितं।
वन्धयेत् ततो मुद्रां विरजाख्यां सदोदितां॥

पीठमावाहयेत् तत्र एकतत्वे व्यवस्थितः।
महापीठगताः सर्वे कौल भेद क्रमस्तथा॥

देव्याया पंचकं मध्ये मकारादि प्रपूजयेत्।
नादविन्दु कला मूले वह्निस्था वह्निमूलगं॥

ज्ञानषट्कं प्रपूज्येत अङ्गसट्कसमन्वितं।
चतुरस्रे चतुष्कन्तु पूजितव्यं यथाविधिः॥

ऊर्ध्वरेषा तु या तूर्णा तिर्यगा किञ्चिदुन्नता।
समजाख्य? सुनामानि पूजितव्यानि तत्र वै॥

पीठपीठेश्वरी सिद्धा एकोच्चारेण पूजयेत्।
कामाख्यपीठमूले तु गुरुपक्तिं निवेशयेत्॥

आदि षट्कं क्रमेनैव षट्प्रकारे प्रपूजयेत्।
एवंविधे विधानेन क्रमपूजामुदाहृतां॥

कुलाकुलविभागेन कुलाष्टकमिहोच्यते।
प्रयागे तु महाक्षेत्रे आ * *? मकुलसंयुतां॥

२४अ)

वैरींदू? आदिमा पूज्या पूर्वभाग व्यवस्थिता ॥ १ ॥

वाराणस्यां महाक्षेत्रे इलावर्व्वरकान्विता ।
माहेशीकादिना पूज्या आग्नेयी दिशिमाश्रिता ॥ २ ॥

कोल्लगिर्या महाक्षेत्रे ऊहायोगिसमन्वितं ।
कौमारी चादिना पूज्या? दक्षिणां दिशिमाश्रिता ॥ ३ ॥

अट्टहासमहाक्षेत्रे जशासिद्धि? हरान्विता ।
ढादिमा वैष्णवी पूज्या नैरित्यां कोणमाश्रिता ॥ ४ ॥

जयन्त्याञ्च महाक्षेत्रे महाभ *? समन्वितां ।
वाराही तादिना पूज्या वारुण्या दिशिमाश्रिता ॥ ५ ॥

वेदित्रे च महाक्षेत्रे ऐशकिणिकिलान्विता ।
ऐन्द्री च या दिना पूज्या वायव्यां कोणगां स्थितां ॥ ६ ॥

एकाप्रके महाक्षेत्रे कालरात्री शेधका ।
चामुण्डा या दिना पूज्या कौवेरी दिशमाश्रिता ॥ ७ ॥

देवीकोटे महाक्षेत्रे अह्लाक्षा भीषणान्विता ।
लक्ष्मी साद्येन संपूज्य ईशान्यां दिशि भूषणी ॥

२४ब्)

मध्यस्थन्तु कुलीशानं नवात्मानेन लम्बने ।
पूजितव्यं प्रयत्नेन देव्योत्सङ्गगतं प्रभुं ॥

एवं पूजा प्रकर्तव्या देशिकैः साधकैः सदा ।
तदाग्रे मण्डलं कुर्यात् पूर्वोक्तेन विधानवित् ॥

प्रणामं तत्र * *? ति त्रिविधेणादुरात्मना ।
स्तोत्रं पश्चात् प्रकुर्वीत तच्चरु? प्रवदाम्यहं ॥ क ॥

ओं नमस्ते तु निरानन्दे निरालम्बे निराकुले ।
स्वसंवत? करणातीते भावाभावविवर्जिते ॥

* ** * * *? ते चितचिभुयभावके ।
कलाकले ज * *? विश्विरेवमघापहे ॥?

ज्योतिरूपे परे सन्ते नादरूपे निरामये।
बिन्दुमध्य गतै मू *? वालाग्र सतकल्पिते॥

भजरूपे परे व्योमि नानाकारव्यवस्थिते।
मुक्ताफलसमाकारे कुटिले चार्द्धचन्द्रिके॥

तुसारकणिकाभासे द्वादशान्ते व्यवस्थिते।
चन्द्रबिम्ब निभाकारे कलाषोडशभूसिते॥

निर्द्धुमाङ्गारसंकासे कूटस्थाने व्यवस्थिते।
जलबुद्बुदसंकासे क्षीरधान्य परिप्लुते॥

२५अ)

वज्रज्ञानसमारूढे भेदिनी ग्रन्थ मूलगे।
शरं गगनसंकासे व्यापिनी ज्योत्स्न?सन्निभ॥

कदम्बगोलकाकारे कामशक्ति विवोधनी।
पद्मसंपुट मध्यस्थे हकारार्द्ध कलान्विते॥

प्राणापान समानस्थे नाभिसूव्यवस्थिते ।
चरसचाररूपेण धम्माधिसंपुट द्वये ॥

ऊर्णातन्तु निभाकारे ब्रह्मरन्ध्रा तु गामिनि ।
षोडशान्ते परावस्थ शततानन्द पूरिते ॥

क्रमभ्रुषान्तु * * * * *? पीठनिवासिनि ।
वालकौमारवृद्धस्थे कारुण्य कुरुवत्सले ॥

ओंकारपीठमध्यस्थे कुण्डलाकाररूपिणी ।
महायोगि स्वरूपेण द्वादशादित्य वर्चसे ॥

तडिद्वक्ष्य? लूताकारे द्वादशान्ता वलम्बिनि ।
जालपीठान्तरावस्थे पाशजालानिकृन्तनि ॥

त्रिरि?न्दुवलयाकार ज्वालाज्वलनसन्निभे ।
पूर्णेन्दुमथनावस्थे पीठेसी घोररूपिणी ॥

मृगदृष्टांत साकारेक्ष चित् दृश्यमदृश्यत् स ।

कामाख्या वरणे देवि चिद्योममवलंविनि ॥

२५अ)

स्थूलसूक्ष्मविभागेन व्यापिनी स चरे ।
त्वं गतिर्मम देवेशि कारुण्यं कुरु भैरवि ॥

नमस्ते वीरचामुण्डे अपरे पररूपिणि ।
षट्प्रकारविशुद्धात्मे अचले विमले ध्रुवे ॥

महामन्थानसंभूते विभज्यात्मान पञ्चधा ।
पञ्चक्रमविभागेन त्वं च देवि विभज्यसे ॥

विमलाख्ये महामङ्गि सर्वज्ञे च पुलन्दिके ।
यागे च सावरी देवे सिद्धसंज्ञेति चंपके ॥

कुजां? वा समयत्वं हि शडाना वलिपूजिते ।
आधारस्थे चतुस्थाने तप्त हाटकसन्निभे ॥

हृद्याति परमानन्द सृजसे योनि रूपिणि ।

गुह्यस्थाने महारक्ते षट्पत्रोपरिसंस्थिते ॥

वेधनी शिरसावस्थे योनिरूपे महाम्बिके ।
नाडिस्थाने दशावस्थे मर्म्ममेकैक भेदिनि ॥

भ्रमणी भ्रामणी देवेशि रोत्भूते परापरे ।
हृदिस्थ द्वादशावस्थे द्वादशादित्यवर्च्चसे ॥

परशब्दाख्य रूपेण निर्भरानन्दनन्दिते ।

२६अ)

पूर्णचन्द्रनिभाकारे षोडशारे स कर्णिके ।
च्छादयन्ती जगत्सर्वं ज्योतिरूपे निरामये ॥

शिवस्य परिपूर्णस्य तस्येच्छा मन्त्रवर्तिनी ।
अदृष्टविग्रहे वंद्ये आयु रूपे तु निष्कले ॥

नादे घंटिकसंघृष्टे महाग्रन्थि विभेदनि ।
इकाराख्य महामाये संखावर्त्त त्रिनाडिगे ॥

चतुष्कलसमोपेते अथार्थमवलम्बिनि ।
विससे सूर्यमार्गेण जगद्ग्रासैक लम्पटे ॥

भमरे डमले देविरमूर्तिशाकिनि कुले ।
प्रबोधकरणे शान्ते योगिनी शाकिनी महान् ॥

डाकिरक्तेत *? णम्बकर्णनादेथ भैरवि ।
भ्रमणी भ्रामणी देवि कुलषट्कविभूषिते ॥

ब्रह्माणी चैव माहेशी कौमारी वैष्णवी तथा ।
वाराही ऐन्द्रि चामुण्डे योगेसी त्व *? भयप्रदे ॥

भैरवि भैरवाशक्ते अष्टाष्टक परिवृते ।
सिद्धपंक्ति समालब्धे गुरुपंक्ति समन्विते ॥

योगदे भोगदे देवि महाव्याप्ति प्रदायके ।
महेश्वर्य सुसंपूर्णे वरदे सिद्धमम्बिके ॥

२६ब्)

महाभये समुत्पन्ने जलाग्रै व्यालदंष्ट्रिने।
मुच्यते सर्वदुःखै प्रकीर्तनो भुवनस्य सः॥

यः स्मरेत् परया भक्त्या दुःकालं भावितात्मनः।
प्राप्नोति कामिकीं सिद्धिं स्त्रीणां भवति वल्लभः॥

योगपीठे क्रमोदयो नामस्तोत्रं समाप्तं॥

एवं विधिविधानेन पूजां स्तोस्त्रावसानिकीं? ।
समयानस्त्रावये च्छिष्ये यथासास्त्रप्रचोदितान्॥

समता सर्वशास्त्रेषु लिङ्गिनानान्तु सर्वगः।
समता सर्वदेवानां द्रव्यानां तु विशेषतः॥

न निन्दे देवतां कांश्चित प्राणिनो नैव घातयेत्।
दया च सर्वजन्तूनां कामक्रोधन्नकारयेत्॥

न लंघेत् गुरु वाक्यानि सदा ज्येष्ठाति वादयेत्।

एक वृक्षस्मसाने वा चत्वरे मातृ कारयेत्॥

*? पाच सर्वजन्तूनां कामक्रोध न कारयेत्।
वन्सूत्र? चैवे? कुर्व्वित नलज्योतचतुष्टयं॥

रक्ताम्बरधराणारी दृष्टावन्देत नित्यशः।

२७अ)

अपराधशते नैव पुष्पेनापि न ताडयेत्।
अनिवेद्य न भुंजीतम्भरो? वह्नौ शिवागमे॥

कुमार्या च सदा पूज्या वेश्यायाश्च तयोधना।
रेरेकारं न वक्तव्यं हेहेकारं तथैव च॥

सर्वत्र मधुरां वाक्य भैरवव्रतधारिणीं।
गोधामान्सं तथोलूकं खगरीगृध्रमेव च॥

वर्जनीयं प्रयत्नेन एषां मान्सं न भक्षयेत्।
गौरी शब्द न वक्तव्यं कालिकयेति नाचरेत्॥

श्रीपूर्वञ्च नमस्कारं गुरोन्नामसमुच्चरेत्।

खट्वा पादं घरटं च उलूखल्या मुसलं तथा॥

देहली पेषणी सूर्यं वर्द्धनी चूल्लिकांजनी।

एतन न संस्पृशेत् पादो यदीच्छेत प्रियमात्मनि॥

अधस्पृष्टं प्रसादेन तदामन्त्रमनुस्मरेत्।

एवं संस्त्राव्यसमया न शिष्यै भक्ति परायने॥

गन्धधूपं ततो दद्यात् मूलमन्त्राभिमन्त्रितं।

व्यापकोप समुच्चर्य आज्ञारूपाय वै नमः॥

गुर्वाज्ञासंस्मरित्वा तु प्रोक्षयेद् गन्धवारिणा।

योजयेत् कुलार्थन्तु कृत्वा तु दृढलक्षवित्॥

२७ब्)

तेजोरूपै पराशक्तिरन्तर्लीनां तु भावयेत्।

ध्यात्वा विद्युल्लताकारां ज्वालामालिनिमाक्षिपेत्॥

पतत्येवं न संदेहो कार्ष्णीभूतश्च न जायते।
पश्यतेन्दु वनान् सर्वान् क्रमेणैव यथास्थितान्॥

पश्यते देवता सर्वान् विमाननेक कोटिशः।
कायाग्नि शिव पर्यन्तं पश्यते देहमध्यगः॥

प्रबोधो जायते तस्य गात्रं वै धनते महान्।
पश्यंमनेकाश्च रुद्रं रम्रतिमेव च॥?

अतीतानागतं चैव पृष्णोसौ कथयिस्यति।
शक्तिविज्ञानभेदेन अनाख्ये न तु रंजितः॥

परदेह परांशक्तिं नादेनाक्रम्यवेधयेत्।
धुनते कम्पते चैव मुद्रावद्धत्यनेकधा॥

नादं प्रमुञ्चने दीर्घ तीव्रवेधेन वेधितः।
एवं प्रबोध मानस्य पुष्पं हस्ते प्रदापयेत्॥

मुंचाप्यमण्डलस्यार्द्ध पुष्पपातन्तु लक्षयेत्।

यस्मिन् पत्रे पतेत् पुष्पं तं नामं तस्य कारयेत्॥

प्रकटं शिवसंज्ञं तु गुप्तमानन्दमुच्यते।

२८अ)

प्रणामं तत्र कुर्वीत् त्रिविधेनान्तरात्मना।
वहिर्वलिं प्रदातव्या क्षेत्रपालादि योगिनी॥

ओं एहि २ तुरु २ मुरु २ भञ्ज २ गृह्ण २ हर २ सर्वविघ्ना न भैरव रूपेण वलिं गृह्ण २ ओं हूं हूं हे हे क्षः क्षेत्रपालाय ओं डामराय स्वाहा।

क्षेत्रे स वलि निवेदयमन्त्रः ऐं ह्रीं हूं हूं फट् हे हे हेलि २ कह २ हे हे हे ह्रीं सर्वयोगिनीनां वलि गृहं २ स्वाहा॥

इति योगिनी वलि मन्त्रः॥

एवं वलि विधानन्तु कर्तव्यं चुम्बकैः सदा।
पश्चात् सर्वेषु भूतेषु वलिं सर्वत्र दापयेत्॥

आचार्यासाधकाश्चैव पुत्रका समयज्ञकाः ।
पूजयित्वा प्रयत्नेन यथाशक्त्यानुसारतः ॥

पूजयेत् स्वगुरुं तत्र यथाविभवस्तरं ।
दारककणमुद्रांश्च कण्ठी कुण्डलमेव च ॥

मौक्तिका भरणाद्यैश्च वस्त्रवाहनभूषणैः ।
आमाङ्जलकहर्माणि शय्यापट्टादि क्षेत्रकं ॥

२८ब्)

स्वपरिच्छदमात्मानं निवेद्यगुरुपादयोः ।
यथाशक्तानुसारेण वित्तसाठ्यं न कारयेत् ॥

दीपानं संप्रासयेत् पश्चात् सुसन्तान समन्वितः ।
समयज्ञै चरुं दद्यात् न दद्यात् समयवर्जिने ॥

विसर्जयेत् ततो यज्ञं निर्माल्यं चारि? निक्षिपेत् ।
वीरक्रीडा प्रकर्तव्या यागार्थे च सुभा विभुः ॥

पश्चिमे गुरवः स्थाप्य उतरे साधकास्तथा ।
पुत्राः सामायिकाश्चैव पूर्वादि क्रमसः स्थितात् ॥

योगिन्यश्च तथा देवि सुरोद्दक्षिणतस्तथा ।
ततः पूज्य विधानेन गन्धधूपश्रगादिभिः ॥

मदिरानन्दं कर्तव्यं भक्षभोज्यैरनेकधा ।
ततः संपूर्णतां यातिमागदीक्षादि सस्फुरं ॥

योगपीठे क्रमोदयो नाम अष्टमः पटलः ॥

अथातः संप्रवक्ष्यामि क्षेत्रपाला यथास्थिताः ।
पूजिताः पूजयिष्यन्ति ध्वंसयज्ञप्रपूजिताः ॥

पीठद्वीपा तु ये वर्णा लक्षये लिंगमध्यतः ।
व्यापितं? संस्थिता ये च सक्षेत्रपालको भवेत् ॥

संयोगे संस्थिताये च द्वीपं द्वीपसमाहृतं ।
पीठभिन्नं तदाद्यं च पीठ स्वातन्त्र पूजयेत् ॥?

स्थानदेव्यस्तथा कोशं लक्ष?यित्वा विशाकुलं।

२९अ)

यस्मिन् छेत्रे य योनाम स तथैव पूजयेत्।

उन्च्लेर्

३०अ)

हीत्वा ब्रह्मपर्यन्तं क्रीडयस्व यथासुखं।
अथचेन्मातृवृन्दैस्तु सामान्यो योगिनी कुले॥

एवं लब्धा वरं तेन साधकेन महात्मना।
कुलचक्र क्रमे सिद्धः क्रीडते भुवनोत्तमैः॥

साधयेद् यदा वीरो वज्रसिद्धेश्वरी महान्।
जपेतद्द्वादशलक्षाणि एकान्ते सुसमाहितः॥

होमं चैव तु कर्तव्यं पलेननारमाहिये।
गत्वापितृवने घोरे एकाकी च दिगम्बरः॥

सुसन्नद्ध सुचितस्तु जपेन्मंत्रं मुहुर्मुहुः।
कंपते च ततो भूमिं उल्का पातश्च जायते॥

गर्जते च ततस्तीव्रं शिवारावो मुहुर्मुहुः।
रक्तविष्टि भवेत् तत्र दिशादाघश्च जायते॥

एवं दृष्ट्वा तु तान् सर्वान् त्रासं तत्र न कारयेत्।
जपेन्मन्त्रमनुद्विग्नामौनीप्यान परायणः॥

आर्द्धरात्रे तु संप्राप्ते आगच्छेत् खेचरी गणं।
वामाङ्गलोहिते नैव पूरयेदंजलिं महान्॥

जानुभ्यां मवनीस्थित्वा अर्घन्तासां निवेदयेत्।
दन्ते अर्घे तु प्रयच्छंति चरुकं सप्तजन्मिकं॥

तं स्वास्य तत् समः सोहि भैरवाकाररूपिणं॥ ३॥

अथ विद्याप्रशक्तस्तु ज्वाला मालिनि साधने।

स्मसाने विजने रम्ये जपेल्लक्षांश्चतुर्दशः ॥

होमं चैव दशासेन क्षौद्राक्षं नाशसंयुतं ।
होमान्ते पश्यते चक्रं गगनस्थं महद्भुतं ॥

दृष्ट्वाचार्घप्रदातव्यं वामाङ्गा लोहितेन तु ।
निपतन्ति ततो भूम्यां साधुपुत्र वदन्तिताः ॥

ददन्ति ह्ययेप्सितां सिद्धिं साधको यत्समीहते ।
सिद्धयोगीश्वरी नाम साधयेद् यस्तु साधकः ॥

सप्तलक्षकृते जाप्ये सिध्यते कटहोमनात् ।
पूर्वसे वाक्यतेप्येव ततः कर्मसमारभेत् ॥

एकान्ते विजने रम्ये गोमयेनोपलेपिते ।
पुष्पप्रकरसंपूर्णे गन्धधूपसुवासिते ॥

पूर्णमास्यां समारभ्य चन्द्रोदयस्तु निर्मले ।
भाश्वा?धुलितमात्मानं श्रीकण्ठे नाथ चापुनः ॥

ध्यात्वा देव्यास्वरूपं तु चन्द्रमण्डलमध्यतः।

३१अ)

त्रिनेत्रां यौवनोपेतां एकवक्त्राद्विवाहुकं।
चंद्रगर्भगता सुद्धां तदाकृष्य शनैः शनैः॥

स्ववक्रे यावत् संप्राप्तां प्रविसेत् तत्र मध्यतः।
प्रविशत्यमरो भूत्वा शिव भुम्या न संशयः॥

व्रजते खेचरो मार्गो खेचरीणा खगेश्वरः।
एवं ते कथितं सर्वं रहस्यं यागसाधनं॥

गोपितव्यं प्रयत्नेन पश्चिमाम्नायसिद्धिदं।

योगपीठे क्रमोदयो नाम नवमः पटलः॥

एवं श्रुत्वा युताः सर्वे आनन्दभृतयोगिनी।
पतिता दण्डवद्भूमौ सिद्धेसी पादमूलतः॥

ऊचतुः परया भक्त्या देवी सागङ्गं दक्षणा ।
देवदेवसुरेश्रेष्ट योगिनी कुलनायकः ॥

योगिन षट्कलांन्तस्थां विद्यासप्तादशाक्षरां ।
तस्यां साधनकर्माणि कथयस्व प्रशादतः ॥

तत्थाप्य व्रजिताः सर्वे प्रहस्यो वाचवीरराट् ।
कथयाति न सन्देहः कालिके शृणु तत्वतः ॥

३१ब्)

उक्ताया पूर्वगुटिका मुखे कृत्वा तु तां जपेत् ।
निशायाम्ये पितृवने अयुते कं समादितः ॥

ततो हामं प्रकुर्वीत नृमान्से गोपलेन तु ।
पूर्वसे वाक्यते प्येवं कर्मयोग्या तदा भवेत् ॥

मारणोच्चाटनादीनि वश्याकर्षणमोहनं ।
स्तम्भयेत् सर्वसिन्यानि विधिनानेन योजयेत् ॥

पंचारं सप्तपत्रं च षट्पत्रं च तथा लिखेत्।
भुंजे कुंकुम वस्ये तु मोहनेन क्रमादिशेत्॥

रोचना कृष्टिकर्मे तु लिखेत् कर्मानुसारतः।
ऐं मोहेलिक्षिप्तं वस्ये ह्रीं चाकर्षण कर्माणि॥

कर्णिकां साध्यनामन्तु अनेनैव तु संपुटे।
ईकारं त्रिगुणे वश्यं प्लुंकारेण तु रोधितं॥

अग्निमण्डलमध्यस्थं माकर्णाग्नि वेष्टितं।
ह्रींकारं मोहने वैष्ण्य अंकुसेन निरोधयेत्॥

सं चंद्रे चन्दने नैव लिप्तं सित्थक वेष्टितं।

३२अ)

मंत्रभाण्डे तु प्रक्षिप्य त्रिदशान्यपि मोहयेत्।
राजिकालने नैव त्रिकटुकोपरिवेष्टितं॥

सित्थके वेष्टितं ताप्य कर्षयेन्मधुना नृतं ।
कुंकुमं श्रोणितं शुक्रं लेपयेद् यंत्रमुत्तमं ॥

लाक्षलक्तकसंयुक्तं रक्तसूत्रेणवेष्टयेत् ।
क्षोद्राज्य पयसा मध्ये स्थापयेद् दिनसप्तकं ॥

वस्या भवति त्वं राजा नात्रकार्याविचारणात् ।
मारणन्तु यदा कुर्या लिखेच्चक्रंनुकर्माणि ॥

स्मसान कर्पटे वापि उर्णचर्मण्यथापि वा ।
विसेणोन्मत्तकेनैव खरौष्ट्रा रुधिरेण तु ॥

चिताङ्गारसमायुक्तं क्रुद्धरूपेण चालिखेत् ।
विलोमेनोपदेशेन षट्पत्रं पंचसप्तधा ॥

विलोमे नोर्द्धेद्विद्यां ऊर्द्धमूलं यथा भवेत् ।
चकारोदरमध्यस्थं साध्यनामन्तु कर्णिके ॥

अथार्द्ध च वकारं च वर्णपार्श्वे समालिखेत् ।

थकारे च टकारञ्च रेफाश्चैव तृतीयकं ॥

३२ब्)

ईश्वरं बिन्दुसंयुक्तं वेष्टितं यन्त्रमुत्तमं ।
हूंकारेण निरोधस्तु कुम्भसूत्रेणवेष्टयेत् ॥

विसेन राजिकेनैव निम्बचूर्णेन लेपयेत् ।
कपालमध्ये प्रक्षिप्य स्मसाने नाधिरोपयेत् ॥

निसामेकां क्षयेत् तत्र मुक्तकोशादिगम्बरं ।
साध्यनामसमुच्चार्य चोदितव्यं मुहुर्मुहुः ॥

कर वै स्फालयेत् तत्र रुदमानेन संयुतं ।
भक्षयेच्च तदा किञ्चित् साध्यनामसमन्वितं ॥

एवं वै भवते कालं यदि साक्षात् सचीपतिः ।
यकारं कर्णिकामध्ये साध्यनामेनसंयुतं ॥

वृत्ताकारां लिखेद् विद्यां त्रिगुणां ध्वज *?ण्ड *? ।

काकरक्तेनसंलिख्य लेखन्याकाकपक्षया ॥

काककंठे प्रवक्षा तु उच्चाटे तं न संशयः ।
पूर्ववक्रं लिखित्वा तु कंकारं साध्यसंयुतं ॥

निवेश्य कर्णिका मध्ये वज्रलांच्छनलांच्छितं ।
लकाराष्टकसंरुद्धं प्रणयन निरोधितं ॥

३३अ)

हरिद्रा तालके नैव नीलकर्पटके लिखेत् ।
मंटुकान्तरमध्ये तु कण्ठकेन तु वेष्टयेत् ॥

स्तम्भयेत् सर्वसैन्यानि नावादींजलमध्यतः ।
वाचास्तम्भगतिस्तम्भ पाशानो भयपीडिते ॥

एवमन्यानि कर्माणि करोति विविधानि तु ।
लक्षजाप्ये कृते सम्यक् वाचया कुरुते वह्नन् ॥

ध्वजारूढा जयेत् मौनी सहस्रैकं समाहितः ।

उत्तिष्ठति ततः प्रेतं युद्धमानं सुदारुणं ॥

सर्षपान्मन्त्रयित्वा तु ताडयेत् हृदिमध्यतः ।
कनिष्ठाङ्गुलि संपीड्य?सिद्धासिद्धो वदेति च ॥

मर्यादाञ्च ततः कुर्याद् विद्या साक्षिञ्च कारयेत् ।
एवं कुर्याद् विधाने फठेन ध्वजसाधनि ॥

लक्षत्रयजपे नैव नास्तितद्यन्न साधयेत् ।
क्षोभयेद् योगिनी सर्वाः या स्थिता भुवनोदरे ॥

स्वकीयां दर्शयेद् व्याप्तिमित्याज्ञा पारमेश्वरी ।

इति योगपीठे क्रमोदयो नाम दशमः पटलः ॥

३३ब्)

अथान्यं परमं वक्ष्येद् योगिनी कुलनायिकां ।
येन विज्ञानमात्रेण कुलसामान्यता व्रजेत् ॥

पुरुषेनाधिकारोस्ति तस्मात् तत्सिद्धसंततौ ।
कर्णात् कर्णान्तरा याता योगिनीनां मुखालया ॥

पानुजं? खरमध्यस्थं विन्दुगे वरभूषितं ।
दशैकेन समाक्रान्तं सद्योमेलक दायकं ॥

एतद्गुह्यतरं गुह्यं गुह्यं तत्व समुद्भवं ।
गोपितव्यं प्रयत्नेन इत्याज्ञा पारमेश्वरी ॥

मन्त्रविद्या गणा सर्वे तन्त्रे तन्त्रे ह्यनेकधा ।
अत्रते पशवः सर्वे कलानार्घन्ति षोडशीं ॥

रावाख्यं परमं बीजं सर्वमन्त्रैक ग्रासकं ।
कोटिकोटिस्तु मन्त्राणां एकोच्चारेण भक्षयेत् ॥

भि?न्दाद्भिन्नां समुच्चार्या नान्या तु कारयेत् पूजां?
नान्यमन्त्रमनुस्मरेत् ।
भक्षयेच्चरुकं नान्यं निर्माल्यं नैव संस्पृशेत् ।

आपूर्य ब्रह्मरन्ध्रं भुवनं पातालस्थं निरोधयेत्।
कन्दोद्भिन्नां समुच्चार्या यन्त्रय?लितोर्द्ध गामिनी॥

३४अ)

ब्रह्मरन्ध्रान्तगोलान्तं रक्तबुद्बुदरूपिणी।
ध्वनिरूपा भृताज्योत्स्ना तत्रस्था प्रविलोपयेत्॥

एकोच्चारकृताप्येनां करन्यासः कृतो भवेत्।
देहन्यासन्तरुच्चारैः सकलीकृतविग्रहः॥

ज्वलान्तो दृश्यते भूमै यथा रुद्रोमखान्त कृत्।
भ्रसन्ति सर्वमन्त्राश्च भीतायान्ति पराङ्मुखाः॥

भ्रासनी सर्वमन्त्राणा पाशजालनिकृन्तनी।
दहनी सर्वपापाणां विज्ञान करणी महान्॥

योगिनीनां प्रशादेन प्राप्यते सिद्धसन्ततौ।
ततस्तस्य प्रवर्तन्ते विज्ञानानि अनेकधा॥

एकान्ते भूगृहे वापि दंसमसकवर्जिते।
दिग्वासामुक्तकेसेन गुटिका च मुख कृता॥

सर्वद्वंद्व विनिर्मुक्ता जपेल्लक्षं समाहितः।
होमं चैव दशान्सेन नृमान्समत्समेव च॥

देव्यास्तु रूपकं ध्यात्वा निश्चलेनान्तरात्मना।
नीलोत्पलदलस्यामां तनुरूपा वृकोदरां॥

सर्वावयवसंपूर्णां सुकुमार कराम्बुजां।

३४ब्)

चन्द्रबिम्बनिभाकारं विभातिमुखमण्डलं॥

सूर्यविम्बप्रतीकासां चलत् कुण्डलशोभितां।
दशनै ज्योत्ष्णे? संकाशैरोष्ठौमरक प्रभौ॥

अक्षौ पद्मदलाकारौ सुचोन्नतसन्निभांसिका।
कुवतारस्त्रवेसाष्ठ्यां कुटिलांजनसन्निभां॥

ललाटे पट्टिकां वद्धां मौक्तिकोद्दामशोभितां ।
आनन्तैर्व्विविधाकारैर्ल्ललाटतिलकोज्वलां ॥

नेत्र तृतीयं देव्यास्तु भ्रुवोर्मध्ये विराजते ।
कङ्कणैङ्कटकैर्वापि रूढकर्माणि शोभिनैः ॥

नानालंकारसोभाढ्यै समुन्नतपयोधरैः ।
ब्रह्मसूत्रोज्वलं देव्या हारालम्बितशोभितां ॥

नितम्बाढयां च सुश्रोणीमेखलाबद्धकिङ्किणी ।
नूपुरैः कटिसूत्रैश्च घुघुरैः पादशोभितां ॥

एवं प्रमुदितां देवीं रुदमाना मधोमुखां ।
कपाल स टंकं हस्ते त्रैलोक्य ग्रासलं पटां ॥

एवं विधौ महादेवीं ध्यातव्या साधकेन तु ।
पूजयेद् गन्ध पुष्पैश्च रथ्याक्षेतजयोनिजैः ॥

सत् पुष्पैश्च सदा पूज्या दीपैनाराद्य फल्गुषैः ।

३५अ)

पानैः सुशौभनैर्वापि अलिमध्वाज्य पायसैः ॥

नैवेद्यैर्विविधाकारैः महापिसितसंस्तुतैः ।
गीतैर्वाद्यैस्तथा नृत्यैः सर्वसंभारसंभृतैः ॥

पूजयेत् परया भक्त्यान्ततस्तोत्रं समारभेत् ।
ओं नमोस्तु सर्वगे शान्ते शान्तातीतनिरामये ॥

महाव्योमान्तरावस्थे चिद्योममवलम्बिनि ।
ज्योत्स्नाशक्ति समावस्थ धामत्रयप्रवाहिनि ॥

ज्योतिरूपे नमस्तुभ्यमकले कलरूपिणि ।
कालरूपे कलाग्रासे कलिते तु कलोज्झिते? ॥

खेचरीचक्र मध्यस्थे मध्यचक्र प्रसूयिनि ॥

तृविन्दु वलयाकारे नादरूपेसु सूक्ष्मगे ।
सूर्यविम्बप्रतीकासे ग्रन्थिरूपे महौजसे ॥

सोमसूर्याग्नि मध्यस्थे कूटरूपे परापरे ।
देवयाने महायाने पितृजान प्रवाहिनि ॥

नादग्रन्थि महादाने विरजेलयमाश्रिते ।
कदम्बगोलकाकारे द्वादशान्ते समुज्वले ॥

३५ब्)

तारकादुल्कसंकास खद्योत सदृशोपमे ।
न यो चन्द्रिक भ्रूमध्ये विद्युच्छटालवर्चसे ॥

दाडिमीकुसुमप्रख्ये जवाहिङ्गुलकोपमे ।
तडिद्विद्युतसमाकारे मयूरकिरणाहते ॥

तृपथान्तरवर्तीन्ये वज्रनाडिविकासिनि ।
कण्ठकूपनिक्षिप्ते हृद्गुहान्तरवासिनि ॥

पद्मसंपुटमध्यस्थ हिमकुन्देन्दुसन्निभे ।
चन्द्रासन कृताधारे नाभिपंकजमाश्रिते ॥

षट्प्रकारान्तरावस्थे रक्तकिंजल्क सोभिते ।
सतरुद्रसमाकारे सूर्यकोटि समप्रभे ॥

भ्रमन्ती चक्र वेगेन मूलचक्रे व्यवस्थिते ।
च्छेदना सर्वपासानां पशुपाशविमोचनी ॥

विज्ञानकरणी देवी संसाराच्छिन्नकारिणी ।
जननी सर्वभूतानां नमस्ते शक्तिरग्रिणी ॥

ब्रह्ममाते विष्णुमाते रुद्रमाते सुरेश्वरि ।
ईशसादाख्यमाते च शिवसा पंचास्मृता ॥

पञ्चाशद्वर्णसंयोगात् त्वया रुद्रो प्रकीर्तिता ।
मातावीरावलीनां तु कारुण्यं कुरु वत्सले ॥

३६अ)

मातात्वं भैरवानां च योगिन्यां तु महावलां ।
अघोरे परमे घोरे घोररूपे तदानने ॥

भीमे वै भीषणे देवि वमनी पिवनी तथा ।
हा हेति मन्त्रमुद्गीते हुं फडन्ते प्रदीपिते ॥

परे तु अपरे देवि तथा चैव परापरे ।
भिन्नयोनिर्महामाये वरदे लोकपूजिते ॥

रुद्रशक्ति समावेसे तृशक्तिगुणवृंहिते ।
म एष हरपिण्डस्थे योगिनी हृदिमाश्रिते ॥

कूटमन्त्रपदान्तस्थे महाचण्डपदोद्धृते ।
योगेश्वरि समायुक्ते फे फेत्कारसमन्विते ॥

ह्रींकारमन्त्रसंदीप्ते पंचफट्कारे माहते ।
कालाकालान्तके रौद्रे खेचरी कुलमाश्रिते ॥

द्वातृंशाक्षरसंयुक्ते पञ्चप्रणवसंपुटे ।

ओंकारपीठमध्यस्थे सिद्धयोगिनि सेविते ॥

मन्त्रमाते महादेवि समयस्था भविष्यति ।
क्रमत्रयान्तरावस्थे परां रूपे मरीचयः ॥

त्वया सर्वमिदं व्याप्तं कारणानलमध्यगं ।

३६ब्)

कमला च कुलाख्या च वर्वरा वहुरूपिणी ॥

वृद्धाकोंकणनामेन व्याप्तं तैस्तु षडध्वरं ।
व्योमे चल सुतेजस्थे स्थिरवारि महाम्बिके ॥

विन्दु अर्द्धेन्दु नादाख्ये चण्डक्रमस्य मध्यगे ।
वीरेसी वीरचामुण्डे उलितृतय भूषणे ॥

जालन्धरे तु सा देवी दक्षिणे कोणसंस्थिते ।
चर्चा चैव तु चामुण्डा गुह्या घोणामुखी तथा ॥

रैवती रेतपूर्णा च लक्ष्मी काली प्रकीर्तिता ।

क्रीडसे मातृमध्यस्थे महिम्नावलगर्विते ॥

पूर्णे पूर्णान्तरावस्थे कलाहंससमन्विते ।

क्लिन्ने कौमारमध्यस्थ तृप्रदे तृपुरान्तगे ॥

कलानादसमायुक्ते द्वातृंशाक्षरभूषिते ।

कामरूपे महामाये हंसरूपे व्यवस्थिते ॥

षष्ठ द्विपञ्चसंयुक्ते नादार्द्धन्तु विभूसिते ।

वालक्रमस्य मध्यस्थ नित्यरूपे व्यवस्थिते ॥

शसयमनसमायुक्ते प्राणजीवसमन्विते ।

पञ्चप्रेतकृताधारे नवात्मोत् सहगामिनि ॥

३७अ)

सूर्यमण्डलमुत्तीर्णे नमस्ते रक्तयोनिजे ।

बीज योनि सयोनिस्थे एक * * ? रमाश्रिते ॥

कामशक्ति समाधारे सोमबीजपरिप्लुते।

* * * *? परे सूक्ष्मे षट्पत्रान्तरवासिनि॥

नित्यक्लिन्ने समाख्याते यथा चैव मदद्रवे।

ब्लुंकारे सहजे देवि गौरि नित्ये नित्यसदोदिते॥

ह्लींकार शक्ति रुद्दिष्टा पापिनी परमे कले।

खगे दिक्करि भूचर्ये डाम्य डामरिका तथा॥

क्षोभयस्व जगत् सर्वं सदेवासुरमानुष।

त्राहि देवि सुराश्रेष्ठससारार्णवविस्तरात्॥

ज्ञानात्थनो? महादेवि कारुण्यं कुरु भैरवि।

त्वं गतिस्त्वं च मे भ्राता त्वत् पाद सरणागतः॥

रक्षमां परमे सानि संसारा दुःखसागरात्।

मायाजालविमूढस्तु मोदयासैः प्रपीडितः॥

तृष्टा घातभयत्रस्त त्राहि त्राहि भवार्णवात्।

परानन्दस्वरूपेण स्तोत्रमेड्रदाहुतं? ॥

सकृदावर्तयेद् यस्तु स भवेन्मुक्तकिल्विषः ।
मन्त्रच्छिद्र गता ये च समयलोपैः प्रपीडिताः ॥

३७ब्)

पठनात् सुद्धिरेतेषां कीर्तनात् तव नित्यसः ।
दुर्गमार्गजलाग्निभ्यस्चौरराजकुलादिभिः ॥

न भयं विद्यते तस्य प्रातरुत्थापयः पठेत् ।
यः पुनः सुद्धभावात् मातृः कालं मण्डले कृते ॥

पठते योगयुक्तस्तु भक्तियुक्तस्तु भावितः ।
उपसर्गेन वाध्येत? सिद्धिभावं स गच्छति ॥

गगनो योनिसंघैश्च पुत्रवत् परिपाल्यते ।
समेलापि भवेद् योगी शापानुग्रहदायकः ॥

दीक्षानिर्वाणकादीनि षोडाशक्तिफलं लभेत् ।

अणिमादीनि सिद्धीनि योगिनी कुलनन्दनः॥

प्राप्यते तु महावीरः चिदाकाशं परं व्रजेत्।
सोचिरेण तु कालेन खेचरीकुलनन्दनः॥

सामान्यः सर्वसिद्धीनां स्त्रीणां भवति वल्लभः।
इति स्तुत्वा तु देवी सा प्रणिपत्य क्षमापयेत्॥

अर्घदत्वा जपेद् यस्तु निश्चले नान्तरात्मना।

३८अ)

लक्षमेकं जपेनैव प्राकाश्यं तस्य जायते? ।
द्वितीये रक्तपूर्णन्तु अर्घपात्र भविश्यति॥

तृतीये तु कवित्वन्तु सालंकारं मनोहरं।
वसित्वं * * *? लोकेन तु लक्षजपेन तु॥

पञ्चमेन पुरक्षोभं क्षितित्यागस्तु षष्ठिके।
योगिनी मेलकं चैव सप्तमेन ध्रुवं लभेत्॥

अष्टमे खेचरीणान्तु पतित्व तस्य जायते।
नवलक्षकृते जाप्ये रोदिनी मानसंशयः॥

स्वयं कर्ता स्वयं हर्ता देवी तुल्य वलो भवेत्।
क्रुद्धः संभरेते सर्वम्मिच्छरा सृजते पुनः॥

इयासकलो भुत्वा इच्छया निःकलो भवेत्।
सर्वसमरसे भूत्वा इच्छाशक्तिरधिष्ठितः॥

मन्त्राणां चैव यत्पीठं चर्यायागप्रसाधनं।
तत्सर्वलीयते देवि दर्शयेद् व्याप्ति पूर्वकं॥

चीर्णव्रतकुतक्लेसो जपं होमंश्च तत्परः।
न सिद्ध्यन्ति यदा मन्त्रास्तदा निग्रहमारभेत्॥

आदौ देवी समुच्चार्य मध्येमन्तं समुच्चरेत्।

३८ब्)

मारये द्विगुणं कृत्वा द्विधा भक्षय वै तथा ॥

हुङ्कारं त्रिविधं योज्य विधिं मन्त्रस्य मारणे ।
भक्षमाणस्तदा मन्त्रः सिद्धसिद्धा वदेति च ॥

सिद्धो वाप्यर्थसो मन्त्रो भक्षितो? वाथरोदिनी ।
द्वात्रिङ्गसूक्ष? जाप्येन यदा सिद्धिर्न जायते ॥

तदा कुर्याद्विधि तृषा गुरुद्रोहां तु चान्यथा ।
परकर्मा च्छेदयेद् यस्तु क्षुद्रकर्मोपजीविनः ॥

तस्य मन्त्रसमुच्चार्य पश्चात् कर्मणि * * * *? ।

अमुकस्य मन्त्र यन्त्र मणिविद्या रोष *? न च्छेदय भेदयमां
नय भक्षय फट् फट् एवं न परमंत्राणि मारणोच्चाटयन्ति च ।

परदेहपराशक्तिश्चिन्तयेत् तमरूपिणी ।
राहु चण्डा यथा *? या तथा साध्यविलक्षयेत् ॥

परविज्ञान हरणं क्षणात् भवति नान्यथा ।
सर्वसामर्थ्य हरणं विष्णु तुल्यो करोति सः ॥

हतदेयं प्रवुद्धा च पदासुप्त? यमागतः ।
प्रायश्चित्तं ददेत् तस्य पाणायामुतद्वयं ॥

३९अ)

संक्रामयेत् पुनर्ज्ञानं विधिसंस्कारपूर्वकं ।

योगपीठे क्रमोदयो नाम एकादशमः पटलः ॥

अथैसांकलने कालं ज्ञात्वा वञ्चति येन वै ।
तदहं निश्चितार्थाय प्रव्रमीमि यथोदितं ॥

सोमसूर्य क्रमेणैव सृजते संहरेति च ।
तिथिमासादयो रासी दक्षिणोन्तरमेव च ॥

नन्दादयो यावत् पूर्णामशिने सशिरेव च ।
यवो चंद्रं तथा सूर्यं लक्षितव्यं गुरो मुखात् ॥

विलोमेन यदा याति शशिनं रविमण्डले ।
तदा मृत्युं विजानीयान् नात्र कार्यविचारणात् ॥

दुषा? काले परीक्षेत प्रतियतशशिसूर्ययोः ।
निर्मलौ तु करीक्षाल्य निरीक्षेत् पर्वपर्वणी ॥

कृष्णवर्ण भवेद् यत्र स्वस्तमेत् तत्र तस्य वै ।
मकरे कर्कटे मार्गे लक्षितव्यं मुहूर्तकं ॥

सम्यक् वह्नि नुहूर्त्ते वा यदा ज्आतं सुनिश्चितं ।
वञ्चनन्तु तदा कुर्याद् गुर्वाज्ञामनुवर्तिनः ॥

३९ब्)

भूगृहे निर्जने वापि एकाकी त्वं त्ववर्जितः ।
क्रमं पूज्य प्रयत्नेन पूर्वसंभारसंभृतं ।

प्रणम्य शिरसा नाथमाज्ञां शिरसि धारयेत् ।
मृद्वासन स्थितः पश्चात् एकचित्त व्यवस्थितः ॥

ईषत् प्रसार्य वक्रन्तु दन्तै दन्तन्नं? संस्पृशेत्।
ललना अचला कृत्वा नासाग्रन्तु निरीक्षयेत्॥

चिन्तचिन्ता परित्यागं क्षणान्तिष्ठति यावत।
तावत् स्वाभाविका व्याप्ति स्वरूपं प्रति पद्यते॥

नष्टविज्ञानमादं नष्टमानस गोचरं।
नष्ट क्रम समाचारं नष्टवर्णविरूपकं॥

तदा स्फटिकसंकाशं तेजो मूर्द्धिर्न मयं भवेत्।
न कालो कलनं तत्र ना कालो कलमेव च॥

निवेद्य च गुरोराज्ञांत्मापुण्यपापपरिक्षयं।
अनिमादीनि सिद्धानि निवेद्य गुरवस्य वौ॥

मृद्धांसने समारुह्य गृहच्छिद्रान्तरुन्धयेत्।
दीपोत्सवं न कर्तव्यं गुर्वाज्ञा दीपकं भवेत्॥

नैव चिन्ता न चाचिंत्यं स्व?भावं तिष्ठते सदा ।

४०अ)

पक्षयातविनिर्मुक्तं शिवसंपद्यते तदा ।
शब्दस्पर्शं तदा रूपं चिन्तं विश्राम्य चोपरि ॥

अनेनाभ्यासयोगेन मृत्युंजित सततं भवेत् ।
ऊर्द्धवक्रोत् क्षपेद् वायुंस्तदोर्द्धोंचार योजयेत् ॥

पृष्टनाडिं गतं लक्षं न मृत्योः परिभूयते ।
मुण्डाधार स्थितं चित्तं पूर्यमानं मुहुर्मुहुः ॥

हिमं कलोलवं फलमम्वासादक्षये भवेत् ।
आपूर्य ब्रह्मरन्ध्रन्तु लम्बकान्तं सुशांकरं ॥

सिञ्चयेत् सृष्टिमार्गेण मृत्युजिद्भवति क्षणात् ।
निःक्रान्ताधारचक्रंत पिडासूत्रं निभा कृतिः ॥

सम्य? नितोच्चार रन्ध्रान्ते समाधि मृत्युनाशनी ।

द्वौराजदन्तमध्यस्था सुसुम्नानामनाडिका ॥

तदा कृष्यशपर्वाषु द्वादशान्ता वलम्बिनं ।
अनेनाभ्यासयोगेन न मृत्यो जयते ततः ॥

रसना भानु मूले तु कृत्वा वायुं पिबेत् शनैः ।
वञ्चयेत् तत् तदा मृत्यु प्रहरकेन भावितः ॥

४०ब्)

हृदिस्थं वमनः कृत्वा तल्लीनो भवते स तु ।
तावत् समाधि सायाति निर्भरा मृतरूपिणी ॥

एवं विनाशयेत् कालंमकालः कलते तदा ।
रहस्येदं मया द्रोक्तं? गोपितव्यं प्रयत्नतः ॥

गुरुः प्रधानः सर्वत्र तस्मात् सर्व प्रपद्यते ।
गुरुपंक्ति क्रमेणैव पारंपर्य क्रमागतं ॥

पिण्डस्थं पुष्पसंकेतं अधिकार क्रमेण तु ।

ज्ञात्वा षड्भेदभिन्नन्तु येना ज्ञासं प्रवर्तते ॥

त्रिभिः त्रिभिः स्मृतं चोद्यं पंचकञ्च द्वितीयके ।
चतुष्कं तृतयेद् योज्यं तृतयं च चतुर्थके ॥

अनेन क्रमयोगेन गुरुपंक्ति मिहोच्यते ।
पुष्पसंकेतमेवं स्यादधिकार पदे स्थितं ॥

ज्ञातव्या पश्चिमे मार्गे स्वसंतान कुलावलिः ।
अन्यथा नैव जानाति किञ्च ज्ञः? पश्चिमे गृहे ॥

मोचकत्व न युक्तासौ नाडि वाद्यस्तु देसिकैः ।
दीक्षा ज्येष्ठ क्रम श्रेष्टः सर्वार्थ क्रमपारगः ॥

सद्यस्तु? पश्चिमाम्नाये पूजितव्यो गुरुर्यथा ।
भ्र *? पुत्रः क्रम *? श्च किञ्चिद्रो गुरु पुत्रकः ॥

४१अ)

अस्कस्थानं प्रकर्तव्यं नाभिवादन मर्हति ।

अनुज्ञानाभिषिक्तस्तु नाममाला प्रकाशिता ॥

तदासौ मोचकः प्रोक्तः साधिकारा कुलान्वये ।
स पूज्यो भ्रातृभिश्चान्यै भ्रातरैर्भातृपुत्रकैः ॥

तैस्तु मण्डलकं कुर्यातमाज्ञाशिरसि धारयेत् ।
गृहस्था याभिसिक्तस्तु अनुज्ञाताप्यपारगः ॥

एकान्ते विहतं सर्वं नमस्कारं यथाक्रमं ।
तस्मात् तद्गुप्त? लिङ्गी स्यात् गोपनीयं प्रयत्नतः ॥

स्थिति भङ्गो न कर्तव्य स्थिति भङ्गाद्विनस्यति ।
व्याधिदुःख भवेत् तस्य आज्ञा हानिर्भविस्यति ॥

मन्त्रं तन्त्रं क्रिया योगं निःफल तस्य जायते ।
तस्मात् सर्वप्रयत्नेन गुप्तलिङ्गी भवेत् सदा ॥

निसा भागेषु कुर्वीत पशु दृष्टि विवर्जिते ।
सु * * *? ः शुरश्रेष्टाः? स्वमार्ग स्थिति पालकाः ॥

प्राप्नुवन्ति महावीराः पराव्यापिरखण्डिताः ।
शतकोटि पुमानं तु मतं वै पारमेश्वरं ॥

४१ब्)

तत्र मध्योत्वृतं? सारं चतुर्विंशति सहस्त्रकं ।
तस्मान्मतात्मारतरं श्रीमतन्तु क्रमोदयं ॥

सतसप्त प्रमानेन दध्नामृतमिवोद्धृतं ।
ओंकारे तु महापीठे सिद्धयोगिन्यलंकृते ॥

कदम्बा नामविख्याता गुहा त्रैलोक्य विश्रुता ।
तत्रागतं महाज्ञानं योगपीठेति संज्ञितं ॥

तेनोक्तं योगपीठन्तु क्रमोदयस्तु निर्मल ।
गृहीतं चर्यनाथेन आनीतं पीठमध्यतः ॥

कनकमंजरि नामेन योगिनी तु महावला ।
स्थापितं तद्गृहे ज्ञानं कृत्वा समय पूर्वकं ॥

नाभिवर्ति अहीना च वज्रसंधि कपाटयोः।

संकेतान वेत्ति याप्यन्तु तस्यदेयं? कुलागमं॥

सयोग्य क्रमिको कौले पूजनीयः प्रयत्नतः।

रक्षणीयः प्रयत्नेन यदि * * ममोपरि॥

एवं दा * * समयान अन्तर्द्धान गतः क्षणात्।

एकुले नाथाय विद्महे श्रीकुब्जिकायां धीमहे तन्नो मुक्ति प्रचोदयात्॥

अनेनैव तु गायत्री * * * * * * * *?॥

४२अ)

उन्च्लेर्

४२ब्)

ओंकारपीठ मध्ये तु मुद्रितं परमे * *?।

देव्या देशेन संप्राप्ता शतसप्त प्रमानकं॥

नन्दन्तु कुलयोगिन्या नन्दन्तु नन्दन्तु श्री कुलो * * * * *

* *? कुलदीक्षिताः ॥

समाप्तं श्रीक्रमोदयमिति ॥

श्रीमत्करालग्रहहेतुना प्रकासितं महाज्ञानं सिद्धि मुक्ति फलप्रदं ।

यस्मिन देशित्वदंशास्त्रं गृहे वा यत्र तिष्ठति ।

योगपीठन्तु तद्गृहं ॥ श्रीमहादेवेन लिखितमिदं पुस्तकं ॥ सम्वत् ३०७

पौषशुदी शुक्रवारे । शुभम

ओं एजलालय * * * * * * * * * *

* * * * * * * * * * * *

* ? ।

कटानां? *? त्र व्याघ्राण्डा काची कटीस्तु हास्यन् ।

विभ्रतण्डुलं च । चक्रं च । ध्वजादानं च दक्षिणे वः ।

ऐजनीलाजनसम्रप्रक्षाकुब्जिकभ्या महान् । षडवक्रा द्वादश भुजा ।

रत्नखर्यास्थिरं । धरारोद्री । द्रंष्ट्राकरास्य हास्य नीतस्यापित । ज्वलं

वक्तुं । उतन स्वाम संनिभं । दक्षने हृष्टवर्णं च । जतसंमुखा

* *? वक्र *? सस्थं स्फटिकोपम । सहस्त्र

सुर्पसंकाशं मुर्द्धवक्रं परार्चितं । सर्वद्रंष्ट्राकरालानि

# मतङ्गपारमेश्वरम्

## योगपादः

## प्रथमः पटलः

## योगोपन्यासः

[योगस्वरूपम्[१]]

[२]अथ योगविभूत्यर्थमुत्तमोऽयं [३]विधिर्मुने ।
[४]षडङ्गो विस्तृतस्तन्त्रे समासात्प्रोच्यतेऽधुना ॥१॥

---

[१] योगात्सिद्धिश्च मोक्षश्च तदभ्यासाच्छुभं खग ।
षडङ्गः स च बोद्धव्यस्तस्याङ्गानि शृणुष्व तत् ॥
प्रत्याहारस्तथा ध्यानं प्राणायामोऽथ धारणम् ।
आसनं च समाधिश्च योगाङ्गानि षडेव तु ॥
(किरणे योगपादे १, २, ३);
तदात्मवत्त्वं योगित्वं जिताक्षस्योपपद्यते ।
प्राणायामाद्यनुष्ठानाज्जिताक्षत्वं शनैः शनैः ॥
प्राणायामः प्रत्याहारो धारणा ध्यानवीक्षणे ।
जपः समाधिरित्यङ्गान्यङ्गी योगोऽष्टमः स्वयम् ।
युज्यते शिवत्वलक्षणया स्वस्वरूपाभिव्यक्त्यावश्यमिति योगी, तस्य भावो योगित्वमात्मवत्त्वाविनाभावि।.. जितेन्द्रियस्य त्वचिरादेव स्वरूपलाभः।.. वक्ष्यमाणलक्षणप्राणायामाद्यङ्गसप्तकाभ्यासाज्जितेन्द्रियत्वं शनैः क्रमेण भवति।... प्रणायामादीनि सप्ताङ्गानि । योगस्तु स्वयमष्टमोऽङ्गित्वेन ज्ञेयः ।
(मृगेन्द्रे योगपादे १.२ श्लोकौ वृत्तिश्च);
सर्वार्थज्ञाननिष्पत्तिरात्मनो योग उच्यते ।
एकाग्रता भवेच्चैव सर्वदा तत्प्रसादतः ॥
प्रसादस्य स्वरूपं यत्स्वसंवेद्यं द्विजोत्तमाः ।
वक्तुं न शक्यं ब्रह्माद्यैः क्रमशो जायते नृणाम् ॥
योगशब्देन निर्माणं माहेशं पदमुच्यते ।
तस्य हेतुः ऋषेर्ज्ञानं ज्ञानं तस्य प्रसादतः ॥
ज्ञानेन निर्दहेत्पापं निरुध्य विषयान्सदा ।
निरुद्धेन्द्रियवृत्तेस्तु योगसिद्धिर्भविष्यति ॥
योगो निरोधो वृत्तेस्तु चित्तस्य द्विजसत्तमाः ।
साधनान्यष्टधा चास्य कथित नीह सिद्धये ॥
यमस्तु प्रथमः प्रोक्तो द्वितीयो नियमस्तथा ।
तृतीयमासनं प्रोक्तं प्राणायामस्ततः परम् ॥
प्रत्याहारः पञ्चमो वै धारणा च ततः परा ।
ध्यानं सप्तममित्युक्तं समाधिस्त्वष्टमः स्मृतः ॥
(लिङ्गपुराणे पूर्वार्धे ८.३–९);
निरुद्धवृत्त्यन्तरस्य शिवे चित्तस्य निश्चला ।
या वृत्तिः सा समासेन योगः स खलु पञ्चधा ॥
मन्त्रयोगः स्पर्शयोगो भावयोगस्तथापरः ।
अभावयोगः सर्वेभ्यो महायोगः परो मतः ॥
मन्त्राभ्यासवशेनैव मन्त्रवाच्यार्थगोचरः ।
अव्याक्षेपा मनोवृत्तिर्मन्त्रयोग उदाहृतः ॥
प्राणायाममुखाः सैव स्पर्शयोगोऽभिधीयते ।
स मन्त्रस्पर्शनिर्मुक्तो भावयोगः प्रकीर्तितः ॥
विलीनावयवं विश्वं रूपं संभाव्यते यतः ।
अभावयोगः संप्रोक्तोऽनाभासाद्वस्तुनः सतः ॥
शिवस्वभाव एवैकश्चिन्त्यते निरुपाधिकः ।
यथा शैवमनोवृत्तिर्महायोग इहोच्यते ॥
दृष्टे तथानुश्रविके विरक्तं विषये मनः ।
यस्य तस्याधिकारोऽस्ति योगे नान्यस्य कस्यचित्
विषयद्वयदोषाणां गुणानामीश्वरस्य च ।
दर्शनादेव सततं विरक्तं जायते मनः ॥
(शिवपू० वायुसं उत्तर० ३७.६–१३)

[२] 'ङ' मातृकायां योगपादे प्रथमपटलादारभ्य पञ्चमपटले ६४ तमश्लोकस्य प्रथमपादान्तो भागो नोपलभ्यते ।

[३] विधिं मुने — ओ.

[४] षडङ्गोऽभिहित० — च.

[1]विभिन्नो वासनाभेदाद्विविधेन [2]मलीमसः ।
[3]मुख्यो योऽन्तर्गतः [4]सूक्ष्मः स्वभावेनाप्यथाचलः[5] ॥२॥
[6]चरतोऽस्य बहिः स्थूलो भोक्तृत्व[7]मलपीडितः ।
[8]भेदोपचारतः प्रोक्तो [9]भ्रान्त्युत्थोऽतीवदुःखदः ॥३॥
[10]तस्यापमार्जनं कृत्वा यदव[11]स्थानमादरात् ।
[12]स्वोचितां व्यक्तिमायाति [13]तदङ्गित्वेन शासने ॥४॥
[14]संस्थितो योगमार्गेऽस्मिंस्तस्याङ्गान्युपचारतः[15] ।
व्यक्तये परिभाषाभिः [16]संस्थितानि पृथक् पृथक् ॥५॥

[ [17]षड् योगाङ्गानि ]

[18]प्रत्याहारस्तथा ध्यानं प्राणायामश्च [19]धारणा ।
[20]तर्कश्चैव समाधिश्च षडङ्गो योग उच्यते ॥६॥
[21]अङ्गेभ्योऽन्योऽतिरिक्तः [22]सन् योग इत्युपवर्ण्यते ।

---

[1] वि . . सना० — क.
[2] मलीयसा — ओ; मलीमसा — क; बलीयसा — च.
[3] मुख्यैर्यो — ओ; मुख्ये यो — क; मुख्याद्यन्तर्गतः — च.
[4] सूक्ष्मं स्व० — ओ; सूक्ष्म स्व० — क.
[5] चलम् — ओ.
[6] ०चलतोऽस्य — च.
[7] ०पदपीडितः — च.
[8] भोदोप० — ओ; . . तोप० — ख, घ; भेदः उपचारतः=भेद उपचारतः; अत्र संधिरार्षः ।
[9] भ्रान्त्यर्थो० — ओ, क.
[10] त . . कृत्वा — ओ; तस्यैवमर्चनं — क; तस्यायमार्जनं — ख; तस्यावमार्जनं — घ, छ, ज.
[11] ०स्थानादरात् — ख.
[12] सोचितां — ओ; सोचितं — क, छ; स्वोचितं — ख, घ, च, ज.
[13] तदङ्गत्वेन — ओ, क, ख, घ, छ, ज.
[14] संस्थितं — च.
[15] ०चारितः — छ, ज.
[16] संस्थानि — ख, ज; संस्थानि व — छ.
[17] 'प्रत्याहारस्तथा ध्यानं प्राणायामोऽथ धारणा । तर्कश्चैव समाधिश्च षडङ्गो योग उच्यते ॥' (अमृतनादोपनिषत्—६; रौरवे विद्या०७.५); 'योगाष्टाङ्गं प्रवक्ष्यामि शृणुष्वैकाग्रमानसः । यमनियमासनं च प्राणायामं ततः परम् ॥ प्रत्याहारं च ध्यानं च धारणा च समाधिकम् । अष्टाङ्गमिति विज्ञेयं योगिनां योगसाधनम् ॥' (सुप्रभेदे योग० ३.५३उ०–५५पू०). 'अष्टाङ्गो वा षडङ्गो वा सर्वयोगः समासतः । यमश्च नियमश्चैव स्वस्तिकाद्यं तथासनम् ॥ प्राणायामः प्रत्याहारो धारणा ध्यानमेव च । समाधिरिति योगाङ्गान्यष्टावुक्तानि सूरभिः ॥ आसनं प्राणसंरोधः प्रत्याहारोऽथ धारणा । ध्यानं समाधिर्योगस्य षडङ्गानि समासतः ॥ पृथग्लक्षणमेतेषां शिवशास्त्रे समीरितम् । शिवागमेषु चान्येषु विशेषात्कामिकादिषु ॥ योगशास्त्रेष्वपि तथा पुराणेष्वपि केषु च ।' (शिवपु० वायुसं० उत्तरभागे ३७.१४–१७.
[18] प्रव्याहार० — च.
[19] धारणात् — क.
[20] तर्काश्चैव — ओ.
[21] अङ्गोऽन्योन्यातिरिक्तो — ओ, क.
[22] यः स योगो उप० — ओ, क; यः संयोगेत्युप० — ख, घ, छ, ज.

[1]तत्स्वरूपमनाविद्धमज्ञत्वेन[2] गुणात्मना ॥७॥
[3]अङ्गाङ्गिकथनोपायोऽभ्युपेयस्याभियुज्यते ।
[4]उपेयस्य षडङ्गोक्तिन्र्यायेन[5] प्रविजृम्भिता[6] ॥८॥
[7]उपेयस्योपलब्ध्यर्थ[8]मुपायोऽप्यधि[9]वीर्यवान् ।
[10]उपेयः परमा [11]काष्ठा [12]मायोपाधि[13]सुगर्भितः ॥९॥
[14]उपायश्चास्य तीक्ष्णाग्रो[15]योगयुक्तोऽतिवीर्यवान् ।
तस्याङ्गान्युदितान्यत्र [16]न च योगः पृथक्[17]स्थिते ॥१०॥
[18]वस्तुन्यपरवस्तूनां यथोक्तं शासने मया ।
तस्माद्योगः [19]प्रकर्तव्यो [20]व्यक्त्यर्थममितद्युतेः ॥११॥
[21]तेजसः साधकेन्द्राणां भूत्यर्थं [22]चाप्यवारितः ।
स च चित्तनिरोधाद्वा [23]वायो[24]श्चाभ्यासगोचरात् ॥१२॥

---

[1] तस्य रूप० — ओ, क; तत्स्वरूपमनाशुद्ध-मज्ञ० — छ, ज.
[2] ०मज्ञातेन — च.
[3] अङ्गानां गन्धनोपाये . . स्या० — ओ; अङ्गानां गन्धनोपायेऽभ्युपायस्या० — क; अङ्गाङ्गिकमतोपायो ह्यपेयस्याभि० — च.
[4] उपायस्य — ओ, क; उपेयोऽस्य — ख, घ, छ, ज; उपायोऽस्य — च.
[5] ०क्तिन्यायेन — क, ख, घ, च, छ, ज.
[6] ०जृम्भितम् — ओ, च; ०जृम्भितः — क, ख, घ, छ, ज.
[7] उपायस्योप० — ओ, क, ख, घ, छ, ज.
[8] ०मुपायोऽप्याधि० — ओ, क; ०मुपायोपाय-वीर्यं० — ख, घ, छ, ज.
[9] ०वीर्यसा — ओ, क.
[10] उपयः — ओ; उपायः — क, च.
[11] निष्ठा — ओ, क; निष्ठो — च.
[12] मायोपाधिः — ओ; पायोपाधिः — च; मायोपयि — छ, ज.
[13] ०सुदुर्गतः — ओ, क; ०सुगर्भितम् — ख, घ, छ, ज; ०सुदुर्मिदः — च.
[14] उपायश्चा . . — ओ; उपायश्चास्तु निष्णाग्रो — क; उपायस्यास्य तीक्ष्णाग्रो — च.
[15] योगिनीति विपर्ययात् — ओ, क; योगेनेति च वीर्य० — ख, घ, छ, ज.
[16] नरयोगः — च.
[17] स्थितेः — ओ, क, ख, घ, च, ज;
'योगमेकत्वमिच्छन्ति वस्तुनोऽन्येन वस्तुना ।
यद्वस्तु ज्ञेयमित्युक्तं हेयत्वादिप्रसिद्धये ॥
(मालिनीविजयोत्तरे ४.४).
[18] वस्तून्यपरवस्त्राणां — ख, घ, छ, ज; वस्तू-न्यपरवस्तूनां — च.
[19] प्रवर्तव्यो व्यत्यर्थममितद्वितेः — घ; प्रपत्तव्यो व्यक्तार्थ० — च.
[20] व्यत्यर्थममितद्वितेः — ज.
[21] तेजः स साध . . दूत्यर्थं — ओ; तेजः स साधकेन्द्राणां दूत्यर्थं — क; तेजः स साध०—ज.
[22] वाप्यवा० — ओ, क; चानिवारितः — च.
[23] पायो० — क.
[24] ०श्चाभ्यस्तगो० — ओ, क.

[1]निश्चयाच्च मुनिव्याघ्र [2]कालान्नित्योद्यमात् स्फुटम् ।
[3]विरागाच्चागमोपात्त[4]न्यायेनाचरतस्ततः ॥
नान्यथा व्यक्तिमायाति [5]निश्चितेयं मतिर्मम ॥१३॥

[6]व्यपगतसङ्गदोष[7]कलुषावलि[8]हृद्विवरात्
[9]सुघटित[10]चित्तरत्नकृतशेखरलब्धजयात्[11] ।
अनुगतयोगमार्ग[12]निखिलोत्तरभूमिलयाद्
विचरति साधकस्तु[13] [14]कठिनाकुलजन्मभयात् ॥१४॥

[ उक्तार्थोपसंहारो वक्ष्यमाणोपक्रमश्च ]

[15]उक्तं मया योगविधानमार्गे
[16]योग्यं यथाङ्गैः समवाय[17]युक्त्या ।
प्रवर्तते योगबलं प्रसह्य[18]
तेनोच्यते[19]ऽङ्गावयवेषु चिह्नम्[20] ॥१५॥

इति श्रीमतङ्गपारमेश्वरे योगपादे [21]योगोपन्यासपटलः प्रथमः[22] ॥

प्रथमः पटलः

---

[1] निश्चयाश्च — ख, घ, ज; निश्चयाश्चा—छ.
[2] काला नित्योद्यमा स्फुटम् — ओ, क; कला नित्योद्यमात् — च.
[3] विरागा चागमो० — ओ, क; विरागाच्च गमो० — घ, छ, ज; विरागाश्चागमोपात्ता — च.
[4] न्यायेन चरतः सतः—च; न्यायेनाचारत०—ज.
[5] निश्चयो नियतिर्मम — ख, घ; निश्चयो निति मम — छ; निश्चयोनतिर्मम — ज.
[6] उपगत — छ, ज.
[7] ०कलुषा . . हृ० — ख; ०कलुषां हृ० — घ, छ, ज.
[8] ०हृद्विरागात् — ओ, क.
[9] सुघटिकचित्त० — छ.
[10] ०शीतरत्न० — ओ, क.
[11] ०शेखरलब्धसंज्ञया — ओ, क; ०शेखजयाए — ख; ०जियात् — छ; जीयात् — ज.
[12] ०निबिडोत्तरभूमिजयाद् — ख, घ, छ, ज; निगडोत्तरभूमिलयाद् — च.
[13] साधको — ख, घ, छ, ज; साधकेन्द्र० — च
[14] कवि . . जन्मभयात् — ओ, क; कठिलाकुल० — च; झिनाकुल० — ज.
[15] युक्तं — ओ, क, ज.
[16] योऽयं — क; योक्तं — ख; योक्तुं — घ, छ, ज; योक्तुर्य० — च.
[17] ०युक्त्याः — क; ०शक्त्या — ख.
[18] प्रसह्यते — क; प्रसह्यं — च.
[19] जगावयवेषु — ओ, क.
[20] चिह्नः — क.
[21] योगन्यास० — ओ, क; भोगोपन्यासपटलम् — च.
[22] 'च' मातृकायां 'श्लोकाः षोडश' इत्यधिकम् ।

## द्वितीयः पटलः

# योगाङ्गानि

अथाङ्गानि[1] वरिष्ठानि [2]योगस्यामिततेजसः ।
समासतोऽ[3]भिधास्यामि [4]शृणुष्वैक[5]मना मुने ॥१॥

[ [6]प्रत्याहारः ]

[7]स्वेषु स्वेषु [8]प्रवृत्तानामिन्द्रियाणां [9]नियोगतः ।
[10]शब्दादिष्वभिलाषेण [11]स्वाधिष्ठातृबलेरणात् ॥२॥
[12]निषण्णानां समाकृष्य [13]स्वेन स्वेन तु [14]वर्त्मना ।
[15]प्रतीपाचार[16]सिद्धिस्तु [17]प्रवेश्य कमलोदरे ॥३॥
[18]ज्ञानसूचि[19]समाविद्धनिघृष्टार्थोपला[20] पुरा ।
मनःसूत्रेण संप्रोता[21] मतिहस्तसमाश्रिता[22] ॥४॥
[23]प्रसंख्येयाक्षमालेयं[24] हृत्पद्माश्रयमूर्तिनः[25] ।
[26]चित्तं प्रतिसमाहृत्य [27]चलितं [28]हृदयाश्रयात् ॥५॥
[29]सम्यक्समाश्रयो [30]येन प्रत्याहारः स उच्यते ।

---

[1] अथाग्नि० — ओ.
[2] योगव्यामित० — ओ.
[3] विधास्यामि — च.
[4] शृणुष्वेक० — ओ, घ, छ, ज.
[5] ०मनाधुना — ओ, क, ख, घ, छ, ज.
[6] 'ततः सुखलवास्वादे तेषां वृत्तस्य चेतसः ।
प्रत्याहारो विधातव्यः सर्वतो विनिवर्तनम् ॥'
(मृगेन्द्र० योग० ५);
'अथातः संप्रवक्ष्यामि प्रत्याहारं महामुने ।
इन्द्रियाणां विचरतां विषयेषु स्वभावतः ॥
बलादाहरणं तेषां प्रत्याहारः स उच्यते ।'
(दर्शनोपनिषत् ७ १,२);
'इन्द्रियाणि प्रसक्तानि यथास्वं विषयेष्विह ॥
आहृत्य यन्निगृह्णाति स प्रत्याहार उच्यते ।'
(शिवपु०वायुसं०उत्तरभागे ३७.४५उ०,४६पू०)
[7] स्वत्सु स्वत्सु — ओ, क.
[8] प्रविन्नाना० — च.
[9] निबोधत — ओ, क, ख.
[10] शब्दाभिष्वभिलाभेन — ओ, क.
[11] स्वाधिष्ठात्र० — क; स्वाधिष्ठातॄन् — ख, घ; स्वाधिष्ठातृन् — छ, ज.
[12] निषण्णानि — ओ, क, ख, घ, च, छ, ज.
[13] स्वेन स्वेनैव — च.
[14] वर्मणा — ओ, क.
[15] प्रसिद्धाचार० — ओ, क; प्रणीयाचार०–च.
[16] ०सद्वस्तु — ख, घ, च, छ, ज.
[17] प्रवेशं — ओ; प्रवेश — क.
[18] ज्ञानसूची — ओ.
[19] ०सविद्धानिघृष्टार्थोपलो — ओ, क.
[20] ०विद्धा विघृष्टार्थोपले – ख, घ; विद्धा निघृष्टार्थोपले — च; ०विद्धा विघृष्टार्थेपले—छ, ज.
[21] संप्रोक्ता — ओ, क, छ, ज.
[22] ०समाश्रया — च.
[23] प्रसंज्ञेया० — च.
[24] ०माला वा — ओ, क.
[25] ०श्रयमूर्तिमान् — ओ, क; ०स्पदमूर्तिना—ख, च; ०स्पदमूर्तिनः — घ, छ, ज.
[26] व्रती व्रतसमा० — ओ; प्रती प्रतसमा० –क;
[27] चलतां — ओ, क; चर्वितां — ख; चलितां — घ, छ.
[28] ह्यस्वदाश्र० — ओ; स्वहृदाश्र० — क, च.
[29] सम्यक् तमाश्रयेद्येन — च.
[30] योभि — ओ, क.

[1]आहारात्पोषणं[2] प्रीतिः प्रसादः [3]संप्रजायते ॥६॥
[4]संतोषोऽर्थसमूहे तु [5]प्रतिपत्त्याप्यखण्डितः ।
तदा[6]हृत्य निरोधाच्च प्रत्याहारः स उच्यते ॥७॥

[ [7]ध्यानम् ]

ध्यानं नाम न गौणेन[8] चक्षुषा दिव्यमूर्तिनः[9] ।
[10]लक्षं [11]प्रत्यचला [12]प्रीतिर्यथा [13]रागबलेरणात् ॥८॥
[14]प्रलज्जन्नपि सौभाग्य[15]शक्त्याकृष्टो निवारितः[16] ।
[17]कान्तासक्तदृशं प्रीत्या [18]न विधारयितुं क्षमः ॥९॥
[19]तद्ध्यानं ध्यायिनां प्रोक्तं ध्यानमार्गफलप्रदम् ।

---

[1] आहार० — ओ, क, छ, ज; आहारः — ख, घ; आदानः — च.

[2] पोषणः — क; प्रोषणं — ख, छ.

[3] स प्रजायते — च.

[4] संतोषार्थं — ओ; संतोषात्थ० — क; संतोषात्स० — ख, घ; संतोषार्थसमूहात्तु — च; संतोषात्समूहे तु — छ, ज.

[5] प्रतिपत्त्यत्यखण्डितम् — ओ; प्रीतिपत्त्यत्यखण्डितः — क; प्रतिपत्तेव्यखण्डितः —ख, छ, ज; प्रतिपत्त्येऽप्यखण्डितः — घ; प्रतिपत्तिविखण्डिता — च.

[6] वृत्तिनिरोधाश्च — ओ; वृत्तनिरोधाश्च – क; हृत्तन्निरोधाच्च — ख, घ, छ; ०हृत्य निरोधश्च — च; दृतन्निरोधाच्च — ज.

[7] 'चिन्ता तद्विषया ध्यानं तच्चादिष्टं मुहुर्मुहुः ।' (मृगेन्द्रे योग० ६उ०);
'तत्रैकचित्तता ध्यानं प्रत्ययान्तरवर्जितम्' (लिङ्गपु० पूर्वार्धे ८.४३उ०);
'ध्यै चिन्तायां स्मृतो धातुः शिवचिन्ता मुहुर्मुहुः ।
अव्याक्षिप्तेन मनसा ध्यानं नाम तदुच्यते ॥
ध्येयावस्थितचित्तस्य सदृशः प्रत्ययश्च यः ।
प्रत्ययान्तरनिर्मुक्तप्रवाहो ध्यानमुच्यते ।
सर्वमन्यत्परित्यज्य शिव एव शिवंकरः ।
परो ध्येयोऽधिदेवेशः समाप्ताथर्वणी श्रुतिः ॥' (शिवपु० वायुसं० उत्तरभागे ३७.५१उ०–५३)

[8] गौगेण — छ, ज.

[9] ०मूर्तिना — ओ, क, ख, च, छ, ज.

[10] 'लक्षं लक्ष्यं शरव्यं च' अमरकोशे १६३९.

[11] प्रत्यवच प्रीति० — ओ, क.

[12] मतिर्यथा — घ.

[13] रङ्गबले० — ख; रागश्चलेरणात् — छ, ज.

[14] प्रज्वलन्नपि सौभाग्यं — ओ, क, ख, घ, छ, ज.

[15] प्रत्याकृष्टो — ख, घ, छ, ज.

[16] 'क' मातृकायामेतावत्पर्यन्तमेवोपलभ्यते ।

[17] एतसक्तं दृशं — ओ; कान्ताः सन्तादृशं — ख, घ, छ, ज.

[18] न शक्नोति निवारितुम् — ओ, घ; न शक्नो न निवारितुं — ख; न शक्तो न निवारितुम् — छ, ज.

[19] तमद्याध्यायिनां — ओ.

[ प्राणायामः[1] ]

[2]प्राणो वायुरिति ख्यातः [3]स च संसारवर्त्मनि ॥१०॥
चैतन्येन सहैकस्मि[4]न्नविभागेन लक्ष्यते ।
[5]तद्गतेः [6]संनिरोधो यः प्राणायामः स उच्यते ॥११॥
सोऽप्यस्मिंस्त्रिविधः प्रोक्तः [7]शास्त्रे वस्तुबलोत्कटे ।

[ [8]चत्वार्यासनानि ]

चतुर्णामासनानां तु [9]समभ्यस्यैकमादरात् ॥१२॥
ततः [10]समाधौ [11]योग्यः स्यान्नान्यथा मनिपुङ्गव ।

---

[1] प्राणः प्रागुदितो वायुरायामोऽस्य प्रखेदनम् ।
प्रेरणाकृष्टिसंरोधलक्षणः क्रतुदोषनुत् ॥
प्राणनादिवृत्तिभेदादेकस्यापि वायोः प्राणापानादिपञ्चभेदत्वं तद्वृत्तयश्च विद्यापादे प्रदर्शिताः । तादृग्विधस्य तस्य वायोः खेदनं स्वातन्त्र्याभावादाधिक्येन बहिःप्रेरणम्, तस्यैव चान्तस्तथाकर्षणं संरोधश्च कुम्भीकरणं रेचनप्रवेशनविरामः एवंलक्षणं यत्प्राणादीनां प्रखेदनं, स प्राणायामः । क्रतुशब्देनेन्द्रियाणि संकल्पो वा, तेषां दोषाः विहिताननुष्ठाननिषिद्धाचरणकृताः, तान् नुदत्युपशमयतीति तद्दोषनुत् ।
(मृगेन्द्रे, योगपादे श्लो. ४ तदीया वृत्तिश्च) ;
प्राणः स्वदेहजो वायुरायामस्तन्निरोधनम् ।
उत्तमाधममध्यत्वात्त्रिधायं प्रतिपादितः ॥
(कूर्मपुराणे उत्तरार्धे ११.३०उ०, ३१पू०) ;
प्राणः स्वदेहजो वायुर्यमस्तस्य निरोधनम् ।
त्रिधा द्विजैर्यमः प्रोक्तो मन्दो मध्योत्तमस्तथा ॥
प्राणापाननिरोधस्तु प्राणायामः प्रकीर्तितः ।
(लिङ्गपुराणे पूर्वार्धे ८.४५, ४६पू०) ;
प्राणः स्वदेहजो वायुस्तस्यायामो निरोधनम् ।
(शिवमहापुराणे वायवीयसंहितायां उत्तरभागे ३७.२१ पू०; अग्निपुराणे ३७३.६उ.)

[2] 'प्राणो जीवसमाश्रितः' । (सार्धत्रिशतिकालोत्तरे १०.८पू) ; प्राणे — ओ.

[3] सव संसार० — ओ; सर्वसंसारि — छ; सवसंसारि० — ज.

[4] ०न्नविना भाग लक्ष्यते — ओ; ०न्नविभङ्गो न लक्ष्यते — ख, घ; ०न्न विभागो न लक्ष्यते — छ, ज.

[5] तद्गते — च, छ, ज.

[6] संनिरोधस्तु — ओ; संनिरोधे यः — च.

[7] शास्तु वस्तु० — ओ; शास्त्रवस्तु० — ख, घ, छ, ज.

[8] 'बद्धवासनं यथाभीष्टं स्वस्तिकं पद्ममेव वा ।
अर्धचन्द्रं च वीराख्यं योगपट्टप्रसारितम् ॥
पर्यङ्कं च यथासंस्थमासनाष्टकमुच्यते ।"
(किरणे योग० १.४उ०, ५) ;
'गोमुखं स्वस्तिकं चैव पद्मं चैवार्धचन्द्रकम् ।
वीरयोगासनं चैव षड्विधं चासनं स्मृतम् ॥'
(सुप्रभेदे योग ३.५७उ, ५८पू०) ;
'स्थिरसुखासनम्' (योगसू० २.४६; )
'तद्यथा पद्मासनम्, वीरासनम्, भद्रासनम्, स्वस्तिकम्, दण्डासनम्, सोपाश्रयम्, पर्यङ्कम्, क्रौञ्चनिषदनम्, हस्तिनिषदनम्, उष्ट्रनिषदनम् समसंस्थानम्, स्थिरसुखम्, यथासुखम् चेत्येवमादीनि ।' (योगसू० २.४६, व्यासभाष्यम् ।)

[9] अभ्यसैकं स्वमादरात् — ओ; ह्यन्यस्यैकं समादरात् — ख, घ, छ, ज.

[10] समाधि० — ओ, च.

[11] योगः — ख; जयेगा — छ; जयेग्या — ज.

[1]पर्यङ्कं कमलं भद्रं स्वस्तिकं [2]चाचलं दृढम् ॥१३॥
[3]बद्ध्वा प्रागेव विधिवत्करणं[4] चाप्यनिन्दितम्[5] ।
कृत्वा [6]जयेद्विधौ [7]प्राणान्यज्जयान्निर्जितं जगत् ॥१४॥

[ [8]पर्यङ्कासनम् ]

[9]पर्यङ्कं योगपट्टेन बध्नीयात्पृष्ठयोगतः ।
[10]आकुञ्च्य जानुनी सम्यक्पादं [11]कृत्वा तु दक्षिणम् ॥१५॥
बाह्यतो [12]वामजङ्घाया [13]वामं सव्योर्ध्वतो बहिः ।
[14]किंचिद्विनिर्गतं कृत्वा [15]तिष्ठेदुन्नाम्य वै कटिम् ॥१६॥
पर्यङ्कमिति विख्यातमासनं योगसिद्धिदम् ।

[ [16]कमलासनम् ]

[17]भूपृष्ठे सुसमे [18]रम्ये विनिवेश्य समाधिना ॥१७॥
[19]दक्षिणोरुगतं वामं [20]पादं वामोरुसंस्थितम् ।
[21]दक्षिणं तु समाविध्य तज्जङ्घे तु परस्परम् ॥१८॥
[22]एतद्धि कमलं नाम [23]विधावासनमुत्तमम् ।

---

[1] पर्यङ्ककमलं — ओ.

[2] चार्धचन्द्रकम् — ओ; वा चलं दृढम् — च; चालकं दृढम् — ज.

[3] लब्ध्वा — ओ.

[4] ०कारणं — ओ, च;
'जिह्वां तु तालुके योज्य किंचिदूर्ध्वं न संस्पृशेत्
ईषत्प्रसार्य वक्त्रं तु किंचिदोष्ठेन संस्पृशेत् ।
दन्तपङ्क्तिस्तथैवेह दृक् चाधोर्ध्वविवर्जिता ॥
कायं समुन्नतं कृत्वा करणं दिव्यमुच्यते ।
(योगसारे पृ० १६८).

[5] चास्य निर्मितम् — च; चाप्यनिर्मितम्–छ, ज.

[6] विधौ जयेत् — ख, घ, छ, ज.

[7] प्राणाद्यज्ञया निर्जितं — ओ; प्राणं लज्जया निर्मितं—ख, घ, छ, ज; प्राणां यज्जया०–च;
'मरुज्जयो यस्य सिद्धः सेवयेत्तं गुरुं सदा ।
गुरुवक्त्रप्रसादेन कुर्यात्प्राणजयं बुधः ॥'
(योगशिखोपनिषत् १८०).

[8] 'जानुप्रसारितबाहोः शयनं पर्यङ्कः'
(योगसू० २.४६ भाष्यव्याख्या).

[9] पर्यङ्ककमलं योगी — ओ.

[10] आक्रन्त्य — ओ.

[11] कृत्वा नु — घ, छ, ज.

[12] वाम जंघेया — ओ; वामजंघायां–ख, घ, छ, ज.

[13] वामसंख्योर्ध्वतो–ओ; वामं सव्योर्ध्वगं बहिः–च.

[14] किंचिन्निर्गतं — ओ.

[15] सन्निष्ठेन्ना वै — ओ; संतिष्ठे नान्य वै कटिः — ख, घ; संतिष्ठोन्नान्य वै कटिः— छ, ज.

[16] 'न्यसेद्द्विगुणमन्योन्यं पादमेकं तथेतरम् ।
पद्ममेवं समाख्यातं'
(किरणे योग० १.७);
'ऊरूपरितले न्यस्त्वा पद्मासनमिहोच्यते'
(सुप्रभेदे योग० ३.६०उ०);

[17] हृत्पृष्ठे — ख, घ, छ, ज.

[18] भद्रे — ओ, ख, घ, छ, ज.

[19] दक्षिणे कुरु तं वामं — ओ; दक्षिणे . . वामं — ख, घ, छ, ज.

[20] स्वादं वामारुसंस्थितम् — ओ; पादोपरिस्थितम् — ख; पादोपरिसंस्थितम्–घ, छ, ज.

[21] दक्षिणस्तु — ख, घ, छ, ज.

[22] एतत्सिद्धिकरं नाम — ओ.

[23] विधवासन — ख, घ.

[ भद्रासनम्[1] ]

**[2]पर्यङ्कवत्स्थितं भद्रं किं तु जङ्घे [3]नियम्य तु ॥१९॥**
**[4]पादयोरुपरि स्थाप्य [5]भद्रमेतत्प्रकीर्तितम् ।**

[ स्वस्तिकासनम्[6] ]

**संकोच्य[7] वामपादं तु [8]तत्पार्ष्णि तु [9]स्फिचावधिम् ॥२०॥**
**[10]कृत्वाधो [11]दक्षिणस्येत्थं [12]धरण्यां जानुमण्डलम् ।**
**[13]सव्यं कृत्वोत्तरं पादं वामजङ्घोरुपीडितम् ॥२१॥**
**[14]स्वस्तिकं नाम विख्यातं चतुर्थमिदमासनम् ।**

[ [15]करणम् ]

**करणं च प्रवक्ष्यामि यथावत्तन्निबोध मे ॥२२॥**
**[16]उभयोर्जङ्घयोर्मध्ये हस्तावानीय[17] तिर्यगौ[18] ।**

---

[1] 'गुल्फौ तु वृषणस्याधः सीवन्याः पार्श्वयोःक्षिपेत् । पादपार्श्वे तु पाणिभ्यां दृढं बद्ध्वा सुनिश्चलम्॥ भद्रासनं भवेदेतत्सर्वव्याधिविषापहम् ।'
(शाण्डिल्योपनिषत् १.३.८);
पादतले वृषणसमीपे संपुटीकृत्य तस्योपरि पाणिकच्छपिकां कुर्यात् तद् भद्रासनम् ।
(योगसू० २.४६ भाष्यव्याख्या)

[2] पर्यङ्कावस्थितं — ओ.

[3] नियाम्य — ओ, ख, घ, छ, ज.

[4] पदयोरुपरि — ओ, ख.

[5] भद्रमेति प्र० — ओ.

[6] 'द्विगुणं पृष्ठतो नीत्वा वामपादं तु दक्षिणम् । तिर्यक्स्थं द्विगुणं कृत्वा जङ्घालग्नं च स्वस्तिकम् ॥'
(किरण० योग० १.६);
'उभे कृत्वा पादतले जानूर्वोरन्तरेण हि । समासीतात्मनः प्रोक्तमासनं स्वस्तिकं परम् ॥'
(कूर्मपु० उपरिभागे ११.४६)

[7] संकोच० — ओ.

[8] तत्पार्ष्णस्वविचारयेत् — ओ; पार्ष्ण्यस्थि स्फिचावधेः — ख; तत्पार्ष्ण्यस्थि स्फिचावधेः — घ, छ, ज.

[9] स्फिजावधिम् — च.

[10] कृत्वाथो — ओ; कृत्वा वा – च; कृत्वायो–छ.

[11] दक्षिणस्तैद्धि — छ.

[12] धारण्यात्मानु० — ओ.

[13] वामं कृत्वेतरं पादं — च.

[14] स्वस्ती नाम च वि० — ख, घ, छ, ज.

[15] 'ऋजुग्रीवशिरोवक्षा नासाग्राहितदृग्द्वयः । पार्ष्णिभ्यां वृषणौ रक्षन्दन्तैर्दन्तानसंस्पृशन् ॥ विष्टब्धदेहो दन्ताग्रे जिह्वामादाय सुस्थितः ।'
(मृगेन्द्रे योग० १८उ०, १९);
'उपविश्यासने युञ्ज्याद्योगमात्मविशुद्धये । समकायशिरोग्रीवं धारयन्नचलं स्थिरः ॥ संप्रेक्ष्य नासिकाग्रं स्वं दिशश्चानवलोकयन् । पार्ष्णिभ्यां वृषणौ रक्षंस्तथा प्रजननं पुनः ॥ ऊरुभ्यामुपरि स्थाप्य बाहू तिर्यक्प्रयत्नतः । दक्षिणं करपृष्ठं च न्यसेद्वामतलोपरि ॥ उन्नम्य शनकैर्वक्त्रं मुखं विष्टभ्य चाग्रतः ।
(अग्निपु० ७३३.३–६पू०)

[16] द्वयोर्जङ्घानयोर्मध्ये — ख, घ, छ, ज; द्वयोर्जघनयोर्मध्ये — च.

[17] हस्तं वानय — ख, घ, छ, ज.

[18] 'तिर्यञ्चौ' इति साधु; किं तु छन्दोभङ्गो भवति; 'तिर्यगौ' इत्यार्षः प्रयोगः ।

[1]कृत्वोत्तानौ समौ विद्वान्वामस्योपरि दक्षिणम् ॥२३॥
न्यसेत्करं [2]यथाङ्गुल्यो [3]दक्षिणा वाममूलतः ।
किंचिदाकुञ्चिताङ्गुष्ठौ[4] कर्तव्यौ[5] नियतात्मना[6] ॥२४॥
[7]उरश्चोन्नम्य [8]विततं कृत्वा [9]बाहू परिश्लथौ ।
पृष्ठमाकुञ्चये[10]त्स्कन्धदेश[11]मुन्नमयेत्सुधीः ॥२५॥
[12]निष्कम्पां [13]सुदृढामृज्वीं [14]नातिस्तब्धां न कुञ्चिताम्[15] ।
[16]ग्रीवां विधारये[17]द्यत्नाच्छिरः कार्यं [18]समं [19]सदा ॥२६॥
[20]द्यावापृथिव्या[21]भिमुखो दृङ[22]नासाग्रसमाश्रया ।
किंचित्सं[23]मीलयेन्नेत्रे [24]दन्तैर्दन्तान्न संस्पृशेत् ॥२७॥
तालु[25]मध्यगतेनैव जिह्वाग्रेण महामुने ।
[26]करणं योगमार्गोक्तं[27] यथावत्परिविस्तरात् ॥२८॥
एवमादौ [28]सुनिष्कम्पकरणेन महामुने ।
संस्थितस्य यथान्यायं [29]प्राणायामोऽथ वर्ण्यते ॥२९॥

---

[1] कृतोत्तानौ — ख, घ, छ, ज.
[2] तथाङ्गुल्या — ओ; यथाङ्गुल्यां — ख, घ, छ, ज; यथाङ्गुल्यौ — च.
[3] दक्षिणो — ख घ; दक्षिणे — च छ ज.
[4] ०ताङ्गुष्ठं — ओ.
[5] कर्तव्यो — ओ.
[6] ०तात्मनः — ओ, घ, छ; प्रयतात्मना — च; निर्वृतात्मनः — ज.
[7] उरश्चोन्नाम्य — च; परतोन्नम्य — छ, ज.
[8] चिदितकृत्वा — ओ; विनतं कृत्वा — च; वितत कृत्वा — छ, ज.
[9] बाहु परिश्लथे — ख, घ; बाहु परिश्वथे — छ; बाहू परश्वथे — ज.
[10] ०त्स्कन्ददेश० — ओ; ०त्स्कन्धं देश० — ख, घ, छ, ज.
[11] ०मुन्नामये — ख, घ, च, छ, ज.
[12] निःकम्पां — च.
[13] सुदृढां मृद्वीं — ख, घ.
[14] नातिस्तस्थन्न० — ओ; नातिस्कन्धां — ख, घ, छ; नातिसंधानकुञ्चिताम् — ज.
[15] कुञ्चितम् — ओ.
[16] ग्रीवं — ओ.
[17] ०द्यत्नाद्धीरः कार्यं — ओ.
[18] समः — ओ.
[19] यदा — ख.
[20] यावत्पृथि० — ओ.
[21] ०भिमुद्री — ओ; ०भ्रूमुखो — ख.
[22] नासाग्रमाश्रितः — ओ; नासाग्रसमाश्रयः — ख, घ, छ, ज; दृष्ट्वा साग्रसमाश्रितः — च.
[23] ०मीलयन्नेत्रे — च; ०मीलयन्तत्रे — छ; ०मीलयं तेत्रे — ज.
[24] दन्ते दन्तान् — ओ; दन्तैर्दन्तं — ख.
[25] ०मध्ये — ओ, ख, घ, छ.
[26] कारणं — ओ.
[27] योगमार्गोत्थं — च.
[28] सुनिष्कम्पं कारणेन — ओ; सुनिष्कम्पः करणेन — च.
[29] प्राणो यामो — ख; प्राणायामोपवर्ण्यते —च.

[ [1]पूरकः ]

आपूरयेत्समाकृष्य [2]बहिर्वायुं स्वकां तनुम् ।
याव[3]त्सर्वाङ्गिको वेगा[4]त्स्वयमेवाचलायते ॥३०॥
तावत्सं[5]पूरको ज्ञेयः प्राणायामविधौ सदा ।

[ [6]कुम्भकः ]

आपूरितोऽचलो भूत्वा बृहत्कुक्षिस्तु कुम्भवत् ॥३१॥
आपूरितो[7]ऽम्भसा तिष्ठेद्यावच्छक्तिबलं [8]ध्रुवम् ।
स कुम्भक इति ख्यातः प्राणा[9]यामोऽतिनिश्चलः ॥३२॥

[ [10]रेचकः ]

आपादतलतो[11] भूयः समाकृष्य शनैः शनैः ।

---

[1] 'पूरणात्पूरको वापि' (किरणे योग० १.१६उ०); 'पूरणात्पूरकं ततः' (सुप्रभेदे-योग० ३.६७.उ०); 'बाह्येन वायुना मूर्तेर्यथाशक्ति प्रपूरणम्। पूरकः स तदभ्यासात्सुगुर्वपि विकर्षयेत्।' (मृगेन्द्रे योग० २०उ०, २१पू०); 'उच्चारयेत्तु प्रणवं स्वरेणैकेन योगवित्। उदरं पूरयित्वा तु वायुना यावदीप्सितम्॥ प्राणायामो भवेदेष पूरको देहपूरकः।' (सार्धत्रि० ११.११उ०, १२)

[2] बहिर्वायोः — ओ, ख, घ, छ, ज.

[3] ०त्सर्वाङ्गिकं — ओ, ख, घ, च.

[4] ०त्समाधे वाचले चले — ओ; ०त्स्वयमेवाचलाचले — ख, घ, छ, ज.

[5] ०पूर्णकं ज्ञेयं — ओ.

[6] 'यः कुम्भस्तन्निरोधकः' (किरणे योग० १.१६उ०); "कुम्भकं तु निरोधेन' (सुप्रभेदे योग० ३.६८पू०); 'त्यागसंग्रहणे हित्वा निरोधः कुम्भकः स्मृतः। रोधशक्तिस्तदभ्यासाद्व्यक्तिमेत्यनिवारिता॥' (मृगेन्द्रे योग० २१उ०, २२पू०); 'पिधाय सर्वद्वाराणि निश्वासोच्छ्वासवर्जितः। संपूर्णकुम्भवत्तिष्ठेत्प्राणायामः स कुम्भकः॥' (सार्धत्रि० ११.१३).

[7] ०ऽम्भस्तिष्ठेत — ओ; ०ऽम्भसस्तिष्ठेद् — ख, घ, छ, ज.

[8] वयः — ओ.

[9] ०यामो विनिश्चलः — ओ; ०यामोऽथ निश्चलः — ख, घ, छ, ज.

[10] 'रेचनाद्रेचकः प्रोक्तः' (किरणे योग० १.१७पू०); 'रेचनाद्रेचकं प्रोक्तं' (सुप्रभेदे योग० ३.६७उ०); 'रेचयेच्छक्तिपर्यन्तं नासापुटेन मारुतम्। स रेचकस्तदभ्यासाद्वेधविक्षिप्तकर्मसु॥ क्रमशः शक्ततामेति विकृष्टविषयेष्वपि।' (मृगेन्द्रे योग० २०, २१पू०); 'मुञ्चेद्वायुं ततश्चोर्ध्वं श्वासेनैकेन योगवित्। निश्वासयोगयुक्तस्तु यावदूर्ध्वं स रेचयेत्॥ रेचकस्त्वेष विख्यातः प्राणसंशयकारकः।' (सार्धत्रि० ११.१४,१५पू०); नासिकापुटमङ्गुल्या पीड्यैकमपरेण तु। औदरं रेचयेद्वायुं तथायं रेचकः स्मृतः॥ (शिवपु० वायुसं० उत्तरभागे ३७.२२.)

[11] ०तलयो — ओ.

नासिका[1]विवराग्राद्य [2]उच्छिन्नः सोर्ध्ववर्त्मना ॥३३॥
करोति शिथिलाङ्गानि नाडीरन्ध्राणि वेगवान् ।
निर्यातिऽशेषपवने शान्तत्वेन [3]जितात्मनः ॥३४॥
यो [4]भावः सा परावस्था [5]रेचकस्य वशानुगा ।

[ [6]धारणा ]

---

[1] ०विवराग्राद्या — ओ;
०विवराग्राह्याच्छिन्नोसश्चोर्ध्व० — ख;
०विवराग्राद्याच्छिन्नोसश्चोर्ध्व० — घ;
०विवराद्ग्राह्या विनिर्णेयार्ध्व० — च;
०विवराग्राद्यछिनोसश्चोर्ध्व० — छ, ज.

[2] 'ओ' मातृकायां '३३ श्लोकस्य चतुर्थपादा-दारभ्य '५२' प्रथमपादान्तभागो नोपलभ्यते

[3] स्थितात्मनः — च.

[4] भावधा परा०— ख, घ, छ, ज; भावः सपरा–च.

[5] रेचकस्यावशानुगः — ख, घ, छ, ज.

[6] संसिद्धयोगिनो मुख्यं धारणानां चतुष्टयम् ।
वह्निसौम्यामृता बाह्याः पराख्या धारणास्तु ताः
(किरणे योग० १.१८उ०, १९पू०);
स्थित्यर्थो धारणाशब्दः स्थानार्थोऽप्युपचारतः ।
स्थानं प्राथमिकस्येमान्यवन्यादीनि नेतरत् ॥
तानि हेमहिमज्योतिःकृष्णस्वच्छानि रूपतः ।
वेद्यर्धमण्डलत्र्यश्रवृत्तपद्माकृतीनि तु ॥
स्थैर्याप्यायनविप्लोषप्रेरणाशून्यताप्तये ।
भवन्ति वज्रकज्वालाबिन्दुशून्यान्वितानि तु ॥
बाधकान्यनुवर्तीनि मध्यस्थान्यवगत्य च ।
योगी व्यस्तसमस्तानि बिभृयादिष्टसिद्धये ॥
क्व देशे धारणारूपं चिन्तनीयं विपश्चिता ।
किं च व्यस्तसमस्तानां फलं ब्रूहि सुरेश्वर ॥
हृदि चेतसि विक्षिप्ते धारयेत्क्षितिमर्थवित् ।
जलं पिपासतः कण्ठे मन्देऽग्नौ जठरेऽनलम् ॥
प्राणादिवृत्तिसिद्धयर्थं हृत्कण्ठादिषु मारुतम् ।
विषाद्यभिभवे व्योम तेषु यत्रोपयोगवत् ॥
(मृगेन्द्रे योग० ३५उ०–४२पू०);
धारणा मनसो ध्येये संस्थितिर्ध्यानवद्द्विधा ।
मूर्तामूर्तहरिध्यानमनोधारणतो हरिः ॥
यद् बाह्यावस्थितं लक्ष्यं तस्मान्न चलते मनः ।
तावत्कालं प्रदेशेषु धारणा मनसि स्थितिः ॥
कालावधिपरिच्छिन्नं देवे संस्थापितं मनः ।
न प्रच्यवति यल्लक्ष्याद् धारणा साभिधीयते ॥
यस्मिन्यस्मिन्भवेदङ्गे योगिनां व्याधिसंभवः ।
तत्तदङ्गं धिया व्याप्य धारयेत्तत्त्वधारणम् ॥
आग्नेयी वारुणी चैव ऐशानी चामृतात्मिका
(अग्निपु० ३७५. १–३; ६,७पू०);
धारणा नाम चित्तस्य स्थानबन्धः समासतः ।
स्थानं च शिव एवैको नान्यद्दोषत्रयं यतः ॥
कालं कं चावधीकृत्य स्थानेऽवस्थापितं मनः ।
न तु प्रच्यवते लक्ष्याद्धारणा स्यान्न चान्यथा ॥
मनसः प्रथमं स्थैर्यं धारणातः प्रजायते ।
तस्माद्धीरं मनः कुर्याद्धारणाभ्यासयोगतः ॥
(शिवपु०वायुसं०उत्तर० ३७.४८उ०–५१पू०)
अथातः संप्रवक्ष्यामि धारणाः पञ्च सुव्रत ।
देहमध्यगते व्योम्नि बाह्याकाशं तु धारयेत् ।
प्राणे बाह्यानिलं तद्वज्ज्वलने चाग्निमौदरे ।
तोयं तोयांशके भूमिं भूमिभागे महामुने ॥
हयरावलकाराख्यं मन्त्रमुच्चारयेत्क्रमात् ।
धारणैषा परा प्रोक्ता सर्वपापविशोधिनी ॥
जान्वन्तं पृथिवी ह्यंशो ह्यपां पाय्वन्तमुच्यते ।
हृदयांशस्तथाग्न्यंशो भ्रूमध्यान्तोऽनिलांशकः ॥
आकाशांशस्तथा प्राज्ञ मूर्धांशः परिकीर्तितः ।
ब्रह्माणं पृथिवीभागे विष्णुं तोयांशके तथा ॥
अग्न्यंशे च महेशानमीश्वरं चानिलांशके ।
आकाशांशे महाप्राज्ञ धारयेत्तु सदाशिवम् ॥
(दर्शनोपनिषदि ८.१–६);
नाभिहृत्तालुकण्ठस्थे विवृते मरुति क्रमात् ।
चतस्रो धारणा ज्ञेयाःशिख्यम्ब्वीशामृतात्मिकाः ॥
यद्यत्र चिन्तयेद्द्रव्यं तत्तत्सर्वगतं स्मरेत् ।
बिन्दुनादात्मकं रूपमीशानीं धारणां श्रितम् ॥
अमृतायाः स्मरेदिन्दुं कालत्यागोक्तवर्त्मना ।
धारणाभिरिहैताभिर्योगी योगपथे स्थितः ॥

योगिनो [1]योक्तुकामस्य [2]स्वोपकाराय संस्थिता ॥३५॥
[3]धारणा विधृताक्षस्य मनसो [4]योपजायते ।
वायोरपि समायोगात्सुसमिद्धात्मवर्तिनाम्[5] ॥३६॥
[6]चतुर्धा भेदमापन्ना वायु[7]नाक्षभृतां सह ।
आग्नेयी वारुणी चैव ईशानी [8]चामृता परा ॥३७॥
चतस्रो धारणाः [9]सिद्धाः [10]कर्मभेदेन सुव्रत ।

[ [11]आग्नेयी ]

ज्योतिर्ज्योतिःपदं योज्यं हुंफडन्तं समन्ततः ॥३८॥
रश्मिभिर्विकचं दिव्यं [12]शूलाग्रं [13]वेगवच्छुभम् ।
[14]पादाङ्गुष्ठाग्रविवरे तेन कुर्वीत साधकः ॥३९॥
आत्मानं हृत्प्रदेशात्तु[15] [16]विनिगृह्य[17] तु मुद्रया ।
योजयेत्परमे तत्त्वे [18]बिन्द्वाख्ये ह्यमृतात्मके ॥४०॥
ऊर्ध्वगाभिः सुशुभ्राभिः शिखाभि[19]रनलो महान् ।

---

हेयं वस्तु परित्यज्य यायात्पदमनुत्तमम् ।
त्रिवेदद्वीन्दुसंख्यातसमुद्घातास्त्विमा मताः ॥
एताभिरप्यधोऽप्युक्तं फलं प्राप्नोत्यनुत्तमम् ।
(मालिनीविजयोत्तरे १७.१३उ–१७).

[1] योक्तृ० — ख, घ.
[2] सोपकारस्य — ख, घ, छ, ज.
[3] धारणाम्बुवृताक्षस्य — च.
[4] योग जायते — च.
[5] ०वर्त्मना — च.
[6] चतुरा — च.
[7] ०नाक्षमृता — ख; ०नाक्षमृतां — घ, छ, ज; ०नाकुभृता — च.
[8] चामृती — ख, घ, छ, ज.
[9] स्निग्धाः — ज.
[10] करभेदेन — ख, घ; क... भेदेन — छ, ज.
[11] 'प्रथमा धारणाग्नेयी नाभिमध्ये तु धारयेत् ।
तस्यां वै धार्यमाणायां पापं निर्दहति क्षणात् ॥'
(रौरवे विद्या० ७६;)
'ओं ज्वलद्दीप्तसहस्रे ज्वालामालिनि वस स्वैरं दीप्य दीप्य पशुपतिः । आग्नेयीधारणामन्त्रः ।'
(रौरवे विद्या० पृ० १८३);
'मूलं रेफपुटान्तस्थं पञ्चमस्थं च बिन्दुगम् ।
चलार्णसंयुता दीप्ता धारणा पावका मता ॥
सर्वोद्धारेऽरिहिंसादिपापः प्रागेव संक्षयेत् ।
त्रिकोणमण्डलस्थोऽयं कूटो वह्निः स्वयं भवेत् ॥
वायुवेष्टितसर्वाङ्गो बीजदाहादिकृत्परः ।'
(किरणे योग० १.१९उ०–२१);
'साग्निःशिखा फडन्ता च विष्णोः कार्या द्विजोत्तम
नाडीभिर्विकटं दिव्यं शूलाग्रं वेधयेच्छुभम् ॥
पादाङ्गुष्ठात्कपालान्तं रश्मिमण्डलमावृतम् ।
तिर्यक्चाधोर्ध्वभागेभ्यः प्रयान्त्योऽतीव तेजसा ॥
चिन्तयेत्साधकेन्द्रस्तं यावत्सर्वं महामुने ।
भस्मीभूतं शरीरं स्वं ततश्चैवोपसंहरेत् ॥
शीतश्लेष्मादयः पापं विनश्यन्ति द्विजातयः ।'
(अग्निपु० ३७५.७उ०–१०).
[12] शूलानां — च.
[13] वेगतः — ख; वेगवः – 'ख' पाठान्तरम्, छ.
[14] पादाङ्गुल्यग्र० — च.
[15] ०देशन्त — ख; ०देशान्तु — घ, छ, ज.
[16] पूर्ववद्विनिगृह्य तु — च.
[17] ०गृह्यं — ख, घ, छ, ज.
[18] विद्याख्ये — ख, घ; विद्याख्यो — छ; विद्यास्या — ज.
[19] ०रनिले महत् — छ; ०रनिलो महात् — ज.

स्फुरत्सूर्यायुतप्रख्य[1]स्तडित्पुञ्जचयोपमः ॥४१॥
[2]प्रदहंस्तु सुदीप्तात्मा कार्याणि [3]करणानि च ।
यावत्प्रद्योतयन्विश्वं[4] [5]पथा स्वोद्घटितात्मना ॥४२॥
नाभिदेशमनुप्राप्तं तत्तेजोऽमितविक्रमम् ।
[6]धारयेद्योगयुक्तात्मा [7]शिखाज्वालाकुलोज्ज्वलम् ॥४३॥
[8]विवरेभ्यः [9]समस्तेभ्यो ह्यालोमान्तेभ्य [10]उल्बणम् ॥
[11]तिर्यक्चाधोर्ध्वमार्गेभ्यः [12]प्रयान्त्यातीव तेजसा ॥४४॥
[13]चिन्तयेत्साधकेन्द्रस्तु यावत्सर्वं महामुने ।
[14]भस्मीभूतं शरीरं [15]तु ततश्चैवोपसंहरेत् ॥४५॥
अनया योगिनः [16]पापशीतश्लेष्मादयः क्षणात् ॥
[17]विघ्नाश्च ध्वंसमायान्ति ये चान्ये दुष्टजातयः ॥४६॥
धारयेत्प्रत्ययार्थं [18]वा निर्बीजाग्निविधावपि[19] ॥
शत्रोर्वा [20]मारणे [21]दाहे [22]श्रेयसे [23]चात्मनः सदा ॥४७॥
[24]तुलारोहविधाने च [25]प्रयोगार्थे बलोत्कटा ॥
[26]वेगवद्भिः [27]करालास्त्रैर्मयूखैः संप्रयोजिता[28] ॥४८॥
करोति [29]विगतक्लेशं दग्धपापतनुं नरम्[30] ।

---

[1] ०स्तटित्पुञ्ज० — ख, घ, छ, ज.
[2] प्रदेहेऽप्यन्ते दी० — ख; प्रदहन्तेन दी० — घ, छ, ज; प्रददाह सुदीप्तात्मा — च.
[3] कारणानि — ख.
[4] यावत्प्रद्योतयद्विश्वं — ख; यावत्प्रद्योतयेद्विश्वं — छ, ज.
[5] 'ख, घ, छ, ज' मातृकासु '४२' चतुर्थपादस्य '४३' प्रथमद्वितीयपादयोश्च स्थाने 'पथाप्तमितविक्रमः' इत्येक एव पादो दृश्यते।
[6] धारयेद्याग० — ख; धारयेन्योग० — घ.
[7] शिखामालाकुलोज्ज्वलाम् — च.
[8] ववरेभ्यः — ख.
[9] स..र्थेभ्यो — ख.
[10] उत्वणात् — ख, घ; उद्वणात् — छ, ज.
[11] तिर्यकच्छासोर्ध्व० — ख; तिर्यक् श्वासोर्ध्व० — घ, छ, ज
[12] प्रयोज्यातीव — ख, घ, छ, ज; प्रयान्त्योऽतीव — च.
[13] विचित्र(न्त ?) येत् साधकेन्द्रो — च.
[14] भस्मभूतं — छ, ज.
[15] स्वं — च.
[16] पापं जितश्लेष्मा० — ख, घ, छ; पापः शीतः श्ले० — च.
[17] विघ्नाश्चोर्ध्वं समा० — ख, घ, छ, ज.
[18] तु — ख.
[19] ०जा..विधा अपि — ख; ०जानि विधा अपि — घ, छ, ज.
[20] मरणे — ख, घ, छ, ज.
[21] दाहःश्रे० — च.
[22] श्रयसे — घ.
[23] वात्मनः — च.
[24] तुलापुरुषविधाने वा — ख, घ; तुल्या पुष्टविधाने वा — छ; तुलापृष्टविधाने वा — ज.
[25] प्रयोगार्थो बलोत्कटः — ख, घ, छ, ज; प्रयोगाध्वगमोत्कटा — च.
[26] वेगवद्भंकरा स्वग्रै० — छ; वेगवद्भंकुराग्रै० — ज.
[27] करास्वाग्रै० — ख, घ.
[28] ०योजितः — ख, घ, च, छ, ज.
[29] लिङ्गतः क्लेदं — ख; लिङ्गतः क्लेशं — घ; लिङ्गतक्लेशं — छ, ज.
[30] तनुर्नरः — ख, घ, छ; पापं तनुर्नरः — ज.

[ [1]वारुणी ]

[2]प्राक्पदेनामृतं [3]तत्त्वं प्रतिष्ठोत्कृष्टवर्चसम् ॥४९॥
[4]ध्यायेदाविद्धचित्तात्मा[5] पयोभूतेन वर्त्मना[6] ।
संतताभिरमोघाभिरधोवक्त्राभिरादरात् ॥५०॥
[7]स्फुरच्छीकर[8]संपातप्रभूतहिमगादिभिः[9] ।
[10]धाराभिरखिलं विश्व[11]मापूर्य तद्विचिन्तयेत् ॥५१॥
[12]ब्रह्मरन्ध्राब्जसंक्षोभाद्[13]यावद्धृदयगोचरम्[14] ।
सुषुम्नान्तर्गतो भूत्वा संपूर्णेन्दुकृतालयः ॥५२॥
[15]तिष्ठेत्तावत्सुयुक्तात्मा निस्तरङ्गेण[16] वारिणा ।
[17]विप्लाव्य [18]हिम[19]संस्पर्शतोयेनामृतमूर्तिना[20] ॥५३॥

---

[1] 'हृदये धारयेद्विद्वान्सौम्यां सोमसृतां कलाम् ॥
तस्यां वै धार्यमाणायां सर्वत्राप्यायनं भवेत् ॥
(रौरवे विद्या० ७.७);
ओं श्रीं ओं नमः शिवाय प्लावय अमृताया-मृतयोनये । सत्ये सत्ये शान्तब्रह्मण्ये वरिष्ठयोगं धर धर प्लावयामृतेन । सौम्यां हृदि धारयेत् ।
(रौरवे विद्या० पृ० १८३);
हृदये धारयेत्सौम्यां सदा सोमसमाश्रये ।
आप्याययति सर्वाणि यया योगपदस्थितः ॥
(स्वायंभुवे० ३६.३ उ०, ४पू०);
पूर्वोक्तवारिसंयुक्तः सौम्ये बिन्दुयुतः स्वयम् ।
तोयमण्डलमध्यस्थः परितस्तेन वेष्टितः ॥
शान्तिपुष्टिकरी चेयमुपसर्गविसर्जनी ।
(किरणे योग० १.२२, २३पू०);
शिरो धीरं च कारं च कण्ठं चाधोमुखे स्मरेत् ।
ध्यायेदच्छिन्नचित्तात्मा भूयो भूतेन चात्मना ॥
स्फुरच्छीकरसंस्पर्शप्रभूते हिमगामिभिः ।
धाराभिरखिलं विश्वमापूर्य भुवि चिन्तयेत् ॥
ब्रह्मरन्ध्राच्च संक्षोभाद्यावदाधारमण्डलम् ।
सुषुम्नान्तर्गतो भूत्वा संपूर्णेन्दुकृतालयम् ॥
संप्लाव्य हिमसंस्पर्शतोयेनामृतमूर्तिना ।
क्षुत्पिपासाक्रमप्रायः संतापपरिपीडितः ॥
धारयेद्वारुणीं मन्त्री तुष्टचर्थं चाप्यतन्त्रितः ।
वारुणी धारणा प्रोक्ता'
(अग्निपु० ३७५.११–१५).

[2] प्राक्पदेन प्रणवेनेत्यर्थः; मतङ्ग० क्रिया.१.६० उ०; प्राक्पदेशामृत तद्वप्रकृष्टो० — छ.
[3] तत्त्वप्रकृष्टो० — ख, घ, ज.
[4] ध्यायेद्वा सिद्धवर्त्मा — ख, घ; ध्यायेध्वा सिद्धवर्त्मा — छ, ज.
[5] आविद्धचित्तः आत्मा=आविद्धचित्त आत्मा ततः संधिरार्षः ।
[6] ०भूतेन सिवत्मना — घ; ०भूतेन सवर्त्मना — छ, ज.
[7] सुरः शिखर० — ख; स्फुरः शिखर० — घ; स्फुरच्छिखर० — छ, ज.
[8] ०संपातां — ख, घ, छ, ज.
[9] ०हिमगामिभिः—च, ज; ०हिमगामभिः—छ.
[10] धारिभिरखिलं — च.
[11] ०मापूर्यन्तं विचिन्त० — ख, घ, च, छ, ज.
[12] ब्रह्मरन्ध्रान्नसं० — च.
[13] चित्तं हृदय० — ओ; यायाद्धृदयगोचरे — ख.
[14] ०गोचरे — घ, छ, ज.
[15] तिष्ठत्तावत्सुषुम्नात्मा — ओ; तिष्ठेत्यावत्सु० — छ, ज.
[16] ०रङ्गेन — ख, घ.
[17] प्रह्लाद्य — ओ, ख, घ, छ, ज.
[18] ०भिमसं० — ओ; हिमहृस्पर्श० — ख, घ, छ, ज.
[19] ०संस्पर्शात्तोये० — च.
[20] ०मूर्तिनः — छ, ज.

क्षुत्पि[1]पासाक्लमायाससंतापपरिपीडितः[2] ।
धारयेद्धारणां[3] मन्त्री [4]पुष्टयर्थं वाप्यतन्द्रितः ॥५४॥

[ [5]ईशानी ]

व्योमरूपाय शब्देन [6]कर्णिकोत्थेन वर्चसा ।
[7]प्रगुणेन सुशुभ्रेण सूक्ष्मेणातिगरीयसा ॥५५॥
मार्गेण ब्रह्मरन्ध्रान्तःसर्पिणा[8] साधकोत्तमः ।
यायाच्छिखाग्र[9]समयं [10]यत्तत्तेजोमयं शुभम् ॥५६॥
[11]तस्मिन्मनः समारोप्य [12]जगद्व्याप्याखिलं सुधीः ।
[13]तिष्ठेत्प्रसन्नचित्तात्मा शिवोऽहमिति [14]भावयेत् ॥५७॥
[15]अस्यां विधार्यमाणायां जगत्यस्मिन्द्विजोत्तम ।

---

[1] ०पासः क्लमः प्रायः . . परि० — ओ; ०पाया-क्षक्लमा० — ख; ०पासक्लमायस० — घ; ०पासाक्रमप्रायः सं० — च; ०पासान्माससं० — छ; पासात्माससं० — ज.

[2] ०परिपीडिताः — ओ; परपीडितः — छ, ज.

[3] ०द्धारणं — ओ; ०द्धारणान् — च; ०ध्वारणं — छ, ज.

[4] पुष्पार्धं चाप्य० — च; पुष्यद्धं – छ; पुष्यर्थं — ज.

[5] 'ऐशानीं धारयेन्मूर्ध्नि सर्वसिद्धिकरीं नृणाम् ।
यया प्रयान्ति वै क्षिप्रं शिवस्य परमं पदम् ॥'
(रौरवे विद्या० ७.८);
'ओं ओं श्रीयोगरूपायानाश्रिताय सर्वप्रभवे ज्योतीरूपाय नमः ठ ठ। ऐशानीं शिरसि धारयेत् ।'
(रौरवे विद्या० पृ० १८३);
'धारयेन्मूर्ध्नि चैशानीं सर्वेशानीं विचक्षणः ।
यया तु योगिनः सर्वे प्रयान्ति परमं पदम् ॥'
(स्वायम्भुवे ३६.४उ०, ५पू०);
'अकारबिन्दुसंयुक्तो नादशक्तिसमन्वितः ।
बिन्दुरक्षितसर्वाङ्गो ललाटस्थानसंश्रितः ॥
तदा तपःस्थितो योगी भवेन्मृत्युबहिष्कृतः ।'
(किरणे योग० १.२५, २६पू०);
'ऐशानीधारणां शृणु ॥
व्योम्नि ब्रह्ममये पद्मे प्राणापाने क्षयं गते ।
प्रसादं चिन्तयेद्विष्णोर्यावच्चिन्ता क्षयं गता ॥
महाभावं जपेत्सर्वं ततो व्यापक ईश्वरः ।
अर्धेन्दुं परमं शान्तं निराभासं निरञ्जनम् ॥
असत्यं सत्यमाभाति तावत्सर्वं चराचरम् ।
यावत्स्वच्छन्दरूपं तु न दृष्टं गुरुवक्त्रतः ॥
दृष्टे तस्मिन्परे तत्त्वे आब्रह्म सचराचरम् ।
प्रमातृमानमेयं च ध्यानहृत्पद्मकल्पनम् ॥
मातृमोदकवत्सर्वं जपहोमार्चनादिकम् ।'
(अग्निपु० ३७५.१५उ०–२०पू०).

[6] कर्णिको येन — ओ; कर्णिकोक्तेन — ख.

[7] प्रागुणेन तु — ओ; प्रागुणेन सु० — ज.

[8] ०रन्ध्रान्तसक्तिना — ख, घ, छ, ज.

[9] समयः=अवधिः.

[10] तत्तत्तेजो० — ज.

[11] तस्मिञ्जनसमा० — ओ.

[12] जगद्व्याप्त्या० — ओ.

[13] तिष्ठेत्प्रसाद०—ख, घ, छ, ज; चिन्तेत्प्रसन्न० — च.

[14] भावयन् — च.

[15] अनया धार्यमाणायाः — ओ; अस्यान्वा-हार्यमाणाय — ख, घ; अस्यान्वार्यमाणाय — छ, ज.

[1]संप्राप्नोत्यचिरेणैव [2]प्रभुत्वमजुगुप्सितम् ॥५८॥
धारणेयं सदा [3]धार्या [4]विश्वेशानी शिवंकरी ।

[ [5]अमृता ]

[6]सकारसंपुटस्थेन सूक्ष्मशब्देन योगयुक् ॥५९॥
कुन्देन्दुशङ्खधवलं[7] सान्द्रमत्युल्बणं[8] शुभम् ।
[9]बिन्दोर्विनिर्गतं शीतं [10]कल्लोलललितालयम् ॥६०॥
संपूर्णमण्डलं व्योम्नि [11]अमृतस्यन्दचनिन्दितम् ।
तज्ज्यो[12]त्स्नाविद्धमात्मानमुदारमनिवारितम् ॥६१॥
संपूर्णेन्दुनिभं ध्याये[13]न्मण्डलं कर्णिकोपरि ।
[14]तत्स्थं सं[15]चिन्त[16]येद्विद्वाञ्शशाङ्कायुतवर्चसम् ॥६२॥

---

[1] संप्रोप्नो० — ओ; संप्राप्तोत्य० — च; संप्रपौत्यचिरे० — छ, ज.

[2] प्रगुप्तमजु० — ख, घ; प्रागुप्तमजु० – छ, ज.

[3] धार्य — ओ.

[4] विश्वेशानि शिवंकर — ख, घ; विश्वेशाना शिवंकरी — च; विश्वेशानिवशंकर — छ; विश्वेशानिवंकर — ज.

[5] 'अमृता धारणा या तु व्यापिनी तु शिवंकरी ।
आप्याययति सर्वत्र सर्वं ज्ञानामृतेन च ॥
ओंकारपूर्विका ह्येता नाभीहृदयसंस्थिताः ।
मूर्धन्या च तथा चान्य' चामृता सर्वगा शुभा ॥'
(रौरवे विद्यापादे ७.९,१०);
'ओं नमः शिवाय अमृताय पशुतत्त्वानुग्रहकरायामृतायामृतरूपिणे अमृतीकुरु स्वाहा । अमृता सर्वव्यापिनी ।'
(रौरवे विद्या० पृ० १८३);
'अमृता धारणा या तु सा सर्वत्र व्यवस्थिता ॥'
(स्वायंभुवे ३६.५उ०);
'स एवामृतसंयुक्तः प्रणवेनोर्ध्वयोजितः ॥
बिन्दुगो बीजदाहादित्रिस्वरेण निवेष्टितः ।
अमृतेयं सदा मूर्ध्नि व्यापिनी जीवकाङ्क्षया ॥'
(किरणे योग० १.२३.उ०, २४);
'विष्णुमन्त्रेण वा कुर्यादमृतां धारणां वदे ।
संपूर्णेन्दुनिभं ध्यायेत् कमलं तन्त्रिमुष्टिगम् ॥
शिरःस्थं चिन्तयेद्यत्नाच्छशाङ्कायुतवर्चसम् ।
संपूर्णमण्डलं व्योम्नि शिवकल्लोलपूर्णितम् ॥
तथा हृत्कमले ध्यायेत्तन्मध्ये स्वतनुं स्मरेत् ।
साधको विगतक्लेशो जायते धारणादिभिः ॥'
(अग्निपु० ३७५.२०उ०–२२).

[6] समानस्य पुट० — ओ.

[7] ०धवला — ओ.

[8] ०मत्युद्बणं — ओ, ख, घ, छ, ज.

[9] बिन्दोर्विनिधरं चित्तं — ओ; बिन्दोविकिञ्छतं — ख; बिन्दोर्वि . . किञ्चितं — घ; बिन्दोर्विनिर्किचितं — छ, ज.

[10] कल्लोळं ललितो वयम् — ओ; कल्लोलं ललितो लयम् — ख, घ, छ, ज.

[11] सामृतस्य अनिन्दितः — ख; सामृतस्य त्वनिन्दितः — घ, छ, ज; स्वामृतस्थमनिन्दितम् — च.

[12] ०त्स्नाव . . त्मान० — ओ; ०त्स्नापिबिडमात्मामुदवारमनि० — ख, घ; ०त्स्नापि विडमां मदचार निवा० — छ; ०त्स्नापि विद्ध मां मदचारनिवा० — ज.

[13] 'ओ' मातृकायां '६२' श्लोकस्य द्वितीयतृतीयपादौ न स्तः ।

[14] तत्स्थः स — ख, घ, छ, ज.

[15] चिह्नं — ख; चित्तं — घ; चितं — छ, ज.

[16] ०यद्विद्वान्सशिखायुत० — ख; ०यद्विदान् शशंखायुत०–घ, ज; ०यद्विदान् छंखायुत०–छ.

[1]उभयोरप्यमोघेन वीर्येणामृतवह्निना ।
[2]चरताप्लुष्टशोकेन साधुना [3]विरतात्मना ॥६३॥
[4]नष्टव्याधि[5]जरामृत्युः क्षणाद्भवति साधकः ।
चतस्रो [6]धारणाः प्रोक्ता योगि[7]नोऽभ्यस्यतः सदा ॥६४॥
शिवमार्गप्रदायिन्यः[8] स्ववीर्यो[9]द्दामगर्विताः[10] ।
[11]प्रकाशयन्ति संसिद्धिमार्गं भोगभुजामपि ॥६५॥

[ [12]तर्कः ]

लब्ध[13]भूमेर्विरक्तस्य [14]तज्जयोपायपेशलः ।
[15]ऊहो [16]नाम वितर्कोक्तिः प्रविचारेक्षणात्मकः[17] ॥६६॥
[18]यद्यत्सातिशयं स्थायं भोगेन [19]समधिष्ठितम् ।

---

[1] उभयोरर्व्यमोघेन — छ; उभयोरर्घ्यमोघेन — ज.
[2] चरता भ्रष्ट० — ओ.
[3] विरलेन च — ओ; विरतेन च — ख, घ; चिरतेन च — छ, ज.
[4] क्लिष्ट० — ओ; म्लिष्ट० — ख, घ; म्लिष्टा० — छ, ज.
[5] ०जना० — ख.
[6] धारणा प्रोक्ता — ओ, ख, घ, च, छ, ज.
[7] ०नोद्य सतः — ख, घ, छ; ..म्योभ्यसतः — च; ०नोद्यत्नतः — ज.
[8] ०प्रदायिन्या–ओ; ०प्रदायिन्य०– ख, घ, छ, ज.
[9] ०दाम० — ओ.
[10] ०गर्विता — ज.
[11] प्रकारन्तिमसंसिद्धि — ओ.
[12] 'आगमस्याविरोधेन ऊहनं तर्क उच्यते ।' (अमृतनादोपनिषत् १६पू०); 'ऊहोऽभिवीक्षणं वस्तुविकल्पनान्तरोदितः ॥ यदा वेत्ति पदं हेयमुपादेयं च तत्स्थितेः । तत्पोषकं विपक्षं च यच्च तत्पोषकं परम् ॥' 'स ऊहो वीक्षणात्मकः तत्तद्भूमिकावाप्तितो लब्धे वस्तुनि असन्तोषकृताद्विकल्पात् समनन्तरमुदितः उद्भूतो ज्ञेयः । . . यदेति यस्मादर्थे; यस्मात् कारणाद् योगी समुत्पद्यमानो यथावस्थितसकलवस्त्ववभासनया हेयं पदं, तस्य च पोषकं तद्विपक्षकं विपक्षपोषकं च वेत्ति । यथा उपादेयं तत्पोषकं विपक्षकं विपक्षपोषकं च जानाति । अत एव प्रकृष्टं योगाङ्गम् ।' (मृगेन्द्रे योग० श्लो. ८उ०,९; तदीयवृत्तिश्च); 'योगाङ्गत्वे समानेऽपि तर्को योगाङ्गमुत्तमम् । हेयाद्यालोचना तस्मात्तत्र यत्नः प्रशस्यते ।' (मालिनीविजयोत्तरे १७.१८); 'अनेन लक्षयेद्योगी योगसिद्धिप्रवर्तकम् ॥ निरोधकं च यद्वस्तु बहुधा संव्यवस्थितम् ।' (स्वायंभुवे ३६.२८उ०, २९पू०); 'योगाङ्गत्वेन मृगेन्द्रमतङ्गविवक्षितवीक्षणतर्कशब्दाभ्यां धारणाध्येयवस्तुस्वरूपे धार्यमाणे हेयोपादेयविचारः कथितः ।' योगसारे पृ० ८०.
[13] ०भूतेर्वि० — ओ.
[14] तञ्जयो० — ख, घ; तं जयोपाय० — छ, ज.
[15] वाहो — ख, घ, छ, ज.
[16] नामपि तर्कोक्तिः — ओ; नां मचि तर्कोक्तिः — ख.
[17] ०क्षणात्मकम् — ओ, ख, घ, छ, ज.
[18] यद्यत्सादिशयोपेतं — ओ; यद्यत्सातिशयोपेत० — ख; यद्यत्सादिशयोपेत० — घ; यद्यस्यातिशयं — च; यद्यत्सदाशिवोपेत० — छ, ज.
[19] समविष्ठतः—ओ; समधितम्—छ; समयितम् — ज.

[1]विनश्वरेण [2]संदेह[3]बलेन [4]सुमलीमसम् ॥६७॥
किमनेन विकल्पो[5]क्तिव्यवहा[6]रात्मना त्वलम् ।
[7]अस्मादन्यद्विशिष्टेन भोगेन परिपूरितम् ॥६८॥
तस्मिन्मनः समाधाय सवि[8]कल्पाद्विनिर्गतम् ।
व्यक्ते [9]तस्मिन्स योगीन्द्रो निर्वितर्केण चेतसा ॥ ६९॥
समा[10]लिङ्ग्याञ्जसा [11]सिद्धं कालेन प्रविचारतः[12]।
[13]तद्भोगवशसंखेदपरिश्रान्तस्य[14] चेतसः[15] ॥७०॥
[16]ऊहोऽभिव्यक्तिमायाति[17] येन [18]जानाति निश्चितम् ।
अस्मादप्यतिवीर्याढ्यं[19] परमत्यद्भुतोत्तरम्[20] ॥ ७१॥
[21]पदमस्त्यविकल्पो [22]यः सविकल्पात्प्रजायते ।
निर्विकल्पे[23] ततस्तस्मिन्पूर्ववज्जायते मतिः[24] ॥७२॥
[25]यावत्तद्विगतक्लेश[26]मलेनाविचलात्मना ॥
[27]निर्वितर्केण[28] सूक्ष्मेण सर्वदिक्प्रविसर्पिणा ॥ ७३॥
क्षयाति[29]शयसंताप(ा)क्लिष्ट[30]मूर्त्या चिदात्मना ।
पदं पदवतां श्रेष्ठं स्वतेजो[31]गूढगोचरम् ॥७४॥

---

[1] एनश्वरेण — छ.
[2] संदेहं — घ, छ, ज.
[3] ०मलेन — ओ; ०मलिनेन — च.
[4] सुमलीयसम् — ओ; बलीयसा — च.
[5] ०क्तिर्व्यव० — घ, छ, ज.
[6] ०रात्मनोल्बणम् — च; ०रात्मनत्वलम् —छ.
[7] अस्मादन्यविशि० — ओ; अस्माद्यं न विशि० — ख; अस्माद्यन्न विशि० — घ, छ, ज.
[8] ०कल्पा विनि० — ओ; ०कल्पो द्विनि०–च.
[9] ०नास्मि सु० — ओ; न स योगीन्दे — ख; ०नस्मिन्समो यो० — छ; ०नस्मिन्स यो० — ज.
[10] ०लिङ्गोजसा० — ओ, घ; ०लिङ्ग्योजसा० — ख, छ, ज.
[11] विद्धि — ओ; विद्धं — घ, छ, ज; विद्ध-कालेन — च.
[12] ०चारितः — ख, घ, छ, ज.
[13] तद्भेदवशसंदैव — ओ, ख.
[14] ०श्रान्तेन — च.
[15] चेतसा — ओ, च, ज; चेतसम् — छ.
[16] जाहोभि० — ख, घ; ऊहेति व्यक्ति०—च; जाहोभिर्व्यक्ति० — छ, ज.
[17] ०मायान्ति — छ, ज.
[18] जातानि — ओ.
[19] ०वीर्याख्यं — ज.
[20] ०मन्यद्भुवोत्तरम् — ओ.
[21] पदमस्य वि० — ख, छ; पदमस्ति वि० — च; पदमस्य विकल्पोक्तं — ज.
[22] ऽयं — ख, घ, च, छ.
[23] ०कल्पं — ओ, ख, घ, छ, ज; ०कल्पाः–च.
[24] ०ज्जायतेरिति — ओ.
[25] यावत्तदन्तक्लेश० — ख; यावत्तदर्गतक्लेश० — घ, छ, ज.
[26] मलेन वचसात्मना — ओ; मध्येन विचात्मना — ख; मलेन विचात्मना —घ, छ, ज; बलेनावि० — च.
[27] 'ख, घ' मातृकयोः '७३' तमश्लोकोत्तरार्ध-प्रभृति '८०' तमश्लोकान्तो भागः '८६' श्लोकानन्तरं पटलपुष्पिकायाः पूर्वं दृश्यते। 'छ, ज' कोशयोरयं भागः पटलपुष्पिकाया अनन्तरं दृश्यते।
[28] वितर्केणाक्ष० — ख.
[29] ०शिवसंताप० — ओ.
[30] ०मृत्यूचितात्मना — च.
[31] मूढ० — ओ.

[1]तदेकं निर्विकल्पं स्यात्प्रभोः स्थानमनातुरम्[2] ।
[3]शेषाणि [4]सवितर्काणि [5]संत्याज्यानि मुमुक्षुभिः ॥७५॥
[6]निर्वितर्कं विना त्यक्तुं [7]यन्न योगप्रयोक्तृभिः ।
[8]शक्यते मुनिशार्दूल [9]तस्मात्तर्कः प्रयुज्यते ॥७६॥
[10]योगिनोऽ[11]ङ्गत्व[12]मापन्नः सोपकाराय चेष्टते ।

[ [13]समाधिः ]

विमलेन [14]दृशा स्पष्टं [15]ध्येयं संसाधितात्मना[16] ॥७७॥

---

[1] तदेतन्निर्वितर्कं स्या० — ओ; तदेतन्निर्वितर्क स्या० — ख, घ, छ, ज.

[2] ०मनातुरः — ख, घ, छ, ज.

[3] मेषाणि — ज.

[4] स्ववितर्काणि — छ, ज.

[5] सन्त्यन्यानि — च.

[6] निर्वितर्कविना त्यक्तं — ओ; न वितर्कं विना तानि — च; न वितर्कं विना त्यक्तुं — छ, ज.

[7] त्यक्तं योग० — ओ; योग योग० — ख, घ, छ, ज; त्यक्तुं योग० — च.

[8] शक्यन्ते — च.

[9] तस्य तर्कोप०–ओ; तस्मात्तर्कोप०–ख, घ, छ, ज.

[10] योगितो० — ओ.

[11] गेत्वमापन्नः — छ, ज.

[12] ०मापन्नस्वोप० — ओ.

[13] 'धारणाद्वादश ध्यानं दिव्यालोकप्रवृत्तिदम् ।
समाधिरणिमादीनां द्वादशैतानि कारणम् ॥
प्राणायामं विनाप्येवं वश्यात्मा चेतसि स्थितः ।
समभ्यस्यन्नवाप्नोति गुणानुक्ताननन्तरम् ॥'
'द्वादशभिः सगर्भैः कुम्भकैर्धारणा पूर्वमुक्ता । ताश्च द्वादश ध्यानं ज्ञेयम् । तच्च दिव्यामलौकिकीमालोकप्रवृत्तिं प्रकाशाविर्भूतिं ददातीति दिव्यालोकप्रवृत्तिदमिति तदभ्यासस्य फलमुक्तम् । एतानि च द्वादश ध्यानानि समाधिरित्युच्यते । स तु अणिमादिदिव्यसिद्धिकारणम् । अभ्यस्तैवंविधसमाधेरणिमाद्याविर्भावः स्यात् । एवमनेन प्रकारेणात्मनि नित्ययुक्ततया वश्यात्मा योगी विनापि प्राणायामेन क्वचिदपि देशे कृतनिरोधायां चित्तवृत्तौ स्थित एव तदभ्यस्यन् स आनन्तर्येण एतान् गुणानणिमादीन् लभते ॥
(मृगेन्द्रे योग० श्लो. ४९-५० ; तदीयवृत्तिः) ; 'समाधिर्ध्यानस्यैव प्रकर्षावस्था ध्येयाकारस्फुटीभावस्तल्लीनतैव' (मतङ्ग० विद्या० १. ५वृत्तिः) ; समाधिः —
'समाधिर्नाम योगाङ्गमन्तिमं परिकीर्तितम् ।
समाधिना च सर्वत्र प्रज्ञालोकः प्रवर्तते ॥
यदर्थमात्रनिर्भासं स्तिमितोदधिवत्स्थितम् ।
स्वरूपशून्यवद्भानं समाधिरभिधीयते ॥
ध्येये मनः समावेश्य पश्येदपि च सुस्थिरम् ।
निर्वाणानलवद्योगी समाधिस्थः प्रगीयते ॥
न शृणोति न चाघ्राति न जल्पति न पश्यति ।
न च स्पर्शं विजानाति न संकल्पयते मनः ॥
न चाभिमन्यते किञ्चिद्बुध्यते न च काष्ठवत् ।
एवं शिवे विलीनात्मा समाधिस्थ इहोच्यते ॥
यथा दीपो निवातस्थः स्पन्दते न कदाचन ।
तथा समाधिनिष्ठोऽपि तस्मान्न विचलेत्सुधीः ॥
एवमभ्यसतश्चारं योगिनो योगमुत्तमम् ।
तदन्तराया नश्यन्ति विघ्नाः सर्वे शनैःशनैः ॥'
(शिवपु० वायुसं. उत्तरभागे ३७.६१-६७) ;
'एकाकारः समाधिः स्याद्देशालम्बनवर्जितः ।
प्रत्ययो ह्यर्थमात्रेण योगशासनमुत्तमम् ॥'
(कूर्मपुराणे उपरिभागे ११.४१) ;
'तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः ।'
'ध्यानमेव ध्येयाकारनिर्भासं प्रत्ययात्मकेन स्वरूपेण शून्यमिव यदा भवति ध्येयस्वभावावेशात् तदा समाधिरित्युच्यते ।'
(योगसू० ३.३ तदीयव्यासभाष्यं च)

[14] सदृशा — छ.

[15] ध्येयसं० — ख, घ, छ, ज.

[16] संसायिकात्मना — ओ; ०तात्मनाम् — च.

[1]अभ्रष्टवपुषा [2]ध्यातमादावेवाविकल्पितम्[3]।
तदध्यवस्य[4] [5]बलवद्धिया [6]ध्येयं प्रयत्नतः ॥७८॥
समालिङ्ग्च समत्वेन [7]यथा [8]नानात्मचेतसा[9]।
[10]संस्थितो योग[11]योगीन्द्रो [12]न विभागेन लक्ष्यते ॥७९॥
तद्धर्मधर्मी[13] युक्तात्मा बाह्यस्यार्थस्य[14] गोचरात्।
[15]व्यतीतोत्पन्न[16]सद्भावः समाधि[17]स्थोऽविकारवान् ॥८०॥
भोगद्वाराण्यशेषाणि [18]पिधाय परमे विधौ।
[19]तृप्तिदारुसमुत्थेन [20]कवाटयुगलेन च ॥८१॥
पञ्चधा संस्थितेनात्र[21] [22]लक्ष्यशय्याकृतास्पदः[23]।
[24]शुद्धौजसा समालिङ्ग्च बुद्धि[25]पत्नीं सुलालसाम् ॥८२॥
मनः[26]प्रदीपप्रद्योत[27]वितमस्के स योगिराट्।
[28]हृन्मन्दिरे [29]सुखोद्दामयोग[30]निद्राकुलेक्षणः ॥८३॥
जित[31]दर्पां मतिं कृत्वा [32]सर्वाङ्गाह्लादितात्मवान्।

---

[1] अदृष्टवपुषा — ओ, ख, घ; अदृष्टा वपुषा — छ, ज.
[2] ध्यानमाददोर्वापि — ओ; ध्यानमाददेद्वावि॰ — ख, घ, छ, ज.
[3] ॰कल्पितः — ख, घ, च, छ, ज.
[4] तदद्यवस्य — ओ.
[5] फलवान् धिया — ओ.
[6] ध्येयः प्रयत्नधीः — ओ.
[7] यदा — च.
[8] नानात्व॰ — ख, घ, छ, ज.
[9] ॰चेतसि — ओ, ख, घ, च, छ, ज.
[10] संतिष्ठेद् — च.
[11] ॰योगीभ्यो — ओ; ॰योगेन्द्रो — ख, घ, छ, ज.
[12] नवभागोप॰ — ओ; न विभागोप॰ — ख, घ, छ, ज.
[13] धर्म॰ — ओ; धर्मा — च.
[14] बाह्यस्पर्शन॰ — ओ; बाह्यार्थशय॰ —च.
[15] व्यतीतप्राप्त॰ — च; व्यतीतः + उत्पन्न= व्यतीत उत्पन्न; ततः संधिरार्षः।
[16] ॰सद्भाव॰ — ओ, ख; ॰सद्भावे — घ, छ, ज.
[17] ॰ष्ठोविकारकात् — ओ; ॰सोऽधिकार॰ — ख; ॰स्थोऽधिकार॰ — घ, छ, ज.
[18] विधाय — ओ; पीडया — ख, घ, छ, ज; विधायोपरमो — च.
[19] दृप्तदारु॰ — ओ.
[20] कपाल॰ — ओ; कपाटयुगलेन तु — च.
[21] संश्रितान्यत्र — ख, घ; संश्रुतान्यत्र — छ, ज.
[22] लक्षशौर्य॰ — ओ; ॰लक्षशय्या॰— च, छ; लक्षशर्या॰ — ज.
[23] ॰कृतास्पदम् — ओ, च; ॰कृतस्पदः – ख, घ, छ, ज.
[24] शुद्धाञ्जसा — च.
[25] ॰पत्तिसु॰ — ख; ॰पत्निसुलालसम् — घ; ॰पत्नि॰ — छ, ज.
[26] ॰प्रदीप्तप्रद्योत॰ — ओ, ख, घ, छ, ज.
[27] ॰द्योतमस्तेऽपि योगराट् — ओ; ॰वितमस्ते स — ख, घ, छ, ज; ॰वितमस्केण — च.
[28] हृन्दिरैः — ख; हृदिरे — छ, ज.
[29] सगोद्दाम॰ — ओ; सुखेवाददाम॰ — ख; सुखदोदाम॰ — छ; सुखदोद्दाम॰ — ज.
[30] ॰निम्नाकुले॰ — च.
[31] ॰दर्पा मतिः — ओ; ॰दर्पा मतिं॰ — छ.
[32] सर्वाङ्गह्लादि॰ — ओ, ख, घ, छ, ज.

शयीत सुचिरं [1]कालमप्रबुद्धाक्षगोचरः[2] ॥८४॥
असंप्राप्त[3]बहिर्द्वन्द्वसमाधौ [4]संस्थितः सुधीः ।
समाधि[5]लब्धवीर्यस्य योगिनो[6]ऽलुब्धचेतसः ॥
[7]समस्तविषया[8]पीडकषायः [9]परिपच्यते ॥८५॥

[ उक्तार्थोपसंहारः वक्ष्यमाणोपक्रमश्च ]

[10]पशुपति[11]रश्मिबृन्द[12]विमली[13]कृतवाग्वपुषा
हिमगिरिराजपुत्रीपतिना कथितं[14] मुनये ।
[15]अविचलयोग[16]लब्धकरणोत्तमसाधुविधिं[17]
[18]सरभसयोगसार[19]रचनं कथयाम्यधुना ॥८६॥

इति श्रीमतङ्गपारमेश्वरे योगपादे [20]योगाङ्गपटलो द्वितीयः ।

द्वितीयः पटलः

---

[1] कालं प्रबुद्धाक्ष . . . गोचरम् — ख; कालं प्रबुद्धाक्षगोचरम् — घ; कालमप्रबुद्धचाक्ष० — छ, ज.
[2] ०गोचरम् — ओ, छ, ज.
[3] ०बहिर्द्वन्द्वः — च; ०बहिद्वन्धसाधेना — छ; ०बहिः संधसाधेना — ज.
[4] संस्थितं — ओ; उत्थितः सुखी — च.
[5] ०लब्ध्यं — छ, ज.
[6] लुप्त० — ओ; लुंधचेतसम् — छ, ज.
[7] समाप्तविधिया० — ओ; समस्तु विष्टाया० — छ; समस्तु विष्टया० — ज.
[8] ०पीडः कपायः — ओ; ०पीडः क्षमया – ख; ०पीडः क्षायः – घ; ०पीडः क्षाय० — छ, ज.
[9] परिवच्यते — ओ; परिचर्यते — ख, घ, छ, ज; परिपठचते — च.
[10] शुवर्गाश्मिबृन्दप्रकटीकृतपार्श्ववपुषा — ओ.
[11] ०रश्मिविद० — च.
[12] पिमलि० — छ; ०विमलि० — ज.
[13] ०कृता — घ, छ.
[14] ०पुत्री पतिं गनाकशितं–ओ; ०पुत्रि त्रिकथिता — ख; ०पुत्रि कथितां — घ, छ, ज; ०पुत्रि पतिना कथितो — च.
[15] अपिचल० — ओ, ख.
[16] ०लब्धीकरणोत्तम०– ख, घ; ०लब्धि० – च; ०लब्ध्यः कर्णोत्तम० – छ; ०लब्ध्याः कर्णोत्तम० — ज.
[17] विधिः — च.
[18] सररस० — च.
[19] ०रचनां — ओ, च; ०रजनं — ख, घ, छ; ०रधनं — ज.
[20] योगोपन्यासपटलः — ख, घ.

## तृतीयः पटलः

## योगसारसमुच्चयः

**अथातः संप्रवक्ष्यामि[1] योगसारसमुच्चयम् ।**

[2][ योगस्थानम् ]

**सर्वदोषवि[3]निर्मुक्तं [4]निःशब्दं स्थानमुत्तमम् ॥१॥**
**सुगुप्तं सुसमं पूतं [5]निराबाध[6]मनाकुलम् ।**

[7][ नाडीशुद्धिः ]

**तत्र योगासनं बद्ध्वा [8]स्थिरमेकाग्रमानसः ॥२॥**

---

[1] संप्रवक्ष्येत — छ.

[2] शून्यागारे मठे रम्ये देवतायतने शुभे ।
नदीतीरे विविक्ते वा गृहे घोरवनेऽपि वा ॥
प्रच्छन्ने च विविक्ते च निःशब्दे जनवर्जिते ।
योगदोषविनिर्मुक्ते निर्विकल्पे निरातपे ॥
स्नात्वा शुचिरुपस्पृश्य प्रणम्य शिरसा शिवम् ।
योगाचार्यान्नमस्कृत्य योगं युञ्जीत मानवः ॥
(सर्वज्ञानोत्तरे योग० श्लो०. ७–९);
अदेशकाले योगस्य दर्शनं हि न विद्यते ।
अग्न्यभ्यासे जले वापि शुष्कपर्णचये तथा ॥
जन्तुव्याप्ते श्मशाने च जीर्णगोष्ठे चतुष्पथे ।
सशब्दे सभये वापि चैत्यवल्मीकसंचये ॥
अशुभे दुर्जनाक्रान्ते मशकादिसमन्विते ।
नाचरेद्देहबाधायां दौर्मनस्यादिसंभवे ॥
सुगुप्ते तु शुभे रम्ये गुहायां पर्वतस्य तु ।
भवक्षेत्रे सुगुप्ते वा भवारामे वनेऽपि वा ॥
गृहे तु सुशुभे देशे विजने जन्तुवर्जिते ।
अत्यन्तनिर्मले सम्यक्सुप्रलिप्ते विचित्रिते ॥
दर्पणोदरसंकाशे कृष्णागरुसुधूपिते ।
नानापुष्पसमाकीर्णे वितानोपरिशोभिते ॥
फलपल्लवमूलाढ्ये कुशपुष्पसमन्विते ।
समासनस्थो योगाङ्गान्यभ्यसेद्धृषितः स्वयम् ॥
(लिङ्गपु० पूर्वार्धे ८.७८.उ०–८५पू०).

[3] ०निर्मुक्त०— ओ, ख.

[4] निःशब्दस्थान० — ओ.

[5] निरबाध० — ख.

[6] ०समाकुलम् — च.

[7] प्राणं चेदिडया पिबेन्नियमितं भूयोऽन्यथा रेचयेत्
पीत्वा पिङ्गलया समीरणमथो बद्ध्वा त्यजेद्-
वामया ।
सूर्याचन्द्रमसांरनेन विधिना बिन्दुद्वयं ध्यायतः
शुद्धा नाडिगणा भवन्ति यमिनो मासद्वयादूर्ध्वतः ॥
यथेष्टधारणं वायोरनलस्य प्रदीपनम् ।
नादाभिव्यक्तिरारोग्यं जायते नाडिशोधनात् ॥
(योगचूडामण्युपनिषत् ९८, ९९);
'जानु प्रदक्षिणीकृत्य न द्रुतं न विलम्बितम् ।
अङ्गुलिस्फोटनं कुर्यात्सा मात्रा परिगीयते ॥
इडया वायुमापूर्य शनैः षोडशमात्रया ।
कुम्भयेत्पूरितं पश्चाच्चतुःषष्ट्या तु मात्रया ॥
रेचयेत्पिङ्गलानाड्या द्वात्रिंशन्मात्रया पुनः ।
पुनः पिङ्गलयापूर्य पूर्ववत्सुसमाहितः ॥
प्रातर्माध्यंदिने सायमर्धरात्रे च कुम्भकान् ।
शनैरशीतिपर्यन्तं चतुर्वारं समभ्यसेत् ॥
एवं मासत्रयाभ्यासान्नाडीशुद्धिस्ततो भवेत् ।
यदा तु नाडीशुद्धिः स्यात्तदा चिह्नानि बाह्यतः ॥
जायन्ते योगिनो देहे तानि वक्ष्याम्यशेषतः ।
शरीरलघुता दीप्तिर्जाठराग्निविवर्धनम् ॥
कृशत्वं च शरीरस्य तदा जायेत निश्चयम् ।'
(योगतत्त्वोपनिषत् ४०–४६ पू०).

[8] स्थित एकाग्र० — ओ, ख.

[1]वायोर्निष्क्रमणं कृत्वा [2]प्रवेशं च शनैः शनैः ।
नासिकाविवराभ्यां तु[3] [4]सम्यक्संशोधयेत्क्रमात् ॥३॥
[5]प्रच्छादनं [6]सारणं च [7]संशुद्ध्यै प्रयतात्मना ।
कार्यं [8]विगतरागेण [9]नित्यं योग[10]युजा मुने ॥४॥

[11][ योगाभ्यासफलम् ]

प्रवि[12]शुद्धानिलं चित्तं योक्तव्यं भूम्यनुक्रमात् ।
[13]यावत्पदसमायोगान्नित्ययुक्तस्य [14]योगिनः ॥५॥
स्थूलायास[15]समुत्पन्ना [16]दुःखाशयसमृद्धयः ।
[17]लेशतो हानिमायान्ति [18]सूक्ष्मज्ञानानुसारतः ॥६॥
[19]यदालिङ्गच पदं सूक्ष्मं [20]विचेष्टेत स योगिराट् ।
तस्मिंस्तस्मि[21]स्तदुत्थाभिर्वासनाभिर्वियुज्यते ॥७॥
[22]वियुक्तः सन् पराभिः [23]स [24]सूक्ष्माभिश्चोपबृंह्यते ।
तत्समाना[25]शयावेशाद्बीजं प्राक्संचितं[26] त्वणोः[27] ॥८॥

---

[1] वाया निष्क्र० — ओ; वायो निष्क्र०—च.
[2] प्रवेगं च — ख, घ, छ, ज.
[3] ०विवराभावं — ख, घ, छ, ज.
[4] सम्यक्तं शोध० — च.
[5] प्रच्छन्दनं — ख, घ, छ, ज.
[6] धारणं — च, छ, ज.
[7] संशोध्य — ख, घ, छ, ज.
[8] विरागरागेण — च.
[9] नित्ययोग० — ख, घ, छ, ज.
[10] ०युजान्मुने — ओ.
[11] 'विशोध्य सर्वतत्त्वानि प्रणवेनाथवा पुनः ।
संस्थाप्य मयि चात्मानं निर्मले परमे पदे ॥
पावयित्वात्मनो देहं तेनैव ज्ञानवारिणा ।
मदात्मा मन्मयो भस्म गृहीत्वा ह्यग्निहोत्रजम्
तेनोद्धृत्य तु सर्वाङ्गमग्निरित्यादिमन्त्रतः ।
चिन्तयेत्स्वात्मनीशानं परं ज्योतिःस्वरूपिणम्
एष पाशुपतो योगः पशुपाशविमुक्तये ।'
(कूर्मपु० उपरिभागे ११.६४ उ०–६७).
[12] ०रूढानिलं — ओ; ०शुद्धानिलः—ख, घ, छ, ज; ०शुद्धानिलातीतं — च.
[13] यावत्पदा समा० — ओ.
[14] योगिभिः — ओ; योगिना — च.
[15] ०समुद्भूताः — ख, घ; ०समुद्भूता — च, ज; ०समुद्भूत० — छ.
[16] दुःखायाससवृत्तये — ओ; . . वा सर्वमुद्धयः — ख; दुःखायासर्वमुद्धयः — घ, छ, ज.
[17] लेशया भान० — ओ; लेशया हानि० — ख, घ, च; लेशया — छ, ज.
[18] सूक्ष्मार्थास्थानु० — ख, घ, छ, ज; सुसूक्ष्मस्यानु० — च.
[19] . . लिङ्गपदं — ओ, च, ज.
[20] विचेष्टयति योगि० — ओ; चेचेष्टति स योगि० — ख; चेच्चेष्टति स योगि० — घ, छ, ज.
[21] ०स्तदुत्थोहि प्रासना हि व युज्यते—ख, छ, ज.
[22] वियुक्तो वासनाभिः सन् — ख, घ, छ, ज; वियुक्तस्तत्पराभिः सं — च.
[23] सं — ओ.
[24] त ज्योतीं श्चोपबृंहिते — ओ; तज्जातश्चोप० — ख; तज्जातिश्चोप० — घ; तश्चातिश्चोपबृंहते — छ, ज.
[25] ०शयवेशा० — ओ.
[26] प्राक् संशया — ख, घ, छ, ज.
[27] क्वणोः — ज.

मोहात्मकेन वीर्येण योगिना[1] प्रत्यवारितम्[2]।
विवर्तते मुनिव्याघ्र येना[3]सावतिभावितः ॥९॥
[4]मोहमायाति तत्रैव न परं [5]वेत्त्यनात्मवान्।
ततस्तेन प्रकर्तव्यो [6]जपश्चोर्जितचेतसा ॥१०॥
[7]तेजसाजस्रवीर्यस्य [8]मृष्टबाह्याशयस्य च।
प्रवर्तते मतिः क्षिप्रं [9]यया यात्युन्नतिं पराम्[10] ॥११॥
[11]विशुद्धोन्नतिसामर्थ्यं [12]यत्पदामोदभावितम्।
योगिनं [13]कारणेशानो नियोजयति सुव्रत ॥ १२॥
तद्भाव[14]भावनामोदविषयेष्वनिवारितम्[15]।
एवं [16]पदात्पदं [17]याति योगाग्नि[18]परिबृंहणात् ॥१३॥
[19]तत्सटाटोपसंघट्ट[20]पटूद्घाटितदिङ्मुखः।
प्राप्नोत्यभीप्सितं स्थानं क्रमात्कालेन [21]सुव्रत ॥१४॥
[22]तद्गुणाक्षप्रभावेण[23] दिगन्तरविसर्पिणा।
अतिरस्कृतवीर्येण [24]प्रसन्नेनान्तरात्मना ॥ १५॥
अप्रम्लानमुखे[25]नासावव्ययेनातिभूरिणा।
[26]विभाति दिवि [27]दीप्ताङ्गतेजोमूर्तिरुदारवान् ॥१६॥
[28]यस्मात्क्लिष्टप्रवाहाभैः [29]प्रधानाक्षैश्च [30]कुत्सितात्।

---

[1] योगिनं — ख, च; यो हि नः — घ; योगिनः — छ, ज.
[2] ०वारितः — ख, घ, छ, ज.
[3] ०सावविति — ख, घ, च, छ, ज.
[4] 'ख, घ, छ, ज' मातृकासु '१०, ११' श्लोकौ '१२' पूर्वार्धं च न दृश्यन्ते।
[5] वेतनात्मवान् — ओ.
[6] जपं चोर्जितचेतसः — ओ.
[7] तेजसोऽजस्र० — ओ.
[8] म्लिष्ट० — च.
[9] यदा — च.
[10] यायान्त्युन्नतिमः परा — ओ.
[11] विशुद्धेन्द्रियसामर्थ्यं — च.
[12] त्वत्पदा० — च.
[13] करणेशानो — छ, ज.
[14] ०भवनावनामोद० — छ.
[15] ०वारितः — च.
[16] पादात्पदं — ख, घ, छ, ज.
[17] यान्तु — ओ; यातु — ख, घ, छ, ज.
[18] ०पमं प्रहण्यात् — ओ.
[19] तच्छादादोप० — ओ; तच्छेदाटोप० — ख, घ, छ, ज.
[20] ०वधूद्घाटित० – ओ; ०पटुद्घाटित० – ख; ०पटूद्घटित० — ज.
[21] 'सुव्रत' इत्यारभ्य '१६' प्रथमार्धे 'अव्ययेनाति' इत्यन्तो भागः 'छ, ज' मातृकयोर्लुप्तः।
[22] तद्गुणं कथभावेन — ओ.
[23] ०प्रभावेन — ख, घ.
[24] प्रभावेना० . .ओ; प्रभावेनात्मवेदिना—ख, घ.
[25] ०नास्य पर्यायेणापि — ओ; ०नास्यावन्ध्या येनानि—ख; ०नास्या वन्ध्या येनाति०—घ.
[26] विभावि — ओ.
[27] दीप्तात्मा तेजोमूर्ति० — ओ, ख, घ, छ, ज.
[28] यस्मात्क्लिष्टप्रभा भाक् स्या . . – ओ; यस्मात् क्लिष्टप्रवाहा . . – ख, घ, छ, ज; यस्मात्क्लिष्ट-प्रवाहासाः — च.
[29] '१७' श्लोकस्य द्वितीयपादप्रभृति '१९' श्लो-श्लोकान्तो भागः 'च' मातृकायामेव दृश्यते।; प्रधानाक्षाश्च — च.
[30] कुत्सिताः — च.

अनित्यविषयायासखेदेन परिपीडितात्[1] ॥१७॥
मृग[2]तृड्लोभविषयाच्छक्रजालप्रविस्तरात् ।
छायाक्रीडन[3]भोगाढ्यात्तोयबुद्बुदजीवितात्[4] ॥१८॥
तडित्संपद्गिना[5]दाढ्यमरुच्छ्रीचञ्चलात्मकात्[6] ।
निर्गतो योगसामर्थ्याज्जगद्व्याप्याचलोऽव्ययः ॥१९॥

[ उक्तार्थोपसंहारः, वक्ष्यमाणोपक्रमश्च ]

[7]समासतोक्त्या कथितं [8]विधानं
[9]सिद्ध्यै मया ते मुनिराजमुख्य ।
[10]विस्तारयिष्याम्यधुनाध्व[11]संप-
त्क्रमेण मत्तः शृणु [12]तद्विशेषम् ॥२०॥

इति श्रीमतङ्गपारमेश्वरे योगपादे योगसारसमुच्चयपटलस्तृतीयः ॥

तृतीयः पटलः

---

[1] ०पीडितान् — च.
[2] ०तृल्लोभविषयाशक्र० — च.
[3] ०भोगाढ्यो — च.
[4] ०जीवितान् — च.
[5] ०दाढ्यामरु० — च.
[6] ०त्मकान् — च.
[7] समासतोक्ता — ख, छ, ज; समासतः + उक्त्या = समासत उक्त्या; ततः संधिरार्षः ।
[8] ०विधान० — ख, घ, छ, ज.
[9] सिद्धे — ओ; सिद्धं — ख, घ, छ, ज.
[10] सदा करिष्या० — ओ.
[11] संयक्क्रमेण — ओ, ख, घ, छ, ज.
[12] तद्विजेन्द्र — ख, घ, छ, ज; ते द्विजेन्द्र — च.

## चतुर्थः पटलः

### तत्त्वसाधनम्

अथातोऽध्वविधाने[1]ऽस्मिन्नुपायश्चोपवर्ण्यते ।
[2]पृथिव्यादीनि तत्त्वानि [3]शिवान्तान्यनुपूर्वशः ॥१॥
ध्यातव्यानि मुनिव्याघ्र शरीरे योगिना[4] सदा ।

मतङ्ग उवाच—

[5]पार्थिवाणुसमूहस्य विकीर्णस्य पृथक् पृथक् ॥२॥
किं स्वरूपं स्वकं तत्र पृथिव्यास्तत्त्वसंज्ञकम्[6] ।

परमेश्वर उवाच—

[7]मृत्त्वमस्ति [8]मृदस्तत्र [9]येनासौ व्यपदिश्यते ॥३॥
[10]तत्तेभ्यो ह्यणुसंघेभ्यो[11] विशिष्ट[12]मविनाश्यथ ।
[13]यदालम्ब्याणु[14]संघस्य [15]द्वित्र्यादेरविखण्डितम्[16] ॥४॥

---

[1] ०स्मिन्नुपायम् — ओ; ०स्मिन् रूपं य — ख, घ, छ; ०स्मिन् रूप यदुप० — ज.

[2] 'ओ' मातृकायामयं पादो लुप्तः ।;
'क्षित्यादितत्त्वविजयं ध्याता यद्यपि वाञ्छति ।
तत्तत्तत्त्वाधिपामेव मूर्ति स्थूलां विचिन्तयेत् ॥
सदाशिवान्ता ब्रह्माद्या भवाद्याश्चाष्टमूर्तयः ।
शिवस्य मूर्तयः स्थूलाः शिवशास्त्रे विनिश्चिताः ॥
घोरा मिश्राः प्रशान्ताश्च मूर्तयस्ता मुनीश्वरैः ।
फलाभिलाषरहितैश्चिन्त्याश्चिन्ताविशारदैः ॥
घोराश्चेच्चिन्तिताः कुर्युः पापरोगपरिक्षयम् ।
चिरेण मिश्रे सौम्ये तु न सद्यो न चिरादपि ॥
सौम्ये मुक्तिर्विशेषेण शान्तिः प्रज्ञा प्रसिध्यति ।
सिध्यन्ति सिद्धयश्चात्र क्रमशो नात्र संशयः ॥
(शिवपु० वायुसं० उत्तरभागे ३८.७३उ०–७८).

[3] शिवाद्याद्यनु० — ओ.

[4] योगिनः — ओ, ख, घ, छ, ज.

[5] पार्थिवाणि० — छ, ज.

[6] ०संज्ञक — ओ.

[7] सत्यमस्ति — ओ; 'ख, घ, छ, ज' कोशेषु पादोऽयं न दृश्यते ।; क्रियापादे ५.१३०–१३३ वृत्तौ 'मृत्त्वमस्ति मृदस्तत्र' इत्युद्धृतत्वादत्र तदनुसारेण पाठः शोधितः ।

[8] मृदस्तस्य — च.

[9] येन सा व्यप० — ओ, ख, घ; येना साप्यपदिश्यन्ते — छ, ज.

[10] तत्त्वेभ्यो — च.

[11] ०संगेभ्यो — ओ, घ; 'ख' मातृकायां 'संघस्य' इत्यपि पाठो दृश्यते ।; संख्येभ्यो – छ, ज.

[12] ०मनिवाश्यथ — ओ; ०मविनाश्यद्य — च.

[13] यमालम्ब्यानु० — ओ; तदालम्ब्याणु० — ख, घ; यमालम्ब्याणु० — च; तदालम्बाणु० — छ, ज.

[14] ०सर्पस्य — छ, ज.

[15] द्वितीयादवि० — ओ; द्विचित्रा. . .ण्डितः — ख; द्विचित्रादेर्विखण्डितः — घ; द्विचित्राते विखण्डितः — छ, ज.

[16] ०खण्डितः — च.

[1]संचयः [2]सुकृतः स्पष्टः [3]सदाधारनिबन्धनात्[4] ।
[5]वस्तुनः प्रकटं यस्माद् द्रव्यादेः परिगीयते ॥५॥
गुणा गुणिनमाश्रित्य [6]विचेष्टन्ते स्वके स्वके ।
[7]विषये न निराधारा [8]ह्याधेयाः कुत्रचित्स्थिताः[9] ॥६॥
सतावलम्बनं[10] त्यक्त्वा[11] [12]व्यपदेश्याः कथं मुने ।
[13]भवन्ति व्यवहारे[14]ऽस्मिन्व्यक्तास्वर्थक्रियास्वपि ॥७॥

[15]मतङ्ग उवाच —

[16]द्रव्यादिभ्यो [17]विशिष्टार्थसत्ता संपरिभाषिता[18] ।
[19]तेषामभावान्नेष्टं [20]स्याददृष्टत्वात् सुरेश्वर ॥८॥

परमेश्वर उवाच —

[21]नाभावादतिसूक्ष्मत्वादस्तित्वेऽप्यक्षगोचरम्[22] ।
न [23]संप्राप्तं [24]यतो मूर्त्वं [25]सति भावे प्रभाष्यते ॥९॥

मतङ्ग उवाच —

[26]कल्पिता परि[27]भाषेयं व्यापाराय न सद्बलात्[28] ।

---

[1] संचपं कृतं स्पष्टं — ओ.
[2] सुकृतस्पष्टं — ख, घ, छ, ज.
[3] सुदाधारनिबन्धनम् — ओ.
[4] निबन्धनः — ख, घ, छ, ज.
[5] विकटं यस्माद्द्रव्य . . यते — ओ; द्विकूटत्रयसमादे . . द्रव्याद्रव्यादेः — ख; द्विकूटद्वयं समा द्रव्यादेः — घ; द्विकूटत्रयस्मा . . द्रव्यादेः — छ, ज.
[6] स्वचेष्टन्ति — ओ.
[7] विषयेण निराधार—ओ, छ, ज; वर्ष निराधारा — ख; विषयेन — च; मतङ्ग० विद्या० ३.८ श्लोकवृत्तावुद्धृतपाठमनसृत्यात्र पाठः शोधितः।
[8] ह्याधेयं — ओ; प्याधेयाः — ख; प्येधेयाः — घ, छ, ज.
[9] स्थिताम् — ओ.
[10] ०सद्भावबलं — ओ.
[11] त्यक्ता — छ; त्यक्त्या — ज .
[12] ०प्यप० — ओ.
[13] भवितव्यं व हारे० — ओ; भवस्त्रि व्यवहारे — ख; भवस्ति व्यवहारे — घ; भवन्ति व्यवसाये — च.
[14] . . स्वार्थक्रिया — ओ; ०स्मिन्व्यत्थाश्चापि क्रिया० — छ; ०स्मिन्यक्ताश्चापि क्रिया० — ज.
[15] 'ओ' मातृकायां 'मतङ्ग उवाच' इत्यारभ्य '९' श्लोकान्तो भागो नास्ति।
[16] 'छ, ज' मातृकयोः '८' श्लोको न दृश्यते।
[17] विशिष्टान्यां सत्ता — च.
[18] ०भाविता — च.
[19] तेभ्यो ह्यभावात्तेषां — च.
[20] स्याद्दृष्टातत्त्वात् — ख; स्यादृष्टतत्त्वात्—घ.
[21] ना भावादिति० — ख, घ, छ, ज.
[22] ०त्वे त्वक्षगोचरः — ख, घ; ०त्वेऽप्यक्षिगोचरे — च; ०त्वे त्वक्षगोचरा — छ, ज.
[23] संप्राप्ता — च.
[24] यतोऽत्रत्वं — ख.
[25] स विभावः — च.
[26] कथिता — ओ.
[27] ०भाष्येयं — ओ.
[28] ०य संबलात् — ओ.

[1]कुतोऽन्यद्व्यतिरिक्तं [2]यन्मृत्स्नं येन [3]मृदुच्यते ॥१०॥

परमेश्वर उवाच —

[4]असत्कल्पयता वाच्यो नाङ्गुल्यग्रेण कुत्रचित् ।
तदेव शक्यते [5]स्पष्टं कथं [6]वासत्प्रकल्पना ॥११॥
[7]विद्यते [8]चेत्ततस्तस्माल्लोकाः क्लिश्यन्ति[9] सुव्रत ।
[10]कर्मारम्भे त्वरायास[11]लोभेनाप्राप्ततृप्तयः[12] ॥१२॥
[13]तस्मात्संव्यवहाराय [14]संस्थिता [15]यद्बलात्क्षित [16]।
[16]कल्पने[17]यं स्थिता स्पष्टा सा च वस्तुनिबन्धिनी[18] ॥१३॥
प्रत्यक्षमेकमुचितं[19] प्रमाणं [20]भवतो यदा ।
[21]तदा यदनुमानेन [22]साध्यते तदसत्स्फुटम् ॥१४॥
न चैवं[23] स्यान्मुनिव्याघ्र शृणु वक्ष्याम्यतः परम् ।
[24]अनिर्देश्यमसंदिग्धं [25]कल्पनापोढगोचरम् ॥१५॥
प्रत्यक्षं [26]तेन नेष्टं स्याद्व्यवहाराय सुव्रत ।
न [27]चात्र कल्पना काचिन्निश्चि[28]तेयं [29]मतिर्मम ॥१६॥
शेषमर्थक्रियापन्नमनुमा[30]नवशं जगत् ।

---

[1] कुतोऽप्यव्यति० — ओ.
[2] यत् यद्भवं मृदुरुच्यते — ओ; यन्मृत्युं येन — च; य मृत्संयेन — छ, ज.
[3] मृमुच्यते — छ; मुमुच्यते — ज.
[4] असत्कल्पितवाचो — ओ; अस्मिन् कल्पयि . . च्यो — ख; असत्कल्पयिता वाच्यो — घ, छ, ज; असत्कल्पनतावाख्या — च.
[5] स्पृष्टं — ख, घ, छ, ज; स्प्रष्टुं — च.
[6] वा संप्रकल्पना — च.
[7] विद्यन्ते — च.
[8] चोत्तमस्तस्मा० — ओ; चेत्ततः कस्मा० – च.
[9] लोकः क्लिश्यति — ओ, च.
[10] कर्मानुरम्भेरायास० — ओ; कर्मारम्भ . . स० — ख, घ; कर्मारम्भभरायासु — च.
[11] क्षोभना० — ख.
[12] ०दृतयः — घ, छ, ज; ०तृप्तिकः — च.
[13] यस्मा० — ओ.
[14] संस्थिताय बलात्क्षितौ — ओ; स्वसंकेतबलात्क्षितौ — च.
[15] यद्बलाक्षितौ — ख, छ, ज.
[16] कल्पने या — ओ, घ; कल्पिने — ख; कल्पने — छ; कल्पन्न — ज.
[17] यत्स्थितस्पष्टा — ख; यस्थितस्पष्टा — घ, छ, ज.
[18] ०निबन्धनी — ओ, ख, घ, छ; ०निबन्धनात् — च.
[19] मुदितं — च.
[20] भुवितो — ओ.
[21] यदा यदनु० — ख.
[22] तद . . . तत्स्फुटम् — ओ; . . . द्यते सत्स्फुटम् — ख; साध्यते सत्स्फुटम् — घ, छ, ज; साध्यस्य तेन स स्फुटम् — च.
[23] चैव — ओ, ज.
[24] सुनिर्देश्य० — च.
[25] कल्पना वागगो० — ओ; कल्पनावोढ० — घ, छ, ज; कल्पनापाठ० — च.
[26] तच्च — च.
[27] चासां — ख; चास्यां — घ, छ, ज.
[28] ०तोऽयं मुनिर्मम — ओ.
[29] मुने मम — ख, घ; मतिर्यतः — च; मुनिर्मम — छ, ज.
[30] वशाज्जगत् — घ, छ, ज.

[ [1]त्रिविधानुमानम् ]

[2]तत्त्रिधा भेदमापन्नं विशेषोक्तिनिदर्शनात्[3] ॥१७॥
यथा तथा प्रवक्ष्यामि न चातिपरिविस्तरात् ।
शेषवत्पूर्वव[4]च्चान्यत्सामान्य[5]मपरं मतम् ॥१८॥

[ [6]शेषवदनुमानम् ]

[7]स्थूलावर्त[8]शकृत्पुञ्जभूयिष्ठं मदगन्धि च ।
स्तम्भ[9]शय्यादिभि[10]श्चिह्नैरत्रासीन्मत्तवारणः[11] ॥१९॥
[12]अतीतोऽप्यनुमानेन साध्यः शेषवता[13] बुधैः ।

[ [14]पूर्ववदनुमानम् ]

[15]कृष्णाञ्जन[16]निभैश्चोच्चैः [17]साटोपैर्निबिडैर्घनैः[18] ॥२०॥
निर्विघ्नैर्विपुलैः स्निग्धैस्तडिन्निर्घोषसंकुलैः ।
प्रावृट्समय[19]संप्राप्तैर्दृष्टैर्वृष्टिः प्रमीयते ॥२१॥
पूर्वमप्येवमुचितं[20] वृट्पातोऽप्यविखण्डितः[21] ।

---

[1] 'अथ तत्पूर्वकं त्रिविधमनुमानं पूर्ववच्छेषवत् सामान्यतो दृष्टं च'
(गौतमन्यायसूत्रम्–१.१.५).

[2] तं त्रिधा — ओ; त त्रिया — छ.

[3] ०पन्नमविशेषोक्तिदर्शनात्—ओ, ख, घ, छ, ज.

[4] ०च्चानुसामान्य० — ओ.

[5] ०मपरं स्मृतम् — ओ; ०परमं मतम् — ख, घ, छ, ज.

[6] 'शेषवत्तद् यत्र कार्येण कारणमनुमीयते। पूर्वोदकविपरीतमुदकं नद्याः पूर्णत्वं शीघ्रत्वं च दृष्ट्वा स्रोतसोऽनुमीयते भूता वृष्टिरिति।'
(वात्स्यायनभाष्यम् १.१.५).

[7] शूला० — ख, घ.

[8] ०शकृत्पञ्चभूपृष्ठमद० — ओ; शकृत्पुञ्जं भूपृष्ठमद० — ख, घ; समृत्पुञ्जं भूपृष्ठमद० — च; शकृत्पन्नं जम्भूपृष्ठमद० — छ; शकृत्पन्नं भूपृष्ठमद० — ज.

[9] ०शयादि० — ओ.

[10] ०श्च्छन्नैरत्रासीमत्त० — ओ; ०चित्रैरत्रा० — ख, घ, छ, ज.

[11] ०वारिणाम् — ओ; ०वारणम् — ख, घ; ०वारुणम् — छ, ज; ०न्मनुवारणः — च.

[12] अतश्चाप्यनु०—ओ; . . . पुतोऽप्यनु० — ख, घ, छ, ज.

[13] साध्यशेषविधा — ओ; साध्यशेषस्तथा — ख, घ, छ, ज.

[14] 'यत्र कारणेन कार्यमनुमीयते यथा मेघोन्नत्या भविष्यति वृष्टिरिति'
(वात्स्यायनभाष्यम् १.१.५).

[15] कृष्णाजिन० — ख, घ.

[16] ०निभाश्चोच्चैः — ओ.

[17] सारोपै० — छ.

[18] निबिडैर्बनैः — छ, ज.

[19] ०संप्राप्तैर्दृष्टैः किमनुमीयते — ओ, च; ०संप्राप्तैर्भ्रष्टैः किमनुमीयते — ख, ज; ०संप्राप्तैर्भृष्टैः किमनुमीयते — घ, छ.

[20] ०मुदितो — च.

[21] मृत्पादो ह्यविखण्डितम् — ओ; वृष्टेः पातो ह्यखण्डितः — च.

[1]दृष्टमासीन्न संदेहो [2]धूम अद्याप्यधोगतः ॥२२॥
[3]आशु[4]वृष्टेरमोघोऽयं [5]न [6]विधार्येत केनचित् ।
एवं पूर्ववता [7]साध्या [8]ह्यनुमानेन [9]वृट् सदा ॥२३॥

[ [10]सामान्यमनुमानम् ]

[11]दृष्टं [12]ज्योतिष्मतां राशेः स्वरूपं [13]पूर्वतः पुरा ।
[14]पश्चात्पश्चाच्च [15]संपश्यन् गतिमत्त्वं प्रसाधयेत् ॥२४॥
एवं प्राक् पूर्वदेशस्थं[16] देवदत्तं [17]प्रदृश्य तु ।
[18]तमेवापरदेशस्थं दृष्ट्वा किमनुमीयते ॥२५॥
एभ्यो वै गतिमान् [19]साधुर्हस्त्यश्वादेरनिश्चयात् ।
सामान्य[20]गतिमत्त्वं स्यान्न [21]विशिष्टं प्रसिध्यति ॥२६॥
[22]विशेषोऽस्यानुमानस्य [23]त्रिविधस्याप्यनिश्चयात् ।

---

[1] दृष्ट आसीन संदेहो — च.

[2] धूममन्याप्ययोगतः — ओ; धूपमाद्याप्यधोगतम् — ख, घ; ध्रुवमप्यन्यथागमः — च; धूपमान्द्याप्ययोगतम् — छ; धूपमाद्याप्ययोगतम् — ज.

[3] आसु — च.

[4] ०पृष्टेरमोघाय — ख; ०वृष्टेरमोघाय — घ, छ, ज.

[5] नतिवाय्य केनचित् — घ; नतिवीर्य केनचित् — छ, ज.

[6] निवार्य तु — ओ, ख.

[7] साध्यं ह्यनु० — ओ; साध्यमनु० — ख, घ, छ; साध्ययनु० — ज.

[8] अनुमानेन — च.

[9] वृत्सदा — च.

[10] 'सामान्यतो दृष्टम् — व्रज्यापूर्वकमन्यत्र दृष्टस्यान्यत्र दर्शनमिति, तथा चादित्यस्य तस्मादस्त्यप्रत्यक्षाप्यादित्यस्य व्रज्येति ।' (वात्स्यायनभाष्यम् १.१.५).

[11] दृष्ट० — ख, छ.

[12] ज्योतिष्मता रागो स्व० — ओ, ख, घ, छ.

[13] पूर्ववत् — ख, घ, छ, ज.

[14] पश्चाद्दश्याच्च — ओ; पश्याच्च समं पश्य गतिं मलत्वं — ख; पश्चाच्च संपश्य गतिमलत्वं — घ; पश्चाच्च समं पश्य गतिं मलत्वं — छ; पश्चाच्च समं पश्य गतिममलत्वं — ज.

[15] संदृश्य गतिमित्थं — च.

[16] ०देशस्थो देवदत्तः प्रदृश्यते — च.

[17] प्रशस्य — ओ, ख, घ; प्रपश्य — छ, ज.

[18] तमेवोपरि० — ख, घ, छ; तमेव पर० — च; तमेवोपनि० — ज.

[19] साधु हस्तपादैरनिश्चयत् — ओ; साधु हस्त्य० — छ, ज.

[20] ०गतिमित्थं — च.

[21] विविष्टं — ओ.

[22] विशेषे स्यानु० — छ, ज.

[23] त्रिविधःसानु — ओ; त्रिविधस्यात्त० — ख, घ, छ, ज; त्रिविधस्यापि — च.

[ [१]आगमप्रमाणम् ]

आगमादाप्त[२]वक्त्रोत्थान्नान्यथा मुनिपुङ्गव ॥२७॥
आप्तश्चैवागमात्सिद्धः[३] स चेदानीं विचार्यते ।

[ [४]आप्तो महेश्वर एव ]

आयुर्वे[५]दात्सगणितान्मन्त्र[६]वादाच्च [७]सस्फुरात् ॥२८॥
रसोप[८]निषदाटोपा[९]दाप्तः स परिगृह्यते ।
[१०]योगमन्त्रौषधीनां तु वीर्यमव्याहतं[११] मुने ॥२९॥
[१२]न [१३]मीमांस्यं विकल्पोक्त्या [१४]मनुष्यैरल्पबुद्धिभिः ।
केचिद्योगबलात्सिद्धाः केचिन्मन्त्रबलान्नराः[१५] ॥३०॥
केचि[१६]दौषधसामर्थ्यात्केचित्तीर्थप्रभावतः ।
त्रिकाल[१७]विषयज्ञान[१८]व्यक्तदेहा महाबलाः ॥३१॥
कारुण्यात्सिद्धयश्चित्राः प्रोक्तास्तैरेव भूतले ।
[१९]तेषामप्यपरैः प्रोक्ताः[२०] [२१]सांसिद्धिकगुणोत्तरैः[२२] ॥३२॥

---

[१] 'आप्तोक्तिरागमः सोऽपि परोक्षार्थैकसाधनम् ।
प्रत्यक्षेणानुमानेन यदि वार्थं सुनिश्चितम् ॥
यो वक्ति सोऽयमाप्तः स्यात्तस्मादाप्ततरः शिवः ।
सुप्रसन्नेन्द्रियग्रामः सर्वज्ञः सर्वगोचरः ॥
पक्षपातविनिर्मुक्तो यथार्थग्राहकः सदा ।
अव्ययः परिपूर्णश्च स्वतन्त्रः पशुपाशहा ॥
प्रमाणमेकं तद्वाक्यं तथ्यं श्रेयोनिधिः सदा ।'
(पौष्करे विद्या० प्रमाणपटले ६० — ६३पू०);
'प्रमाणमेकं तद्वाक्यं तथ्यमीश्वरभाषितम् ।'
(मतङ्ग० विद्या० ३.२०पू०).

[२] ०वक्त्रोक्तान्नान्यथा — ओ; ०वक्त्रोत्था नान्यथा — ख, च.

[३] ०त्सिद्धिः — छ, ज.

[४] आ तोक्तिरत्र सिद्धान्तः शिव एवाप्तिमान्यतः ॥
न ताभ्यां सदृशः कश्चिच्छ्रे य आ तविधायकः ॥
सिद्धान्त एव सिद्धान्तः पूर्वपक्षास्ततः परे ।
आप्तस्तु शिव एवैकः शिवान्ये त्वशिवा मताः ॥
(रत्नत्रये १०, ११).

[५] ०दात्सगुणिता मन्त्र० — ओ; ०दात्सगणिता मन्त्र० — ख;.

[६] ०वाराच्च — च.

[७] संस्वरात् — ओ.

[८] निषदादर्थादाप्तः सं परि० — च.

[९] ०दाप्तः सन् परि०—ओ; ०दाप्तस्य परि०—ख.

[१०] कालमन्त्रौ० — ओ, च; कलामन्त्रौ० — ख, घ, छ, ज.

[११] ०मद्याहतं — ओ; चीर्यमव्याहतं — ज.

[१२] 'न मीमांस्या विचार्या वा मन्त्राः स्वल्पधिया नरैः । प्रमाणमागमं कृत्वा श्रद्धातव्यं हितैषिभिः ॥'
(रौरवे विद्या० ३.२७).

[१३] मीमांसं — ओ; मीमांस्य — ख, घ, छ; मीमांस्यो — च; मीमांसस्य — ज.

[१४] मनुष्यैर्मन्द० — ओ, ख, छ, ज; मनुष्यैर्मद० — घ.

[१५] ०बलं नराः — छ, ज.

[१६] ०दौषधि० — ओ, च.

[१७] ०विषयं ज्ञानं — ओ, ख, घ, छ, ज.

[१८] ०व्यक्तं देहा — ओ.

[१९] तेषां मध्यवरैः — ओ; तेषामप्य . . रः — ख.

[२०] प्रोक्त० — ख; प्रोक्तः — घ, छ, ज; प्रोक्ता — च.

[२१] संसिद्धिक० — च; सामसिद्धि० — छ, ज.

[२२] गुणोत्तरे — ओ.

मनुष्याणां च विप्रेन्द्र [1]योगोपायश्च न [2]स्वयम् ।
[3]यतोऽभिव्यक्तिमायाति [4]ह्युपदेशं विना क्वचित् ॥३३॥
ताल्वोष्ठपुटसं[5]योगाद्वयक्तमाप्तवचो यतः ।
तस्मादाप्तः [6]प्रपत्तव्यः [7]पारंपर्यक्रमागतात्[8] ॥३४॥
अप्रयत्नवतो वापि [9]न चोत्पत्तिमतः सदा ।
ततोऽस्य परतन्त्रत्वमुत्पत्तिविलयात्स्फुटम् ॥३५॥
[10]यस्य यस्य यदायत्तं यद्यद्वस्तु प्रवर्तते ।
तस्य तस्य स वक्तव्यः [11]कर्ता कारणमत्र तु ॥३६॥
अस्याशेषस्य जगतः [12]कारणं स महेश्वरः[13] ।
व्यज्यते यद्बलाविष्टं [14]विलयं [15]चानुगच्छति ॥३७॥
[16]स्थूलं विनश्वरं [17]दृश्यं कृतकं चाप्यचेतनम् ।
[18]परतन्त्रं जगद्यस्मात्तत्कर्तुरखिलं[19] मुने ॥३८॥
[20]प्रत्यक्षेणानु[21]मानेन वक्तासावेव निश्चितः[22] ।
तस्मात्तद्वचना[23]त्सिद्धा पृथिवी साधिदेवता[24] ॥३९॥

---

[1] यः सोपायश्चलः स्वयम् — च; योगोपायाश्च — छ, ज.

[2] स्वनः — ख; स्वनम् — घ, छ, ज.

[3] सतो हि व्यक्ति० — ख, घ; यतोऽपि व्यक्ति० — च; सतोऽभिव्यक्तिः — छ, ज.

[4] उपदेशं — ओ, घ, च, छ, ज; भ्युपदेशं — ख.

[5] ०योगाद्विप्त० — ख.

[6] प्रकर्तव्यः — ओ; प्रवक्तव्यः — ख, घ, छ, ज.

[7] 'ओ' मातृकायां '३४' तमश्लोकस्य चतुर्थपादप्रभृति '३६' तमश्लोकस्य तृतीयपादान्तो भागो लुप्तः ।

[8] ०गतान् — ख, घ, छ, ज; ०क्रमोत्तरम् — च.

[9] नयोत्पत्ति० — ख; नाशोत्पत्ति० — च.

[10] यत्र यत्र — ख, घ, छ, ज.

[11] कर्तृकारण० — ओ.

[12] शरणं — ख, घ, छ, ज.

[13] महेश्वर — ख; 'एवं हि परतन्त्रत्वाज्जगतोऽस्याखिलस्य तु । प्रवृत्तिर्नेष्यते यस्मात्तस्मात् कर्ता महेश्वरः ॥' (मतङ्ग० विद्या० ६.९५)

[14] विषयं — ख, घ, छ, ज.

[15] वानु० — ओ, ख, घ, छ, ज.

[16] मूलं विश्वेश्वरं — ओ.

[17] दृश्यमकृतं — ओ; दृश्य कृतकं — च.

[18] पूरतन्त्रं — च; परतन्त्रजग० — छ, ज.

[19] ०स्मात्कर्तुमारखिलं — ख, घ, छ, ज.

[20] प्रत्यक्षमनुमानेन — च.

[21] ०मानेनोक्त्या सावेव — ओ.

[22] वक्ता सा . . निश्चयम् — ख, घ; वक्ता सा निश्चयं . . — छ, ज; निश्चितम् — च.

[23] ०त्सिद्धपृथिवी — छ.

[24] ०दैवता — ओ.

[ [1]पार्थिवतत्त्वजयः ]

द्वीपार्णवगिरिप्राया प्रमाणरचनोज्ज्वला[2] ।
[3]ध्यातव्या योगसिद्ध्यर्थं तत्त्वमार्गव्यवस्थया ॥४०॥
[4]देहे च तत्त्वमा[5]पन्ना; तस्यामारोप्य [6]वै मनः।
[7]कूर्मोऽङ्गानीव संकोच्य तल्लयस्तत्परायणः ॥४१॥
रूपमभ्यस्यतस्तस्य[8] पार्थिवं यत्स्वकं ध्रुवम् ।
व्यक्तिमायात्यसंदेहा[9]त्साधिदेवतयान्विता[10] ॥४२॥
[11]पीतं [12]वा गन्ध[13]तन्मात्रं गुणेन समधिष्ठितम् ।

---

[1] 'यः पुनर्गुरुणैवादौ कृतावेशविधिक्रमः ।
स वासनानुभावेन भूमिकाजयमारभेत् ॥
गणनाथं नमस्कृत्य संस्मृत्य त्रिगुरुक्रमम् ।
सम्यगाविष्टदेहः स्यादिति ध्यायेदनन्यधीः ॥
स्वदेहं हेमसंकाशं तुर्याश्रं वज्रलाञ्छितम् ।
ततो गुरुत्वमायाति सप्तविंशतिभिर्दिनैः ॥
दिवसात्सप्तमादूर्ध्वं जडता चास्य जायते ।
षड्भिर्मासैर्जितव्याधिर्द्रुतहेमनिभो भवेत् ॥
वज्रदेहस्त्रिभिश्चाब्दैर्नवनागपराक्रमः ।
एषा ते पार्थिवी शुद्धा धारणा परिकीर्तिता ॥
आद्या पूर्वोदिते देवि भेदे पञ्चदशात्मके ।
सव्यापारं स्मरेद्देहं द्रुतहेमसमप्रभम् ।
उपविष्टं च तुर्याश्रे मण्डले वज्रभूषिते ॥
सप्ताहाद् गुरुतामेति मासाद्व्याधिविवर्जितः ॥
षड्भिर्मासैर्धरान्तस्थं सर्वं जानाति तत्त्वतः ।
त्रिभिरब्दैर्महीं भुङ्क्ते सप्ताम्भोनिधिमेखलाम् ।
द्वितीयः कथितो भेदस्तृतीयमधुना शृणु ।
तद्वदेव स्मरेद्देहं किं तु व्यापारवर्जितम् ॥
पूर्वोक्तं फलमाप्नोति तद्वत्पातालसंयुतम् ।
चतुर्थे हृद्गतं ध्यायेद् द्वादशाङ्गुलमायतम् ॥
पूर्ववर्णस्वरूपेण सव्यापारमतन्द्रितः ।
प्राप्य पूर्वोदितं सर्वं पातालाधिपतिर्भवेत् ॥
तदेव स्थिरमाप्नोति निर्व्यापारे तु पञ्चमे ।
स्फुरत्सूर्यनिभं पीतं षष्ठे कृष्णं घनावृतम् ॥
निस्तरङ्गं स्मरेत्तद्वत्सप्तमेऽपि विचक्षणः ।
द्वयेऽप्यत्र स्थिरीभूते भूर्भुवःस्वरिति त्रयम् ॥
वेत्ति भुङ्क्ते च लोकानां पुरोक्तैरेव वत्सरैः ।
सकलं हृदयान्तस्थमात्मानं कनकप्रभम् ॥
स्वप्रभाद्योतिताशेषदेहान्तमनुचिन्तयेत् ।
सव्यापारादिभेदेन सप्तलोकीं तु पूर्ववत् ॥
वेत्ति भुङ्क्ते स्थिरीभूते भेदेऽस्मिन्नवमे बुधः ।
रविबिम्बनिभं पीतं पूर्ववद् द्वितयं स्मरेत् ॥
ब्रह्मलोकमवाप्नोति पूर्वोक्तेनैव वर्त्मना ।
अधः प्रकाशितं पीतं द्विरूपं पूर्ववन्महत् ॥
चिन्तयेन्मत्समो भूत्वा मल्लोकमनुगच्छति ।
सबाह्याभ्यन्तरं पीतं तेजः सर्वप्रकाशकम् ॥
चिन्तयेच्छतरुद्राणामधिपत्वमवाप्नुयात् ।
इत्येवं पृथिवीतत्त्वमभ्यस्यं दश पञ्चधा ॥
योगिभिर्योगसिद्ध्यर्थं तत्फलानां बुभुक्षया ।'
(मालिनीविजयोत्तरतन्त्रे १२.२०पू०–३९)

[2] प्रवार्णव . . रचनोज्वलाः — ओ.

[3] 'ओ' मातृकायामिदमर्धं न दृश्यते ।

[4] देहे तत्तत्त्व० — ओ; दहेत तत्त्व० — च; देहो च तत्त्व० — छ, ज.

[5] ०पन्नात्स्वात्मन्यारोप्य — ओ; ०पन्ना तस्य मारप्य – ख, घ; ०मापन्न तस्य मारोप्य–छ, ज.

[6] वे मनः — छ, ज.

[7] कूर्मानीव संयोच्च – ओ; कूमोद्गानीव – ख; कूमोङ्गानीव — घ; कूर्माङ्गानीव — च; कं तु मो गाव — छ; कं तु मों गाव — ज.

[8] ०मभ्यसतस्य — ख; ०मप्यसतस्तस्य — छ; ०मभ्यस्ततस्तस्य — ज.

[9] ०त्सादधिदैवतया० —छ; ०त्सदधीदैवतया–ज.

[10] ०न्वितम् — च.

[11] चीतं — छ, ज.

[12] गन्धं च तन्मात्रं — ओ.

[13] तन्मात्रगुणेन — ख, घ, च, छ, ज.

ध्यायेत्प्रसन्न[1]चित्तात्मा यावत्सा [2]देवतान्विता ॥४३॥
व्यक्तिमायाति [3]सुप्रीता [4]योगेनाभिमुखीकृता ।
योगिनो [5]लब्धवीर्यस्य[6] प्रसन्ना सर्वकामदा ॥४४॥
[7]लब्धभूमिस्तदा [8]योगी वशीकृत्य शनैः शनैः ।
पार्थिवं [9]तत्त्वमेवं स्याद्

[ [10]अप्तत्त्वजयः ]

[11]आप्यमप्यभ्यसेत्तदा[12] ॥४५॥
तत्राप्युक्तो [13]विधिरयं किं तु [14]तच्छ्वेतमभ्यसेत् ।

---

[1] ०भक्तात्मा — ओ.
[2] देवतान्विधौ — ओ; देवताविधौ — ख, घ, च, छ, ज.
[3] सुप्रीत्या — ओ; सुवृता — ज.
[4] योगेनात्ममुखी० — ख, घ, छ, ज.
[5] ०ल्लब्ध० — ओ.
[6] वीर्येण — ओ, ख, घ, छ, ज.
[7] लब्धा भूमिस्तथा देया — ओ.
[8] योगिरशिकृत्य — छ, ज.
[9] तत्त्वमेव — ओ.
[10] 'अथातः संप्रवक्ष्यामि धारणां वारुणीमिमाम् ।
यया संसिद्धयोगेन जलान्ताधिपतिर्भवेत् ॥
जलान्तःस्थं स्मरेद्देहं सितं शीतं सुवर्तुलम् ।
सबाह्याभ्यन्तरं योगी नान्यदस्तीति चिन्तयेत् ॥
एवमभ्यस्यतस्तस्य सप्ताहात्क्लिन्नता भवेत् ।
पित्तव्याधिपरित्यक्तो मासेन भवति ध्रुवम् ॥
स्निग्धाङ्गः स्निग्धदृष्टिश्च नीलकुञ्चितमूर्धजः ।
भवत्यब्देन योगीन्द्रस्त्रिभिर्वर्षति मेघवत् ॥
इत्येषा वारुणी प्रोक्ता प्रथमा शुद्धधारणा ।
अधुना संप्रवक्ष्यामि भेदैर्भिन्नामिमां पुनः ॥
पूर्ववच्चिन्तयेद्देहं सव्यापारं सितं स्वकम् ।
जलोपरि स्थितं देवि तद्गतेनान्तरात्मना ॥
सप्ताहान्मुच्यते रोगैः सर्वैः पित्तसमुद्भवैः ।
षण्मासाज्जायते स्थैर्यं यदि तन्मयतां गतः ॥
जलावरणविज्ञानमब्दैरस्य त्रिभिर्भवेत् ।
निर्व्यापारप्रभेदेऽपि सर्वत्र वरुणोपमः ॥
स याति वारुणं तत्त्वं भूमिकां क्रमशोऽभ्यसेत् ।
पूर्ववत्कण्ठमध्यस्थमात्मानं द्वादशाङ्गुलम् ॥
संस्मरञ्जलतत्त्वेशं प्रपश्यत्यचिराद् ध्रुवम् ।
तद्दृष्टिः स्थिरतामेति स्वरूपे पञ्चमे स्थिरे ॥
द्विभेदेऽपि स्थिरीभूते चन्द्रबिम्बे घनावृते ।
तत्समानत्वमभ्येति ततः सकलरूपिणी ॥
चिन्त्यते देहमापूर्य सितवर्णेन तेजसा ।
तदेव स्थिरतामेति तत्र सुस्थिरतां गते ॥
घनमुक्तेन्दुबिम्बाभस्ततः समनुचिन्तयेत् ।
तत्पतित्वं समभ्येति द्वितीयं स्थिरतां व्रजेत् ॥
अतः प्रकाशकं शुक्लं ततस्तेजो विचिन्तयेत् ।
विद्येश्वरत्वमाप्नोति जलावरणसंभवम् ॥
स्वदेहव्यापिनि ध्याते तत्रस्थे शुक्लतेजसि ।
सर्वाधिपत्यमाप्नोति सुस्थिरे तत्र सुस्थिरम् ॥
ध्येयतत्त्वसमानत्वमवस्थात्रितये स्थिरे ।
द्वितीये च तदीशानसंवित्तिरुपजायते ॥
द्वितीयेऽन्यत्र तत्तुल्यः स्थिरो भवति योगवित् ।
षट्के सर्वेशतामेति द्वितीयेऽन्यत्र तु च्युतिः ॥
इत्ययं सर्वतत्त्वेषु भेदे पञ्चदशात्मके ।
ज्ञेयो विधिर्विधानज्ञैः फलपञ्चकसिद्धिदः ॥
तत्फलान्तरमेतस्मादुक्तं यच्चापि वक्ष्यते ।
अनुषङ्गफलं ज्ञेयं तत्सर्वमविचारतः ॥
इत्येवं वारुणी प्रोक्ता प्रभेदैर्दशपञ्चभिः ।
योगिनां योगसिद्ध्यर्थम्'
(मालिनीविजयोत्तरे १३.१–२०).
[11] अभ्यास भ्यासयेत्तदा — ओ; आप्यमभ्यप्यसे तदा — छ, ज.
[12] ०त्सदा — च.
[13] विधिरियं — ओ.
[14] तच्छेतं० — ओ; तध्वेत० — ज.

रसतन्मात्र[1]संयुक्तं [2]शेषाश्चास्य गुणा मुने ॥४६॥
[3]पारक्यास्तेन सिद्धस्य नाभिव्यक्ति[4] प्रयान्ति हि[5] ।
[6]पूर्व[7]तत्त्वजयात्तस्य शुभो गन्धः प्रजायते ॥४७॥
शरीरस्य मुनिव्याघ्र [8]विलिप्तस्यापि तत्क्षणात् ।
[9]अणुत्वमप्यनायासं स्वेच्छयैवाप्यथाप्नुयात्[10] ॥४८॥
[11]योगी योग[12]जयात्क्षिप्रं [13]द्रव[14]द्रव्येष्ववारितः[15] ।
[16]क्रीडत्यक्लिष्टवपुषा[17] [18]योगजेनातिवर्चसा ॥४९॥
[19]दर्शनात्स्पर्शनात्तस्य वाचा [20]चैव विचारतः ।
[21]भवेद्रसविकारोऽस्य शुभो वाप्यशुभोऽपि वा ॥५०॥
[22]यदीच्छेत् प्लावितुं[23] सर्वं त्रैलोक्यं सचराचरम् ।
तदम्भसो [24]जयात् [25]कुर्यान्नान्यथा मुनिसत्तम ॥५१॥

---

[1] संयुक्तः — छ, ज.
[2] शेषाश्चास्य गुणो मुने — ओ; शेषास्य चरणान्मुने — ख; शेषास्य चरणा मुने — घ, छ, ज.
[3] पारकयास्येंन सिद्धस्य नाभि० — ओ; परक्यास्तेन सिद्धस्य नाभि० — ख, घ; पाराक्यास्तेन सिद्धस्य नाति० — च; परक्यास्तेन सिध्य नाभि० — छ, ज; पारक्याः-परकीयाः; 'स्वाक्याः' इतिवत्, मतङ्ग० विद्या० ४.५ उ० वृत्तौ ।
[4] व्यक्ति — च; व्यक्तं — छ, ज.
[5] प्रयान्तिभिः — ओ.
[6] पूर्वं — ख, घ, छ, ज.
[7] ०तत्त्वाजया० — ओ.
[8] विण्मूत्रमपि — ओ, ख, घ; विण्मूत्रामपि — छ; विण्मूत्रस्यापि — ज.
[9] अनुक्तमप्यनायासस्वेच्छा वै चाप्ययायात् – ओ.
[10] ०प्यथानुयत् —छ, ज.
[11] योगिनो यछ्रयात्क्षिप्रं — च; योगियोग० — छ, ज.
[12] ०जयान्क्षिप्रं — ओ.
[13] द्रव्यं — ओ.
[14] ०द्रव्येषु वारितः — घ.
[15] ०ष्ववारितम् — ओ, च.
[16] क्रीडन्त्यक्लिष्ट० — ओ, च.
[17] ०वपुषो — च.
[18] योजनेनाति — ख, घ, छ, ज.
[19] दर्शन् स्पर्श० — ओ.
[20] चैवाविचारतः — ओ; चैवाविचारितः — ख, घ; चैव विचारितः — छ, ज.
[21] भवेद्रसं विकारस्व० — ओ; भवेद्रवीकारं शुभो —ख; भवेद्रचीकारं शुभो — घ; भवेद्रविकारं शुभो — छ, ज.
[22] यदिच्छे — छ, ज.
[23] ०प्लावितं — ओ.
[24] जयं — ओ, ख, घ, छ, ज.
[25] कुर्यान्नाथाय मुनि० — ख, घ, छ, ज.

[ [1]अग्नितत्त्वजयः ]

[2]निर्जित्याम्भो विशेदग्नौ [3]यज्जयाज्ज्वलते क्षणात् ।
[4]रूपाण्यरूपतां यान्ति [5]यान्त्यरूपाणि रूपताम् ॥५२॥
[6]तदिच्छावश[7]वर्तीनि [8]विचित्राण्युत्कटानि च[9] ।
[10]म्लानतेजांसि वा [11]स्पष्टं [12]वीर्येणाग्निगुणात्मना ॥५३॥

---

[1] 'त्रिकोणं चिन्तयेद्देहं रक्तज्वालावलीधरम् ।
सप्तभिर्दिवसैर्देवि तैक्ष्ण्यमस्योपजायते ॥
वातश्लेष्मभवैः सर्वैर्मासान्मुच्यति साधकः ।
निद्राहीनश्च बह्वाशी स्वल्पविण्मूत्रकृद्भवेत् ॥
इच्छया निर्दहत्यन्यत्स्पृष्टवस्तु ऋतुक्षयात् ।
त्र्यब्दादग्निसमो भूत्वा क्री इत्यग्निर्यथेच्छया ॥
सर्वं निर्दहति क्रुद्धः सशैलवनकाननम् ।
त्रिकोणमण्डलारूढमात्मानमनुचिन्तयेत् ॥
सव्यापारादिभेदेन सर्वत्रापि विचक्षणः ।
सप्ताहाद्व्याधिभिर्हीनः षण्मासादग्निवद्भवेत् ॥
त्रिभिरब्दैः स संपूर्णं तेजस्तत्त्वं प्रपश्यति ।
यच्छक्तिभेदे यद्दृष्टं तत्तद्भेदे स्थिरीभवेत् ॥
पूर्ववत्तालुमध्यस्थमात्मानं ज्वलनप्रभम् ।
ध्यायन्प्रपश्यते तेजस्तत्त्वेशानखिलान्क्रमात् ॥
धूमाक्रान्ताग्निसंकाशं रविबिम्बसमाकृतिम् ।
ध्यायंस्तन्मध्यतस्तेजस्तत्त्वेशसमतां व्रजेत ॥
प्रभाहततमोजालं विधूमाग्निसमप्रभम ।
तत्रैव सकलं ध्यायेत्तत्पतित्वमवाप्नुयात् ॥
दिवसाग्निप्रभाकारं तत्र तेजो विचिन्तयेत् ।
तन्मन्त्रेश्वरतामेति तत्र सुस्थिरतां गते ॥
मणिप्रदीपसंकाशं तेजस्तत्र प्रकाशयेत् ।
मन्त्रेशेशत्वमभ्येति योगी तन्मयतां गतः ॥
सबाह्याभ्यन्तरं तेजो ध्यायन्सर्वत्र तद्गतम् ।
तस्मान्न च्यवते स्थानादासंहारमखण्डितः ॥
संहारे तु परं शान्तं पदमभ्येति शाङ्करम् ।
इत्येषा पञ्चदशधा कथिता वह्निधारणा ॥'
(मालिनीविजयोत्तरे १३.२१–३३)

[2] निर्जनाम्भो — ओ; मज्जत्यम्भो — ख, घ, छ, ज.

[3] यज्जयाज्जलते — ओ; लज्जलाज्वलिते — ख; लज्जया ज्वलिते — घ, छ, ज.

[4] रूपस्य रूपतां याति — ओ; रूपाप्यरूपतां — छ.

[5] यान्त्ये रूपाणि — ओ; रूयद्यरूपाणि — ख; यत्यरूपाणि — घ, छ, ज.

[6] तदिष्टवश० — ख; तदिच्छवश० — घ, छ, ज.

[7] ०वर्तीन — छ, ज.

[8] वि. . क्त्राण्यु० — ओ.

[9] वा — ओ, ख, घ, छ, ज.

[10] म्लानं तेजां शिवा — ओ; म्लानं तेजसि वा — ख, घ, छ, ज.

[11] स्पष्टां — च; स्पृष्ट० — छ; स्पृष्टं — ज.

[12] वीर्येणातिगु० — ख, घ; वीर्येणदि० — छ, ज.

[ [1]वायुतत्त्वजयः ]

[2]जिताग्नेर्व्यज्यते योक्तुर्वायुः[3] स्वेनैव[4] तेजसा[5] ।
प्रभूतबलवीर्येण [6]चलच्चण्डेन साधुना ॥५४॥
[7]तन्मयस्य [8]सदोद्युक्तचेतसाविद्धतेजसः[9] ।
[10]अनानात्वगुणोपेत[11]शरीरस्यामितद्युतेः ॥५५॥
योगीन्द्रस्य [12]गुणा वायोः [13]स्वाक्या व्यज्यन्त्यनिन्दिताः ।
[14]तदुन्मीलित[15]सामर्थ्याच्छीतोष्णमृदुकर्कशान्[16] ॥५६॥
प्रकरोतीच्छया [17]सर्वान्भावान्नात्र विचारणा ।
उत्पूय वा जगत्सर्वं संहरेल्लीलयैव हि ॥५७॥

---

[1] 'स्वदेहं चिन्तयेत्कृष्णं वृत्तं षड्बिन्दुलाञ्छितम् ।
चलं सचूचूशब्दं च वायवीं धारणां श्रितः ॥
चलत्वं कफजव्याधिविच्छेदाद्वायुवद्भवेत् ।
षण्मासमभ्यसेद्योगी तद्गतेनान्तरात्मना ॥
योजनानां शतं गत्वा मुहूर्तादित्यखेदतः ।
वत्सरैस्तु त्रिभिः साक्षाद्वायुरूपधरो भवेत् ॥
चूर्णयत्यद्रिसंघातं वृक्षानुन्मूलयत्यपि ।
क्रुद्धश्चानयते शक्रं सभृत्यबलवाहनम् ॥
नीलाञ्जननिभं देहमात्मीयमनुचिन्तयेत् ।
पूर्वोक्तं सर्वमाप्नोति षण्मासान्नात्र संशयः ॥
त्र्यब्दात्प्रपश्यते वायुतत्त्वं तन्मयतां गतः ।
भ्रुवोर्मध्ये स्मरेद् रूपमात्मनोऽञ्जनसंनिभम् ॥
पश्यते वायुतत्त्वेशानाशुगानखिलानपि ।
घनावृतेन्द्रनीलाभो रविबिम्बसमाकृतिम् ॥
ध्यायंस्तत्समतामेति तत्संलीनो यदा भवेत् ।
भिन्नेन्द्रनीलसंकाशं सकलं तत्र चिन्तयेत् ॥
तन्मन्त्रेशत्वमाप्नोति ततस्तस्येशतामपि ।
सर्वव्यापिनि तद्वर्णे ध्याते तेजस्यवाप्नुयात् ॥
तदाप्रधृष्यतामेति तत्रोर्ध्वाधोविसर्पिणि ।
इत्येवं कथिता दिव्या धारणा वायुसंभवा ॥'
(मालिनीविजयोत्तरे १३.३४–४३).

[2] जिताग्नौ व्य० — ओ, ख, घ, छ, ज.

[3] योक्तुर्वाय — घ, छ, ज.

[4] स्वेनेव — छ.

[5] तेजसः — ओ, घ.

[6] चलच्छन्धेन — ओ; चलचण्डेन — ख, घ, छ, ज; वलच्चण्डेन — च.

[7] तन्मयो सततोद्युक्तः — ख.

[8] सतोद्युक्तस्तेज० — ओ, घ, छ, ज; सदोद्युक्तश्चेतसो — च.

[9] ०वेतसः — ओ; ०चेतसः — ख, घ, छ, ज.

[10] अनानालगुणोपेत० — ओ; अनानात्मगुणोपेतः — ख, घ, छ, ज.

[11] शरीरस्यापि तद्विते — ओ; शरीसस्यामितद्वितेः — घ, छ, ज.

[12] 'घ' मातृकायां मध्ये तालपत्राणामदर्शनाद् 'गुणा वायोः' इत्यारभ्य १२८ पूर्वार्धान्तो भागो न दृश्यते ।; गुणोपायो सवाक्या त्यज्य निन्दिता — ओ; गुणोपायो स्वाक्या वर्जन्त्यनिन्दिता — ख; गुणोपायो स्वात्या वर्जतनिन्दिता — छ; गुणोपायो स्वत्या वर्जत्यनिन्दिता — ज.

[13] स्वाक्त्या — च.

[14] तन्निमीलित० — ओ.

[15] ०सामर्थ्या शीतोष्ण० — ख, च; सामर्थ्यः शीतोष्णी — छ, ज.

[16] ०कर्कशाः — ओ, ख; कर्कशः — छ, ज.

[17] सर्वाण्यावान्तत्र वि० — ओ; सर्वन्यवा तन्त्रविचारणाः — ख, छ; सर्वान्यवा तन्त्रविचारणा — ज.

[[1]व्योमतत्त्वजयः]

**व्योम्नि चित्तं समारोप्य यदि [2]सम्यङ्निलीयते ।**
**व्योम[3]रूपस्तदा योगी जगत्यस्मिन्विचेष्टते[4] ॥५८॥**

**मतङ्ग उवाच —**

**यदमूर्तमनाधारमवि[5]कारितकारणम्[6] ।**
**[7]अनाद्यकारणं यस्मात्तत्कथं साध्यते विभो ॥५९॥**

**परमेश्वर उवाच —**

**[8]अवकाशेन धर्मेण शब्देनात्मगुणेन च ।**

---

[1] 'स्वदेहं वायुवद्ध्यात्वा तदभावमनुस्मरन् ।
दिवसैः सप्तभिर्योगी शून्यतां प्रतिपद्यते ॥
मासमात्रेण भोगीन्द्रैरपि दष्टो न मुह्यति ।
सर्वव्याधिपरित्यक्तो वलीपलितवर्जितः ॥
षण्मासाद्गगनाकारः सूक्ष्मरन्ध्रैरपि व्रजेत् ।
वत्सरत्रितयात् सार्धाद् व्योमवच्च भविष्यति ॥
इच्छयैव महाकायः सूक्ष्मदेहस्तथेच्छया ।
अच्छेद्यश्चाप्यभेद्यश्च छिद्रां पश्यति मेदिनीम् ॥
शतपुष्परसोच्छिष्टमूषागर्भखवन्निजम् ।
देहं चिन्तयतस्त्र्यब्दाद् व्योमज्ञानं प्रजायते ॥
पूर्वोक्तं च फलं सर्वं सप्ताहादिकमाप्नुयात् ।
ललाटे चिन्तयेत्तद्वद्द्वादशाङ्गुलमायतम् ॥
तत्तत्त्वेशान्क्रमात्सर्वान्प्रपश्यत्यग्रतःस्थितान् ।
राहुग्रस्तेन्दुबिम्बाभं ध्यायंस्तत्समतां व्रजेत् ॥
सकलं चन्द्रबिम्बाभं तत्रस्थमनुचिन्तयेत् ।
तन्मन्त्रेशत्वमाप्नोति ज्योत्स्नया चन्द्रतामपि ॥
तयैवाधोविसर्पिण्या सबाह्याभ्यन्तरं बुधः ।
मन्त्रेश्वरेशतामाप्य विज्ञानमतुलं लभेत् ॥
तया चोर्ध्वविसर्पिण्या ज्योत्स्नयामृतरूपया ।
स्वतन्त्रत्वमनुप्राप्य न क्वचित्प्रतिहन्यते ॥'
(मालिनीविजयोत्तरे १३.४४–५३).

[2] सम्यग् विलीयते — ओ.

[3] ०रूपास्तथा — ओ.

[4] विचेष्टिता — ओ.

[5] कारि न कारणम् — ओ.

[6] ०कारिणम् — छ.

[7] अनाद्यकार्यं कारणं तत्कथं — ओ, ख; अनाद्यकार्यकरणं तत्कथं — छ, ज.

[8] 'गमागमादिव्यापारो यस्मिन्सति नृणां भवेत् ।
तद्धेतुभूतमाकाशमिष्यतां मुनिपुङ्गवाः ॥
नो चेत्तदवकाशाख्यं विचरेयुः क्व जन्तवः ।
न हि भूम्यन्तरादृष्टौ प्राणिनां तु गमागमौ ॥
यस्मादाकाशमेष्टव्यमवकाशस्य कारणम् ।
किं च तीव्रादयः शब्दा गुण्यपेक्षा गुणत्वतः ॥
गुणी चाकाशमित्युक्तं तच्च नृणामतीन्द्रियम्''
(पौष्करे विद्या० पुंस्तत्त्वपटले २८१-२८३);
'आकाशं शब्दतन्मात्रादवकाशत्वलक्षणम् ॥
व्यक्तं व्यक्तिकरं विप्र पृथक्संस्थानसिद्धये ।
भूतानां भुवनानां च गत्यर्थं चाध्वसन्ततौ ॥
तच्छब्दगुणसाधर्म्यात्सिद्धं यस्मात्तदाश्रितः ।
शब्दोऽभिव्यक्तिमायाति नान्यथा मुनिपुङ्गव ॥
'स्थाण्वभावाद्यथा चित्रं न क्वचित्संप्रदृश्यते ॥
शब्दस्यापि ततोऽस्तित्वादाकाशं गुणवत्सदा ।
तच्चापि शब्दतन्मात्राद्व्यक्तं संप्रति लक्ष्यते ॥
संहारे तु प्रणष्टं स्याद्भोगिनं प्रति निश्चितम् ।
येनावकाशकं वस्तु न किंचिदपि विद्यते ॥
ध्वस्ते व्यापारनिलये प्रलीनस्य तदात्मनः ।
न चास्यात्यन्तिकोऽभावो न चोत्पत्तिरिहेष्यते ॥
नित्यत्वान्मुनिशार्दूल स तथाप्युपचर्यते ।'
(मतङ्ग विद्या० १९–६उ०–८, ९उ०–१३पू०)

संज्ञया च मुनिव्याघ्र किमर्थं भेदवानपि ॥६०॥
[1]नेच्छसे [2]वस्तुमार्गेऽस्मिन्प्रविचारात्सुपुष्कलात्[3] ।
गुणवा[4]न्भेदवान्संज्ञी[5] [6]त्रिरवस्थानदर्शनात् ॥६१॥
[7]विलयोत्पत्तिरेतेषां [8]यस्मात् [9]सोऽप्युपचर्यते ।
व्यक्तो [10]वाप्यथ नष्टो वा[11] भावैरात्मन्यवस्थितैः[12] ॥६२॥
न [13]विनाशोऽस्ति भावानां [14]नित्यानाममितात्मनाम् ।
न चैवोत्पत्तिरित्येवं नित्यत्वाद्युज्यते[15] मुने ॥६३॥
[16]द्वे रूपे [17]वस्तुनः प्रोक्ते सृष्टिसंहारवर्त्मनि ।
प्रलये शक्ति[18]रूपं स्याद्व्यक्तिरूपमतोऽन्यथा ॥६४॥
तेनाकाशमिति [19]प्रोक्तमुपचारा[द्]यथा मुने ।
खपुष्पकूर्म[20]लोमादेर्या संज्ञा वस्तुसंहतौ[21] ॥६५॥
तयोर्योगादृतेऽसंज्ञा[22] नाभावः[23] [24]शशशृङ्गयोः ।
स्थाने [25]सत्यपि [26]नास्त्यत्र यो [27]भावो यस्य वस्तुनः ॥६६॥
शक्ति[28]रूपं स्थितं तद्धि बोद्धव्यमथवा क्वचित् ।
किंचिद्व्यक्तिमवाप्नोति जातिभेदात्पृथक् पृथक् ॥६७॥
संज्ञा [29]सद्वस्तुनः प्रोक्ता [30]व्यवहाराध्वगोचरे[31] ।
असत्प्रलपितं[32] शेषमथवाक्षरसंहतेः[33] ॥६८॥

---

[1] नेच्छा स वस्तु० — ओ; नेच्छते — च.
[2] वस . . स्मिन् विचारात् — ख; प्रविचरान्–च.
[3] ०पुष्कलान् — ख, च, छ, ज.
[4] ०न्भेदवानज्ञसत्र्युवस्थान० — छ; ०न्भेदवानज्ञसत्र्यवस्थान० — च.
[5] संज्ञं — ओ.
[6] त्र्यवस्थान० — ख.
[7] विषयोत्पत्तिरित्येषा — ओ; विलयोत्पत्तिरित्येषा — ख, छ, ज; विलयः+उत्पत्तिः= विलय उत्पत्ति; ततः संधिरार्षः ।
[8] या तु — ओ, ख; धातु — छ, ज.
[9] साद्युप० — ओ; साप्युप० — ख, छ, ज.
[10] वाप्यथवा नष्टो — च; वाप्यथवा नष्टौ–छ, ज.
[11] व्यक्तोऽप्यथवानषौ — ख.
[12] ०व्यवस्थितः — ओ.
[13] विवायोऽस्ति — ओ.
[14] नित्यताममि० — ओ; नित्यानां निर्मितात्मनाम् — छ, ज.
[15] ०त्वान्मुच्यते—ओ; ०त्वादुच्यते — ख, छ, ज.
[16] 'ख, छ, ज' मातृकासु '६४' तमश्लोकः '६५' तमश्लोकस्य पूर्वार्धं च न स्तः ।
[17] वस्तुनि — च.
[18] ०रूप स्या० — ओ.
[19] प्रोक्ता उपचारा — ओ; प्रोक्तमुपचारं—च.
[20] ०लोमाद्ये या — ओ.
[21] ०संहते — ओ; ०सङ्गते — ख; ०संतते — च; ०संज्ञते — छ, ज.
[22] यो योगादृते ते संज्ञा — ओ.
[23] नाभावं — ओ; न भाव — छ; नाभाव—ज.
[24] खरशृङ्गयोः — ओ; खरशृङ्गया — ख; खरशृंगया — छ; ख . . गया — ज.
[25] सत्यविनास्तत्र — ओ.
[26] नस्त्यत्र — ख.
[27] भावे — ओ.
[28] ०रूपस्थितं — ओ, ख, छ, ज.
[29] सा वस्तुनः — ओ.
[30] व्यापारे दग्धगोचरे — ओ; व्यापारादध्व०–च.
[31] ०गोचरः — छ, ज.
[32] ०लपितः — ख, छ, ज.
[33] करसंहते — ओ; ०क्षरसंहतैः — ख, छ, ज; ०क्षरसंहते — च.

[1]एकद्वित्र्यादिसंयोगा[2]न्नामभेदो ह्यनेकधा ।
सोऽक्षराणां प्रपत्तव्यो न [3]चान्यस्य [4]च वस्तुनः[5] ॥६९॥
वाच्यवाचकभेदो यः[6]सुप्रसिद्धो महीतले ।
तस्माद् व्योम तु[7] [8]मन्तव्यं [9]तच्चाभ्यस्यं [10]महात्मना ॥७०॥
[11]यल्लयाद्योगयुक् सूक्ष्मो [12]देवैरपि न दृश्यते ।
[13]यस्य यस्य [14]समभ्यासात्पदमाप्नोति [15]तात्त्विकम् ॥७१॥
[16]तद्वीर्योर्जितसामर्थ्यो[17] [18]भोगांस्तद्भुवनेष्वपि ।
प्राप्य भुङ्क्ते द्विजव्याघ्र [19]स्वमदोद्दामगर्वितः ॥७२॥

[ [20]तन्मात्राणि ]

तन्मात्राणि सुसूक्ष्माणि [21]यान्यवाप्य स योगिराट् ।
करोति [22]भूतरचनां विचित्रभुवनोज्ज्वलाम्[23] ॥७३॥
[24]क्ष्मादीनां ये गुणाः [25]प्रोक्ता भूतानां गन्धपूर्वकाः[26] ।

---

[1] एवं द्वित्र्योदि० — ख, ज; एवं द्वित्र्यादि०–छ.
[2] ०न्नाभदोऽप्यनेकधा — ख; ०न्नामभेदा — च; न्नामभेदोऽप्यनेकथा — छ, ज.
[3] चान्य स त वस्तुनः — ओ.
[4] स वस्तुनः — च; च वस्तुना — छ, ज.
[5] 'शक्तिरूपस्थितं तद्धि बोद्धव्यमथवा क्वचित्' इतीदमर्धम् 'ओ' मातृकायां '६९' श्लोकानन्तरमधिकं दृश्यते ।
[6] स्व प्रसिद्धो — च.
[7] यस्मात्तद्व्योम . . — ओ; तस्माल्लब्धो म — च; तस्माद्वचम तु — छ; तस्माद्वमतु–ज.
[8] मत्तव्यं — च.
[9] तच्चान्यस्य — ओ, ख, छ; तच्चाभ्यस्य — च; तच्चान्यस्म — ज.
[10] महात्मनः — ख, छ, ज.
[11] तल्लया० — ओ; यल्लवाद्योग० — छ; यल्लवाग्योग० — ज.
[12] दैवैरपि — ओ.
[13] तस्याभ्यासादवाप्नोति तात्त्विकं पदमुत्तमम्–च.
[14] समाभ्यासा० — ओ.
[15] तापिकम् — ओ.
[16] तद्वीर्योज्झित० — ख, च, छ, ज.
[17] ०सामर्थ्ये — ओ.
[18] भोगं तद्भुवने — ओ; भोगान्तभवने० —ख; भोगांस्तडुवने० — च; भोगान्न भुवने– छ, ज.
[19] स्वमदो मदगर्वितः — ओ; स्वमद्योद्दाम० — ख, छ, ज; सुमदोद्दाम० — च.
[20] 'तन्मात्राण्यपि वर्ण्यन्ते क्रमप्राप्तानि संप्रति ।
बाह्येन्द्रियपरिच्छेद्यगुणत्वाद्भूतसंहतिः ॥
प्रत्यक्षत्वेऽस्मदादीनां स्थिता कारणपूर्विका ।
यत्तत्र कारणं विप्राः सा तु तन्मात्रसंहतिः ॥
विशेषवत्वाच्छब्दादेस्ते च सामान्यपूर्वकाः ।
यत्तत्रापि च सामान्यं तन्मात्रमिति भावयेत् ॥
एकद्वित्रिचतुःपञ्चगुणा तन्मात्रसंहतिः ।
अत एव हि भूतानामभियोगो गुणैः क्रमात् ॥'
'शब्दादिगुणवन्तीह तन्मात्राण्युदितानि हि ।'
(पौष्करे विद्या० पुंस्तत्त्वपटले २४१–२४४, २५४पू०).
[21] यान्य चास्य स — ओ; यान्यवाप स — ख; धान्यवाप स — छ, ज.
[22] भूतिरचनाद्वि० — ओ.
[23] ०ज्वलम् — ओ; भुवने ज्वलाम् — छ, ज.
[24] सुसूक्ष्मादीनां गुणाः — ओ; क्ष्मादिका ये गुणाः — ख; आदीनां ये गुणाः — च; क्ष्मादिनामगुणा — छ, ज.
[25] प्रोक्तं — ज.
[26] गन्धपूर्विकाः — च; गसपूर्वका — छ, ज.

[1]एकापायेन पञ्चानां तेन[2] [3]स्वाक्यो महामुने ॥७४॥
योऽवष्टम्भः प्रधानाख्यः[4] स्वगुणः[5] पार्थिवो मतः ।
गन्धतन्मात्र[6]जस्तस्याः सत्यस्मिन्व्यपदिश्यते[7] ॥७५॥
[8]व्यक्तेयं गन्धतन्मात्रा[9]त्तच्च तन्मात्रपञ्चकम् ।
[10]प्रागेव [11]कथितं युक्त्या पञ्चानामपि कारणम् ॥७६॥
[12]परमाणुसमूहेऽस्मिन् ये गुणाः समवस्थिताः ।
सहजोत्पन्न[13]सद्भावा [14]न ते मुनिवरोत्तम ॥७७॥
[15]हृतेषु समवायित्वात्केवलानां पृथक् पृथक् ।
निराधारा[16] विचेष्टन्ते वाक्यमेतदयुक्तिमत्[17] ॥७८॥
तन्मात्र[18]पञ्चकात्क्षुब्धात्स्वगुणोत्कृष्ट[19]चेतसः ।
व्यक्तिमायान्ति भूतानि तन्मात्रगुणदर्शनात् ॥७९॥

---

[1] एकोपायेन — ओ.
[2] तर्थे — ओ; तत्ते — ख, ज; तत्त्वं — छ.
[3] स्वाक्यं — ओ, ख; स्वात्म नहा मुने — च; स्वात्यं — छ, ज.
[4] . . भोपतानाख्य – ओ; ०म्भोपधानाख्यः – ख; ०म्भोपधाताख्यः — छ; ०म्भोपयाताख्यः — ज.
[5] सगुणं — ओ; सगुणः — ख, छ, ज.
[6] ०जस्तस्य सन्त्यस्मिन् — ख, ज; जस्तस्य सत्यस्मिन् — छ.
[7] व्युपदिश्यते — च.
[8] व्यक्तोऽयं — च, छ.
[9] ०त्तद्वत्त० — च.
[10] मतङ्ग० विद्या० १८.१०१–१०५ पू०
[11] गदिता युक्ता — ओ; गदितं युक्त्या — च.
[12] परमाणुसमूहेषु ते गुणाः — च;
'पृथ्व्यादिकारणत्वेन प्रोक्ता तन्मात्रसंहतिः ।
परिमाणविवक्षातः परमाणोः कथं न वा ॥
कारणं जगतो नाणुरविभुत्वाद्घटादिवत् ।
सति मूर्त्वे यवीयान् यः पार्थिवः स घटो यथा ॥
यवीयान् परमाणुश्च तस्माद्भौतिक इष्यताम् ।
ये मूर्ता ये च विश्लिष्टा मूर्तात्कुम्भादिवस्तुनः ॥
ते कार्याण्येव दृश्यन्ते ग्रीवाद्यवयवा यथा ।
किं चाणवः सावयवाः परेषां स्थित्यदर्शनात् ॥
नहि धर्मस्थितिर्दृष्टादृष्टे धर्मिणि कुत्रचित् ।
तन्नावयवमात्राणोर्न हि युक्ता कदाचन ॥"
'ततो न परमाणूनां हेतुत्वं युक्तिभिर्मतम् ।
महाभूतानि जायन्ते क्रमात्तन्मात्रपञ्चकात् ॥
आकाशं पवनस्तेजस्तोयं भूरिति संज्ञया ।'
(पौष्करे विद्या० पुंस्तत्त्वपटले २५८–२६२; २७९, २८० पू०).
[13] ०सद्भावं — ओ.
[14] नाते मुनिवरो भयम् — ओ.
[15] भूतेषु — ओ, च.
[16] ०धारान् — ओ; ०धाराद् — ख, छ, ज.
[17] ०मान् — ख, छ, ज.
[18] ०पश्चात्संक्षुब्धा० — ओ.
[19] ०वे . . — ओ.

[ [1]तन्मात्राणां जयः ]

**तन्मात्राण्यपि सिद्धानि ध्यातव्यानि [2]मुमुक्षुणा ।**

---

[1] 'अथ गन्धादिपूर्वाणां तन्मात्राणामनुक्रमात् ।
धारणाः संप्रवक्ष्यामि तत्फलानां प्रसिद्धये ॥
पीतकं गन्धतन्मात्रं तुर्यास्रं पर्वसंमितम् ।
नासारन्ध्राग्रगं ध्यायेद्वज्रलाञ्छनलाञ्छितम् ॥
दशमाद्दिवसादूर्ध्वं योगिनोऽनन्यचेतसः ।
कोऽपि गन्धः समायाति द्विधाभूतोऽप्यनेकधा॥
ततोऽस्य ऋतुमात्रेण शुद्धो गन्धः स्थिरीभवेत् ।
षड्भिर्मासैः स्वयं गन्धमय एव भविष्यति ॥
यो यत्र रोचते गन्धस्तं तत्र कुरुते भृशम् ।
त्र्यब्दात्सिद्धिमवाप्नोति प्रेरितां पाञ्चभौतिकीम्॥
तदूर्ध्वमात्मनो रूपं तत्र संचिन्तयेद्धृदि ।
गन्धावरणविज्ञानं त्रिभिरब्दैरवाप्नुयात् ॥'
(मालिनीविजयोत्तरे १४.१–६);
'रसरूपमतो वक्ष्ये धारणां योगिसेविताम् ।
यया सर्वरसावाप्तिर्योगिनः संप्रजायते ॥
जलबुद्बुदसंकाशं जिह्वायां चाग्रतः स्थितम् ।
चिन्तयेद्रसतन्मात्रं जिह्वाग्राधारमात्मनः ॥
सुशीतं षड्रसं चिन्त्यं तद्गतेनान्तरात्मना ।
ततोऽस्य मासमात्रेण रसास्वादः प्रवर्तते ॥
लवणादीन् परित्यज्य यदा मधुरतां गतः ।
तदा तन्निगिरन् योगी षण्मासान्मृत्युजिद्भवेत् ॥
जराव्याधिविनिर्मुक्तः कृष्णकेशोऽच्युतद्युतिः ।
जीवेदाचन्द्रतारार्कमभ्यस्यंश्च क्वचित्क्वचित् ॥
(मालिनीविजयोत्तरे १४.११–१५);
'अतो रूपवतीं वक्ष्ये दिव्यदृष्टिप्रदां शुभाम् ।
धारणां सर्वसिद्ध्यर्थं रूपतन्मात्रमाश्रिताम् ॥
एकान्तस्थो यदा योगी विनिमीलितलोचनः ।
शरत्संध्याभ्रसंकाशं यत्तु किंचित्प्रपश्यति ॥
तत्र चेतः समाधाय यावदास्ते दशाहकम् ।
तावत्प्रपश्यते तत्र बिन्दून् सूक्ष्मतमानपि ॥
केचित्तत्र सिता रक्ताः पीता नीलास्तथा परे ।
तान् दृष्ट्वा तत्र संदध्यान्मनोऽत्यन्तमनन्यधीः ॥
षण्मासात्पश्यते तेषु रूपाणि सुबहून्यपि ।
त्र्यब्दात्तान्येव तेजोभिः प्रदीप्तानि स्थिराणि च॥
तान्यभ्यस्यंस्ततो द्व्यब्दाद्बिम्बाकाराणि पश्यति ।
ततोऽब्दात्पश्यते तेजः षण्मासात्पुरुषाकृति ॥
त्रिमासाद्व्यापकं तेजो मासात्सर्वं विसर्पितम् ।
कालक्रमाच्च पूर्वोक्तं रूपावरणमाश्रितम् ॥
तत्सर्वं फलमाप्नोति दिव्यदृष्टिश्च जायते ।'
(मालिनीविजयोत्तरे १४.१९–२६पू०);
'अतः स्पर्शवतीमन्यां कथयामि तवाधुना ।
धारणां तु यया योगी वज्रदेहः प्रजायते ॥
षट्कोणमण्डलान्तःस्थमात्मानं परिभावयेत् ।
रूक्षमञ्जनसंकाशं प्रत्यक्षं स्फुरिताकुलम् ॥
ततोऽस्य दशभिर्देवि दिवसैस्त्वचि सर्वतः ।
भवेत्पिपीलिकास्पर्शस्ततस्तमनुचिन्तयन् ॥
वज्रदेहत्वमासाद्य पूर्वोक्तं पूर्ववल्लभेत् ।
पूर्वोक्तमण्डलाकारं पूर्वरूपं विचिन्तयन् ॥
स्पर्शतत्त्वावृतिज्ञानं लभन् केन निवार्यते ।'
(मालिनीविजयोत्तरे १४.२८–३२पू०);
'कर्णौ पिधाय यत्नेन निमीलितविलोचनः ॥
यं शृणोति महाघोषं चेतस्तत्रानुसंधयेत् ।
दीप्यते जाठरो वह्निस्ततोऽस्य दशभिर्दिनैः ॥
दूराच्छ्रवणविज्ञानं षण्मासादुपजायते ।
यस्तस्यान्ते ध्वनिर्मन्दः किंचित्किंचिद्विभाव्यते ॥
सकलात्मा स विज्ञेयस्तदभ्यासादनन्यधीः ।
शब्दावरणविज्ञानमाप्नोति स्थिरतां गतम् ॥
यः पुनः श्रूयते शब्दस्तदन्ते शङ्खनादवत् ।
प्रलयाकलरूपं तदभ्यस्यं तत्फलेप्सुभिः ॥
स एवातितरामन्यशब्दप्रच्छादको यदा ।
विज्ञानाकल इत्युक्तस्तदासावपराजिते ॥
मनोह्लादकरो योऽन्यस्तदन्ते संविभाव्यते ।
स मन्त्र इति विज्ञेयो योगिभिर्योगकाङ्क्षिभिः॥
ततस्तु श्रूयते योऽन्यः शान्तघण्टानिनादवत् ।
स मन्त्रेश इति प्रोक्तः सर्वसिद्धिफलप्रदः ॥
घण्टानादविरामान्ते यः शब्दः संप्रजायते ।
मन्त्रेशेशपदं तद्धि सिद्धीनां कारणं महत् ॥
अनिलेनाहता वीणा यादृङ्नादं विमुञ्चति ।
तादृशो यो ध्वनिस्तत्र तं विद्याच्छाम्भवं पदम् ॥

[3]यज्जयात्तद्विकारैस्तु[4] क्रीडते [5]मुदितात्मवान् ॥८०॥
[6]तामसीयं [7]मया प्रोक्ता [8]सिद्धिर्योगयुजेऽत्र[9] तु ।
ईषद्रजः समाविद्धा[10] सत्त्व[11]तन्मात्रगोचरा[12] ॥८१॥
[13]उपस्थमभ्यसन्योगी तदधि[14]ष्ठातृगोचरम् ।
[15]व्यक्तं [16]जानाति येनासौ [17]प्रजाः पालयितुं क्षमः ॥८२॥
[18]प्राकाम्यगुणमाहात्म्यं व्यक्तमाप्नोत्यनुत्तमम्[19] ।
प्रजापतिसमो भूत्वा [20]क्रीडते [21]विगतक्लमः[22] ॥८३॥
[23]मित्रविष्णिवन्द्रशर्वाणां क्रमात्तत्तुल्य एव सः ।

---

पृथग्वा क्रमशो वापि सर्वानेतान् समभ्यसेत् ।
प्राप्नोति सर्ववित्सिद्धीः शब्दावरणमाश्रिताः ॥
इत्येताः कथिताः पञ्च तन्मात्राणां तु धारणाः ।'
(मालिनीविजयोत्तरे १४.३३उ०–४३).

[2] ययुः सदा—ओ; युयुत् . . . — ख; युयुत्सुना — छ, ज.

[3] यन्मया — ओ, न . . वा तद्वि० — ख.

[4] तद्विवेकैस्तु — ओ.

[5] मुनिरात्म० — ख; मुनितात्म० — छ, ज.

[6] तामसीयें — ओ.

[7] यथा—ओ, ख, छ, ज.

[8] सिद्धयोग० — ख.

[9] ०युजोऽत्र — च.

[10] ०विद्धात् — च; ०समन्विद्धा — छ; ०समः सिद्धा — ज.

[11] ०सन्मात्र० — ख.

[12] ०गोचरात् — च.

[13] उपास्थिमभ्यसेद्योभि — ओ; उपस्थं महसन्त्यो हि — ख, छ, ज.

[14] ०ष्ठातृतो वम् — ख.

[15] व्यक्ति — ख.

[16] जायति — ओ; जायाति — ख, छ, ज.

[17] प्रजां — च; प्रजापाल० — छ, ज.

[18] प्राहम्य गुणमाहातं — ओ; प्राक्रम्य गुरु० — ख.

[19] ०नुत्तमाम् — ओ.

[20] क्रीडेत्स — च.

[21] विगतं ग . . — ओ.

[22] ०क्रमः — छ, ज.

[23] . . . सर्वाणां — ओ; . . विष्ण्वीन्द्रशर्वाणां—ख; विष्णु दृश . . प्राणां — छ; विष्णुंदृ . . प्राणां — ज.

[ [1]कर्मेन्द्रियजयः ]

[2]कर्मेन्द्रियजयान्मन्त्री [3]विजिताक्षश्च जायते ॥८४॥
प्रत्यक्षाणि च सर्वाणि कर्माण्यस्मिन्सितासिते[4]।
[5]जगत्यलुप्तवीर्याणि [6]प्रवर्तन्तेऽमितानि च[7] ॥८५॥
[8]प्रवृत्ति[9]र्यावता दृष्टा [10]रजसः सर्वदा मुने ॥
[11]सर्वस्मिन्नेव मार्गेऽस्मिंस्तथापि द्विविधा मता[12] ॥८६॥
[13]सृष्टिस्तन्मात्र[14]पूर्वा या [15]तामसी सा प्रकीर्तिता।
दशधा कार्यभावेन[16] संस्थिता[17] भोगसिद्धये ॥८७॥
[18]भोक्तृत्वसिद्धये [19]चान्या सात्त्विकी [20]तामसीं विना।

---

[1] 'वदनान्तं नमःशब्दमात्मनश्चिन्तयेद्बुधः।
गृहीतवाक्त्वमभ्येति मौनेन मधुसूदनि ॥
सर्वत्रास्खलिता वाणी षड्भिर्मासैः प्रवर्तते।
सर्वशास्त्रार्थवेत्तृत्वं वत्सरादुपजायते ॥
वागेवास्य प्रवर्तेत काव्यालङ्कारभूषिता।
त्रिभिरब्दैः स्वयं कर्ता शास्त्राणां संप्रजायते ॥
तत्रैव चिन्तयेद्देहं स्वकीयमनुरूपतः।
भूयस्तमेव धवलमीषत्तेजोऽवभासितम् ॥
रसान्तःसोमबिम्बादितेजोऽन्तं तमनुस्मरेत्।
सर्वं फलमवाप्नोति वागावरणजं क्रमात् ॥
पाणौ च तं समादाय षण्मासाद्दूरसंस्थितम्।
वस्तु गृह्णात्यसंदेहात्त्र्यब्दात्पारेऽपि वारिधेः ॥
तत्रात्मदेहं पूर्वं तु पद्माभमनुचिन्तयन्।
सव्यापारादिभेदेन चतुर्दशकमादरात् ॥
पूर्वोक्तकालनियमात्पूर्वोक्तेनैव वर्त्मना।
सर्वं फलमवाप्नोति हस्तावृतिसमाश्रितम् ॥
पादावेवंविधो ध्यायन् वत्सरत्रयमादरात्।
मुहूर्तेन समुद्रान्तामश्रान्तो भ्रमति क्षितिम् ॥
चतुर्दश समभ्यर्च्य स्वदेहादिकमभ्यसन्।
प्राप्नोति पूर्ववत्सर्वं फलं पादावृतिस्थितम् ॥
पायावपि मनस्तत्त्वं स्थिरीकुर्वन्नवाप्स्यति।
मासेन तद्भवव्याधिविमुक्तिमविलम्बतः ॥
पुण्यश्लोकत्वमाप्नोति त्रिभिरब्दैरनादरात्।
चतुर्दशविधं चात्र पूर्ववत्फलमाप्स्यति ॥
स्वरूपतः स्मरेल्लिङ्गं मासमात्राज्जितेन्द्रियः।
षड्भिर्मासैरनायासादिच्छासिद्धिमवाप्नुयात् ॥
चतुर्दशविधे भेदे तत्राभ्यस्ते महामतिः।
लिङ्गावरणजं सर्वं पूर्ववल्लभते फलम् ॥'
(मालिनीविजयोत्तरे १५.२–१५).

[2] कामेन्द्रिय० — च.

[3] निर्मिताक्षश्च — च; विधाताक्षश्च — छ; विधिनाक्षश्च — ज.

[4] सितेऽसिते — ख.

[5] जयत्यलुप्त० – ओ, ख, छ, ज; जगत्प्रलुप्त० — च.

[6] प्रवर्तन्त्यमि० — ख, छ, ज.

[7] सितानि च — च.

[8] प्रपत्तिर्यापि . . . — ओ; प्रवृत्तवतो — ख.

[9] ०र्यावती वृष्टचा — च; ०र्यावतो दृष्टा — छ, ज.

[10] रजतः — ओ; राजसः — ज.

[11] सर्वस्मिन्येव मार्गेन् —ओ; सर्वस्मिंस्तथापि–ख.

[12] मताः — च.

[13] सृष्टितन्मात्र० — ओ, ख, छ, ज.

[14] ०पूजायां — ख, छ, ज.

[15] तामसीयं — ओ, ख, छ, ज.

[16] कार्यभेदेन — ओ, ख, छ, ज.

[17] संस्थितो — ओ.

[18] भोक्तृत्वं सिद्धये — ओ; केनात्र सिद्धये — ख; केनत्र सिद्धये — छ, ज.

[19] वाद्य साक्षात्परिकीर्तिता — ख; वाद्य साक्षा क्लि परिकीर्तिता — छ; वाद्य साक्षाक्ली परिकीर्तिता — ज.

[20] परिकीर्तिता — ओ.

यस्मादुन्मील्यते भोगः[1] [2]प्रभूतत्वेन [3]संस्थितः ॥८८॥
तस्मा[4]त्साक्षित्वमापन्ना[5] वीर्येणैक दशात्मना।
सत्त्वमुन्मीलकं[6] नित्यं तस्मात्सा सात्त्विकी मता ॥८९॥
उभयोरपि बोद्धव्यं [7]रजः कारणचोदनात्[8]।
[9]प्रवृत्तिकुशलं सिद्धं[10] [11]न प्रसूयेत कर्हिचित् ॥९०॥
त संयोगाद्यथा पुंसः [12]प्रसूतिर्वनिताश्रयात्।
[13]तथापि स्त्री [14]प्रसूयेत न च पुं गर्भमर्हति ॥९१॥
द्वे [15]पत्नी सत्त्वतमसी रजसः परिकीर्तिते[16]।
[17]तथाप्येकं [18]विनान्यस्मात्प्रवृत्तिर्मुनि[19]पुङ्गव ॥९२॥
तथापि प्रेरकत्वात्तु[20] [21]रजः पुंस्युपचर्यते[22]।

---

[1] . . ने भोगान् — ओ; दुन्मीलिते भोगात् — ख, छ, ज.
[2] प्रभूतेन च — ख, छ, ज.
[3] संस्थितान् — ओ; संस्थिता — ख, छ, ज.
[4] ०त्साक्षत्व० — ओ, च; ०त्साक्षीत्व० — ख.
[5] ०मापन्नाद् — ओ.
[6] ०मुन्मीलितं — ख, छ; ०मुन्मीलिताद् — ज.
[7] रधः — ज.
[8] ०चोदनम् — ख, छ, ज.
[9] प्रवृद्धि० — च.
[10] सिद्धे — ओ.
[11] प्रसूचयति — ओ; न प्रसूयति — ख, छ, ज.
[12] प्रसूतिर्वेतिता० — ख; प्रसूतिर्वतिता० — छ, ज.
[13] तथाह — ओ.
[14] प्रसूयेन — ओ; प्रसून . . — ख, छ, ज.
[15] पत्तिरत्त्वतमसी — ख; पत्ति स्त्व . . परि० — छ; पतिस्वत्वतमसि — ज.
[16] ०कीर्तितः — ओ; ०कीर्त्यते — ख, छ, ज.
[17] यथाप्येकं — ओ, च; तथाप्येवं — ख, छ, ज.
[18] विना न स्यात् — ओ; विजात स्यात् — ख, छ, ज.
[19] ०त्प्रवृत्ति मुनि० — छ, ज.
[20] प्रेरकत्वाच्च — ओ, ख, छ, ज.
[21] रजसः पुंवचर्यते — ओ; रजसामुपचर्यते — ख, छ, ज.
[22] ०चीर्यते — च.

[ [1]बुद्धीन्द्रियजयः ]

बुद्धीन्द्रिय[2]समभ्यासात्क्रमात्स[3]र्वाक्षवृत्तिषु[3] ॥९३॥
[4]दूरादप्यवि[5]घातात्मपटुना ज्ञानजेन च।
सुप्रसन्नेन वीर्येण [6]प्रवर्तन्तेऽविचारतः ॥९४॥
श्रोत्रादीनि यथा भोक्तु[7]र्भोगान्संपादयन्ति हि।
कर्मेन्द्रियाण्यपि तथा विशेषेणात्र सुव्रत ॥९५॥
[8]विकुर्वन्ति स्वसामर्थ्याद्भोक्तुर्भोगाय सादरम्[9]।

---

[1] 'स्वजिह्वामिन्दुवर्णाभां चिन्तयेद्दशभिर्दिनैः।
प्राप्नोत्यनुभवं योगी जिह्वाभवमिवात्मनः॥
आस्वादयति दूरस्थं षण्मासादेकमानसः।
वत्सरैस्तु त्रिभिः साक्षाल्लेढ्यसौ परमामृतम्॥
येनासौ भवति योगी जरामरणवर्जितः।
अपेयादिप्रसक्तोऽपि न पापैः परिभूयते॥
पूर्ववत्सर्वमन्यच्च स्वदेहाद्यनुचिन्तयन्।
फलमाप्नोत्यसंदेहाद्रसनावृतिसंभवम्॥
कनकाभं स्वकं घ्राणमनुचिन्तयतः शनैः।
दिवसैर्दशभिर्घ्राणशून्यतानुभवो भवेत्॥
षण्मासाद्गन्धमाघ्राति दूरस्थस्यापि वस्तुनः।
घातयेद्गन्धमाघ्राय यस्य दुष्टो भविष्यति॥
वत्सैरस्तु त्रिभिर्दिव्यं गन्धमासाद्य योगवित्।
जरामरणनैर्गुण्ययुक्तो दिव्यत्वमर्हति॥
सर्वमन्यद्यथोद्दिष्टं तथैव च विचिन्तयेत्।
क्रमिकं फलमाप्नोति घ्राणावरणमास्थितम्॥
उदयादित्यसंकाशे चिन्तयंश्चक्षुषी निजे।
दशाहाच्चक्षुषो रक्तस्रावानुभवमाप्स्यति॥
वेदना महती चास्य ललाटे संप्रजायते।
न भेतव्यं महादेवि न चाभ्यासं परित्यजेत्॥
संत्यजन्नन्धतामेति तेन यत्नात्समभ्यसेत्।
षड्भिर्मासैर्महायोगी दिव्यदृष्टिः प्रजायते॥
छिद्रां प्रपश्यते भूमिं कटाहान्तामतन्द्रितः।
आध्रुवान्तमथोर्ध्वं च करामलकवद्बुधः॥
वत्सरैस्तु त्रिभिर्योगी ब्रह्माण्डान्तं प्रपश्यति।
तदन्तर्योगिनीज्ञानं शरीरस्थं प्रजायते॥
स्वदेहादिकमन्यच्च पूर्वोक्तं पूर्ववत्स्मरन्।
नयनावृतिजं सर्वमाप्नोतीति किमद्भुतम्॥
सर्वत्राञ्जनपत्राभां निस्तरङ्गां त्वचं स्मरन्।
शस्त्रैरपि न मासेन हन्तुं शक्यो भविष्यति॥
षण्मासादतितीव्रेण नाग्निनाप्येष दह्यते।
वत्सरत्रितयाद्योगी वज्रोपलविषादिभिः॥
पीड्यते न कदाचित्स्यादजरामरतां गतः।
स्पर्शावृतिजविज्ञानगीतवच्च चतुर्दश॥
भेदाः सह फलैर्ज्ञेयाः पूर्वकालानुसारतः।
किं त्वत्र चिन्तयेद्देहं स्वदेहादिभिरावृतम्॥
संदधानः स्वकं चेतः श्रोत्राकाशे विचक्षणः।
दूराच्छ्रवणविज्ञानं षण्मासादुपजायते॥
त्रिभिः संवत्सरैर्देवि ब्रह्माण्डान्तरुदीरितम्।
शृणोति स स्फुटं सर्वं जरामरणवर्जितः॥
तत्राकाशोक्तवत्सर्वं स्वदेहाद्यनुचिन्तयेत्।
श्रोत्रावरणजं सर्वं फलमाप्नोति पूर्ववत्॥'
(मालिनीविजयोत्तरे १५.१६–३६)

[2] ०समाभ्या० — च, छ.

[3] सर्वार्थसिद्धिषु — ओ; ०त्सर्वत्र वृत्तिषु — ख, छ, ज.

[4] दूरादप्यभिघातात्मा — ख.

[5] ०घातात्मा पठना — ओ; घातात्मा पटुना — ख, च, छ, ज.

[6] प्रवृत्तिरविचारतः — ओ, ख; प्रवृत्तिरपिचारतः — छ; प्रवृत्तिरपिचारत — ज.

[7] ०र्भोगानापादयन्न हि — ओ; ०र्भोगानापादयन्ति हि — ख, ज; ०र्भोगानां पादयन्ति हि — छ.

[8] विकुर्वन् विश्वसामर्थ्या० — च.

[9] सादरात् — ज.

[1]सामान्ये स्थितिसाधर्म्ये किमर्थं नाभिमन्यसे ॥९६॥
[2]भोक्तुमभ्युद्यत[3]स्यैव [4]भोक्तुर्भोगान् महामुने ।
[5]संरम्भाकुलितानि स्युः सर्वाण्येकमुखानि[6] तु ॥९७॥
भोगं प्रत्युद्यतान्यत्र किं न [7]पश्यसि दुर्मते[8] ।

[ [9]मनोजयः ]

मनोजयाज्जगत्यस्मिंस्त्रि[10]कालज्ञानमाप्नुयात् ॥९८॥
परचित्तं [11]च जानाति स्पष्टमत्यद्भुतं ध्रुवम् ।
यद्यत्संकल्पते[12] योगी[13] मनसा योगतेजसा ॥९९॥
तत्तत्सर्वमवाप्नोति नात्र कार्या विचारणा ।

[ [14]अहंकारजयः ]

[15]एषां [16]योनिः [17]समभ्यस्या यज्जयादखिलं जगत् ॥१००॥

---

[1] सामान्यस्थिति० — ओ, ख, छ, ज.

[2] भोक्तुमभ्युदितस्यास्य–ओ; भोक्तुमभ्युद्यते–ख.

[3] 'ख, छ, ज' मातृकासु 'स्यैव' इत्यारभ्य '९९' तमश्लोकस्य तृतीयपादे 'यद्यत्संकल्पते' इत्यन्तो भागो न दृश्यते ।

[4] भोक्तुभो. . महा० — ओ.

[5] संरहाकुलितानि स्य — ओ.

[6] ०सुखानि — च.

[7] पश्यति — ओ.

[8] दुर्गतेः — च.

[9] 'मनोवतीमतो वक्ष्ये धारणां सर्वसिद्धिदाम् ।
यया संसिद्धया देवि सर्वसिद्धिफलं लभेत् ॥
मन एव मनुष्याणां कारणं बन्धमोक्षयोः ।
तस्मात्तदभ्यसेन्मन्त्री यदीच्छेन्मोक्षमव्ययम् ॥
तदर्धचन्द्रसंकाशमधोवक्त्रं हृदि स्थितम् ।
चिन्तयन् मासमात्रेण प्रतिभां प्रतिपत्स्यते ॥
अकस्मात्पश्यते किंचिदकस्माच्छृणुते तथा ।
सर्वेन्द्रियात्मकं ज्ञानमकस्माच्च क्वचित्क्वचित् ॥
स्वस्वकेन्द्रियविज्ञानं संपश्येद्वत्सरत्रयात् ।
भवते योगयुक्तस्य योगिनः सुपरिस्फुटम् ॥
स्वदेहादिकमप्यत्र पूर्वोक्तवदनुस्मरन् ।
चित्तावरणविज्ञानं प्राप्य सोमगुणं लभेत् ॥'
(मालिनीविजयोत्तरे १५. ३७–४२)

[10] ०कालं ज्ञान० — च.

[11] न जानाति — च.

[12] संकल्पयन् — च.

[13] योगि० — छ, ज.

[14] 'अथ गर्वमयीं दिव्यां धारणां धारणोत्तमाम् ।
महागर्वकरीं वक्ष्ये योगिनां योगवन्दिते ॥
षोडशारं स्मरेच्चक्रमात्मदेहमनन्यधीः ।
एषोऽहमिति संचिन्त्य स्वकार्यपरिवारितम् ॥
अप्रधृष्यो भवेद्योगी वत्सरत्रितयेन तु ।
ममत्वमच्युतं तस्य भवेत्सर्वत्र कुत्रचित् ॥
तादृग्रूपस्य चक्रस्य नाभिं मूर्तिं स्वकां स्मरन् ।
चिन्तयेत्सर्वमेवाहं मयि सर्वमवस्थितम् ॥
ततोऽहंकारविज्ञानं प्राप्नोतीति किमद्भुतम् ।
हृच्चक्रे समनुध्यायन् मत्स्वरूपमतन्द्रितः ॥
अर्कलोकमवाप्नोति गर्वावरणजं फलम् ।
बिम्बादिकं क्रमात्सर्वं चिन्तयन् नीललोहितम् ॥
तद्भवं सर्वमाप्नोति दशावस्थाप्रचोदितम् ।
इति गर्वमयी प्रोक्ता प्रजापतिगुणप्रदा ॥
(मालनीविजयोत्तरे १६.१–७)

[15] येभ्यो — ओ, ख, छ, ज; एभ्यो — च.

[16] योनिं — च.

[17] समभ्यस्य — ओ, ख, च, छ, ज.

[1]जितं भवति विप्रेन्द्र प्रचण्ड[2]बलविक्रमात्[3]।
[4]यतः संरम्भमाहात्म्यादहमिप्रत्ययात्मकात्[5] ॥१०१॥
[6]वीर्येणोद्भूतवीर्याणि [7]प्रवर्तन्ते स्ववृत्तिषु।
परार्थमुदितो न्यायो[8] न स्वतस्तेन सुव्रत ॥१०२॥
[9]मन्यामहे तदुत्थानि तद्धर्मा[10]मोदगोचरात्।
[11]बाह्यार्थमपि गृह्णन्ति स्फुटीकृत्य सुनिश्चयात् ॥१०३॥
कार्यकारणभावो यः सोभयोरपि[12] तत्कृतः[13]।
अक्षार्थयोः समायोगाद्विज्ञानं नान्यथा स्फुटम् ॥१०४॥
[14]तस्माद्ध्रुवमहंकाराद्वयक्ती[15]भूतानि भूतये।
[16]तत्तन्त्राणि यतो [17]नित्यं स्वकार्याण्यपि[18] कारणम्[19] ॥१०५॥
[20]नाभिभूय प्रवर्तन्ते [21]तस्मान्मे निश्चितं मनः।

[ [22]बुद्धितत्त्वजयः ]

बुद्धिरप्यत्र [23]पूर्वोक्ता तद्ध्यानाद्ध्यातुरादरात् ॥१०६॥

---

[1] स्थितं — ओ.
[2] ०बलि० — ख.
[3] ०विभ्रमात् — च.
[4] यत्संरम्भं च मा० – ओ; . . तः संरम्भमा०–ख.
[5] ०दहंप्रत्ययथात्मकम्—ओ; ०दहमिप्रत्ययात्मकः — ख, छ, ज; प्रहसन्प्रत्ययात्मकात् — च.
[6] वीर्येणाद्भुत० — ओ, ख, छ, ज.
[7] प्रवृत्तं निस्ववृत्तिषु — ओ; प्रवृत्तं तिसृषु वृत्तिषु — ख; प्रवृतंति स्ववृत्तिषु — छ, ज.
[8] ०मुचितं न्यायं — ओ; ०मुचितं ध्यायन् — ख, छ, ज; मुदितो न्याय्यो — च.
[9] मन्यामह तदुद्धानि — ओ; सव्यामहे तदु० — च; मन्यामहे तदुद्धानि — छ.
[10] ०मोह० — ओ; ०भेद० — च.
[11] बाह्यार्थानि विगृह्णान्ति — ओ; बाह्याद्वनेऽपि गृह्णाति — ख; बाह्याद्वन्येऽपि गृह्णाति — छ, ज.
[12] सोनयोद्वित — ओ; सभेयोरपि — ख; सहयोरपि — छ, ज.
[13] तत्कृतम् — ओ, च.
[14] तस्मा ध्रुवमलंकाराद्वयक्ति० — ख, छ, ज.
[15] ०भूताद्विभूतये — ओ.
[16] तत्तन्द्राणि — ओ; तन्मन्त्राणि — ख; तत्. तत्रानि — च; तन्मात्राणि — छ, ज.
[17] नित्यस्व० — ओ.
[18] ०कार्याण्यवि० — ओ.
[19] कारणा — ओ, ख.
[20] नाभिभूयः प्रवर्तंत — ओ; न हि भूयः प्र० — ख; न हि भूय प्र० — छ; न हि भूयप्रवर्तन्त–ज.
[21] तस्मात्तन्निश्चितं — ख.
[22] 'उद्यदादित्यबिम्बाभं हृदि पद्ममनुस्मरन्।
धर्मादिभावसंयुक्तमष्टपत्रं सकर्णिकम् ॥
मासेन स्थिरबुद्धिः स्यात्षड्भिः श्रुतिधरो भवेत्।
त्रिभिरब्दैः स्वयं कर्ता शास्त्राणां संप्रजायते ॥
स्वां तत्र चिन्तयेन्मूर्तिं बुद्धितत्त्वं प्रपश्यति।
तदीशज्ञानमाप्नोति ब्रह्माणमनुचिन्तयन् ॥
वेदानुद्गिरते सप्त [ सुप्तः ] समाधिस्थोऽथवा मुनिः।
सुस्थिरास्ते सदाभ्यासादनधीता अपि स्फुटम् ॥
बिम्बादिकं क्रमात्सर्वं पूर्वोक्तमनुचिन्तयन्।
प्राप्नोति ब्राह्ममैश्वर्यं बुद्ध्यावरणमाश्रितम् ॥
(मालिनीविजयोत्तरे १६.८–१२).
[23] मतङ्ग० विद्या० १७.१–१५.

[1]कृत्स्नं ब्रह्मगुणोपेतं विज्ञानं व्यक्तिमेति हि।
[2]बोद्धृत्वधर्मधर्मित्वाद्बुद्धिरध्यवसायिनी[3] ॥१०७॥
प्रागेव [4]साधिता [5]तुभ्यं [6]यया स्पष्टं प्रवेद्यते[7]।
[8]पुंस्थाण्वोर्निर्मलं [9]यत्स्याद्विज्ञानं सा मतिः स्मृता ॥१०८॥
[10]गच्छतः [11]सहसा [12]यत्र चक्षुराघ्रातमुल्बणम्[13]।
[14]दृष्ट्वोरगसमाकारं क्षोभमायाति[15] तत्क्षणात्[16] ॥१०९॥
पश्चाद्धिया[17]ध्यवस्याणू रज्जुरित्यव[18]धार्य तु।
[19]अवैति शङ्कां सा बुद्धिर्बोद्धव्या[20] युक्तिवादिभिः ॥११०॥
सा एव [21]परभावेन [22]गर्वत्वेन व्यवस्थिता।
[23]निर्जित्य [24]योगसामर्थ्याद्दैवैः [25]सार्धं रमेत्सुधीः ॥१११॥

[ प्रधानजयः ]

[26]प्रधानमस्या बोद्धव्यं कारणं मुनिसत्तम।
[27]यज्जया[28]दणिमाद्यं [29]स्यादैश्वर्यं योगिनः स्फुटम् ॥११२॥

---

[1] सकृत्स्नं ब्रह्मणोपेतं — च.
[2] योद्धृत्व० — ख; योध्यध्व — छ, ज.
[3] ०रध्यवसायिनम्—ख, छ, ज; ०रज्यवसायिनी — च.
[4] साधितं — ओ, ख; साधितुं — छ, ज; मतङ्ग० विद्या० १७.१–१५.
[5] तुल्यं — ख, छ, ज.
[6] यथा — ओ, च; यधा — छ.
[7] प्रमोदते — ओ, ख, छ, ज; प्रवेदते — च.
[8] पुंस्याणो० — ओ; पुंस्थाणो० — ख, छ, ज.
[9] यस्माद्विज्ञानं — ओ; पुंसो विज्ञानं — ख, छ, ज.
[10] गजतः — छ, ज.
[11] साहसा — ख; सह सं० — छ, ज.
[12] या तु चक्षु० — ओ; याति चक्षुराघ्राण० — ख; याति चक्षुराघ्र० . . — छ, ज.
[13] ०मुद्वणम् — ओ, ख, छ, ज; ०मुल्बणः – च.
[14] दृष्टोग० — ख; मृष्टोरग० — ख० पाठान्तरम्; दृष्टोरग० — छ, ज.
[15] ०मायान्ति — ओ.
[16] तद्वणात् — ओ.
[17] ०ध्यवसार्थाद्रज्जुरित्यवसाय — ओ; ०ध्यवव्यस्याशु रज्जु० — ख, ज. व्यवस्याणु रज्जु० — च; ध्यवध्याशु रज्जु० — छ.
[18] ०धार्यते — ख; ०धार्यत — छ, ज.
[19] अवेति शंक सा — ओ; अवेति शक्ति सा — ख; अवैति शक्ति सा — छ, ज. अपेति शङ्कां — च.
[20] बुद्धि बो० — ख; बद्धिबोद्धव्यं — छ, ज.
[21] परा भावेन — ओ; पुरभावेन — ख, छ, ज.
[22] गर्वतेन व्यवस्थया — ओ; गन्धत्वेन व्य.. स्थया — ख; गर्भत्वेन व्यव . . — च; गन्धत्वेन व्यवस्थया — छ, ज.
[23] निर्गत्य — ओ.
[24] योगमार्गार्थाद्दैवे — ओ; योगसमर्थ्या देवैः — ख, छ, ज.
[25] साध्य रमेत् — ज.
[26] प्रधानमस्य — ओ; प्रधानमत्स्या — छ, ज.
[27] यज्जय्या० — छ.
[28] ०दणुमाद्यं — ओ.
[29] स्यादैश्वर्यं योगिन स्फुटम् — ख; स्यादैश्वर्यंर्योगिन स्फुटम् — छ; स्यादैश्वर्यं यो हि न स्फुटम् — ज.

व्यक्ति[1]मायाति [2]येनासावकृतार्थेष्ववारितः[3] ।
भुवनेषु [4]विचित्रेषु [5]भोगान्भुङ्क्ते मनोऽनुगान्[6] ॥११३॥

मतङ्ग उवाच —

[7]भवता निखिलं [8]प्रोक्तं [9]विज्ञानस्य तु साधनम् ।
तच्च संयोगजं [10]दृष्टं क्षणप्रध्वंसिकारणम्[11] ॥११४॥
वक्तव्यं [12]निर्मलोक्त्या [13]तु [14]संदेहविनिवृत्तये ।

परमेश्वर उवाच —

[15]नाचैतन्यसहस्रेऽपि द्रव्याणा[16]मेकतः स्थिते ॥११५॥
[17]मादकादेर्मुनिव्याघ्र विज्ञानं दृश्यते क्वचित् ।
तस्मा[18]दस्त्यत्र चैतन्य[19]मनपायि [20]स्थिरं ध्रुवम् ॥११६॥
यदर्थमितरेषां तु [21]भावानां [22]संततिः स्मृता ।
महदादिसमस्तानां यतोऽत्राप्युचितं त्विदम्[23] ॥११७॥
[24]प्रवृत्तिर्न [25]निराधारान्न चोत्पत्ति[26]रकारणात् ।
न चैवानुपकाराय [27]घटादेरपि वस्तुनः ॥११८॥

---

[1] मायान्ति — ओ.
[2] येना सा च कृतेष नि० — ओ; तेनासा वक्तु तेष्वनि० — ख; येना सा वक्तु तेष्वनि० — छ, ज.
[3] ०वारितम् — ख; ०वारितुम् — छ, ज.
[4] विचित्रेऽपि — छ.
[5] भोगाद्भुङ्क्ते — ओ; भोगाद्भुक्ते — ख, ज; भोगद्भुक्ते — छ.
[6] मनोरगात् — ओ; मनोनुगात् — ख, छ, ज; रसोत्तमान् — च.
[7] भुवना — च.
[8] प्रोक्तुं — छ, ज.
[9] विज्ञास्य तु — छ, ज.
[10] सृष्टि क्षण० — ओ, दृष्ट्वा क्षण० — ख, छ, ज.
[11] ०प्रध्वंसकारणम् — च.
[12] निर्मलोक्त्वा — छ, ज.
[13] नु — ओ.
[14] सन्देहव्यनि० — ओ; सदेह विनि० — ख, छ, ज.
[15] न चैतन्यसह० — ओ; सा चैतन्यसहस्रोऽपि — ख, छ, ज.
[16] ०मेकतस्थिते — ओ; ०मेकतस्थितेः — ख, ज; ०मेकतस्थितैः — छ.
[17] सादरादे मुनि० — ओ; सोनकादे मुनि० — ख, छ, ज; मोदकोदेर्मुनि० — च.
[18] ०दन्यत्र – ओ; ०दस्त्यस्य – ख, छ; ०दस्यस्य — ज.
[19] ०मनयापि — च; ०मनपाधि — छ.
[20] स्थिति — ओ.
[21] भावना — ओ.
[22] सान्ततिः — ओ; सन्तति — ख; सन्नतिः — च.
[23] चितम् — ओ; ध्रुवम् — छ, ज.
[24] प्रवृतं न — छ, ज.
[25] निराधारा न — ओ, ख; निरा . . — छ, ज.
[26] न कारणा — ओ.
[27] कटादे० — ओ; कूटादे० — च; घटादे अपि — छ, ज.

[1]तस्मात्समन्वयात्सिद्धमस्ति कारणमत्र तु ।
[2]बुद्धिर्बुद्धिमतो[3] [4]दृष्टा ज्ञानं ज्ञानवतस्तथा ॥११९॥
[5]योगश्च योगिनः [6]सिद्धः [7]किमाश्चर्यं मुनीश्वर ।
तथा [8]चाहंकृतेनापि योऽहं[9]कारी सुनिश्चितः ॥१२०॥
स्वधर्मेणोचितं [10]सिद्धं [11]धर्मित्वं धर्मिणः सदा ।
प्रत्यक्षं भवतः सिद्धं प्रमाणमविरोधि यत् ॥१२१॥
चलतस्तस्य [12]संसिद्धा सर्वत्रैवानुमानता[13] ।
[14]क्लिष्टस्थूलप्रवाहस्य [15]हीयमानस्य नित्यशः ॥१२२॥
[16]कालायत्तस्य को नाम नेच्छते धर्मसंस्थितिम्[17] ।
[18]धर्मान्तर[19]स्थितिः सिद्धा संस्थित[20]स्येह धर्मिणः ॥१२३॥
[21]स च सुष्ठु प्रसिद्धोऽत्र [22]किमत्रापि [23]विमुह्यसे ।
साध्यसाधनभावेन व्यवहारात्मवर्तिना ॥१२४॥
असद्वस्तु[24]प्रवाहेण [25]निरवस्थानधर्मिणा ।
[26]अनवस्थितवीर्येण [27]स्वरूपव्यभिचारिणा ॥१२५॥
भावाभावविरुद्धेन व्यव[28]हर्तुं न लज्जसे ।
जगत्यस्मिन्प्रतीतं स्यात्कर्म[29] सर्वत्र [30]घुष्यते ॥१२६॥
तच्च [31]नाकारणं सिद्धं [32]कारणाच्च प्रतीयते ।

---

[1] तस्मान्मतस्तथा — ओ; तस्यां ममतया सिद्ध० — ख, छ, ज.
[2] बुद्धि बुद्धि०—ओ; बुद्धि बुद्धि० — ख, छ, ज.
[3] ०मनो — च; ०मते — ज.
[4] द्रष्टा — ओ.
[5] योगाश्च — छ, ज.
[6] सिद्धाः — ओ.
[7] किमाश्चर्यमनीश्वर — ज.
[8] चाभकृतेः — ज.
[9] ०कारिसुनिश्चितम् — ओ, ख; ०कारीसुनिश्चितम् — च; ०कारि सु० — छ, ज.
[10] सिद्धधर्मित्वं — छ, ज.
[11] 'ओ' मातृकायां '१२१' तमश्लोकस्य द्वितीयतृतीयपादौ न स्तः।
[12] संसिद्धाः — ओ; सिद्धा च — ख; सिद्धाश्च — छ, ज.
[13] ०मानतः — ओ, ख, छ, ज.
[14] क्लीष्टस्तल० — ओ.
[15] दीयमानस्य — च.
[16] कलायत्तस्य — ख, छ, ज.
[17] ०स्थितम् — ओ, ज, ०स्थितः — ख, छ.
[18] धर्मान्तरः . . सिद्धा — छ, ज.
[19] ०स्थिति सिद्धा — ओ.
[20] ०स्येव धर्मिणा — ओ.
[21] सा यान्ति सुप्र० — ओ; स याति सुप्र० — ख, छ, ज.
[22] किमुद्याविह मुच्यते — ओ; किमद्यापि प्रमुह्यते — च.
[23] विमुह्यसेत् — ख; विमभ्यसे — छ.
[24] प्रवाहेन— ओ, ख, छ, ज.
[25] निरवज्ञानसर्पिणा — ख, छ, ज; निरवस्थानसर्पिणा — च.
[26] अनवस्थानवीर्येण — च.
[27] स्वरूपाव्यभिचारणा — ओ, छ, ज; स्वरूपां व्यभिचारिणा — ख.
[28] ०हर्तुर्नलंजयेत् — ओ.
[29] ०न्प्रति तं स्यात्कर्म० — छ; ०न्प्रति तस्या कर्म — ज.
[30] पुष्यते — ओ, ख, छ, ज.
[31] नाकरणं — ओ, ख, ज.
[32] करणाच्च — ख, छ, ज.

[1]अस्त्यत्र निश्चितः कर्ता [2]स च कार्येण [3]साध्यते ॥१२७॥
[4]विचित्ररचनां दृष्ट्वा [5]कुड्ये चित्रकरो यथा ।
सिध्यते मुनिशार्दूल [6]तद्वदत्रापि कारणम् ॥१२८॥
[7]तच्च ध्येयं प्रधानाख्यं [8]यज्जयान्निर्जितं जगत् ।
[9]तदुक्तं साधकेन्द्रस्य विभूतिप्रतिपादकम् ॥१२९॥

[ उक्तार्थोपसंहारो वक्ष्यमाणोपक्रमश्च ]

[10]तत्त्वध्यानमविस्तरोक्ति[11]रचनान्यायेन [12]द्यावर्णितं
[13]यत्साध्यामरकन्यकाभिरतुलं प्रेम्णा समालिङ्गितम्[14] ।
[15]अप्रक्षीणवपुर्वियोगरभसा[16] [17]प्रोद्दामरागान्वितं[18]
[19]क्रीडत्यूर्जितयोगशक्तिकिरणैः[20] [21]पुंस्तत्त्वमत्रोच्यते ॥१३०॥

इति श्रीमतङ्गपारमेश्वरे[22] योगपादे [23]तत्त्वसाधनपटलश्चतुर्थः ॥

चतुर्थः पटलः

---

[1] 'स्पष्टानि करणान्यत्र कर्म चात्र परिस्फुटम् ।
एवं करणकर्मभ्यां कर्ता सिध्यत्यसंशयः ॥'
(मतङ्ग० विद्या० ६.३१).

[2] स्वकार्येण सोध्यते — ख, छ, ज.

[3] बुध्यते — च.

[4] स भवित्रा च नान्दृष्ट्वा — ओ; विचित्ररचना दृष्टा — ज.

[5] रुन्धे — ख; रुद्धे — छ, ज.

[6] तद्वक्त्रपि च — ओ; तद्वत्तत्रापि — ख, छ, ज.

[7] तद्ध्येयं — ओ; तच्चाप्येत्थ प्रधा० — ख; तच्चाप्येकं प्रधा० — घ, छ, ज.

[8] यं जया जयितं — ओ; यद्ययं निश्चितं — ख; यद्यया निर्जितं — घ; यद्ययाति जितं — छ, ज.

[9] तदुत्थं — ओ, ख, घ, च, छ.

[10] तत्त्वध्यानमहस्तरोक्ति० — ओ, तद्वद्धचानमविस्तरोऽग्नि० — ख; तद्वद्धयां विस्तरोऽग्नि० — घ; तद्वद्यां विस्तरोऽग्नि० — छ; तद्वध्याम विस्तारोऽग्नि० — ज.

[11] ०वचनान्यायेन — ओ; ०रचनाद्योगेन — ख, घ, छ, ज.

[12] यद्वर्णितम् — ख, घ; वर्णितम् — छ, ज.

[13] यत्साध्यमकरत्वकाभि० — ख; यत्साध्याम-करत्वकाभि० — घ, छ, ज; तत्साध्यामर-कर्णिकाभि० — च.

[14] ०लिङ्गिते — ख, घ, छ, ज.

[15] यत्प्रक्षीण० — च.

[16] ०वपुवियोगं हसा — ख, घ; वपुर्वियोगं हसा — छ, ज.

[17] प्रेमरागान्वितम् — ओ.

[18] ०न्वितः — ख, घ, च, छ, ज.

[19] क्रीडार्जित० — ओ; क्रीडन्त्युज्झित०—ख; क्रीडत्युज्झित० — घ, छ; क्रीडन्तूर्जित० — च; क्रीडत्युंजित० — ज.

[20] ०किरण्यै — छ.

[21] पुंतत्त्व० — ओ, च; प्रतस्तत्व० — छ; पुनस्तत्त्व — ज.

[22] 'ख, घ, च, छ, ज' मातृकास्वत्र 'महातन्त्रे' इत्यधिकं दृश्यते ।

[23] तत्त्वप्रधान० — ख; अप्रधान० – घ; प्रधान० — छ, ज.

# पञ्चमः पटलः

## शिवतत्त्वोपलब्धिः

[ भोक्तृपुरुषसाधनम् ]

[1]अथ [2]पुं तत्र बोद्धव्यो [3]भोक्ता भोज्यस्य सुव्रत ।
भोक्तृत्वमभिलाषाख्यं [4]तच्च रागे [5]सतीष्यते ॥१॥
नारागी[6] युज्यते यस्मात्प्रकृतेरप्यसंस्थितः[7] ।
संयोगस्तत्कृतः [8]सर्गः स च युक्त्या विरुध्यते ॥२॥
यतोऽविद्यात्मकैर्भावैर्वासितोऽस्तीव [9]पुद्गलः ।
[10]बुद्ध्यादेस्तत्त्वसर्गस्य [11]तन्मयो न विभाव्यते ॥३॥
[12]चरत[13]स्तस्य संयोगात्सर्वे गर्वादयोऽपि हि ।
[14]अचैतन्यगुणात्मानो [15]निजचैतन्यवत्स्थिताः ॥४॥
रागानुविद्धमूर्तेस्तु [16]चितेर्बुद्धिगुणाः सदा[17] ।
[18]अष्टावप्युप[19]चर्यन्ते रागश्चेत्कर्दमादिवत्[20] ॥५॥
[21]पुंसो योऽक्ष[22]कषायोत्थ[23]बाह्यरागमलीमसः[24] ।
नान्यथा शक्यते [25]कर्तुमथवा नासति क्वचित् ॥६॥

---

[1] . . . सुव्रत — ओ.
[2] पुमांस्तत्र . . व्यो — ख, घ, छ, ज.
[3] भोक्त भोज्यस्य — छ, ज.
[4] तद्धि — ओ.
[5] सतिर्यते — ओ; सतिष्यते — छ, ज.
[6] रागी च — ओ; न रागी — ख, घ; न रागि — छ, ज.
[7] ०त्प्राकृतेरप्यसंज्ञितम् — ओ; ०त्प्रकृतेरप्यसंज्ञितः — च; ०त्प्रकृतेरप्यत्र सुव्रत — ज.
[8] सङ्गः — ज.
[9] पद्गलम् — ओ; पुंगलः — च.
[10] बुध्यात्मतत्त्ववर्गस्य — ओ; बुध्यादेस्तु त्वसर्गस्य — ख.
[11] तन्मयेन — छ, ज.
[12] ते . . रत . . स्मात्सर्व० — ख; परतस्मात् सर्वं — घ, छ, ज.
[13] ०स्तत्समायोगात् — ओ.
[14] अचैतन्यं गुणाध्यानो — ख, घ; अचैतन्यं गुणाद्दानो — छ; अथैतन्यं गुणार्धा . . — ज.
[15] निचेतनवत्स्थिताः — ओ; निजचैतन्यवत्स्थिता — ख, घ, छ, ज; नित्यं चेतनवत्स्थिताः — च.
[16] चित्ते बुद्धि० — ओ, ख, घ, छ, ज.
[17] ०गुणास्तदा — ओ, ख, घ, छ; ०गुणादिता — ज.
[18] अक्षराप्युप . . . र्दमा पुरा । — ओ.
[19] ०चार्यन्ते — ज.
[20] कर्मसादिवत् — च; कर्ममादिवत् — छ, ज.
[21] पुंवासोऽक्षक्षयोक्त्यर्थं — ओ; पुंसायोक्षकषायोत्थं — ख; पुंसायोक्षकषायोत्थ० — घ; पुंवासोऽक्षकषायोत्थ० – च; पुंसयोऽक्ष ०–छ, ज.
[22] ०कषायोद्ध० — छ; ०कषायोर्थ० — ज.
[23] वाप्यराग० — ख, घ, छ, ज.
[24] ०मलीमसम् — ओ, ख, घ, च, छ, ज.
[25] कर्तुरथवा — ख; कर्तु अथवा — घ, छ, ज; योक्तुमथवा — च.

[1]धर्माधर्मविकारैस्तु [2]बाध्यते [3]सुमलीमसैः ।
[4]शुक्लत्वधर्मधर्मित्वात्पटस्तन्तुभिराचितः[5] ॥७॥
[6]रागेण [7]शक्यते [8]योक्तुं [9]नासद्वस्तुनिबन्धनात्[10] ।

मतङ्ग उवाच—

[11]सत्वातीतः सुशुद्धात्मा नित्य[12]युक्तश्च कीर्त्यते ॥८॥
यद्येवं स्यात्ततः [13]सर्गः [14]सोपायश्च [15]किमात्मकः ।
[16]मनो[17]विज्ञानजः [18]सर्वप्रपञ्चोऽयं सुरेश्वर ॥९॥
[19]न चात्मा [20]बध्यते कश्चि[21]च्छुद्धत्वान्न च मुच्यते ।
[22]नित्ययुक्तो यतः साक्षी [23]वासनात्मोपचर्यते ॥१०॥

परमेश्वर उवाच—

अनादि[24]वासनाविद्धस्तच्चाज्ञानमिहोच्यते ।
ज्ञानात्प्रध्वंसमायाति नान्यथा वस्तुदर्शनात् ॥११॥
सत्यज्ञानेऽभिलाषी स्यात्प्रणष्टे[25]ऽप्यन्यथा [26]न हि ।
तस्मात्कि[27]मवगच्छामो [28]रागाविद्धः पुमान्सदा ॥१२॥

---

[1] धर्मे धर्मि० — ओ; धर्मे धर्मे — ख, घ, छ, ज; धर्मी धर्म० — च.
[2] बाध्यसे — ओ.
[3] सुमलीयसः — ओ, ख, घ, छ, ज; सुमतीप्लवैः — च.
[4] शुक्लत्वं धर्मकर्मित्वात् — ख, घ, छ; शुक्लत्वं धर्मकर्मित्वा परस्तन्तु० — ज.
[5] ०राचितम् — ओ, घ.
[6] रागणं — ख; राङ्गणं — घ, छ, ज.
[7] शक्तयो — च.
[8] योक्तु — ख, घ, छ, ज.
[9] नाचिद्यस्तु — ओ.
[10] ०बन्धनम् — च.
[11] सात्वतीतः स शुद्धात्मा — ख; 'सत्त्वाधीतः पुमान् सिद्धः' मतङ्ग० विद्या० ६.७५पू०.
[12] ०मुक्तश्च — च.
[13] सर्गसोपा० — ख.
[14] सोपायं च किमात्मनः — ओ.
[15] किमात्मकम् — छ, ज.
[16] 'अनादिकालसंरूढाद्वासितान्मनसः सदा । प्रपञ्चोऽयमविद्याख्यो न पुंसः परिपठ्यते ॥' (मतङ्ग० विद्या० ६.७०उ०, ७१पू०)
[17] ०विज्ञानना — ओ; ०विज्ञानतः — च.
[18] सर्वं — ओ, ख, घ, छ, ज.
[19] 'एवं वदन्ति मुनयो ह्यात्मा शुद्धः सदैव तु ॥ विरागी स च मुक्तात्मा न च तस्मात्परं क्वचित् । प्रधानस्येष्यते सर्गः स च सर्वत्र संस्थितः ॥ न कश्चिद्बध्यते लोके न च कश्चिद्विमुच्यते । (मतङ्ग० विद्या० ६.६२उ० –६४ पू०)
[20] बुध्यते — ओ; बाध्यते — छ, ज.
[21] ०च्छुद्धात्मा न विमुच्यते — ख, घ, छ, ज.
[22] इदमर्धं 'ख, घ, छ, ज.' मातृकासु न दृश्यते ।
[23] वसनां नोपचर्यते — ओ.
[24] ०वासराविद्ध० — छ, ज.
[25] प्रनष्टे० — छ, ज.
[26] भवेत् — ओ, ख, घ, छ, ज.
[27] ०मवशं छामो — ओ; ०मवनच्छामो — ख, घ, छ, ज.
[28] नागा० — ख, घ, छ, ज; रागाद्विन्दुः — च.

मनोवृत्तिकषायेण[१] [२]युज्यते [३]नान्यथा क्वचित् ।
प्राधानिक[४]मचैतन्यं लोष्टवत्परतन्त्रकम्[५] ॥१३॥

मतङ्ग उवाच —

[६]प्रधानाद्वयतिरिक्तं [७]यद्वस्तु [८]तत्पुंसमाश्रितम् ।
पुंसोऽतिरिक्तं [९]संख्येयं [१०]यद्येवं [११]प्राकृतं ततः[१२] ॥१४॥
[१३]पुंसश्चेत्सहजं[१४] तस्मा[१५]दनपायि स्थितं स्फुटम् ।
[१६]हेयं चेत्तदभावात्तु पुंसः केन [१७]निवार्यते ॥१५॥

परमेश्वर उवाच —

मायोत्थाभिरमोघाभिर्वासनाभिः पशुर्यतः ।
कलादिकञ्चुक[१८]न्यायाच्छादितो ह्युपचर्यते ॥१६॥
[१९]मले सति प्रधानोत्थभोगेष्वभिलषन्मुने ।

मतङ्ग उवाच —

कतमोऽत्र विशेषोऽन्यो [२०]वासनात्मा समानयोः ॥१७॥
मायाप्रधान[२१]योर्येन तद्विशिष्टो[२२] मलोऽपरः[२३] ।

परमेश्वर उवाच —

भोज्यभोक्तृत्व[२४]भावो यः [२५]सोभयोरपि निश्चितः ॥१८॥

---

[१] ०कषायैव — छ, ज.
[२] युज्यथे — ओ.
[३] नान्यथात्मनः — ओ; नाथ मे मनः — ख; नाथा . . . मनः — घ; नाथ वा मनः — छ; नाथवा मना — ज.
[४] ०मचैतन्यलोष्ट० — ओ.
[५] पारतन्त्रिकम् — च.
[६] प्रधानाध्यवतिक्तं — ओ; प्रधानव्यतिरिक्तं — ख; प्रधानाव्यतिरिक्तं — घ; प्रधानाच्यतिरिक्तं — छ; प्रथनाव्यतिरिक्तं — ज.
[७] हि य . . स्तु पुं समा० — छ; हि यद्वस्तु पुं समा० — ज.
[८] पुंसा समाश्रितम् — ख; पुंसामाश्रितम् — घ.
[९] सांख्येयं — ओ, ख, घ, छ, ज.
[१०] यद्येयं — ख.
[११] प्रकृतं — ओ.
[१२] तमः — ओ.
[१३] असंश्चेत्सहस्तामादन०—ओ; पुंसश्च सहजं–च.
[१४] ०त्सहजः — घ, छ, ज.
[१५] ०दनपायस्थितं — ख, घ, छ, ज; ०दनपाय्यव्ययं — च.
[१६] हेयश्चे ० — ओ.
[१७] विधार्यते — ख.
[१८] ०न्याय इच्छतेऽभ्युप० — ओ; ०न्यायछोदितोऽभ्युप० — ख, घ, छ, ज.
[१९] विलोपेन प्रधानोत्थं — ओ; मलोपेतप्रधानोत्थ० — च; मले सति प्रसारे . . — ज.
[२०] वासनात्र — ओ; वासनात्मसमा० — ख, घ, छ, ज; वासना वा समा० — च.
[२१] ०योग्यश्च — ख, घ, छ, ज.
[२२] तद्विशिष्टा — ख, घ, छ, ज.
[२३] मनोऽपरः — ओ; मलोऽपरम् — ख, घ, छ; ०मथापरम् — ज.
[२४] ०भावोऽयं — ख, घ, छ, ज.
[२५] सोहयो० — घ, छ, ज.

भोज्यं प्रधानमत्रोक्तं भोक्तृत्वं [१]वासनात्मकम् ।
तत्समर्थितसमार्थ्यं [२]कञ्चुकेन कलादिना ॥१९॥
[३]भोगाः कर्मविपाकोत्थाः कलातो[४] व्यक्तिमागतान्[५] ।
गुणानाश्रित्य [६]भूतान्तं भूतये स्थूलतां गताः[७] ॥२०॥
तस्मा[८]त्कलादेर्माहा[९]त्म्यात्सुसूक्ष्मोऽपि पुमान्सदा ।
[१०]भोगभोक्तृत्वसामर्थ्यं प्राप्नोति मुनिपुङ्गव ॥२१॥
[११]स पुंभावत्वमापन्नः [१२]पुरुषे तूपचर्यते[१३] ।

[ [१४]पुंस्तत्त्वजयः ]

ध्यातव्यो योगिभिर्नित्यं खद्योताकारवत्स्थितः[१५] ॥२२॥

---

[१] वसानार्थकम् — ओ; चासना० — ख, घ, छ, ज.

[२] कच्छकेन — च; कंचकेन —छ, ज.

[३] भोगात्कर्मविभागोर्थात् — ओ; भोगान् कर्मविपाकोत्थान् — ख, घ, छ; भोगान् कर्म . . तो — ज.

[४] कालतो — ओ; कलो — ख.

[५] ०मागतात् — ओ; ०मागताः — च.

[६] भूतानां — च; हूनान्तं — छ; भूनांतं ज.

[७] गतम् — ओ; गता — ज.

[८] ०त्कलादिमाहा० — च.

[९] ०त्म्यात्सूक्ष्मोऽपि — ओ; ०त्म्यात्सुसूक्ष्मेऽपि — च.

[१०] भोगाद्भोक्तृ० — च.

[११] स पुमान् भावसंपन्नः — च.

[१२] 'श्रृणुध्वमथ पुंस्तत्त्वं यथावन्मुनिपुङ्गवाः ।
पञ्चकञ्चुकसंयुक्तः प्रकृतिं भोक्तुमुद्यतः ॥
अविद्यादिसमायुक्तः पुरुषः परिकीर्तितः ।
न विज्ञानाकलस्तेन नापि प्रलयकेवलः ॥
पुरुषाख्यां लभेद्यस्मान्नाविद्यादिविवर्जितः ।
तस्मात्सकल एवाणुर्लभते पुरुषाह्वयम् ॥
कलादिपञ्चकस्यैव यदि पुंस्त्वे निमित्तता ।
तदा प्रकृतिभोक्तृत्वं न स्याज्ज्ञानाकले यथा ॥
तथाविद्यादिमात्रस्य नापि पुंस्त्वे निमित्तता ।
कलाद्यभावे कर्तृत्वाभावाद्भोक्ता कथं भवेत् ॥
प्राकृतो यस्त्वविद्यादिः पुंसां पुंस्त्वमलः स्मृतः ।
तदाक्रान्तः कलाद्याढ्यः पुरुषस्तेन संमतः ॥'
(पौष्करे विद्या० पुंस्तत्त्वपटले १–६).

[१३] पुरुषेत्युपचर्यते — ओ; पुरुषेऽत्र प्रचर्यते – ख; पुरुष इत्युपचर्यते — च; पुरुणे तूपचर्यते — छ; पुरु . . प्र्यते — ज.

[१४] 'देहं मुक्त्वा स्वरूपेण नान्यत् किंचिदिति स्मरेत् ॥
सितपद्मासनासीनं मण्डलत्रितयोपरि ।
एवमत्र स्थिरीभूते मासमात्रेण योगवित् ॥
सर्वव्याधिविनिर्मुक्तो भवतीति किमद्भुतम् ।
षण्मासादस्य विज्ञानं जायते पृथिवीतले ॥
अब्दाज्जरादिनिर्मुक्तस्त्रिभिः पुंस्तत्त्वदृग्भवेत् ।
हृदधः पङ्कजेऽत्रैव द्वादशार्धाङ्गुलां तनुम् ॥
हृदन्ते भावयेत्स्वान्यां षण्मासान्मृत्युजिद्भवेत् ॥
त्रिभिरब्दैः समाप्नोति पुंस्तत्त्वेश्वरतुल्यताम् ॥
बिम्बादौ पूर्ववत्सर्वं तत्र संचिन्तिते सति ।
फलमाप्नोत्यसंदेहात्पुरुषावरणस्थितम् ॥'
(मालिनीविजयोत्तरे १६.१८उ०–२३).

[१५] ०कारवत्स्थितम्—ओ, ख, छ, ज; ०करवत् स्थितम् — घ.

[1]यज्जयाज्जायते [2]सिद्धिः [3]पौरुषी [4]सुमनोहरा ।
विशुद्धेन्द्रिय[5]सामर्थ्यं [6]भौवनं [7]सुमनोरमम् ॥२३॥
रुद्रैः सहैकतां [8]गत्वा [9]क्रीडत्यक्लिष्टवीर्यवान् ।
रागतो नियतिः सिद्धा [10]कालश्चैव महामुने ॥२४॥
नियामकत्वाद्बोद्धव्या[11] कालतत्त्वादधःस्थिता[12] ।
[13]पूर्वमत्र सुनिर्णीतं क्रमान्मायादिपञ्चकम् ॥२५॥
तत्तथैव प्रयोक्तव्यं [14]योगिना योगसिद्धये ।
माया मायाविनी [15]पुंसः सत्यां यस्याममी गुणाः ॥२६॥
स्ववृत्तिबलमाहात्म्यात्पुंसां [16]धारयितुं [17]क्षमाः ।
[18]सापि ध्यानबलात्त्याज्या [19]भोज्या वा भुवनात्मिका ॥२७॥
[20]तदीशगुणसंपत्सु [21]क्रीडत्यविकलैः सुखैः ।
[22]पुमानेष समस्तोक्त्या मायातः परिकीर्तितः ॥२८॥

[ शुद्धाध्वभोगप्राप्तिः ]

तदूर्ध्वमैश्वरं तत्वं [23]समस्तोक्तिनिदर्शनात् ।
[24]सर्वे रुद्रा महात्मानः सदाशिव[25]मनूत्थिताः ॥२९॥
[26]तन्मूर्तिष्वमितप्राणः[27] [28]पञ्चमन्त्रतनुः शिवः[29] ।

---

[1] इज्यया जायते — ओ.
[2] 'ख' मातृकायां 'सिद्धिः' इत्यारभ्य चर्यापादे षष्ठपटले '३५' तमश्लोकस्य पूर्वार्धे 'पानकं हि' इत्यन्तो भागः पत्राणामभावाल्लुप्तः ।; सिद्धिपौरुषी — ओ, घ.
[3] पौरुषः — ज.
[4] सुमनोहरम्—ओ, घ, छ; स मनोहरम्—ज.
[5] ०सामर्थ्या — छ, ज.
[6] भावनं — छ.
[7] सुमनोहरम् — घ, छ, ज.
[8] गता — ओ; गन्ता — घ, छ, ज.
[9] क्रीडन्त्यक्लिष्ट० — ओ.
[10] कालं चैव — ओ.
[11] ०द्बोद्धव्याः — घ, छ, ज.
[12] ०तत्त्वादयः स्थिताः — ओ; ०तत्त्वादवस्थिताः — घ, छ, ज.
[13] पूर्वमन्त्रितसुवर्णीतं — ओ; पूर्वमन्त्रे सु० — घ, छ, ज; मतङ्ग० विद्या० ८–१३ पटलेषु ।
[14] योगिनां — ओ, घ, छ, ज; योगिनो — च.
[15] पुंस सत्यां — ओ; पुंसः सत्त्वं यास्याममी — घ; पुंस सत्वयास्याममी — छ, ज.
[16] सारयितुं — ओ; मारयितुं — च.
[17] क्षमा — ओ, घ, च.
[18] सा विध्याध्यानला त्याज्या — ओ; सिसाविद्धा बलन्त्याज्या — घ; सिद्धाविद्धा बलं त्याज्या — छ, ज.
[19] बाहु भुवनात्मिका — घ, छ, ज.
[20] 'छ, ज' मातृकयोः '२८' तमश्लोको न दृश्यते ।
[21] क्रीडन्त्यविमलैः — ओ; क्रीडन्त्यविरलैः — च.
[22] पुमानेव — घ.
[23] समस्तोऽग्निनि० — ओ.
[24] सर्वरुद्रा — घ.
[25] तमुत्थिताः — घ, छ; ०समुत्थिताः — च; तमुत्थिता — ज.
[26] ०न मूर्ति० — घ; न मुक्ति० — छ, ज.
[27] ०ष्वमितं प्राणः — ओ; ०ष्वमितः प्राणः — छ; स्वमितः प्राणः — ज.
[28] पञ्चमं तु तनुः — च.
[29] ०तनुच्छिवः — छ; ०तनुच्छिवम् — ज.

प्रक्रीडत्यमितात्मासौ[1] तेजोमूर्तिरखण्डितः ॥३०॥
[2]तदीशत्वं शरीरेऽस्मिंस्तत्त्वत्वेन[3] व्यवस्थितम् ।
ध्यायेत्तेजोमयं स्पष्टं तद्योगाद्ध्यानभेदतः ॥३१॥
प्राप्नोति विपुलान्भोगान्क्रमाच्छुद्धाध्वनि स्थितान्[4] ।

[ शिवतत्त्वप्राप्तिः ]

[5]चतस्रो मूर्तयः प्रोक्ता [6]व्यापारात्परतः स्थिताः[7] ॥३२॥
[8]ईश्वरस्य तु सूक्ष्मान्याः [9]स्वतेजोऽमितविक्रमाः ।
[10]ध्यातुरुन्मीलने सर्वं [11]जगन्मायात्मकं [12]महत् ॥३३॥
तद्ध्यानात्परमं[13] शान्तं शिवतत्त्वं [14]प्रपश्यति ।
[15]यद् दृष्ट्वा न [16]पुनर्मोह[17]खेदेन परिपीड्यते ॥३४॥
ईशतत्त्वात्मकैः सूक्ष्मैः [18]कारणैः [19]शुद्धवर्तिभिः[20] ।
प्राप्नोति परमं स्थानं यत्तच्छाश्वतमुत्तमम् ॥३५॥
[21]यस्मिन्प्राप्तस्य न पुनर्जन्मेहास्ति कदाचन ।

मतङ्ग उवाच —

[22]व्याख्याता [23]भूतये [24]भोक्तुः प्रधान[25]पुरुषेश्वराः ॥३६॥
मुक्तये च परं तत्त्व[26]मनपाय्यव्ययं शुभम् ।
तेषां [27]विभागं रूपं च यथावद्वक्तुमर्हति ॥३७॥

---

[1] प्रक्रीडत्यात्मनासौ — घ; प्रक्रीडत्यनिरात्मासौ — च; प्रक्रीडत्यात्मनासौ ते — छ; प्रक्रीडत्यात्मनास्रौ ते — ज.
[2] तदीशित्वशरीरे० — घ, छ, ज.
[3] ०स्तत्तत्वेन — ओ, घ; ०स्ततत्वेन — छ, ज.
[4] कामान् शुद्धाध्वनिश्चितान् — ओ; क्रमशुद्धाध्वनि स्थितान् — छ, ज.
[5] मतङ्ग० विद्या० ३.२३उ०–३४पू०.
[6] व्यापारान् — ओ, छ, ज.
[7] परितस्थिता — छ, ज.
[8] ईश्वरस्तु सुसूक्ष्मेभ्यः — ओ; ईश्वरः स सुसूक्ष्माभ्यां — घ; ईश्वरः सुसूक्ष्माभ्यां — छ, ज; सूक्ष्माः अन्याः इत्यत्र सन्धिरार्षः।
[9] तत्तेजोऽमितविक्रमः — ओ, छ, ज; स्वतेजोभिरतिक्रमाः — च.
[10] धातुरुन्मीलने — ओ, घ; ध्यातुं मीलने — छ; ध्यातुर्मीलने — ज.
[11] जगदात्मात्मकं — च.
[12] जगत् — घ, छ, ज.
[13] तद्ध्यानापरं — ओ.
[14] प्रशाम्यति — ओ.
[15] यं — ओ, घ, च, छ, ज.
[16] पुनर्मोहः खे० — च.
[17] ०स्वेदेन — ओ.
[18] करणैः — च.
[19] शुद्धि० — ओ.
[20] ०वृत्तिभिः — ओ, घ, च, छ.
[21] मतङ्ग० विद्या० ३.२१ पू०.
[22] व्याख्याता — ओ; व्याख्या . . — छ, ज.
[23] भूतयो — ओ.
[24] भोक्तुं — छ, ज.
[25] ०पुरुषेश्वरः — घ, छ; ०पुरुषेध्वरः — ज.
[26] ०मनप्याश्लाघनं — ओ; ०मनपार्य व्ययं — छ, ज.
[27] विभागरूपं — ओ, घ, छ, ज.

[ प्रधानतत्त्वं पुरुषतत्त्वं च ]

परमेश्वर उवाच —

चतुर्विंशात्मकं[१] तत्त्वं प्रधानमुपवर्णितम् ।
[२]तस्मात्पुमानिह ज्ञेयो [३]नियत्याप्युपबृंहितः[४] ॥३८॥
तत्त्वानां रचना सिद्धा [५]भुवनत्वव्यवस्थया ।
[६]सोपभोगाय रुद्राणां विधात्रा रचिता [७]स्फुटा ॥३९॥
मायां विक्षोभ्य किरणैरमोघैर्बलशालिभिः ।
[८]मन्त्रयोग[९]विधानोत्थवीर्येणाथ [१०]महात्मना ॥४०॥
भोगाय मुनिशार्दूल नानाभोग[११]गुणात्मिका ।
पशोः पशुत्वमेतद्धि[१२] [१३]तत्तत्त्वेनोपचर्यते ॥४१॥
मायात्मकेन भोक्तृत्व[१४]दापनेन कलादिना ।
[१५]स्थूलेनाशुद्धवीर्येण परिणामगुणात्मना[१६] ॥४२॥
मोहादिनापि सूक्ष्मेण [१७]पुंभावात्पीडनात्मना[१८] ।
[१९]कलातोत्पन्न[२०]सद्भावस्वात्मना च वशीकृतान्[२१] ॥४३॥
स्वयमे[२२]वार्जिता[२३]नर्थान्कलातो व्यक्तिमागतान् ।
[२४]भुङ्क्ते प्रधानमाश्रित्य [२५]परिपाकमुपागतान् ॥४४॥
[२६]स भोक्ता पुरुषः प्रोक्तः कारणेच्छानुवर्तकः ।
पुंप्रधान[२७]समुत्थाभि[२८]र्वृत्तिभिर्यः प्रदृश्यते ॥४५॥

---

[१] . . धात्मकं — ओ.
[२] तत्पुमानपरि॰ — ओ; तस्मात्पुं न परि॰ — घ, छ, ज.
[३] नियत्यामुप॰ — च; नियत्यात्युप॰ — छ, ज.
[४] ॰बृंहितम् — ओ, घ, छ, ज.
[५] भुवनत्वं व्य॰ — ओ.
[६] सोऽपि भोगाय — घ, छ, ज.
[७] स्फुटाः — छ.
[८] मन्त्रयाग॰ — छ.
[९] ॰विधानोत्थं — ओ; विधानोद्ध॰ — छ; विधानोर्थ॰ — ज.
[१०] महात्मनाम् — च.
[११] ॰गुणात्मराट् — ओ; ॰गुणात्मकान् — छ, ज.
[१२] ॰मेतावत् — घ, च, छ, ज.
[१३] तन्त्रत्त्वेनो॰ — च; तं त(त्त्)वेनो॰ — ज.
[१४] . . . न — ओ; नायकेन — घ, छ, ज.
[१५] स्थूलेन शुद्ध॰ — ओ.
[१६] ॰गुणात्मनाः—ओ; ॰गणात्मना—घ, छ, ज.
[१७] पुंमावात् — च; पुंभवात् — छ, ज.
[१८] ॰पीडनात्मनः — ओ; ॰पीडनात्मनाम् — च.
[१९] कलातोऽन्यत्र सद्भाव॰ — च; कलातः + उत्पन्नः = कलात उत्पन्नः; ततः संधिरार्षः ।
[२०] ॰सद्भावस्वान्तेशात्मवशी॰ – ओ; ॰सद्भावा साञ्जसात्मवशी॰ — घ, छ, ज.
[२१] ॰कृतः — ओ, घ; ॰कृतं — च; ॰कृताः — छ; ॰कृताम् — ज.
[२२] ॰वोज्झितादर्थात्कलातो — घ, छ, ज.
[२३] ॰नर्थाक . . व्यक्ति॰ — ओ.
[२४] इदमर्धं 'च' मातृकायां न दृश्यते ।
[२५] परिवार॰ — ओ.
[२६] स मोक्तः पुरुषाः प्रोक्त॰ — ओ; संभोक्ता पु॰ — घ, ज; दंभोक्ता पु॰ — छ.
[२७] ॰समर्थ्याभि॰ — ओ.
[२८] ॰र्व्यक्तिभिर्यो प्रदृश्यते — ओ; ॰र्व्यक्तिभिर्योग उच्यते — घ; ॰र्वृत्तिभिर्योपपद्यते — च; ॰र्वृत्तिभिर्योग उच्यते — छ, ज.

[1]वाचकश्चावकत्वादिन्यायेन [2]स शरीरभृत् ।
[3]तत्तत्त्वं पौरुषं विद्धि [4]प्रधानादुपलभ्यते ॥४६॥

[ ईश्वरतत्त्वं सदाशिवतत्त्वं च ]

तस्मादुपरि बोद्धव्यं तत्त्वमीश्वरसंज्ञकम् ।
[5]व्यस्तं [6]भुवनमार्गेण व्याख्यातं क्रीडनाय वै ॥४७॥
[7]ईशशब्देन भगवान्कीर्तितः[8] स सदाशिवः ।
नानाभोगविलासेन कृत्वात्मानमनेकधा ॥४८॥
[9]रुद्रमूर्तिभिरेकोऽसौ क्रीडत्यम्लानवीर्यभृत्[10] ।
[11]चतुर्विधेन मार्गेण [12]क्षेत्रज्ञानुग्रहं प्रति ॥४९॥
[13]सैव वक्ति परं[14] ज्ञान[15]मज्ञानोच्छित्तिकारणम् ।
बुद्धिमत्कारणं नित्यं [16]सुप्रसन्नाक्षगोचरम् ॥५०॥
[17]स्वदर्पोद्भूतवीर्याभिः [18]शक्तिभिः समधिष्ठितम् ।
[19]क्रीडन्तस्तन्नियोगेन विद्याविद्येश्वराश्च ये ॥५१॥
[20]विभिन्ना ह्युपचर्यन्ते शतशोऽथ [21]सहस्रधा ।
स्थानभेदात्क्रिया[22]भेदात्कार्यकारणभेदतः ॥५२॥
[23]तथाधिकारभेदाच्च स्फुरत्सूर्यायुतप्रभाः ।
[24]अप्राप्यात्मबलोपेताः[25] सर्वे खण्डेन्दुमौलयः ॥५३॥

---

[1] वाचका ग्रापकत्वादि० — ओ.
[2] तृशरीर० — च.
[3] पुंतत्त्वं . . प्र० — ओ.
[4] प्रधानमुप० — घ, छ, ज.
[5] व्यस्तमीश्वर० — घ, छ, ज.
[6] मतङ्ग० विद्या० ४.८उ०–१३, ५१–५३पू०; ५.६उ०, ७.
[7] ईशः शब्देन — छ, ज.
[8] भगवान्क्रीडते — च.
[9] रुद्रशक्तिभि० — ओ; रुद्रस्य मूर्तिरेवासौ — च.
[10] ०वीर्यहृक् — घ; ०वीर्यवान् — च; वीर्य-धृक् — छ, ज.
[11] मतङ्ग० विद्या० ३.२३उ०–३४पू०.
[12] क्षेत्रज्ञानग्रहं — ओ.
[13] सः एव 'सोऽचि लोपे चेत् पादपूरणम्' (पा०सू० ६.१.१३४) इति सुलोपः, ततो वृद्धिः ।
[14] शैवशक्तिपरं — ओ; सै व्यक्तपरं — घ; मसैव्यक्तपरं — छ, ज.
[15] ०मज्ञानो मुक्ति० — ओ; ०मज्ञानाच्छक्ति० — घ; ०मज्ञानः शक्ति० — छ, ज.
[16] सप्रसन्ना० — घ, ज.
[17] स्रदतोऽद्भुत० — ओ; स्वदर्पोद्भुत० — घ.
[18] . . . षितम् — ओ; . . . समधिष्ठितम् — छ, ज.
[19] क्रीडन्तं — ओ; क्रीडतः — घ, च, छ, ज.
[20] विभिन्नान्नुप० — ओ; विभिन्नान्युप० — घ, छ, ज.
[21] सहस्रशः — च.
[22] ०भेदाः कार्य० — च.
[23] तथादिभेदकार्याच्च — ओ; तदाधिकार० — घ, छ, ज.
[24] अप्रच्याविबलो० — च.
[25] ०त्मन्नलोपेता — घ; ०त्मान्नलोपेताः — छ, ज.

नानारूपधराः सर्वे सर्वज्ञाः [1]परमेश्वराः ।
[2]भोगमोक्षप्रदाः सर्वे [3]सर्वेऽलुप्तवपुष्मतः[4] ॥५४॥
[5]यद्यप्युक्तं [6]मया [7]पूर्वं [8]रुद्राणूनां [9]विचेष्टितम् ।
[10]तथापि [11]तद्बला[12]वेशाद्व्यक्तं क्रीडयतः प्रभोः ॥५५॥
स एव [13]तद्बलं सता यत्तत्सारमनिन्दितम् ।
स एव तद्विजानाति यतस्तेनैव [14]भाषितम् ॥५६॥
प्रत्यक्षं च प्रभोः सर्वं जगत्स्थावरजङ्गमम्[15] ।
यस्मात्तस्मात्प्रपत्तव्यं[16] सत्यमीश्वरभाषितम् ॥५७॥
ईशित्व[17]मीशिता नाम पशुत्वाद्व्यतिरिच्यते ।
[18]मोहादिनापरिक्लिष्टगुणैस्तृप्त्युचितात्मभिः ॥५८॥
लक्ष्यते मुनिशार्दूल [19]यत्तत्त्रश्च पशुः सदा ।
भोगभोक्तृत्वभावेन[20] विभिन्नमुपचर्यते ॥५९॥

[शान्त्यादिभुवनस्थाः ।

सदाशिवस्य देवस्य क्रीडतो [21]याः [22]पुरोदिताः ।
[23]चतस्रो [24]मूर्तयः [25]सूक्ष्मास्ता अवाप्य मुमुक्षवः ॥६०॥
योगवीर्यबलोपेता [26]दीक्षया [27]वा नियोजिताः ।

---

[1] परमेश्वर — छ, ज.
[2] योगमोक्ष० — च.
[3] सर्वलुप्त० — ओ.
[4] ०वपुष्मता — छ, ज.
[5] अद्याप्युक्तं — ओ.
[6] मधुपूर्वं — छ, ज.
[7] मतङ्ग० विद्या० ४.८उ० – १३, ५१–५३पू०; ५.५–१८.
[8] रुद्राणीनां — ओ; रुद्राण्यानां — छ, ज.
[9] विशेषतः — घ, छ, ज.
[10] तथा तद्बलावेशात् . . प्रभो — ओ.
[11] नद्धावेश्यावद्व्यक्तं — छ.
[12] ०देशा व्यक्तं — घ, ज; ०वेशा व्यक्तं — छ.
[13] तद्बलः सक्ता — ओ; तद्बलासक्ता — घ, छ, ज.
[14] भक्षितम् — छ, ज.
[15] ०जंघमम् — ओ.
[16] प्रकर्तव्यं — ओ; प्रवक्तव्यं — छ, ज.
[17] ०मीशिता . . त्वाद्यति० — ओ; ०मीशितानां तु पशु० — घ, छ, ज.
[18] मोहादिरपरिक्लिष्टं गुणैस्त्रप्युचि० — ओ; मोहाच्चिरपरिक्लिष्टगुणैस्तृस्य चितात्मभीः — च; मोहिदीनापरिक्लिष्टगुणैस्तुष्यचिता० — छ; मोहिदीनां परिक्लिष्टगुणैस्तप्युचि० — ज.
[19] यत्तत्र पशुः — घ, छ, ज; यत्तत्रश्व पशुः—च.
[20] ०प्रभावेन — ओ.
[21] या — च; यां — छ, ज.
[22] पुरोदिता — ओ, च; परोदिताः — घ; परोदिता — छ, ज.
[23] मतङ्ग० विद्या० ३.२३उ०–३४पू०.
[24] मुक्तयः — छ, ज.
[25] साक्षास्ता — ओ; सूक्ष्मा यानवाप्य — घ, छ, ज; सूक्ष्मा यामवाप्य — च.
[26] दीक्षाया — ओ.
[27] विनियोजिताः — छ.

[1]रमन्ति [2]सूक्ष्मविभवा [3]यथा वच्मि मुनीश्वर ॥६१॥
[4]सदाशिवसमाः सर्वे [5]न च ते कारणेश्वराः ।
न शिवत्वमनुप्राप्तास्तेषां [6]धर्मोऽधुनोच्यते ॥६२॥

[ सप्तप्रकारो मोक्षः ]

[7]सारूपाः शान्तिपृष्ठस्थाः शान्त्यतीताश्रिताश्च ये ।
[8]सामीप्याः शान्तिनिलया ज्ञानकेवलिनो मताः ॥६३॥
सालोक्याश्चैव[9] [10]विद्यायां [11]येऽप्यधः परिसंस्थिताः ।
[12]योगकेवलिनस्तेऽपि तन्त्रेऽस्मिन्परिभाषिताः[13] ॥६४॥
[14]सांनिध्यास्तु प्रतिष्ठायां शक्तिकेवलिनो मताः ।
[15]काम्याश्चैव निवृत्तिस्था[16] मूर्तिकेवलिनः स्मृताः[17] ॥६५॥
[18]सादाख्ये चैव [19]ये तत्त्वे संस्थिताः[20] परमाणवः[21] ।
[22]मूर्तिकेवलिनस्तेऽपि शेषा रुद्राः प्रकीर्तिताः ॥६६॥
मोक्षः सप्तप्रकारोऽयं विभागेनोपवर्णितः[23] ।
[24]एभ्यो [25]ह्येकः परः [26]सूक्ष्मः कार्यकारणगोचरात्[27] ॥६७॥
[28]अतीतः परिपूर्णश्च स्वतन्त्रः सर्वतोमुखः[29] ।
एको [30]निरीश्वरः [31]स्वस्थः षडन्ये [32]सेश्वरा मताः ॥६८॥
संरुद्धशक्तयश्चान्ये[33] स्थूलभेदाः[34] प्रकीर्तिताः ।

---

[1] नमन्ति — घ; नमन्त्रि — छ, ज.
[2] योगविभवा — ओ.
[3] यथा सिद्धि मुनी० — ओ; यथावच्च मुनीश्वराः — घ, छ, ज.
[4] यदा शिव० — छ, ज.
[5] न चैते — ओ.
[6] धर्मोच्यतेऽधुना — ओ, घ, छ, ज.
[7] इदमर्धं 'घ, च, छ, ज' मातृकासु' न दृश्यते ।
[8] सामीप्य शान्ति० — घ, छ, ज.
[9] सालोक्यश्च वि० — घ; एतावत्पर्यन्तमेव 'घ'मातृकोपलभ्यते ।; सालोक्यं चैव — च; सालोक्यश्चैव — छ, ज.
[10] विद्याङ्गे य व्यधः परिसुस्थितः — ओ.
[11] येऽप्यधिः परि० — छ; येऽप्यधीपरि० — ज
[12] 'छ, ज' मातृकायोः '६४' उत्तरार्धप्रभृति '६६' श्लोकान्तो भागो न दृश्यते ।
[13] ०भाषितः — ङ.
[14] सान्नैध्यास्तु — ओ; सान्तोद्धास्तु — ङ.
[15] कामश्चैव — ओ.
[16] निवृत्तिस्थ० — ङ.
[17] ०केवलिन स्मृताः — ङ.
[18] तादात्म्ये — च.
[19] यै तत्त्वै — ङ.
[20] संस्थिता — ङ.
[21] परमाणवाः — ओ; परमाणस्य — ङ.
[22] मूर्तके० — ओ.
[23] ०वर्णितम् — ङ; ०कर्णिकम् — छ, ज.
[24] एह्योभ्येकः — ओ; एह्यो ह्येकः — ङ.
[25] ०प्येकपरः — छ, ज.
[26] सूक्ष्मकार्य० — ओ, ङ, छ, ज.
[27] ०गोचराः — छ, ज.
[28] अतीतं — छ, ज.
[29] ०मुखम् — छ, ज.
[30] निरीश्वराः सस्थं — ओ; निरीश्वरस्वस्थं—ङ.
[31] स्तब्धः — च; संस्थः — ज.
[32] रिश्चरा मताः — छ; रिश्वरा मता — ज.
[33] ०शक्तश्चारे — छ, ज.
[34] ०देहाः — च.

प्रलये [1]प्रलयाख्यास्तु [2]तेऽपि केवलिनो मताः ॥
बुभुक्षवः [3]सर्व एव [4]प्रोक्ताः संसारिणो [5]नराः ॥६९॥

[ उक्तार्थोपसंहारः वक्ष्यमाणोपक्रमश्च ]

[6]ध्यानश्रिया चोचिततत्त्वमार्गः
[7]प्रदीपकः सम्यगुपात्तवीर्यः[8] ।
[9]उक्तः शिवार्थे [10]ह्यधुना तवेत्थं
वक्ष्यामि चित्रं विधिकर्म भूत्यै ॥७०॥

इति श्रीमतङ्गपारमेश्वरे[11] योगपादे शिवतत्त्वोपलब्धिपटलः पञ्चमः ॥

पञ्चमः पटलः

---

[1] प्रलयाख्यस्तु — ओ, ङ; प्रलये ख्याता — छ, ज.

[2] स्तुते केवलिनो मता — छ; स्तुतेऽपि केवलिनो मता — ज.

[3] स एवं संसारि से . . .नराः — ओ; स एव संसारसेन्नरः — ङ.

[4] सर्वे सं० — छ, ज.

[5] मताः — छ, ज.

[6] ध्यानाशिरेषोचिततश्च मार्ग० — ओ; ध्यानः शिरेषोचिततत्त्वमार्ग० — ङ; ध्यानाग्निराशेर्विततत्वमार्ग० — च; ध्यान्यानिरेषा विचिता तु मार्गा — छ, ज.

[7] प्रदीपकं — ङ.

[8] ०वीर्य — ङ; ०वीर्यम् — छ, ज.

[9] उक्तं — ओ, ङ, छ, ज; शिवार्थ . . . मधुना — च.

[10] भ्यधुनाथ वेथ — ओ; भ्यतु नाथ वेत्थ — ङ.

[11] अत्र 'च' मातृकायां 'महातन्त्रे' इत्यधिकं दृश्यते ।

# षष्ठः पटलः

## कर्मयोगः

[1]अथ संक्षेपतो [2]वच्मि नानासिद्धिफलप्रदम्।
विचित्रकर्मसंतानं[3] [4]विशिष्टकरणात्मकम्[5] ॥१॥

[ [6]प्राणजयः ]

---

[1] अतः — 'ओ' पाठान्तरम्।
[2] वक्ष्ये — च, छ, ज.
[3] ०संस्थानं — च.
[4] विशिष्टं — ओ; विश्लिष्टं — छ, च.
[5] कारणात्मकम्—ओ, छ, ज; ०कारणात्मकः—ङ.
[6] 'कानि प्राणादिवृत्तीनां स्थानान्यस्मिन् शरीरके।
जितासु तासु किं वा स्यादिति ब्रूहि सुरोत्तम ॥
तस्य हृत्कण्ठनाभ्यङ्गपृष्ठदेशेषु धारणात्।
जयः प्रणयनादीनां वृत्तीनां योगिनो भवेत् ॥
जितप्रणयनो धत्ते स्वेच्छया देहमात्मनः।
जितापनयनोऽश्नाति शकृदादि जहाति न ॥
विजितोन्नयनोऽभ्येति वाग्वशित्वादिकान् गुणान्।
समानवृत्तिविजयाद् भवेत्त्यक्तजरो वशी ॥
वपुर्विहारवशिता भवेद्विनमने जिते।
पङ्काम्बुकण्टकासङ्गो वीर्यमक्षयमद्भुतम् ॥'
(मृगेन्द्रे योग० ४४–४८);
'प्राणसंयमनं नाम देहे प्राणादिधारणम्।
एष प्राणजयोपायः सर्वमृत्यूपघातकः ॥
किंचित्प्राणजयोपायं तव वक्ष्यामि तत्त्वतः।
बाह्यात्प्राणं समाकृष्य पूरयित्वोदरस्थितम् ॥
नाभिमध्ये च नासाग्रे पादाङ्गुष्ठे च यत्नतः।
धारयेन्मनसा प्राणं संध्याकालेषु सर्वदा ॥
सर्वरोगविनिर्मुक्तो जीवेद्योगी गतक्लमः।
नासाग्रे धारणं गार्गि वायोर्विजयकारणम् ॥
सर्वरोगविनाशः स्यान्नाभिमध्ये च धारणात्।
शरीरं लघुतां याति पादाङ्गुष्ठे च धारणात् ॥
रसनावायुमाकृष्य यः पिबेत्सततं नरः।
श्रमदाहौ न तस्य स्तो नश्यन्ति व्याधयस्तथा ॥
संध्ययोर्ब्राह्मिकाले वा वायुमाकृष्य यः पिबेत्।
त्रिमासात्तस्य कल्याणि जायते वा सरस्वती ॥
षण्मासाभ्यासयोगेन महारोगात्प्रमुच्यते।
आत्मन्यात्मानमारोप्य कुण्डल्यां यस्तु धारयेत् ॥
क्षयरोगादयस्तस्य नश्यन्तीत्यपरे विदुः।
जिह्वया वायुमानीय जिह्वामूले निरोधयेत् ॥
यः पिबेदमृतं विद्वान् सकलं भद्रमश्नुते।
आत्मन्यात्मानमिडया समानीय भ्रुवोऽन्तरात् ॥
पिबेद्यस्त्रिदशाहारं व्याधिभिः सोऽभिमुच्यते।
नाडिभ्यां वायुमारोप्य नाभौ वा तुन्दपार्श्वयोः ॥
घटिकैकां वहेद्यस्तु व्याधिभिः सोऽभिमुच्यते।
मासमेकं त्रिसंध्यायां जिह्वयारोप्य मारुतम् ॥
पिबेद्यस्त्रिदशाहारं धारयेत्तुन्दमध्यमे।
गुल्माधी वा प्लिहा चान्या त्रिदोषजनितास्तथा॥
तुन्दमध्यगता रोगाः सर्वे नश्यन्ति तस्य वै।
ज्वराः सर्वे विनश्यन्ति विषाणि विविधानि च॥
बहुनोक्तेन किं गार्गि पलिता (नि? दि) च नश्यति।
एवं च विजयोपायं प्राणस्य तु वरानने ॥
शक्यमासनमास्थाय समाहितमनास्तथा।
करणानि वशीकृत्य विषयेभ्यो बलात्सुधीः ॥
अपानमूर्ध्वमाकृष्य प्रणवेन समाहितः।
हस्ताभ्यां बन्धयेत्सम्यक् कर्णादिकरणानि च ॥
अङ्गुष्ठाभ्यामुभे श्रोत्रे तर्जनीभ्यां तु चक्षुषी।
नासापुटावथान्याभ्यां प्रच्छाद्य करणानि वै ॥
आनन्दानुभवं यावत्तावन्मूर्धनि धारयेत्।
प्राणः प्रयात्यनेनैव ततस्त्वायुर्विघातकृत् ॥
ब्रह्मरन्ध्रे सुषुम्नायां मृणालान्तरसूत्रवत्।
नालोत्पत्तिस्त्वनेनैव शुद्धस्फटिकसंनिभा ॥
आमूर्ध्नो वर्तते नादो वीणादण्डवदुत्थितः।
शङ्खध्वनिनिभस्त्वादौ मध्ये मेघध्वनिर्यथा ॥
व्योमरन्ध्रगते नादे गिरिप्रस्रवणं यथा।
व्योमरन्ध्रगते वायौ चित्ते चात्मनि संस्थिते ॥
सदानन्दी भवेद्देही वायुस्तेन जितो भवेत्।'
(योगयाज्ञवल्क्ये ६.३५–५७पू०).

[1]प्राणाद्या वायवः पञ्च [2]यैर्वृतं जगदातुरम्[3]।
तेषां जयः प्रकर्तव्यः प्रथमं [4]योगिना सदा[5] ॥२॥
[6]निष्क्राम्याशेषमनिलं [7]विधार्य च शनैः शनैः।
आपूरयेज्जगत्पश्चात् [8]पूरयित्वा च धारयेत् ॥३॥
वातपित्तकफप्राया[9] दोषा वायुसमीरिताः।
क्षणात्प्रध्वंसमायान्ति योगिनो योगवर्त्मनि ॥४॥
क्षीणदोषस्ततो[10] योगी नाभिदेशे विधार्य तु।
चक्रवन्मण्डलं ध्यायेन्नाभिनेमि[11]समन्वितम्[12] ॥५॥
[13]भ्रमद्वेगेन तन्मध्ये वायुभूतः स योगिराट्।
[14]नाभेः प्रदक्षिणं [15]गच्छदात्मानं परिचिन्तयेत्[16] ॥६॥
[17]यावत्तन्निश्चली[18]भूतं [19]तदोत्क्षिप्य [20]स मारुतः।
नाभि[21]देशाद्धृदि [22]स्थाप्य ह्यनिलं कमलोदरे ॥७॥
[23]पूर्ववच्च समभ्यस्य [24]चक्रं हृद्व्योममण्डले।
वेगवद्दक्षिणावर्तं [25]यावन्निश्चलतां व्रजेत् ॥८॥
[26]कण्ठतालुललाटेषु [27]क्रमाद्योज्यो विधिः सदा।
जितप्राणस्ततो योगी ललाटस्थं विधारयेत् ॥९॥
[28]तालुमध्ये ततश्चक्रमेकीकृत्य समभ्यसेत्।

---

[1] प्राणाद्यवयवः — ओ; प्राणन्यालयवः — ङ; प्राणाद्यवयवाः — छ, ज.
[2] यैर्धृतं — ज.
[3] जगदातुकम् — छ, ज.
[4] योगिनां — ङ; योगिनोः — च, छ.
[5] तदा — च.
[6] निष्क्राम्य शेषनिलयं — ओ, ङ; निःक्राम्याशेषनिलं — च; . . . निष्क्राम्यमनिलं — छ, ज.
[7] विधाय — ओ, ङ, छ, ज.
[8] पूरकत्वाच्च — ओ, ङ; पूरयित्वा नु — च.
[9] ०प्रायो — ओ
[10] ०दोषस्तथा — ओ.
[11] नाभौ नाभि० — ओ, ङ, छ, ज.
[12] ०समन्वितः — ओ; ०समन्विता — ङ.
[13] भ्रूमध्ये केन तन्मध्ये — छ; भामध्ये केन तन्मध्ये — ज.
[14] नाभो — छ, ज.
[15] गच्छेदात्मानं — ओ, ङ; गच्छन्नात्मानं — च
[16] ०चिन्तये — ङ.
[17] यावत्तु निश्च० — च; यावत्तन्निबिडीभूतं — छ, ज.
[18] ०मूत० — ङ.
[19] ततो क्षिप्तः — ओ, ङ; ततोत्क्षिप्य — छ, ज.
[20] समारुतम् — ङ; समाकुलम् — छ, ज.
[21] ०देशाद्धृदी — ङ; ०देशे हृदि — च.
[22] स्थाप्य मलिनं — ओ; स्थाप्यामनिलं — ङ; स्थाप्य मनिदं — छ, ज.
[23] पूर्ववच्चक्रमभ्यस्य — ओ, ङ; पूर्ववच्चक्रमभ्यर्च्य — छ, ज.
[24] चक्रहृद्व्योम० — ङ; वक्त्रं हृद्व्योम० — च; स्वं चक्रं व्योम० — छ, ज.
[25] यावन्निश्चयतां — ओ; यावन्निश्चयतं — ङ; धाधन्निश्चलतां — छ; याय निश्चलतां — ज.
[26] कर्णतालु० — ओ; कर्णश्च तालु० — ङ.
[27] क्रमाद्योज्या बहिः — च.
[28] 'छ' मातृकायां '१०' श्लोकः '११' श्लोकस्य पूर्वार्धं च न दृश्येते।

कण्ठहृन्नाभिचक्राणां क्रम एष प्रकीर्तितः ॥१०॥
एव[1]मभ्यस्यतो नित्यं [2]योगिनस्तल्लयात्मनः ।
[3]प्राणाद्या [4]वशतां यान्ति सम्यग्यैर्वशवर्तिभिः[5] ॥११॥
[6]वपुर्दीप्ति[7]रनालस्यं [8]प्रज्ञा चैवोपजायते ।
[9]रुग्जराक्षुत्पिपासाद्यैर्दोषैर्न परिभूयते ॥१२॥
नासौ [10]प्रदूष्यते [11]विघ्नैर्योगी [12]योगपथि स्थितः ।

मतङ्ग उवाच —

शिवतेजोऽपविद्धस्य[13] प्रागेव [14]परमेश्वर ॥१३॥
[15]तत्प्रभावात्समस्तानां [16]विघ्नानामजयो भवेत् ।
बाध्यते [17]चेत्ततः [18]कष्टं [19]मुक्तेरप्यत्र संशयः ॥१४॥

परमेश्वर उवाच —

अतिरस्कृतवीर्येण कारणेच्छानुवर्तिना[20] ।
[21]व्यक्ता यं प्रत्य[22]नायासमनिवर्तकतेजसा ॥१५॥
[23]तमवश्यं [24]नयत्यूर्ध्वं [25]किंतु शेषमपेक्षते[26] ।
[27]परिपाकं शरीरस्य [28]धर्माधर्मात्मकस्य [29]सा ॥१६॥

---

[1] ०मभ्यसतो — ङ, च.
[2] योगिनस्तालुवर्त्मना — ओ; योगितल्लधरात्मनः — ङ.
[3] प्राणाद्यां वशितां याति — ङ; तालुमद्यावतां यान्ति — छ.
[4] वशमायान्ति — च.
[5] ०र्वशिवन्तिभिः — छ; ०र्वशवक्तिभिः—ज.
[6] त्वदुद्दीप्तिनरालभ्यं — ओ; त्वदुद्दीप्तिरनालभ्यं — ङ.
[7] ०रकालस्यं — छ, ज.
[8] प्रजा — ओ, ङ.
[9] कुञ्जराक्षुत्० – ओ, ङ; रुक्जटाक्षुत्० — छ.
[10] प्रदृष्यते — ओ; प्रदृश्यते — च; प्रहृष्यते — छ, ज.
[11] विघ्नयोगी – ओ; विघ्नो योगी — ङ; विघ्ने योगि — छ, ज.
[12] ग्रोगवतस्थितः – ओ; योगावतः स्थितः — ङ.
[13] शिवतेजोघचित्तः सन् — ओ. शिवत्तेजोघलित्तः सन् – ङ; शिवतेजोपविद्धः सन् – च; शिवतेजोपविसन् — छ, ज.
[14] परमेश्वरः — ङ.
[15] तद्भावना समस्तानां — ओ; तद्भावनात् समस्तानां — ङ.
[16] विघ्नकर्मजयो — ज.
[17] चेतसः — ओ; च्चेतसाः — ङ.
[18] कष्टमुक्तोऽप्यत्र न संशयः — छ, ज.
[19] मूकेरप्यत्र — ओ; मूकैरप्यत्र — ङ; मुक्तेरप्यवशः स च — च.
[20] कारणे छं तु वर्तिना–छ; कारणेछक्तुवर्तिना–ज.
[21] सक्तो — ओ; व्यक्तो — ङ, च, छ; व्यक्ति . . . — ज.
[22] ०नायामतिवर्तक० — छ, ज.
[23] तमवश्यन्नवत्यूर्ध्वं — ज.
[24] नयत्यध्वं — ओ; नयत्यध्व — ङ; नयत्पूर्वं — च.
[25] तमवश्यमपे० — छ, ज.
[26] ०मपेक्ष्यते — ओ.
[27] परिवारशरी० — ओ; परिवारं शरी० — ङ.
[28] 'ओ, ङ' मातृकयोः अयं पादो लुप्तः ।
[29] तु — छ, ज.

[1]धर्माधर्ममुखः प्रोक्तो ह्यविघ्नो विघ्न [2]एव च ।
[3]समुद्यतस्य यो भोक्तुः [4]प्रवृत्तस्य च कुत्रचित् ॥१७॥
विपर्ययोपचारेण [5]व्याघातो [6]विघ्न एव सः ।
[7]सिद्ध्युपेतस्य [8]यत्प्रोक्तं विधानं [9]मन्त्रिणो मुने ॥१८॥
सिद्धिरेवान्तरायोऽत्र[10] [11]मुक्तेर्मुनिवरेश्वर ।
[12]न च तत्र [13]प्रकर्तव्यमनुध्यानं शिवात्मकम्[14] ॥१९॥
[15]धर्मोपो[16]द्बलितस्येत्थं पुण्यभाजः प्रवर्तते ।
[17]सिद्धिर्मन्त्रात्मिका [18]तस्याप्यभियुक्त[19]स्य नित्यशः ॥२०॥
[20]यथोक्तकर्ममार्गेण [21]चरतः [22]साधकात्मनः ।
[23]न विघ्ना नोपसर्गाश्च विधिवैकल्यमेव वा[24] ॥२१॥
भवन्ति विधि[25]वैकल्यात्साधकस्य [26]विनायकाः ।
तेऽपि मन्त्रबलात्क्षिप्रं ध्वंसमायान्ति सुव्रत ॥२२॥
[27]तच्छक्तिः पौरुषैः स्थूलै[28]र्हेतुभिर्न विचार्यते ।

---

[1] धर्माधर्ममुखप्रोक्तो — ङ; धर्माधर्मः सुखः प्रोक्तो — च; धर्माधर्मुखप्रोक्तो — छ; . . र्मुखप्रोक्तो — ज.

[2] एव सः — च, छ; एव सा — ज.

[3] १७ श्लोकस्योत्तरार्धं १८ श्लोकस्य पूर्वार्धं च 'छ, ज' मातृकयोर्न स्तः ।; वासमुद्यतयो भोक्तुं — ओ.

[4] प्रवृत्तस्याथ — ओ, ङ.

[5] व्याघाते — ओ, ङ.

[6] घन एव सः — ओ; विघ्न उच्यते — च.

[7] विध्युद्यतस्य — ओ; विद्युद्यतस्य– ङ, छ; . . ध्यद्यतस्य — ज.

[8] यत्रोक्तं — ओ, ङ, छ, ज.

[9] मन्त्रिणा — ओ, ङ.

[10] ०न्तरा चोत्र — ओ.

[11] मुक्ते मुनि० — ओ, ङ, छ, ज; मुक्तेन्दुनि० — च.

[12] स विघ्नोऽत्र — च.

[13] प्रवर्तव्यमनुव्यानु शिवा — ओ; प्रवक्तव्यमनुव्यानु शिवा — ङ; प्रपत्तव्यो द्वचनुध्यानं — च; प्रवक्तव्यमनुध्यानं — छ.

[14] ०त्मकाम् — ङ.

[15] धर्मो चोद्बलिनः सोऽर्थं — ङ.

[16] ०द्बलितस्येर्ध पुभाजः — छ; ०द्बलिनस्येर्थमुपभाजः — ज.

[17] सिद्धिमन्त्रात्मिका — ओ; सिद्धि मन्त्रात्मिकां — ङ; सिद्धिमन्त्रात्मका — छ, ज.

[18] तस्याभि० — ओ; तस्यमभि० — ङ.

[19] ०व्यनित्यशः — छ, ज.

[20] यथोक्तं क्रममार्गेण — छ, ज.

[21] तातः — ओ, ङ; तरसा — छ, ज.

[22] साधकमात्मनः — ओ.

[23] न विघ्नानेव सर्गाश्च — ओ; न विघ्ना वै सर्गाश्च — ङ; न विघ्नानुपसर्गाश्च — छ; निविघ्नानुपसर्गाश्च — ज.

[24] च — ओ; वः — ङ.

[25] ०वैकल्पसाध० — च.

[26] वितानकाः — ङ; विनायकः — छ, ज.

[27] तच्छक्तिपौरुषैः — ओ; तच्छक्तिपौरुषैस्थौलै० — ङ; तच्छक्तिपौरुषैद्दि०यैर्हे० — छ, ज.

[28] २३ श्लोकस्य द्वितीयपादप्रभृति २५ श्लोकस्य प्रथमपादान्तो भागो 'ओ' मातृकायां लुप्तः।; ते तु भिन्न वि० — ङ; हेतुभिर्ना वि० — छ, ज.

[1]अवेक्ष्य भगवान्कर्म[2]योग्यत्वं बन्धदान् यतः ॥२३॥
[3]ददाति [4]साधकेन्द्राणां [5]भोगान्भीतिसमन्वितान् ।
[6]यत्रोक्तसाधकेन्द्राणां भुक्तभोग[7]क्षयात्मनाम् ॥२४॥
मोक्षस्तत्र [8]प्रवक्तव्यो [9]भिन्नदेहस्य नान्यथा ।
नानुध्यानादृते [10]सोऽपि यावत्तद्देहमादरात् ॥२५॥
[11]पालयेन्मन्त्रसामर्थ्याद्योगाद्वा[12] करणोद्भवात्[13] ।
[14]तावत्प्रक्रीडमानः[15] [16]सन्न विघ्नैरभिभूयते ॥२६॥
[17]युक्तः सदाशिवे तत्त्वे [18]दीक्षया साधकोत्तमः ।
[19]भिन्नदेहः स तत्रैव [20]भुक्त्वा भोगाननेकधा ॥२७॥
लयं याति न संदेहः किं तु मुक्तो ह्यनीश्वरः ।
सेश्वरत्वान्मुनिव्याघ्र [21]सर्वेशस्तस्य लीलया ॥२८॥
दत्त्वाधिकारं किंचिद्वा [22]नयेत्पूर्वं पदं यदा ।
योगयुक्तसर्वविघ्नेषु ललाटसमयाच्चिरम् ॥२९॥
परं तेजः समभ्यस्य तदुत्थेन दृगात्मना ।
संपश्यन्निर्दहे[23]द्विघ्नान् [24]स्थिरधीः प्रयतात्मवान् ॥३०॥

[ प्राणजयाद्विचित्रकर्मकरणम् ]

अस्मात्प्राण[25]जयात्कर्म विचित्रं लीलयैव हि ।
करोति योगयुक् क्षिप्रं[26] तं प्रवक्ष्यामि तेऽधुना ॥३१॥
हृत्पद्मकर्णिका[27]रूढं खद्योतसमवर्चसम् ।

---

[1] अपेक्ष्य — च, छ, ज.
[2] ०योग्यत्वबन्धिमान् — ङ; योग्यत्वं बुद्धिमाप्नुयात् — च; योक्तव्यं बुद्धिमान् — छ, ज.
[3] 'च' मातृकायाम् इदमर्धं न दृश्यते ।
[4] साग्रकेन्द्राणां — ङ.
[5] भोगाद्भीति० — ङ, छ, ज.
[6] यत्रोक्तं साध० — ङ, च.
[7] ०क्रियात्मनां — च.
[8] प्रकर्तव्यो — ङ; प्रपत्तव्यो — च.
[9] भिन्नदेवस्य — छ, ज.
[10] स यावर्तदेहं च मादरात् — छ; यावत्तदेहं च मादरात् — ज.
[11] ज्वालये मन्त्र० — ओ.
[12] ०द्योगाद्या — ओ, ङ; ०द्योगान्धा — च.
[13] कारणोदितम् — ओ; कारेणोदितम् — ङ; ०कारणोद्यताम् — च; कारणोद्भवात् — छ.
[14] तावत्क्रीडमनाः सम्यग्विघ्नैर . . — ओ.
[15] तावद्धि क्रीडमानः — ङ.
[16] सन् अविघ्नैरभि० — छ, ज.
[17] उक्तः — च.
[18] दीक्षाया साध० — ओ, छ, ज.
[19] भिन्नदेहे — च, छ, ज.
[20] २७ श्लोकचतुर्थपादप्रभृति ३० श्लोकतृतीयपादान्तो भागः 'च' मातृकायामेव दृश्यते ।
[21] सवेश० — च.
[22] नयत्पूर्वं — च.
[23] ०द्विघ्नां — च.
[24] भिन्नधीः — छ, ज.
[25] ०जयात्क्षिप्रकर्मचित्रं लिलैव — छ; ०जयात्क्षिप्रकर्मचित्र लिलैव — ज.
[26] ०युग्विप्र — ओ, छ, ज; योगयद्विप्र — ङ.
[27] ०रूढखद्योत० — ङ.

ध्यात्वात्मानं विशेदूर्ध्वं [1]मार्गेणातिमहौजसा[2] ॥३२॥
[3]यावतुर्यं तत[4]स्तस्मिन् [5]पद्मं ध्यायेन्महौजसम्[6] ।
उदयादित्यसंकाशं [7]तन्मध्ये कर्णिकां शुभाम् ॥३३॥
[8]तामन्वीक्ष्य विशेद्योगी [9]भित्त्वोद्घातैस्तु ग्रन्थिकान्[10] ।
[11]तत्स्थः [12]संपश्यते सिद्धान् [13]वसून्रुद्रान्सभास्करान् ॥३४॥
नक्षत्राणि च सर्वाणि [14]ग्रहांश्चैव दिवौकसान् ।
[15]पश्येद्विमा[16]नयानोऽयं स्थाने व्योमन्यनेकधा ॥३५॥
तैः सार्धं [17]विपुलैर्भोगैः क्रीडते सुचिरं [18]सुधीः ।
ध्यानेन[19] वर्तुलीकृत्वा[20] [21]हृत्प्रदेशे सुनिश्चलम्[22] ॥३६॥
[23]पीतं [24]बिन्दुवपुर्ध्यायेन्निबिडं [25]गुरुमण्डलम् ।
[26]क्षणाद्वज्रशरीरः[27] स्याद्देवैरपि न[28] धृष्यते[29] ॥३७॥
निष्क्रम्य [30]बाह्यतस्तूर्णं स्पष्टमत्यन्तदीप्तिमत्[31] ।
[32]चक्राकारं स योगीन्द्रो [33]यां यां दिश[34]मशङ्कितः ॥३८॥

---

[1] मार्गेणात्र — ओ; माह्येणाति० — छ, ज.
[2] त्रिमहेच्छया — ङ.
[3] यावत्कर्तुं — ङ; तावत्तुर्यं — च.
[4] ०स्तस्मात्पद्मं — छ, ज.
[5] ०पद्माद्धार्ये महौजसः — ङ.
[6] महौजसः — ओ.
[7] तन्मध्यकर्णिकां — च.
[8] तमन्वीक्ष्य विशेद्ये . . — ओ; तमन्वीक्ष्य विशे० — ङ; तमुद्वीक्ष्य विशे० — च; वीक्ष्य प्रविविशे० — छ, ज.
[9] हित्वोद्घातैस्तु — ओ, ङ, छ, ज; त्वाद्घातैस्तु — च.
[10] ग्रन्थयः — ओ, ङ, च, छ; ग्रन्थया — च.
[11] एतदारभ्य योगपादान्तं 'ग' मातृकायामुपलभ्यते ।; तत्स्थं — ओ; ततः समभ्यसेत् सिद्धान् — च; तत्रस्थं पश्यते — ग.
[12] संविश्यते — ङ; संप्रश्यते — छ, ज.
[13] वस्तून्रुद्रान् — ग; वसूरुद्रान् — ङ; वसून् मुद्रानभास्क० — छ, ज.
[14] ग्रहांश्च दिवौ० — ग; ग्रहांश्च सदिवौ० — च; गृहांश्च सदिवौकसः — छ, ज.
[15] पश्येहि मानमानौ संघस्थान्योऽप्यनंकधा — ज.
[16] ०नयानौघसंस्थाने — ग; ०नायानोऽयं संस्थाने — ङ; ०नपारौघसंघस्थान्व्योम्न्यनेकशः ०च; ०नयानौ संघस्थान्व्योमन्येन — ज.
[17] विपुलैर्योगैः — छ, ज.
[18] सुखी — ओ, ग, ङ; सुचे — छ; सुचौ — ज.
[19] ध्याने — छ, ज.
[20] ०भूत्वा — ओ, ग, ङ, छ, ज.
[21] भूप्रदेशे — ग; हृत्प्रदेशेषु निश्चलम् — च.
[22] सुनिश्चल — ग; सुनिश्चयः — ङ.
[23] यत . . ध्यायेन्नभिडं — ओ; वीतद्विन्दुवपुध्यायेन्नविडं — ङ; पीतबिन्दुवपुर्ध्यायें० – च.
[24] बिन्दुवपुर्ध्यायेर्निबिडं — ग; विधुवपुध्याये निबिडं — छ; विधुवपुध्याये . . — ज.
[25] गुमन्धरः — ओ; गुरुमन्थरम् — ग, च; गुरमन्थरम् — ङ; . . मन्धरम् — ज.
[26] ०क्षणोद्वज्रंज्र० — छ; क्षणोद्वजं० — ज.
[27] ०शरीरं — ग.
[28] ०द्दैव्यै वि न — छ.
[29] धूज्यते — ग; दृश्यते — च.
[30] वाग्यतस्तूर्णं — च; बाह्यत सूर्णं — छ, ज.
[31] ०मत्यन्तदीप्तम् — छ, ज.
[32] चक्रान्तरं — ओ, ग, ङ, छ, ज; अत्र 'ध्यायन्'' इत्यध्याहार्यम् ।
[33] यायान्निश० — ग; यास्यां दिश० — छ; यास्यानिश० — ज.
[34] ०मशक्तितः — ओ, ङ; ०मशङ्कितम् — ग; शमागतः — छ; श. . गतः — ज.

[1]पश्येत्सा सा मुनिव्याघ्र स्तम्भिता नात्र संशयः ।
[2]नाभ्युत्थेन महा[3]तेजाः शिखासंघट्टसर्पिषा[4] ॥३९॥
निर्धूमाङ्गारवपुषा [5]वेगवत्किरणात्मना ।
साटोपेन [6]सुतीव्रेण [7]क्रोधरन्ध्रविनिर्गमात् ॥४०॥
[8]निर्यातं [9]निर्मलं [10]ध्यात्वा तेन संवेष्टयेज्जगत् ।
संहरन्निव सर्वत्र ज्वलमानेन भूरिणा ॥४१॥
[11]तीव्रसंतापसंतप्तं दह्यमानं [12]सुविह्वलम् ।
[13]आत्मानममृतप्रख्यममृतोर्मिसमाकुलम् ॥४२॥
[14]विशन्तं तज्जगत्सर्वं [15]ध्यायेत्तु [16]सततं बुधः ।
[17]अस्माद्ध्यानाज्जगत्क्षिप्रं [18]वशमेति चराचरम् ॥४३॥
धूम्राकारेण [19]विद्वेषः [20]कपिलाशबलेन च ।
[21]प्रोच्चाटनं [22]सुरक्तेन [23]क्षणादाकर्षणं भवेत् ॥४४॥
शुक्लेन प्रीतिजननं[24] ध्रुवम[25]प्यसितेन [26]तु ।
बिन्दुना [27]मारणं प्रोक्तं [28]शान्तिकर्म [29]शिवात्मना ॥४५॥
यत्र [30]यत्रेच्छते गन्तुं [31]योगी योगबलान्वितः ।
तत्र तत्र [32]लयः कार्यो [33]मनसः [34]प्रयतात्मना ॥४६॥

---

[1] पश्येत्स सा — ओ, ङ, छ, ज; पश्यते सा — च.
[2] नाभ्युर्थेन — ज.
[3] ०तेजा शिखा० — ग; ०तेजा जिघां — ङ; ०तेजा शिखां — च; तेजनशिखा० — छ; ०जेन शिखा० — ज.
[4] ०संघटसर्पिषा—ओ, ङ; ०सर्पिणा—छ, ज.
[5] वेगवत्करुणात्मना — छ, ज.
[6] सतीव्रेण — ङ; सुतिप्रेण — छ, ज.
[7] क्रोधारन्ध्र० — ङ; क्रोधमन्द्र० — छ, ज.
[8] निर्यान्तं — ग; निर्यातां – ङ; निर्धातं — च.
[9] विपुलं — ओ, ग, छ, ज; विपुलां — ङ.
[10] ध्यात्वान्तन — ओ, ङ.
[11] ०तिप्रसन्नाहसं — छ; ति प्रसन्नाधसं० — ज.
[12] तु विद्वलम् — ओ, ङ.
[13] आश्मानममृतं प्रख्य० — ङ; आत्मानममृतं प्रख्य० — छ.
[14] निर्विशन्तं जगत् — ओ, ग, छ, ज; निव्यशन्तं जगत् — ङ.
[15] ध्यातव्यं — ओ, ग, ङ, च, छ, ज.
[16] स्वतनौ — ओ, ङ, च, छ, ज.
[17] अस्माद्धयात्वा . . क्षिप्रं — ओ; अस्माध्यानाज्जग० — ग; अस्माद्धयानात्क्षिप्रं—ङ.
[18] वचमेति — ज.
[19] विद्वेषात् — ङ; विविश — छ, ज.
[20] कपिशेन बलेन — ओ, ग, ङ, छ, ज; कपिलेन चलेन — च.
[21] प्रोच्चाटना — छ; प्रोच्चाटनाः — ज.
[22] च रक्तेन — च.
[23] कृष्णादा० — छ, ज.
[24] प्रीतिजान — छ, ज.
[25] ०प्यशिवेन — ओ, ङ; ०प्यशितेन — छ, ज.
[26] च — च.
[27] मरणं — ओ, ङ, छ, ज; . . रणं — ग.
[28] शान्तिकं च — ओ, ङ, च; शाक्तिकं च — छ, ज.
[29] सितात्मकम् — च; समात्मना — छ, ज.
[30] यत्रेच्छतं — ओ.
[31] योगियोग० — छ, ज.
[32] लयं — ङ.
[33] ४६ तमश्लोकस्य चतुर्थपादप्रभृति ४७ तमश्लोकस्य तृतीपादान्तो भागः 'छ, ज' मातृकयोर्न दृश्यते ।
[34] प्रयतात्मनः — ओ, ङ; प्रयतात्मवान् — च.

[1]संप्राप्यं मनसि [2]प्राप्ते क्षणात्तत्रैव योगिराट् ।
समाविश्याथवा स्वस्थः [3]कर्णिकायां तु पूर्ववत् ॥४७॥
कदम्ब[4]गोलका[5]कारमात्मानममलात्मकम्[6] ।
स्फुरद्रश्मिसहस्राढ्यं ध्यानयुक्तेन [7]चेतसा ॥४८॥
[8]निश्चरन्ति [9]सुदीप्ताङ्ग्यो जपापुष्प[10]समप्रभाः ।
आकुञ्चि[11]ताग्रा [12]विस्पष्टाः [13]स्वदेहान्मुनिसत्तम[14] ॥४९॥
[15]ताभिराकृष्य [16]विद्धाङ्गं [17]जगदेतच्चराचरम् ।
[18]आकृष्य [19]चेष्टयेद्योगी [20]तेन वा [21]सूक्ष्मवर्त्मना ॥५०॥
[22]यायाद्यथेप्सितं स्थानं [23]शिवशक्तिबलेरणात् ।
ललाटसमयं प्राप्य [24]व्योमरूपमथोज्ज्वलम् ॥५१॥
निरीक्ष्य [25]भेदयेत्स्थाणुमपि[26] [27]वज्रचयोपमम् ।
शङ्खकुन्देन्दु[28]धवलं हृद्व्योमकमलोदरे ॥५२॥
[29]प्लुतं परामृतेनैव ध्यायेत्संविद्धचेतसम्[30] ।
ईषत्प्रदक्षिणं नित्यं [31]न मृत्योर्वशमाप्नुयात् ॥५३॥

---

[1] संप्राप्ते — ओ, ग, च; संप्राप्तो — ङ.
[2] प्राप्तः — ओ, ङ, च; प्रोप्ते — ग.
[3] कर्णिकायास्तु — ग.
[4] ०कोलकाकार० — ओ.
[5] ०कारमात्मानं परमेश्वरम् — छ; का. . ध्यानं परमेश्वरम् — ज.
[6] ०मात्मानमलात्मकम् — ओ.
[7] तेजसा — ओ, ग, ङ, छ, ज; ग्रन्थानुस्यूतेरभावादितःपरं ग्रन्थपातः स्यादिति भाति।
[8] निश्चरन्ती — ओ; निश्चिरन्ति — ग; निश्चक्रामन्ती — ङ; निश्चरन्त्यः — च.
[9] सुदीप्ताङ्गो — ओ, ग, ङ, छ, ज.
[10] समप्रभः — ओ, ग, ङ; संनिभाः — च; समप्रभम् — छ, ज.
[11] ०ताग्रविस्पष्टा — ओ, छ, ज; ०ताश्च विस्पष्टाः — च.
[12] विस्पष्टा — ग, ङ.
[13] स्वदेहा मुनि० — ङ; सुदेहा मुनि० — छ; सु . . मुनि० — ज.
[14] ०सत्तमः — ओ.
[15] तादिराकृष्य — छ, ज.
[16] विद्धाग्र० — ओ; विद्धाग्रं — ग, ङ; विद्वाग्रं — छ, ज.
[17] जगदित्थं चरा० — च; जगमेतच्चरा० — छ, ज.
[18] आकृष्ट चेष्टते योगी — ग.
[19] चेष्टते योगी — ओ, ङ; चेष्टत योगि — छ; चेष्टते योगि — ज.
[20] केन — ग.
[21] सूक्ष्मकर्मणा — ओ, ङ; सूत्रवर्त्मना — ग.
[22] यायाद्यभीप्सितं — ओ; यथा यथेप्सिते – ग; यायाद्यभीप्सित० — ङ; यायाद्यदीप्सितं — छ; . . दीप्सितं — ज.
[23] स्वस्वशक्ति० — ङ.
[24] लोमरूपमथो० — ग, ङ, छ, ज; लोमत्रयमथो० — च.
[25] भेदयत्स्थाणु० — ओ, छ.
[26] ०स्थाणुरपि — च.
[27] वज्रचयोप्तम् — ङ; वज्रमयोपमम् — च; वज्रश्चयोपमम् — छ, ज.
[28] ०धवलहृद्व्योम० — ङ, छ, ज.
[29] प्लुतः — ग.
[30] संविद्धचेतसा — ग; संवित्तचेतसम् — छ, ज.
[31] न श्रित्योर्वशिमाप्नु० — छ; न श्रुत्योर्वशिमाप्नु० — ज.

मयूरकण्ठ[1]सदृशं ध्यात्वा [2]संवेश्य चेतसि ।
[3]तिष्ठन्स नियतो [4]योगी [5]योगिभिर्नोप[6]लभ्यते ॥५४॥
बहुनात्र किमुक्तेन [7]यद्यदाकाङ्क्षते क्षितौ ।
[8]तत्तत्सर्वमवाप्नोति [9]ध्यानान्मुनिवरेश्वर ॥५५॥
जित्वा [10]प्राणान्विधानेन [11]कालेन [12]च [13]सदा लयात् ।
[14]क्रीडन्नपि विशेद्योगी [15]शरीराणि सहस्रधा ॥५६॥
[16]स निर्ग[17]च्छत्यनायासाद्वीर्येण पवनात्मना ।
यत्र यत्र [18]लयं सम्यक्प्रकरोति स योगयुक् ॥५७॥
तत्र [19]तत्रेप्सितान्कामान्प्राप्नोति मुनिपुङ्गव ।
[20]यथाग्निर्दारुसंभूतः प्रद्योतयति खेतलम् ॥५८॥
[21]सुसमिद्धेन्धनस्तद्व[22]च्चित्तं योगबलान्वितम् ।
[23]प्रकाशयति विप्रेन्द्र [24]सुसूक्ष्मानपि [25]गोचरान् ॥५९॥

मतङ्ग उवाच —

[26]शिवः सर्वगतः [27]सूक्ष्मो [28]मनसैव सुनिश्चयात् ।
द्रष्टव्यस्तेन [29]सोऽभ्यासात्सर्वत्रैव [30]विजृम्भते ॥६०॥

---

[1] ०सादृश्यं — छ; सा. . . ज.
[2] संसिद्धचेतसि — ओ; संविश्य चेतसि — ग, छ; सा विद्धचेतसि — ङ; संविश्य चेतसी — ज.
[3] निष्कम्पं नियतो — ओ; निष्कम्पनियतो — ग; निष्कम्बं नियतो — ङ; निष्कम्पं नियते — छ; निष्क. . .न्नियते — ज.
[4] योगि० — छ,
[5] योगी भिन्नोप० — ओ.
[6] ०लक्ष्यते — छ, ज.
[7] यद्यतां काङ्क्षते — ङ.
[8] तत्सर्वमवा० — छ; तत्तवर्मवा० — ज.
[9] ध्यात्वा मुनि० — ओ; ध्याता मुनि० — ङ; ध्यानोन्मुनि० — छ, ज.
[10] प्राणं द्विधानेक० – ओ; प्राणद्विधानेन — ङ; प्राणाद्विधानेन — छ; प्रणाद्विजानेन — ज.
[11] कलेन — ङ.
[12] 'च' मातृकायां चकारो नास्ति ।
[13] समाकुलाम् — छ.
[14] विशेद्योगी शरीराणि — ओ, ङ; क्रीडन्त्यधि-विशेद्योगी — च; . . पि विशेद्योगी — छ; . . . तपि विशेद्योगि — ज.
[15] शतशोऽत्र सहस्रधा — ओ; शतशोऽथ सहस्रधा — ङ; शरीरेषु सहस्रधा — च.
[16] निर्गच्छनिरायासपर्येण — ओ; निर्गच्छति च निर्या. . येण — ग; निर्गच्छनिचनाया-सापर्येण — ङ; निर्गच्छति च निर्यासवीर्येण — छ; निर्गच्छति च निर्यासवीर्येणा — ज.
[17] ०च्छति नायासाद्वीर्येणोपचितात्मना — च.
[18] लये — ओ, ङ; लयः — ग; कुलः – छ, ज.
[19] तत्र स्थितान् — ङ.
[20] यथाग्निदारु० — च, छ; दथाग्निदारु० — ज
[21] समिद्धन्धनदं तद्व० — ओ; ससमिद्धे० — ङ.
[22] ०च्चित्तयोग० — च.
[23] प्रकामयति — ओ, ग; प्रक्तामयति — ङ.
[24] सुसूक्ष्ममपि — च.
[25] गोचरात् — ओ, ग, ङ, च.
[26] शिवसर्गगते — छ, ज.
[27] सूक्ष्मा — ओ.
[28] मनसस्तु — च.
[29] साभ्यासात् — ओ, ग, ङ, छ, ज.
[30] पिता भवेत् — ओ, ङ.

[1]मनसस्तु व्यतीतोऽयं [2]भगवान्ध्यायते कथम् ।

परमेश्वर उवाच —

मनसो [3]हीयमानस्य ध्यातुरन्यत्सुनिर्मलम् ॥६१॥
[4]व्यक्तिमायाति विज्ञानं [5]येन जानाति तत्पदम् ।
[6]ध्यातुः सैव परा काष्ठा तत्तेजोद्योतितात्मवान् ॥
[7]दृश्यं दृशा यथादर्शे तथा पश्यति [8]सुव्रत ॥६२॥

[ उक्तार्थोपसंहारो वक्ष्यमाणोपक्रमश्च ]

[9]उक्तं मया योगविधानमार्गे
चित्रं [10]विभूत्यै [11]ह्यखिलं हि कर्म ।
[12]उद्घातसाध्यं सकलं मुनीन्द्र
[13]यतस्ततोद्घातविधिं प्रवक्ष्ये ॥६३॥

इति श्रीमतङ्गपारमेश्वरे योगपादे कर्मयोगपटलः षष्ठः ॥
षष्ठः पटलः

---

[1] . . . व्यतीतोऽयं — ओ, ङ; . . व्यतीतेयं — ग; मनसः शुद्धयतीत्येवं — च; . . व्यतितोयं — छ, ज.

[2] भगवानध्यासते – ओ, ङ; ०भगवान्ध्यासते — ग; भगवान्साध्यते — च; भगवान्ध्यायेत — छ.

[3] भीयमानस्य साधुरन्यत् — ओ; हि धामासाधारन्यत् — ङ; हियमानस्य ध्यातुरन्यसु० — छ; हियमानस्य ध्या . . सु० — ज.

[4] व्यतिमायाति वि० — ङ; विज्ञानं व्यक्तिमायाति — च.

[5] येन ज्ञानादि तत् — ओ, ङ; यो न जानाति तत् — ग.

[6] ध्यात्वास्यैव — ओ, ङ; धातुः सैव — छ, ज.

[7] दृशे दृशा यथा देशे — ओ, ङ; दृशन्दृशन्यथा द्देशत्तथा — ग; दिशि दुशा यथा देशे — छ; दिशि दु . . यथा देशे — ज.

[8] सुव्रतः — च.

[9] युक्तं — ङ.

[10] विधूत्यै — ङ.

[11] न खला हि कामम् — ओ, ङ; न खलाभि कर्म — ग; न खलाभि मम — छ; न खल . . — ज.

[12] उद्घातसात्व्यः — ओ; उद्घातसाध्यः – ङ; उद्योगसाध्यम् — च; उद्घातसाध्या – छ, ज.

[13] यत . . घातविधिं — छ, ज; ततः उद्घातविधिं, अत्र संधिरार्षः ।

## सप्तमः पटलः

## उद्घातविधिः

[1]अथोद्घातविधानं[2] ते कीर्तयिष्याम्यनुक्रमात् ।

[उद्घातः[3]]

सम्य[4]ग्वायोर्निरुद्धस्य [5]कोष्ठस्थस्य चलात्मनः ॥१॥

---

[1] अस्मिन्पटले प्रथमश्लोकात्प्रभृति १६ पूर्वार्धपर्यन्तो भागः 'छ' मातृकायां न दृश्यते ।

[2] अथोत्थानविधानं — ग.

[3] 'प्राणसंज्ञाधुना शृणु ।
सहस्रद्वियुते षट् च शतानि तदहर्निशम् ॥
एवं कालस्य सूक्ष्मोऽपि अध्यात्मप्रविभावितः ।
निश्वासोच्छ्वासयोगेन ब्रह्मादीनां भवेन्मृतिः ॥
न क्वापि न मृतिस्तस्य शिवस्य परमात्मनः ।
कालक्षेपो भवेद्योगी ज्ञात्वा मृत्युमनामयम् ॥
वञ्चनं शास्त्रदृष्टेन तन्मार्गेणाभ्यसेत्पुनः ।
तत्क्षणोत्क्रान्तियोगेन प्राणत्यागोऽथवा भवेत् ॥
न्यासं कृत्वा तु पूर्वोक्तं प्रदद्यादष्टपुष्पिकाम् ।
शास्त्रोक्तैरष्टभिः पुष्पैर्मानसैः शृणु तद्यथा ॥
वारिजं सौम्यमाग्नेयं वायव्यं पार्थिवं पुनः ।
वानस्पत्यं पुनः षष्ठं प्राजापत्यं च स तमम् ॥
अष्टमं शिवपुष्पं तु शृणु तेषां विनिर्णयम् ।
वारिजं सलिलं ज्ञेयं सौम्यं घृतपयोदधि ॥
आग्नेयं धूपदीपाद्यं वायव्यं चन्दनादिकम् ।
पार्थिवं कन्दमूलाख्यं वानस्पत्यं फलादिकम् ॥
प्राजापत्यं यदन्नाद्यं शिवपुष्पं तु वासना ।
इत्येतैरष्टभिः पुष्पैः शिवं संपूजयेत्सदा ॥
पद्मासनात् [ने] परं बीजं यत्परो धारणादितः ।
हृच्छिरो हुंफडन्तं तु योजयेत्पूरकं तथा ॥
कुम्भकं तु ततः कृत्वा कृतमाविश्य तत्पुटम् ।
जिह्वातालुसमायोगात्तत्क्षणोत्क्रमणं भवेत् ॥
तद्बीजाभ्यसनं योगान्मूर्ध्नि भेदे तपो भवेत् ।
परतत्त्वे लयं कृत्वा प्राणत्यागः शुभो मतः ॥
रससिक्तं यथा ताम्रं ताम्रभावाद्विमुच्यते ।
सुवर्णेन तु हेमत्वं गतं तज्जातिहेमवत् ॥
ज्ञानविद्धः स तद्वच्च पशुभावाद्विमुच्यते ।
शिवेनैव सहैकत्वं गतं तत्त्वं तु तत्समम् ।'
(किरणे योग० २.२४उ०–३८पू०);
'ऊर्ध्वं घातो वायोः उद्घातः द्वादशान्तं यावन्नादवृत्त्या प्रेरणम् । यदुक्तं त्रयोदशशतिके —
'प्राणेनोच्चार्यमाणेन अपानः पीड्यते यदा ।
गत्वा चोर्ध्वं निवर्तेत एतदुद्घातलक्षणम्' । इति'
(सार्धत्रिशतिकलोत्तरे (२.३उ० ४पू० वृत्तिः)
'रेचकस्तु —'
'मुञ्चेद्वायुं ततश्चोर्ध्वं श्वासेनैकेन योगवित् ।
निश्वासयोगयुक्तस्तु यावदूर्ध्वं स रेचयेत् ॥
रेचकस्त्वेष विख्यातः प्राणसंशयकारकः ।'
'हृदयपुण्डरीकादूर्ध्वं नासिकापुटेन वायोःप्रेरणं रेचकः । स च प्राणसंशयकारक इति शरीरे तद्विच्छेदः उत्क्रान्तिवत् । तथा हि —
'यत्तद्धृदि सदा पद्ममधोमुखमवस्थितम् ।
विकसत्येतदूर्ध्वं तु पूरकेण तु पूरितम् ॥
ऊर्ध्वस्रोतो भवेत्पद्मं कुम्भकेन निरोधितम् ।
रेचकेन तथा क्षिप्तं सद्यः प्राणहरेण तु ॥
मुक्त्वा हृदयपद्मं तु ऊर्ध्वस्रोतो व्यवस्थितम् ।
रेचितो गच्छति ह्यर्ध्वं ग्रन्थिं भित्त्वा क्षणेन च ॥
भित्त्वा कपालद्वारे तु जीवो ह्यूर्ध्वं तु रेचितः ।
'सदाशिवपदं गत्वा न भूयो जन्मचाप्नुयात् ॥'
सर्वदा अधोमुखमविकसितमेव पूरकेण तद् विकासं समायाति । विकसितं च कुम्भकेन निरोधमेति । रेचकेन तु प्राणहरेण अभ्यासतो मध्यनाडीवर्तिना यदा रेचितं भवति, तत ऊर्ध्वत्वमायातीत्युक्तं प्राक् । तदा जीवः तथाभूतेन रेचकेन च स्वसंबन्धिना रेचितः, हंसवत् हृत्पद्मं परित्यज्य, हृदयग्रन्थिं भित्त्वा, मध्येन ऊर्ध्वं

[1]प्रधावतोर्ध्वं [2]यातस्य [3]स्वभावेनात्मवर्तिना ।
[4]ब्रह्मरन्ध्राब्जसंप्राप्तिः[5] शनैराकृष्य [6]धारणात् ॥२॥
[7]वितत्य कुक्षि[8]विवरे [9]नाभौ [10]विक्षिप्य लेशतः ।
ऊर्ध्वमाघात[11]धर्मित्वात्साटोपाद्ग्रन्थिभेदनात्[12] ॥३॥
[13]उद्घाटनाच्च [14]ग्रन्थीनामुद्घातः परिभाष्यते ।
योगे युक्तस्तु[15] सर्वाणि [16]कर्माण्यस्मिन्करोति हि[17] ॥४॥
[18]सोपकाराय विप्रेन्द्र [19]सिद्धयै [20]योगयुजः सदा ।
[21]तल्लयोर्जितवीर्येण [22]समभ्यस्य मुहुर्मुहुः ॥५॥
येनात्मवशगेनासौ प्राप्नोति फलमीप्सितम्[23] ।

---

कपालद्वारं ब्रह्मरन्ध्रं निर्भिद्य सदाशिवपदं यातीत्युक्तैवोत्क्रान्तिरिति ॥'
(सार्धत्रिशतिकालोत्तरे ११, १४–१९ श्लोकाः वृत्तिश्च).

[x] ०ग्वायुनि० — ओ, ङ; ०ग्वायोर्वि० — च; ०ग्विधोन्निरु० — ज.

[y] कोष्ठस्तस्याचलात्मनः — ग, ङ; काष्ठस्तस्यानलात्मनः — च; कोष्टस्तस्याचलात्मनः — ज.

[1] प्रधावतोध्ययं क्तस्य — ङ; प्रधानतोऽर्ध्वं यत्तस्य — च; प्रधावतो यतस्तस्य — ज; प्रधावत ऊर्ध्वं; अत्र संधिरार्षः ।

[2] यत्तस्य — ओ, ग.

[3] प्रभावेनात्म० — च.

[4] ब्रह्मरन्ध्राच्च — ङ.

[5] ०संप्राप्तः — ओ, ग, ङ, ज; ०संप्राप्ता — च.

[6] धारणा — ग, ज.

[7] वितन्यन्नक्षि० — ग; वितस्यन्नक्षि० — 'ग' पाठान्तरम् ।

[8] ०विचरे — ङ.

[9] नाभें — ओ; नभो — ङ.

[10] निक्षिप्य — च.

[11] ०धर्मित्वा सा गोपा ग्रन्थि० — ग; ०धर्मीथात्साटोपा ग्रन्धि० — ज.

[12] ०भेदना — ङ; ०देवनात् — च.

[13] उद्घाग्रनाय — ग; उद्घाटनाश्च — ङ.

[14] ग्रसिनामु० — ङ.

[15] योगयुक्तेन — च.

[16] कार्याण्य० — च.

[17] 'करोति हि' इत्यारभ्य षष्ठश्लोके पूर्वार्धे 'प्राप्नोति' इत्यन्तो भागो 'ङ' मातृकायां लुप्तः ।

[18] सोपकाराणि — च; 'सः उपकाराय' अत्र 'सोऽचि लोपे चेत्पादपूरणम्' (पा० सू० ६. १. १३४) इति सुलोपः, ततो गुणसंधिः ।

[19] शीलैर्योग० — ओ.

[20] योगयाज सदा — ग; यागयुजा सदा — च.

[21] तल्लयार्जित० — ओ; तल्लवोज्ञित० — ज.

[22] समभ्यर्च्य — ओ; समभ्यस्यो — ग; समभ्यासो — ज.

[23] ०मीप्सितः — ग.

[[1]पुरसंक्रमणम्]

[2]पुरसंक्रमणे न्यायो [3]योऽधुना ते मयोच्यते ॥६॥
[4]सोऽप्युद्घातवशात्क्षिप्रं [5]सिध्यते नान्यथा मुने ।
[6]जितोद्घातः प्रसन्नात्मा [7]योगी लब्धसमाधिकः[8] ॥७॥
[9]प्राणानाकृष्य विधिवत्कर्णिकायां[10] विधारयेत्[11] ।
[12]अधोर्ध्वं नियतो भूत्वा समाकृष्य शनैः शनैः ॥८॥
अधि[13]ष्ठातृपदान्येभ्यो विसृतेभ्यः पृथक् पृथक् ।
भौतिकेभ्यो[14]ऽतिरिक्तेभ्यः[15] स्थूलसूक्ष्मा[16]त्मकानि च[17] ॥९॥

---

[1] 'ऊरुस्थोत्तानचरणः सव्ये न्यस्योत्तरं करम् ।
उत्तानं किंचिदुन्नाम्य मुखं विष्टभ्य चोरसा ॥
निमीलिताक्षः सत्त्वस्थो दन्तैर्दन्तानसंस्पृशन् ।
तालुस्थाचलजिह्वश्च संवृतास्यः सुनिश्चलः ॥
संनिरुद्ध्येन्द्रियग्रामं नातिनीचोच्छ्रितासनः ।
द्विगुणं त्रिगुणं वापि प्राणायाममुपक्रमेत् ॥
ततो ध्येयः स्थितो योऽसौ हृदये दीपवत्प्रभुः ।
धारयेत्तत्र चात्मानं धारणां धारयन्बुधः ॥
अन्तर्धानं स्मृतिः कान्तिर्दृष्टिः श्रोत्रज्ञता तथा ।
निजं शरीरमुत्सृज्य परकायप्रवेशनम् ॥
अर्थानां छन्दतः सृष्टिर्योगसिद्धेर्हि लक्षणम् ।
सिद्धे योगे त्यजन्देहममृतत्वाय कल्पते ॥'
(याज्ञवल्क्यस्मृतिः ३.४.१९८-२०३);
'महासेनोऽस्ति बुद्धिमान् ।
प्राह तं तज्ञ्गणसुतं प्रणम्य च कृताञ्जलिः ॥
मुनिपुत्र प्रियं मेऽद्य करोषि यदि सत्यतः ।
त्वत्पितुस्तेऽद्य वाञ्छामि समाधेर्व्युत्थितस्य वै ॥
सह संभाषणं किंचिदेतदत्यन्तवाञ्छितम् ।
अनुकम्प्यो यद्यहं ते द्रुतमेतत्प्रसाधय ॥
श्रुत्वैतद्वचनं राज्ञः प्राह तापसजः पुनः ।
राजन्नसाध्यं ह्येतत्ते वाञ्छितं सर्वथा भवेत् ॥
तथापि ते करोमीति प्रतिश्रुत्यान्यथा कथम् ।
ब्रवीमि भूयस्तत्किंचित्प्रतीक्षस्वाभियाचितः ॥
मुहूर्तमात्रं मे पश्य सामर्थ्यं योगसंभवम् ।
एष मेऽद्य गुरुः शान्तपदे परमपावने ॥
संस्थितस्तं बाह्ययत्नैरपि को वै प्रबोधयेत् ।
पश्याहं बोधयाम्येनं योगयुक्त्यैव सूक्ष्मया ॥
इत्युक्त्वाथ समाविश्य समाहृत्येन्द्रियाण्यलम् ।
प्राणेऽपानं सुसंयोज्य मुख्यप्राणेन निर्गतः ॥
देहं पितुः प्रविश्याशु प्रलीनं तस्य मानसम् ।
बोधयामास चाकृष्य प्रबोध्याशु विनिर्गतः ॥
देहं स्वमाविशद्यावत्तावत्स बुबुधे मुनिः ।
अपश्यदग्रगं भूपं स्तुवन्तं प्रणतं तदा ॥
किमेतदिति संचिन्त्य सर्वं योगदृशाविदत् ।'
(त्रिपुरारहस्ये ज्ञानखण्डे १२.३६उ०-४६)

[2] पुरः संक्रमण० — ओ; पूरसंक्रमणे — ग; पुरसंक्रमणो — ङ, ज.

[3] यो ध्यानो ते — ओ; यो ध्यानो मयो० — ङ; मधुना ते मधो० — ज.

[4] साप्युद्घातवशी क्षिप्रं — ओ; साप्यत्पातवशात्क्षिप्रं — ङ.

[5] न सिद्ध्यते नान्यथा — ङ; साध्यते नान्यथा–च.

[6] जिघोद्घातः – ओ, ङ; जितोद्घातप्र० – ग, ज.

[7] . . . गोः । — ओ; योगिलब्धः समायिना–ज.

[8] ०समाधिगः — ग; ०सनामिगः — ङ.

[9] प्राणिनाकृष्य — ओ.

[10] किर्णिकानां — ज.

[11] विधार्यते — ग.

[12] अधोर्ध्वनियतो — ओ, ग, ङ; . . . यको — ज; अधः+ऊर्ध्वं=अध ऊर्ध्वं; ततः संधिरार्षः ।

[13] ०ष्ठातृपदे नेभ्यो वि० — ओ; ०ष्ठातृपदेऽन्येभ्यो वि० — ग; ०ष्ठातृपदेप्यो वि० — ङ; ०ष्ठात्रपदेऽन्योन्यविसृतेभिः — ज.

[14] ०ऽतिरिक्तेभ्यो स्थूलं . . . त्मकानि — ओ; ०तिरिक्तेभ्यो स्थूल० — ङ.

[15] स्थूलेभ्योऽक्षात्मकानि — च.

[16] ०त्मकान्य तु — ज.

[17] तु —ओ, ग, ङ.

स्वाधिष्ठान[1]विशेषेण योगशक्त्या विगृह्य तु ।
स्वात्मन्येवात्मसंस्थानि [2]कर्तव्यान्युचितं यतः ॥१०॥
स्वाभिमानपदं विप्र [3]तत्स्थः सोऽप्यतिभावितः[4] ।
लीलयैव [5]विनिष्क्रम्य क्रीडयित्वा च भूरिशः ॥११॥
भूयो[6]ऽप्यात्मतनौ योगी [7]प्रविशत्यविशङ्कितः ।

मतङ्ग उवाच —

[8]योगक्रमः स [9]वक्तव्यो [10]विस्पष्टोक्तिनिदर्शनात् ॥१२॥
येन [11]योगयुजो नाथ [12]पन्था निर्मलतां व्रजेत् ।

परमेश्वर उवाच —

[13]कृते बीजे फले पुष्पे प्रदीपे वा मनोरमे ॥१३॥
पूर्ववत्प्रकटीकृत्य[14] लक्ष्ये[15] संधाय चेतनम्[16] ।
[17]प्रोद्घातैर्बहुभिर्जित्वा [18]बहुलक्षं समाविशेत् ॥१४॥
[19]यावत्तत्स्पन्दते ताव[20]द्बीजाद्यं तदधिष्ठितम् ।
दिव्येन चक्षुषा ध्यात्वा [21]देहं जानात्यसंशयम्[22] ॥१५॥
[23]मदीयमित्यनायासं भूयोऽप्येवमतन्द्रितः ।
[24]शक्नोति गन्तुमागन्तुं [25]भूयो भूयोऽनिवारितः[26] ॥१६॥
[27]ततः स्वात्मबलं ज्ञात्वा [28]संसिद्धः स्मरणोद्यमी ।

---

[1] ०विशिष्टेभ्यो–ओ, ग, ङ, च; ०विशेषेभ्यो–ज.
[2] कर्तव्यानुचितं – ओ, ङ; कर्तव्या रचितां – ज.
[3] तत्स्थः सोह्यति० — ओ; तत्स्थ सो ह्यति — ङ; तत्स्कः सोऽप्यति — च; तत्स्थः सोऽभ्यति — ज.
[4] ०भासितः — ङ.
[5] निनिष्क्रम्य — च.
[6] ०प्यात्मन्तनौर्योगी — ओ; ०प्यात्मन्तनो योगी — ङ.
[7] प्रविशेत न शङ्कितः — ओ, ग, ङ; प्रविशेत न शाकितः — ज.
[8] योऽनुक्रमः — ओ, ङ; योऽनुक्रमस्य व०–ग, ज.
[9] पत्तव्यो — ङ.
[10] विस्पष्टोऽग्निनि० — ओ, ङ.
[11] योगयुजा नाथ — ओ, ग, ङ, ज.
[12] पण्डा — ओ; पथा — ग, ज; पन्धा — ङ.
[13] कृतं —ओ, ग; कृतौ — ङ, ज; कृतो — च.
[14] सरलीकृत्य — ओ, ङ; सकलीकृत्यं — ग, ज.
[15] लक्षे — ओ, ग, ङ, ज.
[16] चेतसम् — ओ, ङ, ज; चेतसः — ग.
[17] प्राद्घातैर्ब० — ओ; प्रोद्घाते ब० — ज.
[18] बहिर्लक्षं — च.
[19] यावन्तं संस्वते — ओ; यौवन्तं संस्वते — ङ; यावन्न स्यन्दते — च; यावत्तत्स्पन्दने — ज.
[20] ०द्बीजाद्यावदधि० – ओ, ङ; द्बीजा ह्यावदधि० — ग; द्बीजन्यावदधि० — ज.
[21] देहाञ्जानात्यसंशयः — ओ; देहोञ्जानात्यसंशयः — ङ.
[22] ०त्यसंशयः — ग; ०त्यसंशया — ज.
[23] मदीयमप्यना० — च.
[24] १६ उत्तरार्धं १७ श्लोकश्च 'ङ' मातृकायां न दृश्येते ।; शक्तोऽतिगन्तु० – ओ, ग; शक्नोमि गन्तु० — छ, ज.
[25] प्रयो भूयो निवारिताः — छ, ज.
[26] ०ऽनिवारिताः — च.
[27] तत्त्वात्मबल संज्ञात्वा — ओ; तत स्वार्थबलं ज्ञात्वा — ज.
[28] समद्धस्मरणो० — ओ, समिधस्मरणो० — ग, ज; समिद्धस्मरणो० — छ.

[1]नत्वा देवं विभुं शान्तं प्राणायामादिभिः शनैः ॥१७॥
[2]संशोध्यादौ [3]शरीरं स्वं पश्चाद्ध्यानं समारभेत् ।
[4]लक्ष्यदृक् [5]प्राप्तसामर्थ्यो योगयुग्वायुमुल्बणम्[6] ॥१८॥
[7]शनैर्विमोचयेत्सूक्ष्मं [8]लोमकूपेन युक्तितः ।
नासाग्र[9]रन्ध्रयोर्मध्ये समुत्थेनान्यथा मुने ॥१९॥
व्याधिभिः पीड्यते [10]गाढं विमुञ्चन्मुच्यते रुजः ।
ततः [11]शवं [12]समादेयं निर्व्रणं प्रयतः सुधीः ॥२०॥
पशुपक्षि[13]मृगाद्यं वा [14]धारणाभिर्विशोध्य तु ।
कृत्वा [15]संभवतो [16]वाथ [17]गन्धादिभिरलंकृतम्[18] ॥२१॥
[19]न चैवात्यन्तशौचादेर्यत्नश्चात्रोपयुज्यते ।
[20]योक्तुः [21]प्राणजया[22]त्सर्वं [23]प्रसिध्यत्यविचारितम् ॥२२॥
[24]मनोजयाच्च [25]विमलाद्विवेकाच्चातिसंस्फुटात्[26] ।
न [27]चावज्ञा तु शौचाय युक्तिरेव गरीयसी ॥२३॥

---

[1] हुत्वा — ओ, ग, भुक्त्वा — छ, ज.
[2] संशोध्यतौ — ओ, ङ; विशोध्यादौ — ग.
[3] शरीरस्थं — छ, ज.
[4] लक्षदृक् — ओ, ग, ङ; लक्षधृक् — छ, ज.
[5] प्रसमर्थो ये — ओ; प्रसमर्थो — ङ.
[6] वायुमुद्बणम् — ओ, ङ; वायुमुल्बणाम् – ग; वायुमुत्बणाम् — 'ग' पाठान्तरम्; वाममुद्बणम् — छ, ज.
[7] शनैर्विमोक्षयेत् — ज.
[8] लोमरूपेण — ओ, ङ; लोमकूपेषु — च; लोमरूपेन — छ, ज.
[9] ०मध्ययोर्मर्ध्ये — ग; ०राध्रयेन्मध्ये — ङ.
[10] वाथ मुमोचं मुच्यते कुजः — ओ; वाथ मुमोच मुमोचन्मुच्यते रुजा — ग; वाथ मुमोच मुच्यते कजः — ङ; वाथ मुमोच मुच्यते रुजा — छ, ज.
[11] शैवं — ओ, ङ; सर्वं — च; शिवं — छ, ज.
[12] स . . . निर्वाणं प्र० — ओ; समादाय निर्व्यूहत्प्र० — ग; समादाय निर्वणं प्र० — ङ; सदा निर्घृणः प्र० — छ; सदा य निर्घृणः प्र० — ज.
[13] ०मृगाद्या वा — ग.
[14] धायरणाभिर्विशोध्य — छ, ज.
[15] संभवती — ओ; संवाहतो — छ, ज.
[16] वापि — च.
[17] गर्थाभिरलं० — ङ.
[18] ०कृतः — ओ, च.
[19] . . ै . . त्यन्तशैवादे यत्तं चात्रोप० — ओ; . . न्त्यन्तशौचा ते यत्तं चात्रोप० — ङ; न चैवातीव शौचाद्यैर्यत्नश्चैवोप युते — च; न चैवाद्यन्तशौचादेर्यज्ञश्चात्रोप० — छ, ज.
[20] योक्तुं — ज.
[21] प्रमाणजयात् — ओ; प्राणाजयात् — ग; प्राणजुयात् — छ, ज.
[22] सर्षप्रसिद्धचर्थविचार . . — ओ; सर्षप्रसिध्यर्थविचार . . — ङ;
[23] प्रसिद्धचत्यविचारितः — च; प्रसिध्यत विचारतः — छ, ज.
[24] नमोजयाच्च — ङ.
[25] विमला विवेकाच्चाति० — ओ, ग; विमला विवेके चादि० — ङ; विमलाद्विवेकाच्चापि — च; विमलान् विवेकाच्चाति — छ, ज.
[26] ०संस्फुरात् — ओ, ङ; संस्पुरात् — ग; सस्फुटान् — छ, ज.
[27] चाव . . न शौचाय — ग; चावज्ञानुशौचाय — च.

शङ्खकुन्देन्दु[1]धवलं [2]हृद्ग्रन्थिविवराश्रितम्[3] ।
[4]चतुष्कलमसंदिग्धं पुर्यष्टकसमन्वितम् ॥२४॥
ईश्वराधिष्ठितं [5]दिव्यं [6]सुसंज्ञमजुगुप्सितम् ।
[7]निर्विशङ्कः प्रसन्नात्मा शनैराकृष्य वेगवान् ॥२५॥
[8]ध्यात्वा तद्धृदयं सम्यग्विशे[9]न्नासापुटेन तु ।
[10]अन्येन [11]वा [12]जितप्राणः [13]स्रोतसा साधकोत्तमः[14] ॥२६॥
[15]लोमकूपेन [16]वा क्षिप्रं [17]सुसूक्ष्मेणातिशोभिना ।
यतः सर्वाणि [18]हृद्देशात्प्रादुर्भूतान्यनेकधा ॥२७॥
स्रोतांसि तेन [19]नात्यन्तं [20]नियमोऽत्र [21]प्रकीर्तितः ।
गत्वा [22]तद्धृदयं [23]योगी स्वेषु स्वेषु विनिक्षिपेत् ॥२८॥
स्थानेषु स्थानमूलानि ततस्तेजः परं स्मरेत् ।
तेनापूर्य जगत्सर्वं तिष्ठेत्संयम्य [24]मारुतम् ॥२९॥
[25]स्वाक्षवृत्तिषु सर्वासु द्वाराणि परिशोधयेत् ।
[26]पूर्ववत्सर्वभूतानि निबिडं [27]दीप्तिमत्स्फुटम् ॥३०॥
[28]अहमित्रत्ययोपेतं [29]वीर्यमध्यवसायजम् ।

---

[1] ०धवला — ओ; धवलां — छ, ज.
[2] हृद्ग्रन्धिविवरा० — च; हृद्ग्रन्धिवि . . राश्रि . . — ज.
[3] ०विपराश्रितम् — ङ.
[4] चतुष्कलसमं दीर्घपुर्यष्ट० — ओ; चतुष्कलसमं दीर्घं पुर्यष्ट० — ग, ङ; चतुष्कमलसंदिग्धं पुर्यष्टं – छ; चतुष्कमलवन्तिर्गं पुर्यष्ट० — ज.
[5] दिव्यमसंज्ञ० — छ, ज.
[6] सुस . . जुगु० — ओ; स्वसंज्ञमजुगु० — च.
[7] निर्विशङ्कप्रसन्नात्मा — ओ; निर्विशङ्कप्रसिद्धात्मा — ज.
[8] ध्यात्वा हृदयं — ङ.
[9] ०न्नासपुटेन — छ, ज.
[10] . . न — ओ; अनेन — ग, ङ.
[11] योजितः प्राणस्रोतसा — छ, ज.
[12] जितः प्राणः — ओ, ङ.
[13] सोयसा — ओ; सोऽथ सा — ङ.
[14] ०कोत्तमम् — ज.
[15] लोमरूपेण — ओ, ङ; रोमरूपेण — छ, ज.
[16] वा विप्र — ओ, ग, ङ, छ, ज.
[17] सुसूनातीवशोभना — ओ; सुसूक्ष्मेणातिशोभना — ग; सुसूनातिशोभिना — ङ; सुसूक्ष्माणातिशोभिना — ज.
[18] हृद्देशा प्रातर्भूता० — ङ.
[19] "नात्यन्तं" इत्यारभ्य २९ श्लोके प्रथमपादे "स्थानेषु स्थान" इत्यन्तो भागः 'छ' मातृकायां लुप्तः।; नासत्यं — ओ, ङ; नान्यत्तं — च; नांत्यंत तु — ज.
[20] नियतोऽत्र — ज.
[21] प्रकीर्तिता — ओ, ज.
[22] तु हृदयं — ङ; त तु हृदयं — ज.
[23] योगि — ज.
[24] मारुतः — ग.
[25] स्वाक्षवृत्तिसु — ओ; साक्षवृत्तिषु — छ, ज.
[26] पूर्वं च सर्वं — ओ; पूर्ववत्सर्वपीतस्तन्निबिडं — ग; पूर्वसर्वभतन्निन्निबिडन्ति — ङ; पूर्ववत्सर्वपीतं तु निबिडं — च; पूर्ववत्सर्वपीतं निबिडं — छ, ज.
[27] दीप्त . . . — ओ; दीप्तमद्भुतम् — ग, ङ; लिप्तमद्भुतम् — छ; नीपमद्भुतम् – ज.
[28] अहमित्प्रत्य०–ओ, ङ, च; अहमिति प्रत्य०–ग.
[29] वीर्यमध्यं वसायजम् — ओ; वीरमध्यं वसायजम् — ङ; वीर्यमद्यवसायजम् — च.

[1]शवस्याङ्गानि सर्वाणि [2]वशीकृत्य ततः सुधीः ॥३१॥
[3]पूर्वोक्तमासनं [4]बद्ध्वा [5]धारणां [6]धारयेत्क्रमात् ।
[7]ततोऽन्तःकरणं [8]मन्त्रैः कर्तव्यं बहिरेव च ॥३२॥
[9]येनाप्रतिहता शक्तिर्विचरेत्स्वेच्छया[10] क्षितौ ।
एवं [11]शवशरीराणि शतशोऽथ [12]सहस्रशः ॥३३॥
संत्यज्य [13]प्रविशेच्चापि [14]क्रीडत्यभ्रष्टयौवनः ।
स्वेच्छायुः [15]कामरूपी स्याच्छापानुग्रहकृत्तथा[16] ॥३४॥

[ मृत्युभयनिवारणमापन्निवर्तनं च ]

शब्दरूप[17]रसादीनामर्थानां [18]स्वविपर्ययात् ।
[19]धातुविप्रतिपत्तेर्वा [20]स्मृतेर्वापि [21]प्रहाणतः ॥३५॥
अना[22]दराद्वा [23]बालस्य [24]द्युतेर्हानाच्च सुव्रत ।
भूमेः[25] प्रध्वंसनाद्वाथ[26] प्रवाहैश्चापि वेष्टनात्[27] ॥३६॥

---

[1] शिवस्याङ्गानि–ओ, ङ, छ, ज; सर्वस्याङ्गानि–च.
[2] वशीकृत ततः — ग.
[3] पूर्वोक्तवासनं — ङ.
[4] कृत्वा — छ, ज.
[5] धारणाद्धारये० — ङ.
[6] धारणात्मिकाम् — च; धारयेत्सुधीः — छ, ज.
[7] ततोर्ध्वः करणं — ओ, ततोऽन्तरेण — ग; ततोद्धः कारणं — ङ; क्रमात्ततोऽन्तकरणं कर्तव्यं — छ, ज.
[8] मन्त्री — ओ, ग; मद्री — ङ; मन्त्रैर्वर्तव्यं — च.
[9] येनाप्रविहतः शक्ति० — ओ; येनाप्रतिहतः शक्ति० — ङ; येषां प्रतिहता शक्ति० — च; येनाप्रतिहतं शक्ति० — छ, ज.
[10] विवरे स्वेच्छया — ग.
[11] शिवशरीराणि — ओ; शतशरीराणि — छ, ज.
[12] सहस्रधा — ओ, ङ, छ.
[13] प्रविशेद्वापि — ओ, ङ, छ, ज; प्रविशन्वापि — ग.
[14] क्रीडत्यक्लिष्टयौवनम् — ओ, क्रीडन्तो हृष्टयौवनाः — ग; क्रीडत्यश्रिष्टयौवनम् — ङ; क्रीडते हृष्टयौवनः — छ, ज.
[15] कामरूपः — च.
[16] ०कृत्तया — ङ; ०कृत्सदा — च.
[17] ०रसादीनामत्वना स्व० — ग.
[18] स्वाविपर्ययः — ओ, ग; स्वाविपर्ययात् —ङ; स्वपिपर्ययात् — ज.
[19] . . र्वप्रतिपत्तेर्वा — ओ; धातुर्विप्रतिपत्तेर्वा — ग, ङ; धातुर्विप्रपतेर्वापि — छ, ज.
[20] स्मृतेर्वा विप्रहाणतः — ग; समृतेर्वापिहारतः — छ, ज.
[21] प्रमाणतः — ङ.
[22] ०दराद्वालास्याद्वा द्युतो र्भानोश्च सु० — ओ; ०दराद्वा बालद्युतेर्हानाच्च सु० — ग; ०दराद्वालस्यादुतो भानाश्च सु० — ङ.
[23] लक्ष्यस्य — च.
[24] द्यूते हानाच्च — च; द्वितेर्हानाच्च — छ, ज.
[25] प्रभूमैः — ओ, ङ.
[26] प्रध्वंसना वाथ — ङ; प्रध्वंसनत्वाच्च — च.
[27] प्रवाहश्चाविचेष्टना — ओ; प्रवाहश्चापि वेष्टना — ग; प्रवाहाश्च विवेष्टना — ङ; प्रवाहस्याप्यचेष्टनात् — च; वाहश्चापि विशेषणात् — छ; वान्हश्चापि विशेषणात् — ज.

बाह्यलिङ्ग[1]विपर्यासादनिमित्ताच्च [2]सस्फुरात् ।
अकस्माच्चित्त[3]विक्षोभाद्बाह्यारिष्टनिदर्शनात् ॥३७॥
[4]हृत्पद्मकर्णिकारूढो[5] ध्यायेत्पूर्णेन्दुनिर्मलम्[6] ।
[7]क्षीराम्भःपरि[8]शुद्धेन्दु[9]मण्डलं चामृत[10]स्रवम् ॥३८॥
[11]भ्रमन्समभ्यसेद्विद्वान्[12]हृच्चक्रपरिवर्तनात् ।
[13]मुहूर्तमेकं संतिष्ठन्योगी मृत्युभयं त्यजेत् ॥३९॥
[14]तच्चैवाभ्यसतो नित्यं [15]योगिनस्तल्लयात्मनः ।
[16]नापत्संजायते [17]स्वल्पा [18]मयोक्तं निश्चितं [19]वचः ॥४०॥

[ [20]विरक्तस्य देहत्यागविधिः, शिवपदप्राप्तिश्च ]

[21]विरक्तो वा [22]त्यजेद्देहं[23] [24]तस्याप्येष विधिः स्मृतः ।
किं तु [25]हृद्विवरात्सर्वमाकृष्यास्त्रेण [26]पण्डितः ॥४१॥

---

[1] ०विपर्यासादनिमित्तश्च — ओ, ङ; विपर्यासा अनिमित्ताच्च — ग; विपर्यासादनिमित्ता च — च.
[2] सस्पुरा — ओ; सस्फुरा — ग, ङ.
[3] ०विक्षेपाद्बाह्यानिष्ट० — ओ, ङ; संक्षोभाद्बाह्यारिष्ट — च.
[4] हृत्पद्मे कर्णि० — ग.
[5] ०रूढं — च.
[6] ०पूर्णेन्दुमण्डलम् — च; ०पूर्वेषु मण्डले—छ, ज.
[7] क्षीराम्भोपरि — ओ, ग, ङ, छ, ज.
[8] ०शुद्धन्द्रमण्डलं — ङ; ०शुद्धेन्दुमण्डले — च.
[9] ०मण्डला छामृतस्रविट् — छ, ज.
[10] ०स्रवत् —च.
[11] भ्रमद्भ्यस्मभ्यसेद्विद्वान् —ओ; भ्रमत् समभ्यसेत्विवा — ग; भ्रमत्समभ्यसेद्विद्वान् — ङ, च, छ, ज.
[12] भचक्र० — च.
[13] मुहूर्तमेकः — ङ.
[14] तद्वै वाभ्यसतो — ओ; तच्चैवाभ्यसनो — ग; तच्चैवाभ्यासतो — ङ; तदैवाभ्यासकरो नि० — छ; तद् वैवाभ्यासकरो नि० — ज.
[15] योगीस्तल्लयमात्मनः — ओ, ङ; योऽग्निस्तल्लयमात्मनः — ग; योगितल्लज्जयात्मनः — छ; योगिवल्लज्जयात्मनः — ज.
[16] तावत्संजायते — ओ; तावत्संजाते — ङ; नापत्संधायते — ज.
[17] स्वल्पप्रत्युक्तं — ओ.
[18] प्रीत्युक्तं — ग, ङ, छ, ज.
[19] मनः — च.
[20] एतद्विषये रौरवे विद्या० पटलो '९' द्रष्टव्यः।; 'अथात्मनो वधं मन्त्री न कुर्यात्फलवाञ्छया। न च दुःखसमुत्पत्तौ कामतो देहमुत्सृजेत् ॥ यदि निर्वेदमापन्नोऽप्राप्तभोगोऽथवा ततः। ध्यानधारणयोगेन शिवलीनमनास्त्यजेत् ॥' (स्वायम्भुवे ३१.१.२).
[21] विरक्तेन वा — छ.
[22] भवेद्देहं — च.
[23] विरक्तोऽन्त त्यजेद्देहः — ओ; विरक्तोन्त्यजेद्देहाः — ङ.
[24] तस्याप्येषो विधिः — ओ, ग, ङ; तस्याप्येष्टविधिः — ज.
[25] कृद्विवराः सर्प . . स्त्रेण — ओ; कृद्विवराः सर्वमारूष्यास्त्रेण — ङ; हृद्विवरं सर्वं — ग; हृद्विचरात्सर्वं — छ, ज.
[26] पीडितः — च.

[1]छित्वा छित्वा शनैः सर्वं क्रमाद्वै ग्रन्थिसंचयम्[2]।
[3]प्रदीप्तकिरणं ध्यायेद्धृदि सूर्यस्य मण्डलम्[4] ॥४२॥
[5]तन्मध्ये मण्डलं [6]चारु शशाङ्कस्यामितद्युतेः[7]।
सोममण्डलमध्यस्थं ध्यायेद्वह्नेस्तु मण्डलम् ॥४३॥
वह्निमण्डल[8]मध्यस्था [9]शिखा सूर्यायुतप्रभा[10]।
[11]सुसूक्ष्मा पद्म[12]सूत्राभा [13]ऋजुमार्गानुसारिणी[14] ॥४४॥
[15]ध्यातव्या योग[16]मार्गे[17]ऽस्मिन्यस्यां [18]लीनस्य योगिनः।
[19]क्रमतो निर्वि[20]शङ्कस्य [21]बाधो नैवोपजायते ॥४५॥
[22]तालुदेशं [23]विभिद्याशु [24]जिह्वाग्रं परिवर्त्य च।
[25]पश्यंस्तुर्यपदा[26]दूर्ध्वं [27]तेजः परम[28]दुर्जयम् ॥४६॥
[29]यावत्तुर्यपदद्वारि [30]विलग्नामर्गलां शनैः।
[31]अस्त्रेणोद्घाटच [32]विस्रब्धो यतत्पदमनामयम् ॥४७॥
[33]अव्यापारगुणोपेतमनौपम्यमतीन्द्रियम्।
[34]सर्वज्ञममलं शान्तं शिवं यात्युत्तमं पदम् ॥४८॥

---

[1] छित्वा शिवास्त्रेण सर्पाः क्रमाद्वा — ओ; छित्वा शिवास्त्रेण सर्वान्क्रमाद्वा — ग; श्छित्रशिवास्त्रेण सर्वाः क्रमाद्वा ङ; छित्वा शिवेन सूत्रेण सर्वमाग्रन्थि० — छ; छिन्नाभिधेन सूत्रेण सर्वमाग्रन्थिः — ज.
[2] ०संचयात् —ओ, ग, छ, ज; ग्रन्थसंचयात्–ङ.
[3] प्रतप्तकरणं — ज.
[4] ०द्धृदि वै सूर्यमण्डलाम् — ग; सूर्यमण्डलम्–ङ.
[5] न मध्ये — ग.
[6] चारुः — ङ.
[7] ०द्युते — ङ; ०द्विते: — छ, ज.
[8] ०मध्यस्थं — ओ, ङ; ०मध्यस्थ० — छ, ज.
[9] शिखाः सूर्या० — च; शिखसूर्या० — छ, ज.
[10] ०प्रभम् — ओ; ०प्रभाः — च.
[11] ससूक्ष्मा — ओ, ङ; सुसूक्ष्मपद्म ० — च.
[12] ०सूक्ष्माणि — ओ, ङ; ०सूत्राणि — ग, ज; ०सूत्राभि — च.
[13] ऋतुमार्गा० — च.
[14] ०सारिणि — च, छ.
[15] ध्यातव्यो — ओ, ङ.
[16] ०मार्गेसन्यस्यां — ज.
[17] ऽस्मिन्ये स्यां — ङ.
[18] विन्यस्य — छ, ज.
[19] अक्रमतो — ङ.; क्रमशो — छ, ज.
[20] ०शङ्कस्या — छ, ज.
[21] बाधनैवोप० — ओ, ङ.; बाधा नैवोप० —ग; बाधेनैवोप० — छ, ज.
[22] तालुषदेशं — छ, ज.
[23] विभज्यास्तु — ओ, ङ.
[24] जिह्वाग्रपरि० — ङ, छ, ज.
[25] पश्येत्तुर्य० — ग.
[26] ०दूर्ध्वे — छ.
[27] अजपरम० — ग.
[28] ०दुर्जयः — ओ, ङ.
[29] यावत्तुर्य . . . पदा द्वारि — ओ; यावत्तुर्यपदं चादि — ग; यावत्तुर्यपदं चारि — 'ग' पाठान्तरम्; यावात्युद्यय्य पादाद्वारि — ङ; पापातुर्य . . . पदद्वारं — च.
[30] विलग्नामर्शलां —ग; विलग्नामर्गला — ङ; विलग्नामजलां — च; विलग्नामार्गबां–छ, ज.
[31] अस्त्रेणोद्धाप्य — ज.
[32] विश्रब्धो — च; विस्रस्तो, छ, ज.
[33] अव्यापादगुणोपेतामनौ० — ङ; अप्यपारगुणोपेत० — छ, ज.
[34] सम. . . शान्तं — ओ.

मतङ्ग उवाच —

[1]प्रसिद्धमैश्वरं तत्त्वं बुद्धिमत्सर्वगोचरम् ।
प्रक्रीड[2]न्नप्यमोहात्मा [3]स्वतन्त्रः परमेश्वरः[4] ॥४९॥
[5]धाताशेषस्य [6]विश्वस्य [7]योगकृत्पुंप्रधानयोः ।
[8]क्लिष्टपुंवृत्तिविषयादतीतश्चातिदीप्तिमान्[9] ॥५०॥
[10]तस्मादन्यत्परं [11]शान्तमनवस्थानदर्शनात् ।
तस्मादप्यपराण्यत्र[12] तेभ्योऽन्यानि सहस्रधा ॥५१॥
प्रभवन्त्यनिवार्याणि नियमः केन हेतुना ।

परमेश्वर उवाच —

सर्वाधिकार[13]निर्मुक्ता या सा काष्ठा परा मता ॥५२॥
[14]शान्तभावासमा सूक्ष्मा [15]नित्या [16]या सापराङ्मुखा ।
[17]स्वसंवेद्यातिनिर्वाणा[18] ह्येकातिशयवर्जिता[19] ॥५३॥
[20]तस्याः परं [21]कुतस्त्वन्यत्तत्त्वं मुनिवरेश्वर ।
प्रध्व[22]स्तातिशयास्पष्टात्सुसूक्ष्मत्वाच्च कारणात् ॥५४॥
अनन्तत्वाद्विभुत्वाच्च निष्ठातश्च[23] न विद्यते ।

---

[1] प्रसिद्धमीश्वरं – ग, छ, ज; प्रसिद्धमैश्वर्यं – ङ.
[2] ०न्नपि मोहात्मा — ओ; ०न पु मोहात्मा — ङ; ०न्नप्यमोघात्मा — छ, ज.
[3] स्वतन्त्रं — ओ, ग; प्रसन्नः — छ, ज.
[4] परमेश्वरम् — ओ, ग.
[5] ध्याताशेषस्य — ओ, ङ; ध्यातशेषस्य — ग; श्यातशेषस्य — छ, ज.
[6] वीर्यस्य — छ, ज.
[7] यागेर्यत्पुं० — छ; योगयुत्पुं० — ज.
[8] क्लृप्तपुंवृत्ति० — ओ; क्लिष्टां पुंवृत्ति० — ग; क्लिष्टा पुंव्यक्ति० — ङ.
[9] ०दीप्तिवान् — च.
[10] अस्मादन्य० — ओ, ग, छ.
[11] शास्त्रमनवस्थान० — ग; 'शान्तम्' लयतत्त्वम् (मतङ्ग० क्रिया० ८, ३ वृत्तौ).
[12] ०दप्यपरान्यत्र — ओ, ङ; ०दन्यत्परान्यत्र — च; ०दप्यपराण्यस्त्री — छ; दप्यापराण्यत्री — ज.
[13] ०निर्म . . . काष्ठा — ओ; निर्मुक्ता यवा काष्ठा — ङ.
[14] शान्ता भावाश्रया सू० — ओ, ङ; शान्तभावाश्रया सू० — ग; शान्ताभवश्रया सू० — छ, ज.
[15] नित्यायासपराङ्मुखा — छ, ज.
[16] सा परमा मुखा — ओ; या स पराङ्मुखा — ग; सा परमा मुने — ङ.
[17] संप्रत्याति निर्वाणो — ओ; स्वयं वेद्यानिनिर्वाणा — छ, ज.
[18] ०वेद्यादिनिर्वाणा — ग; ०वेद्यादिनिर्वाणो–ङ.
[19] ०वर्जिताः — ओ; ०वर्जितः — ङ; ०वर्तिता — छ; ०वर्तिना — ज.
[20] तस्यापरं — ओ; तस्यां परं — ग.
[21] कृतस्वस्यत्तत्त्वं मुनि० — ओ; कृतस्तंत्यक्तवान्मुनि० — ङ.
[22] ०स्तातिशयात्स्पृष्टा सु० — ओ; ०स्तातिशया स्पष्टा सु० — ग; ०स्ताशयात्स्पष्टात् सु० — ङ; ०स्तादिशयात्स्पष्टात् सु० — छ, ज.
[23] निष्ठातञ्च — ओ, ङ; निष्ठातस्य — च; निष्ठातच्च — छ, ज.

शिवतत्त्वात् परं तत्त्वं [1]न चैवेश्वरगोचरे ॥५५॥
[2]साधिकारात्परं [3]सिद्धं तच्चैवेश्वरगोचरात् ।
[4]क्रीडतो बुद्धितश्चैव [5]साभिलाषाच्च वैभवात् ॥५६॥
[6]कर्तृत्वादपरत्वं स्यान्नेष्टं[7] युक्तिविचारतः ।
[8]मूर्तिमानपि नित्योऽसौ योगयोगीश्वरो यतः ॥५७॥
[9]स्वेच्छाविधायी [10]भगवान् न प्रसृष्टबलः प्रभुः ।
कारणत्वाच्च कर्तृत्वमलुप्तविषयं[11] प्रभोः[12] ॥५८॥
एक [13]एव विधौ कर्ता [14]संस्थितो [15]मूर्तिभिर्विभुः ।
अतिरस्कृतवीर्याभिरमोघाभिरनिन्दितः[16] ॥५९॥
[17]क्रीडत्यक्लिष्टविभवो [18]जगत्यस्मिन्स विश्वराट् ।
[19]ददात्युत्कृष्टतेजाढ्यं [20]पदमत्यन्तनिर्मलम् ॥६०॥

मतङ्ग उवाच —

[21]सर्वेषामेव [22]दातॄणां [23]पददानमभीप्तिसम् ।
सर्वस्वमात्मदानेन [24]सहैवान्यत्परं यतः ॥६१॥

---

[1] न चैश्वरगोचरात् — ओ; न चैवेश्वरगोचरा — ग; न चैश्वरे गोचरात् — ङ; न चैवेश्वरगोचरात् — च, छ; न चैचेश्वरगोचरात् — ज.

[2] स्वाविकारात्परं — ओ; साविकारात्परं — ङ.

[3] सिद्धि तथैवेश्वरगोचरम् — ओ, ङ; सिद्धि न तथेश्वरगोचरम् — ग; तत्त्वं न तथेश्वरगोचरम् — छ, ज.

[4] क्रीडते — च; क्रीडातो — छ, ज.

[5] साभिलाष . . — ओ; साभिलाषा च — च; स्वाभिलाषाच्च — छ, ज.

[6] इदमर्धं 'ओ' मातृकायां न दृश्यते ।

[7] ०दपरत्वादन्नेष्टं — छ; दपरत्वादवरत्वं स्यान्नेष्टं — ज.

[8] . . नतिनित्यो० — ओ; मूर्तिमानतिनित्यो० — ङ.

[9] स्वेच्छाभिधायी — च; स्वेजा विधायी — छ; स्वेच्छाविधायि — ज.

[10] भगवान् प्रसृष्टबलमप्रभुः — ओ; भगवान् न प्रहृष्टबलप्रभु — ग; भगवान् बलमप्रभुः — ङ; भगवान्नष्टभ्रष्टबलः प्रभुः — च; भगवान्न प्रहृष्टबलः प्रभुः — छ; भगवान् प्रहृष्टबलः प्रभुः — ज.

[11] ०मलुप्तः विषयः — छ; ०मलुप्तविधः — ज.

[12] प्रभो — ग.

[13] एकविधः कर्ता — ओ, ङ.

[14] संस्थिती — ओ.

[15] मूर्तिमद्वपुः — ओ; मूर्तिमद्विभु — ग; मूर्तिमार्द्धिभुः — ङ; मूर्तिमान्विभुः — छ; मुक्तिमान्विभुम् — ज.

[16] ०रनिन्दिता — ओ; ०रतन्द्रितः — च.

[17] क्रीडन्त्यक्लिष्ट० — ओ, ङ; क्रीदक्लिष्ट० — छ, ज.

[18] जगत्यस्मिन्विराड . . — ग.

[19] तदात्युत्कृष्टतेजोभ्यां — ओ; ददात्यन्ततेजाढ्य० — ग; ददात्युत्कृष्ट तेजोभ्यां — ङ; ददात्यभीष्टं तेजोढ्यं — च; ददात्युत्कृष्टतेजाख्यं — ज.

[20] ०पटमत्यन्त — ग.

[21] ६१ श्लोकस्य प्रथमद्वितीयतृतीयपादाः 'ओ' मातृकायां लुप्ताः ।

[22] धात्राणां — ग; धर्माणां — ङ.

[23] परं दान० — ङ; पदं दान० — च, छ, ज.

[24] सह वान्यत्परा यत — ओ; स भवान्यत्पटाभवा यत — ग; सह वान्यत्परा यतः — ङ; स भवान्यत्परा यतः — छ, ज.

न विद्यते [1]ततस्तस्य दानमात्मबलात्परम्[2] ।
[3]विशिष्टं [4]बहुभिर्धर्मैस्तत्कथं [5]दातुमर्हति ॥६२॥
[6]यदसाध्यं स्वयत्नेन[7] प्राप्यते[8]ऽतिगरीयसः ।
परेभ्यः शक्यते दातुं लोकेऽस्मिन्न [9]प्रतीयते ॥६३॥

परमेश्वर उवाच —

[10]सांसिद्धिक[11]गुणोपेतवीर्येणातिमता[12] प्रभुः[13] ।
साभिलाषेण दिव्येन [14]निरीशेनाविखण्डितः ॥६४॥
[15]द्विधाधिकारसंपन्न[16]प्रभावेनात्मवर्तिना ।
[17]ददाति [18]विविधां [19]सिद्धिं साधकानां महात्मनाम् ॥६५॥
[20]विरक्ताः स्वाधिकारात्तु [21]येऽनुध्याता मुमुक्षवः[22] ।
प्रागेव ध्वस्तविभवास्तेषां दद्यात्परं[23] पदम्[24] ॥
शेषाणामपि देवेशः[25] प्रददातीप्सितं फलम् ॥६६॥

[26]उद्घातानल[27]विप्रुषोर्मित[28]रलव्याघृष्ट[29]पक्षोद्यमा-
[30]त्तत्द्दिग्गज[31]दुष्टभाव[32]रचित[33]व्यावर्तनाचेतसः[34] ।

---

[1] ततस्तस्या — ओ, ङ.

[2] बलाद्वरम् — ङ.

[3] शिष्टं तद्बहुधर्मैस्तत्कथं — छ; शिष्टं ततु बहुधर्मैस्तत्कथं — ज.

[4] तच्च बहुभिस्तत्कथं — ओ; तच्चवहुभिधर्मैस्तत्कथं — ङ.

[5] दातुमर्हसि — ओ; दानमर्हति — छ, ज.

[6] वदस्वाध्यस्वयत्नेन — ओ; यदासाद्य द्वयं चैव — छ, ज.

[7] स्व . . . न्नैव — ग; स्वयं नैव — च.

[8] न गरीयसम् — ओ, ङ; ०ऽतिगरीयसम् — छ; ऽतिभिरीयसम् — ज.

[9] प्रदीयते — ओ, ङ.

[10] एवं सिद्धिगुणोपेतविध्येणाति० — छ, ज.

[11] ०गुणोपेतं — च.

[12] ०वीर्येणातमतः — ओ; वीर्येणादिमता – ग, च.

[13] प्रभु — ग; प्रभुम् — छ, ज.

[14] निरीशेनापि खण्डिता — ओ, ग; निरेशानापखण्डित — ङ; निरीशेन विखण्डिताः — च; नियेनाविखण्डितः — छ, ज.

[15] द्विधा विकारसंपन्न० — च; विधायिकानि संपन्न० — छ; निधायिकानि संपन्न० — ज.

[16] ०प्रदा वेदात्मवर्तिन — छ, ज.

[17] इदमर्धं 'ओ' मातृकायां न दृश्यते ।; दधाति—ग.

[18] विदितां — छ, ज.

[19] विद्धि — छ.

[20] . . रात्ते — ओ; विरक्ता स्वाधि० — ङ; विरक्तां स्वाधिकारान्तां — च; विरक्तास्यधिकारं तु — छ; विरक्तस्याधिकारं तु — ज.

[21] येऽनुध्यत० — ओ; येऽनुध्यता — ग; येऽनुध्याना — ङ; येन ध्याता — छ; ये तु ध्याता — ज.

[22] मुमुक्षवा — ज.

[23] दद्यात्पदं — च; दण्डात्परं — छ, ज.

[24] परम् — च.

[25] देवेश — ओ, ग, ङ, छ, ज.

[26] उद्घाटानिल० — च; मघातानल० — छ; मत्घातानल० — ज.

[27] ०विप्रषोर्मि — ओ; विप्रेषाषोर्मि० — ङ; ०विप्लुषोर्मि — च; ०विप्रुषोक्ति — छ; विप्रषोक्ति — ज.

[28] तरालप्रघृष्टं — ङ.

[29] ०पक्षोद्यमां — ओ; पक्षीद्यमा — ग, छ, ज; . . क्षो . . मं — ङ. पन्थाद्यमात् — च.

[1]कालाच्चैव जया[2]त्प्रतप्तकिरणप्रोद्दामवेगाद् ध्रुवं[3]
[4]चाशु स्वान्तरकाललब्ध[5]वपुषो [6]व्यज्यत्यभीष्टं पदम् ॥६७॥

[ उक्तार्थोपसंहारो वक्ष्यमाणोपक्रमश्च ]

[7]व्याख्यातो[8] योग[9]पादः [10]खगपति[11]निलयोद्भूतसिद्धिप्रतापः[12]
[13]क्रीडातोयतरङ्गभङ्गकुटिलः[14] कल्लोल[15]दोलायितः ।
नानायुक्तिविचारभेद[16]रचितः सद्वस्तुबोधास्पदो[17]
[18]भर्तुर्वक्त्रशशाङ्क[19]वाक्यरचिता [20]चर्येति ज्योत्स्नायते ॥६८॥

इति श्रीमतङ्ग[21]पारमेश्वरे योगपादे [22]उद्घातपटलः सप्तमः ।

सप्तमः पटलः

योगपादः समाप्तः ॥

---

[30] मत्ता दिग्गज० — ओ; मत्ता . . जं — ग; मत्तदिग्गज — ङ, छ, ज.
[31] ०दत्तभाव — ओ; दुत्तमाभाव . . — ङ.
[32] चरित० — ओ; रचिता — च.
[33] ०व्यावृत्तना० — ओ.
[34] . . चेतस — ग.
[1] कालाश्चैव — ङ.
[2] ०त्प्रतप्तकिरणे — ओ; ०त्प्र . .किरणे—ङ; ०त्प्रतप्तकिरणाः — च; ०त्प्राप्तकिरण — छ, ज.
[3] ०प्रोद्धामवेगो धुव० — ओ; ०प्रोद्दामवेगो ध्रुवं — ग; ०प्रोद्दामवेप्रागोध्रुव० –ङ; ०प्रोद्दामवेदा ध्रुवं — च.
[4] ०माचोत्तरकाल० — ओ; चाशुश्चोत्तरकाल० — ग; ०माशुचोत्तरकाल० — ङ; ०माशु स्वान्तरकाल० — च; ०माशुश्चोत्तरकाल० — छ, ज.
[5] ०पुरुषो — ङ.
[6] व्यत्यञ्जभीष्टं . . — ओ; व्यत्यजभीष्टं — ङ; व्यज्यत्यदुष्टं — च;
[7] मातृकासु प्रथमपादे एकविंशत्यक्षराणि पादान्तरेषु, एकोनविंशत्यक्षराणि च सन्ति ।
[8] विख्यातो — ओ; व्याख्यातोऽतो — ङ.
[9] ०पादा — ज.
[10] खगति० — ओ, ङ; . . गपति० — ग.
[11] ०निलयो भूत० — ङ.
[12] ०सिद्धिः प्रदीपः — ओ; ०सिद्धिप्रताप — ग; ०सिद्धिप्रदाप – ङ; ०सिद्धिः प्रतापः — ज.
[13] क्रीडा तेयतिरङ्ग — ङ; क्रीडतोयतरङ्ग० — छ, ज.
[14] ०पङ्ककुदल० — ओ, ङ; ०भङ्गजटिलं — ग.
[15] ०प्रोल्लालितः — ओ, ङ; ०प्रेरवोकम् —ग; प्रेङ्खोलितः — छ; प्रङ्खोलितः — ज.
[16] ०रचित० — ओ; ०रचितं — ग.
[17] ०बोधास्पदं — ओ, ग, ङ; ०बद्धास्पदो – च; ०भेदास्पदां — छ, ज.
[18] भर्तृवक्तृ० — ओ; भोक्तुर्वक्त्र० — छ, ज.
[19] ०वाच्यरचिता — च, छ, ज.
[20] चार्येति — छ, ज.
[21] 'पारमेश्वरे' इत्यस्यानन्तरं 'च' मातृकायां 'महातन्त्रं' इत्यधिकं दृश्यते ।
[22] उपोद्घातसिद्धिपटलः — च; उद्घातसिद्धिपटलः — छ, ज.

**ह्येकाग्र आसीदिति वाक्येन ब्रह्म वा इदमग्र आसीदित्यादिसर्ववाक्यार्थसिद्धान्तमेव बोधितम् ॥ ७ ॥ परंपराक्रमेणापि सर्वकारणं शक्तेरेवेति हयग्रीवः ॥ ८ ॥**

**इति श्रीशाक्तदर्शने द्वादशाध्यायस्य चतुर्थः पादः ॥**

**द्वादशोध्यायः समाप्तः ॥**

---

**अथ त्रयोदशोध्यायः ॥**

**चतुष्टयवैराग्यसंपन्नो योगाधिकारी ॥१॥ श्रवणमननसंपन्नाष्टाङ्गेन निर्विकल्पम् ॥ २ ॥ रहितः श्रवणादिषु ॥ ३ ॥ वैराग्ययोगी त्रिधा ॥४॥ हठराजमन्त्रयोगीति ॥५॥ हठमार्गादष्टाङ्गपरो हठयोगी ॥ ६ ॥ राजमार्गाद्राजयोगी ॥ ७ ॥ मन्त्रमार्गान्मन्त्रयोगी ॥ ८ ॥ यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसविकल्प-**

---

प्रतिपादकानि । वस्तुतः शक्तिरेव निर्गुणं परं तत्त्वं देवी ह्येकाग्र आसीदिति वाक्येन बोध्यते । निर्गुणेयं शक्तिः साक्षिरूपात्मनि वर्तमाना सगुणा भवति। ततोनन्तरं चिदाभासयुतेश्वरी शक्तिरिति कथ्यते व्यक्तप्रपञ्चकारणं च भवति ।।

इति बादरिमतनिरासो नाम द्विषष्टितमं प्रकरणम् ॥

अथ शक्तिब्रह्मज्ञानसाधनं योगमाह—**चतुष्टयवैराग्यसंपन्न** इति । स्त्रियोन्नपानमैश्वर्यमिति चत्वारि वस्तूनि चतुष्टयशब्देनाभिप्रेतानि । एतद्विषये वीतरागस्यैव योगाधिकार इति भावः । **श्रवणमननेति** । यमानियमासनेत्यादीन्यष्ट योगाङ्गानि प्रसिद्धान्येव । श्रवणमननाभ्यां सहितैरेतैरष्टभिरङ्गैः संपन्नो योगी निर्विकल्पस्य समाधेरधिकारी भवति। अनन्तरं श्रवणादीन्यप्यनपेक्षमाणो वैराग्ययोगी भवति । स च त्रिप्रकारः । हठयोगी राजयोगी मन्त्रयोगीति ॥

इति योगिप्रकारत्रयनिरूपणं नाम त्रिषष्टितमं प्रकरणम् ॥

अथाष्टाङ्गयोगं निरूपयति—**यमनियमेति** । एतान्यष्टाङ्गानि योगशास्त्रे प्रसिद्धानि ( पात. यो. सू. २।२९ ) । एषां स्वरूपमग्रे एव स्फुटीभविष्यति ।

समाधयोऽष्टाङ्गानि योगस्य ॥ ९ ॥ राजयोगस्तमः ॥ १० ॥ सर्वं खल्विदं ब्रह्मेति विषयेभ्य इन्द्रियनिग्रहो यमः ॥ ११ ॥ अन्तःकरणवृत्तिं प्रपञ्चान्निगृह्य ब्रह्मविषयीकरणं नियमः ॥ १२ ॥ सुखेन ब्रह्मचिन्तनप्रदस्थितिरासनम् ॥ १३ ॥ चित्तादिसर्वभावान् ब्रह्मभावनद्वारा निरोधः प्राणायामः ॥ १४ ॥ अहं ब्रह्मेति वृत्तिः पूरकः ॥ १५ ॥ अनात्मप्रपञ्चनिषेधो रेचकः ॥ १६ ॥ अखण्डाकारवृत्त्या निश्चलस्थितिः कुम्भकः ॥ १७ ॥ शब्दादिविषयेष्वप्यात्मदर्शनं प्रत्याहारः ॥ १८ ॥ मनोविषयेषु ब्रह्मदर्शनानुसंधानं धारणा ॥१९॥ अहं ब्रह्म इत्यखण्डाकारवृत्त्यां निश्चलस्थितिर्ध्यानम् ॥ २० ॥ त्रिपुटिराहित्याखण्डाकारवृत्तिः समाधिः ॥ २१ ॥

इति श्रीशाक्तदर्शने त्रयोदशाध्यायस्य प्रथमः पादः ॥

अथ द्वितीयः पादः

विषयेभ्यश्चित्तवृत्तिनिरोधो योगः ॥ १ ॥ चित्तं पञ्च ॥ २ ॥

---

**राजयोगस्तमः** । पाठभ्रंशोऽत्र दृश्यते । तमः इति शब्दस्य कोऽर्थोऽभिप्रेत इति न ज्ञायते । नान्धकारवाचित्वम् । तम इति तमप्प्रत्ययसादृश्येन श्रेष्ठवाचीति भाति । तथा च राजयोगः सर्वश्रेष्ठ इति भावः । तस्य स्वरूपं यमादिभिरङ्गैर्निर्दर्शयति—**सर्वं खल्विदमिति** । सर्वं खल्विदं ब्रह्मेति निष्ठासंपन्नस्य बाह्येन्द्रियनिग्रहो यमः । अत्र सर्वत्र यमनियमादयो योगशास्त्रे व्याख्याता गृह्यन्ते । ( पात. यो. सू. २।३०–३।३ ) तेषु च प्रत्येकमपेक्षिता अन्तःकरणवृत्तयस्तत्र तत्र वर्ण्यन्ते । ताश्च यमनियमादिशब्दानां व्याख्यात्वेन कथ्यन्ते । **त्रिपुटिराहित्यादिति** । त्रिपुटीनिरासस्वरूपं मण्डलब्राह्मणोपनिषदि द्रष्टव्यम् ॥

इति राजयोगनिरूपणं नाम चतुःषष्टितमं प्रकरणम् ॥

अथ सामान्येन योगस्वरूपं निरूपयति—**विषयेभ्य इति** । योगश्चित्तवृत्तिनिरोध इति तु सर्वमान्या सामान्या योगशब्दस्य व्याख्या (पा. यो. सू. १।२) **चित्तं पञ्चेति** । चित्तशब्देनात्र चित्तवृत्तयो लक्ष्यन्ते । ताश्च प्रमाणविपर्यय-

क्षेपमूढयोर्नाधिकारो योगे ॥ ३ ॥ अभ्यासयोगमयो विक्षेपः ॥ ४ ॥ एकाग्रभूमिकामयो भुवनराजः ॥ ५ ॥ गुदमेढ्रान्तरालगो मूलवह्निः ॥ ६ ॥ मूलप्रकृतिमय आधारः ॥ ७ ॥ साभासा शक्तिर्ब्रह्मरन्ध्रे ॥ ८ ॥ आधारे व्यावहारब्रह्म गणपतिः ॥ ९ ॥ राजसस्थाने नाभौ ब्रह्मा ॥ १० ॥ हृदि सत्त्वे विष्णुः ॥ ११ ॥ हृक्चक्रे तामसो रुद्रः ॥ १२ ॥ ब्रह्मरन्ध्रे परा शक्तिः ॥ १३ ॥ मणिपूरे वा विष्णुः ॥ १४ ॥ अनाहते रुद्रः ॥ १५ ॥ विशुद्धयां जीवसाक्षी ॥ १६ ॥ आज्ञायामीशसाक्षी ॥ १७ ॥ ब्रह्मरन्ध्रे परा शक्तिः ॥ १८ ॥ ध्यानसिद्धया समाधिम् ॥ १९ ॥ सविकल्पान्निर्विकल्पम् ॥ २० ॥ तत्सिद्धौ मुक्तः ॥ २१ ॥

इति श्रीशाक्तदर्शने त्रयोदशाध्यायस्य द्वितीयः पादः ॥

---

विकल्पनिद्रास्मृतिरूपाः पञ्च ( पा. यो. सू. १।६ )। **क्षेपमूढयोरिति** । क्षेपशब्देनात्र चित्तस्य क्षिप्तावस्थोच्यते यस्यां चित्तं स्वोपसर्जनरजस्तमःसंसर्गादणिमाद्यैश्वर्यशब्दादिविषयानुरक्तं भवति यथा दैत्यदानवादीनाम् । तच्च यदा आभिभूतरजस्कतमसानुविद्धं भवति तदा मूढावस्थमित्युच्यते । यथा रक्षःपिशाचादीनाम् । तदेव चित्तं यदा प्रक्षीणतमस्करजोमात्रासंसर्गात्सर्वविषयाकारवृत्तिमद्धर्मज्ञानवैराग्यैश्वर्यप्रियं तदा विक्षिप्तावस्थमित्युच्यते । एकाग्रं चित्तं भुवनराज इत्युच्यते । अत्र चित्तस्य चतस्र एवावस्था उच्यन्ते । पातञ्जलयोगसूत्रवृत्तौ नागेशभट्टैः क्षिप्तं मूढं विक्षिप्तमेकाग्रं निरुद्धमिति चित्तस्य पञ्चावस्था उक्ताः ( योगसूत्रवृत्तिः १।२ )॥

इति चित्तावस्थानिरूपणं नाम पञ्चषष्टितमं प्रकरणम् ॥

अधुना देहस्थितषट्चक्रनिरूपणं प्रस्तौति--**गुदमेढ्रान्तरालग** इति । मूलाधारस्वाधिष्ठानमणिपूरानाहतविशुद्धाज्ञानामानि षट् चक्राणि योगशास्त्रे प्रसिद्धानि । तत्र मूलाधारं गुदमेढ्रयोर्मध्ये पृथ्वीतत्त्वकं पीतवर्णं गन्धगुणं वशषसरूपं चतुर्दलं चक्रम् । स्वाधिष्ठानं मेढ्रस्योपरिवर्तमानं जलतत्त्वकं शुभ्रवर्णं रस-

अथ तृतीयः पादः ॥

**नानासिद्धिदो हठयोगः ॥ १ ॥ अहिंसाद्या यमा दश ॥ २ ॥ यज्ञव्यतिरिक्तविषयेषु हिंसावर्जनमहिंसा ॥ ३ ॥ दृष्टश्रुतज्ञानोक्तिः सत्यम् ॥ ४ ॥ पारकीयनिवृत्तिरस्तेयम् ॥ ५ ॥ परस्त्रीवर्जनं ब्रह्मचर्यम् ॥ ६ ॥ भूतानुज्ञा दया ॥७॥ शत्रुमित्रैकस्थितिरार्जवम् ॥८॥ शत्रुपीडायामपि क्षोभनिवृत्तिः क्षमा ॥ ९ ॥ विज्ञाननिष्पत्तिर्धृतिः ॥ १० ॥ त्रिभागोदरभोजनं मिताहारः ॥ ११ ॥ स्वदेहमलमोचनं**

---

गुणं बभमयरलरूपं षड्दलं चक्रम् । तृतीयं मणिपूरं नाभिदेशे स्थितं तेजस्तत्त्वकं रक्तवर्णं रूपगुणं डादिदशवर्णरूपं दशदलम् । चतुर्थमनाहतं हृद्देशे स्थितं वायुतत्त्वकं धूसरवर्णं स्पर्शगुणं कादिद्वादशवर्णरूपं द्वादशदलम् । पञ्चमं विशुद्धं कण्ठदेशे स्थितमाकाशतत्त्वकं शुभ्रवर्णं शब्दगुणं षोडशस्वररूपं षोडशदलम् । षष्ठमाज्ञाचक्रं भ्रुवोर्मध्ये स्थितं मनोवृत्तिरूपं हक्षवर्णात्मकं द्विदलम् । ब्रह्मरन्ध्रं तु सर्वेषामेषां षट्चक्राणामुपरि मूर्ध्नि स्थितम् । तत्र ब्रह्मरन्ध्रे साभासा शक्तिः । मूलाधारे गणपतिर्व्यावहारिकब्रह्मरूपः । नाभिचक्रे मणिपूरे ब्रह्मा । अनाहतचक्रे हृदि विष्णुः । दृक्चक्रे रुद्रस्तामसः । अथवा केषांचिन्मतेन ब्रह्मरन्ध्रे परा शक्तिः । आज्ञायामीशः साक्षी । विशुद्धौ साक्षी जीवः । अनाहते रुद्रः । मणिपूरे च विष्णुः । ध्यानसिद्ध्या सविकल्पः समाधिस्ततो निर्विकल्पः । निर्विकल्पकसमाधिसिद्धिरेव मुक्तिः ॥

इति षट्चक्रनिरूपणं नाम षट्षष्टितमं प्रकरणम् ॥

अथ हठयोगस्वरूपमाह—**नानासिद्धिदो हठयोगः** । नानासिद्धिद इति पदं हठयोगस्य वैशिष्ट्यं प्रतिपादयति । अस्मिन् योगे दश यमा वर्तन्ते ते च अहिंसासत्यास्तेयब्रह्मचर्यदयार्जवक्षमाधृतिमिताहारशौचनामका यज्ञव्यतिरिक्तेत्यादिदशसूत्र्या सलक्षणं व्याख्याताः । पातञ्जलयोगसूत्रे तु अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः ( योगसूत्र २-३० ) इति सूत्रेण पञ्चैव यमा निर्दिष्टाः ॥

इति यमनिरूपणं नाम सप्तषष्टितमं प्रकरणम् ॥

शौचम् ॥ १२ ॥ संतोषाद्या नियमा दश ॥ १३ ॥ यदृच्छालाभप्रीतिः संतोषः ॥१४॥ श्रौतस्मार्तविश्वास आस्तिक्यम् ॥१५॥ सत्पात्रे दीयमानं दानम् ॥ १६ ॥ शक्त्यर्चनमीशपूजनम् ॥ १७ ॥ व्रतैः शरीरशोषणं तपः ॥ १८ ॥ कुत्सितकर्मलज्जा ह्रीः ॥ १९ ॥ वैदिकश्रद्धा मतिः ॥ २० ॥ मन्त्राभ्यासो जपः ॥ २१ ॥ व्रतदिवसेषु नियमस्थितिर्व्रतः ॥ २२ ॥

इति श्रीशाक्तदर्शने त्रयोदशाध्यायस्य तृतीयः पादः ॥

अथ चतुर्थः पादः ॥

पद्मादीन्यासनानि ॥१॥ ऊर्वोरुपरिकृतपादाङ्गुल्योर्हस्ताभ्यां व्युत्क्रमग्रहणं पद्मासनम् ॥ २ ॥ ऋजुकायेन दक्षिणोरुणि वामपादविन्यासो वीरासनम् ॥ ३ ॥ गुल्फौ सीवनीपार्श्वयोः

---

अथ हठयोगगतान् दश नियमानाचष्टे—**संतोषाद्या नियमा दश**ति। ते च संतोषास्तिक्यदानेशपूजनतपोह्रीमतिजपव्रतनामका दश व्याख्यापूर्वकं यदृच्छालाभेति दशसूत्र्या प्रतिपादिताः इति यद्यपि स्पष्टमत्रोक्तं तथापि वस्तुतोत्र नवैव नियमा व्याख्याता उपलभ्यन्ते। जाबालदर्शनोपनिषदि (२।१-१६) दश नियमा व्याख्याताः। तन्मध्ये दृश्यमानः सिद्धान्तश्रवणनामा वेदान्तश्रवणेति व्याख्यातो नियमोत्र न दृश्यते। कदाचिल्लेखकप्रमादाद् गलितो भवेत्। कदाचिंन्नियमा नव इति मूलपाठः स्यात्। योगसूत्रे तु शौचसंतोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः ( योगसूत्र २।३२ ) इति सूत्रेण पञ्चैव नियमाः प्रतिपादिताः। **व्रतदिवसेष्विति**। व्रत इति सौत्रं पुंस्त्वम् ॥

इति नियमनिरूपणं नामाष्टषष्टितमं प्रकरणम् ॥

अधुना आसनानि व्याचष्टे—**पद्मादीन्यासनानीति**। तत्र पद्मासनं व्याचष्टे—**ऊर्वोरुपरीति**। योगसूत्रवृत्तौ पद्मासनं व्याख्यातम्—"अङ्गुष्ठौ संनिबध्नीयाद्धस्ताभ्यां व्युत्क्रमेण तु। ऊर्वोरुपरि विप्रेन्द्र कृत्वा पादतले उभे" इति। तथैव "एकपादमथैकस्मिन्विन्यस्योरौ च संस्थितः। इतरस्मिंस्तथा पादं वीरासनमुदाहृतम्" इति वीरासनं व्याख्यातम्। भद्रासनं व्याचष्टे—**गुल्फाविति**।

क्षिप्त्वा पार्श्वपादयोः पाणिभ्यां ग्रहणं भद्रम् ॥ ४ ॥ सुखधैर्यप्रदं सुखासनम् ॥ ५ ॥ षण्णवत्यङ्गुलात्मको देहः ॥ ६ ॥ वह्निशिखाग्रगो मूलाधारः ॥ ७ ॥ तस्मात्सर्वोत्पत्तिः ॥ ८ ॥ आधारज्ञाता परं पदम् ॥ ९ ॥ तत्रैव कुण्डलिनी शक्तिः ॥ १० ॥ व्यवहारब्रह्मसाक्षी गजाननः ॥ ११ ॥ आधारे नाडीकन्दम् ॥ १२ ॥ नाड्यो द्विसप्ततिसहस्राणि ॥ १३ ॥ चतुर्दश मुख्याः ॥ १४ ॥ सुषुम्ना ब्रह्मनाडी ॥ १५ ॥ वीणादण्डेन ब्रह्मरन्ध्रम् ॥ १६ ॥

---

योगसूत्रवृत्तौ—"गुल्फौ च वृषणस्याधः सीवन्याः पार्श्वयोः क्षिपेत् । पार्श्वपादौ च पाणिभ्यां दृढं बद्ध्वा सुनिश्चलः । भद्रासनं भवेदेतत्सर्वव्याधिविषापहम्" इत्येवं भद्रासनमुपवर्णितम् । योगसूत्रव्यासभाष्ये तु पद्मासनं वीरासनं भद्रासनं स्वस्तिकं दण्डासनं सोपाश्रयं पर्यङ्कं क्रौञ्चनिषदनं हस्तिनिषदनम् उष्ट्रनिषदनं समसंस्थानं स्थिरसुखं यथासुखं चेत्येवमादीन्यासनानि वर्णितानि वाचस्पतिकृतटीकायां च व्याख्यातान्युपलभ्यन्ते ॥

इत्यासननिरूपणं नामैकोनसप्ततितमं प्रकरणम् ॥

अथ देहवर्णनपूर्वकं मूलाधारचक्रं वर्णयति—**षण्णवत्यङ्गुलेति** । स्वाङ्गुलिपरिमाणेन नरस्य षण्णवत्यङ्गुलिपरिमितोन्मानो देहः । तत्र सर्वोत्पत्तिकरं मूलाधारचक्रं मूलवह्निशिखाग्रे गुदमेढ्रान्तराले तिष्ठति । इदमेव कुण्डलिन्याः व्यवहारब्रह्मसाक्षिणो गजाननस्य च स्थानम् । इत एव सर्वा नाड्यो नाडीकन्दात् प्रवर्तन्ते कन्दोर्ध्वे च कुण्डलिन्याः स्थितिः । **नाड्यो द्विसप्ततिसहस्राणीति** । आसां नाडीनां संख्योद्गमस्थानं च भिन्नभिन्नत्वेन वर्णितं तत्रतत्रोपनिषत्सु । तथा च च्छान्दोग्योपनिषदि काठकोपनिषदि च दृश्यते—शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका । तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति (छा. ८।६।६; कठ ६।१६) इति । प्रश्नोपनिषदि चैषैव संख्या दृश्यते 'अत्रैतदेकशतं नाडीनाम्' (प्रश्न ३।६) इति । बृहदारण्यके तु 'हिता नाम नाड्यो द्वासप्ततिसहस्राणि हृदयात्पुरीततमभिप्रतिष्ठन्ते' (बृह. २।१।१९) इति । **सुषुम्ना ब्रह्मनाडीति** । अत्र सुषुम्नाया एव ब्रह्मनाडीत्वेनोल्लेखो दृश्यते ।

कन्दोर्ध्वे कुण्डलिनी ॥ १७ ॥ सुषुम्ना योगसिद्धिदा ॥ १८ ॥

इति श्रीशाक्तदर्शने त्रयोदशाध्यायस्य चतुर्थः पादः ॥

त्रयोदशोऽध्यायः समाप्तः ॥

---

## अथ चतुर्दशोऽध्यायः ॥

ब्रह्मरन्ध्रमुखं स्वमुखेन समावेष्ट्य कन्दपार्श्वेषु निरुध्य संस्थिता कुण्डलिनी ॥ १ ॥ सुषुम्नापार्श्वयोरिडापिङ्गले ॥ २ ॥ पृष्ठपार्श्वयोः कुहूसरस्वती ॥३॥ गान्धारहस्तिजिह्वा समायाः ॥४॥ पूषायशस्विनी पिङ्गलायाः ॥ ५ ॥ कुहूहस्तिजिह्वामध्ये विश्वोदरा ॥ ६ ॥ कुहूयशस्विन्योर्वरुणा ॥ ७ ॥ पूषासरस्वत्योः यशस्विनी ॥८॥ गान्धारसरस्वत्योः शङ्खिनी ॥९॥ वामनासान्तमिडा ॥१०॥

---

नागेशभट्टकृतयोगसूत्रवृत्तौ तु सुषुम्नायाः शाखात्वेन वर्ण्यते ब्रह्मनाडी (योगसूत्रवृत्ति १।३६)। सुषुम्णेत्यपि पाठः क्षुरिकोपनिषदि दृश्यते ॥

इति मूलाधारनाडीकन्दनिरूपणं नामैकसप्ततितमं प्रकरणम् ॥

अधुना चतुर्दशमुख्यनाडीस्तासां स्थानानि विस्तारं च वर्णयति—**ब्रह्मरन्ध्रमुखमिति**। एताश्चतुर्दश नाड्यस्तु—कुण्डलिनी सुषुम्ना इडा पिङ्गला कुहूः सरस्वती गान्धारी हस्तिजिह्वा पूषा यशस्विनी विश्वोदरा वरुणा यशस्विनी शङ्खिनी च। योगचूडामण्युपनिषदि तु किंचिद्भेदेनैतत्पठ्यते। तथा च—"तत्र नाड्यः समुत्पन्नाः सहस्राणां द्विसप्ततिः। तेषु नाडीसहस्रेषु द्विसप्ततिरुदाहृताः ॥ प्रधानाः प्राणवाहिन्यो भूयस्तासु दश स्मृताः। इडा च पिङ्गला चैव सुषुम्ना च तृतीयगा ॥ गान्धारी हस्तिजिह्वा च पूषा चैव यशस्विनी। अलम्बुसा कुहूश्चैव शङ्खिनी दशमी स्मृता ॥ एतन्नाडीमहाचक्रं ज्ञातव्यं योगिभिः सदा। इडा वामे स्थिता भागे दक्षिणे पिङ्गला स्थिता ॥ सुषुम्ना मध्यदेशे तु गान्धारी वामचक्षुषि। दक्षिणे हस्तिजिह्वा च पूषा कर्णे च दक्षिणे। यशस्विनी वामकर्णे चानने चाप्यलंबुसा। कुहूश्च लिङ्गदेशे तु मूलस्थाने तु शङ्खिनी" (योगचूडामणि

दक्षिणान्तं पिङ्गला ॥ ११ ॥ वामपादाङ्गुष्ठान्तं यशस्विनी ॥ १२ ॥ वामाक्ष्यन्तं पूषा ॥ १३ ॥ याम्यकर्णान्तं पयस्विनी ॥ १४ ॥ जिह्वान्तं सरस्वती ॥ १५ ॥ सव्यपादाङ्गुष्ठान्तं हस्तिजिह्वा ॥ १६ ॥ शङ्खिनी सव्यकर्णान्तम् ॥ १७ ॥ सव्यनेत्रान्तं गान्धारी ॥ १८ ॥ विश्वोदरा कन्दस्था ॥ १९ ॥

इति श्रीशाक्तदर्शने चतुर्दशाध्यायस्य प्रथमः पादः ॥

अथ द्वितीयः पादः

नाडीसंचारका वायवः ॥ १ ॥ वायवो दश ॥ २ ॥ पञ्च मुख्याः ॥ ३ ॥ प्राणापानौ प्रवरौ ॥ ४ ॥ पूज्यः प्राणः ॥ ५ ॥

---

१।१५-२० )। अत्र सूत्रेषु वामयाम्यशब्दौ वामपरौ सव्यशब्दस्तु दक्षिणार्थपरः प्रयुज्यमानो दृश्यते । कदाचिदपपाठः स्यात् ॥

इति चतुर्दशनाडीनिरूपणं नामैकसप्ततितमं प्रकरणम् ॥

अधुना नाडीषु वहमानान्वायून्निरूपयति–**नाडीसंचारका वायव** इति । **वायवो दशे**ति । एते दश वायवो वर्णिता योगचूडामण्युपनिषदि—'प्राणापानसमानाख्या व्यानोदानौ च वायवः । नागः कूर्मोथ कृकरो देवदत्तो धनंजयः ॥' इति । तेषां च स्थानानि दर्शितानि—'हृदि प्राणः स्थितो नित्यमपानो गुदमण्डले । समानो नाभिदेशे तु उदानः कण्ठमध्यगः । व्यानः सर्वशरीरे तु प्रधानाः पञ्च वायवः । उद्गारे नाग आख्यातः कूर्म उन्मीलने तथा । कृकरः क्षुत्करो ज्ञेयो देवदत्तो विजृम्भणे । न जहाति मृतं वापि सर्वव्यापी धनंजयः' ( योगचूडामणि १।२२-२५ ) इति । **इडादित्रयाणां त्रिमूर्तय** इति । 'सोमसूर्याग्नयस्त्रिमूर्तयः । तथा च योगचूडामण्युपनिषदि—'इडापिङ्गलासुषुम्नाः प्राणमार्गे च संस्थिताः । सततं प्राणवाहिन्यः सोमसूर्याग्निदेवताः' ( योगचूडामणि १।२१ ) इति ॥

इति नाडीसंचारकवायुनिरूपणं नाम द्विसप्ततितमं प्रकरणम् ॥

इडाद्वित्रयाणां त्रिमूर्तयः ॥ ६ ॥ रेचकपूरककुम्भकात्मकः प्राणायामः ॥ ७ ॥ मूलमन्त्रात्मकः ॥ ८ ॥ हकारस्मरणपूर्वं कर्षणं षोडशमात्रैः पूरकः ॥ ९ ॥ रेफस्य चतुःषष्ट्या तु मात्रया कुम्भकः ॥ १० ॥ ईकारस्य द्वात्रिंशन्मात्रया रेचकः ॥ ११ ॥ क्रमव्युत्क्रमतः ॥ १२ ॥ धारणे मूलमन्त्रजपः ॥ १३ ॥ पूरके वेदसंख्या ॥ १४ ॥ कलाः कुम्भके ॥ १५ ॥ वसु रेचके ॥ १६ ॥ अपानोर्ध्वनयन आनन्दः ॥ १७ ॥ आधाररोधनेन वायुदीप्तो वह्नी रुहति कुण्डलीम् ॥ १८ ॥ सुषुम्नाया वायुर्वह्निनोर्ध्वं गच्छति ॥ १९ ॥ वायुर्जितः ॥ २० ॥ तेन चित्तशुद्धिः ॥ २१ ॥

इति श्रीशाक्तदर्शने चतुर्दशाध्यायस्य द्वितीयः पादः ॥

---

इदानीं प्राणायामस्वरूपं निरूप्यते–**रेचकपूरकेति**। रेचकपूरकेति क्रमो ह्यत्र योगग्रन्थाननुसृत्य कृतः। तथा चोक्तम्–'प्राणायामस्तु विज्ञेयो रेचकपूरककुम्भकैः' इति। तथैव 'रेचकं पूरकं त्यक्त्वा सुखं यद्वायुधारणम्। प्राणायामोयमित्युक्तः सर्वैः केवलकुम्भकः' इति। **मूलमन्त्रात्मक** इति। प्राणायामवेलायां मूलमन्त्रजपः कार्य इत्यर्थः। **हकारस्मरणेति**। तथा चोक्तं नागेशभट्टैर्योगसूत्रवृत्तौ–'तत्र मात्रा निमेषोन्मेषावच्छिन्नः कालः, लघ्वक्षरावच्छिन्नो वा। ...प्रणवोच्चारणावच्छिन्नकाल इत्यन्ये। तत्र त्रयोपि द्वादशमात्रावच्छिन्ना इत्यधमः पक्षः। षोडशमात्रावच्छिन्नः पूरकः। चतुःषष्टिमात्रावच्छिन्नः कुम्भकः। द्वात्रिंशन्मात्रावच्छिन्नो रेचक इति वसिष्ठसंहितायाम्' इति। अत्र तु पूरककुम्भकरेचकवेलायामनुक्रमेण हकाररेफेकाराणां स्मरणं विशेषः तथैव रेचककुम्भकपूरकक्रमेण व्युत्क्रमोप्युक्तः। धारणे इति। रेचकानन्तरं पूरणात्प्राग्यः कालः स धारणशब्देनोच्यते। अयमेव योगसूत्रे चतुर्थशब्देनोच्यते (योगसूत्र २।५१) **वेदसंख्येति**। वेदसंख्या चतुर्लक्षणा। कलाशब्देन षोडशसंख्योच्यते वसुशब्देन चाष्टौ। **अपानोर्ध्वनयन** इति। अपानवायोरूर्ध्वगमनसाधनं कष्टसाध्यमपि महानन्दजनकमिति योगशास्त्रे प्रसिद्धम् ॥

इति प्राणायामनिरूपणं नाम त्रिसप्ततितमं प्रकरणम् ॥

अथ तृतीयः पादः ॥

इन्द्रियाणां बलादाहरणं विषयेषु प्रत्याहारः ॥ १ ॥ आपादतलमस्तकमनिलमापूर्य पादद्वयाधारनाभिहृत्कण्ठतालुललाटभ्रूमध्यमूर्ध्नि निरोधश्च ॥ २ ॥ बाह्यभूतानि क्रमेणाभ्यन्तरबीजानुस्मरणपूर्वं धारणं धारणा ॥ ३ ॥ पञ्चभूतेषु पञ्च देवान् ॥ ४ ॥ मूलवह्निशिखाग्रे मूलप्रकृतिः ॥ ५ ॥ मूले कुण्डलिनी ॥ ६ ॥ कामदायिनी पीठम् ॥७॥ शक्तिः पद्मम् ॥ ८ ॥ वादिसान्तवर्णकम् ॥ ९ ॥ व्यावहारब्रह्मगणपतिशक्तिपुत्रो देवता ॥ १० ॥ स्वाधिष्ठानं योनिपीठम् ॥ ११ ॥ सादिवर्णकं राजसी ॥ १२ ॥ ब्रह्मा देवता

---

अथ प्रत्याहारो निरूप्यते—**इन्द्रियाणामिति** । तत्तद्विषयेषु तेषां तेषामिन्द्रियाणां विषयेभ्यो दूरीकृत्य स्थिरीकरणं प्रत्याहारः । चित्तं हि इन्द्रियाणि प्रवर्तयति । यदि चित्तं स्थिरीक्रियते तर्हि इन्द्रियाणि विषयेभ्यः प्रत्याहृतानि भवन्त्येव । तथा च योगसूत्रे ' स्वविषयासंप्रयोगे चित्तस्य स्वरूपानुकार इवेन्द्रियाणां प्रत्याहारः इति प्रत्याहारलक्षणम् । कथं स प्रत्याहारः संपाद्यते तदाह—**आपादतलमस्तकेति** । प्राणायामबलात्सर्वं शरीरं वायुना ऽऽपूर्य तेषां तेषां शरीरस्थानानां वायुना निरोधः प्रत्याहार इति फलितम् ॥

इति प्रत्याहारनिरूपणं नाम चतुःसप्ततितमं प्रकरणम् ।

अधुना धारणां व्याचष्टे—**बाह्यभूतानीति** । भूतानीत्यस्य स्थाने भूतानामिति पाठः सुगमः । आभ्यन्तरबीजस्मरणपूर्वकं बाह्यभूतेषु चित्तसंस्थापनं धारणेत्युच्यते ॥ तथा च योगसूत्रम्-देशबन्धश्चित्तस्य धारणेति । कथं सा धारणा क्रियते तदाह—**पञ्चभूतेष्विति** । मूलाधारादीनि पञ्च चक्राणि यथाक्रमं पृथिव्यादिपञ्चभूतात्मकानि गणपत्यादिदेवताकानि । **वादिसान्तेति** । वशषसवर्णाः मूलाधारचक्रस्थपद्मस्य चत्वारि दलानि । **स्वाधिष्ठानमिति** । एतच्चक्रस्थपद्मं वादिषड्वर्णमयषड्दलम् । **सादिवर्णकमिति** । अपपाठोयम् ।

॥१३॥ मणिपूरमुड्याणम् ॥१४॥ सात्त्विकी विष्णुर्देवता ॥१५॥ कादिठान्तमनाहतम् ॥ १६ ॥ तामसी रुद्रः ॥ १७ ॥ तालुमूलं जालंधरम् ॥ १८ ॥ स्वरात्मकम् ॥ १९ ॥ महेशः ॥ २० ॥ आज्ञा द्विदलम् ॥ २१ ॥ सदाशिवः ॥ २२ ॥ ब्रह्मरन्ध्रं सहस्रारम् ॥ २३ ॥ देवता परा शक्तिः ॥ २४ ॥

इति श्रीशाक्तदर्शने चतुर्दशाध्यायस्य तृतीयः पादः ॥

अथ चतुर्थः पादः॥

ओंकारमाधारे ॥ १ ॥ हकारं स्वाधिष्ठाने ॥ २ ॥ रेफं

---

वादिवर्णकमिति समीचीनम् । **मणिपूरमुड्याणमिति** । ओड्याणं ओड्डियाणं वा मणिपूरस्य पर्यायः । तथा च योगचूडामण्युपनिषदि–'ओड्याणं कुरुते यस्माद-विश्रान्तं महाखगः । ओड्डियाणं तदेव स्यान्मृत्युमातङ्गकेसरी । उदरात्पश्चिमं ताणमधोनाभेर्निगद्यते । ओड्याणमुदरे बन्धस्तत्र बन्धो विधीयते' इति । अस्मिन्मणिपूरे डादिफान्तदशवर्णात्मकं दशदलमोड्याणं चक्रम् । मणिपूरवर्णसंख्यात्र सूत्रकारैर्न निर्दिष्टा । कदाचित्तन्निर्देशकं सूत्रं भ्रष्टं स्यात् । अनाहते चक्रे कादि-ठान्तद्वादशवर्णात्मकं द्वादशदलं पद्मं वर्तते ॥ **तालुमूलं जालंधरमिति** । वस्तुतो जालंधरमिति बन्धनाम यथोड्डियाणं मणिपूरस्य । तथा च योगचूडा-मण्युपनिषदि–'ततो जालंधरो बन्धः कष्टदुःखौघनाशनः । जालन्धरे कृते बन्धे कण्ठसंकोचलक्षणे । न पीयूषं पतत्यग्नौ न च वायुः प्रधावति' (योगचूडा-मणि १।५१) इति । जालंधरशब्देनात्र षोडशदलं विशुद्धिचक्रं षोडशस्वरात्मकं महेशदेवताकं निर्दिश्यते । **आज्ञा द्विदलमिति** । हक्षेतिवर्णद्वयात्मकं सदाशिव-देवताकम् । **ब्रह्मरन्ध्रं सहस्रारमिति** । षट्चक्रोपरिस्थितं ब्रह्मरन्ध्रं सहस्रारम् । अस्य शक्तिरेव देवता । विस्तरस्तु चक्राणां पद्मानां बन्धानां च योगचूडामण्युप-निषदोवगन्तव्यः । प्राक् षट्षष्टितमप्रकरणनिरूपणं चावलोकनीयम् ॥

इति धारणानिरूपणं नाम पञ्चसप्ततितमं प्रकरणम् ॥

अथ ब्रह्मरन्ध्राधःस्थितषट्चक्रेषु बीजमन्त्रस्य ध्यानं निरूपयति–**ओंकार-**

मणिपूरे ॥ ३ ॥ ईकारमनाहते ॥ ४ ॥ बिन्दुं विशुद्ध्याम् ॥ ५ ॥ ध्वनिमाज्ञायाम् ॥ ६ ॥ सतारं मायां ब्रह्मरन्ध्रे ॥ ७ ॥ कुण्डलोर्ध्वनयनाधःस्थापनात्मकं सकृद् ध्यानम् ॥ ८ ॥ परजीवैकतां प्रति संविदुत्पत्तिः समाधिः ॥ ९ ॥

इति श्रीशाक्तदर्शने चतुर्दशाध्यायस्य चतुर्थः पादः ॥

चतुर्दशोध्यायः समाप्तः ॥

---

## अथ पञ्चदशोध्यायः ॥

शान्तिमूलप्रकृतिमय आधारः ॥ १ ॥ नाभिचक्रं राजसम् ॥ २ ॥ हृच्चक्रं सत्त्वम् ॥ ३ ॥ दृक्चक्रं तामसम् ॥ ४ ॥ सत्त्वोद्रिक्तगुणमयं ब्रह्मरन्ध्रम् ॥ ५ ॥ गणपतिराधारस्य ॥ ६ ॥ नाभेर्ब्रह्मा ॥ ७ ॥ हृदो विष्णुः ॥ ८ ॥ दृशो रुद्रः ॥ ९ ॥ शक्ती रन्ध्रस्य ॥ १० ॥ आधारे प्रणवः ॥ ११ ॥ नाभौ हकारः ॥ १२ ॥ हृदि रेफः ॥ १३ ॥ दृशि ईकारः ॥ १४ ॥ ह्रींकारो रन्ध्रे ॥ १५ ॥ त्रिसाहस्रसंख्यान्तं वृत्तिराधारे ॥ १६ ॥ सहस्रं नाभौ ॥ १७ ॥ हृदि दृशि च ॥ १८ ॥

---

**माधारे** इति । ओंकाराक्षरस्य संपूर्णस्य मूलाधारे ध्यानं कुर्यात् । तत्स्थस्य च हकारस्य स्वाधिष्ठाने इति क्रमेण विशुद्धिचक्रे मकाररूपबिन्दुध्यानानन्तरमनुरणनात्मकध्वनेराज्ञाचक्रे ध्यानं कुर्यात् । ततोपि परं मायाध्यानं ब्रह्मरन्ध्रे कुर्यात् । तत्प्रभावतश्च कुण्डलिन्या ऊर्ध्वाधोनयनं कर्तुं ध्यानी प्रभवति समाधावधिकारी च भवति समाधिना सर्वश्रेष्ठं जीवैक्यं च साक्षात्करोति ॥

इति ध्याननिरूपणं नाम षट्सप्ततितमं प्रकरणम् ॥

अधुना षण्णां चक्राणां गुणान्देवता मन्त्रवर्णाक्षराणि जपसंख्यां निदर्श्य ध्यानं निरूपयति—**शान्तिमूलेति** । मूलप्रकृतिमयं गणपतिदेवताकं प्रणवस्वरूपं मूलाधारचक्रम् । तथैव नाभिचक्रं राजसं ब्रह्मदेवताकं हकाररूपम् । अत्र प्रकरणे स्वाधिष्ठानविशुद्धचक्रे न निदर्श्येते । तद्व्यतिरिक्तान्याधारनाभिहृद्दृक्चक्रा-

षट्साहस्रं रन्ध्रे ॥ १९ ॥ वृत्तिरेषा मन्त्रयोगः ॥ २० ॥ एष एकः ॥ २१ ॥ ध्यानमेतत् ॥ २२ ॥ ऐक्यभावनं समाधिः ॥ २३ ॥ यमः सामान्यधर्मः ॥ २४ ॥ नियमो वर्णधर्मः ॥ २५ ॥ यथासुखमासनम् ॥ २६ ॥ मूलेन प्राणायामः ॥ २७ ॥ प्रत्याहारो मन्त्रसन्ध्या ॥ २८ ॥ धारणमर्चनम् ॥ २९ ॥ यन्त्रोत्तमबिम्बेषु ॥ ३० ॥ हृदि च ॥ ३१ ॥ ध्यानं जपेन ॥ ३२ ॥ ऐक्यानुसंधानं समाधिः ॥ ३३ ॥ आभ्यन्तरपरो राजयोगी ॥ ३४ ॥ हठाद्याभ्यन्तरपरो हठयोगी ॥ ३५ ॥ बाह्याभ्यन्तरपरो मन्त्रयोगी ॥ ३६ ॥

इति श्रीशाक्तदर्शने पञ्चदशाध्यायस्य प्रथमः पादः ॥

---

ण्यन्ते च ब्रह्मरन्ध्रं वर्ण्यते । एषु चक्रेषु तत्स्वरूपविषये प्रत्ययैकतानता ध्यानमिति भावः ॥

इति मन्त्रयोगनिरूपणं नाम सप्तसप्ततितमं प्रकरणम् ॥

अथ योगित्रयं व्याचष्टे तदङ्गतया च यमनियमप्रयोजनमाह— **यमः सामान्यधर्म इति** । अहिंसादयो यमाः मनुष्यमात्रेण सर्वेण पालनीयाः । नियमाः प्रतिवर्णं किंचिद्भिन्नाः स्ववर्णाचारानुरूपं पालनीयाः । प्राणायामार्थं स्थैर्यसंपादकमासनं सर्वेषामावश्यकम् । **मूलेन प्राणायाम** इति । मूलमन्त्रं मनसि कृत्वा प्राणायामः कार्य इत्यर्थः । इन्द्रियनिग्रहरूपः प्रत्याहारो मन्त्रसन्ध्यारूपो मन्तव्यः । तथैव धारणमर्चनरूपं मन्वीत । तदर्चनरूपं चित्तधारणं यन्त्रेषु उत्तमबिम्बेषु च कार्यम् । ध्यानं जपेन कुर्यात् । सर्वस्यास्य परिणामः शक्त्यैक्यानुसंधानं, स एव समाधिः । एवं समन्त्रं योगाचरणं कुर्वन्नाभ्यन्तरा मानसीः सर्वाः क्रियाः प्राधान्येन कुर्वन् राजयोगीति कथ्यते । हठेन सर्वमेतच्छरीरेन्द्रियैः संपादयन् हठयोगीति कथ्यते । बाह्या आभ्यन्तराश्च द्वितया अपि योगक्रियाः कुर्वन् मन्त्रयोगीति कथ्यते ॥

इति मन्त्रपूर्वकाष्टाङ्गयोगनिरूपणं नाम अष्टसप्ततितमं प्रकरणम् ॥

# राजयोगसारसूत्रम्

**प्रथमः खण्डः**

प्राणो गतिशक्तिमान् वायुः ।।१।।

एकत्र स्थित एव चलति तरङ्गैः ।।२।।

उच्छ्वासनिःश्वासौ निभालयन् गतिशक्तिद्वारोपासीत वायुम् ।।३।।

ततस्तेजःशक्तिरुद्रिक्ता स्यात् ।।४।।

प्राणस्तेजःशक्तिमानिन्द्रः ।।५।।

तेजःशक्तिरिन्द्राणी ।।६।।

नाडीष्वसाधारणमूष्मानुभवं निभालयन्निन्द्राणीद्वारोपासीतेन्द्रम् ।।७।।

ततः स्वरशक्तिरुद्रिक्ता स्यात् ।।८।।

प्राणः स्वरशक्तिमान् रुद्रः ।।९।।

स्वरशक्तिर्गौरी ।।१०।।

सूक्ष्मान्तरस्वरं निभालयन् गौरीद्वारोपासीत रुद्रम् ।।११।।

सूक्ष्मान्तरस्वर एव प्रणव उच्यते वेदान्तेषु ।।१२।।

स बहिश्च व्यापकः ।।१३।।

रुद्रोपासनेन क्षेत्रज्ञस्य चितिशक्तौ प्रतिष्ठां विन्देत् पाके समाप्ते ।।१४।।

स उत्तमः पुरुषार्थः ।।१५।।

तस्यां स्थितौ नित्यमप्रयत्नं तपः ।।१६।।

तपसः पाकाद्भवन्ति पूर्वदृढसङ्कल्पानुरूपाः सिद्धयः ।।१७।।

अवतारपुरुषाणां कार्यानुरूपाः ।।१८।।

नित्यतपसः सिद्धयो न बन्धाय प्रमादासम्भवात् ।।१९।।

आद्यासु तिसृषु तपोभूमिषु ता इच्छतो देवतानुग्रहश्चेत् ।।२०।।

बन्धाय पुनरतपतः प्रमादसम्भवात् ।।२१।।

## द्वितीयः खण्डः

व्यापकपरमशक्तिप ानां भूतानां सूक्ष्मो रससारः प्राणः ।।१।।

तस्य हृदयमायतनम् ॥२॥

तस्यैव चित्ताख्याऽन्तःकरणचतुष्टयवादिनां मतेन ॥३॥

तदुपाधिरात्मा जीवः ॥४॥

चित्तिरपां दमे विश्वायुरिति निगमोऽत्र भवति ॥५॥

चितिशक्तौ निष्ठयाऽन्तर्याम्यनुभूयेत सा ह्यन्तर्यामिणः प्राणोपाधेः ॥६॥

गुणशक्तिकर्मद्वारैव हि वस्तूनामनुभूतिः ॥७॥

प्राणश्चानुभूयते संश्लेषात् ॥८॥

अखण्डप्रकाशवित्तिरन्तर्याम्यनुभूतिः ॥९॥

अखण्डरसवित्तिः प्राणानुभूतिः ॥१०॥

तदुभयमविभाज्यं लिङ्गं निष्ठायाः ॥११॥

## तृतीयः खण्डः

प्राणस्य प्राणापानव्यानोदानसमानाः पञ्चक्रियाविभूतयः ॥१॥

उच्छ्वासनिःश्वासक्रियावती विभूतिः स्वशब्देनैव व्यवह्रियते ॥२॥

विसर्जनक्रियावत्यपानः ।।३।।

चलनक्रियावती व्यानः ।।४।।

भाषणक्रियावत्युदानः ।।५।।

पचनक्रियावती समानः ।।६।।

मूलप्राणस्य शक्तिविशेषा एवैते न खण्डाः ।।७।।

मूलप्राणस्य श्रेष्ठस्य प्रथमाविभूतिरुपासनेषु मुख्या ।।८।।

## चतुर्थः खण्डः

प्राणस्य क्रियाशक्तिं प्रत्युद्गच्छेत्तदेकं तपो यथोक्तम् ।।१।।

उदानस्यान्यत् ।।२।।

व्यानस्येतरत् ।।३।।

भाषणक्रियायाः सकलक्रियाणां चोपासनाभ्यां ते नातिरिच्येते ।।४।।

क्रियोपासनं च कुर्वतः क्रियायामेव दृष्टिः ।।५।।

**पञ्चमः खण्डः**

मूलाधारादाशिर एका सूक्ष्मा नाडी ।।१।।

सा सुषुम्ना ।।२।।

शिरस आहृदयं सैव पुनर्लम्बते ।।३।।

साऽमृता ।।४।।

एकस्या एव सुषुम्नायाः पश्चात्पुरश्च द्वौ मार्गाविति वा ।।५।।

सुषुम्नायाः सव्यापसव्यगे नासापुटान्तव्यापिन्याविडापिङ्गले।।६।।

तयोः सव्यापव्यगे नेत्रान्तव्यापिन्यौ गान्धारीहस्तिजिह्वे ।।७।।

तयोः सव्यापसव्यगे श्रोत्रान्तव्यापिन्यौ पूषाऽलम्बुसे ।।८।।

षडपि शिरोव्याप्य तत एव लम्बन्ते स्वावसानस्थानपर्यन्तम् ।।९।।

ता एताः सप्तनाड्यः सप्तजिह्वा आधारवेदिगस्य तेजसः ।।१०।।

सप्तार्चिषः ।।११।।

सप्त हस्ताः ।।१२।।

नाभिं नाडीनां जन्मस्थानमेके ।।१३।।

देहमध्यकन्दस्य तावत्पर्यन्तव्याप्तेर्नाडीनां संश्लिष्टत्वमत ऊर्ध्वं विभाग इति सोक्तिः ।।१४।।

देहमध्यकन्दस्य मूलस्थं पर्वमूलाधारः ।।१५।।

मध्यस्थं स्वाधिष्ठानम् ।।१६।।

अग्रस्थं मणिपूरम् ।।१७।।

नाडीतन्तुजालवंशस्य कन्दादुपरि चतुर्थं पर्वमनाहतम् ।।१८।।

पञ्चमं विशुद्धं कण्ठे ।।१९।।

षष्ठमाज्ञा शिरः कुहरे ।।२०।।

अग्रं सहस्रारम् ।।२१।।

तद्विना षट्कमाधारचक्राणाम् ।।२२।।

अत्र वंशे सुषुम्नया प्रवहन्ती मूलाधारस्थतेजसः शक्तिः कुण्डलिनी ।।२३।।

तस्या ऊर्ध्वमुख्या आभिमुख्येनाधश्चिन्तनं ध्यानम् ।।२४।।

अत्र निमीलितनेत्रो गगनाच्छीर्षं प्रविशन्तीं शक्तिमादितो भावयेत् ।।२५।।

ततस्तां नाडीचक्रेऽवरोहणक्रमेणामूलाधारम् ।।२६।।

प्रथमं भावनम् ।।२७।।

ततोऽनुभवति ।।२८।।

तदा तेजसि प्रतिष्ठां विन्देत् ।।२९।।

अनन्तरं स्वरचितिनिष्ठा यथापूर्वम् ।।३०।।

## षष्ठः खण्डः

अमृतया प्रवहन्ती धीर्ज्ञानशक्तिः ।।१।।

तां शिरस्त आज्ञाचक्रमवतारयेत् ।।२।।

ततो विशुद्धम् ।।३।।

ततो हृदयस्य दक्षिणतः पुरोभागस्थं दहरम् ।।४।।

तत्र निष्ठा चितिनिष्ठातो नातिरिच्यते ।।५।।

सोऽयं तपसोऽन्यः प्रकारः ।।६।।

दृष्टिं विषयेभ्यः समाहृत्य दृग्दृश्ययोरन्तराले स्थापयेत् ।।७।।

अनन्तरं केवले द्रष्टरि प्रतिष्ठामभ्यसेत् ।।८।।

कथं पश्यामीति तत्र प्रथमो विचारः ।।९।।

कः पश्यतीति द्वितीयः ।।१०।।

एवमहं पश्यामीति निष्ठा ।।११।।

अज्ञानिनो दर्शने विषयस्य प्राधान्यम् ।।१२।।

द्रष्टा दर्शनं चाध्याह्रियेते तत्र प्रमितेर्वाक्यत्वे ।।१३।।

योगिनो दर्शने द्रष्टुः प्राधान्यम् ।।१४।।

विषयो दर्शनं चाध्याह्रियेते तत्र प्रमितेर्वाक्यत्वे ।।१५।।

दृष्टौ वा प्रतितिष्ठेत् ।।१६।।

तदा दर्शने स्वस्य प्राधान्यम् ।।१७।।

विषयो द्रष्टा चाध्याह्रियेते तत्र प्रमितेर्वाक्यत्वे ।।१८।।

द्रष्टरि दृष्टौ वा प्रतिष्ठितः कण्ठायावतरेत् ।।१९।।

अथ हृदयायेत्यपरः प्रकारस्तपसः ।।२०।।

तत्र क्षेत्रज्ञे तच्चितिशक्तौ वा प्रतिष्ठां विन्देत् ।। २१।।

तन्माहाभाग्यं प्राग्वत् ।। २२।।

**सप्तमः खण्डः**

केवलो विचारोऽन्यः पन्थाः ।।१।।

अहंस्फूर्त्यन्वेषणविधया ।। २।।

अहंस्फूर्तौ प्रत्यग्गत्याऽवतरणेन वा ।। ३।।

विचारयन्ननारतं तज्जेनोष्मणा हृदयस्य नाडीबन्धं शिथिलयेत् ।। ४।।

तत्त्वज्ञानेनाभिमानबन्धम् ।।५।।

अत्र च निष्ठा माहाभाग्ये प्राग्वन्निष्ठामाहाभाग्ये प्राग्वत् ।। ६।।

।। इति श्रीभगवन्महर्षिरमणान्तेवासिनो वासिष्ठस्य नरसिंहसूनो-
र्गणपतेः कृतिः राजयोगसारसूत्रं समाप्तम् ।।

नमो आदिनाथाय ॥

ईश्वर उवाच ॥

चन्द्रसूर्यस्तथा वह्नि शरीरे दश नाडिकाः ।

पञ्चस्थावायव पञ्च मनोबिन्दुस्तथैव च ॥१ ॥

षट्चक्रं मेरुदण्डञ्च ओड्डियानं तथैव च ।

जालंधरं कामरूपं पूर्णगिरि श्रीहस्तकः ॥२ ॥

प्रकीर्तिः क्षेत्रपुरुषो ब्रह्माविष्णुशिवस्तथा ।

नदानद्यः समुद्राश्च भुवनानि चतुर्दशः ॥३ ॥

ब्रह्माण्डे ये गुणाः संति ते तिष्ठंति कलेवरे ।

तेषां संक्षेपतः साध्यं प्रवदन्ति शुविस्मृते ॥४ ॥

२अ)

मेरुशृङ्गे स्थिते चन्द्रो द्विरष्टा कलया युतः ।
अहर्निशं तुषाराभं शुधां वर्षत्यधो मुखं ॥५ ॥

शुधांशुर्द्धि विषश्रावी पीयूष बिंदुमेव च ।
तरलस्तु शुधाज्ञेया घनोबिंदुरुदाहृतः ॥६ ॥

एकबिंदु सदा ब्रह्मा उत्पत्तिस्थितितारकः ।
बिंदुवर्गस्य साध्येन देहसिद्धिः प्रजायते ॥७ ॥

जवाकुसुमसंकाशोवस्थिदेशे सुसोभने ।
मध्यमामूलसंव्याप्य सूर्यन् तिष्ठति देहिनां ॥८ ॥

२ब्)

कलाद्वादशभिः सूर्यो वह्निर्दशकला युतः ।
सर्वेषां देहिनां तिष्थेत् अन्नादिः पावकः सदा ॥९ ॥

तुषारं वर्षते चन्द्रो रविः सुध्यति सर्वदा।
तत्संयोगे स्थितः प्राणः वियोगात्मरणं भवेत्॥१० ॥

ऊर्द्ध्वं यातिरवे रस्मिरधचंद्रामृतं सदा।
अभ्यासात् कामरूपेन योगं योग विदोविदुः॥११ ॥

अयं योगसमुद्रं च वसन्तः परिकीर्तितः।
अरोगी च भवे देवी प्राणापानैक योगतः॥१२ ॥

प्राणश्चन्द्र मयोज्ञायोपानः सूर्यमयं तथा।

३अ)

अनयोः संगमं सध्यं रजोबीजस्य साधनं॥१३ ॥

ओड्डीयानं द्दढं बन्धं कृत्वा रेचकपूरकौ।
समानापानयोर्योगः प्राणापानेकयोगतः॥१४ ॥

कामरूपे त्रियोंगः प्राणापाने समानकौ।
नाभिशक्तिः द्वयोर्मध्ये ओड्डियानं तदुच्यते॥१५ ॥

वह्नौ जालंधरो ज्ञेयः कामरूपश्च गर्भके ।

पूर्णगिरिः हृदिर्मध्ये श्रीहद्वं तालुकोपरि ॥१६ ॥

आकुंच्य गुडमूलन्तु चिबुकं हृदयोपरि ।

३ब्)

नवद्वाराणि संयम्य कुक्षिमापूर्य वायुना ॥१८ ॥

चारणं सर्वे नाडीनां देहवह्निः प्रदीपनं ।

वंह्नेः प्रदीपनान्नित्यं अन्नादेः पाचनं भवेत् ॥१९ ॥

अन्नादेः पाचनान्नित्यं रसवृद्धिः प्रजायते ।

स्वभावाद्वीज एवासौ बिंदुविभर्तिनान्यधा ॥१९ ॥

अधिकं सर्वगात्रेषु भवन्ति चाष्टधावतः ।

वायुरेव परो देहे मूलसारः प्रकीर्तितः ॥२० ॥

वायोः प्रसाधना देव आयुर्वृद्धि दिने दिने ।

हृदिः प्राणो गुडपानः समानो नाभिसंस्थितः ॥२१॥

४अ)

उदानः कण्ठदेशे च व्यानः सर्व शरीरगः।
स्थानवायुञ्च संक्षिप्य वस्थिदेशे पुनः पुनः ॥२२॥

उद्घाते ये चक्र नालं सुषुम्णाया सुगोपितं।
ब्रह्मग्रन्थिं ततोतित्वा वायुर्विशति मध्यमां ॥२३॥

स्वाधि चक्र लिंगमूले ततो वायुर्विशत्यपि।
मणिपूरं नाभिदेशे ततो विध्यात्सदा गतिः ॥२४॥

हृदिमध्ये विष्णुग्रंथिं भित्वा कण्ठगुणाकरं।

४ब)

तालुमूलं सुधाचक्रे भित्वारुद्रालयं व्रजेत् ॥२५॥

चक्रं चक्र यदाभित्वा वायुर्याति पुरे पुरे।
वायुना सहयोगेण बिन्दु तत्रैव गच्छति ॥२६॥

यावनस्थां व्रजे वायु बिन्दुस्थानेन गच्छति ।

शंखिनी नालसंप्राप्य चास्थि शून्यं विभर्तिसः ॥२७ ॥

ततः क्षीरमयो देहः पिण्डसिद्धो भवेद्ध्रुवं ।

एवं मभ्यासयोगेण नरो ब्रह्मनि यः स्थितः ॥२८ ॥

तस्य पापं क्षयं याति जन्मकोटि शतार्जितं ।

मासे मासेश्वमेधश्च यज्ञस्य च फलं भवेत् ॥२९ ॥

५अ)

वर्षणराज सूर्यस्य फलं तस्य न संशयः ।

दह्यते सर्वपापानि कोटिजन्मार्जितानि च ॥३० ॥

ईहैवाभ्यास योगेण तृणानि वह्निना जपा ।

तपांसि योनि कथ्यंते यज्ञदानव्रतानि च ॥३१ ॥

कोटि कोटि गुणैस्तानि भवत्यभ्यास योगतः ।

नन्दन्ति पितरः सर्वे पुत्रो योगानुसारिणी ॥३२ ॥

भुञ्जस्ते च सुखं सर्वं सर्वदुःखविवर्जिताम्।

देव्युवाच॥

उपायं ध्यान योगस्य ब्रुहि मे शशि सेषर।

५ब्)

यल्लब्ध्वा योगिनः सर्वे मुच्यते जन्म बंधनात्॥३३॥

ईश्वरोवाच॥

नाभिमध्ये स्थितो ब्रह्मा हृदि मध्ये तु माधवः।
शिरसि शङ्करो ज्ञेया त्रिस्थानं मुक्तिदं स्मृतं॥३४॥

नाभि मध्ये परं ज्योतिः प्रदीपं तद्दशाङ्गुलं।
ज्योतिपुञ्ज च चक्रवत् हृदिमध्ये च तिष्ठति॥३५॥

शुद्धस्फटिकसंकाशं चंद्रकोटि समप्रभं।

ध्यायेत् मूर्ध्नि शिवज्योति घृतपिण्डसिवोद्धृतं ॥३६ ॥

६अ)

अचञ्चलं मनं कृत्वा त्रयाणां ज्योतिषां शनैः ।
मेलकं वायुबिंदूभ्यां कर्तव्यं मनसा बुधैः ॥३७ ॥

कामरूपे चक्रनाले मध्यमां मध्यगोचरे ।
तथाचक्रेषु सर्वेषु प्रत्यं ज्योतिः प्रदृश्यते ॥३८ ॥

यस्मिन्नभ्यासतो वायुर्मनो बिंदुस्तथैव च ।
ज्योतिषि त्रीणि तत्रैव तेषु चात्मा प्रतिष्ठति ॥३९ ॥

नाभिमध्येषु सर्वेषु ज्योतिषां दीप्यते यथा ।
तत्रैव चास्थि शून्ये तु कालचारः पलायते ॥४० ॥

६ब)

एवं ध्यानं सदा बुद्ध्या कुर्यात् ज्योतिर्मयं बुद्धः ।
ज्योटिषां वायु बिंदुर्नामेलकं मुक्तिदायकं ॥४१ ॥

एवं ध्यानस्थिरं यस्य न वाक्यं लभ्यते मनः।
वायुर्बिन्दु मनश्चात्मा तस्य सर्वस्थिरं भवेत् ॥४२॥

चले बिन्दौ चले चित्ते चले वायौ च सर्वदा।
चलते चलमानोसौ मृत्युमभ्येति शाश्वत ॥४३॥

७अ)

तस्मादेवञ्चला भूत्वा * * * * * * * *?।
* * * * * * * * *? यं ब्रह्म समो
भवेत् ॥४४॥

कथितं ध्यान योगस्य समुद्देशे च विस्मृते।
ध्यानातीतं परं ब्रह्म सर्वशास्त्रेषु गोपितं ॥४५॥

ब्रह्माविष्णुशिवादीनां एकोसौ जनकाविभुः।
आधारो भुवनानाञ्च देहस्था देहवर्जिताः ॥४६॥

७ब्)

एकोव्यापीशसं * *? निर्गुणः प्रकृते परः।

जन्म वृद्ध्यादि रहित आत्मासर्वगतान्ययः ॥४७ ॥

निरालंवे मनः कृत्वा कुर्याच्छुन्ये मनस्थिरं ।
अनित्य खण्डयेत् सर्वं यत्किञ्चित् मनसार्जितं ॥४८ ॥

खण्डयेत् सततं देवि विनष्टं पञ्चभौतिकं ।
करणानि मनश्चैव यदा ब्रह्मणि नीयते ॥४९ ॥

तदा ब्रह्मपदं प्राप्य योगी मुक्ति पदं व्रजेत् ।
अनिमादि गुणास्तस्य * * * * * * * *? ॥५० ॥

८अ)

देव्युवाच ॥

इन्द्रियाना * * * * * * * * * * *

*? ।

* * * * * * *? स्य शिष्यैश्चक्षुद्रबुद्धिभिः

॥५१ ॥

ईश्वरोवाच ॥

ब्रह्माण्ड * * *? ब्रह्म परं ज्योतिर्मयं शुभं ।
तदूर्द्धञ्च परं विष्णोः हृदये च गुणान्वितं ॥५२ ॥

तदूर्द्ध्वञ्चैव रुद्राणां दृश्यते नात्रसंशयः ।
तदूर्द्धञ्च महाशून्यं यत्र ब्रह्म यथाश्रमं ॥५३ ॥

तत्रैव च मनो नीत्वा महाशून्यमयोपरि ।
कालस्य रक्षयं ज्ञात्वा स्वयं ब्रह्म समो भवेत् ॥५४ ॥

८ब्)

अत एव शिवादीनां निद्राव्याजेन पार्वती ।
प्रत्यद्दे ज्ञानचिन्तायां न किञ्चिदन्यथा भवेत् ॥५५ ॥

एवं शक्रादयो देवाः सिद्धाश्च वरवर्णिन ।
सिद्धाः सिद्धं प्रकुर्वन्ति ते यान्ति परमा गतिः ॥५६ ॥

मानुषाश्चास्मि काये च गन्धर्वोरग किन्नरा ।

एवं योगसमासाध्य गच्छन्तिं परमां गति ॥५७ ॥

९अ)

हिंसार्थे च व्रजेत् कालं स्तेन नास्तिक वादिना ।
असत्यर्नोचता क्रूराः द्विजवेदविनिंदकाः ॥५८ ॥

असेवागुरुपादे च सर्वधर्म विवर्जिता ।
आलसौ पीडिता ये च कामक्रोधप्रपीडिता ॥५९ ॥

तथाभ्यास विहीनाश्च योगतः परिहीयते ।
तेन मुक्ति पदं याति धर्मे नानेन पार्वतै ॥६० ॥

९ब्)

* * * * * * * * * * * *
*? सोभने ।
केचित् ध्यानं युगंसंति विज्ञानञ्च परः परं ॥६१ ॥

धर्मकर्मादिके ये च विज्ञानमुपदेशतः ।
साध्यः चानु क्रमं कृत्वा ते यान्ति परमां गतिं ॥६२ ॥

यश्चेनं शृणुयान् नित्यं कथा सर्व यथा स्मृतां ।
सर्वपापक्षयं तस्य ब्रह्मणसदनं भजेत् ॥६३ ॥

स्वकृच्छ्रवणमात्रेण ब्रह्महत्यां व्यपोहतिः ।

१०अ)

दिनेकनाश्वमेधानां यज्ञानाञ्च फलं लभेत् ॥६४ ॥

यः पठेत् पाठयेद् वापि सर्वयज्ञफलं लभेत् ।
अतः पुण्यतरं शास्त्रं नोचात्र विद्यते क्वचित् ॥६५ ॥

मूलसारेति इति गोरक्षजोगशास्त्रसमाप्तं ॥ ॥

# योगरहस्यं श्रीदत्तात्रेयविरचितम्

योगाध्यायः

ज्ञानपूर्वो वियोगो योः ज्ञानेन सह योगिनः ।
सा मुक्तिर्ब्रह्मणा च ऐक्यमनैक्यं प्राकृतैर्गुणैः ॥ १.१॥

मुक्तिर्योगात्तथा योगः सम्यग्ज्ञानान्महीपते ।
ज्ञानं दुःखोद्भवं दुःखं ममतासक्तचेतसाम् ॥ १.२॥

तस्मात्सङ्गं प्रयत्नेन मुमुक्षुः सन्त्यजेन्नरः ।
सङ्गाभावे ममेत्यस्याः ख्यातेर्हानिः प्रजायते ॥ १.३॥

निर्ममत्वं सुखायैव वैराग्याद्दोषदर्शनम् ।
ज्ञानादेव च वैराग्यं ज्ञानं वैराग्यपूर्वकम् ॥ १.४॥

तद्गृहं यत्र वसतिस्तद्भोज्यं येन जीवति ।
यन्मुक्तये तदेवोक्तं ज्ञानमज्ञानमन्यथा ॥ १.५॥

उपभोगेन पुण्यानामपुण्यानाञ्च पार्थिव ।
कर्त्तव्यानाञ्च नित्यानामकामकरणात्तथा ॥ १.६॥

असञ्चयादपूर्वस्य क्षयात्पूर्वार्ज्जितस्य च ।
कर्मणो बन्धमाप्नोति शरीरं न पुनः पुनः ॥ १.७॥

एतत्ते कथितं राजन्योगं चेमं निबोध मे ।
यं प्राप्य ब्रह्मणो योगी शाश्वतान्नान्यतां व्रजेत् ॥ १.८॥

प्रागेवात्मात्मना जेयो योगिनां स हि दुर्जयः ।
कुर्वीत तज्जये यत्नं तस्योपायं श्रृणुस्व मे ॥ १.९॥

प्राणायामैर्दहेद्दोषान्धारणाभिः च किल्बिषम् ।
प्रत्याहारेण विषयान्ध्यानेनानीश्वराङ्गुणान् ॥ १.१०॥

यथा पर्वतधातूनां दोषाः दह्यन्ति धाम्यताम् ।

तथेन्द्रियकृता दोषाः दह्यन्ते प्राणनिग्रहात् ॥ १.११॥

प्रथमं साधनं कुर्यात्प्राणायामस्य योगवित् ।
प्राणापाननिरोधस्तु प्राणायाम उदाहृतः ॥ १.१२॥

लघुमध्योत्तरीयाख्यः प्राणायामस्त्रिधोदितः ।
तस्य प्रमाणं वक्ष्यामि तदलर्क श्रृनुष्व मे ॥ १.१३॥

लघुः द्वादशमात्रस्तु द्विगुणः स तु मध्यमः ।
त्रिगुणाभिस्तु मात्राभिः उत्तमः परिकीर्तितः ॥ १.१४॥

निमेषोन्मेषणो मात्राकालो लघ्वक्षरस्तथा ।
प्राणायामस्य संख्यार्थं स्मृतो द्वादशमात्रिकः ॥ १.१५॥

प्रथमेन जयेत्स्वेदम्मध्यमेन च वेपथुम् ।
विषादं हि तृतीयेन जयेद्दोषाननुक्रमात् ॥ १.१६॥

मृदुत्वं सेव्यमानस्तु सिंहशार्दूलकुञ्जराः ।
यथा यान्ति तथा प्राणो वश्यो भवति योगिनः ॥ १.१७॥

वश्यं नत्तं यथेच्छातो नागं नयति हस्तिपः ।
तथैव योगी स्वच्छन्दः प्राणं नयति साधितम् ॥ १.१८॥

यथा हि साधितः सिंहो मृगान् हस्ति न मानवान् ।
तद्वन्निषिद्धपवनः किल्विषं न नृणाः तनुम् ॥ १.१९॥

तस्माद्युक्तः सदा योगी प्राणायामपरो भवेत् ।
श्रूयतां मुक्तिफलद् तस्यावस्थाचतुष्टयम् ॥ १.२०॥

धवस्तिः प्राप्तिः तथा संवित्प्रसादश्च महीपते ।
स्वरुपं श्रृणु चैतेषां कथ्यमानमनुक्रमात् ॥ १.२१॥

कर्मणामिष्टदुष्टानां जायते फलसंक्षयः ।
चेतसो अपकषायत्व यत्र सा धवस्तिरच्यते ॥ १.२२॥

ऐहिकामुष्मिकान् कामान् लोभमोहात्मकान् स्वयम् ।
निरुध्यास्ते यदा योगी प्राप्तिः सा सार्वकालिकी ॥ १.२३॥

अतीतानागतानर्थान्विप्रकृष्टतिरोहितान् ।
विजानातीन्दुसूर्यर्क्षग्रहाणां ज्ञानसम्पदा ॥ १.२४॥

तुल्यप्रभावस्तु सदा योगी प्राप्नोति सम्पदम् ।
तदा संविदिति ख्याता प्राणायामस्य संस्थितिः ॥ १.२५॥

यान्ति प्रसादं येनास्य मनः पञ्च च बायवः ।
इन्द्रियानीन्द्रियार्थाश्च स प्रसाद् इति स्मृतः ॥ १.२६॥

शृणूस्व च महीपाल प्राणायामस्य लक्षणम् ।
युञ्जतश्च सदा योगं यादृग्विहितमासनम् ॥ १.२७॥

पद्मर्द्धासनं चापि तथा स्वस्तिकमासनम् ।
आस्थाय योगं युञ्जीत कृत्वा च प्रणवं हृदि ॥ १.२८॥

समः समासनो भूत्वा संहृत्य चरणावूभौ ।
संवृतास्यः तथैवोरु सम्यग्विष्टभ्य चाग्रतः ॥ १.२९॥

पार्ष्णिभ्यां लिङ्गवृषणावस्पृशन्प्रयतः स्थितः ।
किञ्चिदुनमितशिरा दन्तैः दन्तान्न संस्पृशेत् ॥ १.३०॥

सम्पश्यन्नासिकाग्रं स्वं दिशश्चानवलोकयन् ।
रजसा तमसौ वृत्तिं सत्त्वेन रजसस्तथा ।
स आद्य निर्मले तत्त्वे स्थितो युञ्जीत योगवित् ॥ १.३१॥

इन्द्रियाणीन्द्रियार्थेभ्यः प्राणादीन्मन एव च ।
निगृह्य समवायेन प्रत्याहारमुपक्रमेत् ॥ १.३२॥

यस्तु प्रत्याहरेत्कामान्सर्वाङ्गानीव कच्छपः ।
सदात्मरतिरेकस्थः पश्यत्यात्मानमात्मनि ॥ १.३३॥

स बाह्याभ्यन्तरं शौचं निपाद्याकण्ठनाभितः ।
पूरयित्वा बुधो देहं प्रत्याहारमुपक्रमेत् ॥ १.३४॥

तथा वै योगयुक्तस्य योगिनो नियतात्मनः ।
सर्वे दोषाः प्रणश्यन्ति स्वस्थश्चैवोपजायते ॥ १.३५॥

वीक्षते च परं ब्रह्म प्राकृतांश्च गुणान्पृथक् ।
व्योमादिपरमाणुञ्च तथात्मानमकल्मषम् ॥ १.३६॥

इत्थं योगी यताहारः प्राणायामपरायणः ।
जितां जितां शनैर्भूमिमारोहेत यथा गृहम् ॥ १.३७॥

दोषान्व्याधींस्तथा मोहमाक्रान्ता भूरनिर्जिता ।

विवर्धयति नारोहेत्तस्माद्भूमिमनिर्जिताम् ॥ १.३८॥

प्राणानामुपसंरोधात्प्राणायाम इति स्मृतः ।
धारणेत्युव्यते चेयं धार्य्यते यन्मनो यया ॥ १.३९॥

शब्दादिभ्यः प्रवृत्तानि यदक्षाणि यतात्मभिः ।
प्रत्याह्रियन्ते योगेन प्रत्याहारस्ततः स्मृतः ॥ १.४०॥

उपायश्चात्र कथितो योगिभिः परमर्षिभिः ।
येन ब्याध्यादयो दोषा न जायन्ते हि योगिनः ॥ १.४१॥

यथा तोयार्थिनस्तोयं यन्त्रनालादिभिः शनैः ।
आपिबेयूस्तथा वायुं पिबेद्योगी जितश्रमः ॥ १.४२॥

प्राण्नाभ्यां हृदये चात्र तृतीये च तथोरसि ।
कण्ठे मुखे नासिकाग्रे नेत्रभ्रुमध्यमूर्द्धसु ॥ १.४३॥

किञ्च तस्मात्परस्मिंश्च धारणा परमा स्मृता ।
दशैता धारणाः प्राप्य प्राप्नोत्यक्षरसाम्यताम् ॥ १.४४॥

तस्य नो जायते मृत्युर्न जरान च वै क्लमः ।
न श्रान्तिरवसादोत्थ तुरीये सततं स्थितिः ॥ १.४५॥

इयं वै योगभूमिः स्यात् सप्तैव परिकीर्त्तितः ।
यत्र स्थिते ब्रह्मस्थितिं लभते नात्र संशयः ॥ १.४६॥

नाध्मातः क्षूधितः श्रान्तो न च व्याकुलचेतनः ।
युञ्जीत योगं राजेन्द्र! योगी सिद्ध्यर्थमादृतः ॥ १.४७॥

नातिशीते न चोष्णे वै न द्वन्द्वेनानिलात्मके ।
कालेस्वेतेषु युञ्जीत न योगं ध्यानतत्परः ॥ १.४८॥

सशब्दाग्निजलाभ्यासे जीर्णगोष्ठे चतुष्पथे ।
शुष्कपर्णचये नद्यां श्मशाने ससरीसृपे ॥ १.४९॥

सभये कूपतीरे वा चैत्यवल्मीकसंचये ।
देषेष्वेतेषु तत्त्वज्ञो योगाब्यासं विवर्जयेत् ॥ १.५०॥

सत्त्वस्यानुपपत्तौ च देशकालं विवर्जयेत् ।
नासतो दर्शनं योगे तस्मात्तत्परिवर्जयेत् ॥ १.५१॥

दृळ्हता चित्तशुद्धिश्च जयते नात्र संशयः ।
स्थानकालप्रभावेण निश्चयं विद्धि भूमिप ।
तन्मयस्य कुतश्चिन्ता देशकालमयी तथा ॥ १.५२॥

देशानितानानादृत्य मूळ्हत्वाद्यो युनक्ति वै ।
विघ्नाय तस्य वै दोषा जायन्ते तन्निबोध मे ॥ १.५३॥

भाधिर्यं जळता लोपः स्मृतेर्मूकत्त्वमान्धता ।
ज्वरश्च जायते सद्यस्तत्तदज्ञानयोगिनः ॥ १.५४॥

प्रमादाद्योगिनो दोषा यद्येते स्युश्चिकित्सितम् ।
तेषां नाशाय कर्त्तव्यं योगिनां तन्निबोध मे ॥ १.५५॥

स्निग्धां यवागूमत्युष्णां भुक्त्वा तत्रैव धारयेत् ।
वातगुल्मप्रशान्त्यर्थमुदावर्त्ते तथोदरे ॥ १.५६॥

यबागूं वापि पवनं वायुग्रन्थिं प्रतिक्षिपेत् ।
तद्वत् कल्पे महाशैलं स्थिरं मनस् धारयेत् ॥ १.५७॥

विघाते वचनो वाचं वाधिर्य्यं श्रवणेन्द्रियम् ।
यथैवाम्रफलं ध्यायेत्तृष्णार्त्तो रसनेन्द्रिये ॥ १.५८॥

यस्मिन् यस्मिन् रुजा देहे तस्मिंस्तदुपकारिणीम् ।
धारयेद्धारणामुष्णे शीतां शीते च दाहिनीम् ॥ १.५९॥

कीलं शिरसि संस्थाप्य काष्थं काष्ठेन ताडयेत् ।
लुप्तस्मृतेः स्मृतिः सद्यो योगिनस्तेन जायते ॥ १.६०॥

द्यावापृथिव्यौ वाय्वग्नी व्यापिनावपि धारयेत् ।
अमानुषात्सस्त्वजाद्वा वाधास्त्वेताश्चिकित्सिताः ॥ १.६१॥

अमानुयं सत्त्वमन्तर्योगिनं प्रविशेद्यदि ।
वाय्वग्निधारणेनैनं देहसंस्थं विनिर्द्दहेत ॥ १.६२॥

एवं सर्वात्मना रक्षा कार्य्या योगविदा नृप!।
धर्मार्थकाममोक्षाणां शरीरं साधनं यतः ॥ १.६३॥

प्रवृत्तिलक्षणाख्यानादेयागिनो विस्मयात् तथा ।
विज्ञानं विलयं याति तस्माद्गोप्याः प्रवृत्तयः ॥ १.६४॥

अलोल्यमारोग्यमनिष्ठुरत्वं गन्धः शुभो मूत्रपुरीषमल्पम् ।

कान्तिः प्रसादः स्वासौम्यता च योगप्रवृत्तेः प्रथमं हि चिह्नम् ॥ १.६५॥

अनुरागी जनो याति परोक्षे गुणकीर्त्तनम् ।
न बिभ्यति च सत्त्वानि सिद्धेर्लक्षणमुत्तमम् ॥ १.६६॥

शीतोष्णादिभिरत्युग्रैर्यस्य वाधा न विद्यते ।
न भीतिमेति चान्यभ्यस्तस्य सिद्धिरुपस्थिता ॥ १.६७॥

इति योगाध्यायः ॥

योगसिद्धिः

उपसर्गाः प्रवर्त्तन्ते दृष्टे ह्यात्मनि योगिनः ।
ये तांस्ते सम्प्रवक्ष्यामि समासेन निबोध मे ॥ २.१॥

काम्याः क्रियास्तथा कामान् मानुषानभिवाञ्छति ।
स्त्रियो दानफलं विद्यां मायां कुप्यं धनं दिवम् ॥ २.२॥

देवत्वममरेशत्वं रसायनचयः क्रियाः ।
मरुत्प्रपतनं यज्ञं जलाग्न्यावेशनं तथा ।
श्राद्धानां सर्वदानानां फलानि नियमांस्तथा ॥ २.३॥

तथोपवासात्पूर्त्ताच्च देवताभ्यर्च्चनादपि ।
तेभ्यश्चेभ्यश्च कर्मभ्य उपसृष्टोऽभिवाञ्चति ॥ २.४॥

चित्तमित्थं वर्त्तमानं यत्नादेयागी निवर्त्तयेत् ।
ब्रह्मसङ्गि मनः कुर्व्वन्नुपसर्गात्प्रमुच्यते ॥ २.५॥

उपसर्गैर्जितैरेभिरूपसर्गास्तुतः पुनः ।
योगिनः सम्प्रवर्त्तन्ते सात्त्वराजसतामसाः ॥ २.६॥

प्रातिभः श्रावणो दैवो भ्रमावर्त्तौ तथापरौ ।
पञ्चैते योगिनां योगविघ्नाय कटुकोदया ॥ २.७॥

वेदार्थाः काव्यशास्त्रार्थां विद्याशिल्पान्यशेषतः ।
प्रतिभान्ति यदस्त्येति प्रातिभः स तु योगिनः ॥ २.८॥

शब्दार्थानखिलान् वेत्ति शब्दं गृह्णति चैव यत् ।
योजनानां सहस्त्रेभ्यः श्रावणः सोऽभिधीयते ॥ २.९॥

समन्ताद्वीक्षते चाष्टौ स यदा देवतोपमः ।
उपसर्गं तमप्यान्थर्दैवमुन्मत्तवद्बुधाः ॥ २.१०॥

भ्राम्यते यन्निरालम्बं सनो दोषेण योगिनः ।
समस्ताचारविभ्रंशाद्भ्रमः स परिकीर्त्तितः ॥ २.११॥

आवर्त्त इव तोयस्य ज्ञानावर्त्तो यदाकुलः ।
नाशयेच्चित्तमावर्त्त उपसर्गः स उच्यते ॥ २.१२॥

एतैर्नाशितयोगास्तु सकला देवयोनयः ।
उपसर्गैर्महाघोरैरावर्त्तन्ते पुनः पुनः ॥ २.१३॥

प्रावृत्य कन्वलं शुल्कं योगी तस्मान्मनोमयं ।
चिन्तयेत्परमं ब्रह्म कृत्वा तत्प्रवणं मनः ॥ २.१४॥

योगयुक्तः सदा योगी लघ्वाहारो जितेन्द्रियः ।
सूक्ष्मास्तु धारणाः सप्त भूराद्या मूद्र्ध्न धारयेत् ॥ २.१५॥

धरित्रीं धारयेद्योगी तत्सौख्यं प्रतिपद्यते ।
आत्मानं मन्यते चोर्व्विं तद्वन्धञ्च जहाति सः ॥ २.१६॥

तथैवाप्सुरसं सूक्ष्मं तद्वद्रूपञ्च तेजसि ।
स्पर्शं वायौ तथा तद्वद्विभ्रतस्तस्य धारणाम् ।
व्योम्नः सूक्ष्मां प्रवृत्तिञ्च शब्दं तद्वज्जहाति सः ॥ २.१७॥

मनसा सर्वभूतानां मनस्याविशते यदा ।
मानसीं धारणां विभ्रन्मनः सूक्ष्मञ्च जायते ॥ २.१८॥

तद्वद्बुद्धिमशेषाणां सत्त्वानामेत्य योगवित् ।
परित्यजति सम्प्राप्य बुद्धिसौक्ष्म्यमनुतमम् ॥ २.१९॥

परित्यजति सूक्ष्माणि सप्त त्वेतानि योगवित् ।
सम्यग्विज्ञाय योऽलर्क! तस्यावृत्तिर्न विद्यते ॥ २.२०॥

एतासां धारणानन्तु सप्तानां सौक्ष्म्यमात्मवान् ।
दृष्ट्वा ततः सिद्धिं त्यक्त्वा त्यक्त्वा परं व्रजेत् ॥ २.२१॥

यस्मिन् यस्मिंश्च कुरुते भुते रागं महीपते!।
तस्मिंस्तस्मिन् समासक्तिं सम्प्राप्य स विनश्यति ॥ २.२२॥

तस्माद्विदित्वा सूक्ष्माणि संसक्तानि परस्परम् ।
परित्यजति यो देही स परं प्राप्नुयात्पदम् ॥ २.२३॥

एतान्येव तु सन्धाय सप्त सूक्ष्माणि पार्थिव ।
भूतादीनां विरागोऽत्र सद्भावज्ञस्य मुक्तये ॥ २.२४॥

गद्धादिषु समासक्तिं सम्प्राप्य स विनश्यति ।
पुनरावर्त्तते भूप! स ब्रह्मापरमानुषम् ॥ २.२५॥

सप्तैता धारणा योगी समतीत्य यदिच्छति ।
तस्मिंस्तस्मिंल्लयं सूक्ष्मे भूते याति नरेश्वर!॥ २.२६॥

देवानामसुराणां वा गन्धर्व्वोरगरक्षसाम् ।
देहेषु लयमायाति सङ्गं नाप्नोति च क्वचित् ॥ २.२७॥

अणिमा लघिमा चैव महिमा प्राप्तिरेव च ।
प्राकाम्यञ्च तथेशित्वं वशित्वञ्च तथापरम् ॥ २.२८॥

यत्र कामावसायित्वं गुणानेतांस्तथैश्वरान् ।
प्राप्नोत्यष्टौ नरव्याघ्र! परं निर्व्वाणसूचकान् ॥ २.२९॥

सूक्ष्मात् सूक्ष्मतमोऽणीयान् शीघ्रत्वं लघिमा गुणः ।
महिमाऽशेषपूज्यत्वात् प्राप्तिर्नाप्राप्यमस्य यतः ॥ २.३०॥

प्राकाम्यस्य च व्यापित्वादीशित्वञ्चेश्वरो यतः ।
वशित्वाद्वशिमा नाम योगिनः सप्तमो गुणः ॥ २.३१॥

यत्रेच्चास्थानमप्युक्तं यत्र कामावसायिता ।
त्रैश्वर्य्यकारणैरेभिर्योगिनः प्रोक्तमष्टधा ॥ २.३२॥

मुक्तिसंसूचकं भूप! परं निर्वाणमात्मनः ।
ततो न जायते नैव वर्द्धते न विनश्यति ॥ २.३३॥

नापि क्षयमवाप्नोति परिणामं न गच्छति ।
छेदं क्लेदं तथा दाहं शोषं भुयादितो न च ॥ २.३४॥

भुतवर्गादवाप्नोति शब्दाद्यैर्ह्रियते न च ।
न चास्य सन्ति शब्दाद्यास्तद्भोक्ता तैर्न युज्यते ॥ २.३५॥

यथा हि कनकं खन्तमपद्रव्यवदग्निना ।
दग्धदोषं द्वितीयेन खन्तेनैक्यं व्रजेन्नृप!॥ २.३६॥

न विशेषमवाप्नोति तद्वद्योगाग्निना यतिः ।
निर्द्दग्धदोषस्तेनैक्यं प्रयाति ब्रह्मणा सह ॥ २.३७॥

यथाग्निरग्नौ संक्षिप्तः समानत्वमनुव्रजेत् ।
तदाख्यस्तन्मयो भुतो न गृह्येत विशेषतः ॥ २.३८॥

परेण ब्रह्मणा तद्वत् प्राप्यैक्यं दग्धकिल्विषः ।
योगी याति पृथग्भावं न कदाचिन्महीपते!॥ २.३९॥

यथा जलं जलेनैक्यं निक्षिप्तमुपगच्छति ।
तथात्मा साम्यमभ्येति योगिनः परमात्मनि ॥ २.४०॥

इति योगसिद्धिः ॥

योगिचर्य्या

अलर्क उवाच ।
भगवन्! योगिनश्चर्य्यं श्रोतुमिच्छामि तत्त्वतः ।
ब्रह्मवर्त्मन्यनुसरन् यथा योगी न सीदति ॥ ३.१॥

दत्तात्रेय उवाच ।
मानापमानौ यावेतौ प्राप्त्युद्वेगकरौ नृणाम् ।
तावेव विपरीतार्थौ योगिनः सिद्धिकारकौ ॥ ३.२॥

मानापमानौ यावेतौ तावेवान्थर्विषामृते ।
अपमानोऽमृतं तत्र मानस्तु विषमं विषम् ॥ ३.३॥

चक्षुःपूतं न्यसेत् पादं वस्त्रपूतं जलं पिबेत् ।
सत्यपूतां वदेद्वाणीं बुद्धिपूतञ्च चिन्तयेत् ॥ ३.४॥

आतित्यश्राद्धयज्ञेषु देवयात्रोत्सवेषु च ।
म्हाजनञ्च सिद्ध्यर्थं न गच्छेद्योगवित् क्वचित् ॥ ३.५॥

व्यस्ते विधूमे व्यङ्गारे सर्वस्मिन् भुक्तवर्जने ।
अदेत योगविद्भैक्ष्यं न तु त्रिष्वेव नित्यशः ॥ ३.६॥

यथैवमवमन्यन्ते जनाः परिभवन्ति च ।
तथा युक्तश्चरेद्योगी सतां वर्त्म न दूषयन् ॥ ३.७॥

भैक्ष्यं चरेद्गृहस्थेषु यायावरगृहेषु च ।
श्रेष्ठा तु प्रथमा चेति वृत्तिरस्योपदृश्यते ॥ ३.८॥

अथ नित्यं गृहस्थेषु शालीनेषु चरेद्यतिः ।

श्रद्दधानेषु दान्तेषु श्रोत्रियेषु महात्मसु ॥ ३.९॥

अत ऊर्द्ध्वं पुनश्चापि अदुष्टापतितेषु च ।
भैक्ष्यचर्य्या विवर्णेषु जघन्या वृत्तिरिष्यते ॥ ३.१०॥

भैक्ष्यं यवागूं तक्रं वा पयो यावकमेव वा ।
फलं मूलं प्रियङ्गुं वा कणपिण्याकशक्तवः ॥ ३.११॥

इत्येते च शुभाहारा योगिनः सिद्धिकारकाः ।
तत्प्रयुञ्ज्यान्मुनिर्भक्त्या परमेण समाधिना ॥ ३.१२॥

अपः पूर्वं सकृत् प्राश्य तुष्णीन्भूत्वा समाहितः ।
प्राणायेति ततस्तस्य प्रथमा ह्यान्थतिः स्मृता ॥ ३.१३॥

अपानाय द्वितीया तु समानायेति चापरा ।
उदानाय चतुर्थी स्यात् व्यानायेति च पञ्चमी ॥ ३.१४॥

प्राणायामैः पृथक् कृत्वा शेषं भुञ्जीत कामतः ।
अपः पुनः सकृत् प्राश्य आचम्य हृदयं स्पृशेत् ॥ ३.१५॥

अस्तेयं ब्रह्मचर्यञ्च त्यागोऽलोभस्तथैव च ।
व्रतानि पञ्च भिक्षुणामहिंसापरमाणि वै ॥ ३.१६॥

अक्रोधो गुरुशुश्रुषा शौचमाहारलाघवम् ।
नित्यस्वाध्याय इत्येते नियमाः पञ्च कीर्त्तिताः ॥ ३.१७॥

सारभूतमुपासीत ज्ञानं यत् कार्य्यसाधकम् ।
ज्ञानानां व धा षेयं योगविघ्नकरा हिन्सा ॥ ३.१८॥

इदं ज्ञेयमिदं ज्ञेयमिति यस्तृषितश्चरेत् ।
अपि कल्पसहस्रेषु नैव ज्ञेयमवाप्नुयात् ॥ ३.१९॥

त्यक्तसङ्गो जितक्रोधो लघ्वाहारो जितेन्द्रियः ।
विधाय बुद्ध्या द्वाराणि मनो ध्याने निवेशयेत् ॥ ३.२०॥

शून्येष्वेवावकाशेषु गुहासु च वनेषु च ।
नित्ययुक्तः सदा योगी ध्यानं सम्यगुपक्रमेत् ॥ ३.२१॥

वाग्दन्तः कर्मदन्तश्च मनोदन्तश्च ते त्रयः ।
यस्मैते नियता दन्ताः स त्रिदन्ती महायतिः ॥ ३.२२॥

सर्वमात्ममयं यस्य सदसज्जगदीदृशम् ।
गुणागुणमयं तस्य कः प्रियः को नृपाप्रियः ॥ ३.२३॥

विशुद्धबुद्धिः समलोष्ठ्रकाञ्चनः समस्तभूतेषु च तत्समाहितः ।
स्थानं परं शाश्वतमव्ययञ्च परं हि गत्वा न पुनः प्रजायते ॥ ३.२४॥

वेदाः श्रेष्ठाः सर्वयज्ञक्रियाश्च यज्ञाज्जप्यं ज्ञानमार्गश्च जप्यात् ।
ज्ञानाद्ध्यानं सङ्गरागव्यपेतं तस्मिन्प्राप्ते शाश्वतस्योपलब्धिः ॥ ३.२५॥

समाहितो ब्रह्मपरोऽप्रमादी शुचिस्तथैकान्तरतिर्यतेन्द्रियः ।
समाप्नुयाद्योगमिमं महात्मा विमुक्तिमाप्नोति ततः स्वयोगतः ॥ ३.२६॥

इति योगिचर्य्या

Encoded by Vlad Sovarel vlad.sovarel at yahoo.com

*Lord Dattatreya's Secret of Yoga*

pdf was typeset on October 6, 2018

Please send corrections to *sanskrit@cheerful.com*

# shrIDattatreya Yogashastra

# श्रीदत्तात्रेय योग शास्त्र

## Sanskrit Document Information

Text title : Yogashastra by Dattatreya

File name : dattayoga.itx

Category : deities_misc, dattatreya

Location : doc_deities_misc

Author : Vedic Tradition

Transliterated by : Sovarel Vlad vlad.sovarel at yahoo.com

Proofread by : Sovarel Vlad vlad.sovarel at yahoo.com

Source : Tr. Eng. dr. Amita Sharma, Swami Keshawananda Yoga-Samsthan-Prakashana, Delhi 1985

Latest update : June 10, 2000

Send corrections to : Sanskrit@cheerful.com



August 11, 2018

*sanskritdocuments.org*

# श्रीदत्तात्रेय योग शास्त्र

नृसिंहरूपिणे चिदात्मने सुखस्वरूपिणे ।
पदैः त्रिभिः तदादिभिः निरूपिताय वै नमः ॥ १॥

सांकृतिः मुनिवर्यो असौ भूतये योगलिप्सया ।
भुवं सर्वां परिभ्रान्यन्नैमिषारण्यमाप्तवान् ॥ २॥

सुगन्धिनानाकुसुमैः स्वादुसत्फलसंयुतैः ।
शाखिभिः सहितं पुण्यं जलकासारमण्डितम् ॥ ३॥

सः मुनिः विचरस्तत्र ददर्शाम्रतरोः अधः ।
वेदिकायां समासीनं दत्तात्रेयं महामुनिम् ॥ ४॥

बद्धपद्मासनासीनं नासाग्रार्पितया दृशा ।
ऊरुमध्यगतोत्तानपाणियुग्मेन शोभितम् ॥ ५॥

ततः प्रणम्याखिलं दत्तात्रेयं महामुनिम् ।
तत् शिष्यैः सह तत्रैव सम्मुखश्चोपविष्टवान् ॥ ६॥

तदैव सः मुनिः योगात् विरम्य स्वपुरः स्थितम् ।
उवाच सांकृतिं प्रितिपूर्वकं स्वागतं वचः ॥ ७॥

सांकृते कथय त्वं मां किमुद्दिश्येहागतः ।
इति पृष्टस्तु सः प्राह योगं ज्ञातुमिहागतः ॥ ८॥

योगो हि बहुधा ब्रह्मन्तत्सर्वं कतयामि ते ।
मन्त्रयोगो लयश्चैव हठयोगस्तथैव च ।
रजयोगश्चतुर्थः स्यात्योगानामुत्तमस्तु सः ॥ ९॥

आरम्भश्च घटश्चैव तथा परिचयः स्मृतः ।
निष्पत्तिश्चेत्यवस्था च चतुर्थी परिकल्पिता ।
एतेषां विस्तरं वक्ष्ये यदि त्वं श्रोतुमिच्छसि ॥ १०॥

अङ्गेषु मातृका पूर्वं मन्त्रं जपन् सुधीः ।
य कचनाभिसिद्धयै स्यात् मन्त्रयोगः स कथ्यते ॥ ११॥

मृदुः तस्याधिकारी स्याद्द्वादशाब्दैः तु साधनात् ।
प्रायेण लभते ज्ञानं सिद्धिश्चैवाणिमादिकाः ॥ १२॥

अल्पबुद्धिः इमं योगं सेवते साधकाधमः ।
मन्त्रयोगो ह्ययं प्रोक्तो योगानामधमस्तु सः ॥ १३॥

लययोगश्चित्तलयः संकेतैः तु प्रजायते ।
आदिनाथेन संकेता अष्टकोटि प्रकीर्त्तिताः ॥ १४॥

सांकृतिरुवाच –
भगवन्नादिनाथः सः किं रूपः कः सः उच्यताम् ।
दत्तात्रेय उवाच –
महादेवस्य नामान्यादिनाथादिकान्यपि ।
शिवेश्वरश्च देवोऽसौ लीलया व्यचरत्प्रभुः ॥ १५॥

श्रीकण्ठपर्वते गौर्या सह प्रमथनायकान् ।
हिमाक्षपर्वते चैवकदलीवनगोचरे ॥ १६॥

गिरिकूटे चित्रकूटे सुपादपयुते गिरौ ।
कृपयैकैकसंकेतं शंकरः प्राह तत्र तान् ॥ १७॥

तानि सर्वाणि वक्तुं तु न हि शक्नोमि विस्तरात् ।
कानिचित्कथयिष्यामि सहजाभ्यासवत्सुखम् ॥ १८॥

तिष्ठन् गच्छन्स्वपन्भुञ्जन्ध्यायन्शून्यमहर्निशम् ।
अयमेको हि संकेतः आदिनाथेन भाषितः ॥ १९॥

नासाग्रदृष्टिमात्रेण ह्यपरः परिकीर्तितः ।
शिरस्पश्चाच्च भागस्य ध्यानं मृत्युं जयेत् परम् ॥ २०॥

भ्रूमध्यदृष्टिमात्रेण परः संकेतः उच्यते ।
ललाते भ्रूतले यश्चोत्तमः सः प्रकीत्तितः ॥ २१॥

सव्यदक्षिणपादस्याङ्गुष्टे लयमुत्तमम् ।
उत्तानशववत्भूमौ शयनं चोक्तमुतमम् ॥ २२॥

शिथिलो निर्जने देशे कुर्याच्चेत्सिद्धिमाप्नुयात् ।

एवं च बहु संकेतान् कथयामास शङ्करः ॥ २३॥

संकेतैः बहुभिश्चान्यैः यस्य चित्तलयो भवेत् ।
स एव लययोगः स्यात् कर्मयोगं ततः शृणुः ॥ २४॥

यमश्च नियमश्चैवासनं च ततः परम् ।
प्राणायामश्चतुथः स्यात् प्रत्याहारस्तु पञ्चमः ।
ततस्तु धारणा प्रोक्ता ध्यानं सप्तममुच्यते ॥ २५॥

समाधिः अष्टमः प्रोक्तः सर्वपुण्यप्रदः ।
एवमष्टाङ्गयोगं च याज्ञवल्क्यादयो विदुः ॥ २६॥

कपिलाद्यास्तु शिष्याश्च हठं कुयुस्ततो यथा ।
तद्यथा च महामुद्रा महाबन्धस्तथैव च ॥ २७॥

ततः स्यात्खेचरीमुद्र बन्धो जालन्धरः तथा ।
उड्डियाणं मूलबन्धो विपरीतकरणी तथा ॥ २८॥

वज्रोलिः अमरोलिश्च सहजोलिस्त्रिधा मता ।
एतेषां लक्षणं वक्ष्ये कर्त्ताव्यं च विशेषतः ॥ २९॥

यमाः ये दशः सम्प्रोक्ताः ऋषिभिः तत्त्वदर्शिभिः ।
लघ्वाहारस्तु तेष्वेको मुख्यो भवति नापरे ।
अहिंसा नियमेष्वेका मुख्या भवति नापरे ॥ ३०॥

चतुरशीतिलक्षेष्वासनेष्वुत्तमं शृणु ।
आदिनाथेन सम्प्रोक्तं यदासनमिहोच्यते ॥ ३१॥

उत्तानौ चरणौ कृत्वोरूसंस्थौ प्रयलतः ।
उरू मध्ये तथोत्तानौ पाणी कृत्वा ततो दृशौ ॥ ३२॥

नासाग्रे विन्यसेद्राजद्दन्तमूलं च जिह्वया ।
उत्तभ्य चिबुकं वक्षः संस्थाप्य पवनं शनैः ॥ ३३॥

यथाशक्ति समाकृष्य पूरयेदुदरं शनैः ।
यथाशक्त्येव पश्चात्तु रेचयेत्पवनं शनैः ॥ ३४॥

इदं पद्मासनं प्रोक्तं सर्वव्याधिविनाशनम् ।
दुर्लभं येन केनापि धिमता लभ्यते भुवि ॥ ३५॥

सांस्कृते शृणु सत्त्वस्थो योगाभ्यासक्रमं यथा ।

वक्ष्यमाणं प्रयत्नेन योगिनां सर्वलक्षणैः ॥ ३६॥

युव अवस्थोऽपि वृद्धो वा व्याधितो वा शनैः शनैः ।
अभ्यासात्सिद्धिमाप्नोति योगे सर्वोऽप्यतन्द्रितः ॥ ३७॥

ब्राह्मणः श्रमणो वा बौद्धो वाप्यार्हतोऽथवा ।
कापालिको वा चार्वाकः श्रद्धया सहितः सुधीः ।
योगाभ्यासोऽतो नित्यं सर्वसिद्धिमवाप्नुयात् ॥ ३८॥

क्रियायुक्तस्य सिद्धिः स्यादक्रियस्य कथं भवेत् ।
न शास्त्रपाठमात्रेण काचित्सिद्धिः प्रजायते ॥ ३९॥

मुण्डितो दण्डधारी वा काषायवसनोऽपि वा ।
नारायणवदो वापि जटिलो मस्मलेपनः ॥ ४०॥

नमः शिवायवाची वा बाह्यार्चा पूजकोऽपि वा ।
द्वादशस्थानपूजो वा बह्यवत्सलभाषितम् ।
क्रियाहीनोऽथवा कूरः कथं सिद्धिमवाप्नुयात् ॥ ४१॥

न वेषधारणं सिद्धेः कारणं न च तत्तथा ।
कृपैव कारणं सिद्धेः सत्यमेव तु सांकृते ॥ ४२॥

शिश्नोदरार्थं योगस्य कथया वेषधारिणः ।
अनुष्ठानविहीनाः तु वञ्चयन्ति जनान् किल ॥ ४३॥

उच्चावचैः विप्रलंभैः यतन्ते कुशलाः नराः ।
योगिनो वयमित्येवं मूढाः भोगपरायणाः ॥ ४४॥

शनैर्तथाविधान् ज्ञात्वा योगाभ्यासविवर्जिताम् ।
कृतार्थान्वचनैरेव वर्जयेद्वेषधारिणः ॥ ४५॥

एते तु विघ्नभूतास्ते योगाभ्यासस्य सर्वदा ।
वर्जयेत्तान् प्रयत्नेनेदृशी सिद्ध्दा क्रिया ॥ ४६॥

प्रथमाभ्यासकाले तु प्रवेशस्तु महामुने ।
आलस्यं प्रथमे विघ्नः द्वितीयस्तु प्रकत्थनम् ।
पूर्वोक्तधूर्त्तगोष्ठी च तृतीयो मन्त्रसाधनम् ॥ ४७॥

चतुर्थो धातुवादः स्यात्पञ्चमः खाद्यवादकम् ।
एवं च बहवो दृष्टाः मृगतृष्णाः समाः मुनेः ॥ ४८॥

स्थिरासनस्य जायन्ते तां तु ज्ञात्वा सुधीः त्यजेत् ।
प्राणायामं ततस्कुर्यात्पद्मासनगतः स्वयम् ॥ ४९॥

सुशोभनं मठं कुर्यात्सूक्ष्मद्वारं तु निर्घुणम् ।
सुष्ठु लिप्तं गोमयेन सुधया वा प्रयत्नतः ॥ ५०॥

मत्कुणैः मशकैः भूतैः वर्जितं च प्रयत्नतः ।
दिने दिने सुसम्मृष्टं सम्मार्जन्या ह्यतन्द्रितः ।
वासितं च सुगन्धेन धूपितं गुग्गुलादिभिः ॥ ५१॥

मलमूत्रादिभिः वर्गैःऋअष्टादशभिरेव च ।
वर्जितं द्वारसम्पन्नम् ॥। ॥ ५२॥

॥। वस्त्रं वाजिनमेव वा ।
नान्यत्रस्तरणासीनः परसंसर्गवर्जितः ॥ ५३॥

तस्मिन् स तु समास्तीर्यासनं विस्तृतांशकम् ।
तत्रोपविश्य मेधावी पद्मासनमन्वितः ॥ ५४॥

समकायःप्राञ्जलिश्च प्रणम्य स्वेष्टदेवताम् ।
ततो दक्षिणहस्तस्याङ्गुष्ठेनैव पिङ्गलाम् ॥ ५५॥

निरुध्य पूरयेद्वायुमिड्या च शनैः शनैः ।
यथाशक्तिनिरोधेन ततस्कुर्यात्तु कुम्भकम् ॥ ५६॥

ततस्त्यजेत्पिङ्गलया शनैः पवनवेगतः ।
पुनः पिङ्गलयापूर्य पूरयेदुदरं शनैः ।
यथा त्यजेत्तथा तेन पूरयेदनिरोधतः ॥ ५७॥

एवं प्रातः समासीनस्कुर्याद्विंशतिकुम्भकान् ।
कुम्भकः सहितो नाम सर्वग्रहविवर्जितः ॥ ५८॥

एवं मध्याह्नसमये कुर्यात् विंशतिकुम्भकान् ।
एवं सायं प्रकुर्वीत पुनः विंशतिकुम्भकान् ।
एवमेवार्धरात्रे अपि कुर्यात् विंशतिकुम्भकान् ॥ ५९॥

कुर्वीत रेचपूराभ्यां सहितान् प्रतिवासरम् ।
सहितो रेचपूराभ्यां तस्मात्सहितकुम्भकः ॥ ६०॥

कुर्यादेवं चतुर्वारमनालस्यो दिने दिने ।

एवं मासत्रयं कुर्यान्नाडीशुद्धिस्ततो भवेत् ॥ ६१॥

यदा तु नाडीशुद्धिः स्यात्तदा चिह्नानि बाह्यतः ।
जायन्ते योगिनो देहे तानि वक्ष्याम्यशेषतः ॥ ६२॥

शरीरलघुता दीप्तिः जठराग्निविवर्धनम् ।
कृशत्वं च शरीरस्य तदा जायेत्तु निश्चतम् ॥ ६३॥

तदा वर्ज्यानि वक्ष्यामि योगविघ्नकराणि तु ।
लवणं सर्षपं चाम्लमुष्णं रूक्षं च तीक्ष्णकम् ॥ ६४॥

अतीव भोजनम् त्याज्यं स्त्रीसङ्गमनमेव च ।
अग्निसेवा तु सन्त्याज्या धूर्त्तगोष्टिश्च सन्त्यजेत् ॥ ६५॥

उपायं च प्रवक्ष्यामि क्षिप्रं योगस्य सिद्धये ।
घृतं क्षीरं च मिष्ठान्नं मिताहरश्च शस्यते ॥ ६६॥

पूर्वोक्तकाले कुर्वीत पवनाभ्यासमेव च ।
ततः परं यथेष्टं तु शक्तिः स्याद्वायुधारणे ।
यथेष्टं धारणाद्वायोः सिद्ध्येत्केवलकुम्भकम् ॥ ६७॥

केवले कुम्भके सिद्धे रेचपूरकवर्जिते ।
न तस्य दुर्लभं किञ्चित्त्रिषु लोकेषु विद्यते ॥ ६८॥

प्रस्वेदो जायते पूर्वं मर्दनं तेन कारयेत् ।
ततोऽपिधारणाद्वायोः क्रमेणैव शनैः शनैः ॥ ६९॥

कम्पो भवति देहस्यासनस्थस्य देहिनः ।
ततोऽधिरतराभ्यासाद्दर्दुरी जायते ध्रुवम् ॥ ७०॥

यथा तु दर्दुरो गच्छेदुत्प्लुत्योत्प्लुत्य भूतले ।
पद्मासनस्थितो योगी तथा गच्छति भूतले ॥ ७१॥

ततोऽधिकतराभ्यासाद्भूमित्यगश्च जायते ।
पद्मासनस्थ एवासौ भूमिमुत्सृज्य वर्त्तते ॥ ७२॥

निराधारोऽपि चित्रं हि तदा सामर्थ्यमुद्भवेत् ।
स्वल्पं वा बहु वा भुक्त्वा योगी न व्यथते तदा ॥ ७३॥

अल्पमूत्रपुरीषश्च स्वल्पनिद्रश्च जायते ।
क्रिमयो दूषिका लाला स्वेदो दुर्गन्धिता तनोः ।

एतानि सर्वदा तस्य न जायन्ते ततः परम् ॥ ७४॥

ततोऽधिकतराभासाद्बलमुत्पद्यते भृशम् ।
येन भूचरसिद्धिः स्याद्भूचराणां जये क्षमः ॥ ७५॥

व्याघ्रो लुलायो वन्यो वा गवयो गज एव वा ।
सिंहो वा योगिना तेन म्रियन्ते हस्तताडनात् ।
कन्दर्पस्य यथारूपं तथा तस्यापि योगिनः ॥ ७६॥

तस्मिन् काले महाविघ्नो योगिनः स्यात्प्रमादतः ।
तद्रूपवशगाः नार्यः कङ्क्षन्ते तस्य सङ्गमम् ॥ ७७॥

यदि सङ्गं करोत्येष बिन्दुस्तस्य विनश्यति ।
आयुः क्षयो बिन्दुनाशादसामर्थ्यं च जायते ॥ ७८॥

तस्मात्सर्वप्रयत्नेन बिन्दुराक्ष्यो हि योगिना ।
ततो रहस्युपाविष्टः प्रणवं प्लुतमात्रया ॥ ७९॥

जपेत्पूर्वाः जितानां च पापानां च नाशहेतवे ।
सर्वविघ्नहरश्चायं प्रणवः सर्वदोषहा ॥ ८०॥

एवमभ्यासयोगेन सिद्धिः आरम्भसम्भवा ।
ततो भवेद्धटावस्था पवनाभ्यासिनः सदा ॥ ८१॥

प्राणापानौ मनोवयू जीवत्मपरमात्मनौ ।
अन्योन्यस्याविरोधेनैकतां घटतो कानिचित् ॥ ८२॥

तदा घटाद्वयावस्था प्रसिद्ध योगिनां स्मृता ।
ततश्चिह्नानि यानि स्युः तानि वक्ष्यामि कानिचित् ॥ ८३॥

पूर्वं यः कथितोऽभ्यासश्चतुर्धा तं परित्यजेत् ।
दिवा वा यदि वा रात्रौ याममात्रं समभ्यसेत् ॥ ८४॥

एकबारं प्रतिदिनं कुर्यात्केवलकुम्भकम् ।
प्रत्याहारो हि एवं स्यादेवं कर्तुः हि योगिनः ॥ ८५॥

इन्द्रियाणीन्द्रियार्थेभ्यो यत्प्रत्याहरति स्फुटम् ।
योगी कुम्भकमास्थाय प्रत्याहारः स उच्यते ॥ ८६॥

यद्यत्पश्यति चक्षुर्भ्यां तत्तदात्मनि भावयेत् ।
यद्यज्जिघ्रति नासाभ्यां तत्तदात्मनि भावयेत् ॥ ८७॥

एवं ज्ञानेन्द्रियाणां हि तत्संख्या सन्धरयेत् ।
याममात्रं प्रतिदिनं योगी यत्नादतन्द्रितः ॥ ८८॥

तदा विचित्रसामर्थ्यं योगिनां जायते ध्रुवम् ।
दूरश्रुतिः दूरदृष्टिः क्षणाद्दूरगमस्तथा ॥ ८९॥

वाक्सिद्धिः कामचारित्वमदृश्यकरणं तथा ।
मलमूत्रप्रलेपेन लोहादीनां सुवर्णता ।
खेचरत्वं तथान्यत्तु सतताभ्यासयोगिनः ॥ ९०॥

तदा बुद्धिमता भाव्य योगिना योगसिद्धये ।
एते विहताः महासिद्धेः न रमेत्तेषु बुद्धिमान् ॥ ९१॥

न दर्शयेच्च कस्मैचित्स्वसामर्थ्य हि सर्वदा ।
कदाचिद्दशयेत्प्रीत्या भक्तियुक्ताय वा पुनः ॥ ९२॥

यथा मूर्खो यथा मूढो यथा बधिर एव वा ।
तथा वर्तेत लोकेषु स्वसामर्थ्यस्य गुप्तये ॥ ९३॥

नोचेच्छिष्याः हि बहवो भवन्ति स्व न संशयः ।
तत्कर्मकरणव्यग्रः स्वाभ्यासे विस्मृतो भवेत् ।
अभ्यासेन विहीनस्तु ततो लौकिकतां व्रजेत् ॥ ९४॥

अविस्मृत्य गुरोः वक्यमभ्यसेत्तदहर्निशम् ।
एवं भवेद्धटावस्था सदाभ्यासस्य योगिनः ॥ ९५॥

अनभ्यासेन योगस्य वृथा गोष्ठ्या न सिध्यति ।
तस्मात्सर्वप्रयत्नेन योगमेव सदाभ्यसेत् ॥ ९६॥

ततः परिचयावस्था जयते अभ्यासयोगतः ।
वायुः सम्प्रेरितो यत्नादग्निना सह कुण्डलीम् ॥ ९७॥

बोधयित्वा सुषुम्नायां प्रविशेदविरोधतः ।
वायुना सह चित्तं तु प्रविशेच्च महापथम् ॥ ९८॥

महापथं श्मशानं च सुषुम्नापि वेत्यसौ ।
यस्य चित्तं सपवनं सुषुम्नां प्रविशेदिह ॥ ९९॥

भाव्यानर्थान् सः विज्ञाय योगि रहसि यत्नतः ।

पञ्चधा धारण कुर्यात्तत्तद्भूतभयाफहम् ॥ १००॥

पृथिवी धारणं वक्ष्ये पार्थिवेभ्यप् भयापहम् ।
नाभेः अधः गुदस्योर्ध्वं घटिकाः पञ्च धारयेत् ॥ १०१॥

वायुं भवेत् ततो पृथ्वीधारणं तद्भयापहम् ।
पृथिवी सम्भवः तस्य न मृत्युः योगिनो भवेत् ॥ १०२॥

नाभिस्थाने ततो वायुं धारयेत् पञ्च नाडिकाः ।
ततो जलाद्भयं नास्ति जलमृत्युः न योगिनः ॥ १०३॥

नाभ्युर्ध्वमण्डले वायुं धारयेत्पञ्च नाडिकाः ।
अग्नेयधारणा सेयं न मृत्युः तस्य वह्निना ॥ १०४॥

सदा विचित्रसामर्थ्यं योगिनो जायते ध्रुवम् ।
न दह्यते शरीरं च प्रक्षिप्तो वह्नि कुण्डके ॥ १०५॥

नाभिभ्रुवोः हि मध्ये तु प्रदेशत्रयसंयुते ।
धारयेत् पञ्च घटिकाः वायुं साइषा हि वायवी ।
धारणान्न तु वायोस्तु योगिनो हि भयं भवेत् ॥ १०६॥

भ्रूमध्यादुपरिष्टात्तु धारयेत् पञ्च नाडिकाः ।
वायुं योऽसौ प्रयत्नेन सेयमाकाशधारणा ॥ १०७॥

आकाशधारणां कुर्वन्मृत्युं जयति तत्त्वतः ।
यत्र तत्र स्थितो वापिसुखमत्यन्तमश्नुते ॥ १०८॥

एवं च धारणाः पञ्च कुर्याद्योगी विचक्षणः ।
ततो दृढशरीरः स्यन्मृत्युर्तस्य न विद्यते ॥ १०९॥

इत्येवं पञ्चभूतानां धारणां यः समभ्यसेत् ।
ब्रह्मणः प्रलये वापि मृत्युः तस्य न विद्यते ॥ ११०॥

समभ्यसेत्तदा ध्यानं घटिकाः षष्टिमेव च ।
वायुं निरुध्य ध्यायेत्तु देवतामिष्टदायिनीम् ॥ १११॥

सगुणध्यानमेवं स्यादणिमादिगुणप्रदम् ।
निर्गुणं खमिव ध्यात्वा मोक्षमार्गं प्रपद्यते ॥ ११२॥

निर्गुणध्यानसम्पन्नः समाधिं च ततोऽभ्यसेत् ।
दिनद्वादशकेनैव समाधिं समवाप्नुयात् ॥ ११३॥

वायुं निरुध्य मेधवी जीवन्मुक्तो भवेद्ध्रुवम् ।
समाधिः समतावस्था जीवात्मपरमात्मनोः ॥ ११४॥

यदि स्याद्देहमुत्स्रष्टुमिच्छा चेदुत्सृजेत्स्वयम् ।
परब्रह्मणि लीयेत्त्यक्त्वा कर्मशुभाशुभम् ॥ ११५॥

अथ चेन्नो समुत्स्रष्टुं स्वशरीरं यदि प्रिअयम् ।
सर्व लोकेषु विचरेदणिमादिगुणान्वितः ॥ ११६॥

कदाचित्स्वेच्छया देवो भूत्वा स्वर्गयपि संचरेत् ।
मनुष्यो वापि यक्षो वा स्वेच्छया हि क्षणाद्भवेत् ॥ ११७॥

सिंहो व्याघ्रो गजो वा स्यादिच्छया जन्तुतां व्रजेत् ।
यथेष्टमेव वर्त्तेत योगी विद्वान्महेश्वरः ॥ ११८॥

कविमार्गोऽयमुक्तः ते सांकृते अष्टाङ्गयोगतः ।
सिद्धानां कपिलादीनां मतं वक्ष्ये ततः परम् ॥ ११९॥

अभासभेदतो भेदः फल तु सममेव हि ।
महामुद्रां प्रवक्ष्यामि भैरवेणोक्तमादरात् ॥ १२०॥

पार्ष्णिवामस्य पादस्य योनिस्थाने नियोजयेत् ।
प्रसार्य दक्षिणं पादं हस्ताभ्यां धारयेद्दृढम् ॥ १२१॥

चिबुकं हृदि विन्यस्य पूरयेत् वायुना पुनः ।
कुम्भकेन यथाशक्त्या धारयित्वा तु रेचयेत् ।
वामाङ्गेन समभ्यस्य दक्षिणाङ्गेन चाभ्यसेत् ॥ १२२॥

प्रसारितस्तु यः पादस्तमुरूपरि विन्यसेत् ।
अयमेव महाबन्धो मुद्रावच्चामुमभ्यसेत् ॥ १२३॥

महाबन्धस्थितो योगी स्फिचौ सन्ताडयेच्छनैः ।
अयमेव महाबन्धः सिद्धैः अभ्यस्यते नरैः ॥ १२४॥

अन्तः कपालकुहरे जिह्वां व्यावर्त्य बन्धयेत् ।
भ्रूमध्ये दृष्टिः अप्येषा मुद्रा भवति खेचरी ॥ १२५॥

कण्ठमाकुञ्च्य हृदये स्थापयेद्दृढमिच्छया ।
जलन्धरो बन्ध एष अमृतद्रवपालकः ॥ १२६॥

नाभिस्थोऽग्निः कपालस्थसहस्रकमलच्च्युतम् ।
अमृतं सर्वदा तावदन्तर्ज्वलति देहिनाम् ॥ १२७॥

यथा चाग्निस्तदमृतं न पिबेत्तु पिबेत्स्वयम् ।
याति पश्चिममार्गेणैवमभ्यासतः सदा ।
अमृतं कुरुते देहं जलन्धरमतोऽभ्यसेत् ॥ १२८॥

उड्याणं तु सहजं गुणौघात्कथितं सदा ।
अभ्यसेदस्ततन्द्रस्तु वृद्धोऽपि तरुणो भवेत् ॥ १२९॥

नाभेः ऊर्ध्वमधश्चापि तानं कुर्यात्प्रयत्नतः ।
षण्मासमभ्यसेन्मृत्युं जयेदेव न संशयः ॥ १३०॥

मूलबन्धं तु यो नित्यमभ्यसेत्स च योगवित् ।
गुदे पार्ष्णिं तु सम्पीड्य वायुमाकुञ्चयेद्बलात् ।
वारं वारं यथा चोर्ध्वं समायाति समीरणः ॥ १३१॥

प्राणापानौ नादबिन्दू मूलबन्धेन चैकताम् ।
गत्वा योगस्य संसिद्धिं यच्छतो नात्र संशयः ॥ १३२॥

करणं  विपरिताख्यं सर्वव्याधिविनाशनम् ।
नित्यमभ्यासयुक्तस्य जठराग्निः विवर्द्धते ॥ १३३॥

आहारो बहुलः तस्य सम्पाद्यः सांकृते ध्रुवम् ।
अल्पाहारो यदि भवेदग्निः दाहं करोति वै ।
ऊर्ध्वं भानुरधश्चन्द्रस्तद्यथा श्रृणु सांकृते ॥ १३४॥

अधः शिरश्चोर्ध्वपादः क्षणं स्यात्प्रथमे दिने ।
क्षणात्तु किंचिदधिकमभ्यसेन दिने दिने ॥ १३५॥

वलिश्च पलितश्चैव षण्मासोर्ध्वं न दृश्यते ।
याममात्रं तु यो नित्यमभ्यसेत्स तु ओगवित् ॥ १३६॥

वज्रोलिं कथयिष्यामि गोपितं सर्वयोगिभिः ।
अतीवैतद्रहस्यं तु न देयं यस्य कस्यचित् ।
स्वप्राणैस्तु समो यो स्यात्तसमै च कथयेद्ध्रुवम् ॥ १३७॥

स्वेच्छया वर्त्तमानोऽपि योगोक्तनियमैः विना ।
वज्रोलिं यो विजानति स योगी सिद्धिभाजनः ॥ १३८॥

तत्र वस्तु द्वयं वक्ष्ये दुर्लभं येन केनचित् ।
लभ्यते यदि तस्यैव योगसिद्धिकरं स्मृतम् ॥ १३९॥

क्षीरमाङ्गिरसं चेति द्वयोराद्यं तु लभते ।
द्वितीयं दुर्लभं पुंसां स्त्रीभ्यः साध्यमुपायतः ।
योगाभ्यासरता स्त्री च पुंसा यत्नेन साधयेत् ॥ १४०॥

पुमान् स्त्री वा यदन्योन्यं स्त्रीपुंस्त्वानपेक्षया ।
स्वप्रयोजनमात्रैकसाधनात्सिद्धिमाप्नुयात् ॥ १४१॥

चलितो यदि बिन्दुः तमुर्ध्वमाकृष्य रक्षयेत् ।
एवं च रक्षितो बिन्दुः मृतुं जयति तत्त्वतः ॥ १४२॥

मरणं बिन्दुपातेन जीवनं बिन्दुधारणत् ।
बिन्दुरक्षाप्रसादेन सर्वं सिध्यति योगिनः ॥ १४३॥

अमरोलिस्तद्यथा स्यात्सहजोलिस्ततो यथा ।
तदभ्यासक्रमः शस्यः सिद्धानां सम्प्रदायतः ॥ १४४॥

एतैः सैः वैस्तु कथितैरभ्यसेत् काललालतः ।
ततो भवेद्राजयोगो नान्तरा भवति ध्रुवम् ।
न दिङ्मात्रेण सिद्धिः स्यादभ्यसेनैव जायते ॥ १४५॥

राजयोगं वरं प्राण्य सर्वसत्त्ववशंकरम् ।
सर्वं कुर्यान्नवा कुर्याद्यथारुचिविचोष्टितम् ॥ १४६॥

यथान्तरा च योगेन निष्पन्ना योगिनः क्रिया ।
यथावस्था हि निष्पत्तिर्भुक्तिमुक्तिफलप्रदा ॥ १४७॥

सर्वं ते कथितं ब्रह्मन् सांस्कृते योगमाचर ।
इति तस्य वचः श्रुत्वा सांस्कृतिः योगमाप्तवान् ।
सर्वासिद्धीरवाप्यासौ दत्तात्रेयप्रसादतः ॥ १४८॥

य इदं पठते नित्यं साधुभ्यः श्रावयेदपि ।
तस्य योगः क्रमेणैव सिध्यत्येव न संशयः ॥ १४९॥

योगिनोऽभ्यासयुक्ताः ये ह्यरण्येषु गृहेषु वा ।
बहुकालं रमन्ते स्म बहुकालविवर्जिताः ॥ १५०॥

तस्मात्सर्वप्रयत्नेन योगमेव सदाभ्यसेत् ।

योगाभ्यासो जन्मफलं विफला हि तथा क्रिया ॥ १५१॥

महामायाप्रसादेन सर्वैषामस्तु तत्सुखम् ।
एतत्सर्वं यथायुक्तं तामेवाराधयेत्ततः ॥ १५२॥

यः संस्मृत्या मुनीनामपि दुरितहरो योगसिद्धिप्रदश्च ।
कारूण्याद्यः प्रवक्ता सुखदुःखसुहृद्योगशास्त्रस्य नाथः ॥ १५३॥

तस्याहं भक्तिशुन्योऽप्यखिलजनगुरोः भक्तिचिन्तामणेः हि ।
दत्तत्रेयस्य विष्णोः पदनलिनयुगं नित्यमेव प्रपद्ये ॥ १५४॥

Encoded by Vlad Sovarel, 1998 Bucharest vlad.sovarel at yahoo.com

*shrIDattatreya Yogashastra*

pdf was typeset on August 11, 2018

Please send corrections to *sanskrit@cheerful.com*

# Shri Yoga Yajnyavalkya

# श्रीयोगयाज्ञवल्क्य

## Sanskrit Document Information

Text title : yogayAjnyavalkya

File name : yogayAjnyavalkya.itx

Category : yoga

Location : doc_yoga

Author : Traditional

Transliterated by : DPD, Sunder Hattangadi, Shankara, Sowmya Ramkumara

Proofread by : DPD, Radim Navyan radimnavyan at gmail

Latest update : December 24, 2014, March 3, 2019

Send corrections to : Sanskrit@cheerful.com



March 3, 2019

*sanskritdocuments.org*

# श्रीयोगयाज्ञवल्क्य

॥ अथ प्रथमोऽध्यायः ॥

याज्ञवल्क्यं मुनिश्रेष्ठं सर्वज्ञं ज्ञाननिर्मलम् ।
सर्वशास्त्रार्थतत्त्वज्ञं सदा ध्यानपरायणम् ॥ १॥

वेदवेदाङ्गतत्त्वज्ञं योगेषु परिनिष्ठितम् ।
जितेन्द्रियं जितक्रोधं जिताहारं जितामयम् ॥ २॥

तपस्विनं जितामित्रं ब्रह्मण्यं ब्राह्मणप्रियम् ।
तपोवनगतं सौम्यं सन्ध्योपासनतत्परम् ॥ ३॥

ब्रह्मविद्भिर्महाभागैर्ब्राह्मणैश्च समावृतम् ।
सर्वभूतसमं शान्तं सत्यसन्धं गतक्लमम् ॥ ४॥

गुणज्ञं सर्वभूतेषु परार्थैकप्रयोजनम् ।
ब्रुवन्तं परमात्मानमृषीणामुग्रतेजसाम् ॥ ५॥

तमेवं गुणसम्पन्नं नारीणामुत्तमा वधूः ।
मैत्रेयी च महाभागा गार्गी च ब्रह्मविद्वरा ॥ ६॥

सभामध्यगता चेयमृषीणामुग्रतेजसाम् ।
प्रणम्य दण्डवद्भूमौ गार्ग्यैतद्वाक्यमब्रवीत् ॥ ७॥ var गर्गी तद्

गार्ग्युवाच -
भगवन्सर्वशास्त्रज्ञ सर्वभूतहिते रत ।
योगतत्त्वं मम ब्रूहि साङ्गोपाङ्गं विधानतः ॥ ८॥

एवं पृष्टः स भगवान्सभामध्ये स्त्रिया तया ।
ऋषीनालोक्य नेत्राभ्यां वाक्यमेतदभाषत ॥ ९॥

याज्ञवल्क्य उवाच -
उत्तिष्ठोत्तिष्ठ भद्रं ते गार्गि ब्रह्मविदां वरे ।

वक्ष्यामि योगसर्वस्वं ब्रह्मणा कीर्तितं पुरा ॥ १०॥

समाहितमना गार्गि श्रृणु त्वं गदतो मम ।
इत्युक्त्वा ब्रह्मविच्छ्रेष्ठो याज्ञवल्क्यस्तपोनिधिः ॥ ११॥

नारायणं जगन्नाथं सर्वभूतहृदि स्थितम् ।
वासुदेवं जगद्योनिं योगिध्येयं निरञ्जनम् ॥ १२॥

आनन्दममृतं नित्यं परमात्मानमीश्वरम् ।
ध्यायन्हृदि हृषीकेशं मनसा सुसमाहितः ॥ १३॥

नेत्राभ्यां तां समालोक्य कृपया वाक्यमब्रवीत् ।
एह्येहि गार्गि सर्वज्ञे सर्वशास्त्रविशारदे ॥ १४॥

योगं वक्ष्यामि विधिवद्धात्रोक्तं परमेष्ठिना ।
मुनयः श्रूयतामत्र गार्ग्या सह समाहिताः ॥ १५॥

पद्मासने समासीनं चतुराननमव्ययम् ।
चराचराणां स्रष्टारं ब्रह्माणं परमेष्ठिनम् ॥ १६॥

कदाचित्तत्र गत्वाहं स्तुत्वा स्तोत्रैः प्रणम्य च ।
पृष्टवानिममेवार्थं यन्मां त्वं परिपृच्छसि ॥ १७॥

देवदेव जगन्नाथ चतुर्मुख पितामह ।
येनाहं यामि निर्वाणं कर्मणा मोक्षमव्ययम् ॥ १८॥

ज्ञानं च परमं गुह्यं यथावद्ब्रूहि मे प्रभो ।
मयैवमुक्तो द्रुहिणः स्वयम्भूर्लोकनायकः ॥ १९॥

मामालोक्य प्रसन्नात्मा ज्ञानकर्माण्यभाषत ।
ज्ञानस्य द्विविधौ ज्ञेयौ पन्थानौ वेदचोदितौ ॥ २०॥

अनुष्ठितौ तौ विद्वद्भिः प्रवर्तकनिवर्तकौ ।
वर्णाश्रमोक्तं यत्कर्म कामसङ्कल्पपूर्वकम् ॥ २१॥

प्रवर्तकं भवेदेतत्पुनरावृत्तिहेतुकम् ।
कर्तव्यमिति विध्युक्तं कर्म कामविवर्जितम् ॥ २२॥

येन यत्क्रियते सम्यक् ज्ञानयुक्तं निवर्तकम् ।
निवर्तकं हि पुरुषं निवर्तयति जन्मनः ॥ २३॥

प्रवर्तकं हि सर्वत्र पुनरावृत्तिहेतुकम् ।
वर्णाश्रमोक्तं कर्मैव विध्युक्तं कामवर्जितम् ॥ २४॥

विधिवत्कुर्वतस्तस्य मुक्तिर्गार्गि करे स्थिता ।
वर्णाश्रमोक्तं कर्मैव विधिवत्कामपूर्वकम् ॥ २५॥

येन यत्क्रियते तस्य गर्भवासः करे स्थितः ।
संसारभीरुभिस्तस्मात्विध्युक्तं कामवर्जितम् ॥ २६॥

विधिवत् कर्म कर्तव्यं ज्ञानेन सह सर्वदा ।
जाताश्च त्रिषु लोकेषु आनुलोम्येन मानवाः ॥ २७॥

ते देवानामृषीणां च पितृणामृणिनस्तथा ।
ऋषिभ्यो ब्रह्मचर्येण पितृभ्यश्च सुतैस्तथा ॥ २८॥

कुर्याद्यज्ञेन देवेभ्यः स्वाश्रमं धर्ममाचरन् ।
चत्वारो ब्राह्मणस्योक्ता आश्रमाः श्रुतिचोदिताः ॥ २९॥

क्षत्रियस्य त्रयः प्रोक्ता द्वावेकौ वैश्यशूद्रयोः ।
अधीत्य वेदं वेदार्थं साङ्गोपाङ्गं विधानतः ॥ ३०॥

स्नायाद्विध्युक्तमार्गेण ब्रह्मचर्यव्रतं चरन् ।
संस्कृतायां सवर्णायां पुत्रमुत्पादयेत्ततः ॥ ३१॥

यजेदग्नौ तु विधिवत्भार्यया सह वा विना ।
कान्तारे विजने देशे फलमूलोदकान्विते ॥ ३२॥

तपश्चरन्वसेन्नित्यं साग्निहोत्रः समाहितः ।
आत्मन्यग्नीन्समारोप्य सन्न्यसेद्विधिना ततः ॥ ३३॥

संन्यासाश्रमसंयुक्तो नित्यं कर्म समाचरन् ।
यावत्क्षेत्री भवेत्तावत् यजेदात्मानमात्मनि ॥ ३४॥

क्षत्रियश्च चरेदेवमासंन्यासाश्रमात्सदा ।
वानप्रस्थाश्रमादेवं चरेद्वैश्यः समाहितः ॥ ३५॥

शूद्रः शुश्रूषया नित्यं गृहस्थाश्रमं आचरेत् ।
शूद्रस्य ब्रह्मचर्यं च मुनिभिः कैश्चिदिष्यते ॥ ३६॥

आनुलोम्यप्रसूतानां त्रयाणामाश्रमास्त्रयः ।
शूद्रवच्छूद्रजातानं आचारः कीर्तितो बुधैः ॥ ३७॥

चतुर्णामाश्रमस्थानामहन्यहनि नित्यशः ।
विध्युक्तं कर्म कर्तव्यं कामसङ्कल्पवर्जितम् ॥ ३८॥

तस्मात्त्वमपि योगीन्द्र स्वाश्रमं धर्माचरन् ।
श्रद्धया विधिवत्सम्यक् ज्ञानकर्म समाचर ॥ ३९॥

इति मे कर्मसर्वस्वं योगरूपं च तत्त्वतः ।
उपदिश्य ततो ब्रह्मा योगनिष्ठोऽभवत्स्वयम् ॥ ४०॥

श्रुत्वैतद्याज्ञवल्क्योक्तं वाक्यं गार्गी मुदान्विता ।
पुनः प्राह मुनिश्रेष्ठमृषीमध्ये वरानना ॥ ४१॥

गार्ग्युवाच -
ज्ञानेन सह योगीन्द्र विध्युक्तं कर्म कुर्वतः ।
त्वयोक्तं मुक्तिरस्तीति तयोर्ज्ञानं वद प्रभो ॥ ४२॥

भार्यया त्वेवमुक्तस्तु याज्ञवल्क्यस्तपोनिधिः ।
तां समालोक्य कृपया ज्ञानरूपमभाषत ॥ ४३॥

याज्ञवल्क्य उवाच -
ज्ञानं योगात्मकं विद्धि योगश्चाष्टाङ्गसंयुतः ।
संयोगो योग इत्युक्तो जीवात्मपरमत्मनोः ॥ ४४॥

वक्ष्याम्यङ्गानि ते सम्यग्यथा पूर्वं मया श्रुतम् ।
समाहितमना गार्गी ऋषिभिः सह संश्रृणु ॥ ४५॥

यमश्च नियमश्चैव आसनं च तथैव च ।
प्राणायामस्तथा गार्गि प्रत्यहारश्च धारणा ॥ ४६॥

ध्यानं समाधिरेतानि योगाङ्गानि वरानने ।
यमश्च नियमश्चैव दशधा सम्प्रकीर्तितः ॥ ४७॥

आसनान्युत्तमान्यष्टौ त्रयं तेषूत्तमोत्तमम् ।
प्रणायामस्त्रिधा प्रोक्तः प्रत्याहारश्च पञ्चधा ॥ ४८॥

धारणा पञ्चधा प्रोक्ता ध्यानं षोढा प्रकीर्तितम् ।
त्रयं तेषूत्तमं प्रोक्तं समाधिस्त्वेकरूपकः ॥ ४९॥

बहुधा केचिदिच्छन्ति विस्तरेण पृथक् श्रृणु ।

अहिंसा सत्यमस्तेयं ब्रह्मचर्यं दयार्जवम् ॥ ५० ॥

क्षमाधृतिर्मिताहारः शौचं त्वेते यमा दश ।
कर्मणा मनसा वाचा सर्वभूतेषु सर्वदा ॥ ५१ ॥

अक्लेशजननं प्रोक्तमहिंसासात्वेन योगिभिः ।
विध्युक्तं चेदहिंसा स्यात्क्लेशजन्मैव जन्तुषु ॥ ५२ ॥

वेदेनोक्तेऽपि हिंसास्यादभिचारादि कर्म यत् ।
सत्यं भूतहितं प्रोक्तं नियतार्थाभिभाषणम् ॥ ५३ ॥

कर्मणा मनसा वाचा परद्रव्येषु निःस्पृहा ।
अस्तेयमिति सा प्रोक्ता ऋषिभिस्तत्त्वदर्शिभिः ॥ ५४ ॥

कर्मणा मनसा वाचा सर्वावस्थासु सर्वदा ।
सर्वत्र मैथुनत्यगो ब्रह्मचर्यं प्रचक्षते ॥ ५५ ॥

ब्रह्मचर्याश्रमस्थानां यतीनां नैष्ठिकस्य च ।
ब्रह्मचर्यं तु तत्प्रोक्तं तथैवा रण्यवासिनाम् ॥ ५६ ॥

ऋतावृतौ स्वदारेषु सङ्गतिर्या विधानतः ।
ब्रह्मचर्यं तु तत्प्रोक्तं गृहस्थाश्रमवासिनम् ॥ ५७ ॥

राज्ञश्चैव गृहस्थस्य ब्रह्मचर्यं प्रकीर्तितम् ।
विशां वृत्तवतां चैव केचिदिच्छन्ति पण्डिताः ॥ ५८ ॥

शुश्रूषैव तु शूद्रस्य ब्रह्मचर्यं प्रकीर्तितम् ।
शुश्रूषा वा गुरोर्नित्यं ब्रह्मचर्यमुदाहृतम् ॥ ५९ ॥

गुरवः पञ्च सर्वेषां चतुर्णां श्रुतिचोदिताः ।
माता पिता तथाचार्यो मातुलः श्वशुरस्तथा ॥ ६० ॥

एषु मुख्यास्त्र्यः प्रोक्ता आचार्यः पितरौ तथा ।
एषु मुख्यतमस्त्वेक आचार्यः परमार्थवित् ॥ ६१ ॥

तमेवं ब्रह्मविच्छ्रेष्ठं नित्यकर्मपरायणम् ।
शुश्रूषयार्चयेन्नित्यं तुष्टोऽभूद्येन वा गुरुः ॥ ६२ ॥

दया च सर्वभूतेषु सर्वत्रानुग्रहः स्मृतः ।
विहितेषु तदन्येषु मनोवाक्कायकर्मणाम् ॥ ६३ ॥

प्रवृत्तौ वा निवृत्तौ वा एकरूपत्वमार्जवम् ।
प्रियाप्रियेषु सर्वेषु समत्वं यच्छरीरिणाम् ॥ ६४॥

क्षमा सैवेति विद्वद्भिर्गदिता वेदवादिभिः ।
अर्थहानौ च बन्धूनां वियोगेष्वपि सम्पदाम् ॥ ६५॥

तयोः प्राप्तो च सर्वत्र चित्तस्य स्थापनं धृतिः ।
अष्टौ ग्रासा मुनेर्भक्ष्याः षोदशारण्यवासिनम् ॥ ६६॥

द्वात्रिंशच्च गृहस्थानां यथेष्टं ब्रह्मचारिणाम् ।
एषामयं मिताहारो ह्यन्येषामल्पभोजनम् ॥ ६७॥

शौचं तु द्विविधं प्रोक्तं बाह्यमाभ्यन्तरं तथा ।
मृज्जलाभ्यां स्मृतं बाह्यं मनःशुद्धिस्तथान्तरम् ॥ ६८॥

मनःशुद्धिश्च विज्ञेया धर्मेणाध्यात्मविध्यया ।
आत्मविद्या च धर्मश्च पित्राचार्येण वानघे ॥ ६९॥

तस्मात्सर्वेषु कालेषु सर्वैर्निःश्रेयसार्थिभिः ।
गुरवः श्रुतसम्पन्ना मान्या वाङ्ग्मनसादिभिः ॥ ७०॥

॥ इति श्रीयोगयाज्ञवल्क्ये प्रथमोऽध्यायः ॥

---

॥ अथ द्वितीयोऽध्यायः ॥

याज्ञवल्क्य उवाच -
तपः सन्तोष आस्तिक्यं दानमीश्वरपूजनम् ।
सिद्धान्तश्रवणं चैव ह्रीर्मतिश्च जपो व्रतम् ॥ १॥

एते तु नियमाः प्रोक्तास्तांश्च सर्वान्पृथक् शृणु ।
विधिनोक्तेन मार्गेण कृच्छ्रचान्द्रायणादिभिः ॥ २॥

शरीरशोषणं प्राहुस्तापसास्तप उत्तमम् ।
यदृच्छा लाभतो नित्यमलं पुंसो भवेदिति ॥ ३॥ ??
या धीस्तामृषयः प्राहुः सन्तोषं सुखलक्षणम् ।
धर्माधर्मेषु विश्वासो यस्तदास्तिक्यमुच्यते ॥ ४॥

न्यायार्जितं धनं चान्नमन्यद्वा यत्प्रदीयते ।
अर्थिभ्यः श्रद्धया युक्तं दानमेतदुदाहृतम् ॥ ५॥

यत्प्रसन्नत्वभावेन विष्णुं वाऽप्यन्यमेव वा ।
यथाशक्त्यर्चनं भक्त्या ह्येतदीश्वरपूजनम् ॥ ६॥

रागाद्यपेतं हृदयं वागदुष्टानृतादिना ।
हिंसादिरहितः काय एतदीश्वरपूजनम् ॥ ७॥

सिद्धान्तश्रवणं प्रोक्तं वेदान्तश्रवणं बुधैः ।
द्विजवत्क्षत्रियस्योक्तं सिद्धान्तश्रवणं बुधैः ॥ ८॥

विशां च केचिदिच्छन्ति शीलवृत्तवतां सताम् ।
शूद्राणां च स्त्रियैश्चैव स्वधर्मस्थतपस्विनाम् ॥ ९॥

सिद्धान्तश्रवणं प्रोक्तं पुराणश्रवणं बुधैः ।
वेदलौकिकमार्गेषु कुत्सितं कर्म यद्भवेत् ॥ १०॥

तस्मिन्भवति या लज्जा ह्रीस्तु सैवेति कीर्तिता ।
विहितेषु च सर्वेषु श्रद्धा या सा मतिर्भवेत् ॥ ११॥

गुरुणा चोपदिष्टोऽपि वेदबाह्यविवर्जितः ।
विधिनोक्तेन मार्गेण मन्त्राभ्यासो जपः स्मृतः ॥ १२॥

अधीत्य वेदं सूत्रं वा पुराणं सेतिहासिकम् ।
एतेष्वभ्यसनं यच्च तदभ्यासो जपः स्मृतः ॥ १३॥

जपश्च द्विविधः प्रोक्तो वाचिको मानसस्तथा ।
वाचिक उपांशुरुच्चैश्च द्विविधः परिकीर्तितः ॥ १४॥

मानसो मननध्यानभेदाद् द्वैविध्यमास्थितः ।
उच्चैर्जपादुपांशुश्च सहस्रगुण उच्यते ॥ १५॥

मानसस्तु तथोपांशोः सहस्रगुण उच्यते ।
मानसाच्च तथा ध्यानं सहस्रगुणमुच्यते ॥ १६॥

उच्चैर्जपस्तु सर्वेषां यथोक्तफलदो भवेत् ।
नीचैः श्रुतो न चेत्सोऽपि श्रुतश्चेन्निष्फलो भवेत् ॥ १७॥

ऋषिं छन्दोऽधिदैवं ध्यायन्मन्त्रं च सर्वदा ।
यस्तु मन्त्रजपो गार्गि स एव हि फलप्रदः ॥ १८॥

प्रसन्नगुरुणा पूर्वमुपदिष्टं त्वनुज्ञया ।
धर्मार्थमात्मसिद्ध्यर्थमुपायग्रहणं व्रतम् ॥ १९॥

॥ इति श्रीयोगयाज्ञवल्क्ये द्वितीयोऽध्यायः ॥

॥ अथ तृतीयोऽध्यायः ॥

याज्ञवल्क्य उवाच -
आसनान्यधुना वक्ष्ये शृणु गार्गि तपोधने ।
स्वस्तिकं गोमुखं पद्मं वीरं सिंहासनं तथा ॥ १॥

भद्रं मुक्तासनं चैव मयूरासनमेव च ।
तथैतेषां वरारोहे पृथग्वक्ष्यामि लक्षणम् ॥ २॥

जानोर्वोरन्तरे सम्यक्कृत्वा पादतले उभे ।
ऋजुकायः सुखासीनः स्वस्तिकं तत्प्रचक्षते ॥ ३॥

सीवन्यास्त्वात्मनः पार्श्वे गुल्फौ निक्षिप्य पादयोः ।
सव्ये दक्षिणगुल्फं तु दक्षिणे दक्षिणेतरम् ॥ ४॥

एतच्च स्वस्तिकं प्रोक्तं सर्वपापप्रणाशनम् ।
सव्ये दक्षिणगुल्फं तु पृष्ठपार्श्वे निवेशयेत् ॥ ५॥

दक्षिणेऽपि तथा सव्यं गोमुखं गोमुखं यथा ।
अङ्गुष्ठौ च निबध्नीयाद्धस्ताभ्यां व्युत्क्रमेण तु ॥ ६॥

ऊर्वोरुपरि विप्रेन्द्रे कृत्वा पादतले उभे ।
पद्मासनं भवेदेतत्सर्वेषामपि पूजितम् ॥ ७॥

एकं पादमथैकस्मिन्विन्यस्योरुणि संस्थितम् ।
इतरस्मिंस्तथा चोरुं वीरासनमुदाहृतम् ॥ ८॥

गुल्फौ च वृषणस्याधः सीवन्याः पार्श्वयोः क्षिपेत् ।
दक्षिणं सव्यगुल्फेन दक्षिणेन तथेतरम् ॥ ९॥

हस्तौ च जान्वोः संस्थाप्य स्वाङ्गुलीश्च प्रसार्य च ।
व्यात्तवक्त्रो निरीक्षेत नासाग्रं सुसमाहितः ॥ १०॥

सिंहासनं भवेदेतत्पूजितं योगिभिः सदा ।
गुल्फौ च वृषणस्याधः सीवन्याः पार्श्वयोः क्षिपेत् ॥ ११॥

पार्श्वपादौ च पाणिभ्यां दृढं बद्ध्वा सुनिश्चलम् ।

भद्रासनं भवेदेतत्सर्वव्याधिविषापहम् ॥ १२॥

सम्पीड्य सीवनीं सूक्ष्मां गुल्फेनैव तु सव्यतः ।
सव्यं दक्षिणगुल्फेन मुक्तासनमितीरितम् ॥ १३॥

मेढ्रादुपरि निक्षिप्य सव्यं गुल्फं तथोपरि ।
गुल्फान्तरं च निक्षिप्य मुक्तासनमिदं तु वा ॥ १४॥

अवष्टभ्य धरां सम्यक् तलाभ्यां तु करद्वयोः ।
हस्तयोः कूर्परौ चापि स्थापयन्नाभिपार्श्वयोः ॥ १५॥

समुन्नतशिरःपादो दण्डवद्व्योम्निसंस्थितः ।
मयूरासनमेतत्तु सर्वपापप्रणाशनम् ॥ १६॥

सर्वे चाभ्यन्तरा रोगा विनश्यन्ति विषाणि च ।
यमैश्च नियमैश्चैव आसनैश्च सुसंयुता ॥ १७॥

नाडीशुद्धिं च कृत्वा तु प्राणायामं ततः कुरु ॥ १८॥

॥ इति श्रीयोगयाज्ञवल्क्ये तृतीयोऽध्यायः ॥

---

॥ अथ चतुर्थोऽध्यायः ॥

श्रुत्वैतद्भाषितं वाक्यं याज्ञवल्क्यस्य धीमतः ।
पुनः प्राह महाभागा सभामध्ये तपस्विनी ॥ १॥

गार्ग्युवाच -
भगवन्ब्रूहि मे स्वामिन्नाडीशुद्धिं विधानतः ।
केनोपायेन शुद्धाः स्युर्नाडयः सर्वदेहिनाम् ॥ २॥

उत्पत्तिं चापि नाडीनां चारणं च यथाविधि ।
कन्दं च कीदृशं प्रोक्तं कति तिष्ठन्ति वायवः ॥ ३॥

स्थानानि चैव वायूनां कर्माणि च पृथक्पृथक् ।
विज्ञातव्यानि यान्यस्मिन्देहे देहभृतां वर ॥ ४॥

वक्तुमर्हसि तत्सर्वं त्वत्तो वेत्ता न विद्यते ।
इत्युक्तो भार्यया तत्र सम्यक् तद्गतमानसः ॥ ५॥

गार्गीं तां सुसमालोक्य तत्सर्वं समभाषत ।

याज्ञवल्क्य उवाच -
शरीरं तावदेवं हि षण्णवत्यङ्गुलात्मकम् ॥ ६॥

विध्येतत्सर्वजन्तूनां स्वाङ्गुलीभिरिति प्रिये ।
शरीरादधिकः प्राणो द्वादशाङ्गुलमानतः ॥ ७॥

चतुर्दशाङ्गुलं केचिद्वदन्ति मुनिसत्तमाः ।
द्वादशाङ्गुल एवेति वदन्ति ज्ञानिनो नराः ॥ ८॥

आत्मस्थमनिलं विद्वानात्मस्थेनैव वह्निना ।
योगाभ्यासेन यः कुर्यात्समं वा न्यूनमेव वा ॥ ९॥

स एव ब्रह्मविच्छ्रेष्ठः स सम्पूज्यो नरोत्तमः ।
आत्मस्थवह्निनैव त्वं योगजेन द्विजोत्तमे ॥ १०॥

आत्मस्थं मातरिश्वानं योगाभ्यासेन निर्जय ।
देहमध्ये शिखिस्थानं तप्तजाम्बूनदप्रभम् ॥ ११॥

त्रिकोणं मनुजानां च चतुरस्त्रं चतुष्पदाम् ।
मण्डलं तत्पतङ्गानां सत्यमेतद्ब्रवीमि ते ॥ १२॥

तन्मध्ये तु शिखा तन्वी सदा तिष्ठति पावकी ।
देहमध्यं च कुत्रेति श्रोतुमिच्छसि चेच्छृणु ॥ १३॥

गुदात्तु द्व्यङ्गुलादूर्ध्वमधो मेढ्राच्च द्व्यङ्गुलात् ।
देहमध्यं तयोर्मध्यं मनुष्याणामितीरितम् ॥ १४॥

चतुष्पदां तु हृन्मध्यं तिरश्चां तुन्दमध्यमम् ।
द्विजानां तु वरारोहे तुन्दमध्यमितीरितम् ॥ १५॥

कन्दस्थानं मनुष्याणां देहमध्यान्नवाङ्गुलम्
चतुरङ्गुलमुत्सेधमायामश्च तथाविधः ॥ १६॥

अण्डाकृतिवदाकारं भूषितं तत्त्वगादिभिः ।
चतुष्पदां तिरश्चां च द्विजानां तुन्दमध्यमे ॥ १७॥

तन्मध्यं नाभिरित्युक्तं नाभौ चक्रसमुद्भवः ।
द्वादशारयुतं तच्च तेन देहः प्रतिष्ठितः ॥ १८॥

चक्रेऽस्मिन्भ्रमते जीवः पापपुण्यप्रचोदितः ।
तन्तुपञ्जरमध्यस्था यथा भ्रमति लूतिका ॥ १९॥

जीवस्य मूलचक्रेऽस्मिन्नधः प्राणश्चरत्यसौ ।
प्राणारूढो भवेज्जीवः सर्वभूतेषु सर्वदा ॥ २० ॥

तस्योर्ध्वं कुण्डलीस्थानं नाभेस्तिर्यगथोर्ध्वतः ।
अष्टप्रकृतिरूपा सा अष्टधा कुण्डलीकृता ॥ २१ ॥

यथावद्वायुसञ्चारं जलान्नादीनि नित्यशः ।
परितः कन्दपार्श्वेषु निरुध्यैव सदा स्थिता ॥ २२ ॥

मुखेनैव समावेष्ट्य ब्रह्मरन्ध्रमुखं तथा ।
योगकाले त्वपानेन प्रबोधं याति साग्निना ॥ २३ ॥

स्फुरन्ती हृदयाकाशे नागरूपा महोज्ज्वला ।
वायुर्वायुसखेनैव ततो याति सुषुम्णया ॥ २४ ॥

कन्दमध्ये स्थिता नाडी सुषुम्णेति प्रकीर्तिता ।
तिष्ठन्ति परितः सर्वाश्चक्रेऽस्मिन्नाडीसञ्ज्ञकाः ॥ २५ ॥

नाडीनामपि सर्वासां मुख्यास्त्वेताश्चतुर्दश ।
इडा च पिङ्गला चैव सुषुम्णा च सरस्वती ॥ २६ ॥

वारुणी चैव पूषा च हस्तिजिह्वा यशस्विनी ।
विश्वोदरा कुहूश्चैव शङ्खिनी च पयस्विनी ॥ २७ ॥

अलम्बुषा च गान्धारी मुख्याश्चैताश्चतुर्दश ।
आसां मुख्यतमास्तिस्त्रस्तिसृष्वेकोत्तमोत्तमा ॥ २८ ॥

मुक्तिमार्गेति सा प्रोक्ता विश्वधारिणी ।
कन्दस्य मध्यमे गार्गि सुषुम्णा सुप्रतिष्ठिता ॥ २९ ॥

पृष्ठमध्ये स्थिता नाडी सा हि मूर्ध्नि व्यवस्थिता ॥

मुक्तिमार्गं सुषुम्णा सा ब्रह्मरन्ध्रेति कीर्तिता ॥ ३० ॥

अव्यक्ता सैव विज्ञेया सूक्ष्मा वैष्णवी स्मृता ।
इडा च पिङ्गला चैव तस्याः सव्ये च दक्षिणे ॥ ३१ ॥

इडा तस्याः स्थिता सव्ये दक्षिणे पिङ्गला स्थिता ।
इडायां पिङ्गलायां च चरतश्चन्द्रभास्करौ ॥ ३२ ॥

इडायां चन्द्रमा ज्ञेयः पिङ्गलायां रविः स्मृतः ।
चन्द्रस्तामस इत्युक्तः सूर्यो राजस उच्यते ॥ ३३॥

विषभागो रवेर्भागः सोमभागोऽमृतं स्मृतम् ।
तावेव धत्तः सकलं कालं रात्रिदिवात्मकम् ॥ ३४॥

भोक्त्री सुषुम्णा कालस्य गुह्यमेतदुदाहृतम् ।
सरस्वती कुहूश्चैव सुषुम्णापार्श्वयोः स्थिते ॥ ३५॥

गान्धारी हस्तिजिह्वा च इडायाः पृष्ठपार्श्वयोः ।
कुहोश्च हस्तिजिह्वाया मध्ये विश्वोदरा स्थिता ॥ ३६॥

यशस्विन्याः कुहोर्मध्ये वारुणी च प्रतिष्ठिता ।
पूषायाश्च सरस्वत्याः स्थिता मध्ये पयस्विनी ॥ ३७॥

गान्धार्याश्च सरस्वत्याःस्थिता मध्ये च शङ्खिनी ।
अलम्बुषा च विप्रेन्द्रे कन्दमध्यादधः स्थिता ॥ ३८॥

पूर्वभागे सुषुम्णाया आमेढ्रान्ते कुहूः स्थिता ।
अधश्चोर्ध्वं च कुण्डल्या वारुणी सर्वगामिनी ॥ ३९॥

यशस्विनी च याम्यस्था पादाङ्गुष्ठान्तमिष्यते ।
पिङ्गला चोर्ध्वगा याम्ये नासान्तं विद्धि मे प्रिये ॥ ४०॥

याम्ये पूषा च नेत्रान्तं पिङ्गलायास्तु पृष्ठतः ।
पयस्विनी तथा गार्गि याम्यकर्णान्तमिष्यते ॥ ४१॥

सरस्वती तथा चोर्ध्वमाजिह्वायाः प्रतिष्ठिता ।
आसव्यकर्णाद्विप्रेन्द्रे शङ्खिनी चोर्ध्वगा मता ॥ ४२॥

गान्धारी सव्यनेत्रान्तमिडायाः पृष्ठतः स्थिता ।
इडा च सव्यनासान्तं सव्यभागे व्यवस्थिता ॥ ४३॥

हस्तिजिह्वा तथा सव्यपादाङ्गुष्ठान्तमिष्यते ।
विष्वोदरा तु या नाडी तुन्दमध्ये व्यवस्थिता ॥ ४४॥

अलम्बुषा महाभागे पायुमूलादधोगता ।
एतास्त्वन्याः समुत्पन्नाः शिराश्चान्याश्च तास्वपि ॥ ४५॥

यथाश्वत्थदले तद्वदब्जपत्रेषु वा शिराः ।
नाडीष्वेतासु सर्वासु विज्ञातव्यास्तपोधने ॥ ४६॥

प्राणोऽपानः समानश्च उदानो व्यान एव च ।
नागः कूर्मोऽथ कृकरो देवदत्तो धनञ्जयः ॥ ४७॥

एते नाडीषु सर्वासु चरन्ति दश वायवः ।
एतेषु वायवः पञ्च मुख्याः प्राणादयः स्मृताः ॥ ४८॥

तेषु मुख्यतमावेतौ प्राणापानौ नरोत्तमे ।
प्राण एवैतयोर्मुख्यः सर्वप्राणभृतां सदा ॥ ४९॥

आस्यनासिकयोर्मध्ये हृन्मध्ये नाभिमध्यमे ।
प्राणालय इति प्राहुः पादाङ्गुष्टेऽपि केचन ॥ ५०॥

अधश्चोर्ध्वं च कुण्डल्याः परीतः प्राणसञ्ज्ञकः ।
तिष्ठन्नेतेषु सर्वेषु प्रकाशयति दीपवत् ॥ ५१॥

अपाननिलयं केचिद् गुदमेढ्रोरुजानुषु ।
उदरे वृषणे कट्यां जङ्घे नाभौ वदन्ति हि ॥ ५२॥

गुदाग्न्यागारयोस्तिष्ठन्मध्येऽपानः प्रभञ्जनः ।
अधश्चोर्ध्वं च कुण्डल्याः प्रकाशयति दीपवत् ॥ ५३॥

व्यानः श्रोत्राक्षिमध्ये च कृकट्यां गुल्फयोरपि ।
घ्राणे गले स्फिजोर्देशे तिष्ठत्यत्र न संशयः ॥ ५४॥

उदानः सर्वसन्धिस्थः पादयोर्हस्तयोरपि ।
समानः सर्वगात्रेषु सर्वं व्याप्य व्यवस्थितः ॥ ५५॥

भुक्तं सर्वरसं गात्रे व्यापयन्वह्निना सह ।
द्विसप्ततिसहस्रेषु नाडीमार्गेषु सञ्चरेत् ॥ ५६॥

समानवायुरेवैकः साग्निर्व्याप्य व्यवस्थितः ।
अग्निभिः सह सर्वत्र साङ्गोपाङ्गकलेवरे ॥ ५७॥

नागादिवायवः पञ्च त्वगस्थ्यादिषु संस्थिताः ।
तुन्दस्थे जलमन्नं च रसानि च समीकृतम् ॥ ५८॥

तुन्दमध्यगतः प्राणस्तानि कुर्यात्पृथक्पृथक् ।
पुनरग्नौ जलं स्थाप्य त्वन्नादीनि जलोपरि ॥ ५९॥

स्वयं ह्यपानं सम्प्राप्य तेनैव सह मारुतः ।

प्रवाति ज्वलनं तत्र देहमध्यगतं पुनः ॥ ६०॥

वायुना वातितो वह्निरपानेन शनैः शनैः ।
तदा ज्वलति विप्रेन्द्रे स्वकुले देहमध्यमे ॥ ६१॥

ज्वालाभिर्ज्वलनस्तत्र प्राणेन प्रेरितस्ततः ।
जलमत्युष्णमकरोत्कोष्टमध्यगतं तदा ॥ ६२॥

अन्नं व्यञ्जनसंयुक्तं जलोपरि समर्पितम्
ततः सुपक्वमकरोद्वह्निः सन्तप्तवारिणा ॥ ६३॥

स्वेदमूत्रे जलं स्यातां वीर्यरूपं रसो भवेत् ।
पूरीषमन्नं स्याद्गार्गि प्राणः कुर्यात्पृथक्पृथक् ॥ ६४॥

समानवायुना सार्धं रसं सर्वासु नाडीषु ।
व्यापयञ्चछ्वासरूपेण देहे चरति मारुतः ॥ ६५॥

व्योमरन्ध्रैश्च नवभिः विण्मूत्रादिविसर्जनम्
कुर्वन्ति वायवः सर्वे शरीरेषु निरन्तरम् ॥ ६६॥

निःश्वासोच्छ्वासकासाश्च प्राणकर्मैति कीर्त्यते ।
अपानवायोः कर्मैतद्विण्मूत्रादिविसर्जनम् ॥ ६७॥

हानोपादानचेष्टादि व्यानकर्मैति चेष्यते ।
उदानकर्म तत्प्रोक्तं देहस्योन्नयनादि यत् ॥ ६८॥

पोषणादि समानस्य शरीरे कर्म कीर्तितम् ।
उद्गारादि गुणो यस्तु नागकर्मैति कीर्त्यते ॥ ६९॥

निमीलनादि कूर्मस्य क्षुतं वै कृकरस्य च ।
देवदत्तस्य विप्रेन्द्रे तन्द्रीकर्मैति कीर्तितम् ॥ ७०॥

धनञ्जयस्य शोफादि सर्वं कर्म प्रकीर्तितम्
ज्ञात्वैवं नाडीसंस्थानं वायूनां स्थानकर्मणी ॥ ७१॥

विधिनोक्तेन मार्गेण नाडीसंशोधनं कुरु ॥ ७२॥

॥ इति श्रीयोगयाज्ञवल्क्ये चतुर्थोऽध्यायः ॥

॥ अथ पञ्चमोऽध्यायः ॥

गार्ग्युवाच -
भगवन्ब्रह्मविच्छ्रेष्ठ सर्वशास्त्रविशारद ।
केनोपायेन शुद्धाः स्युर्नाड्यो मे त्वं वद प्रभो ॥ १॥

इत्युक्तो ब्रह्मवादिन्या ब्रह्मविद्ब्राह्मणस्तदा ।
तां समालोक्य कृपया नाडीशुद्धिमभाषत ॥ २॥

याज्ञवल्क्य उवाच -
विध्युक्तकर्मसंयुक्तः कामसङ्कल्पवर्जितः ।
यमैश्च नियमैर्युक्तः सर्वसङ्गविवर्जितः ॥ ३॥

कृतविद्यो जितक्रोधः सत्यधर्मपरायणः ।
गुरुशुश्रूषणरतः पितृमातृपरायणः ॥ ४॥

स्वाश्रमस्थः सदाचारः विद्वद्भिश्च सुशिक्षितः ।
तपोवनं सुसम्प्राप्य फलमूलोदकान्वितम् ॥ ५॥

तत्र रम्ये शुचौ देशे ब्रह्मघोषसमन्विते ।
स्वधर्मनिरतैः शान्तैर्ब्रह्मविद्भिः समावृते ॥ ६॥

वारिभिश्च सुसम्पूर्णे पुष्पैर्नानाविधैर्युते ।
फलमूलैश्च सम्पूर्णे सर्वकामफलप्रदे ॥ ७॥

देवालये वा नद्यां वा ग्रामे वा नगरेऽथवा ।
सुशोभनं मठं कृत्वा सर्वरक्षासमन्वितम् ॥ ८॥

त्रिकालस्नानसंयुक्तः स्वधर्मनिरतः सदा ।
वेदान्तश्रवणं कुर्वंस्तस्मिन्योगं समभ्यसेत् ॥ ९॥

केचिद्वदन्ति मुनयस्तपःस्वाध्यायसंयुताः ।
स्वधर्मनिरताः शान्तास्तन्त्रेषु च सदा रताः ॥ १०॥

निर्जने निलये रम्ये वातातपविवर्जिते ।
विध्युक्तकर्मसंयुक्तः शुचिर्भूत्वा समाहितः ॥ ११॥

मन्त्रैर्न्यस्ततनुर्धीरः सितभस्मधरः सदा ।
मृद्वासनोपरि कुशान्समास्तीर्य ततोऽजिनम् ॥ १२॥

विनायकं सुसम्पूज्य फलमूलोदकादिभिः ।
इष्टदेवं गुरुं नत्वा तत आरुह्य चासनम् ॥ १३॥

प्राङ्मुखोदङ्मुखो वापि जितासनगतः स्वयम् ।
समग्रीवशिरःकायः संवृतास्यः सुनिश्चलः ॥ १४॥

नासाग्रदृक् सदा सम्यक् सव्ये न्यस्येतरं करम् ।
नासाग्रे शशभृद्बिम्बं ज्योत्स्नाजालवितानितम् ॥ १५॥

सप्तमस्य तु वर्गस्य चतुर्थं बिन्दुसंयुतम् ।
स्रवन्तममृतं पश्यन्नेत्राभ्यां सुसमाहितः ॥ १६॥

इडया वायुमारोप्य पूरयित्वोदरस्थितम् ।
ततोऽग्निं देहमध्यस्थं ध्यायञ्ज्वालावलीयुतम् ॥ १७॥

रेफं च बिन्दुसंयुक्तमग्निमण्डलसंस्थितम् ।
ध्यायन्विरेचयेत्पश्चान्मन्दं पिङ्गलया पुनः ॥ १८॥

पुनः पिङ्गलयापूर्य प्राणं दक्षिणतः सुधीः ।
पुनर्विरेचयेद्धीमानिडया तु शनैः शनैः ॥ १९॥

त्रिचतुर्वत्सरं वाथ त्रिचतुर्मासमेव वा ।
षट्कृत्व आचरेन्नित्यं रहस्येवं त्रिसन्धिषु ॥ २०॥

नाडीशुद्धिमवाप्नोति पृथक् चिह्नोपलक्षिताम् ।
शरीरलघुता दीप्तिर्वह्नेर्जठरवर्तिनः ॥ २१॥

नादाभिव्यक्तिरित्येते चिह्नं तत्सिद्धिसूचकम् ।
यावदेतानि सम्पश्येत्तावदेव समाचरेत् ॥ २२॥

॥ इति श्रीयोगयाज्ञवल्क्ये पञ्चमोऽध्यायः ॥

---

॥ अथ षष्ठोऽध्यायः ॥

याज्ञवल्क्य उवाच -
प्राणायाममथादीनां प्रवक्ष्यामि विधानतः ।
समाहितमनास्त्वं च श्रृणु गार्गि वरानने ॥ १॥

प्राणापानसमायोगः “प्राणायामः” इतीरितः ।
“प्राणायामः” इति प्रोक्तो रेचकपूरककुम्भकैः ॥ २॥

वर्णत्रयात्मका ह्येते रेचकपूरककुम्भकाः ।
स एष प्रणवः प्रोक्तः प्राणायामश्च तन्मयः ॥ ३॥

इडया वायुमारोप्य पूरयित्वोदरस्थितम् ।
शनैः षोडशभिर्मात्रैकारं तत्र संस्मरेत् ॥ ४॥ ??
धारयेत्पूरितं पश्चाच्चतुःषष्ठ्या तु मात्रया ।
उकारमूर्तिमत्रापि संस्मरन्प्रणवं जपेत् ॥ ५॥ ??
यावद्वा शक्यते तावद्धारणं जपसंयुतम् ।
पूरितं रेचयेत् पश्चात्प्राणं बाह्यानिलान्वितम् ॥ ६॥

शनैः पिङ्गलया गार्गि द्वात्रिंशन्मात्रया पुनः ।
मकारमूर्तिमत्रापि संस्मरन्प्रणवं जपेत् ॥ ७॥

प्राणायामो भवेदेषः पुनश्चैवं समभ्यसेत् ।
ततः पिङ्गलयापूर्य मात्रैः षोडशभिस्तथा ॥ ८॥

उकारमूर्तिमत्रापि संस्मरन्सुसमाहितः । ??
पूरितं धारयेत्प्राणं प्रणवं विंशतिद्वयम् ॥ ९॥

जपेदत्र स्मरन्मूर्तिं मकाराख्यं महेश्वरम् ।
यावद्वा शक्यते पश्चाद्रेचयेतिडयानिलम् ॥ १०॥ ??
एवमेव पुनः कुर्यादिडयापूर्य पूर्ववत् ।
नाड्या प्राणं समारोप्य पूरयित्वोदरस्थितम् ॥ ११॥

प्रणवेन सुसंयुक्तां व्याहृतीभिश्च संयुताम् ।
गायत्रीं च जपेद्विप्रः प्राणसम्यमने त्रयः ॥ १२॥

पुनश्चैवं त्रिभिः कुर्यात्पुनश्चैव त्रिसन्धिषु ।
यद्वा समभ्यसेन्नित्यं वैदिकं लौकिकं तु वा ॥ १३॥

प्राणसंयमने विद्वान्जपेत्तद्विंशतिद्वयम् ।
ब्राह्मणः श्रुतसम्पन्नः स्वधर्मनिरतः सदा ॥ १४॥

स वैदिकं जपेन्मन्त्रं लौकिकं न कदाचन ।
केचिद्भूतहितार्थाय जपमिच्छन्ति लौकिकम् ॥ १५॥

द्विजवत्क्षात्रस्योक्तः प्राणसंयमने जपः । ?? syoktashcha
वैश्यानां धर्मयुक्तानां स्त्रीशूद्राणां तपस्विनाम् ॥ १६॥

प्राणसंयमने गार्गि मन्त्रं प्रणववर्जितम् ।
नमोन्तं शिवमन्त्रं वा वैष्णवं वेष्यते बुधैः ॥ १७॥

यद्वा समभ्यसेच्छूद्रो लौकिकं विधिपूर्वकम् ।
प्राणसंयमने स्त्री च जपेत्तद्विंशतिद्वयम् ॥ १८॥

न वैदिकं जपेच्छूद्रः स्त्रियश्च न कदाचन ।
स्वाश्रमस्थस्य वैश्यस्य केचिदिच्छन्ति वैदिकम् ॥ १९॥

सन्ध्ययोरुभयोर्नित्यं गायत्र्या प्रणवेन वा ।
प्राणसंयमनं कुर्यात् ब्राह्मणो वेदपारगः ॥ २०॥

नित्यमेव प्रकुर्वीत प्राणायामांस्तु षोडश ।
अपि भ्रूणहनं मासात्पुनन्त्यहरहः कृताः ॥ २१॥

ऋतुत्रयात्पुनन्त्येनं जन्मान्तरकृतादघात् ।
वत्सराद्ब्रह्महा शुध्येत्तस्मान्नित्यं समभ्यसेत् ॥ २२॥

योगाभ्यासरतास्त्वेवं स्वधर्मनिरताश्च ये ।
प्राणसंयमनेनैव सर्वे मुक्ता भवन्ति हि ॥ २३॥

बाह्यादापूरणं वायोरुदरे पूरको हि सः ।
सम्पूर्णकुम्भवद्वायोर्धारणं कुम्भको भवेत् ॥ २४॥

बहिर्यद्रेचनं वायोरुदराद्रेचकः स्मृतः ।
प्रस्वेदजनको यस्तु प्राणायामेषु सोऽधमः ॥ २५॥

कम्पको मध्यमः प्रोक्त उत्थानश्चोत्तमो भवेत् ।
पूर्वं पूर्वं प्रकुर्वीत यावदुत्तमसम्भवः ॥ २६॥

सम्भवत्युत्तमे गार्गि प्राणायामे सुखी भवेत् ।
प्राणो लयति तेनैव देहस्यान्तस्ततोऽधिकः ॥ २७॥

देहश्चोत्तिष्ठते तेन कृतासनपरिग्रहा ।
निःश्वासोच्छ्वासकौ तस्य न विद्येते कथञ्चन ॥ २८॥

देहे यद्यपि तौ स्यातां स्वाभाविकगुणावुभौ॥

तथापि नश्यतस्तेन प्राणायामोत्तमेन हि ॥ २९॥

तयोर्नाशे समर्थः स्यात्कर्तुं केवलकुम्भकम् ।
रेचकं पूरकं मुक्त्वा सुखं यद्वायुधारणम् ॥ ३०॥

प्राणायामोऽयमित्युक्तः स वै केवलकुम्भकः ।
रेच्य चापूर्य यः कुर्यात्स वै सहितकुम्भकः ॥ ३१॥

सहितं केवलं चाथ कुम्भकं नित्यमभ्यसेत् ।
यावन्केवलसिद्धिः स्यात्तावत्सहितमभ्यसेत् ॥ ३२॥

केवले कुम्भके सिद्धे रेचपूरणवर्जिते ।
न तस्य दुर्लभं किञ्चित्त्रिषु लोकेषु विद्यते ॥ ३३॥

मनोजवत्वं लभते पलितादि च नश्यति ।
मुक्तेरयं महामार्गो मकराख्यान्तरात्मनः ॥ ३४॥

नादं चोत्पादयत्येषः कुम्भकः प्राणसंयमः ।
प्राणसंयमनं नाम देहे प्राणस्य धारणम् ॥ ३५॥

एषः प्राणजयोपायः सर्वमृत्यूपघातकः ।
किञ्चित्प्राणजयोपायं तव वक्ष्यामि तत्त्वतः ॥ ३६॥

बाह्यात्प्राणं समाकृष्य पूरयित्वोदरस्थितम् ।
नाभिमध्ये च नासाग्रे पादाङ्गुष्ठे च यत्नतः ॥ ३७॥

धारयेन्मनसा प्राणं सन्ध्याकालेषु सर्वदा ।
सर्वरोगविनिर्मुक्तो जीवेद्योगी गतक्लमः ॥ ३८॥

नासाग्रे धारणं गार्गि वायोर्विजयकारणम् ।
सर्वरोगविनाशः स्यान्नाभिमध्ये च धारणात् ॥ ३९॥

शरीरं लघुतां याति पादाङ्गुष्ठे च धारणात् ।
रसनावायुमाकृष्य यःपिबेत्सततं नरः ॥ ४०॥

श्रमदाहौ न तस्यास्तां नश्यन्ति व्याधयस्तथा॥

सन्ध्ययोर्ब्राह्मकाले वा वायुमाकृष्य यः पिबेत् ॥ ४१॥

त्रिमासात्तस्य कल्याणि जग्यते वाक्सरस्वती ।
षण्मासाभ्यासयोगेन महारोगैः प्रभुच्यते ॥ ४२॥

आत्मन्यात्मानमारोप्य कुण्डल्यां यस्तु धारयेत् ।
क्षयरोगादयस्तस्य नश्यन्तीत्यपरे विदुः ॥ ४३॥

जिह्वया वायुमानीय जिह्वामूले निरोधयन् ।

यः पिबेदमृतं विद्वान्सकलं भद्रमश्नुते ॥ ४४॥

आत्मन्यात्मानमिडया समानीय भ्रुवोऽन्तरे ।var भ्रुवोऽन्तरात्
पिबेद्यस्त्रिदशाहारं व्याधिभिः स विमुच्यते ॥ ४५॥

नाडीभ्यां वायुमारोप्य नाभौ वा तुन्दपार्श्वयोः ।
घटिकैकां वहेद्यस्तु व्याधिभिः सोऽभिमुच्यते ॥ ४६॥

मासमेकं त्रिसन्ध्यायां जिह्वयारोप्य मारुतम् ।
पिबेद्यस्त्रिदशाहारं धारयेत्तुन्दमध्यमे ॥ ४७॥

गुल्माष्ठीला प्लीहा चान्ये त्रिद्रोषजनितास्तथा ।
तुन्दमध्यगता रोगाः सर्वे नश्यन्ति तस्य वै ॥ ४८॥

ज्वराः सर्वे विनश्यन्ति विषाणि विविधानि च ।
बहुनोक्तेन किं गार्गि पलितादि च नश्यति ॥ ४९॥

एवं वायुजयोपायः प्राणस्य तु वरानने ।
शक्यमासनमास्थाय समाहितमनास्तथा ॥ ५०॥

करणानि वशीकृत्य विषयेभ्यो बलात्सुधीः । ?? भ्यः
अपानमूर्ध्वमाकृष्य प्रणवेन समाहितः ॥ ५१॥

हस्ताभ्यां बन्धयेत्सम्यक्कर्णादि करणानि च ।
अङ्गुष्ठाभ्यामुमे श्रोत्रे तर्जनीभ्यां च चक्षुषी ॥ ५२॥

नासापुटौ मध्यमाभ्यां प्रच्छाद्य करणानि वै ।
आनन्दानुभवं यावत्तावन्मूर्द्धनि धारयेत् ॥ ५३॥

प्राणः प्रयात्यनेनैव ततस्त्वायुर्विघातकृत् ।
ब्रह्मरन्ध्रे सुषुम्णायां मृणालान्तरसूत्रवत् ॥ ५४॥

नादोत्पत्तिस्त्वनेनैव शुद्धस्फटिकसन्निभा ।
आमूर्ध्नो वर्तते नादो वीणादण्डवदुत्थितः ॥ ५५॥

शङ्खध्वनिनिभस्त्वादौ मध्ये मेघध्वनिर्यथा ।
व्योमरन्ध्रगते नादे गिरिप्रस्त्रवणं यथा ॥ ५६॥

व्योमरन्ध्रगते वायौ चित्ते चात्मनि संस्थिते ।
तदानन्दी भवेद्देही वायुस्तेन जितो भवेत् ॥ ५७॥

योगिनस्त्वपरे ह्यत्र वदन्ति समचेतसः ।
प्राणायामपराः पूता रेचपूरणवर्जिताः ॥ ५८॥

दक्षिणेतरगुल्फेन सीवनीं पीडयेत्शिराम्
अधस्ताद्दण्डयो सूक्ष्मां सव्योपरि च दक्षिणम् ॥ ५९॥ var दण्डवत्सूक्ष्मां
जङ्घोर्वोरन्तरं गार्गि निश्छिद्रं बन्धयेत्दृढम् ।
समग्रीवशिरस्कन्धः समपृष्ठः समोदरः ॥ ६०॥

नेत्राभ्यां दक्षिणं गुल्फं लोकयन्नुपरिस्थितम् ।
धारयन्मनसा सार्धं व्याहरन्प्रणवाक्षरम् ॥ ६१॥

आसने नान्यधीरास्ते द्विजो रहसि नित्यशः ।
क्षत्रियश्च वरारोहे व्याहरन्प्रणवाक्षरम् ॥ ६२॥

आसने नान्यधीरस्ते रहस्येव जितेन्द्रियः ।
वैश्याः शूद्राः स्त्रियश्चान्ये योगाभ्यासरताः नराः ॥ ६३॥

शैवं वा वैष्णवं वाथ व्याहरन्नन्यमेव वा ।
आसने नान्यधीरस्ते दीपं हस्ते विलोकयन् ॥ ६४॥

आयुर्विघातकृत्प्राणस्त्वनेनाग्निकुलं गतः ।
धूमध्वजजयं यावन्नान्यधीरेवमभ्यसेत् ॥ ६५॥

धारणं कुर्वतस्तस्य शक्तिं स्यादिष्टभोजने ।
देहश्च लघुतां याति जठराग्निश्च वर्धते ॥ ६६॥

दृष्टचिह्नस्ततस्तस्मान्मनसारोप्य मारुतम् ।
मन्त्रमुच्चारयन्दीर्घं नाभिमध्ये निरोधयेत् ॥ ६७॥

यावन्मनोलयत्यस्मिन्नाभौ सवितृमण्डले ।
तावत्समभ्यसेद्विद्वान्नियतो नियतासनः ॥ ६८॥

एतेन नाभिमध्यस्थधारणेनैव मारुतः ।
कुण्डलीं याति वह्निश्च दहत्यत्र न संशयः ॥ ६९॥

सन्तप्ता वह्निना तत्र वायुना चालिता स्वयम् ।
प्रसार्य फणभृद्भोगं प्रबोधं याति सा तदा ॥ ७०॥

प्रबुद्धे संसरत्यस्मिन्नाभिमूले तु चक्रिणि ।
ब्रह्मरन्ध्री सुषुम्णायां प्रयाति प्राणसञ्ज्ञकः ॥ ७१॥

सम्प्राप्ते मारुते तस्मिन्सुषुम्णायां वरानने ।
मन्त्रमुच्चार्य मनसा हृन्मध्ये धारयेत्पुनः ॥ ७२॥

हृदयात्कण्ठकूपे च भ्रुवोर्मध्ये च धारयेत् ।
तस्मादारोप्य मनसा साग्निं प्राणमनन्यधीः ॥ ७३॥

धारयेद्व्योम्नि विप्रेन्द्रे व्याहरन्प्रणवाक्षरम् ।
वायुना पूरिते व्योम्नि साङ्गोपाङ्गे कलेवरे ॥ ७४॥

तदात्मा राजते तत्र यथा व्योम्नि विकर्तनः । var भजते
शरीरं विसिसृक्षुश्चेदेवं सम्यक् समाचरन् ॥ ७५॥

एकाक्षरं परं ब्रह्म ध्यायन्प्रणवमीश्वरम् ।
सम्भिद्य मनसा मूर्ध्नि ब्रह्मरन्ध्रं सवायुना ॥ ७६॥

प्राणमुन्मोचयेत्पश्चान्महाप्राणे खमध्यमे॥

देहातीते जगत्प्राणे शून्ये नित्ये ध्रुवे पदे ॥ ७७॥

आकाशे परमानन्दे स्वात्मानं योजयेद्धिया ।
ब्रह्मैवासौ भवेद्गार्गि न पुनर्जन्मभाग्भवेत् ॥ ७८॥

तस्मात्त्वं च वरारोहे नित्यं कर्म समाचार ।
सन्ध्याकालेषु वा नित्यं प्राणसंयमनं कुरु ॥ ७९॥

प्राणायामपराः सर्वे प्राणायामपरायणाः ।
प्राणायामविशुद्धा ये ते यान्ति परमां गतिम् ॥ ८०॥

प्राणायामादृते नान्यत्तारकं नरकादपि ।
संसारार्णवमग्नानां तारकः प्राणसंयमः ॥ ८१॥

तस्मात् त्वं विधिमार्गेण नित्यं कर्म समाचर ।
विधिनोक्तेन मार्गेण प्राणसंयमनं कुरु ॥ ८२॥

नासाग्रे दृक् सदा सम्यक् सव्ये न्यस्येतरं करम् ।
नासाग्रे शशभृद्बिम्बे ज्योत्स्नाजालवितानके ॥ ८३॥

अम्बोमा सहितं शुभ्रं सोमसूर्याग्निलोचनम् ।
पञ्चवक्त्रं महादेवं चन्द्रशेखरमीश्वरम् ॥ ८४॥

नन्दिवाहनसंयुक्तं सर्वदेवसमन्वितम् ।

प्रसन्नं सर्ववरदं ध्यायेत्सर्वायुधं शिवम् ॥ ८५॥

यो वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः ।
अकारमूर्तिरेतेषां रक्ताङ्गी हंसवाहिनी ॥ ८६॥

दण्डहस्ता सती वाला गायत्रीत्यवधार्यताम् ।
उकारमूर्तिरेतेषां कृष्णाङ्गी वृषवाहनी ॥ ८७॥

चक्रहस्ता सती चैव सावित्रीत्यवधार्यताम् ।
मकारमूर्तिरेतेषां श्वेताङ्गी ताक्ष्र्यवाहिनी ॥ ८८॥

शूलानन्दमयी वृद्धा सरस्वत्यवधार्यताम् ।
माहेश्वरीति सा प्राज्ञैः पश्चिमा परिकीर्तिता ॥ ८९॥

सृष्टिस्थित्यन्तकालाद्या मकारोऽप्यन्तकात्मकः ।
अक्षरत्रयमेवैतत्कारणत्रयमिष्यते ॥ ९०॥

त्रयाणां कारणं ब्रह्म सद्रूपं सर्वकारणम् ।
एकाक्षरं परं ज्योतिस्तमाहुः प्रणवं बुधाः ॥ ९१॥

एवं ज्ञात्वा विधानेन प्रणवेन समन्वितम् ।
प्राणायामं ततः कुर्याद्रेचपूरककुम्भकैः ॥ ९२॥

॥ इति श्रीयोगयाज्ञवल्क्ये षष्ठोऽध्यायः ॥

---

॥ अथ सप्तमोऽध्यायः ॥

याज्ञवल्क्य उवाच -
उक्तान्येतानि चत्वारि योगाङ्गानि द्विजोत्तमे ।
प्रत्याहारादि चत्वारि शृणुष्वाभ्यन्तराणि च ॥ १॥

इन्द्रियाणां विचरतां विषयेषु स्वभावतः ।
बलादाहरणं तेषां प्रत्याहारः स उच्यते ॥ २॥

यद्यत्पश्यसि तत्सर्वं पश्येदात्मवदात्मनि ।
प्रत्याहारः स च प्रोक्तो योगविद्भिर्महात्मभिः ॥ ३॥

कर्माणि यानि नित्यानि विहितानि शरीरिणाम् ।
तेषामात्मन्यनुष्ठानं मनसा यद्बहिर्विना ॥ ४॥

प्रत्याहारो भवेत्सोऽपि योगसाधनमुत्तमम् ।
प्रत्याहारः प्रशस्तोऽयं सेवितो योगिभिः सदा ॥ ५॥

अष्टादशसु यद्वायोर्मर्मस्थानेषु धारणम् ।
स्थानात्स्थानात्समाकृष्य प्रत्याहारो निगद्यते ॥ ६॥

अश्विनौ च तथा ब्रूतां गार्गि देवभिषग्वरौ ।
मर्मस्थानानि सिद्ध्यर्थं शरीरे योगमोक्षयोः ॥ ७॥

तानि सर्वाणि वक्ष्यामि यथावच्छ्रुणु सुव्रते ।
पादाङ्गुष्ठौ च गुल्फौ च जङ्घामध्ये तथैव च ॥ ८॥

चित्योर्मूलं च जान्वोश्च मध्ये चोरुद्वयस्य च ।
पायुमूलं ततः पश्चाद्देहमध्यं च मेढ्रकम् ॥ ९॥

नाभिश्च हृदयं गार्गि कण्ठकूपस्तथैव च ।
तालुमूलं च नासाया मूलं चाक्ष्णोश्च मण्डले ॥ १०॥

भ्रुवोर्मध्यं ललाटं च मूर्धा च मुनिसत्तमे ।
मर्मस्थानानि चैतानि मानं तेषां पृथक् श‍ृणु ॥ ११॥

पादान्मानं तु गुल्फस्य सार्धाङ्गुलचतुष्टयम् ।
गुल्फाज्जङ्घस्य मध्यं तु विज्ञेयं तद्दशाङ्गुलम् ॥ १२॥

जङ्घमध्याच्चित्योर्मूलं यत्तदेकादशाङ्गुलम्
चित्योर्मूलाद्वरारोहे जानुः स्यादङ्गुलिद्वयम् ॥ १३॥

जान्वोर्नवाङ्गुलं प्राहुरूरुमध्यं मुनीश्वराः ।
ऊरुमध्यात्तथा गार्गि पायुमूलं नवाङ्गुलम् ॥ १४॥

देहमध्यं तथा पायोर्मूलादर्धाङ्गुलद्वयम् ।
देहमध्यात्तथा मेढ्रं तद्वत्सार्धाङ्गुलद्वयम् ॥ १५॥

मेढ्रान्नभिश्च विज्ञेया गार्गि सार्धदशाङ्गुलम् ।
चतुर्दशाङ्गुलं नाभेर्हृन्मध्यं च वरानने ॥ १६॥

षडङ्गुलं तु हृन्मध्यात्कण्ठकूपं तथैव च ।
कण्ठकूपाच्च जिह्वाया मूलं स्याच्चतुरङ्गुलम् ॥ १७॥

नासामूलं तु जिह्वाया मूलाच्च चतुरङ्गुलम् ।
नेत्रस्थानं तु तन्मूलादर्धाङ्गुलमितीष्यते ॥ १८॥

तस्मादर्धाङ्गुलं विद्धि भ्रुवोरन्तरमात्मनः ।
ललाटाख्यं भ्रुवोर्मध्यादूर्ध्वं स्यादङ्गुलद्वयम् ॥ १९॥

ललाटाद्व्योमसञ्ज्ञं स्यादङ्गुलित्रयमेव हि ।
स्थानेषु एतेषु मनसा वायुमारोप्य धारयेत् ॥ २०॥

स्थानात्स्थानात्समाकृष्य प्रत्याहारं प्रकुर्वतः ।
सर्वे रोगा विनश्यन्ति योगाः सिध्यन्ति तस्य वै ॥ २१॥

वदन्ति योगिनः केचिद्योगेषु कुशला नराः ।
प्रत्याहारं वरारोहे श‍ृणु त्वं तद्वदाम्यहम् ॥ २२॥

सम्पूर्णकुम्भवद्वायुमङ्गुष्ठान्मूर्धमध्यतः ।
धारयेदनिलं बुद्ध्या प्राणायामप्रचोदितः ॥ २३॥

व्योमरन्ध्रात्समाकृष्य ललाटे धारयेत्पुनः ।
ललाटाद्वाउमाकृष्य भ्रुवोर्मध्ये निरोधयेत् ॥ २४॥

भ्रुवोर्मध्यात्समाकृष्य नेत्रमध्ये निरोधयेत् ।
नेत्रात्प्राणं समाकृष्य नासामूले निरोधयेत् ॥ २५॥

नासामूलात्तु जिह्वाया मूले प्राणं निरोधयेत् ।
जिह्वामूलात्समाकृष्य कण्ठमूले निरोधयेत् ॥ २६॥

कण्ठमूलात्तु हृन्मध्ये हृदयात् नाभिमध्यमे ।
नाभिमध्यात्पुनर्मेढ्रे मेढ्राद्वह्न्यालये ततः ॥ २७॥

देहमध्याद्गुदे गार्गि गुदादेवोरुमूलके ।
ऊरुमूलात्तयोर्मध्ये तस्माज्जान्वोर्निरोधयेत् ॥ २८॥

चितिमूले ततस्तस्माज्जङ्घयोर्मध्यमे तथा ।
जङ्घामध्यात्समाकृष्य वायुं गुल्फे निरोधयेत् ॥ २९॥

गुल्फादङ्गुष्ठयोर्गार्गि पादयोस्तन्निरोधयेत्॥

स्थानात्स्थानात्समाकृष्य यस्त्वेवं धारयेत् सुधीः ॥ ३०॥

सर्वपापविशुद्धात्मा जीवेदाचन्द्रतारकम् ।
एतत्तु योगसिद्ध्यर्थमगस्त्येनापि कीर्तितम् ॥ ३१॥

प्रत्याहारेषु सर्वेषु प्रशस्तमिति योगिभिः ।
नाडीभ्यां वायुमापूर्य कुण्डल्याः पार्श्वयोः क्षिपेत् ॥ ३२॥

धारयेद्युगपत्सोऽपि भवरोगाद्विमुच्यते ।
पूर्ववद्वायुमारोप्य हृदयव्योम्नि धारयेत् ॥ ३३॥

सोऽपि याति वरारोहे परमात्मपदं नरः ।
व्याधयः किं पुनस्तस्य बाह्याभ्यन्तरवर्तिनः ॥ ३४॥

नासाभ्यां वायुमारोप्य पूरयित्वोदरस्थितम् ।
भ्रुवोर्मध्याद्दृशोः पश्चात्समारोप्य समाहितः ॥ ३५॥

धारयेत्क्षणमात्रं वा सोऽपि याति परां गतिम् ।
किं पुनर्बहुनोक्तेन नित्यं कर्म समाचरन् ॥ ३६॥

आत्मनः प्राणमारोप्य भ्रुवोर्मध्ये सुषुम्णया ।
यावन्मनोलयत्यस्मिन्स्तावत्संयमनं कुरु ॥ ३७॥

॥ इति श्रीयोगयाज्ञवल्क्ये सप्तमोऽध्यायः ॥

---

॥ अथ अष्टमोऽध्यायः ॥

याज्ञवल्क्य उवाच -
अथेदानीं प्रवक्ष्यामि धारणा पञ्च तत्त्वतः ।
समाहितमनास्त्वं च श‍ृणु गार्गि तपोधने ॥ १॥

यमादिगुणयुक्तस्य मनसः स्थितिरात्मनि ।
धारणेत्युच्यते सद्भिः शास्त्रतात्पर्यवेदिभिः ॥ २॥

अस्मिन्ब्रह्मपुरे गार्गि यदिदं हृदयाम्बुजम् ।
तस्मिन्नेवान्तराकाशे यद्बाह्याकाशधारणम् ॥ ३॥

एषा च धारणेत्युक्ता योगशास्त्रविशारदैः ।
तान्त्रिकैर्योगशास्त्रज्ञैर्विद्वद्भिश्च सुशिक्षितैः ॥ ४॥

धारणाः पञ्चधा प्रोक्तास्ताश्च सर्वाः पृथक् श‍ृणु॥

भूमिरापस्तथा तेजो वायुराकाशमेव च ॥ ५॥

एतेषु पञ्चदेवानां धारणं पञ्चधोच्यते ।

पादादिजानुपर्यन्तं पृथिवीस्थानमुच्यते ॥ ६॥

आजानोः पायुपर्यन्तमपां स्थानं प्रकीर्तितम् ।
आपायोर्हृदयान्तं यद्वह्निस्थानं तदुच्यते ॥ ७॥

आहृन्मध्याद्भ्रुवोर्मध्यं यावद्वायुकुलं स्मृतम् ।
आभ्रूमध्यात्तु मूर्धान्तमाकाशमिति चोच्यते ॥ ८॥

अत्र केचिद्वदन्त्यन्ये योगपण्डितमानिनः ।
आजानोर्नाभिपर्यन्तमपांस्थानमिति द्विजाः ॥ ९॥

नाभिमध्याद्गलान्तं यद्वह्निस्थानं तदुच्यते ।
आगलात्तु ललाटान्तं वायुस्थानमितीरितम् ॥ १०॥

ललाटाद्रन्ध्रपर्यन्तमाकाशस्थानमुच्यते॥

अयुक्तमेतदित्युक्तं शास्त्रतात्पर्यवेदिभिः ॥ ११॥

यदि स्याज्ज्वलनस्थानं देहमध्ये वरानने ।
अयुक्ता कारणे वह्नौ कार्यरूपस्य संस्थितिः ॥ १२॥

कार्यकारणसंयोगे कार्यहानिः कथं भवेत् ।
दृष्टं तत्कार्यरूपेषु मृदात्मकघटादिषु ॥ १३॥

पृथिव्यां धारयेद्गार्गि ब्रह्माणं परमेष्ठिनम् ।
विष्णुमप्स्वनले रुद्रमीश्वरं वायुमण्डले ॥ १४॥

सदाशिवं तथा व्योम्नि धारयेत्सुसमाहितः ।
पृथिव्यां वायुमास्थाय लकारेण समन्वितम् ॥ १५॥

ध्यायन् चतुर्भुजाकारं ब्रह्माणं सृष्टिकारणम् ।
धारयेत्पञ्च घटिकाः पृथिवीजयमाप्नुयात् ॥ १६॥

वारुणे वायुमारोप्य वकारेण समन्वितम् ।
स्मरन्नारायणं सौम्यं चतुर्बाहुं किरीटिनम् ॥ १७॥

शुद्धस्फटिकसङ्काशं पीतवाससमच्युतम् ।
धारयेत्पञ्च घटिकाः सर्वरोगैः प्रमुच्यते ॥ १८॥

वह्नौ चानिलमारोप्य रेफाक्षरसमन्वितम् ।
त्र्यक्षं वरप्रदं रुद्रं तरुणादित्यसन्निभम् ॥ १९॥

भस्मोद्धूलितसर्वाङ्गं सुप्रसन्नमनुस्मरन् ।
धारयेत्पञ्च घटिकाः वह्निनासौ न दह्यते ॥ २० ॥

मारुतं मारुतस्थाने यकारेण समन्वितम् ।
धारयेत्पञ्च घटिकाः वायुवद्व्योमगो भवेत् ॥ २१ ॥

आकाशे वायुमारोप्य हकारोपरि शकरम् ।
बिन्दुरूपं महादेवं व्योमाकारं सदाशिवम् ॥ २२ ॥

शुद्धस्फटिकसङ्काशं बालेन्दुधृतमौलिनम् ।
पञ्चवक्त्रयुतं सौम्यं दशबाहुं त्रिलोचनम् ॥ २३ ॥

सर्वायुधोद्यतकरं सर्वाभरणभूषितम् ।
उमार्धदेहं वरदं सर्वकारणकारणम् ॥ २४ ॥

मनसा चिन्तयनत्तु मुहूर्तमपि धारयेत् ।
स एव मुक्त इत्युक्तस्तान्त्रिकेषु सुशिक्षितैः ॥ २५ ॥

एतदुक्तं भवत्यत्र गार्गि ब्रह्मविदां वरे ।
ब्रह्मादिकार्यरूपाणि स्वे स्वे सम्हृत्य कारणे ॥ २६ ॥

तस्मिन्सदाशिवे प्राणं चित्तं चानीय कारणे ।
युक्तचित्तस्तदात्मानं योजयेत्परमेश्वरे ॥ २७ ॥

अस्मिन्नर्थे वदन्त्यन्ये योगिनो ब्रह्मविद्वराः ।
प्रणवेनैव कार्याणि स्वे स्वे संहृत्य कारणे ॥ २८ ॥

प्रणवस्य तु नादान्ते परमानन्दविग्रहं ।
ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम् ॥ २९ ॥

चेतसा सम्प्रपश्यन्ति सन्तः संसारभेषजं
त्वं तस्मात् प्रणवेनैव प्राणायामैस्त्रिभिस्त्रिभिः ॥ ३० ॥

ब्रह्मादि कार्यरूपाणि स्वे स्वे सम्हृत्य कारणे ।
विशुद्धचेतसा पश्य नादान्ते परमेश्वरम् ॥ ३१ ॥

अस्मिन्नर्थे वदन्त्यन्ये योगिनो ब्रह्मविद्वराः ।
भिषग्वरा वरारोहे योगेषु परिनिष्ठिताः ॥ ३२ ॥

शरीरं तावदेवं तु पञ्चभूतात्मकं खलु ।
तदेतत्तु वरारोहे वातपित्तकफात्मकम् ॥ ३३ ॥

वातात्मकानां सर्वेषां योगेष्वभिरतात्मनाम् ।
प्राणसंयमनेनैव शोषं याति कलेवरम् ॥ ३४॥

पित्तात्मकानां त्वचिरान्न शुष्यति कलेवरम् ।
कफात्मकानां कायश्च सम्पूर्णस्त्वचिराद्भवेत् ॥ ३५॥

धारणं कुर्वतस्त्वाग्नौ सर्वे नश्यन्ति वातजाः ।
पार्थिवांशे जलांशे च धारणं कुर्वतः सदा ॥ ३६॥

नश्यन्ति श्लेष्मजा रोगा वातजाश्चाचिरात्तथा ।
व्योमांशे मारुतांशे च धारणं कुर्वतः सदा ॥ ३७॥

त्रिदोषजनिता रोगा विनश्यन्ति न संशयः ।
अस्मिन्नर्थे तथा ब्रूतामश्विनौ च भिषग्वरौ ॥ ३८॥

प्राणसंयमनेनैव त्रिदोषशमनं नृणाम् ।
तस्मात्त्वं च वरारोहे नित्यं कर्म समाचर ॥ ३९॥

यमादिभिश्च सम्युक्ता विधिवद्धारणां कुरु ॥ ४०॥

॥ इति श्रीयोगयाज्ञवल्क्ये अष्टमोऽध्यायः ॥

---

॥ अथ नवमोऽध्यायः ॥

याज्ञवल्क्य उवाच -
अथ ध्यानं प्रवक्ष्यामि शृणु गार्गि वरानने ।
ध्यानमेव हि जन्तूनां कारणं बन्धमोक्षयोः ॥ १॥

ध्यानमात्मस्वरूपस्य वेदनं मनसा खलु ।
सगुणं निर्गुणं तच्च सगुणं बहुशः स्मृतम् ॥ २॥

पञ्चोत्तमानि तेष्वाहुर्वैदिकानि द्विजोत्तमाः ।
त्रीणि मुख्यतमान्येषामेकमेव हि निर्गुणम् ॥ ३॥

मर्मस्थानानि नाडीनां संस्थानं च पृथक्पृथक् ।
वायूनां स्थानकर्माणि ज्ञात्वा कुर्वात्मवेदनम् ॥ ४॥

एकं ज्योतिर्मयं शुद्धं सर्वगं व्योमवलुदम् ।
अव्यक्तमचलं नित्यमादिमध्यान्तवर्जितम् ॥ ५॥

स्थूलं सूक्ष्ममनाकारमसंस्पृश्यमचाक्षुषम् ।
न रसं न च गन्धाख्यमप्रमेयमनौपमम् ॥ ६॥

आनन्दमजरं नित्यं सदसत्सर्वकारणम् ।
सर्वाधारं जगद्रूपममूर्तमजमव्ययम् ॥ ७॥

अदृश्यं दृश्यमन्तःस्थं बहिस्थं सर्वतोमुखम् ।
सर्वदृक्सर्वतःपादं सर्वस्पृक् सर्वतःशिरः ॥ ८॥

ब्रह्म ब्रह्ममयोऽहं स्यामिति यद्वेदनं भवेत्॥

तदेतन्निर्गुणं ध्यानमिति ब्रह्मविदो विदुः ॥ ९॥

अथवा परमात्मानं परमानन्दविग्रहम् ।
गुरूपदेशाद्विज्ञाय पुरुषं कृष्णपिङ्गलम् ॥ १०॥

ब्रह्म ब्रह्मपुरे चास्मिन्दहराम्बुजमध्यमे॥

अभ्यासात्सम्प्रपश्यन्ति सन्तं संसारभेषजम् ॥ ११॥

हृत्पद्मेऽष्टदलोपेते कन्दमध्यात्समुत्थिते ।
द्वादशाङ्गुलनालेऽस्मिंश्चतुरङ्गुलमुन्मुखे ॥ १२॥

प्राणायामैर्विकासिते केसरान्वितकर्णिके ।
वासुदेवं जगन्नाथं नारायणमजं हरिम् ॥ १३॥

चतुर्भुजमुदाराङ्गं शङ्खचक्रगदाधरम् ।
किरीटकेयूरधरं पद्मपत्रनिभेक्षणम् ॥ १४॥

श्रीवत्सवक्षसं विष्णुं पूर्णचन्द्रनिभाननम् ।
पद्मोदरदलाभोष्ठं सुप्रसन्नं शुचिस्मितम् ॥ १५॥

शुद्धस्फटिकसङ्काशं पीतवाससमच्युतम् ।
पद्मच्छविपदद्वन्द्वं परमात्मानमव्ययम् ॥ १६॥

प्रभाभिर्भासयद्रूपं परितः पुरुषोत्तमम् ।
मनसालोक्य देवेशं सर्वभूतहृदि स्थितम् ॥ १७॥

सोऽहमात्मेति विज्ञानं सगुणं ध्यानमुच्यते ।
हृत्सरोरुहमध्येऽस्मिन्प्रकृत्यात्मककर्णिके ॥ १८॥

अष्टैश्वर्यदलोपेते विद्याकेसरसंयुते ।
ज्ञाननाले बृहत्कन्दे प्राणायामप्रबोधिते ॥ १९॥

विश्वार्चिषं महावह्निं ज्वलन्तं विश्वतोमुखम् ।
वैश्वानरं जगद्योनिं शिखातन्विनमीश्वरम् ॥ २०॥

तापयन्तं स्वकं देहमापादतलमस्तकम् ।
निर्वातदीपवत्तस्मिन्दीपितं हव्यवाहनम् ॥ २१॥

दृष्ट्वा तस्य शिखामध्ये परमात्मानमक्षरम् ।
नीलतोयदमध्यस्थविद्युल्लेखेव भास्वरम् ॥ २२॥

नीवारशूकवद्रूपं पीताभं सर्वकारणम् ।
ज्ञात्वा वैश्वानरं देवं सोऽहमात्मेति या मतिः ॥ २३॥

सगुणेषूत्तमं ह्येतद्ध्यानं योगविदो विदुः ।
वैश्वानरत्वं सम्प्राप्य मुक्तिं तेनैव गच्छति ॥ २४॥

अथवा मण्डले पश्येदादित्यस्य महाद्युतेः ।
आत्मानं सर्वजगतः पुरुषं हेमरूपिणम् ॥ २५॥

हिरण्यश्मश्रुकेशं च हिरण्मयनखं हरिम् ।
कनकाम्बुजवद्वक्त्रं सृष्टिस्थित्यन्तकारणम् ॥ २६॥

पद्मासनस्थितं सौम्यं प्रबुद्धाब्जनिभाननम् ।
पद्मोदरदलाभाक्षं सर्वलोकाभयप्रदम् ॥ २७॥

जानन्तं सर्वदा सर्वमुन्नयन्तं च धार्मिकान् ।
भासयन्तं जगत्सर्वं दृष्ट्वा लोकैकसाक्षिणम् ॥ २८॥

सोऽहमस्मीति या बुद्धिः स च ध्यानेषु शस्यते ।
एष एव तु मोक्षस्य महामार्गस्तपोधने ॥ २९॥

ध्यानेनानेन सौरेण मुक्तिं यास्यन्ति सूरयः ।
भ्रूवोर्मध्येऽन्तरात्मानं भारूपं सर्वकारणम् ॥ ३०॥

स्थाणुवन्मूर्धपर्यन्तं मध्यदेहात्मसमुत्थितम् ।
जगत्कारणमव्यक्तं ज्वलन्तममितौजसम् ॥ ३१॥

मनसालोक्य सोऽहं स्यामित्येतध्यानमुत्तमम् ।
अथवा बद्धपर्यङ्के शितिलीकृतविग्रहे ॥ ३२॥

शिव एव स्वयं भूत्वा नासाग्रारोपितेक्षणः ।
निर्विकारं परं शान्तं परमात्मानमीश्वरम् ॥ ३३॥

भारूपममृतं ध्यायेद्भ्रुवोर्मध्ये वरानने ।
सोऽहमेवेति या बुद्धिः सा च ध्यानेषु शस्यते ॥ ३४॥

अथवाष्टदलोपेते कर्णिकाकेसरान्विते ।
उन्निद्रहृदयाम्भोजे सोममण्डलमध्यमे ॥ ३५॥

स्वात्मानमर्भकाकारं भोक्तृरूपिणमव्ययम् ।
सुधारसं विमुञ्चद्भिः शशिरश्मिभिरावृतम् ॥ ३६॥

षोडशच्छदसंयुक्ताशिरः पद्मादधोमुखात् ।
निर्गतामृतधाराभिः सहस्राभिः समन्ततः ॥ ३७॥

प्लावितं पुरुषं तत्र चिन्तयित्वा समाहितः ।
तेनामृतरसेनैव साङ्गोपाङ्गकलेवरे ॥ ३८॥

अहमेव परं ब्रह्म परमात्माहमव्ययः ।
एवं यद्वेदनं तच्च सगुणं ध्यानमुच्यते ॥ ३९॥

एवं ध्यानामृतं कुर्वन् षण्मासान्मृत्युजिद्भवेत् ।
वत्सरान्मुक्त एव स्याज्जीवन्नेव न संशयः ॥ ४०॥

जीवन्मुक्तस्य न क्वापि दुःखावाप्तिः कथञ्चन ।
किं पुनर्नित्यमुक्तस्य मुक्तिरेव हि दुर्लभा ॥ ४१॥

तस्मात्त्वं च वरारोहे फलं त्यक्त्वेव नित्यशः ।
विधिवत्कर्म कुर्वाणा ध्यानमेव सदा कुरु ॥ ४२॥

अन्यानपि बहून्याहुर्ध्यानानि मुनिसत्तमाः ।
मुख्यान्युक्तानि चैतेभ्यो जघन्यानीतराणि तु ॥ ४३॥

सगुणं गुणहीनं वा विज्ञायात्मानमात्मनि ।
सन्तः समाधिं कुर्वन्ति त्वमप्येवं सदा कुरु ॥ ४४॥

॥ इति श्रीयोगयाज्ञवल्क्ये नवमोऽध्यायः ॥

---

॥ अथ दशमोऽध्यायः ॥

याज्ञवल्क्य उवाच -
समाधिमधुना वक्ष्ये भवपाशविनाशनम् ।
भवपाशनिबद्धस्य यथावच्छ्रोतुमर्हसि ॥ १॥

समाधिः समतावस्था जीवात्मपरमात्मनोः ।
ब्रह्मण्येव स्थितिर्या सा समाधिः प्रत्यगात्मनः ॥ २॥

ध्यायेद्यथा यथात्मानं तत्समाधिस्तथा तथा ।
ध्यायैवात्मनि संस्थाप्यो नान्यथात्मा यथा भवेत् ॥ ३॥

एवमेव तु सर्वत्र यत्प्रपन्नस्तु यो नरः ।
तदात्मा सोऽपि तत्रैव समाधिं समवाप्नुयात् ॥ ४॥

सारित्पतौ निविष्टाम्बु यथाभिन्नतयान्वियात् ।
तथात्माभिन्न एवात्र समाधिं समवाप्नुयात् ॥ ५॥

एतदुक्तं भवत्यत्र गार्गि ब्रह्मविदां वरे ।
कर्मैव विधिवत्कुर्वन्कामसङ्कल्पवर्जितम् ॥ ६॥

वेदान्तेष्वर्थशास्त्रेषु सुशिक्षितमनाः सदा ।
गुरुणा तूपदिष्टार्थं युक्त्युपेतं वरानने ॥ ७॥

विद्वद्भिर्धर्मशास्त्रज्ञैर्विचार्य च पुनः पुनः ।
तस्मिन् सुनिश्चितार्थेषु सुशिक्षितमनाः सदा ॥ ८॥

योगमेवाभ्यसेन्नित्यं जीवात्मपरमात्मनोः ।
ततस्त्वाभ्यन्तरैस्चिह्नैर्बाह्यैर्वा कालसूचकैः ॥ ९॥

विनिश्चित्यात्मनः कालमन्यैर्वा परमार्थवित् ।
निर्भयः सुप्रसन्नात्मा मर्त्यस्तु विजितेन्द्रियः ॥ १०॥

स्वकर्मनिरतः शान्तः सर्वभूतहिते रतः ।
प्रदाय विद्यां पुत्रस्य मन्त्रं च विधिपूर्वकम् ॥ ११॥

संस्कारमात्मनः सर्वमुपदिश्य तदानघे ।
पुण्यक्षेत्रे शुचौ देशे विद्वद्भिश्च समावृते ॥ १२॥

भूमौ कुशान्समास्तीर्य कृष्णाजिनमथापि वा ।
तस्मिन्सुबद्धपर्यङ्को मन्त्रैर्बद्धकलेवरः ॥ १३॥

आसने नान्यधीरास्ते प्राङ्मुखो वाप्युदङ्मुखः ।
नवद्वाराणि संयम्य गार्ग्यस्मिन्ब्रह्मणः पुरे ॥ १४॥

उन्निद्रहृदयाम्भोजे प्राणायामैः प्रबोधिते ।
व्योम्नि तस्मिन्प्रभारूपे स्वरूपे सर्वकारणे ॥ १५॥

मनोवृत्तिं सुसंयम्य परमात्मनि पण्डितः ।
मूर्ध्न्याधायात्मनः प्राणं भ्रुवोर्मध्येऽथवानघे ॥ १६॥

कारणे परमानन्दे आस्थितो योगधारणाम् ।
ओमित्येकाक्षरं बुद्ध्या व्याहरन्सुसमाहितः ॥ १७॥

शरीरं सन्त्यजेद्विद्वानात्मैवाभून्नरोत्तमः ।
यस्मिन्समभ्यसेद्विद्वान्योगेनैवात्मदर्शनम् ॥ १८॥

तदेव संस्मरन्विद्वांस्त्यजेदन्ते कलेवरम् ।
यं यं सम्यक्स्मरन्भावं त्यजत्यन्ते कलेवरम् ॥ १९॥

तं तमेवैत्यसौ भावमिति योगविदो विदुः ।
त्वं चैवं योगमास्थाय ध्यायन्स्वात्मानमात्मनि ॥ २०॥

स्वधर्मनिरता शान्ता त्यजान्ते देहमात्मनः ।
ज्ञानेनैव सहैतेन नित्यकर्माणि कुर्वतः ॥ २१॥

निवृत्तफलसङ्गस्य मुक्तिर्गार्गि करे स्थिता ।
यदुक्तं ब्रह्मणा पूर्वं कर्मयोगसमुच्चयम् ॥ २२॥

तदेतत्कीर्तितं सर्वं साङ्गोपाङ्गं विधानतः ।
त्वं चैव योगमभ्यस्य यमाद्यष्टाङ्गसंयुतम् ॥ २३॥

निर्वाणं पदमासाद्य प्रपञ्चं सम्परित्यज ।

॥ इति श्रीयोगयाज्ञवल्क्ये दशमोऽध्यायः ॥

---

॥ अथ एकादशोऽध्यायः ॥

इत्येवमुक्ता मुनिना याज्ञवल्क्येन धीमता ।
ऋषिमध्ये वरारोहा वाक्यमेतदभाषत ॥ १॥

गार्ग्युवाच -

योगयुक्तो नरः स्वामिन्सन्ध्ययोर्वाथवा सदा ।
वैधं कर्म कथं कुर्यान्निष्कृतिः का त्वकुर्वतः ॥ २॥

इत्युक्तो ब्रह्मवादिन्या ब्रह्मविद्ब्राह्मणस्तदा ।
तां समालोक्य भगवानिदमाह नरोत्तमः ॥ ३॥

याज्ञवल्क्य उवाच -
योगयुक्तमनुष्यस्य सन्ध्ययोर्वाथवा निशि ।
यत्कर्तव्यं वरारोहे योगेन खलु तत्कृतम् ॥ ४॥

आत्माग्निहोत्रवह्नौ तु प्राणायामैर्विवर्धिते ।
विशुद्धचित्तहविषा विध्युक्तं कर्म जुह्वतः ॥ ५॥

निष्कृतिस्तस्य किं बाले कृतकृत्यस्तदा खलु ।
वियोगे सति सम्प्राप्ते जीवात्मपरमात्मनोः ॥ ६॥

विध्युक्तं कर्म कर्तव्यं ब्रह्मविद्भिश्च नित्यशः ।
वियोगकाले योगी च दुःखमित्येव यस्त्यजेत् ॥ ७॥

कर्माणि तस्य निलयः निरयः परिकीर्तितः ।
न देहिनां यतः शक्यं त्यक्तुं कर्माण्यशेषतः ॥ ८॥

तस्मादामरणाद्वैधं कर्तव्यं योगिभिः सदा ।
त्वं चैव मात्यया गार्गि वैधं कर्म समाचर ॥ ९॥

योगेन परमात्मानं यजंस्त्यज कलेवरम् ।
इत्येवमुक्त्वा भगवान् याज्ञवल्क्यस्तपोनिधिः ॥ १०॥

ऋषीनालोक्य नेत्राभ्यां वाक्यमेतदभाषत ।
सन्ध्यामुपास्य विधिवत्पश्चिमां सुसमाहिताः ॥ ११॥

गच्छन्तु साम्प्रतं सर्वे ऋषयः स्वाश्रमं प्रति ।
इत्येवमुक्ता मुनिना मुनयः संश्रितव्रताः ॥ १२॥

विश्वामित्रो वसिष्ठश्च गौतमश्चाङ्गिरास्तथा ।
अगस्त्यो नारदश्चैव वाल्मीकिर्बादरायणः ॥ १३॥

पैङ्गिर्दीर्घतमा व्यासः शौनकश्च तपोधनः ।
भार्गवः काश्यपश्चैव भरद्वाजस्तथैव च ॥ १४॥

तपस्विनस्तथा चान्ये वेदवेदाङ्गवेदिनः ।

याज्ञवल्क्यं सुसम्पूज्य गीर्भिराशीर्भिरुत्तमैः ॥ १५॥

ते यान्ति मुनयः सर्वे स्वाश्रमेषु यथागतम् ।
गतेषु स्वाश्रमेष्वेषु तापसेषु तपोधना ॥ १६॥

प्रणम्य दण्डवद्भूमौ वाक्यमेतदभाषत ।

गार्ग्युवाच -
भगवन्सर्वशास्त्रज्ञ सर्वभूतहिते रत ॥ १७॥

भवमोक्षाय योगीन्द्र भवद्भिर्भाषितं तु यत् ।
यमाद्यष्टाङ्गसहितो योगो मुक्तेस्तु साधनम् ॥ १८॥

तदेतद्विस्मृतं सर्वं सर्वज्ञ तव सन्निधौ ।
योगं ममोपदिश्याद्य साङ्गं सङ्क्षेपरूपतः ॥ १९॥

त्रातुमर्हसि सर्वज्ञ जन्मसंसारसागरात् ।
इत्युक्तो ब्रह्मवादिन्या ब्रह्मविद्ब्राह्मणस्तदा ॥ २०॥

आलोक्य कृपया दीनां स्मितपूर्वमभाषत ।
उत्तिष्ठोत्तिष्ठ किं शेषे भूमौ गार्गि वरानने ॥ २१॥

वक्ष्यामि ते समासेन योगं सम्प्रति तं श्रृणु॥

॥ इति श्रीयोगयाज्ञवल्क्ये एकादशोऽध्यायः ॥

---

॥ अथ द्वादशोऽध्यायः ॥

सव्येन गुल्फेन गुदं निपीड्य सव्येतरेणैव निपीड्य सन्धिम् ।
सव्येतरं न्यस्य करेतरेऽस्मिंशिखां समालोक्य पावकस्य ॥ १॥

आयुर्विघातकृत्प्राणो निरुद्धस्त्वासनेन वै ।
याति गार्गि तदापानात्कुलं वह्नेः शनैः शनैः ॥ २॥

वायुना वातितो वह्निरपानेन शनैः शनैः
ततो ज्वलति सर्वेषां स्वकुले देहमध्यमे ॥ ३॥

प्रातःकाले प्रदोषे च निशीथे च समाहितः
मुहूर्तमभ्यसेदेवं यावत् पञ्चदिनद्वयम् ॥ ४॥

ततस्वात्मनि विप्रेन्द्रे प्रत्ययाश्च पृथक्पृथक् ।

सम्भवन्ति तदा तस्य जितो येन समीरणः ॥ ५॥

शरीरलघुता दीप्तिर्वह्नेर्जठरवर्तिनः ।
नादाभिव्यक्तिरित्येते चिह्नान्यादौ भवन्ति हि ॥ ६॥

अल्पमूत्रपुरीषः स्यात्षण्मासे वत्सरेऽपि वा ।
आसने वाहने पश्चान्न भेतव्यं त्रिवत्सरात् ॥ ७॥

ततोऽनिलं वायुसखेन सार्धं धिया समारोप्य निरोधयेत्तम् ।
ध्यायन्सदा चक्रिणमप्रबुद्धं नाभौ सदा कुण्डलिनीनिविष्टम् ॥ ८॥

शिरां समावेष्ट्य मुखेन मध्यामन्याश्च भोगेन शिरास्तथैव ।
स्वपुच्छमास्येन निगृह्य सम्यक्पथश्च संयम्य मरुद्गणानाम् ॥ ९॥

प्रसुप्तनागेन्द्रवदुच्छ्वसन्ती सदा प्रबुद्धा प्रभया ज्वलन्ती ।
नाभौ सदा तिष्ठति कुण्डली सा तिर्यक्षु देहेषु तथेतरेषु ॥ १०॥

वायुना विहृतवह्निशिखाभिः कन्दमध्यगतनाडीषु संस्थाम् ।
कुण्डलीं दहति यस्त्वहिरूपां संस्मरन्नरवरस्तु स एव ॥ ११॥

सन्तप्ता वह्निना तत्र वायुना च प्रचालिता ।
प्रसार्य फणभृद्भोगं प्रबोधं याति सा तदा ॥ १२॥

बोधं गते चक्रिणि नाभिमध्ये प्राणाः सुसम्भूय कलेवरेऽस्मिन् ।
चरन्ति सर्वे सह वह्निनैव यथा पटे तन्तुगतिस्तथैव ॥ १३॥

जित्वैवं चक्रिणः स्थानं सदा ध्यानपरायणः ।
ततो नयेदपानं तु नाभेरूर्ध्वमिदं स्मरन् ॥ १४॥

वायुर्यथा वायुसखेन सार्धं नाभिं त्वतिक्रम्य गतः शरीरे ।
रोगाश्च नश्यन्ति बलाभिवृद्धिः कान्तिस्तदानीमभवत्प्रबुद्धे ॥ १५॥

ब्रह्मरन्ध्रमुखमत्र वायवः पावकेन सह यान्ति समूह्य ।
केनचिदिह वदामि तवाहं वीक्षणाद् हृदि सुदीपशिखायाः ॥ १६॥

निरोधितः स्याद् हृदि तेन वायुः मध्ये यदा वायुसखेन सार्धम् ।
सहस्रपत्रस्य मुखं प्रविश्य कुर्यात्पुनस्तूर्ध्वमुखं द्विजेन्द्रे ॥ १७॥

प्रबुद्धहृदयाम्भोजे गार्ग्यस्मिन्ब्रह्मणः पुरे ।
बालाकाश्रेणिवद्व्योम्नि विरराज समीरणः ॥ १८॥

हृन्मध्यात्तु सुषुम्नायां संस्थितो हुतभुक्तदा ।
सजलाम्बुदमालासु विद्युल्लेखेव राजते ॥ १९॥

प्रबुद्धहृत्पद्मनि संस्थितेऽग्नौ प्राणे च तस्मिन्विनिवेशिते च ।
चिह्नानि बाह्यानि तथान्तराणि दीपादि दृश्याणि भवन्ति तस्य ॥ २०॥

वायुमुन्नय ततस्तु सवह्निं व्याहरन्प्रणवमत्र सबिन्दुम् ।
बालचन्द्रसदृशे तु ललाटे बालचन्द्रमवलोकय बुद्ध्या ॥ २१॥

सवह्निं बायुमारोप्य भ्रुवोर्मध्ये धिया तदा ।
ध्यायेदनन्यधीः पश्चादन्तरात्मानमन्तरे ॥ २२॥

मध्यमेऽपि हृदये च ललाटे स्थाणुवज्वलति लिङ्गमदृश्यम् ।
अस्ति गार्गि परमार्थमिदं त्वं पश्य पश्य मनसा रुचिरूपम् ॥ २३॥

ललाटमध्ये हृदयाम्बुजे च यः पश्यति ज्ञामयीं प्रभां तु ।
शक्तिं सदा दीपवदुज्वलन्तीं स पश्यति ब्रह्मविदेकदृष्ट्या ॥ २४॥

मनोलयं यदा याति भ्रूमध्ये योगिनां नृणाम् ।
जिह्वामूलेऽमृतस्त्रावो भ्रूमध्ये चात्मदर्शनम् ॥ २५॥

कम्पनं च तथा मूर्ध्नः मनसैवात्मदर्शनम् ।
देवोद्यानानि रम्याणि नक्षत्राणि च चन्द्रमाः ।
ऋषयः सिद्धगन्धर्वाः प्रकाशं यान्ति योगिनाम् ॥ २६॥

भ्रुवोऽन्तरे विष्णुपदे ऋचौ तु मनोलयं यावदियात्प्रबुद्धे ।
तावत्समभ्यस्प पुनः खमध्ये सुखं सदा संस्मर पूर्णरूपम् ॥ २७॥

समीरणे विष्णुपदे निविष्टे जीवे च तस्मिन्नमृते च संस्थे ।
तस्मिन्स्तदा याति मनोलयं चेन्मुक्तेः समीपं तदिति ब्रुवन्ति ॥ २८॥

समीरणे विष्णुपदे निविष्टे विशुद्धबुद्धौ च तदात्मनिष्ठे ।
आनन्दमत्यद्भुतमस्ति सत्यं त्वं गार्गि पश्याद्य विशुद्धबुद्ध्या ॥ २९॥

एवं समभ्यस्य सूदीर्घकालं यमादिभिर्युक्ततनुर्मिताशी ।
आत्मानमासाद्य गुहां प्रविष्टां मुक्तिं व्रज ब्रह्मपुरे पुनस्त्वम् ॥ ३०॥

भूतानि यस्मात्प्रभवन्ति गार्गि येनैव जीवन्ति चराचराणि ।
जातानि यस्मिन् विलयं प्रयान्ति तद्ब्रह्म विद्धीति वदन्ति सर्वे ॥ ३१॥

हृत्पङ्कजे व्योम्नि यदेकरूपं सत्यं सदानन्दमयं सुसूक्ष्मम् ।

तद्ब्रह्म निर्भासमयं गुहायामिति श्रुतिश्चेति समामनन्ति ॥ ३२॥

अणोरणीयान्महतो महीयानात्मा गुहायां निहितोऽस्य जन्तोः ।
तमक्रतुं पश्य विशुद्धबुद्ध्या प्रयाणकाले च विहीनशोकाः ॥ ३३॥

प्रभञ्जनं मूर्ध्निगतं सवह्निं धिया समासाद्य गुरूपदेशात् ।
मूर्धानमुद्भिद्य पुनः खमध्ये प्राणास्त्यजोङ्कारमनुस्मरंस्त्वम् ॥ ३४॥

ईप्सया यदि शरीरविसर्गं ज्ञातुमिच्छसि सखे तव वक्ष्ये ।
व्याहरन्प्रणवमुन्नय मूर्ध्नि भिद्य योजय तमात्मनि कायम् ॥ ३५॥

एतत्पवित्रं परमं योगमष्टाङ्गसंयुतम् ।
ज्ञानं गुह्यतमं पुण्यं कीर्तितं ते वरानने ॥ ३६॥

य इदं श्रणुयान्नित्यं योगाख्यानं नरोत्तमः ।
सर्वपापविनिर्मुक्तः सम्यग्ज्ञानी भविष्यति ॥ ३७॥

यस्त्वेतच्छ्रावयेद्विद्वान्नित्यं भक्तिसमन्वितः ।
एकजन्मकृतं पापं दिनेनैकेन नश्यति ॥ ३८॥

शृणुयाद्यः सकृद्वापि योगाख्यानमिदं नरः ।
अज्ञानजनितं पापं सर्वं तस्य प्रणश्यति ॥ ३९॥

अनुतिष्ठन्ति ये नित्यमात्मज्ञानसमन्वितम् ।
नित्यकर्माणि तान्दृष्ट्वा देवाश्च प्रणमन्ति हि ॥ ४०॥

तस्माज्ज्ञानेन देहान्तं नित्यं कर्म यथाविधि ।
कर्तव्यं देहिभिर्गार्गि योगश्च भवभीरुभिः ॥ ४१॥

इत्येवमुक्त्वा भगवान्रहस्ये रहस्यजं मुक्तिकरं तु तस्याः ।
योगामृतं बन्धविनाशहेतुं समाधिमास्ते रहसि द्विजेन्द्रः ॥ ४२॥

सा तं तु सम्पूज्य मुनिं ब्रुवन्तं विद्यानिधिं ब्रह्मविदां वरिष्ठम् ।
गीर्भीः प्रणामैश्च सतां वरिष्ठं सदा मुदं प्राप वरां विशुद्धाम् ॥ ४३॥

योगं सुसङ्गृह्य तदा रहस्ये रहस्यजं मुक्तिकरं च जन्तोः ।
संसारमुत्सृज्य सदा मुदान्विता वने रहस्यावसथे विवेश ॥ ४४॥

येन प्रपञ्चं परिपूर्णमेतद्येनैव विश्वं प्रतिभाति सर्वम् ।
तं वासुदेवं श्रुतिमूर्ध्नि जातं पश्यन्सदास्ते हृदि मूर्ध्नि चान्वहम् ॥ ४५॥

यदेकमव्यक्तमनन्तमच्युतं प्रपञ्चजन्मादिकृदप्रमेयम् ।
तं वासुदेवं श्रुतिमूर्ध्निजातं पश्यन्सदास्ते हृदि मूर्ध्नि चान्वहम् ॥ ४६॥

॥ इति श्रीयोगयाज्ञवल्क्ये द्वादशोऽध्यायः ॥

॥ समाप्तमिदं योगशास्त्रम् ॥

The Yogayajnavalkya is also called YogayAjnavalkya gita

Encoded by DPD, Sunder Hattangadi, Shankara, Sowmya Ramkumar
Proofread by DPD, Radim Navyan radimnavyan at gmail

*Shri Yoga Yajnyavalkya*
pdf was typeset on March 3, 2019

Please send corrections to *sanskrit@cheerful.com*

# Shri Yoga Kalpadruma

# श्रीयोगकल्पद्रुम

## Sanskrit Document Information

Text title : yogakalpadruma

File name : yogakalpadruma.itx

Category : yoga

Location : doc_yoga

Author : Swami Brahmananda

Transliterated by : Ameya Sakhare amaybsakhare at gmail.com

Proofread by : Ameya Sakhare amaybsakhare at gmail.com, NA

Description/comments : See elaborate Hindi commentary on each verse in the link

Latest update : June 1, 2019

Send corrections to : sanskrit@cheerful.com



June 1, 2019

*sanskritdocuments.org*

# श्रीयोगकल्पद्रुम

ॐ गं गणपतये नमः ।
अथ श्रीयोगकल्पद्रुमप्रारम्भः ।
मङ्गलम् ।
(वंशस्थं वृत्तम्)
प्रणम्य योगीन्द्रहृदङ्घ्रिपङ्कजं
महेश्वरं शेषमुखानृषींस्तथा ।
ब्रवीमि योगागमसारमद्भुतं
सुसाधकाल्केशविबोधसिद्धये ॥ १॥

(बसन्ततिलका वृत्तम्)
हृद्भूभवो निगमबोधसुमूलको द्वि-
स्कन्धः षडुन्नतलतश्च यमादिपर्णः ।
ध्यानादिपुष्पललितश्च विमोक्षसस्यः
सर्वार्थदो जयति योगसुरद्रुमोयम् ॥ २॥

(इन्द्रवंशा वृत्तम्)
आवृत्त्यरागौ पुरुषाण्डजन्मनः
पक्षौ वदन्तीह समाधिवित्तमाः ।
योगाततकाशसुखाधिरोहणं
नूनं तयोर्नान्यतरेण सिध्यति ॥ ३॥

(द्रुतविलम्बितं वृत्तम्)
जननिनाशजरोग्रवनेचरं
त्रिविधतापकुकण्टकसङ्कुलम् ।
उपरमेत तृषोग्रदवानलं
जगदरण्यमवेक्ष्य सुधीरधीः ॥ ४॥

(द्रुतविलम्बितं वृत्तम्)

समपहाय तु दोषदृशाखिलं
विजनदेशगतो गतसाध्वसः ।
समुपकल्प्य शुभासनमात्मनो
दृढमतिः क्रमशस्तु समभ्यसेत् ॥ ५॥

(इन्द्रवंशा वृत्तम्)
ज्ञानं वदन्तीह विमोक्षकारणं
तज्जायते नैव विलोलचेतसि ।
लौल्यं न योगेन विना प्रशाम्यति
तस्मात्तदर्थं हि यतेत साधकः ॥ ६॥

(वंशस्थ वृत्तम्)
हठो लयो मान्त्रिकराज संज्ञितौ
चतुर्विधं योगमबालिशाविदुः ।
त्रयोपि राजोपगता भवन्त्यत-
स्तदर्थमेवेह यतेत कोविदः ॥ ७॥

(वंशस्थं वृत्तम्)
जगुस्तदङ्गाष्टकमुत्तमाशया
यमादिसंज्ञं यमिवर्यसेवितम् ।
समासतस्तस्यफलं च लक्षणं
वदामि वृद्धर्षिमतानुरोधतः ॥ ८॥

(वंशस्थं वृत्तम्)
अहिंसनं सत्यमचौर्यमार्जवं
क्षमा धृतिश्शौचमुपस्थनिग्रहः ।
मिताशनं दीनजनानुकम्पनं
यमा दशैते मुनिवर्यसम्मताः ॥ ९॥

(वंशस्थं वृत्तम्)
जपस्तपो दानमथागमश्रुति-
स्तथास्तिकत्वं व्रतमीश्वरार्चनम् ।
यथाप्तितोषोमतिरप्यपत्रपा
बुधैर्दशैते नियमाः समीरिताः ॥ १०॥

(वंशस्थं वृत्तम्)

स्खलत्यसौ नैव यदा कथञ्चना-
चलाशयोऽहिंसनमुख्यशीलतः ।
तदा तु तज्जानि फलान्युपाश्नुते-
ऽविरोधमुख्यान्यचिरादुदारधीः ॥ ११॥

(इन्द्रवंशा वृत्तम्)
पीठान्यनल्पानि वदन्ति योगिन-
स्तेषां चतुष्कं तु तथोत्तमोत्तमम् ।
तत्रापि यत्स्थैर्यसुखावहं भवे-
तच्चैव योगेप्सुरिहाभ्यसेत्सदा ॥ १२॥

(द्रुतविलम्बितं वृत्तम्)
अनलसत्वमुपस्थबलक्षयो-
ऽनिलनिरोधपटुत्वमनूर्मिता ।
पवनमन्थरताप्युपजायते
स्थिरमतेरिहपीठजयात्किल ॥ १३॥

(वंशस्थं वृत्तम्)
ततोऽनिलायामचतुष्कमभ्यसे-
दहर्निशं रेचकमुख्यसंज्ञकम् ।
क्रियाभिराशुद्धतनुर्मितक्रियः
शनैश्शनैर्देशिकवाक्यचोदितः ॥ १४॥

(वंशस्थं वृत्तम्)
शिराविशुद्धिर्जठरानलोन्नति-
स्तथाक्षदोषापचयोऽगलाघवम् ।
सुशक्तिबोधो मनसश्च योग्यता
विधारणा स्वस्य ततोभिजायते ॥ १५॥

(इन्द्रवंशा वृत्तम्)
भोगोन्मुखाक्षौघनिवर्त्तनं सदा-
ऽसंसर्गतो दोषदृशा च दीर्घया ।
संस्थापनं यच्च मनोनुरोधतो
योगस्य तत्पञ्चममङ्गमीरितम् ॥ १६॥

(वंशस्थं वृत्तम्)

सुरप्रसादो मनसः प्रसन्नता
तपःप्रवृद्धिस्त्वपि दैन्यसंक्षयः ।
द्रुतं प्रवेशश्च तथैव संयमे
जितेन्द्रियस्येह किलोपजायते ॥ १७॥

(वंशस्थं वृत्तम्)
हृदादिदेशेषु विकृष्य सर्वतो
विधारणं यन्मनसोऽस्थिरात्मनः ।
मुहुर्मुहुर्धैर्यमिहावलम्ब्य वै
सुधारणा सा विबुधैरुदीरिता ॥ १८॥

(इन्द्रवंशा वृत्तम्)
वृत्त्येकतानत्वमखण्डितं तु य-
त्तत्रान्यसङ्कल्पविकल्पजालकैः ।
तैलस्य धारेव समाधिगोपुरं
ध्यानं तदेवाहुरदीनचेतसः ॥ १९॥

(इन्द्रवंशा वृत्तम्)
ध्येयस्वरूपोपगतं यदा मनो
विस्मृत्य चात्मानमथावतिष्ठते ।
सङ्कल्पपूगापगतं तमन्तिमं
योगस्य सन्तोऽवयवं प्रचक्षते ॥ २०॥

(इन्द्रवंशा वृत्तम्)
एतत्त्रयं संयममाहुरुत्तमा
योगस्य मुख्यं करणं सुदुर्गमम् ।
सिद्ध्याऽस्य सिद्ध्योघमिहाश्नुतेञ्जसा
योगंविशत्यप्यचिरं महाशयः ॥ २१॥

(इन्द्रवंशा वृत्तम्)
वैराग्यमाश्रित्य परं तथेश्वरा
ध्यानेन विघ्नानखिलाञ्जयेद्यमी ।
संक्षिप्य चेतःपरमात्मसद्मनि
सञ्चिन्तयेदेकमथोत्तमाक्षरम् ॥ २२॥

(इन्द्रवंशा वृत्तम्)

संविश्य योगं परमं तु धीरधी-
रेकत्वमानीय तथात्मचेतसोः ।
प्रोत्सार्य सङ्कल्पविकल्पसञ्चयं
किञ्चित्स्मरेन्नैव ततस्त्वतन्द्रितः ॥ २३॥

(इन्द्रवंशा वृत्तम्)
इत्थं परानन्दपदार्पिताशयो
योगीविलूनाखिलकर्मबन्धनः ।
स्वैरश्चिरं संविचरत्युदारधी-
रत्रैव वाऽमुत्र विमुच्यतेऽथवा ॥ २४॥

(द्रुतविलम्बितं वृत्तम्)
परमयोगरहस्यमितीरितं
परमहंसजनेन समासतः ।
पठति यश्च समाचरतीह वै
पतति जातु स नोग्रभवार्णवे ॥ २५॥

इति श्रीमत्परमहंसस्वामिब्रह्मानन्दविरचितो
योगकल्पद्रुमः सम्पूर्णः ॥

Encoded and proofread by Ameya Sakhare amaybsakhare at gmail.com

---

*Shri Yoga Kalpadruma*
pdf was typeset on June 1, 2019

Please send corrections to *sanskrit@cheerful.com*

******************************************************************
*   yogavi.saya.h transcribed from kaulaj~naananir.naya and other
*  texts, edited pc bagchi, calcutta sanskrit series 3,  1934
*
*  transcribed by Mike Magee
*
*
*  yogavi.saya.h |
*
*
*
*  revision 0: sept. 17, 2008
*
********************************************************************

गुरुश्च गुरुपुत्रश्च ये चान्ये गुरुबान्धवाः।

अन्योषंच क्रमाज्ज्येष्ठास्तेषां पादौ नमाम्यहम्॥ १॥

यद्दशी भावनातितं तं गुरुं प्रणमाम्यहम्।

भ्रान्तश्च भ्रमते लोको निर्भ्रान्तः कृतनिश्चयः॥ २॥

तस्य सिध्यन्ति पुरुषा आदिनाथे व्यवस्थिताः।

कुलजातिसमायुक्तः सुचरित्रगुणान्वितः॥ ३॥

गुरुभक्तियुतो धीमान् स शिष्य इति कथ्यते।

आकुलेनादिनाथेन केजापूपीनवासिना॥ ४॥

कृपयैव परं तत्त्वं मीननाथोऽपि बोधतः।

मीननाथोऽपि सच्छिष्यं प्रत्युवाच समाहितः॥ ५॥

त्वं गुरुस्त्वञ्च शिष्यश्च शिष्यस्य च गुरोरपि।

नानयोरपि भद्रेऽत्र समसिद्धिः प्रजायते॥ ६॥

उमाषङ्करपुत्रोऽहं मीननाथो मुनीश्वरः।

कथयामि परं तत्त्वं कुलाकुलविबोधकम्॥ ७॥

आधारः स्वाधिष्ठानञ्च मणिपूरसनाहतम् ।

विशुद्धिराज्ञा कौलानि षट् चक्राणि शुभानि च ॥ ८ ॥

आधारश्च गुदे तस्थौ स्वाधिष्ठानञ्च लिङ्गके ।

मणिपूरं नाभिगतं हृदये चाप्यनाहतम् ॥ ९ ॥

विशुद्धिः कण्ठदेशे च आज्ञाचक्रं भ्रुवोर्मुखम् ।

चक्रभेदमिति ज्ञात्वा चक्रातीतं निरञ्जनम् ॥ १० ॥

इडा वहति वामे च पिङ्गला वहति दक्शिणे ।

इदापिङ्गलयोर्मध्ये सुषुम्ना सुखरूपिणी ॥ ११ ॥

आधारे लिङ्गनाभौ हृदयसरसिजे तालुमूले ललाटे ।

द्वे पत्र षोडशारे द्विदशदशदले द्वादशार्धे चतुष्के

नासान्ते बालमध्ये डफकठसहिते कण्ठदेशे स्वराणाम्

हं क्शं तत्त्वार्थयुक्तं सकलदलगतं वर्णरूपं नमामि ॥ १२ ॥

प्राणोऽपानः समानश्च उदानो व्यान एव च ।

पञ्चकर्मेन्द्रययुक्तः क्रियाशक्तिसमुद्यताः ॥ १३ ॥

नागः कूर्मश्च कृकरो देवदत्तो धनञ्जयः ।

पञ्चज्ञानेन्द्रियैर्युक्ताः बुद्धिशक्तिसमन्विताः ॥ १४ ॥

पावकश्शक्तिमध्यस्थो नाभिचक्रे रविः स्थितः ।

बन्धमुद्रा कृतास्सर्वे नासाग्रे तु सुलोचनम् ॥ १५ ॥

अकारो वह्निदेशे च उकारो हृदि संस्थितः ।

मकारश्चः भ्रुवोर्मध्ये वचनाच्च निबोधयेत् ॥ १६ ॥

ब्रह्मग्रन्थिरधष्कारे विष्नुग्रन्थिर्हृदि स्थितः।

रुद्रग्रन्थिर्भ्रुवोर्मध्ये विमुच्यन्ते त्रयस्तथा॥ १७॥

अकारो ब्रह्म इत्याहुः उकारो विष्णुरुच्यते।

मकारे च शिवं साक्शाच्छन्तेश्शान्ततरं परम्॥ १८॥

कण्ठसंकोचनं कृत्वा द्वे नाड्यौ स्तम्भयेद्ः दृढम्।

रसनापिड्यमानान्तु षोडशश्चोर्ध्वगामिनि॥ १९॥

त्रिकूटं त्रिहठाचैव गोल्हाटं शिखरं तथा।

त्रिशिखं वज्रमोङ्कार मूर्ध्वनाखं भ्रुवोर्मुखम्॥ २०॥

आकुञ्चयेद्रविश्चैव पश्चान्नाडी प्रवर्तते।

भेदे त्रिहठसंघट्टमुभयोश्शशिदर्शनम्॥ २१॥

प्रणवा गुदनाला च नलिनी सर्पिणी तथा ।

बङ्कनालि क्शाया शौरी कुण्दली कुन्दलाः स्मृताः ॥ २२ ॥

कुण्दलीं चालयेत् प्राणो भेदिते शशिमण्डले ।

सिध्यन्ति वज्रगुम्भानि नव द्वाराणि बन्धयेत् ॥ २३ ॥

सुमनः पावनारूढः स गाढं निर्गुणस्तथा ।

ब्रह्मस्थाननिनादेन शंखिन्यामृतवर्षिणी ॥ २४ ॥

षट्चक्रमण्डलोद्धारं ज्ञानदीपं प्रकाशयेत् ।

सर्वेषां स्नापनं देहे क्रियते देवतार्चनम् ॥ २५ ॥

चन्द्रामृतेन चिद्रुपमीश्वरं स्नाप्य भक्तितः ।

मनःपुष्पं तथा देयमर्चतेत्परमं शिवम् ॥ २६ ॥

आत्मरूपं तमालोक्य ज्ञानरूपं निरामयम्।

दृश्यते देहरूपेण सर्वव्यापी निरञ्जनः॥ २७॥

हंस हंस पदे वाक्यं प्राणिनां देहमाश्रितः।

सम्प्राणापानयोर्ग्रन्थिरूपे॥  त्यभिधीयते॥ २८॥

सहस्रमेकञ्च युतं षट्छतं चैव सर्वदा।

उच्चारपदतो हंसः सोऽहमित्यभिधीयते॥ २९॥

पूर्वभागे मथो लिङ्गं शंखिन्यां चैव पश्चिमम्।

ज्योतिर्लिङ्गं भ्रुवोर्मध्ये रक्तशुक्लात्मकं शिवम्॥ ३०॥

पूर्वपश्चिमदिग्भागे वज्रदण्डे व्यवस्थिते।

द्वौ षष्टिभोगिनी स्थानं पशाल्लिङ्गं प्रकाशयेत्॥ ३१॥

शीताशीतं परं स्थानं मेदोमज्जाभिपूरितम्।

स्रवति ब्रह्मणः स्थानात् सिञ्चते भुवनत्रयम्॥ ३२॥

सर्वव्याधिक्रियाकर्म वातपित्तसमन्वितम्।

दशाष्टदोषरहितं मीननाथेन कथ्यते॥ ३३॥

॥ इति मत्स्येन्द्रनाथविरचितं भक्तिसं सम्पूर्णम् ॥

# ॥ गोरक्षशतकम् १ ॥

ॐ परमगुरवे गोरक्षनाथाय नमः ।

ॐ गोरक्षशतकं वक्ष्ये भवपाशविमुक्तये ।
आत्मबोधकरं पुंसां विवेकद्वारकुञ्चिकाम् ॥ १॥

एतद्विमुक्तिसोपानमेतत्कालस्य वञ्चनम् ।
यद्व्यावृत्तं मनो मोहादासक्तं परमात्मनि ॥ २॥

द्विजसेवितशाखस्य श्रुतिकल्पतरोः फलम् ।
शमनं भवतापस्य योगं भजति सज्जनः ॥ ३॥

आसनं प्राणसंयामः प्रत्याहारोऽथ धारणा ।
ध्यानं समाधिरेतानि योगाङ्गानि भवन्ति षट् ॥ ४॥

आसनानि तु तावन्ति यावत्यो जीवजातयः ।
एतेषामखिलान्भेदान्विजानाति महेश्वरः ॥ ५॥

चतुराशीतिलक्षाणां एकमेकमुदाहृतम् ।
ततः शिवेन पीठानां षोडेशानं शतं कृतम् ॥ ६॥

आसनेभ्यः समस्तेभ्यो द्वयमेव विशिष्यते ।
एकं सिद्धासनं प्रोक्तं द्वितीयं कमलासनम् ॥ ७॥

योनिस्थानकमंघ्रिमूलघटितं कृत्वा दृढं विन्यसे-
न्मेढ्रे पादमथैकमेव नियतं कृत्वा समं विग्रहम् ।
स्थाणुः संयमितेन्द्रियोऽचलदृशा पश्यन्भ्रुवोरन्तरं
एतन्मोक्षकवाटभेदजनकं सिद्धासनं प्रोच्यते ॥ ८॥

वामोरूपरि दक्षिणं हि चरणं संस्थाप्य वामं तथा
दक्षोरूपरि पश्चिमेन विधिना धृत्वा कराभ्यां दृढम् ।
अङ्गुष्ठौ हृदये निधाय चिबुकं नासाग्रमालोकये-
देतद्व्याधिविकारहारि यमिनां पद्मासनं प्रोच्यते ॥ ९॥

आधारं प्रथमं चक्रं स्वाधिष्ठानं द्वितीयकम् ।
योनिस्थानं द्वयोर्मध्ये कामरूपं निगद्यते ॥ १०॥

आधाराख्ये गुदस्थाने पङ्कजं यच्चतुर्दलम् ।
तन्मध्ये प्रोच्यते योनिः कामाख्या सिद्धवन्दिता ॥ ११॥

योनिमध्ये महालिङ्गं पश्चिमाभिमुखं स्थितम् ।
मस्तके मणिवद्भिन्नं यो जानाति स योगवित् ॥ १२॥

तप्तचामीकराभासं तडिल्लेखेव विस्फुरत् ।
चतुरस्त्रं पुरं वह्नेरधोमेढ्रात्प्रितिष्ठितम् ॥ १३॥

स्वशब्देन भवेत्प्राणः स्वाधिष्ठानं तदाश्रयः ।
स्वाधिष्ठानाख्यया तस्मान्मेढ्रवाभिधीयते ॥ १४॥

तन्तुना मणिवत्प्रोतो यत्र कन्दः सुषुम्णया ।
तन्नाभिमण्डलं चक्रं प्रोच्यते मणिपूरकम् ॥ १५॥

ऊर्ध्वं मेढ्रादधो नाभेः कन्दयोनिः स्वगाण्डवत् ।
तत्र नाड्यः समुत्पन्नाः सहस्राणि द्विसप्ततिः ॥ १६॥

तेषु नाडिसहस्त्रेषु द्विसप्ततिरुदाहृताः ।
प्राधान्यात्प्राणवाहिन्यो भूयस्तत्र दश स्मृताः ॥ १७॥

इडा च पिङ्गला चैव सुषुम्णा च तृतीयका ।
गान्धारी हस्तिजिह्वा च पूषा चैव यशस्विनी ॥ १८॥

अलम्बुषा कुहूश्चैव शङ्खिनी दशमी स्मृता ।
एतन्नाडिमयं चक्रं ज्ञातव्यं योगिभिः सदा ॥ १९॥

इडा वामे स्थिता भागे पिङ्गला दक्षिणे तथा ।
सुषुम्णा मध्यदेशे तु गान्धारी वामचक्षुषि ॥ २०॥

दक्षिणे हस्तिजिह्वा च पूषा कर्णे च दक्षिणे ।
यशस्विनी वामकर्णे चासने वाप्यलम्बुषा ॥ २१॥

कूहुश्च लिङ्गदेशे तु मूलस्थाने च शङ्खिनी ।
एवं द्वारमुपाश्रित्य तिष्ठन्ति दश नाडिकाः ॥ २२॥

सततं प्राणवाहिन्यः सोमसूर्याग्निदेवताः ।
इडापिङ्गलासुषुम्णा च तिस्रो नाड्य उदाहृताः ॥ २३॥

प्राणापानौ समानश्च ह्युदानो व्यान एव च ।
नागः कूर्मश्च कृकरो देवदत्तो धनञ्जयः ॥ २४॥

नागाद्याः पञ्च विख्याताः प्राणाद्याः पञ्च वायवः ।
एते नाडिसहस्त्रेषु वर्तन्ते जीवरूपिणः ॥ २५॥

प्राणापानवशो जीवो ह्यधश्चोर्ध्वं च धावति ।
वामदक्षिणमार्गेण चञ्चलत्वान्न दृश्यते ॥ २६॥

आक्षिप्तो भुवि दण्डेन यथोच्चलति कन्दुकः ।
प्राणापानसमाक्षिप्तस्तथा जीवोऽनुकृष्यते ॥ २७॥

रज्जुबद्धो यथा श्येनो गतोऽप्याकृष्यते ।

गुणबद्धस्तथा जीवः प्राणापानेन कृष्यते ॥ २८॥

अपानः कर्षति प्राणः प्राणोऽपानं च कर्षति ।
ऊर्ध्वाधः संस्थितावेतौ यो जानाति स योगवित् ॥ २९॥

कन्दोर्ध्वे कुण्डलीशक्तिरष्टधा कुण्डलीकृता ।
ब्रह्मद्वारमुखं नित्यं मुखेनावृत्य तिष्ठति ॥ ३०॥

प्रबुद्धा वह्नियोगेन मनसा मारुता हता ।
प्रजीवगुणमादाय व्रजत्यूर्ध्वं सुषुम्णया ॥ ३१॥

महामुद्रां नमोमुद्रामुड्डियानं जलन्धरम् ।
मूलबन्धं च यो वेत्ति स योगी सिद्धिभाजनम् ॥ ३२॥

वक्षोन्यस्तहनुर्निपीड्य सुचिरं योनिं च वामांघ्रिणा
हस्ताभ्यामवधारितं प्रसरितं पादं तथा दक्षिणम् ।
आपूर्य श्वसनेन कुक्षियुगलं बद्ध्वा शनै रेचयेद्
एषा पातकनाशिनी सुमहती मुद्रा नृणां प्रोच्यते ॥ ३३॥

कपालकुहरे जिह्वा प्रविष्टा विपरीतगा ।
भ्रुवोरन्तर्गता दृष्टिर्मुद्रा भवति खेचरी ॥ ३४॥

ऊर्ध्वं मेढ्रादधो नाभेरुड्डियानं प्रचक्षते ।
उड्डियानजयो बन्धो मृत्युमातङ्गकेसरी ॥ ३५॥

जालन्धरे कृते बन्धे कण्ठसङ्कोचलक्षणे ।
न पीयूषं पतत्यग्नौ न च वायुः प्रकुप्यति ॥ ३६॥

पार्ष्णिभागेन सम्पीड्य योनिमाकुञ्चयेद्गुदम् ।
अपानमूर्ध्वमाकृष्य मूलबन्धो निगद्यते ॥ ३७॥

यतः कालभयात् ब्रह्मा प्राणायामपरायणः ।
योगिनो मुनयश्चैव ततः प्राणं निबन्धयेत् ॥ ३८॥

चले वाते चलं सर्वं निश्चले निश्चलं भवेत् ।
योगी स्थाणुत्वमाप्नोति ततो वायुं निबन्धयेत् ॥ ३९॥

षट्त्रिंशदङ्गुलं हंसः प्रयाणं कुरुते बहिः ।
वामदक्षिणमार्गेण ततः प्राणोऽभिधीयते ॥ ४०॥

बद्धपद्मासनो योगी नमस्कृत्य गुरुं शिवम् ।
नासाग्रदृष्टिरेकाकी प्राणायामं समभ्यसेत् ॥ ४१॥

प्राणो देहस्थितो वायुरायामस्तन्निबन्धनम् ।
एकश्वासमयी मात्रा तद्योगो गगनायते ॥ ४२॥

बद्धपद्मासनो योगी प्राणं चन्द्रेण पूरयेत् ।
धारयित्वा यथाशक्ति भूयः सूर्येण रेचयेत् ॥ ४३॥

अमृतोदधिसङ्काशं क्षीरोदधवलप्रभम् ।
ध्यात्वा चन्द्रमयं बिम्बं प्राणायामे सुखी भवेत् ॥ ४४॥

प्राणं सूर्येण चाकृष्य पूरयेदुदरं शनैः ।
कुम्भयित्वा विधानेन भूयश्चन्द्रेण रेचयेत् ॥ ४५॥

प्रज्वलज्ज्वलन ज्वाला पुञ्जमादित्यमण्डलम् ।
ध्यात्वा नाभिस्थितं योगी प्राणायामे सुखी भवेत् ॥ ४६॥

रेचकः पूरकश्चैव कुम्भकः प्रणवात्मकः ।
प्राणायामो भवेत्त्रेधा मात्रा द्वादशसंयुतः ॥ ४७॥

द्वादशाधमके मात्रा मध्यमे द्विगुणास्ततः ।
उत्तमे त्रिगुणा मात्राः प्राणायामस्य निर्णयः ॥ ४८॥

अधमे च घनो घर्मः कम्पो भवति मध्यमे ।
उत्तिष्ठत्युत्तमे योगी बद्धपद्मासनो मुहुः ॥ ४९॥

अङ्गानां मर्दनं शस्तं श्रमसंजातवारिणा ।
कट्वम्ललवणत्यागी क्षीरभोजनमाचरेत् ॥ ५०॥

मन्दं मन्दं पिबेद्वायुं मन्दं मन्दं वियोजयेत् ।
नाधिकं स्तम्भयेद्वायुं न च शीघ्रं विमोचयेत् ॥ ५१॥

ऊर्ध्वमाकृष्य चापानं वातं प्राणे नियोजयेत् ।
मूर्धानं नीयते शक्त्या सर्वपापैः प्रमुच्यते ॥ ५२॥

प्राणायामो भवत्येवं पातकेन्धनपातकः ।
एनोम्बुधिमहासेतुः प्रोच्यते योगिभिः सदा ॥ ५३॥

आसनेन रुजो हन्ति प्राणायामेन पातकम् ।
विकारं मानसं योगी प्रत्याहारेण सर्वदा ॥ ५४॥

चन्द्रामृतमयीं धारां प्रत्याहारति भास्करः ।
तत्प्रत्याहरणं तस्य प्रत्याहारः स उच्यते ॥ ५५॥

एका स्त्री भुज्यते द्वाभ्यामागता सोममण्डलात् ।
तृतीयो यो भवेत्ताभ्यां स भवत्यजरामरः ॥ ५६॥

नाभिदेशे भवत्येको भास्करो दहनात्मकः ।
अमृतात्मा स्थितो नित्यं तालुमूले च चन्द्रमाः ॥ ५७॥

वर्षत्यधोमुखश्चन्द्रो ग्रसत्यूर्ध्वमुखो रविः ।
ज्ञातव्यं करणं तत्र येन पीयूषमाप्यते ॥ ५८॥

ऊर्ध्वनाभिरधस्तालु ऊर्ध्वभानुरधः शशी ।
करणं विपरीताख्यं गुरुवक्त्रेण लभ्यते ॥ ५९॥

त्रिधा बद्धो वृषो यत्र रौरवीति महास्वनम् ।
अनाहतं च तच् चक्रं हृदये योगिनो विदुः ॥ ६०॥

अनाहतमतिक्रम्य चाक्रम्य मणिपूरकम् ।
प्राप्ते प्राणं महापद्मं योगित्वममृतायते ॥ ६१॥

विशब्दः संस्मृतो हंसो निर्मलः शुद्ध उच्यते ।
अतः कण्ठे विशुद्धाख्ये चक्रं चक्रविदो विदुः ॥ ६२॥

विशुद्धे परमे चक्रे धृत्वा सोमकलाजलम् ।
मासेन न क्षयं याति वञ्चयित्वा मुखं रवेः ॥ ६३॥

सम्पीड्य रसनाग्रेण राजदन्तबिलं महत् ।
ध्यात्वामृतमयीं देवीं षण्मासेन कविर्भवेत् ॥ ६४॥

अमृतापूर्णदेहस्य योगिनो द्वित्रिवत्सरात् ।
ऊर्ध्वं प्रवर्तते रेतोऽप्यणिमादिगुणोदयः ॥ ६५॥

इन्धनानि यथा वह्निस्तैलवर्ति च दीपकः ।
तथा सोमकलापूर्णं देही देहं न मुञ्चति ॥ ६६॥

आसनेन समायुक्तः प्राणायामेन संयुतः ।
प्रत्याहारेण संयुक्तो धारणां च समभ्यसेत् ॥ ६७॥

हृदये पञ्चभूतानां धारणाश्च पृथक् पृथक् ।
मनसो निश्चलत्वेन धारणा च विधीयते ॥ ६८॥

या पृथ्वी हरितालदेशरुचिरा पीता लकारान्विता
संयुक्ता कमलासनेन हि चतुष्कोणा हृदि स्थायिनी ।
प्राणं तत्र विनीय पञ्चघटिकाश्चित्तान्वितं धारयेद्
एषा स्तम्भकरी सदा क्षितिजयं कुर्याद्ध्रुवो धारणा ॥ ६९॥

अर्धेन्दुप्रतिमं च कुन्दधवलं कण्ठेऽम्बुतत्त्वं स्थितं
यत्पीयूषवकारबीजसहितं युक्तं सदा विष्णुना ।
प्राणं तत्र विनीय पञ्चघटिकाश्चित्तान्वितं धारयेद्
एषा दुर्वहकालकूटजरणा स्याद्वारिणी धारणा ॥ ७०॥

यत्तालस्थितमिन्द्रगोपसदृशं तत्त्वं त्रिकोणोज्ज्वलं

तेजोरेफमयं प्रवालरुचिरं रुद्रेण यत्सङ्गतम् ।
प्राणं तत्र विनीय पञ्चघटिकाश्चित्तान्वितं धारये
एषा वह्निजयं सदा विदधते वैश्वानरी धारणा ॥ ७१॥

यद्भिन्नाञ्जनपुञ्जसान्निभमिदं तत्त्वं भ्रुवोरन्तरे
वृत्तं वायुमयं यकारसहितं यत्रेश्वरो देवता ।
प्राणं तत्र विनीय पञ्चघटिकाश्चित्तान्वितं धारयेद्
एषा खे गमनं करोति यमिनां स्याद्वायवी धारणा ॥ ७२॥

आकाशं सुविशुद्धवारिसदृशं यद्ब्रह्मरन्ध्रे स्थितं
तत्राद्येन सदाशिवेन सहितं शान्तं हकाराक्षरम् ।
प्राणं तत्र विनीय पञ्चघटिकाश्चित्तान्वितं धारयेद्
एषा मोक्षकवाटपाटनपटुः प्रोक्ता नभोधारणा ॥ ७३॥

स्तम्भनी द्रावणी चैव दहनी भ्रामणी तथा ।
शोषणी च भवन्त्येवं भूतानां पञ्चधारणाः ॥ ७४॥

कर्मणा मनसा वाचा धारणाः पञ्च दुर्लभाः ।
विधाय सततं योगी सर्वपापैः प्रमुच्यते ॥ ७५॥

सर्वं चिन्तासमावर्ति योगिनो हृदि वर्तते ।
यत्तत्त्वे निश्चितं चेतस्तत्तु ध्यानं प्रचक्षते ॥ ७६॥

द्विधा भवति तद्ध्यानं सगुणं निर्गुणं तथा ।
सगुणं वर्णभेदेन निर्गुणं केवलं विदुः ॥ ७७॥

आधारं प्रथमं चक्रं तप्तकाञ्चनसन्निभम् ।
नासाग्रे दृष्टिमादाय ध्यात्वा मुञ्चति किल्बिषम् ॥ ७८॥

स्वाधिष्ठानं द्वितीयं तु सन्माणिक्यसुशोभनम् ।
नासाग्रे दृष्टिमादाय ध्यात्वा मुञ्चति पातकम् ॥ ७९॥

तरुणादित्यसंकाशं चक्रं च मणिपूरकम् ।
नासाग्रे दृष्टिमादाय ध्यात्वा संक्षोभयेज्जगत् ॥ ८०॥

[verse missing]
विद्युत्प्रभावं हृत्पद्मे प्राणायामविभेदनैः ।
नासाग्रे दृष्टिमादाय ध्यात्वा ब्रह्ममयो भवेत् ॥ ८२॥

सन्ततं घण्टिकामध्ये विशुद्धं चामृतोद्भवम् ।
नासाग्रे दृष्टिमादाय ध्यात्वा ब्रह्ममयो भवेत् ॥ ८३॥

भ्रुवोर्मध्ये स्थितं देवं स्निग्धमौक्तिकसन्निभम् ।
नासाग्रे दृष्टिमादाय ध्यात्वाऽनन्दमयो भवेत् ॥ ८४॥

निर्गुणं च शिवं शान्तं गगने विश्वतोमुखम् ।
नासाग्रे दृष्टिमादाय ध्यात्वा दुःखाद्विमुच्यते ॥ ८५॥

गुदं मेढ्रं च नाभिं च हृत्पद्मे च तदूर्ध्वतः ।
घण्टिकां लम्पिकास्थानं भ्रूमध्ये परमेश्वरम् ॥ ८६ ॥

निर्मलं गगनाकारं मरीचिजलसन्निभम् ।
आत्मानं सर्वगं ध्यात्वा योगी योगमवाप्नुयात् ॥ ८७॥

कथितानि यथैतानि ध्यानस्थानानि योगिनाम् ।
उपाधितत्त्वयुक्तानि कुर्वन्त्यष्टगुणोदयम् ॥ ८८॥

उपाधिश्च तथा तत्त्वं द्वयमेवमुदाहृतम् ।
उपाधिः प्रोच्यते वर्णस्तत्त्वमात्माभिधीयते ॥ ८९॥

उपाधिरन्यथाज्ञानं तत्त्वं संस्थितमन्यथा ।
समस्तोपाधिविध्वंसि सदाभ्यासेन योगिनाम् ॥ ९०॥

आत्मवर्णेन भेदेन दृश्यते स्फाटिको मणिः ।
मुक्तो यः शक्तिभेदेन सोऽयमात्मा प्रशस्यते ॥ ९१॥

निरातङ्कं निरालम्बं निष्प्रपञ्चं निराश्रयम् ।
निरामयं निराकारं तत्त्वं तत्त्वविदो विदुः ॥ ९२॥

शब्दाद्याः पञ्च या मात्रा यावत् कर्णादिषु स्मृताः ।
तावदेव स्मृतं ध्यानं तत्समाधिरतः परम् ॥ ९३॥

यदा संक्षीयते प्राणो मानसं च विलीयते ।
तदा समरसैकत्वं समाधिरभिधीयते ॥ ९४॥

[verse missing]
धारणाः पञ्चनाड्यस्तु ध्यानं च षष्ठिनाडिकाः ।
दिनद्वादशकेनैव समाधिः प्राणसंयमः ॥ ९६॥

न गन्धं न रसं रूपं न स्पर्शं न च निःस्वनम् ।
आत्मानं न परं वेत्ति योगी युक्तः समाधिना ॥ ९७॥

खाद्यते न च कालेन बाध्यते न च कर्मणा ।
साध्यते न च केनापि योगी युक्तः समाधिना ॥ ९८॥

निर्मलं निश्चलं नित्यं निष्क्रियं निर्गुणं महत् ।
व्योमविज्ञानमानन्दं ब्रह्म ब्रह्मविदो विदुः ॥ ९९॥

दुग्धे क्षीरं धृते सर्पिरग्नौ वह्निरिवार्पितः ।

अद्वयत्वं व्रजेन्नित्यं योगवित्परमे पदे ॥ १००॥

भवभयवने वह्निर्मुक्तिसोपानमार्गतः ।
अद्वयत्वं व्रजेन्नित्यं योगवित्परमे पदे ॥ १०१॥

॥ इति श्री गोरक्षनाथप्रणीतः गोरक्षशतकं समाप्तम् ॥

http://yogaclassics.org/ Swami Kuvalayananda and S. A.Shuklas

Proofread by DPD

.. GorakShashatakam 1 ..
was typeset on August 2, 2016

*********************************************************************************
*********
* bhuuta"suddhitantram
* Transcribed by the staff of Muktabodha under the supervision of Mark S.G. Dyczkowski
*  from the edition by Chatterjee published in Calcutta end of 19th century.
*  Script Bengali
* revision 0 January 28, 2007
* Velthius transliteration
*********************************************************************************
*********************

भूतशुद्धितन्त्रे

प्रथमः पटलः

श्रीदेवी उवाच

देव देव महादेव साम्प्रतं कथय प्रभो ।

भूतशुद्धिं देहशुद्धिं प्राणायामं ततः परम् ॥ १ ॥

क्रमेण कथ्यतां देव शूलपाणे पिणाकधृक् ।

मन्त्रं यन्त्रं महादेव येन शुध्यति भूतले ॥ २ ॥

श्री-ईश्वर उवाच

कथयामि वरारोहे खञ्जनाक्षि शुचिस्मिते ।

तत्त्वत्रयं प्रवक्ष्यामि गुह्याद् गुह्यतरं महत् ॥ ३ ॥

तत्त्वत्रयं विना देवि सिद्धिविद्यां जपेत् तु यः ।

तस्य सर्वार्थहानिः स्याज्जपं च विफलं प्रिये ॥ ४ ॥

भूतशुद्धिं महेशानि न्यासं परमदुर्लभम् ।

प्राणायामं ततः कुर्यात् तत्त्वत्रयमिदं स्मृतम् ॥ ५ ॥

सर्वं कुर्यान्महेशानि मातृकाक्षरसंयुतम् ।

अकारादिक्षकारान्तां मातृकाक्षररूपिणीम् ॥ ६ ॥

वैदिकं तान्त्रिकं स्नानं कृत्वा सन्ध्यामुपाश्रयेत् ।

आगत्य देवदेवेशि  यागमण्डलसनीधिम् ॥ ७ ॥

अन्तःस्नानं ततः कृत्वा अन्तःसन्ध्यामुपाश्रयेत् ।

अन्तःस्नानं च सन्ध्यां च कथयामि शृणु प्रिये  ॥ ८ ॥

गुरुध्यानं प्रथमतस्ततः स्नानं समाचरेत् ।

प्रणवेन महेशानि  जीवं धृत्वा शुचिस्मिते ॥ ९ ॥

मूलाधारात् समाकृष्य द्वादशार्णं नयेत् सुधीः ।

स्नायाच्च विमले तीर्थे पुष्करे हृदयान्विते ॥ १० ॥

मूलाधारात् महेशानि सह स्रदलमानयेत् ।

सङ्गं परशिवे कृत्वा आनन्द उपजायते ॥ ११ ॥

तेनानन्देन देवेशि स्नायाज्जीवमनाहते ।

ततस्तु परमेशानि अजपां प्राणरूपिणीम् ॥ १२ ॥

अष्टोत्तरशतं जप्त्वा स्नातो भवति पार्वति ।

अन्तःसन्ध्यां महेशानि कुरु यत्नेन पार्वति ॥ १३ ॥

शिवशक्तिसमायोगो यस्मिन् काले प्रजायते ।

सा सन्ध्या कुलसाधूनां समाधिस्थः प्रतीयते ॥ १४ ॥

एवं तु ते महेशानि सन्ध्यापूतो भवेद् ध्रुवम् ।

श्रीदेवी उवाच

अजपां परमेशान कथ्यतां मे दयानिधे ॥ १५ ॥

श्री-ईशवर उवाच

शृणु वक्ष्यामि देविशि  गुह्याद् गुह्यतरं प्रिये ।

ध्यानमस्याः प्रवक्ष्यामि यथा ध्यात्वा जपेन्नरः ॥ १६ ॥

हंसं नित्यमनन्तमक्षयगुणं स्वाभावतो निर्गता ।

यान्ती स्वाश्रयमर्ककोटिरुचिरा ध्येया जगन्मोहिनी
इति ध्यानं महेशानि कृत्वा समारभेत् जपम् ।

षट्चक्रं मध्यगं कृत्वा अजपां परमाक्षराम् ॥ १७ ॥

शिवबीजं समुद्धृत्य भृगुबीजं ततः परम् ।

बिन्द्वर्द्धं चन्द्रसंयुक्तं कुरु यत्नेन सुन्दरि  ॥ १८ ॥

एषा विद्या वरारोहे  चातुर्वर्ण्येषु शस्यते ।

एतज्जपं विना देवि भूतशुद्धिश्च निष्फला ॥ १९ ॥

तस्मादादौ जपेद् विद्यामजपां प्राणरूपिणीम् ।

अष्टोत्तरशतं जप्त्वा भूतशुद्धिं समाचरेत् ॥ २० ॥

षट्चक्रदलसंस्थाने यानि वर्णानि पार्वति ।

तानि सर्वाणि देवेशि जीवं संन्यस्य पार्वति ॥ २१ ॥

भूतशुद्धिं महेशानि यत्नतः समुपास्महे ।

मूलाधारान्महेशानि मूलपद्मं शुचिस्मिते ॥ २२ ॥

चतुर्दलयुतं मूलं दशवर्णेन संयुतम् ।

रक्तवर्णं सदा सेव्यं योगिभिः परमेश्वरि ॥ २३ ॥

त्रिकोणं सुन्दरं शुद्धं पृथ्वीबीजं तु मध्यगम् ।

तन्मध्ये भावयेद् देवं शिवं श्यामलसुन्दरम् ॥ २४ ॥

अत्र कुण्डलीनी देवि परं प्रकृतिरूपिणी।

शिवं वेष्ट्य महेशानि सर्वदा तत्र तिष्ठति॥ २५॥

प्रसुप्तभुजगाकारं विद्युत्कोटिनिभां पराम्।

ब्रह्मविष्णुस्तुतां देवीं कुण्डलीं ब्रह्मरूपिणीम्॥ २६॥

मूलाधारे मनो देवि विन्यस्य भावयेत् सदा।

चतुर्दलयुतं वर्णं तारणं विघ्ननाशनम्॥ २७॥

बिन्द्वर्धसंयुतं कृत्वा दशधा प्रजपेत् ततः।

अजपानां महेशानि चतुर्दलगतं कुरु॥ २८॥

स्वाधिष्ठाने ततो नीत्वा पुष्पहंससमन्वितम्।

तत्पुरीं च महेशानि नीरेण परिपूरितम्॥ २९॥

मूलाधारं यथा पृथ्व्या शोभते परमेश्वरि ।

नीरेण शोभितं देवि  स्वाधिष्ठानं शुचिस्मिते ॥ ३० ॥

षडङ्गविद्युदाधारं षडक्षरसमन्वितम् ।

व - भ - म - य - र - लैर्युक्तं कुन्दपुष्पसमन्वितम् ॥ ३१ ॥

स्वाधिष्ठानस्थितं देवि शिवं सर्वज्ञभावनम् ।

मूलाधारात् समुत्थाप्य कुण्डलीं ब्रह्मरूपिणीम् ॥ ३२ ॥

नीत्वा मणिपुरं देवि  तद्वर्णं जपमाचरेत् ।

बिन्द्वर्धसंयुतं कृत्वा शोभितं शिवमर्चयेत् ॥ ३३ ॥

तत्रैव परमेशानि  षडक्षरजपं कुरु ।

षट्पापं नाशयेद् देवि  तत्क्षणात् परमेश्वरि  ।

षड्दलं षड्गुणं देवि  गुदं च चतुरङ्गुलम् ॥ ३४ ॥

॥ इति श्रीभूतशुद्धितन्त्रे हरगौरीसंवादे प्रथमः पटलः ॥ १ ॥

अथ द्वितीयः पटलः

ततस्तु प्रमेशानि  मणिपूरं विभिद्यते ।

वायुं च तत्र वै नीत्वा मनसा परमेश्वरि ॥ १ ॥

समानं संयुतं कुर्यादपानं परमेश्वरि  ।

ततो ब्रह्मनदीं भित्त्वा वायुर्मणिपुरं ययौ ॥ २ ॥

तत्रस्थं शिवलिङ्गं तु नीलनीरदसन्निभम् ।

तत्पात्रं कृष्णवर्णं च अक्षरं कृष्णरूपकम् ॥ ३ ॥

तन्मध्यस्थं महादेवं सर्वदेवादिकारणम् ।

मणिपूरं महेशानि  महामरकतप्रभम् ॥ ४ ॥

शिवं सम्भाव्य देवेशि  दशवर्णं मनुं जपेत् ।

डकारादिककारान्तं बिन्द्वर्धसंयुतं कुरु ॥ ५ ॥

दशपत्रस्थितं वर्णं पूर्वादिक्रमतो जपेत् ।

दशपत्रं कृष्णवर्णं अक्षरं कृष्णरूपकम् ॥ ६ ॥

तन्मध्यस्थं महादेवं सर्वदेवादिकारणम् ।

दशाक्षरजपाद् देवि दशजन्माघनाशदम् ॥ ७ ॥

ततो वायुर्महेशानि  अनाहतपुरीं ययौ ।

आदित्यपत्रसंयुक्तं वर्णैर्द्वादशभिर्युतम् ॥ ८ ॥

तत्पत्रं परमेशानि  वर्णं च शुक्लरूपकम् ।

कादिठान्ताक्षरैर्वर्णैः शोभितं परमाक्षरम् ॥ ९ ॥

हृत्पद्मं परमेशानि शुद्धसत्त्वात्मकं सदा ।

प्रदीपकलिकाकारं तन्मध्ये ब्रह्मरूपिणम् ॥ १० ॥

वेष्टितं द्वादशवर्णैः सर्वशक्तिमयं प्रिये ।

सम्मुखे तस्य देवेशि  जीवस्तिष्ठति सर्वदा ॥ ११ ॥

तत्र जीवो महेशानि सदा तिष्ठति पार्वति  ।

वायुं तेजोयुतं जीवं दृष्ट्वा मनोलयं कुरु ॥ १२ ॥

आत्मरूपं वायुरूपं निरीहं निर्मलं सदा ।

यकारस्याष्टसंबीजं जीवं हेमप्रभं सदा ॥ १३ ॥

तत्रादित्याक्षरं देवि बिन्द्वर्धसंयुतं कुरु ।

कृत्वा जपं महेशानि  यत्नेन कुरु सुन्दरि ॥ १४ ॥

जन्मभिश्च द्वादशभिर्देवि यत् [कृतम्] पापमर्जितम् ।

तत्सर्वं नाशयत्येव तत्क्षणात् परमेश्वरि ॥ १५ ॥

एवं हि मरुतो भित्त्वा विशुद्धं प्रतिगच्छति ।

विशुद्धं निर्मलं शुद्धं षोडशस्वरसंयुतम् ॥ १६ ॥

धूम्रवर्णं महेशानि  विशुद्धाख्यं मनोहरम् ।

तस्य मध्ये स्थितं देवि आकाशं शक्तिरूपिणम् ॥ १७ ॥

क्रमाज्जीवं कुण्डलिन्या प्रणवेण समाहरेत् ।

मनस्तत्र महेशानि  सारथिः सर्वतः सदा ॥ १८ ॥

सर्वं मनसि कर्तव्यं भूतशुद्ध्यादिकं प्रिये  ।

स्वरं च षोडशं देवि बिन्द्वर्धसंयुतं कुरु ॥ १९ ॥

ततस्तु परमेशानि  जपेत् षोडशमक्षरम् ।

पूर्वादिक्रमतो देवि दशधा प्रजपेत् प्रिये ॥ २० ॥

जन्मभिः षोडशभिर्यत् तु (कृतं) पापं शुभाशुभम् ।

दहेत् तस्य जपाद् देवि तृणं वह्निर्यथा दहेत् ॥ २१ ॥

ततो वायुं महेशानि  द्रुतमाज्ञापुरीं नयेत् ।

तत्पुरीं परमेशानि द्विदलं युगवर्णकम् ॥ २२ ॥

वर्णं हेमप्रभं देवि  पुरीं चन्द्रप्रभं सदा ।

बिन्द्वर्धसंयुतं कृत्वा साधको जपमाचरेत् ॥ २३ ॥

मनःसारथिना देवि  जीवं कुण्डलिनीं प्रिये ।

आज्ञां पुरीं नयेत् शीघ्रं मनो मनसि भावनम् ॥ २४ ॥

मनसः परमेशानि  आज्ञापुर्यां स्थितिः सदा ।

गुरोराज्ञाधारणात् तु आज्ञापुरमिमं स्मृतम् ॥ २५ ॥

सदाशिवपुरद्वारं गवाक्षं परमेश्वरि  ।

एवं प्रपञ्चं भित्त्वा वै कुण्डलीं जीवसंयुताम् ॥ २६ ॥

मनःसारथिना देवि सदाशिवपुरं नयेत् ।

पञ्चप्राणसमायुक्ता चतुर्विंशतिसंयुता ॥ २७ ॥

इन्द्रियाणि दशैकं च महाभूतानि पञ्च च ।

बुद्ध्यहङ्कारचित्तानि नयेत् शिवपुरं प्रति ॥ २८ ॥

सहस्रारे ततो नीत्वा मनसा योजयेत् सदा ।

श्रीदेवी उवाच

तत्र गत्वा महेशान कुण्डली किमकरोत् प्रभो ॥ २९ ॥

श्री-ईश्वर उवाच

चतुर्विंशतितत्त्वेन पञ्चप्राणेन सुन्दरि ।

इन्द्रियैरक्षरैर्देवि  एकत्वं जायते यदा ॥ ३० ॥

तत्र देवि महेशानि कुण्डलीं भावतत्पराम् ।

पूर्वोक्तध्यानमार्गेण परां तत्र विभावयेत् ॥

सर्वात्मसम्पुटं देवि  सर्वविद्याभिधारणम् ॥ ३१ ॥

इति श्रीभूतशुद्धितन्त्रे हरगौरीसंवादे द्वितीयः पटलः ॥ २ ॥

अथ तृतीयः पटलः

श्री-ईश्वर उवाच

शृणु पार्वति  वक्ष्यामि रहस्यं परमाद्भुतम् ।

गुह्याद् गुह्यतरं देवि सुगोप्यं भुवनत्रये ॥ १ ॥

ब्रह्मरन्ध्रे सहस्रारे यत्र देवः सदाशिवः ।

संवेष्ट्य परमा देवी यत्रास्ते परमेश्वरि  ॥ २ ॥

कुण्डलीं योजयेत् तत्र एकत्वं जायते तदा ।

अकारादिक्षकारान्ताः सर्वबीजे नियोजयेत् ॥ ३ ॥

आदौ मनसि देवेशि  प्राणविद्यां वरानने ।

प्रजप्य दशधा देवि  कुण्डलीं परमां व्रजेत् ॥ ४ ॥

पुरीं शक्तिमयीं देवि नित्यानन्दमयं सदा ।

सहस्रदलसंयुक्तं पद्मं नित्यागमं प्रिये ॥ ५ ॥

पद्ममध्ये महेशानि  पुरीं शक्तिमयीं प्रिये ।

सदाशिवो महेशानि  यत्रास्ते परमेश्वरि ॥ ६ ॥

शुद्धतत्त्वादिकं देवं निर्मलं निश्चलं सदा ।

शिवं प्राप्य महेशानि  कुण्डली शिवसन्निधौ ॥ ७ ॥

शिवस्य मुखपद्मं हि चुचुम्बे कुण्डली प्रिये ।

सर्वत्र सम्पुटं दत्त्वा मोहयेत् परमं शिवम् ॥ ८ ॥

सदाशिवः शिवस्तत्र शान्तो भवति सुप्रिये ।

पद्ममध्ये स्थितं देवं निरीहं शवरूपवत् ॥ ९ ॥

शवरूपो महादेवो हृद्यो नास्ति कदाचन ।

शक्तिसंयोगमात्रेण कर्मकर्ता स उच्यते ॥ १० ॥

तस्मात् तत् परमेश्वानि  शक्तेः प्राधान्यमुच्यते ।

शक्तिं विना महेशानि न किञ्चिदपि वर्तते ॥ ११ ॥

सदाशिवो महाप्रेतः केवलं निश्चयं प्रिये ।

सदाशिवपुरं देवि वैकुण्ठं परमं पदम् ॥ १२ ॥

सदाशिवपुरं गत्वा कुण्डली परदेवता ।

सदाशिवेन च समं क्षणमात्रं रमेत् प्रिये  ॥ १३ ॥

सदाशिवेन देवेशि सङ्गमं जायते प्रिये ।

अमृतं जायते देवि तत्क्षणात् परमेश्वरि ।

तेनामृतेन देवेशि षट्चक्रं प्लावयेत् क्रमात् ॥ १४ ॥

श्री-ईश्वर उवाच

शृणु पार्वति  वक्ष्यामि रहस्यं भुवि दुर्लभम् ।

गुह्याद् गुह्यतरं रम्यं त्रिषु लोकेषु दुर्लभम् ॥ १५ ॥

अपानमूर्ध्वगं कृत्वा दिव्यमर्थं प्रपूर्य च ।

प्राणमन्त्रेण देवेशि  शक्तिं कुण्डलिनीं पराम् ॥ १६ ॥

क्रमाच्चक्राणि निर्भिद्यं जीवात्मानमनोहरात् ।

सहस्त्रारे शिरःपद्मे परे ब्रह्मणि योजयेत् ॥ १७ ॥

बुद्ध्यहङ्कारचित्तानि तत्त्वानि प्रकृतिर्वपुः ।

तस्मात् सर्वाणि तत्त्वानि बीजरूपेण भावयेत् ॥ १८ ॥

ततः शून्ये शरीरे च कुक्षौ वामे विचिन्तयेत् ।

सर्वपापात्मकं क्रूरं पुरुषं पिङ्गमूर्धजम्॥ १९॥

ततो नाभौ वायुबीजं धूम्रं सञ्चिन्त्य तज्जपेत्।

दशधा वायुमुत्पाद्य वपुः पापं विशोधयेत्॥ २०॥

स पापं तु ततो मन्त्री हृदये वह्निबीजकम्।

रक्तं विभाव्य दशधा तज्जपाच्च हुताशनम्॥ २१॥

समुत्पाद्य दहत्येनं सपापं तद्वपुः प्रिये।

ललाटे वारुणं बीजं शुद्धं सञ्चिन्त्य तज्जपात्॥ २२॥

दशधामृतविष्टिन्तु समुत्पाद्य शुचिस्मिते।

सर्वव्यथाविनिर्मुक्तं जातं दिव्यवपुस्ततः॥ २३॥

निष्पापं प्लावयेत् तस्मात् तथा भावेन तत्परः।

अवगत्य धराबीजं मूलाधारे विचिन्तयेत् ॥ २४ ॥

दशधा तज्जपाद् देवि  पृथ्वीमुत्पाद्य सुन्दरि ।

ततः सर्वाणि बीजानि तत्त्वानि च शुचिस्मिते ॥ २५ ॥

यथास्थाने न्यसेद् बीजं आज्ञाचक्रात् शुचिस्मिते ।

आज्ञादिगुणपद्मान्तं संस्थाप्य परमेश्वरि  ॥ २६ ॥

क्रमं तस्य प्रवक्ष्यामि सावधानाऽवधारय ।

एतद् रहस्यं परमं सदा मम हृदि स्थितम् ॥ २७ ॥

यन्मन्त्रसहितं देवि क्रमात् सुन्दरि तत् शृणु ।

बीजं कुण्डलिनीं देवि आज्ञाचक्रं समानयेत् ॥ २८ ॥

तस्मिन् चक्रे महेशानि आत्मा मनःसमन्वितः ।

पञ्चाशन्मातृकामन्त्रं दशधा प्रजपेत् प्रिये ॥ २९ ॥

तत्र युग्मकलां ध्यात्वां मूलमन्त्रेण तर्पयेत् ।

लम्बयेत् परमेशानि जीवं कुण्डलिनीसह ॥ ३० ॥

मनसा संयुतं कृत्वा विशुद्धौ लम्बयेत् प्रिये ।

तच्चक्रे परमेशानि मातृकावर्णमुत्तमम् ॥ ३१ ॥

प्रजपेद् दशधा देवि मनःसारथिना प्रिये ।

सर्वं हि मनसा कार्यं मनः सर्वार्थसाधकम् ॥ ३२ ॥

तत्रस्थां षोडशकलां मूलमन्त्रेण तर्पयेत् ।

लम्बयेत् प्रणवैर्देवि पुरीं[प्रति]ध्वनिमयीं प्रति ॥ ३३ ॥

तत्रस्थं देवदेवेशं महादेवं च तर्पयेत् ।

प्रणवेन तु मन्त्रेण तर्पयेत् शिवरूपिणम्॥ ३४॥

तत्रस्थां द्वादशकलां तडित्कोतिसमप्रभाम्।

तर्पयेत् मूलमन्त्रेण मातृकाजपपूर्वकम्॥ ३५॥

लम्बयेत् मणिपूरे च शिवं तत्र प्रतर्पयेत्।

तत्रस्थां दशकलां देवि  मूलमन्त्रेण तर्पयेत्॥ ३६॥

मातृकां प्रथमे जप्त्वा तर्पयेत् परमां कलाम्।

तदधः परमेशानि  स्वाधिष्ठानेषु लम्बयेत्॥ ३७॥

स्वाधिष्ठानं महेशानि  शुक्लं हीरकसन्निभम्।

तत्रस्थं शिवदेवं च मूलमन्त्रेण तर्पयेत्॥ ३८॥

मूलमन्त्रं महेशानि  प्रासादं परमं शिवम्।

तत्रस्थां षट्कलां दिव्यां मायाबीजेन तर्पयेत् ॥ ३९ ॥

मूलाधारं ततो नीत्वा बीजं कुण्डलिनीसह ।

मनःसारथिना देवि  शिवं सम्भाव्य यत्नतः ॥ ४० ॥

तर्पयेन्मूलमन्त्रेण प्रासादेन शिवं प्रिये  ।

ततो युगकलां नित्यां मूलमन्त्रेण तर्पयेत् ॥ ४१ ॥

मातृकां दशधा जप्त्वा शिवं सन्तोषयेत् सदा ।

स्वस्थानं प्राप्य देवेशि  कुण्डली परदेवता ॥ ४२ ॥

ब्रह्मविष्णुशिवयुता विषतन्तुतनीयसीम् ।

जवासिन्दूरसङ्काशामुद्यद्भास्करसन्निभाम् ॥ ४३ ॥

शिवस्य युवतीं योग्यां वह्निरूपधरां प्रिये  ।

ततस्तु परमेशानि  जीवं पुष्करमानयेत्॥ ४४॥

हृदिस्थं पुष्करं पद्मं जीवस्थां सदा स्मृतम्।

ब्रह्मस्थानं च तद् देवि  सूर्यमण्डलसन्निभम्॥ ४५॥

शब्दब्रह्म परं ब्रह्म शब्दास्तिष्ठन्ति तत्र वै।

प्रदीपकलिकाकारं शब्दब्रह्म शुचिस्मिते॥ ४६॥

प्रदीपकलिकाकारं जीवं च परमेश्वरि  ।

शब्दब्रह्म परं ब्रह्म शक्तियुक्तं सदा प्रिये  ॥ ४७॥

जलसूर्याग्निचन्द्रेषु शक्तिः सर्वत्र वर्तते।

शक्तिः सर्वेषु देवेषु देवीषु च शुचिस्मिते॥ ४८॥

शक्तियुक्तं जायते सर्वं यो न जानाति पामरः।

प्रेतलोकं स गत्वा वै शूकरत्वं प्रजायते ॥ ४९ ॥

॥ इति श्रीभूतशुद्धितन्त्रे हरपार्वतीसंवादे तृतीयः पटलः ॥ ३ ॥

अथ चतुर्थः पटलः

श्री-ईश्वर उवाच

नाभिमध्ये तु वामा च ज्येष्ठा च हृदि संस्थिता ।

रौद्री च परमेशानि  सदा शिरसि संस्थिता ॥ १ ॥

वामा ब्रह्मा महेशानि  ज्येष्ठा च विष्णुरीरिता ।

रौद्री रुद्रं तु विज्ञेया बिन्दुत्रयमितीरिता ॥ २ ॥

ब्रह्मा विष्णुश्च रुद्रश्च सदा प्रकृतिरूपिणी ।

बिन्दुना परमेशानि  कर्मकर्ता सदा प्रिये ॥ ३ ॥

ब्रह्मविष्णुमहेशानां बिन्दुबीजं शुचिस्मिते ।

बिन्दुना जायते सृष्टिः पालनं च शुचिस्मिते ॥ ४ ॥

बिन्दुना हरते सृष्टिं क्रमतः परमेश्वरि ।

बिन्दुं विना महेशानि सकलं प्रेतवत् प्रिये ॥ ५ ॥

अतः परं प्रवक्ष्यामि रहस्यं परमाद्भुतम् ।

मूलाधारे महेशानि त्र्यक्षरीं दशधा जपेत् ॥ ६ ॥

त्र्यक्षरीं शृणु देवेशि सावधानाऽवधारय ।

शिवबीजं समुद्धृत्य पृथ्वीबीजपुटं कुरु ॥ ७ ॥

बिन्द्वर्धसंयुतं कृत्वा साधको जपमारभेत् ।

हृत्पद्मे रञ्जितशिवा समुद्धृत्य शुचिस्मिते ॥ ८ ॥

शिवबीजे पुटीकृत्य बिन्द्वर्धसंयुतं कुरु ।

ललाटे परमेशानि  रलबीजं समुद्धर ॥ ९ ॥

कलावती पुटीकृत्वा बिन्द्वर्धसंयुक्तं कुरु ।

एता विद्या महेशानि  भूतशुद्धेस्तु कारणम् ॥ १० ॥

श्रीदेवी उवाच

कथ्यतां देवदेवेश  ज्ञानचक्षुस्तपोमयम् ।

कृपया कथयेशान  यद्यहं तव वल्लभा ॥ ११ ॥

वामपार्श्वे स्थितं देवं संदह्य परमेश्वर  ।

जीवः शुद्धात्मको भूत्वा मनसा परमेश्वर ॥ १२ ॥

पूजयेदिष्टदेवं च जपेद् विद्यां प्रसन्नधीः ।

पुनस्तु पुरुषं पापं कथमुत्पद्यते तथा ॥ १३ ॥

एतत्तु संशयं देव हृदये शाल्यवन्मम ।

संशयं मे महादेव  छिन्धि देव दयानिधे ॥ १४ ॥

श्री-ईश्वर उवाच

शृणु कमलपत्राक्षि  रहस्यं परमाद्भुतम् ।

शोषणैर्दहनैर्देवि  पुरुषं पापरूपकम् ॥ १५ ॥

संदह्य परमेशानि  पुनरुत्पद्यते सदा ।

इडा तु वामदेशे हि सदा तिष्ठति पार्वति ॥ १६ ॥

वामनाड्या कृतं पापं वामकुक्षौ स्थितं प्रिये ।

नाडीसंयोगमात्रेण पापमूलं निकृन्तति ॥ १७ ॥

अत एव महेशानि  पुरुषं कृष्णमूर्धजम् ।

पुनरुत्पद्यते देवि  जपपूजाविधेरनु ॥ १८ ॥

शृणु कमलपत्राक्षि  रहस्यं हृदये स्थितम् ।

दहन्तं शेषपापं च नाशनं यदि चेच्छसि ॥ १९ ॥

तत् पापस्यापनोदे च विद्यामेनां जपं कुरु ।

कामनया तथा देवि  मन्मथं परमेश्वरि ॥ २० ॥

अष्टोत्तरशतं जप्त्वा तस्मात् पापाद् विमुच्यते ।

मनो जीवात्मनोः शुद्धिः प्राणयामेन सुन्दरि ॥ २१ ॥

एतत् शुद्धिर्महेशानि सर्वतन्त्रेषु शस्यते ।

सर्वेषु विष्णुमन्त्रेषु शिवमन्त्रे गणाधिपे ॥ २२ ॥

शक्तौ सूर्ये महेशानि  अन्यदेवगणेषु च ।

एवं ते कथितं देवि  रहस्यं परमाद्भुतम् ॥ २३ ॥

आधारं पृथ्वीतत्त्वं वै स्वाधिष्ठानं जलं प्रिये ।

मणिपुरम् अग्नितत्त्वं वायुतत्त्वमनाहते ॥ २४ ॥

कण्ठे च परमेशानि  शून्यतत्त्वं सदा स्मृतम् ।

मनस्तत्त्वं तदूर्ध्वं च मनः सर्वत्र व्यापकम् ॥ २५ ॥

विभुत्वाद् व्यापकत्वाच्च साक्षाद् बिन्दुमयं मनः ।

यावस्ति परमेशानि भूतशुद्ध्यादि यानि च ॥ २६ ॥

तानि सर्वाणि देवेशि  मनसैव प्रणीयते ।

सर्वगामी सर्ववेत्ता सर्वसाक्षी सदा मनः ॥ २७ ॥

पापपुण्ये महेशानि रक्षकं स्यात् मनः प्रिये ।

मनसा वाक्यमुत्पन्नं मनसैव प्रणीयते ।

मन्त्रं विद्या महेशानि  मनसा जपमाचरेत् ॥ २८ ॥

॥ इति श्रीभूतशुद्धितन्त्रे हरपार्वतीसंवादे चतुर्थः पटलः ॥ ४ ॥

अथ पञ्चमः पटलः

श्री-ईश्वर उवाच

मनसा जीवन्संयुक्तः कर्मकर्ता सदा प्रिये ।

मनः प्रविभवे देवि  उन्मनीसहिता यतः ॥ १ ॥

उन्मनी च महेशानि  भवपापनिकृन्तनी ।

जीवस्य परमेशानि  गुप्ततत्त्वं शृणु प्रिये ॥ २ ॥

मूलाधारे स्थितं जीवं प्रदीपकलिकाकृतिम्।

प्रणवेन समाकृष्य द्वादशान्तं लयेत् सुधीः॥ ३॥

आकाशे च महेशानि  सुखमोक्षमवाप्नुयात्।

हृत्पद्मे च महेशानि परं ब्रह्म निरीक्षणम्॥ ४॥

आज्ञायां परमेशानि प्रथमं गुरुदर्शनम्।

मणिपूरं ततो गत्वा स्नापयेन्मनसा सह॥ ५॥

स्वाधिष्ठानं ततो गत्वा अग्निस्पर्शं समाचरेत्।

ततो जीवं महेशानि  मूलाधारं लयेत् प्रिये॥ ६॥

मनःसारथिना देवि  उन्मनी भवनाशिनी।

संहत्य सदसत्कर्म जीवः सर्वं करोति हि॥ ७॥

शुद्धसत्त्वात्मको जीवः सदसत्कर्मवर्जितः ।

वामपार्श्वे स्थितं पापं पुरुषेण यदा प्रिये ॥ ८ ॥

संयोगो जायते तत्र असत्कर्म तदाऽकरोत् ।

पापस्य परमेशानि  संयोगो यदि जायते ॥ ९ ॥

मनसा जीवसंयोगात् सत्कार्यं कुरुते तदा ।

शुद्धसत्त्वात्मको जीवस्तस्य कार्यं कुतः प्रिये ॥ १० ॥

मनश्च परमेशानि उन्मनी संयुता यदि ।

जीवस्य वामपार्श्वे तु तदा तिष्ठति पापधृक् ॥ ११ ॥

दक्षिणे परमेशानि मनश्च उन्मनी यतः ।

उन्मज्जन्ति निमज्जन्ति प्रपञ्चेषु शुचिस्मिते ॥ १२ ॥

उन्मनीकरणं देवि  दशासु परमेश्वरि ।

जाग्रत्स्वप्नसुषुप्त्यवस्थां चापि परमेश्वरि ॥ १३ ॥

सुषुम्नान्तर्गता चित्रा चन्द्रकोटिसमप्रभा ।

तत्र कुण्डलिनी देवि यातायातं करोति हि ॥ १४ ॥

कदाचित् मासि तं पद्मं कदाचित् रक्तपङ्कजम् ।

कदाचित् शुक्लपद्मं हि वह्निपद्मं कदा प्रिये ॥ १५ ॥

भित्वा पुरीं याति पुनरायाति कुण्डली सदा ।

प्रपञ्चानां महेशानि  देवानुचरमुत्तमम् ॥ १६ ॥

कथयामि महेशानि सर्वतन्त्रेषु गोपितम् ।

यज्ज्ञात्वा साधको देवि सर्वसिद्धिमवाप्नुयात् ॥ १७ ॥

धर्मार्थकाममोक्षाणां फलभाग् वैष्णवो यतः।

तव स्नेहान्महेशानि  निगदामि शुचिस्मिते॥ १८॥

ब्रह्माणी चण्डिका रौद्री गौरीन्द्राणी तथैव च।

कौमारी वैष्णवी दुर्गा नारसिंही च कालिका॥ १९॥

शिवदूती च वाराही माहेशी कौशिकी तथा।

शाङ्करी च जयन्ती च विशुद्धपद्मसंस्थिता॥ २०॥

मङ्गला कपालिका चैव मेधा च शिवरूपिका।

शाकम्भरी च भीमा च गाण्डा च भ्रामरी तथा॥ २१॥

रुद्ररुपिण्यम्बिका च क्षमा च वह्निरूपिणी।

एतास्तु परमेशानि  हृत्पद्मे संस्थिताः सदा॥ २२॥

धात्री च वह्निरूपा च मध्यमा च शुचिस्मिते ।

अपर्णा च महेशानि तथा वामा महोदरी ॥ २३ ॥

घोररूपा महाकाली तथा चैव भयङ्करी ।

क्षेमङ्करी च देविशि मणिपूरे स्थिता सदा ॥ २४ ॥

उग्रचण्डा च देवेशि तथा चण्डावती प्रिये ।

चण्डा चैव प्रचण्डा च चण्डनायकसेविता ॥ २५ ॥

चण्डिका चैव देवेशि स्वाधिष्ठाने स्थिता सदा ।

महादेवी महेशानि तथैव मोहरुपिणी ॥ २६ ॥

तथा प्रियङ्करी चैव तथा चैव सनातनी ।

एतास्तु परमेशानि मूलाधारे स्थिताः सदा ॥ २७ ॥

फलविकरिणीरूपा बलप्रमथिनी तथा ।

अक्षरं युगलं देवि आज्ञाचक्रे स्थिता सदा ॥ २८ ॥

अस्यास्तु परमेशानि विशेषं शृणु पार्वति ।

एतज्ज्ञानं महेशानि सदाशिवव्यवस्थितम् ॥ २९ ॥

अस्य ज्ञानप्रभावेण संहरामि जगत् त्रयम् ।

स्थितिकर्ता भवेद् विष्णुर्ब्रह्मा सृष्टिकरं सदा ॥ ३० ॥

यस्य यस्य च देवेशि  यद् बीजं पूर्वसूचितम् ।

तद्बीजे पुटितं कृत्वा देवानां जपमाचरेत् ॥ ३१ ॥

भूतशुद्धिस्तदा देवि  सिद्धो भवति पार्वति ।

अन्यथा प्रेतवच्छुद्धिर्जायते कमलेक्षणे ॥ ३२ ॥

पञ्चाशन्मातृणां देवि षट्चक्रे क्रमतो जपेत्।

षट्चक्रे परमेशानि  यत्नतो जपमाचरेत्॥ ३३॥

तदैव महती सिद्धिः साधकस्यापि जायते।

कलावृक्षे समो भूत्वा साधकः खेचरो भवेत्॥ ३४॥

अणिमादिगुणाधारं तथा भवति साधकः।

अणिमा सूक्ष्मरूपं च लघिमा स्थूलरूपकम्॥ ३५॥

सर्वैश्वर्यपदप्राप्तिं प्राप्तिं परममुच्यते।

मनःक्लेशकरं चैव प्राकाश्यं कमलानने॥ ३६॥

महिमा सर्वलोकेषु गीयते कमलानने।

तदैव महिमा देवि  मम ज्ञानेषु वर्तते॥ ३७॥

ब्रह्माण्डव्यापकं रूपं ईशित्वं च प्रकीर्तितम्।

ब्रह्माण्डवशरूपं च वशित्वं कथितं प्रिये ॥ ३८ ॥

कन्दर्पध्वंसजननमेतत् कामवशायिता।

अणिमादिगुणं देवि तव भक्त्या प्रकाशितम्॥ ३९ ॥

न कस्मैचित् प्रवक्तव्यं तव योनिं यथा प्रिये।

शृणु देवि प्रवक्ष्यामि भूतशुद्धेस्तु कारणम्॥ ४० ॥

-महेशानि अष्टोत्तरशतं जपेत्।

तारं व्योमाग्नि गुण्डी तथा ज्योतिर्मनुः स्मृतः।

एतज्ज्ञानप्रभावेण भूतशुद्धेः फलं भवेत्॥ ४१ ॥

॥ इति श्रीभूतशुद्धितन्त्रे हरपार्वतीसंवादे पञ्चमः पटलः॥ ५ ॥

अथ षष्ठः पटलः

श्री-ईश्वर उवाच

शृणु ज्ञानं महेशानि  विशेषं कथयामि ते।

यज्ज्ञात्वा परमेशानि शिवोऽहं मृत्युनाशकः॥ १॥

यज्ज्ञात्वा परमेशानि  ब्रह्मा सृष्टिकरः सदा।

यज्ज्ञात्वा विष्णुदेवश्च स्थितिकर्ता शुचिस्मिते॥ २॥

यज्ञात्वा तु महेशानि  नाशकोऽहं महेश्वरि।

चन्द्रः सूर्यो महेशानि यज्ज्ञात्वा परमेश्वरि॥ ३॥

प्रकाशं कुरुते विश्वं ब्रह्माण्डं सचराचरम्।

अव्यक्तरूपिणीं रम्यां योगगम्यां सदा प्रिये॥ ४॥

सदा शरीरमाश्रित्य वसते कामरूपिणी ।

शरीरं द्विविधं देवि  स्थूलं सूक्ष्मं शुचिस्मिते ॥ ५ ॥

मांसास्थिलोमरक्तानि मेदो मज्जा वरानने  ।

विण्मूत्रस्थे हरं चैव वातपित्ते तु सङ्गतम् ॥ ६ ॥

एतत् स्थूलमयं देवि सूक्ष्मं च कथयामि ते ।

इडा वामे स्थिता नाडी शुक्ला तु चन्द्ररूपिणी ॥ ७ ॥

दक्षिणे पिङ्गला नाम्नी पुंरूपा सूर्यविग्रहा ।

तन्मध्ये परमेशानि  सुषुम्ना ब्रह्मरूपिणी ॥ ८ ॥

वामावर्तक्रमेणैव वेष्टनं विषतन्तुवत् ।

मूलादिब्रह्मरन्ध्रान्तं व्याप्य तिष्ठति सर्वदा ॥ ९ ॥

इच्छाज्ञानक्रियारूपा त्रिनाडी सर्वतन्तुषु ।

तिस्रः कोटयः सहस्त्रं तु शरीरे नाड्यो मताः ॥ १० ॥

तासु मुख्या दश प्रोक्ता तासु तिस्रो व्यवस्थिताः ।

वामनाड्यां महेशानि  वायुबीजेन पूरयेत् ॥ ११ ॥

वायुं षोड्शधा जप्त्वा पूरयेद् वामवर्तनि ।

मणिपूरे महेशानि चतुःषष्ठी च धारयेत् ॥ १२ ॥

रेचयेत् कुम्भकार्धेन दक्षनाड्यां शुचिस्मिते ।

वह्निबीजं महेशानि  हृत्पद्मे पूर्ववत् प्रिये ॥ १३ ॥

संशोध्य वायुबीजेन वह्निबीजेन सन्दहेत् ।

ललाटे वारुणं बीजं शुक्लं सञ्चिन्त्य सुन्दरि ॥ १४ ॥

कुम्भकार्धं जपित्वा वै रेचयेद् दक्षिणे पथे ।

एवं द्वादशधा देवि भूतशुद्धिं समाचरेत् ॥ १५ ॥

बृहच्छुद्धिं महेशानि पञ्चभूतस्य पार्वति ।

पूर्वोक्तं परमेशानि सामान्यं शुद्धिमेव च ॥ १६ ॥

देहस्य परमेशानि भूतशुद्धिरितीरिता ।

देहस्य सूक्ष्मरूपस्य भूतशुद्धिरियं प्रिये ॥ १७ ॥

मनसः परमेशानि उन्मनीसहिता यदि ।

जीवेन सह देवेशि सुषुम्नायां निमज्जयेत् ॥ १८ ॥

ध्यानधारणयोगेन ब्रह्म साक्षान्न संशयः ।

प्रजपेत् परया भक्त्या मालया वर्णसङ्ख्यया ॥ १९ ॥

मुहूर्तं भावयेद् विद्यां मनोन्मनीयुता प्रिये ।

मनोन्मनीयुते जीवः ब्रह्मरन्ध्रे च संजपेत् ॥ २० ॥

ततो ब्रह्मनदीं प्राप्य स्नानं कृत्वा वरानने ।

जीवः शुद्धो भवेद् देवि गणैः परिकरैः सह ॥ २१ ॥

जीवस्य परमेशानि परिवारं शृणु प्रिये ।

अक्षिणी नासिके कर्णौ जिह्वा च कमलेक्षणे ॥ २२ ॥

हस्तपादौ महेशानि गुह्योपस्थौ क्रमात् प्रिये ।

नाभिं च परमेशानि मनश्च परमेश्वरि ॥ २३ ॥

सर्वेषामिन्द्रियाणां च मनः सर्वत्र सारथिः ।

मनश्च परमेशानि उन्मनी भवनाशिनी ॥ २४ ॥

उन्मनी सारथिर्देवि दशा तु निर्गुणाः प्रिये ।

जाग्रत्स्वप्नसुषुप्त्यवस्था एतद् देवि त्रयं स्मृतम् ॥ २५ ॥

ततः परं महेशानि तु [सू] र्यावस्था विधीयते ।

इन्द्रियाणां तु सर्वेषां मनः परमसारथिः ॥ २६ ॥

सदसत्कर्मकर्तृत्वाज्जीवस्य सारथिर्मनः ।

स्वकर्म भजते देवि  उन्मनी सततं प्रिये ॥ २७ ॥

असत्कर्म महेशानि पापयोगात् प्रजायते ।

रोदनं मोहमूर्च्छे च क्षुधा तृष्णा शुचिस्मिते ॥ २८ ॥

पुरुषात् पापमु[स्यो]त्पत्तिर्जायते कमलेक्षणे ।

जोबो नित्योऽव्ययः सूक्ष्मः सर्वगः सर्ववित् परः ॥ २९ ॥

यथा ब्रह्म तथा जीवः प्रदीपकलिका इव ।

प्रदीपकलिकाकारः सर्वः प्राप्य विजृम्भते ॥ ३० ॥

मनसा परमेशानि ध्यात्वा नाडीं परां शिवाम् ।

कोटिसूर्यप्रतीकाशां स्वर्णदीं पापनाशिनीम् ॥ ३१ ॥

तन्मध्ये परमेशानि सुषुम्नां भुवि तत्पराम् ।

साक्षाद् ब्रह्महृदाकारां नानासुखविहारिणीम् ॥ ३२ ॥

सुखसेव्यां सदाराध्यां साक्षाद् ब्रह्मस्वरूपिणीम् ।

ज्ञानविज्ञानसंयुक्तां चिदाकारां सनातनीम् ॥ ३३ ॥

परं ब्रह्म महेशानि यस्याः पालङ्कमिच्छति ।

वामपार्श्वे स्थितां नित्यां ब्रह्मरूपां तडिन्मयीम् ॥ ३४ ॥

दक्षिणे पिङ्गलां देवीं पुंरूपां सूर्यसन्निभाम्।

तन्मध्यस्थां महेशानि अमृतभवपूरिताम्॥ ३५॥

विचित्रां परमां सूक्ष्मां महामोक्षप्रदायिनीम्।

वामनाडी महेशानि सुप्तिरूपा पुरःस्थिता॥ ३६॥

स्वप्नन्तु परमेशानि तुरीया परिगीयते।

-दक्षिणे पिङ्गलाश्रिता॥ ३७॥

सुषुम्ना परमेशानि जागद्रूपा सनातनी।

विचित्रा परमेशानि तुरीया परिगीयते॥ ३८॥

चित्रा मध्यगता भूत्वा जीवः शुद्धमना भवेत्।

शुद्धः सत्त्वात्मको जीव इष्टदेवीं हृदि न्यसेत्॥ ३९॥

हृदि ध्यात्वा महेशानि जीवो ब्रह्मपरं भवेत् ।

वारत्रयं महेशानि यातायातं करोति हि ॥ ४० ॥

एतद्रहस्यं परमं ब्रह्मलोके सुदुर्लभम् ।

न कस्मैचित् प्रवक्तव्यं पशवे कमलेक्षणे ॥ ४१ ॥

एतत् प्रकाशनाद्देवि हानिः स्यादुत्तरोत्तरम् ।

एतत्तत्वं महेशानि हृदये कुरु यत्नतः ॥ ४२ ॥

एतत्तत्वं महेशानि ब्रह्म जानाति केशवः ।

एतत्तत्त्वं विना देवि मन्त्रसिद्धिर्न जायते ।

एतत्तत्त्वं महेशानि ब्रह्मविष्णुशिवात्मकम् ॥ ४३ ॥

॥ इति श्रीभूतशुद्धितन्त्रे हरगौरीसंवादे षष्ठः पटलः ॥ ६ ॥

अथ सप्तमः पटलः

श्रीदेवी उवाच

भूतशुद्धेर्महेशान रहस्यं परमाद्भुतम्।

अन्यद् वद महेशान यद्यहं तव वल्लभा॥ १॥

यदि न कथ्यते देव विमुञ्चामि तदा तनुम्।

शूलपाणे महादेव कृपया कथय प्रभो॥ २॥

गणसुन्दर देवेश हृदयान्मम साम्प्रतम्।

रहस्यं न हि देवेशि सम्पुटं हृदये मम।

तव स्नेहान्महेशानि निगदामि पुनः पुनः॥ ३॥

हृदये सम्पुटे देवि ब्रह्मरन्ध्रे च वर्त्तते।

यानि यानीह तिष्ठन्ति रहस्यं कमलेक्षणे ॥ ४ ॥

सदा मयि महेशानि गौरवं विहितः प्रिये ।

त्रयोदशात्मकं [देवि] बिन्द्वर्द्धचन्द्रसंयुतम् ॥ ५ ॥

कुरु ब्रह्मविष्णुशिवात्मकं प्रणवं त्रिगुणान्वितं तत्त्वसुखम् ।

ब्रह्मस्थानं सदा सेव्यमानं परमेश्वरि ॥ ६ ॥

ब्रह्मा विष्णुशिवोपरि स्थितम् ।

अर्द्धयोनिं तदुपरि बिन्दुं निर्विकारं निरीहम् ॥ ६ ॥

ज्योतिर्मयी सदा संसेव्यमानं ब्रह्मादिभिर्या मूर्ध्नि धत्ते परमेश्वरि ।

तं बिन्दुं सदा भावय पार्वति ॥ ७ ॥

नान्यथा वचनं मम हृदि संस्थितं निरञ्जनं पुरं बिन्दुम् ।

बिन्दुं भावय देवेशि किं जपेन शुचिस्मिते ॥ ८ ॥

श्री-ईश्वर उवाच

इति सञ्चिन्त्य हृदये सर्वं पूजाफलं लभेत् ।

पूजाभावे महेशानि हृदये चिन्तयेत् शिवाम् ॥ ९ ॥

सर्वपूजाफलं देवि प्राप्नोति पूजकः प्रिये ।

किं तस्य ध्यानपूजायां बिन्दुं भावय पार्वति ॥ १० ॥

सर्वेषामिन्द्रियाणाञ्च तत्त्वानाञ्च शुचिस्मिते ।

जीवोन्मनी च देवेशि सर्वाणि ब्रह्म कारणम् ॥ ११ ॥

यानि यानीह देवेशि इन्द्रियाणीह पार्वति ।

तानि सर्वाणि देवेशि प्रकृतेः परमं वपुः ॥ ११ ॥

ब्रह्मणः कारणं देवि सदा प्रकृतिरूपिणी ।

प्रकृतिः परमेशानि ब्रह्मणोऽव्यक्तमव्ययम् ॥ १२ ॥

स्वस्त्यर्थे परमेशानि भिन्नतां सततं गता ।

शक्तिं विना महेशानि ब्रह्म वै शवरूपवत् ॥ १३ ॥

निरञ्जनं निराकारं सदा पश्यन्ति योगिनः ।

प्रकृत्या सह संयोगं सदा याति निरञ्जनः ॥ १४ ॥

सृष्टिकर्ता सदा नित्यं जायते कमलानने ।

अत एव महेशानि शक्तिप्राधान्यमुच्यते ॥ १५ ॥

अनन्ताः शक्तयः प्रोक्ता व्याप्य ते सचराचरम् ।

शक्तिं बिना महेशानि ब्रह्माण्डं शवरूपवत् ॥ १६ ॥

या शक्तिः परमेशानि मुक्तिस्तु परिगीयते ।

सा स्त्रीरूपा महादेवि हेतुभूता सनातनी ॥ १७ ॥

यत्किञ्चित् क्रियते कार्यं सर्वं तेजसि लीयते ।

श्री-ईश्वर उवाच

शृणु वक्ष्यामि देवेशि रहस्यं परमाद्भुतम् ।

सारात्सारतरं रम्यं आत्ममध्यस्थितं सदा ॥ १८ ॥

ततो जीवो महेशानि ध्यायेत् परमसुन्दरीम् ।

शिवस्य युवतीं भद्रां कोटिकन्दर्पसंयुताम् ॥ १९ ॥

तस्या कटाक्षमात्रेण ब्रह्माद्या जडवत् प्रिये ।

तन्त्रोक्तविधिना देवि ध्यायेत् परमसुन्दरीम् ॥ २० ॥

इष्टविद्यां महेशानि अष्टोत्तरशतं जपेत्।

मूलादिब्रह्मरन्ध्रान्तं नदीं ब्रह्मस्वरूपिणीम्॥ २१॥

तत्र नद्यां महेशानि स्नातो जीवः सदा शुचिः।

वायुं वह्निं तदा देवि वरुणं तदनन्तरम्॥ २२॥

बिन्द्वर्द्धसंयुतं कृत्वा सदा मनसि भावयेत्।

भूतशुद्धिर्महेशानि तत्क्षणादपि जायते॥ २३॥

ततो जीवः प्रसन्नात्मा सूक्ष्मशुद्धिमवाप्नुयात्।

इन्द्रियाणाञ्च सर्वेषां सर्वतत्त्वं शुचिस्मिते॥ २४॥

तानि सर्वाणि सूक्ष्माणि प्रकृतिस्था सदा शिवे।

शरीरं द्विविधं देवि स्थूलं सूक्ष्ममिदं स्मृतम्॥ २५॥

सूक्ष्मञ्च प्रकृते रूपं स्थूलञ्च परमेश्वरि ।

सूक्ष्मं संशोध्य विधिवत् स्थूलञ्च तदनन्तरम् ॥ २६ ॥

शृणु कमलपत्राक्षि भावयेदिष्टदेवताम् ।

जीवञ्च परमेशानि ब्रह्मनद्यां शुचिस्मिते ॥ २७ ॥

स्नानं हि विधिवत् कृत्वा सदा शिवपुरं व्रजेत् ।

ततो जीवो महेशानि वामनासापुटे प्रिये ॥ २८ ॥

विशुद्धां परमां सुक्ष्मां विषतन्तुतनीयसीम् ।

समानीय वह्निरूपं साक्षात् परमसुन्दरीम् ॥ २९ ॥

सदा शिवपुरे भद्रे भावयेत् परदेवताम् ।

तत्र गत्वा महेशानि भावयेदिष्टदेवताम् ॥ ३० ॥

तन्त्रोक्तविधिना देवि ध्यात्वामृतमयीं शिवाम् ।

सदा षोडशवर्षीयां नवयौवनसंयुताम् ॥ ३१ ॥

पूर्णचन्द्रनिभां रक्तां सदा चञ्चललोचनाम् ।

शुक्लकृष्णारुणयुतां पीतां नीलसमावृताम् ॥ ३२ ॥

नानारत्नयुतां रम्यां पादौ नूपुरशोभिताम् ।

किङ्किणी च तथा कट्यां रत्नकाञ्चनमण्डिताम् ॥ ३३ ॥

योगिनीकोटिभिर्युक्तां नानासुखविहारिणीम् ।

कन्दर्पकोटिलावण्यां सदामृतविवर्द्धिनीम् ॥ ३४ ॥

प्रफुल्लचञ्चलापाङ्गि प्रबोध्य परमं शिवम् ।

मुखारविन्दगन्धेनामोदितं परमं शिवम् ॥ ३५ ॥

प्रबोध्य परमेशानि तत्रोप(चोप)विशेत् प्रिये ।

शक्तिसंयोगमात्रेण सारत्वं तस्य नश्यति ।

शिवशक्तिसमायोगादानन्दं जायते द्रुतम् ॥ ३६ ॥

॥ इति श्रीभूतशुद्धितन्त्रे हरगौरीसंवादे सप्तमः पटलः ॥ ७ ॥

अथ अथाष्टमः पटलः

श्री-ईश्वर उवाच

एतस्मिन् समये देवि स्वविद्यां प्रजपेत् सुधीः ।

अष्टोत्तरशतं जप्त्वा सिद्धो भवति नान्यथा ॥ १ ॥

मनःसारथिना जीवः उन्मनी मनसारथिः ।

तस्मिन् क्षणे महेशानि पुरुषं पापरुपिणम् ॥ २ ॥

सखावत् मनसा देवि जीवो ब्रह्मपुरं यदा ।

पापस्य गमनं नास्ति सदाशिवपुरं प्रिये ॥ ३ ॥

सदाशिवपुरं देवि सर्वशक्तिमयं स्मृतम् ।

षट्चक्रे परमेशानि क्षणं ध्यात्वा जपेन्मनुम् ॥ ४ ॥

तदनु परमेशानि प्रतिचक्रेषु संजपेत् ।

षट्चक्रं परमं दिव्यं सदा शिवपुरीसमम् ॥ ५ ॥

षट्चक्रे परमेशानि षट्शक्तिर्विद्यते नृणाम् ।

मुहूर्ताभ्यन्तरे देवि यातायातं करोति यः ॥ ६ ॥

स शिवः स च विष्णुश्च स सिद्धः परमेश्वरि ।

यः करोति प्रसन्नात्मा सुषुम्नामध्यवर्तिनि ॥ ७ ॥

यो जपेत् परया भक्त्या स्वविद्यां कमलेक्षणे ।

एकोच्चारेण गिरिजे कोटिपूजाफलं लभेत् ॥ ८ ॥

किं तस्य बाह्यपूजायां सर्वं व्यर्थं कदर्थनम् ।

मानसोच्चारणाद् देवि जपात् सिद्धिः प्रजायते ॥ ९ ॥

मनसा ध्यानमात्रेण सर्वसिद्धिर्न संशयः ।

अन्तःपूजा महेशानि बाह्यकोटिसमं स्मृतम् ॥ १० ॥

पूजा हि परमेशानि द्विविधं कमलानने ।

अन्तः सूक्ष्मं बहिः स्थूलं सर्वागममतं प्रिये ॥ ११ ॥

एकं हि सूक्ष्मपूजायां कोटिस्थूलं भवेत् प्रिये ।

न शुद्धिं परमेशानि वस्त्रादीनि शुचिस्मिते ॥ १२ ॥

सर्वासु बाह्यपूजासु अन्तःपूजा विधीयते ।

अन्तःपूजा महेशानि तेजःपुञ्जस्य भावनम् ॥ १३ ॥

तेजःपुञ्जं महेशानि अनन्तशक्तिसंयुतम् ।

सूक्ष्मदेहे महेशानि सूक्ष्मपूजा विधीयते ॥ १४ ॥

स्थूलपूजा स्थूलदेहे पूजाद्वयमिहोच्यते ।

सुक्ष्मा तु परमा पूजा साक्षात् प्रकृतिरूपिणी ॥ १५ ॥

या पूजा परमेशानि स्त्रीरूपा शक्तिरूपिणी ।

ब्रह्मविष्णुशिवादीनां सा पूजा इष्टदेवता ॥ १६ ॥

विष्णुं वा पूजयेद् यस्तु शिवं वा कमलेक्षणे ।

सर्वं हि परमेशानि परतेजसि लीयते ॥ १७ ॥

यानि यानि महेशानि नैवेद्यं दीपमुत्तमम् ।

सर्वं तदक्षयं याति परतेजसि अर्पणात् ॥ १८ ॥

निश्चयं परमं ब्रह्म कुतः प्रीतिः कुतः सुखम् ।

निराकारं निरीहञ्च रहितमिन्द्रियेण च ॥ १९ ॥

सर्वं हि परमेशानि व्याप्य तिष्ठति मोहिनी ।

यद् यत् कर्मकृतं पुण्यं तत्तदक्षयमाप्नुयात् ॥ २० ॥

ब्रह्मरूपं महेशानि शक्तिश्च निश्चयं प्रिये ।

तस्य पूजा महेशानि कदाचिन्नास्ति पार्वति ॥ २१ ॥

अत एव महेशानि ब्रह्मणः शक्तिकारणम् ।

कार्यञ्च परमेशानि शक्तिश्च सततं प्रिये ॥ २२ ॥

अतः परं महेशानि न कार्यकारणं प्रिये ।

यस्तु सततं देवि ईश्वरे निश्चलः सदा ॥ २३ ॥

शक्तियुक्तं जपेद् देवं ईश्वरं सततं प्रिये ।

अत एव महेशानि ब्रह्मशक्तिः परा सदा ॥ २४ ॥

शक्त्या बिना महेशानि न हि मुक्तिः प्रजायते ।

तस्माच्छक्तिश्च मुक्तिश्च स्त्रीरूपी शक्तिरूपिणी ॥ २५ ॥

भक्त्या बिना महेशानि न हि मुक्तिः प्रजायते ।

मुक्तेस्तु कारणं देवि भक्तिः परमदुर्लभा ॥ २६ ॥

अतस्त्रयं महेशानि स्त्रीमयं सचराचरम् ।

श्री-ईश्वर उवाच

षट्चक्राणां महेशानि क्रमाद् वक्ष्यामि शोधनम् ।

मूलाधारस्थितं भूमिं स्वाधिष्ठानस्वरूपकम् ॥ २७ ॥

मणिपूरे जलं देवि ततश्च मरुतं तथा ।

विशुद्धौ च महेशानि आकाशं कमलानने ॥ २८ ॥

आज्ञाचक्रे महेशानि मनः सर्वार्थसाधकम् ।

तदूर्ध्वे परमेशानि पद्ममूर्ध्वमुखं तथा ॥ २९ ॥

शक्तिपुरं महेशानि सदाशिवपुरोपरि ।

सदाशिवपुरं प्राप्य शुद्धस्फटिकसन्निभम् ॥ ३० ॥

सहस्रादित्यसङ्काशं महाकालेन सङ्गतम् ।

महानन्दिगणाकीर्णं मनसा भावयेत् सदा ॥ ३१ ॥

॥ इति श्रीभूतशुद्धितन्त्रे हरपार्वतीसंवादे अष्टमः पटलः ॥

अथ नवमः पटलः

श्री-ईश्वर उवाच

एवं हि मनसा जीवं दृष्ट्वा हि परमं शिवम् ।

आनन्दपुलकोद्भूते जीवो भवति सुन्दरि ॥ १ ॥

सदाशिवं महेशानि शुद्धस्फटिकसन्निभम् ।

बहुरत्नसमाकीर्णं दीर्घबाहुं मनोहरम् ॥ २ ॥

सुखप्रसन्नवदनं स्वैराप्यं सततं प्रिये ।

श्रवणे कुण्डलोपेते रत्नहारेण शोभितम् ॥ ३ ॥

गोलपद्मसहस्रेण मालया शोभितं वपुः ।

अष्टबाहुँ त्रिनयनं शिवं पद्मदलेक्षणम् ॥ ४ ॥

पादयोर्नूपुरं रम्यं शब्दञ्च शब्दब्रह्मवत् ।

एवं स्थूलवपुस्तस्य भावयेत् कमलानने ॥ ५ ॥

शिरसोपरि देवेशि भावयेज्जीवशतं शिवम् ।

सूक्ष्मन्तु परमं दिव्यं निरीहं जडवत् सदा ॥ ६ ॥

सूक्ष्मे ध्यानं महेशानि कदाचिन्न हि जायते ।

स्थूलध्यानं महेशानि कृत्वा मोक्षमवाप्नुयात् ॥ ७ ॥

स्थूलं हि प्रकृते रूपं ध्यानञ्च प्रकृतेः प्रिये ।

आदौ स्थूलतनुं देवि सम्पूज्य कमलानने ॥ ८ ॥

ततस्तु परमेशानि परतेजश्च भावयेत् ।

तेजश्च परमेशानि प्रकृतिर्मोहिनीति च ॥ ९॥

प्राधान्यं परमेशानि प्रकृतेः शिवपूजने ।

तस्मात् सर्वासु पूज्सासु शक्तिः प्राधान्यमुच्यते ॥ १० ॥

यदा तु परमेशानि हृदये चिन्तयेद्धरिम् ।

ध्यानं कृत्वा सूक्ष्मतनोः स्थूलं विन्यस्य तत्र वै ॥ ११ ॥

ततः स्थूलतनुं ध्यात्वा हरिं पद्मदलेक्षणम् ।

श्यामलं पीतवासञ्च वनमालाविभूषितम् ॥ १२ ॥

किरीटिनं कुण्डलिनं प्रसन्नमुखपङ्कजम् ।

श्रीवत्सशोभितं वक्षो रत्नहारेण शोभितम् ॥ १३ ॥

कौस्तुभोद्भासि वरदं दीर्घबाहुमरिन्दमम् ।

प्रसन्ननेत्रकमलं चरणे नूपुरं प्रिये ॥ १४ ॥

वेणुवीणानिनादेन शब्दब्रह्मेण सुन्दरि ।

पूरयन्तं जगद् देवि सततं कमलानने ॥ १५ ॥

श्री-ईश्वर उवाच

हरेः सूक्ष्मं महेशानि विभाव्य ध्यानमाचरेत् ।

सूक्ष्मं हि निश्चलं देहं सूक्ष्मा प्रकृतिरूपिणी ॥ १६ ॥

तथापि हरिपूजायां शक्तिप्राधान्यमुच्यते ।

यत्तु ध्यानं धारणञ्च समाधिश्च शुचिस्मिते ॥ १७ ॥

सर्वं हि प्रकृते रूपं नान्यथा वचनं मम ।

ध्यानञ्च परमेशानि सर्वाङ्गचिन्तनं प्रिये ॥ १८ ॥

तदनु परमेशानि एकाङ्गचिन्तनं प्रिये ।

इदन्तु धारणाख्यातं शृणु पार्वति सादरम् ॥ १९ ॥

ध्याञ्च धारणं देवि त्यक्त्वा यद्भावयेत् हृदि ।

एषा समाधिर्विज्ञेयो नात्र कार्या विचारणा ॥ २० ॥

ध्यानञ्च धारणञ्चैव समाधिश्च शुचिस्मिते ।

मयोक्तं यत् तद् देवेशि सर्वं शक्तिमयं स्मृतम् ॥ २१ ॥

सूक्ष्मं स्थूलं महेशानि तथा शक्तिद्वयं प्रिये ।

श्रीदेव्युवाच

देवदेव महादेव षट्चक्रे परमेश्वर ।

यथा पूजां यथा ध्यानं कृत्वा जपं समाचरेत् ॥ २२ ॥

रहस्यं परमं गुह्यं मम हर्षविवर्द्धनम्।

कृपया कथय मे नाथ तवाहं परिचारिका॥ २३॥

श्री-ईश्वर उवाच

देवेशि तव दासोऽहं कथयामि शुचिस्मिते।

क्षणार्द्धं न हि जीवामि त्वां विना कमलेक्षणे॥ २४॥

त्वद्वक्राम्बुजपानेन अमृतेन शुचिस्मिते।

शिवोऽहं परमेशानि मृत्युं जित्वा वरानने॥ २५॥

शृङ्गाररससंयोगात् कालकूटं पिबाम्यहम्।

ममापि परमेशानि तनुवज्रसमं सदा॥ २६॥

देवेशि तव दासोहऽमन्तर्बाह्ये शुचिस्मिते।

अन्तरे त्वां महेशानि विभाव्य सूक्ष्मरूपिणी ॥ २७ ॥

भावनात् परमेशानि लक्षवर्षो गतो मम ।

बाह्यज्ञानं मया देवि जायते मम योगिनी ॥ २८ ॥

मयि च परमेशानि त्वमेव सूक्ष्मरूपिणी ।

दृष्ट्वा तच्चरणद्वन्द्वं तव वक्रं वरानने ॥ २९ ॥

आत्मज्ञानं परित्यज्य चरणे पतितो ह्यहम् ।

प्रकाराच्च महेशानि शृणु सम्प्रति मद्वचः ॥ ३० ॥

यदुक्तं भूतशुद्ध्यादि सर्वं त्वं नगनन्दिनि ।

सद्योगत्वं महेशानि स्वागमं कथयामि ते ॥ ३१ ॥

स्घागमं परमं ज्ञानं चक्षुः प्रज्ञानसंयुतम् ।

विज्ञानेन मतं देवि देवमातरमेव च ॥ ३२ ॥

वेदाश्च परमेशानि यानि यानि यथा तथा ।

दर्शनानि तथा देवि सकलानि पृथक् पृथक् ॥ ३३ ॥

चतुर्दशानि तन्त्राणि तथा नानाविधानि च ।

स्वागमाश्च प्रसूयन्ते सततं परमेश्वरि ॥ ३४ ॥

मम प्राणसमं देवि स्वागमं मम सम्पुटम् ।

हृदये मम देवेशि संस्थितं कमलानने ॥ ३५ ॥

यस्मिन् क्षणे महेशानि अन्तर्ध्यात्वा हरो ह्यहम् ।

स्वागमं भावितं देवि तत्क्षणे परमेश्वरि ॥ ३६ ॥

अन्तर्ध्यानं हृतं देवि स्वागमं हृदये स्थितम् ।

अन्तर्ध्यानं समाहृत्य बाह्यदृष्टिं सदा मम ॥ ३७ ॥

तदाहं सहसा देवि कथयामि तवाग्रतः।

विभाव्य परमेशानि स्वागमं हृदयात्मनि ॥ ३८ ॥

अन्यथा परमेशानि स्वागमं कथयामि ते।

स्वागमं लक्षग्रन्थं हि नाना विद्या शुचिस्मिते ॥ ३९ ॥

महेषु परमेशानि निर्मितं ब्रह्मरूपिणम्।

स्वागमं परमं पुण्यं ब्रह्माण्डबीजमव्यम् ॥ ४० ॥

स्वागमं शृणु वक्ष्यामि गिरिजा च त्रिलोचने।

नानाशास्त्रे च विद्यासु स्वागमस्तु प्रशस्यते ॥ ४१ ॥

स्वागमं परमां विद्यां नानातन्त्रविनिर्मिताम्।

शिवे विष्णौ महेशानि सूर्ये च नगनन्दिनि ॥ ४२ ॥

तथा च सर्वदेवेषु वन्ह्यादिषु शुचिस्मिते ।

तथा च सर्वशास्त्रेषु शक्तेः प्राधान्यमुच्यते ।

शङ्खाव(संख्ययैव)क्रमाद्देवि शक्तिः सर्वत्र गीयते ॥ ४३ ॥

॥ इति श्रीभूतशुद्धितन्त्रे हरपार्वतीसंवादे नवमः पटलः ॥ ९ ॥

अथ दशमः पटलः

श्री-ईश्वर उवाच

वनमालादिकं देवि विष्णोर्मतं शुचिस्मिते ।

तत्सर्वं परमेशानि शक्तिरूपं न चान्यथा ॥ १ ॥

सहस्रारे शक्तिपुरे भावयेत् परमेश्वरि ।

जीवस्य ब्रह्मणश्चापि एकतां यत्नतश्चरेत्॥ २॥

ततो ध्यानं प्रकुर्वीत स्वागमे रूढितञ्च यत्।

जपञ्च परमेशानि मनसा च समाचरेत्॥ ३॥

जपेत् समाहितो भूत्वा मालया वर्णसङ्ख्यया।

तत आज्ञापुरीं नीत्वा भावयेदिष्टदेवताम्॥ ४॥

ध्यात्वा जप्त्वा च देवेशि साक्षात् सुरगुरुर्भवेत्।

विशुद्धं प्रति देवेशि लम्बयेन्मनो विद्यया॥ ५॥

विशुद्धं परमं पद्मं षट्चक्रं तत्तु गम्यते।

षट्चक्रे परमेशानि ध्यात्वा जगन्मयीं शिवाम्॥ ६॥

तडित्कोटिप्रभां तन्वीं ब्रह्माण्डरूपिणीं शिवाम्।

निरीहां निश्चलां रम्यां महायोगमयीं पराम्॥ ७॥

मोहिनीं सर्वदेवानां आनन्दार्थियुतां पराम्।

विषतन्तुमयीं देवीं साक्षादमृतरूपिणीम्॥ ८॥

शिवस्य युवतीं योग्यां विभाव्य शुद्धवर्तिनि।

मनसा परमेशानि जपेदष्टशतं प्रिये॥ ९॥

हृत्पद्मं प्रति देवेशि न स्वपेत् परमां पराम्।

शुद्धध्यानञ्च वर्णानां योगपद्मस्थितां पराम्॥ १०॥

योगपद्मे महेशानि जीवो मनसि भावयेत्।

भुजङ्गरूपिणीं देवीं नित्यां कुण्डलिनीं पराम्॥ ११॥

अव्यक्तरूपिणीं रम्यां ध्यानगम्यां वरानने।

योगपथे महेशानि जपेदष्टशतं पुनः ॥ १२ ॥

न स्वपेज्जीवमनसा मणिपूरं प्रति प्रिये ।

भुजङ्गभृङ्गसङ्काशं मणिपूरं महाप्रभम् ॥ १३ ॥

तत्रस्थशिवलिङ्गेन योजयेत् कुण्डलीं पराम् ।

ततो जीवो महेशानि तत्क्षणाद् ब्रह्मचाप्नुयात् ॥ १४ ॥

ततस्तु परमेशानि जीवस्तु मनसा वृतः ।

ध्यात्वा ब्रह्ममयीं शुद्धां जपेदष्टशतं प्रिये ॥ १५ ॥

तदनु परमेशानि स्वाधिष्ठानं लयेत् पराम् ।

स्वाधिष्ठानं महेशानि शुद्धस्फटिकसन्निभम् ॥ १६ ॥

भावयेत् तत्र देवेशं शङ्खकुन्दसमप्रभम् ।

संयोज्य परमां दिव्यां शिवेन सह पार्वति ॥ १७ ॥

सर्वं हि परमेशानि मनसा कुरु यत्नतः ।

इन्द्रियाणां प्रधानं हि मनः सर्वत्र गीयते ॥ १८ ॥

तत्र देवं शिवं शान्तं विचिन्त्य मनसा क्षणात् ।

परं ब्रह्ममयं भूत्वा जपेदष्टशतं तथा ॥ १९ ॥

तदनु परमेशानि मूलाधारात् व्रजेत् परम् ।

गुदपद्मं महेशानि मूलाधारं प्रकीर्तितम् ॥ २० ॥

चतुर्दलयुतं रम्यं तरुणारुणविग्रहम् ।

भावयेत् परमेशानं सिन्धुवरुणविग्रहम् ॥ २१ ॥

संयोज्य परमां नित्यां निष्फलां ज्ञानरूपिणीम् ।

शिवसंयोगमात्रेण जीवो ब्रह्ममयो भवेत्॥

मनसा संयुतो भूत्वा जपेदष्टशतं तथा॥ २२॥

॥ इति श्रीभूतशुद्धितन्त्रे हरगौरीसंवादे दशमः पटलः॥ १०॥

अथ एकादशः पटलः

श्री-ईश्वर उवाच

एवं द्वादशधा देवि यतायातः करोति यः।

स सिद्धः स गमः सोऽपि मम तुल्यः सदा प्रिये॥ १॥

वचोमात्रेण देवेशि तस्य विद्या हि सिद्धये।

सप्तानां कोटिविद्यानां मन्त्राणाञ्च वरानने॥ २॥

सिद्धमाध्यादिकं देवि अतिगुह्यतरं प्रिये।

अप्रकाश्यमिदं तत्त्वं पशोर्गोप्यं सदा प्रिये ॥ ३ ॥

हृदये मम देवेशि अजपा सम्पुटे स्थितम् ।

सर्वासां नरनारीणां सम्पुटं हंसपक्षिणम् ॥ ४ ॥

निःसरन्ति महेशानि विद्यामन्त्राणि पार्वति ।

शक्तिप्रसादाद् देवेशि लक्षवर्षं गतस्तदा ॥ ५ ॥

लक्षवर्षं महेशानि भावयामि शुचिस्मिते ।

सम्पुटे परमां विद्यां सर्वविद्यास्वरूपिणीम् ॥ ६ ॥

पुंरूपां प्रकृतिरूपां चन्द्रसूर्यसमप्रभाम् ।

वेदमातां सदा वन्ध्यां योगिनीं योगरूपिणीम् ॥ ७ ॥

संसारतारिणीं देवीं महामोक्षप्रदायिनीम् ।

प्रणमामि सदा शुद्धां नित्यां विग्रहरूपिणीम्॥ ८॥

प्रणम्य परमां दिव्यां निगदामि शुचिस्मिते।

ईश्वर उवाच

काञ्चनाख्यं समुद्धृत्य रोमञ्च तदनन्तरम्।

सरिहरिं समुद्धृत्य तदनु काञ्चनं प्रिये॥ ९॥

बिन्द्वर्द्धसंयुतं कृत्वा षट्पद्मे जपमाचरेत्।

अष्टोत्तरशतं जप्त्वा षट्पद्मे कमलेक्षणे॥ १०॥

दशधा प्रजपेद् वापि भूतशुद्धिफलं लभेत्।

एकधा तु समुद्धृत्य भूतशुद्धिं समाचरेत्॥ ११॥

भूतशुद्धिं महेशानि तदा साङ्गं भवेत् प्रिये।

अन्यथा विफला पूजा जपञ्च विफलं प्रिये ॥ १२ ॥

युगाक्षरं जपेद् देवि चतुर्युगफलं लभेत् ।

चतुर्युगजपाद्देवि यत्फलं लभते नृणाम् ॥ १३ ॥

तत्फलं समवाप्नोति एकोच्चारेण पार्वति ।

एकोच्चारेण देवेशि मम तोषो न संशयः ॥ १४ ॥

सम्पुटं परमेशानि नित्यां सर्वस्वरूपिणीम् ।

विभाव्य सततं देवि षट्चक्रं सततं शिवे ॥ १५ ॥

एकामुपास्य देवेशि महाविद्यामुपास्महे ।

अन्यथा परमेशानि महाविद्यां वरानने ॥ १६ ॥

तदनु परमेशानि महाविद्यामुपास्महे ।

अन्यथा परमेशानि प्रेतवत् सकलं भवेत् ॥ १७ ॥

श्री-ईश्वर उवाच

अन्यतन्त्रं महेशानि निगदामि पुनः प्रिये ।

तन्त्रं तन्त्रस्य वक्ष्यामि भूतशुद्धिं भवेद् यथा ॥ १८ ॥

पापस्य कारणं देवि पुरुषं पापसंयुतम् ।

क्रोधमोहयुतं कृष्णं ईषत्पिङ्गं वरानने ॥ १९ ॥

तस्य शुद्धिं प्रवक्ष्यामि नीरजायतलोचने ।

पञ्चानामपि वायूनां शुद्धिं नास्ति वरानने ॥ २० ॥

स्वभावतः सदा शुद्धिं पञ्चभूतात्मकं वपुः ।

रोदनञ्च तथामूर्च्छां भ्रमञ्च कमलानने ॥ २१ ॥

पुरुषात् पापरूपाच्च जायते कमलानने ।

भूतशुद्धेस्तु मन्त्राणि निगदामि शृणु प्रिये ॥ २२ ॥

प्रणवं त्रिविधं देवि वामा ज्येष्ठा च पार्वति ।

ततो रौद्री महेशानि त्रिप्रकारं वरानने ॥ २३ ॥

आद्यन्ते प्रणवं दत्त्वा पञ्चाशन्मातृकां जपेत् ।

बिन्द्वर्द्धसंयुतं कृत्वा विद्यां भव विमोचिनीम् ॥ २४ ॥

माता हि मन्त्रविद्यानां पिता चैव शुचिस्मिते ।

सर्वासां मन्त्रविद्यानां पिता माता च मातृका ॥ २५ ॥

पिता माता च सन्तुष्य अन्यक्रोधो निरर्थकः ।

पुरातनीमविज्ञाय भूतशुद्धिं करोति यः ॥ २६ ॥

विफलं तस्य देवेशि भूतशुद्धिं वरानने।

भूतशुद्धिं महेशानि जपपूजां न शंशते॥ २७॥

॥ इति श्रीभूतशुद्धितन्त्रे हरगौरीसंवादे एकादशः पटलः॥ ११॥

## अथ द्वादशः पटलः

श्री-ईश्वर उवाच

एतज्ज्ञानं महेशानि यः कुर्यात् सततं प्रिये।

महायोगेश्वरः सोऽपि मम तुल्यो न संशयः॥ १॥

तस्य सर्वाणि मन्त्राणि विद्या च परमेश्वरि।

शीघ्रं सिध्यति देवेशि नात्र कार्या विचारणा॥ २॥

एतद्रहस्यं परमं सदा ब्रह्मविनिर्णयम्।

योगज्ञानं तपः शास्त्रं विद्या शिल्पानि यानि च ॥ ३ ॥

सर्वं हि प्रकृते रूपं निश्चयं वचनं मम ।

शृणु पार्वति वक्ष्यामि रहस्यं परमव्यम् ॥ ४ ॥

भूतशुद्धेर्महेशानि विद्यां परमगोपिताम् ।

निगदामि शृणु प्राज्ञे नीरजायतलोचने ॥ ५ ॥

श्री-ईश्वर उवाच

अवश्यं भावयेद् देवि विद्यां भागवताभिधाम् ।

कामबीजं महेशानि त्रिरुच्चार्य शुचिस्मिते ॥ ६ ॥

धीमहीति ततो देवि वह्निजायां समुद्धरेत् ।

ततस्तु परमेशानि त्रिविधं काममुद्धरेत् ॥ ७ ॥

भगवत्या इदं देवि तेन भागवतं स्मृतम्।

भागवताख्यां महाविद्यां दशधा जपमाचरेत्॥ ८॥

दिवसे दिवसे देवि प्रजपेत् यदि मानवः।

तदेव परमेशानि दीक्षाफलमवाप्नुयात्॥ ९॥

नित्यां कर्म महेशानि विद्यां भागवताभिधाम्।

विद्यां कल्पद्रुमाकारां धर्मकामार्थमोक्षदाम्॥ १०॥

सर्ववेदेषु तन्त्रेषु विद्यां भागवताभिधाम्।

गीयते परमेशानि नित्या प्रकृतिरूपिणी॥ ११॥

अत एव महेशानि विद्यां भागवताभिधाम्।

अज्ञानाद् यदि वा मोहात् कामाद्वा कमलेक्षणे॥ १२॥

न जपेद् यदि देवेशि द्विजः शूद्रत्वमाप्नुयात्।

सर्वं तस्य वृथा देवि कुतः पूजा कुतः सुखम्॥ १३॥

क्षत्रियोऽपि वरारोहे न जपेद् यदि पामरः।

वैश्यत्वं सहसायाति वैश्यः शूद्रत्वमाप्नुयात्॥ १४॥

क्षत्रियोऽपि वरारोहे प्रजपेद्यदेकधा।

ब्राह्मणत्वं ततो याति सहसा परमेश्वरि॥ १५॥

वैश्यस्तु परमेशानि क्षात्रत्वं याति तत्क्षणात्।

ब्राह्मणोऽपि नरश्रेष्ठः साक्षाद् ब्रह्म न संशयः॥ १६॥

शूद्रस्तु परमेशानि वैश्यत्वं याति पार्वति।

इयं विद्या वरारोहे सदा भागवताभिधा॥ १७॥

इमां विद्यां महेशानि मात्रामेकादशाक्षरीम्।

अज्ञात्वा परमेशानि पुराणं यस्तु वाचयेत्॥ १८॥

स याति नरकं घोरं सदा संसर्गिणा सह।

तस्माद् यत्नेन देवेशि वर्जनीयः स तु द्विजः॥ १९॥

श्रीदेव्युवाच

शूद्रस्य परमेशानि नाधिकारो वृषध्वज।

वह्निजायान्वितां विद्यां शूद्रस्य कथमुच्चरेत्॥ २०॥

श्री-ईश्वर उवाच

तन्त्रोक्तं प्रणवं देवि वह्निजायाञ्च सुन्दरि।

प्रजपेत् सततं देवि नात्र कार्या विचारणा॥ २१॥

शक्तिविद्यान्विता देवि जायते यदि पार्वति ।

प्रजपेत् सहसा देवि तदा सिद्धिश्च जायते ॥ २२ ॥

गायत्र्यक्षरसंयुक्तं न जपेद् भागवताभिधाम् ।

शूद्रस्य परमेशानि विद्यां भागवतीं शृणु ॥ २३ ॥

मन्मथं त्रिगुणं देवि समुद्धृन्य वरानने ।

प्रथमं चतुर्दशं दत्त्वा स्वयं प्रणवरूपिणीम् ॥ २४ ॥

वह्निजायां परे दत्त्वा प्रजपेत् दशधा यदि ।

शूद्रोऽपि परमेशानि वैश्यत्वं याति तत्क्षणात् ॥ २५ ॥

तदैव महती सिद्धिः शूद्रस्य कमलेक्षणे ।

इमां भागवतीं विद्यां स्वागमं विद्धि पार्वति ॥ २६ ॥

स्वागमं परमं ब्रह्म अनन्तशक्तिसंयुतम् ।

तव स्नेहात् समाख्यातं सुगोप्यं कमलेक्षणे ॥ २७ ॥

सारात्सारं महेशानि विद्यां भागवताभिधाम् ।

शूद्रस्य सकलं देवि कथयामि वरानने ॥ २८ ॥

मन्मथत्रयमुद्धृत्य धीकारं तदनन्तरम् ।

वह्निजायां परे दत्त्वा मन्मथत्रयमुद्धरेत् ॥ २९ ॥

इयं भागवती विद्या शूद्रवाच्या विधीयते ।

इति ते कथितं तत्त्वं महाभक्त्या वरानने ॥ ३० ॥

कस्मैचित् प्रवक्तव्यं यदीच्छेदात्मनः सुखम् ।

शान्ताय ऋजवे देवि भक्तिश्चाण्डालजातिषु ॥ ३१ ॥

अभक्ताय महेशानि ब्राह्मणाय न दापयेत्।

अभक्तभ्योऽपि पुत्रेभ्यो न दद्यात् कमलेक्षणे ॥ ३२ ॥

भक्ताय शान्तचित्ताय दद्याद् विद्यां वरानने।

अभक्तेभ्योऽपि पुत्रेभ्यस्तत्र मृत्युमवाप्नुयात्॥ ३३ ॥

यत् किञ्चिद् दृश्यते देवि त्रैलोक्यं सचराचरम्।

तत्सर्वं परमेशानि शक्तियुक्तं सुनिश्चितम्॥ ३४ ॥

सर्वतत्त्वं महेशानि परा शक्तिश्च मोहिनी।

रूपादि यानि तत्त्वानि तानि तत्त्वानि कुण्डली ॥ ३५ ॥

रूपं हि षड्विधं देवि सर्वतन्त्रेषु निश्चितम्।

रसस्तु षड्विधः स्वाहा नानास्वादः स्यान्निश्चितम्॥ ३६ ॥

गन्धं हि द्विविधं देवि सर्वशक्तियुतं प्रिये ।

अन्यानि यानि तत्त्वानि चतुर्विंशति सुन्दरि ॥ ३७ ॥

सर्वं शक्तिमयं विद्धि क्रमेण कमलेक्षणे ।

शुक्लं रक्तं तथा पीतं हरितं कृष्णमेव च ॥ ३८ ॥

विचित्राणि क्रमतो वर्णं कृष्णवर्णं प्रकीर्तितम् ।

रसस्तु द्विविधं देवि सुगन्धि प्रतिगन्धकम् ॥

एवं सर्वं विजानीयात् सदा शक्तिमयं प्रिये ॥ ३९ ॥

॥ इति श्रीभूतशुद्धितन्त्रे हरगौरिसंवादे द्वादशः पटलः ॥ १२ ॥

अथ त्रयोदशः पटलः

श्री-ईश्वर उवाच

अथ वक्ष्यामि देवेशि विद्यां शक्तिमयीं प्रिये ।

प्रणवं प्रथमं देवि उद्धृत्य कमलानने ॥ १ ॥

ततः कामं समुद्धृत्य प्रणवं तदनन्तरम् ।

ततः प्रणवमुद्धृत्य मायाबीजं समुद्धरेत् ॥ २ ॥

प्रणवं पुनरुच्चार्य शृणु देवि वरानने ।

कामबीजं समुद्धृत्य प्रणवमुद्धरेत् ततः ॥ ३ ॥

ततो मायां समुद्धृत्य (वित्तोद्धारं) वरानने ।

ततः परं महेशानि कन्दर्पमुद्धरेत् प्रिये ॥ ४ ॥

सर्वान्ते वह्निललनां दत्त्वा जपं समारभेत् ।

एषा तु परमेशानि विद्या सप्तदशाक्षरी ॥ ५ ॥

वैष्णवे गाणपत्ये च शैवे च परमेश्वरि ।

शाक्तेषु परमेशानि दशविद्या सुशस्यते ॥ ६ ॥

एषा विद्या वरारोहे सर्वशक्तिमयी प्रिये ।

सर्वशक्तिमयीं विद्यां न जपेत् यदि पामरः ॥ ७ ॥

सर्वं तस्य वृथा देवि हानिः स्यादुत्तरोत्तरम् ।

वृथा पूजा महेशानि जपस्तस्य वृथा भवेत् ॥ ८ ॥

न्यासञ्च विफलं तस्य भूतशुद्धिश्च पार्वति ।

प्राणायामं महेशानि तथैवाचमनं प्रिये ॥ ९ ॥

सर्वाणि तस्य विफलं जायते कमलानने ।

तस्मादादौ जपेद् विद्यां सप्तदशाक्षरीं प्रिये ॥ १० ॥

न जपेद् यदि देवेशि ज्ञात्वा पूजां समाचरेत्।

सर्वशास्त्रेषु देवेशि वैष्णवे च विशेषतः॥ ११ ॥

शैवे च गाणपत्ये च प्रशस्ता शक्तिरूपिणी।

आदौ विद्या महेशानि दशधा जपमाचरेत्॥ १२ ॥

भूतशुद्ध्यादिकं सर्वं ततः साधक आरभेत्।

श्री-ईश्वर उवाच

भूतशुद्धि विधायेत्थं मातृकान्यासमाचरेत्।

ततः परं महेशानि प्राणायामं वरानने॥ १३ ॥

प्राणायामं विना देवि नहि पूजां समाचरेत्।

प्राणायामत्रयं दत्त्वा आसनानि समाचरेत्॥ १४ ॥

॥ इति श्रीभूतशुद्धितन्त्रे हरपार्वतीसंवादे त्रयोदशः पटलः ॥ १३ ॥

## अथ चतुर्दशः पटलः

मन्त्रार्थं मन्त्रचैतन्यं योनिश्चापि न वेत्ति यः।

शतकोटि जपेनापि तस्य विद्या न सिध्यति ॥ १ ॥

देवदेव महादेव रहस्यं पूर्वसूचितम्।

एतत्तत्त्वं महादेव कृपया वद शङ्कर ॥ २ ॥

श्री-ईश्वर उवाच

मन्त्रार्थं परमेशानि सावधानावधारय।

तथा च मन्त्रचैतन्यं निर्वाणपदमुत्तमम्॥ ३ ॥

प्रसङ्गात् परमेशानि निवदामि तवाज्ञया।

मूलाधारे मूलविद्यां भावयेदिष्टदेवताम्॥ ४॥

शुद्धस्फटिकसङ्काशां भावयेत् परमाक्षरीम्।

भावयेदक्षरश्रेणीमिष्टविद्यां सनातनीम्॥ ५॥

मूहूर्त्तार्द्धं विभाव्यैतां पञ्चध्यानपरो भवेत्।

ध्यानं कृत्वा महेशानि मुहूर्त्तार्द्धं ततः परम्॥ ६॥

ततो जीवो महेशानि मनसा कमलेक्षणे।

स्वाधिष्ठानं ततो गत्वा भावयेदिष्टदेवताम्॥ ७॥

बन्धूकारुणसङ्काशां जपासिन्दूर आकृतिम्।

विभाव्य अक्षरश्रेणीं पद्ममध्यगतां शुभाम्॥ ८॥

ततो जीवः प्रसन्नात्मा पक्षिणा सह सुन्दरी।

मणिपूरं ततो गत्वा भावयेदिष्टदेवताम् ॥ ९ ॥

विभ्राम अक्षरश्रेणीं पद्ममध्यगतां पराम् ।

शुद्धस्फटिकसङ्काशां शिववक्षोपरि स्थिताम् ॥ १० ॥

ततो जीवो महेशानि पक्षिणा सह पार्वति ।

हृत्पद्मं प्रययौ शीघ्रं नीरजायतलोचने ॥ ११ ॥

इति विद्यां महेशानि भावयेत् कमलोपरि ।

विभाव्य अक्षरश्रेणीं महामरकतप्रभाम् ॥ १२ ॥

ततो जीवो वरारोहे विशुद्धं प्रययौ प्रिये ।

तत्पद्मगहनं गत्वा पक्षिणा जीव पार्वति ॥ १३ ॥

इष्टविद्यां महेशानि आकाशोपरि भावयेत् ।

विभाव्य अक्षरश्रेणीं हरिद्वर्णं वरानने ॥ १४ ॥

तत्र आज्ञापुरं देवि प्रययौ जीव पार्वति ।

पक्षिणा सह देवेशि खञ्जनाक्षि शुचिस्मिते ॥ १५ ॥

इष्टविद्यां महेशानि साक्षाद् ब्रह्मस्वरूपिणीम् ।

विभाव्य अक्षरश्रेणीं चतुर्वर्णानुरञ्जिताम् ॥ १६ ॥

आज्ञाचक्राणि (सम्भाव्य) विभाव्य वरवर्णिनि ।

षट्चक्रे परमेशानि ध्यानं कृत्वा शुचिस्मिते ॥ १७ ॥

ध्यानेन परमेशानि यद्रूपं समुपस्थितम् ।

तदेव परमेशानि मन्त्रार्थं विद्धि पार्वति ॥ १८ ॥

प्रषञ्चानि ततोऽतीत्य जीवस्तु पक्षिणा सह ।

प्रययौ परमं रम्यं निर्वाणं परमं पदम्॥ १९॥

सहस्रारं शिवपुरं तन्मध्ये सात्त्विकीं पुरीम्।

कौशिकीं सततं देवि पुरीं शक्तिमयीं प्रिये॥ २०॥

पक्षिणा सह देवेशि जीवः शीघ्रं प्रयाति हि।

विभाव्य अक्षरश्रेणीममृतान्तु रसायनीम्॥ २१॥

तत् सदा शिवपुरं रम्यं कल्पवृक्षतलस्थितम्।

नानारत्नसमाकीर्णं तन्मूलं कमलानने॥ २२॥

वृक्षञ्च परमेशानि सततं त्रिगुणात्मकम्।

पञ्चभूतात्मकं वृक्षं पञ्चशाखासमन्वितम्॥ २३॥

चतुःशाखा चतुर्वेदं चक्रतत्त्वसमन्वितम्।

चतुर्वर्णयुतं पुष्पं शुक्लं रक्तं शुचिस्मिते ॥ २४ ॥

पीतं कृष्णं महेशानि पुष्पद्वयं परं शृणु ।

हरितञ्च महेशानि विचित्रं सर्वमोहनम् ॥ २५ ॥

षट्पुण्यञ्च महेशानि- मिदं स्मृतम् ।

अन्यानि यानि शाखानि क्षुद्राणि नीललोचने ॥ २६ ॥

तानि सर्वाणि पत्राणि सर्वशास्त्राणि सुन्दरि ।

त्वगस्थिमेधामज्जानि वृक्षशाखानि च प्रिये ॥ २७ ॥

तानि सर्वाणि देवेशि इन्द्रियाणि प्रकीर्तितम् ।

सर्वशक्तिमयीं देवि दिव्यां नीरजलोचने ॥ २८ ॥

एवंभूतं महावृक्षं भ्रमरैः परिशोभितम् ।

इतिहासपुराणानि सर्वाणि वृक्षसंस्थितम् ॥ २९ ॥

कोकिलैः परमेशानि शोभितं बहुपक्षिभिः ।

नानापक्षियुतं रम्यं दिव्यस्त्रीगणसंयुतम् ॥ ३० ॥

देवदानवगन्धर्वशोभितं कमलानने ।

बन्धुभिः शोभितं देवि गणैरत्नादिकाङ्क्षिभिः ॥ ३१ ॥

सूक्ष्मं हि परमं दिव्यं पर्यङ्कं सर्वमोहनम् ।

चन्द्रकोटिसमं देवि सर्वकोटिसमप्रभम् ॥ ३२ ॥

शीतांशुरश्मिसंयुक्तं नानागन्धानुमोदितम् ।

नानापुष्पसमूहेन रचितं हेममालया ॥ ३३ ॥

ततः परं महेशानि सदाशिवः स्वयं पुनः ।

जीवः पक्षियुतो देवि भावयेत् तत्र पार्वति ॥ ३४ ॥

सदाशिवो महेशानि महाकुण्डलिनीयुतः ।

एवं कल्पद्रुमं ध्यात्वा तदधो रत्नवेदिकाम् ॥ ३५ ॥

तत्रोपरि महेशानि पर्यङ्कं भावयेत् प्रिये ।

कामिनीकोटिसंयुक्तं चामरैर्हस्तसंस्थितम् ॥ ३६ ॥

एवं विभाव्य मनसि सदाजीवं शुचिस्मिते ।

यस्य यस्य महेशानि यदिष्टं कमलानने ॥ ३७ ॥

तस्य ध्यानसमायुक्तो मनसा परमेश्वरि ।

जीवो ध्यानपरो भूत्वा जपेदष्टशतं प्रिये ॥ ३८ ॥

मन्त्राक्षराणि देवेशि मातृकापुटितं क्रमात् ।

कृत्वा जीवः प्रसन्नात्मा जपेदष्टशतं प्रिये ॥ ३९ ॥

अनुलोमविलोमेन कुर्यात् परमयत्नतः ।

अनेन क्रमतो देवि चैतन्यं विद्धि सुन्दरि ॥ ४० ॥

मन्त्रार्थं मन्त्रचैतन्यं कथितं तव भक्तितः ।

न कस्मैचित् प्रवक्तव्यं यदीच्छेच्छुभमात्मनः ॥ ४१ ॥

इदं रहस्यं परमं गोपनीयं वरानने ।

शिष्याय भक्तियुक्ताय साधकाय प्रकाशयेत् ॥ ४२ ॥

वैष्णवेऽपि महेशानि कुर्याच्चैतन्यमद्भुतम् ।

विष्णुमन्त्रे महेशानि शिवमन्त्रेऽप्युपासते ॥ ४३ ॥

चैतन्यं बहुरत्नेन वैष्णवो यत्नतश्चरेत् ।

ततः सिद्धो भवेन्मन्त्रो विद्या च कमलानने ॥ ४४ ॥

सिद्धमन्त्रस्तु यः कुर्यात् स शिवो नात्र संशयः ।

ब्रह्माण्डभाण्डमध्ये तु विहरेत् स च साधकः ॥ ४५ ॥

शतकोटि महेशानि तत्पुरश्चरणं स्मृतम् ।

चैतन्यरहितं देवि यो जपेत् न च पापकृत् ॥ ४६ ॥

मन्त्रार्थं मन्त्रचैतन्यं सुगोप्यं भुवनत्रये ।

तव भक्त्या मयाख्यातं दासोऽहं तव सुन्दरि ॥ ४७ ॥

अहं मृत्युञ्जयो देवि प्रसादात् तव सुन्दरि ।

त्वद्वक्त्राम्बुजपीयूषपानेन कमलानने ॥ ४८ ॥

वज्रतुल्यं मम वपुः सदाविभववर्द्धनम् ।

ब्रह्माण्डं सकलं देवि तव रूपमयं सदा ॥ ४९ ॥

या शक्तिः परमेशानि सा त्वं भवसि सर्वदा ।

कृपामयि महेशानि प्रकृतिः शरीरमाश्रिता ॥ ५० ॥

सती त्वं परमेशानि पार्वतीत्वं गता प्रिये ।

सतीत्वं परमं प्राप्ता इदानीं पार्वती प्रिये ॥ ५१ ॥

सती स्नेहं महेशानि त्यक्त्वा सुन्दरि यत् कृता ।

पार्वतीत्वं गता भद्रे मेनकायां शुचिस्मिते ॥ ५२ ॥

एतस्मिन्नन्तरे काले सदा ध्यानपरो ह्यहम् ।

इति ध्यानं समागच्छन् भूत्वा तिष्ठामि सुन्दरि ॥ ५३ ॥

ध्यानमार्गपरो भूत्वा करोमि स्वागमं जपम् ।

स्वावासं शक्तिरूपं सदा यत् हृदि संस्थितम्॥ ५४॥

स्वावासं वर्णपुञ्जानि नानाविद्यानि पार्वति।

नानाविद्यासु देवेशि दश विद्या प्रगीयते॥ ५५॥

एतानि स्वागमं देवि सारात्सारं परात्परम्।

जपित्वा लक्षवर्षाणि स्वागमं शक्तिरूपिणम्॥ ५६॥

सिद्धिं गता महेशानि स्वागमे परमेश्वरि।

ध्यानमार्गं परित्यज्य तव पादेषु गीयते॥ ५७॥

यदिष्टं ध्यानमार्गेण तत्सर्वं कथयामि ते।

स्वागमं हि विना देवि न किञ्चिद् वर्त्तते प्रिये॥ ५८॥

सर्वं हि परमेशानि ब्रह्माण्डं स्वागमे स्थितम्।

स्वागमाच्च प्रसूयन्ते कोटिशः कुण्ड (म) ग्नयः ॥ ५९ ॥

ब्रह्माण्डं कोटिशो देवि निर्माणं स्वागमात् प्रिये ।

पुराणानि महेशानि तन्द्राणि विविधानि च ॥ ६० ॥

यत् किञ्चिद् दृश्यते देवि स्थूलसूक्ष्मं शुचिस्मिते ।

तत् सर्वं परमेशानि स्वागमात् कमलानने ॥ ६१ ॥

सृष्टिञ्च कुरुते देवि ब्रह्मा स्वागमात् कमलानने ।

स्थितिञ्च कुरुते विष्णुः स्वागमात् नगनन्दिनि ॥ ६२ ॥

संहरामि जगत् सर्वं त्रैलोक्यं सचराचरम् ।

ब्रह्मा विष्णुश्च रुद्रश्च सर्वे स्वागमरूपिणः ॥ ६३ ॥

स्वागमो ब्रह्मणो रूपं स्वागमं परमं पदम् ।

तेजःपुञ्जं महेशानि यदुक्तं कमलानने ॥ ६४ ॥

तेजःपुञ्जन्तु देवेशि स्त्रीरूपं स्वागमं प्रिये ।

स्वागमं मुक्तिकैवल्यं निर्वाणपदमव्ययम् ॥ ६५ ॥

स्वागमन्तु विना देवि सदेवासुरमानुषम् ।

स्वागमं परमेशानि मम इष्टं सदा प्रिये ॥

रहस्यं स्वागमोपेतं प्रसङ्गात् कथितं मया ॥ ६६ ॥

॥ इति श्रीभूतशुद्धितन्त्रे हरपार्वतीसंवादे चतुर्दशः पटलः ॥ १४ ॥

## अथ पञ्चदशः पटलः

श्री-ईश्वर उवाच

धन्यं यशस्यमायुष्यं कलिकल्मषनाशनम् ।

यः कुर्यान्मातृकान्यासं स एव श्रीसदाशिवः ॥ १ ॥

विना न्यासं महेशानि यो जपेन्मातृकाक्षरम् ।

स याति नरकं घोरं विघ्नस्तस्य पदे पदे ॥ २ ॥

ब्रह्मादयोऽपि यां कृत्वा सृष्टिस्थित्यन्तकारकाः ।

द्वारकानायकः कृष्णःयां कृत्वापि युगे युगे ॥ ३ ॥

यां कृत्वा परमेशानि श्रीकृष्णः स्त्रीषु मोहनः ।

मातृकावर्णमाश्रित्य श्रीकृष्णः कमलानने ॥ ४ ॥

षोडशस्त्रीसहस्राणि स रेमे मातृकाकारणात् ।

श्रीरामश्च महेशानि अयोध्यायां वरानने ॥ ५ ॥

वीर्याधिकारी देवेशि भुङ्क्ते राज्यमकण्टकम् ।

दशवर्षसहस्राणि रामो राज्यमाचीकरत्॥ ६॥

हत्वा च त्रिविधान् वीरान् वारणादिनिशाचरान्।

मातृकावर्णमाश्रित्य सर्वं कुर्याद्रघूत्तमः॥ ७॥

पञ्चाशन्मातृकां देवीं जननीं विश्वमोहिनीम्।

पूर्वोक्ततन्त्रवद् देवि सर्वं कुर्याद् विचक्षणः॥ ८॥

प्रथमं मातृकागायत्रीं ध्यानपूर्वां शुचिस्मिते।

ततो जपं मातृकायाः कुर्यात् साधकयत्नतः॥ ९॥

षडङ्गयुगलं देवि ततः कुर्यात् समाहितः।

ततस्तु मातृकाध्यानं बहिर्न्यासं ततः परम्॥ १०॥

ततः परं महेशानि मातृकापानमुत्तमम्।

एवमष्टमकं देवि मातृकान्यासमाचरेत्॥ ११॥

पठित्वा कवचं देवि देहेषु न्यासमाचरेत्।

न्यासस्य परमेशानि वरस्य गुरुरूपकम्॥ १२॥

यन्नोक्तं सर्वतन्त्रेषु प्रसङ्गात् कथयामि ते।

त्रिगुणस्य महेशानि न्यासं वक्ष्यामि संशृणु॥ १३॥

यं विना परमेशानि व्यर्थ-।

शिवविष्णुब्रह्मयुतं बिन्द्वर्ध्वचन्द्रसंयुतम्॥ १४॥

रजः सत्त्वं तमो देवि अर्द्ध योनी शुचिस्मिते।

सर्वोपरि महेशानि बिन्दु ब्रह्मस्वरूपिणम्॥ १५॥

न्यासश्च त्रिगुणोपेतं विन्यसेत् तस्य सन्धिषु।

पञ्चाशन्मातृकास्थाने त्रिगुणं न्यासमाचरेत्॥ १६॥

ततो भावय देवेशि न्यासं त्रैलोक्यमोहनम्।

न्यासस्य परमेशानि रहस्यं परमाद्भुतम्॥ १७॥

प्रपञ्चानां महेशानि दलेषु त्रिगुणं न्यसेत्।

गतञ्च परमेशानि त्रिधा वर्तनतो भवेत्॥ १८॥

अष्टधा त्रिगुणं देवि सहस्रारे ततो न्यसेत्।

अष्टोत्तरशतं देवि भिन्नायां त्रिगुणं न्यसेत्॥ १९॥

न्यासाधिकारी देवेशि ततो भवति साधकः।

त्रिगुणन्यासमात्रेण अधिकारीति गीयते॥ २०॥

अन्यथा विफलं न्यस्यं जपञ्च विफलं भवेत्।

न्यासञ्च विविधं देवि नानातन्त्रेषु गीयते ॥ २१ ॥

मातृकापरमाध्यानं सदा ब्रह्मादिभिः प्रिये ।

न्यासानां परमेशानि मातृका विश्वमोहिनी ॥ २२ ॥

स्रष्टा च परमेशानि गीयते आगमैः प्रिये ।

तस्मात्तु यत्नतो देवि मातृकान्यासमाचरेत् ॥ २३ ॥

रहस्यं परमं दिव्यं त्रिगुणन्यासकर्मणि ।

अतः परं मातृकायाः षोढा मोक्षप्रदायिनी ॥ २४ ॥

अकृत्वा मातृकां षोढां न्यासमन्यं करोति यः ।

षोढा च विफलं तस्य मातृका विफलं भवेत् ॥ २५ ॥

कृत्वा तु परमेशानि यानि न्यासानि आचरेत् ।

सफलानि सदा तस्य अन्यथा रोदनं वने ॥ २६ ॥

तस्मात्तु यत्नतः षोढां शृणु देवि वरानने ।

षोढा तु परमेशानि साक्षाद् ब्रह्मस्वरूपिणी ॥ २७ ॥

निरक्षरा साक्षरा वा कोटिचन्द्रसमप्रभाम् ।

ब्रह्मविष्णुनुतां रम्यां मम सम्पुटसंस्थिताम् ॥ २८ ॥

मम प्राणसमां विद्यां साक्षाज्ज्योतिर्मयीं शिवाम् ।

मातृषोढां वरारोहे सावधानावधारय ॥ २९ ॥

मन्त्रौङ्कारक्रमेणैव प्रसङ्गात् कथयामि ते ।

त्रिगुणे पुटितां कृत्वा पञ्चाशन्मातृकां प्रिये ॥ ३० ॥

परयत्नेन देवेशि पञ्चाशत् स्थानसन्धिषु ।

प्रथममनुलोमे तु विलोमं तदनन्तरम् ॥ ३१ ॥

ततः परं वरारोहे त्रिगुणं न्यासमाचरेत् ।

अष्टोत्तरशतं कृत्वा सर्वसिद्धीश्वरो भवेत् ॥ ३२ ॥

न्यासमात्रेण देवेशि जीवन्मुक्तो भवेन्नरः ।

प्रपञ्चानां दले देवि प्रथमं न्यासमाचरेत् ॥ ३३ ॥

ततः परं महेशानि बाह्यन्यासं समाचरेत् ।

शूद्रस्तु परमेशानि चतुर्दशस्वरं न्यसेत् ॥ ३४ ॥

कवचं हि विना देवि प्रथमं न्यासमाचरेत् ।

चतुर्दशस्वरं पुण्यं दीर्घप्रणवमुच्यते ॥

तस्मात् सर्वत्र शूद्रस्तु दीर्घप्रणवमुच्यते ॥ ३५ ॥

॥ इति श्रीभूतशुद्धितन्त्रे हरपार्वतीसंवादे पञ्चदशः पटलः ॥ १५ ॥

## अथ षोडशः पटलः

श्री-ईश्वर उवाच

प्राणायामं महेशानि प्रसङ्गात् कथयामि ते ।

जीवशुद्धिं मनःशुद्धिं प्राणायाममिदं स्मृतम् ॥ १ ॥

द्विविधं परमेशानि प्राणायामं समाचरेत् ।

प्राणायामं विना देवि न पूजां न जपञ्चरेत् ॥ २ ॥

सगर्भञ्च विगर्भञ्च प्राणायामं वरानने ।

जपध्यानादिभिर्युक्तं सगर्भं कमलानने ॥ ३ ॥

विगर्भञ्च तथा देवि वर्णहीनं भवेद् ध्रुवम् ।

पूरयेत् षोडशैर्वायुमिडया परमेश्वरि ॥ ४ ॥

चतुषष्ट्या धारयेत्तु चित्रामध्यगतां प्रिये ।

रेचयेत् कुम्भकार्धेन नाड्या मध्यमया सदा ॥ ५ ॥

एवं द्वादशाद् देवि प्राणायामं समाचरेत् ।

प्राणायामं महेशानि महायोगमयं सदा ॥ ६ ॥

योगं विना महेशानि मन्त्रसिद्धिर्न जायते ।

द्वयोर्द्वयोर्नामयोगो ब्रह्मसंसिद्धिकारणम् ॥ ७ ॥

एवं हि मनसा देवि सदा योगं समभ्यसेत् ।

यस्य यस्य च देवस्य यथा भूषणवाहनम् ॥ ८ ॥

तदेव पूजने तस्य चिन्तयेत् पूरकादिभिः ।

पूरकं धारकं देवि रेचकं नगनन्दिनि ॥ ९॥

सर्वशक्तिमयं देवि सर्वतन्त्रेषु निश्चितम् ।

-वेदान्ते ब्रह्म निर्णितम् ॥ १० ॥

वैशेषिके तु देवेशि परमाणुर्निगीयते ।

न्यासे च परमेशानि ईश्वरं न्याससम्मतम् ॥ ११ ॥

- पुरुषं कूटरूपिणम् ।

मीमांसया तथा देवि ब्रह्मकर्म प्रगीयते ॥ १२ ॥

वेदादौ तुर्यचैतन्यं गीयते सततं प्रिये ।

तत्पुरोऽप्यस्ति देवेशि गुप्तब्रह्म सनातनम् ॥ १३ ॥

निरिन्द्रियं निश्चलं हि साक्षात् सुप्तमिव स्थितम् ।

एतत् सर्वं महेशानि शवरूपं निरिन्द्रियम्॥ १४॥

सर्वेषां परमेशानि शक्तिः प्रकृतिरूपिणी।

तस्मात् सर्वेषु देवेषु शक्तेः प्राधान्यमुच्यते॥ १५॥

शक्तिः कुण्डलिनी समस्तजननी शतधा वर्तनमयी।

सदा ताञ्च नमाम्यात्मभूतये कमलेक्षणे॥ १६॥

ततः शक्तिं विना देवि ब्रह्माद्याः शवरूपवत्।

शवत्वं सर्वदेवेषु विना शक्तिं शुचिस्मिते॥ १७॥

शवरूप इवायाति परं ब्रह्म सदा प्रिये।

शक्तियुक्तं यदा ब्रह्म तदा देवत्वमाप्नुयात्॥ १८॥

स्वागमं हि महेशानि प्रकृतिं विद्धि पार्वति।

स्वागमे सर्ववेदानि नानातन्त्राणि विद्यते ॥ १९ ॥

स्वागमं हि विना देवि न किञ्चिद् विद्यते प्रिये ।

तस्मात्तु परमेशानि सर्वं प्रकृतिमयं स्मृतम् ॥ २० ॥

ब्रह्माण्डं कोटिनिर्माणं सर्वशक्तियुतं सदा ।

आधारञ्च तथा देयं पाण्डित्यं यस्तु पार्वति ॥ २१ ॥

मूकत्वं कवितां देवि यद्यदन्यं शुचिस्मिते ।

तत्सर्वं परमेशानि शक्तिं विद्यात् शुचिस्मिते ॥ २२ ॥

शक्तिर्हि परमेशानि ब्रह्मद्वन्द्वं सदा प्रिये ।

शब्दब्रह्म परंब्रह्म शक्तियुक्तं सदा प्रिये ॥ २३ ॥

एवं ब्रह्मा महेशानि शब्दब्रह्म प्रशस्यते ।

शब्दस्य कारणं देवि मातृकां ब्रह्मरूपिणीम् ॥ २४ ॥

अत एव महेशानि सदा मम हृदि स्थितम् ।

तव भक्त्या मया ख्यातं सुगोप्यं हि शुचिस्मिते ।

न कस्मैचित् प्रवक्तव्यं यदीच्छेत् शुभमात्मनः ॥ २५ ॥

इति श्रीभूतशुद्धितन्त्रे हरपार्वतीसंवादे षोडशः पटलः ॥ १६ ॥

अथ सप्तदशः पटलः

श्री-ईश्वर उवाच

एतत् तन्त्रं महेशानि स्वर्गमर्त्यरसातले ।

प्रशस्तं स्यात् सदा देवि नान्यथा मम भाषितम् ॥ १ ॥

यस्मिन् राज्ये महेशानि एतत् तन्त्रं हि वर्तते ।

नोत्पातस्तत्र देवेशि न च भीतिः कदाचन ॥ २ ॥

नाशयुर्व्याधयो देवि तस्मिन् राज्ये न कुत्रचित् ।

न च मारीभयं तत्र न च रोगस्तदा प्रिये ॥ ३ ॥

सर्वधर्मेषु यद्धर्मः सर्वयज्ञेषु यत् फलम् ।

तत्फलं लभते देवि पुस्तकस्य च पूजनात् ॥ ४ ॥

यद्गृहे विद्यते देवि पुस्तकं मम दुर्लभम् ।

कामरूपसमं देवि तद्गृहं भुवि दुर्लभम् ॥ ५ ॥

पुस्तकञ्च महेशानि यद्गृहे विद्यते सदा ।

काश्यादीनि च तीर्थानि सर्वाणि तस्य मन्दिरे ॥ ६ ॥

यद्गृहे पुस्तकं देवि विद्यते कमलानने ।

सर्वदेवमयः सर्वदेवमयः सदा ॥ ७ ॥

एतत् तन्त्रं महेशानि सततं यस्य मन्दिरे ।

सर्वागममयं सोऽपि स नान्यथा तु कदाचन ॥ ८ ॥

सततं मन्दिरे यस्य एतत् तन्त्रं वरानने ।

सर्वशास्त्रसमः सोऽपि नान्यथा वचनं मम ॥ ९ ॥

संक्षेपेण भूतशुद्धिविवरणम्

रमिति जलधारया वह्निप्राकारं विचिन्त्य स्वाङ्के उत्तानौ करौ कृत्वा सोऽहमिति जीवात्मानं हृदयस्थं दीपकलिकाकारं मूलाधारस्थ कुलकुण्डलिन्या सह सुषुम्नावर्त्मना मूलाधारस्वाधिष्ठानमणिपूरकानाहत विशुद्धाज्ञाख्यषट् चक्राणि भित्वा शिरोऽवस्थिताधोमुख सहस्रदलकमलकर्णिकान्तर्गतपरमात्मनि संयोज्य तत्रैव पृथिव्यप्तेजोवाय्वाकाशगन्धरसरूपस्पर्शशब्द नासिका - जिह्वा - चक्षुस्त्वक्श्रोत्रवाक्पाणिपादपायुपस्थप्रकृतिमनोबुद्ध्याहङ्कार-रूपचतुर्विंशतितत्त्वानि लीनानि विभाव्य यमिति वायुबीजं धूम्रवर्णं वामनासापुटे विचिन्त्य तस्य षोडशवारजपेन । वायुना

देहमापूर्य नासापुटौ धृत्वा तस्य चतुःषष्ठिवारजपेन कुम्भकं कृत्वा वामकुक्षिस्थकृष

णवर्णं पापपुरुषेण सह देहं संशोष्य तस्य द्वात्रिंशद्वारजपेन दक्षिणनासया वायुं रेचयेत्, दक्षि

णनासापुटे रमिति वह्निबीजं रक्तवर्णं ध्यात्वा तस्य षोडशवारजपेन वायुना देहमापूर्य नासापुटौ

धृवा तस्य चतुःषष्टिवारजपेन कुम्भकं कृत्वा पापपुरुषेण सह देहं मूलाधारोत्थितवह्निना दग्ध्वा

तस्य द्वात्रिंशद्वारजपेन वामनासया भस्मना सह ठमिति चन्द्रबीजं शुक्लवर्णं वामनासायां ध्यात्वा

तस्य षोडशवारजपेन ललाटे चन्द्रं नीत्वा नासापुटौ धृत्वा रमिति वरुणबीजस्य

चतुःषष्टिवारजपेन तस्माल्ललाटस्थचन्द्राद् गलितसुधया मातृकावर्णात्मिकया समस्तदेहं विरच्य

लमिति पृथ्वीबीजस्य द्वात्रिंशद्वारजपेन देहं सुदृढं विचिन्त्य दक्षिणेन वायुं रेचयेत्।

इति श्रीभूतशुद्धितन्त्रं समाप्तम्।

# शिवसूत्र

चैतन्यमात्मा १ ज्ञानं बन्धः २ योनिवर्गः कलाशरीरम् ३ ज्ञानाधिष्ठानं मातृका ४ उद्यमो भैरवः ५ शक्तिचक्रसंधाने विश्वसंहारः ६ जाग्रत्स्वप्नसुषुप्तभेदे तुर्याभोगसंभवः ७ ज्ञानं जाग्रत् ८ स्वप्नो विकल्पाः ९ अविवेका मायासौषुप्तम् १० त्रितयभोक्ता वीरेशः ११ विस्मयो योगभूमिकाः १२ इच्छा शक्तिरुमा कुमारी १३ दृश्यं शरीरम् १४ हृदये चित्तसंघट्टाद्दृश्यस्वापदर्शनम् १५ शुद्धतत्त्वसंधानाद्वाऽपशुशक्तिः १६ वितर्क आत्मज्ञानम् १७ लोकानन्दः समाधिसुखम् १८ शक्तिसन्धाने शरीरोत्पत्तिः १९ भूतसंधानभूतपृथक्त्वविश्वसंघट्टाः २० शुद्धविद्योदयाच्चक्रेशत्वसिद्धिः २१ महाह्रदानुसंधानान्मन्त्रवीर्यानुभवः २२ इति प्रथम उन्मेषः

चित्तं मन्त्रः १ प्रयत्नः साधकः २ विद्याशरीरसत्ता मन्त्ररहस्यम् ३ गर्भे चित्तविकासोऽविशिष्टविद्यास्वप्नः ४ विद्यासमुत्थाने स्वाभाविके खेचरी शिवावस्था ५ गुरुरुपायः ६ मातृकाचक्रसम्बोधः ७ शरीरं हविः ८ ज्ञानमन्नम् ९ विद्यासंहारे तदुत्थस्वप्नदर्शनम् १० इति द्वितीय उन्मेषः

आत्मा चित्तम् १ ज्ञानं बन्धः २ कलादीनां तत्त्वानामविवेको माया ३ शरीरे संहारः कलानाम् ४ नाडीसंहारभूतजयभूतकैवल्यभूतपृथक्त्वानि ५ मोहावरणात्सिद्धिः ६ मोहजयादनन्ताभोगात्सहजविद्याजयः ७ जाग्र-द्द्वितीयकरः ८ नर्तक आत्मा ९ रङ्गोऽन्तरात्मा १० प्रेक्षकाणीन्द्रियाणि ११ धीवशात्सत्त्वसिद्धिः १२ सिद्धः स्वतन्त्रभावः १३ यथा तत्र तथान्यत्र १४ बीजावधानम् १५ आसनस्थः सुखं ह्रदे निमज्जति १६ स्वमात्रानिर्माणमापादयति १७ विद्याऽविनाशे जन्मविनाशः १८ कवर्गादिषु माहेश्वर्याद्याः पशुमातरः १९ त्रिषु चतुर्थं तैलवदासेच्यम् २० मग्नः स्वचित्तेन प्रविशेत् २१ प्राणसमाचारे समदर्शनम् २२ मध्येऽवरप्रसवः २३ मात्रास्वप्रत्ययसंधाने नष्टस्य पुनरुत्थानम् २४ शिवतुल्यो जायते २५ शरीरवृत्तिर्व्रतम् २६ कथा जपः २७ दानमात्मज्ञानम् २८ योऽविपस्थो ज्ञाहेतुश्च २९ स्वशक्तिप्रचयोऽस्य विश्वम् ३० स्थितिलयौ ३१ तत्प्रवृत्ता-वप्यनिरासः संवेत्तृभावात् ३२ सुखदुःखयोर्बहिर्मननम् ३३ तद्विमुक्तस्तु केवली ३४ मोहप्रतिसंहतस्तु कर्मात्मा ३५ भेदतिरस्कारे सर्गान्तरकर्मत्वम्

३६ करणशक्तिः स्वतोऽनुभवात् ३७ त्रिपदाद्यनुप्राणनम् ३८ चित्तस्थितिवच्छरीरकरणबाह्येषु ३९ अभिलाषाद्बहिर्गतिः संवाह्यस्य ४० तदारूढप्रमितेस्तत्क्षयाज्जीवसंक्षयः ४१ भूतकञ्चुकी तदा विमुक्तो भूयः पतिसमः परः ४२ नैसर्गिकः प्राणसंबन्धः ४३ नासिकान्तर्मध्यसंयमात्किमत्र सव्यापसव्यसौषुम्नेषु ४४ भूयः स्यात्प्रतिमीलनम् ४५ इति तृतीय उन्मेषः

# विज्ञानभैरव

श्रीदेव्युवाच
श्रुतं देव मया सर्वं रुद्रयामलसम्भवम्
त्रिकभेदमशेषेण सारात्सारविभागशः १
अद्यापि न निवृत्तो मे संशयः परमेश्वर
किं रूपं तत्त्वतो देव शब्दराशिकलामयम् २
किं वा नवात्मभेदेन भैरवे भैरवाकृतौ
त्रिशिरोभेदभिन्नं वा किं वा शक्तित्रयात्मकम् ३
नादबिन्दुमयं वापि किं चन्द्रार्धनिरोधिकाः
चक्रारूढमनच्कं वा किं वा शक्तिस्वरूपकम् ४
परापरायाः सकलमपरायाश्च वा पुनः
पराया यदि तद्वत्स्यात् परत्वं तद्विरुध्यते ५
नहि वर्णविभेदेन देहभेदेन वा भवेत्
परत्वं निष्कलत्वेन सकलत्वे न तद्भवेत् ६
प्रसादं कुरु मे नाथ निःशेषं छिन्धि संशयम्
भैरव उवाच
साधु साधु त्वया पृष्टं तन्त्रसारमिदं प्रिये ७
गूहनीयतमं भद्रे तथापि कथयामि ते
यत्किञ्चित्सकलं रूपं भैरवस्य प्रकीर्तितम् ८
तदसारतया देवि विज्ञेयं शक्रजालवत्
मायास्वप्नोपमं चैव गन्धर्वनगरभ्रमम् ९
ध्यानार्थं भ्रान्तबुद्धीनां क्रियाडम्बरवर्तिनाम्
केवलं वर्णितं पुंसां विकल्पनिहतात्मनाम् १०
तत्त्वतो न नवात्मासौ शब्दराशिर्न भैरवः
न चासौ त्रिशिरा देवो न च शक्तित्रयात्मकः ११
नादबिन्दुमयो वापि न चन्द्रार्धनिरोधिकाः
न चक्रक्रमसंभिन्नो न च शक्तिस्वरूपकः १२
अप्रबुद्धमतीनां हि एता बालविभीषिकाः
मातृमोदकवत्सर्वं प्रवृत्त्यर्थमुदाहृतम् १३
दिक्कालकलनोन्मुक्ता देशोद्देशाविशेषिणी

व्यपदेष्टुमशक्यासावकथ्या परमार्थतः १४
अन्तः स्वानुभवानन्दा विकल्पोन्मुक्तगोचरा
यावस्था भरिताकारा भैरवी भैरवात्मनः १५
तद्वपुस्तत्त्वतो ज्ञेयं विमलं विश्वपूरणम्
एवंविधे परे तत्त्वे कः पूज्यः कश्च तृप्यति १६
एवंविधा भैरवस्य यावस्था परिगीयते
सा परा पररूपेण परादेवी प्रकीर्तिता १७
शक्तिशक्तिमतोर्यद्वत् अभेदः सर्वदा स्थितः
अतस्तद्धर्मधर्मित्वात्पराशक्तिः परात्मनः १८
न वह्नेर्दाहिका शक्तिः व्यतिरिक्ता विभाव्यते
केवलं ज्ञानसत्तायां प्रारम्भोऽयं प्रवेशने १९
शक्त्यवस्थाप्रविष्टस्य निर्विभागेन भावना
तदासौ शिवरूपी स्यात् शैवी मुखमिहोच्यते २०
यथालोकेन दीपस्य किरणैर्भास्करस्य च
ज्ञायते दिग्विभागादि तद्वच्छक्त्या शिवः प्रिये २१
श्रीदेव्युवाच
देवदेव त्रिशूलाङ्ककपालकृतभूषण
दिग्देशकालशून्या च व्यपदेशविवर्जिता २२
यावस्था भरिताकारा भैरवस्योपलभ्यते
कैरुपायैर्मुखं तस्य परादेवी कथं भवेत् २३
यथा सम्यगहं वेद्मि तथा मे ब्रूहि भैरव
श्रीभैरव उवाच
ऊर्ध्वे प्राणो ह्यधो जीवो विसर्गात्मा परोच्चरेत्
उत्पत्तिद्वितयस्थाने भरणाद्भरिता स्थितिः २४
मरुतोऽन्तर्बहिर्वापि वियद्युग्मानिवर्तनात्
भैरव्या भैरवस्येत्थं भैरवि व्यज्यते वपुः २५
न व्रजेन्न विशेच्छक्तिर्मरुद्रूपा विकासिते
निर्विकल्पतया मध्ये तया भैरवरूपता २६
कुम्भिता रेचिता वापि पूरिता या यदा भवेत्

तदन्ते शान्तनामासौ शक्त्या शान्तः प्रकाशते २७
आ मूलात्किरणाभासां सूक्ष्मात्सूक्ष्मतरात्मिकाम्
चिन्तयेत्तां द्विषट्कान्ते शाम्यन्तीं भैरवोदयः २८
उद्गच्छन्तीं तडिद्रूपां प्रतिचक्रं क्रमात्क्रमम्
ऊर्ध्वं मुष्टित्रयं यावत्तावदन्ते महोदयः २९
क्रमद्वादशकं सम्यग्द्वादशाक्षरभेदितम्
स्थूलसूक्ष्मपरस्थित्या मुक्त्वा मुक्त्वान्ततः शिवः ३०
तयापूर्याशु मूर्धान्तं भङ्क्त्वा भ्रूक्षेपसेतुना
निर्विकल्पं मनः कृत्वा सर्वोर्ध्वे सर्वगोद्गमः ३१
शिखिपक्षैश्चित्ररूपैर्मण्डलैः शून्यपञ्चकम्
ध्यायतोऽनुत्तरे शून्ये प्रवेशो हृदये भवेत् ३२
ईदृशेन क्रमेणैव यत्र कुत्रापि चिन्तना
शून्ये कुड्ये परे पात्रे स्वयं लीना वरप्रदा ३३
कपालान्तर्मनो न्यस्य तिष्ठन्मीलितलोचनः
क्रमेण मनसो दाढर्यात् लक्षयेल्लक्ष्यमुत्तमम् ३४
मध्यनाडी मध्यसंस्था बिससूत्राभरूपया
ध्यातान्तर्व्योमया देव्या तया देवः प्रकाशते ३५
कररुद्धदृगस्त्रेण भ्रूभेदाद्द्वाररोधनात्
दृष्टे बिन्दौ क्रमाल्लीने तन्मध्ये परमा स्थितिः ३६
धामान्तःक्षोभसंभूतसूक्ष्माग्नितिलकाकृतिम्
बिन्दुं शिखान्ते हृदये लयान्ते ध्यायतो लयः ३७
अनाहते पात्रकर्णेऽभग्नशब्दे सरिद्द्रुते
शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति ३८
प्रणवादिसमुच्चारात्प्लुतान्ते शून्यभावनात्
शून्यया परया शक्त्या शून्यतामेति भैरवि ३९
यस्य कस्यापि वर्णस्य पूर्वान्तावनुभावयेत्
शून्यया शून्यभूतोऽसौ शून्याकारः पुमान्भवेत् ४०
तन्त्र्यादिवाद्यशब्देषु दीर्घेषु क्रमसंस्थितेः
अनन्यचेताः प्रत्यन्ते परव्योमवपुर्भवेत् ४१

पिण्डमन्त्रस्य सर्वस्य स्थूलवर्णक्रमेण तु
अर्धेन्दुबिन्दुनादान्तःशून्योच्चाराद्भवेच्छिवः ४२
निजदेहे सर्वदिक्कं युगपद्भावयेद्वियत्
निर्विकल्पमनास्तस्य वियत्सर्वं प्रवर्तते ४३
पृष्ठशून्यं मूलशून्यं युगपद्भावयेच्च यः
शरीरनिरपेक्षिण्या शक्त्या शून्यमना भवेत् ४४
पृष्ठशून्यं मूलशून्यं हृच्छून्यं भावयेत्स्थिरम्
युगपन्निर्विकल्पत्वान्निर्विकल्पोदयस्ततः ४५
तनूदेशे शून्यतैव क्षणमात्रं विभावयेत्
निर्विकल्पं निर्विकल्पो निर्विकल्पस्वरूपभाक् ४६
सर्वं देहगतं द्रव्यं वियद्व्याप्तं मृगेक्षणे
विभावयेत्ततस्तस्य भावना सा स्थिरा भवेत् ४७
देहान्तरे त्वग्विभागं भित्तिभूतं विचिन्तयेत्
न किञ्चिदन्तरे तस्य ध्यायन्नध्येयभाग्भवेत् ४८
हृद्याकाशे निलीनाक्षः पद्मसम्पुटमध्यगः
अनन्यचेताः सुभगे परं सौभाग्यमाप्नुयात् ४९
सर्वतः स्वशरीरस्य द्वादशान्ते मनोलयात्
दृढबुद्धेर्दृढीभूतं तत्त्वलक्ष्यं प्रवर्तते ५०
यथा तथा यत्र तत्र द्वादशान्ते मनः क्षिपेत्
प्रतिक्षणं क्षीणवृत्तेर्वैलक्षण्यं दिनैर्भवेत् ५१
कालाग्निना कालपदादुत्थितेन स्वकं पुरम्
प्लुष्टं विचिन्तयेदन्ते शान्ताभासस्तदा भवेत् ५२
एवमेव जगत्सर्वं दग्धं ध्यात्वा विकल्पतः
अनन्यचेतसः पुंसः पुंभावः परमो भवेत् ५३
स्वदेहे जगतो वापि सूक्ष्मसूक्ष्मतराणि च
तत्त्वानि यानि निलयं ध्यात्वान्ते व्यज्यते परा ५४
पीनां च दुर्बलां शक्तिं ध्यात्वा द्वादशगोचरे
प्रविश्य हृदये ध्यायन्मुक्तः स्वातन्त्र्यमाप्नुयात् ५५
भुवनाध्वादिरूपेण चिन्तयेत्क्रमशोऽखिलम्

स्थूलसूक्ष्मपरस्थित्या यावदन्ते मनोलयः ५६
अस्य सर्वस्य विश्वस्य पर्यन्तेषु समन्ततः
अध्वप्रक्रियया तत्त्वं शैवं ध्यात्वा महोदयः ५७
विश्वमेतन्महादेवि शून्यभूतं विचिन्तयेत्
तत्रैव च मनो लीनं ततस्तल्लयभाजनम् ५८
घटादिभाजने दृष्टिं भित्तीस्त्यक्त्वा विनिक्षिपेत्
तल्लयं तत्क्षणाद्गत्वा तल्लयात्तन्मयो भवेत् ५९
निर्वृक्षगिरिभित्त्यादिदेशे दृष्टिं विनिक्षिपेत्
विलीने मानसे भावे वृत्तिक्षीणः प्रजायते ६०
उभयोर्भावयोर्ज्ञाने ध्यात्वा मध्यं समाश्रयेत्
युगपच्च द्वयं त्यक्त्वा मध्ये तत्त्वं प्रकाशते ६१
भावे त्यक्ते निरुद्धा चिन्नैव भावान्तरं व्रजेत्
तदा तन्मध्यभावेन विकसत्यतिभावना ६२
सर्वं देहं चिन्मयं हि जगद्वा परिभावयेत्
युगपन्निर्विकल्पेन मनसा परमोदयः ६३
वायुद्वयस्य संघट्टादन्तर्वा बहिरन्ततः
योगी समत्वविज्ञानसमुद्गमनभाजनम् ६४
सर्वं जगत्स्वदेहं वा स्वानन्दभरितं स्मरेत्
युगपन्स्वामृतेनैव परानन्दमयो भवेत् ६५
कुहनेन प्रयोगेण सद्य एव मृगेक्षणे
समुदेति महानन्दो येन तत्त्वं प्रकाशते ६६
सर्वस्रोतोनिबन्धन प्राणशक्त्योर्ध्वया शनैः
पिपीलस्पर्शवेलायां प्रथते परमं सुखम् ६७
वह्नेर्विषस्य मध्ये तु चित्तं सुखमयं क्षिपेत्
केवलं वायुपूर्णं वा स्मरानन्देन युज्यते ६८
शक्तिसङ्गमसंक्षुब्धशक्त्यावेशावसानिन्कम्
यत्सुखं ब्रह्मतत्त्वस्य तत्सुखं स्वाक्यमुच्यते ६९
लेहनामन्थनाकोटैः स्त्रीसुखस्य भरात्स्मृतेः
शक्त्यभावेऽपि देवेशि भवेदानन्दसंप्लवः ७०

आनन्दे महति प्राप्ते दृष्टे वा बान्धवे चिरात्
आनन्दमुद्गतं ध्यात्वा तल्लयस्तन्मना भवेत्  ७१
जग्धिपानकृतोल्लासरसानन्दविजृम्भणात्
भावेयद्भरितावस्थां महानन्दस्ततो भवेत्  ७२
गीतादिविषयास्वादासमसौख्यैकतात्मनः
योगिनस्तन्मयत्वेन मनोरूढेस्तदात्मता  ७३
यत्र यत्र मनस्तुष्टिर्मनस्तत्रैव धारयेत्
तत्र तत्र परानन्दस्वरूपं सम्प्रवर्तते  ७४
अनागतायां निद्रायां प्रणष्टे बाह्य गोचरे
सावस्था मनसा गम्या परा देवी प्रकाशते  ७५
तेजसा सूर्यदीपादेराकाशे शबलीकृते
दृष्टिर्निवेश्या तत्रैव स्वात्मरूपं प्रकाशते  ७६
करङ्किणया क्रोधनया भैरव्या लेलिहानया
खेचर्या दृष्टिकाले च परावाप्तिः प्रकाशते  ७७
मृद्वासने स्फिजैकेन हस्तपादौ निराश्रयम्
निधाय तत्प्रसङ्गेन परा पूर्णा मतिर्भवेत्  ७८
उपविश्यासने सम्यक्बाहू कृत्वार्धकुञ्चितौ
कक्षव्योम्नि मनः कुर्वन् शममायाति तल्लयात्  ७९
स्थूलरूपस्य भावस्य स्तब्धां दृष्टिं निपात्य च
अचिरेण निराधारं मनः कृत्वा शिवं व्रजेत्  ८०
मध्यजिह्वे स्फारितास्ये मध्ये निक्षिप्य चेतनाम्
होच्चारं मनसा कुर्वस्ततः शान्ते प्रलीयते  ८१
आसने शयने स्थित्वा निराधारं विभावयन्
स्वदेहं मनसि क्षीणे क्षणात्क्षीणाशयो भवेत्  ८२
चलासने स्थितस्याथ शनैर्वा देहचालनात्
प्रशान्ते मानसे भावे देवि दिव्यौघमाप्नुयात्  ८३
आकाशं विमलं पश्यन् कृत्वा दृष्टिं निरन्तराम्
स्तब्धात्मा तत्क्षणाद्देवि भैरवं वपुराप्नुयात्  ८४
लीनं मूर्ध्नि वियत्सर्वं भैरवत्वेन भावयेत्

तत्सर्वं भैरवाकारतेजस्तत्त्वं समाविशेत् ८५
किंचिज्ज्ञातं द्वैतदायि बाह्यालोकस्तमः पुनः
विश्वादि भैरवं रूपं ज्ञात्वानन्तप्रकाशभृत् ८६
एवमेव दुर्निशायां कृष्णपक्षागमे चिरम्
तैमिरं भावयन्रूपं भैरवं रूपमेष्यति ८७
एवमेव निमील्यादौ नेत्रे कृष्णाभमग्रतः
प्रसार्य भैरवं रूपं भावयंस्तन्मयो भवेत् ८८
यस्य कस्येन्द्रियस्यापि व्याघाताच्च निरोधतः
प्रविष्टस्याद्वये शून्ये तत्रैवात्मा प्रकाशते ८९
अबिन्दुमविसर्गं च अकारं जपतो महान्
उदेति देवि सहसा ज्ञानौघः परमेश्वरः ९०
वर्णस्य सविसर्गस्य विसर्गान्तं चितिं कुरु
निराधारेण चित्तेन स्पृशेद्ब्रह्म सनातनम् ९१
व्योमाकारं स्वमात्मानं ध्यायेद्दिग्भिरनावृतम्
निराश्रया चितिः शक्तिः स्वरूपं दर्शयेत्तदा ९२
किञ्चिदङ्गं विभिद्यादौ तीक्ष्णसूच्यादिना ततः
तत्रैव चेतनां युक्त्वा भैरवे निर्मला गतिः ९३
चित्ताद्यन्तःकृतिर्नास्ति ममान्तर्भावयेदिति
विकल्पानामभावेन विकल्पैरुज्झितो भवेत् ९४
माया विमोहिनी नाम कलायाः कलनं स्थितम्
इत्यादिधर्मं तत्त्वानां कलयन्न पृथग्भवेत् ९५
झगितीच्छां समुत्पन्नामवलोक्य शमं नयेत्
यत एव समुद्भूता ततस्तत्रैव लीयते ९६
यदा ममेच्छा नोत्पन्ना ज्ञानं वा कस्तदास्मि वै
तत्त्वतोऽहं तथाभूतस्तल्लीनस्तन्मना भवेत् ९७
इच्छायामथवा ज्ञाने जाते चित्तं निवेशयत्
आत्मबुद्ध्यानन्यचेतास्ततस्तत्त्वार्थदर्शनम् ९८
निर्निमित्तं भवेज्ज्ञानं निराधारं भ्रमात्मकम्
तत्त्वतः कस्यचिन्नैतदेवंभावी शिवः प्रिये ९९

चिद्धर्मा सर्वदेहेषु विशेषो नास्ति कुत्रचित्
अतश्च तन्मयं सर्वं भावयन्भवजिज्जनः १००
कामक्रोधलोभमोहमदमात्सर्यगोचरे
बुद्धिं निस्तिमितां कृत्वा तत्तत्त्वमवशिष्यते १०१
इन्द्रजालमयं विश्वं व्यस्तं वा चित्रकर्मवत्
भ्रमद्वा ध्यायतः सर्वं पश्यतश्च सुखोद्गमः १०२
न चित्तं निक्षिपेद्दुःखे न सुखे वा परिक्षिपेत्
भैरवि ज्ञायतां मध्ये किं तत्त्वमवशिष्यते १०३
विहाय निजदेहास्थां सर्वत्रास्मीति भावयन्
दृढेन मनसा दृष्ट्या नान्येक्षिण्या सुखी भवेत् १०४
घटादौ यच्च विज्ञानमिच्छाद्यं वा ममान्तरे
नैव सर्वगतं जातं भावयन्निति सर्वगः १०५
ग्राह्यग्राहकसंवित्तिः सामान्या सदेहिर्वनाम्
योगिनां तु विशेषोऽस्ति संबन्धे सावधानता १०६
स्ववदन्यशरीरेऽपि संवित्तिमनुभावयेत्
अपेक्षां स्वशरीरस्य त्यक्त्वा व्यापी दिनैर्भवेत् १०७
निराधारं मनः कृत्वा विकल्पान्न विकल्पयेत्
तदात्मपरमात्मत्वे भैरवो मृगलोचने १०८
सर्वज्ञः सर्वकर्त्ता च व्यापकः परमेश्वरः
स एवाहं शैवधर्मा इति दार्ढ्याद्भवेच्छिवः १०९
जलस्येवोर्मयो वह्नेर्ज्वालाभङ्ग्यः प्रभा रवेः
ममैव भैरवस्यैता विश्वभङ्ग्यो विभेदिताः ११०
भ्रान्त्वा भ्रान्त्वा शरीरेण त्वरितं भुवि पातनात्
क्षोभशक्तिविरामेण परा संजायते दशा १११
आधारेष्वथवाऽशक्त्याऽज्ञानाच्चित्तलयेन वा
जातशक्तिसमावेशक्षोभान्ते भैरवं वपुः ११२
संप्रदायमिमं देवि शृणु सम्यग्वदाम्यहम्
कैवल्यं जायते सद्यो नेत्रयोः स्तब्धमात्रयोः ११३
संकोचं कर्णयोः कृत्वा ह्यधोद्वारे तथैव च

अनच्कमहलं ध्यायन्विशेद्ब्रह्म सनातनम्  ११४
कूपादिके महागर्ते स्थित्वोपरि निरीक्षणात्
अविकल्पमतेः सम्यक् सद्यश्चित्तलयः स्फुटम्  ११५
यत्र यत्र मनो याति बाह्ये वाभ्यन्तरेऽपि वा
तत्र तत्र शिवावस्था व्यापकत्वात्क्व यास्यति  ११६
यत्र यत्राक्षमार्गेण चैतन्यं व्यज्यते विभोः
तस्य तन्मात्रधर्मित्वाच्चिल्लयाद्भरितात्मता  ११७
क्षुताद्यन्ते भये शोके गह्वरे वा रणाद्द्रुते
कुतूहले क्षुधाद्यन्ते ब्रह्मसत्तामयी दशा  ११८
वस्तुषु स्मर्यमाणेषु दृष्टे देशे मनस्त्यजेत्
स्वशरीरं निराधारं कृत्वा प्रसरति प्रभुः  ११९
क्वचिद्वस्तुनि विन्यस्य शनैर्दृष्टिं निवर्तयेत्
तज्ज्ञानं चित्तसहितं देवि शून्यालयो भवेत्  १२०
भक्त्युद्रेकाद्विरक्तस्य यादृशी जायते मतिः
सा शक्तिः शाङ्करी नित्यं भावयेत्तां ततः शिवः  १२१
वस्त्वन्तरे वेद्यमाने सर्ववस्तुषु शून्यता
तामेव मनसा ध्यात्वा विदितोऽपि प्रशाम्यति  १२२
किंचिज्ज्ञैर्या स्मृता शुद्धिः सा शुद्धिः शम्भुदर्शने
न शुचिर्ह्यशुचिस्तस्मान्निर्विकल्पः सुखी भवेत्  १२३
सर्वत्र भैरवो भावः सामान्येष्वपि गोचरः
न च तद्व्यतिरेकेण परोऽस्तीत्यद्वया गतिः  १२४
समः शत्रौ च मित्रे च समो मानावमानयोः
ब्रह्मणः परिपूर्णत्वादिति ज्ञात्वा सुखी भवेत्  १२५
न द्वेषं भावयेत्क्वापि न रागं भावयेत्क्वचित्
रागद्वेषविनिर्मुक्तौ मध्ये ब्रह्म प्रसर्पति  १२६
यदवेद्यं यदग्राह्यं यच्छून्यं यदभावगम्
तत्सर्वं भैरवं भाव्यं तदन्ते बोधसंभवः  १२७
नित्यं निराश्रये शून्ये व्यापके कलनोज्झिते
बाह्याकाशे मनः कृत्वा निराकाशं समाविशेत्  १२८

यत्र यत्र मनो याति तत्तत्तेनैव तत्क्षणम्
परित्यज्यानवस्थित्या निस्तरङ्गस्ततो भवेत्  १२९
भया सर्वं रवयति सर्वदो व्यापकोऽखिले
इति भैरवशब्दस्य सन्ततोच्चारणाच्छिवः  १३०
अहं ममेदमित्यादि प्रतिपत्तिप्रसङ्गतः
निराधारे मनो याति तद्ध्यानप्रेरणाच्छमी  १३१
नित्यो विभुर्निराधारो व्यापकश्चाखिलाधिपः
शब्दान् प्रतिक्षणं ध्यायन् कृतार्थोऽर्थानुरूपतः  १३२
अतत्त्वमिन्द्रजालाभमिदं सर्वमवस्थितम्
किं तत्त्वमिन्द्रजालस्य इति दार्ढ्याच्छमं व्रजेत्  १३३
आत्मनो निर्विकारस्य क्व ज्ञानं क्व च वा क्रिया
ज्ञानायत्ता बहिर्भावा अतः शून्यमिदं जगत्  १३४
न मे बन्धो न मोक्षो मे भीतस्यैता विभीषिकाः
प्रतिबिम्बमिदं बुद्धेर्जलेष्विव विवस्वतः  १३५
इन्द्रियद्वारकं सर्वं सुखदुःखादिसङ्गमम्
इतीन्द्रियाणि संत्यज्य स्वस्थः स्वात्मनि वर्तते  १३६
ज्ञानप्रकाशकं सर्वं सर्वेणात्मा प्रकाशकः
एकमेकस्वभावत्वात् ज्ञानं ज्ञेयं विभाव्यते  १३७
मानसं चेतना शक्तिरात्मा चेति चतुष्टयम्
यदा प्रिये परिक्षीणं तदा तद्भैरवं वपुः  १३८
निस्तरङ्गोपदेशानां शतमुक्तं समासतः
द्वादशाभ्यधिकं देवि यज्ज्ञात्वा ज्ञानविज्ञनः  १३९
अत्र चैकतमे युक्तो जायते भैरवः स्वयम्
वाचा करोति कर्माणि शापानुग्रहकारकः  १४०
अजरामरतामेति सोऽणिमादिगुणान्वितः
योगिनीनां प्रियो देवि सर्वमेलापकाधिपः  १४१
जीवन्नपि विमुक्तोऽसौ कुर्वन्नपि न लिप्यते
श्री देवी उवाच
इदं यदि वपुर्देव परायाश्च महेश्वर  १४२

एवमुक्तव्यवस्थायां जप्यते को जपश्च कः
ध्यायते को महानाथ पूज्यते कश्च तृप्यति १४३
हूयते कस्य वा होमो यागः कस्य च किं कथम्
श्रीभैरव उवाच
एषात्र प्रक्रिया बाह्या स्थूलेष्वेव मृगेक्षणे १४४
भूयो भूयः परे भावे भावना भाव्यते हि या
जपः सोऽत्र स्वयं नादो मन्त्रात्मा जप्य ईदृशः १४५
ध्यानं हि निश्चला बुद्धिर्निराकारा निराश्रया
न तु ध्यानं शरीराक्षिमुखहस्तादिकल्पना १४६
पूजा नाम न पुष्पाद्यैर्या मतिः क्रियते दृढा
निर्विकल्पे महाव्योम्नि सा पूजा ह्यादराल्लयः १४७
अत्रैकतमयुक्तिस्थे योत्पद्येत दिनाद्दिनम्
भरिताकारता सात्र तृप्तिरत्यन्तपूर्णता १४८
महाशून्यालये वह्नौ भूताक्षविषयादिकम्
हूयते मनसा सार्धं स होमश्चेतनास्रुचा १४९
यागोऽत्र परमेशानि तुष्टिरानन्दलक्षणा
क्षपणात्सर्वपापानां त्राणात्सर्वस्य पार्वति १५०
रुद्रशक्तिसमावेशस्तत्क्षेत्रं भावना परा
अन्यथा तस्य तत्त्वस्य का पूजा कश्च तृप्यति १५१
स्वतंत्रानन्दचिन्मात्रसारः स्वात्मा हि सर्वतः
आवेशनं तत्स्वरूपे स्वात्मनः स्नानमीरितम् १५२
यैरेव पूज्यते द्रव्यैस्तर्प्यते वा परापरः
यश्चैव पूजकः सर्वः स एवैकः क्व पूजनम् १५३
व्रजेत्प्राणो विशेज्जीव इच्छया कुटिलाकृतिः
दीर्घात्मा सा महादेवी परक्षेत्रं परापरा १५४
अस्यामनुचरन् तिष्ठन् महानन्दमयेऽध्वरे
तया देव्या समाविष्टः परं भैरवमाप्नुयात् १५५
सकारेण बहिर्याति हकारेण विशेत् पुनः
हंसहंसेत्यमुं मंत्रं जीवो जपति नित्यशः १५५

षट्शतानि दिवा रात्रौ सहस्राण्येकविंशतिः
जपो देव्याः समुद्दिष्टः सुलभो दुर्लभो जडैः १५६
इत्येतत्कथितं देवि परमामृतमुत्तमम्
एतच्च नैव कस्यापि प्रकाश्यं तु कदाचन १५७
परशिष्ये खले क्रूरे अभक्ते गुरुपादयोः
निर्विकल्पमतीनां तु वीराणामुन्नतात्मनाम् १५८
भक्तानां गुरुवर्गस्य दातव्यं निर्विशङ्कया
ग्रामो राज्यं पुरं देशः पुत्रदारकुटुम्बकम् १५९
सर्वमेतत्परित्यज्य ग्राह्यमेतन्मृगेक्षणे
किमेभिरस्थिरैर्देवि स्थिरं परमिदं धनम् १६०
प्राणा अपि प्रदातव्या न देयं परमामृतम्
श्रीदेवी उवाच
देवदेव महादेव परितृप्तास्मि शङ्कर १६१
रुद्रयामलतन्त्रस्य सारमद्यावधारितम् ।
सर्वशक्तिप्रभेदानां हृदयं ज्ञातमद्य च १६२
इत्युक्त्वानन्दिता देवी कण्ठे लग्ना शिवस्य तु १६३

# शिवसंहिता

## प्रथमः पटलः

एकं ज्ञानं नित्यमाद्यन्तशून्यं नान्यत्किञ्चिद्वर्त्तते ते वस्तु सत्यम्
यद्भेदोस्मिन्निन्द्रियोपाधिना वै ज्ञानस्यायं भासते नान्यथैव १
अथ भक्तानुरक्तोऽहं वक्ति योगानुशासनम्
ईश्वरः सर्वभूतानामात्ममुक्तिप्रदायकः २
त्यक्त्वा विवादशीलानां मतं दुर्ज्ञानहेतुकम्
आत्मज्ञानाय भूतानामनन्यगतिचेतसाम् ३
सत्यं केचित्प्रशंसन्ति तपः शौचं तथापरे
क्षमां केचित्प्रशंसंति तथैव सममार्ज्जवम् ४
केचिद्दानं प्रशंसन्ति पितृकर्म तथापरे
केचित्कर्म प्रशंसन्ति केचिद्वैराग्यमुत्तमम् ५
केचिद्गृहस्थकर्माणि प्रशंसन्ति विचक्षणाः
अग्निहोत्रादिकं कर्म तथा केचित्परं विदुः ६
मन्त्रयोगं प्रशंसन्ति केचित्तीर्थानुसेवनम्
एवं बहूनुपायांस्तु प्रवदन्ति हि मुक्तये ७
एवं व्यवसिता लोके कृत्याकृत्यविदो जनाः
व्यामोहमेव गच्छंति विमुक्ताः पापकर्मभिः ८
एतन्मतावलम्बी यो लब्ध्वा दुरितपुण्यके
भ्रमतीत्यवशः सोऽत्र जन्ममृत्युपरम्पराम् ९
अन्यैर्मतिमतां श्रेष्ठैर्गुप्तालोकनतत्परैः
आत्मानो बहवः प्रोक्ता नित्याः सर्वगतास्तथा १०
यद्यत्प्रत्यक्षविषयं तदन्यन्नास्ति चक्षते
कुतः स्वर्गादयः सन्तीत्यन्ये निश्चितमानसाः ११
ज्ञानप्रवाह इत्यन्ये शून्यं केचित्परं विदुः
द्वावेव तत्त्वं मन्यन्तेऽपरे प्रकृतिपूरुषौ १२
अत्यन्तभिन्नमतयः परमार्थपराङ्मुखाः
एवमन्ये तु संचिन्त्य यथामति यथाश्रुतम् १३
निरीश्वरमिदं प्राहुः सेश्वरञ्च तथापरे

वदन्ति विविधैर्भेदैः सुयुक्त्या स्थितिकातराः १४
एते चान्ये च मुनयः संज्ञाभेदा पृथग्विधाः
शास्त्रेषु कथिता ह्येते लोकव्यामोहकारकाः १५
एतद्विवादशीलानां मतं वक्तुं न शक्यते
भ्रमन्त्यस्मिञ्जनाः सर्वे मुक्तिमार्गबहिष्कृताः १६
आलोक्य सर्वशास्त्राणि विचार्य च पुनः पुनः
इदमेकं सुनिष्पन्नं योगशास्त्रं परं मतम् १७
यस्मिन् याते सर्वमिदं यातं भवति निश्चितम्
तस्मिन्परिश्रमः कार्यः किमन्यच्छास्त्रभाषितम् १८
योगशास्त्रमिदं गोप्यमस्माभिः परिभाषितम्
सुभक्ताय प्रदातव्यं त्रैलोक्ये च महात्मने १९
कर्मकाण्डं ज्ञानकाण्डमिति वेदो द्विधा मतः
भवति द्विविधो भेदो ज्ञानकाण्डस्य कर्मणः २०
द्विविधः कर्मकाण्डः स्यान्निषेधविधिपूर्वकः २१
निषिद्धकर्मकरणे पापं भवति निश्चितम्
विधिना कर्मकरणे पुण्यं भवति निश्चितम् २२
त्रिविधो विधिकूटः स्यान्नित्यनैमित्तकाम्यतः
नित्येऽकृते किल्बिषं स्यात्काम्ये नैमित्तिके फलम् २३
द्विविधन्तु फलं ज्ञेयं स्वर्गो नरक एव च
स्वर्गो नानाविधश्चैव नरकोपि तथा भवेत् २४
पुण्यकर्माणि वै स्वर्गो नरकः पापकर्माणि
कर्मबंधमयी सृष्टिर्नान्यथा भवति ध्रुवम् २५
जन्तुभिश्चानुभूयंते स्वर्गे नानासुखानि च
नानाविधानि दुःखानि नरके दुःसहानि वै २६
पापकर्मवशाद्दुःखं पुण्यकर्मवशात्सुखम्
तस्मात्सुखार्थी विविधं पुण्यं प्रकुरुते ध्रुवम् २७
पापभोगावसाने तु पुनर्जन्म भवेत्खलु
पुण्यभोगावसाने तु नान्यथा भवति ध्रुवम् २८

स्वर्गेऽपि दुःखसंभोगः परश्रीदर्शनादिषु
ततो दुःखमिदं सर्वं भवेन्नास्त्यत्र संशयः २९
तत्कर्मकल्पकैः प्रोक्तं पुरायं पापमिति द्विधा
पुरायपापमयो बन्धो देहिनां भवति क्रमात् ३०
इहामुत्र फलद्वेषी सफलं कर्म संत्यजेत्
नित्यनैमित्तिकं संज्ञं त्यक्त्वा योगे प्रवर्तते ३१
कर्मकाराडस्य माहात्म्यं ज्ञात्वा योगी त्यजेत्सुधीः
पुरायपापद्वयं त्यक्त्वा ज्ञानकाराडे प्रवर्तते ३२
ग्रात्मा वाऽरेतु द्रष्टव्यः श्रोतव्येत्यादि यच्छ्रुतिः
सा सेव्या तत्प्रयत्नेन मुक्तिदा हेतुदायिनी ३३
दुरितेषु च पुरायेषु यो धीर्वृत्तिं प्रचोदयात्
सोऽहं प्रवर्तते मत्तो जगत्सर्वं चराचरम्
सर्वं च दृश्यते मत्तः सर्वं च मयि लीयते
न तद्भिन्नोऽहमस्मीह मद्भिन्नो न तु किंचन ३४
जलपूर्णेष्वसंख्येषु शरावेषु यथा भवेत्
एकस्य भात्यसंख्यत्वं तद्भेदोऽत्र न दृश्यते
उपाधिषु शरावेषु या संख्या वर्तते परा
सा संख्या भवति यथा रवौ चात्मनि तत्तथा ३५
यथैकः कल्पकः स्वप्ने नानाविधितयेष्यते
जागरेपि तथाप्येकस्तथैव बहुधा जगत् ३६
सर्पबुद्धिर्यथा रज्जौ शुक्तौ वा रजतभ्रमः
तद्वदेवमिदं विश्वं विवृतं परमात्मनि ३७
रज्जुज्ञानाद्यथा सर्पो मिथ्यारूपो निवर्तते
ग्रात्मज्ञानात्तथा याति मिथ्याभूतमिदं जगत् ३८
रौप्यभ्रान्तिरियं याति शुक्तिज्ञानाद्यथा खलु
जगद्भ्रान्तिरियं याति चात्मज्ञानात्सदा तथा ३९
यथा वंशो रगभ्रान्तिर्भवेद्भेकवसाञ्जनात्
तथा जगदिदं भ्रांतिरभ्यासकल्पनाञ्जनात् ४०

आत्मज्ञानाद्यथा नास्ति रज्जुज्ञानाद्भुजङ्गमः
यथा दोषवशाच्छुक्लः पीतो भवति नान्यथा
अज्ञानदोषादात्मापि जगद्भवति दुस्त्यजम् ४१
दोषनाशे यथा शुक्लो गृह्यते रोगिणा स्वयम्
शुक्लज्ञानात्तथाऽज्ञाननाशादात्मा तथा कृतः ४२
कालत्रयेपि न यथा रज्जुः सर्पो भवेदिति
तथात्मा न भवेद्विश्वं गुणातीतो निरञ्जनः ४३
आगमाऽपायिनोऽनित्यानाश्यत्वेनेश्वरादयः
आत्मबोधेन केनापि शास्त्रादेतद्विनिश्चितम् ४४
यथा वातवशात्सिन्धावुत्पन्नाः फेनबुद्बुदाः
तथात्मनि समुद्भूतं संसारं क्षणभंगुरम् ४५
अभेदो भासते नित्यं वस्तुभेदो न भासते
द्विधात्रिधादिभेदोऽयं भ्रमत्वे पर्यवस्यति ४६
यद्भूतं यच्च भाव्यं वै मूर्तामूर्तं तथैव च
सर्वमेव जगदिदं विवृतं परमात्मनि ४७
कल्पकैः कल्पिता विद्या मिथ्या जाता मृषात्मिका
एतन्मूलं जगदिदं कथं सत्यं भविष्यति ४८
चैतन्यात्सर्वमुत्पन्नं जगदेतच्चराचरम्
तस्मात्सर्वं परित्यज्य चैतन्यं तं समाश्रयेत् ४९
घटस्याभ्यंतरे बाह्ये यथाकाशं प्रवर्तते
तथात्माभ्यंतरे बाह्ये कार्यवर्गेषु नित्यशः ५०
असंलग्नं यथाकाशं मिथ्याभूतेषु पंचसु
असंलग्नस्तथात्मा तु कार्यवर्गेषु नान्यथा ५१
ईश्वरादिजगत्सर्वमात्मव्याप्यं समन्ततः
एकोऽस्ति सच्चिदानंदः पूर्णो द्वैतविवर्जितः ५२
यस्मात्प्रकाशको नास्ति स्वप्रकाशो भवेत्ततः
स्वप्रकाशो यतस्तस्मादात्मा ज्योतिः स्वरूपकः ५३
अवच्छिन्नो यतो नास्ति देशकालस्वरूपतः

आत्मनः सर्वथा तस्मादात्मा पूर्णो भवेत्खलु ५४
यस्मान्न विद्यते नाशः पंचभूतैर्वृथात्मकैः
तस्मादात्मा भवेन्नित्यस्तन्नाशो न भवेत्खलु ५५
यस्मात्तदन्यो नास्तीह तस्मादेकोऽस्ति सर्वदा
यस्मात्तदन्यो मिथ्या स्यादात्मा सत्यो भवेत् खलु ५६
अविद्याभूतसंसारे दुःखनाशे सुखं यतः
ज्ञानादाद्यंतशून्यं स्यात्तस्मादात्मा भवेत्सुखम् ५७
यस्मान्नाशितमज्ञानं ज्ञानेन विश्वकारणम्
तस्मादात्मा भवेज्ज्ञानं ज्ञानं तस्मात्सनातनम् ५८
कालतो विविधं विश्वं यदा चैव भवेदिदम्
तदेकोऽस्ति स एवात्मा कल्पनापथवर्जितः ५९
बाह्यानि सर्वभूतानि विनाशं यान्ति कालतः
यतो वाचो निवर्त्तंते आत्मा द्वैतविवर्जितः ६०
न खं वायुर्न चाग्निश्च न जलं पृथिवी न च
नैतत्कार्यं नेश्वरादि पूर्णैकात्मा भवेत्खलु ६१
आत्मानमात्मनो योगी पश्यत्यात्मनि निश्चितम्
सर्वसंकल्पसंन्यासी त्यक्तमिथ्याभवग्रहः ६२
आत्मानात्मनि चात्मानं दृष्ट्वानन्तं सुखात्मकम्
विस्मृत्य विश्वं रमते समाधेस्तीव्रतस्तथा ६३
मायैव विश्वजननी नान्या तत्त्वधियापरा
यदा नाशं समायाति विश्वं नास्ति तदा खलु ६४
हेयं सर्वमिदं यस्य मायाविलसितं यतः
ततो न प्रीतिविषयस्तनुवित्तसुखात्मकः ६५
अरिर्मित्रमुदासीनस्त्रिविधं स्यादिदं जगत्
व्यवहारेषु नियतं दृश्यते नान्यथा पुनः
प्रियाप्रियादिभेदस्तु वस्तुषु नियतः स्फुटम् ६६
आत्मोपाधिवशादेवं भवेत्पुत्रादि नान्यथा
मायाविलसितं विश्वं ज्ञात्वैवं श्रुतियुक्तितः

अध्यारोपापवादाभ्यां लयं कुर्वन्ति योगिनः ६७
निखिलोपाधिहीनो वै यदा भवति पूरुषः
तदा विवक्षतेऽखंडज्ञानरूपी निरंजनः ६८
सो कामयतः पुरुषः सृजते च प्रजाः स्वयम्
अविद्या भासते यस्मात्तस्मान्मिथ्या स्वभावतः ६९
शुद्ध ब्रह्मत्व संबद्धो विद्यया सहितो भवेत्
ब्रह्मतेनसती याति यत आभासते नभः ७०
तस्मात्प्रकाशते वायुर्वायोरग्निस्ततो जलम्
प्रकाशते ततः पृथ्वी कल्पनेयं स्थिता सति ७१
आकाशाद्वायुराकाशपवनादग्निसंभवः
खवाताग्नेर्जलं व्योमवाताग्निवारितो मही ७२
खं शब्दलक्षणं वायुश्चंचलः स्पर्शलक्षणः
स्याद्रूपलक्षणं तेजः सलिलं रसलक्षणम्
गन्धलक्षणिका पृथ्वी नान्यथा भवति ध्रुवम् ७३
स्यादेकगुणमाकाशं द्विगुणो वायुरुच्यते
तथैव त्रिगुणं तेजो भवन्त्यापश्चतुर्गुणाः
शब्दः स्पर्शश्च रूपं च रसो गन्धस्तथैव च
एतत्पंचगुणा पृथ्वी कल्पकैः कल्प्यतेऽधुना ७४
चक्षुषा गृह्यते रूपं गन्धो घ्राणेन गृह्यते
रसो रसनया स्पर्शस्त्वचा संगृह्यते परम् ७५
श्रोत्रेण गृह्यते शब्दो नियतं भाति नान्यथा ७६
चैतन्यात्सर्वमुत्पन्नं जगदेतच्चराचरम्
अस्ति चेत्कल्पनेयं स्यान्नास्ति चेदस्ति चिन्मयम् ७७
पृथ्वी शीर्णा जले मग्ना जलं मग्नञ्च तेजसि
लीनं वायौ तथा तेजो व्योम्नि वातो लयं ययौ
अविद्यायां महाकाशो लीयते परमे पदे ७८
विक्षेपावरणा शक्तिर्दुरन्तासुखरूपिणी
जडरूपा महामाया रजःसत्त्वतमोगुणा ७९

सा मायावरणाशक्त्यावृताविज्ञानरूपिणी
दर्शयेज्जगदाकारं तं विक्षेपस्वभावतः ८०
तमो गुणाधिका विद्या या सा दुर्गा भवेत् स्वयम्
ईश्वरस्तदुपहितं चैतन्यं तदभूद्ध्रुवम्
सत्ताधिका च या विद्या लक्ष्मीः स्याद्दिव्यरूपिणी
चैतन्यं तदुपहितं विष्णुर्भवति नान्यथा ८१
रजोगुणाधिका विद्या ज्ञेया सा वै सरस्वती
यश्चित्स्वरूपो भवति ब्रह्मातदुपधारकः ८२
ईशाद्याः सकला देवा दृश्यन्ते परमात्मनि
शरीरादिजडं सर्वं सा विद्या तत्तथा तथा ८३
एवंरूपेण कल्पन्ते कल्पका विश्वसम्भवम्
तत्त्वातत्त्वं भवंतीह कल्पनान्येन चोदिता ८४
प्रमेयत्वादिरूपेण सर्वं वस्तु प्रकाश्यते
विशेषशब्दोपादाने भेदो भवति नान्यथा ८५
तथैव वस्तुनास्त्येव भासको वर्तकः परः
स्वरूपत्वेन रूपेण स्वरूपं वस्तु भाष्यते ८६
एकः सत्तापूरितानन्दरूपः पूर्णो व्यापी वर्तते नास्ति किञ्चित्
एतज्ज्ञानं यः करोत्येव नित्यं मुक्तः स स्यान्मृत्युसंसारदुःखात् ८७
यस्यारोपापवादाभ्यां यत्र सर्वे लयं गताः
स एको वर्तते नान्यत्तच्चित्तेनावधार्यते ८८
पितुरन्नमयात्कोशाज्जायते पूर्वकर्मणः
तच्छरीरंविदुर्दुःखं स्वप्राग्भोगाय सुन्दरम् ८९
मांसास्थिस्नायुमज्जादिनिर्मितं भोगमन्दिरम्
केवलं दुःखभोगाय नाडी संततिगुल्फितम् ९०
पारमेष्ठ्यमिदं गात्रं पंचभूतविनिर्मितम्
ब्रह्माण्डसंज्ञकं दुःखसुखभोगाय कल्पितम् ९१
बिन्दुः शिवो रजः शक्तिरुभयोर्मिलनात्स्वयम्
स्वप्नभूतानि जायन्ते स्वशक्त्या जडरूपया ९२

तत्पञ्चीकरणात्स्थूलान्यसंख्यानि समासतः
ब्रह्मांडस्थानि वस्तूनि यत्र जीवोऽस्ति कर्मभिः
तद्भूतपञ्चकात्सर्वं भोगाय जीवसंज्ञिता ९३
पूर्वकर्मानुरोधेन करोमि घटनामहम्
अजडः सर्वभूतस्था जडस्थित्या भुनक्ति तान् ९४
जडात्स्वकर्मभिर्बद्धो जीवाख्यो विविधो भवेत्
भोगायोत्पद्यते कर्म ब्रह्मांडाख्ये पुनः पुनः ९५
जीवश्च लीयते भोगावसाने च स्वकर्मणः ९६
इति प्रथमः पटलः

द्वितीयः पटलः
देहेऽस्मिन्वर्तते मेरुः सप्तद्वीपसमन्वितः
सरितः सागराः शैलाः क्षेत्राणि क्षेत्रपालकाः १
ऋषयो मुनयः सर्वे नक्षत्राणि ग्रहास्तथा
पुण्यतीर्थानि पीठानि वर्तन्ते पीठदेवताः २
सृष्टिसंहारकर्तारौ भ्रमन्तौ शशिभास्करौ
नभो वायुश्च वन्हिश्च जलं पृथ्वी तथैव च ३
त्रैलोक्ये यानि भूतानि तानि सर्वाणि देहतः
मेरुं संवेष्ट्य सर्वत्र व्यवहारः प्रवर्तते ४
जानाति यः सर्वमिदं स योगी नात्र संशयः ५
ब्रह्माण्डसंज्ञके देहे यथादेशं व्यवस्थितः
मेरुशृङ्गे सुधारश्मिर्बहिरष्टकलायुतः ६
वर्ततेऽहर्निशं सोऽपि सुधां वर्षत्यधोमुखः
ततोऽमृतं द्विधाभूतं याति सूक्ष्मं यथा च वै ७
इडामार्गेण पुष्ट्यर्थं याति मन्दाकिनीजलम्
पुष्णाति सकलं देहमिडामार्गेण निश्चितम् ८
एष पीयूषरश्मिर्हि वामपार्श्वे व्यवस्थितः
अपरः शुद्धदुग्धाभो हठात्कर्षति मण्डलात्

मध्यमार्गेण सृष्ट्यर्थं मेरौ संयाति चन्द्रमाः ९
मेरुमूले स्थितः सूर्यः कलाद्वादशसंयुतः
दक्षिणे पथि रश्मिभिर्वहत्यूर्ध्वं प्रजापतिः १०
पीयूषरश्मिनिर्यासं धातूंश्च ग्रसति ध्रुवम्
समीरमण्डले सूर्यो भ्रमते सर्वविग्रहे ११
एषा सूर्यपरामूर्तिः निर्वाणं दक्षिणे पथि
वहते लग्नयोगेन सृष्टिसंहारकारकः १२
सार्धलक्षत्रयं नाड्यः सन्ति देहान्तरे नृणाम्
प्रधानभूता नाड्यस्तु तासु मुख्याश्चतुर्दशः १३
सुषुम्णेडा पिंगला च गांधारी हस्तिजिह्विका
कुहूः सरस्वती पूषा शंखिनी च पयस्वनी १४
वारुण्यलम्बुसा चैव विश्वोदरी यशस्विनी
एतासु तिस्रो मुख्याः स्युः पिङ्गलेडा सुषुम्णिका १५
तिसृष्वेका सुषुम्णैव मुख्या सायोगिवल्लभा
अन्यास्तदाश्रयं कृत्वा नाड्यः सन्ति हि देहिनाम् १६
नाड्यस्तु ता अधोवक्त्राः पद्मतन्तुनिभाः स्थिताः
पृष्ठवंशं समाश्रित्य सोमसूर्याग्निरूपिणी १७
तासां मध्ये गता नाडी चित्रा सा मम वल्लभा
ब्रह्मरन्ध्रञ्च तत्रैव सूक्ष्मात्सूक्ष्मतरं शुभम् १८
पञ्चवर्णोज्ज्वला शुद्धा सुषुम्णा मध्यचारिणी
देहस्योपाधिरूपा सा सुषुम्णा मध्यरूपिणी १९
दिव्यमार्गमिदं प्रोक्तममृतानन्दकारकम्
ध्यानमात्रेण योगींद्रो दुरितौघं विनाशयेत् २०
गुदात्तुद्व्यंगुलादूर्ध्वं मेढात्तु द्व्यंगुलादधः
चतुरंगगुलविस्तारमाधारं वर्तते समम् २१
तस्मिन्नाधारपद्मे च कर्णिकायां सुशोभना
त्रिकोणा वर्त्तते योनिः सर्वतंत्रेषु गोपिता २२
तत्र विद्युल्लताकारा कुण्डली परदेवता

सार्द्धत्रिकरा कुटिला सुषुम्णा मार्गसंस्थिता २३
जगत्संसृष्टिरूपा सा निर्माणे सततोद्यता
वाचामवाच्या वाग्देवी सदा देवैर्नमस्कृता २४
इडानाम्नी तु या नाडी वाममार्गे व्यवस्थिता
सुषुम्णायां समाश्लिष्य दक्षनासापुटे गता २५
पिङ्गला नाम या नाडी दक्षमार्गे व्यवस्थिता
मध्यनाडीं समाश्लिष्य वामनासापुटे गता २६
इडापिंगलयोर्मध्ये सुषुम्णा या भवेत्खलु
षट्स्थानेषु च षट्शक्तिं षट्पद्मं योगिनो विदुः २७
पंचस्थानं सुषुम्णाया नामानि स्युर्बहूनि च
प्रयोजनवशात्तानि ज्ञातव्यानीह शास्त्रतः २८
अन्या याऽस्त्यपरा नाडी मूलाधारात्समुत्थिता
रसनामेढ्रनयनं पादांगुष्ठे च श्रोत्रकम्
कुक्षिकक्षांगुष्ठकर्णं सर्वांगं पायुकुक्षिकम्
लब्ध्वा तां वै निवर्तन्ते यथादेशसमुद्भवाः २९
एताभ्य एव नाडीभ्यः शाखोपशाखतः क्रमात्
सार्धलक्षत्रयं जातं यथाभागं व्यवस्थितम् ३०
एता भोगवहा नाड्यो वायुसञ्चारदक्षकाः
ओतप्रोताः सुसंव्याप्य तिष्ठन्त्यस्मिन्कलेवरे ३१
सूर्यमण्डलमध्यस्थः कलाद्वादशसंयुतः
वस्तिदेशे ज्वलद्वह्निर्वर्तते चान्नपाचकः
एष वैश्वानरोग्निर्वै मम तेजोंशसम्भवः
करोति विविधं पाकं प्राणिनां देहमास्थितः ३२
आयुः प्रदायको वह्निर्बलं पुष्टिं ददाति सः
शरीरपाटवञ्चापि ध्वस्तरोगसमुद्भवः ३३
तस्माद्वैश्वानराग्निञ्च प्रज्वाल्य विधिवत्सुधीः
तस्मिन्नन्नं हुनेद्योगी प्रत्यहं गुरुशिक्षया ३४
ब्रह्माण्डसंज्ञके देहे स्थानानि स्युर्बहूनि च

मयोक्तानि प्रधानानि ज्ञातव्यानीह शास्त्रके ३५
नानाप्रकारनामानि स्थानानि विविधानि च
वर्तन्ते विग्रहे तानि कथितुं नैव शक्यते ३६
इत्थं प्रकल्पिते देहे जीवो वसति सर्व्वगः
अनादिवासनामालाऽलंकृतः कर्मशंखलः ३७
नानाविधगुणोपेतः सर्वव्यापारकारकः
पूर्वार्जितानि कर्माणि भुनक्ति विविधानि च ३८
यद्यत्संदृश्यते लोके सर्वं तत्कर्मसम्भवम्
सर्वा कर्मानुसारेण जन्तुर्भोगान्भुनक्ति वै ३९
ये ये कामादयो दोषाः सुखदुःखप्रदायकाः
ते ते सर्वे प्रवर्तन्ते जीवकर्मानुसारतः ४०
पुण्योपरक्तचैतन्ये प्राणान्प्रीणाति केवलम्
बाह्ये पुण्यमयं प्राप्य भोज्यवस्तु स्वयम्भवेत् ४१
ततः कर्मबलात्पुंसः सुखं वा दुःखमेव च
पापोपरक्तचैतन्यं नैव तिष्ठति निश्चितम्
न तद्भिन्नो भवेत्सोऽपि तद्भिन्नो न तु किञ्चन
मायोपहितचैतन्यात्सर्वं वस्तु प्रजायते ४२
यथाकालेपि भोगाय जन्तूनां विविधोद्भवः
यथा दोषवशाच्छुक्तौ रजतारोपणं भवेत्
तथा स्वकर्मदोषाद्वै ब्रह्मण्यारोप्यते जगत् ४३
सवासनाभ्रमोत्पन्नोन्मूलनातिसमर्थनम्
उत्पन्नञ्चेदीदृशं स्याज्ज्ञानं मोक्षप्रसाधनम् ४४
साक्षाद्वैशेषदृष्टिस्तु साक्षात्कारिणि विभ्रमे
कारणं नान्यथा युक्त्या सत्यं सत्यं मयोदितम् ४५
साक्षात्कारिभ्रमे साक्षात्साक्षात्कारिणि नाशयेत्
सो हि नास्तीति संसारे भ्रमो नैव निवर्तते ४६
मिथ्याज्ञाननिवृत्तिस्तु विशेषदर्शनाद्भवेत्
अन्यथा न निवृत्तिः स्याद्दृश्यते रजतभ्रमः ४७

यावन्नोत्पद्यते ज्ञानं साक्षात्कारे निरञ्जने
तावत्सर्वाणि भूतानि दृश्यन्ते विविधानि च ४८
यदा कर्मार्जितं देहं निर्वाणे साधनं भवेत्
तदा शरीरवहनं सफलं स्यान्न चान्यथा ४९
यादृशी वासना मूला वर्त्तते जीवसंगिनी
तादृशं वहते जन्तुः कृत्याकृत्यविधौ भ्रमम् ५०
संसारसागरं तर्त्तुं यदीच्छेद्योगसाधकः
कृत्वा वर्णाश्रमं कर्म फलवर्जं तदाचरेत् ५१
विषयासक्तपुरुषा विषयेषु सुखेप्सवः
वाचाभिरुद्धनिर्वाणा वर्तन्ते पापकर्मणि ५२
आत्मानमात्मना पश्यन्न किञ्चिदिह पश्यति
तदा कर्मपरित्यागे न दोषोऽऽस्ति मतं मम ५३
कामादयो विलीयन्ते ज्ञानादेव न चान्यथा
अभावे सर्वतत्त्वानां स्वयं तत्त्वं प्रकाशते ५४
इति द्वितीयः पटलः

अथ तृतीयः पटलः
हृद्यस्ति पङ्कजं दिव्यं दिव्यलिङ्गेन भूषितम्
कादिठान्ताक्षरोपेतं द्वादशार्णविभूषितम् १
प्राणो वसति तत्रैव वासनाभिरलकृतः
अनादिकर्मसंश्लिष्टः प्राप्याहङ्कारसंयुतः २
प्राणस्य वृत्तिभेदेन नामानि विविधानि च
वर्तन्ते तानि सर्वाणि कथितुं नैव शक्यते ३
प्राणोऽपानः समानश्चोदनो व्यानश्च पञ्चमः
नागः कूर्मश्च कृकरो देवदत्तो धनञ्जयः ४
दश नामानि मुख्यानि मयोक्तानीह शास्त्रके
कुर्वन्ति तेऽत्र कार्याणि प्रेरितानि स्वकर्मभिः ५
अत्रापि वायवः पञ्च मुख्याः स्युर्दशतः पुनः

तत्रापि श्रेष्ठकर्त्तारौ प्राणापानौ मयोदितौ ६
हृदि प्राणो गुदेऽपानः समानो नाभिमण्डले
उदानः कण्ठदेशस्थो व्यानः सर्वशरीरगः ७
नागादिवायवः पञ्च ते कुर्वन्ति च विग्रहे
उद्गारोन्मीलनं क्षुत्तृड्जृम्भा हिक्का च पञ्चमः ८
अनेन विधिना यो वै ब्रह्माण्डं वेत्ति विग्रहम्
सर्वपापविनिर्मुक्तः स याति परमां गतिम् ९
अधुना कथयिष्यामि क्षिप्रं योगस्य सिद्धये
यज्ज्ञात्वा नावसीदन्ति योगिनो योगसाधने १०
भवेद्वीर्यवती विद्या गुरुवक्त्रसमुद्भवा
अन्यथा फलहीना स्यान्निर्वीर्याप्यतिदुःखदा ११
गुरुं सन्तोष्य यत्नेन ये वै विद्यामुपासते
अवलम्बेन विद्यायास्तस्याः फलमवाप्नुयात् १२
गुरुः पिता गुरुर्माता गुरुर्देवो न संशयः
कर्मणा मनसा वाचा तस्मात्सर्वैः प्रसेव्यते १३
गुरुप्रसादतः सर्वं लभ्यते शुभमात्मनः
तस्मात्सेव्यो गुरुर्नित्यमन्यथा न शुभं भवेत् १४
प्रदक्षिणत्रयं कृत्वा स्पृष्ट्वा सव्येन पाणिना
अष्टांगेन नमस्कुर्याद्गुरुपादसरोरुहम् १५
श्रद्धयात्मवतां पुंसां सिद्धिर्भवति निश्चिता
अन्येषाञ्च न सिद्धिः स्यात्तस्माद्यत्नेन साधयेत् १६
न भवेत्संगयुक्तानां तथाऽविश्वासिनामपि
गुरुपूजाविहीनानां तथा च बहुसंगिनाम्
मिथ्यावादरतानां च तथा निष्ठुरभाषिणाम्
गुरुसन्तोषहीनानां न सिद्धिः स्यात्कदाचन १७
फलिष्यतीति विश्वासः सिद्धेः प्रथमलक्षणम्
द्वितीयं श्रद्धया युक्तं तृतीयं गुरुपूजनम्
चतुर्थं समताभावं पञ्चमेन्द्रियनिग्रहम्

षष्ठं च प्रमिताहारं सप्तमं नैव विद्यते १८
योगोपदेशं संप्राप्य लब्ध्वा योगविदं गुरुम्
गुरूपदिष्टविधिना धिया निश्चित्य साधयेत् १९
सुशोभने मठे योगी पद्मासनसमन्वितः
आसनोपरि संविश्य पवनाभ्यासमाचरेत् २०
समकायः प्राञ्जलिश्च प्रणम्य च गुरून् सुधीः
दक्षे वामे च विघ्नेशं क्षत्रपालांबिकां पुनः २१
ततश्च दक्षांगुष्ठेन निरुद्धय पिंगलां सुधीः
इडया पूरयेद्वायुं यथाशक्त्या तु कुम्भयेत्
ततस्त्यक्त्वा पिंगलयाशनैरेव न वेगतः २२
पुनः पिंगलयाऽऽपूर्य यथाशक्त्या तु कुम्भयेत्
इडया रेचयेद्वायुं न वेगेन शनैःशनैः २३
इदं योगविधानेन कुर्याद्विंशतिकुम्भकान्
सर्वद्वन्द्वविनिर्मुक्तः प्रत्यहं विगतालसः २४
प्रातःकाले च मध्याह्ने सूर्यास्ते चार्द्धरात्रके
कुर्यादेवं चतुर्वारं कालेष्वेतेषु कुम्भकान् २५
इत्थं मासत्रयं कुर्यादनालस्यो दिने दिने
ततो नाडीविशुद्धिः स्यादविलम्बेन निश्चितम् २६
यदा तु नाडीशुद्धिः स्याद्योगिनस्तत्त्वदर्शिनः
तदा विध्वस्तदोषश्च भवेदारम्भसम्भवः २७
चिह्नानि योगिनो देहे दृश्यन्ते नाडिशुद्धितः
कथ्यन्ते तु समस्तान्यङ्गानि संक्षेपतो मया २८
समकायः सुगन्धिश्च सुकान्तिः स्वरसाधकः
आरम्भघटकश्चैव यथा परिचयस्तदा
निष्पत्तिः सर्वयोगेषु योगावस्था भवन्ति ताः २९
आरम्भः कथितोऽस्माभिरधुना वायुसिद्धये
अपरः कथ्यते पश्चात्सर्वदुःखौघनाशनः ३०
प्रौढवह्निः सुभोगी च सुखीसर्वाङ्गसुन्दरः

संपूर्णहृदयो योगी सर्वोत्साहबलान्वितः
जायते योगिनोऽवश्यमेतत्सर्वं कलेवरे ३१
अथ वर्ज्यं प्रवक्ष्यामि योगविघ्नकरं परम्
येन संसारदुःखाब्धिं तीर्त्वा यास्यन्ति योगिन ३२
आम्लं रूक्षं तथा तीक्ष्णं लवणं सार्षपं कटुम्
बहुलं भ्रमणं प्रातः स्नानं तैलविदाहकम्
स्तेयं हिंसां जनद्वेषञ्चाहङ्कारमनार्जवम्
उपवासमसत्यञ्च मोक्षञ्च प्राणिपीडनम्
स्त्रीसङ्गमग्निसेवां च बह्वालापं प्रियाप्रियम्
अतीव भोजनं योगी त्यजेदेतानि निश्चितम् ३३
उपायं च प्रवक्ष्यामि क्षिप्रं योगस्य सिद्धये
गोपनीयं साधकानां येन सिद्धिर्भवेत्खलु ३४
घृतं क्षीरं च मिष्टान्नं ताम्बूलं चूर्णवर्जितम्
कर्पूरं निष्तुषं मिष्टं सुमठं सूक्ष्मरन्ध्रकम्
सिद्धान्तश्रवणं नित्यं वैराग्यगृहसेवनम्
नामसङ्कीर्तनं विष्णोः सुनादश्रवणं परम्
धृतिः क्षमा तपः शौचं ह्रीर्मतिर्गुरुसेवनम्
सदैतानि परं योगी नियमानि समाचरेत् ३५
अनिलेऽर्कप्रवेशे च भोक्तव्यं योगिभिः सदा
वायौ प्रविष्टे शशिनि शयनं साधकोत्तमैः ३६
सद्यो भुक्तेऽपि क्षुधिते नाभ्यासः क्रियते बुधैः
अभ्यासकाले प्रथमं कुर्यात्क्षीराज्यभोजनम् ३७
ततोऽभ्यासे स्थिरीभूते न तादृङ्गियमग्रहः
अभ्यासिना विभोक्तव्यं स्तोकं स्तोकमनेकधा
पूर्वोक्तकाले कुर्यात्तु कुम्भकान्प्रतिवासरे ३८
ततो यथेष्टा शक्तिः स्याद्योगिनो वायुधारणे
यथेष्टं धारणाद्वायोः कुम्भकः सिध्यति ध्रुवम्
केवले कुम्भके सिद्धे किं न स्यादिह योगिनः ३९

स्वेदः संजायते देहे योगिनः प्रथमोद्यमे
यदा संजायते स्वेदो मर्दनं कारयेत्सुधीः
अन्यथा विग्रहे धातुर्नष्टो भवति योगिनः ४०
द्वितीये हि भवेत्कम्पो दार्दुरी मध्यमे मता
ततोऽधिकतराभ्यासाद्गगनेचरसाधकः ४१
योगी पद्मासनस्थोऽपि भुवमुत्सृज्य वर्तते
वायुसिद्धिस्तदा ज्ञेया संसारध्वान्तनाशिनी ४२
तावत्कालं प्रकुर्वीत योगोक्तनियमग्रहम्
अल्पनिद्रा पुरीषं च स्तोकं मूत्रं च जायते ४३
अरोगित्वमदीनत्वं य्योगिनस्तत्त्वदर्शिनः
स्वेदो लाला कृमिश्चैव सर्वथैव न जायते ४४
कफपित्तानिलाश्चैव साधकस्य कलेवरे
तस्मिन्काले साधकस्य भोज्येष्वनियमग्रहः ४५
अत्यल्पं बहुधा भुक्त्वा योगी न व्यथते हि सः
अथाभ्यासवशाद्योगी भूचरीं सिद्धिमाप्नुयात्
यथा दर्दुरजन्तूनां गतिः स्यात्पाणिताडनात् ४६
सन्त्यत्र बहवो विघ्ना दारुणा दुर्निवारणाः
तथापि साधयेद्योगी प्राणैः कंठगतैरपि ४७
ततो रहस्युपाविष्टः साधकः संयतेन्द्रियः
प्रणवं प्रजपेद्दीर्घं विघ्नानां नाशहेतवे ४८
पूर्वार्जितानि कर्माणि प्राणायामेन निश्चितम्
नाशयेत्साधको धीमानिहलोकोद्भवानि च ४९
पूर्वाजितानि पापानि पुण्यानि विविधानि च
नाशयेत्षोडशप्राणायामेन योगि पुंगवः ५०
पापतूलचयानाहोप्रदहेत्प्रलयाग्निना
ततः पापविनिर्मुक्तः पश्चात्पुण्यानि नाशयेत् ५१
प्राणायामेन योगीन्द्रो लब्ध्वैश्वर्याष्टकानि वै
पापपुण्योदधिं तीर्त्वा त्रैलोक्यचरतामियात् ५२

ततोऽभ्यासक्रमेणैव घटिकात्रितयं भवेत्
येन स्यात्सकलासिद्धियोगिनः स्वेप्सिता ध्रुवम् ५३
वाक्सिद्धिः कामचारित्वं दूरदृष्टिस्तथैव च
दूरश्रुतिः सूक्ष्मदृष्टिः ह्परकायप्रवेशनम्
विरामूत्रलेपने स्वर्णमदृश्यकरणं तथा
भवन्त्येतानि सर्वाणि खेचरत्वं च योगिनाम् ५४
यदा भवेद्घटावस्था पवनाभ्यासने परा
तदां संसारचक्रेऽस्मिन्नास्ति यन्न सधारयेत् ५५
प्राणापाननादबिंदुजीवात्मपरामात्मनः
मिलित्वा घटते यस्मात्तस्माद्वै घट उच्यते ५६
याममात्रं यदा धर्त्तुं समर्थः स्यात्तदाद्भुतः
प्रत्याहारस्तदैव स्यान्नांतरा भवति ध्रुवम् ५७
यं यं जानाति योगीन्द्रस्तं तमात्मेति भावयेत्
यैरिन्द्रियैर्यद्विधानस्तदिन्द्रियजयो भवेत् ५८
याममात्रं यदा पूर्णं भवेदभ्यासयोगतः
एकवारं प्रकुर्वीत तदा योगी च कुम्भकम्
दराडाष्टकं यदा वायुर्निश्चलो योगिनो भवेत्
स्वसामर्थ्यात्तदांगुष्ठे तिष्ठेद्वातुलबत्सुधीः ५९
ततः परिचयावस्था योगिनोऽभ्यासतो भवेत्
यदा वयुश्चंद्रसूर्यं त्यक्त्वा तिष्ठति निश्चलम्
वायुः परिचितो वायुः सुषुम्ना व्योम्नि संचरेत् ६०
क्रियाशक्तिं गृहीत्वैव चक्रान्भित्त्वा सुनिश्चितम्
यदा परिचयावस्था भवेदभ्यासयोगतः
त्रिकूटं कर्मणां योगी तदा पश्यति निश्चितम् ६१
ततश्च कर्मकूटानि प्रणवेन विनाशयेत्
स योगी कर्मभोगाय कायव्यूहं समाचरेत् ६२
अस्मिन्काले महायोगी पंचधा धारणं चरेत्
येन भूरादिसिद्धिः स्यात्ततो भूतभयापहा ६३

ग्राधारे घटिकाः पंच लिंगस्थाने तथैव च
तदूर्ध्वं घटिकाः पञ्च नाभिहृन्मध्यके तथा
भ्रूमध्योर्ध्वं तथा पंच घटिका धारयेत्सुधीः
तथा भूरादिना नष्टो योगिन्द्रो न भवेत्खलु ६४
मेधावी सर्वभूतानां धारणां यः समभ्यसेत्
शतब्रह्ममृतेनापि मृत्युस्तस्य न विद्यते ६५
ततोऽभ्यासक्रमेणैव निष्पत्तिर्योगिनो भवेत्
ग्रनादिकर्मबीजानि येन तीर्त्वाऽमृतं पिबेत् ६६
यदा निष्पत्तिर्भवति समाधेः स्वेनकर्मणा
जीवन्मुक्तस्य शांतस्य भवेद्धीरस्य योगिनः
यदा निष्पत्तिसंपन्नः समाधिः स्वेच्छया भवेत्
गृहीत्वा चेतनां वायुः क्रियाशक्तिं च वेगवान्
सर्वांश्चक्रान्विजित्वा च ज्ञानशक्तौ विलीयते ६७
इदानीं क्लेशहान्यर्थं वक्तव्यं वायुसाधनम्
येन संसारचक्रेस्मिन् भोगहानिर्भवेद्ध्रुवम् ६८
रसनां तालुमूले यः स्थापयित्वा विचक्षणः
पिबेत्प्राणानिलं तस्य योगानां संक्षयो भवेत् ६९
काकचंच्वा पिबेद्वायुं शीतलं यो विचक्षणः
प्राणापानविधानज्ञः स भवेन्मुक्तिभाजनः ७०
सरसं यः पिबेद्वायुं प्रत्यहं विधिना सुधीः
नश्यंति योगिनस्तस्य श्रमदाहजरामयाः ७१
रसनामूर्ध्वगां कृत्वा यश्चन्द्रे सलिलं पिबेत्
मासमात्रेण योगिन्द्रो मृत्युं जयति निश्चितम् ७२
राजदंतबिलं गाढं संपीड्य विधिना पिबेत्
ध्यात्वा कुण्डलिनीं देवीं षण्मासेन कविर्भवेत् ७३
काकचंच्वा पिबेद्वायुं सन्ध्ययोरुभयोरपि
कुण्डलिन्या मुखे ध्यात्वा क्षयरोगस्य शान्तये ७४
ग्रहर्निशं पिबेद्योगी काकचंच्वा विचक्षणः

पिबेत्प्राणानिलं तस्य रोगाणां संक्षयो भवेत्
दूरश्रुतिर्दूरदृष्टिस्तथा स्याद्दर्शनं खलु ७५
दन्तैर्दन्तान्समापीड्य पिबेद्वायुं शनैः शनैः
ऊर्ध्वजिह्वः सुमेधावी मृत्युं जयति सोचिरात् ७६
षण्मासमात्रमभ्यासं यः करोति दिने दिने
सर्वपापविनिर्मुक्तो रोगान्नाशयते हि सः ७७
संवत्सरकृताऽभ्यासाद्भैरवो भवति ध्रुवम्
अणिमादिगुणाँल्लब्ध्वा जितभूतगणः स्वयम् ७८
रसनामूर्ध्वगां कृत्वा क्षणार्धं यदि तिष्ठति
क्षणेन मुच्यते योगी व्याधिमृत्युजरादिभिः ७९
रसनां प्राणसंयुक्तां पीड्यमानां विचिंतयेत्
न तस्य जायते मृत्युः सत्यं सत्यं मयोदितम् ८०
एवमभ्यासयोगेन कामदेवो द्वितीयकः
न क्षुधा न तृषा निद्रा नैव मूर्च्छा प्रजायते ८१
अनेनैव विधानेन योगीन्द्रोऽवनिमण्डले
भवेत्स्वच्छन्दचारी च सर्वापत्परिवर्जितः ८२
न तस्य पुनरावृत्तिर्मोदते ससुरैरपि
पुण्यपापैर्न लिप्येत एतदाचरणेन सः ८३
चतुरशीत्यासनानि सन्ति नानाविधानि च
तेभ्यश्चतुष्कमादाय मयोकानि ब्रवीम्यहम्
सिद्धासनं ततः पद्मासनञ्चोग्रं च स्वस्तिकम् ८४
योनिं संपीड्य यत्नेन पादमूलेन साधकः
मेढोपरि पादमूलं विन्यसेद्योगवित्सदा
ऊर्ध्वं निरीक्ष्य भ्रूमध्यं निश्चलः संयतेन्द्रियः
विशेषोऽवक्रकायश्च रहस्युद्वेगवर्जितः
एतत्सिद्धासनं ज्ञेयं सिद्धानां सिद्धिदायकम् ८५
येनाभ्यासवशाच्छीघ्रं योगनिष्पत्तिमाप्नुयात्
सिद्धासनं सदा सेव्यं पवनाभ्यासिना परम् ८६

येन संसारमुत्सृज्य लभते परमां गतिम्
नातः परतरं गुह्यमासनं विद्यते भुवि
येनानुध्यानमात्रेण योगी पापाद्विमुच्यते ८७
उत्तानौ चरणौ कृत्वा ऊरुसंस्थौ प्रयत्नतः
ऊरुमध्ये तथोत्तानौ पाणी कृत्वा तु तादृशौ
नासाग्रे विन्यसेद्दृष्टिं दन्तमूलञ्च जिह्वया
उत्तोल्य चिबुकं वक्ष उत्थाप्य पवनं शनैः
यथाशक्त्या समाकृष्य पूरयेदुदरं शनैः
यथा शक्त्यैव पश्चात्तु रेचयेदविरोधतः
इदं पद्मासनं प्रोक्तं सर्वव्याधिविनाशनम् ८८
दुर्लभं येन केनापि धीमता लभ्यते परम् ८९
अनुष्ठाने कृते प्राणः समश्चलति तत्क्षणात्
भवेदभ्यासने सम्यक्साधकस्य न संशयः ९०
पद्मासने स्थितो योगी प्राणापानविधानतः
पूरयेत्स विमुक्तः स्यात्सत्यं सत्यं वदाम्यहम् ९१
प्रसार्य चरणद्वन्द्वं परस्परमसंयुतम्
स्वपाणिभ्यां दृढं धृत्वा जानूपरि शिरो न्यसेत्
आसनोग्रमिदं प्रोक्तं भवेदनिलदीपनम्
देहावसानहरणं पश्चिमोत्तानसंज्ञकम्
य एतदासनं श्रेष्ठं प्रत्यहं साधयेत्सुधीः
वायुः पश्चिममार्गेण तस्य सञ्चरति ध्रुवम् ९२
एतभ्यासशीलानां सर्वसिद्धिः प्रजायते
तस्माद्योगी प्रयत्नेन साधयेत्सिद्धमात्मनः ९३
गोपनीयं प्रयत्नेन न देयं यस्य कस्यचित्
येन शीघ्रं मरुत्सिद्धिर्भवेद् दुःखौघनाशिनी ९४
जानूर्वोरन्तरे सम्यग्धृत्वा पादतले उभे
समकायः सुखासीनः स्वस्तिकं तत्प्रचक्षते ९५
अनेन विधिना योगी मारुतं साधयेत्सुधीः

देहे न क्रमते व्याधिस्तस्य वायुश्च सिद्ध्यति ९६
सुखासनमिदं प्रोक्तं सर्वदुःखप्रणाशनम्
स्वस्तिकं योगिभिर्गोप्यं स्वस्तीकरणमुत्तमम् ९७
इति तृतीयः पटलः

चतुर्थः पटलः

आदौ पूरक योगेन स्वाधारे पूरयेन्मनः
गुदमेढ्रन्तरे योनिस्तामाकुंच्य प्रवर्तते १
ब्रह्मयोनिगतं ध्यात्वा कामं कन्दुकसन्निभम्
सूर्य्यकोटि प्रतीकाशं चन्द्रकोटिसुशीतलम्
तस्योर्ध्वं तु शिखासूक्ष्मा चिद्रूपा परमाकला
तया सहितमात्मानमेकीभूतं विचिन्तयेत् २
गच्छति ब्रह्ममार्गेण लिंगत्रयक्रमेण वै
अमृतं तद्धि स्वर्गस्थं परमानन्दलक्षणम्
श्वेतरक्तं तेजसाढ्यं सुधाधाराप्रवर्षिणम्
पीत्वा कुलामृतं दिव्यं पुनरेव विशेत्कुलम् ३
पुनरेव कुलं गच्छेन्मात्रायोगेन नान्यथा
सा च प्राणसमाख्याता ह्यस्मिंस्तन्त्रे मयोदिता ४
पुनः प्रलीयते तस्यां कालाग्न्यादिशिवात्मकम्
योनिमुद्रा परा ह्येषा बन्धस्तस्याः प्रकीर्तितः
तस्यास्तु बन्धामत्रेण तन्नास्ति यन्न साधयेत् ५
छिन्नरूपास्तु ये मन्त्राः कीलिताः स्तंभिताश्च ये
दग्धामन्त्राः शिखाहीना मलिनास्तु तिरस्कृताः
मन्दा बालास्तथा वृद्धाः प्रौढा यौवनगर्विताः
अरिपक्षे स्थिता ये च निर्वीर्याः सत्त्ववर्जिताः
तथा सत्त्वेन हीनाश्च खण्डिताः शतधाकृताः
विधानेन च संयुक्ताः प्रभवन्त्यचिरेण तु
सिद्धिमोक्षप्रदाः सर्वे गुरुणा विनियोजिताः

दीक्षयित्वा विधानेन अभिषिच्य सहस्रधा
ततो मंत्राधिकारार्थमेषा मुद्रा प्रकीर्तिता ६
ब्रह्महत्यासहस्राणि त्रैलोक्यमपि धातयेत्
नासौ लिप्यति पापेन योनिमुद्रानिबन्धनात् ७
गुरुहा च सुरापी च स्तेयी च गुरुतल्पगः
एतैः पापैर्न बध्येत योनिमुद्रानिबन्धनात् ८
तस्मादभ्यासनं नित्यं कर्तव्यं मोक्षकांक्षिभिः
अभ्यासाज्जाय ते सिद्धिरभ्यासान्मोक्षमाप्नुयात् ९
संविदं लभतेऽभ्यासाद्योगोभ्यासात्प्रवर्तते
मुद्राणां सिद्धिरभ्यासादभ्यासाद्वायुसाधनम्
कालवञ्चनमभ्यासात्तथा मृत्युञ्जयो भवेत् १०
वाक्सिद्धिः कामचारित्वं भवेदभ्यासयोगतः
योनिमुद्रा परं गोप्या न देया यस्य कस्यचित्
सर्वथा नैव दातव्या प्राणैः कण्ठगतैरपि ११
अधुना कथयिष्यामि योगसिद्धिकरं परम्
गोपनीयं सुसिद्धानां योगं परमदुर्लभम् १२
सुप्ता गुरुप्रसादेन यदा जागर्ति कुण्डली
तदा सर्वाणि पद्मानि भिद्यन्ते ग्रन्थयोपि च १३
तस्मासर्वप्रयत्नेन प्रबोधयितुमश्विरीम्
ब्रह्मरन्ध्रमुखे सुप्तां मुद्राभ्यासं समाचरेत् १४
महामुद्रा महाबन्धो महावेधश्च खेचरी
जालंधरो मूलबंधो विपरीतकृतिस्तथा
उड्डानं चैव वज्रोणी दशमे शक्तिचालनम्
इदं हि मुद्रादशकं मुद्राणामुत्तमोत्तमम् १५

अथ महामुद्राकथनम्

महामुद्रां प्रवक्ष्यामि तन्त्रेऽस्मिन्मम वल्लभे
यां प्राप्य सिद्धाः सिद्धिं च कपिलाद्याः पुरागताः १६
अपसव्येन संपीड्य पादमूलेन सादरम्

गुरूपदेशतो योनिं गुदमेढ्रान्तरालगाम्
सव्यं प्रसारितं पादं धृत्वा पाणियुगेन वै
नवद्वाराणि संयम्य चिबुकं हृदयोपरि
चित्तं चित्तपथे दत्त्वा प्रभवेद्वायुसाधनम्
महामुद्राभवेदेषा सर्वतन्त्रेषु गोपिता
वामाङ्गेन समभ्यस्य दक्षाङ्गेनाभ्यसेत्पुनः
प्राणायामं समं कृत्वा योगी नियतमानसः १७
अनेन विधिना योगी मन्दभाग्योपि सिध्यति
सर्वासामेव नाडीनां चालनं बिन्दुमारणम्
जीवनन्तु कषायस्य पातकानां विनाशनम्
सवरोगोपशमनं जठराग्निविवर्धनम्
वपुषा कान्तिममलां जरामृत्युविनाशनम्
वांछितार्थफलं सौख्यमिन्द्रियाणाञ्च मारणम्
एतदुक्तानि सर्वाणि योगारूढस्य योगिनः
भवेदभ्यासतोऽवश्यं नात्र कार्या विचारणा १८
गोपनीया प्रयत्नेन मुद्रेयं सुरपूजिते
यां तु प्राप्य भवाम्भोधेः पारं गच्छन्ति योगिनः १९
मुद्रा कामदुघा ह्येषा साधकानां मयोदिता
गुप्ताचारेण कर्तव्या न देया यस्य कस्यचित् २०

अथ महाबन्धकथनम्

ततः प्रसारितः पादो विन्यस्य तमुरूपरि
गुदयोनिं समाकुंच्य कृत्वा चापानमूर्ध्वगम्
योजयित्वा समानेन कृत्वा प्राणमधोमुखम्
बन्धयेदूर्ध्वगत्यर्थं प्राणापानेन यः सुधीः
कथितोऽयं महाबन्धः सिद्धिमार्गप्रदायकः
नाडीजालाद्रसव्यूहो मूर्धानं याति योगिनः
उभाभ्यां साधयेत्पद्मामेकैः सुप्रयत्नतः २१
भवेदभ्यासतो वायुः सुषुम्नां मध्यसङ्गतः

अनेन वपुषः पुष्टिर्दृढबन्धोऽस्थिपंजरे
संपूर्णहृदयो योगी भवन्त्येतानि योगिनः
बन्धेनानेन योगीन्द्रः साधयेत्सर्वमीप्सितम् २२

अथ महावेधकथनम्

अपानप्राणयोरैक्यं कृत्वा त्रिभुवनेश्वरि
महावेधस्थितो योगी कुक्षिमापूर्य वायुना
स्फिचौ संताडयेद्धीमान्वेधोऽयं कीर्तितो मया २३
वेधेनानेन संबिध्य वायुना योगिपुंगवः
ग्रंथिं सुषुम्णामार्गेण ब्रह्मग्रंथिं भिनत्त्यसौ २४
यः करोति सदाभ्यासं महावेधं सुगोपितम्
वायुसिद्धिर्भवेत्तस्य जरामरणनाशिनी २५
चक्रमध्ये स्थिता देवाः कम्पन्ति वायुताडनात्
कुण्डल्यपि महामाया कैलासे सा विलीयते २६
महामुद्रामहाबन्धौ निष्फलौ वेधवर्जितौ
तस्माद्योगी प्रयत्नेन करोति त्रितयं क्रमात् २७
एतत्त्रयं प्रयत्नेन चतुर्वारं करोति यः
षण्मासाभ्यन्तरं मृत्युं जयत्येव न संशयः २८
एतत्त्रयस्य माहात्म्यं सिद्धो जानाति नेतरः
यज्ज्ञात्वा साधकाः सर्वे सिद्धिं सम्यग्लभन्ति वै २९
गोपनीया प्रयत्नेन साधकैः सिद्धिमीप्सुभिः
अन्यथा च न सिद्धिः स्यान्मुद्राणामेष निश्चयः ३०

अथ खेचरीमुद्राकथनम्

भ्रुवोरन्तर्गतां दृष्टिं विधाय सुदृढां सुधीः
उपविश्यासने वज्रे नानोपद्रववर्जितः
लम्बिकोर्ध्वं स्थिते गर्ते रसनां विपरीतगाम्
संयोजयेत्प्रयत्नेन सुधाकूपे विचक्षणः
मुद्रैषा खेचरी प्रोक्ता भक्तानामनुरोधतः ३१
सिद्धीनां जननी ह्येषा मम प्राणाधिकप्रिया

निरन्तरकृताभ्यासात्पीयूषं प्रत्यहं पिबेत्
तेन विग्रहसिद्धिः स्यान्मृत्युमातङ्गकेसरी ३२
अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपिवा
खेचरी यस्य शुद्धा तु स शुद्धो नात्र संशयः ३३
क्षणार्धं कुरुते यस्तु तीर्त्वा पापमहार्णवम्
दिव्यभोगान्प्रभुक्त्वा च सत्कुले स प्रजायते ३४
मुद्रैषा खेचरी यस्तु स्वस्थचित्तो ह्यतन्द्रितः
शतब्रह्मगतेनापि क्षणार्धं मन्यते हि सः ३५
गुरूपदेशतो मुद्रां यो वेत्ति खेचरीमिमाम्
नानापापरतो धीमान् स याति परमां गतिम् ३६
सा प्राणसदृशी मुद्रा यस्मिन्कस्मिन्न दीयते
प्रच्छाद्यते प्रयत्नेन मुद्रेयं सुरपूजिते ३७

अथ जालन्धरबन्धः

बद्धागलशिराजालं हृदये चिबुकं न्यसेत्
बन्धोजालन्धरः प्रोक्तो देवानामपि दुर्लभः
नाभिस्थवह्निर्जन्तूनां सहस्रकमलच्युतम्
पिबेत्पीयूषविस्तारं तदर्थं बन्धयेदिमम् ३८
बन्धेनानेन पीयूषं स्वयं पिबति बुद्धिमान्
अमरत्वञ्च सम्प्राप्य मोदते भुवनत्रये ३९
जालन्धरो बन्ध एष सिद्धानां सिद्धिदायकः
अभ्यासः क्रियते नित्यं योगिना सिद्धिमिच्छता ४०

अथ मूलबन्धः

पादमूलेन संपीड्य गुदमार्गं सुयन्त्रितम्
बलादपानमाकृष्य क्रमादूर्ध्वं सुचारयेत्
कल्पितोऽयं मूलबन्धो जरामरणनाशनः ४१
अपानप्राणयोरैक्यं प्रकरोत्यधिकल्पितम्
बन्धेनानेन सुतरां योनिमुद्रा प्रसिद्ध्यति ४२
सिद्धायां योनिमुद्रायां किं न सिध्यति भूतले

बन्धस्यास्य प्रसादेन गगने विजितालसः
पद्मासने स्थितो योगी भुवमुत्सृज्य वर्तते ४३
सुगुप्ते निर्जने देशे बन्धमेनं समभ्यसेत्
संसारसागरं तर्तुं यदीच्छेद्योगि पुंगवः ४४

अथ विपरीतकरणी मुद्रा

भूतले स्वशिरोदत्त्वा खे नयेच्चरणद्वयम्
विपरीतकृतिश्चैषा सर्वतन्त्रेषु गोपिता ४५
एतद्यः कुरुते नित्यमभ्यासं याममात्रतः
मृत्युं जयति स योगी प्रलये नापि सीदति ४६
कुरुतेऽमृतपानं यः सिद्धानां समतामियात्
स सेव्यः सर्वलोकानां बन्धमेनं करोति यः ४७
नाभेरूर्ध्वमधश्चापि तानं पश्चिममाचरेत्
उड्डयानबंध एष स्यात्सर्वदुःखौघनाशनः
उदरे पश्चिमं तानं नाभेरूर्ध्वं तु कारयेत्
उड्यानाख्योऽत्र बन्धोयं मृत्युमातङ्गकेसरी ४८
नित्यं यः कुरुते योगी चतुर्वारं दिने दिने
तस्य नाभेस्तु शुद्धिः स्याद्येन सिद्धो भवेन्मरुत् ४९
षण्मासमभ्यसन्योगी मृत्युं जयति निश्चितम्
तस्योदराग्निर्ज्वलति रसवृद्धिः प्रजायते ५०
अनेन सुतरां सिद्धिर्विग्रहस्य प्रजायते
रोगाणां संक्षयश्चापि योगिनो भवति ध्रुवम् ५१
गुरोर्लब्ध्वा प्रयत्नेन साधयेत्तु विचक्षणः
निर्जने सुस्थिते देशे बन्धं परमदुर्लभम् ५२

अथ शक्तिचालनमुद्रा

आधारकमले सुप्तां चालयेत्कुण्डलीं दृढाम्
अपानवायुमारुह्य बलादाकृष्य बुद्धिमान्
शक्तिचालनमुद्रेयं सर्वशक्तिप्रदायिनी ५३
शक्तिचालनमेवं हि प्रत्यहं यः समाचरेत्

आयुर्वृद्धिर्भवेत्तस्य रोगाणां च विनाशनम् ५४
विहाय निद्रा भुजगी स्वयमूर्ध्वे भवेत्खलु
तस्मादभ्यासनं कार्यं योगिना सिद्धमिच्छता ५५
यः करोति सदाभ्यासं शक्तिचालनमुत्तमम्
येन विग्रहसिद्धिः स्यादणिमादिगुणप्रदा
गुरूपदेशविधिना तस्य मृत्युभयं कुतः ५६
मुहूर्तद्वयपर्यन्तं विधिना शक्तिचालनम्
यः करोति प्रयत्नेन तस्य सिद्धिरदूरतः
युक्तासनेन कर्तव्यं योगिभिः शक्तिचालनम् ५७
एतत्तुमुद्रादशकं न भूतं न भविष्यति
एकैकाभ्यासने सिद्धिः सिद्धो भवति नान्यथा ५८

इति श्रीशिवसंहितायां हरगौरीसंवादे मुद्राकथनं
चतुर्थपटलः समाप्तः ४

अथ पञ्चमः पटलः

श्री देव्युवाच
ब्रूहि मे वाक्यमीशान परमार्थधियं प्रति
ये विघ्नाः सन्ति लोकानां वद मे प्रिय शङ्कर १
ईश्वर उवाच
शृणु देवि प्रवक्ष्यामि यथा विघ्नाः स्थिताः सदा
मुक्तिं प्रति नराणाञ्च भोगः परमबन्धनः २

अथ भोगरूपयोगविघ्नकथनम्

नारी शय्यासनं वस्त्रं धनमस्य विडम्बनम्
ताम्बूलंभक्ष्ययानानि राज्यैश्वर्यविभूतयः
हैमं रौप्यं तथा ताम्रं रत्नञ्चागुरुधेनवः
पाण्डित्यं वेदशास्त्राणि नृत्यं गीतं विभूषणम्
वंशी वीणा मृदङ्गाश्च गजेंद्रश्चाश्ववाहनम्
दारापत्यानि विषया विघ्ना एते प्रकीर्तिताः

भोगरूपा इमे विघ्ना धर्मरूपानिमाञ्छृणु ३

अथ धर्मरूपयोगविघ्नकथनम्

स्नानं पूजाविधिर्होमं तथा मोक्षमयी स्थितिः
व्रतोपवासनियममौनमिन्द्रियनिग्रहः
ध्येयो ध्यानं तथा मन्त्रो दानं ख्यातिर्दिशासु च
वापीकूपतडागादिप्रासादारामकल्पना
यज्ञं चान्द्रायणं कृच्छ्रं तीर्थानि विविधानि च
दृश्यन्ते च इमे विघ्ना धर्मरूपेण संस्थिताः ४

अथ ज्ञानरूपविघ्नकथनम्

यत्तु विघ्नं भवेज्ज्ञानं कथयामि वरानने
गोमुखं स्वासनं कृत्वा धौतिप्रक्षालनं च तत्
नाडीसञ्चारविज्ञानं प्रत्याहारनिरोधनम्
कुक्षिसंचालनं क्षिप्रं प्रवेश इन्द्रियाध्वना
नाडीकर्माणि कल्याणि भोजनं श्रूयतां मम ५
नवधातुरसं छिन्धि शुण्ठिकास्ताडयेत्पुनः
एककालं समाधिः स्याल्लिंगभूतमिदं शृणु ६
सङ्गमं गच्छ साधूनां संकोचं भज दुर्जनात्
प्रवेशनिर्गमे वायोर्गुरुलक्षं विलोकयेत् ७
पिण्डस्थं रूपसंस्थञ्च रूपस्थं रूपवर्जितम्
ब्रह्मैतस्मिन्मतावस्था हृदयञ्च प्रशाम्यति
इत्येते कथिता विघ्ना ज्ञानरूपे व्यवस्थिताः ८

अथ चतुर्विधयोगकथनम्

मन्त्रयोगो हठश्चैव लययोगस्तृतीयकः
चतुर्थो राजयोगः स्यात्स द्विधाभाववर्जितः ९
चतुर्धा साधको ज्ञेयो मृदुमध्याधिमात्रकाः
अधिमात्रतमः श्रेष्ठो भवाब्धौ लंघनक्षमः १०

अथ मृदुसाधकलक्षणम्

मन्दोत्साही सुसंमूढो व्याधिस्थो गुरुदूषकः

लोभी पापमतिश्चैव बह्वाशी वनिताश्रयः
चपलः कातरो रोगी पराधीनोऽतिनिष्ठुरः
मन्दाचारो मन्दवीर्यो ज्ञातव्यो मृदुमानवः
द्वादशाब्दे भवेत्सिद्धिरेतस्य यत्नतः परम्
मन्त्रयोगाधिकारी स ज्ञातव्यो गुरुणा ध्रुवम् ११
समबुद्धिः क्षमायुक्तः पुण्याकांक्षी प्रियंवदः
मध्यस्थः सर्वकार्येषु सामान्यः स्यान्न संशयः
एतज्ज्ञात्वैव गुरुभिर्दीयते मुक्तितो लयः १२

अथ अधिमात्रसाधकलक्षणम्

स्थिरबुद्धिर्लये युक्तः स्वाधीनो वीर्यवानपि
महाशयो दयायुक्तः क्षमावान् सत्यवानपि
शूरो वयःस्थः श्रद्धावान् गुरुपादाब्नपूजकः
योगाभ्यासरतश्चैव ज्ञातव्यश्चाधिमात्रकः
एतस्य सिद्धिः षड्वर्षे भवेदभ्यासयोगतः
एतस्मै दीयते धीरो हठयोगश्च साङ्गतः १३

अथ अधिमात्रतमसाधकलक्षणम्

महावीर्यान्वितोत्साही मनोज्ञः शौर्यवानपि
शास्त्रज्ञोऽभ्यासशीलश्च निर्मोहश्च निराकुलः
नवयौवनसम्पन्नो मिताहारी जितेंद्रियः
निर्भयश्च शुचिर्दक्षो दाता सर्वजनाश्रयः
अधिकारी स्थिरो धीमान् यथेच्छावस्थितः क्षमी
सुशीलो धर्मचारी च गुप्तचेष्टः प्रियंवदः
शास्त्रविश्वाससम्पन्नो देवता गुरुपूजकः
जनसंगविरक्तश्च महाव्याधि विवर्जितः
अधिमात्रव्रतज्ञश्च सर्वयोगस्य साधकः
त्रिभिः संवत्सरैः सिद्धिरेतस्य नात्र संशयः
सर्वयोगाधिकारी स नात्र कार्या विचारणा १४

## अथ प्रतीकोपासनम्

प्रतीकोपासना कार्या दृष्टादृष्टफलप्रदा
पुनाती दर्शनादत्र नात्र कार्या विचारणा १५
गाढातपे स्वप्रतिविम्बितेश्वरं निरीक्ष्य विस्फारितलोचनद्वयम्
यदा नभः पश्यति स्वप्रतीकं नभोङ्गणे तत्क्षणमेव पश्यति १६
प्रत्यहं पश्यते यो वै स्वप्रतीकं नभोङ्गणे
आयुर्वृद्धिर्भवेत्तस्य न मृत्युः स्यात्कदाचन १७
यदा पश्यति सम्पूर्णं स्वप्रतीकं नभोङ्गणे
तदा जयमवाप्नोति वायुं निर्जित्य सञ्चरेत् १८
यः करोति सदाभ्यासं चात्मानं वन्दते परम्
पूर्णानन्दैकपुरुषं स्वप्रतीकप्रसादतः १९
यात्राकाले विवाहे च शुभे कर्मणि सङ्कटे
पापक्षये पुण्यवृद्धौ प्रतीकोपासनञ्चरेत् २०
निरन्तरकृताभ्यासादन्तरे पश्यति ध्रुवम्
तदा मुक्तिमवाप्नोति योगी नियतमानसः २१
अंगुष्ठाभ्यामुभे श्रोत्रे तर्जनीभ्यां द्विलोचने
नासारन्ध्रे च मध्याभ्यामनामाभ्यां मुखं दृढम्
निरुध्य मारुतं योगी यदैव कुरुते भृशम्
तदा लक्षणमात्मानं ज्योतीरूपं स पश्यति २२
तत्तेजो दृश्यते येन क्षणमात्रं निराकुलम्
सर्वपापविनिर्मुक्तः स याति परमां गतिम् २३
निरन्तरकृताभ्यासाद्योगी विगतकल्मषः
सर्वदेहादि विस्मृत्य तदभिन्नः स्वयं गतः २४
यः करोति सदाभ्यासं गुप्ताचारेण मानवः
स वै ब्रह्मविलीनः स्यात्पापकर्मरतो यदि २५
गोपनीयः प्रयत्नेन सद्यः प्रत्ययकारकः
निर्वाणदायको लोके योगोयं मम वल्लभः
नादः संजायते तस्य क्रमेणाभ्यासतश्च वै २६

मत्तभृङ्गवेणुवीणासदृशः प्रथमो ध्वनिः
एवमभ्यासतः पश्चात् संसारध्वान्तनाशनम्
घण्टानादसमः पश्चात् ध्वनिर्मेघरवोपमः
ध्वनौ तस्मिन्मनो दत्त्वा यदा तिष्ठति निर्भयः
तदा संजायते तस्य लयस्य मम वल्लभे २७
तत्र नादे यदा चित्तं रमते योगिनो भृशम्
विस्मृत्य सकलं बाह्यं नादेन सह शाम्यति २८
एतदभ्यासयोगेन जित्वा सम्यग्गुणान्बहून्
सर्वारम्भपरित्यागी चिदाकाशे विलीयते २९
नासनं सिद्धसदृशं न कुम्भसदृशं बलम्
न खेचरीसमा मुद्रा न नादसदृशो लयः ३०
इदानीं कथयिष्यामि मुक्तस्यानुभवं प्रिये
यज्ज्ञात्वा लभते मुक्तिं पापयुक्तोपि साधकः ३१
समभ्यर्च्येश्वरं सम्यक्कृत्वा च योगमुत्तमम्
गृह्णीयात्सुस्थितो भूत्वा गुरुं सन्तोष्य बुद्धिमान् ३२
जीवादि सकलं वस्तुं दत्त्वा योगविदं गुरुम्
सन्तोष्यातिप्रयत्नेन योगोयं गृह्यते बुधैः ३३
विप्रान्संतोष्य मेधावी नानामंगलसंयुतः
ममालये शुचिर्भूत्वा प्रगृह्णीयाच्छुभात्मकम् ३४
संन्यस्यानेन विधिना प्राक्तनं विग्रहादिकम्
भूत्वा दिव्यवपुर्योगी गृह्णीयाद्वक्ष्यमाणकम् ३५
पद्मासनस्थितो योगी जनसंगविवर्जितः
विज्ञाननाडीद्वितयमङ्गुलीभ्यां निरोधयेत् ३६
सिद्धेस्तदाविर्भवति सुखरूपी निरञ्जनः
तस्मिन्परिश्रमः कार्यो येन सिद्धो भवेत्खलु ३७
यः करोति सदाभ्यासं तस्य सिद्धिर्न दूरतः
वायुसिद्धिर्भवेत्तस्य क्रमादेव न संशयः ३८
सकृद्यः कुरुते योगी पापौघं नाशयेद्ध्रुवम्

तस्य स्यान्मध्यमे वायोः प्रवेशो नात्र संशयः ३९
एतदभ्यासशीलो यः स योगी देवपूजितः
अणिमादिगुणाँल्लब्ध्वा विचरेद्भुवनत्रये ४०
यो यथास्यानिलाभ्यासात्तद्भवेत्तस्य विग्रहः
तिष्ठेदात्मनि मेधावी संयुतः क्रीडते भृशम् ४१
एतद्योगं परं गोप्यं न देयं यस्य कस्यचित्
यः प्रमाणैः समायुक्तस्तमेव कथ्यते ध्रुवम् ४२
योगी पद्मासने तिष्ठेत्कण्ठकूपे यदा स्मरन्
जिह्वां कृत्वा तालुमूले क्षुत्पिपासा निवर्तते ४३
कण्ठकूपादधः स्थाने कूर्मनाड्यस्ति शोभना
तस्मिन् योगी मनो दत्त्वा चित्तस्थैर्यं लभेद्दृशम् ४४
शिरः कपाले रुद्राक्षं विवरं चिन्तयेद्यदा
तदा ज्योतिः प्रकाशः स्याद्विद्युत्पुञ्जसमप्रभः
एतच्चिन्तनमात्रेण पापानां संक्षयो भवेत्
दुराचारोऽपि पुरुषो लभते परमं पदम् ४५
अहर्निशं यदा चिन्तां तत्करोति विचक्षणः
सिद्धानां दर्शनं तस्य भाषणञ्च भवेद्ध्रुवम् ४६
तिष्ठन् गच्छन् स्वपन् भुञ्जन् ध्यायेच्छून्यमहर्निशम्
तदाकाशमयो योगी चिदाकाशे विलीयते ४७
एतज्ज्ञानं सदा कार्यं योगिना सिद्धिमिच्छता
निरन्तरकृताभ्यासान्मम तुल्यो भवेद्ध्रुवम्
एतज्ज्ञानबलाद्योगी सर्वेषां वल्लभो भवेत् ४८
सर्वान् भूतान् जयं कृत्वा निराशीरपरिग्रहः
नासाग्रे दृश्यते येन पद्मासनगतेन वै
मनसो मरणं तस्य खेचरत्वं प्रसिद्ध्यति ४९
ज्योतिः पश्यति योगीन्द्रः शुद्धं शुद्धाचलोपमम्
तत्राभ्यासबलेनैव स्वयं तद्रक्षको भवेत् ५०
उत्तानशयने भूमौ सुप्त्वा ध्यायन्निरन्तरम्

सद्यः श्रमविनाशाय स्वयं योगी विचक्षणः
शिरः पश्चात्तु भागस्य ध्याने मृत्युञ्जयो भवेत्
भ्रूमध्ये दृष्टिमात्रेण ह्यपरः परिकीर्तितः ५१
चतुर्विधस्य चान्नस्य रसस्त्रेधा विभज्यते
तत्र सारतमो लिंगदेहस्य परिपोषकः
सप्तधातुमयं पिण्डमेती पुष्णाति मध्यगः ५२
याति विण्मूत्ररूपेण तृतीयः सप्ततो बहिः
आद्यभागद्वयं नाड्यः प्रोक्तास्ताः सकला अपि
पोषयन्ति वपुर्वायुमापादतलमस्तकम् ५३
नाडीभिराभिः सर्वाभिर्वायुः सञ्चरते यदा
तदैवान्नरसो देहे साम्येनेह प्रवर्तते ५४
चतुर्दशानां तत्रेह व्यापारे मुख्यभागतः
ता अनुग्रत्वहीनाश्च प्राणसञ्चारनाडिकाः ५५
गुदाद्व्यंगुलतश्चोर्ध्वं मेढ्रैकांगुलतस्त्वधः
एवञ्चास्ति समं कन्दं समताच्चतुरंगुलम् ५६
पश्चिमाभिमुखीः योनिर्गुदमेढ्रान्तरालगा
तत्र कन्दं समाख्यातं तत्रास्ति कुण्डली सदा
संवेष्ट्य सकला नाडीः सार्द्धत्रिकुटलाकृतीः
मुखे निवेश्य सा पुच्छं सुषुम्णाविवरे स्थिता ५७
सुप्ता नागोपमा ह्येषा स्फुरन्ती प्रभया स्वया
अहिवत्सन्धिसंस्थाना वाग्देवी बीजसंज्ञिका ५८
ज्ञेया शक्तिरियं विष्णोर्निर्भरा स्वर्णभास्वरा
सत्त्वं रजस्तमश्चेति गुणत्रयप्रसूतिका ५९
तत्र बन्धूकपुष्पाभं कामबीजं प्रकीर्तितम्
कलहेमसमं योगे प्रयुक्ताक्षररूपिणम् ६०
सुषुम्णापि च संश्लिष्टा बीजं तत्र वरं स्थितम्
शरच्चंद्रनिभं तेजस्स्वयमेतत्स्फुरत्स्थितम्
सूर्यकोटिप्रतीकाशं चन्द्रकोटिसुशीतलम्

एतत्त्रयं मिलित्वैव देवी त्रिपुरभैरवी
बीजसंज्ञं परंतेजस्तदेव परिकीर्तितम्  ६१
क्रियाविज्ञानशक्तिभ्यां युतं यत्परितो भ्रमत्
उत्तिष्ठद्विशतस्त्वम्भः सूक्ष्मं शोणशिखायुतम्
योनिस्थं तत्परं तेजः स्वयंभूलिंगसंज्ञितम्  ६२
आधारपद्ममेतद्धि योनिर्यस्यास्ति कन्दतः
परिस्फुरद्वादिसान्तचतुर्वर्णं चतुर्दलम्  ६३
कुलाभिधं सुवर्णाभं स्वयम्भूलिङ्गसंगतम्
द्विरण्डो यत्र सिद्धोस्ति डाकिनी यत्र देवता
तत्पद्ममध्यगा योनिस्तत्र कुड्णलिनी स्थिता
तस्या ऊर्ध्वे स्फुरत्तेजः कामबीजं भ्रमन्मतम्
यः करोति सदा ध्यानं मूलाधारे विचक्षणः
तस्य स्याद्दार्दुरी सिद्धिर्भूमित्यागक्रमेण वै  ६४
चपुषः कान्तिरुत्कृष्टा जठराग्निविवर्धनम्
आरोग्यञ्च पटुत्वञ्च सर्वज्ञत्वञ्च जायते  ६५
भूतं भव्यं भविष्यञ्च वेत्ति सर्वं सकारणम्
अश्रुतान्यपि शास्त्राणि सरहस्यं भवेद्ध्रुवम्  ६६
वक्त्रे सरस्वती देवी सदा नृत्यति निर्भरम्
मन्त्रसिद्धिर्भवेत्तस्य जपादेव न संशयः  ६७
जरामरणदुःखौघान्नाशयति गुरोर्वचः
इदं ध्यानं सदा कार्यं पवनाभ्यासिना परम्
ध्यानमात्रेण योगीन्द्रो मुच्यते सर्वकिल्विषात्  ६८
मूलपद्मं यदा ध्यायेद्योगी स्वयम्भुलिङ्गकम्
तदा तत्क्षणमात्रेण पापौघं नाशयेद्ध्रुवम्  ६९
यं यं कामयते चित्ते तं तं फलमवाप्नुयात्
निरन्तरकृताभ्यासात्तं पश्यति विमुक्तिदम्
बहिरभ्यन्तरे श्रेष्ठं पूजनीयं प्रयत्नतः
ततः श्रेष्ठतमं ह्येतन्नान्यदस्ति मतं मम  ७०

आत्मसंस्थं शिवं त्यक्त्वा बहिःस्थं यः समर्चयेत्
हस्तस्थं पिण्डमुत्सृज्य भ्रमते जीविताशया ७१
आत्मलिंगार्चनं कुर्यादनालस्यं दिने दिने
तस्य स्यात्सकला सिद्धिर्नात्र कार्या विचारणा ७२
निरन्तरकृताभ्यासात्षण्मासैः सिद्धिमाप्नुयात्
तस्य वायुप्रवेशोपि सुषुम्णायाम्भवेद्ध्रुवम् ७३
मनोजयञ्च लभते वायुविन्दुविधारणात्
ऐहिकामुष्मिकीसिद्धिर्भवेन्नैवात्र संशयः ७४

अथ स्वाधिष्ठानचक्रविवरणम्

द्वितीयन्तु सरोजञ्च लिंगमूले व्यवस्थिम्
बादिलान्तं च षड्वर्णं परिभास्वरषड्दलम्
स्वाधिष्ठानाभिधं तत्तु पंकजं शोणरूपकम्
बालाख्यो यत्र सिद्धोऽस्ति देवी यत्रास्ति राकिणी ७५
वो ध्यायति सदा दिव्यं स्वाधिष्ठानारविन्दकम्
तस्य कामाङ्गनाः सर्वा भजन्ते काममोहिताः ७६
विविधञ्चाश्रुतं शास्त्रं निःशङ्को वै भवेद्ध्रुवम्
सर्वरोगविनिर्मुक्तो लोके चरति निर्भयः ७७
मरणं खाद्यते तेन स केनापि न खाद्यते
तस्य स्यात्परमा सिद्धिरणिमादिगुणप्रदा
वायुः सञ्चरते देहे रसवृद्धिर्भवेद्ध्रुवम्
आकाशपङ्कजगलत्पीयूषमपि वर्द्धते ७८

अथ मणिपूरचक्रविवरणम्

तृतीयं पङ्कजं नाभौ मणिपूरकसंज्ञकम्
दशारंडादिफान्तार्णं शोभितं हेमवर्णकम् ७९
रुद्राख्यो यत्र सिद्धोऽस्ति सर्वमङ्गलदायकः
तत्रस्था लाकिनी नाम्नी देवी परमधार्मिका ८०
तस्मिन् ध्यानं सदा योगी करोति मणिपूरके
तस्य पातालसिद्धिः स्यान्निरन्तरसुखावहा

ईप्सितञ्च भवेल्लोके दुःखरोगविनाशनम्
कालस्य वञ्चनञ्चापि परदेहप्रवेशनम् ८१
जाम्बूनदादिकरणं सिद्धानां दर्शनं भवेत्
ओषधीदर्शनञ्चापि निधीनां दर्शनं भवेत् ८२
हृदयेऽनाहतं नाम चतुर्थं पङ्कजं भवेत्
कादिठान्तार्णसंस्थानं द्वादशारसमन्वितम्
अतिशोणं वायुबीजं प्रसादस्थानमीरितम् ८३
पद्मस्थं तत्परं तेजो बाणलिंगं प्रकीर्तितम्
यस्य स्मरणमात्रेण दृष्टादृष्टफलं लभेत् ८४
सिद्धः पिनाकी यत्रास्ते काकिनी यत्र देवता
एतस्मिन्सततं ध्यानं हृत्पाथोजे करोति यः
क्षुभ्यन्ते तस्य कान्ता वै कामार्ता दिव्ययोषितः ८५
ज्ञानञ्चाप्रतिमं तस्य त्रिकालविषयम्भवेत्
दूरश्रुतिर्दूरदृष्टिः स्वेच्छया स्वगतां व्रजेत् ८६
सिद्धानां दर्शनञ्चापि योगिनी दर्शनं तथा
भवेत्खेचरसिद्धिश्च खेचराणां जयन्तथा ८७
यो ध्यायति परं नित्यं बाणलिंगं द्वितीयकम्
खेचरी भूचरी सिद्धिर्भवेत्तस्य न संशयः ८८
एतद्ध्यानस्य माहात्म्यं कथितुं नैव शक्यते
ब्रह्माद्याः सकला देवा गोपयन्ति परन्त्विदम् ८९

अथ विशुद्धचक्रविवरणम्

कण्ठस्थानस्थितं पद्मं वुशुद्धं नामपञ्चमम्
सुहेमाभं स्वरोपेतं षोडशस्वरसंयुतम्
छगलाण्डोऽस्ति सिद्धोत्र शाकिनी चाधिदेवता ९०
ध्यानं करोति यो नित्यं स योगीश्वरपण्डितः
किन्त्वस्य योगिनोऽन्यत्र विशुद्धाख्ये सरोरुहे
चतुर्वेदा विभासन्ते सरहस्या निधेरिव ९१
रहःस्थाने स्थितो योगी यदा क्रोधवशो भवेत्

तदा समस्तं त्रैलोक्यं कम्पते नात्र संशयः  ९२
इह स्थाने मनो यस्य दैवाद्यातिलयं यदा
तदा बाह्यं परित्यज्य स्वान्तरे रमते ध्रुवम्  ९३
तस्य न ज्ञतिमायाति स्वशरीरस्य शक्तितः
संवत्सरसहस्रेऽपि वज्रातिकठिनस्य वै  ९४
यदा त्यजति तद्धयानं योगींद्रोऽवनिमराडले
तदा वर्षसहस्राणि मन्यते तत्ज्ञणं कृती  ९५

अथ आज्ञाचक्रविवरणम्

आज्ञापद्मं भ्रुवोर्मध्ये हज्ञोपेतं द्विपत्रकम्
शुक्लाभं तन्महाकालः सिद्धो देव्यत्र हाकिनी  ९६
शरच्चंद्रनिभं तराज्ञरबीजं विजृंभितम्
पुमान् परमहंसोऽयं यज्ज्ञात्वा नावसीदति  ९७
एतदेव परन्तेजः सर्वतन्त्रेषु मन्त्रिणः
चिन्तयित्वा परां सिद्धिं लभते नात्र संशयः  ९८
तुरीयं त्रितयं लिंगं तदाहं मुक्तिदायकः
ध्यानमात्रेण योगीन्द्रो मत्समो भवति ध्रुवम्  ९९
इडा हि पिंगला ख्याता वरणासीति होच्यते
वाराणसी तयोर्मध्ये विश्वनाथोत्र भाषितः  १००
एतत्ज्ञेत्रस्य माहात्म्यमृषिभिस्तत्त्वदर्शिभिः
शास्त्रेषु बहुधा प्रोक्तं परं तत्त्वं सुभाषितम्  १०१
सुषुम्णा मेरुणा याता ब्रह्मरन्ध्रं यतोऽस्ति वै
ततश्चैषा परावृत्य तदाज्ञापद्मदज्ञिणे
वामनासापुटं याति गंगेति परिगीयते  १०२
ब्रह्मरन्ध्रे हि यत्पद्मं सहस्रारं व्यवस्थितम्
तत्र कन्देहि या योनिस्तस्यां चन्द्रो व्यवस्थितः
त्रिकोणाकारतस्तस्याः सुधा ज्ञरति सन्ततम्
इडायाममृतं तत्र समं स्रवति चन्द्रमाः
अमृतं वहति धारा धारारूपं निरन्तरम्

वामनासापुटं याति गंगेत्युक्ता हि योगिभिः १०३
आज्ञापङ्कजदक्षांसाद्वामनासापुटंगता
उदग्वहेति तत्रेडा वरणा समुदाहृता १०४
ततो द्वयोर्हि मध्ये तु वाराणसीति चिन्तयेत्
तदाकारा पिंगलापि तदाज्ञाकमलान्तरे
दक्षनासापुटे याति प्रोक्तास्माभिरसीति वै १०५
मूलाधारे हि यत्पद्मं चतुष्पत्रं व्यवस्थितम्
तत्र मध्येहि या योनिस्तस्यां सूर्यो व्यवस्थितः १०६
तत्सूर्यमण्डलद्वाराद्विषं क्षरति सन्ततम्
पिंगलायां विषं तत्र समर्पयति तापनः १०७
विषं तत्र वहन्ती या धारारूपं निरन्तरम्
दक्षनासापुटे याति कल्पितेयन्तु पूर्ववत् १०८
आज्ञापङ्कजवामास्याद्दक्षनासापुटं गता
उदग्वहा पिंगलापि पुरासीति प्रकीर्तिता १०९
आज्ञापद्ममिदं प्रोक्तं यत्र देवो महेश्वरः
पीठत्रयं ततश्चोर्ध्वं निरुक्तं योगचिन्तकैः
तद्बिन्दुनादशक्त्याख्यं भालपद्मे व्यवस्थितम् ११०
यः करोति सदाध्यानमाज्ञापद्मस्य गोपितम्
पूर्वजन्मकृतं कर्म विनश्येदविरोधतः १११
इह स्थिते यदा योगी ध्यानं कुर्यान्निरन्तरम्
तदा करोति प्रतिमां पूजाजपमनर्थवत् ११२
यक्षराक्षसगन्धर्वा अप्सरोगणकिन्नराः
सेवन्ते चरणौ तस्य सर्वे तस्य वशानुगाः ११३
करोति रसनां योगी प्रविष्टां विपरीतगाम्
लम्बिकोर्ध्वेषु गर्तेषु धृत्वा ध्यानं भयापहम्
अस्मिन् स्थाने मनो यस्य क्षणार्धं वर्ततेऽचलम्
तस्य सर्वाणि पापानि संक्षयं यान्ति तत्क्षणात् ११४
यानि यानि हि प्रोक्तानि पंचपद्मे फलानि वै

तानि सर्वाणि सुतरामेतज्ज्ञानाद्भवन्ति हि १९५
यः करोति सदाभ्यासमाज्ञा पद्मे विचक्षणः
वासनाया महाबन्धं तिरस्कृत्य प्रमोदते ११६
प्राणप्रयाणसमये तत्पद्मं यः स्मरन्सुधीः
त्यजेत्प्राणं स धर्मात्मा परमात्मनि लीयते ११७
तिष्ठन् गच्छन् स्वपन् जाग्रत् यो ध्यानं कुरुते नरः
पापकर्मविकुर्वाणो हनि मज्जति किल्विषे ११८
योगी बन्धाद्विनिर्मुक्ताः स्वीयया प्रभया स्वयम्
द्विदलध्यानमाहात्म्यं कथितुं नैव शक्यते
ब्रह्मादिदेवताश्चैव किञ्चिन्मत्तो विदन्ति ते ११९
अत ऊर्ध्वं तालुमूले सहस्रारंसरोरुहम्
अस्ति यत्र सुषुम्णाया मूलं सविवरं स्थितम् १२०
तालुमूले सुषुम्णा सा अधोवक्त्रा प्रवर्तते
मूला धारेणयोन्यस्ताः सर्वनाड्यः समाश्रिताः
ता बीजभूतास्तत्त्वस्य ब्रह्ममार्गप्रदायिकाः १२१
तालुस्थाने च यत्पद्मं सहस्रारं पुराहितम्
तत्कन्दे योनिरेकास्ति पश्चिमाभिमुखी मता १२२
तस्या मध्ये सुषुम्णाया मूलं सविवरं स्थितम्
ब्रह्मरन्ध्रं तदेवोक्तमामूलाधारपङ्कजम् १२३
ततस्तद्रन्ध्रे तच्छक्तिः सुषुम्णा कुण्डली सदा
सुषुम्णायां सदा शक्तिश्चित्रा स्यान्मम वल्लभे
तस्यां मम मते कार्या ब्रह्मरन्ध्रादिकल्पना १२४
यस्याः स्मरणमात्रेण ब्रह्मज्ञत्वं प्रजायते
पापक्षयश्च भवति न भूयः पुरुषो भवेत् १२५
प्रवेशितं चलाङ्गुष्ठं मुखे स्वस्य निवेशयेत्
तेनात्र न वहत्येव देहचारी समीरणः १२६
तेन संसारचक्रेस्मिन् भ्रमतीत्येव सर्वदा
तदर्थं ये प्रवर्तन्ते योगी न प्राणधारणे

तत एवाखिला नाडी विरुद्धा चाष्टवेष्टनम्
इयं कुराडलिनी शक्ती रन्ध्रं त्यजति नान्यथा १२७
यदा पूर्णासु नाडीषु सन्निरुद्धानिलास्तदा
बन्धत्यागेन कुराडल्या मुखं रन्ध्राद् बहिर्भवेत् १२८
सुषुम्णायां सदैवायं वहेत्प्राणसमीरणः
मूलपद्मास्थिता योनिर्वामदक्षिणकोणतः
इडापिंगलयोर्मध्ये सुषुम्णा योनिमध्यगा १२९
ब्रह्मरन्ध्रंतु तत्रैव सुषुम्णाधारमराडले
यो जानाति स मुक्तः स्यात्कर्मबन्धाद्विचक्षणः १३०
ब्रह्मरन्ध्रमुखे तासां संगमः स्यादसंशयः
तस्मिन्स्नाने स्नातकानां मुक्तिः स्यादविरोधतः १३१
गंगायमुनयोर्मध्ये वहत्येषा सरस्वती
तासां तु संगमे स्नात्वा धन्यो याति परां गतिम् १३२
इडा गंगा पुरा प्रोक्ता पिंगला चार्कपुत्रिका
मध्या सरस्वती प्रोक्ता तासां संगोऽतिदुर्लभः १३३
सितासिते संगमे यो मनसा स्नानमाचरेत्
सर्वपापविनिर्मुक्तो याति ब्रह्म सनातनम् १३४
त्रिवेरायां संगमे यो वै पितृकर्म समाचरेत्
तारयित्वा पितृन्सर्वान्स याति परमां गतिम् १३५
नित्यं नैमित्तिकं काम्यं प्रत्यहं यः समाचरेत्
मनसा चिन्तयित्वा तु सोऽक्षयं फलमाप्नुयात् १३६
सकृद्यः कुरुते स्नानं स्वर्गे सौख्यं भुनक्ति सः
दग्ध्वा पापानशेषान्वै योगी शुद्धमतिः स्वयम् १३७
अपवित्रः पवित्री वा सर्वावस्थां गतोपि वा
स्नानाचरणमात्रेण पूतो भवति नान्यथा १३८
मृत्युकाले प्लुतं देहं त्रिवेरयाः सलिले यदा
विचिन्त्य यस्त्यजेत्प्राणान्स तदा मोक्षमाप्नुयात् १३९
नातःपरतरं गुह्यं त्रिषु लोकेषु विद्यते

गोप्तव्यं तत्प्रयत्नेन न व्याख्येयं कदाचन १४०
ब्रह्मरन्ध्रे मनो दत्त्वा क्षणार्धं यदि तिष्ठति
सर्वपापविनिर्मुक्तः स याति परमां गतिम् १४१
अस्मिँल्लीनं मनो यस्य स योगी मयि लीयते
अनिमादिगुणान्भुक्त्वा स्वेच्छया पुरुषोत्तमः १४२
एतद्रन्ध्रध्यानमात्रेण मर्त्यः संसारे स्मिन्वल्लभो मे भवेत्सः
पापाञ्जित्वा मुक्तिमार्गाधिकारी ज्ञानं दत्त्वा तारयत्यद्भुतं वै १४३
चतुर्मुखादित्रिदशैरगम्यं योगिवल्लभम्
प्रयत्नेन सुगोप्यं तद्ब्रह्मरन्ध्रं मयोदितम् १४४
पुरा मयोक्ता या योनिः सहस्रारे सरोरुहे
तस्याऽधो वर्तते चन्द्रस्तद्ध्यानं क्रियते बुधैः १४५
यस्य स्मरणमात्रेण योगीन्द्रोऽवनिमण्डले
पूज्यो भवति देवानां सिद्धानां सम्मतो भवेत् १४६
शिरःकपालविवरे ध्यायेद्दग्धमहोदधिम्
तत्र स्थित्वा सहस्रारे पद्मे चन्द्रं विचिन्तयेत् १४७
शिरःकपालविवरे द्विरष्टकलया युतः
पीयूषभानुहंसाख्यं भावयेत्तं निरंजनम्
निरन्तरकृताभ्यासात्त्रिदिने पश्यति ध्रुवम्
दृष्टिमात्रेण पापौघं दहत्येव स साधकः १४८
अनागतञ्च स्फुरति चित्तशुद्धिर्भवेत्खलु
सद्यः कृत्वापि दहति महापातकपञ्चकम् १४९
आनुकूल्यं ग्रहा यान्ति सर्वे नश्यन्त्युपद्रवाः
उपसर्गाः शम यान्ति युद्धे जयमवाप्नुयात्
खेचरीभूचरीसिद्धिर्भवेत्क्षीरेन्दुदर्शनात्
ध्यानादेवभवे त्सर्वं नात्र कार्या विचारणा
सतताभ्यासयोगेन सिद्धो भवति नान्यथा
सत्यं सत्यं पुनः सत्यं मम तुल्यो भवेद्ध्रुवम्
योगशास्त्रेऽप्यभिरतं योगिनां सिद्धिदायकम् १५०

## अथ राजयोगकथनम्

अत ऊर्ध्वं दिव्यरूपं सहस्रारं सरोरुहम्
ब्रह्माण्डाख्यस्य देहस्य बाह्ये तिष्ठति मुक्तिदम् १५१
कैलासो नाम तस्यैव महेशो यत्र तिष्ठति
नकुलाख्योऽविनाशी च क्षयवृद्धिविवर्जितः १५२
स्थानस्यास्य ज्ञानमात्रेण नृणां संसारेऽस्मिन्सम्भवो नैव भूयः
भूतग्रामं सन्तताभ्यासयोगात्कर्तुं हर्तुं स्याच्च शक्तिः समग्रा १५३
स्थाने परे हंसनिवासभूते कैलासनाम्नीह निविष्टचेताः
योगी हृतव्याधिरधः कृताधिवरायुश्चिरं जीवति मृत्युमुक्तः १५४
चित्तवृत्तिर्यदा लीना कुलाख्ये परमेश्वरे
तदा समाधिसाम्येन योगी निश्चलतां व्रजेत् १५५
निरन्तरकृते ध्याने जगद्विस्मरणं भवेत्
तदा विचित्रसामर्थ्यं योगिनो भवति ध्रुवम् १५६
तस्माद्गलितपीयूषं पिबेद्योगी निरन्तरम्
मृत्योर्मृत्युं विधायाशु कुलं जित्वा सरोरुहे
अत्र कुण्डलिनी शक्तिर्लयं याति कुलाभिधा
तदा चतुर्विधा सृष्टिर्लीयते परमात्मनि १५७
यज्ज्ञात्वा प्राप्य विषयं चिअत्तवृत्तिर्विलीयते
तस्मिन् परिश्रमं योगी करोति निरपेक्षकः १५८
चित्तवृत्तियदालीना तस्मिन् योगी भवेद्ध्रुवम्
तदा विज्ञायतेऽखण्डज्ञानरूपो निरञ्जनः १५९
ब्रह्माण्डबाह्ये संचिंत्य स्वप्रतीकं यथोदितम्
तमावेश्य महच्छून्यं चिन्तयेदविरोधतः १६०
आद्यन्तमध्यशून्यं तत्कोटिसूर्यसमप्रभम्
चन्द्रकोटिप्रतीकाशमभ्यस्य सिद्धिमाप्नुयात् १६१
एतद्ध्यानं सदा कुर्यादनालस्यं दिने दिने
तस्य स्यात्सकला सिद्धिर्वत्सरान्नात्र संशयः १६२
क्षणार्धं निश्चलं तत्र मनो यस्य भवेद्ध्रुवम्

स एव योगी सद्भक्तः सर्वलोकेषु पूजितः १६३
तस्य कल्मषसंघातस्तत्त्क्षणादेव नश्यति १६४
यं दृष्ट्वा न प्रवर्तते मृत्युसंसारवर्त्मनि
अभ्यसेत्तं प्रयत्नेन स्वाधिष्ठानेन वर्त्मना १६५
एतद्ध्यानस्य माहात्म्यं मया वक्तुं न शक्यते
यः साधयति जानाति सोस्माकमपि सम्मतः १६६
ध्यानादेव विजानाति विचित्रेक्षणसम्भवम्
अणिमादिगुणोपेतो भवत्येव न संशयः १६७
राजयोगो मयाख्यातः सर्वतन्त्रेषु गोपितः
राजाधिराजयोगोऽयं कथयामि समासतः १६८
स्वस्तिकञ्चासनं कृत्वा सुमठे जन्तुवर्जिते
गुरुं संपूज्य यत्नेन ध्यानमेतत्समाचरेत् १६९
निरालब्धं भवेज्जीवं ज्ञात्वा वेदान्तयुक्तितः
निरालम्बं मनः कृत्वा न किञ्चिच्चिन्तयेत्सुधीः १७०
एतद्ध्यानान्महासिद्धिर्भवत्येव न संशयः
वृत्तिहीनं मनः कृत्वा पूर्णरूपं स्वयं भवेत् १७१
साधयेत्सततं यो वै स योगी विगतस्पृहः
अहंनाम न कोप्यस्ति सर्वदात्मैव विद्यते १७२
को बन्धः कस्य वा मोक्ष एकं पश्येत्सदा हि सः
एतत्करोति यो नित्यं स मुक्तो नात्र संशयः १७३
स एव योगी सद्भक्तः सर्वलोकेषु पूजितः
अहमस्मीति यन्मत्वा जीवात्मपरमात्मनोः
अहं त्वमेतदुभयं त्यक्त्वाखण्डं विचिन्तयेत्
अध्यारोपापवादाभ्यां यत्र सर्वं विलीयते
तद्बीजमाश्रयेद्योगी सर्वसंगविवर्जितः १७४
अपरोक्षं चिदानन्दं पूर्णं त्यक्त्वा भ्रमाकुलाः
परोक्षं चापरोक्षं च कृत्वा मूढा भ्रमन्ति वै १७५
चराचरमिदं विश्वं परोक्षं यः करोति च

अपरोक्षं परं ब्रह्म त्यक्तं तस्मिन् प्रलीयते १७६
ज्ञानकारणमज्ञानं यथा नोत्पद्यते भृशम्
अभ्यासं कुरुते योगी सदा सङ्गविवर्जितम् १७७
सर्वेन्द्रियाणि संयम्य विषयेभ्यो विचक्षणः
विषयेभ्यः सुषुप्तयैव तिष्ठेत्संगविवर्जितः १७८
एवमभ्यसतो नित्यं स्वप्रकाशं प्रकाशते
श्रोतुं बुद्धिसमर्थार्थं निवर्तन्ते गुरोर्गिरः
तदभ्यासवशादेकं स्वतो ज्ञानं प्रवर्तते १७९
यतो वाचो निवर्तन्ते अप्राप्य मनसा सह
साधनादमलं ज्ञानं स्वयं स्फुरति तद्ध्रुवम् १८०
हठं विना राजयोगो राजयोगं विना हठः
तस्मात्प्रवर्तते योगी हठे सद्गुरुमार्गतः १८१
स्थिते देहे जीवति च योगं न श्रियते भृशम्
इन्द्रियार्थोपभोगेषु स जीवति न संशयः १८२
अभ्यासपाकपर्यन्तं मितान्नं स्मरणं भवेत्
अनाथा साधनं धीमान् कर्तुं पारयतीहन १८३
अतीवसाधुसंलापोवदेत् संसदिबुद्धिमान्
करोति पिण्डरक्षार्थं बह्वालापविवर्जितः
त्यज्यते त्यज्यते सङ्गं सर्वथा त्यज्यते भृशम्
अन्यथा न लभेन्मुक्तिं सत्यं सत्यं मयोदितम् १८४
गुप्तयैव क्रियतेऽभ्यासः संगं त्यक्त्वा तदन्तरे
व्यवहाराय कर्तव्यो बाह्ये संगानुरागतः
स्वे स्वे कर्मणि वर्तते सर्वे ते कर्मसम्भवाः
निमित्तमात्रं करणे न दोषोस्ति कदाचन १८५
एवं निश्चित्य सुधिया गृहस्थोपि यदाचरेत्
तदा सिद्धिमवाप्नोति नात्र कार्या विचारणा १८६
पापपुण्यविनिर्मुक्तः परित्यक्ताङ्गसाधकः
यो भवेत्स विमुक्तः स्याद्गृहे तिष्ठन्सदा गृही

न पापपुण्यैर्लिप्येत योगयुक्तो सदा गृही
कुर्वन्नपि तदा पापान्स्वकार्ये लोकसंग्रहे १८७
अधुना संप्रवक्ष्यामि मन्त्रसाधनमुत्तमम्
ऐहिकामुष्मिकसुखं येन स्यादविरौधतः १८८
यस्मिन्मन्त्रे वरे ज्ञाते योगसिद्धिर्भवेत्खलु
योगेन साधकेन्द्रस्य सर्वैश्वयेसुखप्रदा १८९
मूलाधारेस्ति यत्पद्मं चतुर्दलसमन्वितम्
तन्मध्ये वाग्भवं बीजं विस्फुरन्तं तडित्प्रभम् १९०
हृदये कामबीजंतु बन्धूककुसुमप्रभम्
आज्ञारविन्दे शक्त्याख्यं चन्द्रकोटिसमप्रभम्
बीजत्रयमिदं गोप्यं भुक्तिमुक्तिफलप्रदम्
एतन्मन्त्रत्रयं योगी साधयेत्सिद्धिसाधकः १९१
एतन्मन्त्रं गुरोर्लब्ध्वा न द्रुतं न विलम्बितम्
अक्षराक्षरसन्धानं निःसन्दिग्धमना जपेत् १९२
तद्गतश्चैकचित्तश्च शास्त्रोक्तविधिना सुधीः
देव्यास्तु पुरतो लक्षं हुत्वा लक्षत्रयं जपेत् १९३
करवीरप्रसूनन्तु गुडक्षीराज्यसंयुतम्
कुण्डे योन्याकृते धीमाञ्जपान्ते जुहुयात्सुधीः १९४
अनुष्ठाने कृते धीमान्पूर्वसेवा कृता भवेत्
ततो ददाति कामान्वै देवी त्रिपुरभैरवी १९५
गुरुं सन्तोष्य विधिवल्लब्ध्वा मन्त्रवरोत्तमम्
अनेन विधिना युक्तो मन्दभाग्योऽपि सिद्ध्यति १९६
लक्षमेकं जपेद्यस्तु साधको विजितेन्द्रियः
दर्शनात्तस्य क्षुभ्यन्ते योषितो मदनातुराः
पतन्ति साधकस्याग्रे निर्लज्जा भयवर्जिताः १९७
जप्तेन चेद्द्विलक्षेण ये यस्मिन्विषये स्थिताः
आगच्छन्ति यथातीर्थं विमुक्तकुलविग्रहाः
ददति तस्य सर्वस्वं तस्यैव च वशे स्थिताः १९८

त्रिभिर्लक्षैस्तथाजप्तैर्मण्डलीकाः समण्डलाः
वशमायान्ति ते सर्वे नात्र कार्या विचारणा १९९
षड्भिर्लक्षैर्महीपालं सभृत्यबलवाहनम् २००
लक्षैर्द्वादशभिर्जप्तैर्यक्षरक्षोरगेश्वराः
वशमायान्ति ते सर्वे आज्ञां कुर्वन्ति नित्यशः २०१
त्रिपञ्चलक्षजप्तैस्तु साधकेन्द्रस्य धीमतः
सिद्धविद्याधराश्चैव गन्धर्वाप्सरसांगणाः
वशमायान्ति ते सर्वे नात्र कार्या विचारणा
हठाच्छ्रवणविज्ञानं सर्वज्ञत्वं प्रजायते २०२
तथाष्टादशभिर्लक्षैर्देहेनानेन साधकः
उत्तिष्ठेन्मेदिनीं त् यक्त्वा दिव्यदेहस्तु जायते
भ्रमते स्वेच्छया लोके छिद्रां पश्यति मेदिनीम् २०३
अष्टाविंशतिभिर्लक्षैर्विद्याधरपतिर्भवेत्
साधकस्तु भवेद्धीमान्कामरूपो महाबलः
त्रिंशल्लक्षैस्तथाजप्तैर्ब्रह्मविष्णुसमो भवेत्
रुद्रत्वं षष्टिभिर्लक्षैरमरत्वमशीतिभिः
कोटयैकया महायोगी लीयते परमे पदे
साधकस्तु भवेद्योगी त्रैलोक्ये सोऽतिदुर्लभः २०४
त्रिपुरे त्रिपुरन्त्वेकं शिवं परमकारणम्
अक्षयं तत्पदं शान्तमप्रमेयमनामयम् ॥
लभतेऽसौ न सन्देहो धीमान्सर्वमभीप्सितम् २०५
शिवविद्या महाविद्या गुप्ता चाग्रे महेश्वरी
मद्भाषितमिदं शास्त्रं गोपनीयमतो बुधैः २०६
हठविद्या परंगोप्या योगिना सिद्धिमिच्छता
भवेद्वीर्यवती गुप्ता निर्वीर्या च प्रकाशिता २०७
य इदं पठते नित्यमाद्योपान्तं विचक्षणः
योगसिद्धिर्भवेत्तस्य क्रमेणैव न संशयः
समोक्षं लभते धीमान्य इदं नित्यमर्चयेत् २०८

मोक्षार्थिभ्यश्च सर्वेभ्यः साधुभ्यः श्रावयेदपि
क्रियायुक्तस्य सिद्धिः स्यादक्रियस्य कथम्भवेत्  २०९
तस्मात्क्रियाविधानेन कर्तव्या योगिपुंगवैः
यदृच्छालाभसन्तुष्टः सन्त्यक्त्वान्तरसंज्ञकः
गृहस्थश्चाप्यनासक्तः स मुक्तो योगसाधनात्  २१०
गृहस्थानां भवेत्सिद्धिरीश्वराणां जपेन वै
योगक्रियाभियुक्तानां तस्मात्संयतते गृही  २११
गेहे स्थित्वा पुत्रदारादिपूर्णः
सङ्गं त्यक्त्वा चान्तरे योगमार्गे
सिद्धेश्चिह्नं वीक्ष्य पश्चाद् गृहस्थः
क्रीडेत्सो वै मम्मतं साधयित्वा  २१२

इति श्रीशिवसंहितायां हरगौरीसंवादे योगशास्त्रे पंचमः पटलः
समाप्तः  ५
शुभम्

रह्मानन्द्

रिन्तेद् इन् ओम्बय् इन् १८८२

॥ श्रीः ॥

हठयोगप्रदीपिका ।

सा च

सहजानंदसंतानचिंतामणिस्वात्मारामयोगीन्द्रविरचिता

ब्रह्मानन्दकृतज्योत्स्नाऽभिधया टीकया समलंकृता

दध्यङ्कुलोत्पन्नजटाशंकरात्मजश्रीधरकृतया

मनोऽभिलाषि *? भाषाव्याख्ययोपेता ।

मुम्ब-ईनगरे

निर्णयसागरसमाख्ये मुद्रणमंत्रालये

वेद् ४ विय० द्वसु ८ वसुधा १ प्रमिते शालीवाहनशके १८०४

सवा-ईजयपुरनिवासिना दध्यङ्कुलोत्पन्नेन ज्योतिर्विदा
श्रीधरेण

खंडूभा-ईनागरभा-ईदेसा-ईसाहाय्येन मुद्रापयित्वा
प्रकाशिता ।



मौल्यं सार्धं रूप्यकद्वयम् ॥ २ ॥

॥ श्रीः ॥

॥ हठयोगप्रदीपिका ॥

॥ टीकाभाषाभ्यां समेता ॥

प्रथमोपदेशः ।

॥ मूल ॥

श्री-आदिनाथाय नमोऽस्तु तस्मै येनोपदिष्टा हठयोगविद्या ॥
विभ्राजते प्रोन्नतराजयोगमारोढुमिच्छोरधिरोहिणीव ॥ १ ॥

॥ टीका ॥

श्रीगणेशाय नमः ॥

गुरुं नत्वा शिवं साक्षाद्ब्रह्मानंदेन तन्यते ॥
हठप्रदीपिकाज्योत्स्ना योगमार्गप्रकाशिका ॥ १ ॥

इदानींतनानां सुबोधार्थमस्याः सुविज्ञाय
गोरक्षसिद्धांतहार्दम् । मया
मेरुशास्त्रिप्रमुख्याभियोगात्स्फुटं कथ्यतेऽत्यंतगूढोपि
भावः ॥ २ ॥

मुमुक्षुजनहितार्थं राजयोगद्वारा कैवल्यफलां
हठप्रदीपिकां विधित्सुः परमकारुणिकः
स्वात्मारामयोगींद्रस्तत्प्रत्यूहनिवृत्तये
हठयोगप्रवर्तकश्रीमदादिनाथनमस्कारलक्षणं मंगलं

तावदाचरति ॥ श्री-आदिनाथायेत्यादिना ॥ तस्मै

श्री-आदिनाथाय नमोस्त्वित्यन्वयः। आदिश्चासौ नाथश्च

आदिनाथः सर्वेश्वरः शिव इत्यर्थः। श्रीमान् आदिनाथः

तस्मै शी-आदिनाथाय। श्रीशब्द आदिर्यस्य सः श्री-आदिः

श्री-आदिश्चासौ नाथश्च श्री-आदिनाथः तस्मै

श्री-आदिनाथाय। श्रीनाथाय विष्णव इति वार्थः।

श्री-आदिनाथायेत्यत्र यणाभावस्तु। अपि मासमघं

कुर्याच्छंदोभंगं त्यजेद्गिरामिति छंदोविदां

संप्रदायादुच्चारणसौष्ठवाच्चेति बोध्यं। वस्तुतस्तु

असंहितपाठस्वीकारोपक्षया श्री-आदिनाथायेति

पाठस्वीकारेऽप्रवृत्तनित्यविध्युद्देश्यतावच्छेदकानाक्रांतत्व्

एन

p. 2)

॥ मूल ॥

प्रणम्य श्रीगुरुं नाथं स्वात्मारामेण योगिना ॥ केवलं

राजयोगाय हठविद्योपदिश्यते ॥ २ ॥

॥ टीका ॥

परिनिष्ठितत्वसंभवात्

संप्रत्युदात्दृतदृष्टांतद्वयस्यापीदृग्विषयवैषम्यान्नित्यस्

आहित्य-भंगजनितदोषस्य

शाब्दिकाननुमतत्वाच्चासंमृष्टविधेयांशतारूपदोषस्य

साहित्यकारैरुक्तत्वेऽपि क्वचित्तैरपि स्वीकृतत्वेन

शाब्दिकाचार्यैरेकाजित्यादौ कर्मधारयस्वीकारेण

सर्वथानादृतत्वाच्च लाघवातिशय इति सुधियो विभावयंतु।

नमः प्रव्हीभावोऽस्तु। प्रार्थनायां लोट्। तस्मै कस्मै

इत्यपेक्षायामाह॥ येनेति॥ येन आदिनाथेन उपदिष्टा

गिरिजायै हठयोगविद्या हश्च ठश्च हठौ सूर्यचंद्रौ

तयोर्योगो हठयोगः एतेन हठशब्दवाच्ययोः

सूर्यचंद्राख्ययोः प्राणापानयोरैक्यलक्षणः प्राणायामो

हठयोग इति हठयोगस्य लक्षणं सिद्धं। तथाचोक्तं

गोरक्षनाथेन सिद्धसिद्धांतपद्धतौ। हकारः कीर्तितः

सूर्यष्ठकारश्चंद्र उच्यते।

सूर्याचंद्रमसोर्योगाद्धठयोगो निगद्यत इति। तत्प्रतिपादिका

विद्या हठयोगविद्या हठयोगशास्त्रमिति यावत्। गिरिजायै

आदिनाथकृतो हठविद्योपदेशो महाकालयोगशास्त्रादौ

प्रसिद्धः। प्रकर्षेण उन्नतः प्रोन्नतः

मंत्रयोगहठयोगादीनामधरभूमिनामुत्तरभूमित्वाद्राजयोगस्

य प्रोन्नतत्वं। राजयोगश्च

सर्ववृत्तिनिरोधलक्षणोऽसंप्रज्ञातयोगः।

तमिच्छोर्मुमुक्षोरधिरोहिणीव। अधिरुह्यतेऽनयेत्यधिरोहिणी

निःश्रेणीव विभ्राजते विशेषेण भ्राजते शोभते। यथा प्रोन्नतसौधमारोढुमिच्छोरधिरोहिण्यनायासेन सौधप्रापिका भवति एवं हठदीपिकापि प्रोन्नतराजयोगमारोढुमिच्छोरनायासेन राजयोगप्रापिका भवतीति। उपमालंकारः। इंद्रवज्राख्यं वृत्तम्॥ १॥

एवं परमगुरुनमस्कारलक्षणं मंगलं कृत्वा विघ्नबाहुल्ये मंगलबाहुल्यस्याप्यपेक्षितत्वात्स्वगुरुनमस्कारात्मकं

p. 3)

॥ मूल ॥

भ्रांत्या बहुमतध्वांते राजयोगमजानताम्॥

॥ टीका ॥

मंगलमाचरन्नस्य ग्रंथस्य विषयप्रयोजनादीन्प्रदर्शयति। श्रीमंतं गुरुं श्रीगुरुं नाथं श्रीगुरुनाथं स्वगुरुमिति यावत्। प्रणम्य प्रकर्षेण भक्तिपूर्वकं नत्वा स्वात्मारामेण योगिना योगोऽस्यास्तीति तेन। केवलं राजयोगाय केवलं राजयोगार्थं हठविद्योपदिश्यत इत्यन्वयः। हठविद्याया राजयोग एव मुख्यं फलं न सिद्धय इति केवलपदस्याभिप्रायः

। सिद्धयस्त्वानुषंगिक्यः। एतेन राजयोगफलसहितो हठयोगोऽस्य ग्रंथस्य विषयः। राजयोगद्वारा कैवल्यं चास्य फलं। तत्कामश्चाधिकारी। ग्रंथविषययोः प्रतिपाद्यप्रतिपादकभावः संबंधः। ग्रंथस्य कैवल्यस्य च प्रयोज्यप्रयोजकभावः संबंधः। ग्रंथाभिधेयस्य सफलयोगस्य कैवल्यस्य च साध्यसाधनभावः संबंध इत्युक्तम्॥ २॥

ननु मंत्रयोगसगुणध्याननिर्गुणध्यानमुद्रादिभिरेव राजयोगसिद्धौ किं हठविद्योपदेशेनेत्याशंक्य व्युत्थितचित्तानां मंत्रयोगादिभी राजयोगासिद्धेर्हठयोगादेव राजयोगसिद्धिं वदन् ग्रंथं प्रतिजानीते॥ भ्रांत्येति॥ मंत्रयोगादिबहुमतरूपे ध्वांते गाढांधकारे या भ्रांतिर्भ्रमस्तया। तैस्तैरुपायै राजयोगार्थं प्रवृत्तस्य तत्रतत्र तदलाभात्। वक्ष्यति च। विनाराजयोग इत्यादिना। तथा राजयोगं अजानतां न जानंतीऽत्यजानंतः तेषां अजानतां पुंसां राजयोगज्ञानमिति शेषः। करोतीति करः कृपायाः करः कृपाकरः कृपाया आकर इति वा तादृशः। अनेन हठप्रदीपिकाकरणे अज्ञानुकंपैव हेतुरित्युक्तं। स्वात्मन्यारमते इति स्वात्मारामः हठस्य हठयोगस्य प्रदीपिकेव प्रकाशकत्वात् हठप्रदीपिका तां। अथवा हठ एव प्रदीपिका राजयोगप्रकाशकत्वात् तां धत्ते विधत्ते

करोतीति यावत्। स्वात्माराम इत्यनेन ज्ञानस्य सप्तमभूमिकां

प्राप्तो

p. 4)

॥ मूल ॥

हठप्रदीपिकां धत्ते स्वात्मारामः कृपाकरः ॥ ३ ॥

॥ टीका ॥

ब्रह्मविद्वरिष्ठ इत्युक्तं। तथा च श्रुतिः। आत्मक्रीड

आत्मरतिः क्रियावानेष ब्रह्मविदां वरिष्ठ इति। सप्त

भूमयश्चोक्ता योगवासिष्ठे। ज्ञानभूमिः शुभेच्छाख्या

प्रथमा समुदाहृता। विचारणा द्वितीया स्यात्तृतीया

तनुमानसा। सत्वापत्तिश्चतुर्थी स्यात्ततोऽसंसक्तिनामिका।

परार्थाभाविनी षष्ठी सप्तमी तुर्यगा स्मृता। अस्यार्थः।

शुभेच्छा इत्याख्या यस्याः सा शुभेच्छाख्या।

विवेकवैराग्ययुता शमादिपूर्विका तीव्रमुमुक्षा प्रथमा

ज्ञानस्य भूमिः भूमिका उदाहृता कथिता योगिभिरिति शेषः

॥ १ ॥

विचारणा श्रवणमननात्मिका द्वितीया ज्ञानभूमिः स्यात्॥ २

॥

अनेकार्थग्राहकं मनो यदाऽनेकार्थान्परित्यज्य सदेकार्थवृत्तिप्रवाहवद्भवति तदा तनु मानसें यस्यां सा तनुमानसा निदिध्यासनरूपा तृतीया ज्ञानभूमिः स्यादिति शेषः ॥ ३ ॥

इमास्तिस्त्रः साधनभूमिकाः। आसु भूमिषु साधक इत्युच्यते। तिसृभिर्भूमिकाभिः शुद्धसत्वेंऽतःकरणेऽहं ब्रह्माऽस्मीत्याकारिकाऽपरोक्षवृत्तिरूपा सत्वापत्तिनामिका चतुर्थी ज्ञानभूमिः स्यात्। चतुर्थीयं फलभूमिः। अस्यां योगी ब्रह्मविदित्युच्यते। इयं संप्रज्ञातयोगभूमिका ॥ ४ ॥

वक्ष्यमाणास्तिस्त्रोऽसंप्रज्ञातयोगभूमयः। सत्वापत्तेरनंतरा सत्वापत्तिसंज्ञिकायां भूमावुपस्थितासु सिद्धिषु असंसक्तस्यासंसक्तिनामिका पंचमी ज्ञानभूमिः स्यात्। अस्यां योगी स्वयमेव व्युत्तिष्ठते। एतां भूमिं प्राप्तो ब्रह्मविद्वर इत्युच्यते ॥ ५ ॥

परब्रह्मातिरिक्तमर्थं न भावयति यस्यां सा परार्थाभाविनी षष्ठी ज्ञानभूमिः स्यात्। अस्यां योगी परप्रबोधित एव व्युत्थितो भवति। एतां प्राप्तो

ब्रह्मविद्वरीयानित्युच्यते ॥ ६ ॥

तुर्यगा नाम सप्तमी भूमिः स्मृता । अस्यां योगी स्वतः परतो वा न व्युत्थानं प्राप्नोति । एतां प्राप्तो ब्रह्मविद्वरिष्ठ इत्युच्यते । तत्र प्रमाणभूता श्रुतिरत्रैवोक्ता । पूर्वमयमेव जीवन्मुक्त इत्युच्यते स एवाऽत्र स्वात्मारामपदेनोक्त इत्यलं बहूक्तेन ॥ ३ ॥

p. 5)

॥ मूल ॥

हठविद्यां हि मत्स्येंद्रगोरक्षाद्या विजानते ॥
स्वात्मारामोऽथवा योगी जानीते तत्प्रसादतः ॥ ४ ॥

॥ टीका ॥

महत्सेवितत्वाद्धठविद्यां प्रशंसन्स्वस्यापि महत्सकाशाद्धठविद्यालाभाद्गौरवं द्योतयति ॥ हठविद्यां हीति ॥ हीति प्रसिद्धं मत्स्येंद्रश्च गोरक्षश्च तौ आद्यौ येषां ते मत्स्येंद्रगोरक्षाद्याः आद्यशब्देन जालंधरनाथभर्तृहरिगोपीचंद्रप्रभृतयो ग्राह्याः । ते हठविद्यां हठयोगविद्यां विजानते विशेषेण

साधनलक्षणभेदफलैर्जानंतीत्यर्थः। स्वात्मारामः स्वात्मारामनामा। अथवा शब्दसमुच्चये। योगी योगवान् तत्प्रसादतः गोरक्षप्रसादाज्जानीत इत्यन्वयः। परममहता ब्रह्मणापीयं विद्या सेवितेत्यत्र योगियाज्ञवल्क्यस्मृतिः। हिरण्यगर्भो योगस्य वक्ता नान्यः पुरातनः। वक्तृत्वं च मानसव्यापारपूर्वकं भवतीति मानसो व्यापारोऽर्थादागमः। तथा च श्रुतिः। यन्मनसा ध्यायति तद्वाचा वदतीति। भगवतेयं विद्या भागवतानुद्धवादीन् प्रत्युक्ता। शिवस्तु योगी प्रसिद्ध एव। एवं च सर्वोत्तमैर्ब्रह्मविष्णुशिवैः सेवितेयं विद्या। न च ब्रह्मसूत्रकृता व्यासेन योगी निराकृत इति शंकनीयं। प्रकृतिस्वातंत्र्यविद्भिर्भेदांशमात्रस्य निराकरणात्। न तु भावनाविशेषरूपयोगस्य। भावनायाश्च सर्वसंमतत्वात्तां

p. 6)

॥ मूल ॥

श्री-आदिनाथमत्स्येंद्रशाबरानंदभैरवाः॥ चौरंगी मीनगोरक्षविरूपाक्षबिलेशयाः॥ ५॥

॥ टीका ॥

विना सुखस्याप्यसंभवात्। तथोक्तं भगवद्गीतासु। नास्ति बुद्धिरयुक्तस्य न चायुऽक्तस्य भावना। न चाभावयतः शांतिरशांतस्य कुतः सुखमिति। नारायणतीर्थैरप्युक्तं। स्वातंत्र्यसत्यत्वमुखं प्रधाने सत्यं चचिद्भेदगतं च वाक्यैः। व्यासो निराचष्ट न भावनाख्यं योगं स्वयं निर्मितब्रह्मसूत्रैः। अपि चात्मप्रदं योगं व्याकरोन्मतिमान्स्वयं। भाष्यादिषु ततस्तत्र आचार्यप्रमुखैर्मतः। मतो योगो भगवता गीतायामधिकोऽन्यतः। कृतः शुकादिभिस्तस्मादत्र संतोऽतिसादरा इति। वेदेषु यज्ञेषु तपःसु चैव दानेषु यत्पुण्यफलं प्रदिष्टं। अत्येति तत्सर्वमिदं विदित्वा योगी परं स्थानमुपैति चाद्यमिति भगवदुक्तेः। किं बहुन। जिज्ञासुरपि योगस्य शब्दब्रह्मातिवर्तत इति वदता भगवता योगजिज्ञासोरप्यौत्कृष्ट्यं वर्णितं किमुत योगिनः। नारदादिभक्तश्रेष्ठैर्याज्ञवल्क्यादिज्ञानिमुख्यैश्चास्याः सेवनाद्भक्तज्ञानिनामप्यविरुद्धेत्युपरम्यते॥ ४॥

हठयोगे प्रवृत्तिं जनयितुं हठविद्यया प्राप्तैश्वर्यान् सिद्धानाह॥ श्री-आदिनाथेत्यादिना॥ आदिनाथः शिवः सर्वेषां नाथानां प्रथमो नाथः। ततो नाथसंप्रदायः प्रवृत्त इति नाथसंप्रदायिनो वदंति। मत्स्येंद्राख्यश्च आदिनाथशिष्यः। अत्रैवं किंवदंती। कदाचिदादिनाथः

नादोऽंतरंगसारंगबधनने वागुरायते ॥
अंतरंगकुरंगस्य वधे व्याधायतेऽपि च ॥ ९४ ॥

बद्धं त्विति ॥ नाद एव बंधः बध्यतेऽनेनेति बंधः बंधनसाधनं तेन स्वशक्त्या स्वाधीनकरणेन बद्धं बंधनमिव प्राप्तं । नादधारणादावासक्तमित्यर्थः । अत-एव सम्यक् त्यक्तं चापलं क्षणेक्षणे विषयग्रहणपरित्यागरूपं येन तत्तथा मनः सुतरां स्थैर्यं प्रयाति नितरां धारणामेति । तत्र दृष्टांतमाह । छिन्नौ पक्षौ यस्य तादृशः खे गच्चतीति खगः पक्षी यथा । एतेन । प्राणायामेन पवनं प्रत्याहारेण चेंद्रियं । वशीकृत्य ततः कुर्याच्चित्तस्थैर्यं शुभाश्रये । शुभाश्रये चित्तस्थापनं धारणेत्युक्तलक्षणा धारणा प्रोक्ता ॥ ९२ ॥

सर्वचिंतामिति ॥ सर्वेषां बाह्याभ्यंतरविषयाणां या चिंता चिंतनं तां परित्यज्य त्यक्त्वा सावधानेनैकाग्रेण चेतसा योगानां साम्राज्यं सम्राजो भावः । योगशब्दोऽर्शाद्यजंतः । राजयोगित्वमिति यावत् । इच्छता वांछता पुंसा नाद एवानाह तध्वनिरेवानुसंधेयोऽनुचिंतनीयः । नादाकारवृतिप्रवाहः कर्तव्य इत्यर्थः एतेन

तद्रूपप्रत्ययैकाग्र्यसंततिश्चान्यनिस्पृहा । तद्ध्यानं
प्रथमैरंगैः षड्भिर्निष्पाद्यते नृप । तत्र
प्रत्ययैकतानता ध्यानमित्युक्तलक्षणं ध्यानमुक्तं ॥ ९३ ॥

नादोऽतरंगेति ॥ नादः अंतरंगं मन एव सारंगो
मृगस्तस्य बंधने चांचल्यहरणे वागुरायते वागुरेवाचरति
वागुरा जालं । यथा वागुरा बंधनेन सारंगस्य चांचल्यं

p. 173)

॥ मूल ॥

अंतरंगस्य यमिनो वाजिनः परिघायते ॥ नादोपास्तिरतो
नित्यमवधार्या हि योगिना ॥ ९५ ॥

बद्धं विमुक्तचाचल्यं नादगंधकजारणात् ॥ मनः
पारदमाप्नोति निरालंबाख्यखेऽटनम् ॥ ९६ ॥

हरति तथा नादोऽतरंगस्य स्वशक्त्या चांचल्यं
हरतीत्यर्थः । अंतरंगं मन एव सारंगो हरिणस्तस्य
बंधने नानावृत्त्युत्पादनापनयनमेव मनसो बंधस्तस्मिन्
व्याधायते व्याध इवाचरति । यथा व्याधो वागुराबद्धं
मृगं हंति एवं नादोऽपि स्वासक्तं मनो हंतीत्यर्थः ॥ ९४

॥

अंतरंगस्येति ॥ यमिनो योगिनोऽंतरंगं मनस्तस्य
चपलत्वाद्वाजिनोऽश्वस्य परिघायते वाजिशालाद्वारपरिघ
इवाचरति नाद इति शेषः। यथा वाजिशालापरिघो
वाजिनोऽन्यत्र गतिं रुणद्धि तथा नादोऽंतरंगस्येत्यर्थः।
अतःकारणाद्योगिना नादस्योपास्तिरुपासना नित्यं
प्रत्यहमवधार्यावधारणीया। हीति निश्चयेऽव्ययं ॥ ९५ ॥

बद्धमिति ॥ नाद एव गंधक उपधातुविशेषस्तेन जारणं
जारणीकरणं नादगंधकसंबंधेन चांचल्यहरणं
तस्माद्बद्धं नादैकासक्तं पक्षे गुटिकाकृतिं प्राप्तं
अत-एव विमुक्तं त्यक्तं
चांचल्यमनेकविषयाकारपरिणामरूपं येन। पक्षे
विमुक्तलौल्यं मनः पारदं मन एव पारदं चंचलं
निरालंबं ब्रह्म तदेवाख्या यस्य तन्निरालंबाख्यं तदेव

p. 174)

॥ मूल ॥

नादश्रवणतः क्षीप्रमंतरंगभुजंगमः ॥ विस्मृत्य
सर्वमेकाग्रः कुत्रचिन्नहि धावति ॥ ९७ ॥

काष्ठे प्रवर्तितो वह्निः काष्ठेन सह शाम्यति ॥ नादे
प्रवर्तितं चित्तं नादेन सह लीयते ॥ ९८ ॥

घंटादिनादसक्तस्तब्धांतःकरणहरिणस्य ॥ प्रहरणमपि
सुकरं शरसंधानप्रवीणश्चेत् ॥ ९९ ॥

॥ टीका ॥

खमपरिच्छिन्नत्वात्तस्मिन्नटनं गमनः तदाकारवृत्तिप्रवाहं
। पक्षे आकाशगमनं प्राप्नोति । यथा बद्धं
पारदमाकाशगमनं करोति एवं बद्धं मनो
ब्रह्माकारवृत्तिप्रवाहमविच्छिन्नं करोतीत्यर्थः ॥ ९६ ॥

नादेति ॥ नादस्यानाहतस्वनस्य श्रवणतः श्रवणात् क्षिप्रं
द्रुतमंतरंगं मन एव भुजंगमं
सर्पश्चपलत्वान्नादप्रियत्वाच्च भुजंगमरूपत्वं मनसः ।
सर्वं विश्वं विस्मृत्य विस्मृतिविषयं कृत्वैकाग्रो
नादाकारवृत्तिप्रावाहवान् सन्कुत्रापि विषयांतरे नहि धावति
नैव धावनं करोति । ध्यानोत्तरैः श्लोकैः । तस्यैव
कल्पनाहीनं स्वरूपग्रहणं हि यत् । मनसा ध्याननिष्पाद्यः
समाधिः सोऽभिधीयत इति

विष्णुपुराणोक्तलक्षणस्तदेवार्थमात्रनिर्भासं

स्वरूपशून्यमिव समाधिरिति पातंजलसूत्रोक्तलक्षणेन च

संप्रज्ञातलक्षणः समाधिरुक्तः ॥ ९७ ॥

काष्ठ इति ॥ काष्ठे दारुणि प्रवर्तितः प्रज्वालितो वह्निः

काष्ठेन सह शाम्यति ज्वालारूपं परित्यज्य

तन्मात्ररूपेणावतिष्ठते यथा तथा । नादे प्रवर्तितं

चित्तं नादेन सह लीयते ।

राजसतामसवृत्तिनाशात्सत्वमात्रावशेषं संस्कारशेषं च

भवति । तत्र च मैत्रायणीयमंत्रः । यथा निरिंधनो वह्निः

स्वायोनावुपशाम्यति । तथा वृत्तिक्षयाच्चित्तं

स्वयोनावुपशाम्यतीति ॥ ९८ ॥

घंटादिति ॥ घंटा आदिर्येषां

शंखमर्दलझर्झरदुंदुभिजीमूतादीनां ते

घंटादयस्तेषां

p. 175)

॥ मूल ॥

अनाहतस्य शब्दस्य ध्वनिर्य उपलभ्यते ॥ धनेरंतर्गतं

ज्ञेयस्यांतर्गतं मनः ॥ मनस्तत्र लयं याति तद्विष्णोः

परमं पदम्॥ १०० ॥

तावदाकाशसंकल्पो यावच्छब्दः प्रवर्तते ॥ निःशब्दं
तत्परं ब्रह्म परमात्मेति गीयते ॥ १ ॥

॥ टीका ॥

नादस्तेषु सक्तः। अत-एव स्तब्धो निश्चलो योऽंतःकरणमेव
हरिणो मृगस्तस्य प्रहरणं
नानावृत्तिप्रतिबंधनमंतःकरणपक्षे। हरिणपक्षे तु
प्रहरणं हननमपि शरवद्द्रुतगामिनो वायोः
संधानसुषुम्नामार्गेण ब्रह्मरंध्रे निरोधनपक्षे शरस्य
बाणस्य संधानं धनुषि योजनं तस्मिन् प्रवीणः
कुशलश्चेत्सुकरं सुखेन कर्तुं शक्यं॥ ९९ ॥

अनाहतस्येति ॥ अनाहतस्य शब्दस्यानाहतस्वनस्य यो
ध्वनिर्निर्हाद उपलभ्यते श्रूयते तस्य ध्वनेरंतर्गतं ज्ञेयं
ज्योतिः स्वप्रकाशचैतन्यं ज्ञेयस्यांतर्गतं
ज्ञेयाकारतामपन्नं मनोऽंतःकरणं तत्र ज्ञेये मनो
विलयं याति परवैराग्येण सकलवृत्तिशून्यं संस्कारशेषं
भवति। तद्विष्णोर्विभोरात्मनः
परममंतःकरणवृत्त्युपाधिराहित्यान्निरुपाधिकं पद्यते

गम्यते योगिभिरिति पदं स्वरूपं ॥ १०० ॥

तावदिति ॥ यावच्छब्दोऽनाहतध्वनिः प्रवर्तते श्रूयते
तावदाकाशस्य सम्यक्कल्पनं भवति।
शब्दस्याकाशगुणत्वाद्गुणगुणिनोर्भेदाद्वा मनसा सह शब्दस्य
विलयान्निःशब्दं शब्दरहितं यत्परं ब्रह्म
परंब्रह्मशब्दवाचयं परमात्मेति गीयते परमात्मशब्देन स
उच्यते। सर्ववृत्तिविलये यः स्वरूपेणावस्थितः स एव
परब्रह्मपरमात्मशब्दाभ्यामुच्यत इति भावः ॥ १ ॥

p. 176)

॥ मूल ॥

यत्किंचिन्नादरूपेण श्रूयते शक्तिरेव सा ॥ यस्तत्वांतो
निराकारः स एव परमेश्वरः ॥ २ ॥

सर्वे हठलयोपाया राजयोगस्य सिद्धये ॥ राजयोगसमारूढः
पुरुषः कालवंचकः ॥ ३ ॥

तत्त्वं बीजं हठः क्षेत्रमौदासीन्यं जलं त्रिभिः ॥
उन्मनी कल्पलतिका सद्य एव प्रवर्तते ॥ ४ ॥

॥ टीका ॥

यत्किंचिदिति ॥ नादरूपेणानाहतध्वनिरूपेण यत्किंचिच्छ्रूयते आकर्ण्यते सा शक्तिरेव यस्तत्वांतस्तत्वानामंतो लयो यस्मिन् सः तथा निराकार आकाररहितः स एव परमेश्वरः सर्ववृतीक्षये स्वरूपावस्थितो यः स आत्मेत्यर्थः । काष्ठे प्रवर्तितो वह्निरित्यादिभिः श्लोकैः राजयोगापरपर्यायोऽसंप्रज्ञातः समाधिरुक्तः ॥ २ ॥

सर्वे इति ॥ हठश्च लयश्च हठलयौ तयोरुपाया हठलयोपाया हठोपाया आसनकुंभकमुद्रारूपा लयोपाया नादानुसंधानशांभवीमुद्रादयः । राजयोगस्य मनसः सर्ववृत्तिनिरोधलक्षणस्य सिद्धये निष्पत्तये प्रोक्ता इति शेषः । राजयोगसमारूढः सम्यगारूढः प्राप्तवान् यः पुरुषः स कालवंचकः कालं मृत्युं वंचयति जयतीति तादृशः स्यादिति शेषः ॥ ३ ॥

तत्त्वमिति ॥ तत्त्वं चित्तं बीजं बीजवदुन्मन्यवस्थांकुराकारेण परिणममानत्वात् हठः प्राणापानयोरैक्यलक्षणः प्राणायामः क्षेत्रे इव प्राणायामे उन्मनीकल्पलतिकोत्पत्तेरौदासीन्यं

p. 177)

॥ मूल ॥

सदा नादानुसंधानात् क्षीयंते पापसंचयाः ॥ निरंजने विलीयेते निश्चितं चित्तमारुतौ ॥ ५ ॥

शंखदुंदुभिनादं च न शृणोति कदाचन ॥
काष्ठवज्जायते देह उन्मन्यावस्थया ध्रुवम् ॥ ६ ॥

सर्वावस्थाविनिर्मुक्तः सर्वचिंताविवर्जितः ॥ मृतवत्तिष्ठ ते योगी स मुक्तो नात्र संशयः ॥ ७ ॥

॥ टीका ॥

परवैराग्यं जलं तस्या उत्पत्तिकारणत्वात् ।
परवैराग्यहेतुकः संस्कारविशेषश्चित्तस्यासंप्रज्ञात इति तल्लक्षणात् । एतैस्त्रिभिरुन्मन्यसंप्रज्ञातावस्था सैव कल्पलतिका सकलेष्टसाधनत्वात्सद्य एव श्रीघ्रमेव प्रवर्तते प्रवृत्ता भवति उत्पन्ना भवति ॥ ४ ॥

सदेति ॥ सदा सर्वदा
नादानुसंधानान्नादानुचिंतनात्पापसंचयाः पापसमूहाः

क्षीयंते नश्यंति निरंजने निर्गुणे चैतन्ये निश्चितं ध्रुवं

चित्तमारुतौ मनःप्राणौ विलीयते विलीनौ भवतः ॥ ५ ॥

उन्मन्यवस्थां प्राप्तस्य योगिनः स्थितिमाहाष्टभिः ।

शंखदुंदुभीति ॥ शंखो जलजो

दुंदुभिर्वाद्यविशेषस्तयोर्नादं घोषं कदाचन कस्मिंश्चिदपि

समये न शृणोति । शंखदुंदुभीत्युपलक्षणं नादमात्रस्य

उन्मन्यवस्थया देहो ध्रुवं काष्ठवज्जायते ।

निश्चेष्टत्वादित्यर्थः ॥ ६ ॥

जाग्रत्स्वप्नसुषुप्तिमूर्छामरणलक्षणाः पंच

व्युत्थानावस्थास्ताभिर्विशेषेण मुक्तो रहितः सर्वा

याश्चिंताः स्मृतयस्ताभिर्विवर्जितो विरहितो यः योगः

सकलवृत्तिनिरोधोऽस्यातीति

p. 178)

॥ मूल ॥

खाद्यते न च कालेन बाध्यते न च कर्मणा ॥ साध्यते न स

केनापि योगी युक्तः समाधिना ॥ ८ ॥

न गंधं न रसं रूपं न च स्पर्शं न निःस्वनम् ॥

नात्मानं न परं वेत्ति योगी युक्तः समाधिना ॥ ९॥

चित्तं न सुप्तं नोजाग्रत्स्मृतिविस्मृतिवर्जितम् ॥

॥ टीका ॥

योगी तुर्यावस्थावान् स मुक्तो जीवन्नेव मुक्तः ।
सकलवृत्तिनिरोधे आत्मनः स्वरूपावस्थनात् । तदुक्तं
पातंजले सूत्रे । तदा द्रष्टुः स्वरूपेऽवस्थानमिति
स्पष्टमन्यत् ॥ ७ ॥

खाद्यत इति ॥ समाधिना युक्तो योगी कालेन मृत्युना न खाद्यते
न भक्ष्यते न हन्यत इत्यर्थः । कर्मणा कृतेन
शुभेनाशुभेन वा न बाध्यते जन्ममरणादिजनने न क्लेश्यते ।
तथा च समाधिप्रकरणे पातंजलसूत्रं । ततः
क्लेशकर्मनिवृत्तिरिति । केनापि पुरुषांतरेण यंत्रमंत्रादिना
वा न साध्यते साधयितुं शक्यते ॥ ८ ॥

न गंधम्ति ॥ समाधिना युक्तो योगी गंधं सुरभिमसुरभिं
वा न रसं मधुराम्ललवणकटुकषायतिक्तभेदात् षड्विधं
न रूपं शुक्लनीलपीतरक्तहरितकपिशचित्रभेदात्सप्तविधं न
स्पर्शं शीतमुष्णमनुष्णाशीतं वा न निःस्वनं

शंखदुंदुभिजलधिजीमूतादिनिनादं बाह्यमाभ्यंतरं वा
न आत्मानं देहं न परं पुरुषांतरं वेत्तीति सर्वत्रान्वेति
। आत्मा देहे धृतौ जीवे स्वभावे परमात्मनीत्यमरः ॥ ९ ॥

चित्तमिति ॥ यस्य योगिनश्चित्तमंतःकरणं न सुप्तं ।
आवरकस्य तमसोऽभावात्त्रिगुणेऽंतःकरणे

p. 179)

॥ मूल ॥

न चास्तमेति नोदेति यस्यासौ मुक्त एवं सः ॥ १० ॥

न विजानाति शीतोष्णं न दुःखं न सुखं तथा ॥ न मानं
नापमानं च योगी युक्तः समाधिना ॥ ११ ॥

स्वस्थो जाग्रदवस्थायां सुप्तवद्योऽवतिष्ठते ॥
निःश्वासोच्छ्वासहीनश्च निश्चितं मुक्तं एव सः ॥ १२ ॥

यदा सत्वरजसी अभिभूय समस्तकरणावरकं तम आविर्भवति
तदांतःकरणस्य विषयाकारपरिणामाभावात्तत्सुप्तमित्युच्यते
। नो जाग्रत् इंद्रियैरर्थग्रहणाभावात्। स्मृतिश्च विस्मृतिश्च
स्मृतिविस्मृती ताभ्यां वर्जितं ।

वृत्तिसामान्याभावादुद्बोधकाभावाच्च स्मृतिवर्जितं ।
स्मृत्यनुकूलसंकाराभावाद्विस्मृतिवर्जितं । न चास्तं
नाशमेति प्राप्नोति । संस्कारशेषस्य चित्तस्य सत्त्वात् ।
नोदेत्युद्भवति । वृत्त्यनुत्पादनात् सोऽसौ मुक्त एव जीवन्मुक्त एव
॥ १० ॥

न विजानातीति ॥ समाधिना युक्तो योगी शीतं च उष्णं च
शीतोष्णं । समाहारद्वंद्वः । शीतमुष्णं वा पदार्थं
न दुःखं दुःखजनकं परकृतं ताडनादिकं न सुखं
सुखसाधनं सुरभिचंदनाद्यनुलेपनादिकं । तथा चार्थे ।
मानं परकृतं सत्कारं न अपमानमनादरं च न
विजानातीति क्रियापदं प्रतिवाक्यमन्वेति ॥ ११ ॥

स्वस्थ इति ॥ स्वस्थः प्रसन्नेंद्रियांतःकरणः । एतेन
तंद्रामूर्छादिव्यावृत्तिः । जाग्रदवस्थायामित्यनेन
स्वप्नसुषुप्त्योर्निवृत्तिः । सुप्तवत् सुप्तेन तुल्यं
कार्येंद्रियव्यापारशून्यो यो योगी अवतिष्ठते स्थितो भवति ।
समवप्रविभ्यः स्थ इत्यात्मनेपदं । निश्वासोच्छ्वासहीनः
बाह्यवायोः कोष्ठे ग्रहणं निश्वासः कोष्ठस्थितस्य
वायोर्बहिर्निःसारणमुच्छ्वासस्ताभ्यां हीनश्चावतिष्ठत
इत्यत्रापि संबध्यते ॥ सनिश्चितं

p. 180)

॥ मूल ॥

अवध्यः सर्वशस्त्राणामशक्यः सर्वदेहाम् ॥ अग्राह्यो मंत्रयंत्राणां योगी युक्तः समाधिना ॥ १३ ॥

॥ टीका ॥

निःसंदिग्धं मुक्त एव । जीवन्मुक्तस्वरूपमुक्तं दत्तात्रेयेण । निर्गुणध्यानसंपन्नः समाधिं च ततोऽभ्यसेत् । दिनद्वादशकेनैव समाधीं समवाप्नुयात् । वायुं निरुध्य मेधावी जीवन्मुक्तो भवेत् ध्रुवमिति ॥ १२ ॥

अवध्य-इति ॥ समाधिना युक्तो योगी । सर्वशस्त्राणामिति संबंधसामान्ये षष्ठी । सर्वशस्त्रैरित्यर्थः । अवध्यो युक्तो हंतुमशक्य इत्यर्थः । सर्वदेहिनामित्यत्रापि संबंधमात्रविवक्ऽयां षष्ठी । अशक्यः सर्वदेहिभिः बलेन शक्यो न भवतीत्यर्थः । मन्त्रयंत्राणां वशीकरणमारणोच्चाटनादिफलैर्मंत्रयंत्रैरग्राह्यः वशीकर्तुमशक्यः । एवं प्राप्तयोगस्य योगिनो विघ्ना बहवः समायांति । तन्निवारणार्थं तज्ज्ञानस्यापेक्षितत्त्वात्तेऽपि प्रदश्यंते । दत्तात्रेयः । आलस्यं प्रथमो विघ्नो द्वितीयस्य

प्रकथ्यते। पूर्वोक्तधूर्तगोष्ठी च तृतीयो मन्त्रसाधनं।

चतुर्थो धातुवादः स्यादिति योगविदो विदुरिति।

मार्कंडेयपुराणे। उपसर्गाः प्रवर्तंते दृष्टा ह्यात्मनि

योगिनः। ये तांस्ते संप्रवक्ष्यामि समासेन निबोध मे।

काम्याः क्रियास्तथा कामान्मनुष्यो योऽभिवांछति। स्त्रियो

दानफलं विद्यां मायां कुप्यं धनं वसु।

देवत्वममरेशत्वं रसायनवयः क्रियां। मेरुं प्रयतनं

यज्ञं जलाग्न्यावेशनं तथा। श्राद्धानां शक्तिदानानां

फलानि नियमास्तथा। तथोपवासात्पूर्ताच्च देवपित्रर्चनादपि।

अतिथिभ्यश्च कर्मभ्य उपसृष्टोऽभिवांछति। विघ्नमित्थं

प्रवर्तेत यत्नाद्योगी निवर्तयेत्। ब्रह्मासंगि मनः

कुर्वन्नुपसर्गैः प्रमुच्यत इति। पद्मपुराणे।

यदैभिरंतरायैर्न क्षिप्यतेऽस्य हि मानसं। तदाग्रे।

तमवाप्नोति परं ब्रह्मातिदुर्लभं। योगभास्करे। सात्विकीं

धृतिमालंब्य योगी सत्वेन सुस्थिरः। निर्गुणं मनसा

ध्यायन्नुपसर्गैः प्रमुच्यते। एवं योगमुपासीनः

शक्रादिपदनिस्पृहः। सिध्यादिवासनात्यागी जीवन्मुक्तो

भवेन्मुनिरिति। विस्तरस्य भिया नोक्ताः संति विघ्ना ह्यनेकशः

। ध्यानेनविष्णुहरयोर्वारणीया हि योगिनेति॥ १३॥

p. 181)

॥ मूल॥

यावन्नैव प्रविशति चरन्मारुतो मध्यमार्गे यावद्बिंदुर्न भवति दृढप्राणवातप्रबंधात् ॥

॥ टीका ॥

अयोगिनां ज्ञानं निराकुर्वन् योगिनामेव ज्ञानं भवतीत्याह ॥ यावदिति ॥ मध्यमार्गे सुषुम्नायां चरन् गच्छन् मारुतः प्राणवायुः यावत् यावत्कालपर्यंतं न प्रविशति प्रकर्षेण ब्रह्मरंध्रपर्यंतं न विशति । ब्रह्मरंध्रं गतस्य स्थैर्याद्ब्रह्मरंध्रंगत्वा न स्थिरो भवतीत्यर्थः । सुषुम्नायामसंचरन् । वायुरसिद्ध इत्युच्यते । तदुक्तममृतसिद्धौ । यावद्बिमार्गगो वायुर्निश्चलो नैव मध्यगः । असिद्धं तं विजानीयाद्वायुं कर्मवशानुगमिति । प्राणयति जीवयतीति प्राणः स चासौ वातश्च प्राणवातः तस्य प्रबंधात्कुंभकेन स्थिरीकरणाद्बिंदुवीर्यं दृढः स्थिरो न भवति प्राणवातस्थैर्ये बिंदुस्थैर्यमुक्तमत्रैव प्राक् । मनःस्थैर्ये स्थिरो वायुस्ततो बिंदुः स्थिरो भवेदिति । तदभावे त्वसिद्धत्वं योगिनः । उक्तममृतसिद्धौ । तावद्बद्धोऽप्यसिद्धोऽसौ नरः सांसारिको मतः । यावद्भवति देहस्थो रसेंद्रो ब्रह्मरूपकः । असिद्धिं तं विजानीयान्नरमब्रह्मचारिणं । जरामरणसंकीर्णं

सर्वक्लेशसमाश्रयमिति। यावत्तत्वं चित्तं ध्याने ध्येयचित्तं
न सहजसदृशं स्वाभाविकध्येयाकारवृत्तिप्रवाहान्नैव
जायते नैव भवति प्राणवातप्रबंधादिति
देहलीदीपन्यायेनात्रापि संबध्यते। वायुस्थैर्ये
चित्तस्थैर्यमुक्तममृतसिद्धौ। यदासौ भ्रियते वायुर्मध्यमां
मध्ययोगतः। तदा बिंदुश्चिचित्तं च म्रियते वायुना सह।
तदभावेऽह्यसिद्धत्वमुक्तममृतसिद्धौ। यावत्प्रस्यंदते चित्तं
बाह्याभ्यंतरवस्तुषु। असिद्धं तद्विजानीयाच्चित्तं
कर्मगुणान्वितमिति। तावद्यज्ज्ञानं शाब्दं वदति कश्चिद्
तदिदं ज्ञानं कथं दंभमिथ्याप्रलापं दंभेन
ज्ञानकथनेनाहं लोके पूज्यो भविष्यामिति धिया मिथ्याप्रलापो
मिथ्याभाषणं दंभपूर्वकं मिथ्याभाषणमित्यर्थः।
प्राणबिंदुचित्तानां जयाभावे
ज्ञानस्याभावात्संसृतिर्दुर्वारा। तदुक्तममृतसिद्धौ।
चलत्येष यदा वायुस्तदाबिंदुश्चलः स्मृतः। बिंदुश्चलति
यस्यांगे चित्तं तस्यैव चंचलं। चले बिंदौ चले चित्ते चले
वायौ च सर्वदा। जायते म्रियते लोकः सत्यं सत्यमिदं वच इति
। योगबीजेऽप्युक्तं चित्तं प्रनष्टं यदि भासते वै तत्र
प्रतीतो मरुतोऽपि नाशः। न वा यदि स्यान्न तु तस्य शास्त्रं
नात्मप्रतीतिर्न गुरुर्न मोक्ष इति। एतेन प्राणबिंदुमनसां जये
तु ज्ञानद्वारा

p. 182)

॥ मूल ॥

यावद्ध्याने सहजसदृशं जायते नैव तत्त्वं तावज्ज्ञानं
वदति तदिदं दंभमिथ्याप्रलापः ॥ १४ ॥

इति
श्रीसहजानंदसंतानचिंतामणिस्वात्मारामयोगींद्रविरचिताय्
आं हठप्रदीपिकायां समाधिलक्षणंनाम चतुर्थोपदेशः
॥ ४ ॥

मूलश्लोकसंख्या ॥ ३९३ ॥ श्रीकृष्णार्पणमस्तु ॥

॥ टीका ॥

योगिनो मुक्तिः स्यादेवेति सूचितं। तदुक्तममृतसिद्धौ।
यामवस्थां व्रजेद्वायुर्विंदुस्तामधिगच्छति। यथाहि साध्यते
वायुस्तथा बिंदुप्रसाधनं। मूर्छितो हरति व्याधिं वृद्धः
खेचरतां नयेत्। सर्वसिद्धिकरो लीनो निश्चलो मुक्तिदायकः
यथावस्था भवेद्बिंदोश्चित्तावस्था तथा तथा। ननु।
योगास्त्रयो मया प्रोक्ता नृणां श्रेयोविधित्सया। ज्ञानं कर्म
च भक्तिश्च नोपायोऽन्योऽस्ति कुत्रचिदिति भगवदुक्तास्त्रयो

मोक्षोपायास्तेषु सत्सु कथं योग एव मोक्षोपायत्वेनोक्त इति चेन्न

तेषां योगांगेष्वंतर्भावात्। तथाहि। आत्मा वा अरे

द्रष्टव्यः श्रोतव्यो मंतव्यो निदिध्यासितव्य इति श्रुत्या

परमपुरुषार्थसाधनात्मसाक्षात्कारहेतुतया

श्रवणमनननिदिध्यासनान्युक्तानि तत्र श्रवणमनने

नियमांगगते स्वाध्यायेऽतंर्भवतः। स्वाध्यायश्च

मोक्षशास्त्राणामध्ययनं। स च

तात्पर्यार्थनिश्चयपर्यवसायो ग्राह्यः।

तात्पर्यार्थनिर्णयश्च श्रवणमननाभ्यां भवतीति

श्रवणमननयोः स्वाध्यायेऽतंर्भावः। नियमविवरणे

याज्ञवल्क्येन। सिद्धांतश्रवणं प्रोक्तं वेदांतश्रवणं

बुधैरिति स्पष्टमेव श्रवणस्य नियमांतर्गतिरुक्ता।

अधीतवेदं सूत्रं वा पुराणं सेतिहासकं। पदेष्वध्ययनं

यश्च सदाभ्यासो जपः स्मृत इति

युक्तिभिरनवरतमनुचिंतनलक्षणस्य सदाभ्यासरूपस्य

मननस्यापि नियमांतर्गतिरुक्ता।

विजातीयप्रत्ययनिरोधपूर्वकसजातीयप्रत्ययप्रवाहरूपस्य

निदिध्यासनस्य उक्तलक्षणे ध्यानेऽतंर्भावः।

तस्यापितत्परिपाकरूपसमाधिनात्मसाक्षात्कारद्वारा

मोक्षहेतुत्वमीश्वरार्पणबुध्या

निष्कामकर्मानुष्ठानलक्षणस्य कर्मयोगस्य तपः

स्वाध्यायेश्वरप्रणिधानानि क्रियायोग इति पतंजलिप्रोक्ते

नियमांतर्गति क्रियायोगेऽंतर्भावः। तत्र तप

उक्तमीश्वरगीतायां।

ईन्चोम्प्लेते

XXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXX
X
X title: .sa.tcakranir.naya
X
X copied from manuscript c 4253 of banares hindu university
X
X "saaradaa script
X
X data entered by the staff of muktabodha
X under the supervision of mark s.g. dyczkowski
X
X revision 0: april 7, 2012
X
XXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXX

षट्चक्रनिर्णय

अथ षट्चक्रनिर्णयोयं लिख्यते ॥

ॐ षट्चक्रं षोडशाधारं त्रिलक्ष्यं व्योमपञ्चकम् ।

शरीरं येन जानन्ति न ते योग्याः कुलागमे ॥ १ ॥

आ *? ब्रह्मबिलं चक्रं सन्दन्ततेष्व?वस्थितम् ।

योगनालं समुत्पन्नं त्रैलोक्ये स चराचरे ॥ ३ ॥

ब्रह्मकंन्दाधारं ब्रह्मकं सुखं ददातीति ब्रह्मकान्दम् ॥

अन्यशास्त्राभिप्रायः ॥

नाडि त्रितयमुद्दिष्टं यत्र लीयेतसंज्ञितम् ।
तच्च कन्देति पर्यायं तच्च ब्रह्मबिलं स्मृतम् ॥ ३ ॥

वामदक्षिणके नाड्या विडापिङ्गलसंज्ञके ।

फ़ोलि १९३ इस् मिस्सिन्ग् बुत् थिस् सेम्स् तो बे अ नुम्बेरिन्ग् मिस्तके

p. 194a) तयोर्मध्ये स्थिता नाडी सुषुम्णा मध्यमा स्मृता ॥ ४ ॥

विश्रुता ब्रह्मनाडीति ब्रह्मदर्शयतिस्स्फुटम् ।
तस्य *? लबिलं कन्दं नाभ्यूर्ध्वाधोङ्गुलं स्मृतम् ॥ ५ ॥

तत्त्रिकोणमिति ज्ञेयं विस्तरादङ्गुलि त्रयम् ।

तस्य मध्ये स्थिता शक्तिः पञ्चकारणभक्षिणी ॥ ६ ॥

सङ्कोचन प्रयोगेन प्रबुद्धा भवतीति सा।
भावानाभावगम्या साप्रयाता परमे पदे ॥ ७ ॥

एवं ज्ञात्वा महाभागे कन्दाधारे स्थितिं कुरु।
तत्र स्थित्वात्मनो रूपं प्राकृतं तु परित्यजेत् ॥ ८ ॥

ग्राहयेद् भावना यातं *? हात्सर्वगतं शिवम्।
यं प्राप्य तरते पारं घोरात् संसारसागरात् ॥ ९ ॥

द्वितीयं नाभिचक्रं तु नागकुण्डलसन्निभम्।
कुण्डलीकृति विख्यातमुदयास्तगकारणम् ॥ १० ॥

अन्यशास्त्राभिप्रायः ॥

नाभिमध्ये स्थिता शक्तिः प्रसुप्तभुजगाकृतिः।
फणपञ्चकसंयुक्ता वामावर्ता त्रिवर्तुला ॥ ११ ॥

पञ्चाशंद्विजजननी प्रणवाख्या त्रिवाहगा ।
ऊर्ध्वाधः क्रमयोगेन या शिवान्तं शिवोल्वना ॥ १२ ॥

प्रबुद्धा चाणु वज्ज्ञेय * *? सुप्ता कुण्डलाकृतिः ।
त्रिपञ्चाङ्गुलविस्तारामितवर्णा कुलारणी ॥ १३ ॥

तस्य मध्ये यदा * *? संस्थितो ह्येकमानसः ।
नानाविधानि चिह्नानि पश्यति स्वप्नवत् प्रिये ॥ १४ ॥

तस्मात् सर्वप्रयत्नेन बोधयेत् कुण्डलाकृतिम् ।
p. 195a) तृतीयं हृदये चक्रं षट्त्रिंशद्व्यापकं प्रभुम् ।

पद्मरागसमाकारमादित्यसमतेजसम् ॥ १६ ॥

तृत्रोदाहरणम् ॥

नाभे ऊर्ध्वं वितश्चातु कण्ठदूर्ध्वं षडङ्गुलम् ।
हृदयं तद् विजानीयाद् विश्वस्यायतनं महत् ॥ १७ ॥

हृच्चक्रमध्ये कमलं षोडशाराङ्गुलैर्युतम् ।

अष्टाङ्गुलप्रमाणेन लम्बमानमधोमुखम् ॥ १८ ॥

कर्णिकाकेसरैर्युक्तं हंसस्य पदमेव हि ।

तत्राभ्यासगतो योगी पश्यत्यात्मानमात्मना ॥ १९ ॥

चतुर्थं कण्डचक्रं तु नाडीसङ्घट्टगोचरम् ।

सङ्घतं सर्वनाडीनां हृदयं तदुदाहृतम् ॥ २० ॥

प्_१९५ब्) अन्यशास्त्राभिप्रायः ॥

कण्ठ रूपात्क्षुत्पिपासा * * *? ॥

ईशत्कृतापि रसना बिलसूलसंस्थापी श?द्द्विजाधरदले विवृते च कृत्वा ।

ईशत्सुधार सवरं शशिनश्च पीत्वा तत्क्षुत्तृषां मरणदाहरुजां निवृत्तिः ॥ २१ ॥

पञ्चमं बिन्दुचक्रं तु त्रिखण्डं व्योमगोचरम् ।

व्योमातीतं परंशान्तमात्मरूपं व्यवस्थितम् ॥ २२ ॥

भ्रुवोर्मध्ये स्थितं चक्रं बिन्द्वाख्यं मोक्षदायकम् ।
पञ्चवर्णधरं देवं पञ्चकालसमायुतम् ॥ २३ ॥

पञ्चवेलायुतं नित्यं पञ्च पञ्च विवर्जितम् ।
निष्प्रपञ्चं निराभासमङ्गुष्ठैकप्रमाणकम् ॥ २४ ॥

षष्ठं वै तालु चक्रं च देवानामपि दुर्लभम् ।
p. 196a) चन्द्रकान्ति समप्रख्यं चिन्तयेत्कलया युतम् ॥ २५ ॥

तत्रोदाहरणम् ।

तालुमध्ये स्थितं चक्रममृताख्य कलायुतम् ।
तत्र वै दण्डपाणिस्तु संस्थितः परमेश्वरः ॥ २६ ॥

अङ्गुलत्रयमानेन त्रिकोणाकृति * * *?म् ।
आद्विजात्यन्व्यजात्यन्तमेकाद *? व रूपिणी ॥ २७ ॥

तस्योर्ध्वे? नासनं चक्रं रेखाद्वारविवर्जितम् ।
प्रमाणरूपरहितं भावगम्यं सदोदितम् ॥ २८ ॥

यत्र सा च स्थिता शक्तिर्विमला रूपवर्जिता ।
शिवेन सह चैकत्र विश्रान्तिं कुरुते सदा ॥ २९ ॥

हकारादूर्ध्वगा कार्या कालाग्निनयगापुरः ॥
सा ह्येव गुल्फजानुह सर्वाधारे लयं गताः ॥ ३० ॥

p. 196b) सर्वा *? रातु सङ्कोचे सङ्कोचात् तुर्यकोणके ।
तुर्यकोणा तु जन्माख्ये ततः स्कन्दस्य भामिनि ॥ ३१ ॥

स्कन्दात् कुण्डलिनीमध्ये कुण्डलाख्यात् घटोदरे ।
तद्वै सञ्जीवनस्थानं भूतानां जीवसंपुटे ॥ ३२ ॥

सञ्जीवन्याश्च कूर्मे तु कूर्माश्च स्पर्शसंज्ञके ।
स्पर्शाश्च ललनामूले लालाख्याल्लम्बके तथा ॥ ३३ ॥

* *? ख्यात् गुरुवक्के च गुरुर्ह्यजमुखे तथा ।
इत्ये ते षोदसाधारास्संस्थिताः कुलमध्यतः ॥ ३४ ॥

यैर्भित्वा बाह्यतः शक्तिर्व्रजेत् सपादशंपदम् ।

या शक्तिरूहकाख्याधारमधो मार्गं गछ?तिसौ *? कार्या तस्याश्च

धाराः षोडस?क *? न्ते ॥

p. 197a) * * *? नूत * *? र्गौः सर्वाधारे *? संज्ञिते ।

गुदस्य कालाग्निरुद्रेति पर्या?यः ।

अस्यैव कामसङ्कोचो वायुः ।

योनिमार्गद्वयं वायोः सङ्ग?मे सर्वदा स्थितम् ।

अशक्त्या समतां नीत्वा दि?व्योयोधः प्रवर्तते ॥

त * *? तं क्रोश्य?गुदद्वारं सर्वाधारमङ्गुलि *? यस्योर्ध्वे तुर्यकोणं

चतुष्कोणं मेढ्रे जन्माख्यं यस्मिन् स्थाने स्त्रीपुंसयोः संयोगकाले

बीजं पतितं भूत्वा गर्भः स भवति जन्माख्य हाटकस्या भ्य?न्तरे

तिर्यग्ग्?त्याङ्गुल षट्कम् । ऊर्ध्वगत्याङ्गुलि द्वयम् ॥

अन्यशास्त्राभिप्रायः ॥

जकारे जननं यत्र मकारे मरणं भवेत् ।

जन्ममृत्यु भय स्थानं जन्मस्थानं तु तद्विदुः ॥

मेढ्रोध्वा?ङ्गुल द्वये जन्म कन्दं तस्योर्धे अङ्गुल द्वयम् ।

तच्च त्रिकोणं नाडि त्रितयस्या धारम् ।

तद्यथा नाड्यधो ह्यङ्गुला द्द?ष्टौ मेढ्रमूलं त्व?तद्विदुः ।

तत्र मध्ये महाचक्रं कन्दं नाम प्रकीर्तितम् ।

तालुसंज्ञा भवेत्तस्य शोधनं नामनामतः ॥

अन्य शास्त्राभिप्रायः ॥

नाभि मेढ्रान्तरं कन्दं तत्वाधारं प्रकीर्तितम् ।

दहन्तात्क * मध्यस्थं चैतन्यं चित्तवर्जितम् ।

षडरं प्रस्फुरन्तं च कन्दसंस्थानसंस्थितम् ।

कुलबिन्दुरिति ख्यातं ख्यातं ब्रह्मबिलं तथा ॥

p. 198a) एतत् प्रकृष्टकमुच्यते ॥

कुण्डलिनी नाभि देशे घटोदरं नाभि हृत्पद्ममध्यस्थं तस्यैव सङ्जीवनीति पर्यायः ।

नाभि हृदयपद्मसंपुटं मध्यम् ।

कूर्मं हृदयं सर्वाणि पदार्थानि यत्र कूर्माङ्गानीवतिष्ठन्ति
तत्कूर्माधारं सर्वम्बरः? स्थानम् ।

हृदयाच्चतुरङ्गुलं लोलाख्यं लोलाजिह्वा तस्यामूलं लोलामूलं
कण्ठस्थानम् ।

लम्पिकाधः षडङ्गुलम् ।

लम्बाख्यं लम्बाघण्टिकागुरुवक्रं गुरुवक्रेति बिन्दुसंज्ञं
भ्रूमध्यं भ्रूमध्येति बिन्दुसंज्ञकं तुर्यस्थाने सर्वेति कथ्यते ।

अजमुखमजमाकाशं अविद्यमानं जन्मायस्मात्तस्मिन्स्थाने ध्वज? इति ॥

p. 198b) इति षोडशाधारम्? ॥

अथ त्रिलक्षम् ॥

अन्तर्लक्षं बहिर्लक्षं लक्षं चोभयवर्जितम्।
बाह्यल *? प्रयोगेन प्रतिमादि *? चालनम्।

सर्वावयवसंयुक्तं सर्वतन्त्रार्थसंयुतम्।
शा * * *? समासाद्य चित्तचैतन्य योगतः।
पराप्रवर्तते दृष्टिरन्तर्लक्षस्य दर्शनम्।
बहिरन्तर्बहि कृत्वा स्वस्थानस्थस्य या स्थितिः।
तल्लक्षं मध्यमं? प्रोक्तं न किञ्चिद्यत्र लक्षयेत्।
लक्ष त्रय विनिर्मुक्तं वा *? यातीतमव्ययम्।
सर्वा?वस्थं न सावस्थं परं तल्लक्षमुच्यते॥

व्योमपञ्चकमिति॥

प्रथमं तु ब्रह्मव्योमविष्णुव्योम द्वितीयकम्।
p. 199a) रुद्रव्योम तृतीयं तु चेश्वराख्यं चतुर्थकम्।
सदाशिवं पञ्चमं तु ह्येतद्वै व्योमपञ्चकम्॥

नाद्यादि हृदयं यावद्ब्रह्मज्ञानं विदुः प्रिये।
जाग्रद्वृत्युनुभावेन पार्थिवं तत्वमुत्तमम्॥ १।

हृदयात्कण्ठसंस्थानं विष्णुस्थानं प्रकीर्तितम् ॥ २ ॥

कण्ठा तु यावद्भ्रूमध्यं रुद्रस्थानं तु तद्विदुः ॥ ३ ॥

सुषुप्तावस्थया संस्थं तेजस्तत्त्वं तु संस्थितम् ।
बिन्दौ तु यावत्तल्वन्तमीश्वराख्यमनुक्रमम् ॥ ४ ॥

तुर्यावस्थाश्रितं ज्ञेयं वायुतत्वं समाश्रितम् ।
ताल्वन्ताद् द्वादशान्तं तु स्थानं सदाशिवं स्थितम् ॥ ५ ॥

तुर्यातीतपदावस्थं नभ

पर्त् ओफ़् थे तेक्स्त् इस् मिस्सिन्ग् हेरे

* * मि चित्पतिं होमं बिन्दुनादेन्दु संयुतम् ।
p. 199b) षष्ठम्बा समायुक्तं स्वच्छदं विगता मयम् ॥ ३ ॥

नमः स्वाहा स्वधा वौषट् स्ववषट्कङ्समन्वितम् ।

दीर्घस्वरसमायुक्तं हंसं हंसाङ्गभूषितम् ॥ ४ ॥

शक्तिमन्त्रसमायुक्तं परानन्दपदं स्थितम् ।
व्यापिनी सहितं देवं सृष्टिकृद्व्यापिनीश्वरम् ॥ ५ ॥

षट्त्रिंशत्तत्त्वमध्यस्थं परमं मन्त्रविग्रहम् ।
मन्त्रातीतं परं शान्तमुन्मन्यन्तं निरामयम् ॥ ६ ॥

ज्योतिषांधामधामाख्यं चिदानन्दप्रकाशकम् ।
मतिज्ञनैकगम्यं तमितरेषामगोचरम् ॥ ७ ॥

परमात्मापदातीतं स * * *? विवर्जितम् ।
शिवं सर्वगतं शून्यं स बाह्याभ्यन्तरे स्थितम् ॥ ८ ॥

फ़ोलि २०० - २३९ इस् मिस्सिन्ग् सेमिन्ग्ल्य् दु तो नुम्बेरिन्ग् मिस्तके

p. 240a) नित्योदितं महातेजं सूर्यहंसं शिवात्मकम् ।
राशिचक्रगतं देवमयनद्वयसंस्थितम् ॥ ९ ॥

उदरे दक्षिणे चन्द्रं दक्षिणो चोत्तरं रविम् ।
पक्षद्वयसमायुक्तं सर्वभूतेष्ववस्थितम् ॥ १० ॥

योगेश्वरं योगगम्यं योगातीतं निरामयम् ।
षट्पथं षट्पथातीतं शून्यं षट्कसमन्वितम् ॥ ११ ॥

हृत्कुशेशयमध्यस्थं ग्राह्यग्राहकगूहितम् ।
षट्पथं षडभावाख्यं चित्पतिं चेतनात्मकम् ॥ १२ ॥

खरूपं खचरं खस्थं खपरं खपतिं खगम् ।
कूला * * *? लाधारमकुलं कुलना * *? म् ॥ १३ ॥

p. 240b) स एव बन्धुर्माता च पिता च ससुहृत्?गुरुः ।
यं सर्वस्वमिति प्राहुस्तं वन्दे परमेश्वरम् ॥ १४ ॥

यस्य? सर्वज्ञता ज्ञा?प्ति दधि बोधस्वतन्त्रता ।
अ * * * * * क्तिश्च तस्मै पूर्णात्मने नमः ॥ १५ ॥

सर्वेन्द्रिय परित्यागाद् व्याप्तिर्यस्य विलक्षणा ।

षाड्गुण्यगुणसंयुक्ता तस्मै व्याप्तात्मने नमः ॥ १६ ॥

ज्ञानादि गुणसंयुक्तं वर्जितं प्राकृतं गुणैः ।
क्षयोत्पत्ति न यस्यस्थस्तस्मै नित्यात्मने नमः ॥ १७ ॥

यस्य मूलं न चाग्रं च न दिशो विदिशस्तथा ।
न शब्दो न तथाकाशस्तस्मै शून्यात्मने नमः ॥ १८ ॥

वा? पश्यत्यक्षिरहितः स्वादं बिन्दत्य जिह्वकः ।
p. 241a) अकर्णः शृणुते यश्च तस्मै चित्रात्मने नमः ॥ १९ ॥

* * * * * * * * * * * * * * * * । 
विश्वं कारणनिर्हीनस्तस्मै स्त्रष्टात्मने नमः ॥ २० ॥

यथा कालो ह्यसूत्रोपि कुरुते कार्यसाधनम् ।
तथैव कर्ता यो नित्यं तस्मैकर्त्रात्मने नमः ॥ २१ ॥

यो नित्यं वसते देहे विश्वमध्ये व्यवस्थितः ।
स्थैर्य रूपं समासाद्य तस्मै स्थित्यात्मने नमः ॥ २२ ॥

यस्य विश्वमिदं हंसर्कालमेकं ब्रुवन्तितम् ।
संहरेत्केवलात्मा च तस्मै कालात्मने नमः ॥ २३ ॥

य एको बहुधा रूपैर्वसत्यस्मिञ्चराचरे ।
संहृत्येदं पुनश्चैकं तस्मै मायात्मने नमः ॥ २४ ॥

विश्वं ज्ञानकराग्रेण धृतं तत्त्वसमन्वितम् ।
p. 241b) लीलया भ्राम्यते येन तस्मै वीरात्मने नमः ॥ २५ ॥

ब्रह्माण्डस्य यथामध्ये दृश्यते सर्षपा कणः ।
ब्रह्माण्डं च तथा यस्य तस्मै स्थूलात्मने नमः ॥ २६ ॥

बालाग्र भागः शतशः कल्पितोथ सहस्रशः ।
यस्यमानमिदं प्रोक्तं तस्मै सूक्ष्मात्मने नमः ॥ २७ ॥

महास्थानं शरीरे यस्सर्वसत्वैरधिष्ठितः ।
सत्वपञ्जरनिर्माणं तस्मै क्षेत्रात्मने नमः ॥ २८ ॥

क्षेत्रज्ञो ज्योतिरात्मा च हृन्मध्ये तु व्यवस्थितः ।
यः शुचिर्निर्मलोहंसस्तस्मै क्षे?त्रात्मने नमः ॥ २९ ॥

मह *? स्तमसः पारे उन्मन्यात्मानमुज्ज्वलम् ।
p. 242a) यं ज्ञात्वा न पुनर्जन्म तस्मै ज्ञानात्मने नमः ॥ ३० ॥

ज्ञानेन प्राप्यते यस्मात् कार्यं वै कारणोत्तरम् ।
यावत्सर्वगता तृप्तिस्तस्मै ज्ञानात्मने नमः ॥ ३१ ॥

देहमध्ये स्थितो यच्च नाभिचक्रे परिभ्रमन् ।
चित्प्रकाशो हृदिव्यापी तस्मैजीवात्मने नमः ॥ ३२ ॥

इडा गङ्गा महापुण्या सुषुम्णा यमुना तथा ।
तयोः संक्रीडते यश्च तस्मैहंसात्मने नमः ॥ ३३ ॥

यः शुद्धः शुक्लपक्षे तु शुक्लगङ्गाजले स्थितः ।
शुक्लकर्मरतो नित्यं तस्मै शुक्लात्मने नमः ॥ ३४ ॥

यः कृष्णः कृष्णपक्षे तु संस्थितो यमुना जले ।

क्रूरकर्मरतो नित्यं? तस्मै कृष्णात्मने नमः ॥ ३५ ॥

p. 242b) रे?चकेन वहेन्नित्यं षड्रसा स्वादलम्पटः ।
यस्तेजस्तपते नित्यं तस्मै सूर्यात्मने नमः ॥ ३६ ॥

पूरके निवसेद्यश्च निशायाममृतात्मकः ।
आप्यायन करो नित्यं तस्मै सोमात्मने नमः ॥ ३७ ॥

यस्तृप्तस्तर्पयेद्देवान्देवयानेनसंस्थितान् ।
पितृणां पितृस्थानेन तस्मै वह्न्यात्मने नमः ॥ ३८ ॥

सूर्यस्य ग्रहणे यश्च विषुवेन च संयुतम् ।
इडापिङ्गलयोर्मध्ये संलीनो हृदयान्तरे ॥ ३९ ॥

यत्पुण्यं हव्यकव्येन तस्मै तीर्थात्मने नमः ॥ ४० ॥

चन्द्रोदये चन्द्रगत्या इडांशे पिङ्गलार्पितम् ।
यः श्रेयः सर्वकार्याणां तस्मै लग्नात्मने नमः ॥ ४१ ॥

द्वादशान्ते शुभे क्षेत्रे शिवराहुसमन्वितम् ।
p. 243a) चित्सूर्यग्रहणं यत्र तस्मै स्थानात्मने नमः ॥ ४२ ॥

यत्र चन्द्रो ह्यपानाख्यो यत्र चास्तङ्गतो रविः ।
प्राणापानक्षयो यत्र तस्मै मन्त्रात्मने नमः ॥ ४३ ॥

ब्रह्मार्पणविधानेन दिनरात्रि परिक्षयात् ।
पूज्यते योगिभि यश्च तस्मै पूज्यात्मने नमः ॥ ४४ ॥

स्वयमुच्चरते यश्च स्वदेहावस्थितः शिवः ।
देहान्ते मोक्षदो यश्च तस्मै जप्यात्मने नमः ॥ ४५ ॥

चित्कृषाणुर्मनो होता अमृताख्या पराहुतिः ।
यत्र मन्त्रो हकाराख्यस्तस्मै होतात्मने नमः ॥ ४६ ॥

सर्वदेवस्थितो देवः सप्तार्चिः परमेश्वरः ।
यश्चान्तः षड्रसाहारस्तस्मै भोक्तात्मने नमः ॥ ४७ ॥

p. 243b) यो नित्यं भासयेत् सम्यक् मयूखैर्महाद्युतिः ।

स बाह्याभ्यन्तरं सर्वं तस्मै भासात्मने नमः ॥ ४८ ॥

यो व्योमपरमं ब्रह्म चित्प्रकाशं निरामयम् ।
भूताकाशं परित्यज्य तस्मै व्योमात्मने नमः ॥ ४९ ॥

योविनिद्रा महाबोधा युञ्जानाः संयतेन्द्रियाः ।
पश्यन्ति ज्योतिषां ज्योतिस्तस्मै योगात्मने नमः ॥ ५० ॥

पूरके यो बहिर्ब्रह्मा कुम्भके विष्णुरेव च ।
रेचके यो वसेद्रुद्रस्तस्मै प्राणात्मने नमः ॥ ५१ ॥

ब्रह्मत्वे सृजते विश्वं विष्णुत्वे स्थिति कृश्चयः ।
रुद्रत्वे संहरत्येव तस्मै स्थित्यात्मने नमः ॥ ५२ ॥

मात्रा पञ्चकसंयुक्तं प्रसादे पञ्चदैवतम् ।
p. 244a) मनुनात्रा यते येन तस्मै मन्त्रात्मने नमः ॥ ५३ ॥

स्वयम्बश्चरते यश्च स्वल्पवृत्ति हलाकृतिः ।
अनाहत परः शान्तस्तस्मै वर्णात्मने नमः ॥ ५४ ॥

स्त्रग्विग्रथितो येन प्राकृतो भुमिसञ्चयः।
धर्माधर्म मयैः पशैस्तस्मै वन्धात्मने नमः॥ ५५॥

सर्वाद्धनपथातीत मुन्मन्यते व्यवस्थितम्।
सर्वाख्येयं परंशान्तं तस्मै मोक्षात्मने नमः॥ ५६॥

यस्य पीठमिदं विश्वं मूर्तिर्व्योमात्मिका भवेत्।
लीयन्ते सर्व तत्वानि तस्मै लिङ्गात्मने नमः॥ ५७॥

उन्मन्यन्तं परं शुद्धं समनावस्तु निष्कलम्।
व्यापिन्या सकलं यश्च तस्मै मुक्त्यात्मने नमः॥ ५८॥

p. 244b) चलाचलेषु सर्वेषु विश्वमध्ये व्यवस्थितः।
मायांबाद्धास्थितो यश्च तस्मै सर्वात्मने नमः॥ ५९॥

स्तवराजसमं दिव्यं ज्ञानाञ्जनमनश्वरम्।
अज्ञानतिमिरान्धस्य उन्मीलनकरं स्मृतम्॥ ६०॥

नराणां क्षीणपुण्यानां सद्योधर्मविवर्धनम् ।
परं शुद्धं पवित्रं च सर्वदुःखनिवारणम् ॥ ६१ ॥

अध्यात्मगुणसंपूर्णं ज्ञात्वा यः पठते नरः ।
सर्वपापविशुद्धात्मा स गच्छेच्छाश्वतं पदम् ॥ ६२ ॥

# .. GorakShashatakam 2 ..

# ॥ गोरक्षशतकम् २ ॥

## Sanskrit Document Information

Text title : gorakShashatakam 2

File name : gorakShashatakam2.itx

Category : shataka

Location : doc_yoga

Language : Sanskrit

Subject : philosophy/hinduism/religion

Proofread by : DPD

Description-comments : From Briggs 1938 http://yogaclassics.org/

Latest update : April 5, 2013

Send corrections to : Sanskrit@cheerful.com

Site access : http://sanskritdocuments.org



May 3, 2017

*sanskritdocuments.org*

# ॥ गोरक्षशतकम् २ ॥

श्रीगुरुं परमानन्दं वन्दे स्वानन्दविग्रहम् ।
यस्य सन्निध्यमात्रेण चिदानन्दायते तनुः ॥ १॥

अन्तर्निश्चलितात्मदीपकलिकास्वाधारबन्धादिभिः
यो योगी युगकल्पकालकलनात् त्वं जजेगीयते ।
ज्ञानामोदमहोदधिः समभवद्यत्रादिनाथः स्वयं
व्यक्ताव्यक्तगुणाधिकं तमनिशं श्रीमीननाथं भजे ॥ २॥

नमस्कृत्य गुरुं भक्त्या गोरक्षो ज्ञानमुत्तमम् ।
अभीष्टं योगिनां ब्रूते परमानन्दकारकम् ॥ ३॥

गोरक्षः शतकं वक्ति योगिनां हितकाम्यया ।
ध्रुवं यस्यावबोधेन जायते परमं पदम् ॥ ४॥

एतद्विमुक्तिसोपानमेतत् कालस्य वञ्चनम् ।
यद्व्यावृत्तं मनो मोहाद् आसक्तं परमात्मनि ॥ ५॥

द्विजसेवितशाखस्य श्रुतिकल्पतरोः फलम् ।
शमनं भवतापस्य योगं भजति सज्जनः ॥ ६॥

आसनं प्राणसंयामः प्रत्याहारोऽथ धारणा ।
ध्यानं समाधिरेतानि योगाङ्गानि भवन्ति षट् ॥ ७॥

आसनानि तु तावन्ति यावत्यो जीवजातयः ।
एतेषामखिलान्भेदान्विजानाति महेश्वरः ॥ ८॥

चतुराशीतिलक्षाणां एकमेकमुदाहृतम् ।
ततः शिवेन पीठानां षोडेशानं शतं कृतम् ॥ ९॥

आसनेभ्यः समस्तेभ्यो द्वयमेव विशिष्यते ।
एकं सिद्धासनं प्रोक्तं द्वितीयं कमलासनम् ॥ १०॥

योनिस्थानकमङ्घ्रिमूलघटितं कृत्वा दृढं विन्यसे
न्मेढ्रे पादमथैकमेव नियतं कृत्वा समं विग्रहम् ।
स्थाणुः संयमितेन्द्रियोऽचलदृशा पश्यन् भ्रुवोरन्तरम्
एतन् मोक्षकवाटभेदजनकं सिद्धासनं प्रोच्यते ॥ ११॥

वामोरूपरि दक्षिणं हि चरणं संस्थाप्य वामं तथा
दक्षोरूपरि पश्चिमेन विधिना धृत्वा कराभ्यां दृढम् ।
अङ्गुष्ठौ हृदये निधाय चिबुकं नासाग्रमालोकये
देतद्व्याधिविकारहारि यमिनां पद्मासनं प्रोच्यते ॥ १२॥

षट्चक्रं षोडशाधारं त्रिलक्षं व्योमपञ्चकम् ।
स्वदेहे ये न जानन्ति कथं सिध्यन्ति योगिनः ॥ १३॥

एकस्तम्भं नवद्वारं गृहं पञ्चाधिदैवतम् ।
स्वदेहं ये न जानन्ति कथं सिध्यन्ति योगिनः ॥ १४॥

चतुर्दलं स्यादाधारः स्वाधिष्ठानं च षट्दलम् ।
नाभौ दशदलं पद्मं सूर्यसङ्ख्यदलं हृदि ॥ १५॥

कण्ठे स्यात् षोडशदलं भ्रूमध्ये द्विदलं तथा ।
सहस्रदलमाख्यातं ब्रह्मरन्ध्रे महापथे ॥ १६॥

आधारः प्रथमं चक्रं स्वाधिष्ठानं द्वितीयकम् ।
योनिस्थानं द्वयोर्मध्ये कामरूपं निगद्यते ॥ १७॥

आधाराख्यं गुदस्थानं पङ्कजं च चतुर्दलम् ।
तन्मध्ये प्रोच्यते योनिः कामाक्षा सिद्धवन्दिता ॥ १८॥

योनिमध्ये महालिङ्गं पश्चिमाभिमुखं स्थितम् ।
मस्तके मणिवद्बिम्बं यो जानाति स योगवित् ॥ १९॥

तप्तचामीकराभासं तडिल्लेखेव विस्फुरत् ।
त्रिकोणं तत्पुरं वह्नेरधोमेढ्रात् प्रतिष्ठितम् ॥ २०॥

यत्समाधौ परं ज्योतिरनन्तं विश्वतोमुखम् ।
तस्मिन् दृष्टे महायोगे यातायातं न विद्यते ॥ २१॥

स्वशब्देन भवेत् प्राणः स्वाधिष्ठानं तदाश्रयः ।
स्वाधिष्ठानात् पदादस्मान्मेढ्रमेवाभिधीयते ॥ २२॥

तन्तुना मणिवत् प्रोतो यत्र कन्दः सुषुम्णया ।
तन्नाभिमण्डलं चक्रं प्रोच्यते मणिपूरकम् ॥ २३॥

द्वादशारे महाचक्रे पुण्यपापविवर्जिते ।

तावज् जीवो भ्रमत्येव यावत् तत्त्वं न विन्दति ॥ २४॥

ऊर्ध्वं मेढ्राद् अधो नाभेः कन्दयोनिः खगाण्डवत् ।
तत्र नाड्यः समुत्पन्नाः सहस्राणां द्विसप्ततिः ॥ २५॥

तेषु नाडिसहस्रेषु द्विसप्ततिरुदाहृताः ।
प्रधानं प्राणवाहिन्यो भूयस्तत्र दश स्मृताः ॥ २६॥

इडा च पिङ्गला चैव सुषुम्णा च तृतीयका ।
गान्धारी हस्तिजिह्वा च पूषा चैव यशस्विनी ॥ २७॥

अलम्बुषा कुहूश् चैव शङ्खिनी दशमी स्मृता ।
एतन् नाडिमयं चक्रं ज्ञातव्यं योगिभिः सदा ॥ २८॥

इडा वामे स्थिता भागे पिङ्गला दक्षिणे तथा ।
सुषुम्णा मध्यदेशे तु गान्धारी वामचक्षुषि ॥ २९॥

दक्षिणे हस्तिजिह्वा च पूषा कर्णे च दक्षिणे ।
यशस्विनी वामकर्णे चासने वाप्यलम्बुषा ॥ ३०॥

कुहूश्च लिङ्गदेशे तु मूलस्थाने च शङ्खिनी ।
एवं द्वारमुपाश्रित्य तिष्ठन्ति दशनाडिकाः ॥ ३१॥

इडापिङ्गलासुषुम्णा च तिस्रो नाड्युदाहृताः ।
सततं प्राणवाहिन्यः सोमसूर्याग्निदेवताः ॥ ३२॥

प्राणोऽपानः समानश् चोदानो व्यानौ च वायवः ।
नागः कूर्मोऽथ कृकरो देवदत्तो धनञ्जयः ॥ ३३॥

हृदि प्राणो वसेन् नित्यं अपानो गुदमण्डले ।
समानो नाभिदेशे स्यादुदानः कण्ठमध्यगः ॥ ३४॥

उद्गारे नागाख्यातः कूर्म उन्मीलने स्मृतः ।
कृकरः क्षुतकृज्ज्ञेयो देवदत्तो विजृम्भणे ॥ ३५॥

न जहाति मृतं चापि सर्वव्यापि धनञ्जयः ।
एते सर्वासु नाडीषु भ्रमन्ते जीवरूपिणः ॥ ३६॥

आक्षिप्तो भुजदण्डेन यथोच्चलति कन्दुकः ।
प्राणापानसमाक्षिप्तस्तथा जीवो न तिष्ठति ॥ ३८॥

प्राणापानवशो जीवो ह्यधश् चोर्ध्वं च धावति ।
वामदक्षिणमार्गेण चञ्चलत्वान् न दृश्यते ॥ ३९॥

रज्जुबद्धो यथा श्येनो गतोऽप्याकृष्यते ।
गुणबद्धस्तथा जीवः प्राणापानेन कृष्यते ॥ ४०॥

अपानः कर्षति प्राणः प्राणोऽपानं च कर्षति ।
ऊर्ध्वाधः संस्थितावेतौ संयोजयति योगवित् ॥ ४१॥

हकारेण बहिर्याति सकारेण विशेत्पुनः ।
हंसहंसेत्यमुम मन्त्रं जीवो जपति सर्वदा ॥ ४२॥

षट्शतानित्वहोरात्रे सहस्राण्येकविंशतिः ।
एतत्सङ्ख्यान्वितं मन्त्र जीवो जपति सर्वदा ॥ ४३॥

अजपा नाम गायत्री योगिनां मोक्षदायिनी ।
अस्याः सङ्कल्पमात्रेण सर्वपापैः प्रमुच्यते ॥ ४४॥

अनया सदृशी विद्या अनया सदृशो जपः ।
अनया सदृशं ज्ञानं न भूतं न भविष्यति ॥ ४५॥

कुन्दलिन्याः समुद्भूता गायत्री प्राणधारिणी ।
प्राणविद्या महाविद्या यस्तां वेत्ति स योगवित् ॥ ४६॥

कन्दोर्ध्वं कुण्डली शक्तिरष्टधा कुण्डलाकृति ।
ब्रह्मद्वारमुखं नित्यं मुखेनाच्छाद्य तिष्ठति ॥ ४७॥

येन द्वारेण गन्तव्यं ब्रह्मस्थानमनामयम् ।
मुखेनाच्छाद्य तद्द्वारं प्रसुप्ता परमेश्वरी ॥ ४८॥

प्रबुद्धा वह्नियोगेन मनसा मारुता हता ।
सूचीवद् गुणमादाय व्रजत्यूर्ध्वं सुषुम्णया ॥ ४९॥

प्रस्फुरद्भुजगाकारा पद्मतन्तुनिभा शुभा ।
प्रबुद्धा वह्नियोगेन व्रजति ऊर्ध्वं सुषुम्णया ॥ ५०॥

उद्घटयेत्कपातं तु यथा कुञ्चिकया हठात् ।
कुण्डलिन्या तथा योगी मोक्षद्वारं प्रभेदयेत् ॥ ५१॥

कृत्वा सम्पुटितौ करौ दृढतरं बद्ध्वातु पद्मासनं
गाढं वक्षसि सन्निधाय चिबुकं ध्यात्वा तत्प्रेक्षितम् ।
वारं वारमपानमूर्ध्वमनिलं प्रोच्चारयेत्पूरितं
मुञ्चन्प्राणमुपैति बोधमतुलं शक्तिप्रबोधान्नरः ॥ ५२॥

अङ्गानां मर्दनं कुर्याच्छ्रमजातेन वारिणा ।
कट्वाम्ललवणत्यागी क्षीरभोजनमाचरेत् ॥ ५३॥

ब्रह्मचारी मिताहारी त्यागी योगपरायणः ।
अब्दादुर्ध्वं भवेत्सिद्धो नात्र कार्या विचारणा ॥ ५४॥

सुस्निग्धं मधुराहारं चतुर्थांशविवर्जितम् ।
भुज्यते सुरसम्प्रीत्यै मिताहारः स उच्यते ॥ ५५॥

कन्दोर्ध्वं कुण्डली शक्तिरष्टधा कुण्डलाकृतिः ।
बन्धनाय च मूढानां योगिनां मोक्षदा स्मृता ॥ ५६॥

महामुद्रां नमोमुद्रामुड्डियानं जलन्धरम् ।
मूलबन्धं च यो वेत्ति स योगी सिद्धिभाजनम् ॥ ५७॥

शोधनं नाडिजालस्य चालनं चन्द्रसूर्ययोः ।
रसानां शोषणं चैव महामुद्राभिधीयते ॥ ५८॥

वक्षोन्यस्तहनुर्निपीड्य सुचिरं योनिं च वामाङ्घ्रिणा
हस्ताभ्यामवधारितं प्रसरितं पादं तथा दक्षिणम् ।
आपूर्य श्वसनेन कुक्षियुगलं बद्ध्वा शनै रेचयेद्
एषा पातकनाशिनी सुमहती मुद्रा नृणां प्रोच्यते ॥ ५९॥

चन्द्राङ्गेन समभ्यस्य सूर्याङ्गेनाभ्यसेत् पुनः ।
यावत् तुल्या भवेत्सङ्ख्या ततो मुद्रां विसर्जयेत् ॥ ६०॥

न हि पथ्यमपथ्यं वा रसाः सर्वेऽपि नीरसाः ।
अपि मुक्तं विषं घोरं पीयूषमपि जीर्यते ॥ ६१॥

क्षयकुष्ठगुदावर्तगुल्माजीर्णपुरोगमाः ।
रोगास्तस्य क्षयं यान्ति महामुद्रां तु योऽभ्यसेत् ॥ ६२॥

कथितेयं महामुद्रा महासिद्धिकरा नृणाम् ।

गोपनीया प्रयत्नेन न देया यस्य कस्यचित् ॥ ६३॥

कपालकुहरे जिह्वा प्रविष्टा विपरीतगा ।
भ्रुवोरन्तर्गता दृष्टिर्मुद्रा भवति खेचरी ॥ ६४॥

न रोगो मरणं तन्द्रा न निद्रा न क्षुधा तृषा ।
न च मूर्च्छा भवेत्तस्य यो मुद्रां वेत्ति खेचरीम् ॥ ६५॥

पीड्यते न स रोगेण लिप्यते न च कर्मणा ।
बाध्यते न स कालेन यो मुद्रां वेत्ति खेचरीम् ॥ ६६॥

चित्तं चरति खे यस्माज्जिह्वा चरति खे गता ।
तेनैषा खेचरी नाम मुद्रा सिद्धैर्निरूपिता ॥ ६७॥

बिन्दुमूलं शरीरं तु शिरास्तत्र प्रतिष्ठिताः ।
भावयन्ति शरीरं या आपादतलमस्तकम् ॥ ६८॥

खेचर्या मुद्रितं येन विवरं लम्बिकोर्ध्वतः ।
न तस्य क्षरते बिन्दुः कामिन्यालिङ्गितस्य च ॥ ६९॥

यावद्बिन्दुः स्थितो देहे तावत्कालभयं कुतः ।
यावद्बद्धा नभोमुद्रा तावद्बिन्दुर्न गच्छति ॥ ७०॥

चलितोऽपि यदा बिन्दुः सम्प्राप्तश्च हुताशनम् ।
व्रजत्यूर्ध्वं हृतः शक्त्या निरुद्धो योनिमुद्रया ॥ ७१॥

स पुनर्द्विविधो बिन्दुः पण्डुरो लोहितस्तथा ।
पाण्डुरं शुक्रमित्याहुर्लोहितं तु महाराजः ॥ ७२॥

सिन्दूरद्रवसङ्काशं रविस्थाने स्थितं रजः ।
शशिस्थाने स्थितो बिन्दुस्तयोरैक्यं सुदुर्लभम् ॥ ७३॥

बिन्दुः शिवो रजः शक्तिर्बिन्दुमिन्दू रजो रविः ।
उभयोः सङ्गमादेव प्राप्यते परमं पदम् ॥ ७४॥

वायुना शक्तिचारेण प्रेरितं तु महारजः ।
बिन्दुनैति सहैकत्वं भवेद्दिव्यं वपुस्तदा ॥ ७५॥

शुक्रं चन्द्रेण संयुक्तं रजः सूर्येण संयुतम् ।
तयोः समरसैकत्वं योजानाति स योगवित् ॥ ७६॥

उड्डीनं कुरुते यस्मादविश्रान्तं महाखगः ।
उड्डीयानं तदेव स्यात्तव बन्धोऽभिधीयते ॥ ७७॥

उदरात्पश्चिमे भागे ह्यधो नाभेर्निगद्यते ।
उड्डीयानस्य बन्धोऽयं तत्र बन्धो विधीयते ॥ ७८॥

बध्नाति हि सिराजालमधोगामि शिरोजलम् ।
ततो जालन्धरो बन्धः कण्ठदुःखौघनाशनः ॥ ७९॥

जालन्धरे कृते बन्धे कण्ठसंकोचलक्षणे ।
पीयूषं न पतत्यग्नौ न च वायुः प्रकुप्यति ॥ ८०॥

पार्ष्णिभागेन सम्पीड्य योनिमाकुञ्चयेद्गुदम् ।
अपानमूर्ध्वमाकृष्य मूलबन्धोऽभिधीयते ॥ ८१॥

अपानप्राणयोरैक्यात् क्षयान्मूत्रपुरीषयोः ।
युवा भवति वृद्धोऽपि सततं मूलबन्धनात् ॥ ८२॥

पद्मासनं समारुह्य समकायशिरोधरः ।
नासाग्रदृष्टिरेकान्ते जपेदोङ्कारमव्ययम् ॥ ८३॥

भूर्भुवः स्वरिमे लोकाः सोमसूर्याग्निदेवताः ।
यस्या मात्रासु तिष्ठन्ति तत्परं ज्योतिरोमिति ॥ ८४॥

त्रयःकालास्त्रयो वेदास्त्रयो लोकास्त्रयः स्वेराः ।
त्रयोदेवाः स्थिता यत्र तत्परं ज्योतिरोमिति ॥ ८५॥

क्रिया चेच्छा तथा ज्ञानाब्राह्मीरौद्रीश्च वैष्णवी ।
त्रिधाशक्तिः स्थिता यत्र तत्परं ज्योतिरोमिति ॥ ८६॥

आकाराश्च तथोकारोमकारो बिन्दुसंज्ञकः ।
तिस्रोमात्राः स्थिता यत्र तत्परं ज्योतिरोमिति ॥ ८७॥

वचसा तज्ञयेद्बीजं वपुषा तत्समभ्यसेत् ।
मनसा तत्स्मरेन्नित्यं तत्परं ज्योतिरोमिति ॥ ८८॥

शुचिर्वाप्यशुचिर्वापि यो जपेत्प्रणवं सदा ।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥ ८९॥

चले वाते चलो बिन्दुर्निश्चले निश्चलो भवेत् ।
योगी स्थाणुत्वमाप्नोति ततो वायुं निरोधयेत् ॥ ९०॥

यावद्वायुः स्थितो देहे तावज्जीवनमुच्यते ।
मरणं तस्य निष्क्रान्तिस्ततो वायुं निरोधयेत् ॥ ९१॥

यावद्बद्धो मरुद्देहे यावच्चित्तं निराकुलम् ।
यावद्दृष्टिर्भ्रुवोर्मध्ये तावत्कालभयं कुतः ॥ ९२॥

अतः कालभयाद् ब्रह्मा प्राणायामपरायणः ।
योगिनो मुनयश्चैव ततो वायुं निरोधयेत् ॥ ९३॥

षट्त्रिंशदङ्गुलोहंसः प्रयाणं कुरुते बहिः ।
वामदक्षिणमार्गेण ततः प्राणोऽभिधीयते ॥ ९४॥

शुद्धिमेति यदा सर्वं नाडीचक्रं मलाकुलम् ।
तदैव जायते योगी प्राणसंग्रहणे क्षमः ॥ ९५॥

बद्धपद्मासनो योगी प्राणं चन्द्रेण पूरयेत् ।
धारयित्वा यथाशक्ति भूयः सूर्येण रेचयेत् ॥ ९६॥

अमृतं दधिसङ्काशं गोक्षीररजतोपमम् ।
ध्यात्वा चन्द्रमसो बिम्बं प्राणायामी सुखी भवेत् ॥ ९७॥

दक्षिणो श्वासमाकृष्य पूरयेदुदरं शनैः ।
कुम्भयित्वा विधानेन पुरश्चन्द्रेण रेचयेत् ॥ ९८॥

प्रज्वलज्ज्वलनज्वालापुञ्जमादित्यमण्डलम् ।
ध्यात्वा नाभिस्थितं योगी प्राणायामे सुखी भवेत् ॥ ९९॥

प्राणं चोदिडया पिबेन्परिमितं भूयोऽन्यया रेचयेत्
पीत्वा पिङ्गलया समीरणमथो बद्ध्वा त्यजेद्वामया ।
सूर्यचन्द्रमसोरनेन विधिना बिम्बद्वयं ध्यायतः
शुद्धा नाडिगणा भवन्ति यमिनो मासत्रयादूर्ध्वतः ॥ १००॥

यथेष्टं धारणं वायोरनलस्य प्रदीपनम् ।
नादाभिव्यक्तिरारोग्यं जायते नाडिशोधनात् ॥ १०१॥

॥ इति श्री गोरक्षनाथप्रणीतः गोरक्षशतकं सम्पूर्णम् ॥

षण्मासान् भूमिकामस्तु स जप्त्वा लभते महीम्।
राजा शत्रुविनाशाय जपेन्मासाष्टकं पुनः ॥३१॥
रात्रौ वारत्रयञ्चैव नाशयत्येव शास्त्रवान्।
जपेन्मासत्रयं रात्रौ राजानं वशमानयेत् ॥३२॥
धनार्थी च सुतार्थी च दारार्थी यस्तु मानवः।
पठेद्वारत्रयं यद्वा वारमेकं तथा निशि ॥३३॥
धनं पुत्रांस्तथा दारान् प्राप्नुयान्नात्र संशयः।
ध्यानं वक्ष्यामि देवस्य यथा ध्यात्वा पठेन्नरः ॥३४॥
शुद्धस्फटिकसकाशं सहस्रादित्यवर्चसम्।
अष्टबाहुं त्रिनयनं चतुर्बाहुं द्विबाहुकम् ॥३५॥
भुजङ्गमेखलं देवमग्निवर्णं शिरोरुहम्।
दिगम्बरं कुमारीशं बटुकाख्यं महाबलम् ॥३६॥
खट्वाङ्गमसिपाशञ्च शूलञ्चैव तथा पुनः।
डमरुञ्च कपालञ्च वरदं भुजगं तथा ॥३७॥
नीलजीमूतसङ्काशं नीलाञ्जनचयप्रभम्।
दंष्ट्राकरालवदनं नूपुराङ्गदसङ्कुलम् ॥३८॥
आत्मवर्णसमोपेतसारमेयसमन्वितम्।
ध्यात्वा जपेत्सुसंहृष्टः सर्वान् कामानवाप्नुयात् ॥३९॥
ॐ करकलितकपालं कुण्डलीदण्डपाणि-
स्तरुणतिमिरनीलो व्यालयज्ञोपवीती।
क्रतुसमयसपर्याः विघ्नविच्छेदहर्त्ता
जयति बटुकनाथः सिद्धिदः साधकानाम् ॥४०॥

**इति विश्वसारे आपदुद्धारकल्पे बटुकभैरवस्तवराजः समाप्तः**

## अथ योगप्रक्रिया

(नियम है कि योगक्रिया विना गुरु के नहीं करनी चाहिये; अतएव यहाँ अनुवाद करने का कोई प्रयोजन नहीं है)

**गौतमीये—**

**गौतम उवाच**

**देवर्षे योगयुक्तात्मन् योगानुभवदर्शक!।**
**सांख्ययोगविशेषज्ञ कर्मयोगनिषेवक ॥**

विना योगं न सिद्ध्येत्तु कुण्डलीचंक्रमः प्रभो।
मूलपद्मे कुण्डलिनी यावन्निद्रायिता प्रभो!।
तावत् किञ्चिन्न सिद्ध्यन्ते यन्त्रमन्त्रार्चनादिकम्॥
जागर्त्ति यदि सा देवी बहुभिः पुण्यसञ्चयैः।
तदा प्रसादमायान्ति यन्त्रमन्त्रार्चनादयः।
शिववद्विहरेल्लोकेष्वष्टैश्वर्यसमन्वितः।
योगयोगाद्भवेन्मुक्तिर्मन्त्रसिद्धिरखण्डितः॥
सिद्धे मनौ परावाप्तिरिति शास्त्रार्थनिर्णयः।
तस्मात् कार्यं परं योगं कथयस्व मुनीश्वर!।
मुक्तात्मा येन विहरेत् स्वर्गे मर्त्ये रसातले।
जीवन्मुक्तश्च देहान्ते निर्वाणपदमाप्नुयात्॥

नारद उवाच

कथयामि तव स्नेहात् योगयोग्योऽसि गौतम!
संसारोत्तारणे युक्तिर्योगशब्देन कथ्यते।
ऐक्यं जीवात्मनोराहुर्योगं योगविशारदाः।
तव स्नेहात्समाख्याता योगे विघ्नकरास्त्विमे।
कामक्रोधलोभमोहमदमात्सर्यसंज्ञकाः।
योगाङ्गैरेभिर्निर्जित्य योगिनो योगमाप्नुयुः।
यमं नियममासनप्राणायामौ ततः परम्।
प्रत्याहारं धारणाख्यं ध्यानं सार्द्धं समाधिना।
अष्टाङ्गान्याहुरेतानि योगिनो योगसाधने।
अहिंसासत्यमस्त्येयब्रह्मचर्यं दयार्जवम्।
क्षमा धृतिर्मिताहारः शौचञ्चेति यदा दश॥
तपः सन्तोष आस्तिक्यं दानं देवस्य पूजनम्।
सिद्धान्तश्रवणञ्चैव ह्रीमतिश्च जपो हुतम्।
दशैते नियमा प्रोक्ता योगशास्त्रविशारदैः॥
आसननि पूर्वमुक्तानि।
इड़याकर्षयेद्वायुं बाह्यं षोडशमात्रया।
धारयेत्पूरितं योगी चतुःषष्ट्या च मात्रया॥
सुषुम्नामध्यगं सम्यग् द्वात्रिंशन्मात्रया शनैः।
नाड्या पिङ्गलया चैनं रेचयेद्योगवित्तमः॥

प्राणायाममिमं प्राहुर्योगशास्त्रविशारदाः ।
भूयोभूयः क्रमात्तस्य व्यत्ययेन समाचरेत् ॥
मात्रावृद्धिक्रमेणैव सम्यक् द्वादश षोडश ।
प्राणायामो हि द्विविधः सगर्भोऽगर्भ एव च ।
जपध्यानादिभिर्युक्तं सगर्भं तं विदुर्बुधाः ॥
तदपेतं विगर्भञ्च प्राणायामं परे विदुः ।
क्रमादभ्यसतः पुंसो देहे स्वेदोद्गमोऽधमः ।
मध्यमः कम्पसंयुक्तो भूमित्यागः परो मतः ।
उत्तमस्य गुणावाप्तिर्यावच्छीलनमीष्यते ॥
इन्द्रियाणां विचरतां विशेषेषु निरर्गलम् ।
बलादाहरणन्तेभ्यः प्रत्याहारोऽभिधीयते ।
अङ्गुष्ठगुल्फजानूरूसीमनीलिङ्गनाडिषु ।
हृद्ग्रीवाकण्ठदेशेषु लम्बिकायां तथा नसि ॥
भ्रूमध्ये मस्तके मूर्ध्नि द्वादशान्ते यथाविधि ।
धारणं प्राणमरुतो धारणेति निगद्यते ।
समाहितेन मनसा चैतन्यान्तरवर्त्तिना ।
आत्मन्यभीष्टदेवानां ध्यानं ध्यानमिहोच्यते ॥
समत्वभावना नित्यं जीवात्मपरमात्मनोः ।
समाधिमाहुर्मुनयः प्रोक्तमष्टाङ्गलक्षणम् ।
इत्यादिकथितं विप्र कामादिषट्कनाशनम् ।
इदानीं कथये तेऽहं मन्त्रयोगमनुत्तमम् ।
विश्वं शरीरमित्युक्तं पञ्चभूतात्मकं मुने ।
चन्द्रसूर्याग्नितेजोभिर्जीवब्रह्मैक्यरूपकम् ।
तिस्रः कोट्यस्तदर्द्धेन शरीरे नाड़्यो मताः ।
तासु मुख्या दश प्रोक्तास्तासु तिस्रो व्यवस्थिताः ।
प्रधाना मेरुदण्डेऽत्र चन्द्रसूर्याग्निरूपिणी ।
इड़ा यामे स्थिता नाडी शुक्ला तु चन्द्ररूपिणी ।
शक्तिरूपा च सा नाडी साक्षादमृतविग्रहा ।
दाडिमी कुसुमप्रख्या विषाख्या मुनिभिः स्मृताः ।
मेरुमध्ये स्थिता या तु मूलादाब्रह्मविग्रहा ।
सर्वतेजोमयी सा तु सुषुम्ना बहुरूपिणी ।
तस्या मध्ये विचित्राख्या अमृतस्राविणी शुभा ॥

सर्वदेवमयी सा तु योगिनां हृदयङ्गमा ।
विसर्गाद्विन्दुपर्यन्तं व्याप्य तिष्ठति तत्त्वतः ॥
मूलाधारे त्रिकोणाख्ये इच्छाज्ञानक्रियात्मके ।
मध्ये स्वयम्भुलिङ्गन्तु कोटिसूर्यसमप्रभम् ।
तदूर्ध्वे कामबीजन्तु कलशान्तीन्दुनादकम् ।
तदूर्ध्वे तु शिखाकारा कुण्डली ब्रह्मविग्रहा ।
तद्बाह्ये हेमवर्णानां रसवर्णचतुर्दलम् ।
द्रुतहेमसमप्रख्यं पद्मं तत्र विभावयेत् ॥
तदूर्ध्वेऽग्निसमप्रख्यं षड्दलं हीरकप्रभम् ।
वादिलान्तषड़र्णेन युक्ताधिष्ठानसंज्ञकम् ॥
मूलमाधारषट्कानां मूलाधारं ततो विदुः ।
स्वशब्देन परं लिङ्गं स्वाधिष्ठानं ततो विदुः ॥
तदूर्ध्वे नाभिदेशे तु मणिपूरं महत्प्रभम् ।
मेघाभं विद्युदाभञ्च रत्नतेजोमयं ततः ।
तत्पद्मं मणिवद्भिन्नं मणिपूरं तथोच्यते ।
दशभिश्च दलैर्युक्तं डादिफान्ताक्षरान्वितम् ॥
शिवेनाधिष्ठितं पद्मं विश्वलोकैककारणम् ।
तदूर्ध्वेऽनाहतं पद्ममुद्यदादित्यसन्निभम् ॥
कादिठान्ताक्षरैरर्कपत्रैश्च समधिष्ठितम् ।
तन्मध्ये बाणलिङ्गन्तु सूर्यायुतसमप्रभम् ।
शब्दब्रह्ममयं शब्दोऽनाहतस्तत्र दृश्यते ।
तेनानाहतपद्मं तन्मुनिभिः परिकीर्त्तिते ।
आनन्दसदनं तत्तु पुरुषाधिष्ठितं परम् ।
तदूर्ध्वन्तु विशुद्धाख्यं दलं षोडशपङ्कजम् ।
स्वरैः षौडशकैर्युक्तं धूम्रवर्णं महत्प्रभम् ।
विशुद्धिं तनुते यस्माज्जीवस्य हंसलोकनात् ।
विशुद्धिं पद्ममाख्यातं आकाशाख्यं महत्परम् ।
आज्ञाचक्रं तदूर्ध्वे तु आत्मनाधिष्ठितं परम् ।
इक्षवर्णं समायुक्तं द्विदलं शुक्लभास्वरम् ।
आज्ञासंक्रमणं तत्र गुरोराज्ञेति कीर्त्तितम् ।
कैलाशाख्यं तदूर्ध्वे तु बोधनीन्तु तदूर्ध्वतः ।

एवञ्च शिवचक्राणि प्रोक्तानि तव सुव्रते ।
सहस्राराम्बुजं बिन्दुस्थानं तदूर्ध्वमीरितम् ॥
इत्येतत् कथितं सर्वं योगमार्गमनुत्तमम् ।
आदौ पूरकयोगेन स्वाधारे योजयेन्मनः ॥
गुदमेढ्रान्तरे शक्तिं तामाकुञ्च्य प्रबोधयेत् ।
लिङ्गभेदे क्रमेणैव बिन्दुचक्रन्तु प्रापयेत् ॥
शम्भुना तां पराशक्तिमेकीभावं विचिन्तयेत् ।
पाययित्वा च तां शक्तिं कृष्णाख्यां योगसिद्धिदाम् ।
षट्चक्रदेवतास्तत्र सन्तर्प्यामृतधारया ॥
आनयेत्तेन मार्गेण मूलाधारं ततो सुधीः ।
एवमभ्यस्यमानस्य अहन्यहनि मारुतम् ।
जरामरणदुःखाद्यैर्मुच्यते भवबन्धनात् ।
पूर्वोक्तदूषिता मन्त्राः सर्वे सिद्ध्यन्ति नान्यथा ॥
ये गुणाः सन्ति देवस्य पञ्चकृत्यविधायिनः ।
ते गुणाः साधकवरे भवन्त्येव च नान्यथा ।
इत्येतत् कथितं सर्वं वायोर्धारणमुत्तमम् ।
इदानीं धारणाख्यान्तु शृणुष्वावहिता मुने ॥
दिक्कालाद्यनवच्छिन्ने कृष्णे चेतो निधाय च ।
तन्मयो भवति क्षिप्रं जीवब्रह्मैक्ययोजनात् ॥
अथवा समलं चित्तं यदा क्षिप्रं न सिध्यति ।
तदावयवयोगेन योगी योगान् समभ्यसेत् ।
पादाम्भोजे मनो दद्यान्नखकिञ्जल्कचित्रिते ।
जङ्घायुग्मे तथारामकदलीकाण्डशोभिते ।
ऊरूद्वये मत्तहस्तीकरदण्डसमप्रभे ।
गङ्गागर्त्तगभीरे तु नाभौ सिद्धबिले ततः ॥
उदरे वक्षसि तथा हारे श्रीवस्तकौस्तुभे ।
पूर्णचन्द्रायुतप्रख्ये ललाटे चारुकुन्तले ॥
शङ्खचक्रगदाम्भोजे दोर्दण्डपरिमण्डिते ।
सहस्रादित्यसङ्काशे किरीटकुण्डलद्वये ॥
स्थाने नियोजयेन्मन्त्री विशुद्धः शुद्धचेतसा ।
मनो निवेश्य कृष्णे वै तन्मयो भवति ध्रुवम् ॥

**यावन्मनो लयं याति कृष्णे स्वात्मनि चिन्मये।**
**तावदिष्टमनुर्मन्त्री जपहोमं समभ्यसेत्।**
**अतः परं न किञ्चिच्च कृत्यमस्ति तथा हरेः।**
**विदिते परतत्त्वे तु समस्तैर्नियमैरलम्॥**
**तालवृन्तेन किं कार्यं लब्धे मलयमारुते।**
**कृष्ण इत्युपलक्षणम्।**

## ज्ञानयोगः

पृथिव्यप्तेजोवाय्वाकाशात्मकपञ्चभूतात्मकं शरीरम्। तत्र शरीरे सार्द्धकोटित्रयी नाडी सर्वाऽधोमुखी। तासु मुख्या दश—इडा पिङ्गला सुषुम्ना गान्धारी हस्तिजिह्वा पयस्विनी अनुकूला कुहूः शङ्खिनी चेति। तास्वपि मुख्यास्तिस्रः—इड़ा पिङ्गला सुषुम्ना चेति। तासु च मध्ये मेरुदण्डस्य वामे इडा शुक्लवर्णा च रूपिणी अमृतमयी शक्तिरूपा, दक्षिणे पिङ्गला रक्तवर्णा सूर्यरूपिणी विषमयी पुंरूपा। मेरुदण्डमध्ये सुषुम्ना सर्वतेजोमयी सान्ध्रा सोमसूर्याग्निरूपिणी। सा च शिफाभ्यां पादाङ्गुष्ठद्वयं संयुज्याऽधोमुखीभूय शिरसा मूलाधारस्थशिवलिङ्गाग्रपर्यन्तं व्याप्य तिष्ठति। सुषुम्नास्ये तान्यधोमुखानि मूलाधारस्वाधिष्ठानमणिपूरकानाहतविशुद्धाज्ञाख्यानि षट्पद्मानि। यत्तु महीं मूलाधारे कमपि मणिपूरे हुतवहं मितं स्वाधिष्ठाने इत्यादि शङ्कराचार्यपद्ये द्वितीयपद्मस्य मणिपूरत्वकथनम्, तत् स्वाधिष्ठाने कं मणिपूरे हुतवहमिति व्यत्यासान्वयादविरुद्धं छन्दोनुरोधाच्च तथोक्तमिति तत्त्वम्। सुषुम्नामध्ये चित्राख्याऽधोमुखी नाड़ी अमृतस्राविणी सर्वदेवमयी विसर्गाद् विन्दुपर्यन्तं व्याप्य तिष्ठति। विसर्गः प्रकृतिः। बिन्दुः पुमान्। षण्णां पद्मानां किञ्जल्कमध्ये शक्तिरूपाणि षट् त्रिकोणानि। तेषाञ्च मध्येऽधोमुखानि प्रेतरूपाणि सरन्ध्राणि शिवलिङ्गानि षट्। तेषु मध्ये मूलाधारे स्वयम्भुरनाहते बाणः। आज्ञाचक्रे ईश्वर इति लिङ्गत्रयं प्रधानम्। षट्पत्रेषु ब्रह्मविष्णुरुद्रेश्वरसदाशिवपरमशिवाख्याः षट्शिवाः। ब्रह्मादीनां मूर्त्तयस्तु पूर्वमुक्ताः।

गुदस्थानाद् द्व्यङ्गुलोपरि पीतं पार्थिवं पृथिवीयुक्तं वशषसयुक्तं चतुर्दलाढ्यं डाकिनीदेवताकं मूलाधारपद्मम्। आधारषट्कानां मूलत्वान्मूलाधारमुच्यते। तस्याधस्तेजसं सहस्रदलं रक्तवर्णं तत् किञ्जल्कमध्ये दलमध्ये च शक्तयो विद्युत्प्रभाः। तत्कर्णिकामध्यतश्च कुलदेवी मूलाधारपद्मकर्णिकान्तर्गतत्रिकोणाकारमहायोन्यन्तर्गताधोमुखस्वयम्भुलिङ्गं शङ्खाकारदक्षिणावर्त्तक्रमेण सार्द्धवेष्टनत्रयेणालिङ्ग्याधोमुखतया स्थित्वा सुषुम्नामुखं स्वमुखेनावृत्य स्थिता निद्राणा

प्रसुप्तभुजगाकारा तड़ित्कोटिप्रख्या नीवारशूकवत् तन्वी त्रिकोणस्थानल-शिखोपरि स्थिता मूलविद्यामयी कुलकुण्डलिनी वर्त्तते। ततो हुङ्कारेण त्रिकोण-मण्डलस्थाग्निना कुलकुण्डलिनीं सजागरां विधाय हंस इति मन्त्रेण सुषुम्नावि-वरब्रह्मवर्त्मना चित्रानाड़िकया शिवलिङ्गरन्ध्रद्वारेण लिङ्गान्निष्क्रमया आधार-पङ्कजस्य द्व्यङ्गुलोर्ध्वे आप्ये जलवति विद्युदाभे बभमयरलयुक्तषड्दले सावित्री-ब्रह्मसहिते राकिनीदेवताके लिङ्गमूलस्थे स्वस्य लिङ्गस्याधिष्ठानतया स्वा-धिष्ठाननामके पद्मे तां समानीय तत्रत्यलिङ्गरन्ध्रेण लिङ्गं प्रवेशयित्वा ततो निर्गमय्य स्वाधिष्ठानादेकादशाङ्गुलोपरि तेजसे तेजस्विनि नीलवर्णे डढण-तथदधनपफयुक्तदशदलेन लक्ष्मीनारायणसहिते लाकिनीसहिते लाकिनीदेव-ताके नाभिमूलस्थे मणिपूरके पद्मे समानीय तत्रत्यलिङ्गरन्ध्रेण लिङ्गं प्रवेश-यित्वा ततो निर्गमय्य मणिपूराद् द्वादशाङ्गुलोपरि हृदयस्थे वायव्ये वायुमते रक्तवर्णे कखगघङचछजझञटठयुक्तद्वादशे दले पार्वतीशङ्करान्विते मध्यगत-काकिनीदेवताके कालरात्र्यादिशक्त्यावृत्ते नादोद्यानादियुक्तसूर्यबिम्बसहिते अनाहते पद्मे समानीय तत्रत्यलिङ्गरन्ध्रेण लिङ्गं प्रवेशयित्वा ततो निर्गमय्यानाह-तादेकादशाङ्गुलोपरि कण्ठदेशस्थे आकाशमये आकाशवति धूम्रवर्णे अकारादि-षोडशस्वरयुक्तषोडशदलेन मध्यगतशाकिनीदेवताके विघ्नेश्वरसहिते अमृता-दिशक्तियुक्तबाह्यपत्रे चन्द्रबिम्वसहिते विशुद्धाख्ये पद्मे समानीय तत्रत्य-लिङ्गरन्ध्रेण लिङ्गं प्रवेशयित्वा ततो निर्गमय्य विशुद्धपद्माच्चतुरङ्गुलोपरि भ्रूमध्यस्थे शुक्लवर्णे हक्षयुक्तदलद्वययुक्तहंसवतीक्षमासहितपार्श्वद्वयके मध्यस्थित-हाकिनीदेवताके मालाधिष्ठिते आज्ञाचक्राख्यपद्मे समानीय तत्रत्यलिङ्गरन्ध्रेण लिङ्गं प्रवेशयित्वा ततो निर्गमय्य शिरःस्थितश्वेतसर्ववर्णयुक्तसहस्रदलयुक्ता-रुणकेशराधोमुखकमलकर्णिकान्तर्गतचक्रमण्डलमध्यस्थत्रिकोणान्तर्गतबिम्ब-रूपपरमशिवे महामायायुक्ते तत्रत्यलिङ्गं रन्ध्रद्वारेण तां कुलकुण्डलिनीं योजयेत्।

अयं षट्चक्रभेदप्रकारः। एवंक्रमेण कुलकुण्डलिनीं परमशिवे संयोज्य पुन-स्तेनैव पथा व्युत्क्रमेण पद्मषट्कं विभिद्य शिवशक्तियोगजनितसुधाधारा-प्लावितदेहः सन् पुनस्ताममृतलोलीभूतां मूलाधारमानयेदिति रहस्यार्थः। एतत्प्रमाणन्तु प्रागुक्तेषु समयातन्त्रोक्तान्तर्यागप्रकरणगौतमीयतन्त्रोक्तमन्त्रयोग-प्रकरणशारदातिलकोक्तयोगप्रकरणसमयातन्त्रोक्तकर्मयोगप्रकरणेषु यथायथ-मालोकनीयम्। अधिकञ्च तन्त्रान्तरे—

**ध्यायेदाधारपद्मं स्फुरदरुणचतुःपत्रकं वादिसान्तै-**
**र्वर्णैः पीतं चतुर्भिर्युतमुपरि लसत्कर्णिकायां त्रिकोणे।**

शङ्खावर्त्तेभसार्द्धत्रिवलययुतया मण्डितं कुण्डलिन्या
बालार्कद्योतिबिम्बं तदुपरि मिलितां डाकिनीदेवताञ्च ॥
स्वाधिष्ठानं षड्दलोपेतमुद्युद्विद्युत्प्रख्यं वादिलान्तैश्च वर्णैः ।
युक्तं सावित्रीसहायं विरिञ्चिं ध्यायेदस्मिन् राकिनीदेवताञ्च ॥
नीलनीरदनिभे दशपत्रे डादिफान्तदशवर्णसमेते ।
चिन्तयेत्कमलया कमलाक्षं लाकिनीञ्च सहितां मणिपूरे ।
अनाहतं सरोरुहं तरुणरक्तसन्ध्यारुण-
प्रभापटलसङ्कुलं स्फुरत्पार्वतीशङ्करम् ।
प्रतिच्छदसमुल्लसद्‌द्विदलकादिठान्ताक्षरं
तदन्तरेऽपि चिन्तयेत्त्रिदशवन्दितां काकिनीम् ॥
तदुपरि विशुद्धाख्यां कुन्दावदातसमप्रभं
स्वरपरिणतं मध्ये पत्रं समुज्ज्वलकर्णिकम् ।
कमलममलं विद्येश्वरावपीह निवासिनौ स्थिरमति-
रधिष्ठात्रीं देवीं स्मरेदथ शाकिनीम् ।
आज्ञापुरं द्विदलकं शरदिन्दुकान्ति-
ज्योतिर्मयं सलिलपञ्चमहान्तयुक्तम् ।
श्रीबुद्धिशक्तिसहिता गुरुरत्र देवी
हाकिन्यमन्दनिजशक्तिपरप्रभावा ।
सरोरुहमधोमुखं प्रविलसत् सहस्रच्छदं
क्रमादरुणकेशरं प्रकरभास्वरं निर्मलम् ।
तदन्तरपि चिन्तयेदमृतरोचिषे मण्डले
पुराणपुरुषं परं परिगतं महामायया ॥

तथा—

शान्तिरूपं शिवाकारं सर्वाभ्यासनिजालयम् ।
गुदमेढ्रान्तरं देवि पञ्चाङ्गुलसमुच्छ्रितम् ॥
गुदमेकाङ्गुलं मध्ये द्विरङ्गुलविसारिणम् ।
तस्य मूले महायोनिस्त्रिकोणाकाररूपिणी ॥
सुषुम्ना योनिमध्यस्था तस्य मूले महेश्वरि ।
अधःपद्मं सहस्रारं कर्णिकाकेशरान्वितम् ॥
तेजसं रत्नवद्दीप्तं तद्दलस्थितशक्तिभिः ।

प्रतिकिञ्जल्कसंस्थाभिः शक्तिभिश्च युतं प्रिये।
कर्णिकामध्यतो देवि कुलदेवी च संस्थिता॥

तथा—

आधारपङ्कजं पीतं चतुष्पत्रं सुकेशरम्।
अधोमुखञ्च तन्मध्ये कुण्डली परमेश्वरी॥
स्वयम्भुमध्यगा चिन्त्या यादिवर्णैः समावृता।
पार्थिवं पङ्कजं ह्येतत् तस्याधः पङ्कजं परम्॥
तैजसं परमेशानि तन्मध्ये पीठशक्तयः।
निविष्टाहृष्टमनसो विद्युत्पुञ्जनिभाः स्मरेत्॥
तदूर्ध्वकर्णिकामध्ये विद्धि बिम्बं तदूर्ध्वगम्।
पूर्णपीठञ्च तन्मध्ये डाकिनी संस्थिता शिवे॥
आधारपङ्कजस्योर्ध्वे सार्द्धद्व्यङ्गुलकोपरि।
तैजसं साष्टपत्रञ्च पीतकर्णिकया युतम्॥
हृल्लेखा कर्णिकाध्ये स्थिता लङ्काधिदेवता।
एतस्माद् द्व्यङ्गुलादूर्ध्वं स्वाधिष्ठानं षडस्त्रकम्॥
आप्यञ्च राकिनीशक्तिः पूर्वाभिः शक्तिभिर्वृतम्।
ततश्च भावयेद्देवि नाभिमेकाङ्गुलोपरि॥
तत्पद्मं मणिपूरञ्च दशपत्रञ्च तैजसम्।
लाकिनीमध्यगं तच्च भ्रामर्यादिभिरावृतम्॥
ततो दशाङ्गुलादूर्ध्वे मणिपूराख्यपङ्कजात्।
पङ्कजं काकिनीमध्यं वायव्यं द्वादशारकम्॥
तत्रस्थकालरात्र्यादिशक्तिभिश्च समावृतम्।
तत्रस्थसूर्यबिम्बे च नादोद्यानादिपीठकम्॥
तस्मादेकाङ्गुलादूर्ध्वं विशुद्धं षोडशारकम्।
मध्यगा शाकिनी बाह्यपत्रेषु परमेश्वरि॥
अमृताद्यास्तदाकाशं चन्द्रबिम्बं तदूर्ध्वतः।
कण्ठोर्ध्वे परमेशानि लम्बिका चतुरङ्गुले॥
आज्ञाधारं द्विपत्राब्जः हक्षद्विदलसंयुतम्।
हंसवती क्षमा पार्श्वद्वये मध्ये तु हाकिनी॥

अथात्र समाधिमुखसमाधानार्थमस्मत्प्रपञ्चः—

पृथ्व्याम्बुतेजोमरुद्व्योमरूपैः शरीरं कृतं पञ्चभिर्भाति भूतैः ।
तनौ सार्द्धकोटित्रयी तत्र नाड़ी स्थिताऽधोमुखी तासु मुख्या दश स्युः ॥
इडा पिङ्गलाख्या सुषुम्ना च गान्धारिका हस्तजिह्वा च पूषा च नाड़ी ।
पयस्विन्ययान्यानुकूला कुहूः शङ्खिनी चेति तासाञ्च तिस्रो वरेण्याः ॥
इड़ावामभागे स्थिता शुक्लवर्णाऽमृतात्मेन्दुरूपिण्यसौ शक्तिरूपा ।
तथा दक्षिणे पिङ्गला रक्तवर्णा विषात्मा च पुंरूपिणी सूर्यरूपा ॥
तथा मेरुदण्डस्य मध्ये सुषुम्ना स्थिता सर्वतेजोमयी रन्ध्रयुक्ता ।
असौ सोमसूर्याग्निरूपा शिफाभ्यां पदाङ्गुष्ठयुग्मेषु संयुज्य नम्रा ॥
स्थिताधारपद्मस्थितेशानलिङ्गाग्रपर्यन्तमावृत्य विद्योतमाना ।
अनुस्यूतपङ्केरुहश्रेणिकस्त्रग्गुणस्पर्द्धनार्द्धनावर्द्धमाना ॥
अथाधारकाधिष्ठिते पूरकनाहताख्ये विशुद्धं तथाज्ञापुरञ्च ।
इदं तत्र चक्राभिधाम्भोजषट्कं निबद्धं सुषुम्नाख्ययाऽधोमुखं सत् ॥
सुषुम्नान्तराले सुधास्त्राविणी सर्वदेवात्मिका नाड़िकान्यास्ति चित्रा ।
विसर्गादियं बिन्दुपर्यन्तमेका परिव्याप्य तिष्ठत्यतीवानुरूपा ॥
तथा षट् सरोजन्मकिञ्जल्कमध्ये त्रिकोणानि षट्शक्तिरूपाणि सन्ति ।
त्रिकोणान्तरे प्रेतरूपाणि रन्ध्रान्विताधोमुखानीशलिङ्गानि षड्वा ॥
अचैतन्यभाजाममीषार्णमध्ये शिवानामुभौ ब्रह्मविष्णूपदिष्टौ ।
परौ चापि रुद्रेश्वराख्यौ सदाशिवनामा परोऽन्यः पराख्यः शिवश्च ॥
गुदस्थानतो द्व्यङ्गुलोर्ध्वे सुपीतं कुमद्वापि सान्तार्णयुतैश्चतुर्भिः ।
दलैः शोभितं पार्थिवं डाकिनीदेवताकं तदाधारपद्मं पुरस्तात् ॥
अधस्तैजसं तस्य रक्तप्रभाकं दलानां सहस्त्रेण विभ्राजमानम् ।
लसद्विद्युदुद्द्योतितानेकशक्तिस्फुरन्मध्यकिञ्जल्कमेकं सरोजम् ॥
अधःकर्णिकामध्यतः शङ्खभङ्गीक्रमभ्राजिना दक्षिणावर्त्तनेन ।
प्रसुप्ताहिरूपा तड़ित्कोटिकान्तिः समालिङ्ग्य सार्द्धेन वेष्टत्रयेण ॥
तदाधारनामादिमाम्भोजमध्यस्फुरत्कर्णिकान्तर्निविष्टत्रिकोणाकृतिस्पृडम् ।
महायोनिमध्यस्थिताधोमुखोद्यत् स्वयम्भुप्रदख्यातलिङ्गम् ॥
सुषुम्नामुखं स्वाननेनाणुषज्य स्थिताधोमुखी चिन्तनीयैव निद्रावशा ।
पङ्कनीवारशुकातितन्वी परं मूलविद्यामयी कुण्डलिनी ॥
ततस्था त्रिकोणस्थितग्नेः शिखाभिः स्मरन् कूर्चबीजं विनिद्रां विदध्यात् ।
अथोऽहंसमुच्चारयंस्तां सुषुम्नान्तरब्रह्ममार्गेण चित्राधमन्या ॥
तदीशानलिङ्गान्तरा रन्ध्रगत्या सुयोगेन निष्क्रामयेल्लिङ्गतोऽस्मात् ।
ततो मूलपद्मादपि द्व्यङ्गुलोर्ध्वे स्फुरद्विद्युदाभे पयस्वत्यथाप्ये ॥

वकारादिलान्तार्णवत्षड्दलाढ्ये समाधित्रिकब्रह्मयुक्ते पुनस्ताम् ।
परं लिङ्गमूलस्थिते राकिनीदैवते वारिजन्मन्याधिष्ठानसंज्ञे ।।
समानीय लैङ्गेन रन्ध्रेण लिङ्गं प्रवेशास्य निष्क्रामयेत्साधकेन्द्रः ।।
अथैकादशानामुपर्यङ्गुलीनां सुनीलप्रभे तैजसे तेजसाढ्ये ।
डकारादिफान्ताक्षरस्तोयराजद्दलोत्फुल्लपत्रान्विते नाभिमूले ।।
सलक्ष्मीकनारायणाधिष्ठिते लाकिनीदैवते पूरकाख्ये सरोजे ।
समानीय तत्रत्यलिङ्गेन तद्वत्समायुज्य तस्मात्पुनश्चालयेत्ताम् ।।
ततोऽस्माद्दलानामुपर्यङ्गुलीनां हृदिस्थे सरायौ च वायव्यरूपे ।
ककारादिठान्ताक्षरास्तोमराजद्दलद्योतमाने सरोजे ।।
जवाकान्तिके पार्वती शङ्कराढ्ये तथा कालरात्र्यादिशक्तिप्रयुक्ते ।
लसत्काकिनीकेऽपि नादादियुक्तस्फुरत्सूर्यबिम्बान्वितेऽनाहताख्ये ।।
समानीयतां तत्र तत्रत्यलिङ्गे समायुज्य निष्क्रामयेद् योगिराजः ।
अथैकादशानामुपर्यङ्गुलीनां नभोनिर्मिते कण्ठदेशस्थिते ताम् ।।
नभस्वत्यकारादिभिः षोडशार्णैः स्फुरद्भिर्दलैः षोडशाङ्कैः समेते ।
लसत्साकिनीदेवताके च विद्येश्वराढ्यो लसच्चन्द्रबिम्बे सुधूम्रे ।।
विशुद्धाख्यपद्मे समानीय तद्वच्छिवे योजयित्वा नयेदूर्ध्वमेनाम् ।
विशुद्धाख्यपद्माच्चतुष्काङ्गुलोर्ध्वे भ्रुवोर्मध्यगे शुक्लवर्णाभिरामे ।।
तथा हक्षराजद्दलद्वन्द्वयुक्तेऽन्तरा हाकिनीदैवते सन्मनस्के ।
क्षमा हंसवत्युल्लसत्पार्श्वयुग्मे समायोजयेत्तामथाज्ञासरोजे ।।
ततस्तत्र लिङ्गे वशी योजयित्वा ततो निर्गमय्य प्रकाशस्वरूपम् ।
शिरस्थे स्थिते सर्ववर्णानुभाजा दलानां सहस्रेण विद्योतमाने ।।
जवास्फुरत्केशरेऽधोमुखेऽब्जे समानीयतां कुण्डलीदीप्यमानाम् ।
तदीयस्फुरत् कर्णिकान्तर्निविष्टक्षपानाथसन्मण्डलादन्तराले ।।
स्थितस्य त्रिकोणस्य मध्ये तु बिन्दुस्वरूपे महामायया भासमाने ।
परस्मिन् शिवलिङ्गरन्ध्रेण देवीं समायोजयेद् योगतः साधकेन्द्रः ।।
अयं साधु षट्चक्रभेदप्रकारो मया वर्णितः शास्त्रयोगीन्द्रयोगात् ।
अनेन प्रकारेण शम्भौ पराख्ये पराद्योजयित्वोत्क्रमेणापि भूयः ।।
विभिद्याजषट्कं यथा तेन मूलाम्बुजे स्थापयेदन्तरानन्दसान्द्राम् ।
परस्मिन् शिवे कुण्डलिन्या सुसङ्गात् समुद्भावितैः शास्त्रपीयूषवर्यैः ।।
कृतान्तर्निषेकः प्रजातप्रमोदः कृती पूतदेहो भवेद्देवतुल्यः ।
त्रिधैवं यदि स्यान्महाकुण्डलिन्यागतामात्रधारापथाम्भःशिवानाम् ।
तदा योनिमुद्रा निरुक्तेयमेषा जपादौ सदा मन्त्रिभिः कल्पनीया ।।

ऊर्ध्वाम्नाये—

योऽन्येभ्यो दर्शनेभ्यश्च भुक्तिं मुक्तिञ्च काङ्क्षति।
स्वप्नलब्धधनेनैव धनवान् स भवेद्यदि॥
शुक्तौ रजतविभ्रान्तिर्जायते पार्वति यथा।
तथान्यदर्शनेभ्यश्च भुक्तिं मुक्तिञ्च कांक्षति॥

यामले—

आगमे सर्वविद्याश्च आगमे सर्वसम्पदः।
आगमे सर्वयज्ञाश्च सर्वशास्त्राणि चागमे।
आगमे देवि वेदा हि आगमाच्च परा गतिः॥

ताराप्रदीपे—

आगमोक्तविधानेन कलौ देवान् यजेत्सुधीः।
न हि देवा प्रसीदन्ति कलौ चान्यविधानतः॥
सत्ये श्रुत्यर्थमार्गः स्यात्त्रेतायां स्मृतिसम्भवः।
द्वापरे तु पुराणोक्तः कलावागमसम्भवः॥

यामले—

येऽभ्यस्यन्ति त्विदं शास्त्रं पठन्ति पाठयन्ति वा।
सिद्धयोऽष्टौ करे तेषां धनधान्याद्धि सूनवः॥
आदृता शिवलोकेषु भोगिनः क्षोभकारकः।
आप्नुवन्ति परं ब्रह्म सर्वशास्त्रविशारदाः॥

तथा—

आगतः शिववक्त्रेभ्यो गतश्च गिरिजामुखम्।
मलत्रयव्यपायत्वादागमस्तेन कथ्यते॥

●

## अथ रामस्तवः

श्रीहनमानुवाच

तिरश्चामपि राजेति समवायं समीयुषाम्।
यथा सुग्रीवमुख्यानां यस्तमुग्रं नमाम्यहम्॥१॥
सकृदेव प्रपन्नाय विशिष्टाभैरयच्छ्रियम्।
विभीषणायाद्धि तटे यस्तं वीरं नमाम्यहम्॥२॥

कोटिसमप्रभम्।

तदूर्ध्वे तु शिखा सूक्ष्मा चिद्रूपा परमाकला।
तथा संहितमात्मानमेकीभूतं विचिन्तयेत्॥

गच्छन्ती * ह्ममार्गेण लिङ्गभेदक्रमेण तु।
सूर्यकोटिप्रतीकाशं चन्द्रकोटि सुशीतलम्॥

अमृतं यद्विसर्गस्थं परमानन्दलक्षणम्।
दृतरक्तसुतेजाढ्यधारापात प्रवर्षिणम्॥

पीत्वा कुलामृतं दिव्यं पुनरेव विशेत्कुलम्।
पुनरेवाकुलं गच्छेन्मात्रायोगेन नान्यथा॥

सा च प्राणाः समाख्याता तन्त्रेऽस्मिन् परमेश्वरि।
उद्घातः प्रोच्यते सोऽपि प्राणान्तं स्पृशते यदा॥

एवमभ्यस्य मानस्य अहन्यहनि निश्चयात्।
जरामरणदुःखौघैःर्मुच्यते भव बन्धनात्॥

चतुर्विधा तु या सृष्टिर्यस्यां योनौ प्रवर्तते।

पुनः प्रलीयते तस्यां कालाग्न्यादि शिवान्तकम् ॥

योनिमुद्रा परा सा तु बन्धं तस्याः प्रकीर्तितम् ।
मुद्राया बन्धमात्रेण किं न साधयते भुवि ॥

p. 2)

अन्यथा जपते मन्त्रमन्यथा कुरुते तु यः ।
नासौ सिध्यति देवेशि सत्यं सत्यं पुन पुनः ॥

छिन्नारुधास्तु ये मन्त्रास्तम्भिताः कीलिता भृशम् ।
दग्धाः स्वतन्त्राभीताश्च मलिनाश्च तिरस्कृताः ॥

मूर्छितामदसंयुक्ताः सुषुप्ता मूर्छिता द्दताः ।
मन्दाबालास्तथा वृद्धाः प्रौढा यौवनगर्हिताः ॥

अरि पक्षे स्थिता ये च निर्बीजास्तत्ववर्जिताः ।
अंशकेन विहीनाश्च खण्डशः शतधा कृताः ॥

विधिनानेन युक्तास्ते सम्भवन्त्य चिरेणते ।
सिद्धिमोक्षप्रदाः सर्वेदेशिकेन नियोजिताः ॥

यद्यदुच्चरते मन्त्री वर्णरूपं शुभाशुभम् ।

तत्तत् सिध्यत्यनायासाद्योनिमुद्रा प्रबन्धनात् ॥

दीक्षयित्वा विधानेन अभिषिच्य सहस्रधा ।
ततोधिकारी देवेशि तन्त्रेऽस्मिन् नान्यथा भवेत् ॥

मुद्रामण्डलविन्यासैर्जपहोमव्रतादिभिः ।
सम्ताप्य बहुकालं वै भक्तिं विज्ञाय निश्चलाम् ॥

ज्ञात्वा त्यागं बलं तापं तत्तस्तस्य प्रकाशयेत् ।
अस्मिन् कालेऽथवा देवि देव्यादेशः प्रजायते ॥

तत्रेदं कथयेत् ज्ञानमन्यथा नरकं व्रजेत् ।
त्राता किंतु न तस्यास्ति यो परीक्ष्य प्रदापयेत् ॥

p. 3)

तस्मात् परीक्ष्य दातव्यं यदीच्छेज्जीवितुं चिरम् ।
कृत्वा पापसहस्राणि असंख्यातानि सुन्दरि ॥

दहा * * * मन्त्रेण योनिबन्धेन नान्यथा ।
न तस्य पुण्यपापानि तमः सूर्योदये यथा ॥

सन्तर्प्य बहुधा कालं प्राणस्त्री द्रविणादिभिः ।

तस्मादभ्यसनं नित्यं कर्तव्यं पुण्यक * * क्षिभिः ॥

अ * * ज्जायते सिद्धिरभ्यासां मोक्षमाप्नुयात् ।
संवित्तिं लभतेभ्यासा योगोभ्यासः प्रवर्तते ।
मन्त्राणां सिद्धि * * सादभ्यासाद्वायुसाधनम् ॥

कालवञ्चनमभ्यासात्तथा मृत्युञ्जयो भवेत् ।

॥ इति प्रथमः पटलः ॥

अथातः संप्रवक्ष्यामि संप्रदायसमन्वितम् ।
त्रैलोक्यडामरं मन्त्रं त्रिपुरावाचकं महत् ॥

सुसमे भूप्रदेशे तु निम्नोन्नत विवर्जिते ।
पुष्पप्रकरसंकीर्णे गन्धधूपाधिवासिते ॥

ललाटे तिलकोपेतो नेत्रकज्जलरञ्जितः ।
ताम्बूलपूर्णगन्धस्तु मदिरानन्दचेतनः ॥

कुङ्कुमेन विलिप्ताङ्गो लाक्षालक्तकशोभितः ।
रक्तवर्णपरीधानो रक्तमाल्योपशोभितः ॥

p. 4)

कर्पूरक्षोदन्धाङ्गः केसपैशून्यवर्जितः ।
उद्धरेत्तु महादेवीं दृष्टादृष्टफलप्रदाम् ॥

अष्टपत्रं लिखेत्पद्मं केसराढ्यं सुकर्णिकम् ।
पत्राग्रे ग्रन्धिसंयुक्तं तदग्रे त्रित्रिशृङ्गकम् ॥

इदं चक्रं प्रयत्नेन लिखित्वा साधकोत्तमः ।
मातृकां विन्यसेत्पश्चात् पीठभैरवयोगिनीम् ॥

कामरूपं लिखेत् पूर्वे कोलगिर्यं तु दक्षिणे ।
चोहारं पश्चिमे लेख्यमुत्तरे औणकं लिखेत् ॥

मलं चाग्निदिग्भागे नैर्-ऋत्यां तु कुलान्तकम् ।
जालन्धरन्तवायव्ये ऐशाने देवकोट्टकम् ॥

पीठेशान्विन्यसेत्तत्र असिताङ्गादि भैरवान्
ब्राह्मणीमादितः कृत्वा चण्डिकान्तं प्रकल्पयेत् ।
असिता रुरुश्चण्डः क्रोधश्चोन्मत्त भैरवः ॥

कपोलभीषणश्चैव संहारश्चाष्टमस्मृतः ।
ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा ॥

वाराही च तथेन्द्राणि चामुण्डी चण्डिकाष्टमी ।
दीर्घस्वरांश्च एकैकं मातृणां च प्रकल्पयेत् ॥

ह्रस्वाश्च भैरवाख्याता यमला वै प्रक्वमपक्षयेत् ।
कादिवर्णाक्षरा भद्रे ग्रन्धिषु शान्तकाः शुभाः ॥

अन्यवर्णगणाः सर्वे शृङ्गकोणेषु संस्थिताः ।

p. 5)

कादीक्षान्ता न्यसेद्ग्रन्धौ शेषं तच्छिद्रकेषु विन्यसेत्
दक्षिणादीन्यसेद्वर्णान् सर्वसिद्धिफलप्रदान् ।
ऐन्द्रद्युत्तरशृङ्गान्त दक्षिणेन प्रकल्पयेत् ॥

तदादि विन्यसेद्धीमान् विरमार्गेण साधकः ।
शिवाख्यौ कर्णिकामध्ये हंसाख्य पदविशृतौ ॥

सकाकेश जीवभूतस्तु हकारः प्राण उच्यते ।
उभौ जीवसमाख्यातौ त्रैलोक्ये सचराचरे ॥

एवन्यस्ये द्विधानेन आपूजयेत् कुलपद्धतिम् ।
एतदन्तरतो ध्यायेद्वाग्भवं देवसाधकः ॥

ततः समुद्धरेन्मन्त्रभुक्तिमुक्तिफलप्रदम् ।
इन्द्राणी बीजमादाय संहारेण तु मण्डितम् ॥

तद्भवेन्नैव चाक्रान्तं वाग्भवं देवि पूजितम् ।
एकाराकारविभवा त्रिकोणेन्दु स्वरूपिणी ॥

दयं परिशिष्येभ्यो भक्तिहीने विशेषतः ।
एतद्बीजं महाबीजसृष्टिभूतं परं प्रिये ॥

कामग्रन्धिं समादाय शृङ्गं कूटस्य दक्षणम् ।
माहेश्वरीयुतं कृत्वा संहारेण समं कुरु ॥

क्षोभकृत् सर्वसत्वानां जीवभूतं परात्परम् ।
त्रैलोक्य पूजितं देवि सृष्टिसंहारकारकम् ॥

कामराजमिदं देविकामसिद्धि प्रधायकम् ।

p. 6)

परापरविभागं तु एककृत्वा समाहिताः ।
सधकः जपेदेकाग्रचित्तस्तु पातालादिषु साधने ॥

प्राणासनस्थितं देवं चामुण्डा भेदितस्ततः ।
चण्डिकायां तु संरुद्धं बीजं त्रैलोक्यमोहनम् ॥

सदाशिवासनस्थं वै उच्चारेण तु लक्षयेत् ।
पूर्वसेवां जपेन्नित्यं योनिबन्धेन निश्चलम् ॥

बिलद्वारं समाश्रित्य एकचित्तो जितेन्द्रियः ।
आदिमेन तु सा लुप्ता मध्यमेन तु कीलिता ॥

अन्तिमेन तु नुच्छिन्ना तेन विद्या न सिध्यति ।
आदिमादिमनादिं च मध्यं मध्यममध्यमम् ॥

अन्तमन्तमनन्तं च त्रिपुरा शीघ्रसिद्धिदा ।
आदिमध्ये तु मध्यादावन्तमन्ते च संस्थितम् ॥

पुरक्षोभाय जप्तव्यं विधिनानेन साधकैः ।
ह्रस्वदीर्घक्रमेणैव लुप्तां तेन वरानने ॥

विशेषणैवमुच्चार्य त्रैलोक्यमपि साधयेत् ।

॥ द्वितीयः पटलः ॥

श्री देव्युवाच।

अद्यापि संशयो देवकामतत्वस्य साधनम्।
विज्ञानमात्रगमनं ब्रूहिमे त्रिपुरान्तक॥

p. 7)

श्री भैरव उवाच।

कथयामि समासेन कामतत्वस्य लक्षणम्।
आकर्षणं परं दिव्यं शृणु श्रेष्ठं समासतः॥

कामस्थं काममध्यस्थं कामोदरपुटीकृतम्।
कामेन साधयेत् कामं कामं कामे विनिक्षिपेत्॥

कामेन कामितं कृत्वा कामस्थं क्षोभयेद्ध्रुवम्।
अस्मिंश्चक्रे कामराजं ध्यायेद्वैलोकपूजितम्॥

कामस्थं भुवनं ज्ञेयं काममध्ये विग्रहम्।
कामोदरं भवेद्योनि स्फुटान्तं बिन्दुसंज्ञकम्॥

अनेनैव तु कामेन कामतत्वं प्रसाधयेत्।
एतदेव हि कामं तु साध्यायोनौ प्रकल्पयेत्॥

बिन्दुनामथनं कृत्वा विसर्गस्थं परामृतम् ।
शक्तिमार्गेण योनिस्थं तथा तत् क्षोयेद्ध्रुवम् ॥

बहुनात्र किमुक्तेन जल्पितेन वरानने ।
पूर्वोक्तं यन्त्रमालिख्य त्रिपुरा वा चक्रं महत् ॥

कुण्डो गोलोद्भवेनैव स्वयम्भू कुसुमेन च ।
गोरोचना समायुक्तं भूर्जपत्रेषु लेखयेत् ॥

षोडशारं महापद्मं द्वादशारं तु बाह्यतः ।
वाग्भवं कर्णिकायां तु कामराजं तदूर्ध्वतः ॥

तदूर्ध्वे शक्तिबीजं तु महायोनिगतं लिखेत् ।

p. 8)

त्रिदण्डं बिन्दुसंयुक्तं द्वादशस्वरभेदितम् ।
महायोनिरितिख्याता जननी सा जगत्रये ॥

प्रथमे स्वरसङ्घातं कामराजं द्वितीयके ।
द्वादशस्वरभेदेन भेदयित्वा तु विन्यसेत् ॥

षोडशारे महापद्मे स्वरशक्त्या विभेदयेत् ।

तद्बाह्ये मातृकान् सर्वान् नादबिन्दुकलान्वितम् ॥

हंसबीजसमारूढां कारयेत्परमेश्वरि ।

एतद्यन्त्रवरं दिव्यं त्रैलोक्येष्वपि दुर्लभम् ॥

मन्दरस्योदरे सर्वं सुषिरेण तु वेष्टयेत् ।

चक्रेऽस्मिन् शक्तिबीजं तु ध्यावै साधकोत्तमः ॥

एषां दिव्या मया प्रोक्ता नम्ना त्रिपुर भैरवी ।

कन्यानामसमोपेता बिलद्वारं समाश्रिताः ॥

योनि कुण्डादधस्थाप्य होमयेद्राजिका पुटैः ।

सप्तरात्रां महादेवि क्षुभ्यन्ते मदनोत्कटाः ॥

विरहानलसंप्ता मूर्छाकुलित विग्रहाः ।

पतन्ति साधकस्याग्रे कुन्दमानास्थितास्त्रियः ॥

भो साधक महासत्व हाटकेश्वर विग्रह ।

प्रविश्य साधकैः सार्धमधिकारं कुरुष्वनः ॥

प्रविश्य क्रीडते सोऽपि यावदाभूतसंप्लवम् ।

॥ तृतीयः पटलः ॥

अथातः संप्रवक्ष्यामि त्रिपुरा योगमुत्तमम् ।
हृद्व्योमपद्ममध्यस्थं हंसाख्यं नामनामतः ॥

व्योमपीठा सनासीनं चामुण्डा चण्डिकायुतम् ।
तेनैव कल्पयेत्प्रेतं सादाख्यं परमेश्वरि ॥

तस्योपरि न्यसेन्मूर्तिं नादबिन्दुकलामयीम् ।
सकलेनैव मन्त्रेण वक्त्राण्यङ्गानि कल्पयेत् ॥

ध्यायेद्रूपं महेशान्यानिश्चलेनान्तरात्मना ।
उदयार्कसमप्रख्यां किरणानेकसंकुलाम् ॥

बन्धूककुसुमच्छायां सिन्दूरारुण विग्रहाम् ।
रक्तावस्त्रावृतां देवीं सर्वाभरणभूषिताम् ॥

जटाजूटधरां सौम्यामर्धेन्दुकृतशेखराम् ।
सर्वलक्षणसम्पन्नां पर्यङ्कासनसंस्थिताम् ॥

आपीनमण्डलाकार भोगसमुन्नतपयोधराम् ।

वलीतरङ्गमध्यस्थ रोमराजि विराजिताम् ॥

मदिरानन्दचेतस्कामाह्लादजननी पराम् ।
त्रैलोक्यमोहिनीं देवीमीषत्प्रहसिताननाम् ॥

दिव्यरूपां महादेवीं त्रिणेत्रां च चतुर्भुजाम् ।
सर्वालङ्कारसम्पन्नां व्योमपद्मासन स्थिताम् ॥

वामहस्ते निविष्टेन सर्वज्ञानमयेन च ।
पुस्तकेन वरारोहे दिव्येन वरदेन च ॥

p. 10)

सूर्यबिम्बनिभैर्मुण्डैस्पुरज्ज्वालावलीधरैः ।
ग्रथिता दिव्यरूपां तु रक्तबिन्दुप्रमोचनीम् ॥

चण्डा विद्यामयीममलामापादतल लम्बिनीम् ।
गलेन बिभ्रतीं देवीं चिन्तयेल्लोकमातरम् ॥

ऊर्ध्वमार्गस्थितं पद्मं सहस्रदलसङ्कुलम् ।
वर्षन्तममृतौघेनत्रवल्लाक्षारसप्रभाम् ॥

तेनैव प्लावयेद्देवीं परेणैवामृतेन तु ।

एवमभ्यस्य मानस्य साधकस्य विचक्षणः ॥

महात्मन् ये त्रैलोक्यं क्षुभ्यते सर्वं नान्यथा वीरवन्दिते ।

॥ इति चतुर्थः पटलः ॥

श्री देव्युवाच ।

मन्त्रध्यानं कथं प्रोक्तमुत्थानं वा कथं भवेत् ।
लयः कस्मिन् भवेद्देव विश्रममाश्रममित्यनुपदिष्यति ॥

रघूणामित्य बहुलोत्पन्नस्यार्ण प्रत्ययस्य तद्राजस्य बहुषु तेनैवास्त्रियामिति लुक् ।

अन्वयं तद्धियं प्रबन्धमित्यर्थः । अस्यैवोत्तरश्लोके श्रवण परीक्षा प्राङ्विषत्वे पपत्तैः । न च तत्र तमिति पदेनान्यभेदे परामृश्यत इति शक्यं वक्तुं पुल्लिङ्गान्तान्तरस्या प्रकृतत्वात्तथा च महाकविम् । रघुवरचरितं

p. 11)

मुनिप्रणीतं दशशिरसश्च वधं निशामयध्वमिति चापलाय । चपलकर्मणे तव कर्तुमित्यर्थः । क्रियार्थोपपदस्य कर्मणि स्थानि न इति चतुर्थी । प्रतारितः । अथवा प्रकरणं कारितः । प्रोत्सारित इत्यर्थः । अथवा भृशत्तं प्रतारणं महादनमितिगलायुधः । अयमभिप्रायकृतदन्वये लब्धबुद्धि प्रवेशस्य मन्दोपि वाक्प्रवृत्ताय तत्तद्गुणा धैर्यपरिपन्थिनं प्रवर्तयितारम् । किं

कुर्वन्तीन्तः प्रयोजन्तीत्याह कर्णमागत्येति अथ क्रियमाण प्रबन्ध परीक्षार्थीतः प्रार्थयतेतमिति श्रोतुं परीक्षापर्यन्तं श्रवणं कर्तुं श्रवणमात्रास्यानुपयोगात्। अहन्तीत्यधिकार उक्तम्। तेन च प्रार्थना लभ्यते। अधिकारकथनस्यैव प्रवर्तकत्वाभावाच्छ्रवणपुरःसरां परीक्षां प्रार्थय इत्यर्थः सदसद्यक्तिगुणदोषविभाग प्रकाशनं तत्र हेतवं प्रकाशयितारं हीति प्रसिद्धोऽयं दृष्टान्त इत्यर्थः। अग्न्याविति निमित्तात् सप्तमी। विशुल्लेहान्तरसम्पर्काभावादौ ज्वल्यम्। श्यामिका। तद्विपर्ययः। अपि समुच्चये। वा विकल्प विशुद्धि श्यामिका चोभयमपि हेमजातेरति परीक्षायः। व्यवस्तित व्यक्तिविषयः। विकल्पेन संलक्ष्यत इत्यर्थः। प्रतिवस्त्रपमाचलङ्कारः। प्रतिवस्त्रपमातु सा।

p. 12)

सामान्यस्य सं?रकस्य यत्र वाक्यद्वये स्थितिरिति गुणदोष विभाग हेतुत्वं साधारणो धर्मः शब्दभेदेन वाक्यद्वयेप्युपात्तः। अत एव न दृष्टान्तः। तत्र सामान्यस्यापि बिम्ब प्रतिबिम्ब भावेनावस्थानान् नाप्यर्थान्तरन्यासः सामान्यविशेष विषयतया तत्र वाक्यद्वयस्यावस्थानात् अथ वर्णनीयं वस्त्रपक्षिपति। वैवस्वत इति। मिततेजसः। व्यापकस्य त्रिधाम्नां च मन्त्रोऽयं वीर्यवत्तरिः। क्रमेणानेन मन्त्राणामुच्चारे कुलदेवताः। कुप्यन्ति साधकानां च धातॄन् गृह्णन्ति भैरवि। तेजो नामविपर्यासविद्धं शुद्धोदितं भवेत्।

वाग्भवं कामराजं च शक्तिं हंसं कुलेश्वरम्।
जपन्ति ये महात्मानः शीघ्रसिद्धिं वहन्तिते॥

देवताश्चानुग्रह्णन्ति कुलचक्राध्वराश्रयाम्।
पदाद्यक्षरसङ्केतं वदामि शृणु भैरवि॥

सर्वमन्त्रानुसन्धानफलसम्पत्तिकारकम् ।
श्रीकण्ठेनादि भूतेन वाग्भवस्य कुलेश्वरि ॥

उपात्तं निखिलं बीजं चक्रं सारस्वतं महत् ।
आद्येन क्रोधनाथेन कामबीजस्य सुन्दरि ॥

आभूतं योनिचक्रं तत् सर्वकामफलप्रदम् ।
आद्येन लकुलीशेन शक्तिबीजस्य सुन्दरि ॥

p. 13)

पादविद्या समुद्दिष्टा सर्वविद्या क्रमागता ।
इदानीं कुलचक्रस्य * * त्वं व्याप्तिलक्षणम् ॥

रुद्रभैरववीराणां सर्वस्वं योगिनी कुलम् ।
हृत्पद्ममध्यकुहरे त्रिकोणे भावयेत्सदा ॥

अकारादि विसर्गान्ताः सव्यरेखा विभाविताः ।
कोटि चन्द्रप्रतीकाशा वाग्भवेन सुपूजिताः ॥

ककारादि तकारान्तादक्षरेखाश्रयां प्रिये ।
अनेकभास्करप्रख्याः कामराजाक्षरार्चिताः ॥

थकारादि सकारान्तादक्षरेखाश्रयां प्रिये ।
अनेक भास्करप्रख्याः कामराजाक्षरार्चिताः ॥

थकारादि सकारान्ताः पूर्वरेखा समाश्रयाः ।
विद्युत् पुञ्जनिभाः श्रेष्ठाः शक्तिबीजेन सम्मताः ॥

मध्ये कुलाकुलादेवी पादविद्या प्रतिष्ठिता ।
इन्द्रचापप्रभा चण्डीहंसमन्त्रविभाविनी ॥

गुरूपदेशतो ज्ञेयानाथितागमकोटिभिः ।
कुलचक्रमयी मूर्तिस्त्वदीया चाक्षमालिका ॥

विद्यापीठां च देवेशित्वदीयं कुलनन्दिनि ।
इत्थं हृत्पद्ममध्ये तु ध्यातव्यं सर्वदा प्रिये ॥

योगिनां योगिनी चैव विद्या सिध्यर्थमुत्तमम् ।
कुलचक्रं महादेवि त्वत्स्नेहात्कथितं प्रिये ॥

p. 14)

आज्ञाधारे सदा देवि भावयेद्यंकुलेश्वरि ।
तस्यासीनं भवत्याशुस्थावरं जङ्गमं जगत् ॥

सर्वदा कुलचक्रं तु योनौ प्रयतमानसः ।
योध्यायत्यस्य योगिन्यो जायन्ते मदनातुराः ॥

कुलचक्रं तु विज्ञेयं दव्यदेहं शिवस्य तु ।
शास्त्राण्यन्यांश्च मन्त्रांश्च पादपांसूनिवत्यजेत् ॥

इदं त्वति रहस्यं तु कथितन्ते मृगेक्षणे ।
कर्णात्कर्णं प्रयोक्तव्यं न चलेख्यं तु पुस्तके ॥

देयं वीरव्रतायेदं हृष्टाय सततं प्रिये ।
भक्ताय देशिकेन्द्राणामुन्नताय व्रतास्थिते ॥

॥ इति पञ्चमः पटलः ॥

कुण्डन्या कृतौ लक्षजपान्ते जुहुयात्ततः ।
पूर्व सेवाकृता तस्य भवत्येव न संशयः ॥

अनेन विधिना युक्तो मन्दभाग्योऽपि सिध्यति ।
मुच्यते सर्वरोगैस्तु असाध्यमपि साधयेत् ॥

अत ऊर्ध्वं जपेद्यस्तु साधको वल्लभे शृणु ।

लक्षमेकं जपेद्यस्तु तद्गतस्य जितेन्द्रियः ॥

दर्शनात् क्षुभिताः सर्वायोषितो मदनातुराः ।
पतन्ति साधकस्याग्रे निर्लज्जाभयवर्जिताः ॥

p. 15)

द्विलक्षेण जनाः सर्वे एतस्मिन्विषये स्थिताः ।
आगच्छन्ति यथा तीर्थमत्यन्ता कुलविग्रहाः ॥

ददन्ति तस्मै सर्वस्वं तस्यैवाग्रेष्व सष्थिताः ।
त्रिषु लक्षेषु जप्तेषु मण्डलीकाः समण्डलाः ॥

वशमायान्तिते सर्वे नात्र कार्या विचारणा ।
षड्भिर्लक्षैर्महीपालाः सभृत्य बलवाहनाः ॥

लक्षैर्द्वादशजप्तैस्तु यक्षरक्षोगणेश्वराः ।
वशमायान्तिते सर्वे आज्ञां कुर्वन्ति नित्यशम् ॥

लक्षैः पञ्चदशैर्जप्तैः साधकस्य वरानने ।
सिद्धविद्याधराः सर्वे गन्धर्वाप्सर आदयः ॥

वशमायान्ति ते सर्वेनात्र कार्या विचारणा ।

दूराच्छ्रवणविज्ञानं सर्वज्ञत्वं प्रजायते ॥

शक्तिपुष्टिकरस्तुष्टः शुद्धोमारयते क्षणात् ।
तथाष्टादशभिर्लक्षैर्जप्तै देहेन साधकः ॥

उत्तिष्ठन्मेदिनीं त्यक्त्वा दिव्यदेहः प्रजायते ।
पर्यटेत्स्वेच्छया लोकांश्चित्रां पश्यति मेदिनीम् ॥

अथ विंशतिभिर्लक्षैर्विद्याधरपतिर्भवेत् ।
साधकस्तु भवेद्देवि कामरूपी महाबलः ॥

यक्षकोटितया देवि लीयते परमे पदे ।
त्रिंशल्लक्षैस्तथा जप्तैः सिद्धयोगेश्वरेश्वरः ॥

p. 16)

चतुश्चत्वारिंशल्लक्षैर्ब्रह्माविष्णुश्च शाश्वतः ।
षष्टिजप्तैस्तु रुद्रत्वमीश्वरत्वमशीतिभिः ॥

* * कं तु भवे वि त्रैलोक्येष्वम?र्जपः ।
त्रैपुरं भैरवं तेजः शिवं * * कारणम् ॥

अक्षयं तत्पदं शान्तमप्रमेयमनिपमम् ।

लभतेऽसौ न सन्देहो देवि सर्वमभीप्सितम् ॥

॥ पञ्चमः पटलः ॥

श्री देव्युवाच ।

नवलक्षं कथं देवस्थानं तस्यापि कीदृशम् ।
एतस्मिन् संशयन्तात छेत्तुमर्हसि शूलयुक् ॥

श्री भैरव उवाच ।

सारात्सारतमं देवि बाह्यसंख्या विवर्जितः ।
शरीरे संस्थितं देवि नवलक्षं सुदुर्लभम् ॥

मेढ्राधाराच्चतुर्भिश्च गह्वरोगलगह्वरम् ।
लम्बिकं भ्रूबिलं देवि नवकं ब्रह्मरन्ध्रकम् ॥

मेढ्रादीपशिखाकारामाधारेकनप्रगम् ।
नाभिस्थं सूर्यबिम्बं तु तरुणं सुरसुन्दरि ॥

ज्वालाज्योतिः शिखाकारा तदूर्ध्वे भास्कराकृतिः ।
गले दीपशिखाकारं लम्बिके चन्द्रसन्निभम् ॥

p. 17)

भ्रूमध्ये रत्नसंकाशं नवान्ते विश्वतेजसम् ।
एतत् स्थानगतो योगी नवलक्षं समभ्यसेत् ॥

स्पर्शनं चावलोवकं च सम्भाषा बिन्दुदर्शनम् ।
स्वयमावेशनं चैव मन्त्राणां पञ्चलक्षणम् ॥

श्री भैरव उवाच ।

विद्याकोशं प्रवक्ष्यामि सर्वसिद्धिप्रदायकम् ।
वाग्भवेन वरारोहे देव्या चक्रं प्रपूजयेत् ॥

तन्मध्ये वर्णसङ्घातकृत दिव्यवपुर्धराम् ।
नादबिन्दुमयीं देवीं ध्यायेत् सकलमन्त्रतः
वक्राण्यङ्गानि विन्यस्य प्रेतोर्ध्वे पूजयेत्प्रिये ।
कोणस्था देवतातिस्त्रोरति प्रीति मनोभवाः

वामेरतिस्तथा प्रीतिर्दक्षिणे मदनाग्रतः ।
मूलविद्यां जपेत् पश्चाल्लक्षणेन समन्विताम् ॥

आकारेण क्षकारस्यादा * * ऊ * सर्वयोजयेत् ।

ईकारेण लकारस्या दूकारेण हकारकम् ॥

ऋसारोग समाख्यातौ लृषायोगस्तथापरः ।
ऐकारेण शकारस्या दाकारेण वकारकम् ॥

अंकारेण लकारस्याद्यजेन्नाम समन्वितम् ।
एषा सा मूलविद्या च नाम्ना त्रिपुरभैरवी ॥

प्रत्यक्षं जायते देवि त्रिधासिद्धिं ददात्यसौ ।

p. 18)

ददते साधकेन्द्राणामितरा भुविका तथा ।
एतत्ते कथितं देवि भुक्तिमुक्ति फलप्रदम् ॥

अयोग्यस्य न दातव्य * * ज्ञा परमेश्वरी ।

॥ षष्ठम पटलः ॥

इति श्रीरुद्रयामले संपादलक्षग्रन्धे विद्यापीठावतारिते उत्तरभागे नित्यक्लिन्ना प्रकरणे
षड्विद्या प्रकाशायामुत्तरषट्कं संपूर्णम् ॥

तद्विवरणम् ॥

हृदये स्पर्शनं प्रोक्तमालोकं कण्ठदेशतः ।
तालुस्थाने तु सद्भाषो दर्शनं बिन्दुमध्यतः ॥

स्वयमावेशनं देवि ब्रह्मरन्ध्रे तु दर्शितम् ।
वन्दे शक्तिं परां शम्भोर्वर्णसंक्षिप्त विग्रहाम् ॥

प्राणाद्यारम्भ संक्रीडा निरन्तरधुरन्धराम् ।
आगमान्तरसंवाददर्शितार्थ विनिश्चयाम् ॥

व्याख्यामुत्तरषट्कस्य करोमि कुलदीपिकाम् ।

भगवतश्चैतन्यात्मनस्त्रियम्बक भट्टारकस्य स्फुरणरूपिण्याः सार्वकालिकप्रपञ्चसर्गस्थिति संहार संक्रीडन परायाः सोमसूर्यवह्न्यात्मक विश्वतैजस प्राज्ञापुरत्रय सन्धुक्षण्यावर्णकदम्ब सङ्कलित दिव्यमूर्तेः परायाः शक्तेः

p. 19)

परमोपास्तिसाधन भूतस्य श्रीमति दक्षिणस्योत्तरस्य श्रीरुद्रयामले निखिलजगद्रक्षणाय समुद्रे भाषितस्यापि श्रीमत् काश्मीरसिद्धिसंप्रदाय दरिद्रैरभागधेयैर्याथा तथ्या परिज्ञानात् स्वमनीषिक्या परं परयाकु देशिकैर्विप्लुतोपदे देशस्य श्रीमद् ब्रह्मानन्दप्रकाशभट्टारक परमगुरुमुखगम स * * * पुरःसरं श्रीमदुत्तरषट्कस्य कुलदीपिकाख्यं विवरणमारभ्यते । तस्य तावदयमाद्य श्लोकः ।

व्योमाम्बुजे सहस्रारेसितकेसरसङ्कुले ।
तत्रासीनं महादेवमपृच्छत् कुलनायिकेति ॥

तत्र व्योमनाम आज्ञास्थानात् कोदण्डसंज्ञकादूर्ध्वं यच्छिरं कपालान्तरालं तत्र यादम्बुजं कुलस्वरूपं परमबिन्दुसंत्रितं तद्व्योमाम्बुजम् ।

तत्र बिन्दो किरणाः अराणि तेषां सहस्रकम् । अरसहस्रकम् । अरशब्देन दलान्यभिप्रेति सितकेसरसंकुल इति तत्र केसराणि षोडशकलामयानि अमृतमयत्वात् सितानीति कीर्त्यन्ते । उक्तं च श्री निर्गुण्डे श्रीमते ।

षोडशारे महापद्मे कर्णिकायां शिरोपरि ।
कर्णिकायां स्थितं ज्ञानमकाराद्याः क्रियादले ॥

p. 20)

ताश्च षोडशभेदेन शक्तयः परिकीर्तिताः इति । तत्रासीनमिति तत्रावस्थितस्य निरञ्जन समाधि बलेन निरतिशय स्वात्मरूपमुपलभ्यमानमिति यावत् ।

एवं विध समाधिबल लाभे हि सति योगिनः ।
परमरहस्यार्थ विज्ञानातिशये योगो भवति ॥

एवं विधं देवदेवं कुलनायिका मातृकेश्वर्यपृच्छदिति वाक्यार्थः । इह केवलं तन्त्राणां

प्रश्नोपवर्णनमुत्तर व्याकरणारम्भणीयत्वात्तदनुरूप श्लोकविन्यासम्। कृत तु परमार्थकः। शिष्या सति परमेश्वरी देवं देशिकं सन्ततमनुयुङ्क्ते। न खलु पररूपे परशिवभट्टारकस्य सकलविद्याधारभूत मातृका सिद्धायाः परायाः शक्तेश्च परस्परः भेदस्यैव न सम्भवम्। काकथा गुरु शिष्यभावस्य अपरिज्ञातस्य प्रकाशनस्य वा। तथा चरस्योपनिषट्।

गुरुशिष्यपदे स्थित्वा स्वयं देवः सदाशिवः।
पूर्वोत्तरं पदैर्वाक्यैस्तन्त्रं समवतारयदिति॥

कथमपृच्छदिति।

भगवन् देवदेवेश भवनाशन भैरव।
स्तोतुमिच्छामि देवेश देव्या मन्त्रविनिर्णयम्। मिति। देव्या इति त्रिपुराया इत्यर्थः। अत्र विमर्शनीयानर्थान्

p. 21)

प्रश्नरूपेणोपसङ्गृह्णाति।

लिङ्गत्रयसमायुक्तं महापद्मवनं तथा।
कदम्बगोलकं चान्यद्ब्रह्मरन्ध्रं विशेषतः॥

मुद्रा पञ्चकसंयुक्तं पीठत्रयसमन्वितम्।
कुलाकुलविभागं च सप्तमं कथयस्वमे इति लिङ्गत्रय समायुक्तं महापद्मवनमित्यत्र

समायुक्तपदे निहितेऽपि उभयं च पृथक् पृथक् प्रश्नविषयभूतमित्यवगन्तव्यम्। अन्यथा सप्तप्रश्नानुपपत्तेः समायुक्ता पदं तु निदधानेन लिङ्गत्रयान्यतमेन महापद्मवनस्य सन्निकर्षं सूचयति एवमुत्तरत्रापि बोद्धव्यम्।

पश्चिमाभिमुखं लिङ्गं योनिस्थं परिकीर्तितम्।
हृद्ग्रन्थिबीजथस्थानां स्वयम्भूर्बाणवाचकम्॥

इतश्चान्तरालस्थं विसर्गाथ स्थावर इति। पश्चिमाभिमुखमित्यर्थः योनिरिति वर्णविन्यासविशेषः। गुदमेढ्रान्तर इत्यादिना वक्ष्यमाण लक्षणः। तत्रस्थमेकं लिङ्गम्। तच्च पिण्डाख्यम्। हृद्ग्रन्थिबीज संस्थानमिति तत्र ग्रन्थयो वाममुद्रामण्डलमन्त्रविद्याख्याश्चत्वारः। तेचादित आरभ्य मातृकाचक्रस्य द्वादशभिर्द्वादशभिर्वर्णैश्चतुर्धा विभक्तस्य क्रमात् संज्ञावेदितव्याः। तथा च श्रीमते श्री चक्रनिर्नये। देवे।

p. 22)

मणिपूरकमालाया ग्रन्थिर्जाताश्चतुर्विधा।
मुद्रामण्डलमन्त्राश्च विद्याग्रन्थिश्चतुर्विधा॥

एकैका द्वादशैर्भेदैर्मायायन्त्रोदरे पुनः।

महामाया पुनभासहस्त्रप्ररोहनिरन्तरतया वनाकृतित्वमभिमन्यमानो वनमिति कथयति। अत्रेति प्रकृतस्य परलिङ्गस्य परिसर इति सामान्यनिर्देशेऽपि तस्योपरिष्टादिति विज्ञेयम्।

अत्र महापद्मं विसर्गाख्यम्। अकुलं रूपातीतम्। तच्च परमबीजस्वरूपम्। परमादित्यात्मजोतिर्मण्डलं तदेव योग पीठमिति संज्ञितम्। विष्णीशनाथस्य परमभैरव भट्टारकस्य स्थानकमिति कृत्वा। अथ कदम्बे गोलकमाह। कदम्बगोलकाकारं तत्कामं बीजरूपिणमिति। कदम्बगोलकं विद्यादिति विशेषः। तत्काममिति तच्छब्देन महावनं परामृश्यते। तस्य मध्ये कर्णिकास्थानीयम्। अन्तर्गतं त्रिकोणं षट्कोणं कैलासप्रस्ताररूपम् ऊर्ध्वं कामतत्वयन्त्रात्मकं वह्निमण्डलं तत्कामशब्दवाच्यं कदम्बगोलकाकारत्वात् कदम्बगोलकं विद्यादिति वाक्यार्थः। तथाचास्मिं स्तन्त्रे कामशब्देन वह्निमभिधास्यति भ्रूमध्योनिगतं ध्यात्वा कामं बन्धूकसन्निभम्। तस्योर्ध्वे तु शिखा सूक्ष्मेति बीजारूपिणमिति क्रोडीकृत परबीजस्वरूपिणमित्यर्थः।

p. 23)

उक्तं च श्रीमदुत्तरकौले। व्यापकं परमं बीजं लयातीते व्यवस्थितमिति पुत्रलयातीतशब्देन ब्रह्मरन्ध्रमभिधीयते। तच्च महापद्मवनकर्णिकामध्यम्। अनन्तरं ब्रह्मरन्ध्रं वर्णयति। ब्रह्मरन्ध्रं तु तत्रैव सुषुम्नाधारमण्डलमिति। तत्रैवेति कदम्बगोलक एवेत्यर्थः। सुषुम्नाया आधारभूतं मण्डलं सुषुम्नाधारमण्डलं तत् किलचान्द्रमसं मण्डलम्। आधारीकृत्य सुषुम्ना देहमनुसृता सुषुम्नेत्याख्याता याचित् काचित्कला आधारभूतं मण्डलम्। तथा च श्रीमते। एगहस्ते ध्वनि भासावसाने तु चिदचित् गगनान्तरे। याचितो तु परा संविदा शिवान्तावभासकी ब्रह्मसूत्रेति सा ज्ञेया तेन सूत्रेति कथ्यते इति। अथ मुद्रापञ्चकं प्रसेतौति पृथिव्यादिनि तत्वानि मुद्राणाङ्कानि तु। इति तत्वं स्वरूपमुद्राणां तत्वानि वाचकरूपाणि पृथिव्यादीति न तु वाच्यरूपाणि तानि चक्रमादाधारस्वाधिष्ठान मणिपूरकानाहत विशुध्याख्य स्थानगानि लकार वकार रेफ यकार घोषाख्यानि बीजानि तेषु चाधारादि स्थानेषु तत्तदाश्रगाल्लकारादीन् भावयतां साधकानां या विभूतयः सिध्यन्तिता मुद्रा

इत्यभिहिताः। तदुक्तं श्रीकमन्निर्णये। क्रमं च वीरगं प्रोक्तं वच्मिमुद्रास्वरूपकम्।

p. 24)

भूम्यदौवाचकास्तत्र लवरयहाद्यवस्थिता इति।
आधारादि विशुध्यन्तमाधारादि पञ्चकम्।
पृथिव्यादीनां वाचकानां स्थानमिति कथितम्।

श्री रत्नदेवे।

आधारादि विशुध्यन्तं पृथिव्यादीह पञ्चकम्।
स्वाभाविकं चलद्दीप्तं स्थिरं मूलं नभोयुतम्॥

मायीयं बीजनाद्याढ्यमेतद्बीजं परात्मकम्।
भयवरलसंयुक्तं मायाधस्तात् समन्वितम्॥

ब्रह्मस्थानगता सूक्ष्मा स्वाभाविकमुद्रा भूताः।
विष्णुस्थाने चलाः प्रोक्ता दीप्ता रुद्रपदं गता॥

ईश्वरे स्थिरसंज्ञात्वा सादाख्ये रुद्रवद्ध्रुवा।
समभावा इति एवमेतासां मुद्राणां भावनाद्वारेण विभूति विशेषकारणभूततया लकारादयः।
एवं मुद्रा इती माध्यारोपिताः। अथ पीठत्रयमाह।

पूर्णाख्यं बैन्दवं तत्वं कोदण्डद्वयमध्यगम्।

तदूर्ध्वेनाद नाम्ना तु ओड्याणं तु भवेत्ततः॥

कामरूपं भवेच्छक्तिविश्रामं तु ततः परमिति।

हि शब्दलोपोत्र द्रष्टव्यः। बैन्दवं तत्वं प्रकाशमयम्। भ्रूमध्यगं पूर्णगिर्याख्यं पीठमित्यर्थः। तस्योर्ध्वेनादाख्यं पीठमित्यर्थः। तस्योर्ध्वे नादाख्यं द्वितीयमोड्योणं

p. 25)

पीठः तस्य प्रकाशरूपस्य बिन्दोः शिखात्मनः स्फुरणरूपम्। तत इति तत्र द्वितीयपीठादूर्ध्वं शाक्तं प्रकाशविश्रामरूपं कामरूपं नाम तृतीयं पीठं तदेव शक्तिः कथिता। इति पीठत्रयं व्याहृत्य कुलाकुले विभजति। विसर्गमकुलं प्रिये।

सहस्रारं महापद्मं रक्तकिञ्जल्कशोभितम्।

तत्र संलक्ष्यते सम्यग्वर्षन्तं रक्तबिन्दुभिः।

प्रभानिष्यन्दमयैर्वर्षन्तमपि चान्द्रमसं तेजोतिशयं विसर्गाख्यं तारकविशेषमकुलं लक्षयेत्। भावयेदित्यर्थः। तथा च वक्ष्यति द्रुतं रक्तं सुतेजाढ्यं धारापातप्रवर्षिणम्। पीत्वा कुलामृतं दिव्यमिति तच्चाकुलं सदा। सृष्टिं च भावद्विसर्ग इति कथितं ततो हि विसृज्यमानमिच्छादि मातृकान्तमयकुलचक्रमय शक्तिकदम्बकं प्रतायते। उक्तं च श्री कुलमूलावतारे इच्छाज्ञान क्रियाख्याता कुण्डलिनी मातृका तथा। ततः सर्वं समुत्पन्नं तस्माद् बहुविधं कुलमित्यकुलं विसर्गाख्यं मन्त्रविशेषमुपदिश्य योन्याख्यं कुलस्वरूपव्यावर्णयति।

पूर्वं या सूचिता मुद्रा गुह्याख्यामृतरूपिणी।

बन्धं तस्याः प्रवक्ष्यामि संवित्ति लभते यया इति ।

पूर्वं लिङ्गत्रयविवरण प्रकारणे पश्चिमाभिमुखमित्यादिना

p. 26)

प्रथमलिङ्गाधारत्वेन गुह्याख्या योन्याख्या मुद्रा सूचिता । सकलमातृका चक्र प्रसवित्रीसमन्तमन्त्रबलभूता प्राणा स्वरूपा घोषमयी तस्याबन्धमप्रमादमनुसन्धान लाभं वक्ष्यामि येन सारस्वतयोगभूतेन परसंवित्ति लाभो भवतीति यावत् । अथ बन्धप्रकारमाह । आदौ पूरकयोगेन स्वाधारे योजयेन्मन इति प्रथमं तावत्पूरकयोगकं कृत्वा स्वाधारे मनो योजयेत् । अनन्तरं च स्वाधारमाह उक्तं च विश्वासकारियाम् ।

यद्बेदादौ भवेद्बीजमेका योनिक्षसान्तकः ।

आभ्यामुभयसंवादयोगात् संवेद्यो वेदमक्षरमिति ।

गुदमेढ्रान्तरे योनिस्तामाकुन्च्य प्रबन्धयेत् ।

इति तां प्रबन्धयेत् किं कृत्वेति आकुन्च्ययोनेराधारभूतं पायुस्थानं बलादूर्ध्वमाकृष्येति यावत् । उक्तं च श्रीमतोत्तरे । स्फुरत्याधार कुञ्चनादिति च ।

अस्मिन् तन्त्रे आधारं गुदमित्युक्तमिति ।

तदुक्तं रक्ताख्ये श्रीमते पिण्डयोग प्रकरणे ॥

इदमाक्रम्य प्रवर्तयितेति तस्मिन् स्वाधारयोगेन मनसा किं भावनियमित्याह ।

भ्रमद्योनिगतं ध्यत्वाकामं बन्धूकसन्निभम् ।

ज्वलत्कालानलप्रख्यं तटित्कोटिसमप्रभमिति ।

p. 27)

भ्रमत् स्पन्दमानम्। कामशब्दो रहस्यागमेषु देहाभ्यन्तरगते जातवेदसि निरूढः। तच्च कामतत्वसंज्ञितम्। व्याकरिष्यमाणं चक्रस्वरूपं स्वाधारगतमेवं विधतेजोविशेषं भावयित्वा तस्य
शिखया सहितमात्मानमपि भावयेदित्याह।
तस्योर्ध्वे तु शिखा सूक्ष्मा चिद्रूपा परमा कला।
तथा सहितमात्मानमेकी भूतं विचिन्तयेत्।

तस्य जातवेदस ऊर्ध्वा तदीया शिखा चैतन्यमयि कला तदवयव भूताया शिखा तया सहित तदेकतामापनमात्मानं च भावयेदित्यर्थः। भावं भावयित्वा किमन्यद्भावनी यमित्याह।
गच्छन्तीं ब्रह्ममार्गेण लिङ्ग* * भेदक्रमेण तु। सूर्यकोटि प्रतीकाशं चन्द्रकोटि सुशीतलम्॥

अमृतं यद्विसर्गस्थं परमानन्दलक्षणम्।
द्रुतरक्तं सुतेजाढ्यं धारापातप्रवर्षिणम्॥

पीत्वा कुलामृतं दिव्यं पुनरेव विशेत्कुलम्।
पुनरेवा कुलं गच्छेदिति। गच्छन्तीमिति प्रथमार्थेद्वितीयेयम्। ब्रह्ममार्ग इति।

आधारादि विशुध्यन्तस्थानानु पूर्वि कथ्यते।
द्वाभ्यामुभयमार्गे तु सं * * * * पञ्चकम्॥

सद्योवाममघोरं च पुरुषेशानमेव च ।

p. 28)

विशुद्धं पश्चिमं ज्ञेयमुत्तरं च अनाहतम् ।
दक्षिणं तु मणिं नाम स्वाधिष्ठानं तु पूर्वकम् ॥

कूर्मरूपमधो वक्रमाज्ञा चैशानविग्रहमिति ।
लिङ्गानि पूर्वोक्तानि स्वयम्भू प्रभृतीनि एवमात्म स नाथा सा शिखा लिङ्गानि क्रमेण हित्वा ब्रह्ममार्गेणोर्ध्वं याता सूर्यकोटिभास्वरम् । चन्द्रकोटि सुशीतलं च पूर्वोदित विसर्गमध्यस्थित परमानन्द मूर्तिलक्षणद्रव्य द्रूपमरुणं तेजस्वि रक्तबिन्दुधारापातप्रवर्ष स्वभावमकुल परव्योमसम्भवतया दिव्यममृतं पीत्वा प्लुत्यपुनरेव तेन मार्गेणोर्ध्वमुखी विसर्ग सामकुलं विशेत् । मात्रायोगेन नान्यथेति । मात्रेति बिन्दुनादशक्त्याख्यं क्रमादाज्ञा स्थान ललाट मध्यदु * * * स्थानस्थ पीठत्रयमभिसन्दधाति । तदुक्तं श्रीमते । बिन्दुनादस्तथा शक्तिं मात्रात्रयमुदाहतमिति । तेनायमर्थः । यथोक्त प्रकारेणोर्ध्वं यान्ती सा शिखा परलिङ्गस्थानां नासा मूलादूर्ध्वं बिन्दुनादशक्तिसंज्ञेन पीटत्रयेण युज्यमाना तच्च क्रमात् हि दन्त्यकुलं विशेत् । निविश्य च पुनस्तेनैव मार्गेणाधो मुखं व्रजन्ती योन्याधारं विशेदित्यर्थः । अनेन ब्रह्ममार्गवानेन लिङ्गमभेदमात्र पर्यवसायिनीत्यवसेयम् । अत्र विशेदित्येतावन्मात्रेऽभिहितेपि तामेवं विधां शिखां भावयेदिति

p. 29)

तात्पर्याय गन्तव्यं सा च प्राणः समाख्याता तन्त्रेऽस्मिन् परमेश्वरि । उद्घातं प्रोच्यते सोऽपि प्राणान्तयदुदेति सा । इति सेति शिखां परामृशति । अस्मिंस्तन्त्रे प्राणा इति समाख्याता

अत्र हेतुरुद्घाता इति ऊर्ध्वं वात? उद्घातः। ग्रन्थिच्छेदः। तत् कारित्वात् शिखैवोद्घातशब्देनोच्यते। प्राणान्तः क्षकारः। अनेन तत्तत् स्थानभूतसंवर्तमण्डलं विसर्गाख्यमभिप्रैति तेनायमर्थं सा शिखा यदा योन्याधारात्। प्राणान्तं विसर्गस्थानं विशति तदा ग्रन्धिच्छेदविधायिनीति कृत्वा यत उद्घात इति कथ्यते। अतोऽस्मिंस्तन्त्रे प्राणा इति समाख्याता। प्राणोप्यूर्ध्वं विसर्गात्मतयोद्घातरूपं ग्रन्धिच्छेदं विधातुं न प्रभवति। तदुक्तं श्रीविज्ञानभट्टारकेण। ऊर्ध्वे प्राणेभ्यधो जीवो विसर्गात्मा परोच्यते इति। उभयविसर्गबन्धनस्वभावं योनिद्रा बन्धाभिधेयं महायोगं कालतन्त्रेऽपि कथयति। प्राणे तु प्रेर्यमाण त्वादपानः पीड्यते यदा। गत्वा चोर्ध्वं निवर्तेत एतदुद्घातलक्षणमिति। उक्तं च श्रीभगवद्गीतासु। अपाने जुह्वति प्राणं प्राणे पानस्तथा परे। प्राणापानगतेरूर्ध्वा प्राणायामपरायणाः। अपरे नियताहाराः प्राणान् प्राणेषु जुह्वतीति।

p. 30)

उक्तं चोपनिषत्सु। वाचिप्राणं जुहुमः। प्राणेवाचमिति। एवं गत्यागती वितन्वाना शिखैवेति कथितम्। रत्नाख्ये श्रीमते। तन्मध्ये कुण्डलीदेवी शिवेन सहिता प्रिये। स्थानानि भेद्यगच्छन्ती पिबन्तीमम्बिकामृतमिति। एवं गत्यागतिविम शिरोयोगिनो

दहनप्लावनाभ्यास इति

मन्तव्यः एवमभ्यस्मानः स अहन्यहनि निश्चयात्। जरामरणदुःखौघैर्मुच्यते

भवबन्धनादिति।

अनेन योनिमुद्रा बन्धस्य फलातिशयं दर्शयति।

चतुर्विधा तु या सृष्टिर्यस्यां योनौ प्रवर्तते।

पुनः प्रलीयते तस्यां कलाग्न्यादि शिवान्तकमिति।

योनिमुद्रा पराया तु बन्धस्तस्यां प्रकीर्तित इति।

चतुर्विधाया जगत्सृष्टिर्यस्यां योनि भूताया प्रवर्तते।

कालाग्न्यादि शिवान्तं च तत्वजातं यस्यां लीयते।

सा योनिमुद्रा पराया निरतिशयोत्कर्षयुक्ता तस्या बन्धस्तत्वेन कथितं मुद्राया बन्धमात्रेण किं न साधयते भुवि। इति बन्धस्यैव प्रशंसेयम्। अन्यथा कुरु मन्त्रेयमन्यथा कुरुते तु यः। नासौ सिध्यति देवेशि सत्यं सत्यं पुनः पुनरिति। मन्त्रजातं विना जपति कर्षणादि क्रियाकलापं बन्धं विना करोति सनसिध्यति न फलेन युज्यत इत्यर्थः।

p. 33)

तस्मादभ्यसनं नित्यं कर्तव्यं पुण्यकांक्षिभिः।

अभ्यासाज्जायते सिद्धिरभ्यासान्मोक्षमाप्नुयात्॥

संवित्ति लभतेभ्यासाद्योगोभ्यासात् प्रवर्तते।

मन्त्राणां सिद्धिरभ्यासादभ्यासाद्वायुसाधनम्॥

कालवञ्चनमभ्यासात्तथा मृत्युञ्जयो भवेदिति।

मुद्राबन्धनाभ्यास्यावश्य कर्तव्यतां फलानि च कथयति।

॥ इत्युत्तरषट्कविवरणे कुलदीपिकायां प्रथमः पटः॥

अथ त्रिपुरा विद्याया उद्धारयन्त्रं विवरीतुमुपक्रमते।

अथातः संप्रवक्ष्यामि संप्रदाय समन्वितम्।

त्रैलोक्य डामरं मन्त्रं त्रिपुरा वाचकं महत्।

अथ शब्दो मङ्गले ।

सुसमे भूप्रदेशे तु निम्नोन्नतविवर्जिते ।

पुष्पप्रकरसङ्कर्णे गन्धपुष्पाधिवासिते ॥

ललाटतिलकोपेतो नेत्रकज्जलरञ्जितः ।

ताम्बूलपूर्णगन्धश्च मदिरानन्दचेतनः ॥

कुङ्कुमे रवि लिप्ताङ्गो लाक्षा तिलकशोभितः ।

रक्तवस्त्रपरिधानो रक्तमाल्योपशोभितः ॥

कर्पूरक्षोददिग्धाङ्गो क्रोधपैशून्यवर्जितः ।

उद्धरेत्त्रिपुरां देवी दृष्ट्वादृष्टफलप्रदाम् ॥

p. 34)

अष्टपत्रं लिखेत्पद्मं केसराढ्यं सकर्णिकम् ।

पत्राग्रे गन्धिसंयुक्तं तदग्रेति त्रित्रिशृङ्गकम् ॥

अथ यथोक्ते भूप्रदेशे देशिकोष्टपत्रं केसराढ्यं सकर्णिकम् ।

पत्राणामग्रभागेषु ग्रन्धिभिर्वृत्तमण्डलाकृतिभिर्युक्तं ग्रन्धीनामग्रभागेषु त्रिभिस्त्रिभिः शृङ्गैः

शूलविन्यासैरभिसंयुक्तं पद्मं लिखेत् ।

शृङ्गाष्टवभितो भद्रे यथा वक्ष्यामि तत्क्रममिति ।

भद्रे इति परमेश्वरीं सम्बोधयति । इह त्रिभिस्त्रिभिः शृङ्गैः प्रतिदलमेकैक शृङ्गमित्यष्टौ शृङ्गानि

तान्यभितस्तत्कथं त्रिपुराविद्या सम्बन्धिनं मातृका चक्रं वक्ष्यामीत्यर्थः।

अष्टौ शृङ्गोणीति ग्रन्धीनां दलां चोपलक्षणम्।
दलेषु ग्रन्धिशृङ्गेषु उक्तमार्गेण विन्यसेत्।
इदं चक्रं प्रयत्नेन लिखित्वा साधकोत्तमः।
मातृकां विन्यसेत् पश्चादिति इदमेवं विधं च पद्मरूपं चक्रं लिखित्वा पश्चात्तस्य दलेषु ग्रन्धिशृङ्गेषु एतत्तन्त्रोक्त प्रकारेण देशिको मातृकां विन्यसेत्। कथमित्याह पीठ भैरव योगिनीमिति। पीठाः कामरूपाद्याः भैरवा असिताङ्गादयः योगिन्यो ब्राह्माद्याः। एतास्तत्र पूर्वं न्यसेत्। एतदेव कथयति।

p. 35)

कामरूपं लिखेत्पूर्वे कोल्लगिर्यं तु दक्षिणे।
चोहरं पश्चिमे लिख्य उत्तरे औकणं लिखेत्॥

मलयं चाग्निदिग्भागे नैर्-ऋत्यां तु कुलान्तकम्।
जातान्धरं तु वायव्ये ऐशान्ये देवि कोट्टकम्॥

इति पूर्वे दलत्याहारः। अत्र पूर्वादि दिग्दलेषु कामरूपादि पीठविन्यासानुपपत्ते सतान्येव काम रूपादि पीठात्मविन्यासानुपपत्ते सतान्येव कामरूपादि पीठात्मना भावयेदित्यवगन्तव्यम्। पीठेशान्विन्यसेत्तत्रेति तेषु दलेष्वित्यर्थः। असिताङ्गादि भैरवान्।
ब्रह्माणीमादितः कृत्वा चण्डिकान्तं प्रकल्पयेत्।
असिताङ्गोरुरुश्चण्डः क्रोधश्चोन्मत्त भैरवः।

कपाली भीषणश्चैव संहाराश्चाष्टम स्मृताः।
ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा।
वाराही च तथेन्द्राणी चामुण्डा चण्डिका तथा॥

इत्येवमन्तं सुगमम्।

दीर्घस्वरांश्च एकैकं मातृणांश्च प्रकल्पयेत्।
ह्रस्वा स्वभैरवाख्यातायामलान्वै प्रकल्पयेत्। इति।
अयमर्थः। दीर्घस्वराणामाकारादि विसर्गान्तानामष्टानालेखनम्। ब्राह्म्यादि योगिनीन्यासः।
अकाराद्यनुस्वारान्तस्य ह्रस्वाष्टकस्य लेखनम्।

p. 36)

असिताङ्गादि भैरवन्यासः। तेन दीर्घस्वरा एव ब्राह्म्याद्याः ह्रस्वा भैरवा असिताङ्गादयोवगन्तव्याः। तांश्चैकैकस्मिन्दलेयमलान् प्रकल्पयेत्। तेन कामरूपाख्ये दले असिताङ्गाख्यमकारं ब्रह्माण्याख्यमकारं च सहितं लिखेत्। एवमन्येष्वपि दलेषु भैरव योगिनीन्यासं दर्शयित्वा ग्रन्धिषु मातृकान्यासमाह। कादिवर्गाक्षराभद्रे ग्रन्धिषु क्षान्तगाः शुभाः। इति कादयस्ते वर्गाक्षराः। कवर्गादयः। पञ्च। अन्तस्था ऊष्माणश्चेति सप्तवर्गाः। क्षकाश्चैकोवर्ग इत्यष्टवर्गाः। एषां कादीनिक्षान्तगान्यक्षराणिकचट तपयशक्षाः। ते ग्रन्धिषु पूर्वादिषु न्यस्याः। अन्यवर्णगणाः सर्वा शृङ्गकोणेषु संस्थिताः। इत्यन्यवर्णगणाः सकारहकारवर्जिता चतुर्विधिः पूर्वादिषु शृङ्गप्रान्तेषु चतुर्विंशतिर्लेखनीयाः। कादिक्षान्ता न्यसेद्ग्रन्धौ शेषाश्चाङ्गेषु विन्यसेत्। अनेनोक्तमेव व्यक्तीकरोति दक्षिणादीन्यसेद्वर्णान् सर्वसिद्धिफलफलप्रदानीति। दक्षादि विन्यासे वर्णाः सिद्धिये भवन्तीत्यभिप्रायः। तञ्च

दक्षिणादिन्यासमाह। ऐन्द्राद्युत्तरशृङ्गान्तं दक्षिणेन प्रकल्पयेदिति। इन्द्रदिग्भागादारभ्योत्तर शृङ्गादि विधिन्यासो दक्षिणविन्यासः।

p. 37)

तदादिविन्यसेद्धीमानिह मार्गेण साधकः।

इत्यनेनैतदेव स्थिरयति। ऐन्द्रमादिं कृत्वा रवेर्दक्षिणायन प्रकारेण वर्णान्विन्यसेत्।

जीवाख्यौ कर्णिका मध्ये हंसाख्य पदविश्रिताविति।

कर्णिकायां चिन्मात्र संश्रयं वर्णद्वयमित्यर्थः।

किं तदित्याह।

सकारजपभूतस्तु हकारः प्राण उच्यते।

उभौ जीवेति विख्यातौ त्रैलोके स चराचरमिति।

कुलेकुलपद्ममिति चक्रस्यैव संज्ञा एतदन्ततो ध्यायेद्वा भगवन्देवि साधक इति। अस्य चक्रस्य मध्ये वाग्भवं ध्यात्वा पूजयेत्। तेन वाग्भव चक्रमेतदिति दर्शितं भवति। इतीह वाग्भवचक्रं प्रकाश्य ततो विद्यामुद्धरति। ततः समुद्धरेन्मन्त्रं भुक्तिमुक्तिफलप्रदमिति।

सुगमम्। इन्द्राणी बीजमादाय संहरेण तु मण्डितमिति।

तत्र तावन्महाविद्यायास्त्रिपुर महासुन्दर्याः सामान्य विशेषात्मकं रूपद्वयं सम्भवति। तत्र सामान्यं नाम श्रीकण्ठानन्तरु भूलकुलीश्वराख्यैर्विशेषैर्मधुरं केवलपादत्रयात्मकं इतस्तु तैस्त्रिभिः संयुक्तमेतदुभयं च अनेन दर्शयति। तत्र तावदिन्द्राणी बीजं नाम द्वादशस्वरः। संहारोनुस्वारः तेन मण्डितं सहितमिति यावत्।

p. 38)

अतोनुस्वारसहितो द्वादशस्वरो वाग्भवाख्ये मनुर्भवतीति सामान्यं रूपम्।

अथ विशेषरूपमाह।

तद्भवेनैव चाक्रान्तं वाग्भवं देविपूजितमिति।
अस्यार्थमेके वर्णयति। तदितीन्द्राणी बीजं परामृश्यते। भवः श्रीकण्ठः तेनाक्रान्तं सहितमित्यर्थः। तेनेन्द्राणी बीजमेव श्रीकण्ठानन्तर भावि विशेषं रूपं वाग्भवं भवतीति। एवमिदं व्याक्रियमायणमेकादश स्वरस्यापि वाग्भवतां सूचयिष्यतां श्रीकण्ठो वालीश इत्यादिना उत्तरेणाक्षरार्थं सूत्रेणाव्याहते। तस्मादन्योर्थः। तद्भवेनैव चाक्रान्तमिति तदिन्द्राबीजं तद्भवेनाक्रान्तमधिष्ठितं श्रूयमाणेन श्रीकण्ठेन संयुतमित्यर्थः। इन्द्राणी बीजे हि संहिता रूपेणान्तः कृत श्रूयमाणो भवतीति श्रीकण्ठः। तन्निवर्तयित्वाक्रान्तवदेन इन्द्राणी बीजं नाम श्रीकण्ठयोनिवर्णसंहितारूपं तत्संहितारूप कबलीकारं हित्वा श्रूयमाणेनैव श्रीकण्ठेन संयुज्यमानं विधाय श्रीकण्ठयोनिबीजात्मकानुस्वारात्मना वर्णत्रयं विशेषरूपं वाग्भवमिति कथितं भवति। तथा चैवं विधस्य मनोवार्ग्भवत्वं श्रीमते श्रीव्योम चक्रविवरणे प्रकाश्यते। एकाराकविभवा त्रिकोणा

p. 39)

बिन्दुरूपिणीति। सिद्धयोगेश्वरे मतेपि। एकादशस्वरस्यैव वाग्भवतामुद्धोषयति। प्रथमशृङ्गा। अकारमेकारेति प्रकीर्तितम्। वाग्भवं तस्य बीजं बिन्दुनादेन कीर्तितमिति। उक्तं च लघुवादैः यामात्रात्रपुसी लता तनुलसत्तज्ञ स्थिति स्पर्धिनी वाग्बीजे प्रथमे स्थिता तव सदाता मन्महेते वयम्। शक्तिः कुण्डलिनीति अत्रामात्रेति पदविच्छित्तिः कर्तव्या। तदेव वाग्भवमुभयस्वरूपं प्रदर्श्य नधिकारिणेन देयमिति कथयति। नदेयं परशिष्येभ्यो भक्तिहीने

विशेषतः एतद्बीजं महाबीजसृष्टिभूतं परं प्रिय इति। अथ कामराजः। प्रस्तोति कामग्रन्धिं समादाय शृङ्गं कूटस्य दक्षिणम्।

माहेश्वरि युतं कृत्वा संहारेण समं कुर्वीत। कामग्रन्धिं नामककार कूटं नामवाग्भव चक्रस्य देवि कोट्टाख्यस्य ऐशानोदलविशेषः। तस्य दक्षिण शृङ्गस्थित्वाल्लकारः। कूटस्य दक्षिणशृङ्गमिति कथ्यते। माहेश्वरी नाम ईकारः। संहारोनुस्वारः। अनश्चानु पूर्वा कामराजमुद्धृतफलातिशयं सूचयति। क्षोमकृत् सर्वतत्वानां जीवभूतं परात्परमिति। सर्वतत्वानां सर्वात्मनां क्षोभं महानुरागं जपेदित्यर्थः। त्रैलोक्य

p. 40)

पूजितं देवि सृष्टि संहारकारकम्। कामराजमिदं देवि

कामसिद्धि प्रदायकमिति सुगमम्।

अनन्तरमस्य कामराजस्य विशेषमाह।

परापरविभागं तु एकीकृत्य तु साधकः जपेदेकाग्रचित्तस्तु पातालादिषु साधन इति। परः उत्कृष्टः अपरः अकारात्परो वर्ण आकारः। परश्चासाव परश्चेति परापरः। स एव विभागो विशेषः। तं यथोक्त उद्धृतेन कामराजेन सहितं कृत्वा जपेदित्यर्थः। उक्तं च श्रीलघुपादैः नित्येतव कामराजं परं मन्त्राक्षरं निष्कलमिति अत्रेकार पूर्वीत्यपरेत्यपरो वर्णः। आकार इत्ययं वर्णक्रमः। तथा च श्रीरुद्रयामले। स कीलविद्यारूपेणदर्शितः। क्ला ईम् मद्द्रव्ये। अ एं क्लिं नेत्रलेसौं इति लघुपादैरपि चोक्तम्। निष्कलविद्यारूपेण आ ई पल्लवितैरिति। उक्तं च श्री ज्येष्ठनाथेन आ ई मसंज्ञाममृतामनन्तां त्रियक्षरां कुण्डलिनीं त्रियश्रामिति। एकाग्रचित्तस्तु भावनाप्रकारम्। पातालादिषु साधना इति बीजादि साधन इत्यर्थः। अथ शक्तिबीजमुद्धरति।

प्राणासनस्थितं जीवं चामुण्डा भेदितं पुनः।

चण्डिकायां तु संरुद्धं बीजं त्रैलोक्यमोहनमिति।

p. 41)

प्राणो हकारः। स एवासन प्राणासनम्। तस्मिं स्थितं प्राणासनस्थितम्। जीव इति सकारः। चामुण्डा औकारः तया भेदितम्। विशेषितं सहितमिति यावत्। चण्डिकानाम विसर्जनीयः। ताभ्यां सहितमिति यावत्। एतदुक्तं भवति। वाग्भवकर्णिकायां हकारमानसं कृत्वा तदुपरि सकार विन्यासः। तेन प्राणासनस्थं जीवमिति सकारमभिदधाति * * चामुण्डया चकाया च संयुतं कृत्वा शक्तिबीजस्वरूपेण चक्रादुद्धरेदिति सामान्यम्। एवं प्रकारेण समुद्धृतं परं बीजं श्रीदेशिकेन्द्रकटाक्ष वशालब्वा पृथगे वा जीवमावर्तयेदित्यर्थः।

एवं रूपात्मकं शक्तिबीजं प्रदर्श्य विशेषमाह।

सदाशिवासनस्थं वै उच्चारेण तु लक्षयेदिति।

सदाशिवो घोषः। स एवासनं सदाशिवासनं तस्मिं स्थितं सदाशिवासनस्थं पूर्वं घोषमुच्चार्यानन्तरं पूर्वोक्तं शक्तिबीजमुच्चारयेदिति वाक्यार्थः। उक्तं च श्रीलघुपादैः सदाहस्थितमिति। यत् सद्योवचसां प्रवृत्तिकरणे दृष्टप्रभावं बुधैस्तात्तिर्यं तदहं नमामि। मासात्वद बीजमिन्दु प्रभमिति।तत्र वचसां प्रवृत्तिकरणे दृष्ट प्रभावमिति।

p. 42)

प्राणबीजग्रं घोषाक्षरमाचष्टे। तथा श्रीमते।

वैखरीया * * * तृणा प्राणवृत्ति निबन्धनेति।

कला तन्त्रेप्युक्तम्। हकारस्तु स्मृतः प्राण इत्युभय रूपां विद्यामुपदिश्य तत्साधने

पुरश्चरणविधिमाह।

पूर्वसेवां जपेल्लक्षं योनिबन्धेन निश्चलम्।

बिलद्वारं समाश्रित्य एकचित्तो जितेन्द्रिय इति।

पूर्वसेवां पुरश्चर्यामित्यर्थः। बिलद्वारं समाश्रितः।

योनिमुद्रां बध्वा पुरश्चर्यारूपेण लक्षं जपेत्।

त्रिंशद्दिनानिस्ततं जपं कुर्यादित्यर्थः। उक्तं च श्री हंसभेदे मासंलक्षमिति प्रोक्तमिति।

अनन्तरं साध्य लोकस्याधिकारित्व प्रदायिनीं त्रिकविद्यां साधारणभूतां परमरहस्यभूतां

दीक्षां दर्शयितुं तत्प्रधानाङ्गभूतं योनिमुद्रा बन्धप्रकरणे कामं बन्धूकसन्निभमिति त्रिपुरा

सूचितं कामतत्वयन्त्रप्रश्न विषयत्वोनावतारयति अद्यापि संशयो देवकामतत्वस्य साधनम्।

विज्ञानमात्रगमनं देहिमे त्रिपुरान्तकेति।

कामतत्वं नामान्तः कृत ह्लेखादि कामाराजादिकं वक्ष्यमाण यन्त्र विशेषमाह।

विज्ञानमात्रेण फलं गमयतीति विज्ञानमात्रगमनम्।

श्री भैरव उवाच।

कथायामि समासेन कामतत्वस्य लक्षणम्।

p. 43)

आकर्षणं परं दिव्यं शृणु शेषसमासत इति सुगमम्।

कास्थं काममध्यस्थं कामोदरपुटीकृतम्।

कामेन साधयेन काममिति ह्लेखाभिधीयते।

काममध्यशब्देन निर्विशेषः कामराजः कामोदरपुटी कृतमिति कामोदरो नाम त्रिकोण विन्यासो द्वादशस्वरः। केन संपुटितमिति यावत् कामस्थं काममध्यस्थ्यमित्येतद्वितीयं कामोदरे संपुटितं करणीयमित्यन्वयः। संपुटिताभिधानेन कामोदरद्वितीयस्येतरेतराभिमुख्येन विन्यासं सूचयति। तेन त्रिकोणरूपत्वादैकारयोरितराभिमुख्येत्तराधर भावेन विन्यासः षट्कोणं भवतीत्यवगन्तव्यम्। अत्रानुक्तोपि विवरणग्रन्धोपि व्याख्यास्यमानत्वात् बिन्दुसंज्ञितो * * रो विन्या * * * तोमन्तर्यः। अ कामस्थादीनां हृल्लेखादि वाकत्वमुत्तरत्रकामं दम्भु * * * ग्रन्धेन स्वयमेव विवरिष्यति। कामेन साधयेत् कामिति। तत्रानेनध्याहारम्। अनेन कामनेति यथोक्तरूपं हृल्लेखादि चतुष्टयं कामतत्व वा * * * शति। यत्र श्रीरुद्रयामले। हृल्लेखा कामराज वाग्भव बिन्दुस्त्री

p. 44)

काराख्यं कामपञ्चकमिति उद्धुष्यते। कामराजमन्मथादयः। पञ्चमोत् हृल्ले * * * ञ्चां संज्ञा वेदितव्या। तथा च तत्र वक्ष्यति। लक्षद्वयविलोमस्थैः संयोगेन च तत्प्रिये। उपदेशेन बोद्धव्य उद्धारश्चास्य व्रते। इद * * * तां सर्वतत्व प्रबोधकम्। अयं वक्रं परा देवि तेजोवृत्तिनिवासिनः। एषां संयोगरूपेण मन्मथं जायते प्रिये। कन्दर्प कथयिष्यामि * * * * परम्। आपूर्वः भूतमार्गस्थमः पूर्वेण समन्वितम्। अभ्यासं योगजं देवि कन्दर्पं समुदाहृतम्।

क्षभ पूर्वे ऋतुगां तेज तु रेकादशेत * *

* * * भेदेन मकरध्वजसंज्ञिकम्।

हथलद्वय अः पूर्वे मनोहृ भवति प्रिये इति तेनायमर्थः। अनेन पाठक्रम विहितविन्यासेन

कामस्थादीनि * * * कामेन सह कामतत्वसंज्ञकं स्त्रींकार लिखेदिति तात्पर्यार्थः तथा कृते हि कामतत्वस्य सिद्धिर्भवतीति कृत्वा साधयेदिति निहित का * शब्दस्य कामत * * रत्र विवरिष्यते। कामतत्वं प्रसादयेदिति अत एवमभिदधानस्यायं यन्त्रविन्यासक्रमोभिप्रेतोवगन्तव्यः कथमिति। प्रथमं हृल्लेखां म * * * कामराजं तां च स कामराजां हृल्लेखामभितः षट्कोणरूपं

p. 45)

योनिसंज्ञितं वाग्भवं तस्य कोणेषु बिन्दुसंज्ञितान् ब्लूंकारं तत * * * षट्कोणकबलीकरणं स्त्रीकारं विलिखेदिति उक्तं हि शुरु * मले मन्मथस्य मध्यस्थं कामराजन्यसेत्तुतम्। कन्दर्पमन्दिरं कृत्वा द्विधाभूतं तु पार्व * * * * षट्कोणेषु च दापयेत्। चत्वारस्ते महाकामाः पञ्चमस्योदरे क्षिपेत्। कामं कामेन तु क्षिपेदिति। एवं भूतं कामराजयन्त्रं काम * * * योनौ निक्षिपेत्। तद्गततया भावयेदित्यर्थः। कामेन कामितं कृत्वा कामस्थं क्षोभयेद्धृवमिति। एवं भूतो कामराजयन्त्रेण साध्यस्यात्मा * * * * तं कृत्वा कामस्थं योनिस्थं यथा भवति। तथाद्धृवं क्षोभयेद्विसर्गस्थममृत इत्यर्थः। उक्तं च श्रीमते जन्मस्थानात् समुद्यन्ती यात्तद्धृवमण्डलमिति ए * * * * हुनेत्यदिना तदा तत्क्षोभयेद्धृवमित्यन्ते न विवरणग्रन्धेन स्फुटी करिष्यते। अस्मिंश्चक्रे कामराजं ध्यायेद्दै लोकपूजितमिति सुगमम् * * * दिनामनन्तरोक्ता ना दुर्विज्ञेयता परमकारुणकः परमेश्वरस्य यमेव विवरमारभते। कामस्थं भुवने ज्ञेयमित्यादि। भुवनमिति भुव * * * र्थः। काममध्ये तु विग्रहमिति

p. 46)

काममध्ये त्वित्यनेन पूर्वोक्तकाममध्यस्थमिति पदं वक्ष्यति। काममध्यस्थं नाम विग्रहं

जानीयात्। कामस्वरूपं जानीय * * * स्वरूपं नाम कामराजाख्यो मनुः कामोदरं भवेद्योनिरिति योनिर्वामि वाग्भवः। पुटान्तं बिन्दुसंज्ञकं भवेदित्यन्वयः। पुटान्तरिति षण्णां कोणा * * * * बिन्दुसंज्ञकमिति यन्त्रस्य वलनरूपेण वलनसाधयेदिति कामेन का साधयेत्। काममित्यस्य विवरणम् एतदेवहि कामं तु साध्ययोनौ प्रकयो * * * कामं कामे तु निक्षिपेदित्यस्य विवरणम्। बिन्दुनामथनमित्यादि क्षोभयेदित्यन्तं कामेन कामितं कृत्वा कामस्थं क्षोभयेद्धृवमित्यस्य विवरणं * * * * बिन्दुशब्देन साधकस्यात्मा कथितः तथा च श्रीमते बिन्दुरात्मा समाख्यातोयं प्रबुद्धो नरोन्तर इति प्रथमशब्देन

परिशीलनातिशयं सूचयति तथा च श्रीमते।

तन्मध्ये चात्मनोरूपं लक्षयेत्तु पुनः पुनः।

मथनं ह्येतदाख्यातमज्ञातमलनाशनमिति।

विसर्गो नाम षोडशान्तं चन्द्रद्वीपं ब्रूते।

शक्तिमार्गो नाम सुषुम्ना च तथा श्रीमते।

शक्तिमार्गं सुषुम्नाख्यमिति योनिस्थमिति क्षोभयेदित्यस्याः।

p. 47)

क्रियाया विशेषणम्। अत्र कामेन कामितं कृत्वेति सङ्ग्रहसूक्तोक्तमपिस्मत्तव्यम्। तेनैव तदुक्तं भवति। साध्ययोनौ तथोक्तरूपं कामयन्त्रं परिकल्प्य साध्यस्यात्मानं तेनैव कामयन्त्रेण यन्त्रितं कृत्वा साधकस्यात्मना साध्यस्य विसर्गस्थममृतं तथा क्षोभयेत्। यथा तच्छक्तिमार्गेण निष्यमानं साध्यस्य योनिस्थं संपद्यत इति साध्यलोकस्ये यमेव सा प्रथमं प्रस्तुतापि रहस्य दीक्षेति कथिता। बहुनात्र किमुक्तेन कल्पितेन वरानने इति सुगमम्।

अनन्तरं शक्तिबीजयन्त्रमाह ।

पूर्वोक्तं यन्त्रमालिख्य तिपुरावाचकं महदिति । पूर्वं प्रथममुक्तं त्रिपुरायन्त्रमिति । वाग्भवमभिधीयते । तद्वक्ष्यमाण महापद्मयन्त्रस्य कर्णिकास्थाने लिखित्वेति यावत् । कुण्डगोलोद्भवेनैव स्वयम्भूकुसुमेन च ।

गोरोचना समायुक्तं भूर्जपत्रे तु लेखयेत् ।
अत्र कुण्डशब्देन स्त्री चिह्नभूतयोनिरभिधीयते ।

गोलशब्देन पुंश्चिह्निभूतं लिङ्गकुसुमशब्देनार्तवमभिप्रैति । अत्र स्वयम्भूत्वं प्रथमोद्भूतता । तेन कुण्डगोलाद्भव शब्देन स्त्रीपुंसयोग सम्भूतं सम्मिलितरूपं शुक्ल शोणितमभिधीयते । स्वयम्भूं कुसुमशब्देन स्त्रियाः

p. 48)

प्रथमोद्भुतमार्तवम् । ताभ्यां गोरोचनया च लिखेदिति यावत् । षोडशारं महापद्मं द्वादशारं तु बाह्यतः । पुनः शोडशपत्रं तु द्वात्रिंशत्तस्य बाह्यतः । इति कर्णिकास्थानीयं वाग्भवयन्त्रमभितः षोडशारं पद्मं लिखेदिति विज्ञेयम् । अरशब्देन दलान्यभिधीयन्ते । तस्य बाह्यतो द्वादशारं तस्यापि बाह्यतो द्वात्रिंशदरं लिखेत् । वाग्भवं कर्णिकायां तु कामराजं तदूर्ध्वतः । कर्णिकाशब्देन यन्त्रमध्यवर्तितयोपचारेण पूर्वोक्त वाग्भव यन्त्रप्रान्तवर्ति षोडशारं महापद्मं प्रतिपादयति । न खलु दलसमुदायरूपो सौ मुख्यतः क * * * विभक्तुमर्हति । कर्णिका तु प्रथमं प्रतिपादितं वाग्भवयन्त्रमेव । अत्र वाग्भवशब्देन षोडशस्वरा अभिधीयन्ते । तथा च स्वयमेव व्याख्या सति प्रथमे स्वरसङ्घाः । इति कामराजादूर्ध्वत

इति अत्र कामराजशब्देन कामराजं द्वादशस्वरभेदेन भेदयित्वा तु विन्यसेदि व्याख्यास्यमानत्वात् अनच्कमेवात्र कामराजबीजमभिवाञ्छितं तदूर्ध्वत इति द्वादशार इत्यर्थः। तदूर्ध्वे शक्तिबीजं तु महायोनिः शतं लिखेत् इति तदूर्ध्वे द्वादशाराद्बहिर्भूत षोडशार इत्यर्थः। शक्ति बीजशब्देन स काममभिप्रैति। महायोनिर्नामोत्तरसूत्रे

p. 49)

वक्ष्यमाणा सा यन्त्रविन्यस्यत इत्युपचारेण द्वात्रिंशदरमभिधीयते। तद्गतं तदन्तर्गतिकामः। तेनायमर्थः। द्वात्रिंशस्यान्तर्वर्तिनि षोडशारे शक्तिबीजं लिखेदिति यावत्। त्रिदण्डं बिन्दुसंयुक्तं द्वादशस्वरभेदिनम्। महायोनिरितिख्याता जननी सा जगत्त्रये इति। त्रयणां दण्डानां समाहार स्त्रिदण्डं ते च हकारसकारौकारादि सान्तानामन्यतमं बिन्दुरनुस्वारः। द्वादशस्वर ऐकारः। तेनायमर्थः। हकार सकारौकादि सान्तानामन्यतम ऐकारो बिन्दुश्चेतीयमानुपूर्वी महायोनि संज्ञितेति अत्र कादिसान्त एव रूपा यन्त्रस्य बाह्यमण्डले द्वात्रिंशदरे विन्यसनीया इत्यनुक्तमप्यर्थाल्लभ्यं यतो वक्ष्यति तद्बाह्ये मातृकाः सर्वा इति

अथ प्रथमे स्वरसङ्घातं कामराजं द्वितीयके।
द्वादशस्वरभेदेन भेदयित्वा तु विन्यसेत्॥

षोडशारे महापद्मे स्वरं शक्त्यादि भेदयेत्।
तद्बाह्ये मातृकान् सर्वानादि बिन्दुक लतान्वितान्।

हंसबीजसमारूढान् कारयेत् परमेश्वरि।
एतद्यन्त्रपरं दिव्यं त्रैलोक्येष्वपि दुर्लभम्॥

मन्दिरस्योदरे सर्वं सुषिरेण तु वेष्टयेदिति।

अथैषां वाग्भवादीनां विन्यास प्रकारस्या स्पष्टाभिधानत्वात्तदेव
व्यक्ती करोति।

p. 50)

प्रथमे स्वरसङ्घातमित्यनेन पूर्वनिर्दिष्ट वाग्भवपदस्य षोडशवाराभिधायितां व्यावर्णयन् प्रथममण्डलविन्यास प्रकारमाह। कामराजमित्यादि षण्ण चतुष्कत्यागेन स्वराणां द्वादशसंख्यातानां वर्यायणे तात्पर्येण तात्पर्येण द्वादशस्वराणामन्यतमेन स्वरेण सह ककारलकारात्मिकामराजं विन्यसेदिति द्वितीयमण्डलविन्यासः षोडशार इत्यादि शक्तिरिति सकारः तमेवैकश षोडशभिस्वरैः संयोज्य लिखेदिति तृतीयमण्डलविन्यासः। तद्बाह्येत्यादि अत्र मातृकाशब्देन समस्तवर्णानामवरोधेपि स्वराणां पूर्वमण्डलेषु विनियुक्तत्वादविहित विनियोगस्य कादिसान्तस्य द्वात्रिंशत एव वास्यैव ग्रहणम्। बिन्दुरनुस्वारः। नादोनामतस्यैवद्राघी यान्धवनिः ऊर्ध्वरेखा विन्यासं बिन्दुनादा एव कलाः कलानां वर्णा भूताः अत्र बिन्दुनादान्वितस्य कादिसान्तस्य प्रत्येकं मेकारसहितं द्वादशस्वरभेदनमति पूर्वोक्ताल्लभ्यते। हंसबीजपदेन हकार सकारौ विवक्षति। द्वात्रिंशदरस्य मण्डलविन्यासः। एतद्यन्त्रमित्यादि मन्दिरशब्दः संवर्ताक्षरमाचष्ट। तथा च श्रीमते मन्थानभैरवे। ककारोमन्दिरः प्रोक्ता वर्णमरुरितीश्वरीति सुषिरशब्दः आकाशबीजम्।

p. 51)

घोषवर्णं तेनायमर्थः। एवं विधमेतद्यन्त्रं मन्दिरसंज्ञाक्षरस्य मध्ये कृत्वा तेन च क्षकारेण

सहितमेतद्यन्त्रं सुषिरसंज्ञितस्य हकारस्य मध्ये निक्षिपेदिति। अत्र हक्षाभ्यां स्वर व्यञ्जन व्यामिश्रमयीं सप्तकोटीश्वरीं महामातृकां लक्षयति। अत एव शक्तिबीजयन्त्रविन्यासो बोद्धव्यः। प्रथमं कर्णिकास्थाने पूर्वोक्तं वाग्भवयन्त्रमालिख्य तदभितः षोडशद्वादश षोडशद्वात्रिंशदराणि चत्वारि मण्डलानि वि * * * नि। तत्र प्रथममण्डले एकैकस्मिन् दले एकैक स्वर इति षोडशस्वरा विन्यासनीयाः। अनन्तरं द्वितीये द्वादशारे षण्ण चतुष्टयवर्जितानां प्रत्येकं कामराजाख्य कलाकार युक्तानां द्वादशानां स्वराणां यथा क्रमन्यासः। तृतीय षोडशारे प्रत्येकशक्तिसंज्ञित सकार संयुक्ताः। षोडशस्वरा अपि निधेया चतुर्थे द्वात्रिंशारे एकैक सकार एकारबिन्दुनादोपेता महायोनि सन्त्रिताकादि सान्ता द्वात्रिंशदिति एवं विधं यन्त्रं वेष्टयन्तं क्षकार मालिख्य तमपि वेष्टयते। हकारं लिखेदिति चक्रेऽस्मिन् शक्तिबीजं तु ध्यायेद्वै साधकोत्तमः। एषा रक्षामया प्रोक्ता नाम्ना त्रिपुरभैरवीति सुबोधम्।

p. 52)

कन्या नाम समोपेतो बिलद्वारं समाश्रितः।
योनिकुण्डादधस्थाप्य होमयेद्राजिका पुटैरिति।

योन्याकार कुण्डमयमर्थः। योनागकन्यकाः कामयते स तासां नामानि मनसा संकीर्तयन् बिलद्वारं समाश्रित्य योन्याकृति च किमपि कुण्डं खात्वा तस्य चाधोयन्त्रं निधाय सर्षपैर्भव्यवाहं तर्पयेदिति सप्तरात्रां महादेवि क्षुभ्यन्ते मदनोत्कटाः। विरहानल सन्तप्ता मूर्छा कुलितविग्रहाः। पतन्ति साधकस्याग्रे कन्दमानास्ततस्त्रियः। इति सुगमं भो साधकमहासत्वहाटकेश्वरविग्रह प्रविश्य साधकैः साध्यमधिकारं कुरुष्वन इति भोसाधकेति नागकन्यकान्यां यन्त्रबलाकृष्टानां वचः प्रविश्य क्रीडते सोपि यावदाभूत संप्लवमिति

सुबोधम्।

॥ इत्युत्तरषट्के विवरणे द्वितीयः पटः ॥

अथ स्थूलसूक्ष्म विभिन्नायां श्रीत्रिकविद्यायां स्थूलविद्यां वाग्भव कामराज शक्तिमयीं यन्त्रादिभिः सह विशेषसहितां निरूप्येदानीं केवलविशेषमयीं सूक्ष्मरूपां शुद्धविद्यां तत्प्रसङ्गेन श्रीमृत्युञ्जयसारः। श्रीमदमृतोद्योतोक्त महागुरुमण्डल श्रीमेरुक्रमदेवता स्वरूपसम्भूतं पदादि सङ्केतमक्षरार्थसङ्केतं श्रीमन्

p. 53)

महामातृकामयं कुलचक्रं च व्याकर्तुमारभते।
विशेश विद्यादेवेशि कीदृशी कुलगोचरे।
कीदृशत्वक्षरार्थं च पादादीं कीदृशं तथा॥
कुलचक्रं कीदृशं तु कथयस्वकुलेश्वर। इति।
एवं चतुर्णां प्रश्नानामत उत्तरमनुक्रमेण व्याकरम्।
वैषिकं समुद्धारं त्रिकस्य शृणु सुन्दरि।
यन्नज्ञानं सुरेशानि ब्रह्मविष्णवीश्वरादिभिरिति।

सुबोधम्।

अपरा च परा चैव तथैव च परापरा।

त्रिकविद्या क्रमस्यैताः शक्तयः कथिताः पराः इति त्रिकविद्याक्रमस्य वीर्यभूतत्वादिमाविशेषरूपाः शक्तय इति कथिताः। नादरूपा परावर्णो परा ब्राह्मीपरापरा।

गुरूपदेशतो ज्ञेया त्रिकविद्यामयोद्धृता इति।
प्रस्तार रहिता विद्या पापसङ्घक्षयंकरी इति।
नादोघोषः परा तत्स्वरूपा अवर्णस्वरूपा ब्राह्मीत्याकारः।

सा परापराख्या वाग्भवादि बीजत्रयविधुरा इयमेव केवला त्रिकविद्या। केवलं गुरूपदेशैकगम्या। प्राकतनस्य च पीठस्य मन्त्रमयीर्य स्वरूपिणीति। प्राक्तनं पीठमोढ्याणाख्यम्। तस्य मन्त्रप्रणवः।
तस्य वीर्यत्वेन निविष्टा। अनेन घोषाद्यवर्णब्राह्मी

p. 54)

सहितस्य प्रणवस्य रूपं सादाख्यं सूचयति। इति विशेषविद्यां सामान्येनाभिधाय तद्भेदान् विवरी तु मुपक्रमते। विशेषविद्ययेदानीं विद्याभेदं च भैरवि। कथा यम्यद्यदेवेशि शृणु वीरेन्द्रनायिकेति। इति सुबोधम्।

परापरा परादेवी अपारा च तथा क्रमात्।
वाग्वादिनीति कथिता सर्वविद्योत्तमामता। इति।

ब्राह्मी घोषवर्ण स्वरूप चक्रमयी विद्या वाग्वादिनीति यावत्।

तथा च वा * व्याहृतवन्तं लोकोब्रवीति ।

ब्राह्मी माहेति परापरा पराक्रमा विद्येश्वरेश्वरी ।

भैरवीति मया प्रोक्ता इति पराघोषः अपरा वर्णाः परापरा ब्राह्मीतीयमानु पूर्वी भैरवी विद्या आश्चर्यभूतो विभवः स्फुरमन्दानन्दसन्दोह तदद्भुतस्यात्मरूपस्यापरो क्षिकारः । तं ददातीति । यावत् तथा चाश्चर्यविषयोपलम्भात् सम्भूत प्रमोदातिरेकादस्य वश एव लोको व्याहरतीहेति भैरवी व्युत्क्रमा विद्यायमराज्ञीति सम्मता ।

मारणेति प्रशस्ता सादारणा यमहान्वितेति ।

अनन्तरं सूप्रवरसूत्रे कथितस्य भैरवी विद्याक्रमस्य विपरीतानुपूर्व यमराज्ञीति संज्ञता विद्या वै परीत्यं च ब्राह्मी प्रथमघोष पाठक्रमपदादरुणेति भातृव्यखेदासीनि कृत्वा यमहायमस्येयं हि सिद्ध विद्येत्यर्थः । तथा चदर्वी

p. 55)

विषहतः ख * * * त्वर्यमुपहतः कोशति जनः । अः इति

वायादिनि वै सौम्या विद्या स्वात्मप्रकाशिका ।

सौरेति कथिता देवि परमात्मप्रसाधिकेति ।

अत्राद्यवर्णघोषवाग्वादिन्याः क्रमवैलोम्यम् ।

विद्या चतुर्विधा देवि चतुर्वर्गफलप्रदा ।

ज्ञानेनैव हि विद्येषा सिध्यत्येवाज्ञया विनेति ।

चतुर्वर्गफलदातृत्वमेकैश शोविज्ञयः ।

ज्ञानेनेति विद्याद्भुत प्रभावादेव विचार्य विहिता भूतवशाक्तमन्त्रादिमयीमाज्ञां परिज्ञमात्रादेव सिध्यतीत्यभि प्रायः। विद्यानामपि मन्त्राणां मुद्राणां मण्डलात्मनाम्। वीर्यमाहेति विद्येषा पराज्ञापरमेश्वरीति। अत्रहेति श्लोकबन्धानुरोधपरमत्वेन परादिशक्ति विज्ञान विशेषभूतां साधकस्योपरि ग्रहणमभिवाञ्छति न तु वाग्वादिन्यास्य क्रम विशेषमभिप्रैति। इयमेव सर्वेषां विद्यामन्त्रमुद्रामण्डलानां तत्तदात्मीयकार्य कारणेपिर्य भूता एतद्विज्ञानमात्रोप ब्रह्मितः साधकेन्द्रः विद्यादिभिरन्यैरपि तत्तत्कार्यकर्म संपादनेष्वयत्नेनैवाधिकं प्रभवतीति तात्पयार्थः। अत्र हेतुरियं पारमेश्वरी वा ज्ञेति।

इदानीक्रम प्राप्तमक्षरार्थं व्यावर्णयितुमाह।
अक्षरार्थोपदेशं ते कथयामि शृणु प्रिये।

p. 56)

अपि देवा न जानन्ति कल्पकोटि शतैरपि।

त्रैपुरविद्याबीजभूतानां वाग्भवकामराजशक्तिबीजाख्यानामक्षराणां विनिमय रूपेणाग्न्यादि देवता रूपोयोर्थः। प्रकाश्यते। सोक्षरार्थः। तत्र प्रथमं वाग्भवविनिमय

रूपजातवेदो वाचकं मन्त्रमुत्थापयति।
श्रीकण्ठो वालीशश्चैव महाकालस्वनन्तरम्।
उद्धृतः सहजो मन्त्रो दिव्यो वै जातवेदस इति। अकार श्रीकण्ठः। यकारो वालीशः। मकारो महाकालः। एतेनेदं शब्दस्य प्रल्लिङ्ग प्रथमाविभक्त्यैकवचनान्तस्य रूपं मन्त्रो

भवति। अत्रावर्णऽयोनि बिन्दुरूपो हि वाग्भवस्य क्रमः।

तत्राद्यन्तवर्णयोर्यथावस्थितक्रममध्य पदस्य योन्याख्यस्यापि शीतसंहिता रूपावस्था वर्ण इवार्णात्मकत्वेन द्विरूपत्व सम्भवा। तद्विमय भूतं वर्णात्मक क्रमापद्य तत्संहिता रूपं यकारं मध्यमं कृत्वोच्चरं यद्येवमात्मको मन्त्रो भवति। अयमिति। तथा च साक्षच्छ्रुतिः। अयमग्निः प्रथमाजा ऋतस्येति सोयं लोकाः सोयमग्निरिति। अयमग्निर्दैश्वा नर इति।

अथ कामराजस्य विनिमयमाह।

महोकालोथ * ण्डीशः पीनाकी क्रोधभैरवः।

मन्त्रोयं परमानस्य योगिनी मेलनप्रद इति।

p. 57)

महाकालोमकारः। झण्डीशोयोनिः। पिनाकी ल कराः। क्रोधेश्वरः। ककार इत्यनयानुपूर्व्यापवमान वाचको मन्त्रः प्रकाशितो भवति। योगिनी मेलनप्रद इति योगिनीभिः पीठेश्वर्यादिभिः साधकेन्द्रस्य मेलनं सामरस्यमापादयतीत्यर्थः। इह कामराजान्तिम भूतमनुस्वारमादौ कृत्व तृतीय चतुर्थयोराकारं या क्रमं हितैव संहितारूपतया योनीबीजतामापाद्य द्वितीय तृतीयता प्रथमस्य ककारस्य चतुर्थां चोद्भाव्य विनिमयः कृतो वेदितव्यः। पवमानो हि द्वेधा वति। प्राणोपानश्च प्राणोग्निः अपरान आदित्यः। तदुभयमेलनात्तद्वाको मन्त्रो मेलकेत्येव रूपो भवति। अधुना शक्तिबीजस्याक्षरार्थं दर्शयति।

श्रीकर्णश्च भृगुश्चैवानुग्रहेशमनुस्वयम्।

मार्ताण्ड भैरवस्यास्य कथितस्ते मृगेक्षणे इति।

श्रीकण्ठ सुवाद्यवर्णः ग्रगुः सकारः। ओकारोनुग्रहेशः।

अत्र घोषस्य स्थाने आद्यवर्णविन्यासः।

तथा च श्रीनिश्वासकारिकायाम्।

अकारश्च हकारश्च लोपेतावेकरूपिणाविति। एतेन पुल्लिङ्गिनोदः शब्दस्य प्रमैकविभक्त्यं तस्य रूपं मन्त्रो भवति। अत एव विभक्ति लोपान्नात्र विसर्जनीयोच्चारः। असौ सौरो मन्त्रः। तथा च शृतिः।

p. 58)

यो सौ तपन्नुदेति। असावादि तु। एकविंशति च केवलं परायाः शक्तेः सोमसूर्यवह्निमयवि * तैजस प्राज्ञपुरत्रयसन्धुक्षण्या भट्टारिकायाः वाक्यं व्यावर्णाद्य परमशिवप्रधानमन्त्रस्य हंसस्य विषयानु रूपेणाक्षरार्थं दर्शयितुमुपक्रमते। महाकालौह सर्गौ ब्रह्ममित तेजसः। व्यापकस्य त्रिधाम्नां च मन्त्रोयं वीर्यवत्तर इति। महाकालो मकारः। हविसर्गौ घोषविसर्जनीयौ अत्र श्लोकबन्धमनुस्मरन् क्रमलोपेतमेवा चिकीर्ष इन्द्रबीजानामेव साकल्येन केवलमुपग्रहं करोति। न पुनर्व्याक्रियमाणस्य मनोरक्षरक्रमोप्ययमिति सन्दर्शयति। तथा च श्रीमूलावतारे दृश्यते। ईहं रूपमास्थापयेति। तत्र भ्रू मतिभिमन्त्र क्रमम्। श्रीमते ईरह ईलकं चैव ईरस्तं च वरानन इति। अत्र ह्रीं क्लीं स्त्रीम् इति भिमन्त्रक्रमः। ततश्च ब्रह्मभूतस्य त्रिधाम्नां सोमसूर्यादीनां व्यापकस्य च अमितस्य तेजसः। अक्षरार्थत्वेन प्रतिपादितत्वात् तत्प्रतिपादन क्रमस्य महच्छन्दमन्तरेणान्यस्य चिन्मात्र विनियामात्मकस्या सम्भाव्य मानत्वात् तदनुरूप एवाक्षरक्रम उत्प्रेक्षणीयः अयं हि हंसस्य उद्धारसिद्धः क्रमः। प्रथमो

घोषः द्वितीयो भवः। तृतीयो मकारः। चतुर्थो भृगुः।

p. 59)

पञ्चमस्य भव इति तस्य मकार भव श्रीकण्ठ भृगुरूप मन्त्रक्रम विनिमयो ज्ञेयः। तत्र भृगोर्विसर्जनीयमत्वं मन्त्रावसानत्वादावपनीयः। क्रमेणानेन मन्त्राणामुच्चारे कुलदेवताः। कुप्यन्ति साधकानां च धातृन् गृह्णन्ति भैरवीति। अनेनेति। अक्षराक्ष प्रमाणदर्शितेनायमर्थः। एवं विधं क्रममङ्गी कुर्वता साधकानामग्न्यादि देवता प्रकारोपनिमित्तः। प्रत्यवायो भवति। तर्हिंकः।

क्रम आ श्रीयतामित्याह।

तेजोनामविपर्यास सिद्धं गुरुमुखोदितम्।
वाग्भवं कामराजं च शक्तिं हंसं तृश्वेरम्।
जीवन्ति ये महात्मानः शीघ्रसिद्धि भवन्ति ये।
देवताश्चानु गृह्णन्ति कुलचक्राश्रया इति।

अक्षरार्थतया प्रदर्शितानिभि वायु सवित्र तेजांसि तेजः शब्दाभिधेयानि तेषां नामानि क्रमादयं मेलकोसौ मह इति चत्वारि एषां विपर्या स उद्धारक्रमदर्शितः। वाग्भव कामराजशक्तिबीजहंसाः। एतानङ्गीकृत्य पूर्वोक्तानि नामानि भित्वा जपतां श्रेयः सिद्धिर्भवति। दैवतानि हि यथावस्थितैरेव नामभिरुच्चार्यमाणैरुपास्य मानानि प्रीतिमुपायान्ति तथा च लोकिका अ स्वनामधेया नाम प्रौढजन स्फुटोच्चारणादपि बाल

p. 60)

जनोद्गीर्णैरनति स्पष्टविप्लुताक्षरैर्वा लापैः प्रीयमाणा दृश्यन्ते। तथा च श्रीतिः।
इन्द्रोनामेन्द्रो भवैनामेन्द्रं सन्तमिन्द्र इन्द्रादी च क्षते परोक्षेण परोक्ष प्रिया इव हि देवा
इति। प्रजायेमभिरुद्र प्रजाभिरिति ब्रूया न रुद्रेत्ये तस्यैव नामनः। परिभृत्यै इति च।
इत्यक्षरार्थ

सङ्केतमुपदिश्य पदादि सङ्केतमाह।
पदाद्यक्षरसङ्केतं वदामि शृणु भैरवि।
सर्वमन्त्रानुसन्धाने फलसम्पत्तिकारकमिति।

तत्र वाग्भवकामराज शक्तिरूपं बीजरूपेण त्रिपादीह विद्या। अतस्त्यान्येव बीजानि
पादशब्दाभिहितानि तेषामाद्यक्षराणि श्रीकण्ठक्रोधनाथ लकुलीश्वराख्यानि तेषु यथा सम्भवं
सकलामाकोपग्राहकत्वेन परमेश्वर विभतोयः सङ्केत समयः। स पादाद्यक्षर सङ्केतः स तेन
सकलमातृकोपग्राहकं पदाद्यक्षरस्वरूपमिति। * * मामनुसन्धाय विद्यामिमामपि
परिशीलयत्तन्मातृकामयत्वेन मन्त्रग्रामस्य समस्त मन्त्रानुसन्धान फलसंपत्तिर्भवतीति
तात्पर्यार्थः।
श्रीकण्ठोनादि भूतेन वाग्भवस्य कुलेश्वरि।
उपात्तं निखिलं बीजं चक्रं सारस्वतं महदिति॥

बीजचक्रमिति। षोडशस्वरा न भवान्छन्ति तत्र श्रीकण्ठेन

p. 61)

प्रथम पदादि भूतेनेतरेषां स्वराणामुपग्रहोदर्शितः।

आद्येन क्रोधनाथेन कामबीजस्य सुन्दरि।

आहृतं योनिचक्रं तत् सर्वकामफलप्रदमिति क्रोधनाथो व्यञ्जनः। प्रथमवर्णेनेन द्वितीयवादि भूतेन द्वात्रिंशत्संख्य संज्ञं सान्तं योनि चक्रतद्वर्णं कदम्बमवरुध्य वेदितम्।

आद्येन लकुलीशेन शक्तिबीजस्य सुन्द *

पादविद्या समुद्दिष्टा सर्वविद्या क्रमागता इति।

तृतीयपादादि भूतेन लकुलीशेन हकारेण तेन स्वरव्यञ्जना वा मिश्रमयं सप्तकोटीश्वरी संज्ञितां महामातृकापग्रह्णाति सैव पादविद्या भक्षवर्णमयी चरणविद्येति यावत्। तथा च श्रीमते। भक्षस्थापदसंज्ञेति पादविद्याया व्यामिश्रं मातृकामयत्वं श्रीसप्तकोटीश्वर्याश्चरण विद्यायास्तथाविधरूपत्वं च परमरहस्यत्वान्नेह प्रतन्यते। तेषां पदादीनां त्रयाणां वर्णानां मेरु क्रम देवतारूपत्वं परमरहस्यत्वाद्दिव्या ज्ञातिकमभयेन नेह प्रदर्श्यते।

व्याप्तिलक्षणम् -

इति पादविद्या श्रीकुलद्धकं विवृणोति। इदानीम् कुलचक्रस्य शृणुत्वं व्याप्ति लक्षणमिति।

कुलचक्रं मातृ * * * कावचम्।

तथैवात्रैव तत्रेषु पुरस्तादुक्तम्। पूजयेत्कुलपद्ममिति।

तच्च त्रिकोणरूप प्रस्तारमिह प्रकाशयितुमुपक्रान्तम्।

p. 62)

अतस्तस्य विद्यायाभिव्याप्तिः। तस्य लक्षणं व्याप्तिलक्षणम्। रुद्रभैरववीराणामिति।

आदिक्षान्तानुपूर्वी विशिष्टो वर्णः। रुद्रास्तद्विपरीतक्रम विशिष्टा भैरवाः। अकारादि

सकारान्ताः पञ्चविंशति वर्णाः क्षादिभिर्नावसानैर्वामिता वीराः। तेषां सर्वस्वमे तदेव हि मातृका चक्रम्। तेषां क्रमवैचित्र्याणां मूलभूतमिति कृत्वा सर्वस्वमिति वदति।

योगनीकुलमिति मातृका समूहस्य संज्ञा।
हृत्पद्ममध्यकुहेरेऽत्र कोणे भावयेत्सदा॥

अकारादि विसर्गान्ताः सर्वरेखा विभाविता इति।
अत्र त्रिकोणमयः प्रस्तारः तत्र सव्य रेखायां षोडस्वरा विन्यस्तव्याः। कोटिचन्द्रप्रतीकाश वाग्भवेन सुपूजिता। तेषां स्वरूप भावना प्रकारः। वाग्भवेन सुपूजिता इति। अनेन तेषामर्चनमन्त्रो वाग्भव इति दर्शयति ककारादि तकारान्तादक्षरेखाश्रयाः प्रिये। अनेक भास्करप्रख्याः कामराजाश्रयाक्षरा इति। अस्य च पूर्ववत् प्रक्रिया। थकारादि सकारान्ताः पूर्वरेखा समाश्रयाः। विद्युत्पुञ्जनिभा श्रेमाः शक्तिबीजेन सम्मता इति।
अस्यापि पूर्वदेवार्थः। मध्ये कुलाकुलादेवी द्वीपा विद्या प्रतिष्ठिता। इन्द्रचापप्रभा चण्डी हंसमन्त्रभाविनी।

p. 63)

गुरूपदेशतो ज्ञेया नाधितागमकोटिभिरिभिः।

अस्य सव्यदक्षरेखामयस्य सोमसूर्यवह्न्यात्मकस्य मन्त्रात्मनो विद्या पादत्रयमन्त्राभ्यर्चितस्य त्रिकोणस्य मध्ये पादादिविद्या विन्य * नीया। तस्याः कुलाकुलेति च नाम। चण्डीति सप्तकोटीश्वरी विद्या एकदेशो पादानेन पादविद्या अपि तन्मनत्वं प्रकटयति। अस्याश्च हंसो मन्त्रः। एवं वाग्भवादि पादत्रयाभ्यर्चितमातृका पङ्क्तित्रयमध्ये वर्तन्याश्चरणविद्याया अक्षरार्थ

प्रकरण प्रदर्शितस्य त्रिध्या व्यापकस्य हंसस्याभ्यर्चनमन्त्रतामुपदिशन् वाग्भवादिभ्योऽपि प्राधान्यं सूचयति। कुलचक्रमयी मूर्तिस्त्वदीया चाक्षमालिका। तथा विधा द्वतीय कमलानुग्रहीतं च पुस्तकं च त्वन्मयमेवेति। इत्थं हृत्पद्ममध्ये तु ध्यातव्यं सर्वदा प्रिये। योगिनां योगिनीनां च विद्यासिध्यर्थमुत्तमम्।

कुलचक्रं महादेवि त्वत्सेनहात् कथितं प्रिये।
आज्ञाधारे सदा देवि भावयेद्यः कुलेश्वरि।
तत्स्वाधीनं भवत्यागुस्थावरं जङ्गमं जगत्।

सर्वदाकुलस्तु योनौ प्रयतमानसः। योध्यात्यस्य योगिन्यो जायन्ते मदनातुराः। इत्यनेन प्रकारेण कुलचक्रस्य हृत्पद्म आज्ञास्थान मूलधारसंज्ञित

p. 64)

आधारत्रये हि ध्यातस्य क्रमात् सारस्वत सिद्धिर्जगत्

प्रभूता योगिनी वन्द्यताभिः फलवत्वं दर्शयति।
कुलचक्रं तु विज्ञेयं दिव्यदेहं शिवस्य तु।
शास्त्राण्यन्यानि मन्त्रांश्च पादपांसुमिव त्यजेत्॥

इदं चाति रहस्यं तु कथितं ते मृगेक्षणे।
कर्णात्कर्णे प्रयोक्तव्यं न च लेख्यं च पुस्तके।
देयं वीरप्रतायेदं हृष्टाय सततं प्रिये॥

भक्ताय देशिकेन्द्राणामुन्नताय स्थिर वृते इति ।
चक्रस्यमभिमानमेवं विस्तरेण वर्णयन्नुपसंहरति ।

॥ इत्युत्तर षट्कविवरणे तृतीयः पटलः ॥

इति विशेष विद्यां प्रसङ्गा गतानक्षरादिश्च प्रकटयानन्तरं त्रिपुरायोगाख्यमन्तर्यागं वक्तुमुपक्रमते ।

॥ त्रिपुरायोगम् ॥

अथातः संप्रवक्ष्यामि त्रिपुरायोगमुत्तमम् ।

हृद्व्योमपद्ममध्यस्थं हंसाख्यां नाम नामतः । इति ।
हृत्पद्मं व्योमपद्मं चेति हृद्व्योमपद्मयोर्मध्यसितं हृद्व्योमपद्ममध्यस्थं व्योमपद्मं नाम बिन्दुस्थानादुपरि योगपीठसंज्ञितं महापद्मवनं नामशब्दः प्रसिद्धौ । अयमर्थः ।
तत्किलानामतो हंस इत्याख्यायते ।

p. 65)

तद्धृत्पद्ममध्ये च तिष्ठति । व्योमपद्ममध्ये च न केवलं हृत्पद्ममेव हंसस्य स्थानं व्योमपद्ममपीति तात्पर्यार्थः । तथा च हंस परमहंसस्थान तथा द्वयमप्ये तत् श्री कुब्जिकामते समुद्धुष्यते ।

षण्णवत्याः परो हंसः स चाम्नाय विदो विदुः।
सिद्ध कौलाभिपन्ना नामितराणां न दर्शनम्॥

तत्र दिव्यक्रमं पूज्य पादचारेण योगिनः।
तेन गच्छेन्निराधार तत्पदं परमं पदम्॥

द्वादशाधार मूर्तिस्थानमिति यदेतत् परमं बीजं हंसाख्यं हृदि संस्थितमिति च।

हंसाख्येन हंसकाराख्यं वर्णद्वयमुपगृह्यते।
योगपीठासनासीनं चामुण्डा चण्डिकायुतम्॥

यद्यपि चेदहंसाख्यमुभयाधिष्ठानं तथापि।

अत्र योगपीठासनासीनं कृत्वा चामुण्डया ओकारेण चणिकया विसर्जनीयेन संयुक्तमापादयेदित्यर्थः।

योगपीठं नाम व्योमबीजः तेनैव कल्पयेत्।

प्रेतं सादाख्यं परमेश्वर इति ततोनन्तरोक्तेनमनुना सादाख्यं परमेश्वरं प्रेतं कल्पयेत्। अयमर्थः। अनन्तरं शक्तिबीजमुच्चार्य ततो नमोन्तेन सदाशिवं महाप्रेतानायेत्यनेन प्रेतासनं कल्पयेदिति।

p. 66)

तस्योपरि न्यसेन्मूर्तिं नादबिन्दुकलामयीमिति।

तस्येति प्रेतं परामृशति। * दोनाम लकुलीश्वरः।
बिन्दुरिति। संवर्तनाथः। अनयोः कलां तं मयीं पञ्चाशद्वर्णमयीति यावत्। हकारस्य हि
कलाः षोडशस्वराः। क्षकारस्य हि कादयर्थान्ताः। स * लेनैव मन्त्रेण वक्राण्यङ्गानि
कल्पयेदिति यावत्।

ध्याये दूपं महेशान्या निश्चलेनान्तरात्मना।
उदयार्कसमप्रख्यां किरणानेकसङ्कुलाः॥

बन्धूक कुसुमच्छायां सिन्धूरारुणविग्रहम्।
रक्तवस्त्रावृतां देवीं सर्वाभरणभूषिताम्॥

जटाजूटधरां सौम्यां मध्येन्दुकृतशेखराम्।
सर्वलक्षणसंपन्नां पर्यासनसंस्थिताम्॥

आपीनमण्डला भोग समुन्नत पयोधराम्।
वलीतरङ्ग मध्यस्थां रोमराज विभूषिताम्॥

मदिरानन्द चैतन्यामाह्लाद जननीं पराम्।

त्रैलोक्य मोहनीं देवी मीषत्प्रहसिताननाम् ॥

दिव्यरूपधरां देवीं द्विनेत्रां तु शिवां पराम् ।
सर्वालङ्कारसंपन्नां व्योमपद्मासनस्थिताम् ॥

वामहस्तनिविष्टेन दिव्यज्ञानमये न तु ।

इत्येतदन्तं सुगमम् ।

p. 65)

दक्षिणेन समुद्रेण सूर्यकोटिसमप्रभाम् ।

अक्षमालां च हस्तेन सम्बद्धमुद्रेणेति व्याख्यानमुद्रातया सहितेनेति यावत् ।
सूर्यकोटिनिभैर्मुण्डै स्फुरत् ज्वालावली धरैः ।

ग्रन्धिता दिव्यरूपां तु रक्त बिन्दुप्रमोचनीम् ।
चण्डविद्यामयीं मालामपादतललम्बिनीम् ॥

गलेन विभृतीं देवीं चिन्तयेल्लोकमातरम् ।

एवं ध्यात्वा महादेवीमिति या किलसूर्य बिबनिभत्वादि युक्ता मुण्डमाला सा चित् चण्डिका विद्यामयी चण्डिविद्यानाम स्वरव्यञ्जन व्यामिश्रमयी माहामातृको सा हि मण्डमालारूपेण

परिणतया पारमेश्वरीं मूर्तिमाश्रिता चण्डिकास्तीति कदम्बवन मध्यगामिति। तत्रासनताङ्ग तस्य महावन संज्ञितस्य व्योमाम्बुजस्योदरे यत्कदम्ब गोलकमिति पुरा कथितम्। तत्कदम्ब शब्देन प्रतिपादयति तदेव वन प्रभावृतां निरन्तरतया वनमिति भावः। उक्तं च श्रीमतोत्तरे। अनेकार्चिः समाकीर्णं कदम्बवनस्थिताम्। इति

ऊर्ध्वमार्गस्थितं पद्मसहस्रदलसङ्कुलम्।
वर्षन्तं मृतोघेन द्रवल्लाक्षारुण प्रभम्।

तेनैव प्लावयेद्देवीं परेणैवामृतेन तु इति। अत्रोर्ध्व

p. 68)

मार्गशब्देन महापद्मवनादुपरितनं द्वादशमाचष्टे।
ततः श्री कमन्निन्ने श्रीमते प्रकाश्यते।
द्वादशान्ते परं प्रोक्तं सूक्ष्मं वै ब्रह्मरन्ध्रगमिति।
तत्र तस्मिन्नमृतद्रवोपि तत्रैव दर्शितः महारन्ध्रो परिस्थिता तु द्वादशाङ्गुलभामिनी।
द्वादशान्तोर्ध्वगा तस्मिन् प्रद्रवन्तीति सास्मृतेति द्रवल्लाक्षारस प्रभेति एवं विधं पद्मं ध्यात्वा तदुद्भवेन परामृतेन देवी माप्लावयेदित्यर्थः।

एवमभ्यस्य मानस्य साधकस्य महात्मनः।
त्रैलोक्यं क्षुभ्यते सम्यक् नान्यथा वीरवन्दिते।

इति सुबोधम्। अत्र त्रिकविद्याया च सा द्विविधा सम्भवति वाङ्मयी ज्योतिर्मयी चेति।

तत्र वाङ्मयी वर्णस्थान प्रयत्नाभि व्यङ्ग्या वैखरी स्वरूपा प्राण प्रावृत्तिनि बन्धना भवति। सैव पादत्रयात्मना यथावं निर्दिष्टा। ज्योतिर्मयीति नाम आधार हृदयं ब्रह्मरन्ध्र संज्ञे गुहादितये क्रमादुदय लय विश्रामरूपानुच्चार * ष्मामाणापरामध्यमा पश्यन्ती संज्ञिता सद्योदित स्वाभावा अध्यात्महारती विद्या। तथा च श्रुतिः। तिस्रो वाचः। प्रवदज्योतिरग्रा इति। चत्वारि वाक् परिमिता पदानि तानि विदुर्ब्राह्मणाये मनीषिणः।

p. 69)

गुहा त्रीणि निहितानेङ्गयन्ती तुरीयं वाचो मनुष्या वदन्तीति। तस्या एवं विधाया भावनाप्रकारमाधान भूतानि उदयविश्रमस्थानानि चत्थयितुमारभते।

मन्त्रध्यानं कथं प्रोक्तमुत्थानं च कथं भवेत्।
लयः कस्मिन् भवेद्देवि विश्रामश्च कथं भवेत्॥

एतत् कथयदेवकारुण्येन महा प्रभो। इति सुबोधम्।
तत्रोदधविश्रमस्थानानुरूपत्वान्मन्त्रध्यानस्य
प्रथमोद्देशेऽपि पूर्वमुदयानि स्थानान्येवमाह।
आधारे उदयं देविलियं हृदयमध्यगम्।
विश्रामं ब्रह्मरन्ध्रे तु त्रिलक्षं परिकीर्तितम् इति।

उद्यमरूपेण सकलमन्त्रवीर्यभूतस्य स्पन्दनस्य प्राथमिक आविर्भावं लयो विशेषवासः। जुषमाणेन चोद्यमात्रेण रूपेणैका कारतयो स्थितस्य चिणि चिण्या देशनात्मना बहुविधभावः। उक्तं च श्रीमते।

चिणीति प्रथमः शब्दश्चिणीति द्वितीयकः।
वीरवाकी तृतीयस्याश्छङ्ख शब्दश्चतुर्थकः॥

पञ्चमं तन्त्रिनिर्घोषं षष्ठं शंखं तथा।
सप्तमं कंसतालं च मेघशब्दं ततोष्टमम्॥

नवमं वह्नि निर्घोषं दशमं दुन्दुभिस्वनम्।
हननेन विना जातमहाहतमिहोच्यते इति॥

p. 70)

विश्रामो विरामः ज्योतिर्मय्या विद्याया त्रिविधोच्चार श्रीमतो प्रकाश्यते।

शुद्धद्वन्द्वजसङ्कीर्ण उपदेशस्त्रिधा स्थितः।

उद्भवे शुद्ध इत्युक्तो विशेषोर्द्वन्द्वजस्मृतः संकीर्णे लयः संस्थोपि उपदेश त्रिधा इति त्रिलक्षणं परिकीर्तितमिति। उदयादि स्थानानि त्रीणि लक्षणानि तानि च साधकानां मन्त्रवीर्यरूप * * * क्षणीयत्वाल्लक्षणीति कथ्यते। इति ज्योतिर्मध्या विद्याया उच्चारक्रममभिधाय तत्स्वरूपमभिदधाति।

आधारगुदमित्युक्तं रक्तकिञ्जल्कशोभितम्।
वाग्भवं तस्य मध्ये तु विस्फुरं * * प्रभम्॥

हृदये कामराजं च द्रवल्लाक्षारसप्रभम्।
ब्रह्मरन्ध्रे तु शक्त्याख्यं द्रुतपारतसन्निभमिति।

श्री त्रिकविद्या आधार हृदयब्रह्मरन्ध्रेषु क्रमादुदय विश्रामलयान् हजमाना तटिल्लाक्षारसपारत प्रभा वा वाग्भव कामराज शक्तिबीजसंज्ञिता ज्योतिर्मयी विद्या भावयितव्येति। मन्त्रध्यानं महादेवि सिध्यते ब्रह्महायदि। तव स्नेहान्मयाख्यातं न देयं यस्य कस्यचित्।
इति मन्त्रध्यानस्येयं प्रशंसा।

जपेन्मन्त्रवरं श्रेष्ठं योन्यासन सुसंस्थितः।

p. 71)

निस्तब्धं कुञ्चिदं कायं न भूतं न विलम्बितम्।

योन्यासनं नाम पाट तलद्वयमितरे तरेण सन्धायतदुरि शरीरस्य संस्थितिः। कुञ्चितं कृत्वा कुञ्चितमित्यत एवं कृतं कायं कृत्वेति योज्यम्। अक्षाराक्षरसन्तानं निःसन्दिग्धमना जपेत्। इति। अक्षरेणाक्षरस्य सन्तति रविच्छिन्ना यथा भवति तथा जपेत्। इत्यर्थः।

तद्गतस्त्वेक चित्तस्तु न्यासं कृत्वा यथोदितम्।
देव्यास्तु पुरतो लक्षं कृत्वा लक्षत्रयं जपेत्॥

रक्ताश्वमारपुष्पैस्तु गुलाज्यक्षीरसंयुतैः।

कुण्डे योन्याकृतौ देवि जपान्ते जुहुयात्ततः ॥

पूर्वसेवाकृता तस्य भवत्येव न संशयः ।
अनेन विधिना युक्तो मन्दभाग्योपि सिध्यति ॥

मुच्यते सर्वरोगैस्तु असाध्यमपि साधयेत् ।
अत ऊर्ध्वं जपेद्यस्तु साधको वल्लभे शृणु ॥

लक्षमेकं जपेद्यस्तु तद्गतजितेन्द्रियः ।
दर्शनात् क्षुभितः सर्वा योषितो मदना तु राः ॥

पतन्ति साधकस्याग्रे निर्लजाभयवर्जिताः ।
द्विलक्षेण जनाः सर्वे एतस्मिन्विषयस्थिताः ॥

आगच्छन्ति यथा तीर्थमत्यन्ता कुलविग्रहाः ।
ददन्ति तस्य सर्वस्वं तस्यैवा श्रेष्ठसंस्थिताः ॥

p. 78)

त्रिलक्षैस्तु तथा जप्तैमण्डलीकः स मण्डलः ।
वशं नयन्ति ते सर्वेनात्र कार्याविचारणा ॥

षड्भिर्लक्षैर्महीपाल स सहृत्य बलवाहनाः ।

लक्षैर्द्वादशिजप्तैर्यक्षरक्षो गणेश्वराः ॥

वशमायान्ति ते तस्या ज्ञानं कुर्वन्ति नित्यः ।
लक्षैः पञ्चदशैजप्तैः साधकस्य वरानने ॥

सिद्धविद्याधराः सर्वे गन्धर्वाप्सरसादयः ।
वशमायान्ति ते सर्वेनात्र कार्याविचारणा ॥

दुराच्छ्रवण विज्ञानः सर्वज्ञत्वं प्रजायते ।
शान्ति पुष्टिकरस्तुष्टि कृद्धोमानृयते क्षणात् ॥

तथाष्टादशभिर्लक्षैर्देहेनानेन साधकः ।
उत्तिष्ठं मेदिनीं त्यक्तवा दिव्यदेहः प्रजायते ॥

भ्रूमते स्वेच्छया लोकाच्छिद्रान् पश्यन्ति मेदिनीम् ।
अथ विंशतिभिर्लक्षैर्विद्याधरपतिर्भवेत् ॥

साधकस्तु भवेद्देवि कामरूपी महाबलः ।
त्रिंशल्लक्षैस्तथा जप्तैः सिद्धयोगेश्वरेश्वरः ॥

चत्वारिंशतिभिर्लक्षैर्ब्रह्मा विष्णुश्च शाश्वतः ।
षष्टिजप्तैस्तु रुद्रत्वमीश्वरत्वमशीतिभिः

लक्षकोटितया देवि लीयते परमे पदे ।
साधकस्तु भवेद्देवि त्रैलोक्यस्यापि दुर्जयः ॥

p. 73)

त्रैपुरं भैरवं तेजः शिवं परमकारणम् ।
अक्षयन्तमजं शान्तमप्रमेयमनिपमम् ॥

लभते सनसन्देहो देवि सर्वत्वमीप्सितम् ।

इत्येतदन्तं सुगमम् ।

॥ इत्युत्तरषट्कविवरणे चतुर्थः पटलः ॥

नव लक्षं कथं देवस्थानं तस्यापि कीदृशम् ।
एतन् मे संशयोनाथ वक्तुमर्हसि शूलधृगिति ॥ सुगमम् ।
अनन्तरं नवलक्षाणि तत्स्थानानि च वर्णयुतुमुपक्रमे ।
सारात्सारतरं मुख्यबाह्यसंख्या विवर्जितम् ॥

शरीरे संस्थितं देवि नवलक्षं च दुर्लभमिति ।
अत्र बाह्यसंख्या विवर्जितमित्यस्याभिप्रायः ॥

लोके हि लक्षः शब्दः संख्या विशेषे प्रसिद्धिः।

इह शब्दार्थो न भवतीति इह लक्षशब्द वाच्यानि नवस्थानानि गतानि। वक्ष्यमाण दीपशिखाद्याकृतीनि तेजांसि तानि च इह निष्कीलत्रिकविद्याक्षराणां श्रीकण्ठ वाग्भवादीनां रूपाणि।

मेढ्राधारस्वनाभिश्च हृत्कण्ठेबिसलम्बिका।
तथा च भ्रूबिलं चैव नवमं ब्रह्मरन्ध्रगमिति।
आधारशब्दस्य पूर्वोदित एवार्थः। बिलं नामकण्ठमूलम्।

p. 74)

बिसलम्बकानामो पुरितनतालुस्थानं शेषं सुगमम्।

मेढ्रदीपशिखाकारमात्मारे कनकप्रभम्।
नाभिस्थ सूर्यबिम्बं तु तरुणं कुलसुन्दरि॥

हृदि ज्योतिशिखाकारं तदूर्ध्वे भास्कराकृतिम्।
गलेदीपशिखाकारं लम्बिके चन्द्रसन्निभम्॥

भ्रूमध्ये रत्नसंकाशं नवान्ते विश्वतेजसम्। इति।

अनेनाधारगतं तेजोविशेषं व्याकृतं विद्याप्रसङ्गेण सर्वमन्त्राणां पञ्चलक्षणम्।

स्पर्शनं नाममन्त्रेण सहसाधकस्य सम्बन्धः ।
तस्यापि चिह्नं कम्पनम् । तच्च हृदिपूर्वं जायते ।
अवलोकश्चेति मन्त्रो यदि साधकमवलोकयन्ति ।

तदेवावलोकनम् । तस्यापि चिह्नन्धूननम् । तदपि कर्णे भवति । समभाषं चेति मन्त्रो यदि साधकं भाषते तत्सम्भाषणम् । तस्य चिह्नं स्तोभः । साचास्वयं वंशस्य समस्तविद्या मन्त्रपरिकल्पनम् । बिन्दुदर्शनमिति बिन्दुशब्देन मन्त्रस्यात्मा विवक्षितः । मन्त्रो यदि साधकस्यात्मनं दर्शयति । तद्बिन्दुदर्शनम् । तच्च भ्रूमध्ये भवति । तच्चिह्नमणिमादि गुणावाप्तिः । स्वयमावेशनमिति । मन्त्रो यदि स्वात्मनि साधकमावेशयति । तत्स्वयमावेशनम् ।

p. 75)

तद्ब्रह्मरन्ध्रो भवति । तस्यापि चिह्नं देहस्योपतनम् । उक्तं च श्रीमते ।

स्पर्शनं हृदि संस्थं तु आलोकः कण्ठदेशतः ।
तालुस्थाने तु सम्भाषा दर्शनं बिन्दुमध्यतः ॥

स्वयमावेशनं देविकं द्विजरन्ध्रेन संशयः ।
स्पर्शने कम्पनं ज्ञेयमालोकेधूननं भवेत् ॥

सम्भाषे तु भवेत्स्तोभः शास्त्रार्थं चैव मन्यते ।

दर्शने तु गुणावप्तिरणिमादि गुणाष्टकम् ॥

स्वयमावेशनं देवि उत्पतेन्नात्र संशयः ।

॥ इत्युत्तरषट्कविवरणे पञ्चमः पटलः ॥

अथ देव्यावाहनप्रकारं दर्शयितुमुपक्रमते ।
विद्याकोशं प्रस्तोति ।

विद्याकोशं प्रवक्ष्यामि सर्वसिद्धिप्रदायकम् ।
वाग्भवेन वरारोहे देव्याश्चक्रं प्रपूजयेत् ॥

विद्याकोशमिति कोणकर्णिकं सादाख्यं प्रेत पीठसनाथमष्टदलपद्मं वक्ष्यमाणमभिप्रैति ।
देव्याश्चक्रमिति विद्याकोशमित्यर्थः । वाग्भवेन मन्त्रेणार्चयेदित्यर्थः ।

तन्मध्ये वर्ण * पात दिव्यवपुद्धराम् ।
नादबिन्दुमयीं देवीं ध्यात्वा सकलमन्त्रतः ॥

p. 76)

वक्त्राण्यङ्गानि विन्यस्य प्रतोर्ध्वे पूजयेदिति ।

बिन्दुनादावतूपुराव्याकृता वा ज्ञाक्षरेण तावत्र वर्णसङ्घातस्य प्रत्येकं वीर्यतया निविष्टौ

वेदितव्यौ। तथा चोक्तं क्रमनिर्नये श्रीमते। महामायाक्षरः पुमां देवि द्वाभ्या ममला चतुष्टयमिति। सकलमन्त्रत इति ककारसहितेन मन्त्रेण कामराजाख्येनेति यावत्। प्रेतोर्ध्वे पूजयेत्यर्थः। अत्रानुक्तमपि शक्तिबीजेन सादाख्य प्रेतं कल्पयेदिति। अन्तर्यागभूतं त्रिपुरा योगोक्त प्रकारेण वेदिनीयम्। कोणस्था देवतास्तिस्त्रोरति प्रीतिमनोभवाः। वामे रतिस्तथा प्रीतिर्दक्षिणे मदनोग्रतः। इति सुगमम्।

मूलविद्यान्यसेत् पश्चाल्लक्षणेन समन्विताम्। इति। मूलविद्यानां प्रथममाविनो ब्राह्मादि चण्डिकानन्तानष्टौ दीर्घस्वरांश्चरा महाविभिः। प्रत्येकमा शब्दावसानौः क्षादिलान्तैरष्टभिर्व्यञ्जनैः क्रमादिभिः संयोज्य एवमष्टविभागा या विद्याभिधीयते। सा तथोच्यते। तामेवं विधां विद्यां कोशस्याष्टदलेषु क्रमाद्विन्यसेत्। विन्यासं मनसा भावयेदिति तात्पर्यार्थः। एकस्मिन्दले आकारः क्षकारः आ ई शब्दश्चेतीयमानुपूर्वी विन्यस्य अपरस्मिन्नीकारो लकारः आ ई शब्दश्चेतीयमानुपूर्वी।

p. 77)

एवमनयादीशान्येष्वप्यवगच्छेत्। आसनामप्यष्टा नामानुपूर्वीणां ब्राह्मादय एव संज्ञाः। एव देवतन्त्रे  कुलाष्टकमिति श्लाघ्यते। अनन्त * * लक्षणसंयुक्तामेवमूलविद्याक्षरानुपूर्वी स्वयमेवोपन्यस्यति।

आकारेण क्षकारस्यादायीं सर्वत्र योजयेत्।
ईकारेण लकारस्यादूकारे * हकारकम्॥

ॠसायोग समाख्यातो लॄषायोगस्तथा परः।
एकारेण शकारस्यादौकारेण वकारकः॥

अंकारेण लकारस्याद्यजेद्देवि कुलाष्टकम् ।
अष्टपत्रमूलविद्यानाम्ना त्रिपुरभैरवि ॥

एवमुद्धारेण क्रमानुसारेण मन्त्रध्यान योगादीनुपन्यस्यानन्तरं जपविधेस्तथाविधक्रमविपर्यास श्रेयस्करणम् । अन्य * * करणे च प्रत्यवाय बहुलतां प्रदर्यितुं प्रकरणमिदमारभते । आदिमध्ये तु मध्यादावन्तमन्ते च संस्थितम् । पुरक्षोभाय जप्तव्यं विधिनानेन साधकैरिति । तथा * * पूर्वपस्त्यो वाग्भवादिः शक्तिबीजान्तः क्रमो न सृष्टिक्रमो भवितुमर्हति नापि संहारक्रमः नाप्युभयात्मक स्थितिक्रमः । न ह्येतां क्रम त्रयीमतिरिच्य क्रमात् क्रमानन्तर सम्भा * व युज्यते । अतः परं रहस्यार्थ गोपायनपरः परमेश्वरो वाग्मन्दाधिकारित्वं विद्यायः परिजिहीर्षन्नुद्धार

p. 78)

क्रमोपप्लवं क्रमस्य विहितवानिति बोद्धव्यं तन्त्रान्तरेष्वपीय मेवेति दृश्यते । तथा च परमेश्वरे मते । प्रथमं वाग्भवादि शक्तिबीजान्तमुद्धृत्य जपविधापाद्यम मध्यगतमित्यादिना प्रकरणेनतमपवदति । तथा च लघुपादैः । ऐन्द्रस्येवेत्यादिना श्लोकपाद संख्याक्षर क्रमेण वाग्भवादिमेव क्रमं दर्शयद्भिरपि । आधारक्रमे वाग्भवमध्यपातिता प्रकाशनेन संक्षिप्तश्चर्चापादैरपि मूर्ध्निस्फुरदित्यानिनासौ क्रमौङ्गीकृतः । अत इहाप्यासौ न परमार्थतया बोद्धव्यः । अयं श्लोकार्थः । उद्धारक्रमेखलु वाग्भवमादि भूतं कामराजं मध्यमम् ।

तत्राभूत हि वाग्भव कामराजस्थाने विन्यस्य मध्यभूतं कामराजं वाग्भवस्थानीयं कृत्वा अन्तिमबीजं यथावस्थितमेव विधाय जपेत् । एतत् क्रम विशेषमेव विशिष्टं जपतां

साधकानां पुरक्षोभो भवति। पुरशब्देन बुद्धादय उपादीयन्ते। तेषां क्षोभः पुरक्षोभः स च साधकाज्ञा प्रभावेन साध्यस्य जाग्रदवस्थापन्नस्य सुषुप्ताद्यवस्थोत्पादनमेवं विधं पुरक्षोभं साध्यस्य साधकः सम्प्रा?दयितुं प्रभवेदिति यावत्। बुध्यादीनां पुरत्वमपि हंसभेदे समुद्घोषितम्।

कायप्राणकयीरूपे विचरन्ति पुरत्रये।

p. 79)

तस्य स्वरूपौ भरणाः शक्तिस्त्रिपुरभैरवीति।
बुद्धिप्राणशरीराख्ये यदे तस्मिन् पुरत्रये॥

अहङ्कारद्वसत्यात्मा तेनायं पुरुषस्मृतः।
एतत् पुरत्रयं दग्धं येन सत्त्रिपुरान्तक इति।

प्लुतदीर्घह्रस्वान्त सहितः कामराजादि शक्तिबीजान्तः क्रम उद्दिष्टः इति संहारक्रमः। अनन्तरं स्थितिक्रममाह। आदिमादिमनादिं च मध्यममध्यममध्यमम्। अन्तमन्तमनन्तं च त्रिपुराशीघ्रसिद्धिदेति। अत्रैकानादि पादेनोद्धारक्रम प्रथमभूतवाग्भवमभिसन्धत्ते। द्वितीयेन तद्विशेषभूतमाद्यवर्णम्। तच्च द्वयमनादिर्मध्यमं कृत्वेत्यर्थः। मध्यममध्यमिति। एकोमध्यम शब्द-उद्धारक्रममध्यभूतं कामराजं प्रतिपादयति। द्वितीयस्तद्विशेष भूतमनन्तशब्दं तदुभयं मध्यममादि कृत्वेति यावत्। शक्तिबीजस्य विशेष सहितस्योद्धारक्रमान्त्य भूतद्वारान्तमन्ते च संस्थितमिति वचनार्चानुक्तमेवात्रान्तिममध्यं सिध्यतीति। अयं संहारक्रमः। अन्तमन्तमनन्तं चेति पूर्ववदन्तशब्दाभ्यां शक्तिबीजं

तच्छेषभूषतं घोषं चाभिप्रैति। अनन्तमादि कृत्वेत्यर्थः। अनेन सृष्टिक्रमाभिधाधिना वक्ष्यमाण ह्रस्वदीर्घादि सूत्रप्रतिपादितो ह्रस्वादि

p. 80)

प्लुतान्तक्रमो दर्शितः। इदं क्रमद्वयमेकी कृतं स्थिति क्रमः। तथा चोक्तं पारमेश्वरे मते।

आद्यममध्यगतं कुर्यादुभावन्ते नियोजयेदिति। अमुं क्रमं जपवतां साधकेन्द्राणां पुरत्रयसन्धुक्षणी भगवती शीघ्रसिद्धिदेति। आत्मस्वरूपं प्रकाशयति। उक्तं चामृतोद्येते। शीघ्रसिद्धिशब्दस्यात्माभिधायित्वम्। शीघ्रन्ते सिद्धिरितिख्यातम्। अमृतो दधिमध्यगमकारमूर्तिमात्मानं वीराः पश्यन्ति सन्ततमिति। उक्तं च श्रीमदुत्पलपादैः आदिसिद्धो महेश्वर इति इयं स्थिति क्रमविद्या उक्त प्रकारादन्यथोपदिश्यमानाचेन्न सिध्यतीति प्रतिपादयति।

आदिमेन तु सा लुप्ता मध्यमेन तु कीलिता।
अन्तमेन तु साच्छिन्ना तेन विद्या न सिध्यतीति।
उक्तक्रमस्यादिमः कामराजः तेन विद्या चेल्लुप्ता न सिध्यति। उद्धारक्रमेभ्या श्रीयमामेण वाग्भवोभ्यादिमो भवति। ततः कामराजे नादिमेन तु लुप्ता भवति मध्यमेन तु कीलितेति कीलिता वियुक्तेति यावत्। उक्तं श्रीमातृकातन्त्रे। मन्त्रायथा न सिध्यन्ति प्रणवज्ञानकीलनात्। तथा हं स परिज्ञानं वियोगादित सुन्दरीति। अत्र हि क्रमद्वयरूपे स्थिति क्रमे संहारसर्गक्रम योगमध्यमे

p. 81)

वाग्भवन्तेन लुप्तापि यदीयं विद्या स्यात्तदापि न सिध्यति। उद्धारक्रमे हि कामराजो मध्यमः। तेनोद्धारक्रमाङ्गीकारे मध्यमेन तु कीलिता भवतीति। अन्तिमेन तु साच्छिन्नेति अन्तरोक्ता या विद्याया अन्तिमो वर्णः। कामराजः तेनापि यदि लुप्येत तथापि न सिध्यति। उद्धारक्रमाङ्गीकारे हि शक्तिबीजस्यान्तिमत्वादन्तिमेन विच्छिन्ने निकृतेर विद्या न सिद्धये भवतीति यावत्। अनन्तरं सृष्टिक्रममाह।

ह्रस्व दीर्घक्रमेणैव प्लुतान्ते तु वरानने।
विशेषेणैवमुच्चार्य त्रैलोक्यमपि साधयेदिति।
ह्रस्वो नाम शक्तिबीज विशेषभूतो घोष्टवर्णः।
दीर्घ इति वाग्भवविशेष भूतो मातृका प्रथमवर्णः।
प्लुतोपि कामराजबलभूत आकारः। एषां ह्रस्वदीर्घ प्लुतमन्योन्यापेक्षं तथा हि। अर्धरात्रो घोषः। तदपेक्षयैकमात्रो ह्रस्वदीर्घप्लुतो भवति। एवं भूतह्रस्वदीर्घप्लुतात्मविशेषसहितं शक्तिबीजादि कामराजान्तं वर्णत्रयमुच्चारयतः साधकस्य त्रैलोक्यमपि सिद्धं स्यात्। त्रैलोक्यं नाम भूम्यन्तरिक्ष स्वर्गाख्यम्।

बाह्यं पुरत्रयं तद्विधेयं भवतीत्यर्थः।
प्रत्यक्षं जायते देवि त्रिधा सिद्धिं ददात्यसौ।

p. 82)

खेचरी भूचरी सिद्धिस्त्रितीयाखेचरीपरे।

अनेन सिद्धित्रयं कथयति खेचरत्वमाकाशचारित्वमित्यर्थः। अल्पेन काले न

दूरदेशाभिगामित्वं पराखेचरीत्यनेन चिद्व्योमकरणाख्या सिद्धिरभि धीयते। सा च प्रलीनेन मनसा चिद्व्योमनि निरन्तमनुसन्धानम्। ददते साधकेन्द्राणामितरा सिद्धिका तथा। अष्टसिद्धिं प्रयच्छन्ति तस्यैव कुलदेवतेति सुगमम्।

नाघोरात् परतो मन्त्रो विद्या त्रिपुरा परा।
न गुरोः परमं देवं न मुद्रा खेचरी परेति॥

त्रिपुरा प्रशस्ति प्रसङ्गेन पुरुषार्थोपयोगिनोन्यानपि प्रशस्ततरां निर्दिशति। एतदेनावस्फुटं देवि भुक्ति मुक्ति फलप्रदम्।

अयोग्येभ्यो न दातमित्याज्ञा परमेश्वरीति।

यथोक्तं त्रिपुरा विद्या रहस्यं तदयोग्येभ्यो न दातव्यमिति परमेश्वरस्याज्ञेति।

कुदे कोपदेशान्धमसः प्रतिघातिनी।

॥ प्रकाशित रहस्यार्था समाप्ता कुलदीपिका ॥

न वसुधाम सुधाम सुधाम यम्भवन नाम सुनाम सुनाथितम्।
न हि नमामि नमामित सिद्धये धृतमुदारमुदारमुमामयम्।
आविर्भावित वैभवमहत भवं भक्त्या भजन्तो हराट् खण्डोत्तुङ्गितशेखरं खरतमः सन्तापयन्नुक्तये। रूपं भारति भारति प्रकटितं सम्भावयन्तो वयं जीवामो वयमायुरग्रय

ममलं सार्थं प्रकुर्वीमभि ॥

ऐं ह्रीं श्रीं तेजोनन्दनाथ विटम्बा श्री पादुकां पूजयामि ।

॥ श्री गुरुभ्यो नमः ॥

॥ त्रिपुरासारसमुच्चयम् ॥

श्री महेश्वानन्दनाथ महेश्वरी पराम्बा श्रीपादुकां पूजयामि । प्रह्वप्राचीनबर्हि
प्रमुखसुरवरानेककोटीरकोटिस्पष्ट श्लिष्टेन्द्रनीलोपल मणिमधुप श्रीणिजुष्टं कृषिष्ट ।
श्रीपादाम्भोजयुग्मन्नख मुखविलसद्रश्मि किं जल्कपुञ्जं शिञ्जं मञ्जीर हंसीमुखरितमनिशं
मङ्गलं वोभवान्याः । भक्त्या गुरोर्भवपयोनिधिसेतु हेतून् श्रीपादपद्मयुगरेणुकणान् प्रणम्य ।
लम्बोदरं च कथयामि गुरूपदिष्टमाराधन क्रममहं कुलनायिकायाः । स्नात्वा यथाविधि
विधौत करानानाङ्घ्रिराचम्य सम्यगमलाम्बर यज्ञसूत्रः । प्रागाननोधनददिश्वदनोथवापि
बद्धासनो गणपतिं च गुरुं च नत्वा । सं * योज्यजीवमथ दुर्गं

p. 84)

मध्यनाडीमार्गेणखाब्जग शशिस्थ शिवे सुसूक्ष्मे । हंसेन देह ममरेन्द्र पुरोगतेन सार्धेन्दुना
भसित सा द्विदधीतबुध्या । सास्यादि नाथमरुतापनयं न शेषं तद्भस्मराशिमखिलं भुवनं
सकेन । संप्लावयन्वलभिदा परिचिन्तयेत् स्वमात्मानमम्भसि घटेन स बिन्दुकेन । ततो
बृहद्बुद्बुदमध्यवर्ति स्फुरत् प्रभामण्डलमण्डमाजम् । ध्यात्वा तदर्भुवनान्यमूनि
विचिन्तयेद्भूतलमेतदन्तः । स्मितप्रसवशोभितं नवमनिन्द्यबन्धोद्भटं कदम्बवनमुच्चकैरिह

समन्त तश्चिन्तयेत्। तदन्तरविमण्डितं मणि गणैर्महामण्डपं हिरण्मयमुदश्चित
द्विमणिलावप्रभम्। चतुर्द्वारोपेतं मणिमयचतुस्तोरणयुतं शरत्तारानाथ द्वितिसित
वितानांकमुपरि। स्थितौ द्वारे द्वारेरुचिरमणि मालाम्बरधरौ गणेशक्षेत्रेशौ सह
परिकरौचस्यमभितौ। पूर्वद्वारि स वाहनं हरिहयं यस्यैव याम्ये यमं पश्चात्ये वरुणं तथैव
यदुदग्वारे कुबेरं स्थितम्। सङ्गीताभिरन्तैर्यदन्तस्मरस्त्रीणां गणैराकुलं ध्यायेत्
सम्यगनाकुलेन सा गन्धर्वमुख्यैरपि। तस्य मध्यगतसिंहविष्टरे पद्ममष्टदल शोभितं सितम्।
उद्यदुष्णकरमण्डलोज्वलं भावयेदरुणकेकरोत्कटम्। तत्कर्णिकोपरि कपं च ममम्बु
तुर्ययुक्तमाननुस्वरतदन्तयुतं निधाय। प्रेतन्धियात्र तदुपरि त्रिदशेशवन्धां

p. 85)

ध्यात् त्रिलोकजननीं दयितां पुरोरेः। सुरुचिरं नासिकां सुनयनां सुक्बालतलां
मरुणजटाकलापकलितामलचन्द्रकलाम्। प्रविलसदष्टमीन्दु कमनीयं ललाटतटां
परिणतशारदेन्दुरुचिरानन पङ्करुहाम्। बन्धूकारुणकन्तदन्तवसनामुत्तुङ्गवृत्तस्तनीं युक्तां
बालमृणालनालमुदुभिर्व्यैश्चतुभिर्भुजैः। तत्कालस्मितपद्मपत्रविलसन्नेत्र
त्रयोद्भासितान्ताराधीशनेन शकुण्डलधरामुल्लास चिल्लीवताम्। वलित्रयोद्भासितदीनम्ध्यां
प्रदक्षिणावर्तगभीरनाभिम्। कस्तूरिका कर्म मरेखयैव विराजमान नवरोमराज्या।
स्मितनवबन्धूजीवं कुसुमारुण स च सनाममणिरशनाकलाप कलितोरुनि तम्बतटाम्।
करिवरपीवरोरुयुगलां वरहंसगतिं चरण तल प्रभावजित पङ्कजगर्भदलाम्।
प्रणतपुरन्दरप्रमुख लेखनिकायलसन्मणिमकुटप्रभापटल पाटलिताङ्घ्रियुगाम्।
सुरुचिरसान्ध्यवारिधर कान्तिकलापमुषानिजतनु तेजसा कबलितां प्रतिदिग्वलयाम्।
दिव्याम्बुवाह निवहोदर मुक्तवृत्तमुक्ताफलेर्विरचितां रुचिरां वहन्तीम्।
एकावलीममलकोमलकान्तियुक्तां कान्तेगले च हरिचन्दनलिप्तगात्रीम्।

पाशाङ्कुशाभयवरोद्यत पाणिपद्मां रत्न प्रकाण्डरुचिराभरणाभिरामाम्। स्मेराननां रुचिरदन्तमरीचिधौ

p. 86)

तारुणाधरदलां सुरबृन्दवन्द्याम्। स्वैत्येन त्रिभुवनमातरं धृडानीं ध्यात्वैवं निजकुलकामधेनुमेनाम्। हृत्पद्मं पुनरपि जीवमानयेत् स्वमाकाशं बुरुहकुटीनि विष्टहंसात्।

॥ इति भट्टनागविरचिते त्रिपुरा सारसमुच्चये प्रथमः पटलः ॥

प्रथमः पटलः ॥

अङ्गुष्ठादि कनिष्ठिकावधिकर द्वन्द्वाङ्गुलीषु न्यसेद्बाणान् पञ्चगुरूपदिष्टविधिना ब्रूमोवयन्तानिह। अत्रीशोमुखवृत्तवह्नि सहित स्वाद्यं सदण्डं त्रिमूर्त्याकान्तानन वृत्तमेव खलु तद्बीजं द्वितीयं भवेत्। मुखान्तस्थितं देवराजाधिरूढं स वामेक्षं वक्रपूर्वेणयुक्तम्। भपूर्वं सवृत्तारि षष्ठस्वरार्धक्षपे शङ्कतुर्यङ्कपूर्वेण युक्तम्। न्यस्याङ्गान्यपि चाङ्गुलीषु करयोस्थित्या कलान्यासकं कुर्यात् साधकपुङ्गवो भगपरममायाकुलान्तं क्रमात्। बीजानां त्रयमर्धचन्द्रसहितं विन्यस्य मूर्ध्नि स्वकेसानन्तं मुख वृत्तकेकगतकं संवर्तकं विन्यसेत् सूक्षादिश्चतुरो युगे * * * नयनयोन्यस्त्वा ताच्छ्रोत्रयोः सार्धेन्दून् स्वकपोलयोर्भृगुयुगं घ्राणद्वयेनान्वितम्। चन्द्रार्द्धाङ्कितमस्तकं च चिबुकेश्वेतद्वयं विन्यसेत् पश्चाद्गण्डयुगान्वितं शशिदलोपेतोत्तमाङ्गं बुधः।

p. 87)

दन्तपङ्क्तियुगलेबकद्वयं सेन्दु खण्डरदनच्छदद्वयम्। ओण्यष्ठयोर्घटयुगं ततोन्य सेदतयुग्ममुखपूर्वसंयुतम्। रसन्ना भावर्धोडुपति सहितन्यस्य पवनन्न्यसेन्मन्त्री सान्त्यस्वरमथ शिखायामवहितः। सदान्यासं कुर्वन्नमुमिभि यथोक्तेन विधिना नरो जीवत्यर्धाविगतगदमृत्युश्चिरमिह। पश्चाद्देहे केवलमातृका वा विन्यस्तव्या रुद्रशक्त्यन्विता वा। विद्यान्या संसाधकेन्द्रस्ततोङ्गे न्यासं चास्य न्यासपूर्वं विद्यध्यात्। विद्यान्यासं मूलमन्त्रस्य वर्णैः कुर्याद्धीमान्वक्ष्यमाण क्रमेण।

आद्यं बीजं मूर्ध्नि गुह्ये द्वितीयन्तात्त्तीयीकं विन्यसेद्धृत्प्रदेशे॥

सर्वं व्यापसव्येक्षणयोर्ललाटे ततो बुदः कर्णयुगे मुखे च।

अंसद्वये चापि च पृष्ठदेशे बीजत्रयं जानुयुगे च नाभौ॥

बीजत्रयेणैव षडाननानि प्रकल्पयेदूर्ध्वमुखादि विद्वान्।

अङ्गानि मूलेन च गुह्यनाभिहृद्वक्त्र मूर्ध्वस्वपि पञ्चबाणान्। ललाटदेशे वदने हृदिस्वेनाभौ च गुह्येऽपि च विन्यसेन्ना। त्रैलोक्यसंक्षोभण दृष्टशक्तीन् पञ्चापि कामानिह वक्ष्यमाणान्। इह कामराजमन्मथ कन्दर्पोमकरकेतनश्चापि। नामभिरेतैर्गदिता मनो भवेनान्वितः क्रमशः। क * पञ्चमंशु विनयनान्तसंयुतं स वामदृक् पवनगुणान्वितः करः। रविस्वरो हरिहर

p. 88)

विष्णुषष्ठवद्वनं ततस्थल उपरान्वितो भृगुः। तेषां शिरः सुविदधीतबुधोर्धचन्द्रानेव मम या निगदिताः खलु पञ्चकामाः। पुङ्स स्मराननुदिनन्य यत्र त स्वदेहे लोकत्रयं भवति तस्य मनोनुवर्ति। विद्याङ्गहेतोः कुलनायिकाया वक्ष्यामि बीजत्रितयस्वरूपम्। गोप्तव्यमेतत् कुलधर्म विद्धिरायुष्य हेतोर्गुणसिद्धये च। कान्तादिभूतपदगङ्कगताधचन्द्रं

दन्तान्तपूर्वजलसिस्थितवर्णं युक्तम्। एतज्जपं नखरो भुवि वाग्भवाख्यं वाचां सुधारसमुचां लभते स सिद्धिम्। कान्तान्तं कुलपूर्वपञ्चमयुतं नेत्रान्तदण्डान्वितं कामाख्यं गदितं जपान्मनुरयं साक्षाज्जगत्क्षोभकृत्। दन्तान्तेनयुतं तु दण्डि सकलं सम्मोहनाख्यं कुलं सिध्यत्यस्य गुणाष्टकं खचरता सिद्धिश्च नित्यं जपेत्। ऋषिर्दक्षिणामूर्तिसंज्ञो महात्मा भवेच्छन्द एतस्य मन्त्रस्य पङ्क्तिः। शक्तिस्तु सा खण्डलकर्णपूर्वं स हार्धजैवात्रकमाननान्तम्। अमुष्य मन्त्रस्य रदान्तयुक्तं बीजं सदण्डं लकुलीशपूर्वम्। वर्णः शुक्ले मुनिभिस्त्रिभुवनमभितस्य मन्त्रराजस्य। आगकपारकमतिभिर्गान्धारोस्य स्वरोगदितः। विद्यामूलोत्पत्तिरेषामयोक्ता ज्ञातव्येयं सर्वथा सिद्धि कामैः। देव्याः शप्तोधेन विद्येयमाद्या पूर्वन्तेन प्राणहीना भवत्सा।

p. 89)

शिवशक्तिबीजमत एव शम्भुना निहितं तयोरुपरिपूर्वबीजयोः। अकुलं परोपरि च मध्यमाधरे दहनं वतः प्रभृति सोर्जिता भवत्। भैरवीयमुदिता कुलपूर्वा देशिकैर्यदि भवेत् कुलपूर्वा। सैवशीघ्रफलदा भुवि विद्येत्युच्यते पशुजनेष्वति गोप्या। शिवाष्टमं केवलमादि बीजं भगस्य पूर्वाष्टकबीजमन्यत्। परं शिरोन्तं कथिता त्रिवर्णा सङ्केतविद्यागुरू वक्रगम्या। कान्तान्त वान्ताकुललान्त वामनेत्रान्वितं दण्डिकुलं स नादम्। सट्कूटमेतत् त्रिपुरार्णवोक्तमत्यन्तगुह्यं स्मर एव साक्षात्। आद्यं बीजममध्यमे मध्यमादावन्ते चान्त्यं योजयित्वा जपेद्यः। त्रैलोक्यान्तः पातिनो भूतसङ्घावश्यास्तस्यैश्वर्य भाजो भवेयुः। आद्यं कृत्वा चावसानेन्त्य बीजममध्ये मध्यं चादिमे साधकेन्द्रः। शश्वत्कुर्वन्यो जपेन्मन्त्रमेनं जीवन्मुक्तः सोश्नुते सर्वसिद्धिः। मन्त्र राजममुं समस्तजगद्विमोहन कारणममतृकान्तरितं जपेदनुलोमतोपि विलोमतः। हंसदेव समन्वितं सकले बुधः पर एव वासोऽपि दिव्यगुणान्वितो लभतेभसिद्धि मनुत्तमाम्। व्यञ्जनहंससमन्वितमेनं रञ्जकरञ्जगतो

निखिलस्य। यो जपति स्थिर निर्मलचित्तो शीघ्रमुपैति नरः स तु सिद्धिम्। कमलं परिलुप्तमध्यमाद्य स्वरमीशादि युतं सबिन्दुनादम्।

p. 90)

न गमादि नमोन्तरे विराजद्भुवि देवी हृदयप्रदिष्टमेतत्। ओं-क्लीन्नमः। विद्याकाम दुघा त्रिलोकमहिता स्वर्गापवर्गप्रदा गुह्याद्गुह्यतरा महोदयकरीया योगिनी नामिह। सा सारस्वरजन्मभूमिरुदिता सौभाग्य संपत्करी सद्यः प्रत्ययकारिकासकृदपि प्रोच्चारिता भूतले। यतः स्सावस्थामियमुपगता विश्व विभुना ततः सिद्धिं नैव प्रवितरति जप्तापि सततम्। प्रबुद्धा चेद्विद्या फलति सहसा दीपनकरीमतो विद्यां वक्ष्याम्यहमिहरहस्यामतितराम्। पुष्पं वारिमुचान्दवादिरपरं ता वैव वर्णा ततो दीर्घं वारि सखान्तमम्ब्वपि तथा धान्तौ स लोकस्वरौ। विद्या वाग्भवबीजदीपनकरी सारस्वतोत्पत्ति भूः साक्षात् काङ्क्षित पारिजातलतिका वस्वक्षरोक्ता मया। ब्रह्मा शक्रदृगुन्वितः सह भगामेषा नादिनी कान्तान्तं सभगं सपूतनमतो धान्तश्चमेषः सदृक्। कालोनन्तयुतो वियत्सदशनः संवर्तको भीषणः सा कूरः कमलासनः सह शिवो वैश्वान्विता नरस्तादृशः।

एकादशाक्षरीय मन्मथ बीज प्रबोध दक्षतरा।
क्षोभयति नागभूतल रसातल स्थानवासिनः सहसा।

सावित्रीरदनयुता महादिकाली व्योमान्तं शशधरखण्ड मण्डितान्तम्। मोहिन्यासरसिज भूर्युतस्तथाग्निष्ठिघेयं

p. 91)

भुवि परबीजदीपनी स्यात्। या यस्य दीपनकरीगदिते ह विद्याबीज तस्य पुर एव समुच्चरेत्ताम्। विद्या षडङ्ग वदनेषु यथा व देवन्यासेषु साधकवरो विदधीतशश्वत्। विद्याङ्गमेवन्य सतस्वदेहे त्रैलोक्यमेतद्वशमेति पुंसः। पापानि सद्यः प्रशमं प्रयान्ति त्रिस्यन्ति रक्षांसि सपन्नगानि। मन्त्ररूपमिदमीरितं मया सर्वथा गुरुं मुखेन लभ्यते। गुर्वनुग्रह मृते महीतले मन्त्र एषनभिदायिकः।

॥ इति भट्टनागविरचिते सारसमुच्चये द्वितीयः पटलः॥

द्वितीयः पटलः॥

अथेदं शरीरं स्वकीयाङ्गुलीभिर्बुधैः षण्णवत्यङ्गुलायाम मुत्तमम्। दिनेशाङ्गुलीभिः शरीरात् समीरोधिकः प्राणसञ्ज्ञोमतो योगविद्भिः। इह प्राणवायुं सदाभ्यास तोयो नरो न्यूनभावन्नयत्येनमङ्गात्। समत्वं शरीरेण वा भूतलेऽस्मिन् स पूर्वज्यो बुधैरुत्तमो योगवित्सु। चतुर्दशात्रापद्यने प्रधानानाड्यस्थितास्तास्वपितिस्त्र एव। इडा सुषुम्नापि च पिङ्गला च मुख्या सुषुम्नैव च तासु चैका। इडा नाम नाडी श्रिता वामभागं तनोर्दक्षिणं पिङ्गला नाम नाडी। तयोः प्रष्ठवंशं समाश्रित्य मध्ये सुषुम्ना

p. 92)

स्थिता ब्रह्मरन्ध्रं तु यावत्। सुषुम्नान्तराले स्थिता चित्रनाडीयुता पञ्चवर्णोज्वला पञ्चदेवैः। तदन्तस्थितं ब्रह्मरन्ध्रं सुसूक्ष्मं मृणालान्तरालोल्लसत्तं तु तुल्यम्। ब्रह्मसूत्रमिदमेव देहिनां जीवभूतममृतैककारणम्। यद्वदन्तिमुनयं पुरातना दिव्यमार्गमिति भवचेतसः। इडायां च रत्येष शीतांशु माली ततो वामभागो मृतं संप्रदिष्टम्। रविः पिङ्गलायां चरत्येष तस्माद्विषं

दक्षिणेभाग उक्तं मुनीन्द्रैः। जानीयादुदम्बुधोजठरगे देव्यस्य कन्देनृणां ध्यानात्तिग्मकराङ्गुले च विलयं सन्ध्ये च पूर्वापरे। उत्पत्तिं च लयं च सन्ततमधो वृत्तिं निशां वासरन्त्रध्वां वृत्तिमधस्तथा हिमकरं तुध्वां दिनेशं गतिम्। तुषारांशुनाडीं प्रपन्नेत्रदेवे तदाशान्तिकादीनि कर्माणि कुर्यात्। बुधो रौद्रकर्माणिमार्त्ताण्डनाडीमुभे मिश्रकर्माणि नाड्यौ प्रपन्ने। भूतानामुदयं द्वयोरपि बुधः संलक्षयेत् पक्षयोस्तत्रादौ वसुधोदयं निशितधीघ्राणस्य दग्धस्पृशि। देवेधस्पृशिवारिणो हुतभुजस्तूर्ध्वं गतेतूदयं तिर्यक् संस्पृशिमारुतस्य परितस्पृष्टेमरुद्वत्र्मनः। वश्यस्तम्भनयोः प्रशस्त उदयोर्भूमे जलस्योदयः शस्तः शान्तिकपौष्टिकादिषु शुभेष्वह्वायवह्नेः पुनः। शात्रोर्दारुणमारणादिकरणेत्त्सादनोच्चाटयोर्वायोः

p. 93)

शान्तिकनिर्विषीकरयोर्व्योम्ने हितस्त्रदय धरणेरुदये गदार्दितानां यदि दूतः समुपेत्य पृच्छतीह। सहसा नभिरोगजा प्रबाधा प्रशमं यान्ति चिकित्सितापि सम्यक्। जलोदये व्याधिरुपैति शान्तिं मृत्युर्भवदित्येव वसुदयेत्। तथोदये चापि समीरणस्य व्योम्नो चिरेणैव रुजां विनाशः। देवे दक्षिणभागगेऽथ पुरुषे रोगातुरे दक्षिणेस्थित्वा पृच्छतिकः स पुरुषो जीवत्यपेतज्वरः। वामायां तुरुजाकुलीकृततनौ वामाश्रिते चेश्वरे वामे पृच्छति चेत् स्थितागतगदावामा चिरञ्जीवति। देवे गते पृच्छति वामभागं स्थित्वा नरो दक्षिणतोयदीह। व्यत्यासनोस्मादपि कृच्छ्रसाध्यं वदन्ति सन्तः खलुरोगजातम्। अन्तर्गते पृच्छति पृच्छकश्चेद्देवेनरो जीवति वीतरोगः। तेनैव रोगेण बहिर्गतेऽस्मिन् परेतराजस्य पुरं प्रयाति। सर्वेषु कार्येषु सदेश्वरेऽस्मिन् नन्तर्गते मङ्गलमभ्युपैति। बहिर्गते मङ्गलमीश्वरेण शुभाशुभं कर्मफलं तु विद्यात्। प्रारभ्य दर्शप्रथमा मुदेति वामे पुटे त्रीणि दिनानि देवः। वामेतरे त्रीणि ततो दिनानि पूर्णा तिथिर्यावदथैवमेव। अथारम्य शुक्लान्यपक्षादि भूतां तिथि त्रीणि देवो दिनान्यभ्युपैति।

p. 94)

पुटे दक्षिणे त्रीणि वामे तु यावत् कहरेवमेवं सदालक्षयेन्ना।

एकस्य पक्षेस्य विपर्ययेण रोगाभिभूतिर्भवतीह पुंस्तः।

तयोर्द्वयो बन्धु सुहृद्विपत्ति पक्षद्वयव्यत्ययतो मृतिस्यात्।

यदात्मनः कालवशात् समीरो विपर्युदेति प्रकृतिं विहाय सः। तदानिरुध्यग्वसनं निपीडयेत्तदास्थितः पक्षमुपैति चान्यतः। द्वावेवधत्तः सकलं च कालं दिवाकरः कैरवबान्धवाश्च। भोक्त्री सुषुम्ना सकलस्य चास्य कालस्य दोषादिवसात्मकस्य। ततः क्रमेणैव विशुद्धनाडी पथान्तरं प्राणसमीरणस्य। शनैः शनैः संय्यमनै प्रयत्नं यथा विधानं विदधीत धीरः। शीतांशुमार्गेण शनैः समीरमापूरयेत्स्वोदर मादरेण। विकारमात्राभिरपेततन्द्रः कालाग्निमूलार्पितचित्तवृत्तिः। ततो धारयेन्मारुतं धीरचेताश्चतुः मषिमात्राभिरा पूरितन्तम्। बहिर्भास्वतारे च येन्मन्दमेनं तदर्धाभिरन्तं निरुद्धं तु ताभिः। विपरीतमथो विदधीत बुधः पुनरप्यथ तद्विपरीतमिति। अमुना विधिना सुमनाः सततं मरुतो विदधीत सुसंयमनम्।

प्रस्वेदं जनयति प्राणायामे सोधमं प्रोक्तः।

कम्पममध्यं पुंसां भूमित्यागं तनोस्तनोतिपमः॥

तावद्विदधीत बुधः प्राणायामसमाहितो विधिवत्।

p. 95)

यावत् सम्भवति भुवि प्राणायामोक्तमस्य गुणः।

अयं प्राणायामः सकलदुरितध्वंसनकरो विगर्भाः प्रोक्तो सौशतगुणफलोगर्भकलितः। जपध्यानापेतः स तु निगदितो गर्भरहितः स गर्भस्तद्युक्तो मुनि परिवृढैर्योगनिरतैः। शुचिः प्राणायामान् प्रणवसहितान् षोडशवशी प्रभाते सायं च प्रतिदिवसमेवं वितनुते। द्विजोयस्तम्भ्रूण प्रहणन कृताभोहि कलितं पुनन्त्येते मासादिहदुरिततृलौघदहनाः। त्रायन्त्यमीषड्भरतीव मासैर्जन्मान्तरो पार्जित पापपुञ्जात्। संवत्सराद्ब्रह्मपरं तदेकं प्रकाशयन्त्येव यदच्युताख्यम्। इहरे च कपूरकौ विहाय स्थिरधीः कुम्भकमेव केवलं यः। स्ततं कुरुते मनोजवत्वलभते वीतजरामयः समर्त्यः। न हि तस्य सु दुर्लभं त्रिलोक्यामिहयं केवलकुम्भके निषण्णः। अणिमादि गुणाष्टकं करस्थं ननु तस्यैव निरस्तमृत्युभीतेः। राजदन्तयुगलादिमस्पृशन् सन्निधाय रसनान्तदन्तिके। काकचञ्चु पुटमारुतं पिबेत् प्राणसंयमनमेतदुत्तमम्। पिकचञ्चु समीरणं शनैर्धयन्तः संपरिकृष्यसन्ततम्। श्रममोहगरो दरोदकज्वरगुल्मा प्रशमं प्रयान्ति च। उभयोरपि सन्ध्ययोर्मुहूर्तेऽपि च धातुन्धयतस्त्रिमासमात्रम्।

p. 96)

समरुत् पिकचञ्चु गन्धवाहं भुवि सारस्वत सिद्धिरुद्धता स्यात्। हरिः।

विषमुग्रमुग्रवीर्यभाजामपि नाशं समुपैति पञ्चगानाम्।
किमुवृश्चिककीटलूतकामीहकाकोलमुखानिलस्य पानात्॥

पिकच्चञ्चु समीरणं नराः सततं यः परिकृष्यसन्ततं ध्ययोः।
कुरुते निजकुण्डलीमुखे क्षयरोगं स विमुच्य जीवति॥

पिकचञ्चु समीरणं नरो यः पिबती हानिशमेव वीततद्रः।
भवति ध्रुवमेव तस्य वर्षाच्छ्रवणं दर्शनमप्यतीव दूरात्॥

बहुधा किमुथितैर्मुभुकिमेभिः पिकचञ्चवात्त समीरणस्य पानात्। जरसा सहनाशमाशुयाति प्रबलं मृत्युकृतं भयं नराणाम्। जिह्वां कृत्वा नाकुलस्तस्य मूले दन्तैर्दन्तान् गाढमापीडयित्वा। मन्दममन्दं यः पिबेद्गन्धवाहं सौधैः पूरैः सा क्रममन्तसृवद्भिः। षड्भिमासैरत्र रोगैरशेषैः पापापेतो मुच्यते साधकेन्द्रः। अब्दादर्वाग्विसृ साममृत्युद्रुतीं जित्वाभ्रमौ दीर्घकालं स जीवेत्। १००।

वर्षत्रयाभ्यासवशादतीतमनागतं वेत्यलिनीलकेशः। विषं न देहे क्रमते तदीये दष्टैः सुघोरैरपि पन्नगेन्द्रैः। न कृत्तिमं स्थावरजङ्गमं वा विषं किमन्यैरपि कालकूटम्। गुणाष्टकं कालवशा दुपेत्यमहीतले क्रीडति भैरवो वा। यामुण्डाधार

p. 97)

दण्डान्तरविवरगताहारनीहारगौरां सौधीन्धारान् नमोभ्याम्भोरुऽकुहरविधोः संसृवन्तीं वहन्ती। तस्या वज्राख्यनाड्याः खगमुदरदरी मध्यगं यो विदध्यात्तस्या ब्रह्माण्डभाण्डप्रलयमपघनं स्याद्धनममृत्युमृत्योः। मूर्छाङ्गतो हरति रोग समूहमद्धाबद्धः करोति गगने गमनं नराणाम्। वातो मृतो वितनुते मरतां समस्तमभ्यासतः सुलभमेव समीरणस्य। अथ पार्ष्णि निरुद्धकम्बुलिर्नाध्वमूलस्थित सव्यपादपार्ष्णिः। ऋजुकाय शिरोधरोयतात्मा विषयेभ्यो विनिवर्तितेन्द्रियौघः। काकीचञ्चवाग्रकृष्टैर्निजजठरदरीं पूरयित्वा समीरैङ्गुष्ठाभ्यामुभ्याभ्यां मुररिपुविवरे तर्जनीभ्यां च नेत्रे नासा * न्ध्रे निरुध्यस्थिर

विमलमतिर्मध्यमाभ्यामथास्यं त्वन्याभिन्नाति गाढं कमलजनिलये योजयेन्मानसं स्वम्।
यथाशक्त्याभ्या संप्रति दिवसमेवं वियतया परमया चिद्रूपया सङ्गताम्। मायां कुण्डलिनीं
समाहितमनास्तामुच्चरेत् कौलिकीं शक्तिं ब्रह्ममहापथेन सहितामाधारशक्त्यात्मना। भित्वा
लिङ्गत्रयमथ बुधो ब्रह्मनाड्येह चोर्ध्वं गच्छन्तीं तां कमलजपदात् प्रापयेदात्मशक्तीम्।
व्योमाम्भोजप्रणयि परमानन्द कन्दं विसर्गस्थानं चन्द्रोदरपरिगलद्रक्त * * यूषधाराम्।

p. 98)

पीत्वा कुलामृतरसं पुनरेव दिव्यं मध्यं विशेन्निज कुलस्य समाहितात्मा। यायात्
कुलादकुलमेव पुनश्च मात्रायोगेन देशिकवर प्रतिपादितेन। सा शक्तिः सकलशरीरजीवभूता
प्राणो सावितिगदितात्र तन्त्रमुख्ये। उद्घातः स तु परिपठ्यते मुनीन्द्रैः प्राणान्तं स्पृशति यदा
क्रमेणनीतः। अमुंस्वाचारस्थः प्रतिदिवसमभ्यासवशतः करोति श्रद्धावान्
सततमवधूताखिलमलः। समुक्तो दुःखौ घैःरपगतजरार्थेश मरणो गुणग्रामोपेतः स्वरूपचिरं
जीवति भुवि। चतुर्विधायागदितेह सृष्टिः प्रवर्तते सा सकला तु यस्याः। प्रलीयते चापि
जगत्समस्तं कालाग्नि रुद्रादि शिवान्तमेतत्। सेयममयोक्ता खलु योनिमुद्रा बन्धश्च
दैवैरपि। दुर्लभोस्याः। अनेन बन्धेन न साध्यतेयं नास्त्येव तत्साधकपुङ्गवस्य।
छिन्नारुद्धाकीलिता स्तम्भिताये सुप्तामत्तामूर्छिताहीन वीर्याः दग्धास्त्रस्ताः शत्रुपक्षस्थिताये
बाला वृद्धागर्विता यौवनेन।
ये निद्राताये च सत्वेन हीनाः खण्डी भूताश्चाङ्ग मन्त्रैर्विहीनाः। एते मुद्रा बन्धयेनैव योन्या
मन्त्राः सर्वे वीयवन्तो भवन्ति। गुरुतल्पनिषेवणं च पानं द्विहत्यामधुनः सुवर्ण चौर्यः।
अमुनाविलयं

p. 99)

प्रयान्ति सद्यः सकृदप्या चरितेन बन्धनेन। स हि मन्त्रिवरः स एव योगी गुणसिद्धेः पदमास्थितः एव। अमुनाचरतीह बन्धन यः सततं स्वोचित कर्मधर्म निष्ठाः। अमुना भवतीह देहभाजां सतताभ्या स कृतेन बन्धनेर्नजरा पितृराज वै जयन्ती न च मृत्यु प्रतिपादिता च भीतिः। एतस्यैव चतु बन्धनस्य मनुजं प्राप्नोति शश्वत्कृतादभ्यासादणिमादि सिद्धिमतुलां संवित्तिमप्यूर्जिताम्। योगं चा प्रतिमं जयं च मरुतः कालस्य वा पञ्चमं तद्विष्णोः परमं पदं च सततः पश्यन्ति यत् सूरयः।

॥ इति त्रिपुरासारसमुच्चये योनिमुद्रा बन्धनविधिश्चतुर्थः पटलः॥

अथाधारपङ्केरुहाण्यत्र वक्ष्ये सुषुम्नान्तरस्थानि सङ्कोचतोऽहम्। तदम्भोजपत्रस्थितांश्चापि देवांस्तदम्भोजवर्णान् षडाधारदेवीः। अजग्रन्धिपद्मं पुरा यन्मयोक्तं तदाधारमाद्यं वदन्तीह सन्तः। सुवर्णाभवर्णैश्चतुर्भिः समेतं दलैर्योगिगम्यं महाश्चर्यभूतम्। चतुर्ष्वब्जपत्रेषु देवी निरुद्धाञ्जलाद्यब्धि वर्णान्यसेत् केवलान्वा। स बिन्दून् * * प्रभावात् समिद्धस्पुरज्ज्योति षोडाकिनी देवतात्रा।

p. 100)

मूलाधारे सम्यगभ्यास योगात् स्तम्भस्तोहादुत्प्लुतिर्दार्दर्दुरी च। भ्रमित्यागं खेचरत्वं च सम्यङ् नृणामेते षड्गुणाः सम्भवन्ति। कान्तिप्रकर्षो वपुषोति नादव्यक्तिः प्रदीप्तिः्जठरा नलस्य। लघुत्वमङ्गस्य निजेन्द्रियाणां पटुत्वमारोग्य मदीनतां च। कृत्वा मनो निश्चलमत्र चक्रे चरं नरः सन्ततमादरेण। भूतं भवच्चापि भविष्य दग्धं वदन्तिं शास्त्राण्यपि चाश्रितानि। विहाय सद्यः कमलासनस्य मुखाम्बुजं प्रीति तरङ्गसङ्गा। तदीय वक्राम्बुरुहोदरान्तरे सरस्वती नृत्यति दिव्य रूपिणी। अधिगम्यरसेन्द्र मन्त्रसिद्धीरपि कालं च विजित्य

दुर्निवारम्। अजरामरतामवाप्य चैते परमानन्दपदेमुदारमन्ते। एकी भूतार्णवाम्भः प्लुतमखिलजगत्पूर्वमासीदपूर्वं ज्योतिर्मूर्तिस्तदन्तर्मभितमभि हृल्लिङ्गरूपी बभूव। षट् सिद्धाधिष्ठितात्मा सकलसुरतनुः षड्भिरास्यैरुपेतः षड्भिः कोशैरुपेतो भव भयतिमिरध्वंस हंसो महेशः। अङ्गं लिङ्गवपुर्धृतो भगवतो देवो द्विरण्डो भवत्वाली पूर्वमुखं शिवस्य तु महाकालस्ततोर्ध्वाननम्। वक्रं दक्षिणमाशुशुक्षणिरसौ साक्षात् पिनाकी पुनः पाश्चात्यं छगलण्ड एष भगवान्वामस्यमस्या भवत्।

p. 101)

स्वाधिष्ठान समाह्वयं रसदलैर्मूले ध्वजस्याम्बुजं बालादित्यनिभं दलोपरि हितैः पृष्ठादितर्कांक्षरैः। बिन्दून् भासितमस्तकैर्भगवतो लिङ्गात्मनः शूलिनस्थानं योगिवरेण्यगोचरमिदं चास्यादिपाराकिना। इह स्वाधिष्ठाने निहितनिजचेतो लयवशादामन्दानन्दौ घस्तिमित हृदयः साधकवरः। समेतानङ्योनङ्गः क्षितितलगतो वा मृगदृशां स्मरस्मेरापाङ्गं रसयति गणं कान्ति कलितम्। इह वेत्ति विधायमानसं स्वविधं चाशृत शास्त्रजालमुच्चैः। अवधूत जरामयः समर्त्यः सुचिरञ्जीवति वीतमृत्युभीतिः। वपुषो शुचिभाजनस्य शश्वत्परमांशुद्धमिहातनोति पुंसाम्। शरदं बुदपेलवस्य लोकेघनरुद्धो दृढतां च शीतरश्मिः चलितं सहसा महारथेन्द्रं कमलालोकनतो वियत्सरोजात्। इह येव निवारयन्ति सन्तो ननु धीराः। पुरुषोत्तमास्त एव च। मदधौतकटौ महागजेन्द्रोवशतामेति यथा शनैरुपायात्। बलवानपि वै सुधाकरो सौकमरुद्धस्ववशो भवत्यवश्यम्। एतस्मिन् कुलिशाब्जयो भजनितादादौलयो जायते रागादीन्द्रिय दन्तिनां लयवशात् संवर्तिरप्यूर्जिता। अन्तर्लीन महारसद्रवजुषा नृणां चलेतो लयादाविर्भावमुपेत्य मन्दसहसानन्दच्छलेन्दूदयः।

p. 102)

नाभिस्थं मणिपूरकं दशदलैर्नीलाञ्जनाभैर्युतण्डाणाद्यैश्च दशाक्षरैर्दल गतैर्बिन्दूल्लसन्मस्तकैः। लाकिन्यासमधिष्ठितं च सततं ध्यायन्ति ये ते जनावश्याकर्षणनिविषीकरण भू क्षोभादिकं कुर्वते। स्थानेस्मिन् निहितात्मनः सुकृतिनः पातालसिद्धिः परा खड्गस्या प्रतिमस्य साधनमपि स्यादीक्षितं चक्षितौ। रूपं भूमिविसर्जनं परपुरे शक्तिः प्रवेष्टुं जराहानिश्चाखिल दुःखरोगशमनं कालस्य पावश्चनम्। हृदये सरसेन्द्र गोपसन्ध्या घन सिन्दूर सुवर्णवर्णमब्जम्। वदनाहतमित्युशन्ति सन्तोरविसं खैरुपशोभितं दलैश्च। क्रोधीशाद्यैर्भैरवैर्भानुसंख्यैर्दन्धोपेतैर्मण्डितं चण्डवीर्यैः। तत् काकिन्याधिष्ठितं दिव्यशक्त्या देव्या हंसेनाविदेवन शश्वत्। एतस्मिन् सततं निविष्टमनसस्थाने विमान स्थिताक्षुभ्यन्त्यद्भुत दिव्यकान्तिकलिता दिव्यस्त्रियो योगिनः। ज्ञानं चाप्रतिमन्त्रिकालविषयं क्षोभं पुरस्य शृतिर्दूरादेव च दर्शनं खगगतिस्याद्योगिनी मेलनम्। विशुद्धाख्यं कण्ठे नलिनमथ धूमालिरुचिभिर्युतं श्रीकण्ठादि स्वरपरिगतैः षोडशदलैः। इह स्थाने सा किन्यतुलनिज शक्तिर्भगवती स्थिता नित्यदेवी शरणगमनार्ति प्रशमनी।

p. 103)

समुत्तुङ्गैः शृङ्गैस्थगित गगनाभोगककभोवसं नानारत्नाकलितकटकान् भूधरवशान्। कुरङ्गैः सारङ्गैरपि च रमणीयां वन भुवं तथा गुर्वी मुर्वी मम हित विविधक्षेत्र सहिताम्। तरङ्गैरुत्तुङ्गैरभि मकरमातङ्गमकरेः करालानाभीरैरपि जलधरैर्भूधरवरैः। तथा पारावारोनमलसरितो वारिहरिताः स हंसालीं पालीमपि च सरसां सारस जुषाः। चरन्मरोलं सबकोटमालन्तदित्करालान्तरवारिनीलम्। तथा कपालं सधवानुकूलं प्रवासि कालं नवमेघजालम्। एतस्मिन् परमाद्भुताव्यय महानन्दैकं कन्दे परे स्थाने मानसमात्मनस्थिरमतिः संयोजयेन्मुद्रया। योगीतन्मयतामुपैति शनकैश्चेतो निरालम्बया पश्चान्नैलमहासुखं लयवयादाविर्भवत्यान्तरम्। लीने चेतसि चात्र विश्वनिलये वह्नेरिवादौ

कणा दृश्यन्तेन्तनन्तरं च विलसद्दीपाः प्रदीपांकुराः। बालस्येव दिवाकरस्य बहलोद्योतस्तथो द्योतते यद्वा भूगगनान्तराल कुहरे ज्योत्स्नासपन्नं महः। नित्यानन्दनिधिश्रियः पतिरिति श्रीवासुदेवः पुमान् नात्मेत्यच्युत इत्यचिन्त्यमहिमा योगीयते योगिभिः। स्थानेऽस्मिन् परमे स एष भगवान्व्यक्तो भवत्यावयः

p. 104)

साक्षाद्राहुरिवाम्बरान्तर चरश्चन्द्रार्कयोर्मण्डले। विश्वस्यायतनं महद्भगवतस्थानं यदेतत् परं यत्रारोप्य समीरणं सुकृतिनः प्राणः प्रयाणे नराः। दिव्यन्तं परमं पुराणपुरुषां वेद्यं कवीनां कविं विश्वाद्यं प्रविश्यन्ति सन्तत महानन्दैककन्दं विभुम्। सहस्रारपद्मं विसर्गादधस्तादधो वक्रमारक्तकिञ्जल्कपुञ्जम्। कुरङ्गेण हीनस्त्रिशृङ्गस्तदन्तस्पुरद्रश्मिजालः सुधांशुः समास्ते। तदन्तर्गतं ब्रह्मरन्ध्रसु सूक्ष्मं यदाधारभूतं सुषुम्नाख्य नाड्याः। तदेतत् परं दिव्यन्तगुह्य सुरैरप्यगम्यं सुगोप्यं प्रयत्नात्। एतत् कैलाससंज्ञं पदमकुलपदं बिन्दुरूपीखरूपी यत्रास्ते देवदेवो भवभयतिमिरध्वंस हंसः स हंसः। भूतानामादि भूतार स विसरसितां सन्ततामन्तरङ्गे सौधीन्धारां विमुं चन्नभिमतफलदो योगिनां योगगम्यः। स्थानस्यास्य ज्ञानमात्रेण नृणां संसारेऽस्मिन् सम्भवो नैव भूयः। भूतग्रामं सन्तताभ्यासयोगात् कर्तुं भर्तुं स्याच्च शक्तिः समग्रा। स्थाने परे हंस निवास भूते कैलासनाम्नी हनिविष्टचेताः। योगीगतव्याधिरधः कृताधिबाधश्चिरञ्जीवति मृत्युमुक्तः। स्थानेऽस्मिन् क्षयवृद्धि भावरहिता नित्योदिताधोमुखी

p. 105)

बालादित्यनिभ प्रभाशशभृतः सास्तेकला षोडशी। वालाग्रस्य विखण्डितस्य शतधा भागेन वैकेनया सूक्ष्मत्वात् सदृशी निरन्तरगलत् पीयूषधाराधरा। एतस्यात् परतस्थिता भगवती

भूताधि देवाधिपा निर्वाणाख्य कलार्धचन्द्रकुटिला सा षोडशान्तं गता। वालाग्रस्य सहस्त्रधा विगलितस्येकेन भागेनया सूक्ष्मत्वात्। सदृशी त्रिलोकजननी या द्वादशार्कप्रभा। निर्वाणाख्य महाकलोपरिगता निर्वाणशक्तिः परा कोटयादित्य समप्रभाति गहनावलाग्र भागस्य या। कोटयंशेन समासमस्तजननी नित्योदिता निर्मतला नित्यानन्दपदच्छलोरु नगरद्वारा निरालम्बना। एतस्याः परतः परात्परतरं निर्वाणशक्तेः पदं शैवं शाश्वतमति प्रमेयममलं नित्योदितं निष्कयम्। तद्विष्णोः पदमित्युशन्ति सुधियः केचित् पदं ब्रह्मणः केचिद्धंसपदं निरञ्जनपदं केचिन्निरालम्बनम्। आरोप्यारोप्य शक्तिं कमलजनिलयादात्मनासा क्रमेषु स्थानेष्वाज्ञावसानेष्ववहित हृदयश्चिन्तयित्वा क्रमेण। नीत्वा नादावसाने खगमकुल महापद्मसत्मान्तरस्थां ध्यायेच्चेतन्यरूपामभिमतफलसंप्राप्तये शक्तिमाद्याम्। साक्षाल्लाक्षारसाभं गगनगतमहापद्मसत्मस्थ हंसात्

p. 106)

पीत्वा दिव्यामृतौघं पुनरपि च विशेन्मध्यदेशं कुलस्य। चक्रे चक्रे क्रमेणामृतरसविसरैस्त पयं देवतास्ताहा किन्याद्याः समस्ता कमलजपदगां प्लावयेत् कुण्डलीन्ताम्।

॥ इति आधारनिर्णयोनाम पञ्चमः पटलः ॥

स्वयम्भुलिङ्गनिजयोनि मध्यरन्ध्रान्तरे हृत्सरसीरुहान्तः। बाणाह्वयं चेतरमन्तराले वदन्ति सन्तो गगनाम्बुजेन्ये। यद्बीजं वाग्भवाख्य द्रुतकनकनिभं तत् स्वयं भूतलिङ्ग स्थाने ध्यात्वा हृदं रुहकुहरगते बाणलिङ्गे द्वितीयम्। कामाख्यं बन्धुजीवप्रसवसमरुचिं शारदेन्दु प्रभाहं तात्तीयीकं तु बीजं त्वितरपरिगतं चिन्तयेत् शान्तचित्तमः। प्राणान्योनिगतान्विधाय मनसा ध्यायन्ति ये भारतीं बीजाख्यां निजयोनिरन्ध्रनिलया मानाभिरन्ध्रोत्थिताम्। बालार्कारुण

तेजसा भगवतीं ये सिद्धलिङ्गाकृतिं तेषामेव कवित्वसम्पद् तुलापीयूषनिष्यदिनी ।
सिन्दूरारुण सुन्दराभिरखिलं प्रोद्भासयन्तीं कुलं हृत्पद्मान्तरगां विभाभिरनिशं ये
बाणलिङ्गाकृतिम् । आ बिन्दोरुदितामनन्यमनसो ध्यायन्ति दिव्याङ्गनाः

p. 107)

कामर्तानि पतन्ति लोकमसस्तेषां पदान्ते भुवि ।
ये गौरीमितराभिधान्निजरुचाध्ययन्ति लिङ्गाकृतिम् ॥

बिन्दुस्थानगतां सुधाकरकर श्रीहारिणोद्भासिताम् ।

अर्धेन्दु प्रतिमां विसर्गगमहापद्मः सुतां बिभृतीं धारां विद्रुमपाटलामृतमयीं ते
सम्पदामास्पदम् ॥ १ ॥

त्रयाणां लिङ्गानामति बहलतेजस्ततिजुषां त्रिषु स्थानेष्वेषु स्थिरनिहितधीः साधाकवरः । जपं
मन्त्रं लक्षं सरसकुसुमैर्ब्रह्मतरुजैस्त्रिमध्वक्तैर्होमं तदनु निशि चारेण जुहुयात् ॥ २ ॥

निः शङ्कं हरिणाक्रमं बरतलोत्पातालमूलं गतं
तन्त्रस्थेन दिवाकरेण पुटितं कृत्वा समाधाय च ।
रहोरस्य गते कपालिकरण प्रस्तावना पण्डितः
कुण्डे हस्त कुरण्डकेन जुहुयाद्धोमो यमत्यद्भुतम् ॥ ३ ॥

एकं वत्सरमेव मेवशितधीर्मर्त्यो जुहोतीभयः

सद्योमृत्युन्मसौ विजित्य वपुषः पुष्टिं विष्टां दधत्।
दर्पं दर्पकसन्निभो मृगदृशां भञ्जन् स भृङ्गाङ्गना
श्रीणी श्रीमदराल कुन्तल च यो जीवत्यनेकाः समाः ॥ ४ ॥

बन्धूक सान्ध्यघनबन्धुरकान्तिकान्तं मन्दस्मितांशु विशदी कृतमुद्वहन्तीम्।
दन्तेच्छदंरुचिरकुण्डल मण्डितं च गण्डस्थ लीयुगमखण्ड सुधांशु पाण्डु।

p. 108)

उत्तुङ्गसङ्गतपयोधरहारनम्रकम्रावलग्नविलत् त्रिवली तरङ्गाम्। गम्भीरनाभिविवरामुरुराजरम्भ स्तम्भोपमोरु युगलामरुणाङ्घ्रिपद्मम्। कलाम्मौलाविन्दोर्गलदमलपि यूषविसरां वहन्तीं सन्तानप्रसवरचितं शेखरम्। वसानां सचासोभि किरणनिर्मोकविशदं महाबिन्दो रूढां जठरशशभृत्कोटिधवलाम्।

हस्ताभ्यामक्षमालां स्फटिकमणिमयीं ज्ञानभद्रां
बिभ्राणां दक्षिणाभ्यां मणिमयमकुटां पुस्तकं चाभयं च। वामाभ्यां रत्नकाञ्ची परिव्रतजयनां रत्नकेयूरहारां
दिव्यावं कारयुक्तां त्रिभुवनं जननीं दिव्यगन्धानुलिप्ताम्।

समु * * न्तीमपि शास्त्रजालं निरन्तरं कान्तिकलासमग्राम्।
विनम्र देवासुरनम्रमौलिमालारजो रञ्जितपादपद्माम्॥

ध्यात्वा वागीश्वरीं तां गगनगत महाबिन्दु पीठादतीतं

स्थानं चातीत तस्मादपि तदनुनयेदात्मन स्थानमेनाम्।
सान्तातीतं तु तस्मादनुपममहिमा सूर्यचक्रं ततोस्मा-
द्योमाम्भोजं ततश्चाखिलभुवननुतामानयेत्प्रेतभूमिम्॥

प्रेतस्थानादर्धचन्द्रं ततस्तामरम्भं तु प्रारभेत्सेतुबन्धम्।
तस्माच्चैवं व्योमतस्मादमेयात् स्थानं प्राप्तां चिन्तयेदीश्वरस्य॥

तस्माद्रुद्रस्यालयं रुद्रगेहाद्विष्णुस्थानं प्रापयेदेवदेवीम्।
विष्णुस्थानाद्ब्रह्मणस्थानमेनां ब्रह्मस्थानात् कुण्डलीं गेहमध्यम्॥

p. 109)

सहस्रदलशोभिते रुचिर कर्णिकाकेसरे
वसन्महसि कुण्डली भवनपङ्कजे तां स्थिताम्।
विसर्गगखगाख्य बिन्दुविगलत्सुधा
धारया ततः समभिषेचयेद्भगवतीमविच्छिन्नया॥

अनेन शश्वद्विहितेन देवी ध्यानेन नाशं समुपैति मृत्युः।
याः सिद्धयो दिव्यजनाभिगम्या भवन्तिता अप्यचिरेण पुंसाम्॥

आधार दुर्लसन्तीमकुलगत महापद्मपर्यन्तमन्तर्ध्यायन्ति
ब्रह्मनाड्या स्फुरदमृतरुचि प्रख्यरूपां भवानीम्।
ये देवीं लिङ्गरूपामम्भुवि विमलधियो भावनामातृगम्या निर्धूताशेषपापानिखिलगुणयुता

ज्ञानिनस्ते भवन्ति ॥

ये गोक्षीर तुषार हार धवल प्रोद्दामतेजच्छटा च्छायोद्भासितरोमकूबविवरा

शेषाङ्गलिङ्गाकृतिम् ।

वागीशीं धवलां वराम्बुज गलत्पीयूषधाराद्वैरा

सिञ्चन्ति समं ततोऽपि च वपुर्मृत्योश्चते मृत्युवः ॥

लिङ्गाकारधरां सुरासुरनुतामेनां सुषुम्नान्तरे

देवीमञ्जनपुञ्जमे च करुचा सिञ्चन्ति शश्वद्भुवि ।

ये दिव्यामृतधारया कालाग्रद्रुतिं नृणां रूपो-

न्मीलनदृष्टपावधरा तेषां कुतो विस्रसा ॥

लाक्षारसस्नपित भग्नमृणालनाल * * *

तन्त्रपमांस्मरति यः स्त्रिपुरां कुलान्तः ॥

p. 110)

तं विस्मयस्तिमितमुग्धदृशस्मरार्ता

वामभृवोरतिपति प्रतिमं स्मरन्ति ।

सिन्दूरपुञ्जपरिपि * * तामिवद्यां

लाक्षारसार्दितमिव क्षितिमण्डलं च ॥

ध्यायन्ति ये रुचिचयैर्हरवल्लभाया

लज्जां विहाय भुवितां ननु यान्ति कान्ताः।

शक्तिं हंसेन युक्तां कमलजनिलयात्वज्रनाड्यन्तरालान्नि बिन्दच्चन्द्रबिम्बान्तर खगपसुधाबिन्दुसन्दोहमन्दम्।
नीत्वा तत्रैव नित्यं स्मरति खगगतामात्मनः शक्तिमाद्यां
यस्तस्या जाण्डभाण्डप्रलयमपघनं स्याद्धनं मृत्युमृत्योः॥

पीताभां स्तम्भनादौशशधरधवला शान्तिकादौ
सु धूम्रामुच्चाटादौ जपाहां त्रिभुवनजनताकर्षणे कार्मणे च।
नित्यान्नित्यं विशुद्धस्फटिकमणि निभां खेचरत्वादि
सिद्धौ मोक्षे साक्षादपेतां बुजगगननिभां भावयेद्भक्तिगम्याम्॥

मार्गेऽस्मिन्नव लक्षमक्षयपदप्राप्त्यै बुधो लक्षयेन्मन्त्राणामिह येन सिद्धिरतुला पञ्चप्रकारा अपि। आधरध्वज नाभिदेश हृदुदरः कण्ठे तथा लम्बके भ्रूमध्येऽपि च भूतनाथ निलयस्थाने नवान्तेऽपि च। आधारे कनकप्रभं प्रविलसद्दीप्तां कृतिः षण्मुखस्थाने नूतनभानुकान्ति सदृशं नाभौ हृदम्भोरुहे।

p. 111)

दीपाकारमुरोन्तरेखरकरोद्योतप्रभं भावयेत्
कण्ठे दीपशिखाकृतिर्मणिगणोद्योतं भ्रुवोरन्तरे।
नवान्ता च ज्योतिर्भवभयतमोध्वंसकुशलं
तदेतद्विश्वाख्यां निरतिशय शर्मोर्मिजनकम्।

दुरापं पापैर्यत्रिभुवनधरं त्रैपुरमिति
प्रतीतं तत्वानां यदुपरिगतं तच्च परमम् ।

॥ इति लिङ्गनिर्णयोनाम षष्ठः पटलः ॥

अथ त्रिलोकार्चितशासनाया वक्ष्यामि बाह्यार्चनमम्बिकायाः ।
यदर्चनीयत्वमुपैति कुर्व * र्वीतले सर्वजनैर्मनुष्यः ॥

शुद्धे मनोज्ञे पशु दृष्टिपातविवर्जिते देवगृहे गृहे वा ।
पूर्वोक्तमार्गेण कृतात्मशुद्धि स्थानस्य शुद्धिं विदधीतपश्चात् ।
भगवतः परमस्य पूर्वयुक्तं गगनं सा नलवामदृक् तथैव ।

कुशतोय समुत्क्षणात् क्षमेयमनुनानेन विशुध्यते समन्तात् ।

अकुलं सकुलादि तर्कबीजं
शिवपूर्वेणयुतं सहेन्दुखण्डम् ।
अमुनामनुना समाहितात्मा
तनुयाद्द्रव्य समुत्क्षणं कुर्याद्भिः ॥

पुष्करं शिवमुखादिसयुतं
पात्रशुद्धिमनुरेष कीर्तितः ।

p. 112)

क्षालयेदमृतवारिभिस्ततः

पात्रजातममुनैव मानवः।

विलिम्पेत्ततः पीठमम्भोभिर्धौतं

स्वयं भूतपुष्पैन्दुकास्तुरिकाभिः॥

सकाश्मीरगोरोचनाभिः समन्ताल्लि

खेदत्र यन्त्रं ततो वक्ष्यमाणम्।

त्रिकोणं विलिख्यानुवृत्तं दलानां

ततः पञ्चकं तद्बहिश्चापि वृत्तम्॥

पुनः षड्दलं बाह्यतस्तस्य वृत्तं

लिखेदष्टपत्राणि तद्बाह्यतोनु।

पीठस्योत्तरभागे गुरु पङ्क्तिं पूजयेद्विधिवत्॥

वायव्यदिक्प्रदेशादारभ्येशानपर्यन्तम्।

आधारशक्तिमासनमूलेनन्तं च संपूज्य॥

कूर्मं तदुपरि पृथिवीमपि गन्धाद्यैर्यथार्चयेन्मन्त्री।

पीठस्याग्नेयादिषु चतुष्कोणेषु पूजयेत्क्रमशः॥

धर्मादीन् गन्धाद्यैश्चतुरो धर्मादिकांस्तथा दिक्षु।

पीठस्योपरि सत्वरजस्तमसां त्रितयं च संपूज्य ॥

तदुपरि पद्मं तस्मिन्वसु रविशशिमण्डलानि यजेत् ।
प्रेतं त्रिकोणमध्यगत शशिमण्डलमध्यमे यजेत्तदन्व
तदुपरि शङ्करदयितां हृदयाम्बुजगह्वरात् समावाह्य ।

p. 113)

संस्थाप्य सन्निरुध्य प्रणिपत्य च दर्शयेन्मुद्राम् ।
गुह्याख्यामतिगुह्यामर्घ्यादिकमाचरेद्विधिवत् ॥

वामे त्रिकोणकोणे पाशकरां तप्तहेमसंकाशाम् ।
रतिमर्चयेन्मनोहरवेषां स्वेनैव बीजेन ॥

प्रीतं दक्षिणकोणे निजबीजेनार्चयेच्छ शाङ्कनिभाम् ।
अङ्कुशहस्तां सुमुखीमुज्वलवेषां सुगन्धाद्यैः ॥

आसीनं कुसुमायुधमग्रे देव्याः समर्चयेन्मन्त्री ।
बन्धूककुसुमवर्णं कारयुतकोदण्डदण्डशरम् ॥

कामस्य कामराजं रतिबीजं वाग्भवं समुद्दिष्टम् ।
सम्मोहनाख्यमन्त्यं प्रीते बीजं तथा प्रोक्तम् ॥

शरपञ्चकदेवतास्वमन्त्रैरभिपूज्या दलपञ्चकेषु तेषु ।

शशिकाञ्चन सान्ध्यमेघनीलोत्पलमाञ्जिष्ठनिभास्तरुण्यः ॥

द्राविण्याद्याः क्रमशः सर्वाभरणोपशोभिताः समदाः ।

सव्यकरकलितबाणाः शेषकरैः कृतनमस्काराः ॥

ततो भगाख्यां भगजिह्विकां च देवीं भगास्यां भगसर्पणीं च यजेद्भगाक्षीं च दलेषु षट्सु

तथा भगाह्लादनिकाः क्रमेण ।

शरदंबुदधूम्र सान्ध्य वार्मुक्फलिनी रात्रि सुवर्णवर्णतुल्याः ।

रुचिराभरणो ज्वलास्तरुण्यो मदिरानन्दितमानसामनोज्ञाः ।

करैः खड्गशूलासि वेतालदण्डान्

स कुन्तान्निजैबिभृतीः खेटकं च ।

p. 114)

पैरैर्विस्मयन्त्यः कपालस्य खण्डं

तनुं दुन्दुभिन्नादबिन्द्वाख्यमुद्रे ।

कथयामि भगादि देवतानामिह

बीजान्यपि वाग्भवं सदण्डम् ॥

वसुवामदृगिन्दु खण्डयुक्ते

कुलपूर्वानलगाम्बरे क्रमेण ।

ब्रह्माणीं हंसयानां द्रुतकनकनिभामब्धिवक्त्रांसु नेत्रां हस्ताब्जैः ब्रह्मकूर्चं कलशमपि लसद्दण्डमच्छाक्षमालाम् ।
बिभ्राणां चारुवेषामथ हरि भयदिक्पत्रमूले यजेत्तां गन्धाद्यैर्बन्धुराङ्गीं वहति वरजटाजूटहारं सदाया ॥

माहेशीं तां कपालोड्डमर डमरुका भीलशूलोरुटङ्कं
बिभ्राणां बाहुदण्डैर्निबिडभिमनिभामग्निदिक्पत्रमूले ।
नेत्रैरुद्भासमानां त्रिभिररुण जटाजूटमुग्धेन्दु खण्डां गन्धाद्यैः पूजयेत्तां वृषमुडुनिभमारुह्य नित्यं विहान्तीम् ॥

कौमारीं यौवनाष्यां सुरुचिरवदनां कुङ्कुमाभां सुशोभां शक्तिं पाशाङ्कुशौ या वहति निजकरैर्दक्षिणेवाभयं च ।
हेलालोलां विशालालस नयनयुगामर्चयेद्गन्धपुष्पैः सर्वालङ्कारयुक्तां शिखिनियमदिशः पत्रमूले निषण्णाम् ॥

रक्षो दिक्पत्रमूले सजल जलधरश्यामलाङ्गीं सुकेशीं
घणाकम्बुं कपालं रथ चरणमथो बिभृतीं बाहुदण्डैः ।

p. 115)

आरूडां वैनतेय मणिमयमकुटोद्भासितां वैष्णवीं तां गन्धाद्यैरर्चयेद्यां मयुमदमुदितां नित्यमालोल दृष्टिः ।

वाराहीं खेटकास्युद्धटहलमुसलान् बिभृतीं पोत्रिवक्त्रां

पाश्चात्ये पत्रमूले मणिमयविलसत्कुण्डलोद्भासिगण्डाम् ॥

या शश्वद्विश्व पूज्यागिरिशिखर खराहील लोके निषण्णा गन्धाद्यैरर्चयेत्तां सुरुचिरवदनां धूम्र धूम्राङ्गकान्तिम् ।

इन्द्राणीं चन्द्रबिम्बप्रतिमनिजमुखीमिन्द्रनीलाभवर्णां कर्णान्तोद्भ्रान्तनेत्रां मणिमयमकुटां वायुदिक्पत्रमूले ॥

वज्रं कम्बुं त्रिशूलं शरमपि दधतीं हस्तपद्मैश्चतुर्भि-

र्गन्धैः पुष्पैश्च धूपैः सुरपति वनितामर्चयेन्नित्यमताम् ।

चामुण्डां चण्डभासोद्भटविकटतटाभील वक्त्रान्तरालां

खड्गं शूलकपालं निजकरकमलैर्बिभृतीं खेटकं च ॥

निर्मांसां रक्तनेत्रां त्रिभुवनभयदां सौम्यदिक्पत्रमूले

कालीं कङ्कालभृषां पितृयननिलयामर्चयेदूर्ध्वकेशीम् ।

पश्चादाम्वय्यरूपां सुरुचिरवदनां शुद्धजाम्बूनदाभां

हस्ताब्जै रक्षसूत्राभय कमललसन्मातुलुङ्गी पलानि ॥

बिभ्राणामर्चयेत्तां त्रिभुवनजनताभ्यर्चितां रेयौवनाढ्यां

लक्ष्मीमुत्तुङ्गपीनस्तनभरनिमितामीशदिक्पत्रमूले ।

बीजान्यमीषामथ वर्च्यमनन्तो दीप * * भोन्तं नयनान्तमिन्द्रः ॥

प्रांशूद्रगन्तान्तपरं कुलान्तमनन्तरुद्रेण ततः समेतम्।

p. 116)

तिथीशः सानन्तो भृगुरथहरोनन्तसहितं
बकान्तं भृतीशस्तदनु च बकोनस्तसहितः।
कपूर्वं सूक्ष्मान्तान्वितमथ वनं चानुवदनं
शचीनाथोपेतं वदनमिति कान्तान्वितमिति॥

अथासिताङ्गं रुरुचण्डसंज्ञौ क्रौधीशमुन्मत्तकपालिना च।
पलाशमध्येष्वपि भीषणाख्यं संहारसज्ञं च यजेत्क्रमेण॥

दधतोञ्जनपुञ्जनीलवर्णानुरूपे तालकपालशूलदण्डान्।
लघुदुबुभिसंयुतां स्त्रिणेत्रान् करदण्डैकरिहस्तदण्डचण्डैः॥

गजकृत्तिनिवर्तितोत्तरीयान् भृकुटीसंघटितैर्ललाटपटैः।
अलिनालिकलाभ कुन्तलान्मुदितान्तः करणान् सुयौवनाड्यान्॥

हरात् तृतीयं भगभूतसंयुतं कुलान्तमर्पित्तविलोचनान्तयुक्।
निशाकरार्धाङ्कितमस्तकान्वितममयैह तेषामपि बीजमीरितम्॥

यो हेतुको यन्त्रिपुरान्तराख्यो यौ वह्निवेताल भूताशजिह्वौ।
कालः करालश्च यथैक पादाभीमाकृतिर्यः खलु भीमसंज्ञाः॥

ततो नीलजीमूतसंकाशवर्णां दलाग्रेषु गन्धादिभिस्तान् क्रमेण ।
त्रिशूलं कपालं स्फुरन्नागपाशं तनु बुबुभिर्विभृतोबाहुदण्डैः ॥

दंष्ट्राभील विशालवक्रकुहरान्नेत्रैस्त्रिभिः प्रक्षरद्रक्तैर्वा भृकुटीकरालवदनान् कादम्बरीलालसान् ।
ऊर्ध्वी भूतशिरोरुहान् नववयोर्युक्तांश्च भीमाकृतीन्
भौतीशेन निशाकरार्धसहिते नाभ्यर्चयेत्साधकः ॥

p. 117)

प्रियङ्गुश्यामाङ्गं प्रविलसितपाणिं मणिमयो-
र्लसचूडापीडं द्विरदवदनाधिष्ठिततनुम् ।
सहस्रं बिभ्राणं नयनकमलानां हरिरियं
यजेत्पूर्वस्यां वै दिशि कुसुमगन्धादिभिरनु ॥

अथ विकसित किं शुकाहमग्निं छगलगतं सृवशक्तियुक्तहस्तम् ।
मणिमयमकुटं यजेत्सुगन्धैः कुसुमवरैर्धृतरत्नकुण्डलं च ॥

अर्चयेत्तदनु दक्षिणभागे नीलनीरदनिभं पितृनाथम् ।
दण्डहस्तमरुणायतनेत्रं सैरिरिहाङ्गतमुज्वलवेषम् ॥

नरारूढं रक्षोदिशिविकटदंष्ट्रं सुनिशितं
कृपाणं बिभ्राणं सजलदजलद श्यामलतनुम् ।

यजेद्धेलालोलं पलचपलमारक्तनयनं

विचित्रालङ्कारं तदनुविधिवद्राक्षसपतिम् ॥

शरदभृशशाङ्कनिभं वरुणं मकरस्थितमुज्वलवेषयुतम् ।

मणिकुण्डलमण्डितगण्डतलं वरपाशधरं च यजेत्स्वदिशि ॥

वरशं बरगं सृणिरक्तकरं शुचिकेतन धूम्रनिजाङ्गरुचिम् ।

निजदिश्यनलं विधिना हि भजेत्कुसुमप्रमुखैर्मणिहारधरम् ॥

अथोर्ण्या स्वर्णप्रचयसमवर्णं धनपतिं

समासीनं यक्षैः परिवृतमशेषैश्च निधिभिः ।

गदाहस्तं पिङ्गाक्ष कमलयुगलं सुष्ठुकुसुमै

र्यजेत्गन्धैः पुष्पैः स्वदिशिलसदाकल्पमपि च ॥

p. 118)

ऐशान्यां शशिखण्डमण्डितजटाजूटं त्रिणेत्रं हरं

सिन्दूरारुण विग्रहं दिशि यजेच्छूलं कपालं सदा ।

बिभ्राणं स्वभुजैश्चतुभिरभयं योगाख्यमुद्रां तथा भस्मोद्धूलितविग्रहं वृषवरारूढं ततः

साधकः ॥

मस्कादिजलराशिगं सकं मस्तकादनलगम्बिकान्त्ययुक् ।

सूक्ष्मपूर्वमुखपूर्वसंयुतं लोकपालमनुरेषकीर्तितः ॥ ६४ ॥

वटुकगणं दुर्गाक्षेत्रपालान् स्वबीजैरपि

तदनु नमोन्तै स साधकेन्द्रः क्रमेण ।

मलयजकुसुमाद्यैरर्चयेद्भक्तियुक्तो

भुतवहपिशिताशाधीशं वाय्वीशदिक्षु । ६५ ॥

वसुभ्यो रुद्रेभ्योदिन परिबृढेभ्योऽपि च बलिं

स भूतेभ्यो दद्याद्यजविधिरित्थं निगदितः ।

अमुं कुर्वन्नब्धी तलमपि बुधो नित्यमपि यः

स संपूर्णः कामान् गिरिश इव संप्राप्य रमते ॥ १०६६ ॥

॥ इति सप्तमः पटलः ॥

नित्ये नैमित्तिके च प्रविमलमतयः प्राहुरेकेब्धिकोणं

कुण्डं हस्तप्रमाणं स्मरगृहसदृशं वाथ वृत्तं प्रशस्तम् ।

षट्कोणं वार्धादोषाकर सदृशमिदं स्थण्डिलं रत्निमात्रा यामवाङ्गुष्ठपर्वोन्नतमपि सु समं निर्मितं

वालुकाभिः ॥ ६७ ॥

p. 119)

चतुष्कोणमब्धेङ्गुलोत्सेधयुक्तं

बुधाहस्तविस्तारयुक्तं तदाहुः ।

ततः शोधनं क्षालनं शोषणं च

प्रकुर्यात्तथापानं चापि कुर्यात् ॥ ६८ ॥

तिस्रस्तत्र लिखेदुगगत शिखा रेखास्ततो बर्हिषा
प्रगग्राश्च तथा चतुर्मुखमयश्याकरा देवताः।
तासां वृत्ररिपोर्हरिर्द्दतः शिखाया मध्यसव्योत्तरे
ष्वीश श्रीशसुराधिपर इह तथा प्रागग्ररेखाधिपाः॥ ६९॥

अभ्युक्ष्ये कुशाम्भोहिर्गन्धाद्यैस्तस्यमध्यमध्यमभ्यर्च्य।
इह नील नीरनदाभां ध्यायेद्वागीश्वरीमुतु स्नाताम् ॥ १०७० ॥

जातं मार्ताण्डकान्ताद्धुतव ह मरणे श्रोत्रियागारतो वा
क्षेत्रां निक्षिप्य पात्रे वा कनकमये ताम्रपात्रे तथापि।
मृत्पात्रे वा निधा * मलविपुलमतर्वह्निबीजेनमन्त्री
क्रव्यादांशं त्यजंस्तं तदनु च मननाशोधयेदस्त्रकेण॥ ७१॥

कवचेन ततोऽवकुण्ठ्य पश्चान्निहितात्मा प्रविदर्श्य धेनुमुद्राम्।
आम्रतीरणं बुधो विदध्याज्जलबीजेन स बिन्दुना कृशानोः॥ ७२॥

प्रादक्षिण्यात्त्रिः परिभ्राम्यं सम्यग्वागीश्वर्याः कुण्डमध्यस्थितायाः।
योनावेवं विन्यसेत्स्वाभिवक्त्रं पश्चादग्निं मूलमन्त्रेणमन्त्री॥ ७३॥

हृन्मन्त्रेण समाहितोऽथ जुहुयादाज्येन सप्ताहुती

गर्भाधानमिदं सितेतरगते सम्यक् कृतं स्यादिह ।

p. 120)

एवं पुंसवनं ततोऽपि तनुयान्मन्त्री तु सीमन्तके ।
तेनैवास्य हि जातकर्मविधिना वह्नेर्विदध्यदपि ॥ ७४ ॥

ततः सप्तहस्तं त्रिपादां द्विशीर्षं
चतुर्भिर्विषाणैस्त्रिधाबद्धमिद्धम् ।
पिशङ्गैर्युतं लोचनैस्तर्कसंख्ये
द्विनासंरणं तं चतुश्श्रोत्रमग्निम् ॥ ७५ ॥

रक्ताम्बुजस्थं प्रविलम्बितैकपादं च पृष्ठेनं गतं वृषेन्द्रम् ।
स्वस्म्मुखं दक्षिणगैश्चतुर्भिर्वामैस्त्रिभिर्बाहुभिरप्यपेतम् ॥ ७६ ॥

शक्तिं वह्निं स्रुक्स्रुवासव्यहस्तै
र्वामैहस्तैस्तोमरं तालवृन्तम् ।
सर्पः पूर्णं तप्त सौवर्णवर्णं
पात्रं शश्वत्सप्तजिह्वादधस्थनात् ॥ ७७ ॥

या सा हिरण्या कनका च रक्ता
वामाननस्था बहुरूपिका च ।
सुतप्तचामीकर चारुवर्णा

स्थिता हिरण्यादिशि शूलपाणेः ॥ ७८ ॥

वैडूर्यवर्णा कनकाभिधाना

या सा निषण्णा * * वासवस्य ।

या रक्ता तरुणदिवाकराभवर्णा

सा जिह्वाहरिति सु संस्थिता कृशानोः ॥

p. 121)

या कृष्णा विकसित नीरदाभवर्णा

सा रक्षापरिबृढदिग्विभागलग्नाः ।

पद्मरागसदृशं प्रभोज्वला सुप्रभावरुणदिश्यवस्थिता ।

यामभारजतपुष्पसन्निभा गन्धवाहदिशि सा तिरक्तिका ॥

यथार्थ संज्ञा बहुरूपिकाया जिह्वोत्तरे दक्षिणतस्थिता सा

कुण्डस्य मध्येत्वथव प्रशास्ताजिह्वा हिरण्या भुवि कार्मणादौ ।

स्तम्भनादिषु मता कनकाख्या द्वेषणादिषुमता खलुरक्ता ॥

मारणे निगदिता भुवि कृष्णा सुप्रभा बुधवरैरिहशाक्याम् ।

उच्चाटनेति रक्ताया बहुरूपोत्तरे सिद्धिः ।

ऋद्धिं दक्षिणतः सा तनु ते मध्ये शुभानि सदा ॥

वृत्तारेक अन्येत्वागमपारगामलधियः प्राहुर्बुधाः सुप्रभां

त्विभि स्थितां पितृपतेः कृष्णां हिरण्यां पुनः।

वारुण्यां बहुरूपिकां पुरभिदो रक्तामुदीच्यां स्थिता माग्नेर्यामतिरिक्तकां च कनकां कुण्डलस्य

मध्येस्थिताम्॥

जिह्वां तु कनकाख्यां शान्तिकर्मणिकनकाख्याम्।

रक्तां कार्मणि कर्मणि कृष्णां क्षुद्र क्रियासु बुधाः॥

या सु प्रभेति गदितातामाहुर्मोक्षकारिणीजिह्वाम्।

अतिरिक्तामाकृष्टौ बहुरूपामखिलसिद्धिदां जिह्वाम्॥

सर्वालङ्कारान्वितं सर्वकर्मस्वेवं रूपं चिन्तयेच्चित्र भानु

मन्त्री सम्यक्सप्तजिह्वाभिरामाभिर्युक्तं जातं व्यावृतोत्तान वक्रम्।

p. 122)

कुर्यान्मन्त्री जातकर्मावसाने पाद्याघ्यार्द्यैरयित्वा यथावत्।

हृन्मन्त्रेणाज्याहुति सप्तहुत्वा श्रीमन्नामामुष्यधूमं ध्वजस्य॥

पादग्रैरुदग्ग्रैः परिस्तरेदथ कुशैः सम्यक्।

एकलमेखलकुण्डैर्निशितमतिर्मेखलाधस्तात्॥

परिस्तरे *? मेखले द्वितीयमेखलोपरि।

त्रिमेखले तु मध्यमस्थमेखले परिस्तरेत्॥

स्थण्डिलकेसिकतानां बाह्येतधत्रीन्यसेत्परिधीन्।
कुण्डस्य दक्षिणोत्तर पश्चिमभागेषु साधकोमतिमान्॥

होतुः पूर्वं पूर्वभागं प्रदिष्टं सव्यं भागदक्षिणां चागमज्ञैः।
वामं विद्यादुत्तरं भागमग्रं प्रज्ञावद्भिः पश्चिमं भागमुक्तम्॥

ततो वामभागे परिस्तीर्यदर्भान्
पुलोमात्मजा वल्लभाशागताग्रान्।
तदूर्ध्वन्यसेद् द्वन्द्वरूपेण पात्राथो
यो न तस्यामि निर्वाणिधीमान्॥

सौवर्णान्यपि राजतान्यपि तथा शौल्बानि पात्राणि वा
मृत्पात्राण्यपि शान्तिकादिषु परं शस्तानि कर्मस्विह।
सेल्वक्षद्रुमशिग्र भूरुहन्येतानि विद्वेषणोच्चा
टोत्सादनमारणादिषु भृशंशस्तानि पात्राण्यपि॥

अथोक्तानि तेष्वेषु पात्रेषु पात्रं
जलैरेकमापूर्य तीर्थानि तत्र।

p. 123)

सु सञ्चिन्त्यतैः प्रोक्षयेत्कूर्चदर्भै

र्हृदा सव्यभागस्थितं द्रव्यजालम् ॥

कृतघृतशुद्धिः प्रविमलबुद्धि-

र्जुहुयादाहुति सप्तकमपि च ।

अन्नप्राशनमेतत् चौलोप

नयनयोरपि विदधीतेर्थम् ॥

गोदानमङ्गलादि ब्रूतेषु सर्वेषु सर्वेषु हृदयेन ।

ते नैब समावर्तनविवाहयोराहुती जुहुयात् ॥

अमुनेति च संस्कृते कृशानौ विधिनापूर्वसमीरितासनन्तत् ।

परिकल्प्य यथा वदर्चयेत्तां परिवारेण सहाम्बिकामथात्र ॥

परिवारस्यैकाकां देव्यादशचाहुतीर्जुहुयात् ।

एवं भैरव्यग्निर्जनितस्याद्धोममारभेताथ ॥

पालाशैर्मधुरत्रयेण कुसुमैः सितैरशेषान्नरः ।

कामांश्चंपकपाटलैर्वचकिलैः प्राप्नोति होमादयम् ॥

राज्यं बिल्वफलैर्दलैरपि तथा साम्ब्राज्यमम्भोरुहै

रायुः शाड्वलपल्लवैः सहदलैः शान्तिं सभाज्यैस्तिलैः ।

आधारेण द्रविणं विगदत्वं प्राप्नुयाच्च सिद्धार्थैः ।

प्रीतिं गुडेन पत्रैः पुत्रान् सौख्यं फलैर्मनुजः ॥

लाजैः सौभाभाग्यं धान्यमनेन होमात्

पुष्पैः कादम्बैर्यक्ष लोकाधिपत्यम् ।

p. 124)

मर्त्यं पुन्नागैरेति विद्याधरत्वं

पुष्पैर्मालयाः सिद्धगन्धर्वलोकान् ॥

आकृष्टिर्यक्षिणीनां त्रिमधुसहितैरर्जुनैः

सर्षपैस्याद्द्वेश्यावश्याभवेयुर्हरिहय कुसुमैः किंशुकैश्चापि होमान् ।

वश्यास्युः कर्णिकारैरथ धरणि सुराःक्षत्र्याः कासमर्दैर्वैश्यानां किङ्करातैर्गण इह वशगः

पाटलाभिश्च शूद्राः ॥

छगलां गजमांसलेश होमात्परराष्ट्रं स्ववशं भवेदशेषम् ।

अपि चारिबलं पराङ्मुखं स्यान्मधुयुक्तेन महाबलेन वापि ॥

कटुकत्रयनिम्बपरकेशै

स्वगुडैन्नाखलान्वितैर्निशासु ।

कटुतैलविमिश्रितैश्च होमा

दरयस्त्रिर्मुनिवासरायन्ते ॥

नग्नजितस्थ्यजहोम हरिद्रा खण्डनखैर्विहितः खलु होमः ।
सप्तदिनात् प्रतिपक्षं नृपाणां स्तम्भनकृत्प्रवलस्य बलस्य ॥

माषैर्मूष्कत्वं कोद्रव्यैर्व्याधिबाधा
वातातं कास्युः कलायैश्च होमात् ।
मत्तस्यादक्षजाभिः समिद्भिर्मृत्युः
सप्ताहाच्छल्मलीवृक्षजाभिः ॥

कपिला घृतसंयुतैर्मनुष्योयव
गोधूमतिलैः षडश्च कुण्डै ।

p. 125)

नियुतं खचरत्वमेति हुत्वा निशि
चारेण समाहितान्तरात्मा ॥

पलाशद्दकाष्ठैः परिज्वाल्य भव्या-
शनं चन्दनाभ्युक्षितैर्बन्धुजीवैः ।
समस्तानि भूतानि वश्यानि होमाद्
भवेयुः प्रियङ्गु प्रसूनैश्च तद्वत् ॥

नरो भक्ष्य भोज्यान्नपानानि हुत्वा

परां संपदं प्राप्नुयादत्र लोको ।
वटोदुम्बराद्यं कुरैस्वादुवर्गा-
न्वितैः कल्पिता मल्लिकाभिर्यशस्तु ॥

तुष्टिं नीलाम्भोजैर्होमात् सौगन्धिकैर्भवेत्पुष्टिः ।
कुमुदैर्जनवात्सल्यं पुत्राः कङ्केलि कुसुमैस्युः ॥

यत्खलु किञ्चिदभीतमं स्याद्भूमितले मनसोमनुजानाम् ।
तत्सकलं मधुरत्रयहोमात् स्यादचिरेण सुशक्यमुपैतुम् ॥

घृता इति द्विगुणित षोडशाङ्गुलो-
न्नतिर्वरा तत इह मध्यमार्थतः ।
गजाङ्गुलोन्नतिरधमा तिलोद्भवं
तथैवमाक्षिकमपञ्चगव्ययुक् ॥

एकं चुलुकं पयसोदघ्नस्तन्वन्यतस्तु वन्याश्च ।
एकैकापूपलिकापासमक्षप्रमाणं स्यात् ॥

p. 126)

कदलीपलमेकैकं नारङ्गं चापि मातुलङ्गं च ।
पनसफलां दशखण्डं गुणखण्डं स्यात् फलं वैल्वम् ॥

कर्करिका गुणखण्डा दलपुष्पफलान्य खण्डानि ।
चतुरङ्गुष्ठसमाना व्यञ्जनपिण्याककृसराश्चश्च ॥

चुलुकार्धार्धं हि तिलाः प्रसृतिमिताः पक्तवोगतोः ।
लाजास्याम्मुष्टिमिताः कषार्धार्धं तु सर्षपाः प्रोक्ताः ॥

कर्ष प्रतिमितामुद्गामाषाश्च ब्रीहियो मुष्टिमिताः ।
षोडशनरपति माषौ गोधूमा रक्तशालयस्तद्वत् ॥

सप्ताष्टौ वा यवकौ वेणु यवाः पञ्चषा भगिताः ।
अर्धफलं गुलमानं मुष्यर्धं तण्डुलाः प्रोक्ताः ॥

कुङ्कुमचन्दनमृगमदघ्नसाराश्चणकमात्रास्युः ।
बरफलप्रमाणं पुरद्विखण्डं कपित्थं फलम् ॥

श्लेष्मातपिशाचतरुं त्यक्तवान्येभ्यः समाचरेत्समिधम् ।
गोपुच्छशीर्षकांश्च त्यक्तवान्य तृणं भवेत्परिस्तरणम् ॥

एधां त्रिहिरण्यायां चरुमाधारं च कनकायाम् ।
बहुरूपायां जुहुयात् सिद्धर्थान्वै यवांस्तु रक्तायाम् ॥

कृष्णायामिह लाजान् सक्तून्वै सुप्रभायां तु ।

अति रक्तायां तु तिलान् सर्वद्रव्याणि कनकायाम् ॥

वह्नेः कण्ठोहोमतो व्याधिबाधानेत्रे

न्धत्वं नासिकायामथाविधिः ।

p. 127)

द्रव्यच्छेदो मस्तके स्यान्मुखा

न्तर्होमं कुर्यात्तेन नित्यं विपश्चित् ॥

भेरी वारिदवारणध्वनि नभो वह्नौ ध्वनिः शोभनो

वर्णस्वर्णनिभः शुभोदयकरः सिन्दूररेणूपमः ।

उद्यद्भास्कर स प्रभश्च सुसृणक्षोदेन्द्रगोपारुणो गन्धश्चम्पकपाटलाविचकिलैराज्येन

तुल्योऽपि च ॥

पुन्नाग पुष्पकेसर गुल्गुलु गन्धोपमश्च सिद्धिकरः ।

छत्राकारा शुभदा शिखाशिखाहात्यकम्पना च भवेत् ॥

धूमोग्नेः कुन्दनिभफलदः काशकुसुमसंकाशः ।

खरवायसरव सदृशोवह्नेः शब्दो विनाशकरः ॥

कृष्णोहुतवहवर्णो यजमानं मारयेदचिरात् ।

पिङ्गो बहुरोगकरोरूप्या भोराष्ट्रदाहमपि कुर्यात् ॥

विष्ठा सदृशो वह्नेर्गन्धोर्विविधानि दुःखानि ।
मूत्रसमोबलहानिं स्वेदाभः सुतविनाशनं कुर्यात् ॥

विच्छिन्नोग्नेर्मृत्युं शिखा सुवृत्ता करोति धनहानिम् ।
शुकपिञ्छा गोधूमो वह्नेर्वाजीन्द्रमाशु नाशयति ॥

कुर्यात्कपोतसदृशः कूपीडयोनेर्गवां हानिम् ।
आवर्तः शुभफलदः प्रदक्षिणो वीतिहोत्रस्य ॥

विद्युत्पातं दर्दुरो विष्णुलिङ्गे
* *थ्यं स्याद्धोमकाले कृशानोः ।

p. 128)

वामावर्ते व ग्रहोभासयुक्ते
होतुभीतिश्चोद्भवो भूतसङ्घान् ॥

वस्वधिकमाहुतीनां जुहुयाच्छतमेषु दोषेषु ।
अस्त्रेन साधकेन्द्रस्तनयादथ चक्रपूजां च ॥

वश्यो भवत्यवश्यं * म्भूमिपतिर्लक्षहोमेन ।
लक्षार्धेनामात्याः सामन्ता पादहोमेन ॥

षष्टि सहस्रे भूपति पत्न्योवशगास्तदीय पुत्राश्च ।
एकलसहस्रहोमात् सुभगाणगणिकाश्च वश्यास्युः ॥

नियुतैर्दशभिर्भवन्ति वशगानागसदः सुरेशमुख्याः ।
नियुतैस्त्रिभिरेव देवपत्योमुनयश्चापि तथाल्पदेवताश्च ॥

गन्धर्वसिद्धचारणाप्सरोगणाद्येकलक्षेण ।
वंशतिलक्षैर्वशगा भवन्ति विद्येश्वराः सर्वे ॥

नियुतैर्दशार्धसंख्यैः सदाशिवाम्भोजनाभिकमलभुवः ।
वश्या भवन्ति लक्षैः कोटिभिराप्नोति शाश्वतन्धाम ॥

पूर्णाहुतिमथ कृत्वा दुरारिदयितां विसृज्य दृढबुद्धिः ।
तदनुसमाहितबुद्धिस्वाहानाथं विसर्जयेन्मन्त्री ॥

स परिस्तरां न होमे नित्यं परिधीं दहेन्मतिमान् ।
नैमित्तिके तु होमे परिधीन् स परिस्तरां दहेन्मन्त्री ॥

॥ इत्यष्टमपटलः ॥

अथाग्निकार्यं कथयामि पूजागारस्य कुर्याद्दिशिवासवस्य ।

ईशस्य य * दिशिवित्तपस्य विभावसोर्मण्डलस्थ कोणः ॥

नवहस्तमात्रमुतशैलदोर्मितं यदि वा हृषीकरसमंमितं म्तम् ।
रुचिरैश्चतुर्भिरविरन्ध्रमुन्नतं कुशतोरणैः सितवितानशोभितम् ॥

चतुर्द्वारयुक्तं ततस्तस्य मध्ये
बुधं तत्त्रिभागेकभागेन वेदिम् ।
अरत्रिप्रमाणान्नतिं दर्पणान्तं
निभाभामनोहारणं तत्र कुर्यात् ॥

वेदाश्रं योनिमर्धेन्धुपतिमनलाश्रं सुवृत्तं षडश्रं
पद्माकारं गजाश्रं हरिहयहरदारह्वे तस्यां विदध्यात् ।
मध्ये वृत्तं च गोरीपति सुरपति दशोः पण्डिताः केचिदाहु
र्वायव्ये पञ्चकोणं दिशि मदनरिपोः सप्तकोणं च कुण्डकं ॥

प्राक्सूत्रं प्रथमं निधाय विदधीतार्धेन तस्याङ्कितं
मध्ये मत्स्ययुतं दिशोर्विमलधीकी नाशवित्तेशयोः ।
ताभ्यां वृत्तमभिप्रासार्य चतुरः कोणांस्ततो लाञ्छयेत्
क्षेत्रं स्याच्चतुरश्रमत्र जनयेदन्यानि कुण्डान्यपि ॥

क्षेत्रे क्षिप्त्वा बहिरिह पुरोभूतभागेंशमेकं
कोणार्धार्धं सु निशितमतिर्भ्रामयेत् संप्रगृह्य ।

भास्वत्कोणः परमपि तथा सूत्रयुग्मस्य पातं

मध्यात्कुर्याद् भवति तदिदं मन्मथा वा सकुण्डम् ॥

p. 130)

परित्यज्य भागद्वयं पङ्क्ति भागी

कृतोत्रोपविष्टादधस्तच्च विद्वान् ।

परिभ्रामयेत्तेनमानेन सम्यग्

भवेदर्धचन्द्रांकितं कुण्डमेतत् ॥

वासरेशार्धभागी कृते क्षेत्रतः

पार्श्वयोर्न्यस्य भागद्वयं पण्डितः ।

तेनमानेन सूत्रद्वयं विन्यसे

त्कुण्डमेतद्भवेद्रुद्र नेत्राश्रकम् ॥

दिग्गजाभ्यधिकपङ्क्तिभागतः

क्षेत्रतो निशितधीर्बहिर्न्यसेत् ।

भागकलमनेन सर्वतो भ्रामये

द्भवति वृत्तमुत्तमम् ॥

भूपांशेंशद्वयमिह बहिः पार्श्वयोन्न्यस्य मध्यात्

क्षेत्रव्यासे सु विमलमतिस्तेन वामेन कृत्वा ।

पार्श्वद्वन्द्वे झषयुगयुतं सूत्रषट्कस्य पातं

कुर्यात्कुण्डं भवति तद्दिदं तर्ककोणं मनोज्ञम् ॥

दशांशे तु विन्यस्य बाह्येंशामेकं
परिभ्राम्य तेनैव वृत्ता दलान्तान् ।
बहिर्मध्यमे कर्णिकां चापि कुर्याद्
भवेदष्टपत्रं बुधः पद्मकुण्डम् ॥

p. 131)

क्षेत्रे क्षिप्त्वात्र बाह्ये दिशिदिशिमिहिरद्वन्द्वकांशेंशमेकं
कृत्वा तेनाब्धिकोणं पुनरपिमतिमान् कोणतोर्धं गृहीत्वा ।
तत्कोणाभ्यां विदध्यादिह खलु परितस्तेनमानेन चिह्ना
न्यष्टाश्रं स्यात्समन्तादपि च वितनुयादष्टसूत्रप्रयोगम् ॥

भायांशेत्रनागं बहिर्न्यस्य वृत्तं
परिभ्राम्य भूमौ युगांशी कृतेशैः ।
त्रिभिः पट्टदैर्घ्यं भवेत्पञ्चसूत्र
प्रयोगादिदं तेन पञ्चाश्रकुण्डम् ॥

क्षेत्रव्यासे दशांशे बहिरिह विनिधायैकमंशं सुवृत्तं
मानेनानेन कृत्वा पुनरपि च चतुःषष्टि भागीकृतेऽत्र ।
भागायाम प्रमाणं दृढमतिरमुना स त्रिकैस्त्रिंशदंशेः
कुर्यात् सप्ताश्रकुण्डं भवति च तदिदं सप्तसूत्रप्रयोगात् ॥

यावन्मानं कुण्डविस्तार उक्त-
स्तावत्खातस्यापि मानं प्रदिष्टम् ।
कुण्डाकारं पण्डितो यादृशं तत्
तादृग्रूपं मेखलाया विदध्यात् ॥

तिस्रः कुण्डे मेखला मेखलेद्वे
यद्वा विद्वानेकलामेखलां वा ।
कुर्यादूर्ध्वं मेखलाया गजोष्ठा
कारं योनिं चापि होतुर्दिशीह ॥

p. 132)

मुष्टिमात्रेऽत्रतामेखलाद्यङ्गुलैका
धाङ्गुलोत्सेधतारा भवेयुः ।
क्रमाद्रत्निमात्रेऽत्र तास्त्र्यङ्गुल
द्यङ्गुलैकाङ्गुलोत्सेधताराः पुनः ॥

युगार्पित्तनेत्राङ्गुलोत्सेधतारा-
स्युरेताः क्रमाद्धस्तमात्रे तु कुण्डे ।
करद्वन्द्वमात्रेरसाम्भोधि वह्न्य
ङ्गुलोत्सेधविस्तारयुक्ता भवेयुः ॥

वेदकरेऽस्मिन् सिन्धुरतर्काब्ध्य

ङ्गुलतारोत्सेधयुतास्ताः ।

षट्करमात्रेऽस्मिन् दशकुम्भ्याङ्गा

गुलतारोत्सेधयुता समेताः ॥

भास्करपङ्क्ति गजाङ्गुलतारो-

त्सेधयुतास्युरिमाव सुहस्ते ।

नाहि महाम्बुजमत्र विदध्यादष्टदलं सहकर्णिकमन्तः मुष्टिमात्रेरसाम्भोधि

नेत्राङ्गुलायामतारोन्नतिर्योनिरुक्ताबुधैः ।

नेत्रवेदाङ्गुलोत्सेधतारोन्विता

नाभिरप्यत्र योन्योष्टमेकाङ्गुलम् ।

योन्या लक्षणमेतद्गदितमिदं रत्निमात्रेऽत्र ।

कुण्डस्य मये भोक्तं तदेव खलु हस्तमात्रस्य ॥

p. 133)

एकैकेनाङ्गुलेनाम * निशितमतिर्वर्धयेदन्यकुण्डे

ष्वेनां योनिं च नाभिं खलु यवयुगलेनेह योन्यास्तथोष्ठम् ।

कुर्यान्नाभिं च वृत्ता कृतिमपि यदि वा कुण्डरूपानुरूपा

योन्याकारेऽत्र योनिं सरसिजसदृशेनोपि दध्याच्चनाभिम् ॥

कुण्डस्यैके हस्तमात्रस्य योनिं प्राहुर्भूतद्यङ्गुलायामताराम् ।
व्यासत्र्यंशैकांशकोत्सेधयुक्तां कुर्याद्बोधिक्ष्माजपात्रानुरूपाम् ॥

नेत्रताराङ्गुलोत्सेधतारान्वितान्
नाभिमंसद्वये तच्छदान्यष्ट च ।
व्यासवह्न्यंशतोंशेन तत्कर्णिकां
मध्यभागे विदध्याद्बुधः कुण्डतः ॥

कुण्डस्यैककरस्य चारुपरितोनेमिर्भवेदङ्गुले
नैकेनैव ततो विरोचनकरादारभ्य संवर्तयेत् ।
कुण्डादुत्तरकुण्डकावधिबुधः प्रत्येकमर्धाङ्गुलं
तद्बाह्ये खलु मेखला त्रितयकं कुर्याद्यथोक्तक्रमात् ॥

शतार्धहोमे खलु मुष्टिमात्रं
रत्निप्रमाणं शतहोमकुण्डम् ।
हस्तं सहस्रेह्ययुते द्विहस्तं
लक्षे चतुर्हस्तमिदं प्रदिष्टम् ॥

दशलक्षेरसहस्तं वसुहस्तं कोटिहोमस्यात् ।
कोट्यूर्ध्वेत्वष्टकरं होमेष्वागमविदो ब्रुवते ॥

p. 134)

केचिद्धस्तं लक्षहोमे द्विहस्तं
लक्षद्वन्द्वे वह्नि लक्षेत्रिहस्तम् ।
होमे कुण्डं वेदलक्षेब्धिहस्तं
प्राहुर्दोष्णां पञ्चकं पञ्चलक्षे ॥

रसलक्षं रसहस्ते सप्तकरं सप्तलक्षे स्यात् ।
सुलक्षे वसुहस्तं नवलक्षे नवकरं कुण्डम् ॥

दशलक्षे दशहस्तं दशकरमेवेह कोटिहोमेऽपि ।
दशहस्तां न हि कुण्डं परमभीतले मुष्टिन् ॥

सर्वसिद्धिकरमम्बुधिकोणं पुत्रदम्मनसिजाव सथाभम् ।
अर्धचन्द्रसदृशं शुभदं स्यादग्निकोणमरिमर्दनहेतुः ॥

शान्तिकर्मणि भवेत्सुवर्तुलं
शत्रुमारणकरं षडश्रकम् ।
पद्मकुण्डमिह वृष्टिकारकं
रोगशान्तिकरमष्टकोणकम् ॥

चतुरश्रं विप्राणां राज्ञामिवर्तुलं कुण्डम् ।
वणिजामर्धशशाङ्काकारं त्र्यश्रं तु शूद्राणाम् ॥

चतुरश्रं तु सर्वेषां प्रशस्तमिति केचिदाहुराचार्याः ।
वाञ्छिदफलदं यत्तत् कुण्डं त्विह भुक्तिकरम् ॥

षट्कोणमर्धचन्द्राकारं चापि प्रजाकारं कुण्डम् ।
मुक्तिकरं पञ्चाश्रं वसुकोणं चेहराज्यदायोनिः ॥

॥ नवमः पटलः ॥

p. 135)

अथामरेन्द्रैरपि दानवेन्द्रैर्धृतं प्रसिद्धैरपि सिद्धवर्यैः ।
सौभाग्य सम्पत्तिगुणैक हेतुर्यत् त्रैपुरं तत्कथयामि यन्त्रम् ॥

कर्पूरक्षोद्दिग्धाखिलतनुरमलस्नान पूतोवसान
क्षौमं श्रीकण्ठपङ्क स्पुटरचितलसत्चित्रको नेत्रयुग्मम् ।
सद्यः कृत्वाञ्जनोक्तं विकसितवदनः प्राप्तनिःसिमहर्ष
स्ताम्बूलग्रास पूर्णारुण मुखकुहरश्चालिखेद्यन्त्रराजम् ॥

कस्तूरिका गरु सुधाकरखण्ड कुण्ड
गोलोत्थजागलगुडैः स पटीरपङ्कैः ।
युक्तै स्वयम्भूति सुमेनविशालभूर्ज
पत्रे लिखेदविवरे तपनीय सूच्या ॥

लिखेद्भूप पत्राणि वृत्ताद्बहि
मांस पत्राणि तद्बाह्य देशे।
पुनर्भूपपत्राणि तेषां दलानां
बहिर्दन्त पत्राणि चारूणि धीरः॥

तत्कर्णिकायां महायोनिमध्ये लिखेद्
वाग्भवं कामराजं तु तस्योपरि।
शक्तिबीजं तयोरूर्ध्वतः कारयेद्धंस
देवो परिस्थां जगन्नायिकाम्॥

षोडशारे ततः षोडशोहस्वरा
द्वादशारे पुनः कामराजं लिखेत्।

p. 136)

वासरेशस्वरैर्भिन्नमेनं विधा-
यान्त्यबीजं परे षोडशारे लिखेत्॥

कला बिन्दुनादैः शिरोदेशलग्नैः
परिभ्राजमानान् ककारादि वर्णान्।
लिखेदन्तपत्रेषु सर्वं तदेतद्
बुधो मन्दिरस्थोदरस्थं विदध्यात्॥

सुषिरेण तु वेष्टयेत् समन्ता-

दथ मन्त्री महनीय यन्त्रराजम् ।

सुविशुद्ध सुवर्ण पट्टबन्धं

विदधीतानुहुतादि सिद्धमेनम् ॥

इयं रक्षा साक्षात्त्रिपुरमथनेनापि विभुना श्रियः

कान्तेनापि त्रिदशगुरुणाचापि हरिणा ।

धृता कन्दर्पेणाप्य मृत किरणे नापि विनतात

निजेनाप्येषा सततमपि शीते तरुरुचा ॥

गन्धर्वैरपि किन्नरैरपि धृता यक्षस्तथा राक्षसैः

सिद्धैः साध्यगणैन पन्नगवरैर्विद्याधरैर्गुह्यकैः ।

सौभाग्यात्थिभिरर्थलोलहृदयैरन्यैश्च धन्यैर्जग-न्मङ्गल्यैर्मनुजोत्तमैरपि नृपैर्वस्वेश्वराद्यैरपि ॥

बहुब * रगन्धसिन्धुरेन्द्रै

र्मदचित्वल्लविलिप्तगण्डपिण्डैः ।

p. 137)

तुमुलेयुधि यन्त्रराजशक्त्या समवाप्नोति जयश्रियं नरेन्द्रः ।

नरपालग्रहोदरेषु सम्यग्व्यवहारेष्वपि धारणादमुष्य ॥

मनुजोपि च वादिभिर्विवादे जयमाप्नोति हि यन्त्रसत्तमस्य ।

विपिनेषु लुलाय चित्रकाय द्विपभल्सूककुलाकुलेषु पुंसाम् ।

चरतान्न चिराय विद्यतेभी स्त्रिपुरा यन्त्रवरस्य धारणेन ।

नरनाथवराभवन्ति वश्यास्तदधीनाः सचिवाश्च तत्तनिजाः ।

प्रमदाः समदाश्च यौवनाढ्या स्तनभारानमिताः स लीलयाताः विषमुग्रं पीहकालकूट प्रतिमं संहृति कर्मकर्मठं यत् ।

अमृतं भवन्ति धृवं तदेतद्वधतस्त्रैपुर यन्त्रराजमेनम् ।

दहनस्तु हि नत्यसौदर्वान्तर्विततोर्ध्वीकृत भूरिलोलकीलः ।

धृतयन्त्रवरस्य देहभाजः पयसां चापि निधिस्थ लीयते च ।

हृत्पङ्केरुहकर्णिकोपरि तले मन्त्री तु यन्त्राधिपं ध्यात्वा

शक्ति गमागमं वितवुते धीरः सुषुम्नान्तरे ।

यस्तं शश्वदगण्यपुण्यनिलयं वाक्कामिनी गोमिनी

सामानाधिकरण्य संपदतुलानो मुञ्चतिक्ष्मातले ।

आदौ मन्मथकोष्ठकोटरगतं कामाधिराजं लिखेत्

कन्दर्पद्वितयेन चानुपुटितं कुर्यात्तदेतद्वयम् ।

तद्वीरोमकरध्वजं परिलिखेत्कोणेषु षट् स्वधारान्

मध्ये नाममनोभवस्य सकलं कुक्षौ तदेतत् क्षिपेत् ।

यन्त्रं पूर्वोक्तयन्त्राधिप सदृशमिदं चापि मौलौ गले वा

p. 138)

बाहौ वायौ बिभर्ति त्रिभुवनमखिलं तद्वशे वर्तते च । कान्ताः कान्तालकान्ताः

प्रथुकठिनकुचानम्रकम्राङ्गवल्यः कामेनोप द्रवार्ता कुलितनिजधियस्तं व्रजेयुः सुवल्यः ।

ध्यात्वैवं मूलचक्रान्तरकमलकुटी कोटरे यन्त्रराजं सान्द्रस्वानन्दमन्दं तरुणतरणि

भाभासुराङ्गं च तं च ।

यन्त्रान्तः सुस्थसाध्यामलविलसच्चेतनामात्र रूपं

हृष्टोपष्टभ्यमन्त्री मथनमथशनैरुच्चरेदात्मशक्त्या ।

भवत्यवश्यं मथने वश्यः साध्यस्तथा साधकपुङ्गवस्य ।

त्रिःसप्तरात्रेण महानुभावो देवोऽपि मर्त्यः किमुमन्दवीर्यः ।

कलापत्रोपेतं कमलमपि संलिख्य सुमनस्तास्तदन्तः शृङ्गाटद्वितयमपि चान्योन्य पुटितम् ।

लिखेन्मध्ये देवी हृदयमपि कोणेषु मदनान्

षडन्तः षट्स्वाख्यां समभिमतसाध्यस्य मतिमान् ।

स्मरान् पत्रेष्वेतत् सुषिरविवरान्तः परिलिखेज्जगत्यस्मिन् मन्त्रं प्रथितमिह पिण्डामृतमिति ।

जनस्येतद्यन्त्रं वरकनकपट्टेन विहितं

जगत्सर्वं शश्वद्भवति वशवर्ती भवहतः ।

॥ इति श्री भट्टनागविरचिते त्रिपुरासारसमुच्चये दशमः पटलः ॥

श्री पुरुषोत्तमानन्दसंविदाम्बा श्रीपादुकां पूजयामि । महेश्वरानन्द महेश्वरीम्बा श्रीपादुकां पूजयामि । शिशिरांशु मौले नमः शिवाय । हरहरशिवशिव । मालाधरभट्टन्

p. 139)

॥ संप्रदायदीपिका ॥

जपत्येषा गणेशस्य पादपङ्कजयोर्नतिः ।

यौ विघ्ननिवहन्दुरान्निरस्यति पदे पदे ।

भट्टनागविरचितस्य सारसमुच्चयस्य व्याख्यारभ्यते । तत्राचार्यः । प्रारिप्सितस्य ग्रन्थस्या विघ्नपरिसमाप्यर्थः मन्त्राधिकारिणामभ्युदय निश्रेयसार्थं च तदुपायभूत देवतास्तुति पुरः सरमाशीर्लक्षणं मङ्गलमाशास्ते । प्रह्वप्राचीरेत्यादि । प्राचीनबर्हिरिन्द्रः कोटीरं मकुटम् । मञ्जीरज्ञपुरम् । कुलनायिका आधाराधिष्ठितात्री जीवं जीवात्मानम् । मध्यनाडी सुषुम्ना । खाब्जगशशिस्थ शिवेति । सूक्ष्मे द्वादशं तस्थसहस्त्रारसरसिजमध्यवर्तिनि सोमात्मकपरमगुरुशिवात्मनि । हंसेन । अजपया । अमरेन्द्रपुरोगतेन । सार्धेन्दुना । अमरेन्द्रो लकारः । तत् परोगतो रेफः । अर्धेन्दुबिन्दुः । रम् इति सास्यादिनाथमरुता । आस्यं विसर्जनीयः । तस्यादि बिन्दुः । मरुत् । यकारः । यम् इति । भुवनं जगत् । सकेन सम्भावयन् । वलभिदा । कम् बिन्दुः । वलभिल्लकारः । लम् इति घटेन स बिन्दुकेन । घटोवकारः । वम् इति । आजम् अण्डं ब्रह्माण्डम् । हरिहयः । इन्द्रः । क पञ्चमं मम्बु तुर्ययुक्तम् । मनुस्वरं तदन्तयुतमिति । कंवकारः तत्पञ्चमं हकराः ।

p. 140)

अम्बु वकारः । तुरीयं सकारः । मनुस्वर औकारः तदन्तं बिन्दुः हकार सकारौकारबिन्दुभिः सदाशिवाख्यं बीजम् । दन्तवसनमोष्ठम् । चिल्लीलता भ्रूलता । लेखनिकायो देवसमूहः जीवं जीवात्मानम् । आकाशाम्बुरुहेत्यादि व्योमपद्मस्थित परमहंसात् स्पष्टमन्यत् ॥

॥ संप्रदायदीपिकायां प्रथमः पटलः ॥

एवं भूतशुद्धिं विधाय देवतास्वरूपमात्मानं बुध्वा वक्ष्यमाणन्न्यासजातं कुर्यादित्याह ।

अङ्गुष्ठेत्यादिना। अत्रीशोमुखवृत्तवह्निसहितस्वाद्यं सदमिति। अत्रीशोदकारः। वह्नीरेफः। दण्डो बिन्दुः। एभिः प्रथमं बाणबीजम्। त्रिमूर्त्याक्रान्तानन वृत्तमेव तदिति। त्रिमूर्तिरीकारः। तदितिद्राम् इति बीजम्। तदादेशवदाकारमुत्सार्य तत्स्थानमाक्रामता ईकारेण युक्तम्। द्रीमिति बीजम्। मुखान्तस्थितं देवराजाधिरूढमिति। मुखं विसर्जनीयः देवराजो लकारः। वामेक्षणमीकारः। देवराजो लक्षारः। वामेक्षणमीकारः। वक्रं विसर्जनीयम्। तत्पूर्वोंबिन्दुः। ककारलक्षारेकार बिन्दुभिः तृतीयम्। क्लीमिति बीजम्। भपूर्वं स वृत्तारि

१४१)

षष्ठस्वरार्धक्षपेशमित्यादिह पूर्वं बकारः। वृत्रारिर्लकारः। षष्ठस्वर ऊकारः। अर्धक्षपेशे बिन्दुः। एभिश्चतुर्थं ब्लूम् इति। कतुर्यंक पूर्वेण युक्तमिति। कं वकारः। तत्तुरीयं सकारः। क पूर्वं विसर्गः। सः इति पञ्चमं बाणबीजम्। एतानि बीजानि अङ्गुष्ठादि कनिष्ठिकावधिकरद्वन्द्वाङ्गुलीषु न्यसेत्। स्थित्यास्थितिन्यासोक्त विधिना। उभयकराङ्गुलीषु करतलद्वयोश्च षडङ्गं विन्यसेत्। न्यासो हि ब्रह्मचारी गृही मुमुक्षुरित्याद्यधिकारि भेदात्। सृष्टिस्थिति संहारात्मना त्रिविधः। तदुक्तं वायवी संहितायाम्। स्थितिन्यासो गृहस्थानामुत्पत्तिर्ब्रह्मचारिणाम्। यतीनां संहृतिन्यासोवनस्थानां तथैव चेति मध्यमादि कनिष्ठान्तमङ्गुष्ठादि न्यसेत्स्थितिम्।

अङ्गुष्ठान्तं कनिष्ठादि सृष्टिन्यासो विधीयते।
अङ्गुष्ठादि कनिष्ठान्तं संहारान्यास ईरितिः॥

नाभ्यादिकेशपादान्तं स्थित्यादेहेन्यसेद्बुधः।
केशादि पादपर्यन्तं सृष्टिन्यासो विधीयते॥

पादादि केशपर्यन्तं संहारन्यास ईरितः। इति।

एवं यथाधिकारं विन्यस्य वक्ष्यमाण कलान्यासं कुर्यात्। यथा। भगपरममायाकुलान्तं क्रमात्। बीजानां त्रयमर्धचन्द्रसहितं विन्यस्य मूर्ध्निस्वक इति। भगमाकारः तत् परमैकारः।

p. 142)

मया भुवनेशी। अकुलान्तम्। अकुलो हकारः। तदनतः। क्षकारः। अर्धचन्द्रो बिन्दुः। एकार बिन्दुभ्यं प्रथमम्। हकार रे * कार बिन्दुभिर्द्वितीयम्। ककार षकार बिन्दुभिस्त्रितीयमिति। एतानि बीजानि स्वरसि विन्यसेत्। सानन्तं मुखवृत्तकेकगतकं संवर्तकमिति। अनन्त आकारः। कंशिरः। तद्गतकं शिरोगतबिन्दुरित्यर्थः। संवर्तकः क्षकारः। आकार बिन्दुभ्यां युक्तं क्षकारं मुखवृत्ते न्यसेत्। सूक्ष्मादीश्चतुरो युगे नयनयोर्न्यस्त्वा तत श्रोत्रयोः सार्धेन्दूनिति। सूक्ष्म ईकारः। स आदिय्येषान्ते सूक्ष्मादयः। अर्धेन्दु बिन्दुः स बिन्दुगानित्यर्थः। इम् ईम् उम् ऊम् इति नयनयोः। श्रोत्रयोश्चन्यसेत्। स्वकपोलयो भृगु युगम्। घ्राणद्वयेनान्वितम्। चन्द्रांर्धाङ्कितमस्तकं चेति। भृगुः सकारः। प्राणद्वयम्। ऋ ॠ चन्द्रार्धो बिन्दुः स बिन्दू सकार ऋकार बिन्दुभिरेकम्। सकार ॠकार बिन्दुभिरन्यत्। तद्वयं कपोलयोन्न्यसेत्। बे * द्वयं विन्यसेत् पश्चाद्गण्डयुगान्वितं शशिदलोपेतोत्तमाङ्गं बुधे इति। श्वेतः षकारः। गण्डयुगम् ऌम् ॡम्। शशिदलं बिन्दुः षकार ऌकारबिन्दुभिरेक * * कार ॡकारबिन्दुभिरेकम्। एते चिबुकपार्श्वयोर्न्यसेत्।

p. 143)

दन्तपङ्क्तियुगले बकद्वयम्सेन्दुखण्डरदनच्छदद्वयमिति बकः शकारः इन्दुखण्डो बिन्दुः। रदनच्छदद्वयमोष्ठ युगलम्। एम् ऐम् शकारेणयुक्तं बीजद्वयं दन्तपङ्क्त्यो न्यसेत्। ओष्ठयो घटयुगं ततो न्यसेद्दन्तयुग्ममुख पूर्वसंयुक्तमिति। घटो वकारः। दन्तयुग्मम्। ओ औ। मुखं विसर्जनीयः। तत्पूर्वं बिन्दुः। शेषं पूर्ववत्। एते ओष्ठयो न्यसेत्। रसन्नाभावधोंड्डुपयुतमिति। रसो * कारः। अधोंडुपोबिन्दुः। वम् इति नाभो न्यसेत्। पवनन्न्यसेन्मन्त्रीसान्त्यस्वरमथ शिखामवहित इति। पवनो यकारः। अन्त्यस्वरो विसर्गः। यः इति शिरसिन्यसेत्। इति षोडशकलान्यासः॥ पश्चाद्देह इत्यादि वक्ष्यमाण क्रमेणेत्येतदन्तस्यायमर्थः। षोडशकलान्यासानन्तरं मातृकां केवला वा रुद्रशक्ति सहितां वा यथ * * स्यानर्थन्तरं विद्यान्यासं कुर्यादिति। यथा। आद्यं बीजमित्यारभ्योर्ध्वमुखादि विद्वानित्यस्यायमर्थः। मूलविद्या बीजत्रयं विभज्य मूर्ध्नि गुह्ये च हृदये चै * * * वामादि नयनयुगे ललाटे चैकोन्यासः। कर्णयुगल आस्ये चैकोन्यासः। अंसद्वये पृष्ठे चैकोन्यासः। जानुयुगे नाभौ चै * * * ध्वाधौ दक्षिणवक्रेष्वेकः। वामापरमध्ये वक्रेष्वेकः।

p. 144)

एवं सप्तविधं मूलविद्यां विन्यसेदिति। अङ्गानि मूलेन चेति। मूलमन्त्रं बी * * * * गानि कुर्यादित्यर्थः। गुह्यनाभीति। गुह्यनाभि हृदयानन मूर्ध्वसु। पूर्वोक्तबाणपञ्चकन्यसेत्। ललाटदेशे वदनेत्यादि भवन्ति तस्य म * * * * मर्थः। क पञ्चमं शुचि नयनान्तसंयुतमिति। कंवकारः। तत् पञ्चमो हकारः। शुचिरग्निः। रेफ इति यावत्। नयनान्तमीकारः। हकार रे * * * * बीजमेकम्। स वामदृक्पवना गुणान्वितः। कर इति वाम दृगीकारः।

पवनो यकारः। तद्गुणाक्षरः। तृतीयाक्षरः। लकारः। करः ककारः। कलारलकार ऊ * * * * कामाख्यम्। रविस्वर इति द्वादशस्वर ऐकारः। हरिहयविष्णुषष्ठ वदनमिति। हरिहयो लकारः। विष्णुरकारः तत् षष्ठ ऊकारः। वनं वकारः। वकार लकार ऊकार * * चतुर्थम्। ततस्थल उ पुरान्वितो भृगुरिति। थ पूर्वस्तकरः। ल पूर्वोरेफः। उ पूर्व ईकारः। भृगुः सकारः। सकार तकार रेफ ईकारेः पञ्च * * * षां शिरः सुविद्धीतर्धचन्द्रानिति। एतानि बीजानि प्रत्येकं बिन्दुभिः। कामराजमन्मथकन्दर्पमकरकेतनमनोभव नामभिश्च संयोज्य ललाटवदनहृदय * * * न्यसेदित्यर्थः। विद्यान्यासं मूलमन्त्रेणाङ्गानि मूलेनेति च पूर्वोक्तं

p. 145)

विद्यान्यासाङ्गन्यासार्थं मूलविद्याबीजत्रयं वक्ष्यामीत्याह। विद्याङ्गहेतोः ल * * या इत्यादि सम्मोहनाख्यं कुलमित्यं तेव कान्तादि भूतपदकङ्कगतार्थचन्द्रं दन्तान्तान्त पूर्वजलधिस्थितवर्णयुक्तम्। अत्र प्रासङ्गिकत्वेन प्रपञ्च सारो * * * लिपि प्रक्रिया प्रदृश्यते। ह्रस्वां पञ्चपरेचेत्यत्र। ह्रस्व पञ्चकानां दीर्घपञ्चकानां बिन्द्वन्तसन्धिविकृतपञ्चकानां का दिव्यजनानां च प्राणभूताश * * * मया इति क्रमेण भूतसंज्ञा विधानेन मातृकाक्षराणां पञ्चभूतात्मत्वेनोक्तत्वाद्यथा। अ आ ए क च ट त प य ष इत्येते दशवर्णाः। प्राणभूतात्मकाः। * * * * * * ख छ ठ थ फ र क्ष इत्येते दशवर्णाः। अन्यात्मकाः। उ ऊ ओ ग ज ड द ब ल ल इत्येते दशवर्णाः। पार्थिवात्मकाः। ऋ ॠ औ घ झ ट ध भ व स इत्येते दशवर्णाः * * * * त्मकाः। ऌ ॡ अं ङ ञ ण न म श ह इत्येते दशवर्णा व्योमात्मकाः। इति कान्तादि भूतवदगमिति। कंजलम्। तद्बीजम् ऋकारः। तदन्त आकाशः। तद्बीजं * * * * भूत पदगं ह्रस्वर्गो तत्प्रतिलोम्येन पञ्चमस्थानगतम् अकारः कं शिरः। अर्धचन्द्रो बिन्दुः। दन्तान्त औकारः। तत्पूर्ण जधिस्थितवर्णयु * * * म्येन चतुर्थमक्षरमेकारः।

p. 146)

कगतबिन्दुः। स बिन्दुरित्यर्थः। अ एम् इति युक्तः शब्दः सन्धिकार्येण वृद्धिं सूचयति। एवं कृतेद्वा द्वादशस्वरा वाग्भवाख्यो * * * * न्तान्तं कुलपूर्वपञ्चमयुतं नेत्रान्त दण्डान्वितं कामाख्यमिति। कं बिन्दुः। तस्यान्तो विसर्गः। दन्तः ककारः। तत्पूर्वपञ्चमं तत्प्रातिलोम्येन पञ्च * * * * नेत्रमिकारः। तदन्त ईकारः। दण्डो बिन्दुः। ककार लकार ईकार बिन्दुभिः। कामराजाख्य उद्धृतः। दन्तान्तेन युतं तु दण्डि सकलं सम्मोहनाख्यं कुलमिति * * * तदन्त औकारः। दण्डो बिन्दुः। सकलः। काला सहितः। सकारौकार बिन्दु विसर्जनीयैः स मोहनाख्यमन्त्र उद्धृतः। ऋषिरिति सुबोधः। अमुष्य मन्त्रस्यरदान्तयुक् *। बीजं स दण्डं लकुलीश पूर्वं शक्तिस्तु सेतिरद ओकारः। तस्यान्त औकारः। लकुलीशो हकारः। दण्डो बिन्दुः। सकार औकार बिन्दुभिः सार्धं बीजमध्यस्य बीजमित्युक्तम्। आखण्डलकर्णपूर्वं सहार्धजैवात्रकमाननान्तमिति आखण्डलो लकारः। कर्ण उकारः। तत्पूर्व ईकारः। अर्धजैवात्रको बिन्दुः। आननं विसर्जनीयः। दन्तः ककारः। ककारलकार ईकारबिन्दुभिः सिद्धं कामराजं बीजमस्य शक्तिरित्युक्तम्।

p. 147)

वर्णः शुक्ल इति स्पष्टम्। शिवशक्तिबीजमित्यादि सोर्जिता भवदित्यं तस्यायमर्थः। शिवं बीजं हकारः शक्तिबीजं सकारः। अकुलो हकारः। दहनो रेफः। अयमर्थः। मन्त्रस्य प्रथममध्यबीजयोरुपरि शिवशक्त्यात्मक हकार सकारौ निहिता परोपरि तृतीय बीजोपरि हकारो निहितः। मध्यमाख्य कामराजाधरे रेफो निहितः। यथा हकार सकार ऐकारबिन्दुभिः। प्रथमम्। हकार सकार ककार लकार रेफ ईकार बिन्दुभिद्वितीयम्। हकार सकार औकार बिन्दु विसर्जनीयैस्त्रितीयमिति। अकुलो हकारः। कुलं सकारः। अयमर्थः।

हकार पूर्वा भैरवी सकार पूर्वा विद्येति देशिकावदन्निति। शिवाष्टमं केवलमादि बीजम्। भगस्य पूर्वाष्टमबीज मन्यत्। परं शिरोन्तं कथिता त्रिवर्णा सङ्केतविद्या गुरु वक्त्रगम्येति। शिव उकारः। तदष्टममेकारम्। भग एकारः। तत्पूर्वाष्टकं प्रातिलोम्येनाष्टममीकारः। परं तृतीयम्। शिरोन्तं शिरो बिन्दुः। तदन्तो यस्य औकारः। द्वादश चतुर्थचतुर्दशस्वरैः स बिन्दुकैः साङ्केतिकी संप्रदाय लभ्या मूलविद्येत्यर्थः। कान्तान्तवान्त कुललान्तवामनेत्रान्वितं दण्डिकुलं सनादम्। षट्कूटमिति।

p. 148)

कं बिन्दुः। तस्यान्तो विसर्गः। तदन्तः ककारः। व अन्तो यस्य स लकारः। अकुलो हकारः। लकार अन्तो यस्य स रेफः। वामनेत्रम् ईकारः। दण्डो बिन्दुः। कुलं सकारः। सनादं नादो हकारः। एतदुक्तं भवति। हकार सकार ककार लकार रेफ ईकार बिन्दुभिः षट् कूटाख्यो महामन्त्र उद्धृतः। अथवा कं बिन्दुः। तस्यान्तो विसर्जनीयः। तस्यान्तः ककारः। वं जलम् अमृतम्। तद्बीजं ठकारः। तदन्तो डकारः। अकुलो हकारः। लान्त इति लकार रेफयोर्ग्रहणम्। संप्रदायेनावगम्यते। ल इति स्वरूपग्रहणम्। लकार अन्तो यस्य स रेफः। वामनेत्रमीकारः। दण्डो बिन्दुः। कुलं सकारः। नादसहितम्। अयमर्थः। हकार सकार ककार लकार डकार रेफ ईकार बिन्दुनादैः षट्कूटमिति केचित्। मतद्वयमपि संप्रदायवत्। आद्यं बीजममध्यमे मध्यमादावन्ते चान्तं योजयित्वा जपेद्य इति। आद्यं वाग्भवाख्यम्। बीजममध्यमे कामराजस्थाने निधाय। मध्यमं कामराजाख्यमादौ वाग्भवस्थाने निधाय। अन्त्यमन्ते यथा स्थितं कृत्वा जपतामुक्तफलसिद्धिरित्यर्थः। आद्यं कृत्वा चावसानेन्त्यबीजममध्ये मध्यं चादिमं साधकेन्द्र इति।

p. 149)

आद्यं वाग्भवाख्यम्। बीजं परबीजस्थाने कृत्वा तत् पराख्यं तृतीयबीजमध्ये कामराजस्थाने कृत्वा मध्यं कामराजाख्यमादौ वाग्भवस्थाने निधाय जपतामुक्तफल सिद्धिरित्यर्थः। तथा च श्रुतिः। अनन्तामन्तामधि निर्मितां महीमिति। अत्र महीमिति वाग्भवमभि दधाति। मन्त्रराजममुं समस्तजगद्विमोहन कारणं मातृकान्तरिं जपेदनुलोमतोऽपि विलोमतः। इत्यस्यार्थः। जपकाले मन्त्रमुच्चार्य अन्ते अकारमुच्चरेत्। पुनरपि मन्त्रमुच्चार्यान्ते आकारमुच्चरेत्। एवं लकार पर्यन्ताक्षराणि। प्रत्येकं मन्त्रान्तरितं जपं कृत्वा पुनर्मन्त्ररहितं केवलं क्षकारम्मेरुस्थाने समुच्चार्य पुनः प्रतिलोम क्रमेण लकाराद्यकार पर्यन्तं प्रत्येकं मातृकान्तरितं जपेत्। एवं मातृकाक्षमालाया जपं कुर्वतामेकवारेण जपः शतसंख्या परितो भवतीत्यर्थः। हंसदेवसमन्वित * * * ले बुध इति। मूलविद्या बीजत्रयमिति हकार सकाराभ्यां संयोज्य जपेत्। दित्यर्थः। परः कवेति मूलविद्यायाः। प्रथमं मध्यमे बीजे केवके उच्चार्य अन्तिमबीजं हकार सकाराभ्यां संयोज्य जपेत्। व्यञ्जन हंस समन्वितमिति। हकार सकारयोरन्तमकारं लोपयित्वा केवलव्यञ्जमात्र हकार सकारावेव हस इति विद्याया संयोज्य जपेत्।

p. 150)

कमलं परिलुप्तमध्यमान्त स्वरमीशादि युतं सबिन्दुनादम्। निगमादि नमोन्तरे विराजन् भुवि देवी हृदयं प्रदिष्टमेतदिति। कमलशब्दस्य मध्यमाक्षरे मकारे लकारान्तगते अकारे परिलुप्ते अवशिष्टः। क्लति भवति। ईश उकारः तस्यादिरीकारः। स बिन्दुनादं बिन्दुनादयुक्तम्। ककार लकार ईकार बिन्दुनादैः सिद्धिकामाख्यं बीजमिति निगमादिः प्रणवः नम इति स्वरूप ग्रहणम्। प्रणवनमसोर्मध्ये कामबीजे निहिते चतुरक्षरात्मिका देवी हृदयाख्या विद्या स्यात्। विद्या कामदुघेत्यादिनितरां रहस्यमित्यन्तः सुबोधः। अथ पुष्पं वारिमुचामित्यादि वारिमुचो मेघाः। तेषां पुष्पजलं तद्बीजं वकारः।

दवयोर्दकारवकारयोरादिर्दकारः। ताचेव वर्णौ वकारदकारौ दीर्घमित्याकारः। वारिवाकारः। वान् इत्यर्थः। खान्तं गकारः। अम्बु वकारः। तथेति पूर्वोक्तग्रहणम्। ग्वा इति सिद्धं भवति। यथा दकार नकारो सलोकस्वरो लोकस्वर इकारः। इकारयुक्तौ दिनिवदवदेत्युत्त्वा वाग्वादिनीत्युच्चरेत्। वस्वक्षरमष्टाक्षरम्। एषा अष्टाक्षरी विद्या वाग्भवबीजदीपनकरीत्यर्थः ब्रह्मा शक्रदृगन्वित इत्यादि ब्रह्मा ककारः। शक्रो लकारः।

p. 151)

दृगिकारः। अन्वितः ककारो लकार इकाराभ्यां युत इत्यर्थः। भग एकारः मेषोनकारः। दृगिकारः। दकार नकारौ इकारयुक्तावित्यर्थः। कालोमकारः अनन्त आकारः। वियत् हकारः आकारयुक्तो हकारः। दशन ओकारः संवर्तः क्षकारः। ओकारयुक्तक्षकारः। भीषणो हकारः। अक्रूरो बिन्दुः। बिन्दुयुक्तो हकारः। कमलासनः ककारः। शिव उकारः। उकारयुक्तः वैश्वानरो रेफः। तादृश उकार युक्तः। क्लिन्ने इत्युच्चार्यान्ते क्लेदिनीति पदान्ते महाक्षोभं कुर्वति। एकादशाक्षरीयं विद्यामन्मथबीजदीपनकरीत्यर्थः। क्षोभयतीति। सुबोधः। सावित्रीरदनयुता महादि काली व्योमान्तं शशधरखण्डमण्डिताङ्गम्। मोहिन्या सरसिज भूर्युतस्तथा निर्विघ्नेद्यं भुवि परबीजदीपनी स्यात्। सावित्री प्रणवः। रदन ओकारः। महादि काली। महाकालो मकारः। ओंकारयुक्तो मकारः। व्योमहकारः। तदन्तः क्षकारः। शशधरखण्डो बिन्दुः। बिन्दुयुक्तं क्षकारः। मोहिनी उकारः सरसिज भूः ककारः। उकारयुक्तः अग्निरेफः। तथेति रेफस्याप्युकारानुवृत्तिः। प्रणवान्तं मोक्षपदं प्रोक्त्वा कुरुशब्दमुच्चरेत्। इयं पञ्चाक्षरविद्या परबीजदीपनकरी। अन्ये केचन

p. 152)

देशिकामपरबीजदीपनीकरीमन्यथा योजयन्ति। सावित्री प्रणवयुता महादिकालीति।

प्रणवान्ते महाशब्दमुच्चार्यान्ते मोक्षं कुर्वीति। सप्ताक्षरीमुद्धरन्ति यस्य बीजस्य या दीपनकरी तां पूर्वमुच्चार्यानन्तरं बीजमुच्चरेत्। एवं त्रिष्वपि बीजेषु जपप्रकारः। विद्या षडङ्गवदनेष्विति। विद्या षडङ्गवदनेषु न्यासेषु स्वस्वदीपनविद्योच्चारपुरः सर एव मन्त्रबीजानि यथोक्तक्रमेण विन्यसेदित्यर्थः। विद्यामेवन्यासत इति स्पष्टः। मन्त्ररूपमिति। इति सकलागमश्रिति स्मृतिसारभूतं सकलदुरिततिमिरभास्करं मलमाया पाशभङ्ग प्रभञ्जनं स्वान्त कुमुदसम्बोध सुधाकरः सकल संसारबन्धमोचनं महागुरु सङ्कुचि संप्रदायं यथा वन्मन्त्रस्वरूपमीरितम्। तस्मात् साधकचित्त वित्तकाय शाठ्यं हित्वा * * शु श्रूषया तदनुग्रहप्रसादपुरः सरं यथा विधि लब्धमन्त्रः सन् पूर्वोक्तमन्त्रस्थानन्यास जातं विधाय जपपूजादि कुर्यात्। नान्यथेति।

॥ इति संप्रदायदीपिकायां द्वितीयः पटलः॥

एवं साधकानां सकलपुरुषार्थ साधनभूतं मन्त्रस्वरूपमुक्त्वा पुरुषार्थान्तराय परिहाराय योगाङ्गभूतं प्राणायामप्रकारं

p. 153)

तद्विशेषांश्च वक्तुमुपक्रमते। अथेदं शरीरमित्यादिना दिशाङ्गुलम्। द्वादशाङ्गुलम्। चतुर्दशरात्रेति अपघने शरीरे प्रधानाः प्राणादीनां स्वैरसञ्चा नियमनयोग्याः पञ्चवर्णोज्वला। वकार लकार रेफ यकार हकारैरुल्लसच्छरीरा। प्रणवात्मकत्वादकार उकार मकार बिन्दुनादैर्वा रक्तशुक्लादिभिर्वा पञ्चदेवाः ब्रह्मविष्णुरुद्र ईश्वरसदाशिवाख्याः प्राणादयो वा। मृणान्तरालोल्लसत्त्वं तु पद्मसूत्रम्। चतुर्दशात्रेत्यारभ्य मुनीन्द्रैरित्यं तस्यायमर्थः। अत्र सकल शरीरे भुक्तस्य चतुर्विधस्यान्नस्य रसमापादतलमस्तकं व्यापकरकद्वारभूतासु अनेकासु नाडीषु सतिषु प्राणादीनां स्वैरसञ्चार नियमन योग्याः प्राधानभूताश्चतुर्दशनाड्यः।

सन्ति। तास्वपि तिस्रो मुख्याः। सुषुम्नेडापिङ्गलेति। तास्वपि सुषुम्नैकैवमुख्या। साचाधाराद्या द्वादशान्तं पृष्ठवंशं समाश्रित्य सकलाधारत्वेनाधो वदना ऋ ऋ भूता तिष्ठति। तस्या मूले वामदक्षिण भागमाश्रित्य इडा पिङ्गले स्थिते। तयोरिडानामनाडी चापाकृतिर्भूत्वा लिङ्गमूलस्थाने सुषुम्नामाश्रित्य दक्षिणभागगता। तदाकारा पुनरपि नाभिस्थाने तामेवाश्रित्य वामभागं गता। तदाकारा पुनरपि हृदयस्थाने तामेवाश्रित्य दक्षिणभागंगता। तदाकारा पुनरपि तालुमूले तालुमेवाश्लिष्य वामांसजत्रुमध्यगा

p. 154)

वा मनसा सुषिरं गच्छति। दक्षिणभागसम्भूता पिङ्गलानाडी तत्र तत्रस्था सुषुम्नामाश्रित्य दक्षिणना * सुषिरं गच्छति। यत्र यत्रेडा पिङ्गलयो सुषुम्ना सम्बन्धः। तत्र तत्र स्वाधिष्ठान मणिपूरकानाहत विशुध्यात्राख्यानि पञ्चपर्वाणि भवन्ति सुषुम्नान्तरालतदाकारा काचनचित्रानाडी पञ्चवर्णोज्वला पञ्चदेवमयी ज्योतिर्मयी स्थिता। तदन्तः सर्वप्रभा मूलभूता पद्मतन्तु निभा प्रभा चिन्मयी भाति इडायां चन्द्रश्चरति। पिङ्गलायां सूर्यः। तस्मादम्रस्य वामभागे स्थितिः। दक्षिणभागे विषस्येति। योगविन्दो वदन्तीति। जानीयादुदयं बुध इति देवस्य प्राणवायोः कन्दे मूलाधारे नृणां साधकानां तिग्मकराङ्गुले द्वादशान्तङ्गुले सन्ध्ये च। पूर्वापरे प्रातः सायं सन्ध्ये उत्पत्तिरुदयः लय अस्तमयः। अधोवृत्तिः। निशावासरम्। ऊर्ध्ववृत्तिः। प्राणवृत्तिः दिनेशः सूर्यः एतदुक्तं भवति। साधकशरीरे मूलाधारस्थाने सकल प्रपञ्चकारणभूत संविन्मयमाया स्वरूप कुण्डलिनी शक्तिव्यापारसञ्चारः सकलसमष्टिप्राण इडापिङ्गल मार्गेण ऊर्ध्वं गच्छन् नासा विवराभ्या बहिर्द्वादशाङ्गुलं निर्गच्छति। पुनरपि मूलाधाराभिमुखं परावर्तते। सन्ततमेवं वर्तमानं वायुमेवमभ्यासेन यः करोति स योगविदां श्रेष्ठ इति।

p. 155)

अस्य वायोर्भुक्ति भेदां नामानि च भिद्यन्ते। यथा। ऊर्ध्ववृत्तिः प्राणः अधोवृत्तिरपानः। उक्तान्नरसपाकायाग्निसन्धुक्षकः समानः। पाकमुत्तर समापादतलमस्तकं व्यापयतीतिव्यानः। यः प्राणसचिवो निमेषोन्मेषौ करोति स उदानः। उद्गारकारकोनाकः। ग उन्मीलयति कूर्मकः क्षुत्कारः कूकः। लः। योज्यं भयति। स देवदत्तः आपादतलमस्तकं व्याप्ययो मृतमपि न मुञ्चत्च्छब्दविशेषान्। करोति स धनं जयति। अहरेव प्राणो रात्रिरपानः। अहः सूर्यो * * * चन्द्रमाः इति श्रुत्या प्राणापानयो * होरात्रि रूपत्वं सोमसूर्यात्मकं चोक्तम्। अतो निश्वासनिर्गमनकालात्मा प्राणोदिवासूर्यश्च भवति। निश्वासपरावृत्तिकालात्मा अपानो रात्रि चन्द्रश्चेति। आधारादुदेत्याद् गमनाय नाडी प्रवेश समयः प्रातः सन्ध्या आधाराभिमुखं परावृत्ति प्रारम्भ समः सायं सन्ध्येति। इडयावाहनसमय उत्तरायणः। पिङ्गलया दक्षिणायनमिति। तस्मान्निशा दिवसयोर्वायानि कर्माणि प्रारम्भणीयानि तत्तत् कालगमनं प्रतीक्ष्यैवोक्तेषु कालविशेषेषु प्रारम्भणीयानीत्यभिप्रायः। तुषांशुनाडीमित्यादि पदमुपैति चोत्तरमित्यन्तः सुबोधः। मरुद्वत्म आकाशः। अन्हाय शीघ्रम्। वसूदये अन्ह्यूदये। द्वावेधत्तः सकलं च

p. 156)

कालमिति देशाद्यनवच्छिन्न कालाख्य परमेश्वरस्य इडा पिङ्गलोपाधिक प्राणापानात्मनश्चन्द्रसूर्यौ लवतुटि कलाकष्ठानिमेषमात्रा घटिका मुहुर्ताहोरात्रादि प्रलयान्तावच्छेदपरिणताभ्यां पूरकरे चक्रद्वारा सकलं कालन्धत्तः। ताभ्यां धृतस्यनक्तं दिनात्मकस्य सुषुम्ना भोक्री भवति। भोक्तृत्वं नाम चित्कालसमवेतस्य तस्योपाधितयारूप वत्वमापाद्यसर्वस्याव भावकत्वमित्यर्थः। ततः क्रमेणेत्यारभ्य महीतले कीतिभैरवोवेत्यन्तः सुबाधः। विकारमात्राभिः षोडशमात्राभिस्तदर्धाभिः द्वात्रिंशन्मात्राभिः धातुं वायुं

विगततन्द्रोविगतालस्यः। अनातिलोव्यग्रः। विस्रसाजरा। यामुण्डाधारदण्डेति सुषुम्नाधारदण्डः। नभोम्भोरुहकुहर विधोः। द्वादशान्तस्थ सहस्रपत्रपद्ममध्यवर्तिनश्चन्द्रमसः। वज्राख्यनाड्याः। चित्रनाड्याः। खगं हंसात्मानं प्राणवायुम्। तथा च श्रुतिः। हिरण्मयः शकुनिर्ब्राह्मनामेति। अपघनम्। शरीरम्। घनं स्याद् दृढं भवति। एतदुक्तं भवति। या सुषुम्नान्तराले स्थिता चित्रनाडी तु पूर्वोक्ता सामुण्डाधारदण्डात्मसुषुम्ना दण्डमध्ये द्वादशान्तस्थः सहस्रदलपङ्कजकर्णिकामध्यवर्तिनश्चन्द्रमसो मुक्ता दामनीभां सुधाधारां वहन्ती स्थिता। तस्या मध्ये ये हंसात्मानं स्वान्तसं भिन्नं प्राणवायुं सुस्थिरं कृत्वा।

p. 157)

सन्तत सुधाधारयाभिषिच्यमानमानं ध्यायेत्। तस्य मृत्योरपि मृत्युभूतस्य शरीरमाब्रह्मलयावसानं सुस्थिरं भवति मूर्च्छाङ्कित इति मूर्च्छानामप्राणवायोः शरीरान्तरापादतलमस्तकमापूर्यावस्थानं बन्धः। करोतीति मूलासाराद्याधारेषु अन्यतमे नियतमाभ्यासे न प्राणवायोः संस्थापनम्। वातोमृत इति। यन्दास्वान्तसं भिन्नो वायुर्नियताभ्यास बलेन चिदात्ममाभूतया विलयं याति। तदामृत इति गीयते। योगविद्भिरित्यर्थः। अथ पार्ष्णि निरुद्धेत्यारभ्य गुण संप्राप्तिरपेतकल्मषेत्यन्तः सुबोधः। कम्बुलिः पायुः ध्वजमूलं लिङ्गमूलम्। नररिपुविवरे नरोर्जुनः। तस्य रिपुः कर्णः। कर्णरन्ध्रे छिन्द्राण्डङ्गुलीभिरिति। छिन्द्राणीन्द्रियाणि विधिवद्गुरूपदेशेन तथा चोक्तं भवता पराशरेण। क्रमावाप्तमहायोगो निश्चलात्मा यथा शरतीति। कोदण्डयोर्भ्रुवोः वृषभश्रेष्ठः वृषो विषयः। तं भजत इति वृषभः। वृषभाणीन्द्रियाणि। तच्छेष्ठं वृषभश्रेष्ठम्। षष्ठे श्रियं मनः। त्रैर्यन्तगीतं वेदान्तगीतमित्यर्थः। अङ्कमुक्तशशहल्लक्षावलक्षप्रभम्। अनेकचन्द्रसहस्रधवलप्रभम्। अयमर्थः। इन्द्रियाणि स्वकराङ्गुलिभिन्निरुध्य ह्ववोर्मध्ये स्वान्तसंभिन्नं प्राणवायुं

संप्रदायक्रमेण नियमयति स तत् क्षणादेव

p. 158)

निर्मलानेकेन्दु समप्रभं वेदान्तवेद्यं परं ज्योतिस्वरूपमात्मानमनु भावयतीति ।

॥ इति संप्रदायदीपिकायां तृतीयः पटलः ॥

एवं प्राणायाममुखेन पवनविजयं योगविशेषांश्चोक्त्वा जितमरुतामधिकारिणामभ्युदय निश्रेयस प्राप्त्युपाय भूतं मन्त्राणां छिन्नरोधानि दोषपरिहारार्थं च योनिमुद्रा बन्धनप्रकारं वक्तुमुपक्रमते । अथ पूरकयोग इत्यादिना पूरकादि योगाभ्यासेन स्वान्तं नियमितं स्वाधारे प्राण संभिन्नं मनः संयोज्याग्रजन्ध्याख्य सुषुम्नाख्य विकसने यत्नं कुर्यात् । तदुक्तं रुद्रयामले । नित्य क्लिन्ना प्रकारणे आदौ पूरकयोगेन स्वाधारे योजयेमरन इति । शकृत्समुत्सृजेति । कम्बुलिमार्गं पायुस्थानम् । अर्वा अश्वः । यथोत्सृष्टमलस्तुरङ्गः शनैः शनैस्वपायुमार्गं सङ्कोचयेत् । तथा स्वाधार नियमितान्तः करणोपानवायुना पायु द्वारमाकृष्याकुञ्चनं प्रबन्धयेत् । यथा पानवायुरवशेनापि बहिर्निर्गच्छति । तथा नियम्य सङ्कोचयेदित्यर्थः । विदधीतेति । तमपान वायुं देशिकदर्शितक्रमेण मुहुर्मुहुं कृति करणेन ऊर्ध्वमुखं कुर्यात् । आधारलक्षणमाह । दृढरुद्धगु * द ध्वजान्तरालेति । गुदमाधारचक्रस्याधो भागः । पायुस्थानम् ।

p. 159)

ध्वजं मुष्कमूलं तेजोमयम् । जाढराग्न्याधारम् । पुष्कराश्रयोग्निमत् त्रिकोणम् । अयमर्थः । गुदध्वजोर्मध्ये स्थितं यच्चतुष्पतिं पद्मम् । तन्मध्ये त्रिकोणाकारयोनिरिति । तथा चोक्तम् ।

श्री रुद्रयामले। गुदमेड्रान्तरे योनिरिति। अथ कम्बुलिमारुतमिति।
कम्बुलिमारुताख्यमपानवायुं देशिकोपदेशक्रमेणाकुञ्चनेन शनैः शनैरूर्ध्वमुखं नीत्वा
कमलासनपङ्कजाख्य सुषुम्नामूलं प्रवेशयेत्। तथा चोक्तं श्रीरुद्रयामले। तामातिञ्च्य
प्रबन्धयेदिति। अमुनाविधिनेति। एवं मुहुर्मुहुरभ्यासेन निरुद्धाधो
वृत्तिरपानवायुरूर्ध्वगमनाय राज्ञां प्रयाणाय तद्भटैः क्रियमाणाध्वशुद्धिवत्कुण्डलिनी
शक्त्यात्मकस्य परमेश्वरस्या कुलाख्य स्वभवनगमनाय सुषुम्नामूलं प्रविश्य
तदन्तर्ब्रह्ममार्गस्थितग्रन्थिभेदनं करोतीत्यर्थः परिहृत्य खगाधिप इति। अपानोप्यूर्ध्व
वृत्तित्वेन प्राणात्मत्वात् खगाधिपाख्यां लभते। एवमूर्ध्वगमनाय प्रवृत्तोपानवायुः
सोमसूर्यात्मकेडा पिङ्गलमार्गौ परिहृत्य कमलासनपङ्कजमूलं सुषुम्नामूलं प्रविश्योर्ध्वमुखी
करोति। प्रभानमिति। परमेष्ठिनोगवनं सुषुम्नाकाशः। तटित्कोटि प्रख्यमिति। तटिच्छब्देन
महाप्रकाशरूपत्वम्। कालानलशब्देनाखण्डज्ञानस्वरूपत्वम्। सहस्रादित्य

p. 160)

शब्देनान्तर्बहिरपि सर्वप्रकाशत्वम्। बन्धूकशब्दो रक्तवर्णताम्। शशभृल्लक्षशिशिरमिति।
साधकानामानन्द जनकत्वं चोच्यते। भ्रमन्तं योन्यन्तरिति। कुण्डलिनी शक्त्यात्मना
सकल जगत् सृष्टिकारणत्वेन स्पन्दमानम्। काममिति। कामशब्दो रहस्यागमेषु शरीर
वैश्वानरो रूढः। एवं तेजोमयं कामं स्वारगतं भावयेत्। तथा चोक्तं श्रीरुद्रयामले
भ्रमद्योनिगतं ध्यायेत् कामबन्धूकसन्निभम्। ज्वलत्कालानलप्रख्यं तटित् पञ्जसमप्रभम्।
तस्योर्ध्वे तु शिखेति। तस्य कामाख्य जातवेदस उपरि शिखारूपानि सूक्ष्मा विद्युत्
समूहसन्निभा चिद्रूपायाकला ब्रह्मपथान्तराम्बरगता सुषुम्नान्तराल स्थित चित्रनाड्यन्तगत
ब्रह्ममार्गेण द्वादशान्तस्थित विसर्गाख्य परशक्त्यात्मक परमपदं गतेत्यर्थः। अनेन हि पथा
ब्रह्मगतागतं करोति। तत्र ब्रह्मशब्दः शक्तिपर्याय वाचकः। तथा च श्रुतिः बृहत्वाद्

ब्रह्मणत्वाच्च यद्रूपं ब्रह्मस * तमिति। अतः सकल जगत्कारणात्मिकायाः प्रकृतेर्ब्रह्मत्वं ब्रह्मणत्वं चास्ति। हंसरूपं क्षेत्रज्ञतया एकीभूतं तदात्मनामापन्नं निवातारोपित दीपवत् सुस्थिरं ध्यायेदित्यर्थः। तथा चोक्तः श्रीरुद्रे तस्योर्ध्वे तु शिखा सूक्ष्मा चिद्रूपा परमाकला। तया

p. 161)

सहितमात्मानमेकीभूतं विचिन्तयेदिति। शक्ति कुण्डलिनीति। सकलजगनिर्माणे या सदोद्युक्ता त्रिगुणिता प्रसुप्त भुजगाकारा सदा विद्योतमान सौदामिनी सन्निभा मृणालसूत्रवत् सूक्ष्मा जगन्मोहिनी कुण्डलिनीति प्रसिद्धाया चिन्मयी शक्तिः। तां पूर्वोक्त शिखामध्यगतां परिभावयेत्। अन्तर्बहिर्व्याप्य स्थितां भावयेदित्यर्थः। तथोक्तं श्रीमते। तन्मध्ये कुण्डली देवी शिवेन सहिता प्रिये इति। उक्तमर्थं संक्षिप्य कथयति। हुङ्कारेणेति। मायाम्। भुवनेशीं कौलिकीं कुलमूलाधारः। तत्रस्थां कुण्डलिन्यात्मिकामित्यर्थः तथा चोक्तं श्रीरुद्रे तन्त्रे। परं कारणमकुलं कुलं कुण्डलिनी मता इति। विद्यामन्त्रगणः। कौलमिति तृतयम्। निर्णय इति। कुली शिव इत्युक्तः। प्रकीर्तितः। कोलं तेजो विन्यस्यादिति त्रितय निर्णय इति च। अयमर्थः। नामरूप प्रपञ्चमूलभूतात्माया बीजात्मिका कुण्डलिनी कौलिकी स्वरूपां चिद्रूपां देशिकदर्शितक्रमेण हुं कृतिकरणेन मूलाधारादुत्थाप्यचार्य पूर्वोक्तशिखा संभिन्नात्मना संयोज्य सुषुम्नान्तर्गत ब्रह्ममार्गेण परशक्त्यात्मक ब्रह्ममयं गमयेदिति भित्वालिङ्गत्रयमिति। कुण्डलिन्यात्म शिखारूपामात्मसनाथां चत्मयीं शक्तिस्वमूलाधारा दुत्थाप्य सुषुम्ना रन्ध्रं प्रवेश्य स्वयम्भुलिङ्गमित्यादिना

p. 162)

वक्ष्यमाणलिङ्गानि क्रमेण भित्वा ब्रह्ममार्गेणोर्ध्वं गत्वा

द्वादशान्तस्थितसहस्त्रदलपङ्कजस्योपरि भाग विसर्गस्थानगत पराशक्त्यात्मक चन्द्रोदरगलद्रक्तपीयूषधारम्मित दिवाकर भास्वरं शशाङ्कचयशीतलं परमानकन्दभूतं कुलस्थानं प्राप्याम्रतं पाययेदित्यर्थः। पीत्वा कुलामृतमिति। अकुलान्तर्दिव्यममृतरसं पीत्वा पुनरपि तेनैव मार्गेणावरोहक्रमेण कुलाख्यं योन्याधारं प्रापयेत् सावधानः। पुनरेवाकुलं गच्छेदिति। कथं गमयेदित्यत आह। मात्रायोगेनेति। मात्रेति पीठत्रयं लक्ष्यते। तथा हि। आज्ञास्थानगतबिन्दुतत्वात्मकप्रकाशरूपं पूर्णाख्यं पीठम्। तदुपरि ललाटमध्ये बिन्द्वात्मकप्रकाशरूपस्य शिवात्मना स्फुरद्रूपं नादात्मकमोध्याण पीठात्मकं द्वितीयं पीठम्। तदुपरि शिखा विश्रामात्मकशक्तिरूपं तृतीयं कामाख्यं पीठम्। तथा चोक्तं श्रीमते। बिन्दुनादस्तथा शक्तिर्मात्रा त्रयमुदाहृतमिति। तस्माद्देशिकदर्शित क्रमेण योन्याधारान् ब्रह्माध्वनागच्छन्ति। शिखारूपा चिन्मयी शक्तिर्यथा लिङ्गानि निर्भिद्यनकुलं गमयेदित्यर्थः। अथ वामात्रेति कुण्डलीः पर्यायः। तथा चोक्तं लघुपादैः यामात्रात्रपुसीलतेति। अयमर्थः। पूर्वोक्तशिखायाः कुण्डलिनी संयोगो मात्रायोग इति। अथ वामात्रेति काल परिणाम वाचकः।

p. 163)

तथा चोक्तं श्रीरुद्रेतन्त्रे। अयुते द्वे सहस्रैक षट्छतानि तथैव च। समात्रागीयते चात्र उद्घातवशवर्तिनी। उद्घातात्मकप्राणात्मकशिखायाः कालावच्छेदात्मकमात्रायोगेन विनागमागमौनस्तः। तस्मात् कालावच्छेदकमात्रया शिखायोग इत्यर्थः। सा शक्तिः सकलशरीरजीवभूता इति। या पूर्वोक्त शिखारूपा चिन्मयी शक्तिः सकलशरीरजीवभूता चराचरात्मकशरीरिणां सृष्ट्यादि व्यापारेस्य शक्त्यधीनत्वात्। तथाचोक्तं श्रीरुद्रेतन्त्रे। नाडीनामास्पदं पिण्डो नाड्यः प्राणस्य चाश्रयाः। जीवस्य निलयः प्राणो जीवो हंसस्य चाश्रयः हंसः शक्तेरधिष्ठानशक्त्यायत्तमिदं जगत्। इति। प्राणो साविति। असौ शिखा

चिन्मयी शक्तिः। अत्रास्मि तन्त्रे प्राण इति गीयते तत्र को विदैः।

प्राणवायुरूर्ध्ववृत्तित्वादुद्घाताख्य ग्रन्थिभेदं विधातुं भवति। तथा चोक्तं श्री रुद्रयामले। सा च प्राणसमाख्याता तन्त्रेऽस्मिन् परमेश्वरीति। उद्घातः स तु पठयत् इति। तु शब्दोवधारणे। यदा स एव प्राणः प्राणान्तं स्पृशति। प्राणो हकारः। तदन्तः क्षकारः ऊर्ध्वं घात उद्घातः। एतदुक्तं भवति। पूर्वोक्त चिन्मयशक्त्यात्मकप्राणो देशिकदर्शितक्रमेण ब्रह्मपदोर्ध्वं गच्छन्। तत्रस्थालिङ्गपीठात्मक ग्रन्थिरूपान् कवाटानुद्घाट्य प्राणात्मकपरशक्त्यन्तर्भूतं

p. 164)

संवर्तकाख्यं निष्कलपदं यदा गच्छेति तदा स एवेवोद्घात इति गीयते। योगसूरिभिरिति। तथा चोक्तम्। रुद्रयामले। उद्घातः प्रोच्यते। सोभिप्राणान्तं स्पृशते यदेति तथा श्री कामेश्वरी तन्त्रेऽपि। प्राणेन प्रेर्यमाणेनाप्यपानः पीड्यते यदा। गत्वा चोर्ध्वं निवर्तेत एतदुद्घात लक्षणमिति। अमुं स्वाचारर्थ इति  अनेन योनिमुद्रा बन्धाभ्यासिनः। फलातिशयं दर्शयति  योधिकारी गुरुपराधीनवित्तचित्तकाय प्रवृत्तिर्विहित दीक्षाचेधो योनिमुद्रा बन्धयोगविशेषांश्च यथोक्तक्रमेण ज्ञात्वा नित्यमभ्यसेत्। अनुसन्दयाति स साधकवरो निरस्त निःशेषदुःख कल्मषोपगत जरा क्लेश मरणश्च सुखसमूह परिवृतो लक्ष्मीपतिरिव कटाक्षविक्षेप किं करीकृतदेवगणो दिवि सुरेन्द्र इव भूमौ चिरञ्जीवतीत्यर्थः। तथा चोक्तं श्रीरुद्रयामले। एवमभ्यासस्तु स्यादहन्यहनियश्चयात्। जरामरणदुःखौघैर्मुच्यते भवबन्धनात्॥ अथ पूरक इत्यादि सुचिरञ्जीवतीत्यन्तेन एतदुक्तं भवति विविक्तदेशे रमणीये मृद्वासने प्राङ्मुखोदङ्मुखो वा स्वस्तिकाद्यासनेष्वन्यतमेनोपविश्य। कृतगुरुचरणारविन्द वन्दनस्वाङ्गग्रीवशिरांसि सन्धारयन्। स्वाधारनियमितान्तकरणो देशिकोपदेश क्रमेण हुं कृतिकरणेन शनैः

p. 165)

शनैर्मुहुः पायुमार्गमाकृष्याकुञ्च्य बध्वापान वायुमाधारे नियम्यतं स्वान्तसम्भिन्नेन प्राणवायुना संयोज्य। चन्द्र सूर्यात्मकेडा पिङ्गलामागौप * हृत्य सुषुम्ना मुखमुन्मीलयन् तदन्तर्गतचित्र नाड्यन्तर्गत ब्रह्ममार्गं प्रवेश्य ऊर्ध्वं गत्वा ततस्वमूलाधारे योन्यन्तस्त्रिगुणित प्रसुप्त भुजगाकार चिन्मयकुण्डलिनी शक्त्यात्मना भ्रमन्तं बन्धूक पुष्पसंकाशं सन्ततविद्योतमानं तटित्समूहसन्निभम्। दिनकरभास्वरं सोमसमूहशीतल ज्वलत् कालानलरुचिं कालाग्निमयं कामं ध्यात्वा। तदूर्ध्वे भागे निवातारोपित दीपवत्। शिखारूपमायात्मक कुण्डलीनीमात्म स्वन्नाथ चिन्मयीं प्राणात्मिकां ध्यात्वा तां ब्रह्ममार्गेणोर्ध्वस्वयम्भु बाण परिलिङ्गानि हित्वा तदुपरि स्थितमात्राख्य पूर्णोड्याण कामात्मकपीठत्रयं च भित्वा प्राणाख्य पर शक्तिं गत्वा तदुपरि भागस्थिता मृतकर बिम्बान्तर्गलिता मृतसागर मया कुलाख्य परं पदं गत्वा तदमृतं पाययेत्। अगलान्तममृतरसं पीत्वा ततः परावृत्या सावधस्तेनैव पथा च कुलाख्यं मूलाधारं प्रवेशयेत्। पुनरपि तथैवोर्ध्वं गच्छेत्। पुनरपि तथैवाधारम्। इत्येवं नियताभ्यासेन योनिमुद्रा बन्धनाख्य योगसिद्धस्य उक्तफलानि भवन्तीति। चतुर्विधाया कथितेह सृष्टीति। अण्डजस्वेद जोद्भिज्जरायुजाश्चेति।

p. 166)

अण्डजाः पक्षि सर्वादयः। स्वेदजाः यूकमत् कुणादयः। क्षणविनाशिनः। उद्भिजाः येभित्वोद् गच्छन्तीति। ते स्थावरा वृक्षगुल्मलनादयः। नरतुरगगजपश्वादयः। जरायुजाः। एवं चतुर्विधाया कथितेहसृष्टिरिति। तिर्यग्योनि भूताया निमित्तोपादानकरणभूतायां प्रवर्तते। कालाग्नि रुद्रादि सदाशिवान्तं तत्वजातम्। चतुर्दशभुवनात्मकब्रह्माण्डं लयं याति। सा

त्रिरेखाकारा वाग्भवात्मिका शक्तिस्त्रिपुराख्येति। तथोक्तमुमातन्त्रे। सा देवी त्रिपुराख्याता योन्याख्या च तथा परेति। तथा च श्रीमतसारे। कालाग्नि रुद्रादि सदाशिवान्तमखण्डं धावरणेषु चाण्डम्। यस्यां ययां व्याप्तमवस्थितं चमत्वातदन्यं न च संस्मरामीति। पूर्वोक्तलक्षणां योनिमुद्रां तद्बन्धनं चोपसंहरति। सेय मम योक्तेऽति। योनिमुद्रा बन्धनाभ्यासिनां फलानि दर्शयति। अनेन बन्धन साध्यत इति। एतेच्छिन्नादयो मन्त्रदोषा मन्त्रव्याकरणे दृष्टव्याः। अत्रापि तं मतेन दिशा प्रकाश्यते। अर्थगूढाश्च ये मन्त्राच्छिन्नास्ते समुदीरिताः। रुद्धा विसन्धिका मन्त्राः सन्धिकार्यकरणेषु योग्येषु सत्सु विगतसन्धिका मन्त्रास्तेरुद्धाः। उच्चारसनसोच्चारो मन्त्रस्तम्भित उच्यते।

१६७)

मन्त्रोद्धारसमये सानुनासिकाक्षराये मन्त्रास्तत् प्रचुराक्षराश्च ते स्तभिताः। कीलितश्चन्दसो मन्त्र उक्तादेरधिकाक्षरः। उक्तादिच्छन्दसो येधिकाक्षरा मन्त्रास्ते कीलिताः। सप्ताः। दीपिन्या चिविनासिद्धाः सुप्ता इति समीरिताः। ये अनवगत * पनमन्त्रास्ते सुप्ता। मत्ता लेखना त्रय संयुताः। ये मन्त्राः मत्तमनिभिर्विलिख्य पठन्ते ते मत्ताः। मूर्छितास्वपगता मन्त्राः। ये मन्त्रा स्वापकालोपदिष्टास्तत्कालविनियुक्ताश्चते मूर्छिताः। हीनवीर्याः शक्तिहीनाः। अनधिकारि बहुजनोपदेशावधिकाम्य प्रयोगाच्च सर्वे मन्त्राः शक्तिहीना भवन्ति। ते हीनवीर्याः। दग्धाः षट्कर्णैर्यः श्रुताता मन्त्रा ते दग्धा समुदीरिताः। बलवत्सन्निधानेन दुर्बलस्त्रासितो भवेत्। अघोर नृसिंहादि मन्त्रेषु जप्यमानेषु क्षुद्रमन्त्राणां यक्षिणी महाशास्त्रार्द्रपटादीनान्त्रा सो जायते। शत्रुपक्षेन्धिताः प्रतिकूलोरिपु स्मृतः। अभीष्टमन्त्रेषु सिद्धसाध्यादीनाशोध्यमानेषु वैरिकेषु गतोद्धाराक्षराये मन्त्रास्ते शत्रु पक्ष स्थिताः। बालवृद्धा उभाज्ञेयौ गुरुतो वर्णलक्षणैः। गुरु संप्रदायेन लध्वक्षरात्मकाये मन्त्रास्

* ?लाः। गुर्वक्षरा वृद्धाः। गर्विता यौवनेन। गुरोरप्यविधिना

p. 168)

प्राप्ता ये मन्त्रास्ते यौवनेन गर्विताः। निजिताः। यथोक्तक्रमेण उक्तसंख्याधिकं जप्यमाना अपि साधककर्मबलान्त फलेदास्तेनि ज्ञाताः। ये च सत्वेन हीनाः। सत्ववर्जम बीजकम्। अज्ञातबीजा ये मन्त्रास्ते सत्वहीनाः। खण्डीभूताः। अयुतनियुतात्मकाक्षरा ये मन्त्राः पठितुमशक्तेः तत्खण्डमात्रमादाय जप्यन्ते ते खण्डीभूताः। विहीनाः। अनवगताङ्गमन्त्राविहीनाः। एवमाद्यनेकदोषदूषिता अपि योनिमुद्रा बन्धनाख्य योगाभ्यासयुक्तेन जपेन सर्वे मन्त्रा अभिमतफलादा भवन्तीत्यर्थः। तथा चोक्तम्। श्री रुद्रयामले नित्यक्लिन्ना प्रकरणे। यद्यदुच्चरते मन्त्रं वर्णरूपं शुभाशुभम्। तत्तत् सिध्यत्यनायासाद्योनिमुद्रानि बन्धनादिति। गुरुतल्पनिषेवणमिति। स कृदाचरितेनापि योनिमुद्रानि बन्धनेन महापातकयुक्तोप पुरुषः पूतो भवतीत्यर्थः। तथा चोक्तं श्रीरुद्रयामले। कृत्वा पापसहस्राणिभ्य संख्यातानि सुन्दरि। दहत्युच्चारमात्रेण योनिबन्धेन नान्यथेति। स तु मन्त्रवर इत्यादि श्लोकत्रयेण योनिमुद्रा बन्धनाभ्यासिनामैहिकामुषिकं फलातिशयं दर्शयति। तथा चोक्तं श्री रुद्रयामले। तस्मादभ्यासनं नित्यं कर्तव्यं पुण्यकांक्षिभिः अभ्यासाज्जायते सिद्धिरभ्यासान्मोक्षमाप्नुयात्। संवित्तिं

p. 169)

लभतेभ्यासाद्योगाभ्यासात् प्रवर्तते। मन्त्राणां सिद्धिरभ्यासादभ्यासाद्वा साधनम्। कालवं च नमभ्यासात्तथा मृत्युञ्जयो भवेत्। इति। तस्मादेकेन कर्मणा सकल पुरुषार्थकाङ्क्षिभि योनिमुद्रा बन्धनाख्या योगाभ्यासे नित्यं यत्नः कर्तव्य इत्यर्थः।

॥ संप्रदायदीपिकायां चतुर्थः पटलः ॥

एवमधिकारिणामभ्युदय निश्रेयस प्राप्युपायभूतं योनिमुद्रा बन्धन प्रकारमुक्त्वा अनन्तरं षडाधारेषु योगविशेषान्वक्तुमुपक्रमते। अथ आधारपङ्केरुहाणीत्यादिना। सुषुम्नान्तरस्थानि। या पूर्वोक्ता सुषुम्नान्तराले स्थिता चित्रनाडी तदन्तर्मूलाधारादि षट् पर्वाणि सन्ति। तान्येव षडाधाराणीत्यर्थः। तदम्भोजेति। तन्मूल संस्थितान्देवान् ब्रह्मादीनक्षराणि आधारविंष्टाः। डाकिनीत्यादि देवताश्च वक्ष्य इति। पूर्वेण सम्बन्धः। अजग्रन्धिपद्ममिति। योनिमुद्रा बन्धप्रकरणे। मूलाधारात्वेनोक्तम्। यच्चतुर्दलात्मकं पद्मं तदेवाधार माद्यं ब्रुवते। योगिनः। देवी निरुद्धेति। तत्र सकल प्रपञ्चमूलमृतां ज्योतिर्मयी कुण्डलिनी शक्तिस्थितेत्यर्थः। जलेन्द्राग्नि वायून्यसेदिति। जलत्वकारः। वह्नितीयं शकारः।

p. 170)

अग्नि तृतीयं षकारः। डाकिनीति मूलाधार निविष्टाशक्तिः डाकिनीत्यर्थः। एतदुक्तं भवति। मूलाधारे तेजोमयैः वकारशकारषकारसकारै सबिन्दुकैश्चतुर्भिरक्षरैयुतं चतुर्दलात्मकं पीताभं डाकिनी देवताधिष्ठिताश्चर्यभूतं यत् पद्मं तत् सकल प्रपञ्चमूलत्वान्मूलाधारमिति योगिनो वदन्तीति। तस्मिन्मूलाधारे नियमितामरुतां योगिना मैहिकामुष्मिकं फलानि दर्शयति। मूलाधारे सन्ततं ध्यानयोगादित्यारभ्य परमानन्दपदे मुदारमन्त इति। उत्प्लुतिरुत्पतम्। दार्दुरीददर्दुरोमण्डूकः। तत्सम्बन्धिनी प्लुतिरिति यावत्। व्रजं गृहं मूलाधारादारभ्यादा द्वादशान्त सुषुम्नान्तस्थ तयोपास्यत्वेनोक्तनिष्कल चैतन्य ज्योतिषोयाथात्म्यं ब्रह्मरूपशिवलिङ्गस्वरूपत्व माधारदेवतानां च तन्मुखत्वेन तस्य षन्मुखत्वं षट्कोणशानां च तत्तदाधारोपाधिकं चोप्यास्यतया व्याचष्टे। एकीभूतार्ण वा इति। षट् सिद्धाः द्विरण्डवालि महाकालाग्नि पिनाकिच्छगलण्डा इति। सकल सुरतनुः।

ब्रह्मविष्णुरुद्रेश्वरसदाशिव शिवात्म षट् कोशाः। त्वं मासरुधिरमज्जास्थिस्नायवः। पूर्वमुपास्य तयोक्त निष्कल चैतन्यस्य ब्रह्मण उपास्यं सकलं रूपं दर्शयति। अभङ्गं लिङ्गवपुद्धृतोगगवत इति। भगवतः।

p. 171)

ऐश्वर्य वीर्य यशश्री ज्ञान वैराग्येषु भगशब्दो वर्तते।

तद्वतो भगवच्छब्द् वाच्यत्वम्। आधारात्मा द्विरण्डः।

स्वाधिष्ठानात्मा वह्निः। मणिपूरकात्मा वाली।

अनाहतात्मा पिनाकी। विशुध्यात्मा छगलब्धः।

आज्ञात्मा महाकाल इति। स्वाधिष्ठानमिति रसदलैः। षड्दलैः ध्वजमूलं लिङ्गमूलम्। पृष्ठादि तर्काक्षरैः पृष्ठं बकारः। तदादि षडक्षरैः। बिन्दून् भासितमस्तकैः। स बिन्दुकैः। लिङ्गात्मनः शूलिनः। सुषुम्नौपाधिक चिन्मय तेजो लिङ्गात्मनः। परमेश्वरस्येत्यर्थः। एतदुक्तं भवति। लिङ्गमूलस्थाने। बं भं मं यं रं लम् इति षडक्षरैर्युक्तं षड्दलात्मकं पद्मं बालदिवाकरभास्वरं लाकिनी देवतादिष्ठितं स्वाधिष्ठानाख्यं पङ्कजम्। एवं मूलाधाराद्या द्वादशान्तमुपास्यत्वेन उक्तस्य सुषुम्नापाधिक चैतन्य ज्योतिर्लिङ्गात्मनो भगवतः। परमेश्वरस्याति महनीयमुपलब्धिस्थानमिति योगिनो वदन्ति। इह किलसमनस्कानां नियमितमरुतां योगिनामिहपरत्रापि फलानि दर्शयति। इह स्वाधिष्ठान इत्यारभ्य सहजानन्दच्छलेन्दूदय इत्यन्तेन। नाभिस्थं मणिपूरकमिति। डकारादिभिः फकारान्तैर्दशभिरक्षरैः। अयमर्थः। नाभिस्थाने। डं ढं णं तं थं दं धं नं पं फम् इति दशभिरक्षरैः

p. 172)

संभिन्नं दशदलात्मकं नीलवर्णं लाकिनीं देवताधिष्ठितं मणिपूरकं नाम। अत्र स्थाने। स्थिरीकृतान्तः करणस्य नियमितमरुतो यो भिन्नं फलातिशयं दर्शयति। सततं ध्यायं दर्शयति ते नरा इत्यारभ्य कालस्य वा वञ्चनमित्यन्तेन। हृदये सरसेन्द्रगोप सन्ध्याघनसिन्दूर सुवर्ण वर्णमब्जमिति। रविसंख्यैर्द्वादशभिः क्रोधीशाद्यैः क्रोधीशः। ककाराद्यैरित्यर्थः। भानुसंख्यैर्द्वादशभिर्दण्डो पेतैर्बिन्दुमद्भिः। अयमर्थः। हृदयप्रदेशे। कं खं गं घं ङं चं छं जं झं ञं टं ठम् इति क्रोधीशादि द्वादशभैरव सहितैर्द्वादशाक्षरैर्युक्त द्वादशदलात्मकं कर्णिकान्तर्भितसमप्रभ मन्त्रमूलं शक्त्याकाकिन्न्याधिष्ठितमिन्द्रगोप * न्दूर सन्ध्यारागसमप्रभमनुपममब्जामन्वाहताख्यम्। एकस्मिन् न नाहतात्मनि स्थाने नियमितमानसमरुतां समाधिमतां लोकद्वयानुबन्धीनि फलानि दर्शयति। एतस्मिन् सततं निविष्टमनस इत्यारभ्यस्याद्योगिनी मेलनमित्यन्तेन। विशुद्धाख्यं कण्ठ इति श्री कण्ठ अकारः। अकाराद्यैः अयमर्थः। अम् आम् इम् ईम् उम् ऊम् ऋम् ॠम् लृम् लॄम् एम् ऐम् ओम् औम् अम् अः इति षोडशस्वरैर्युक्तं षोडशदलात्मकं धूमवसानवर्णं साकिनी देवताधिष्ठितं विशुद्धाख्यं पदम्। अस्मिम् स्थाने संस्थापितमानसवायुनां

१७३)

संयमनामपरत्र च फलातिशयं दर्शयति। अभ्यासयोगादित्यारभ्यनापिगणप इत्यन्ते न। अज्ञानामेति। दलयुग्मं द्विदलम्। वर्णावन्त्यौ हकारक्षकारौ। एतदुक्तं भवति। भ्रुवोन्मध्यै संविन्दुकाभ्यां हकारक्षकाराभ्यां युतद्विदलात्मकं शरदम्बु संकाशं हाकिनी देवताधिष्ठितमाज्ञाख्यं कमलम्। अत्र ध्यानयुक्तानामैहिकामुष्मिक फलाति यं दर्शयति। ध्यानयोगनिरतस्य इत्यादि महानन्दकन्दमित्यन्तेन। बिन्दुनिलये अज्ञास्थाने निरालम्बां मुद्रांखेचरी मुद्राम्। विष्णोः पदमाकाशः। उल्लासि चिल्लियुगलं स विलास भ्रूयुगलम्।

विसरं समूहम्। मुद्रया खेचर्या विश्वनि च ये आकरालाकृष्णवर्णा। आभीलेर्भयानकैः। चरन्मरालं सञ्चरद्धं सम्। सबकोटमालम्। बलाकमालायुक्तिम्। तटित्करालान्तरवारिनीलम्। विद्युज्वल सलिलश्यामम्। मुद्रयाखेचर्या विश्वनिलये आज्ञास्थाने। सहस्रारपद्ममिति। अरशब्देनदलान्युच्यते। सहस्रदल पङ्कजमित्यर्थः। विसर्गादधस्तादिति। विसर्गस्याकुलाख्यस्य पदस्या वाग्भाग-इत्यर्थः। अथो वक्रमवाङ्मुखम्। आरक्तकिञ्जल्क पुञ्जं रक्तकेसराढ्यं कुरङ्गेण हीनः। विगताङ्कः। त्रिशृङ्गेण युक्तः। त्रिकोणाकारः। योन्याकार इति यावत्। तथा चोक्तं श्रीमते। शक्तिर्यत्र लयं यातातदेवाधारमण्डलमिति।

p. 174)

स्फुरद्रश्मिजालः भास्वत् प्रभासमूहः। सुधाङ्गुरमृतकरः। तदन्तर्गतं ब्रह्मरन्ध्रम्। सुसूक्ष्मम्। तन्मध्ये सूक्ष्माकाशात्मकम्। ब्रह्मरन्ध्रम्। तथा चोक्तं श्रीरुद्रयामले। ब्रह्मरन्ध्रं तु तन्त्रैव सुषुम्नाधारमण्डलमिति यदाधारभूतं सुषुम्नाख्यनाड्याः। सुषुम्नायाः शक्तिनाड्या आधारभूतं सुषुम्नेति। निष्कलचैतन्या परमेश्वरस्योपाधि भूता चित्कालसहिता इन्दुमण्डलमध्यवर्ति ब्रह्मरन्ध्रमूर्तीरी कृत्यदेहमनुगतेत्यर्थः। तथाचोक्तं योगामृते। शक्तिर्यत्र लयं यातातदेवाधारमण्डलमिति। एतत्कैलाससंज्ञं पदं कुलपदं यदेतद्विसर्गाख्यं मकुलपदं तदेव कैलाससंख्यं बिन्दुरूपी खरूपी। प्रं प्रकृत्यात्मकः। तथा चोक्तं श्रीभगवत्पादैः। बिन्दुः पुरुष इत्युक्तो विसर्गः प्रकृतिर्मता। बिन्दुविसर्गात्मको हंसः। सततदात्मकमिदं जगत्। एतदुक्तं भवति। पूर्वोक्तादाज्ञास्थानादूर्ध्वं यच्छिरः। कपालन्तराले स्थितमधो वदनमारक्त केसरं कलात्मक षोडशस्वर परिवृत्तं सहस्रदलपङ्कजम्। तन्मध्ये त्रिकोणाकारमण्डलान्तर स्फुरत् प्रभासमूहः सुधाकरः समास्ते। तदन्तर्ब्रह्मनाड्याधार भूतम्। ब्रह्मरन्ध्रम्। ददुपरि भागेषूर्ध्वं केसरं सहस्रा दलात्मकं पद्मम्।

तद्विसर्गाख्यमकुलपदम्। एतदेव स्थानं कैलाससंज्ञमिति।

p. 175)

देशिकावदन्ति। यत्रास्ते भगवतान्विष्वेषान् जनाना भवभयकातरकप्रबोध परमाचार्यरूप जगदुत्पत्ति परिवृतलीलोनादि निधनो योगैकगम्यो योगिनामभिमतफलदः सन्ततमन्तः सौधीन्धारां विमुञ्चन् सच्चिदानन्दैक रसस्वलक्षणः। परिपूर्णात्मा परया शक्त्या परमेश्वर इति। अत्र कैलासस्थाने नियमितस्वान्तमरुतामिह च परत्र च फलभोगातिशयं दर्शयति। स्थानस्येत्यारभ्य वीतमृत्युरित्यन्तेन स्थानेस्मिन् नित्यादि प्रापयेदित्यन्तः सुबोधः।

॥ संप्रदायदीपिकायां पञ्चमः पटलः॥

एवं षडाधारेषु योगविशेषानुक्त्वा अनन्तरं मूलाधारेषु स्वयम्भुवादि लिङ्गविशेषान्वक्तुमुपक्रमते। स्वयम्भुलिङ्गमित्यादिना। स्वयम्भुलिङ्गम्। निजयोनिमध्यरन्ध्रान्तरमिति। पूर्वदृढरुचगुदध्वजान्तराल इत्यत्र योनिमुद्रा बन्धनप्रकरणे मूलाधारस्थाने प्रस्तुताया कुण्डलिनी शक्त्यात्मिका योनिः। तन्मध्ये यच्चिन्मयं पिण्डात्मकं तेजस्वयम्भुलिङ्गमिति। हृत्सरसीरुहान्तर्बाणाह्वयं चेति। हृदय कमलकर्णिकान्तस्थ बिन्दौ। स्थितं यत्परं तेजः। तद्बाणाख्यं बाणलिङ्गमित्यर्थः। इतरमन्तरालमिति।

p. 176)

भ्रुवोर्मध्यमाज्ञास्थानम्। तथाचोक्तमुमातन्त्रे। ललाट सुषिरेरम्येनिर्द्धूमज्योतिरव्ययम्। ध्यायेदिति। तस्मात्तन्मध्यगबिन्दौ स्थितं यच्चिद्रूपात्मकं तेजः। तदितरलिङ्गमित्यर्थः। तथाचोक्तम्। स्वयम्भु बाणपरलिङ्गानां पिण्डपदरूपात्मकत्वम्। श्रीमतोत्तरेऽपि। पिण्डं

कुण्डलिक्तिः। पदं हंस प्रकीर्तितः। रूपं बिन्दुः समाख्यात इति। गगनाम्बुजेन्य इति। अन्ये च केचनदेशिकाः। अस्यैव परलिङ्गस्य स्थानान्तरे ध्यानमाहुः। गगाम्बुजे विसर्गपदाख्य परबिन्दुस्वरूपनिष्कलपद इत्यर्थः। केचिदन्यथा वर्णयन्ति। विसर्गाधस्तात् परमिति। विसर्गाध स्ताशब्देन विश्व विश्वमाश्रयं कुलपदमभिधीयते। तदवा भगवत ब्रह्मरन्ध्रान्तराले तृतीयलिङ्गं परलिङ्गमित्यर्थः। अथ किमुच्यते। लिङ्गमिति। विश्वमिदं जगद्यत्र लयं याति तल्लिङ्गम्। लिङ्गचयच्चराचरमिति वा लिङ्गयद्वालीनार्थं गमयतीति लिङ्गम्। नलोहपाषाणादिकं तथा च श्रुतिः। अन्तस्थमात्मानमजं न दृष्ट्वा भ्रमन्ति मूढा गिरि गह्वरेषु। पश्चादुदग्दक्षिणतः पुरस्तादधस्विदादुपरि स्विदासीत्। तथा ब्रह्मरन्ध्रेऽपि। बाह्याभ्यन्तरं श्रेष्ठं वीराणां तु कुलार्चनम्। इति। तथा च श्रीकामेश्वरी तन्त्रे। आत्मन्येवार्चनं कुर्याद्बहिर्लिङ्गार्चनं न चेत्। इति।

p. 177)

तथा च ज्ञाननिर्णनेऽपि। आत्मलिङ्गं सदा ध्यायेद्यो यद्यत् फलमिच्छति। तत्तल्लभेन्न स देहोभ्यात्म संवित्तिकारणमिति। तथा च सिद्धान्तवचनम्। आत्मस्थं यः शिवं त्यक्त्वा बहिष्ठं तु समर्चति। हस्तस्तस्थं पिण्डमुत्सृज्यलेडिकोर्पनमात्मन इति। तथा च भगवान्याज्ञवल्क्यः। मध्यमे च हृदये च ललाटे स्थाणुवत् ज्वलति लिङ्गमदृश्यम्। अस्ति गागिपरमार्थमिदं त्वं पश्य पश्यमनसा रविरूपम्। अत्र मध्यमे चेति। मूधारमध्य इत्यर्थः। तस्माद्बाह्यादाभ्यन्तरं श्रेष्ठमिति। सर्वेषां संप्रतिपन्नमित्यर्थः। श्रीमूलविद्यायास्त्रयाणां बीजानां बीजानां स्वयम्भुवादि लिङ्गात्मकत्वेनाध्यनमाह। यद्बीजं वाग्भवाख्यमित्यादिना। यद्वाग्भवाख्यं प्रथमबीजम्। निर्मलकाञ्चन संकाशं मूलाधारे स्वयम्भुलिङ्गात्मकं ध्यायेत्। यत् कामराजाख्यं मध्यमं बीजं जपा कुसुमसंकाशं हृदयकमल कर्णिका मध्ये येदित्यर्थः। यत् पराख्यं तृतीय बीजं शारदेन्दु संकाशमाज्ञा

स्थाने परलिङ्गात्मकं ध्यायेदित्यर्थः। एतेषां बीजानं प्रत्येकं जपध्याने फलविशेषं दर्शयति। प्राणान्योनि गता नित्यादि श्लोकत्रयेण विद्यां साकल्येण जपतां ध्यानविधिं हुतविधिं च * हत्रयाणां लिङ्गानामिति। कपालकरणाख्य होमप्रक्रिया प्रज्ञातस्य कुण्डलीमुखान्तस्थ

p. 178)

चिन्मयपरमेश्वराग्नौ नामरूपात्मकस्य जपतोमृतात्मनाहोम प्रक्रियामाह। निःशङ्कमिति। नियतशब्दमात्रमेवं कृत हुं कृति विधिकस्य फलविशेषमाह। एकं वत्सरमिति ततो देवीं ध्यायेदित्यादि ध्यानश्लोकागतार्थाः। महाविद्याख्य निष्कल पदादि मूलाधारान्तं षोडशाधारेषु क्रमेण देव्यवतार ध्यानमाह। ध्यात्वा वागीश्वरीमित्यादिना। एते तेषोपशाधाराः। महाबिन्दुपीठं व्योमरूपावस्थात्मक निष्कलाकाशः। अतीतस्थानं भूविन्यवस्था। आत्मनगतस्थानमुन्मनावस्था। शान्तातीतं समानवस्था। सूर्यचक्रं विसर्गाख्य परशक्ति स्थानम्। व्योमाम्भोजं विसर्गादयस्थितशान्ताख्यं ब्रह्मरन्ध्रं प्रेतभूमिं ब्रह्मरन्ध्रादधस्थित कर्णिकास्थानगतशत्त्याख्य सदाशिवस्थानम्। अर्धचन्द्रं सहस्रारपद्मस्य षोडशकलात्मककेसरस्थानम्। आरम्भं नादात्मकाकुलस्थानम्। सेतुबन्धं विद्वात्मक ललाटबन्धमध्यमम्। व्योमभृवोर्मध्यमाज्ञास्थानम्। ईश्वरास्थानं विशुद्धाख्य कण्ठस्थानम्। रुद्रस्यालयमष्टानाहताख्य हृदयस्थानम्। विष्णुस्थानं मणिपूरकाख्यनाभिस्थानं ब्रह्मस्थानं स्वाधिष्ठानाख्यं लिङ्गमूलं कुण्डलिनी गेहमध्यं मूलाधारमिति। एतेषु मूलाधाराद्याज्ञान्तं सकलाः। परतो निष्कला इति। ज्ञातव्यम्। निरन्तरं ध्यानवन्ध्यानयोगयुक्तस्य फलविशेषमाह।

p. 179)

अनेन शश्वदिति मूलाधारा द्वादशान्तं ब्रह्मन्तर्गतवतीं विद्युदाति वर्णभेदेन ज्योतिर्लिङ्गाकारां

ध्यायतां सम्यक् ज्ञादीन् फलविशेषान्दर्शयति। आधारादुल्लसन्तीमिति। यागोक्षीरेत्यादि ध्यान श्लोकास्पष्टार्थः। मूलाधारे भगवतीं ध्यात्वा हंसमन्त्राधिरूढं तृतीयं बीजं जपन् तामकुलपदं नीत्वा साममृतार्णव निमग्नां सुस्थितां ध्यायतः। फलविशेषमाह। शक्तिं हंसेन युक्तामिति। पीतां सतम्भनादावित्यादि यच्च परमित्यन्तः सुबोधः। सिद्धिरतुला पञ्चप्रकारेति। सिद्धयः तत्र प्रसिद्धाः पातालगलिताञ्जन खड्गमुद्राख्याः अधिकारमन्त्रयोगात्मज्ञानाख्यावेति।

॥ संप्रदायदीपिकायां षष्ठः पटलः॥

एवं मूलाधारेषु वाग्भवादिषु बीजानां स्वयम्भुलिङ्गात्मकत्वेन योगविशेषांश्चोक्त्वा अनन्तरं सौभाग्यलक्ष्म्यादि सर्वैश्वर्यप्रदं यन्त्रविधानं वक्तुमुपक्रमते। अथामरैरैरित्यादि अथ यन्त्रलेखः सु नियत चरितः संयतेन्द्रियमनोवृत्तिः। परापवादानि वारितवाग्विलासः सुविमल सलिल स्नातः। क्षौमाम्बरधरो मणिमय भूषा भूताङ्गो हिम सलिलालोलित चन्दन कर्पूरागरु कुंकुम कस्तूरिकापङ्क लिप्तगात्रः सुरभि सुमनोमालालं कृताङ्गशिराः।
पाटीरपङ्ककृततिलकललाटपट्टः।

p. 180)

कज्जलाञ्जितनयन युगलस्ताम्बूलग्रास पूर्णारुणमुखकुहरोमुदितस्वान्तवृत्तस्मरवदभिरूप वेषोम्बिका पादाम्बुज भृङ्गायमाण मानस स्वगुरुचरण प्रणामपुरःसरं यन्त्रराजं लिखेदित्याह। कर्पूरक्षोददिग्धाङ्ग इत्यादिना यन्त्राणां लेखद्रव्याण्याह। कस्तूरिकेत्यादिना। सुधाकरखण्डः। कर्पूरखण्डः। पटीरं रक्तचन्दनम्। यन्त्रलेखप्रकारमाह। लिखेद् भू पत्राणीत्यादिना। भूपोराजा। राजशब्देन षोडशकलात्मकश्चन्द्रः। षोडशपत्राणीत्यर्थः।

तद्बहिर्मास पत्राणि द्वादशपत्राणि तद्बाह्यदेशे पुनर्भूपपत्राणि षोडशदलानि बहिर्दन्तपत्राणि द्वात्रिंशद्दन्ताः द्वात्रिंशद्दलानि। तत् कर्णिकायां महायोनिरिति। मध्यकर्णिकायां षट्कोणमित्यर्थः। हंसदेवोपरिस्थान् जगन्नायिकाम्। हंसमन्त्रारूढां मातृकामित्यर्थः। यन्त्रलेखं संक्षिप्योक्त्वा विस्तारेणाह। षोडशार इत्यादिना। वासरेशस्वरैर्भिन्नमेनं विधायेति। वासरेशस्वरैः पिण्डचतुष्टयवर्जं द्वादशस्वरैः। सम्भिन्नं कामराजमित्यर्थः। कलाबिन्दुनादैः शिरो देशलग्नैः परिभ्राजमानान् ककारादि वर्णानिति। कलावाग्भवम्। बिन्दुः सकारः। नादो हकारः। ऐकार हकार स सम्भिन्नेः कादिसान्तैरित्यन्तः।

p. 181)

तथा चोक्तं श्रीरुद्रयामले तद्बाह्ये मातृकाः सर्वा बिन्दुनादकलायुताः। हंसवर्णकरोरूढाः कारयेत् परमेश्वरीति। मन्दिरस्योदरस्थमिति। मन्दिरं क्षकारः। तस्यान्तस्थमित्यर्थः। तथाचोक्तमस्थानभैरवे। क्षकारो मन्दरः। प्रोक्तावर्णो मेरुरुतीश्वर इति। सुषिरं हकारः। हकारवेष्टितं कुर्यादित्यर्थः। एतदुक्तं भवति। प्रथमं षट्कोणाव्रतं त्रिकोणं विलिख्य बहिर्वृत्तं लिखेत्। तद्बहिः षोडशदलम्। तद्बहिर्वृत्तम्। ततेद्वादश दलम्। पुनरपिवृत्तम्। तद्बहिः षोडशदलात्मकं पद्मम्। बहिर्द्वादशारे पिण्डवर्णवर्ज्यम्। द्वादशस्वरसम्भिन्नम् कामराजं ह्लां क्लीं इत्यादि लिखेत्। पुनः प्रथमषोडशारे अम् आम् इत्यादि षोडशस्वरान् लिखेत् तद्बहिर्द्वात्रिंशर्दले हकार सकार रैकार सहितान् ककारादि सकारान्तान् सन्दुकान् द्वादशवर्णान् हैसकं हैसखम् इत्यादि हैससम् इत्यन्तं लिखेत्। एतत् सर्वं क्षकारेण वेष्टयेत्। तद्बहि हकारेण वेष्टयेदिति। एतन्महनीय यन्त्रराजमित्यादि स्थलीयते चेत्यन्तः सुबोधः। गन्धसिन्धुरेन्द्रैः। मदहस्तिभिः। मदचित्ख्वल्लविलिप्तगण्डपिण्डैः। मदपंरोहितगण्डस्थलैः। दरोदरेद्यूते। लुलायोवनमहिषः। चित्रकायः। व्याघ्रः।

p. 182)

भल्लूको हंसको मृगविशेषः। लोलकीलश्चलश्चलत् ज्वालः। हृत्पङ्केरुहे हृदयकमलकर्णिकामध्ये यन्त्रराजमध्यस्थितमानं ध्यात्वा मूलविद्यां जपन् मूलाधारात् कुण्डलिन्यात्म चिन्मयीं शक्तिमुत्थाप्य ब्रह्ममार्गेणोर्ध्वमाद्वादशान्तं गत्वा तदन्तर्गता मृतकरबिम्बात् सृतबहलसुधाधारयाभिषिच्यमानं ध्यानन् अमृतमयीं ध्यान्तां मूलाधारान्तं पुनरपि द्वादशान्तं पुनरपि मूलारपि मूलाधारम्। एवमारो * रोहाभ्यासेन नित्ययुक्तं गण्डपुण्यनिलयं पुरुषवरन्धातारमिव भारतीमुकुन्दमिव लक्ष्मीश्च विना कृत सापत्न्येते वाणी भजेत इत्यर्थः। आदौ मन्मथकोष्ठ इत्यादि कुक्षौ तदेतत् क्षिपेदित्यन्तस्यायमर्थः। तावन्ममथाख्य क्लीं कारोदरे साध्याख्य कर्मसहितं कामाधि राजाख्यं ह्लींकारं लिखेत्। तद्बहिः संपुटीकृतं कन्दर्पद्वितयाख्येन षट्कोणेन वेष्टयेत्। षट्कोणेषु मकरध्वजाख्यं ब्लूंकारं लिखेत्। एतत् सर्वं मनोभवाख्येन स्त्रींकारेण वेष्टयेदिति। यन्त्रं पूर्वोक्तयन्त्राधिपेनत्योदि सुचिल्य इत्यन्तः सुबोधः। साधक स्वमूलाधारकमलकर्णिकामध्ये इदं कामराजयन्त्रं ध्यात्वा साध्यं च तन्मध्ये बालदिवाकरसंकाशमानन्दमन्दं मण्ढरेश्चेतनामात्र रूपं ध्यात्वा देशिकोपदेश क्रमेण स्वशक्त्यामथनं कुर्यादित्याह। ध्यात्वेवमित्यादिना

p. 183)

भगवत्यवश्यमिति स्पष्टः। कलापत्रोपेतमित्यादि पिण्डामृतमित्यन्तस्ययमर्थः। कलापत्रं षोडशदलात्मकं विलिख्य

* त्कर्णिकायां शृङ्गाटद्वितयाख्यं षट्कोणं विलिख्य तन्मध्ये ओं क्लीं नमः। इति देवी हृदयाख्यं मन्त्रं लिखेत्। षट्कोणेषु पञ्चसुकामपञ्चकं ह्रीं क्लीम् ऐं ब्लूं स्त्रीम् इति विलिख्य षष्ठे कोणे साध्यस्य नमाभिमत कर्मसहितं लिखेत्। बहिः षोडशदलेषु स्मररूपान् षोडशस्वरूपान् सबिन्दुकान् लिखेत्। एतत् सर्वं सुषिराख्य हकार कुक्षौ निक्षिपेत्।

एतद्यन्त्रं पिण्डामृत्याख्यमिति। जनस्येतदित्यादि सुबोधः।

॥ इति सप्तमः पटलः॥

एवं यन्त्ररचनाप्रकार तथा कथनानन्तरं बाह्य पूजाविधानं वक्तुमुपक्रमते। अथेत्यादिना प्रथमस्नानादिना शुद्धिं विधाय देवग्रहे स्वग्रहे वा यागमण्डपं परिकल्प्य तज्जल गोमयाभ्या शोधयेदित्याह। शुद्धेत्यादिना भगवतः परमस्य पूर्वयुक्तं गगनं सा नलवामदृक् तथैवेति। भग एकारः। तत्परमैकारः आस्यो विसर्जनीयः। तत्पूर्वो बिन्दुः ऐम् इति। गगनं हकारः। अनलो रेफः। वामदृगीकारः। तथैवेति पूर्वोक्तो रूपो बिन्दुः। ह्रीम् इति

p. 184)

बीजद्वयात्मकेन मन्त्रेण कुशजाभ्यां पूजास्थलमभ्युक्षयेदित्याह। कुशजलेत्यादिना क्ष्मापूजास्थलम्। अकुलं सकुलादि तर्कबीजं शिवपूर्वेणयुतं सहेन्दुखण्डमिति। अकुलं हकारः। कुलं सकारः। तस्यादि तर्कबीजम्। तत् प्रतिलोम्येन षष्ठमक्षरं रेफम्। शिव उकारः। तत् पूर्वमीकारः इन्दुखण्डो बिन्दुः। ह्रीम् इति मन्त्रेण द्रव्यशुद्धिं कुर्याद् अमुनामनुनेति वाग्भवमैकारः। सदण्डं बिन्दुसहितम् ऐम् इति। वसुरग्निः। रेफ इति यावत्। वामदृगीकारः। इन्दुखण्डो बिन्दुः। तत् प्रातिलोम्येनानलगम्। तृतीयमक्षरं शकारः। अम्बरं हकारः। शकारहकारौ रेफ ईकारबिन्दुयुतावित्यर्थः। ऐं ह्रीं श्रीम् इति बीजत्रयात्मकेन मन्त्रेण भगादिदेवताः। पूजयेदित्यर्थः। ब्रह्माणीं हंसयानामित्यादि पत्रमूलमित्यन्तः सुबोधः। अब्धिवक्त्रा चतुमुखी। ब्रह्मादि देवतानां मन्त्रानाह। बीजान्यमीषामित्यादिना। अनन्तो दीर्घः। आकारः नभोन्तमिति नभो हकारः। तदन्तः क्षकारः। दीर्घः। आक्षा इति ब्रह्माणी मन्त्रः। नयनान्तमिन्द्रः। प्राङ्गुरिति। नयनान्तमिति।

ककारः इन्द्रो लकारः। प्रांशुर्दीर्घ इत्यर्थः। ईत्वा इति माहेश्वरी मन्त्रः। दृगान्तपरः कुलान्तमन्तरुद्रेण ततः समेतमिति। दृगिकारः तदन्त ऊकारः।

p. 185)

तदन्त उकारः। तत्पर ऊकारः। कुलं सकारः। तदन्तो हकारः। अनन्त रुद्र आकारः समेत आकार सहित इत्यर्थः। ऊहा इति कौमारी मन्त्रः तिथीशः सानन्तो भृगुरिति। तिथीशो ऋकारः। भृगुः सकारः। सानन्त आकारसहितः। सात्रृसा। इति वैष्णवीमन्त्रः। हरोनन्तसहितं बकान्तमिति। हरः लॄकारः। बकः शकारः। तदन्तः षः अनन्तसहित आकारसहितः। षा लॄ षा। इति वाराही मन्त्रः भृतीशस्तदनुबकोनन्त सहित इति। भृतीश ऐकारः बकः शकारः। अनन्तसहित आकारयुक्तः। शा ऐशा इति। इन्द्राणी मन्त्रः। कपूर्वन्तं सूक्ष्मान्तन्वितमथवन इति। कम्बिन्दुः। तत्पूर्वमौकारः। सूक्ष्म इकारः। इकार अन्तो यस्य स आकारः। वनं जलम्। वकारः। वकारमनुप्राप्तः। आकारः वा औवा इति। चामुण्डा मन्त्रः। अनुवदनं शचीनाथोपेतमिति। वदनं विसर्जनीयः। अनु पुनरपि वदनमाकारः। शचीनाथो लकारः। उपेतम्। आकारो लकारेण सम्भिन्नमित्यर्थः। अः ला इति महालक्ष्मी मन्त्रः। वदमविक्रान्तान्वितमिति। वदनपि पूर्वोक्ताष्टसु मन्त्रेषु य आकारः। कान्तान्वितमपि भवति। अम् अकारः। तदन्त आकारः। तदनु इकारः। तदितः तदनन्तप्राप्तं ऊकारः।

१८६)

अपि शब्देन प्रकारमनुप्राप्त ईकार इत्यर्थः। एवं कृते। आ क्षा ई ला ई-ऊहा ई ॠ सा ई - लॄ षा ई - ऐशा ई - औवा ई - अः ला ऊ - इति भवतीत्यभिप्रायः। अथा सिताङ्गमित्यादि

यौवनाढ्या नित्यन्तः। सुबोधः। असिताङ्गादि भैरवाणां मन्त्रमाह। हयत् तृतीयम्।
भगभूतसंयुतं कुलान्तमपि विलोचनान्दयुक्। निशाकरार्धाङ्कितमस्तं चेति। हरः लृकारः।
तन्त्रीय मैकारः। भग ऐकारः। तद्भूताक्षरम्। पञ्चमाक्षरम्। बिन्दु तत्संयुतम्।
बिन्दुयुक्तमित्यर्थः। ऐं कुलान्तं कुलः सकारः। तदन्तो भकारः। अपित्तमग्निं रेफ इति।
यावत् विलोचनान्तमीकारः। निशाकरार्धो बिन्धुः। तदङ्कितमस्तकं सबिन्दुकमित्यर्थः। ऐं
ह्रीम् इति मन्त्रेणासिताङ्गद्यष्टभैरवाः। पूज्याः इत्यर्थः। यो हेतुकमित्यादि भीमा इत्यन्तः
सुबोधः। हेतुकादीनां मन्त्रानाह। भौतीशनेति भौतीश ऐकारः। निशाकरार्धो बिन्दुः।
तत्सहितेन। ऐम् इति मन्त्रेण हेतुकादि भैरवाः पूज्याः। प्रियङ्ग्विवत्यादि साधक इत्यन्तः
सुबोधः। छगलगतिं मेषवाहनम्। सेरिहाङ्गगतं महिषा * म्। वरशम्बरगतम्।
कृष्णमृगारूढम्। ऊर्णायूरोमशोमेष विशेषः। इन्द्रादि लोकपालानां मन्त्रमाह।

p. 187)

मस्तकादि जलराशिगं सकमं मस्तकादल नगं वकान्तयुक्। सूक्ष्मपूर्वमुखसंयुतमिति।
मस्तकम्। बिन्दुः तदादि जलराशिगम्। तत् प्रातिलोम्येन चतुर्थमक्षरम्। ऐकारः। सकं
सबिन्दुकम्। ऐं मस्तका दनलगम्। मस्तकं बिन्दुः। तस्मादलगम्। तृतीयमक्षरं ककारः।
बकः शकारः। तदन्तः षकारः। युक् ककारः षकारयुक्तः। सूक्ष्म इकारः। तत्पूर्वमाकारः।
मुखं विसर्जनीयः। तत्पूर्वं बिन्दुः बिन्दुयुक्तम्। क्षाम् ऐम् इति मन्त्रेण इन्द्रादि लोकपालाः
पूज्याः इत्यर्थः। वटुक इत्यादिरमत इत्यन्तः सुबोधः। अथ त्रिलोकार्चितं शासनाया
इत्यादि गिरीश इव संप्राप्त इत्यन्तेनैतदुक्तं भवति॥ अथ ब्राह्मे मुहूर्त्त उत्थाय श्रीमत्
स्वगुरु चरणारविन्दं शिरसि निधायाभिमत देवतानुस्मृतिं कृत्वा पूर्ववत् तीर्थं गत्वा कृत
शौचाचमनदन्तधावनमुखप्रक्षालनो विधिवत् स्नानं विधायाचम्यमूलमन्त्रेण
कलमुद्रयात्मानमष्टोत्तरशतमभिषिच्याचम्य तीरमासाद्य क्षौममये वाससी परिधाय

कृतविहित सन्ध्यावन्दनो भानुमण्डले भगवतीं ध्यात्वा तां स परिवारामृतमयैः सलिलैरष्टोत्तरशतं मूलविद्या सन्तर्प्य। महामातृकाविद्महे कालसङ्कर्षणी धीमहि। तन्नो देवि प्रचोदयात्। दिति। त्रैपुरगायत्र्याघ्र्यं

p. 188)

दत्वा जयथा शक्ति जपित्वोत्थाय पशुजनविहिते रमणी ये देवगृहे - हे वा सुरक्षित दृढ परिवीत यागमण्डपं परिकल्प्य द्वारोवान्ते पादौ प्रक्षाल्याचम्यान्तः प्रविश्य। ऐं ह्रीम् इति मन्त्रेण कुशजलाभ्युक्षालनेन मण्डपं भावयित्वा हुम् इति मन्त्रेण यागपात्राणि प्रक्षाल्यादि शुद्धान्यपरिमितानि पूजोपकरणानि सन्निधाप्य प्राङ्मुखोदङ्मुखो वा स्वस्तिकासनेनोपविश्य निजस्वभागे गुरुदक्षिणभागे गणपतिं च संपूज्य स्वमूलाधारे कुण्डलिन्यात्म चिन्मय परशक्तिस्वरूपं जीवात्मानं बुध्वा हंसमन्त्रेण ब्रह्माध्वनो द्वादशान्तं नीत्वा सहस्रदल पङ्कजमध्यवर्तिनि सोमात्मक परशिखात्मनि संयोज्य रम् इति बीजेन मूलाधारात् कला रुद्रमूढाप्य तेन सकलब्रह्माण्डमयं शरीरं दग्ध्वा भस्मसात् कृत्य नाभिस्थेन यम् इति बीजेन प्रचण्डवायु मुत्थाप्य तेन तं भस्मराशिमखिलवनी यद्वादशान्त स्थितः सहस्रदलपङ्कज कर्णिकामध्य स्थितेन वम् इति बीजेनामृताम्भोधिमयं ध्यात्वा ततः परिगलद्बहल सुधाधारया पूर्यमाणन्तं निष्कलं तेजो रूपमात्मानं बुध्वा लम् इति बीजेनात्मानं सुस्थिरं सञ्चिन्त्य सकली कृत्य मन्त्रमयो भूत्वान्यास जातं विदधीत। यथाद्रां द्रावणबाणाय नमः। द्रीं क्षोभणबाणाय नमः।

p. 189)

क्लीं वशीकरबाणाय नमः। ब्लूम् आकर्षणबाणाय नमः। सं सम्मोहन बाणाय नमः। इति पञ्चबाणानङ्गुष्ठादि कनिष्ठान्तं करद्वयाङ्गुलीषु विन्यस्यानन्तरम्। वदवदवाग्वादिनि ऐं हृदयाय

नमः। क्लिन्ने क्लेदिनि महाक्षोभं कुरुकुरु। क्लीं शिरसे स्वाहा। ओं मोक्षं कुरु कुरु - सौम शिखायै वौ - वदवदवाग्वादिनि ऐं कवचाय हुम्। किन्ने क्लेदिनि महाक्षोभं कुरु कुरु क्लीं नेत्र त्रयाय वौषट्। ओं मोक्षं कुरु कुरु सौः अस्त्राय फड् इत्यङ्गषट्कं पूर्वोक्तप्रकारेण स्थित्या स्थितिन्यास विधिना यथा विधिकारमुभयकराङ्गुलीषु करतलयोश्च विन्यस्यानन्तरम्। ऐं ह्रीं क्षम् इति शिरसि। क्षां मुखवृत्ते। इम् ई नयनयोः। उम् ऊं श्रोत्रयोः। सृं सॄं कपोलयोः। ष्णुं ष्णूं चिबुकयोः। शें शैं दन्तपङ्क्त्योः। वों वौम् ओष्ठयोः। वं नाभौ। यः शिरस्यानन्तरम्। अं श्रीकण्ठेश पूर्णोदर शक्तिभ्यान्नमः शिवाभ्या। इत्यादि मातृकां यथास्थानं विन्यस्यानन्तरं मूलविद्या बीजत्रयं विभज्य स्वस्व दीपनीपुरःसरं वक्ष्यमाण क्रमेणन्यस्येत्। मूर्ध्नि गुह्ये हृदये चैकोन्यासः वामादि नयनयुगे ललाटे चेकोन्यासः। कर्णयुगल आस्येचैकः। अंसद्वये पृष्ठे चैकः। जानुयुगे नाभौ चैकः ऊर्ध्वाधो

p. 190)

दक्षिणवक्रेष्वेकः। वामापरमध्यमवक्रेष्वपरः। एवं सप्तविधं विद्यां विन्यस्यानन्तरं पूर्वोक्तषडङ्गानि हृदयादिषु विन्यसेत्। ततो गुह्यनाभि हृदयाननमूर्ध्वसु पूर्वो बाणपञ्चकं विन्यस्य। अथ ललाटवदनहृदयनाभि गुह्येषु। ह्रीं कामराजाय नमः। क्लीं मन्मथाय नमः। ऐं कन्दर्पाय नमः। ब्लूं मकरकेतनाय नमः। स्त्रीं मनोभवाय नमः। इति पञ्चक्रमान्विन्यस्य। मूलविद्या गोलकात्वेन पादादि केशान्तं केशादि पादान्तं विन्यसेत्। एवन्न्यासजातं विधाय गन्धपुष्पादिभिरात्मानमभ्यर्च्यात्मानं परमेश्वरमयं ध्यात्वा यथा शक्ति जपेत्। ततो विमल प्रक्षालितं पीठिकं वेदिकायां विन्यस्य चन्दनकुंकुम कर्पूरकस्तूरिगोरोचनादि गन्धनिष्यन्दैरलक्तकर स लुलितै स्वयम्भुं कुसुमोपेतैर्विलिप्य ततोर्घ्यमण्डं च यथा विधाय अर्घ्यपात्र पादमग्निमण्डलं बुध्या वाग्भवेन प्रतिष्ठाप्य अग्निमण्डलाय दशकलात्मने अर्घ्यपात्रपादाय नमः। इति पादसंपूज्य। सौवर्ण रजत ताम्र

मयेष्वन्यतमं सवित्रमण्डलं बुध्या कामराजेन प्रतिष्ठाप्य सूर्यमण्डलाय द्वादशकलात्मने अर्घ्यपात्राय नमः। इति पात्रं संपूज्य यथोपदिष्टमर्घ्यजलं सोममण्डलं बुध्या तृतीयबीजेन प्रतिष्ठाप्य सोममण्डलाय षोडशकलात्मने अर्घ्यामृताय नमः।

p. 191)

इति अर्घ्यमृतं संपूज्य गन्धपुष्पाक्षत कुशयवतिलसर्षपपूर्वा यथा लाभमर्घ्यजले निधाय हृन्मन्त्रेणाभ्यर्च्य शिरसार्घ्य जलगतदोषं समुद्धृत्य शिखया विसृज्य कवचेनावकुण्ठ्य नेत्रेण सुरभिमुद्रयामृती कृत्यास्त्रेण संरक्ष्य मूलमन्त्रेणभ्यर्च्य तत्रामृतेश्वरीं ध्यात्वार्घ्य जलं स्पृशन् अर्घ्यममृती करोमीत्यन्तया मूलविद्यया सप्तवारं जपित्वा ततोर्घ्येण ह्रीमिति मन्त्रेण पूजोपकरणानि पीठमात्मानं च संप्रोक्ष्य ततः पीठोपरि त्रिकोण पञ्चदलाष्टदल चतुरश्रात्मकं पद्मं विलिख्य तन्मध्ये मूलमन्त्रेणाधारशक्तिं संपूज्य तदुपरि। अनन्ताय नमः। कूर्माय नमः। पृथिव्यै नमः। इति संपूज्य। पीठस्याग्नेयादिषु विदिक्षु पीठपादेषु धर्मादि चतुष्टयं पूर्वादि दिक्षु पीठगात्रेषु। अधर्मादि चतुष्टयं च नमोन्ते स्वनामभिः संपूज्य ततः पीठोपरि। संसत्वाय नमः। रं रजसे नमः। तं तमसे नमः। कन्दाय नमः। नालाय नमः। पद्माय नमः। कुलपद्माय नमः। योन्यासनाय नमः। वं वह्निमण्डलाय नमः। अम् अर्कमण्डलाय नमः सं सोममण्डलाय नमः। इत्युपरिर्यपरि विन्यस्य। तत्र हसौः। सदाशिवमहाप्रेतपद्मासनाय नमः। इत्यभ्यर्च्य। तत्र यथोपदिष्टवर्णाभरणाम्बरां भजमानपरिजातलितिका

p. 192)

मण्डल संवित्स्वरूपिणीं दवीमावाहनमुद्रया हृदयकमल कर्णिकागं वराद्दक्षिण न नासापुटेन कराञ्जलौ विरेच्यावाह्य संस्थापनमुद्रया संस्थाप्य सन्निधिकारिण्या सन्निधाप्य।

सन्निरोधिन्या सन्निरुध्यावकुण्ठनमुद्रयावकुण्ठ्य। हंसमन्त्रेण मूर्तिं बध्वा योनिमुद्रां च प्रदर्श्य मूर्तौ स्वदेहवत् करन्यास वर्जन्यास जातं विधायाघ्यादि षोडशोपचारैः मूलमन्त्रेणाभ्यर्च्य नीराज्यप्रणम्य तदनुज्ञा पुरः सरं परिवारानर्चयेत्। यथा। देव्याः परितो हृदयादि कवचान्त मनीशा सुरवायुषु पुरतो नेत्रं दिक्षु चास्त्रं पूर्वोक्त षडङ्गन्यासमन्त्रैः क्रमेणाभ्यर्च्य त्रिकोणमध्य वाम कोणाग्रेद्दत कनकमय सन्निभा अतिरमणीयवेषां पाशनतिकरां रतिं वाग्भवेनाभ्यर्च्य। दक्षिणकोणाग्रे शशाङ्कनिभामतिसुन्दरगात्रीं सुमुखीं कुशनतिकरां प्रीतिं तृतीयबीजेनाभ्यर्च्य। अग्रकोणाग्रे बन्धूक कुसुमसंकाशमिक्षुचापपुष्पशरधं मणिमया कल्पालङ्कृतं कामं कामबीजेनाभ्यर्च्य ततः पूर्वादि पञ्चदलेषु द्रां द्राविण्यै नमः। ह्रीं क्षोहिण्यै नमः। क्लीं वशीकरिण्यै नमः। ब्लूम् आकर्षण्यै नमः। सः सम्मोहिन्यै नमः। इति शरपञ्चक देवताः। कर्पूर कनकसन्ध्यारागेन्द्रनीलमाञ्जिष्ठनिभाः सव्यकरकलित बाणाः। शेषकरकृतनमस्काराः सकलभूषाभूषिताङ्गाः

p. 193)

समादाः क्रमेणाभ्यर्च्य ऐं ह्रीं भगायै नमः। ३।

भगजिह्वायै नमः। ३। भगपिण्यै नमः। ३।

भगाक्ष्यै नमः। ३। भगाह्लादिन्यै नमः। इति भगादि देवताः। क्रमेणाभ्यर्च्य।

ब्रह्माद्यायथोपदिष्ट वर्णाम्बरायुधा भरणधरा द्वन्द्वशः समर्चयेत्। यथा। आक्षायी ब्रह्माण्यै नमः। ऐं ह्वीम्। ऐं क्षम् असिताङ्ग भैरवाय नमः। ई ला ई माहेश्वर्यै नमः। ऐं ह्वीम् इं लं रुरु भैरवाय नमः। ऊ हा ई कौमार्यै नमः। ऐं ह्वीं उं हं चण्डभैरवाय नमः। ॠ सा ई वैष्णव्ये नमः। ऐं ह्वीं ॠं सं क्रोधीशभैरवाय नमः। ॡ षा ई वाराह्यै नमः। उ ॡं षं उन्मत्तभैरवाय नमः। ऐ शा ई इन्द्राण्ये नमः। ऐं ह्वीं एं शं कपाल भैरवाय नमः। औ वा

ई चामुण्ड्यै नमः। ऐं ह्रीं ओं वं भीषण भैरवाय नमः। अः ला ई महालक्ष्म्यै नमः। ऐं ह्रीम् अं लं संहारभैरवाय नमः। ऐं हेतुकाय नमः। ऐं त्रिपुरान्तकाय नमः। ऐम् अग्निवेतालाय नमः। ऐम् अग्निजिह्वाय नमः। ऐं कालाय नमः। ऐं करालाय नमः। ऐम् एकपादाय नमः। ऐं भीमाय नमः। इत्यभ्यर्च्य। पीठस्योत्तरभागे वायव्यादीशानां गुरु पङ्क्तिमर्चयेत्। हेतुकादीशावरणयोर्मध्ये समन्त्रका गुरुपादुका पङ्क्तिः पूजनीया। ओं मों गुरुपादुकेभ्यो नमः।

p. 194)

ओं मिं पूज्य गुरुपादुकेभ्यो नमः। ओं मिं महागुरु पादुकेभ्यो नमः। ततस्वगुरुपङ्क्तिमर्चयेत्। इति गुप्तमुदाहृतम्। ततोष्टदलानां बहिर्पूर्वाद्यष्टदिक्षु। ऐं क्षाम् इन्द्राय वज्रहस्ताय सुराधिपतये स वाहन सपरिवाराय नमः। ऐं क्षाम् अग्नये तेजोधिपतशक्तिहस्ताय सवाहन स परिवाराय नमः। २। यमाय प्रेताधिपतये दण्डहस्ताय सवाहन सपरिवाराय नमः। २। नृ-ऋते रक्षोधिपतये खड्गहस्ताय सवाहन सपरिवाराय नमः। २। वरुणाय जलाधिपतये पाशहस्ताय सवाहन सपरिवाराय नमः। २। वायवे प्राणाधिपतये अङ्कुशहस्ताय सवाहन सपरिवाराय नमः। २। कुबेराय यक्षाधिपतये गदा हस्ताय सवाहन सपरिवाराय नमः। २। ईशानाय विद्याधिपतये शूलहस्ताय सवाहन परिवाराय नमः। इति संपूज्य। पुनः अग्नि नृ-ऋति वायव्येश दिक्षु। वां वीं वूं वं वटुकाय नमः। गां गीं ग्रं गं गणपतये नमः। दां दीं दूं दुं दुर्गायै नमः। क्षां क्षीं क्षूं क्षं क्षेत्रपालाय नमः। इति संपूज्य। बर्हिरैन्द्रयाम्य वारुण सोम्य दिक्षु अष्टवसुभ्यो नमः। एकादशरुद्रेभ्यो नमः। द्वादशादित्येभ्यो नमः।

p. 195)

सर्वेभ्यो भूतेभ्यो नमः। इति क्रमेणाभ्यर्च्य। ततः परमानन्दामृतसन्दोह निष्यन्दमान देहामखण्डसंवित् स्वरूपिणीं भजमानपारिजातलतिकां परमेश्वरीं गन्ध पुष्पादिभिरभ्यर्च्य। स परिवारां यथोपदेशं सन्तर्प्य नीराज्यस्तुत्वा नमस्कृत्यमात्मानं मत्वा सकलपरिवार देतागणं परदेवतामूर्तौ लीनं परिभाव्यतां च सकल भुवनोद्भूति परिभूतिं मूलभूतां निष्कल तेजोरूपां सम्भाव्य मुद्रयोपसंहारिण्यामण्डलस्थ कुसुमेनादायाघ्राय हृदयारविन्द स्थानं नीत्वा तन्मयमात्मानं परिभाव्य गन्धादिभिरभ्यर्च्य तदनुगृहीतप्रसादः षडङ्गं विन्यस्य स्वयममृतानन्दमयो भूत्वा जीवन्मुक्तो यथा सुखं विहरेदिति शिवम्।

॥ इत्यष्टमः पटलः ॥

एवमिहलोक परलोक सुखसाधनभूत परदेवता समाराधन कथनान्तरं होमविधानं वक्तुमुपक्रमते। अथाग्निकार्य मित्यादिना एककुण्डविधाने कुण्डलक्षणं नियमं चाह। पूजाग्रहस्येत्यादिना। अयमर्थः। वक्ष्यमाण दीक्षामण्डप मध्यस्थ वेदिकायाः पूर्वस्यां दिशि वा ईशानकोणे वा धनद भागे वा बुद्धिकोणं चतुरश्रात्मकमेकमेव कुण्डं कुर्यादिति। अथ दीक्षामण्डपलक्षणमाह। नवहस्तमात्रमित्यादिना।

p. 196)

अयमर्थः। ऐन्द्रवारुणयाम्यसौम्यं च नवहस्तपरिमितम्। परिवीतदृढावरणं चतुर्द्वारतोरणोप शोभितम्। धौताम्बरवितानदर्भमाला परिवृतमुज्वलितमण्डपं कुर्यादिति। उतशैलदोर्मितम्। शैलाः सप्तसंख्याताः सप्तहस्तपरिमिता वा। हृषीक करसम्मितम्। हृषीकाणीन्द्रियाणि तानि च पञ्च पञ्च हस्तपरितं वेत्यर्थः। पूजा वेदिकानिर्माण प्रमाणमाह। ततस्तस्य मध्य इत्यादिना तन्मण्डपमध्ये त्रिभागैकभागं वेदिकां कुर्यादिति। यथा मण्डपं प्राक्प्रत्यगग्रं सूत्र

चतुष्टयेनास्पाप्य दक्षिणोत्तराग्रं च तथैवास्पालयेत्। एवं कृते तत्तन्मण्डपं नवपदात्मं जायते। एषु मध्यपदं वेदिकामरत्निमात्रोन्नतान्त द्विगुणमाया विस्तारामादर्शतलवत्क्रममेणोन्नतां मुख प्रतिमा बिम्बा लोकनार्हामुज्वलितरामति रमणीयां कुर्यात्। अवशिष्टेषु पूर्वाद्यष्टदिक्पदेषु क्रमेण वेदाश्रमित्यादिना वक्ष्यमाण कुण्डानि कुर्यादित्यर्थः। वेदाश्रं चतुरश्रम्। योनिमश्वर्थ पत्राकारः। अर्धोन्धुपनिभम् अर्धचन्द्राकारम्। अनलाश्रम्। त्रिकोणम्। गजाश्रम्। अष्टाश्रम्। हरहय हरिदारभ्य प्राचीदिशमारभ्येत्यर्थः। अन्येत्वेवमाहुरिन्द्रेशान् द्दशोर्मध्ये वृत्तं वायव्ये पञ्चकोणम् ईशकोणे सप्तकोणम्। ञ्च कुर्यादिति।

p. 197)

कुण्डप्रस्तारप्रकारमाह। प्राक्सूत्रमित्यादि प्रथमं प्राक् प्रत्यगग्रं सूत्रमास्पाल्य तन्मध्ये मत्स्याङ्कितं कृत्वा तन्मानेन दिशोर्याम्योत्तरयोर्मत्स्य द्वयं विन्यसेत्। मत्स्योत्तरयोर्दक्षिणोत्तरं सूत्रमास्पालयेत्। तत् सूत्रयुगाग्राणि यथोक्तभ्यायेन वर्धयेत्। सूत्राण्यवष्टभ्य चतुर्षुकोणेषु मत्स्यं चतुष्कं विन्यसेत्। तन्मत्स्यादरेषु चतुर्षु दिक्षु सूत्र चतुष्कमास्फालयेत्। एवं कृते चतुष्पदोपेतं सम चतुरश्रमण्डलं जायते। एतच्चतुरश्रं कुण्डं पूर्वदिग्गतं भवति। एतदेव चतुरश्रं प्रतीत्यान्यानि कुण्डान्युद्धरेदित्याह। अत्र जनयेदन्या नीत्यादिना क्षेत्रे क्षिप्त्वेति प्रकृतचतुरश्रे आग्नेयमारुते नै-ऋतेशं च सूत्रद्यमास्फाल्य पुनस्तु चतुरश्रं पञ्चविधा विभज्य तेष्वेकोनेन मध्यसूत्रपाश्चात्य सूत्रस्य प्रागग्रं पूर्वदिग्गतदक्षिणोत्तरात् सूत्राद्बहिर्वर्धयेत्। ततः पश्चिमपदगतकोणसूत्रं चतुर्धा विभज्य तत्कोणाग्र प्रान्तमेकमेकमंशं परित्यज्यावशिष्टांश त्रयमानेन कोणमात्रमिन्दुशशिकलवद्भ्रामयेत्। उरकोणमपि तथैव कुर्यात्। ततो मद्धमकोणोत्तरसूत्राग्रद्वयमष्टभ्य मध्यप्राची सूत्राग्रपर्यन्तं कोणसूत्रवत् सूत्रद्वयमास्फालयेत्।

सू * कलान्यन्यानि परिमार्जयेत्।

p. 198)

एतदश्वत्थ पत्राकारं योनिकुण्डमग्निदिग्गतं परित्यज्य भागद्वयमिति यथोक्तमानेन चतुरश्रं कृत्वा तस्य दक्षिणोत्तर प्राची सूत्रयोर्मध्ये समान्तरालं प्राक् प्रत्यग्रं नवसूत्राण्यास्फालयेत्। एवं कृते प्राक्प्रत्यग्राण्येकादशसूत्राण्यास्फालितानि भवन्ति। चतुरश्रं च दशधा विभक्तं स्यात्तेषु दक्षिणोत्तरांशं परित्यज्य वशिष्ट नवसूत्रांशं दक्षिणोत्तरांष्टांश क्षेत्रमानेन उत्तर प्राचीसूत्रयोर्मध्यावष्टभ्य तत्प्राचीसूत्रप्रागग्र पश्चिमा * * * वर्जयेत्। पुनरपि तन्मानेनैव तत्सूत्रमध्यात्तत् प्रागग्रमारभ्य तत्सूत्रपश्चिमाग्रपर्यन्तं खण्डेन्दुवद्भ्रामयेत्। सूत्रखण्डान्यन्यानि परिमार्जयेत्। एतदर्धचन्द्राह्वयं कुण्डं दक्षिणदिग्गतं भवति। वासरेशार्धभागिति। प्रकृतं चतुरश्रक्षेत्रं षोडशाविभज्य तदंशद्वयस्यैकैकांशेन मध्यप्राचीसूत्राग्रं पूर्वदिग्गतदक्षिणोत्तरसूत्राद्बहिर्धयेत्। ततो मध्यादारभ्य तन्मानेन परितो वृत्तं भ्रामयेत्। सूत्रखण्डान्यन्यानि मार्जयेत्। एतद्वृत्तकुण्डं पश्चिमदिग् गतम्। भूपांश इत्यादि। प्रकृतं चतुरश्रमष्टधा विभज्य तदंशद्वयस्यैकांशेन मध्य प्राचीसूत्रस्य पागग्रं पश्चिमाग्रं च वर्धयेत्। ततो मध्यमादारभ्य तन्मानेन पार्श्वयोर्मत्स्य चतुष्कं जनयेत्। तत्र मत्स्योदरेषु परिमित षट्सूत्रपातेन षट्कोणात्मकं कुण्डं भवेत्।

p. 199)

तद्वायव्यदिग्गतम्। दशांशांशेत्रेति। प्रकृतं चतुरश्रक्षेत्रं दशधा विभज्यते। तेष्वेकेनां केन पूर्वोक्त वृत्तकुण्डाद्बहिर्वृत्त भ्रामयेत्। पुनरपि तेनैवमानेन तद्बहिर्वृत्तं भ्रामयेत्। कुण्डात्मकमध्यवृत्तेन कर्णिका द्वितीयवृत्तेन केसराणि तृतीयेन चतुर्दलाद्यष्टदलानि वा कुर्यादित्यर्थः। इदं पद्मकुण्डम्। कौबेर दिग्गतं भवति। क्षेत्रं क्षिपेत्वति। प्रकृतं चतुरक्षेत्रं

चतुर्विंशतिधा विभज्यष्वेकेनांशेन मध्यसूत्रप्रागग्रं पूर्वदिग्गत दक्षिणोत्तरसूत्राद्बहिर्वर्धयित्वा पुनस्तेनैवमानेन बहिरपि प्राकारचतुरश्रं कुर्यात्। पुनरपि प्रकृत चतुरश्रकार्धमानेन बाह्य चतुरश्रकोणाग्रमवष्टभ्य तद्भुजद्वयमभितो लाञ्छयेत्। एवमन्यान्यपि कोणानि लाञ्छयेत्। पुनश्चतुर्षु कोणेषु लाञ्छनद्वयानुबन्धि तिर्यसूत्रचतुष्टयमास्फालयेत्। दिक्ष्वपि चिह्नाचिह्नं सूत्राणि यथास्थितं वलयेत्। कोणानि सूत्रशकलानि च परिमार्जयेत्। एतदष्टाश्रं कुण्डं भवति। तदीश्वरदिग्गतम्। हयांशेत्रेति प्रकृतं चतुर * क्षेत्रं सप्तधा विभज्य तेष्वेकेनांशेन मध्यप्राची सूत्राग्रं पूर्वदिग्गतदिक्षिणोत्तर सूत्राद्बहिर्वर्धयित्वा पुनस्तेनैवमानेन परिवृतो वृत्तं भावयेत्। पुनरपि चतुरश्रं चतुर्धाविभज्य तेष्वप्येकमंशं

p. 200)

परित्यज्यावशिष्टं त्रयमानेन्तवृत्त लेखनम्। पञ्चधा तृतीयं प्रमीय तत्र पञ्च चिह्नानि कृत्वा चिह्नात् चिह्नं दीर्घाकाराणि पञ्चसूत्राण्यास्फालयेत्। सूत्रशकलान्यन्यानि परिमार्जयेत्। एतत् पञ्चकोणात्मककुण्डं वायुकोणगतम्। क्षेत्रव्यासे इति। प्र तं चतुरश्रक्षेत्रं दशधा विभज्य तेष्वेकेनांशेन मध्य प्राचीसूत्राग्रं पूर्वदिग्गतदक्षिणोत्तरसूत्राद्बहिर्वर्धयित्वा पुनस्तेनैव मानेन परितो वृत्तं भ्रामयेत्। पुनरपि चतुरश्रं चतुःषष्टिधा विभज्य तेष्वेकत्रिंशमंशं परित्यज्य अवशिष्टेश त्रयस्त्रिंशदंशेन वृत्तरेखां सप्तधा प्रमीय तत्र सप्त चिह्नानि कृत्वा चिह्नात्चिह्नं ऋजूनसप्तसूत्राण्यास्फालयेत्। सप्तकोणात्मकं कुण्डमीशदिग्गतमित्यर्थः। यावतामानेन कुण्डस्यायं विस्तारौ तावतामानेनखातमपि कुर्यात्। यदाकारं कुण्डं मेखलाश्च तदाकाराः कुर्यादित्याह। यावन्मानेनेत्यादि एककुण्डानां मेखलायोन्योः सामान्यलक्षणमाह। तिस्रः कुण्ड इत्यादि होतर्दिशेह इत्यन्तेन। मुष्टिमात्रमिति मुष्ट्यङ्गुलपरितमित्यर्थः। यद्वा मुष्टिरिति। तालद्वय स वाचकः। मुष्टिपरिमिते कुण्डे मेखलानामुत्सेधविस्तारयोर्लक्षणमाह। द्व्यङ्गुलैकांगुलार्धाङ्गुलेति। अरत्निमात्राद्यष्टहस्तां

p. 201)

तेषु कुण्डेषु मेखलानामुत्सेध विस्तारयोर्लक्षणमाह । रत्निमात्रे त्रता इत्यादि वसुहस्त इत्यन्तेन अरत्निपरिमितयोरपि द्व्यङ्गुलं त्र्यङ्गुलैकाङ्गुलेति हस्तपरिमिते युगार्वित्त नेत्राङ्गुल इति युगाङ्गुलं चतुरङ्गुलम् । अर्पित्ताङ्गुलमग्न्यङ्गुलम् । त्र्यङ्गुलमित्यर्थः । नेत्राङ्गुलद्व्यङ्गुल इति । हस्तद्वयपरिमिते । रसाम्भो * वन्यङ्गुलमिति । रसाङ्गुलं षडङ्गुलम् । षट् परिमितेदङ्कुशम्भ्यङ्गा इल इति । दशाङ्गुलम् । त्रभ्यङ्गुलम् । अष्टाङ्गुलम् । अङ्गाङ्गुलमित्यर्थः । वसुहस्ते अष्टहस्ते परिमिते । भास्करपङ्क्तिः । गजाङ्गुलमिति । भास्कराङ्गुलम् । द्वंदशाङ्गुलम् । पङ्क्त्यङ्गुलम् । दशाङ्गुलम् । गजाङ्गुलः अष्टाङ्गुल इत्यर्थः । कुण्डमध्ये नाभिनिर्माण प्रकारमाह । नामिहां * जवदिति । मुष्टिपरिमिते कुण्डनाभियोन्योरायाम विस्तारेत् सेति स लक्षणमाह । रसाम्भोधीत्यादिना षडङ्गुलीयतां चतुरङ्गुलविस्तारद्व्यङ्गुलोन्तामश्वत्थपत्रवत् क्रमसङ्कुचिता ग्रामेकाङ्गुलोष्टा कुण्डान्तनिविष्टाग्रामिव योनिं चतुरङ्गुलायामविस्ताराद्व्यङ्गुलोनन्तामष्टदलाम्बुजरूपां नाभिं च कुर्यादिर्थः । रत्न्यात्रिष्वपि कुण्डेषु नाभि योन्योर्लक्षणमेतदेवेति । इति दिशतियोन्या लक्षणमित्यादि । तदेव खलु मात्रस्येत्यतेन करद्वयादि

p. 202)

कुण्डानां योनिं नाभिं चोत्तरोत्तरमेकैकाङ्गुलेन वृद्धिमानेन कुर्यात् । योन्यष्टमपि प्रत्येकं यवद्वयमानेन वर्धयेत् । नाभि वृत्ताकारकुण्डानुरूपां वा कुर्यात् । योनिकुण्डे योनिः । पद्मकुण्डे पद्मं च न विहितेत्याह । एकैकेनाङ्गुलेत्यादिना विदध्यार्चनाभिमित्यन्तेन । अन्येत्वेकाहस्य परिमित कुण्डेनस्य योनिनिर्माणं यथा वर्णयन्ति । कुण्डस्यैक इत्यादि बोधिष्ठानरूपमित्यन्तेन । भूताद्व्यङ्गुलं भूतादि प्रकृतिः प्रत्यङ्गुलमष्टाङ्गुलमितिवात् । व्यास

आयामः। तत्र शसंख्यं षडङ्गुलम्। एकाद्यङ्गुलम्। बोधिष्ठापत्रानुरूपा। अश्वत्थ पत्राकाराम्। एतदुक्तं भवति। हस्तमात्रस्य कुण्डस्य योनिमष्टाङ्गुलायताम्। षडङ्गुलविस्तृताद्यङ्गुलोनन्तमश्वत्थ दलवत्क्रमसङ्कुचिताग्रं कुर्यादिति। पूर्वोक्तनाभेदनकर्णिका विभागमा * नेत्र भूताङ्गुलमित्यादि कुण्डन्त इत्यन्तेन। तां चतुरङ्गुलायामविस्ताराभि स्त्रिधा विभज्य मध्यांशेन कर्णिकामवशिष्टांश द्वयेनाष्टदलानि कुर्यादित्यर्थः। मुष्ट्यादि कुण्डाना * * म् करणमेकाङ्गुलमनेनेत्याह। कुण्डसेकरस्येति करद्यादि कुण्डानाग्नेमि करणमुत्तरोत्तरं प्रत्येकमध्याङ्गुलमनावृद्धेत्याह। विलोचनकरादारभ्येतित्यादि यथोक्तक्रमादित्यन्तेन किमङ्गुलिरिति।

p. 203)

स्वकराङ्गुले दीर्घतिर्यं मानयोरन्यतमेन। यद्वामानान्तरे नोच्यते। अङ्गुलिर्लक्षणभेदेन पञ्चधा भवति। मानाङ्गुलिर्मानान्तराङ्गुलिर्मात्रान्तराङ्गुलिर्मुष्टयङ्गुलिर्देह लब्धाङ्गुलिरिति। तथा चोक्तं श्रीपञ्चरात्रे तन्त्रे। वातायनपथं प्राप्य ये भान्तिरविश्मयः। तेषु सूक्ष्मा विसर्पन्तिरेणवः परमाणवः। तेष्टौ केशान्वयास्तेष्टौ लिक्षोयूकस्तदष्टकम्। तदष्टकं यवास्तेष्टं वङ्गुलिः समुदाहृता। तदुक्तमाङ्गुलिः सप्तयवासैव तु मध्यमा। षड्यवासाधमाप्रोक्तामानाङ्गुलं भवेत्। विस्यस्तैस्तिर्यगष्टाभिर्यवैर्मानान्तराङ्गुलम्। शालिभिर्वारि जान्यस्तै स्त्रिभिर्मानान्तरं भवेत्। आचार्यदक्षिणकरे मध्यमाङ्गुलिमध्यमे। पर्वणोनन्तरदीर्घमात्रान्तरमुदाहृतम्। विनाङ्गुष्ठेन शेषाभिर्मुषिरङ्गुलिभिः कृता। चतुर्धा विभजेदेकोमानोमुष्टयङ्गुलि स्मृता। आचार्यहस्त कनिष्ठिकाद्यैश्चतुर्भिरेवाङ्गुलीभिर्महर्षैर्मध्यमाङ्गुलेर्मध्यमपर्वभागे तिर्यक् विसर्पद्भिरिहैवमेयम्। यः कश्चित् कौतुकायामं विभज्य दशधा पुनः। एवं द्वादशया भागं कृत्वा तेष्वेकमङ्गुलम्। देहलब्धाङ्गुलं नामेति महामानाङ्गुलिरिति। परमाणुक्रमसिद्धमानाङ्गुलि वाचकः। प्रतिमोत्सेधनिर्माणे महामानाङ्गुलिमानो

p. 204)

प्रासादगोपुरादि निर्माणे मानाङ्गुलमानान्तराङ्गुले नैव नान्येन केनचित्। योगोपकरणानि स्त्रावादीनि मन्त्राङ्गुलेनैव कुण्डनिर्माणेमुष्टयङ्गुलेनैव प्रतिमां गोपाङ्गानिन केनचित्। योगोपकरणानि स्त्रावात्। तथा चोक्तं श्री पञ्चरात्रतन्त्रे। उच्छ्रायः। प्रतिमानास्यान्महामानाङ्गुलाश्रयः। प्रसादादींश्च तेनैव कुर्यान् मानान्तरेण वा। वेदिकापीठशिबिकारथादीना विधा पुनः। मानान्तराङ्गुलेनैव भवेनान्येन केनचित्। योयोपकरणानां च कुर्यान्मात्राङ्गुलेन वै। होमाङ्गानि स्त्रवादीनि कुण्डमुष्टयङ्गुलमाश्रयः। देहलब्धाङ्गुलेनैव प्रतिमाङ्गानि कल्पयेदिति। द्वादशाङ्गुलपरिमितस्तलः। तलद्वयं मुष्टिः। पञ्चविंशाङ्गुलोपत्ति। षड्विशाङ्गुलवर्तिः। सप्तविंशाङ्गुलो हस्तः। तेषामेवकुण्डादि शब्दानां पर्यायशब्देन नामादीनि पठ्यन्ते। निष्कुः प्रजापत्यं धनुर्मुष्टिर्धनुग्रहश्चेति। तथा चोक्तं श्री पञ्चरात्रतन्त्रे। चतुर्विंशाङ्गुलनिष्कुः पञ्चविंशः प्रजापतेः। षड्विंशतिर्धनुर्मुष्टिः सप्तविंशद्धनुग्रह इति। दीक्षानां नित्यनैमित्तिकयोः शान्तिकपौष्टिकयोरुत्सवादिषु च किष्कुविमानोत्सवे प्राजापत्यं वास्तुनिर्माणेन तु मुष्टिः। ग्रामादिस्थाने धनुग्रहः। अथवा सर्वेष्वपि कार्येषु किष्कुरेवाभिमत इति।

p. 205)

तथा श्री पञ्चरात्रतन्त्रे। या ते च शनये किष्कुं प्राजापत्यं विमानके। वास्तूनां तु धनुर्मुष्टिर्ग्रामादीनां धनुर्ग्रहः। कर्मणामपि सर्वेषां किष्कुरेवाथ वामत इति। कथमत्यन्तविलक्षयोः संवित् पञ्चरात्र तन्त्रयोः संवादकृतिरुच्यते। तयोः प्रतिपाद्य देवतायाः परस्परा भेदा सम्भवतात्तन्त्रभेदोऽपि नास्तीत्यव गच्छामः। भेदव्यवहारस्तु स्वसंहिता भेदवत् संज्ञिता मात्र भेदादुपपद्यत एव। पञ्चरात्रतन्त्रे पुरुषप्राधान्यं संवित् तन्त्रे

तत्प्राधान्यमित्येतावता भेदेन तन्त्रभेदोनाभ्युपगन्तुं युक्तुः। तथा चोक्तं श्रीपञ्चरात्रोपनिषदि। ओं भगवान् वासुदेवः। परा प्रकृतिञ्ज्यायसी विभूतित भूतय एव सस्वयं भवतीति। तथा च श्री पौष्कर संहितायाम्। या परा प्रकृतिर्मात्री वासुदेवाख्य लक्षणा। षाड्गुण्यविग्रहा सर्वशक्ति तत्वगुणान्विता। कोशभूतत्वमापन्ना स्वयमानन्दलक्षणेति। तथा च श्री सात्वत संहितायाम्। नादावसान गगने देवोनन्तः सनातनः। शान्तुः संवित् स्वरूपस्तु भक्तानुग्रहकाम्यया। शक्तिः साचात्मकामी या चेश्वरीत्यभिधीयत इति। तथा च वैरिं च नृसिंह व्यूह प्रकरणे। शक्तिर्या वैष्णवी माया वासुदेवात्मिकाव्यया। ये वै पराङ्मुखास्तस्यां संसारे संसन्तित इति।

p. 206)

तथा चेश्वरसंहितायां परां प्रकृतिं विद्धिवासुदेवाम्भिधांसुत। कोशभूतां तनुं तस्य शक्तिव्यूहस्य निष्कलामिति। तथा च जायाख्य संहितायाम्। तनिर्मुक्तदेहस्य केवलस्य चिदात्मनः। उदेति महदानन्दः सा शक्तिर्वैष्णवीपरा। अलुप्तकर्म कर्तारं जीवं कृत्वा तदात्मसात्। यन्त्रोदिता च तत्रैव पुनरेवाव तिष्ठते। तच्च सङ्कल्पनिर्मुक्तमवाच्यं विधिनारदेति। तथा च श्वेताश्वतरोपनिषदि। ते योगानुगता पश्यं देवताशक्तिं स्वगुणैर्निगृढामिति। यो योनिमधितिष्ठति। एत इति च। तथा ब्रह्माण्ये पुराणे। शक्तिः शक्तिमतो भेदाद्वासुदेव इतीरितः। शक्तिस्थिता शक्तिमानपि शाक्तिष्वपि किञ्च ब्रह्मादि पिपीलिकां तेषु मूलाधारमन्दिरे कुण्डलिनी शेष पर्यङ्के कामाख्य चिन्मय वैश्वानराग्न्यात्मा भगवान् वासुदेवः शेते। तथा च श्रीतिः। तस्यान्ते सुचिरं सूक्ष्ममित्यादि विश्वतो मुख इत्यन्तम्। तथा च श्री भगवद्गीतायाम्। अहं वैश्वानरो भूत्वा प्राणिना देहमाश्रितः। प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम्॥ इति। किञ्च। संविदुपासकानां फलत्वेन वैष्णवं परमं पदं दर्शयति। प्रपञ्चसारे। यां ज्ञात्वा सकलमपास्य कर्मबन्धेतद्विष्णोः

p. 207)

परमं पदं प्रयाति भूयः। तामेनां जगदिहजं तु जीवभूतां हृल्लेखां जपति च नित्यमर्चयीत। हृल्लेखां जपविधिमर्चनाविशेषादेतां स्तुतिमपि नित्यमादरेण। योभ्यस्येत् स्वखलु परां श्रियं च गत्वा शुद्धं तद्रज इति पदं परस्यधाम्नः। इति च। एवं श्रुतिस्मृतीतिहास पुराणागमानि अहमहमिकया प्रकृति पुरुषयोरैक्यमेव प्रतिपादयन्ति। तान्यत्र न लिख्यन्ते ग्रन्धविस्तारभयादित्यवगन्तव्यम्। शतार्द्धहोम इत्यारभ्यरन्धतायोनिरित्यन्तः सुबोधः।

॥ इति संप्रदायदीपिकायां नवमः पटलः॥

एवं कुण्डमण्डपविधानान्तरं स्थण्डिलविधानं होमविधानं च वक्तुमुपक्रमते। नित्यादिना। स परिस्तरां दहेन्मन्त्रीत्यन्तस्यायमर्थः। अथोक्त कर्म सिध्यर्थम्। पूर्वो कुण्डेष्वन्यतमे स्थण्डिले वा होममारभेत। यथा वेदिकायां पूर्वस्यां दिशि पञ्चविंशाङ्गुलायामतारमङ्गुष्ठपर्वोन्नतं वा सप्तविंशाङ्गुलायामतारं चतुरङ्गुलोन्नतं वा समचतुरश्रं स्थण्डिलं कृत्वा नखकेशलोष्टादीन् संशोध्य गोमयाम्बुना कुण्डमुपलिप्य स्थण्डिलं चेदमभ्युक्ष्य वायुबीजेन संशोष्याग्निबीजेन पावयित्वा तत्र हृन्मन्त्राख्य

p. 208)

वाग्भवेन नमोन्तेन बर्हिषाद्विगुणितेन दक्षिणादुत्तराग्रं पश्चिमादि पूर्वाग्रं रेखात्रयं विलिख्यतासु दक्षिणादुत्तरागेषु मध्यम पश्चिमपूर्व * * * तानां क्रमेण ब्रह्मयमसोमाः पश्चिमादि पूर्वाग्रेषु मध्यदक्षिणोत्तराणामीश श्रीशसुरेशाश्च देवता इति ध्यात्वा प्रोक्ष्य ततो दक्षिणभागे गन्धपुष्पाक्षतादीनि होमद्रव्याणि संस्थाप्य वामभागे दर्भान् संस्थाप्य तदुपरि

यथोक्तानि पात्राण्यधोमुखानि द्वन्द्वशो विन्यस्य पवित्रे कृत्वा प्रोक्षणी संस्कृत्य तत्
संस्पृश्यंमूलविद्यया त्रिवारमभिमन्त्र्य तत् सकलतीर्थमयं ध्यात्वा तेन दर्भमय कूर्चेन
दक्षिणभाग स्थितद्रव्यजातं पात्राणि च पूर्वोक्त ब्रह्ममन्त्रेण संप्रोक्ष्य कुण्डस्थण्डिलयोरन्यतम
मध्ये कुशगन्ध पुष्पाक्षतमय योग विष्टरं सङ्कल्प्य गन्धादिभिरभ्यर्च्यात्र नीलोत्पलदल
श्यामलाङ्गीमशेष लोकजननीं वागीश्वरी मृतु स्नातां सञ्चिन्त्येतद्योनौ भास्करकान्तभवं वा
आरणेयं वा श्रोत्र्यागारतो वा हुतवहमानीय पवित्री कृते पात्रे  वह्निबीजेन
निधायक्रव्यादांशत्वेन किञ्चिदङ्गारखण्डं परित्यज्यास्त्रेण संशोध्य कवचेनावकुण्ठ्यामृतबीजेन
धेनुमुद्रयामृती कृत्योत्थाप्य प्रादक्षिण्य क्रमेण स्थण्डिलं कुण्डं वा त्रिः परिभ्राम्य
स्वसम्मुखीकृत्य मूलमन्त्रेण निधाय प्रज्वाल्य

p. 209)

सुसंस्कृतेन घृतेन पूर्वोक्तहृन्मन्त्रेण गर्भाधान पुंसुवन सीमन्तोन्नयन जातकर्मणां प्रत्येकं
सप्तसप्ताहुतीर्हुत्वा गायत्र्युष्णिगनुष्टर्प बृहती पङ्क्ति तृष्टुर्प जगतीछन्दोमय
सप्तबाहुगार्हपत्याहवनीय दक्षिणाग्निमयं त्रिपादं यजमानपत्न्यात्मक द्विशीर्षमध्वर्युहोतृ
ब्रह्मोद्गात्रमय चतुरङ्गं शृङ्गम्। प्रातर्मध्याह्न सायाह्न सवनत्रयबद्ध शरीरं वेदलोकाधिक
पञ्चरात्र पाशुपत बौद्धार्हत समय पिङ्गषण्णयाम्। हव्यकव्यात्मकद्विनासम्। वदनत्रयेषु
ऋग्यजुः सामात्मकैर्मन्त्रैस्तोत्र शस्त्ररूपेण * धमानं ऋग्यजुः समाथर्वात्मक चतुश्रोत्रं
महान्तं दीप्यमान वपुषं साधकाभिमतकामवर्षकतया वृषभं तदाननयोर्दक्षिणास्येन हिरण्या
कनकारक्ता कृष्णा चेति च त * * मास्येन सुप्रभातिरक्ता बहुरूपिका चेति सप्तजिह्विका
दक्षिणगैश्चतुर्भुजैः शक्तिं वह्निं स्रुक् स्रुवौ वामकरैस्त्रिभिस्तोमरं तालवृन्तं घृतपूर्णं सौवर्णपात्रं
च दधानं प्रविलम्बितैकपादमितराभ्यां पादाभ्यां बद्धपद्मासनमरुण
कमलकर्णिकासमासीनमनेका कल्पमरुणवर्णं पशुपति पर्जन्यपावकरक्षो वरुणमरुतां

दिग्गलेषु क्रमेलभिरज्या कनका रक्ता कृष्णा सुप्रभातिरक्तोस्तपनीय वैडूर्य तरुण दिवाकरेन्दीवर पद्मराग सुवर्णवर्णादि शोर्याम्य सौम्ययोर्दलयोर्मध्ये

p. 210)

च यथोक्तवर्णा बहुरूपिका चेति सप्तजिह्वाभिरा वृत्तव्यावृतोत्तानवक्त्रं जातवेदसं ध्यात्वा अर्घ्यपाद्यादि धूपदीपान्तैरुपचारैरभ्यर्च्य ततः प्रागग्रैरुदगग्रैर्दर्भैरेकमेखले कुण्डे मेखलाधस्ताद्विमेखलेद्वयोर्मध्ये त्रिमेखले मध्यममेखलायां परिस्तीर्य यदि स्थण्डिले सिकतानां बाह्ये दक्षिणोत्तरपश्चिमभागेषु त्रीन् परिधीन् अग्नीशयोर्दिशोराघारबेन समिद्वयं च विन्यस्य परिषिच्य ततो वह्नेर्नामान्नप्राशन चौलोपनयन प्राजापत्याग्नेय वैष्वदेव सौम्यगोदान समावर्तन विवाहान्तानां संस्काराणां पूर्वोक्त हुन्मन्त्रेण प्रत्येकं सप्तसप्ता हुतीर्हुत्वा ततस्तन्मध्ये पूर्वोक्त पूजापीठं परिकल्प्यात्र यथोक्तरूपां सपरिवारामम्बिकां समावाह्याभ्यर्च्या शेषपरिवारं देवतानां प्रत्येकमेकाहुतिं हुत्वा मूलविद्यया दशाहुतीर्जुहुयादेवं स्वाहा प्रिये शक्तिमये सिद्धे तस्मिन्यथोक्तकार्याय यथोदितैर्द्रव्यैर्यथोक्त संख्यया हुत्वा गन्धादिभिरभ्यर्च्य स्तुत्वा नमस्कृत्य प्रसाद्यानन्तरं महाव्याहृतीर्जुहुयात्। यथा। भूरग्नये च महते च स्वाहा इत्यादि च तस्त्रः। आम् इतः पूर्णं प्राणबुद्धि देह धर्माधिकारतो जाग्रत् स्वप्न सुषुप्त्यवस्था सुमसना वाचा कर्मणा हस्ताभ्यां * * * मुदरेण शिश्नायत् स्मृतं यदुक्तं यत्कृतं सर्वं ब्रह्मार्पणं भवतु स्वाहेति

p. 211)

ब्रह्मार्पणमन्त्रेणाष्टाहुतीर्हुत्वा पूर्णाहुतिं हुत्वा परमेश्वरीं सपरिवारामुद्वास्य हृदयभवनं नीत्वा गन्धादिभिरात्मानमभ्यर्च्य कृतकृत्यमात्मानम्मत्वा यथा विभवं ब्राह्मणान् सन्तर्प्य स परिवारं हुतवहमुद्वासयेत्। नैमित्तिके होमे स परिधीन् परिस्तरां दहेत्। नित्यहोमेन दहेत्।

यत्र कामनाहोमविन्यस्तासु जुहुयादिति। विचकिलैन्नव मल्लिकाभिः शाड्वलपल्लवैर्दूर्वादलैराघारेण घृतेन सिद्धार्थैसितसर्षपैः हरिरिपू कुसुमैरक्तकरवीरकुसुमैः कासमर्दैपोरिः बु इति द्रव्य विडाः किं करातैः कुरण्डैः छगलां गजमांसलेशेन अजमांसलेशेन नग्नजितस्थि कार्पासबीजम्। नीलाम्भोजैर्नीलोत्पलैः सौगन्धिकैः कल्हारैः कङ्केलि कुसुमैरशोकपुष्पैस्पष्टमन्यत्।

॥ इति संप्रदायदीपिकायां दशमः पटलः॥

श्री तेजानन्दनाथसंविदाम्बा श्रीपादुकां पूजयामि।

तेजानन्दस्य शिष्येन कृष्णानन्दस्य सूरिणा। लिखितं संप्रदायस्य दीपिकाचाम्बिकाज्ञया॥

ऐं ह्रीं श्रीं पुरुषोत्तमानन्दाय नमः।

p. 212)

॥ शिवाय नमः॥

* * * * * * * * * * * * * * * * |

* * * * * * * * * * * * * * * स्युः

कोणयोनिषु। ब्रह्माणीमसिताङ्गेन माहेशीरुरुणा सह। कौमारीं चण्डसंज्ञेन क्रोधेन सह वैष्णवीम्। उन्मत्तेन च वाराहीमिन्द्राणीं च कपालिना। भीषणेनापि चामुण्डीं संहारेणापि

चण्डिकाम्। अम् असिताङ्गभैरवाय। आं ब्रह्माण्यै नमः। इत्यादि दलेषुभिर्यजेत्।
देहाश्चतुर्थ्यन्ते स नामभिः। आं ब्रह्माण्यै नमः। * * * * *
भैरवाय इत्यादि पुनरिन्द्रादिकां दिक्षु बहिर्वज्रादिकास्ततः। एवं परिवारान् स गन्धाक्षत कुंकु ?मामृता बिन्दुभिरभ्यर्च्य देवी मूर्तौ चतुश्चत्वारिंशम्मूलम * * * * * * * कृत्वा धूपदीपां दत्वा आरात्रिकं विधाय स घृतकदली नालिकेरो पदं शंसशर्करं च सुशृतम्। शाल्योदनं निवेद्यं समर्प्याग्निकार्यं कृत्वा। ओं ह्रीं सकृद्भ्यः सर्वभूतेभ्यो हुं स्वाहेति बलिं विकीर्यनत्वापानीयामृतं दत्वा निवेद्यं विसृज्य। ऐम् उच्छिष्टचाण्डालिमातङ्गि सर्ववशङ्करिणि स्वाहेति तस्यै दत्वा गण्डकुषादि दत्वा प्रसन्नपूजां विधाय ब्रह्मार्पणमात्मार्पणं च कृत्वा तीर्थं स्वीकृत्य स्तुत्वा नत्वा स्वयं तन्मयो भूत्वा लयाङ्गं

p. 213)

विधायात्मान्युद्वास्य प्राणप्रतिष्ठां कृत्वा स्वात्मनि देवी मूर्तौ चैकवारं पुष्पाञ्जलिं कृत्वा शङ्खमभ्यर्च्य निधायां गरिष्यादि पूर्वकं यथाकालं यथारुचि च मन्त्रं जप्त्वा योगान् कृत्वा देवतामयो भूयादिति शिवम्। परापरमयीमित्यत्र किं वा तत्परं रूपं देवा अपररूपं वा किमित्याकाङ्क्षायां परं रूपं तावदाह। शब्दानां जननीति। हेवायादिनि वाचं वागिन्द्रियं वादितुं शीलमस्या इति वाग्वादिनी तत्र सम्बोधनम्। तथा हेसरस्वति अत्र शब्दार्थात्मके भुवनेत्वं शब्दानां जननीति सद्भिरुच्य सेस परापश्यन्तादि क्रमेण पञ्चाशद्वर्णात्मना परिणतत्वात् सर्वेषां वेदादि लक्षणानां शब्दानां तन्मयत्वाच्च नैवं वयं ब्रूमः। किन्तु केशववासव प्रभृतयः। केशवप्रभृतयो वास प्रभृतयश्च प्रधानार्था अपित्वत्तं कल्पादावाविर्भवन्तिकं पुनरितरेर्याः। ध्रुवं निश्चितमेतत्। अर्थस्य शब्दविवर्तत्वाद्यदाहुः। अनादिनिधनं ब्रह्मशब्दशतसङ्ग्रहविस्तराभ्यां यथा शक्ति विमृश्यते। इह द्विविधं वृत्तं मातृवृत्तं वर्णवृत्तं चेति। तत्र चतसृभिश्च तसृभिर्मात्राभिः पञ्चगणा यत्र कल्प्यते। * *

भगवान्—

त्वयोक्तमुचितं देवि विधिप्रभृतिदेवताः ।
भ्रमन्ते संसृति प्राप्य कि पुनर्मनुजा भुवि ॥ ५२ ॥

त्वयाहं प्रार्थितो देवि पीयूषमुदधेर्यथा ।
सात्त्विकं भागमुद्धृत्य लोकस्य हितकाम्यया ॥ ५३ ॥

वदामि कमले तुभ्यं शृणु लोकहितंकरि ।
मन्मूर्तयः पञ्चविधा वदन्त्युपनिषत्सु च ॥ ५४ ॥

परव्यूहो हार्द इति विभवोऽर्चेति भेदतः ।
वैकुण्ठेऽस्मिन् परव्यूहो सदा पश्यन्ति सूरयः ॥ ५५ ॥

योगतत्त्वेन मुनयः सदा मां ध्यानगोचरम् ।
पश्यन्ति देवि हृन्मध्ये तस्मान्मां हार्द उच्यते ॥ ५६ ॥

अवतारेषु तत्काले पश्यन्तोऽपि जना भुवि ।
अवजानन्ति मुनयो जानन्ति ज्ञानिनो रमे ॥ ५७ ॥

* * *

## 3. The Principles of Yoga

श्रीः—

भगवन् योगतत्त्वाख्यं ज्ञानपूर्वं वदस्व मे ।

भगवान्—

सर्वे देवा महर्षयो मनुष्याः पशवस्तथा ॥ १ ॥

मन्मायया निबद्धास्ते तन्निकृन्तनमद्भुतम् ।
योगसारं प्रवक्ष्यामि ज्ञानतत्त्वसमन्वितम् ॥ २ ॥

जन्ममृत्युजराव्याधिनाशनं मृत्युतारकम् ।
नानामार्गैश्च दुष्प्रापं कैवल्यं परमं पदम् ॥ ३ ॥

अनिर्देश्यमगम्यं यत् सर्वगं सर्वसाक्षिमत् ।
निष्कलं निर्मलं शान्तं सर्वातीतं निरञ्जनम् ॥ ४ ॥

परं ब्रह्मेति यत्प्रोक्तं तद्योगैरेव गम्यते ।
जीवस्य गुणसङ्गेन कामक्रोधादयोऽरयः ॥ ५ ॥

बध्नन्ति नित्यदा मुक्तं पाशैः संसाररूपिभिः ।
तस्मात्पाशाद्विनिर्मुक्तेरुपायं कथयामि ते ॥ ६ ॥

योगहीनं कथं ज्ञानं मोक्षदं स्याद्वरानने ।
योगोऽपि ज्ञानहीनस्तु न क्षमः स्यात् प्रदर्शितुम् ॥ ७ ॥

तस्मान्मुमुक्षुर्ज्ञानेन धारयेद्योगमद्भुतम् ।
अज्ञानादेव संसारो ज्ञानादेव हि मुच्यते ॥ ८ ॥

ज्ञानप्रयोजनं कि तत् ज्ञेयवस्तुप्रदर्शनम् ।
सर्वाकारं निराकारं शुद्धस्फटिकसन्निभम् ॥ ९ ॥

चतुर्भुजं वासुदेव शङ्खचक्रगदाधरम् ।
आनन्दजलधिं शुद्धं निर्गुणं पीतवाससम् ॥ १० ॥

ब्रह्मादिसर्वदेवानामुत्पत्तेः कारणं परम् ।
किंचित् स्मितमुखं देवं पुण्डरीकायतेक्षणम् ॥ ११ ॥

गुरोर्मुखादधीतेन पथा योगेन मानवः ।
ध्यायन् भगवतो रूपं योग कुर्याद्विचक्षणः ॥ १२ ॥

एतज्ज्ञानमिति प्रोक्तं योगसारमथोच्यते ।
मन्त्रयोगो लयश्चैव तथा परिचयः स्मृतः

निष्पत्तिश्चेत्यवस्था च योगेषु परिकीर्तिताः ।
एतेषा लक्षण वक्ष्ये शृणुष्व कमलेक्षणे ॥ १४ ॥

मातृकादियुतं मन्त्र द्वादशाब्दं जपेच्छुचिः ।
क्रमेण लभते ज्ञानमणिमादिगुणान्वितम् ॥ १५ ॥

अल्पबुद्धिरिमं योग सेवते साधकाधमः ।
लययोगश्चित्तलयः कोटिशः परिकीर्तितः ॥ १६ ॥

गच्छंस्तिष्ठन् स्वपन् भुञ्जन् ध्यायन्निष्कलमीश्वरम् ।
स एव लययोगाख्यो हठयोगमतः शृणु ॥ १७ ॥

यमश्च नियमश्चोभावासनं प्राणसयमः ।
प्रत्याहारो धारणा च ध्यानं भ्रूमध्यमे हरेः ॥ १८ ॥

समाधिः समतावस्था साष्टाङ्गो योग उच्यते ।
महामुद्रा महाबन्धो महावेधश्च खेचरी ॥ १९ ॥

जालन्धरोड्डियाणश्च मूलबन्धस्तथैव च ।
दीर्घप्रणवसन्धानं सिद्धान्तश्रवणं तथा ॥ २० ॥

वज्रोली चामरोली च सहजोली त्रिधा मता ।
एतेषा लक्षण देवि प्रत्येकं शृणु तत्त्वतः ॥ २१ ॥

लघ्वाहारो यमेष्वेको मुख्यो भवति तत्त्वतः ।
अहिसा नियमेष्वेका मुख्या पद्मसमुद्भवे ॥ २२ ॥

सिद्धं पद्म तथा सिहं भद्रं चेति चतुष्टयम् ।
प्रथमाभ्यासकाले तु विघ्नः स्याद्बहुधा रमे ॥ २३ ॥

आलस्यं कत्थनं धूर्तगोष्ठीमन्त्रादिसाधनम् ।
धातुस्त्रीलौल्यकादीनि मृगतृष्णामयानि वै ॥ २४ ॥

ज्ञात्वा सुधीस्त्यजेत्सर्वान् विघ्नान् पुण्यप्रभावतः ।
प्राणायामं ततः कुर्वन् पद्मासनगत स्वयम् ॥ २५ ॥

सुशोभनं मठं कुर्यात् सूक्ष्मद्वारं तु निर्व्रणम् ।
सुष्ठु लिप्तं गोमयेन सुधया वा प्रयत्नतः ॥ २६ ॥

दिने दिने च समृष्टं संमार्जन्या विशेषत· ।
वासित च सुगन्धेन धूपितं गुग्गुलादिभिः ॥ २७ ॥

तत्रोपविश्य मेधावी पद्मासनमथास्थितः ।
ऋजुकाय· प्राञ्जलिश्च प्रणमेदिष्टदेवताम् ॥ २८ ॥

ततो दक्षिणहस्तस्य त्वङ्गुष्ठेनैव पिङ्गलाम् ।
निरुध्य पूरयेद्वायुमिडया तु शनैः शनैः ॥ २९ ॥

यथाशक्त्यनुरोधेन ततः कुर्याच्च कुम्भकम् ।
पुनस्त्यजेत् पिङ्गलया शनैरेव न वेगतः ॥ ३० ॥

पुनः पिङ्गलयापूर्य पूरयेदुदर शनैः ।
धारयित्वा यथाशक्ति रेचयेदिडया शनैः ॥ ३१ ।

यया त्यजेत्तयापूर्य धारयेदविरोधतः ।
जानू प्रदक्षिणीकृत्य न द्रुतं न विलम्बितम् ॥ ३२ ॥

अङ्गुलिस्फोटन कुर्यात् सा मात्रा परिकीर्तिता ।
इडया वायुमापूर्य शनैः षोडशमात्रया ॥ ३३ ॥

कुम्भयेत् पूरित पश्चाच्चतुःषष्ट्या तु मात्रया ।
रेचयेत् पिङ्गलानाडया द्वात्रिशन्मात्रया पुनः ॥ ३४ ॥

पुनः पिङ्गलयाऽऽपूर्य पूर्ववत्सुसमाहितः ।
प्रातर्मध्यन्दिने सायमर्धरात्रे च कुम्भकान् ॥ ३५ ॥

शनैरशीतिपर्यन्तं चतुर्वारं समभ्यसेत् ।
एवं मासत्रयाभ्यासान्नाडीशुद्धिर्भविष्यति ॥ ३६ ॥

यदा तु नाडीशुद्धिः स्यात् तदा चिह्नानि बाह्यतः ।
जायन्ते योगिनो देहे तानि वक्ष्याम्यशेषतः ॥ ३७ ॥

शरीरलघुता दीप्तिर्जाठराग्निविवर्धनम् ।
कृशत्वं च शरीरस्य तदा जायेत निश्चलम् ॥ ३८ ॥

योगविघ्नकराहारं वर्जयेद्योगिसत्तमः ।
लवणं सर्षपं चाम्लमुष्णं तीक्ष्णं च रूक्षकम् ॥ ३९ ॥

शाकजातं रामठादि वह्निस्त्रीपथसेवनम् ।
प्रातःस्नानोपवासादिकायक्लेशाश्च वर्जयेत् ॥ ४० ॥

अभ्यासकाले प्रथमं शस्तं क्षीराज्यभोजनम् ।
गोधूममुद्गशाल्यन्नं योगवृद्धिकरं विदुः ॥ ४१ ॥

ततः परं यथेष्टं तु शक्तः स्याद्वायुधारणे ।
यथेष्टधारणाद्वायोः सिध्येत् केवलकुम्भकम् ॥ ४२ ॥

केवले कुम्भके सिद्धे रेचपूरविवर्जिते ।
न तस्य दुर्लभ किंचित् त्रिषु लोकेषु विद्यते ॥ ४३ ॥

प्रस्वेदो जायते पूर्व मर्द तेन च कारयेत् ।
ततोऽतिधारणाद्वायोः क्रमेणैव शनैः शनैः ॥ ४४ ॥

कफो भवति देहस्य आसनस्थस्य योगिनः ।
ततोऽधिकतराभ्यासाद् दारुणात्स्वेद उद्भवेत् ॥ ४५ ॥

तदा च दार्दुरो भाव उत्प्लुत्योत्प्लुत्य गच्छति ।
पद्मासनस्थितो योगी तदा गच्छति भूतलम् ॥ ४६ ॥

ततोऽधिकतराभ्यासाद् भूमित्यागश्च जायते ।
पद्मासनस्थ एवासौ भूमिमुत्सृज्य वर्तते ॥ ४७ ॥

अतिमानुषचेष्टादि तदा सामर्थ्यमुद्भवेत् ।
न दर्शयेच्च सामर्थ्यं यदि कुर्यात्तपोव्ययः ॥ ४८ ॥

सुखं वा यदि वा दुःखं प्राप्तं न व्यथयेत्तदा ।
अल्पमूत्रपुरीषश्च स्वल्पनिद्रा च जायते ॥ ४९ ॥

कीलवो दूषिका लाला स्वेददुर्गन्धताननै ।
एतानि सर्वथा तस्य न जायन्ते ततः परम् ॥ ५० ॥

ततोऽधिकतराभ्यासाद् बलमुत्पद्यते बहु ।
येन भूचरसिद्धः स्याद् भूचराणां जले क्षमः ॥ ५१ ॥

व्याघ्रादिसिंहशरभान् बाहुभ्यां हन्ति योगवित् ।
अभ्यसेत् प्लुतमोंकारं तेन पापो विनश्यति ॥ ५२ ॥

सर्वविघ्नहरो मन्त्रः प्रणवः सर्वदोषहा ।
एवमभ्यासयोगेन घटावस्था समुद्भवेत् ॥ ५३ ॥

प्राणोऽपानो मनो बुद्धिर्जीवात्मपरमात्मनोः ।
अन्योन्यस्याविरोधेन घटते ज्ञानमद्भुतम् ॥ ५४ ॥

घटावस्थेति सा प्रोक्ता तच्चिह्नानि वदामि ते ।
पूर्वं यः कथितोऽभ्यासश्चतुर्थांशं परित्यजेत् ॥ ५५ ॥

दिवा वा यदि वा कुर्यात् सायं वा याममात्रकम् ।
एकवारं प्रतिदिनं कुर्यात् केवलकुम्भकम् ॥ ५६ ॥

इन्द्रियाणीन्द्रियार्थेभ्यो यत् प्रत्याहरणं स्फुटम् ।
योगी कुम्भकमास्थाय प्रत्याहारः स उच्यते ॥ ५७ ॥

यद्यत्पश्यति चक्षुर्भ्या तत्तदात्मेति भावयेत् ।
[यद्यच्छृणोति कर्णाभ्या तत्तदात्मेति भावयेत्] ॥ ५८ ॥

लभते नासया यद्यत्तत्तदात्मेति भावयेत् ।
जिह्वया यद्रसं ह्यत्ति तत्तदात्मेति भावयेत् ॥ ५९ ॥

त्वचा यद्यत् स्पृशेद्योगी तत्तदात्मेति भावयेत् ।
एवं भावयतस्तस्य सामर्थ्यमतिमानुषम् ॥ ६० ॥

दूरश्रुतिर्दूरदृष्टिः क्षणाद् दूरगतिस्तथा ।
वाक्सिद्धिः कामरूपत्वमदृश्यत्वं ततो भवेत् ॥ ६१ ॥

मलमूत्रविलेपेन लोहादेः स्वर्णता भवेत् ।
खे गतिस्तस्य जायेत पञ्चताभ्यासयोगतः ॥ ६२ ॥

तदा बुद्धिमता भाव्यं योगिनो योगसिद्धये ।
एते विघ्ना महासिद्धेर्न रमेत्तेषु बुद्धिमान् ॥ ६३ ॥

न दर्शयेत् स्वसामर्थ्यं यस्य कस्यापि योगिराट् ।
यथा मूढो यथा मूर्खो यथा बधिर एव च ॥ ६४ ॥

तथा वर्तेत लोकस्य स्वसामर्थ्यस्य गुप्तये ।
शिष्याश्च स्वस्वकार्येषु प्रार्थयन्ति न संशयः ॥ ६६ ॥

एव भवेद् घटावस्था संतताभ्यासयोगतः ।
अनभ्यासवतस्तस्य वृथा गोष्ठ्या न सिध्यति ॥ ६७ ॥

तस्मात् सर्वप्रयत्नेन योगमेव सदाभ्यसेत् ।
ततः परिचयावस्था जायतेऽभ्यासयोगतः ॥ ६८ ॥

वायुः परिचितो यत्नाद्धावयित्वा तु कुण्डलीम् ।
अग्निना च सुषुम्नायां प्रविशेदनिरोधतः ॥ ६९ ॥

वायुना सह चित्तं च प्रविशेच्च महापदम् ।
यस्य चित्तं स्वपवनः सुषुम्ना प्रविशेदिह ॥ ७० ॥

भूमिरापोऽनलो वायुराकाशं चेति पञ्चकम् ।
एषु पञ्चसु देहानां धारण पञ्चधोच्यते ॥ ७१ ॥

आ पादाज्जानुपर्यन्तं पृथिवीस्थानमुच्यते ।
पृथिवी चतुरश्रं च पीतवर्ण लवर्णकम् ॥ ७२ ॥

पार्थिवे वायुमारोप्य लकारेण समन्वितम् ।
ध्यायश्चतुर्मुखाकारं चतुर्वक्त्रं हिरण्मयम् ॥ ७३ ॥

धारयेत् पञ्च घटिकाः पृथिवीजयमाप्नुयात् ।
पृथिवीयोगतो मृत्युर्न भवेत्तस्य योगिनः ॥ ७४ ॥

आ जानोः पायुपर्यन्तमपां स्थानमुदाहृतम् ।
[आपोऽर्धचन्द्रं शुक्लं च वं बीज परिकीर्तितम् ॥ ७५ ॥]

वारुणे वायुमारोप्य वकारेण समन्वितम् ।
स्मरन्नारायण देवं चतुर्बाहुं किरीटिनम् ॥ ७६ ॥

नीलमेघनिभं शान्त पीतवाससमच्युतम् ।
धारयेत् पञ्च घटिकाः सर्वपापैः प्रमुच्यते ॥ ७७ ॥

ततो जलाद् भयं नास्ति जले मृत्युर्न विद्यते ।
आ पायोर्हृदयान्तं च वह्निस्थानं प्रकीर्तितम् ॥ ७८ ॥

वह्निस्त्रिकोणं रक्तं च रेफाक्षरसमन्वितम् ।
सङ्कर्षणं चतुर्बाहुं बलज्ञानगुणान्वितम् ॥ ७९ ॥

शङ्खचक्रगदापाणिं सुप्रसन्नमनुस्मरन् ।
धारयेत् पञ्च घटिकाः वह्निनासौ न दह्यते ॥ ८० ॥

तन्मण्डलं प्रविष्टस्य नाग्निर्दहति वै तनुम् ।
हृदयादाभ्रुवोर्मध्यं वायुस्थानं प्रकीर्तितम् ॥ ८१ ॥

वायुः षट्कोणकं कृष्णं यकाराक्षरभासुरम् ।
वायोः स्थाने ब्रह्मरूपमनिरुद्ध चतुर्भुजम् ॥ ८२ ॥

धारयेत् पञ्च घटिका वायुवद् व्योमगो भवेत् ।
वायोर्भयं तथा मृत्युर्न भवेद्योगिनो रमे ॥ ८३ ॥

आ भ्रूमध्यात्तु मूर्धान्तमाकाशस्थानमुच्यते ।
व्योमवृत्तं च धूम्रं च हकाराक्षरदीप्तिमत् ॥ ८४ ॥

आकाशे वायुमारोप्य वासुदेव चतुर्भुजम् ।
शुद्धस्फटिकसंकाशं शङ्खचक्रगदाधरम् ॥ ८५ ॥

रमापति चतुर्बाहु षाड्गुण्यपरिकर्मित् ।
आकाशे धारणात्तस्य खेचरत्व भवेद् ध्रुवम् ॥ ८६ ॥

यत्र कुत्र स्थितो वापि सुखमत्यन्तमश्नुते ।
एवं च धारणाः पञ्च कुर्याद्योगी विचक्षणः ॥ ८७ ॥

ततो दृढशरीरः स्यान्मृत्युस्तस्य न विद्यते ।
ब्रह्मणः प्रलये चापि न नश्यति स योगिराट् ॥ ८८ ॥

समभ्यसेद् तथा योगं घटिकाः षष्टिमेव च ।
वायुं निरुध्य चाकाशे देवतामिष्टदामिति ॥ ८९ ॥

एवं प्रतिदिनं कुर्वन् कामक्रोधविवर्जितः ।
भगवन्त वासुदेवं तोषयेद् योगिसत्तमः ॥ ९० ॥

अभिकाङ्क्षति देवादिशरीरं सुखलिप्सया ।
तच्छरीरमवाप्नोति तत्र तत्रापि मोदते ॥ ९१ ॥

अणिमादिगुणेच्छा चेत् स्मरणेनैव जायते ।
एवं बहुविधा योगा योगिनश्चेष्टासाधनम् ॥ ९२ ॥

योगे प्रवर्तमानस्य शरीरक्लेशसंभवाः ।
बुद्धिक्लेशश्च बहुधा जायते नात्र संशयः ॥ ९३ ॥

मोक्षं यदा प्रार्थयते तदा मां मनसा स्मरन् ।
मूर्ध्न्याधायात्मनः प्राणमास्थितो योगधारणाम् ॥ ९४ ॥

ब्रह्मरन्ध्रेण विसृजेत् तीर्त्वा च विरजा नदीम् ।
मल्लोकं समनुप्राप्य मद्रूपं प्रतिपद्यते ॥ ९५ ॥

सूरिभिः सह मोदेत नित्यं मद्दर्शनाद् बुधः ।

* * *

# योगशिखोपनिषत्

सह नाववतु- इति शान्तिः

## प्रथमोध्यायः

### मुक्तिमार्गजिज्ञासा

सर्वे जीवाः सुखैर्दुःखैर्मायाजालेन वेष्टिताः ।

तेषां मुक्तिः कथं देव कृपया वद शंकर ॥ १ ॥

सर्वसिद्धिकरं मार्गं मायाजालनिकृन्तनम् ।

जन्ममृत्युजराव्याधिनाशनं सुखदं वद ॥ २ ॥

इति ॥

विवरणम्

योगज्ञाने यत्पदाप्तिसाधनत्वेन विश्रुते ।
तत् त्रैपदं ब्रह्मतत्त्वं स्वमात्रमवशिष्यते ॥

इह खलु कृष्णयजुर्वेदप्रविभक्तेयं योगशिखोपनिषत्
ससाधनज्ञानयोगसर्वस्वप्रकटनव्यग्रा ब्रह्ममात्रविश्रान्ता
विजयते । अस्याः स्वल्पग्रन्थतो विवरणमारभ्यते । शिष्याचार्यभावं-
गतचतुराननमहेश्वरप्रश्नप्रतिवचनरूपाख्यायिका तु
विद्यास्तुत्यर्था । आदौ आख्यायिकामवतारयति- सर्व इति ॥ १ ॥ किं
तदित्यत्र- सर्वेति ॥ २ ॥

पृ। ३९१)

मुक्तिमार्गस्य दुर्लभत्वम्

हिरण्यगर्भः पप्रच्छ स होवाच महेश्वरः ।

नानामार्गैस्तु दुष्प्रापं कैवल्यं परमं पदम् ॥ ३ ॥

सिद्धिमार्गेण लभते नान्यथा पद्मसंभव ।

लोकोपकार्थं महेश्वरं प्रति हिरण्यगर्भः पप्रच्छ ।
तत्प्रश्नमङ्गीकृत्य स होवाच । किं तदुवाचेत्यत्र वक्ष्यमाणार्थं
प्रकाशयन् स्तौति- नानेति । निर्विशेषज्ञानैकगम्यत्वात् ॥ ३ ॥ नान्यः
पन्थाः अयनाय विद्यते इति श्रुतिसिद्धसिद्धिमार्गेण ।
कैवल्यसिद्धिप्रदोयं मार्गो निर्विशेषब्रह्ममात्रज्ञानरूपः तेनैव
कैवल्यं लभते नान्यथेत्यर्थः ॥

ब्रह्म केवलशास्त्रागम्यम्

पतिताः शास्त्रजालेषु प्रज्ञया तेन मोहिताः ॥ ४ ॥

स्वात्मप्रकाशरूपं तत् किं शास्त्रेण प्रकाश्यते ।
निष्कलं निर्मलं शान्तं सर्वातीतं निरामयम् ॥ ५ ॥

तदेव जीवरूपेण पुण्यपापफलैर्वृतम् ।

परमात्मपदं नित्यं तत् कथं जीवतां गतम् ॥ ६ ॥

तत्त्वातीतं महादेव प्रसादात् कथयेश्वर ।

उन्मार्गगामिन आभासज्ञानिनो विडम्बयति- पतिता इति ।
ब्रह्मचर्यगुरुकुलवाससाधनचतुष्टयादिकं विस्मृत्य तन्त्रत्रयं
मयाधीतं नाधीतं तुर्यतन्त्रकम् इत्यादिस्वरूपदर्शनसिद्धाञ्ज-
नोक्तरीत्या पतिताः ॥ ४ ॥ शास्त्रेण ब्रह्म प्रकाश्यते इत्यत स्वात्मेति
ब्रह्मणो व्याविद्धपदवाक्यार्थत्वेन स्वयं प्रकाशरूपत्वात्
येनार्थवन्ति तं किं तु विज्ञातारं प्रकाशयेत् ।

पृ। ३९२) स्वात्मप्रकाशरूपं ब्रह्म कीदृशम् इत्यत्र-
निष्कलमिति । प्राणादिनामान्तषोडशकलापह्नवसिद्धं ब्रह्म
निष्प्रतियोगिकनिष्कलं ब्रह्ममात्रमित्यर्थः ॥ ५ ॥ निष्कलस्य
ब्रह्ममात्रत्वे जीवजातं तद्भिन्नमित्यत आह- तदेवेति । यत्
स्वज्ञदृष्ट्या स्वमात्रम् अवशिष्टं स्वाज्ञदृष्ट्या तदेव । कथं
पुनः ब्रह्म जीवत्वं भजतीत्याक्षिपति- परमात्मेति ॥ ६ ॥ तत्
कीदृशम् ? तत्त्वातीतम् ॥

ब्रह्मणो जीवभावः

सर्वभावपदातीतं ज्ञानरूपं निरञ्जनम् ॥ ७ ॥

वायुवत् स्फुरितं स्वस्मिंस्तत्राहंकृतिरुत्थिता ।
पञ्चात्मकमभूत् पिण्डं धातुबद्धं गुणात्मकम् ॥ ८ ॥

सुखदुःखैः समायुक्तं जीवभावनया कुरु ।
तेन जीवाभिधा प्रोक्ता विशुद्धे परमात्मनि ॥ ९ ॥

प्रश्नोत्तरं भगवानाह- सर्वेति ॥ ७ ॥ तदेव स्वाज्ञदृष्ट्या
व्योम्नि वायुवत् इति । तत्सकाशात् पञ्चात्मकमभूत् पिण्डम् ।
यन्निष्प्रतियोगिकस्वमात्रमवशिष्टं तदेव स्वज्ञादिदृष्ट्या किंचित्
स्फुरितं सत् साक्षिभावं भजति । त्रिपाद्भूतिरेव नित्यभूतितया चकास्ति ।
नित्यभूतिरेव पूर्णाहंभावमेत्य लीलाभूतिः भवति । लीलाभूतिरपि
परिच्छिन्नपिण्डाभिमानात् मोहभूतिः । सापि पिण्डादिरूपेण
जडभूतिरपि भवतीत्यर्थः ॥ ८-९ ॥

कामादिदोषविमुक्तजीवस्य शिवत्वम्

कामक्रोधभयं चापि मोहलोभमथो रजः।
जन्म मृत्युश्च कार्पण्यं शोकस्तन्द्रा क्षुधा तृषा॥ १०॥

प्।३९३) तृष्णा लज्जा भयं दुःखं विषादो हर्ष एव च।
एभिर्दोषैर्विनिर्मुक्तः स जीवः शिव उच्यते॥ ११॥

त्रिपादेव परिच्छिन्नपिण्डाभिमानात् मोहभूतित्वं भजतीत्युक्तं पुनर्मोहभूतेः लीलादिभूतित्वं कथमित्यत्र त्रिपादस्मीति प्रबोधतः पिण्डाद्यभिमतिमूलकामादिवृत्तित्यागसम-कालं त्रिपाद्भूतिरेव भवतीत्याह- कामेति॥ १०॥ कामादिवृत्तिपरिग्रह एष दोषः, त्रिपाद्भूतेः मोहभूतिप्रापकत्वात्॥ ११॥

ज्ञानयोगाभ्यां दोषविनाशः

तस्माद्दोषविनाशार्थमुपायं कथयामि ते।
ज्ञानं केचिद्वदन्त्यत्र केवलं तन्न सिद्धये॥ १२॥

योगहीनं कथं ज्ञानं मोक्षदं भवतीह भो।

योगोपि ज्ञानहीनस्तु न क्षमो मोक्षकर्मणि ॥ १३ ॥

तस्माज्ज्ञानं च योगं च मुमुक्षुर्दृढमभ्यसेत् ।

यस्मादेवं कामादिवृत्तिसङ्गादनर्थो जातः तस्मात् ।
मोहभूतेस्त्रिपाद्भूतित्वप्रापकोपायः कः इत्यत्र पश्यतेहापि
सन्मात्रमसदन्यत् ब्रह्मव्यतिरिक्तं न किंचिदस्ति,
ब्रह्ममात्रमसन्न हि,
इत्यादिश्रुतिसिद्धस्वातिरिक्तासत्प्रपञ्चापह्नवज्ञानप्रादुर्भूत-
निष्प्रतियोगिकब्रह्ममात्रज्ञानसमकालं
त्रैपदब्रह्ममात्रावस्थानलक्षणविकलेबरकैवल्य स्यादित्यत्र न
विवादः, स्वाज्ञानप्रभवजीवत्वादेः स्वज्ञानवधिकत्वात्
तज्ज्ञानस्य चरमजन्माश्रयत्वात् । तद्विना सविशेषाभासज्ञानं
केचिदिति ॥ १२-१३ ॥
यथोक्तसाधनविकलबद्धचित्ताश्रिताभाससविशेष-ज्ञानस्य
स्वफलसाधनानीशत्वात् विविधफल्गुसिद्धिप्रापकाभास-योगस्यापि
मुख्ययोगफलप्रापणानीशत्वाच्च यस्मादेतावाभासज्ञानयोगौ
प्रतिस्विकेन स्वफलसाधनानीशौ

पृ। ३९४) भवतः तस्मात् ज्ञानयोगौ समुच्चित्य मुमुक्षुः दृढमभ्यसेत्। तेनाभासज्ञानयोगौ स्वगताभासतां विहाय निष्प्रतियोगिकनिर्विशेषब्रह्ममात्रज्ञानपर्यवसन्नौ भवतः। तथा च श्रुतिः शाम्यति ह्यस्त्रमस्त्रेण मलेन क्षाल्यते मलम् इत्यादि। तत्र योगाभासस्तु आभासज्ञानगताभासत्वं निर्मूल्य निर्विशेषज्ञानपर्यवसन्नो भवति॥

ज्ञानस्वरूपं तत्फलं च

ज्ञानस्वरूपमेवादौ ज्ञेयं ज्ञानैकसाधनम्॥ १४॥

अज्ञानं कीदृशं चेति प्रविचार्यं मुमुक्षुणा।
ज्ञातं येन निजं रूपं कैवल्यं परमं पदम्॥ १५॥

असौ दोषैर्विनिर्मुक्तः कामक्रोधभयादिभिः।
सर्वदोषैर्वृतो जीवः कथं ज्ञानेन मुच्यते॥ १६॥

स्वात्मरूपं यथा ज्ञानं पूर्णं तद्व्यापकं तथा।
कामक्रोधादिदोषाणां स्वरूपान्नास्ति भिन्नता॥ १७॥

पश्चात् तस्य विधिः किं नु निषेधोपि कथं भवेत्।
विवेकी सर्वदा मुक्तः संसारभ्रमवर्जितः॥ १८॥

परिपूर्णस्वरूपं तत् सत्यं कमलसंभव।
सकलं निष्कलं चैव पूर्णत्वाच्च तदेव हि॥ १९॥

यत एवमतो निर्विशेषज्ञानं स्वफलसाधनसमर्थं स्यादेवेति मनसि निधाय मुमुक्षुभिः ज्ञानाज्ञानेयत्ता ज्ञातव्येत्याह- ज्ञानेति॥ १४॥ तत्र निर्विशेषज्ञानस्वरूपमाह- ज्ञातमिति। तदेव यथोक्तज्ञानमित्यर्थः॥ १५॥ य एवं

पृ। ३९५) ज्ञानी सोयम् असौ कृतकृत्यो भवतीत्यर्थः। पुनराभासज्ञा-नाभिप्रायेणाक्षिपति। किमिति ? कामक्रोधादिसर्वदोषैरिति। कामक्रोधा-दयो दोषाः स्वाज्ञानविजृम्भिताः॥ १६॥ सर्वदोषग्रासस्वज्ञाने वा तदेकसिद्धे स्वात्मनि सोडासंभवं प्रकटयन् परिहरति- स्वात्मेति। यथा स्वात्मरूपं सर्वपरिपूर्णं व्याप्यसत्त्वे व्यापकमपि भवति तथा तद्गोचरज्ञानस्य तन्मात्रपर्यवसन्नत्वान्न तत् भिद्यते। स्वात्मातिरेकेण

ज्ञानाभावेपि कामादिदोषाः तद्भिन्ना भवेयुरित्यत आह- कामेति ।
न हि निष्प्रतियोगिकब्रह्ममात्रे कामादिदोषपूगः स्यान्न वेति स्मृतिर्वा
कथं सेद्धुं पारयति ब्रह्ममात्रगतनिष्प्रतियोगिकतायाः
स्वातिरिक्तमस्ति नास्तीति गन्धासहत्वात् ॥ १७ ॥ एवं ज्ञानी कृतकृत्यो
भवतीत्याह- विवेकीति ॥ १८ ॥ तस्यैव ब्रह्मत्वमाह- परिपूर्णेति ।
संसारिकभ्रमविरलब्रह्मविदो ब्रह्मत्वात् यत् सत्यमिति ख्यातं तदेव
स्वाज्ञादिदृष्ट्या सकलादिभावं भजतीत्याह- सकलमिति ॥ १९ ॥

आभासज्ञान्यज्ञानिनोरविशेषः

कलिना स्फूर्तिरूपेण संसारभ्रमतां गतम् ।
निष्कलं निर्मलं साक्षात् सकलं गगनोपमम् ॥ २० ॥

उत्पत्तिस्थितिसंहारस्फूर्तिज्ञानविवर्जितम् ।
एतद्रूपं समायातः स कथं मोहसागरे ॥ २१ ॥

निमज्जति महाबाहो त्यक्त्वा विद्यां पुनःपुनः ।
सुखदुःखादिमोहेषु यथा संसारिणां स्थितिः ॥ २२ ॥

तथा ज्ञानी यदा तिष्ठेद्वासनावासितस्तदा ।

तयोर्नास्ति विशेषोत्र समा संसारभावना ॥ २३ ॥

ज्ञानं चेदीदृशं ज्ञातमज्ञानं कीदृशं पुनः ।

प्। ३९६) अप्रकाशकल्यन्तःकरणयोगात् संसारित्वं भजतीवेत्याह- कलिनेति । वस्तुतस्तु निष्कलम् ॥ २० ॥ यन्निष्कलमित्यादिविशेषणविशिष्टमेतद्रूपं चित्तशुद्धिसाधनचतुष्टयसंपत्त्यभावेपि येन केनोपायेन समायातो यदि ज्ञानी तदा कृतकृत्यो भवेत्, स कथं स्वात्तज्ञानं विहाय स्वाज्ञवन्मोहसागरे निमज्जतीति प्रश्नोत्तरं भगवानाह- सुखेति ॥ २१-२२ ॥ तथा अयमाभासज्ञानी । स्वाज्ञानेनास्यापि समा ॥ २३ ॥ आभासज्ञानिनः ज्ञानम् । आभासज्ञानाज्ञानयोरविरोधादेकार्थपर्यवसायित्वं युज्यते इत्यर्थः ।

आभासज्ञानिनो योगेन विना न मोक्षसिद्धिः

ज्ञाननिष्ठोविरक्तोपि धर्मज्ञोविजितेन्द्रियः ॥ २४ ॥

विना देहेपि योगेन न मोक्षं लभते विधे।
अपक्वाः परिपक्वाश्च देहिनो द्विविधाः स्मृताः॥ २५॥

अपक्वा योगहीनास्तु पक्वा योगेन देहिनः।
सर्वो योगाग्निना देहो ह्यजडः शोकवर्जितः॥ २६॥

जडस्तु पार्थिवो ज्ञेयो ह्यपक्वो दुःखदो भवेत्।

तस्य योगं विना अकिंचित्करतामाह- ज्ञानेति।
स्वारोपितज्ञाननिष्ठः। शास्त्रतो धर्मज्ञः। स्वयं अविजितेन्द्रियः॥ २४
॥ अयमाभासज्ञानी योगेन विना स्वात्तज्ञानगताभासमलं संक्षाल्य
शुद्धं ज्ञानं प्राप्य तत्समकालं न कदापि मोक्षं लभते,
योगोदकस्य चित्तमलशोधकत्वात्। नह्यशुद्धचित्तासादितज्ञानं
कार्यकारि भवतीत्यर्थः। आभासपारमार्थिकभेदेन ज्ञानिनौ
द्विविधावित्याह- अपक्व इति॥ २५॥ केवलाभासज्ञानिनः अपक्वाः
अशुद्धान्तरत्वात्। योगेन पक्वाः पारमार्थिकज्ञानिनः इत्यर्थः।
शुद्धाशुद्धज्ञानिनोरधिष्ठितदेहादेः जडाजडतामाह- सर्व इति
। ज्ञानाग्निदग्धकल्मषत्वात् ज्ञानिदेहादेरजडत्वं युज्यते इत्यत्र
यथैव मृन्मयः कुम्भः तद्वद्देहोपि चिन्मयः इति श्रुतेः॥ २६॥

प्। ३९७)

आभासज्ञानिनां दुःखानिवृत्तिः

ध्यानस्थोसौ तथाप्येवमिन्द्रियैर्विवशो भवेत्॥ २७ ॥

तानि गाढं नियम्यापि तथाप्यन्यैः प्रबाध्यते।
शीतोष्णसुखदुःखाद्यैर्व्याधिभिर्मानसैस्तथा ॥ २८ ॥

अन्यैर्नानाविधैर्जीवैः शास्त्राग्निजलमारुतैः।
शरीरं पीड्यते तैस्तैश्चित्तं संक्षुभ्यते ततः॥ २९॥

तथा प्राणविपत्तौ तु क्षोभमायाति मारुतः।
ततो दुःखशतैर्व्याप्तं चित्तं क्षुब्धं भवेन्नृणाम्॥ ३० ॥

देहावसानसमये चित्ते यद्यद्विभावयेत्।
तत्तदेव भवेज्जीव इत्येवं जन्मकारणम्॥ ३१ ॥

देहान्ते किं भवेज्जन्म तन्न जानन्ति मानवाः ।

तस्माज्ज्ञानं च वैराग्यं जीवस्य केवलं श्रमः ॥ ३२ ॥

पिपीलिका यथा[दा?] लग्ना देहे ध्यानाद्विमुच्यते ।

असौ किं वृश्चिकैर्दष्टो देहान्ते वा कथं सुखी ॥ ३३ ॥

तस्मान्मूढा न जानन्ति मिथ्यातर्केण वेष्टिताः ।

यद्याभासज्ञानी शुद्धज्ञानिवत् ध्यानस्थः । विवशो भवेत् ब्रह्मातिरेकेण इन्द्रियादिकं नास्तीत्यसमाहितकरणग्रामत्वात् ॥ २७ ॥ यथाबलं तानि ॥ २८-२९ ॥ नराणां निर्विशेषब्रह्मज्ञानीतराणाम् ॥ ३०-३१ ॥ यस्मादाभासज्ञानिनः एवं न विदुः तस्मात् आभासज्ञानम् । निर्विशेषज्ञानिनोप्येवं न विदुरिति चेत्, सत्यं ब्रह्मातिरेकेण देहः तदवसानसमयो वा अस्ति चेत् जानन्ति, निर्विशेषब्रह्ममात्रावगतेः देहाद्युपलक्षिताविद्यापदतत्कार्यजातमस्ति

प्। ३९८) नास्तीति विभ्रमापह्नवपूर्वकत्वात् । तस्मादाभासज्ञानी अत्र विषयो भवतीति मन्तव्यम् । ज्ञानियोगिशब्देन मुख्यज्ञानियोगिनौ गृहीतौ चेत् मूलश्रुत्यनुरूपं भवेदिति चेन्न

मूलश्रुतेरप्याभासज्ञान्यादिविषयतात्पर्यत्वात्, चतुर्थाध्याये शुद्धज्ञानिसमाचारस्य स्फुटीकृतत्वाच्च। न हि कदापि श्रुतिर्विरुद्धार्थं वदति तस्मादाभासपारमार्थिकज्ञानिनौ मिथोविविक्तं श्रुतिरनुवदतीति वक्तुं युक्तमित्यर्थः॥ ३२॥ आभासज्ञानी अस्मिन् प्रकरणे विशेषितव्यः इति स एव विशेष्यते- पिपीलिकेति॥ ३३॥ यस्मादेवं ब्रह्मातिरेकेण स्वदेहध्यानतद्विरोधादिकमस्तीति भ्रान्तिः तस्मात्॥

अहंभाव एव सर्वानर्थमूलम्

अहंकृतिर्यदा यस्य नष्टा भवति तस्य वै॥ ३४॥

देहस्त्वपि भवेन्नष्टो व्याधयश्चास्य किं पुनः।
जलाग्निशस्त्रखातादिबाधा कस्य भविष्यति॥ ३५॥

यदा यदा परिक्षीणा पुष्टा चाहंकृतिर्भवेत्।
तमनेनास्य नश्यन्ति प्रवर्तन्ते रुगादयः॥ ३६॥

कारणेन विना कार्यं न कदाचन विद्यते।

अहंकारं विना तद्वद्देहे दुःखं कथं भवेत्॥ ३७॥

स्वाज्ञविकल्पितदेहादौ अहंकृतिः॥ ३४॥ ज्ञानिनो विदेहत्वात्
यद्यपि स्वाज्ञदृष्ट्या देहोस्तु शस्त्रखातादिः तस्यैवास्तु ज्ञानिनो न
काचित् क्षतिरस्तीत्यर्थः॥ ३५॥ यदि पुनरस्य देहादावहंभावः उदेति तदा
स्वाज्ञवत् सर्वानर्थो भवतीत्याह- यदेति। अनेन देहाभिमानदोषेण
अस्य ब्रह्मास्मीत्यादिवृत्तयो नश्यन्ति तिरोभवन्ति। किंच तं
देहाभिमानिनं प्रति रुगादयः प्रवर्तन्ते॥ ३६॥ अहंभाव एव
सर्वानर्थमूलमित्याह- कारणेनेति॥ ३७॥

पृ। ३९९)

योगसिद्धस्य ईश्वरत्वं जीवन्मुक्तत्वं च

शरीरेण जिताः सर्वे शरीरं योगिभिर्जितम्।
तत् कथं कुरुते तेषां सुखदुःकादिकं फलम्॥ ३८॥

इन्द्रियाणि मनो बुद्धिः कामक्रोधादिकं जितम्।
तेनैव विजितं सर्वं नासौ केनापि बाध्यते॥ ३९॥

महाभूतानि तत्त्वानि संहृतानि क्रमेण च ।
सप्तधातुमयो देहो दग्धो योगाग्निना शनैः ॥ ४० ॥

देवैरपि न लक्ष्येत योगिदेहो महाबलः ।
भेदबन्धविनिर्मुक्तो नानाशक्तिधरः परः ॥ ४१ ॥

यथाकाशस्तथा देह आकाशादपि निर्मलः ।
सूक्ष्मात् सूक्ष्मतरो दृश्यः स्थूलास्थूलो जडाजडः ॥ ४२ ॥

इच्छारूपो हि योगीन्द्रः स्वतन्त्रस्त्वजरामरः ।
क्रीडते त्रिषु लोकेषु लीलया यत्रकुत्रचित् ॥ ४३ ॥

अचिन्त्यशक्तिमान् योगी नानारूपाणि धारयेत् ।
संहरेच्च पुनस्तानि स्वेच्छया विजितेन्द्रियः ॥ ४४ ॥

नासौ मरणमाप्नोति पुनर्योगबलेन तु ।
हठेन मृत एवासौ मृतस्य मरणं कुतः ॥ ४५ ॥

मरणं यत्र सर्वेषां तत्रासौ परिजीवति ।

यत्र जीवन्ति मूढास्तु तत्रासौ मृत एव वै ॥ ४६ ॥

प्।४००) कर्तव्यं नैव तस्यास्ति कृतेनासौ न लिप्यते।
जीवन्मुक्तः सदा स्वच्छः सर्वदोषविवर्जितः ॥ ४७ ॥

सर्वे स्वाज्ञाः। ब्रह्मात्मैक्ययोगिभिः ॥ ३८ ॥ ब्रह्मातिरिक्तं न
किंचिदस्ति इति ज्ञानखड्गेन इन्द्रियाणि ॥ ३९ ॥ किंच- महाभूतानि ॥ ४०
॥ सम्यग्ज्ञानिनः ईश्वरभावापत्त्या सत्यसंकल्पत्वाद्यदि
सम्यग्ज्ञानयोगी अयं देहः सर्वादृश्यो भवतु
ईश्वरादिसामर्थ्यमीहते तदा देवैरपीति ॥ ४१-४४ ॥ नासौ
मरणमाप्नोति मरणादेः देहनिष्ठत्वेन योगिनो देहातीतत्वात्, न
जायते म्रियते वा विपश्चित् इति श्रुतेः। ब्रह्मातिरेकेण देहादिकं नास्तीति
बोध एव हठः, हठेन सम्यग्ज्ञानेन मृत एवासौ देहः ॥ ४५ ॥
या निशा सर्वभूतानाम् इत्यादिस्मरणात् ॥ ४६-४७ ॥

आभासज्ञानिनां विडम्बनम्

विरक्ता ज्ञानिनश्चान्ये देहेन विजिताः सदा।
ते कथं योगिभिस्तुल्या मांसपिण्डाः कुदेहिनः ॥ ४८ ॥

देहान्ते ज्ञानिभिः पुण्यात् पापाच्च फलमाप्यते ।
ईदृशं तु भवेत् तत्तद् भुक्त्वा ज्ञानी पुनर्भवेत् ॥ ४९ ॥

योगव्याविद्धचित्तमलनिर्विशेषज्ञानिनमीश्वरत्वेन जीवन्मुक्तत्वेन च स्तुत्वा तदपेक्षया आभासज्ञानिनो विडम्बयति- विरक्ता इति । स्वातिरिक्तविषये विशेषेण रक्ताः विरक्ताः ॥ ४८ ॥ प्रारब्धादिकर्मफलं भुक्त्वा ज्ञानी पुनर्भवेत् । न हि पारमार्थिकज्ञानिनः पुण्यपापतत्फलोच्चावचजन्मादिकमस्ति, आभासज्ञानिनि तु सर्वमुपपद्यत इति श्रुतेराशयः । अन्यथा ब्रह्म वेद ब्रह्मैव भवति य एवं निर्बीजं वेद निर्बीज एव स भवति, तमेव विद्वानमृत

प् । ४०१) इह भवति नान्यः पन्था अयनाय विद्यते इत्यादयो वेदनसमकालमेव ब्रह्ममात्रावस्थानलक्षणविदेहकैवल्यानुवादि- श्रुतयो बाध्येरन् । तस्मादत्र ज्ञानिनः पापपुण्यानुरोधेन पुनर्भवोक्तिराभासज्ञानिनिष्ठेति ॥ ४९ ॥

तेषां सिद्धसंगत्या कृतकृत्यत्वम्

पश्चात् पुण्येन लभते सिद्धेन सह संगतिम्।

ततः सिद्धस्य कृपया योगी भवति नान्यथा॥ ५०॥

ततो नश्यति संसारो नान्यथा शिवभाषितम्।

तादृशाभासज्ञानिनः सुकृतविशेषात् जीवन्मुक्तसंगत्या कृतकृत्यता स्यादित्याह- पश्चादिति॥ ५०॥

ज्ञानयोगयोः मिथः कार्यकारणत्वम्

योगेन रहितं ज्ञानं न मोक्षाय भवेद्विधे॥ ५१॥

ज्ञानेनैव विना योगो न सिध्यति कदाचन।

आभासज्ञानयोगसमुच्चयाभिप्रायेण प्रातिस्विकेन तयोः निन्दोच्यते- योगेनेति॥ ५१॥

योग एव परमो मोक्षमार्गः

जन्मान्तरैश्च बहुभिर्योगो ज्ञानेन लभ्यते ॥ ५२ ॥

ज्ञानं तु जन्मनैकेन योगादेव प्रजायते ।
तस्माद्योगात् परतरो नास्ति मार्गस्तु मोक्षदः ॥ ५३ ॥

प्। ४०२) प्रविचार्य चिरं ज्ञानं मुक्तोहमिति मन्यते ।
किमसौ मननादेव मुक्तो भवति तत्क्षणात् ॥ ५४ ॥

पश्चाज्जन्मान्तरशतैर्योगादेव विमुच्यते ।
न तथा भवतो योगाज्जन्ममृत्यू पुनःपुनः ॥ ५५ ॥

प्राणापानसमायोगश्चन्द्रसूर्यैकता भवेत् ।
सप्तधातुमयं देहमग्निना रञ्जयेद् ध्रुवम् ॥ ५६ ॥

व्याधयस्तस्य नश्यन्ति छेदखातादि का कथा ।
तदसौ परमाकाशरूपो देह्यवतिष्ठति ॥ ५७ ॥

किं पुनर्बहुनोक्तेन मरणं नास्ति तस्य वै ।

देहिवद् दृश्यते लोके दग्धकर्पूरवत् स्वयम् ॥ ५८ ॥

तयोः मिथः कार्यकारणतामाह- जन्मेति ॥ ५२ ॥ यस्मादेवं तस्मात् । नास्ति आभासज्ञानगताभासतां ग्रसित्वा शुद्धज्ञानजनकत्वात् । अत एव योगमार्गस्तु ज्ञानद्वारा मोक्षदः ॥ ५३ ॥ योगाभावे ज्ञानाभासेनापि प्रविचार्य । कदाचित्कमननादेव ॥ ५४ ॥ योगादेव विमुच्यते इति योगं स्तौति । यथा आभासज्ञानिनां जन्ममृत्यू भवतः न तथा ॥ ५५ ॥ सप्तधातुमयं देहं- शुक्लादयः सप्तधातवः देहस्य तन्मयत्वात् तम् ॥ ५६-५८ ॥

योगसंस्कृतमनस्त्येव आत्मज्ञानोत्पत्तिः

चित्तं प्राणेन संबद्धं सर्वजीवेषु संस्थितम् ।
रज्ज्वा यद्वत् सुसंबद्धः पक्षी तद्वदिदं मनः ॥ ५९ ॥

प्। ४०३) नानाविधैर्विचारस्तु न बाध्यं जायते मनः ।
तस्मात् तस्य जयोपायः प्राण एव हि नान्यथा ॥ ६० ॥

तर्कैर्जल्पैः शास्त्रजालैर्युक्तिभिर्मन्त्रभेषजैः ।

न वशो जायते प्राणः सिद्धोपायं विना विधे ॥ ६१ ॥

उपायं तमविज्ञाय योगमार्गे प्रवर्तते ।
खण्डज्ञानेन सहसा जायते क्लेशवत्तरः ॥ ६२ ॥

योजित्वा पवनं मोहाद्योगमिच्छति योगिनाम् ।
सोपक्वं कुम्भमारुह्य सागरं तर्तुमिच्छति ॥ ६३ ॥

यस्य प्राणो विलीनोन्तः साधके जीविते सति ।
पिण्डो न पतितस्तस्य चित्तं दोषैः प्रबाधते ॥ ६४ ॥

संस्थितं स्वात्मानं विषयीकरोतीत्यर्थः । तद्वदिदं मनः,
प्राणबन्धनं हि सोम्य मनः इति श्रुतेः ॥ ५९ ॥ यस्मादेवं तस्मात् ॥
६०-६५ ॥

योगाभ्यास एव प्रथमकृत्यम्

शुद्धे चेतसि तस्यैव स्वात्मज्ञानं प्रकाशते ।
तस्माज्ज्ञानं भवेद्योगाज्जन्मनैकेन पद्मज ॥ ६५ ॥

तस्माद्योगं तमेवादौ साधको नित्यमभ्यसेत्।

मुमुक्षुभिः प्राणजयः कर्तव्यो मोक्षहेतवे ॥ ६६ ॥

प्। ४०४) योगात् परतरं पुण्यं योगात् परतरं शिवम्।

योगात् परतरं सूक्ष्मं योगात् परतरं न हि ॥ ६७ ॥

योपानप्राणयोरैक्यं रजसो रेतसस्तथा।

सूर्याचन्द्रमसोर्योगो जीवात्मपरमात्मनोः ॥ ६८ ॥

एवं हि द्वन्द्वजालस्य संयोगो योग उच्यते।

यस्माद्योग एवं प्रभाववान् तस्मात्॥ ६६-६८ ॥

योगशिखोपदेशः

अथ योगशिखां वक्ष्ये सर्वज्ञानेषु चोत्तमाम्॥ ६९॥

यदानुध्यायते मन्त्रं गात्रकम्पोथ जायते।

आसनं पद्मकं बद्ध्वा यच्चान्यदपि रोचते ॥ ७० ॥

नासाग्रे दृष्टिमारोप्य हस्तपादौ च संयतौ ।
मनः सर्वत्र संगृह्य ओंकारं तत्र चिन्तयेत् ॥ ७१ ॥

ध्यायते सततं प्राज्ञो हृत्कृत्वा परमेश्वरम् ।
एकस्तम्भे नवद्वारे त्रिस्थूणे पञ्चदैवते ॥ ७२ ॥

ईदृशे तु शरीरे वा मतिमान्नोपलक्षयेत् ।
आदित्यमण्डलाकारं रश्मिज्वालासमाकुलम् ॥ ७३ ॥

तस्य मध्यगतं वह्निं प्रज्वलेद्दीपवर्तिवत् ।
दीपशिखा तु या मात्रा सा मात्रा परमेश्वरे ॥ ७४ ॥

प्। ४०५) इत्थं योगं स्तुत्वा अथ अनन्तरं योगसारभूतां शिखां
प्रपञ्चयति- अथेति । योगमस्तकविलसिततत्वात् योगशिखा । आभासादि-
ज्ञानापेक्षया इयमुत्तमा,
अशुद्धचित्ताश्रयज्ञानगताभासग्रासत्-वात् । तां तुभ्यं वक्ष्ये
इत्यर्थः ॥ ६९ ॥ किं तत् इत्यत्र तदियत्तां तदभ्यासक्रमं चाह- यदेति

। मन्तारम् अनुसंधातारं त्रायते इति मन्त्रः नादः। मन्त्रं मन्त्रो यदा अनुध्यायते अनुसंधीयते तदा अथ अनन्तरं योगिनो गात्रकम्पो जायते। तदुपशमनार्थं आसनमिति। यच्चान्यदपि रोचते सिद्धासनादि ॥ ७० ॥ एवम् आसने स्थित्वा नासाग्रे इति ॥ ७१ ॥ तदानीं देहदृष्टिः न कार्येत्याह- एकेति। वीणादण्डस्य शरीरमण्टपाधारत्वात्। स्थूणशब्देन आगाम्यादिकर्मत्रयमुच्यते। पञ्चदैवत शब्देन ब्रह्मादिसदाशिवान्तपञ्चब्रह्माण उच्यन्ते ॥ ७२ ॥ एतत्संघाते शरीरे स्वात्मात्मीयदृष्टिं न कुर्यादित्यर्थः। ततः किं कर्तव्यमित्यत्र स्वहृदये आदित्येति ॥ ७३ ॥ प्राणायामानुकूलध्या-नेन मूलाधारगताग्निज्वालावलीयुतं भावयेदित्यर्थः। तत्र दीपशिखारूपेण परमेश्वरो भावनीय इत्याह- दीपशिखेति। मूलाधारस्थदीपशिखा तु या मात्रा नीवारशूकादपि तन्वी सा मात्रा तदाकारेण परमेश्वरे भाविते सति ॥ ७४ ॥

योगाभ्यासात् परमपदसाक्षात्कारः

भिन्दन्ति योगिनः सूर्यं योगाभ्यासेन वै पुनः।
द्वितीयं सुषुम्नाद्वारं परिशुभ्रं समर्पितम् ॥ ७५ ॥

कपालसंपुटं पीत्वा ततः पश्यति तत्पदम्।

अथ तत्प्रसादतो योगिनः योगाभ्यासबलेन सूर्यमण्डलं भित्त्वा तत्पदं यान्तीत्यत्र सूर्यद्वारेण ते विरजाः प्रयान्ति इति श्रुतेः॥

संन्यस्तं पुरुषं दृष्ट्वा स्थानाच्चलति भास्करः।
एष मे मण्डलं भित्त्वा परं ब्रह्म प्रयास्यति॥

प्।४०६) इति स्मृत्यनुरोधेन संन्यासयोगिनः सूर्यमण्डलं भित्त्वा तत्पदं यान्तीत्युक्तम्। केवलयोगिनस्तु द्वितीयं सुषुम्नाद्वारं कुण्डलिन्या विभिद्य॥ ७५॥ तन्मार्गेण कलालसंपुटं सहस्रारचक्रं प्रविश्य तत्र रवीन्द्वग्निजममृतं पीत्वा ततः तत्पदं तत्रत्यतूरीयं तुरीयातीतं वा सोहमिति पश्यति पश्यन्ति। ततः तदात्तज्ञानानुरोधेन सविशेषं निर्विशेषं वा ब्रह्म प्रयान्तीत्यर्थः॥

ध्यानाशक्तस्य पुण्यलोकप्राप्तिः

अथ तद् ध्यायते जन्तुरालस्याच्च प्रमादतः॥ ७६॥

यदि त्रिकालमागच्छेत् स गच्छेत् पुण्यसंपदम्।
पुण्यमेतत् समासाद्य संक्षिप्य कथितं मया॥ ७७॥

एवं ध्यातुमशक्तानां पुण्यलोकाप्तिमाह- अथेति। यदि यो जन्तुः यथावत् ध्यानकलनायामालस्यात् प्रमादतश्च भेदधिया तत् ब्रह्म ध्यायते ध्यायति॥ ७६॥ एवम् अहरहः त्रिकालं ध्यानमागच्छेत् ध्यानं करोति सोयं मुनिः स्वभावनानुरोधेन पुण्यसंपदं ब्रह्मेन्द्राद्यैश्वर्यं गच्छेत् प्राप्नुयात्। एतत्पुण्यानुरोधेन संक्षेपेण मयोक्तमित्यर्थः॥ ७७॥

लब्धयोगस्य स्वात्मबोधः

लब्धयोगोथ बुध्येत प्रसन्नं परमेश्वरम्।
जन्मान्तरसहस्रेषु यदा क्षीणं तु किल्बिषम्॥ ७८॥

तदा पश्यति योगेन संसारोच्छेदनं महत्।

वक्ष्यमाणरीत्या लब्धयोगः स्वात्मानं बुध्यते इत्याह- लब्धेति। सोहमिति बुध्येत। किल्बिषवतां

स्वातिरिक्तकलनोच्छेदनेश्वरसाक्षात्कारः कुत इत्यत्र आह-
जन्मान्तरेति। नित्यादिकर्मफलसमर्पणसंतुष्टेश्वरप्रसादतः यदा ॥
७८ ॥

पृ। ४०७)

योगाभ्यासार्थं जितप्राणगुरूपसदनम्

अधुना संप्रवक्ष्यामि योगाभ्यासस्य लक्षणम् ॥ ७९ ॥

मरुज्जयो यस्य सिद्धः सेवयेत् तं गुरुं सदा।
गुरुवक्त्रप्रसादेन कुर्यात् प्राणजयं बुधः ॥ ८० ॥

तदा पश्यति योगेनेत्युक्तं, सोयं योगः कीदृशः
इत्याकाङ्क्षायां तदियत्तां ससाधनां सफलामाचष्टे- अधुनेति ॥
७९ ॥ तत् गुरुमुखेनैव ज्ञेयमित्याह- मरुदिति ॥ ८० ॥

सरस्वतीचालनम्

वितस्तिप्रमितं दैर्घ्यं चतुरङ्गुलविस्तृतम्।
मृदुलं धवलं प्रोक्तं वेष्टनाम्बरलक्षणम्॥ ८१॥

आदौ सरस्वतीनाडीचालनपुरःसरं कुण्डलिनीस्थितिं
तच्चालनोपायं चाह- वितस्तीति।
सरस्वतीनाडीमस्तकमुक्तलक्षणलक्षितवस्त्रेणावेष्ट्य ब्राह्मे मुहूर्ते
उत्थाय मुहूर्तपर्यन्तं निर्भयाच्चालयेत्॥ ८१॥

कुण्डलीचालनेन ग्रन्थित्रयभेदः

निरुध्य मारुतं गाढं शक्तिचालनयुक्तितः।
अष्टधा कुण्डलीभूतामृज्वीं कुर्यात्तु कुण्डलीम्॥ ८२॥

पायोराकुञ्चनं कुर्यात् कुण्डलीं चालयेत् तदा।
मृत्युवक्त्रगतस्यापि तस्य मृत्युभयं कुतः॥ ८३॥

एतदेव परं गुह्यं कथितं तु मया तव।
वज्रासनगतो नित्यमूर्ध्वाकुञ्चनमभ्यसेत्॥ ८४॥

प्। ४०८) वायुना ज्वलितो वह्निः कुण्डलीमनिशं दहेत्।
संतप्ता साग्निना जीवा शक्तिस्त्रैलोक्यमोहिनी ॥ ८५ ॥

प्रविशेच्चन्द्रदण्डे तु सुषुम्नावदनान्तरे।
वायुना वह्निना सार्धं ब्रह्मग्रन्थिं भिनत्ति सा ॥ ८६ ॥

विष्णुग्रन्थिं ततो भित्त्वा रुद्रग्रन्थौ च तिष्ठति।
ततस्तु कुम्भकैर्गाढं पूरयित्वा पुनः पुनः ॥ ८७ ॥

सरस्वतीनाडीचालनानन्तरं निरुध्य ॥ ८२ ॥ तदा पायोः।
कुण्डलिनीचालनतोस्य विमृत्युत्वमाह- मृत्युवक्त्रेति ॥ ८३ ॥
कुण्डलीं चालयेदिति यदुक्तं सोपायं तदाह- वज्रेति ॥ ८४ ॥
आकुञ्चनोत्थवायुना। तेन दाहेन संतप्ता ॥ ८५ ॥ ततः सा किं करोतीत्यत्र
प्रविशेत् इति। सुषुम्नायाः चन्द्रवत् शीतलत्वात् कुण्डलीतापशान्तिकरत्वं
योग्यनुभवसिद्धमित्यर्थः। दृक्प्राणवायुना।
मूलाधारप्रवेशमार्गकवाटाभं ब्रह्मग्रन्थिम् ॥ ८६ ॥
अनाहतकवाटं विष्णुग्रन्थिम्। आज्ञाकवाटे रुद्रग्रन्थौ।
रुद्रग्रन्थिभेदनोपायमाह- तत इति ॥ ८७ ॥

कुम्भकचतुष्टयाम्भासविधिः

अथाभ्यसेत् सूर्यभेदमुज्जायीं चापि शीतलीम् ।
भस्त्रां च सहितो नाम स्याच्चतुष्टयकुम्भकः ॥ ८८ ॥

बन्धत्रयेण संयुक्तः केवलप्राप्तिकारकः ।

कुम्भकभेदमाह- अथेति ॥ ८८-८९ ॥

पृ। ४०९)

सूर्यकुम्भकलक्षणम्

अथास्य लक्षणं सम्यक् कथयामि समासतः ॥ ८९ ॥

एकाकिना समुपगम्य विविक्तदेशं
प्राणादिरूपममृतं परमार्थतत्त्वम् ।
लघ्वाशिना धृतिमता परिभावितव्यं
संसाररोगहरमौषधमद्वितीयम् ॥ ९० ॥

सूर्यनाड्या समाकृष्य वायुमभ्यासयोगिना ।
विधिवत् कुम्भकं कृत्वा रेचयेच्छीतरश्मिना ॥ ९१ ॥

उदरे बहुरोगघ्नं क्रिमिदोषं निहन्ति च ।
मुहुर्मुहुरिदं कार्यं सूर्यभेदमुदाहृतम् ॥ ९२ ॥

आदौ समुदायलक्षणमुच्यते- एकाकिनेति ॥ ९० ॥ ततः सूर्यभेदलक्षणं तत्फलं चाह- सूर्येति ॥ ९१-९२ ॥

उज्जायीकुम्भकलक्षणम्

नाडीभ्यां वायुमाकृष्य कुण्डल्याः पार्श्वयोः क्षिपेत् ।
धारयेदुदरे पश्चाद्रेचयेदिडया सुधीः ॥ ९३ ॥

कण्ठे कफादिदोषघ्नं शरीराग्निविवर्धनम् ।
नाडीजलापहं धातुगतदोषविनाशनम् ॥ ९४ ॥

गच्छतस्तिष्ठतः कार्यमुज्जाय्याख्यं तु कुम्भकम् ।

उज्जायीकुम्भकलक्षणमाह- नाडीभ्यामिति ॥ ९३-९४ ॥

पृ। ४१०)

शीतलीकुम्भकलक्षणम्

मुखेन वायुं संगृह्य घ्राणरन्ध्रेण रेचयेत्॥ ९५ ॥

शीतलीकरणं चेदं हन्ति पित्तं क्षुधां तृषम्।

शीतलीलक्षणमाह- मुखेनेति ॥ ९५ ॥

भस्त्रिकाकुम्भकलक्षणम्

स्तनयोरथ भस्त्रेव लोहकारस्य वेगतः ॥ ९६ ॥

रेचयेत् पूरयेद्वायुमाश्रमं देहगं धिया।
यथा श्रमो भवेद्देहे तथा सूर्येण पूरयेत्॥ ९७ ॥

कण्ठसंकोचनं कृत्वा पुनश्चन्द्रेण रेचयेत्।
वातपित्तश्लेष्महरं शरीराग्निविवर्धनम्॥ ९८॥

कुण्डलीबोधकं वक्रदोषघ्न शुभदं सुखम्।
ब्रह्मनाडीमुखान्तःस्थकफाद्यर्गलनाशनम्॥ ९९॥

सम्यग्बन्धसमुद्भूतं ग्रन्थित्रयविभेदकम्।
विशेषेणैव कर्तव्यं भस्त्राख्यं कुम्भकं त्विदम्॥ १००॥

भस्त्रिकाकुम्भकलक्षणमाह- स्तनयोरिति।
भस्त्रिकाचालकस्तनयोः समम् अथ॥ ९६-९९॥ भस्त्रिकाकुम्भकात्
रुद्रग्रन्थिरपि भिद्यते इत्यर्थः॥ १००॥

बन्धत्रयविधिः

बन्धत्रयमथेदानीं प्रवक्ष्यामि यथाक्रमम्।
नित्यं कृतेन तेनासौ वायोर्जयमवाप्नुयात्॥ १०१॥

प्।  ४११) चतुर्णामपि भेदानां कुम्भके समुपस्थिते।
बन्धत्रयमिदं कार्यं वक्ष्यमाणं मया हि तत्॥ १०२॥

प्रथमो मूलबन्धस्तु द्वितीयोड्डीयणाभिधः।
जालंधरस्तृतीयस्तु लक्षणं कथयाम्यहम्॥ १०३॥

कुम्भकचतुष्टयाङ्गतया बन्धत्रयलक्षणमाह- बन्धेति॥
१०१-१०४॥

मूलबन्धः

गुदं पाष्ण्‍र्या तु संपीड्य वायुमाकुञ्चयेद् बलात्।
वारं वारं यथा चोर्ध्वं समायाति समीरणः॥ १०४॥

प्राणापानौ नान्दबिन्दू मूलबन्धेन चैकताम्।
गत्वा योगस्य संसिद्धिं यच्छतो नात्र संशयः॥ १०५॥

नादबिन्दुशब्देन बुद्धिमनसी उच्येते॥ १०५-१०७॥

उड्डियाणबन्धः

कुम्भकान्ते रेचकादौ कर्तव्यस्तूड्डियाणकः।
बन्धो येन सुषुम्नायां प्राणस्तूड्डीयते यतः॥ १०६॥

तस्मादुड्डीयणाख्योयं योगिभिः समुदाहृतः।
उड्डियाणं तु सहजं गुरुणा कथितं सदा॥ १०७॥

अभ्यसेत् तदतन्द्रस्तु वृद्धोपि तरुणो भवेत्।
नाभेरूर्ध्वमधश्चापि ताणं कुर्यात् प्रयत्नतः॥ १०८॥

षाण्मासमभ्यसेन्मृत्युं जयत्येव न संशयः।

प्।४१२) ताणम् आकुञ्चनम्॥ १०८-१११॥

जालंधरबन्धः

पूरकान्ते तु कर्तव्यो बन्धो जालंधराभिधः॥ १०९॥

कंठसंकोचरूपोसौ वायुमार्गनिरोधकः।

कण्ठमाकुञ्च्य हृदये स्थापयेद् दृढमिच्छया॥ ११० ॥

बन्धो जालंधराख्योयममृताप्यायकारकः।

अधस्तात् कुञ्चनेनाशु कण्ठसंकोचने कृते॥ १११ ॥

मध्ये पश्चिमताणेन स्यात् प्राणो ब्रह्मनाडिगः।

कुण्डल्या ग्रन्थित्रयविभेदनेन निर्विकल्पकप्राप्तिः

वज्रासनस्थितो योगी चालयित्वा तु कुण्डलीम्॥ ११२ ॥

कुर्यादनन्तरं भस्त्रीं कुण्डलीमाशु बोधयेत्।

भिद्यन्ते ग्रन्थतो वंशे तप्तलोहशलाकया॥ ११३ ॥

तथैव पृष्ठवंशे स्याद् ग्रन्थिभेदस्तु वायुना।

पिपीलिकायां लग्नायां कण्डूस्तत्र प्रवर्तते॥ ११४ ॥

सुषुम्नायां तथाभ्यासात् सततं वायुना भवेत्।

रुद्रग्रन्थिं ततो भित्त्वा ततो याति शिवात्मकम्॥ ११५॥

चन्द्रसूर्यौ समौ कृत्वा तयोर्योगः प्रवर्तते।
गुणत्रयमतीतं स्याद् ग्रन्थित्रयविभेदनात्॥ ११६॥

शिवशक्तिसमायोगे जायते परमा स्थितिः।

प्। ४१३) बन्धत्रयमुक्तो योगी वज्रासनेति॥ ११२-११६॥
ब्रह्मरन्ध्रगततुरीय एव शिवः, शक्तिस्तु कुण्डलिनी,
तयोर्योगादेव परमा स्थितिः सहजनिर्विकल्पकावस्था जायते इत्यर्थः॥

सुषुम्नायाः मोक्षमार्गत्वं कालभोक्तृत्वं च

यथा करी करेणैव पानीयं प्रपिबेत् सदा॥ ११७॥

सुषुम्नावज्रनालेन पवमानं ग्रसेत् तथा।
वज्रदण्डसमुद्भूता मणयश्चैकविंशतिः॥ ११८॥

सुषुम्नायां स्थिताः सर्वे सूत्रे मणिगणा इव।

मोक्षमार्गे प्रतिष्ठाना सुषुम्ना विश्वरूपिणी ॥ ११९ ॥

यथैव निश्चितः कालश्चन्द्रसूर्यनिबन्धनात् ।
आपूर्य कुम्भितो वायुर्बहिर्नो याति साधके ॥ १२० ॥

पुनःपुनस्तद्वदेव पश्चिमद्वारलक्षणम् ।
पूरितस्तु स तद्द्वारैरीषत्कुम्भकतां गतः ॥ १२१ ॥

प्रविशेत् सर्वगात्रेषु वायुः पश्चिममार्गतः ।
रेचितः क्षीणतां याति पूरितः पोषयेत् ततः ॥ १२२ ॥

सुषुम्नया प्राणोदकं पिबेदित्यत्र दृष्टान्तमाह- यथेति ॥ ११७ ॥ वज्रदण्डो नाम सुषुम्नाश्रयो वीणादण्डः तत्र भवा एकविंशतिमणयश्चणकवन्मांसपिण्डाः सुषुम्नामार्गगतध्वान्तग्रासत्वात् दीपवत् प्रकाशरूपेण मूलाधारमारभ्य ब्रह्मरन्ध्रान्तं सुषुम्नावेणुपर्ववत् विद्यन्ते योगिप्रत्यक्षाः भवन्तीत्यर्थः ॥ ११८ ॥ तथाविधसुषुम्नाया मोक्षमार्गत्वं कालभोक्तृत्वं चाह- मोक्षेति ।

पृ। ४१४) विश्वरूपिणी विश्वाधारब्रह्माश्रयत्वात्॥ ११९॥

निमिषादिकल्पान्तकालः यत्र विलीयते सेयं सुषुम्ना कालभोक्त्रीत्यर्थः। साधके योगिनि या सुषुम्ना वर्तते तया आपूर्य कुम्भितो वायुः उच्छ्वासनिश्वासरूपेण निमेषादिकल्पान्तकालकलनानिर्वाहकः प्राणवायुः सहसा बहिः नो याति। अतः कालभोक्तृत्वं सुषुम्नायाः सिद्धमित्यर्थः॥ १२०। यदि प्रमादतः सुषुम्नाया बहिः निर्गच्छति तदा पुनः पुनः तद्वत् पूर्ववदेव। सुषुम्नया प्राणमापूर्य कुम्भयेदिति यत्तत् पश्चिमद्वारलक्षणं भवति। सोयं प्राणः तद्द्वारैः तद्द्वारेण पूरितः सन्नादावीषत्कुम्भकतां भजति॥ १२१॥ ततः प्राणवायुः पश्चिममार्गतः सर्वगात्रेषु प्रविशेत्। यदि कालकर्मसंयोगतः सुषुम्नया रेचितो वायुः क्षीणतां याति ततः तदा पूरितः शरीरं पोषयेत् पुष्टिं कुर्यादित्यर्थः॥ १२२॥

सुषुम्नायोगेन ब्रह्मज्ञानसिद्धिः

यत्रैव जातं सकलेबरं मन-
स्तत्रैव लीनं कुरुते स योगात्।
स एव मुक्तो निरहंकृतिः सुखी
मूढा न जानन्ति हि पिण्डपातिनः॥ १२३॥

चित्तं विनष्टं यदि भासितं स्यात्

तत्र प्रतीतो मरुतोपि नाशः।

न चेद्यदि स्यान्न तु तस्य शास्त्रं

नात्मप्रतीतिर्न गुरुर्न मोक्षः॥ १२४॥

जम्बुको रुधिरं यद्वद् बलादाकृष्यति स्वयम्।

ब्रह्मनाडी तथा धातून् संतताभ्यासयोगतः॥ १२५॥

प्। ४१५) अनेनाभ्यासयोगेन नित्यमासनबन्धतः।

चित्तं विलीनतामेति बिन्दुर्नो यात्यधस्तथा॥ १२६॥

स्वातिरिक्तमनस्तत्कार्यजातारोपापवादाधिष्ठानात्मज्ञानं

यस्यास्ति स एव मुक्त इत्याह- यत्रेति। स्वातिरिक्तभ्रमतो मुक्तः। एवम्

अधिष्ठानयाथात्म्यज्ञानं ये न जानन्ति ते मूढाः

तेषामावृतित्रयावृतदृष्टित्वात् मूढत्वं सिद्धमित्यर्थः॥ १२३॥

यस्य एवमधिष्ठानज्ञानं नोदेति तद्दृष्ट्या

श्रुत्याचार्यतत्प्रभवज्ञानतत्फलमोक्षादिकं नास्तीत्याह - चित्तमिति

। तज्जन्म व्यर्थमित्यर्थः॥ १२४॥ यतः अयम्

अधिष्ठानज्ञानाभावोनर्थहेतुः अतः तत्प्रबोधार्थम् उत्तरो ग्रन्थ आरभ्यते। ब्रह्मातिरिक्तधातुषु सत्सु ब्रह्मज्ञानं कथं भवतीत्यत्र जम्बूको रुधिरमिव धातून् सुषुम्ना ग्रसति ततो ब्रह्मज्ञानं जायते इत्याह- जम्बुक इति। ब्रह्मनाडी तथा धातून् बहिःपदार्थतत्प्रबोधान् ग्रसत्येव। ततो ब्रह्मज्ञानमुदेति तत्समकालं स्वातिरिक्तभ्रममुक्तिश्च भवति। एवं सिद्धावुपायस्तु- संततेति। योगतः उक्तार्थसिद्धिः स्यादित्यर्थः॥ १२५॥ अभ्यासतः किं स्यादित्यत्र अनेनेति॥ १२६॥

योगाभ्यासेन स्वरूपावस्थितिसिद्धिक्रमः

रेचकं पूरकं मुक्त्वा वायुना स्थीयते स्थिरम्।
नानानादाः प्रवर्तन्ते संस्रवेच्चन्द्रमण्डलम्॥ १२७॥

नश्यन्ति क्षुत्पिपासाद्याः सर्वदोषास्ततस्तदा।
स्वरूपे सच्चिदानन्दे स्थितिमाप्नोति केवलम्॥ १२८॥

कथितं तु तव प्रीत्या ह्येतदभ्यासलक्षणम्।

ततः किं स्यादित्यत्र रेचकमिति । यदा वायुः स्थिरो भवति तदा नानानादाः ॥ १२७ ॥ एवम् अमृतास्वादनतः, ब्रह्मातिरिक्तं न किंचिदस्ति इति प्रबोधाच्च नश्यन्ति इत्यादि ॥ १२८ ॥

पृ। ४१६)

मन्त्रादियोगचतुष्टयात्मको महायोगः

मन्त्रो लयो हठो राजयोगान्ता भूमिकाः क्रमात् ॥ १२९ ॥

एक एव चतुर्धायं महायोगोभिधीयते ।

पुनस्ते महायोगं कथयामित्याह- मन्त्र इति ॥ १२९ ॥

मन्त्रयोगः

हकारेण बहिर्याति सकारेण विशेत् पुनः ॥ १३० ॥

हंसहंसेति मन्त्रोयं सर्वैर्जीवैश्च जप्यते ।

गुरुवाक्यात् सुषुम्नायां विपरीतो भवेज्जपः ॥ १३१ ॥

सोहं सोहमिति यः स्यान्मन्त्रयोगः स उच्यते ।

आदौ मन्त्रयोगलक्षणमाह- हकारेणेति ॥ १३० ॥ मन्त्रोयं सदावशादुच्छ्वासनिश्वासरूपेण सर्वैः जप्यते । अयोगिनामेव भवतीत्यर्थः । योगिनां तु गुरुवाक्यात् इति ॥ १३१ ॥

हठयोगः

प्रतीतिमन्त्रयोगाच्च जायते पश्चिमे पथि ॥ १३२ ॥

हकारेण तु सूर्यः स्यात् सकारेणेन्दुरुच्यते ।
सूर्याचन्द्रमसोरैक्यं हठ इत्यभिधीयते ॥ १३३ ॥

सूत्रवाक्यपठितलययोगं पश्चाद्विवक्षन् हठयोगलक्षणमाह- प्रतीतीति ॥ १३२ ॥ चन्द्रसूर्यैक्यं जायते इत्याह- हकारेणेति ॥ १३३ ॥

पृ। ४१७)

लययोगः

हठेन गृह्यते जाड्यं सर्वदोषसमुद्भवम्।
क्षेत्रज्ञः परमात्मा च तयोरैक्यं यदा भवेत्॥ १३४ ॥

तदैक्ये साधिते ब्रह्मंश्चित्तं याति विलीनताम्।
पवनः स्थैर्यमायाति लययोगोदये सति॥ १३५ ॥

लयात् संप्राप्यते सौख्यं स्वात्मानन्दं परं पदम्।

लययोगलक्षणमाह- हठेनेति॥ १३४-१३५ ॥

राजयोगः

योनिमध्ये महाक्षेत्रे जपाबन्धूकसंनिभम्॥ १३६ ॥

रजो वसति जन्तूनां देवीतत्त्वं समावृतम्।

रजसो रेतसो योगाद्राजयोग इति स्मृतः ॥ १३७ ॥

अणिमादिपदं प्राप्य राजते राजयोगतः ।

राजयोगलक्षणमाह- योनीति ॥ १३६ ॥ शशि[शिश्न ?
]स्थाने रेतो वर्तते तद्धि शिवतत्त्वम् । रजसो रेतसो योगात्
शक्तिशिवयोगात् राजयोगः ॥ १३७ ॥

योगसामान्यस्वरूपम्, योगेन मुक्तिप्राप्तिश्च

प्राणापानसमायोगो ज्ञेयं योगचतुष्टयम् ॥ १३८ ॥

संक्षेपात् कथितं ब्रह्मन् नान्यथा शिवभाषितम् ।
क्रमेण प्राप्यते प्राप्यमभ्यासादेव नान्यथा ॥ १३९ ॥

पृ। ४१८) एकेनैव शरीरेण योगाभ्यासाच्छनैः शनैः ।
चिरात् संप्राप्यते मुक्तिर्मर्कटक्रम एव सः ॥ १४० ॥

मन्त्रादियोगचतुष्टयस्यापि एकार्थपर्यवसायित्वमाह- प्राणेति

। योगचतुष्टयेपि प्राणापानयोगः समान इत्यर्थः ॥ १३८ ॥ एवं संक्षेपात् स्वोक्तयोगफलमाह- क्रमेणेति । निर्विशेषब्रह्मज्ञानसमकालप्राप्यकैवल्यवद्योगफलस्य न ह्यचिरात् प्राप्तिरिष्यते इत्यर्थः ॥ १३९-१४० ॥

असिद्धयोगस्य मृतस्य उत्तरजन्मनि सिद्धिप्रकारः

योगसिद्धिं विना देहः प्रमादाद्यदि नश्यति ।
पूर्ववासनया युक्तः शरीरं चान्यदाप्नुयात् ॥ १४१ ॥

ततः पुण्यवशात् सिद्धो गुरुणा सह संगतः ।
पश्चिमद्वारमार्गेण जायते त्वरितं फलम् ॥ १४२ ॥

पूर्वजन्मकृताभ्यासात् सत्वरं फलमश्नुते ।

योगाभ्यासिनो योगफलाप्तेः पुरा यदि देहो नश्यति तदा तत्कृतश्रमो निष्फलो भवतीत्यत आह- योगेति । तदायं योगी पूर्ववासनया ॥ १४१-१४२ ॥

अभ्यासयोगादेव मुक्तिः

एतदेव हि विज्ञेयं तत् काकमतमुच्यते ॥ १४३ ॥

नास्ति काकमतादन्यदभ्यासाख्यमतः परम् ।
तेनैव प्राप्यते मुक्तिर्नान्यथा शिवभाषितम् ॥ १४४ ॥

पृ। ४१९) तदेव स्तौति- एतदिति। वस्तुतः अस्याः स्थितिः केत्याक्षेपार्थेन किंशब्देन मायोच्यते। सा यस्य वशे वर्तते सोयं काको मायी महेश्वरः। मायां तु प्रकृतिं विद्यात् मायिनं तु महेश्वरम् इति श्रुतिसिद्धकाकस्य महेश्वरस्याभ्यासयोगाख्यमिदमेव मतम् ॥ १४३ ॥
अज्ञानिनामाभासज्ञानिनामपि तच्चित्तमालिन्यसंक्षालनद्वारा निर्विशेषब्रह्मज्ञानहेतुत्वात् कलौ तेनैव प्रायशो मुक्तिः प्राप्यते नान्यथेत्यर्थः ॥ १४४ ॥

योगिनः सर्वैश्वर्यजीवन्मुक्त्यादिसिद्धिलाभः

हठयोगक्रमात् काष्ठा सह जीवलयादिकम् ।

नाकृतं मोक्षमार्गं स्यात् प्रसिद्धं पश्चिमं विना ॥ १४५ ॥

आदौ रोगाः प्रणश्यन्ति पश्चाज्जाड्यं शरीरजम् ।
ततः समरसो भूत्वा चन्द्रो वर्षत्यनारतम् ॥ १४६ ॥

धातूंश्च संग्रहेद्वह्निः पवनेन समं ततः ।
नानानादाः प्रवर्तन्ते मार्दवं स्यात् कलेबरम् ॥ १४७ ॥

जित्वा वृष्ट्यादिकं जाड्यं खेचरः स भवेन्नरः ।
सर्वज्ञोसौ भवेत् कामरूपः पवनवेगवान् ॥ १४८ ॥

क्रीडते त्रिषु लोकेषु जायन्ते सिद्धयोखिलाः ।
कर्पूरे लीयमाने किं काठिन्यं तत्र विद्यते ॥ १४९ ॥

अहंकारक्षये तद्वद्देहे कठिनता कुतः ।
सर्वकर्ता च योगीन्द्रः स्वतन्त्रोनन्तरूपवान् ॥ १५० ॥

जीवन्मुक्तो महायोगी जायते नात्र संशयः ।

प्। ४२०) हठयोगं स्तौति- हठेति। अकृतमकृत्रिमं
तयोर्ध्वमायन्नमृतत्त्वमेति सुषुम्ना तु परे लीना विरजा ब्रह्मरूपिणी
इत्यादिश्रुतिप्रसिद्धं यत्रार्थजातं तत्तज्ज्ञानेन सह जीवतो योगिनो
लयादिकमश्नुते तदिदं हठयोगक्रमादनुष्ठानात् सिद्धं पश्चिमं
मोक्षमार्गं महापथं विना योगिनां कापि काष्ठा न विद्यते इत्यर्थः
॥ १४५ ॥ इत्थंभूतयोगप्रशंसापूर्वकं नानाविधसिद्धिभूषणं
योगिनं जीवन्मुक्तत्वेन ईश्वरत्वेन च स्तौति- आदाविति। आदौ
अभ्यासदशायामेव सर्वं रोगाः। शरीरजम् आलस्यादि।
प्राणाग्निसूर्यचन्द्रशक्तिशिवयोगतश्चन्द्रोनारतमन-वरतम्
अमृतधारां वर्षति ॥ १४६ ॥ ततो मूलाधारगतोग्निः पवनेन समं
स्थित्वा धातूंश्च संग्रहेत् बलवृद्धिं वीर्यस्तम्भनं च
कुर्यादित्यर्थः। मार्दवं बालवत् कोमलं भवतीत्यर्थः ॥ १४७ ॥ जित्वा
अभ्रं भूत्वा मेघो भवति इत्यादिजडतां विहाय तेजसा खेचरः स
भवेन्नरः। एवमभ्यासयोगी सोयं सूर्यो भवतीत्यर्थः। किंच-
सर्वज्ञः ॥ १४८ ॥ स्वेच्छामात्रेण जायन्ते। कथं पुनरस्य कलेबरं
काठिन्यं विहाय मार्दवं भजतीत्यत्र सदृष्टान्तमुत्तरमाह-
कर्पूर इति। दीपकणिकायोगतः कर्पूरे ॥ १४९॥ योगाग्निना अहंकारक्षये।
मार्दवदेहः आकाशदेहो वा भवेदयमित्यर्थः। किंच- सर्वकर्ता ॥
१५० ॥

कृत्रिमाकृत्रिमसिद्धीनां गोपनविधिः

द्विविधाः सिद्धयो लोके कल्पिताकल्पितास्तथा ॥ १५१ ॥

रसौषधिक्रियाजालमन्त्राभ्यासादिसाधनात् ।
सिध्यन्ति सिद्धयो यास्तु कल्पितास्ताः प्रकीर्तिताः ॥ १५२ ॥

अनित्या अल्पवीर्यास्ताः सिद्धयः साधनोद्भवाः ।
साधनेन विनाप्येवं जायन्ते स्वत एव हि ॥ १५३ ॥

स्वात्मयोगैकनिष्ठेषु स्वातन्त्र्यादीश्वरप्रियाः ।
प्रभूताः सिद्धयो यास्ताः कल्पनारहिताः स्मृताः ॥ १५४ ॥

पृ। ४२१) सिद्धा नित्या महावीर्या इच्छारूपाः स्वयोगजाः ।
चिरकालात् प्रजायन्ते वासनारहितेषु च ॥ १५५ ॥

तास्तु गोप्या महायोगात् परमात्मपदेव्यये ।
विना कार्यं सदा गुप्तं योगसिद्धस्य लक्षणम् ॥ १५६ ॥

योगजाः सिद्धयः कतिविधाः इत्यत्र कृत्रिमाकृत्रिमभेदेन द्विविधा इत्याह- द्विविधा इति ॥ १५१-१५२ ॥ अकल्पितास्तु साधनेन ॥ १५३-१५४ ॥ स्वेनैव सिद्धाः ॥ १५५ ॥ तासां गोपनीयतामाह- तास्त्विति । महायोगात् परमात्मपदे स्थितेन योगिना कार्यं विना ताः सिद्धयो गोपनीयाः । सदा सिद्धिजालं गुप्तं गोप्यं भवितव्यमिति यत् तद्योगसिद्धस्य लक्षणं सहजमित्यर्थः ॥ १५६ ॥

योगसिद्धजीवन्मुक्तयोः सूचकम्

यथाकाशं समुद्दिश्य गच्छद्भिः पथिकैः पथि ।
नानातीर्थानि दृश्यन्ते नानामार्गास्तु सिद्धयः ॥ १५७ ॥

स्वयमेव प्रजायन्ते लाभालाभविवर्जिते ।
योगमार्गे तथैवेदं सिद्धिजालं प्रवर्तते ॥ १५८ ॥

परीक्षकैः स्वर्णकारैर्हेम संप्रोच्यते यथा ।
सिद्धिभिर्लक्षयेत् सिद्धं जीवन्मुक्तं तथैव च ॥ १५९ ॥

अलौकिकगुणस्तस्य कदाचिद् दृश्यते ध्रुवम्।
सिद्धिभिः परिहीनं तु नरं बद्धं तु लक्षयेत्॥ १६० ॥

प्। ४२२) सिद्धयो योगिनामेव स्युः इति संकल्पिता भवेयुरित्यत आह- यथेति। कार्यं समुद्दिश्य। तथा यदृच्छया योगिनो नानामार्गाः सिद्धयो दृश्यन्ते॥ १५७॥ योगिनि स्वयमेव। यथा आकाशमार्गे तीर्थानि दृश्यन्ते योगमार्गे॥ १५८॥ स्वर्णं स्वर्णपरीक्षकवत् सिद्धं सिद्धिभिः परीक्ष्य तन्निकटे सिद्धयो यदि स्युः तदा तं सिद्धं मुक्तं विद्यात्। यदि ताः न स्युः तदा तं बद्धं विद्यादित्याह- परीक्षकैरिति । यद्ययं ज्ञानी तदा तं जीवन्मुक्तम्॥ १५९॥ तस्मिन् यद्यस्ति तदा चिरपरिचयात् अलौकिकेति। तस्य तस्मिन्॥ १६० ॥

देहे सत्यपि ज्ञानिनो विदेहमुक्तिलाभः

अजरामरपिण्डो यो जीवन्मुक्तः स एव हि।
पशुकुक्कुटकीटाद्या मृतिं संप्राप्नुवन्ति वै॥ १६१ ॥

तेषां किं पिण्डपातेन मुक्तिर्भवति पद्मज।
न बहिःप्राण आयाति पिण्डस्य पतनं कुतः॥ १६२ ॥

योगहीनं कथं ज्ञानं मोक्षदं भवति ध्रुवम् ॥ १४ ॥

योगोपि ज्ञानहीनस्तु न क्षमो मोक्षकर्मणि ।
तस्माज्ज्ञानं च योगं च मुमुक्षुर्दृढमभ्यसेत् ॥ १५ ॥

यस्मादेवं तस्मात् । केवलनिर्विशेषज्ञानस्य मोक्षदत्वेपि सविशेषज्ञानस्य तदभावात् योगाकाङ्क्षा भवेदिति ज्ञानयोगौ युगपदभ्यसेदित्याह- योगहीनमिति ॥ १४ ॥ यस्मादेवं तस्मात् ॥ १५ ॥

ज्ञानस्वरूपम्

अज्ञानादेव संसारो ज्ञानादेव विमुच्यते ।
ज्ञानस्वरूपमेवादौ ज्ञानं ज्ञेयैकसाधनम् ॥ १६ ॥

प् । ३६७) ज्ञातं येन निजं रूपं कैवल्यं परमं पदम् ।
निष्कलं निर्मलं साक्षात् सच्चिदानन्दरूपकम् ॥ १७ ॥

उत्पत्तिस्थितिसंहारस्फूर्तिज्ञानविवर्जितम् ।
एतज्ज्ञानमिति प्रोक्तमथ योगं ब्रवीमि ते ॥ १८ ॥

बन्धमोक्षहेतू स्वाज्ञानस्वज्ञाने इत्याह- अज्ञानादिति । तत्र ज्ञानं कीदृशम् इत्याह- ज्ञानेति ॥ १६-१७ ॥ स्वातिरेकेण इदमुत्पन्नं स्थितं उपसंहृतं इति या स्फूर्तिः तज्ज्ञानविवर्जितं तदेव निर्विशेषज्ञानमिति प्रोक्तम् । नहि तत् स्वफलाप्तौ योगादिसाधनमपेक्षते । यद्यपरब्रह्मगोचरं सविशेषज्ञानं स्वगतविशेषताशान्तये तदेव योगमपेक्षते । यत् सविशेषज्ञानेन समुच्चिचीषितं तत् ब्रवीमीत्याह- अथेति । अथ सविशेषज्ञानोत्पत्त्यनन्तरं तन्निर्विशेषताहेतुयोगं शृण्वित्यर्थः ॥ १८ ॥

मन्त्रयोगादिः चतुर्विधो योगः

योगो हि बहुधा ब्रह्मन् भिद्यते व्यवहारतः ।
मन्त्रयोगो लयश्चैव हठोसौ राजयोगकः ॥ १९ ॥

सोयं योगः कीदृश इत्याकाङ्क्षायां पारमार्थिकयोग एकोपि साधनवैचित्र्यात् बहुधा भिद्यते इत्याह- योगो हीति । तत् कथमित्यत्र मन्त्रेति । इति प्रधानयोगाः चत्वारः ॥ १९ ॥

आरम्भादयो योगावस्थाः

आरम्भश्च घटश्चैव तथा परिचयः स्मृतः।
निष्पत्तिश्चेत्यवस्था च सर्वत्र परिकीर्तिता॥ २०॥

अङ्गयोगास्तु- आरम्भश्चेति॥ २०॥

पृ। ३६८)

मन्त्रयोगलक्षणम्

एतेषां लक्षणं ब्रह्मन् वक्ष्ये शृणु समासतः।
मातृकादियुतं मन्त्रं द्वादशाब्दं तु यो जपेत्॥ २१॥

क्रमेण लभते ज्ञानमणिमादिगुणान्वितम्।
अल्पबुद्धिरिमं योगं सेवते साधकाधमः॥ २२॥

इति सूत्रवाक्यानि, एतेषाम्। तत्रादौ मन्दानुकम्पया

मन्त्रयोगमाह- मातृकेति ॥ २१-२२ ॥

लययोगलक्षणम्

लययोगश्चित्तलयः कोटिशः परिकीर्तितः ।
गच्छंस्तिष्ठन् स्वपन् भुञ्जन् ध्यायेन्निष्कलमीश्वरम् ॥ २३ ॥

स एव लययोगः स्याद्धठयोगमतः शृणु ।

लययोगप्रकारमाह- लयेति । तत्रायं सारतरो गच्छन्निति ॥ २३ ॥

हठयोगाङ्गानि

यमश्च नियमश्चैव ह्यासनं प्राणसंयमः ॥ २४ ॥

प्रत्याहारो धारणा च ध्यानं भ्रूमध्यमे हरिम् ।
समाधिः समतावस्था साष्टाङ्गो योग उच्यते ॥ २५ ॥

महामुद्रा महाबन्धो महावेधश्च खेचरी ।

जालंधरोड्डियाणश्च मूलबन्धस्तथैव च ॥ २६ ॥

प्। २६९) दीर्घप्रणवसंधानं सिद्धान्तश्रवणं तथा ।
वज्रोली चामरोली च सहजोली त्रिधा मता ॥ २७ ॥

अष्टाङ्गविशिष्टहठयोगमाह- हठेति ॥ २४-२५ ॥ पुनः
द्वादशाङ्गयोगमाचष्टे- महामुद्रेति ॥ २६-२७ ॥

यमनियमासनेषु प्रधानाङ्गानि

एतेषां लक्षणं ब्रह्मन् प्रत्येकं शृणु तत्त्वतः ।
लघ्वाहारो यमेष्वेको मुख्यो भवति नेतरः ॥ २८ ॥

अहिंसा नियमेष्वेका मुख्या वै चतुरानन ।
सिद्धं पद्मं तथा सिंहं भद्रं चेति चतुष्टयम् ॥ २९ ॥

आहत्य अयं योगो विंशत्यङ्गविशिष्टः । एतेषामङ्गानां
पृथग्लक्षणमाह- एतेषामिति । दशयमेषु
प्रधानसाधनमाह- लघ्विति ॥ २८ ॥ तथा दशनियमेषु

मुख्यसाधनमाह अहिंसेति। आसनानि अनन्तानि। तेषु अशीत्यासनानि मुख्यानि। तेष्वपि सिद्धाद्यासनचतुष्टयं मुख्यम् इत्याह- सिद्धमिति॥ २९॥

योगाभ्यासविघ्नत्यागः

प्रथमाभ्यासकाले तु विघ्नाः स्युश्चतुरानन।
आलस्यं कत्थनं धूर्तगोष्ठी मन्त्रादिसाधनम्॥ ३०॥

धातुस्त्रीलौल्यकादीनि मृगतृष्णामयानि वै।
ज्ञात्वा सुधीस्त्यजेत् सर्वान् विघ्नान् पुण्यप्रभावतः॥ ३१॥

योगाभ्यासकालप्रादुर्भूतविघ्नजालं त्यजेदित्याह- प्रथमेति ॥ ३०-३१॥



प्राणायामोचितमठासनयोः स्वरूपम्

प्राणायामं ततः कुर्यात् पद्मासनगतः स्वयम्।
सुशोभनं मठं कुर्यात् सूक्ष्मद्वारं तु निर्व्रणम्॥ ३२॥

सुष्ठु लिप्तं गोमयेन सुधया वा प्रयत्नतः।
मत्कुणैर्मशकैर्लूकैर्वर्जितं च प्रयत्नतः॥ ३३॥

दिने दिने च संमृष्टं संमार्जन्या विशेषतः।
वासितं च सुगन्धेन धूपितं गुग्गुलादिभिः॥ ३४॥

नात्युच्छ्रितं नातिनीचं चेलाजिनकुशोत्तरम्।
तत्रोपविश्य मेधावी पद्मासनसमन्वितः॥ ३५॥

ततः किमित्यत आह- प्राणायाममिति।
प्राणायामोचितमठलक्षणमाह- सुशोभनमिति॥ ३२-३४॥
योगिनो लक्षणमाह- तत्रेति॥ ३५॥

प्राणायामारम्भप्रकारः

ऋजुकायः प्राञ्जलिश्च प्रणमेदिष्टदेवताम्।

ततो दक्षिणहस्तस्य अङ्गुष्ठेनैव पिङ्गलाम्॥ ३६॥

निरुध्य पूरयेद्वायुमिडया तु शनैः शनैः।
यथाशक्त्यविरोधेन ततः कुर्याच्च कुम्भकम्॥ ३७॥

पुनस्त्यजेत् पिङ्गलया शनैरेव न वेगतः।
पुनः पिङ्गलयापूर्य पूरयेदुदरं शनैः॥ ३८॥

पृ। ३७१) धारयित्वा यथाशक्ति रेचयेदिडया शनैः।
यया त्यजेत् तयापूर्य धारयेदविरोधतः॥ ३९॥

योगारम्भसमये प्रणमेत्। ततः किमित्यत्र
प्राणायामानुष्ठानक्रममाह- तत इति॥ ३६-३९॥

मात्रानियमपूर्वकः प्राणायामः

जानु प्रदक्षिणीकृत्य न द्रुतं न विलम्बितम्।
अङ्गुलिस्फोटनं कुर्यात् सा मात्रा परिगीयते॥ ४०॥

इडया वायुमापूर्य शनैः षोडशमात्रया ।
कुम्भयेत् पूरितं पश्चाच्चतुःषष्ट्या तु मात्रया ॥ ४१ ॥

रेचयेत् पिङ्गलानाड्या द्वात्रिंशन्मात्रया पुनः ।
पुनः पिङ्गलयापूर्य पूर्ववत् सुसमाहितः ॥ ४२ ॥

प्रातर्माध्यंदिने सायमर्धरात्रे च कुम्भकान् ।
शनैरशीतिपर्यन्तं चतुर्वारं समभ्यसेत् ॥ ४३ ॥

सामान्यप्राणायामलक्षणमुक्त्वा अथ
मात्राकालप्रदर्शनपूर्वकं विशेषप्राणायामलक्षणमाह-
जान्विति ॥ ४०-४२ ॥ प्रत्यहं प्राणायामकालसंख्येयत्तामाह-
प्रातरिति ॥ ४३ ॥

आन्तरालिकफलं नाडीशुद्धिः तच्चिह्नानि च

एवं मासत्रयाभ्यासान्नाडीशुद्धिस्ततो भवेत् ।
यदा तु नाडीशुद्धिः स्यात् तदा चिह्नानि बाह्यतः ॥ ४४ ॥

प्।  ३७२) जायन्ते योगिनो देहे तानि वक्ष्याम्यशेषतः।
शरीरलघुता दीप्तिर्जाठराग्निविवर्धनम्॥ ४५॥

कृशत्वं च शरीरस्य तदा जायेत निश्चितम्।

एवमभ्यासान्तरालिकफलमाह- एवमिति। नाडीशुद्धिचिह्नानि
कानीत्यत आह- यदेति॥ ४४-४८॥

योगाभ्यासकाले आहारादिनियमः

योगविघ्नकराहारं वर्जयेद्योगवित्तमः॥ ४६॥

लवणं सर्षपं चाम्लमुष्णं रूक्षं च तीक्ष्णकम्।
शाकजातं रामठादि बह्निस्त्रीपथिसेवनम्॥ ४७॥

प्रातःस्नानोपवासादिकायक्लेशांश्च वर्जयेत्।
अभ्यासकाले प्रथमं शस्तं क्षीराज्यभोजनम्॥ ४८॥

गोधूममुद्गशाल्यन्नं योगवृद्धिकरं विदुः।

केवलकुम्भकसिद्धिः

ततः परं यथेष्टं तु शक्तः स्याद्वायुधारणे ॥ ४९ ॥

यथेष्टधारणाद्वायोः सिध्येत् केवलकुम्भकः ।
केवले कुम्भके सिद्धे रेचपूरविवर्जिते ॥ ५० ॥

न तस्य दुर्लभं किंचित् त्रिषु लोकेषु विद्यते ।

ततः किमित्यत्र आह- तत इति ॥ ४९ ॥ तेन किं स्यादित्यत आह-
यथेष्टेति ॥ ५० ॥

पृ। ३७३)

प्रस्वेदादिसिद्धयः

प्रस्वेदो जायते पूर्वं मर्दनं तेन कारयेत् ॥ ५१ ॥

ततोपि धारणाद्वायोः क्रमेणैव शनैः शनैः ।
कम्पो भवति देहस्य आसनस्थस्य देहिनः ॥ ५२ ॥

ततोधिकतराभ्यासात् दर्दरी स्वेन जायते ।
यदा च दर्दरो भाव उत्प्लुत्योत्प्लुत्य गच्छति ॥ ५३ ॥

पद्मासनस्थितो योगी तथा गच्छति भूतले ।
ततोधिकतराभ्यासाद्भूमित्यागश्च जायते ॥ ५४ ॥

पद्मासनस्थ एवासौ भूमिमुत्सृज्य गच्छति ।
अतिमानुषचेष्टादि तथा सामर्थ्यमुद्भवेत् ॥ ५५ ॥

न दर्शयेच्च सामर्थ्यं दर्शनं वीर्यवत्तरम् ।
स्वल्पं वा बहुधा दुःखं योगी न व्यथते तदा ॥ ५६ ॥

अल्पमूत्रपुरीषश्च स्वल्पनिद्रश्च जायते ।
कीलवो दूषिका लाला स्वेददुर्गन्धतानने ॥ ५७ ॥

एतानि सर्वथा तस्य न जायन्ते ततः परम् ।

ततोऽधिकतराभ्यासाद् बलमुत्पद्यते बहु ॥ ५८ ॥

येन भूचरसिद्धिः स्याद्भूचराणां जये क्षमः ।
व्याघ्रो वा शरभो वापि गजो गवय एव वा ॥ ५९ ॥

पृ। ३७४) सिंहो वा योगिना तेन म्रियन्ते हस्तताडिताः ।
कंदर्पस्य यथा रूपं तथा स्यादपि योगिनः ॥ ६० ॥

तद्रूपवशगा नार्यः काङ्क्षन्ते तस्य संगमम् ।
यदि सङ्गं करोत्येष तस्य बिन्दुक्षयो भवेत् ॥ ६१ ॥

वर्जयित्वा स्त्रियां सङ्गं कुर्यादभ्यासमादरात् ।
योगिनोऽङ्गे सुगन्धश्च जायते बिन्दुधारणात् ॥ ६२ ॥

पादार्धत्रिपादपूर्णाभ्यासतः प्रस्वेदाद्यतिमानुषचेष्टान्त-
सिद्धिरुदेति । तत्सिद्धिजालं सदा गोपयेदित्याह- प्रस्वेद इति ।
पादप्राणायामतः प्रस्वेदः ॥ ५१-५५ ॥ दुःखं प्राप्यापि ॥ ५६ ॥
एवमभ्यासं कुर्वतो योगिनो मानुषविकारराहित्यपूर्वकं महाबलं
सौन्दर्यं स्त्र्यादिपराङ्मुखत्वं स्वाङ्गदिव्यसुगन्धश्च जायत

इत्याह- अल्पेति । स्वदेहजकीलं संधिबन्धमुद्बध्नन्तीति कीलवो वायुबन्धाः । शरीरं दूषयति  कार्श्यभावं करोतीति दूषिका क्षयादि, नेत्रमलं वा । शिष्टं स्पष्टम् ॥ ५७ ॥ किंच- तत इति ॥ ५८ ॥ तत् कथम् ? व्याघ्र इति ॥ ५९-६२ ॥

योगप्रतिबन्धनाशाय प्रणवजपः आरम्भावस्था

ततो रहस्युपाविष्टः प्रणवं प्लुतमात्रया ।
जपेत् पूर्वार्जितानां तु पापानां नाशहेतवे ॥ ६३ ॥

सर्वविघ्नहरो मन्त्रः प्रणवः सर्वदोषहा ।
एवमभ्यासयोगेन सिद्धिरारम्भसंभवा ॥ ६४ ॥

प्। ३७५) यदि प्रतिबन्धकवशात् योगो न सिध्यति तदा तच्छान्त्यै प्रणवजपः कार्यः इत्याह- तत इति ॥ ६३ ॥ प्रस्वेदादिसुगन्धश्च जायते इत्यन्तसिद्धेरारब्धत्वादयमारम्भः इत्याह- एवमिति ॥ ६४ ॥

घटावस्था

ततो भवेद्धटावस्था पवनाभ्यासतत्परा।

प्राणोपानो मनो बुद्धिर्जीवात्मपरमात्मनोः॥ ६५॥

अन्योन्यस्याविरोधेन एकतां घटते यदा।

घटावस्थेति सा प्रोक्ता तच्चिह्नानि ब्रवीम्यहम्॥ ६६॥

पूर्वं यः कथितोभ्यासश्चतुर्थांशं परिग्रहेत्।

दिवा वा यदि वा सायमेककालं समभ्यसेत्॥ ६७॥

एकवारं प्रतिदिनं कुर्यात् केवलकुम्भकम्।

घटयोगमाह- तत इति॥ ६५-६७॥

प्रत्याहारलक्षणम्

इन्द्रियाणीन्द्रियार्थेभ्यो यत्प्रत्याहरणं स्फुटम्॥ ६८॥

योगी कुम्भकमास्थाय प्रत्याहारः स उच्यते।

प्रत्याहारस्वरूपमाह- इन्द्रियाणीति ॥ ६८ ॥

धारणास्वरूपम्

यद्यत् पश्यति चक्षुर्भ्यां तत्तदात्मेति भावयेत् ॥ ६९ ॥

यद्यच्छृणोति कर्णाभ्यां तत्तदात्मेति भावयेत् ।
लभते नासया यद्यत् तत्तदात्मेति भावयेत् ॥ ७० ॥

पृ। ३७६) जिह्वया यद्रसं ह्यत्ति तत्तदात्मेति भावयेत् ।
त्वचा यद्यत् स्पृशेद्योगी तत्तदात्मेति भावयेत् ॥ ७१ ॥

एवं ज्ञानेन्द्रियाणां तु तत्तदात्मनि धारयेत् ।

धारणालक्षणमाह- यद्यदिति ॥ ६९-७१ ॥
चक्षुरादीन्द्रियेन्द्रियार्थजातं स्वाज्ञदशायामब्रह्मतया विकल्पितं
स्वज्ञदशायां तत् ब्रह्मेति प्रतीचि धारयेदित्यर्थः ॥

धारणासिद्धयः तद्गोपनविधिश्च

याममात्रं प्रतिदिनं योगी यत्नादतन्द्रितः ॥ ७२ ॥

यथा वा चित्तसामर्थ्यं जायते योगिनो ध्रुवम् ।
दूरश्रुतिर्दूरदृष्टिः क्षणाद्दूरागमस्तथा ॥ ७३ ॥

वाक्सिद्धिः कामरूपत्वमदृश्यकरणी तथा ।
मलमूत्रप्रलेपेन लोहादेः स्वर्णता भवेत् ॥ ७४ ॥

खे गतिस्तस्य जायेत संतताभ्यासयोगतः ।
सदा बुद्धिमता भाव्यं योगिना योगसिद्धये ॥ ७५ ॥

एते विघ्ना महासिद्धेर्न रमेत् तेषु बुद्धिमान् ।
न दर्शयेत् स्वसामर्थ्यं यस्य कस्यापि योगिराट् ॥ ७६ ॥

यथा मूढो यथा मूर्खो यथा बधिर एव वा ।
तथा वर्तेत लोकस्य स्वसामर्थ्यस्य गुप्तये ॥ ७७ ॥

प् । ३७७) शिष्याश्च स्वस्वकार्येषु प्रार्थयन्ति न संशयः ।

तत्तत्कर्मकरव्यग्रः स्वाभ्यासे विस्मृतो भवेत् ॥ ७८ ॥

सर्वव्यापारमुत्सृज्य योगनिष्ठो भवेद्यतिः ।
अविस्मृत्य गुरोर्वाक्यमभ्यसेत् तदहर्निशम् ॥ ७९ ॥

एवं भवेत् घटावस्था संतताभ्यासयोगतः ।
अनभ्यासवतश्चैव वृथागोष्ठ्या न सिध्यति ॥ ८० ॥

तस्मात् सर्वप्रयत्नेन योगमेव सदाभ्यसेत् ।

ततः किं जायते इत्यत आह- याममात्रमिति ॥ ७२ ॥ किं तत् ?
दूरश्रुतिरिति ॥ ७३-७५ ॥ यतः स्वात्तसिद्धिप्रकटनाद्योगान्तरायो भवति
तस्मात् सिद्धिजालोपेक्षापूर्वकं स्वसामर्थ्यं गोपयन् योगमेवाभ्यसेत्
इत्याह- एत इति ॥ ७६-७७ ॥ तत्तत्कर्मकरव्यग्रः तत्तत्कर्मकरणे
व्यग्रचित्तो भवति । ततः स्वाभ्यासे ॥ ७८-७९ ॥ अभ्यासत एव इयं
घटावस्था सिध्यति नान्यथेत्याह- एवमिति ॥ ८० ॥

परिचयावस्था

ततः परिचयावस्था जायतेभ्यासयोगतः ॥ ८१ ॥

वायुः परिचितो यत्नादग्निना सह कुण्डलीम् ।
भावयित्वा सुषुम्नायां प्रविशेदनिरोधतः ॥ ८२ ॥

वायुना सह चित्तं च प्रविशेच्च महापथम् ।
यस्य चित्तं स्वपवनः सुषुम्नां प्रविशेदिह ॥ ८३ ॥

परिचयस्वरूपमाह- तत इति ॥ ८१ ॥ तत् कथम् ? वायुरिति ॥ ८२ ॥ महापथं सुषुम्नाद्वारमित्यर्थः । तथा सेयं परिचयावस्थेत्युच्यते ॥ ८३ ॥

पृ। ३७८)

पञ्चभूतमण्डलेषु पञ्चब्रह्मधारणानि

भूमिरापोनलो वायुराकाशश्चेति पञ्चकः ।
येषु पञ्चसु देवानां धारणा पञ्चधोच्यते ॥ ८४ ॥

पादादिजानुपर्यन्तं पृथिवीस्थानमुच्यते ।
पृथिवी चतुरश्रं च पीतवर्णं लवर्णकम् ॥ ८५ ॥

पार्थिवे वायुमारोप्य लकारेण समन्वितम् ।
ध्यायंश्चतुर्भुजाकारं चतुर्वक्त्रं हिरण्मयम् ॥ ८६ ॥

धारयेत् पञ्च घटिकाः पृथ्वीजयमाप्नुयात् ।
पृथिवीयोगतो मृत्युर्न भवेदस्य योगिनः ॥ ८७ ॥

आ जानोः पायुपर्यन्तमपां स्थानं प्रकीर्तितम् ।
अपोर्धचन्द्रं शुक्लं च वंबीजं परिकीर्तितम् ॥ ८८ ॥

वारुणे वायुमारोप्य वकारेण समन्वितम् ।
स्मरन् नारायणं देवं चतुर्बाहुं किरीटिनम् ॥ ८९ ॥

शुद्धस्फटिकसंकाशं पीतवाससमच्युतम् ।
धारयेत् पञ्च घटिकाः सर्वपापैः प्रमुच्यते ॥ ९० ॥

ततो जलाद्भयं नास्ति जले मृत्युर्न विद्यते ।

आ पायोर्हृदयान्तं च वह्निस्थानं प्रकीर्तितम् ॥ ९१ ॥

वह्निस्त्रिकोणं रक्तं च रेफाक्षरसमुद्भवम् ।
वह्नौ चानिलमारोप्य रेफाक्षरसमुज्ज्वलम् ॥ ९२ ॥

प्। ३७९) त्रियक्षं वरदं रुद्रं तरुणादित्यसंनिभम् ।
भस्मोद्धूलितसर्वाङ्गं सुप्रसन्नमनुस्मरन् ॥ ९३ ॥

धारयेत् पञ्च घटिका वह्निनासौ न दह्यते ।
न दह्यते शरीरं च प्रविष्टस्याग्निकुण्डके ॥ ९४ ॥

आ हृदयाद् भ्रुवोर्मध्यं वायुस्थानं प्रकीर्तितम् ।
वायुः षट्कोणकं कृष्णं यकाराक्षरभासुरम् ॥ ९५ ॥

मारुतं मरुतां स्थाने यकाराक्षरभासुरम् ।
धारयेत् तत्र सर्वज्ञमीश्वरं विश्वतोमुखम् ॥ ९६ ॥

धारयेत् पञ्च घठिका वायुवद्व्योमगो भवेत् ।
मरणं न तु वायोस्तु भयं भवति योगिनः ॥ ९७ ॥

आ भ्रूमध्यात्तु मूर्धान्तमाकाशस्थानमुच्यते।
व्योम वृत्तं च धूम्रं च हकाराक्षरभासुरम्॥ ९८॥

आकाशे वायुमारोप्य हकारोपरि शंकरम्।
बिन्दुरूपं महादेवं व्योमाकारं सदाशिवम्॥ ९९॥

शुद्धस्फटिकसंकाशं धृतबालेन्दुमौलिनम्।
पञ्चवक्त्रयुतं सौम्यं दशबाहुं त्रिलोचनम्॥ १००॥

सर्वायुधैर्धृताकारं सर्वभूषणभूषितम्।
उमार्धदेहं वरदं सर्वकारणकारणम्॥ १०१॥

आकाशधारणात् तस्य खेचरत्वं भवेद् ध्रुवम्।
यत्र कुत्र स्थितो वापि सुखमत्यन्तमश्नुते॥ १०२॥

प्। ३८०) एवं धारणाः पञ्च कुर्याद्योगी विचक्षणः।
ततो दृढशरीरः स्यान्मृत्युस्तस्य न विद्यते॥ १०३॥

ब्रह्मणः प्रलयेनापि न सीदति महामतिः।

ततः स्वावयवप्रविभक्तपञ्चभूतमण्डले
पञ्चब्रह्मधारणमाह- भूमिरिति। देवानां
ब्रह्मादिसदाशिवान्तानाम्॥ ८४॥ तत्रादौ पादादीति। पृथिवीशब्देन
पार्थिवमण्डलमुच्यते॥ ८५॥ ततः पार्थिवे॥ ८६-८७॥ अस्मण्डले
विष्णुध्यानं तत्फलं चाह- आ जानोरिति॥ ८८-९०॥ वह्निमण्डले
रुद्रध्यानं तत्फलं चाह- आ पायोरिति॥ ९१-९४॥ वायुमण्डले
ईश्वरध्यानं तत्फलं चाह- आ हृदयादिति॥ ९५-९७॥
आकाशमण्डले सदाशिवध्यानं तत्फलं चाह- आ भ्रूमध्यादिति
॥ ९८-१०३॥

सगुणध्यानम्

समभ्यसेत् तथा ध्यानं घटिकाषष्टिमेव च॥ १०४॥

वायुं निरुध्य चाकाशे देवतामिष्टदामिति।
सगुणध्यानमेतत् स्यादणिमादिगुणप्रदम्।

सगुणनिर्गुणभेदेन द्विप्रकारं ध्यानमाह- समभ्यसेदिति

॥ १०४ ॥

निर्गुणध्यानतः समाधिसिद्धिः

निर्गुणध्यानयुक्तस्य समाधिश्च ततो भवेत् ॥ १०५ ॥

दिनद्वादशकेनैव समाधिं समवाप्नुयात् ।
वायुं निरुध्य मेधावी जीवन्मुक्तो भवत्ययम् ॥ १०६ ॥

समाधिः समतावस्था जीवात्मपरमात्मनोः ।

प्। ३८१) ब्रह्मातिरिक्तं न किंचिदस्तीति तत्स्वरूपेणावस्थानं समाधिरित्यर्थः ॥ १०५ ॥ तथाविधं दिनद्वादकेनैव ॥ १०६ ॥ समाधिशब्दं व्युत्पादयति- समाधिरिति । जीवात्मपरमात्मनोः वाच्यार्थवैषम्यत्यागपूर्वकं तयोः लक्ष्यरूपेण समतावस्थैव समाधिरित्यर्थः ॥

सिद्धयोगस्य स्वेच्छया देहत्यागात्यागौ

यदि स्वदेहमुत्स्रष्टुमिच्छा चेदुत्सृजेत् स्वयम् ॥ १०७ ॥

परब्रह्मणि लीयेत न तस्योत्क्रान्तिरिष्यते ।
अथ नो चेत् समुत्स्रष्टुं स्वशरीरं प्रियं यदि ॥ १०८ ॥

सर्वलोकेषु विहरन्नणिमादिगुणान्वितः ।
कदाचित् स्वेच्छया देवो भूत्वा स्वर्गे महीयते ॥ १०९ ॥

मनुष्यो वापि यक्षो वा स्वेच्छयापि क्षणाद्भवेत् ।
सिंहो व्याघ्रो गजो वाश्वः स्वेच्छया बहुतामियात् ॥ ११० ॥

यथेष्टमेव वर्तेत योगी यद्वा महेश्वरः ।
अभ्यासभेदतो भेदः फलं तु सममेव हि ॥ १११ ॥

यः स्वातिरेकेणाभासतोपि शरीरत्रयमस्तीति मन्यते सोयं योगी तत् त्यक्त्वा परब्रह्मणि लीयते । यद्येवं नहि त्यक्तुमिच्छति विचित्रशक्तिं प्रकटयन् आभूतसंप्लवम् अस्मिन् लोके विहरेदित्याह- यदीति ॥ १०७-११० ॥ अभ्यासतत्फलभेदेन भिद्यते । तत्रान्तरालिकफलनिरपेक्षस्य

मुख्यफलं कैवल्यं सममेवेत्यर्थः ॥ १११ ॥

प्.। ३८२)

महाबन्धलक्षणम्

पार्ष्णिं वामस्य पादस्य योनिस्थाने नियोजयेत्।
प्रसार्य दक्षिणं पादं हस्ताभ्यां धारयेद् दृढम्॥ ११२ ॥

चुबुकं हृदि विन्यस्य पूरयेद्वायुना पुनः।
कुम्भकेन यथाशक्त्या धारयित्वा तु रेचयेत्॥ ११३ ॥

वामाङ्गेन समभ्यस्य दक्षाङ्गेन समभ्यसेत्।
प्रसारितस्तु यः पादस्तमुरूपरि मानयेत्॥ ११४ ॥

अयमेव महाबन्ध उभयत्रैवमभ्यसेत्।

महामुद्रालक्षणं अन्यत्राम्नायते-

वक्षोन्यस्तहनुर्निपीड्य सुषिरं योनेश्च वामाङ्घ्रिणा

हस्ताभ्यामनुधारयन् प्रसरितं पादं तथा दक्षिणम् ।
आपूर्य श्वसनेन कुक्षियुगलं मूर्ध्नि स्थितं धारये-
देषा पातकनाशनी ननु महामुद्रा नृणां प्रोच्यते ॥

इति । महाबन्धलक्षणमाह- पार्ष्णिमिति ॥ ११२-११३ ॥ मानयेत्
समर्पयेत् आरोपयेदित्यर्थः ॥ ११४ ॥ अभ्यसेत् वामाङ्गवत्
दक्षाङ्गेपीत्यर्थः ।

महावेधलक्षणम्

महाबन्धस्थितो योगी कृत्वा पूरकमेकधीः ॥ ११५ ॥

वायूनां गतिमावृत्य निभृतं कण्ठमुद्रया ।
पुटद्वयं समाक्रम्य वायुः स्फुरति सत्वरम् ॥ ११६ ॥

अयमेव महावेधः सिद्धैरभ्यस्यतेनिशम् ।

प् । ३८३) वेधस्वरूपमाह- महाबन्धेति ॥ ११५ ॥
उच्छ्वासनिश्वासरेचकपूरकवायूनां गतिम् आवृत्य आच्छाद्य

कण्ठमुद्रया जालंधरबन्धेन निरुध्य ततः प्राणवायुः
इडापिङ्गलापुटद्वयं सम्यगाक्रम्य अतिक्रम्य सत्वरं सुषुम्नायां
स्फुरतीति यत् अयमेव ॥ ११६ ॥

खेचरीस्वरूपम्

अन्तः कपालकुहरे जिह्वां व्यावृत्य धारयेत् ॥ ११७ ॥

भ्रूमध्यदृष्टिरप्येषा मुद्रा भवति खेचरी ।

खेचरीस्वरूपमाह- अन्तरिति ॥ ११७ ॥

बन्धत्रयस्वरूपं तत्फलं च

कण्ठमाकुञ्च्य हृदये स्थापयेद् दृढया धिया ॥ ११८ ॥

बन्धो जालंधराख्योयं मृत्युमातङ्गकेसरी ।
बन्धो येन सुषुम्नायां प्राणस्तूड्डीयते यतः ॥ ११९ ॥

उड्याणाख्यो हि बन्धोयं योगिभिः समुदाहृतः।
पार्ष्णिभागेन संपीड्य योनिमाकुञ्चयेद् दृढम्॥ १२०॥

अपानमूर्ध्वमुत्थाप्य योनिबन्धोयमुच्यते।
प्राणापानौ नादबिन्दू मूलबन्धेन चैकताम्॥ १२१॥

गत्वा योगस्य संसिद्धिं यच्छतो नात्र संशयः।

बन्धत्रयस्वरूपं तत्फलं चाह- कण्ठमिति॥ ११८-१२१॥

पृ। ३८४)

विपरीतकरणीलक्षणं तत्फलं च

करणी विपरीताख्या सर्वाधिव्याधिनाशिनी॥ १२२॥

नित्यमभ्यासयुक्तस्य जाठराग्निविवर्धनी।
आहारा बहवस्तस्य संपाद्याः साधकस्य च॥ १२३॥

अल्पाहारा यदि भवेदग्निर्देहं हरेत् क्षणात् ।
अधःशिरश्चोर्ध्वपादः क्षणं स्यात् प्रथमे दिने ॥ १२४ ॥

क्षणाच्च किंचिदधिकमभ्यसेच्च दिने दिने ।
वली च पलितं चैव षण्मासार्धान्न दृश्यते ॥ १२५ ॥

याममात्रं तु यो नित्यमभ्यसेत् स तु कालजित् ।

विपरीतकरणीं तत्फलं चाह- करणीति ॥ १२२-१२३ ॥
स्वस्थितिविपरीतं क्रियत इति विपरीतकरणी । तदेव प्रपञ्चयति- अध इति ॥
१२४-१२५ ॥

वज्रोलीस्वरूपम्

वज्रोलीमभ्यसेद्यस्तु स योगी सिद्धिभाजनम् ॥ १२६ ॥

लभ्यते यदि तस्यैव योगसिद्धिः करे स्थिता ।
अतीतानागतं वेत्ति खेचरी च भवेद् ध्रुवम् ॥ १२७ ॥

वज्रोल्यादिस्वरूपं तत्फलं चाह- वज्रोलीमिति। किं नाम वज्रोली ? कांस्यपात्रे गोक्षीरं निक्षिप्य वज्रोलीतुल्यलिङ्गनालेन ग्रसित्वा पुनर्विरेच्य

प्। ३८५) पुनर्ग्रसनादिकमभ्यस्याथ स्त्रीयोनिमण्डले रेतो विसृज्य तच्छोणितेन साकं ग्रसेदिति यत् सैव वज्रोलीत्युच्यते। यस्तामभ्यस्यति स तु सिद्धो भवतीत्याह- लभ्यत इति। सोयं योगी अतीतानागतं वेत्ति। तस्यैव खेचरी॥ १२६-१२७॥

अमरोलीस्वरूपम्

अमरीं यः पिबेन्नित्यं नस्यं कुर्वन् दिने दिने।
वज्रोलीमभ्यसेन्नित्यममरोलीति कथ्यते॥ १२८॥

अमरोलीस्वरूपमाह- अमरीमिति। अमरीशब्देन मूत्रमुच्यते। तत्र प्रथमान्त्यधारे विहाय मध्यधारां हस्ते पात्रे वा गृहीत्वा योयं योगी तत्त्रिभागं दिने दिने पिबन् नासापुटयोः नस्यं कुर्वन् नित्यं वज्रोलीमभ्यसेत् इति यत् सैव अमरोलीति कथ्यते। तथा च हठयोगतन्त्रे अभिहितम्-

पित्तोल्बणात्वात् प्रथमां च धारां
विहाय निःसारतयान्त्यधाराम्।
निषेव्यते शीतलमध्यधारा
वज्रोलिसिद्धैरमरोलिसिद्ध्यै ॥

इति। एवममरोलीसिद्धस्यामरीपाननस्यं विना या सिद्धिरुदेति सैव सहजोलीत्युच्यते ॥ १२८ ॥

राजयोगनिष्पत्तिः

ततो भवेद्राजयोगो नान्तरा भवति ध्रुवम्।
यदा तु राजयोगेन निष्पन्ना योगिभिः क्रियाः ॥ १२९ ॥

तदा विवेकवैराग्यं जायते योगिनो ध्रुवम्।
विष्णुर्नाम महायोगी महाभूतो महातपाः ॥ १३० ॥

तत्त्वमार्गे यथा दीपो दृश्यते पुरुषोत्तमः।

प्। ३८६) राजयोगस्वरूपमाह- तत इति। न हि

विंशत्यवयवहठाभ्यासमन्तरा राजयोगो भवतीत्यर्थः ॥ १२९॥
हठयोगसिद्धोयं राजयोगः योगराजत्वात्। तत्रैव हि भगवान्
दृश्यते इत्याह- विष्णुरिति। क्षराक्षरकलनाविरलपुरुषोत्तमतत्त्वस्य
सोहमस्मीति राजयोगेनैव लक्षिततत्वात्॥ १३० ॥

वैराग्यहेतुनिरूपणम्

यः स्तनः पूर्वपीतस्तं निष्पीड्य मुदमश्नुते ॥ १३१ ॥

यस्माज्जातो भगात् पूर्वं तस्मिन्नेव भगे रमन्।
या माता सा पुनर्भार्या या भार्या मातरेव हि ॥ १३२ ॥

यः पिता स पुनः पुत्रो यः पुत्रः स पुनः पिता।
एवं संसारचक्रेण कूपचक्रे धटा इव ॥ १३३ ॥

भ्रमन्तो योनिजन्मानि श्रुत्वा लोकान् समश्नुते।

पुरुषोत्तमत्वातिरिक्तदारादिबाह्यवैराग्यहेतवे इदमाम्नायते-
यः स्तन इति। तं तादृशमित्यर्थः॥ १३१ ॥ तस्मिन्नेव तथाविधे भगे

रमन् रममाणो मुदमश्नुते। अस्मिन् जन्मनि या माता सा पुनः भवान्तरे भार्या भवति, या भार्या सा भवान्तरे मातैव भवतीत्याह- या मातेति। मातरेव मातैवेत्यर्थः॥ १३२॥ एवं पुरुषोत्तमतत्त्वातिरिक्तं किंचिदप्यस्तीति पश्यन्तः कूपचक्रे धटा इव- संसारचक्रेणेति तृतीया सप्तम्यर्था- संसारचक्रे॥ १३३॥ परिभ्रमन्तो नानायोनिषु जन्ममृती भजन्ते। यतः एवं अतः ब्रह्मैव सर्वम् ब्रह्मातिरिक्तं न किंचिदस्ति इति श्रुत्याचार्यमुखतः श्रुत्वा मुमुक्षुरुत्तमलोकान् ब्रह्माद्यावासभूतान् समश्नुते। यावद्ब्रह्मोपाधि तावदुषित्वा तेन साकं कैवल्यं लभन्ते॥

प्। ३८७)

हृत्पद्मे प्रणवोपासनम्

त्रयो लोकास्त्रयो वेदास्तिस्त्रः संध्यास्त्रयः स्वराः॥ १३४॥

त्रयोग्नयश्च त्रिगुणाः स्थिताः सर्वे त्रयाक्षरे।
त्रयाणामक्षराणां च योधीतेप्यर्धमक्षरम्॥ १३५॥

तेन सर्वमिदं प्रोतं तत् सत्यं तत् परं पदम्।

पुष्पमध्ये यथा गन्धः पयोमध्ये यथा घृतम्॥ १३६॥

तिलमध्ये यथा तैलं पाषाणेष्विव काञ्चनम्।

हृदि स्थाने स्थितं पद्मं तस्य वक्त्रमधोमुखम्॥ १३७॥

ऊर्ध्वनालमधोबिन्दुस्तस्य मध्ये स्थितं मनः।

अकारे रेचितं पद्ममुकारेणैव भिद्यते॥ १३८॥

मकारे लभते नादमर्धमात्रा तु निश्चला।

शुद्धस्फटिकसंकाशं निष्कलं पापनाशनम्॥ १३९॥

लभते योगयुक्तात्मा पुरुषस्तत्परं पदम्।

तदुपायत्वेन परापरब्रह्मगोचराकारादिमात्राचतुष्टय-

विशिष्टप्रणवोपासनामाचष्टे- त्रय इति।

प्रणवावयवाकारादित्र्यक्षरे क्रमेण भूरादयः त्रयो लोकाः,

ऋगादयः त्रयो वेदाः, प्रातःसंध्यादिसंध्याः तिस्रः,

अकारोकारमकारभेदेन त्रयः स्वराः॥ १३४॥ गार्हपत्यादिभेदेन

अग्नयः त्रयः, सत्त्वादित्रिगुणाश्च सर्वे स्थिताः प्रतिष्ठिता इत्यर्थः।
अकारादित्रयाणामक्षराणां तदारोपाधिकरणविश्वविराडोत्रादि-
प्राज्ञबीजानुज्ञैकरसान्तानां सविशेषत्वेपि लोकत्रयादित्रिगुणान्ता-
श्रयाकारादिमात्रात्रयतदध्यक्षापवादाधिकरणार्धमात्रा-
सङ्गमर्धमक्षरं तुर्यचैतन्यं ब्रह्मास्मीति योधीते
श्रुत्याचार्यमुखतो जानाति॥ १३५॥ तेन तुर्यभावमापन्नेन

प्।३८८) योगिना सर्वमिदं प्रपञ्चजातं प्रोतम् अहमेवेदं सर्वमिति
व्याप्तम्। यद्व्याप्यसापेक्षव्यापकतापह्नवसिद्धं तत् सत्यम्। यत्
सत्तामात्रं तदेव परं निरतिशयं स्वावशेषतया पद्यत इति पदं
ब्रह्ममात्रमवशिष्यत इत्यर्थः। कथं पुनः तुर्यस्य
सर्वप्रोतत्वमित्यत्र दृष्टान्तचतुष्टयमाचष्टे- पुष्पेति॥ १३६॥
यथा हेमनिमिल[बिड]शिलायां निर्विशेषतया काञ्चनं तत्
सर्वं व्याप्य वर्तते तथा इत्यर्थः। यदेवं व्यापकचैतन्यं
तदुपलब्धिस्थाननिर्देशपूर्वकं तत्स्वरूपं तज्ज्ञानफलं च
विशदयति- हृदिस्थान इति। हृदिस्थाने उरोभागे
कदलीपुष्पवदूर्ध्व-नालं अधोवक्त्रं हृत्पद्मं स्थितं भवति
॥ १३७॥ तदधोभागे बिन्द्वव्याकृताकाशं विद्यते। तस्य मध्ये मन-
उपलक्षैतं लिङ्गशरीरं वर्तते। तत्र

तद्वृत्तिसहस्रभावाभावप्रकाशकतया प्रत्यक्चैतन्यं स्थित भवति ।
तदूर्ध्वनयनार्थं विकसनार्थं तद्गतचैतन्यसाक्षात्कारार्थं
चोपायमाह- अकार इति । अकारे विश्वविराडोतृचैतन्ये साक्षात्कृते
सति हृत्पद्ममूर्ध्वमुखतया रेचितम् उत्थितं भवति ।
उकारतदध्यक्षतैजससूत्रानुज्ञातृचैतन्य-साक्षात्कारेण तत्
पद्मं भिद्यते विकासमेति ॥ १३८ ॥
मकारतदध्यक्षप्राज्ञबीजानुज्ञैकरसचैतन्ये साक्षात्कृते सति
नादमीश्वरतत्त्वं तदात्मकप्रणवनादो विजृम्भते ।
अकारादिमात्रात्रयप्रपञ्चपर्यवसानार्धमात्रा तु
द्वितुर्याविकल्पाधिष्ठिता निश्चला भवति । तत्र यदुपलभ्यते
यदनुसंधानतः पुण्यपापजालं नश्यति तत्
शुद्धस्फटिकसंकाशं पापनाशनं वस्तुतो निष्प्रतियोगिकनिष्कलं
यत् स्वमात्रमवशिष्यते ॥ १३९ ॥ यथोक्तयोगयुक्तात्मा पुरुषः तत् परं
पदं लभते कृतकृत्यो भवतीत्यर्थः ॥

सर्वकरणव्यापारोपरतिः आत्मावगत्युपायः

कूर्मः स्वपाणिपादादिशिरश्चात्मनि धारयेत् ॥ १४० ॥

एवं द्वारेषु सर्वेषु वायुपूरितरेचितः ।
निषिद्धे तु नवद्वारे ऊर्ध्वं प्राङ् निःश्वासस्तथा ॥ १४१ ॥

प्।३८९) घटमध्ये यथा दीपो निवातं कुम्भकं विदुः ।
निषिद्धैर्नवभिद्वारैर्निर्जने निरुपद्रवे ॥ १४२ ॥

निश्चितं त्वात्ममात्रेणावशिष्टं योगसेवया ॥

इत्युपनिषत् ॥

तदवगत्युपायस्तु सर्वकरणव्यापृत्युपरतिरेवेत्याह- कूर्म
इति । यथा कूर्मः स्वाङ्गान्युपसंहृत्य शिलावत् वर्तते ॥ १४० ॥ एवं
योगी नवद्वारेषु सर्वेषु नाडीद्वारेषु च वायुपूरितरेचितः
पूरकरेचकावस्थायां वायुना पूरितरेचितनाडीसुषिरावच्छिन्ननिर्-
व्यापारदेहविशिष्टो भवेत् । रेचकपूरकादिव्यापारं विना
सुषुम्नामार्गेण ऊर्ध्वनिःश्वासो भवेदित्याह- निषिद्ध इति ।
नवद्वारे निषिद्धे निरुद्धे सत्यथ सुषुम्नायाः प्राक् पूर्वद्वारं
मूलाधारस्थं भित्त्वा अथोर्ध्वं निःश्वासः निर्गतश्वासव्यापारो
भवेत्, केवलकुम्भकेन तिष्ठेदित्यर्थः ॥ १४१ ॥

कुम्भकलक्षणमाह घटमध्य इति । एवं केवलकुम्भकयोगेन

आत्मतत्त्वमवगम्य कृतार्थो भवेदित्युपसंहरति- निषिद्धैरिति ।

स्वस्वव्यापृतिनिषिद्धैः निरुद्धैः नवद्वारैः विशिष्टदेहो योगी निर्जने

निरुपद्रवे प्रदेशे सिद्धाद्यासनमास्थाय ॥ १४२ ॥ निर्विकल्पकयोगसेवया

कैवल्यनाडीं भित्त्वा तत्र आत्ममात्रेणावशिष्टमिति तत्त्वज्ञानेन

निश्चितं विकलेबरकैवल्यं भजेदिति शेषः । तुशब्दोवधारणार्थः ।

इत्युपनिषच्छब्दौ योगतत्त्वोपनिषत्समाप्त्यर्थौ ॥

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना ।

लिखितं स्याद्विवरणं योगतत्त्वस्य सुस्फुटम् ॥

योगतत्त्वविवरणं षष्ट्युत्तरशतद्वयम् ॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे

एकचत्वारिंशत्संख्यापूरकं योगतत्त्वोपनिषद्विवरणं संपूर्णम्

रह्मानन्द्

रिन्तेद् इन् ओम्बय् इन् १८८२

॥ श्रीः ॥

हठयोगप्रदीपिका।

सा च

सहजानंदसंतानचिंतामणिस्वात्मारामयोगीन्द्रविरचिता

ब्रह्मानन्दकृतज्योत्स्नाऽभिधया टीकया समलंकृता

दध्यङ्कुलोत्पन्नजटाशंकरात्मजश्रीधरकृतया

मनोऽभिलाषि *? भाषाव्याख्ययोपेता।

मुम्ब-ईनगरे

निर्णयसागरसमाख्ये मुद्रणमंत्रालये

वेद् ४ विय० द्वसु ८ वसुधा १ प्रमिते शालीवाहनशके १८०४

सवा-ईजयपुरनिवासिना दध्यङ्कुलोत्पन्नेन ज्योतिर्विदा
श्रीधरेण

खंडूभा-ईनागरभा-ईदेसा-ईसाहाय्येन मुद्रापयित्वा
प्रकाशिता ।

इमां च १८६७ संख्याकराजनियमस्य २५ संख्यांशानुसारेण
लेखारूढां कृत्वा ग्रंथकर्त्रा सर्वेऽधिकाराः
स्वाधीनाः स्थापिताः ।

मौल्यं सार्धं रूप्यकद्वयम् ॥ २ ॥

॥ श्रीः ॥

॥ हठयोगप्रदीपिका ॥

॥ टीकाभाषाभ्यां समेता ॥

प्रथमोपदेशः ।

॥ मूल ॥

श्री-आदिनाथाय नमोऽस्तु तस्मै येनोपदिष्टा हठयोगविद्या ॥
विभ्राजते प्रोन्नतराजयोगमारोढुमिच्छोरधिरोहिणीव ॥ १ ॥

॥ टीका ॥

श्रीगणेशाय नमः ॥

गुरुं नत्वा शिवं साक्षाद्ब्रह्मानंदेन तन्यते ॥
हठप्रदीपिकाज्योत्स्ना योगमार्गप्रकाशिका ॥ १ ॥

इदानींतनानां सुबोधार्थमस्याः सुविज्ञाय
गोरक्षसिद्धांतहार्दम् । मया
मेरुशास्त्रिप्रमुख्याभियोगात्स्फुटं कथ्यतेऽत्यंतगूढोपि
भावः ॥ २ ॥

मुमुक्षुजनहितार्थं राजयोगद्वारा कैवल्यफलां
हठप्रदीपिकां विधित्सुः परमकारुणिकः
स्वात्मारामयोगींद्रस्तत्प्रत्यूहनिवृत्तये
हठयोगप्रवर्तकश्रीमदादिनाथनमस्कारलक्षणं मंगलं

तावदाचरति ॥ श्री-आदिनाथायेत्यादिना ॥ तस्मै
श्री-आदिनाथाय नमोस्त्वित्यन्वयः। आदिश्चासौ नाथश्च
आदिनाथः सर्वेश्वरः शिव इत्यर्थः। श्रीमान् आदिनाथः
तस्मै शी-आदिनाथाय। श्रीशब्द आदिर्यस्य सः श्री-आदिः
श्री-आदिश्चासौ नाथश्च श्री-आदिनाथः तस्मै
श्री-आदिनाथाय। श्रीनाथाय विष्णव इति वार्थः।
श्री-आदिनाथायेत्यत्र यणाभावस्तु। अपि मासमघं
कुर्याच्छंदोभंगं त्यजेद्गिरामिति छंदोविदां
संप्रदायादुच्चारणसौष्ठवाच्चेति बोध्यं। वस्तुतस्तु
असंहितपाठस्वीकारोपक्षया श्री-आदिनाथायेति
पाठस्वीकारेऽप्रवृत्तनित्यविध्युद्देश्यतावच्छेदकानाक्रांतत्व्
एन

p. 2)

॥ मूल ॥

प्रणम्य श्रीगुरुं नाथं स्वात्मारामेण योगिना ॥ केवलं
राजयोगाय हठविद्योपदिश्यते ॥ २ ॥

॥ टीका ॥

परिनिष्ठितत्वसंभवात्

संप्रत्युदात्हृतदृष्टांतद्वयस्यापीदृग्विषयवैषम्यान्नित्यस्
आहित्य-भंगजनितदोषस्य
शाब्दिकाननुमतत्वाच्चासंमृष्टविधेयांशतारूपदोषस्य
साहित्यकारैरुक्तत्वेऽपि क्वचित्तैरपि स्वीकृतत्वेन
शाब्दिकाचार्यैरेकाजित्यादौ कर्मधारयस्वीकारेण
सर्वथानादृतत्वाच्च लाघवातिशय इति सुधियो विभावयंतु।
नमः प्रव्हीभावोऽस्तु। प्रार्थनायां लोट्। तस्मै कस्मै
इत्यपेक्षायामाह ॥ येनेति ॥ येन आदिनाथेन उपदिष्टा
गिरिजायै हठयोगविद्या हश्च ठश्च हठौ सूर्यचंद्रौ
तयोर्योगो हठयोगः एतेन हठशब्दवाच्ययोः
सूर्यचंद्राख्ययोः प्राणापानयोरैक्यलक्षणः प्राणायामो
हठयोग इति हठयोगस्य लक्षणं सिद्धं। तथाचोक्तं
गोरक्षनाथेन सिद्धसिद्धांतपद्धतौ। हकारः कीर्तितः
सूर्यष्ठकारश्चंद्र उच्यते।
सूर्याचंद्रमसोर्योगाद्धठयोगो निगद्यत इति। तत्प्रतिपादिका
विद्या हठयोगविद्या हठयोगशास्त्रमिति यावत्। गिरिजायै
आदिनाथकृतो हठविद्योपदेशो महाकालयोगशास्त्रादौ
प्रसिद्धः। प्रकर्षेण उन्नतः प्रोन्नतः
मंत्रयोगहठयोगादीनामधरभूमिनामुत्तरभूमित्वाद्राजयोगस्
य प्रोन्नतत्वं। राजयोगश्च
सर्ववृत्तिनिरोधलक्षणोऽसंप्रज्ञातयोगः।
तमिच्छोर्मुमुक्षोरधिरोहिणीव। अधिरुह्यतेऽनयेत्यधिरोहिणी

निःश्रेणीव विभ्राजते विशेषेण भ्राजते शोभते। यथा प्रोन्नतसौधमारोढुमिच्छोरधिरोहिण्यनायासेन सौधप्रापिका भवति एवं हठदीपिकापि प्रोन्नतराजयोगमारोढुमिच्छोरनायासेन राजयोगप्रापिका भवतीति। उपमालंकारः। इंद्रवज्राख्यं वृत्तम्॥ १॥

एवं परमगुरुनमस्कारलक्षणं मंगलं कृत्वा विघ्नबाहुल्ये मंगलबाहुल्यस्याप्यपेक्षितत्वात्स्वगुरुनमस्कारात्मकं

p. 3)

॥ मूल॥

भ्रांत्या बहुमतध्वांते राजयोगमजानताम्॥

॥ टीका॥

मंगलमाचरन्नस्य ग्रंथस्य विषयप्रयोजनादीन्प्रदर्शयति। श्रीमंतं गुरुं श्रीगुरुं नाथं श्रीगुरुनाथं स्वगुरुमिति यावत्। प्रणम्य प्रकर्षेण भक्तिपूर्वकं नत्वा स्वात्मारामेण योगिना योगोऽस्यास्तीति तेन। केवलं राजयोगाय केवलं राजयोगार्थं हठविद्योपदिश्यत इत्यन्वयः। हठविद्याया राजयोग एव मुख्यं फलं न सिद्धय इति केवलपदस्याभिप्रायः

। सिद्धयस्त्वानुषंगिक्यः। एतेन राजयोगफलसहितो हठयोगोऽस्य ग्रंथस्य विषयः। राजयोगद्वारा कैवल्यं चास्य फलं। तत्कामश्चाधिकारी। ग्रंथविषययोः प्रतिपाद्यप्रतिपादकभावः संबंधः। ग्रंथस्य कैवल्यस्य च प्रयोज्यप्रयोजकभावः संबंधः। ग्रंथाभिधेयस्य सफलयोगस्य कैवल्यस्य च साध्यसाधनभावः संबंध इत्युक्तम्॥ २॥

ननु मंत्रयोगसगुणध्याननिर्गुणध्यानमुद्रादिभिरेव राजयोगसिद्धौ किं हठविद्योपदेशेनेत्याशंक्य व्युत्थितचित्तानां मंत्रयोगादिभी राजयोगासिद्धेर्हठयोगादेव राजयोगसिद्धिं वदन् ग्रंथं प्रतिजानीते॥ भ्रांत्येति॥ मंत्रयोगादिबहुमतरूपे ध्वांते गाढांधकारे या भ्रांतिर्भ्रमस्तया। तैस्तैरुपायै राजयोगार्थं प्रवृत्तस्य तत्रतत्र तदलाभात्। वक्ष्यति च। विनाराजयोग इत्यादिना। तथा राजयोगं अजानतां न जानंतीऽत्यजानंतः तेषां अजानतां पुंसां राजयोगज्ञानमिति शेषः। करोतीति करः कृपायाः करः कृपाकरः कृपाया आकर इति वा तादृशः। अनेन हठप्रदीपिकाकरणे अज्ञानुकंपैव हेतुरित्युक्तं। स्वात्मन्यारमते इति स्वात्मारामः हठस्य हठयोगस्य प्रदीपिकेव प्रकाशकत्वात् हठप्रदीपिका तां। अथवा हठ एव प्रदीपिका राजयोगप्रकाशकत्वात् तां धत्ते विधत्ते

करोतीति यावत्। स्वात्माराम इत्यनेन ज्ञानस्य सप्तमभूमिकां

प्राप्तो

p. 4)

॥ मूल ॥

हठप्रदीपिकां धत्ते स्वात्मारामः कृपाकरः॥ ३॥

॥ टीका ॥

ब्रह्मविद्वरिष्ठ इत्युक्तं। तथा च श्रुतिः। आत्मक्रीड

आत्मरतिः क्रियावानेष ब्रह्मविदां वरिष्ठ इति। सप्त

भूमयश्चोक्ता योगवासिष्ठे। ज्ञानभूमिः शुभेच्छाख्या

प्रथमा समुदाहृता। विचारणा द्वितीया स्यात्तृतीया

तनुमानसा। सत्वापत्तिश्चतुर्थी स्यात्ततोऽसंसक्तिनामिका।

परार्थाभाविनी षष्ठी सप्तमी तुर्यगा स्मृता। अस्यार्थः।

शुभेच्छा इत्याख्या यस्याः सा शुभेच्छाख्या।

विवेकवैराग्ययुता शमादिपूर्विका तीव्रमुमुक्षा प्रथमा

ज्ञानस्य भूमिः भूमिका उदाहृता कथिता योगिभिरिति शेषः

॥ १॥

विचारणा श्रवणमननात्मिका द्वितीया ज्ञानभूमिः स्यात्॥ २

॥

अनेकार्थग्राहकं मनो यदाऽनेकार्थान्परित्यज्य सदेकार्थवृत्तिप्रवाहवद्भवति तदा तनु मानसें यस्यां सा तनुमानसा निदिध्यासनरूपा तृतीया ज्ञानभूमिः स्यादिति शेषः ॥ ३ ॥

इमास्तिस्त्रः साधनभूमिकाः। आसु भूमिषु साधक इत्युच्यते। तिसृभिर्भूमिकाभिः शुद्धसत्वेंऽतःकरणेऽहं ब्रह्माऽस्मीत्याकारिकाऽपरोक्षवृत्तिरूपा सत्वापत्तिनामिका चतुर्थी ज्ञानभूमिः स्यात्। चतुर्थीयं फलभूमिः। अस्यां योगी ब्रह्मविदित्युच्यते। इयं संप्रज्ञातयोगभूमिका ॥ ४ ॥

वक्ष्यमाणास्तिस्त्रोऽसंप्रज्ञातयोगभूमयः। सत्वापत्तेरनंतरा सत्वापत्तिसंज्ञिकायां भूमावुपस्थितासु सिद्धिषु असंसक्तस्यासंसक्तिनामिका पंचमी ज्ञानभूमिः स्यात्। अस्यां योगी स्वयमेव व्युत्तिष्ठते। एतां भूमिं प्राप्तो ब्रह्मविद्वर इत्युच्यते ॥ ५ ॥

परब्रह्मातिरिक्तमर्थं न भावयति यस्यां सा परार्थाभाविनी षष्ठी ज्ञानभूमिः स्यात्। अस्यां योगी परप्रबोधित एव व्युत्थितो भवति। एतां प्राप्तो

ब्रह्मविद्वरीयानित्युच्यते ॥ ६ ॥

तुर्यगा नाम सप्तमी भूमिः स्मृता । अस्यां योगी स्वतः परतो
वा न व्युत्थानं प्राप्नोति । एतां प्राप्तो ब्रह्मविद्वरिष्ठ
इत्युच्यते । तत्र प्रमाणभूता श्रुतिरत्रैवोक्ता । पूर्वमयमेव
जीवन्मुक्त इत्युच्यते स एवाऽत्र स्वात्मारामपदेनोक्त इत्यलं
बहूक्तेन ॥ ३ ॥

p. 5)

॥ मूल ॥

हठविद्यां हि मत्स्येंद्रगोरक्षाद्या विजानते ॥
स्वात्मारामोऽथवा योगी जानीते तत्प्रसादतः ॥ ४ ॥

॥ टीका ॥

महत्सेवितत्वाद्धठविद्यां प्रशंसन्स्वस्यापि
महत्सकाशाद्धठविद्यालाभाद्गौरवं द्योतयति ॥
हठविद्यां हीति ॥ हीति प्रसिद्धं मत्स्येंद्रश्च गोरक्षश्च
तौ आद्यौ येषां ते मत्स्येंद्रगोरक्षाद्याः आद्यशब्देन
जालंधरनाथभर्तृहरिगोपीचंद्रप्रभृतयो ग्राह्याः । ते
हठविद्यां हठयोगविद्यां विजानते विशेषेण

साधनलक्षणभेदफलैर्जानंतीत्यर्थः। स्वात्मारामः

स्वात्मारामनामा। अथवा शब्दसमुच्चये। योगी योगवान्

तत्प्रसादतः गोरक्षप्रसादाज्जानीत इत्यन्वयः। परममहता

ब्रह्मणापीयं विद्या सेवितेत्यत्र योगियाज्ञवल्क्यस्मृतिः।

हिरण्यगर्भो योगस्य वक्ता नान्यः पुरातनः। वक्तृत्वं च

मानसव्यापारपूर्वकं भवतीति मानसो व्यापारोऽर्थादागमः

। तथा च श्रुतिः। यन्मनसा ध्यायति तद्वाचा वदतीति।

भगवतेयं विद्या भागवतानुद्धवादीन् प्रत्युक्ता। शिवस्तु

योगी प्रसिद्ध एव। एवं च सर्वोत्तमैर्ब्रह्मविष्णुशिवैः

सेवितेयं विद्या। न च ब्रह्मसूत्रकृता व्यासेन योगी निराकृत

इति शंकनीयं। प्रकृतिस्वातंत्र्यविद्भिर्भेदांशमात्रस्य

निराकरणात्। न तु भावनाविशेषरूपयोगस्य। भावनायाश्च

सर्वसंमतत्वात्तां

p. 6)

॥ मूल ॥

श्री-आदिनाथमत्स्येंद्रशाबरानंदभैरवाः॥ चौरंगी

मीनगोरक्षविरूपाक्षबिलेशयाः॥ ५॥

॥ टीका ॥

विना सुखस्याप्यसंभवात्। तथोक्तं भगवद्गीतासु। नास्ति बुद्धिरयुक्तस्य न चायुऽक्तस्य भावना। न चाभावयतः शांतिरशांतस्य कुतः सुखमिति। नारायणतीर्थैरप्युक्तं। स्वातंत्र्यसत्यत्वमुखं प्रधाने सत्यं चचिद्भेदगतं च वाक्यैः। व्यासो निराचष्ट न भावनाख्यं योगं स्वयं निर्मितब्रह्मसूत्रैः। अपि चात्मप्रदं योगं व्याकरोन्मतिमान्स्वयं। भाष्यादिषु ततस्तत्र आचार्यप्रमुखैर्मतः। मतो योगो भगवता गीतायामधिकोऽन्यतः। कृतः शुकादिभिस्तस्मादत्र संतोऽतिसादरा इति। वेदेषु यज्ञेषु तपःसु चैव दानेषु यत्पुण्यफलं प्रदिष्टं। अत्येति तत्सर्वमिदं विदित्वा योगी परं स्थानमुपैति चाद्यमिति भगवदुक्तेः। किं बहुन। जिज्ञासुरपि योगस्य शब्दब्रह्मातिवर्तत इति वदता भगवता योगजिज्ञासोरप्यौत्कृष्ट्यं वर्णितं किमुत योगिनः। नारदादिभक्तश्रेष्ठैर्याज्ञवल्क्यादिज्ञानिमुख्यैश्चास्याः सेवनाद्भक्तज्ञानिनामप्यविरुद्धेत्युपरम्यते॥ ४॥

हठयोगे प्रवृत्तिं जनयितुं हठविद्यया प्राप्तैश्वर्यान् सिद्धानाह॥ श्री-आदिनाथेत्यादिना॥ आदिनाथः शिवः सर्वेषां नाथानां प्रथमो नाथः। ततो नाथसंप्रदायः प्रवृत्त इति नाथसंप्रदायिनो वदंति। मत्स्येंद्राख्यश्च आदिनाथशिष्यः। अत्रैवं किंवदंती। कदाचिदादिनाथः

कस्मिंश्चिद्द्वीपे स्थितः। तत्र विजनमिति मत्वा गिरिजायै योगमुपदिष्टवान्। तीरसमीपनीरस्थः कश्चन मत्स्यः तं योगोपदेशं श्रुत्वा एकाग्रचित्तो निश्चलकायोऽवतस्थे। तं तादृशं दृष्ट्वानेन योगः श्रुत इति तं मत्वा कृपालुरादिनाथो

p. 7)

॥ मूल ॥

मंथानो भैरवो योगी सिद्धिर्बुद्धश्च कंथडिः॥
कोरंटकः सुरानंदः सिद्धपादश्च चर्पटिः॥ ६ ॥

कानेरी पूज्यपादश्च नित्यनाथो निरंजनः॥ कपाली
बिंदुनाथश्च काकचंडीश्वराह्वयः॥ ७ ॥

॥ टीका ॥

जलेन प्रोक्षितवान्। स च प्रोक्षणमात्राद्दिव्यकायो मत्स्येंद्रः सिद्धोऽभूत्। तमेव मत्स्येंद्रनाथ इति वदंति। शाबरनामा कश्चित्सिद्धः आनंदभैरवनामान्यः। एतेषामितरेतरद्वंद्वः। छिन्नहस्तपादं पुंस्त्वं हिंदुस्थानभाषायां चौरंगीति वदंति।

कदाचिदादिनाथाल्लब्धयोगस्य भुवं पर्यटतो

मत्स्येंद्रनाथस्य कृपावलोकनमात्रात्कुत्रचिदरण्ये

स्थितश्चौरंग्यंकुरितहस्तपादो बभूव। स च तत्कृपया

संजातहस्तपादोऽहमिति मत्वा तत्पादयोः प्रणिपत्य

ममानुग्रहं कुर्विति प्रार्थितवान्। मत्स्येंद्रोऽपि

तमनुगृहीतवान् तस्यानुग्रहाच्चौरंगीति प्रसिद्धः सिद्धः

सोऽभूत्। मीनो मीननाथः गोरक्षो गोरक्षनाथः

विरूपाक्षनामा बिलेशयनामा च। चौरंगीप्रभृतीनां

द्वंद्वसमासः॥ ५॥

मंथानः भैरवः योगीति मंथानप्रभृतीनां सर्वेषां

विशेषणं॥ ६॥

काकचंडीश्वर इत्याह्वयो नाम यस्य स तथा। अन्ये स्पष्टाः

॥ ७॥

p. 8)

॥ मूल॥

अल्लामः प्रभुदेवश्च घोडा चोली च टिंटिणिः॥ भानुकी

नारदेवश्च खण्डः कापालिकस्तथा॥ ८॥

इत्यादयो महासिद्धा हठयोगप्रभावतः ॥ खण्डयित्वा
कालदंडं ब्रह्मांडे विचरंति ते ॥ ९ ॥

अशेषतापतप्तानां समाश्रयमठो हठः ॥
अशेषयोगयुक्तानामाधारकमठो हठः ॥ १० ॥

॥ टीका ॥

तथाशब्दः समुच्चये ॥ ८ ॥

इति पूर्वोक्ता आदयो येषांते तथा । आदिशब्देन तारानाथादयो ग्राह्याः । महांतश्च ते सिद्धाश्च अप्रतिहतैश्वर्या इत्यर्थः । हठयोगस्य प्रभावात्सामर्थ्यादिति हठयोगप्रभावतः । पंचम्यास्तसिल् । कालो मृत्युः तस्य दंडनं दंडः देहप्राणवियोगानुकूलो व्यापारः तं खंडयित्वा छित्वा मृत्युं जित्वेत्यर्थः । ब्रह्मांडमध्ये विचरंति विशेषेणाव्याहतगत्या चरंतीत्यर्थः । तदुक्तं भागवते । योगेश्वराणां गतिमाहुरंतर्बहिस्त्रिलोक्याः पवनांतरात्मनामिति ॥ ९ ॥

हठस्याशेषतापनाशकत्वमशेषयोगसाधकत्वं च मठकमठरूपकेणाह ॥ अशेषेति ॥ अशेषाः

आध्यात्मिकाधिभौतिकाधिदैविकभेदेन त्रिविधाः।

तत्राध्यात्मिकं द्विविधं। शारीरं मानसं च। तत्र

शारीरं दुःखं व्याधिजं मानसं दुःखं कामादिजं।

आधिभौतिकं व्याघ्रसर्पादिजनितं आधिदैविकं ग्रहादिजनितं

। ते च ते तापाश्च तैस्तप्तानां संतप्तानां पुंसां हठो

हठयोगः सम्यगाश्रयत इति समाश्रयः आश्रयः

आश्रयभूतो मठः मठ एव। तथा हठः

अशेषयोगयुक्तानां अशेषयोगयुक्ताः

मंत्रयोगकर्मयोगादियुक्तास्तेषामाधारभूतः कमठः एवं।

त्रिविधतापतप्तानां पुंसां आश्रयो हठः। यथा च

विश्वाधारः कमठः एवं निखिलयोगिनामाधारो हठ

इत्यर्थः॥ १०॥

p. 9)

॥ मूल॥

हठविद्या परं गोप्या योगिना सिद्धिमिच्छता॥ भवेद्वीर्यवती

गुप्ता निर्वीर्या तु प्रकाशिता॥ ११॥

॥ टीका॥

अथाखिलविद्यापेक्षया हठविद्याया अतिगोप्यत्वमाह॥

हठविद्येति ॥ सिद्धिमणिमाद्यैश्वर्यमिच्छता यद्वा सिद्धिं
कैवल्यसिद्धिमिच्छता वांछता योगिना हठयोगविद्या
परमत्यंतं गोप्या गोपनीया गोपनार्हास्तीति । तत्र हेतुमाह ।
यतो गुप्ता हठविद्या वीर्यवत्यप्रतिहतैश्वर्यजननसमर्था
स्यात् । कैवल्यजननसमर्था कैवल्यसिद्धिजननसमर्था वा स्यात्
। अथ योगाधिकारी । जिताक्षाय शांताय सक्ताय मुक्तौ
विहीनाय दोषैरसक्ताय मुक्तौ । अहीनाय दोषेतरैरुक्तकर्त्रे
प्रदेयो न देयो हठश्चेतरस्मै । याज्ञवल्क्यः ।
विध्युक्तकर्मसंयुक्तः कामसंकल्पवर्जितः । यमैश्च
नियमैर्युक्तः सर्वसंगविवर्जितः । कृतविद्यो जितक्रोधः
सत्यधर्मपरायणः । गुरुशुश्रूषणरतः
पितृमातृपरायणः । स्वाश्रमस्थः सदाचारो विद्वद्भिश्च
सुशिक्षित इति । शिश्नोदररतायैव न देयं वेषधारिण इति
कुत्रचित् । अत्र योगचिंतामणिकाराः । यद्यपि ।
ब्राह्मणक्षत्रियविशां स्त्री शूद्राणां च पावनं ।
शांतये कर्मणामन्यद्योगान्नास्ति विमुक्तय इत्यादि
पुराणवाक्येषु प्राणिमात्रस्य योगेऽधिकार उपलभ्यते । तथापि
मोक्षरूपकं फलं योगे विरक्तस्यैव भवति । अतस्तस्यैव
योगाधिकार उचितः । तथा च वायुसंहितायां । दृष्टे
तथानुश्रविके विरक्तं विषये मनः । यस्य
तस्याधिकारोऽस्मिन्योगे नान्यस्य कस्यचित् । सुरेश्वराचार्यः ।
इहामुत्र विरक्तस्य संसारं प्रजिहासतः । जिज्ञासोरेव कस्यापि

योगेऽस्मिन्नधिकारितेत्याहुः। वृद्धैरप्युक्तं। नैतद्देयं दुर्विनीताय जातु

p. 10)

॥ मूल ॥

सुराज्ये धार्मिके देशे सुभिक्षे निरुपद्रवे॥
धनुःप्रमाणपर्यंतं शिलाग्निजलवर्जिते॥ एकांते
मठिकामध्ये स्थातव्यं हठयोगिना॥ १२॥

॥ टीका ॥

ज्ञानं गुप्तं तद्धि सम्यक्फलाय। अस्थाने हि स्थाप्यमानैव वाचां देवी कोपान्निर्दहेन्नो चिरायेति॥ ११॥

अह हठाभ्यासयोग्यं देशमाह सार्धेन॥ सुराज्य इति॥ राज्ञः कर्म भावो वा राज्यं तच्छोभनं यस्मिन्स सुराज्यस्तस्मिन्सुराज्ये। यथा राजा तथा प्रजेति महदुक्तेः। राज्ञः शोभनत्वात्प्रजानामपि शोभनत्वं सूचितं। धार्मिके धर्मवति। अनेन हठाभ्यासिनोऽनुकूलाहारादिलाभः सूचितः। सुभिक्ष इत्यनेनानायासेन तल्लाभः सूचितः। निरुपद्रवे चौरव्याघ्राद्युपद्रवरहिते। एतेन देशस्य

दीर्घकालवासयोग्यता सूचिता। धनुषः प्रमाणं
धनुःप्रमाणं चतुर्हस्तमात्रं तत्पर्यंतं
शिलाग्निजलवर्जिते शिला प्रस्तरः अग्निर्वह्निः जलं तोयं
तैर्वर्जिते रहिते। यत्रासनं ततश्चतुर्हस्तमात्रे
शिलाग्निजलानि न स्युरित्यर्थः। तेन शीतोष्णविकाराभावः
सूचितः। एकांते विजने। अनेन
जनसमागमाभावात्कलहाद्यभावः सूचितः। जनसंमर्दे

p. 11)

॥ मूल ॥

अल्पद्वारमरंध्रगर्तविवरं नात्युच्चनीचायतं सम्यग्
गोमयसांद्रलिप्तममलं निःशेषजंतूझ्झितम्॥ बात्ह्ये
मंडपवेदिकूपरुचिरं प्राकारसंवेष्टितं प्रोक्तं
योगमठस्य लक्षणमिदं सिद्धैर्हठाभ्यासिभिः॥ १३॥

॥ टीका ॥

तु कलहादिकं स्यादेव। तदुक्तं भागवते। वासे बहूनां
कलहो भवेद्वार्ता द्वयोरपीति। तादृशे मठिकामध्ये। अल्पो
मठो मठिका। अल्पीयसि कन्। तस्याः मध्ये हठयोगिना
हठाभ्यासी योगी हठयोगी तेन। शाकपार्थिवादिवत्समासः

। स्थातव्यं स्थातुं योग्यं। मठिकामध्य इत्यनेन
शीतातपादिजनितक्लेशाभावः सूचितः। अत्र
युक्ताहारविहारेण हठयोगस्य सिद्धये। इत्यर्धं
केनचित्क्षिप्तत्वान्नव्याख्यातं। मूलश्लोकानामेव व्याख्यानं।
एवमग्रेऽपि ये मया न व्याख्याताः श्लोका
हठप्रदीपिकायामुपलभ्येरंस्ते सर्वे क्षिप्ता इति बोद्धव्यं॥
१२॥

अथ मठलक्षणमाह। अल्पद्वारमिति। अल्पद्वारं
यस्मिंस्तत्तादृशं। रंध्रो गवाक्षादिः गर्तो निम्नप्रदेशः
विवरो मूषकादिबिलं ते न संति यस्मिंस्तत्तादृशं। अत्युच्चं
च तन्नीचं चात्युच्चनीचं तच्च तदायतं चात्युच्चनीचायतं।
विशेषणं विशेष्येण बहुलमित्यत्र
बहुलग्रहणाद्विशेषणानां कर्मधारयः।
ननूच्चनीचायतशब्दानां भिन्नार्थकानां कथं
कर्मधारयः। तत्पुरुषः समानाधिकरणः कर्मधारय इति
तल्लक्षणादिति चेन्न। मठे तेषां
सामानाधिकरण्यासंभवात्। न चात्युच्चनीचायतं
नात्युच्चनीचायतं नशब्देन समासान्नलोपाभावः नेति
पृथक्पदं वा। अत्युच्चे आरोहणे श्रमः स्यादतिनीचेऽवरोहणे
श्रमो भवेत्। अत्यायते दूरं
दृष्टिर्गच्छेत्तन्निराकरणार्थमुक्तं नात्युच्चनीचायतमिति।

सम्यक्समीचीनतया गोमयेन गोपुरीषेण सांद्रं यथा भवति
तथा लिप्तं। अमलं निर्मलं निःशेषा निखिला ये जंतवो
मशकमत्कुणाद्यास्तैरुज्झितं त्यक्तं रहितं बाह्ये
मठाद्बहिःप्रदेशे मंडपः शालाविशेषः वेदिः परिष्कृता
भूमिः कूपो जलाशयविशेषः तै रुचिरं रमणीयं
प्राकारेण वरणेन सम्यग्वेष्टितं परितो

p. 12)

॥ मूल ॥

एवंविधे मठे स्थित्वा सर्वचिंताविवर्जितः।
गुरूपदिष्टमार्गेण योगमेव समभ्यसेत्॥ १४॥

॥ टीका ॥

भित्तियुक्तमित्यर्थः। हठाभ्यासिभिः
हठयोगाभ्यसनशीलैः सिद्धैः। इदं
पूर्वोक्तमल्पद्वारादिकं योगमठस्य लक्षणं स्वरूपं
प्रोक्तं कथितं। नंदिकेश्वरपुराणे त्वेवं
मठलक्षणमुक्तं।

मंदिरं रम्यविन्यासं मनोज्ञं गंधवासितं।

धूपामोदादिसुरभि कुसुमोत्करमंडितं।
मुनितीर्थनदीवृक्षपद्मिनीशैलशोभितं। चित्रकर्मनिबद्धं
च चित्रभेदविचित्रितं। कुर्याद्योगगृहं धीमान्सुरम्यं
शुभवर्त्मना। दृष्ट्वा चित्रगतांश्छांतान्मुनीन्याति मनः
शमं। सिद्धान्दृष्ट्वा चित्रगतान्मतिरभ्युद्यमे भवेत्। मध्ये
योगगृहस्याथ लिखेत्संसारमंडलं। श्मशानं च
महाघोरं नरकांश्च लिखेत्क्वचित्। तान्दृष्ट्वा
भीषणाकारान्संसारे सारवर्जिते। अनवसादो भवति योगी
सिद्ध्यभिलाषुकः। पश्यंश्च व्याधितान्
जंतून्नतान्मत्तांश्चलद्व्रणान्॥ १३॥

मठलक्षणमुक्त्वा मठे यत्कर्तव्यं तदाह॥ एवंविध इति॥
एवं पूर्वोक्ता विधा प्रकारो यस्य स तथा पूर्वोक्तलक्षण
इत्यर्थः। तस्मिंस्थित्वा स्थितिं कृत्वा सर्वा
याश्चिंतास्ताभिर्विशेषेण वर्जितो रहितोऽशेषचिन्तारहितः।
गुरुणोपदिष्टो यो मार्गः हठाभ्यासप्रकाररूपस्तेन सदा
नित्यं योगमेवाभ्यसेत्। एवशब्देनाभ्यासांतरस्य योगे
विघ्नकरत्वं सूचितं। तदुक्तं योगबीजे।

मरुज्जयो यस्य सिद्धस्तं सेवेत गुरुं सदा। गुरुवक्त्रप्रसादेन
कुर्यात्प्राणजयं बुधः। राजयोगे।

वेदांततर्कोक्तिभिरागमैश्च नानाविधैः शास्त्रकदंबकैश्च

। ध्यानादिभिः सत्करणैर्न गम्यश्चिंतामणिर्त्येकगुरुं

विहाय । स्कंदपुराणे । आचार्याद्योगसर्वस्वमवाप्य स्थिरधीः

स्वयं । यथोक्तं लभते

p. 13)

॥ मूल ॥

अत्याहारः प्रयासश्च प्रजल्पो नियमग्रहः ॥ जनसंगश्च

लौल्यं च षड्भिर्योगो विनश्यति ॥ १५ ॥

उत्साहात्साहसाद्धैर्यात्तत्त्वज्ञानाच्च निश्चयात् ॥

जनसंगपरित्यागात् षड्भिर्योगः प्रसिद्ध्यति ॥ १६ ॥

॥ टीका ॥

तेन प्राप्नोत्यपि च निर्वृतिं । सुरेश्वराचार्यः ।

गुरुप्रसादाल्लभते योगमष्टांगसंयुतं ।

शिवप्रसादाल्लभते योगसिद्धिं च शाश्वतीं ।

श्रुतिश्च ।

यस्य देवे परा भक्तिर्यथादेवे तथा गुरौ। तस्यैते कथिता
ह्यर्थाः प्रकाशंते महात्मन इति।

आचार्यवान्पुरुषो वेदेति च॥ १४॥

अथ योगाभ्यासप्रतिबंधकानाह॥ अत्याहार इति॥

अतिशयित आहारोऽत्याहारः क्षुधापेक्षयाधिकभोजनं।
प्रयासः श्रमजननानुकूलो व्यापारः प्रकृष्टोजल्पः प्रजल्पो
बहुभाषणं शीतोदकेन
प्रातःस्नाननक्तभोजनफलाहारादिरूपनियमस्य ग्रहणं
नियमग्रहः। जनानां संगो जनसंगः। कामादिजनकत्वात्।
लोलस्य भावः लौल्यं चांचल्यं।
षड्भिरत्याहारादिभिरभ्यासप्रतिबंधात्। योगो विनश्यति
विशेषेण नश्यति॥ १५॥

अथ योगसिद्धिकरानाह॥ उत्साहादिति॥ विषयप्रवणं चितं
निरोत्स्याम्येवेत्युद्यम उत्साहः। साध्यत्वासाध्यत्वे परिभाव्य
सहसा प्रवृत्तिः साहसं। यावज्जीवनं सेत्स्यत्येवेत्यखेदो
धैर्यं। विषया मृगतृष्णाजलवदसंतः ब्रह्मैवसत्यमिति
वास्तविकं

p. 14)

अथ यमनियमाः ॥ अहिंसा सत्यमस्तेयं ब्रह्मचर्यं क्षमा
धृतिः ॥ दयार्जवं मिताहारः शौचं चैव यमा दश ॥ १ ॥

तपः संतोष आस्तिक्यं दानमीश्वरपूजनम् ॥
सिद्धांतवाक्यश्रवणं ह्रीमती च तपो हुतम् ॥ २ ॥

नियमा दश संप्रोक्ता योगशास्त्रविशारदैः ॥ हठस्य
प्रथमांगत्वादासनं पूर्वमुच्यते ॥ कुर्यात्तदासनं
स्थैर्यमारोग्यं चांगलाघवम् ॥ १७ ॥

॥ टीका ॥

ज्ञानं तत्त्वज्ञानं योगानां वास्तविकं ज्ञानं वा ।
शास्त्रगुरुवाक्येषु विश्वासो निश्चयः श्रद्धेति यावत् ।
जनानां योगाभ्यासप्रतिकूलानां यः संगस्तस्य परित्यागात् ।
षड्भिरेभिर्योगः प्रकर्षेणाविलंबेन सिद्ध्यतीत्यर्थः ॥ १६ ॥

आदावासनकथने संगतिं सामान्यतस्तत्फलं चाह ॥
हठस्येति ॥ हठस्य । आसनं कुंभकं चित्रं मुद्राख्यं
करणं तथा । अथ नादानुसंधानमिति वक्ष्यमाणानि

चत्वार्यंगानि। प्रत्याहारादिसमाध्यंतानां

नादानुसंधानेंऽतर्भावः। तन्मध्ये आसनस्य

प्रथमांगत्वात्पूर्वमासनमुच्यत इति संबंधः।

तदासनस्थैर्यं देहस्य

मनसश्चाञ्चल्यरूपरजोधर्मनाशकत्वेन स्थिरतां कुर्यात्।

आसनेन रजो हंतीति वाक्यात्। आरोग्यं

चित्तविक्षेपकरोगाभावः। रोगस्य चित्तविक्षेपकत्वमुक्तं

पातंजलसूत्रे।

व्याधिरुत्थानसंशयप्रमादालस्याविरतिभ्रांतिदर्शनालब्धभ्

ऊमि-कत्वाऽनवस्थितत्वानि

p. 15)

॥ मूल ॥

वसिष्ठाद्यैश्च मुनिभिर्मत्स्येंद्राद्यैश्च योगिभिः॥

अंगीकृतान्यासनानि कथ्यंते कानिचिन्मया॥ १८॥

जानूर्वोरंतरे सम्यक् कृत्वा पादतले उभे॥ ऋजुकायः

समासीनः स्वस्तिकं तत्प्रचक्षते॥ १९॥

॥ टीका ॥

चित्तविक्षेपास्तेंऽतराया इति। अंगानां लाघवं लघुत्वं
गौरवरूपतमोधर्मनाशकत्वमप्येतेनोक्तं।
चकारात्क्षुद्तृद्ध्यादिकमपि बोध्यं॥ १७॥

वसिष्ठादिसंमतासनमध्ये श्रेष्ठानि मयोच्यंत इत्याह॥
वसिष्ठाद्यैरिति॥ वसिष्ठ आद्यो येषां याज्ञवल्क्यादीनां
तैर्मुनिभिर्मननशीलैः। चकारान्मंत्रादिपरैः। मत्स्येंद्र
आद्यो येषां जालंधरनाथादीनां तैः। योगिभिः
हठाभ्यासिभिः। चकारान्मुद्रादिपरैः। अंगीकृतानि
चतुरशीत्यासनानि तन्मध्ये कानिचित् श्रेष्ठानि मया कथ्यंते
। यद्यप्युभयोरपि मननहठाभ्यासौस्तस्तथापि
वसिष्ठादीनां मननं मुख्यं मत्स्येंद्रादीनां
हठाभ्यासो मुख्य इति पृथग्ग्रहणं॥ १८॥

तत्र सुकरत्वात्प्रथमं स्वस्तिकासनमाह॥ जानूर्वोरिति॥ जानु
च ऊरुश्च। अत्र जानुशब्देन जानुसंनिहितो जंघाप्रदेशो
ग्राह्यः। जंघोर्वोरिति पाठस्तु साधीयान्। तयोरंतरे मध्ये
उभे पादयोस्तले तलप्रदेशौ कृत्वा ऋजुकायः समकायः। यत्र
समासीनो भवेत्तदासनं स्वस्तिकं स्वस्तिकाख्यं प्रचक्षते
वदंति योगिन इति शेषः। श्रीधरेणोक्तं।
ऊरूजंघांतराधाय प्रपदे जानुमध्यगे। योगिनो
यदवस्थानं स्वस्तिकं तद्विदुर्बुधाः॥ १९॥

p. 16)

॥ मूल ॥

सव्ये दक्षिणगुल्फं तु पृष्ठपार्श्वे नियोजयेत्॥ दक्षिणेऽपि
तथा सव्यं गोमुखं गोमुखाकृति ॥ २० ॥

एकं पादं तथैकस्मिन्विन्यसेदुरुणि स्थितम्॥ इतरस्मिंस्तथा
चोरुं वीरासनमिऽतीरितम्॥ २१ ॥

गुदं निरुद्धय गुल्फाभ्यां व्युत्क्रमेण समाहितः ॥
कूर्मासनं भवेदेतदिति योगविदो विदुः ॥ २२ ॥

॥ टीका ॥

गोमुखासनमाह ॥ सव्य इति ॥ सव्ये वामे पृष्ठस्य पार्श्वे
संप्रदायात्कटेरधोभागे दक्षिणं गुल्फं नितरां योजयेत्।
गोमुखस्याकृतिर्यस्य तत्तादृशं गोमुखसंज्ञकमासनं भवेत्
॥ २० ॥

वीरासनमाह ॥ एकमिति ॥ एकं दक्षिणं पादं । तथा
पादपूरणे । एकस्मिन्वामोरुणि स्थितं विन्यसेत्। इतरस्मिन्वामे

पादे ऊरुं दक्षिणं विन्यसेत्। तद्वीरासनमितीरितं कथितं ॥ २१ ॥

कूर्मासनमाह ॥ गुदमिति ॥ गुल्फाभ्यां गुदं निरुद्ध्य नियम्य व्युत्क्रमेण यत्र सम्यगाहितः स्थितो भवेत्। एतत्कूर्मासनं भवेत्। इति योगविदो विदुरित्यन्वयः ॥ २२ ॥

p. 17)

॥ मूल ॥

पद्मासनं तु संस्थाप्य जानूर्वोरंतरे करौ ॥ निवेश्य भूमौ संस्थाप्य व्योमस्थं कुक्कुटासनम्॥ २३ ॥

कुक्कुटासनबंधस्थो दोर्भ्यां संबध्य कंधराम्॥
भवेत्कूर्मवदुत्तान एतदुत्तानकूर्मकम्॥ २४ ॥

पादांगुष्ठौ तु पाणिभ्यां गृहीत्वा श्रवणावधि ॥
धनुराकर्षणं कुर्याद्धनुरासनमुच्यते ॥ २५ ॥

॥ टीका ॥

कुक्कुटासनमाह ॥ पद्मासनं त्विति ॥ पद्मासनं तु ऊर्वोरुपरि

उत्तानचरणस्थापनरूपं सम्यक् स्थापयित्वा। जानुपदेन

जानुसंनिहितो जंघाप्रदेशः। तच्च ऊरुश्च जानूरू

तयोरंतरे मध्ये करौ निवेश्य भूमौ संस्थाप्य।

करावित्यत्रापि संबध्यते। व्योमस्थं खस्थं

पद्मासनसदृशं यत्तत्कुक्कुटासनं॥ २३॥

उत्तानकूर्मासनमाह॥ कुक्कुटासनेति॥ कुक्कुटासनस्य यो

बंधः पूर्वश्लोकोक्तस्तस्मिन् स्थितः दोर्भ्यां बाहुभ्यां

ग्रीवां संबध्य कूर्मवदुत्तानो

यस्मिन्भवेदेतदासनमुत्तानकूर्मकं नाम॥ २४॥

धनुरासनमाह॥ पादांगुष्ठौ त्विति॥ पाणिभ्यां

पादयोरंगुष्ठौ गृहीत्वा श्रवणावधि कर्णपर्यंतं

धनुष आकर्षणं यथा भवति तथा कुर्यात्।

गृहीतांगुष्ठमेकं पाणिं प्रसारितं कृत्वा

गृहीतांगुष्ठमितरं पाणिं कर्णपर्यंतमाकुंचितं

कुर्यादित्यर्थः। एतद्धनुरासनमुच्यते॥ २५॥

p. 18)

॥ मूल॥

वामोरुमूलार्पितदक्षपादं जानोर्बहिर्वेष्टितवामपादम्॥

प्रगृह्य तिष्ठेत्परिवर्तितांगः श्रीमत्स्यनाथोदितमासनं स्यात्॥ २६॥

मत्स्येंद्रपीठं जठरप्रदीप्तिं प्रचंडरुग्मंडलखंडनास्त्रम्॥ अभ्यासतः कुंडलिनीप्रबोधं चंद्रस्थिरत्वं च ददाति पुंसाम्॥ २७॥

॥ टीका॥

मत्स्येंद्रासनमाह॥ वामोरुमूलेऽर्पितः स्थापितो यो दक्षपादः तं संप्रदायात्पृष्ठतोगतवामपाणिना गुल्फस्योपरिभागे परिगृह्य। जानोर्दक्षिणपादजानोर्बहिःप्रदेशे वेष्टितो यो वामपादस्तं वामपादजानोर्बहिर्वेष्टितदक्षिणपाणिनांगुष्ठे प्रगृह्य। परिवर्तितांगः वामभागेन पृष्ठतो मुखं यथा स्यादेवं परिवर्तितं परावर्तितमंगं येन स तथा तादृशो यत्र तिष्ठेत् स्थितिं कुर्यात्तदासनं मत्स्येंद्रनाथेनोदितं कथितं स्यात्। तदुदितत्वात्तन्नामकमेव वदंति। एवं दक्षोरुमूलार्पितवामपादं पृष्ठतोगतदक्षिणपाणिना प्रगृह्य वामजानोर्बहिर्वेष्टितदक्षपादं दक्षिणपादजानोर्बहिर्वेष्टितवामपाणिना प्रगृह्य। दक्षभागेन पृष्ठतो मुखं यथा स्यादेवं

परिवर्तितांगश्चाभ्यसेत्॥ २६ ॥

मत्स्येंद्रासनस्य फलमाह ॥ मत्स्येंद्रेति ॥ प्रचंडं
दुःसहं रुजां रोगाणां मंडलं समूहः तस्य खंडने
छेदनेऽस्त्रमस्त्रमिव तादृशं मत्स्येंद्रपीठं
मत्स्येंद्रासनं। अभ्यासतः प्रत्यहमावर्तनरूपादभ्यासात्

p. 19)

॥ मूल ॥

प्रसार्य पादौ भुवि दंडरूपौ दोर्भ्यां पदाग्रद्वितयं
गृहीत्वा ॥ जानूपरि न्यस्तललाटदेशो वसेदिदं
पश्चिमतानमाहुः ॥ २८ ॥

इति पश्चिमतानमासनाग्र्यं पवनं पश्चिमवाहिनं करोति ॥
उदयं जठरानलस्य कुर्यादुदरे कार्श्यमरोगतां च पुंसाम्॥
२९ ॥

॥ टीका ॥

पुंसां जठरस्य जठराग्नेः प्रकृष्टां दीप्तिं वृद्धिं
ददाति। तथा कुंडलिन्या आधारशक्तेः प्रबोधं

निद्राभावं तथा चंद्रस्य तालुन उपरिभागे स्थितस्य नित्यं क्षरतः स्थिरत्वं क्षरणाभावं च ददातीत्यर्थः ॥ २७ ॥

पश्चिमतानासनमाह ॥ प्रसार्येति ॥ भुवि भूमौ दंडस्य रूपमिव रूपं ययोस्तौ दंडाकारौ श्लिष्टगुल्फौ प्रसार्य प्रसारितौ कृत्वा । दोर्भ्यामाकुंचिततर्जनीभ्यां भुजाभ्यां पदोः पदयोश्चाग्रेऽग्रभागौ तयोर्द्वितयं द्वयमंगुष्ठप्रदेशयुग्मं बलादाकर्षणपूर्वकं यथा जान्वधोभागस्य भूमेरुत्थानं न स्यात्तथा गृहीत्वा । जानोरुपरि न्यस्तो ललाटदेशो येन तादृशो यत्र वसेत् । इदं पश्चिमताननामकमासनमाहुः ॥ २८ ॥

अथ तत्फलं ॥ इतीति ॥ इति पूर्वोक्तमासनेष्वग्र्यं मुख्यं पश्चिमतानं पवनं प्राणं पश्चिमवाहिनं पश्चिमेन पश्चिममार्गेण सुषुम्नामार्गेण वहतीति पश्चिमवाही तं तादृशं करोति । जठरानलस्य जठरे योऽनलोऽग्निस्तस्योदयं वृद्धिं कुर्यात् । उदरे मध्यप्रदेशे कार्श्यं कृशत्वं कुर्यात् । अरोगतामारोग्यं चकारान्नाडावलनादिसाम्यं कुर्यात् ॥ २९ ॥

p. 20)

॥ मूल ॥

धरामवष्टभ्य करद्वयेन तत्कूर्परस्थापितनाभिपार्श्वः ॥
उच्चासनो दंडवदुत्थितः स्यान्मयूरमेतत्प्रवदंति पीठम् ॥
३० ॥

हरति सकलरोगानाशु गुल्मोदरादीनभिभवति च दोषानासनं
श्रीमयूरम् ॥ बहु कदशनभुक्तं भस्म कुर्यादशेषं जनयति
जठराग्निं जारयेत्कालकूटम् ॥ ३१ ॥

॥ टीका ॥

अथ मयूरासनमाह ॥ धरामिति ॥ करद्वयेन करयोर्द्वयं
युग्मं तेन धरां भूमिं अवष्टभ्यावलंब्य प्रसारितांगुली
भूमिसंलग्नतलौ सन्निहितौ करौ कृत्वेत्यर्थः । तस्य
करद्वयस्य कूर्परयोर्भुजमध्यसंधिभागयोः स्थापिते धृते
नाभेः पार्श्वे पार्श्वभागौ येन स उच्चासन उच्चमुन्नतमासनं
यस्यैतादृशः खे शून्ये दंडवद्दंडेन तुल्यमुत्थित
ऊर्ध्वं स्थितो यत्र भवति । तन्मायूरं मयूरस्येदं
तत्संबंधित्वात्तन्नामकं प्रवदंति योगिन इति शेषः ॥ ३० ॥

मयूरासनगुणानाह ॥ हरतीति ॥ गुल्मो रोगविशेषः उदरं
जलोदरं ते आदी येषां प्लीहादीनां ते तथा तान्सकलरोगान्
सकला ये रोगास्तानाशु झटिति हरंति नाशयति ।

श्रीमयूरमासनमिति सर्वत्र संबध्यते।

दोषान्वातपित्तकफानालस्यदांश्चाभिभवति तिरस्करोति।

बह्वतिशयितं कदशनं कदन्नं यद्भुक्तं तदशेषं

समस्तं भस्म कुर्यात्पाचयेदित्यर्थः। जठराग्निं

जठरानलं जनयति प्रादुर्भावयति। कालकूटं विषं

कालकूटवदपकारकान्नं परस्तं जारयेज्जीर्णं

कुर्यात्पाचयेदित्यर्थः॥ ३१॥

p. 21)

॥ मूल॥

उत्तानं शववद्भूमौ शयनं तच्छवासनम्॥ शवासनं

श्रांतिहरं चित्तविश्रांतिकारकम्॥ ३२॥

चतुरशीत्यासनानि शिवेन कथितानि च॥ तेभ्यश्चतुष्कमादाय

सारभूतं ब्रवीम्यहम्॥ ३३॥

सिद्धं पद्मं तथा सिंहं भद्रं चेति चतुष्टयम्॥

श्रेष्ठं तत्रापि च सुखे तिष्ठेत्सिद्धासने सदा॥ ३४॥

॥ टीका॥

शवासनमाहार्धेन ॥ उत्तानमिति ॥ शवेन मृतशरीरेण
तुल्यं शववदुत्तानं भूमिसंलग्नं पृष्ठं यथा
स्यात्तथा शयनं निद्रायामिव सन्निवेशो यत्तच्छवासनं
शवाख्यमासनं। शवासनप्रयोजनमाह। उत्तरार्धेन।
शवासनं श्रांतिहरं श्रांतिं हठाभ्यासश्रमं
हरतीति श्रांतिहरं चित्तस्य विश्रांतिर्विश्रामस्तस्याः
कारकं ॥ ३२ ॥

वक्ष्यमाणासनचतुष्टयस्य श्रेष्ठत्वं वदन्नाह ॥
चतुरशीतीति ॥ शिवेनेश्वरेण
चतुरधिकाशीतिसंख्याकान्यासनानि कथितानि
चकाराच्चतुरशीतिलक्षाणि च। तदुक्तं गोरक्षनाथेन।

आसनानि च तावंति यावंत्यो जीवजातयः।
एतेषामखिलान्भेदान्विजानाति महेश्वरः। चतुरशीतिलक्षाणि
एकैकं समुदात्दृतं। ततः शिवेन पीठानां षोडशोनं
शतं कृतमिति।

तेभ्यः शिवोक्तंचतुरशीतिलक्षासनानां मध्ये प्रशस्तानि
यानि चतुरशीत्यासनानि तेभ्य आदाय गृहीत्वा। सारभूतं
श्रेष्ठभूतं चतुष्कमहं ब्रवीमीत्यन्वयः॥ ३३ ॥

तदेव चतुष्कं नाम्ना निर्दिशति ॥ सिद्धमिति ॥ सिद्धं सिद्धासनं। पद्मं

p. 22)

॥ मूल ॥

योनिस्थानकमंघ्रिमूलघटितं कृत्वा दृढं विन्यसेन्मेंढ्रे
पादमथैकमेवत्हृदये कृत्वा हनुं सुस्थिरम् ॥ स्थाणुः
संयमितेंद्रियोऽचलदृशा पश्येद्भुवोरंतरं
ह्येतन्मोक्षकपाटभेदजनकं सिद्धासनं प्रोच्यते ॥ ३५ ॥

॥ टीका ॥

पद्मासनं। सिंहं सिंहासनं। भद्रं भद्रासनं। इति चतुष्टयं श्रेष्ठमतिशयेन प्रशस्यं तत्रापि चतुष्टये सुखे सुखकरे सिद्धासने सदा तिष्ठेत्। एतेन सिद्धासनं चतुष्टयेप्युत्कृष्टमिति सूचितं ॥ ३४ ॥

आसनचतुष्टयेप्युत्कृष्टत्वात्प्रथमं सिद्धासनमाह ॥ योनिस्थानकमिति ॥ योनिस्थानमेव योनिस्थानकं स्वार्थे कप्रत्ययः। गुदोपस्थयोर्मध्यमप्रदेशे पदं योनिस्थानं तत्। अंघ्रिर्वामश्चरणस्तस्य मूलेन पार्ष्णिभागेन घटितं

न चित्तं न च वा बुद्धिर्न स्थानं वर्णमेव च ॥ ३५ ॥

न च ध्यानं न वा ध्येयं न ग्रन्थिर्वायुमेव च ।
न ग्रन्थं न च वा ग्रन्थी न बिन्दुं नादमेव च ॥ ३६ ॥

न लक्ष्यं न च वा लक्षी न शिखा तुर्यमेव च ।
तेदौ मध्यं यदा प्राप्त न किञ्चिदपि चिन्तयेत् ॥ ३७ ॥

न वायुं न च वा काशं न वह्निं सलिलं तथा ।
न सोमं न च वा सूर्यं न ब्रह्मा विष्णुरेव च ॥ ३८ ॥

न रुद्रं न च वा कालमीश्वरं शिवमेव च ।
अनाख्यं च निराभासं निस्तत्त्वं च निराश्रयम् ॥ ३९ ॥

छन्नं सर्वगतं शान्तं स्थितं व्योमेषु व्योमवत् ।
तदा प्रवर्तते किञ्चित् पश्यमेन पुनः पुनः ॥ ४० ॥

p. 89a) तन्मानं च पुनः कृत्वा स्थूलं शून्ये प्रलीयते ।
सूक्ष्मं शून्यं यदा प्राप्तं परे शून्ये प्रलीयते ॥ ४१ ॥

तस्मिन् स्थाने शुभे प्राप्ते निश्चले निर्गुणे तथा ।
तत्रैव धारयेच्चित्तं यदन्योस्तीति कारणम् ॥ ४२ ॥

एषा सा परमाकाष्ठा परं चित्तं तथैव च ।
एषा सा परमा बुद्धिः परा चापि प्रवर्तते ॥ ४३ ॥

योगिनस्तु ततः प्रश्नं पतते नात्रसंशयः ।
इदं विष्णुर्विजानीयात् पाशः क्रोधेन च्छिद्यते ॥ ४४ ॥

महतां सर्वदेवानां मत्वादेवश्च कीर्तितः ।
तारयेच्च प्रजाः सर्वास्तुम्बुरुस्तेन चोच्यते ॥ ४५ ॥

ईश्वरत्वे तथापीष ईश्वरत्वं प्रकीर्तितम् ।
हरते सर्वपापानि हरो देवः प्रकीर्तितः ॥ ४६ ॥

लयनं सर्व जातीनां लयनाल्लिङ्गमुच्यते ।
एवं सर्वगतं देवं ब्रह्मरूपो न निर्मलः ॥ ४७ ॥

क्रिमिकीटपतङ्गेषु स्थावरे जङ्गमेषु च ।
यत्किञ्चिद्वाङ्मयं सर्वं सृष्टिदेवं पकीर्तितम् ॥ ४८ ॥

तस्य देवातिदेवस्य शक्तिर्नादयते जगत् ।
एवं सर्वगतं शून्यं हृदये तत्र लक्षयेत् ॥ ४९ ॥

यदि सर्वगतं देव शून्यं ब्रूहि किमुच्यते ।
अथ शून्यं परं ब्रह्मलक्षणं ग्रहणं कुतः ॥ ५० ॥

भगवन्देवदेवेश चन्द्रार्धकृतशेखर ।
एतत् प्रश्नं परं गुह्यं प्रसादं कुरु शूलभृत् ॥ ५१ ॥

षडङ्गेन तु योगेन हृद्यं शून्यं तु ग्राहयेत् ।
पूर्णं निवर्तनं तेन पूर्णं भावं च लक्षयेत् ॥ ५२ ॥

पूर्णाहुतिं ततो दद्याद्दीक्षाकाले समाश्रिते ।
p. 90a) भावितात्मा स योगेन सिद्धिः खेचरतां व्रजेत् ॥ ५३ ॥

प्राणायामं तथा ध्यानं प्रत्याहारं च धारणा ।

तर्कश्चैव समाधिश्च षडङ्गो योग उच्यते ॥ ५४ ॥

एतज्ज्ञान मयं प्रोक्तं ज्ञेयं शून्यं प्रकीर्तितम् ।
इन्द्रियाश्च ततः शून्यं चित्तं शून्यं तथैव च ॥ ५५ ॥

बुद्धिशून्यं विजानीयादात्मशून्यं ततः पुनः ।
अग्निशून्यं ततः कृत्वा धर्मशून्यं च निष्कलम् ॥ ५६ ॥

निर्धुमं च परं शून्यं कुम्भमध्ये जलं यथा ।
हिमकाले तु संप्राप्ते विवर्णं निश्चलं भवेत् ॥ ५७ ॥

एवं खंकाष्ठधूस्तद्वत्खतिष्ठे द्विनियोजयेत् ।
इदं तत्वं यदाप्राप्तं पश्यते? जन्म बन्धनात् ॥ ५८ ॥

p. 90b) न प्रवर्तेत चाद्वैतं गृहस्थस्य कदाचन ।
इन्द्रियेभ्यो यतः सक्तः सक्तोमात्सर्य एव च ॥ ५९ ॥

अविद्या ग्राहयेद्रागमतरागं पुनः पुनः ।
तस्मान्निवर्तते तत्वं चित्तं येन न निर्जितम् ॥ ६० ॥

निर्जितं च यदा चित्तं तदा श्रेयः प्रवर्तते ।
शान्तो दान्तो जितक्रोधो भिक्षाशी विगत स्पृहः ॥ ६१ ॥

इदं तु योगिने दृष्ट्वा नन्दनीयः प्रयत्नतः ।
दर्शनान्मोचयेत् पापं स्पर्शनाद्दीक्षितो भवेत् ॥ ६२ ॥

आलापात्गत्र?संपर्काद्भोजनाच्छयनासनात् ।
कुलानद्धरते स्कन्द दशपूर्वान्दशापरान् ॥ ६३ ॥

पक्वं चैव प्रतिज्ञानं घटिका च चतुर्विधाम् ।
प्रथमं धूलि भेदं च द्वितीयं हृच्छेदबन्धनम् ॥ ६४ ॥

p. 91a) तृतीयं ग्रन्थि भेदं च चतुर्थं परमुच्यते ।
चित्तसम्बोधमात्रेण कथं गृह्णन्ति तत्पदम् ॥ ६५ ॥

केन वा गृह्यते चित्तं कस्मिन् स्थाने प्रलीयते ।
देवदेव महादेव सर्वस्तत्त्वार्थभेदक ॥ ६६ ॥

ब्रूहि मे परमं ज्ञानं येन सिद्ध्यन्ति साधकाः॥

खटिका प्रोच्यते मोक्षमुद्धरेत् ग्रन्थि भेदतः।
खमिव परमं ज्ञात्वा खटिकेषा प्रकीर्तिता॥ ६७॥

चित्तं चित्ते तु सङ्गृह्य बुद्धौ बुद्धिं तथैव च।
सा तु बुद्धिः पराज्ञेया तत्वमार्गानु सारिणी॥ ६८॥

शृणु शून्यस्य वै लक्ष्यं धरं विशति तत्क्षणात्।
प्रविष्टे च परे तत्वे समत्वं जायते क्षणात्॥ ६९॥

p. 91b) समत्वं च यदा प्राप्तं परानन्दं प्रजायते।
परानन्दं यदा प्राप्तं न किञ्चिदपि चिन्तयेत्॥ ७०॥

प्रविशेत् तन्मयो भूत्वा शिवबीजेन साधकः।
तदा न श्रूयते शब्दं शङ्खभेरी स दुन्दुभिः॥ ७१॥

ताडितं च न बिन्देत ततस्तन्मयतां गतः।
एतत् ते परमं गुह्यं परं ज्ञेयं न संशयः॥ ७२॥

इदं प्रत्ययमापन्नं तत्गुरुः पाशहा भवेत्।
पुष्पं पत्रं फलं तोयं यो दीक्षां कुरुते नरः॥ ७३॥

नवनाभं ततो यागं कृतं तेन न संशयः।
अन्यथा कुरुते दीक्षां तत्गुरुर्ब्रह्महा भवेत्॥ ७४॥

भावनायास्तथा शैव द्वैतं चैवमशेषतः।
क्लिश्यन्ते ते महामूढाः संसारे च पुनः पुनः॥ ७५॥

द्वैतं चैव महाद्वैतं द्वैतैकत्वं तथैव च।
p. 92a) अद्वैतं न च वा द्वैतमतिर्मे परमार्थतः॥ ७६॥

वंशं नाममयाज्ञातं त्वत्प्रसादान्महेश्वर।
महारथं कीदृशं च जटा वै कीदृशी भवेत्॥ ७७॥

भास?नाम किमुत्पन्नं किं वा खट्वाङ्गमुच्यते।
संक्षेपाद्वददेवेश येन मोक्षं ध्रुवं भवेत्॥ ७८॥

भावयेच्चापरं शून्यमनन्तं परिवर्जितम् ।
भवच्छेदकरं शान्तं परं कस्मतदुच्यते ॥ ७९ ॥

जटावत् स्नापयेच्चित्तं जटा ह्येताः प्रकीर्तिताः ।
महास्नानं तदा प्रोक्तं महाव्रतं तदुच्यते ॥ ८० ॥

नास्ति तत्परमानन्दं चित्तकं चित्तवर्जितम् ।
ततः खकाष्टवत्तिष्ठेत् खट्वाङ्गं तादृशं भवेत् ॥ ८१ ॥

p. 92a) एवं गूढं विजानीयात् गुहवासी तथोच्यते ।
न नाम ग्रहणान् मुक्तो न काय तमनाच्छुचिः ॥ ८२ ॥

चित्तं धामयते प्राज्ञो मोक्ष इत्यभिधीयते ।
व्रतस्या चरणं कृत्वा योगं तत्र समभ्यसेत् ॥ ८४ ॥

मयातीते परंब्रह्म लोकत्रयविवर्जितम् ॥ ८५ ॥

व्रतेन सहिता योगाः स्वयं प्रोक्ता महेश्वर ।
योगहीन व्रतामुढा मुद्रा पञ्चक भूषिताः ॥ ८६ ॥

एतन्मे संशयं ब्रूहि येन निस्संशयो भवेत् ॥ ८७ ॥

व्रतेन सहिता योगाः सर्वं सिद्धि प्रदाः शुभाः ।
योगहीनव्रतामूढा न मुच्यन्ति कदाचन ॥ ८८ ॥

व्रतस्य चरणं कृत्वा लोकयात्रा विवर्जितम् ।
p. 93a) निस्पृहो निस्पृहे नित्यं समलोष्टाश्म काञ्चनः ॥ ८९ ॥

शब्दं स्पर्शं रसं रूपं गन्धं चैव तु पञ्चमम् ।
एतामुद्रा महत्यश्च मुच्यते चतुरं जगत् ॥ ९० ॥

इति मुक्तो व्रजेन्मोक्षं यत्र देवो निरञ्जनः ॥

इ * श्री * र्व * द्धा * नि * ण * गो * रं * मा * म् ॥

शिवं भवतु ॥

# amRitabindu

# अमृतबिन्दु

## Sanskrit Document Information

Text title : amRitabindu upanishad

File name : amrtabindu_upan.itx

Category : upanishhat, upanishad

Location : doc_upanishhat

Author : Anshuman

Transliterated by : Anshuman Pandey pandey at umich.edu

Proofread by : M. Giridhar, Sunder Hattangadi

Latest update : 16 April 1996, March 4, 2017

Send corrections to : Sanskrit@cheerful.com



June 21, 2018

*sanskritdocuments.org*

# अमृतबिन्दु

ॐ सह नाववतु सह नौ भुनक्तु सह वीर्यं करवावहै ।
तेजस्विनावधीतमस्तु मा विद्विषावहै ॥ ॐ शान्तिः शान्तिः शान्तिः ।
हरिः ॐ ॥

मनो हि द्विविधं प्रोक्तं शुद्धं चाशुद्धमेव च ।
अशुद्धं कामसंकल्पं शुद्धं कामविवर्जितम् ॥ १॥

मन एव मनुष्याणां कारणं बन्धमोक्षयोः ।
बन्धाय विषयासक्तं मुक्त्यै निर्विषयं स्मृतम् ॥ २॥

यतो निर्विषयस्यास्य मनसो मुक्तिरिष्यते ।
अतो निर्विषयं नित्यं मनः कार्यं मुमुक्षुणा ॥ ३॥

निरस्तविषयासङ्गं संनिरुद्धं मनो हृदि ।
यदाऽऽयात्यात्मनो भावं तदा तत्परमं पदम् ॥ ४॥

तावदेव निरोद्धव्यं यावधृदि गतं क्षयम् ।
एतज्ज्ञानं च ध्यानं च शेषो न्यायश्च विस्तरः ॥ ५॥

नैव चिन्त्यं न चाचिन्त्यं न चिन्त्यं चिन्त्यमेव च ।
पक्षपातविनिर्मुक्तं ब्रह्म सम्पद्यते तदा ॥ ६॥

स्वरेण संधयेद्योगमस्वरं भावयेत्परम् ।
अस्वरेणानुभावेन नाभावो भाव इष्यते ॥ ७॥

तदेव निष्कलं ब्रह्म निर्विकल्पं निरञ्जनम् ।
तद्ब्रह्माहमिति ज्ञात्वा ब्रह्म सम्पद्यते ध्रुवम् ॥ ८॥

निर्विकल्पमनन्तं च हेतुदृष्टान्तवर्जितम् ।
अप्रमेयमनादिं च यज्ज्ञात्वा मुच्यते बुधः ॥ ९॥

न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः ।

न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता ॥ १०॥ var मुक्तः

एक एवात्मा मन्तव्यो जाग्रत्स्वप्नसुषुप्तिषु ।
स्थानत्रयव्यतीतस्य पुनर्जन्म न विद्यते ॥ ११॥

एक एव हि भूतात्मा भूते भूते व्यवस्थितः ।
एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ॥ १२॥

घटसंवृतमाकाशं नीयमानो घटे यथा ।
घटो नीयेत नाकाशः तद्वज्जीवो नभोपमः ॥ १३॥

घटवद्विविधाकारं भिद्यमानं पुनः पुनः ।
तद्भेदे न च जानाति स जानाति च नित्यशः ॥ १४॥ ?var तद्भग्नं

शब्दमायावृतो नैव तमसा याति पुष्करे ।
भिन्ने तमसि चैकत्वमेक एवानुपश्यति ॥ १५॥

शब्दाक्षरं परं ब्रह्म तस्मिन्क्षीणे यदक्षरम् ।
तद्विद्वानक्षरं ध्यायेद्यदीच्छेच्छान्तिमात्मनः ॥ १६॥

द्वे विद्ये वेदितव्ये तु शब्दब्रह्म परं च यत् ।
शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति ॥ १७॥

ग्रन्थमभ्यस्य मेधावी ज्ञानविज्ञानतत्परः ।
पलालमिव धान्यार्थी त्यजेद्ग्रन्थमशेषतः ॥ १८॥

गवामनेकवर्णानां क्षीरस्याप्येकवर्णता ।
क्षीरवत्पश्यते ज्ञानं लिङ्गिनस्तु गवां यथा ॥ १९॥

घृतमिव पयसि निगूढं भूते भूते च वसति विज्ञानम् ।
सततं मनसि मन्थयितव्यं मनो मन्थानभूतेन ॥ २०॥

ज्ञाननेत्रं समाधाय चोद्धरेद्वह्निवत्परम् ।
निष्कलं निश्चलं शान्तं तद्ब्रह्माहमिति स्मृतम् ॥ २१॥

सर्वभूताधिवासं यद्भूतेषु च वसत्यपि ।
सर्वानुग्राहकत्वेन तदस्म्यहं वासुदेवः ॥ २२॥

ॐ सह नाववतु सह नौ भुनक्तु सह वीर्यं करवावहै ।
तेजस्विनावधीतमस्तु मा विद्विषावहै ॥

ॐ शान्तिः शान्तिः शान्तिः ।

# Amritanada Upanishad

# अमृतनादोपनिषत् २१

## Sanskrit Document Information

Text title : Amritanada Upanishad

File name : amritanada.itx

Category : upanishhat, upanishad

Location : doc_upanishhat

Author : Vedic Tradition

Transliterated by : S.

Proofread by : S.

Description-comments : 21/108; Krishna-Yajur-Veda, Yoga Upanishad

Latest update : October 12, 1999

Send corrections to : Sanskrit@cheerful.com



June 21, 2018

*sanskritdocuments.org*

# अमृतनादोपनिषत् २१

अमृतनादोपनिषत्प्रतिपाद्यं पराक्षरम् ।
त्रैपदानन्दसाम्राज्यं हृदि मे भातु सन्ततम् ॥

ॐ सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै ।
तेजस्विनावधीतमस्तु मा विद्विषावहै ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

शास्त्राण्यधीत्य मेधावी अभ्यस्य च पुनः पुनः ।
परमं ब्रह्म विज्ञाय उल्कावत्तान्यथोत्सृजेत् ॥ १॥

ओङ्कारं रथमारुह्य विष्णुं कृत्वाथ सारथिम् ।
ब्रह्मलोकपदान्वेषी रुद्राराधनतत्परः ॥ २॥

तावद्रथेन गन्तव्यं यावद्रथपथि स्थितः ।
स्थित्वा रथपथस्थानं रथमुत्सृज्य गच्छति ॥ ३॥

मात्रालिङ्गपदं त्यक्त्वा शब्दव्यञ्जनवर्जितम् ।
अस्वरेण मकारेण पदं सूक्ष्मं च गच्छति ॥ ४॥

शब्दादिविषयाः पञ्च मनश्चैवातिचञ्चलम् ।
चिन्तयेदात्मनो रश्मीन्प्रत्याहारः स उच्यते ॥ ५॥

प्रत्याहारस्तथा ध्यानं प्राणायामोऽथ धारणा ।
तर्कश्चैव समाधिश्च षडङ्गो योग उच्यते ॥ ६॥

यथा पर्वतधातूनां दह्यन्ते धमनान्मलाः ।
तथेन्द्रियकृता दोषा दह्यन्ते प्राणनिग्रहात् ॥ ७॥

प्राणायामैर्दहेद्दोषान्धारणाभिश्च किल्बिषम् ।
प्रत्याहारेण संसर्गाद्ध्यानेनानीश्वरान्गुणान् ॥ ८॥

किल्बिषं हि क्षयं नीत्वा रुचिरं चैव चिन्तयेत् ॥ ९॥

रुचिरं रेचकं चैव वायोराकर्षणं तथा ।
प्राणायामस्त्रयः प्रोक्ता रेचपूरककुम्भकाः ॥ १०॥

सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह ।
त्रिः पठेदायतप्राणः प्राणायामः स उच्यते ॥ ११॥

उत्क्षिप्य वायुमाकाशं शून्यं कृत्वा निरात्मकम् ।
शून्यभावेन युञ्जीयाद्रेचकस्येति लक्षणम् ॥ १२॥

वक्त्रेणोत्पलनालेन तोयमाकर्षयेन्नरः ।
एवं वायुर्ग्रहीतव्यः पूरकस्येति लक्षणम् ॥ १३॥

नोच्छ्वसेन्न च निश्वासेत् गात्राणि नैव चालयेत् ।
एवं भावं नियुञ्जीयात् कुम्भकस्येति लक्षणम् ॥ १४॥

अन्धवत्पश्य रूपाणि शब्दं बधिरवत् श्रृणु ।
काष्ठवत्पश्य ते देहं प्रशान्तस्येति लक्षणम् ॥ १५॥

मनः सङ्कल्पकं ध्यात्वा संक्षिप्यात्मनि बुद्धिमान् ।
धारयित्वा तथाऽऽत्मानं धारणा परिकीर्तिता ॥ १६॥

आगमस्याविरोधेन ऊहनं तर्क उच्यते ।
समं मन्येत यं लब्ध्वा स समाधिः प्रकीर्तितः ॥ १७॥

भूमिभागे समे रम्ये सर्वदोषविवर्जिते ।
कृत्वा मनोमयीं रक्षां जप्त्वा चैवाथ मण्डले ॥ १८॥

पद्मकं स्वस्तिकं वापि भद्रासनमथापि वा ।
बद्ध्वा योगासनं सम्यगुत्तराभिमुखः स्थितः ॥ १९॥

नासिकापुटमङ्गुल्या पिधायैकेन मारुतम् ।
आकृष्य धारयेदग्निं शब्दमेवाभिचिन्तयेत् ॥ २०॥

ओमित्येकाक्षरं ब्रह्म ओमित्येकेन रेचयेत् ।
दिव्यमन्त्रेण बहुशः कुर्यादात्ममलच्युतिम् ॥ २१॥

पश्चाद्ध्यायीत पूर्वोक्तक्रमशो मन्त्रविद्बुधः ।
स्थूलातिस्थूलमात्रायं नाभेरूर्ध्वरुपक्रमः ॥ २२॥

तिर्यगूर्ध्वमधो दृष्टिं विहाय च महामतिः ।

स्थिरस्थायी विनिष्कम्पः सदा योगं समभ्यसेत् ॥ २३॥

तालमात्राविनिष्कम्पो धारणायोजनं तथा ।
द्वादशमात्रो योगस्तु कालतो नियमः स्मृतः ॥ २४॥

अघोषमव्यञ्जनमस्वरं च अकण्ठताल्वोष्ठमनासिकं च ।
अरेफजातमुभयोष्मवर्जितं यदक्षरं न क्षरते कदाचित्
॥ २५॥

येनासौ पश्यते मार्गं प्राणस्तेन हि गच्छति ।
अतस्तमभ्यसेन्नित्यं सन्मार्गगमनाय वै ॥ २६॥

हृद्द्वारं वायुद्वारं च मूर्धद्वारमतः परम् ।
मोक्षद्वारं बिलं चैव सुषिरं मण्डलं विदुः ॥ २७॥

भयं क्रोधमथालस्यमतिस्वप्नातिजागरम् ।
अत्याहरमनाहरं नित्यं योगी विवर्जयेत् ॥ २८॥

अनेन विधिना सम्यङ्नित्यमभ्यसतः क्रमात् ।
स्वयमुत्पद्यते ज्ञानं त्रिभिर्मासैर्न संशयः ॥ २९॥

चतुर्भिः पश्यते देवान्पञ्चभिस्तुल्यविक्रमः ।
इच्छयाप्नोति कैवल्यं षष्ठे मासि न संशयः ॥ ३०॥

पार्थिवः पञ्चमात्रस्तु चतुर्मात्राणि वारुणः ।
आग्नेयस्तु त्रिमात्रोऽसौ वायव्यस्तु द्विमात्रकः ॥ ३१॥

एकमात्रस्तथाकाशो ह्यर्धमात्रं तु चिन्तयेत् ।
सिद्धिं कृत्वा तु मनसा चिन्तयेदात्मनात्मनि ॥ ३२॥

त्रिंशत्पर्वाङ्गुलः प्राणो यत्र प्राणः प्रतिष्ठितः ।
एष प्राण इति ख्यातो बाह्यप्राणस्य गोचरः ॥ ३३॥

अशीतिश्च शतं चैव सहस्राणि त्रयोदश ।
लक्षश्चैकोननिःश्वास अहोरात्रप्रमाणतः ॥ ३४॥

प्राण आद्यो हृदिस्थाने अपानस्तु पुनर्गुदे ।
समानो नाभिदेशे तु उदानः कण्ठमाश्रितः ॥ ३५॥

व्यानः सर्वेषु चाङ्गेषु सदा व्यावृत्य तिष्ठति ।
अथ वर्णास्तु पञ्चानां प्राणादीनामनुक्रमात् ॥ ३६॥

रक्तवर्णो मणिप्रख्यः प्राणो वायुः प्रकीर्तितः ।
अपानस्तस्य मध्ये तु इन्द्रगोपसमप्रभः ॥ ३७॥

समानस्तु द्वयोर्मध्ये गोक्षीरधवलप्रभः ।
आपाण्डर उदानश्च व्यानो ह्यर्चिस्समप्रभः ॥ ३८॥

यस्येदं मण्डलं भित्वा मारुतो याति मूर्धनि ।
यत्र तत्र म्रियेद्वापि न स भूयोऽबिजायते ।
न स भूयोऽभिजायत इत्युपनिषत् ॥ ३९॥

ॐ सह नाववत्विति शान्तिः ॥

॥ इति कृष्णयजुर्वेदीय अमृतनादोपनिषत्समाप्ता ॥

*Amritanada Upanishad*

pdf was typeset on June 21, 2018

# Brahmavidya Upanishad

# ब्रह्मविद्योपनिषत्

## Sanskrit Document Information

Text title : Brahmavidya Upanishad

File name : brahmavidya.itx

Category : upanishhat, upanishad

Location : doc_upanishhat

Author : Vedic tradition

Transliterated by : Sunder Hattangadi (sunderh at hotmail.com)

Proofread by : Sunder Hattangadi (sunderh at hotmail.com)

Description-comments : 40 / 108; Krishna Yajurveda - Yoga Upanishad

Latest update : Feb. 16, 2000

Send corrections to : Sanskrit@cheerful.com



June 21, 2018

*sanskritdocuments.org*

# ब्रह्मविद्योपनिषत्

स्वाविद्यातत्कार्यजातं यद्विद्यापह्नवं गतम् ।
तद्ध्वंसविद्यानिष्पन्नं रामचन्द्रपदं भजे ॥

ॐ सह नाववतु ॥ सह नौ भुनक्तु ॥

सह वीर्यं करवावहै ॥

तेजस्विनावधीतमस्तु मा विद्विषावहै ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

अथ ब्रह्मविद्योपनिषदुच्यते ॥

प्रसादाद्ब्रह्मणस्तस्य विष्णोरद्भुतकर्मणः ।
रहस्यं ब्रह्मविद्याया ध्रुवाग्निं सम्प्रचक्षते ॥ १॥

ॐइत्येकाक्षरं ब्रह्म यदुक्तं ब्रह्मवादिभिः ।
शरीरं तस्य वक्ष्यामि स्थानं कालत्रयं तथा ॥ २॥

तत्र देवास्त्रयः प्रोक्ता लोका वेदास्त्रयोऽग्नयः ।
तिस्रो मात्रार्धमात्रा च त्र्यक्षरस्य शिवस्य तु ॥ ३॥

ऋग्वेदो गार्हपत्यं च पृथिवी ब्रह्म एव च ।
आकारस्य शरीरं तु व्याख्यातं ब्रह्मवादिभिः ॥ ४॥

यजुर्वेदोऽन्तरिक्षं च दक्षिणाग्निस्तथैव च ।
विष्णुश्च भगवान्देव उकारः परिकीर्तितः ॥ ५॥

सामवेदस्तथा द्यौश्चाहवनीयस्तथैव च ।
ईश्वरः परमो देवो मकारः परिकीर्तितः ॥ ६॥

सूर्यमण्डलमध्येऽथ ह्यकारः शङ्खमध्यगः ।
उकारश्चन्द्रसंकाशस्तस्य मध्ये व्यवस्थितः ॥ ७॥

मकारस्त्वग्निसंकाशो विधूमो विद्युतोपमः ।
तिस्रो मात्रास्तथा ज्ञेया सोमसूर्याग्निरूपिणः ॥ ८॥

शिखा तु दीपसंकाशा तस्मिन्नुपरि वर्तते ।
अर्धमात्र तथा ज्ञेया प्रणवस्योपरि स्थिता ॥ ९॥

पद्मसूत्रनिभा सूक्ष्मा शिखा सा दृश्यते परा ।
सा नाडी सूर्यसंकाशा सूर्यं भित्त्वा तथापरा ॥ १०॥

द्विसप्ततिसहस्राणि नाडीं भित्त्वा च मूर्धनि ।
वरदः सर्वभूतानां सर्वं व्याप्यावतिष्ठति ॥ ११॥

कांस्यघण्टानिनादस्तु यथा लीयति शान्तये ।
ओङ्कारस्तु तथा योज्यः शान्तये सर्वमिच्छता ॥ १२॥

यस्मिन्विलीयते शब्दस्तत्परं ब्रह्म गीयते ।
धियं हि लीयते ब्रह्म सोऽमृतत्वाय कल्पते ॥ १३॥

वायुः प्राणस्तथाकाशस्त्रिविधो जीवसंज्ञकः ।
स जीवः प्राण इत्युक्तो वालाग्रशतकल्पितः ॥ १४॥

नाभिस्थाने स्थितं विश्वं शुद्धतत्त्वं सुनिर्मलम् ।
आदित्यमिव दीप्यन्तं रश्मिभिश्चाखिलं शिवम् ॥ १५॥

सकारं च हकारं च जीवो जपति सर्वदा ।
नाभिरन्ध्राद्विनिष्क्रान्तं विषयव्याप्तिवर्जितम् ॥ १६॥

तेनेदं निष्कलं विद्यात्क्षीरात्सर्पिर्यथा तथा ।
कारणेनात्मना युक्तः प्राणायामैश्च पञ्चभिः ॥ १७॥

चतुष्कला समायुक्तो भ्राम्यते च हृदिस्थितः ।
गोलकस्तु यदा देहे क्षीरदण्डेन वा हतः ॥ १८॥

एतस्मिन्वसते शीघ्रमविश्रान्तं महाखगः ।
यावन्निश्वसितो जीवस्तावन्निष्कलतां गतः ॥ १९॥

नभस्थं निष्कलं ध्यात्वा मुच्यते भवबन्धनात्
अनाहतध्वनियुतं हंसं यो वेद हृद्गतम् ॥ २०॥

स्वप्रकाशचिदानन्दं स हंस इति गीयते ।
रेचकं पूरकं मुक्त्वा कुम्भकेन स्थितः सुधीः ॥ २१॥

नाभिकन्दे समौ कृत्वा प्राणापानौ समाहितः ।
मस्तकस्थामृतास्वादं पीत्वा ध्यानेन सादरम् ॥ २२॥

दीपाकारं महादेवं ज्वलन्तं नाभिमध्यमे ।
अभिषिच्यामृतेनैव हंस हंसेति यो जपेत् ॥ २३॥

जरामरणरोगादि न तस्य भुवि विद्यते ।
एवं दिने दिने कुर्यादणिमादिविभूतये ॥ २४॥

ईश्वरत्वमवाप्नोति सदाभ्यासरतः पुमान् ।
बहवो नैकमार्गेण प्राप्ता नित्यत्वमागताः ॥ २५॥

हंसविद्यामृते लोके नास्ति नित्यत्वसाधनम् ।
यो ददाति महाविद्यां हंसाख्यां पारमेश्वरीम् ॥ २६॥

तस्य दास्यं सदा कुर्यात्प्रज्ञया परया सह ।
शुभं वाऽशुभमन्यद्वा यदुक्तं गुरुणा भुवि ॥ २७॥

तत्कुर्यादविचारेण शिष्यः सन्तोषसंयुतः ।
हंसविद्यामिमां लब्ध्वा गुरुशुश्रूषया नरः ॥ २८॥

आत्मानमात्मना साक्षाद्ब्रह्म बुद्ध्वा सुनिश्चलम् ।
देहजात्यादिसम्बन्धान्वर्णाश्रमसमन्वितान् ॥ २९॥

वेदशास्त्राणि चान्यानि पदपांसुमिव त्यजेत् ।
गुरुभक्तिं सदा कुर्याच्छ्रेयसे भूयसे नरः ॥ ३०॥

गुरुरेव हरिः साक्षान्नान्य इत्यब्रवीच्छ्रुतिः ॥ ३१॥

श्रुत्या यदुक्तं परमार्थमेव
तत्संशयो नात्र ततः समस्तम् ।
श्रुत्या विरोधे न भवेत्प्रमाणं
भवेदनर्थाय विना प्रमाणम् ॥ ३२॥

देहस्थः सकलो ज्ञेयो निष्कलो देहवर्जितः ।
आप्तोपदेशगम्योऽसौ सर्वतः समवस्थितः ॥ ३३॥

हंसहंसेति यो ब्रूयाद्धंसो ब्रह्मा हरिः शिवः ।
गुरुवक्त्रात्तु लभ्येत प्रत्यक्षं सर्वतोमुखम् ॥ ३४॥

तिलेषु च यथा तैलं पुष्पे गन्ध इवाश्रितः ।
पुरुषस्य शरीरेऽस्मिन्स बाह्याभ्यन्तरे तथा ॥ ३५॥

उल्काहस्तो यथालोके द्रव्यमालोक्य तां त्यजेत् ।
ज्ञानेन ज्ञेयमालोक्य पश्चाज्ज्ञानं परित्यजेत् ॥ ३६॥

पुष्पवत्सकलं विद्याद्गन्धस्तस्य तु निष्कलः ।
वृक्षस्तु सकलं विद्याच्छाया तस्य तु निष्कला ॥ ३७॥

निष्कलः सकलो भावः सर्वत्रैव व्यवस्थितः ।
उपायः सकलस्तद्वदुपेयश्चैव निष्कलः ॥ ३८॥

सकले सकलो भावो निष्कले निष्कलस्तथा ।
एकमात्रो द्विमात्रश्च त्रिमात्रश्चैव भेदतः ॥ ३९॥

अर्धमात्र परा ज्ञेया तत ऊर्ध्वं परात्परम् ।
पञ्चधा पञ्चदैवत्यं सकलं परिपठ्यते ॥ ४०॥

ब्रह्मणो हृदयस्थानं कण्ठे विष्णुः समाश्रितः ।
तालुमध्ये स्थितो रुद्रो ललाटस्थो महेश्वरः ॥ ४१॥

नासाग्रे अच्युतं विद्यात्तस्यान्ते तु परं पदम् ।
परत्वात्तु परं नास्तीत्येवं शास्त्रस्य निर्णयः ॥ ४२॥

देहातीतं तु तं विद्यान्नासाग्रे द्वादशाङ्गुलम् ।
तदन्तं तं विजानीयात्तत्रस्थो व्यापयेत्प्रभुः ॥ ४३॥

मनोऽप्यन्यत्र निक्षिप्तं चक्षुरन्यत्र पातितम् ।
तथापि योगिनां योगो ह्यविच्छिन्नः प्रवर्तते ॥ ४४॥

एतत्तु परमं गुह्यमेतत्तु परमं शुभम् ।
नातः परतरं किञ्चिन्नातः परतरं शुभम् ॥ ४५॥

शुद्धज्ञानामृतं प्राप्य परमाक्षरनिर्णयम् ।
गुह्याद्गुह्यतमं गोप्यं ग्रहणीयं प्रयत्नतः ॥ ४६॥

नापुत्राय प्रदातव्यं नाशिष्याय कदाचन ।
गुरुदेवाय भक्ताय नित्यं भक्तिपराय च ॥ ४७॥

प्रदातव्यमिदं शास्त्रं नेतरेभ्यः प्रदापयेत् ।
दातास्य नरकं याति सिध्यते न कदाचन ॥ ४८॥

गृहस्थो ब्रह्मचारी च वानप्रस्थश्च भिक्षुकः ।
यत्र तत्र स्थितो ज्ञानी परमाक्षरवित्सदा ॥ ४९॥

विषयी विषयासक्तो याति देहान्तरे शुभम् ।
ज्ञानादेवास्य शास्त्रस्य सर्वावस्थोऽपि मानवः ॥ ५०॥

ब्रह्महत्याश्वमेधाद्यैः पुण्यपापैर्न लिप्यते ।
चोदको बोधकश्चैव मोक्षदश्च परः स्मृतः ॥ ५१॥

इत्येषं त्रिविधो ज्ञेय आचार्यस्तु महीतले ।
चोदको दर्शयेन्मार्गं बोधकः स्थानमाचरेत् ॥ ५२॥

मोक्षदस्तु परं तत्त्वं यज्ज्ञात्वा परमश्नुते ।
प्रत्यक्षयजनं देहे संक्षेपाच्छृणु गौतम ॥ ५३॥

तेनेष्ट्वा स नरो याति शाश्वतं पदमव्ययम् ।
स्वयमेव तु सम्पश्येद्देहे बिन्दुं च निष्कलम् ॥ ५४॥

अयने द्वे च विषुवे सदा पश्यति मार्गवित् ।
कृत्वायामं पुरा वत्स रेचपूरककुम्भकान् ॥ ५५॥

पूर्वं चोभयमुच्चार्य अर्चयेत्तु यथाक्रमम् ।
नमस्कारेण योगेन मुद्रयारभ्य चार्चयेत् ॥ ५६॥

सूर्यस्य ग्रहणं वत्स प्रत्यक्षयजनं स्मृतम् ।
ज्ञानात्सायुज्यमेवोक्तं तोये तोयं यथा तथा ॥ ५७॥

एते गुणाः प्रवर्तन्ते योगाभ्यासकृतश्रमैः ।
तस्माद्योगं समादाय सर्वदुःखबहिष्कृतः ॥ ५८॥

योगध्यानं सदा कृत्वा ज्ञानं तन्मयतां व्रजेत् ।
ज्ञानात्स्वरूपं परमं हंसमन्त्रं समुच्चरेत् ॥ ५९॥

प्राणिनां देहमध्ये तु स्थितो हंसः सदाच्युतः ।
हंस एव परं सत्यं हंस एव तु शक्तिकम् ॥ ६०॥

हंस एव परं वाक्यं हंस एव तु वादिकम् ।
हंस एव परो रुद्रो हंस एव परात्परम् ॥ ६१॥

सर्वदेवस्य मध्यस्थो हंस एव महेश्वरः ।

पृथिव्यादिशिवान्तं तु अकाराद्याश्च वर्णकाः ॥ ६२॥

कूटान्ता हंस एव स्यान्मातृकेति व्यवस्थिताः ।
मातृकारहितं मन्त्रमादिशन्ते न कुत्रचित् ॥ ६३॥

हंसज्योतिरनूपम्यं मध्ये देवं व्यवस्थितम् ।
दक्षिणामुखमाश्रित्य ज्ञानमुद्रां प्रकल्पयेत् ॥ ६४॥

सदा समाधिं कुर्वीत हंसमन्त्रमनुस्मरन् ।
निर्मलस्फटिकाकारं दिव्यरूपमनुत्तमम् ॥ ६५॥

मध्यदेशे परं हंसं ज्ञानमुद्रात्मरूपकम् ।
प्राणोऽपानः समानश्चोदानव्यानौ च वायवः ॥ ६६॥

पञ्चकर्मेन्द्रियैरुक्ताः क्रियाशक्तिबलोद्यताः ।
नागः कूर्मश्च कृकरो देवदत्तो धनञ्जयः ॥ ६७॥

पञ्चज्ञानेन्द्रियैर्युक्ता ज्ञानशक्तिबलोद्यताः ।
पावकः शक्तिमध्ये तु नाभिचक्रे रविः स्थितः ॥ ६८॥

बन्धमुद्रा कृता येन नासाग्रे तु स्वलोचने ।
अकारेवह्निरित्याहुरुकारे हृदि संस्थितः ॥ ६९॥

मकारे च भ्रुवोर्मध्ये प्राणशक्त्या प्रबोधयेत् ।
ब्रह्मग्रन्थिरकारे च विष्णुग्रन्थिर्हृदि स्थितः ॥ ७०॥

रुद्रग्रन्थिर्भ्रुवोर्मध्ये भिद्यतेऽक्षरवायुना ।
अकारे संस्थितो ब्रह्मा उकारे विष्णुरास्थितः ॥ ७१॥

मकारे संस्थितो रुद्रस्ततोऽस्यान्तः परात्परः ।
कण्ठं सङ्कुच्य नाड्यादौ स्तम्भिते येन शक्तितः ॥ ७२॥

रसना पीड्यमानेयं षोडशी वोर्ध्वगामिनि ।
त्रिकूटं त्रिविधा चैव गोलाखं निखरं तथा ॥ ७३॥

त्रिशङ्खवज्रमोङ्कारमूर्ध्वनालं भ्रुवोर्मुखम् ।
कुण्डलीं चालयन्प्राणान्भेदयन्शशिमण्डलम् ॥ ७४॥

साधयन्वज्रकुम्भानि नवद्वाराणि बन्धयेत् ।
सुमनःपवनारूढः सरागो निर्गुणस्तथा ॥ ७५॥

ब्रह्मस्थाने तु नादः स्याच्छाकिन्यामृतवर्षिणी ।
षट्चक्रमण्डलोद्धारं ज्ञानदीपं प्रकाशयेत् ॥ ७६ ॥

सर्वभूतस्थितं देवं सर्वेशं नित्यमर्चयेत् ।
आत्मरूपं तमालोक्य ज्ञानरूपं निरामयम् ॥ ७७ ॥

दृश्यन्तं दिव्यरूपेण सर्वव्यापी निरञ्जनः ।
हंस हंस वदेद्वाक्यं प्राणिनां देहमाश्रितः ।
सप्राणापानयोर्ग्रन्थिरजपेत्यभिधीयते ॥ ७८ ॥

सहस्रमेकं द्व्ययुतं षट्शतं चैव सर्वदा ।
उच्चरन्पठितो हंसः सोऽहमित्यभिधीयते ॥ ७९ ॥

पूर्वभागे ह्यधोलिङ्गं शिखिन्यां चैव पश्चिमम् ।
ज्योतिर्लिङ्गं भ्रुवोर्मध्ये नित्यं ध्यायेत्सदा यतिः ॥ ८० ॥

अच्युतोऽहमचिन्त्योऽहमतर्क्योऽहमजोऽस्म्यहम् ।
अप्राणोऽहमकायोऽहमनङ्गोऽस्म्यभयोऽस्म्यहम् ॥ ८१ ॥

अशब्दोऽहमरूपोऽहमस्पर्शोऽस्म्यहमद्वयः ।
अरसोऽहमगन्धोऽहमनादिरमृतोऽस्म्यहम् ॥ ८२ ॥

अक्षयोऽहमलिङ्गोऽहमजरोऽस्म्यकलोऽस्म्यहम् ।
अप्राणोऽहममूकोऽहमचिन्त्योऽस्म्यकृतोऽस्म्यहम् ॥ ८३ ॥

अन्तर्याम्यहमग्राह्योऽनिर्देश्योऽहमलक्षणः ।
अगोत्रोऽहमगात्रोऽहमचक्षुष्कोऽस्म्यवागहम् ॥ ८४ ॥

अदृश्योऽहमवर्णोऽहमखण्डोऽस्म्यहमद्भुतः ।
अश्रुतोऽहमदृष्टोऽहमन्वेष्टव्योऽमरोऽस्म्यहम् ॥ ८५ ॥

अवायुरप्यनाकाशोऽतेजस्कोऽव्यभिचार्यहम् ।
अमतोऽहमजातोऽहमतिसूक्ष्मोऽविकार्यहम् ॥ ८६ ॥

अरजस्कोऽतमस्कोऽहमसत्त्वोस्म्यगुणोऽस्म्यहम् ।
अमायोऽनुभवात्माहमनन्योऽविषयोऽस्म्यहम् ॥ ८७ ॥

अद्वैतोऽहमपूर्णोऽहमबाह्योऽहमनन्तरः ।
अश्रोतोऽहमदीर्घोऽहमव्यक्तोऽहमनामयः ॥ ८८ ॥

अद्वयानन्दविज्ञानघनोऽस्म्यहमविक्रियः ।

अनिच्छोऽहमलेपोऽहमकर्तास्म्यहमद्वयः ॥ ८९॥

अविद्याकार्यहीनोऽहमवाग्रसनगोचरः ।
अनल्पोऽहमशोकोऽहमविकल्पोऽस्म्यविज्वलन् ॥ ९०॥

आदिमध्यान्तहीनोऽहमाकाशसदृशोऽस्म्यहम् ।
आत्मचैतन्यरूपोऽहमहमानन्दचिद्घनः ॥ ९१॥

आनन्दामृतरूपोऽहमात्मसंस्थोहमन्तरः ।
आत्मकामोहमाकाशात्परमात्मेश्वरोस्म्यहम् ॥ ९२॥

ईशानोस्म्यहमीड्योऽहमहमुत्तमपूरुषः ।
उत्कृष्टोऽहमुपद्रष्टा अहमुत्तरतोऽस्म्यहम् ॥ ९३॥

केवलोऽहं कविः कर्माध्यक्षोऽहं करणाधिपः ।
गुहाशयोऽहं गोप्ताहं चक्षुषश्चक्षुरस्म्यहम् ॥ ९४॥

चिदानन्दोऽस्म्यहं चेता चिद्घनश्चिन्मयोऽस्म्यहम् ।
ज्योतिर्मयोऽस्म्यहं ज्यायाञ्ज्योतिषां ज्योतिरस्म्यहम् ॥ ९५॥

तमसः साक्ष्यहं तुर्यतुर्योऽहं तमसः परः ।
दिव्यो देवोऽस्मि दुर्दर्शो दृष्टाध्यायो ध्रुवोऽस्म्यहम् ॥ ९६॥

नित्योऽहं निरवद्योऽहं निष्क्रियोऽस्मि निरञ्जनः ।
निर्मलो निर्विकल्पोऽहं निराख्यातोऽस्मि निश्चलः ॥ ९७॥

निर्विकारो नित्यपूतो निर्गुणो निःस्पृहोऽस्म्यहम् ।
निरिन्द्रियो नियन्ताहं निरपेक्षोऽस्मि निष्कलः ॥ ९८॥

पुरुषः परमात्माहं पुराणः परमोऽस्म्यहम् ।
परावरोऽस्म्यहं प्राज्ञः प्रपञ्चोपशमोऽस्म्यहम् ॥ ९९॥

परामृतोऽस्म्यहं पूर्णः प्रभुरस्मि पुरातनः ।
पूर्णानन्दैकबोधोऽहं प्रत्यगेकरसोऽस्म्यहम् ॥ १००॥

प्रज्ञातोऽहं प्रशान्तोऽहं प्रकाशः परमेश्वरः ।
एकदा चिन्त्यमानोऽहं द्वैताद्वैतविलक्षणः ॥ १०१॥

बुद्धोऽहं भूतपालोऽहं भारूपो भगवानहम् ।
महाज्ञेयो महानस्मि महाज्ञेयो महेश्वरः ॥ १०२॥

विमुक्तोऽहं विभुरहं वरेण्यो व्यापकोऽस्म्यहम् ।
वैश्वानरो वासुदेवो विश्वतश्चक्षुरस्म्यहम् ॥ १०३॥

विश्वाधिकोऽहं विशदो विष्णुर्विश्वकृदस्म्यहम् ।
शुद्धोऽस्मि शुक्रः शान्तोऽस्मि शाश्वतोऽस्मि शिवोऽस्म्यहम् ॥ १०४॥

सर्वभूतान्तरात्महमहमस्मि सनातनः ।
अहं सकृद्विभातोऽस्मि स्वे महिम्नि सदा स्थितः ॥ १०५॥

सर्वान्तरः स्वयंज्योतिः सर्वाधिपतिरस्म्यहम् ।
सर्वभूताधिवासोऽहं सर्वव्यापी स्वराडहम् ॥ १०६॥

समस्तसाक्षी सर्वात्मा सर्वभूतगुहाशयः ।
सर्वेन्द्रियगुणाभासः सर्वेन्द्रियविवर्जितः ॥ १०७॥

स्थानत्रयव्यतीतोऽहं सर्वानुग्राहकोऽस्म्यहम् ।
सच्चिदानन्द पूर्णात्मा सर्वप्रेमास्पदोऽस्म्यहम् ॥ १०८॥

सच्चिदानन्दमात्रोऽहं स्वप्रकाशोऽस्मि चिद्घनः ।
सत्त्वस्वरूपसन्मात्रसिद्धसर्वात्मकोऽस्म्यहम् ॥ १०९॥

सर्वाधिष्ठानसन्मात्रः स्वात्मबन्धहरोऽस्म्यहम् ।
सर्वग्रासोऽस्म्यहं सर्वद्रष्टा सर्वानुभूरहम् ॥ ११०॥

एवं यो वेद तत्त्वेन स वै पुरुष उच्यत इत्युपनिषत् ॥

ॐ सह नाववतु ॥ सह नौ भुनक्तु ॥ सह वीर्यं करवावहै ॥

तेजस्विनावधीतमस्तु मा विद्विषावहै ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

इति ब्रह्मविद्योपनिषत्समाप्ता ॥

Encoded by Sunder Hattangadi (sunderh@hotmail.com)

*Brahmavidya Upanishad*

pdf was typeset on June 21, 2018

# Dhyanabindu Upanishad

# ध्यानबिन्दूपनिषत्

## Sanskrit Document Information

Text title : Dhyanabindu Upanishad

File name : dhyanabindu.itx

Category : upanishhat, upanishad

Location : doc_upanishhat

Author : Vedic Tradition

Transliterated by : Sunder Hattangadi (sunderh at hotmail.com)

Proofread by : Sunder Hattangadi (sunderh at hotmail.com)

Description-comments : 39/108; Krishna Yajurveda, Yoga Upanishad

Latest update : February 11, 2000

Send corrections to : Sanskrit@cheerful.com



June 21, 2018

*sanskritdocuments.org*

# ध्यानबिन्दूपनिषत्

ध्यात्वा यद्ब्रह्ममात्रं ते स्वावशेषधिया ययुः ।
योगतत्त्वज्ञानफलं तत्स्वमात्रं विचिन्तये ॥

ॐ सह नाववतु ॥ सह नौ भुनक्तु ॥

सह वीर्यं करवावहै ॥

तेजस्विनावधीतमस्तु मा विद्विषावहै ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

यदि शैलसमं पापं विस्तीर्णं बहुयोजनम् ।
भिद्यते ध्यानयोगेन नान्यो भेदः कदाचन ॥ १॥

बीजाक्षरं परं बिन्दुं नादो तस्योपरि स्थितम् ।
सशब्दं चाक्षरे क्षीणे निःशब्दं परमं पदम् ॥ २॥

अनाहतं तु यच्छब्दं तस्य शब्दस्य यत्परम् ।
तत्परं विन्दते यस्तु स योगी छिन्नसंशयः ॥ ३॥

वालाग्रशतसाहस्रं तस्य भागस्य भागिनः ।
तस्य भागस्य भागार्धं तत्क्षये तु निरञ्जनम् ॥ ४॥

पुष्पमध्ये यथा गन्धः पयोमध्ये यथा घृतम् ।
तिलमध्ये यथा तैलं पाषाणाष्विव काञ्चनम् ॥ ५॥

एवं सर्वाणि भूतानि मणौ सूत्र इवात्मनि ।
स्थिरबुद्धिरसंमूढो ब्रह्मविद्ब्रह्मणिस्थितः ॥ ६॥

तिलानां तु यथा तैलं पुष्पे गन्ध इवाश्रितः ।
पुरुषस्य शरीरे तु सबाह्याभ्यन्तरे स्थितः ॥ ७॥

वृक्षं तु सकलं विद्याच्छाया तस्यैव निष्कला ।

सकले निष्कले भावे सर्वत्रात्मा व्यवस्थितः ॥ ८॥

ओमित्येकाक्षरं ब्रह्म ध्येयं सर्वमुमुक्षिभिः ।
पृथिव्यग्निश्च ऋग्वेदो भूरित्येव पितामहः ॥ ९॥

अकारे तु लयं प्राप्ते प्रथमे प्रणवांशके ।
अन्तरिक्षं यजुर्वायुर्भुवो विष्णुर्जनार्दनः ॥ १०॥

उकारे तु लयं प्राप्ते द्वितीये प्रणवांशके ।
द्यौः सूर्यः सामवेदश्च स्वरित्येव महेश्वरः ॥ ११॥

मकारे तु लयं प्राप्ते तृतीये प्रणवांशके ।
अकारः पीतवर्णः  स्याद्रजोगुण उदीरितः ॥ १२॥

उकारः सात्त्विकः शुक्लो मकारः कृष्णतामसः ।
अष्टाङ्गं च चतुष्पादं त्रिस्थानं पञ्चदैवतम् ॥ १३॥

ओङ्कारं यो न जानाति ब्रह्मणो न भवेत्तु सः ।
प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते ॥ १४॥

अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो भवेत् ।
निवर्तन्ते क्रियाः सर्वास्तस्मिन्दृष्टे परावरे ॥ १५॥

ओङ्कारप्रभवा देवा ओङ्कारप्रभवाः स्वराः ।
ओङ्कारप्रभवं सर्वं त्रैलोक्यं सचराचरम् ॥ १६॥

ह्रस्वो दहति पापानि दीर्घः सम्पत्प्रदोऽव्ययः ।
अर्धमात्रा समायुक्तः प्रणवो मोक्षदायकः ॥ १७॥

तैलधारामिवाच्छिन्नं दीर्घघण्टानिनादवत् ।
अवाच्यं प्रणवस्याग्रं यस्तं वेद स वेदवित् ॥ १८॥

हृत्पद्मकर्णिकामध्ये स्थिरदीपनिभाकृतिम् ।
अङ्गुष्ठमात्रमचलं ध्यायेदोङ्कारमीश्वरम् ॥ १९॥

इडया वायुमापुर्य पूरयित्वोदरस्थितम् ।
ओङ्कारं देहमध्यस्थं ध्यायेज्ज्वालवलीवृतम् ॥ २०॥

ब्रह्मा पूरक इत्युक्तो विष्णुः कुम्भक उच्यते ।
रेचो रुद्र इति प्रोक्तः प्राणायामस्य देवताः ॥ २१॥

आत्मानमरणिं कृत्वा प्रणवं चोत्तरारणिम् ।
ध्याननिर्मथनाभ्यासादेव पश्येन्निगूढवत् ॥ २२॥

ओङ्कारध्वनिनादेन वायोः संहरणान्तिकम् ।
यावद्बलं समादध्यात्सम्यङ्नादलयावधि ॥ २३॥

गमागमस्थं गमनादिशून्य-
मोङ्कारमेकं रविकोटिदीप्तिम् ।
पश्यन्ति ये सर्वजनान्तरस्थं
हंसात्मकं ते विरजा भवन्ति ॥ २४॥

यन्मनस्त्रिजगत्सृष्टिस्थितिव्यसनकर्मकृत् ।
तन्मनो विलयं याति तद्विष्णोः परमं पदम् ॥ २५॥

अष्टपत्रं तु हृत्पद्मं द्वात्रिंशत्केसरान्वितम् ।
तस्य मध्ये स्थितो भानुर्भानुमध्यगतः शशी ॥ २६॥

शशिमध्यगतो वह्निर्वह्निमध्यगता प्रभा ।
प्रभामध्यगतं पीठं नानारत्नप्रवेष्टितम् ॥ २७॥

तस्य मध्यगतं देवं वासुदेवं निरञ्जनम् ।
श्रीवत्सकौस्तुभोरस्कं मुक्तामणिविभूषितम् ॥ २८॥

शुद्धस्फटिकसंकाशं चन्द्रकोटिसमप्रभम् ।
एवं ध्यायेन्महाविष्णुमेवं वा विनयान्वितः ॥ २९॥

अतसीपुष्पसंकाशं नाभिस्थाने प्रतिष्ठितम् ।
चतुर्भुजं महाविष्णुं पूरकेण विचिन्तयेत् ॥ ३०॥

कुम्भकेन हृदिस्थाने चिन्तयेत्कमलासनम् ।
ब्रह्माणं रक्तगौराभं चतुर्वक्त्रं पितामहम् ॥ ३१॥

रेचकेन तु विद्यात्मा ललाटस्थं त्रिलोचनम् ।
शुद्धस्फटिकसंकाशं निष्कलं पापनाशनम् ॥ ३२॥

अब्जपत्रमधःपुष्पमूर्ध्वनालमधोमुखम् ।
कदलीपुष्पसंकाशं सर्ववेदमयं शिवम् ॥ ३३॥

शतारं शतपत्राढ्यं विकीर्णाम्बुजकर्णिकम् ।
तत्रार्कचन्द्रवह्नीनामुपर्युपरि चिन्तयेत् ॥ ३४॥

पद्मस्योद्घाटनं कृत्वा बोधचन्द्राग्निसूर्यकम् ।
तस्य हृद्बीजमाहृत्य आत्मानं चरते ध्रुवम् ॥ ३५॥

त्रिस्थानं च त्रिमात्रं च त्रिब्रह्म च त्रयाक्षरम् ।
त्रिमात्रमर्धमात्रं वा यस्तं वेद स वेदवित् ॥ ३६॥

तैलधारमिवाच्छिन्नदीर्घघण्टानिनादवत् ।
बिन्दुनादकलातीतं यस्तं वेद स वेदवित् ॥ ३७॥

यथैवत्पलनालेन तोयमाकर्षयेन्नरः ।
तथैवओत्कर्षयेद्वायुं योगी योगपथे स्थितः ॥ ३८॥

अर्धमात्रात्मकं कृत्वा कोशीभूतं तु पङ्कजम् ।
कर्षयेन्नलमात्रेण भ्रुवोर्मध्ये लयं नयेत् ॥ ३९॥

भ्रुवोर्मध्ये ललाटे तु नासिकायास्तु मूलतः ।
जानीयादमृतं स्थानं तद्ब्रह्मायतनं महत् ॥ ४०॥

आसनं प्राणसंरोधः प्रत्याहारश्च धारणा ।
ध्यानं समाधिरेतानि योगाङ्गानि भवन्ति षट् ॥ ४१॥

आसनानि च तावन्ति यावन्त्यो जीवजातयः ।
एतेषानतुलान्भेदान्विजानाति महेश्वरः ॥ ४२॥

छिद्रं भद्रं तथा सिंहं पद्मं चेति चतुष्टयम् ।
आधारं प्रथमं चक्रं स्वाधिष्ठानं द्वितीयकम् ॥ ४३॥

योनिस्थानं तयोर्मध्ये कामरूपं निगद्यते ।
आधाराख्ये गुदस्थाने पङ्कजं यच्चतुर्दलम् ॥ ४४॥

तन्मध्ये प्रोच्यते योनिः कामाख्या सिद्धवन्दिता ।
योनिमध्ये स्थितं लिङ्गं पश्चिमाभिमुखं तथा ॥ ४५॥

मस्तके मणिवद्भिन्नं यो जानाति स योगवित् ।
तप्तचामीकराकारं तडिल्लेखेव विस्फुरत् ॥ ४६॥

चतुरस्त्रमुपर्यग्नेरधो मेढ्रात्प्रतिष्ठितम् ।
स्वशब्देन भवेत्प्राणः स्वाधिष्ठानं तदाश्रयम् ॥ ४७॥

स्वाधिष्ठानं ततश्चक्रं मेढ्रमेव निगद्यते ।
मणिवत्तन्तुना यत्र वायुना पूरितं वपुः ॥ ४८॥

तन्नाभिमण्डलं चक्रं प्रोच्यते मणिपूरकम् ।
द्वादशारमहाचक्रे पुण्यपापनियन्त्रितः ॥ ४९॥

तावज्जीवो भ्रमत्येवं यावत्तत्त्वं न विन्दति ।
ऊर्ध्वं मेढ्रादधो नाभेः कन्दो योऽस्ति खगाण्डवत् ॥ ५०॥

तत्र नाड्यः समुत्पन्नाः सहस्राणि द्विसप्ततिः ।
तेषु नाडीसहस्रेषु द्विसप्ततिरुदाहृताः ॥ ५१॥

प्रधानाः प्राणवाहिन्यो भूयस्तत्र दश स्मृताः ।
इडा च पिङ्गला चैव सुषुम्ना च तृतीयका ॥ ५२॥

गान्धारी हस्तिजिह्वा च पूषा चैव यशस्विनि ।
अलम्बुसा कुहूरत्र शङ्खिनी दशमी स्मृता ॥ ५३॥

एवं नाडीमयं चक्रं विज्ञेयं योगिना सदा ।
सततं प्राणवाहिन्यः सोम सूर्याग्निदेवताः ॥ ५४॥

इडापिङ्गलासुषुम्नास्तिस्रो नाड्यः प्रकीर्तिताः ।
इडा वामे स्थिता भागे पिङ्गला दक्षिणे स्थिता ॥ ५५॥

सुषुम्ना मध्यदेशे तु प्राणमार्गास्त्रयः स्मृताः ।
प्राणोऽपानः समानश्चोदानो व्यानस्तथैव च ॥ ५६॥

नागः कूर्मः कृकरको देवदत्तो धनञ्जयः ।
प्राणाद्याः पञ्च विख्याता नागाद्याः पञ्च वायवः ॥ ५७॥

एते नाडीसहस्रेषु वर्तन्ते जीवरूपिणः ।
प्राणापानवशो जीवो ह्यधश्चोर्ध्वं प्रधावति ॥ ५८॥

वामदक्षिणमार्गेण चञ्चलत्वान्न दृश्यते ।
आक्षिप्तो भुजदण्डेन यथोच्चलति कन्दुकः ॥ ५९॥

प्राणापानसमाक्षिप्तस्तद्वज्जीवो न विश्रमेत् ।
अपानात्कर्षति प्राणोऽपानः प्राणाच्च कर्षति ॥ ६०॥

खगरज्जुवदित्येतद्यो जानाति स योगवित् ।
हकारेण बहिर्याति सकारेण विशेत्पुनः ॥ ६१॥

हंसहंसेत्यमं मन्त्रं जीवो जपति सर्वदा ।

शतानि षट्दिवारात्रं सहस्राणेकविंशतिः ॥ ६२॥

एतत्सङ्ख्यान्वितं मन्त्रं जीवो जपति सर्वदा ।
अजपा नाम गायत्री योगिनां मोक्षदा सदा ॥ ६३॥

अस्याः सङ्कल्पमात्रेण नरः पापैः प्रमुच्यते ।
अनया सदृशी विद्या अनया सदृशो जपः ॥ ६४॥

अनया सदृशं पुण्यं न भूतं न भविष्यति ।
येन मार्गेण गन्तव्यं ब्रह्मस्थानं निरामयम् ॥ ६५॥

मुखेनाच्छाद्य तद्द्वारं प्रसुप्ता परमेश्वरी ।
प्रबुद्धा वह्नियोगेन मनसा मरुता सह ॥ ६६॥

सूचिवद्गुणमादाय व्रजत्यूर्ध्वं सुषुम्नया ।
उद्घाटयेत्कपाटं तु यथा कुञ्चिकया हठात् ॥ ६७॥

कुण्डलिन्या तया योगी मोक्षद्वारं विभेदयेत् ॥ ६८॥

कृत्वा सम्पुटितौ करौ दृढतरं बध्वाथ पद्मासनम् ।
गाढं वक्षसि सन्निधाय चुबुकं ध्यानं च तच्चेतसि ॥

वारंवारमपानमूर्ध्वमनिलं प्रोच्चारयन्पूरितम् ।
मुञ्चन्प्राणमुपैति बोधमतुलं शक्तिप्रभावान्नरः ॥ ६९॥

पद्मासनस्थितो योगी नाडीद्वारेषु पूरयन् ।
मारुतं कुम्भयन्यस्तु स मुक्तो नात्र संशयः ॥ ७०॥

अङ्गानां मर्दनं कृत्वा श्रमजातेन वारिणा ।
कट्वम्ललवणत्यागी क्षीरपानरतः सुखी ॥ ७१॥

ब्रह्मचारी मिताहारी योगी योगपरायणः ।
अब्दादूर्ध्वं भवेत्सिद्धो नात्र कार्या विचारणा ॥ ७२॥

कन्दोर्ध्वकुण्डली शक्तिः स योगी सिद्धिभाजनम् ।
अपानप्राणयोरैक्यं क्षयन्मूत्रपुरीषयोः ॥ ७३॥

युवा भवति वृद्धोऽपि सततं मूलबन्धनात् ।
पार्ष्णिभागेन सम्पीड्य योनिमाकुञ्चयेद्गुदम् ॥ ७४॥

अपानमूर्ध्वमुत्कृष्य मूलबन्धोऽयमुच्यते ।

उड्याणं कुरुते यस्मादविश्रान्तमहाखगः ॥ ७५॥

उड्डियाणं तदेव स्यात्तत्र बन्धो विधीयते ।
उदरे पश्चिमं ताणं नाभेरूर्ध्वं तु कारयेत् ॥ ७६॥

उड्डियाणोऽप्ययं बन्धो मृत्युमातङ्गकेसरी ।
बध्नाति हि शिरोजातमधोगामिनभोजलम् ॥ ७७॥

ततो जालन्धरो बन्धः कर्मदुःखौघनाशनः ।
जालन्धरे कृते बन्धे कर्णसंकोचलक्षणे ॥ ७८॥

न पीयूषं पतत्यग्नौ न च वायुः प्रधावति ।
कपालकुहरे जिह्वा प्रविष्टा विपरीतगा ॥ ७९॥

भ्रुवोरन्तर्गता दृष्टिर्मुद्रा भवति खेचरी ।
न रोगो मरणं तस्य न निद्रा न क्षुधा तृषा ॥ ८०॥

न च मूर्च्छा भवेत्तस्य यो मुद्रां वेत्ति खेचरीम् ।
पीड्यते न च रोगेण लिप्यते न च कर्मणा ॥ ८१॥

बध्यते न च कालेन यस्य मुद्रस्ति खेचरी ।
चित्तं चरति खे यस्माज्जिह्वा भवति खेगता ॥ ८२॥

तेनैषा खेचरी नाम मुद्रा सिद्धनमस्कृता ।
खेचर्या मुद्रया यस्य विवरं लम्बिकोर्ध्वतः ॥ ८३॥

बिन्दुः क्षरति नो यस्य कामिन्यालिङ्गितस्य च ।
यावद्बिन्दुः स्थितो देहे तावन्मृत्युभयं कुतः ॥ ८४॥

यावद्बद्धा नभोमुद्रा तावद्बिन्दुर्न गच्छति ।
गलितोऽपि यदा बिन्दुः सम्प्राप्तो योनिमण्डले ॥ ८५॥

व्रजत्यूर्ध्वं हठाच्छक्त्या निबद्धो योनिमुद्रया ।
स एव द्विविधो बिन्दुः पाण्डरो लोहितस्तथा ॥ ८६॥

पाण्डरं शुक्रमित्याहुर्लोहिताख्यं महारजः ।
विद्रुमद्रुमसंकाशं योनिस्थाने स्थितं रजः ॥ ८७॥

शशिस्थाने वसेद्बिन्दुःस्तयोरैक्यं सुदुर्लभम् ।
बिन्दुः शिवो रजः शक्तिर्बिन्दुरिन्दू रजो रविः ॥ ८८॥

उभयओः सङ्गमादेव प्राप्यते परमं वपुः ।
वायुना शक्तिचालेन प्रेरितं खे यथा रजः ॥ ८९॥

रविणैकत्वमायाति भवेद्दिव्यं वपुस्तदा ।
शुक्लं चन्द्रेण संयुक्तं रजः सूर्यसमन्वितम् ॥ ९०॥

द्वयोः समरसीभावं यो जानाति स योगवित् ।
शोधनं मलजालानां घटनं चन्द्रसूर्ययोः ॥ ९१॥

रसानां शोषणं सम्यङ्महामुद्राभिधीयते ॥ ९२॥

वक्षोन्यस्तहनुर्निपीड्य सुषिरं योनेश्च वामाङ्घ्रिणा
हस्ताभ्यामनुधारयन्प्रविततं पादं तथा दक्षिणम् ॥

आपूर्य श्वसनेन कुक्षियुगलं बध्वा शनैरेचये-
देषा पातकनाशिनी ननु महामुद्रा नृणां प्रोच्यते ॥ ९३॥

अथात्मनिर्णयं व्याख्यास्ये ॥

हृदिस्थाने अष्टदलपद्मं वर्तते तन्मध्ये रेखावलयं
कृत्वा जीवात्मरूपं ज्योतीरूपमणुमात्रं वर्तते तस्मिन्सर्वं
प्रतिष्ठितं भवति सर्वं जानाति सर्वं करोति सर्वमेतच्चरितमहं
कर्ताऽहं भोक्ता सुखी दुःखी काणः खञ्जो बधिरो मूकः कृशः
स्थूलोऽनेन प्रकारेण स्वतन्त्रवादेन वर्तते ॥

पूर्वदले विश्रमते पूर्वं दलं श्वेतवर्णं तदा भक्तिपुरःसरं
धर्मे मतिर्भवति ॥

यदाऽग्नेयदले विश्रमते तदाग्नेयदलं रक्तवर्णं तदा निद्रालस्य
मतिर्भवति ॥

यदा दक्षिणदले विश्रमते तद्दक्षिणदलं कृष्णवर्णं तदा
द्वेषकोपमतिर्भवति ॥

यदा नैरृतदले विश्रमते तन्नैरृतदलं नीलवर्णं तदा
पापकर्महिंसामतिर्भवति ॥

यदा पश्चिमदले विश्रमते तत्पश्चिमदलं स्फटिकवर्णं तदा
क्रीडाविनोदे मतिर्भवति ॥

यदा वायव्यदले विश्रमते वायव्यदलं माणिक्यवर्णं तदा

गमनचलनवैराग्यमतिर्भवति ॥

यदोत्तरदले विश्रमते तदुत्तरदलं पीतवर्णं तदा सुखशृङ्गार-
मतिर्भवति ॥

यदेशानदले विश्रमते तदीशानदलं वैडूर्यवर्णं तदा
दानादिकृपामतिर्भवति ॥

यदा सन्धिसन्धिषु मतिर्भवति तदा वातपित्तश्लेष्ममहाव्याधि-
प्रकोपो भवति ॥

यदा मध्ये तिष्ठति तदा सर्वं जानाति गायति नृत्यति पठत्यानन्दं
करोति ॥

यदा नेत्रश्रमो भवति श्रमनिर्भरणार्थं प्रथमरेखावलयं
कृत्वा मध्ये निमज्जनं कुरुते प्रथमरेखाबन्धूकपुष्पवर्णं
तदा निद्रावस्था भवति ॥

निद्रावस्थामध्ये स्वप्नावस्था भवति ॥

स्वप्नावस्थामध्ये दृष्टं श्रुतमनुमानसम्भववार्ता
इत्यादिकल्पनां करोति तदादिश्रमो भवति ॥

श्रमनिर्हरणार्थं द्वितीयरेखावलयं कृत्वा मध्ये
निमज्जनं कुरुते द्वितीयरेखा इन्द्रकोपवर्णं तदा
सुषुप्त्यवस्था भवति सुषुप्तौ केवलपरमेश्वरसम्बन्धिनी
बुद्धिर्भवति नित्यबोधस्वरूपा भवति पश्चात्परमेश्वर-
स्वरूपेण प्राप्तिर्भवति ॥

तृतीयरेखावलयं कृत्वा मध्ये निमज्जनं कुरुते तृतीयरेखा
पद्मरागवर्णं तदा तुरीयावस्था भवति तुरीये केवलपरमात्म-
सम्बन्धिनी भवति नित्यबोधस्वरूपा भवति तदा शनैः
शनैरुपरमेद्बुद्ध्या धृतिगृहीतयात्मसंस्थं मनः
कृत्वा न किञ्चिदपि चिन्तयेत्तदा प्राणापानयोरैक्यं कृत्वा
सर्वं विश्वमात्मस्वरूपेण लक्ष्यं धारयति । यदा
तुरीयातीतावस्था तदा सर्वेषामानन्दस्वरूपो भवति
द्वन्द्वातीतो भवति यावद्देहधारणा वर्तते तावत्तिष्ठति
पश्चात्परमात्मस्वरूपेण प्राप्तिर्भवति इत्यनेन प्रकारेण

मोक्षो भवतीदमेवात्मदर्शनोपायं भवन्ति ॥

चतुष्पथसमायुक्तमहाद्वारगवायुना ।
सह स्थितत्रिकोणार्धगमने दृश्यतेऽच्युतः ॥ ९४॥

पूर्वोक्तत्रिकोणस्थानादुपरि पृथिव्यादिपञ्चवर्णकं ध्येयम् ।
प्राणादिपञ्चवायुश्च बीजं वर्णं च स्थानकम् ।
यकारं प्राणबीजं च नीलजीमूतसन्निभम् ।
रकारमग्निबीजं च अपानादित्यसंनिभम् ॥ ९५॥

लकारं पृथिवीरूपं व्यानं बन्धूकसंनिभम् ।
वकारं जीवबीजं च उदानं शङ्खवर्णकम् ॥ ९६॥

हकारं वियत्स्वरूपं च समानं स्फटिकप्रभम् ।
हृन्नाभिनासाकर्णं च पादाङ्गुष्ठादिसंस्थितम् ॥ ९७॥

द्विसप्ततिसहस्राणि नाडीमार्गेषु वर्तते ।
अष्टाविंशतिकोटीषु रोमकूपेषु संस्थिताः ॥ ९८॥

समानप्राण एकस्तु जीवः स एक एव हि ।
रेचकादि त्रयं कुर्याद्दृढचित्तः समाहितः ॥ ९९॥

शनैः समस्तमाकृष्य हृत्सरोरुहकोटरे ।
प्राणापानौ च बध्वा तु प्रणवेन समुच्चरेत् ॥ १००॥

कर्णसङ्कोचनं कृत्वा लिङ्गसङ्कोचनं तथा ।
मूलाधारात्सुषुम्ना च पद्मतन्तुनिभा शुभा ॥ १०१॥

अमूर्तो वर्तते नादो वीणादण्डसमुत्थितः ।
शङ्खनादिभिश्चैव मध्यमेव ध्वनिर्यथा ॥ १०२॥

व्योमरन्ध्रगतो नादो मायूरं नादमेव च ।
कपालकुहरे मध्ये चतुर्द्वारस्य मध्यमे ॥ १०३॥

तदात्मा राजते तत्र यथा व्योम्नि दिवाकरः ।
कोदण्डद्वयमध्ये तु ब्रह्मरन्ध्रेषु शक्तितः ॥ १०४॥

स्वात्मानं पुरुषं पश्येन्मनस्तत्र लयं गतम् ।
रत्नानि ज्योत्स्निनादं तु बिन्दुमाहेश्वरं पदम् ।
य एवं वेद पुरुषः स कैवल्यं समश्नुत इत्युपनिषत् ॥ १०५॥

ॐ सह नाववतु ॥ सह नौ भुनक्तु ॥

सह वीर्यं करवावहै ॥

तेजस्विनावधीतमस्तु मा विद्विषावहै ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

इति ध्यानबिन्दूपनिषत्समाप्ता ॥

Encoded by Sunder Hattangadi (sunderh@hotmail.com)

---

*Dhyanabindu Upanishad*

pdf was typeset on June 21, 2018

Please send corrections to *sanskrit@cheerful.com*

# .. Hansa Upanishad 15 ..

## ॥ हंसोपनिषत् ॥

### Document Information

```
Text title : Hansa Upanishad
File name : hansa.itx
Category : upaniShat
Location : doc_upanishhat
Author : Vedic Tradition
Language : Sanskrit
Subject : philosophy/religion/hinduism
Transliterated by : Sunder Hattangadi sunderh at hotmail.com
Proofread by : Sunder Hattangadi sunderh at hotmail.com
Description-comments : 15/108; Shukla-Yajur-Veda, Yoga Upanishad
Latest update : September 29, 1999
Send corrections to : Sanskrit@cheerful.com
Site access : http://sanskritdocuments.org
```



August 2, 2016

*sanskritdocuments.org*

# ॥ हंसोपनिषत् ॥

हंसाख्योपनिषत्प्रोक्तनादालिर्यत्र विश्रमेत् ।
तदाधारं निराधारं ब्रह्ममात्रमहं महः ॥

ॐ पूर्णमद इति शान्तिः ॥

गौतम उवाच ।
भगवन्सर्वधर्मज्ञ सर्वशास्त्रविशारद ।
ब्रह्मविद्याप्रबोधो हि केनोपायेन जायते ॥ १॥

सनत्कुमार उवाच ।
विचार्य सर्ववेदेषु मतं ज्ञात्वा पिनाकिनः ।
पार्वत्या कथितं तत्त्वं शृणु गौतम तन्मम ॥ २॥

अनाख्येयमिदं गुह्यं योगिनां कोशसंनिभम् ।
हंसस्याकृतिविस्तारं भुक्तिमुक्तिफलप्रदम् ॥ ३॥

अथ हंसपरमहंसनिर्णयं व्याख्यास्यामः ।
ब्रह्मचारिणे शान्ताय दान्ताय गुरुभक्ताय ।
हंसहंसेति सदा ध्यायन्सर्वेषु देहेषु व्याप्य वर्तते ॥

यथा ह्यग्निः काष्ठेषु तिलेषु तैलमिव तं विदित्वा
मृत्युमत्येति ।
गुदमवष्टभ्याधाराद्वायुमुत्थाप्यस्वाधिष्ठां त्रिः
प्रदिक्षिणीकृत्य मणिपूरकं च गत्वा अनाहतमतिक्रम्य
विशुद्धौ
प्राणान्निरुध्याज्ञामनुध्यायन्ब्रह्मरन्ध्रं ध्यायन्
त्रिमात्रोऽहमित्येवं सर्वदा ध्यायन् । अथो
नादमाधाराद्ब्रह्मरन्ध्रपर्यन्तं शुद्धस्फटिकसङ्काशं
स वै ब्रह्म परमात्मेत्युच्यते ॥ १॥

अथ हंस ऋषिः । अव्यक्ता गायत्री छन्दः । परमहंसो
देवता । अहमिति बीजम् । स इति शक्तिः ।
सोऽहमिति कीलकम् । षट् सङ्ख्यया
अहोरात्रयोरेकविंशतिसहस्राणि षट् शतान्यधिकानि
भवन्ति ।
सूर्याय सोमाय निरञ्जनाय निराभासाय तनु सूक्ष्मं
प्रचोदयादिति अग्नीषोमाभ्यां वौषट्
हृदयाद्यङ्गन्यासकरन्यासौ भवतः । एवं कृत्वा हृदये

अष्टदले हंसात्मानं ध्यायेत् । अग्नीषोमौ
पक्षावोङ्कारः शिरो बिन्दुस्तु नेत्रं मुखं रुद्रो रुद्राणी
चरणौ बाहू कालश्चाग्निश्चोभे पार्श्वे भवतः ।
पश्यत्यनागारश्च शिष्टोभयपार्श्वे भवतः । एषोऽसौ
परमहंसो भानुकोटिप्रतीकाशः । येनेदं व्याप्तम् ।
तस्याष्टधा वृत्तिर्भवति । पूर्वदले पुण्ये मतिः आग्नेये
निद्रालस्यादयो भवन्ति याम्ये क्रूरे मतिः नैर्ऋते पापे
मनीषा वारुण्यां क्रीडा वायव्ये गमनादौ बुद्धिः सौम्ये
रतिप्रीतिः ईशाने द्रव्यादानं मध्ये वैराग्यं केसरे
जाग्रदवस्था कर्णिकायां स्वप्नं लिङ्गे सुषुप्तिः पद्मत्यागे
तुरीयं यदा हंसो नादे लीनो भवति तदा
तुर्यातीतमुन्मननमजपोपसंहारमित्यभिधीयते । एवं सर्वं
हंसवशात्तस्मान्मनो हंसो विचार्यते । स एव जपकोट्या
नादमनुभवति एवं सर्वं हंसवशान्नादो दशविधो जायते
। चिणीति प्रथमः । चिञ्चिणीति द्वितीयः ।
घण्टानादस्तृतीयः । शङ्खनादश्चतुर्थः ।
पञ्चमतन्त्रीनादः । षष्ठस्तालनादः । सप्तमो वेणुनादः
। अष्टमो मृदङ्गनादः । नवमो भेरीनादः ।
दशमो मेघनादः । नवमं परित्यज्य दशममेवाभ्यसेत् ।
प्रथमे चिञ्चिणीगात्रं द्वितीये गात्रभञ्जनम् । तृतीये
खेदनं याति चतुर्थे कम्पते शिरः ॥

पञ्चमे स्रवते तालु षष्ठेऽमृतनिषेवणम् । सप्तमे
गूढविज्ञानं परा वाचा तथाष्टमे ॥

अदृश्यं नवमे देहं दिव्यं चक्षुस्तथामलम् । दशमे
परमं ब्रह्म भवेद्ब्रह्मात्मसंनिधौ ॥

तस्मिन्मनो विलीयते मनसि सङ्कल्पविकल्पे दग्धे पुण्यपापे
सदाशिवः शक्त्यात्मा सर्वत्रावस्थितः स्वयंज्योतिः शुद्धो
बुद्धो नित्यो निरञ्जनः शान्तः प्रकाशत इति ॥

इति वेदप्रवचनं वेदप्रवचनम् ॥ २॥

ॐ पूर्णमद इति शान्तिः ॥

इति हंसोपनिषत्समाप्ता ॥

# Mahavakya Upanishad

# महावाक्योपनिषत्

## Sanskrit Document Information

Text title : Mahavakya Upanishad

File name : mahavakya.itx

Category : upanishhat, svara, upanishad

Location : doc_upanishhat

Author : Vedic tradition

Transliterated by : Sunder Hattangadi (sunderh at hotmail.com)

Proofread by : Sunder Hattangadi (sunderh at hotmail.com)

Description-comments : 92 / 108;Athrva Veda - Yoga upanishad

Latest update : Apr 13, 2000

Send corrections to : Sanskrit@cheerful.com



February 10, 2019

*sanskritdocuments.org*

# महावाक्योपनिषत्

यन्महावाक्यसिद्धान्तमहाविद्याकलेवरम् ।
विकलेवरकैवल्यं रामचन्द्रपदं भजे ॥

ॐ भद्रं कर्णेभिः श्रुणुयाम देवाः
भद्रं पश्येमाक्षभिर्यजत्राः ।
स्थिरैरङ्गैस्तुष्टुवाꣳसस्तनूभिः
व्यशेम देवहितं यदायुः ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

हरिः ॐ ॥

अथ होवाच भगवान्ब्रह्मापरोक्षानुभवपरोपनिषदं
व्याख्यास्यामः । गुह्याद्गुह्यपरमेषा न प्राकृतायोपदेष्टव्या ।
सात्विकायान्तर्मुखाय परिशुश्रूषवे । अथ
संसृतिबन्धमोक्षयोर्विद्याविद्ये चक्षुषी उपसंहृत्य
विज्ञायाविद्यालोकाण्डस्तमोदृक् । तमो हि
शारीरप्रपञ्चमाब्रह्मस्थावरान्तमनन्ताखिलाजाण्डभूतम् ।
निखिलनिगमोदितसकामकर्मव्यवहारो लोकः ।
नैषोऽन्धकारोऽयमात्मा ।विद्या हि काण्डान्तरादित्यो
ज्योतिर्मण्डलं ग्राह्यं नापरम् । असावादित्यो ब्रह्मेत्यजपयोपहितं
हंसः सोऽहम् । प्राणापानाभ्यां प्रतिलोमानुलोमाभ्यां
समुपलभ्यैवं सा चिरं लब्ध्वा त्रिवृदात्मनि
ब्रह्मण्यभिध्यायमाने सच्चिदानन्दः परमात्माविर्भवति ।
सहस्रभानुमच्छुरितापूरितत्वादलिप्या पारावारपूर इव ।
नैषा समाधिः । नैषा योगसिद्धिः । नैषा मनोलयः ।
ब्रह्मैक्यं तत् । आदित्यवर्णं तमसस्तु पारे ।
सर्वाणि रूपाणि विचित्य धीरः । नामानि कृत्वाऽभिवदन्यदास्ते ।

धाता पुरस्ताद्यमुदाजहार । शक्रः प्रविद्वान्प्रदिशश्चतस्रः ।
तमेव विद्वानमृत इह भवति । नान्यः पन्था अयनाय विद्यते ।
यज्ञेन यज्ञमयजन्त देवाः । तानि धर्माणि प्रथमान्यासन् ।
ते ह नाकं महिमानः सचन्ते । यत्र पूर्वे साध्याः सन्ति देवाः ।
सोऽहमर्कः परं ज्योतिरर्कज्योतिरहं शिवः ।
आत्मज्योतिरहं शुक्रः सर्वज्योतिरसावदोम् ।
य एतदथर्वशिरोऽधीते । प्रातरधीयानो रात्रिकृतं
पापं नाशयति । सायमधीयानो दिवसकृतं पापं नाशयति ।
तत्सायं प्रातः प्रयुञ्जानः पापोऽपापो भवति ।
मध्यन्दिनमादित्याभिमुखोऽधीयानः
पञ्चमहापातकोपपातकात्प्रमुच्यते ।
सर्ववेदपारायणपुण्यं लभते ।
श्रीमहाविष्णुसायुज्यमवाप्नोतीत्युपनिषत् ॥

ॐ भद्रं कर्णेभिः श्रुणुयाम देवाः
भद्रं पश्येमाक्षभिर्यजत्राः ।
स्थिरैरङ्गैस्तुष्टुवाँ सस्तनूभिः
व्यशेम देवहितं यदायुः ॥

ॐ शान्तिः शान्तिः शान्तिः । हरिः ॐ तत्सत्
इति महावाक्योपनिषत्समाप्ता ॥

Encoded by Sunder Hattangadi (sunderh@hotmail.com)

*Mahavakya Upanishad*

pdf was typeset on February 10, 2019

Please send corrections to *sanskrit@cheerful.com*

# .. Nadabindu Upanishad ..

## ॥ नादबिन्दूपनिषत् ॥

### Document Information

```
Text title : Nadabindu Upanishad
File name : nadabindu.itx
Category : upaniShat
Location : doc_upanishhat
Author : Vedic Tradition
Language : Sanskrit
Subject : philosophy/religion/hinduism
Transliterated by : Sunder Hattangadi (sunderh at hotmail.com)
Proofread by : Sunder Hattangadi (sunderh at hotmail.com)
Description-comments : 38/108; Rig Veda, Yoga Upanishad
Latest update : July, 3, 1999
Send corrections to : Sanskrit@cheerful.com
Site access : http://sanskritdocuments.org
```



August 2, 2016

*sanskritdocuments.org*

# ॥ नादबिन्दूपनिषत् ॥

॥ नादबिन्दूपनिषत् ॥

(ऋग्वेदीय योगोपनिषत्)

वैराजात्मोपासनया सञ्जातज्ञानवह्निना ।
दग्ध्वा कर्मत्रयं योगी यत्पदं याति तद्भजे ॥

ॐ वाङ्मे मनसि प्रतिष्ठिता । मनो मे वाचि प्रतिष्ठितम् ।
आविरावीर्म एधि । वेदस्य मा आणीस्थः ।श्रुतं मे मा प्रहासीः ।
अनेनाधीतेनाहोरात्रान्सन्दधामि ।
ऋतं वदिष्यामि । सत्यं वदिष्यामि ।
तन्मामवतु । तद्वक्तारमवतु ।
अवतु मामवतु वक्तारम् ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

ॐ अकारो दक्षिणः पक्ष उकारस्तूत्तरः स्मृतः ।
मकारं पुच्छमित्याहुरर्धमात्रा तु मस्तकम् ॥ १॥

पादादिकं गुणास्तस्य शरीरं तत्त्वमुच्यते ।
धर्मोऽस्य दक्षिणश्चक्षुरधर्मो योऽपरः स्मृतः ॥ २॥

भूर्लोकः पादयोस्तस्य भुवर्लोकस्तु जानुनि ।
सुवर्लोकः कटीदेशे नाभिदेशे महर्जगत् ॥ ३॥

जनोलोकस्तु हृद्देशे कण्ठे लोकस्तपस्ततः ।
भ्रुवोर्ललाटमध्ये तु सत्यलोको व्यवस्थितः ॥ ४॥

सहस्रार्णमतीवात्र मन्त्र एष प्रदर्शितः ।
एवमेतां समारूढो हंसयोगविचक्षणः ॥ ५॥

न भिद्यते कर्मचारैः पापकोटिशतैरपि ।
आग्नेयी प्रथमा मात्रा वायव्येषा तथापरा ॥ ६॥

भानुमण्डलसंकाशा भवेन्मात्रा तथोत्तरा ।
परमा चार्धमात्रा या वारुणीं तां विदुर्बुधाः ॥ ७॥

कालत्रयेऽपि यत्रेमा मात्रा नूनं प्रतिष्ठिताः ।
एष ओङ्कार आख्यातो धारणाभिर्निबोधत ॥ ८॥

घोषिणी प्रथमा मात्रा विद्युन्मात्रा तथाऽपरा ।

पतङ्गिनी तृतीया स्याच्चतुर्थी वायुवेगिनी ॥ ९॥

पञ्चमी नामधेया तु षष्ठी चैन्द्र्यभिधीयते ।
सप्तमी वैष्णवी नाम अष्टमी शाङ्करीति च ॥ १०॥

नवमी महती नाम धृतिस्तु दशमी मता ।
एकादशी भवेन्नारी ब्राह्मी तु द्वादशी परा ॥ ११॥

प्रथमायां तु मात्रायां यदि प्राणैर्वियुज्यते ।
भरते वर्षराजासौ सार्वभौमः प्रजायते ॥ १२॥

द्वितीयायां समुत्क्रान्तो भवेद्यक्षो महात्मवान् ।
विद्याधरस्तृतीयायां गान्धर्वस्तु चतुर्थिका ॥ १३॥

पञ्चम्यामथ मात्रायां यदि प्राणैर्वियुज्यते ।
उषितः सह देवत्वं सोमलोके महीयते ॥ १४॥

षष्ठ्यामिन्द्रस्य सायुज्यं सप्तम्यां वैष्णवं पदम् ।
अष्टम्यां व्रजते रुद्रं पशूनां च पतिं तथा ॥ १५॥

नवम्यां तु महर्लोकं दशम्यां तु जनं व्रजेत् ।
एकादश्यां तपोलोकं द्वादश्यां ब्रह्म शाश्वतम् ॥ १६॥

ततः परतरं शुद्धं व्यापकं निर्मलं शिवम् ।
सदोदितं परं ब्रह्म ज्योतिषामुदयो यतः ॥ १७॥

अतीन्द्रियं गुणातीतं मनो लीनं यदा भवेत् ।
अनूपमं शिवं शान्तं योगयुक्तं सदा विशेत् ॥ १८॥

तद्युक्तस्तन्मयो जन्तुः शनैर्मुञ्चेत्कलेवरम् ।
संस्थितो योगचारेण सर्वसङ्गविवर्जितः ॥ १९॥

ततो विलीनपाशोऽसौ विमलः कमलाप्रभुः ।
तेनैव ब्रह्मभावेन परमानन्दमश्नुते ॥ २०॥

आत्मानं सततं ज्ञात्वा कालं नय महामते ।
प्रारब्धमखिलं भुञ्जन्नोद्वेगं कर्तुमर्हसि ॥ २१॥

उत्पन्ने तत्त्वविज्ञाने प्रारब्धं नैव मुञ्चति ।
तत्त्वज्ञानोदयादूर्ध्वं प्रारब्धं नैव विद्यते ॥ २२॥

देहादीनामसत्त्वात्तु यथा स्वप्नो विबोधतः ।
कर्म जन्मान्तरीयं यत्प्रारब्धमिति कीर्तितम् ॥ २३॥

तत्तु जन्मान्तराभावात्पुंसो नैवास्ति कर्हिचित् ।

स्वप्नदेहो यथाध्यस्तस्तथैवायं हि देहकः ॥ २४॥

अध्यस्तस्य कुतो जन्म जन्माभावे कुतः स्थितिः ।
उपादानं प्रपञ्चस्य मृद्भाण्डस्येव पश्यति ॥ २५॥

अज्ञानं चेति वेदान्तैस्तस्मिन्नष्टे क्व विश्वता ।
यथा रज्जुअं परित्यज्य सर्पं गृह्णाति वै भ्रमात् ॥ २६॥

तद्वत्सत्यमविज्ञाय जगत्पश्यति मूढधीः ।
रज्जुखण्डे परिज्ञाते सर्परूपं न तिष्ठति ॥ २७॥

अधिष्ठाने तथा ज्ञाते प्रपञ्चे शून्यतां गते ।
देहस्यापि प्रपञ्चत्वात्प्रारब्धावस्थितिः कृतः ॥ २८॥

अज्ञानजनबोधार्थं प्रारब्धमिति चोच्यते ।
ततः कालवशादेव प्रारब्धे तु क्षयं गते ॥ २९॥

ब्रह्मप्रणवसन्धानं नादो ज्योतिर्मयः शिवः ।
स्वयमाविर्भवेदात्मा मेघापायेंऽशुमानिव ॥ ३०॥

सिद्धासने स्थितो योगी मुद्रां सन्धाय वैष्णवीम् ।
श्रृणुयाद्दक्षिणे कर्णे नादमन्तर्गतं सदा ॥ ३१॥

अभ्यस्यमानो नादोऽयं बाह्यमावृणुते ध्वनिम् ।
पक्षाद्विपक्षमखिलं जित्वा तुर्यपदं व्रजेत् ॥ ३२॥

श्रूयते प्रथमाभ्यासे नादो नानाविधो महान् ।
वर्धमानस्तथाभ्यासे श्रूयते सूक्ष्मसूक्ष्मतः ॥ ३३॥

आदौ जलधिमूतभेरीनिर्झरसम्भवः ।
मध्ये मर्दलशब्दाभो घण्टाकाहलजस्तथा ॥ ३४॥

अन्ते तु किङ्किणीवंशवीणाभ्रमरनिःस्वनः ।
इति नानाविधा नादाः श्रूयन्ते सूक्ष्मसूक्ष्मतः ॥ ३५॥

महति श्रूयमाणे तु महाभेर्यादिकध्वनौ ।
तत्र सूक्ष्मं सूक्ष्मतरं नादमेव परामृशेत् ॥ ३६॥

घनमुत्सृज्य वा सूक्ष्मे सूक्ष्ममुत्सृज्य वा घने ।
रममाणमपि क्षिप्तं मनो नान्यत्र चालयेत् ॥ ३७॥

यत्र कुत्रापि वा नादे लगति प्रथमं मनः ।
तत्र तत्र स्थिरीभूत्वा तेन सार्धं विलीयते ॥ ३८॥

विस्मृत्य सकलं बाह्यं नादे दुग्धाम्बुवन्मनः ।

एकीभूयाथ सहसा चिदाकाशे विलीयते ॥ ३९॥

उदासीनस्ततो भूत्वा सदाभ्यासेन संयमी ।
उन्मनीकारकं सद्यो नादमेवावधारयेत् ॥ ४०॥

सर्वचिन्तां समुत्सृज्य सर्वचेष्टाविवर्जितः ।
नादमेवानुसंदध्यान्नादे चित्तं विलीयते ॥ ४१॥

मकरन्दं पिबन्भृङ्गो गन्धान्नापेक्षते तथा ।
नादासक्तं सदा चित्तं विषयं न हि काङ्क्षति ॥ ४२॥

बद्धः सुनादगन्धेन सद्यः संत्यक्तचापलः ।
नादग्रहणतश्चित्तमन्तरङ्गभुजङ्गमः ॥ ४३॥

विस्मृत्य विश्वमेकाग्रः कुत्रचिन्न हि धावति ।
मनोमत्तगजेन्द्रस्य विषयोद्यानचारिणः ॥ ४४॥

नियामनसमर्थोऽयं निनादो निशिताङ्कुशः ।
नादोऽन्तरङ्गसारङ्गबन्धने वागुरायते ॥ ४५॥

अन्तरङ्गसमुद्रस्य रोधे वेलायतेऽपि च ।
ब्रह्मप्रणवसंलग्ननादो ज्योतिर्मयात्मकः ॥ ४६॥

मनस्तत्र लयं याति तद्विष्णोः परमं पदम् ।
तावदाकाशसङ्कल्पो यावच्छब्दः प्रवतते ॥ ४७॥

निःशब्दं तत्परं ब्रह्म परमात्मा समीर्यते ।
नादो यावन्मनस्तावन्नादान्तेऽपि मनोन्मनी ॥ ४८॥

सशब्दश्चाक्षरे क्षीणे निःशब्दं परमं पदम् ।
सदा नादानुसन्धानात्संक्षीणा वासना भवेत् ॥ ४९॥

निरञ्जने विलीयेते मनोवायू न संशयः ।
नादकोटिसहस्राणि बिन्दुकोटिशतानि च ॥ ५०॥

सर्वे तत्र लयं यान्ति ब्रह्मप्रणवनादके ।
सर्वावस्थाविनिर्मुक्तः सर्वचिन्ताविवर्जितः ॥ ५१॥

मृतवत्तिष्ठते योगी स मुक्तो नात्र संशयः ।
शङ्खदुन्दुभिनादं च न श्रुणोति कदाचन ॥ ५२॥

काष्ठवज्ज्ञायते देह उन्मन्यावस्थया ध्रुवम् ।
न जानाति स शीतोष्णं न दुःखं न सुखं तथा ॥ ५३॥

न मानं नावमानं च संत्यक्त्वा तु समाधिना ।

अवस्थात्रयमन्वेति न चित्तं योगिनः सदा ॥ ५४॥

जाग्रन्निद्राविनिर्मुक्तः स्वरूपावस्थतामियात् ॥ ५५॥

दृष्टिः स्थिरा यस्य विना सदृश्यम्
वायुः स्थिरो यस्य विना प्रयत्नम् ।
चित्तं स्थिरं यस्य विनावलम्बम्
स ब्रह्मतारान्तरनादरूपः ॥ ५६॥

इत्युपनिषत् ॥

ॐ वाङ्मे मनसीति शान्तिः ॥

इति नादबिन्दूपनिषत्समाप्ता ॥

Encoded by Sunder Hattangadi (sunderh@hotmail.com)

.. Nadabindu Upanishad ..
was typeset on August 2, 2016

Please send corrections to *sanskrit@cheerful.com*

# Tejobindu Upanishad

# तेजोबिन्दूपनिषत्

## Sanskrit Document Information

Text title : Tejobindu Upanishad

File name : tejobindu.itx

Category : upanishhat, upanishad

Location : doc_upanishhat

Author : Vedic tradition

Transliterated by : Sunder Hattangadi (sunderh at hotmail.com)

Proofread by : Sunder Hattangadi (sunderh at hotmail.com)

Description-comments : 37/108; Krishna Yajurveda- Yoga upanishad

Latest update : Feb. 3, 2000, October 7, 2016

Send corrections to : Sanskrit@cheerful.com



February 10, 2019

*sanskritdocuments.org*

सदा साक्षिस्वरूपत्वाच्छिव एवास्मि केवलः ।
इति धीर्या मुनिश्रेष्ठ सा समाधिरिहोच्यते ॥ ५॥

साहं ब्रह्म न संसारी न मत्तोऽन्यः कदाचन ।
यथा फेनतरङ्गादि समुद्रादुत्थितं पुनः ॥ ६॥

समुद्रे लीयते तद्वज्जगन्मय्यनुलीयते ।
तस्मान्मनः पृथङ् नास्ति जगन्माया च नास्ति हि ॥ ७॥

यस्यैवं परमात्मायं प्रत्यग्भूतः प्रकाशितः ।
स तु याति च पुंभावं स्वयं साक्षात्परामृतम् ॥ ८॥

यदा मनसि चैतन्यं भाति सर्वत्रगं सदा ।
योगिनोऽव्यवधानेन तदा सम्पद्यते स्वयम् ॥ ९॥

यदा सर्वाणि भूतानि स्वात्मन्येव हि पश्यति ।
सर्वभूतेषु चात्मानं ब्रह्म सम्पद्यते तदा ॥ १०॥

यदा सर्वाणि भूतानि समाधिस्थो न पश्यति ।
एकीभूतः परेणाऽसौ तदा भवति केवलः ॥ ११॥

यदा पश्यति चात्मानं केवलं परमार्थतः ।
मायामात्रं जगत्कृत्स्नं तदा भवति निर्वृतिः ॥ १२॥

एवमुक्त्वा स भगवान्दत्तात्रेयो महामुनिः ।
सांकृतिः स्वस्वरूपेण सुखमास्तेऽतिनिर्भयः ॥ १३॥ इति॥

इति दशमः खण्डः ॥ १०॥

ॐ आप्यायन्तु ममाङ्गानि वाक्प्राणश्चक्षुः श्रोत्रमथो बलमिन्द्रियाणि च ॥
सर्वाणि सर्वं ब्रह्मोपनिषदं माहं ब्रह्म निराकुर्यां मा मा ब्रह्म
निराकरोदनिराकरणमस्त्वनिराकरणं मेस्तु तदात्मनि निरते य उपनिषत्सु
धर्मास्ते मयि सन्तु ते मयि सन्तु ॥

ॐ शान्तिः शान्तिः शान्तिः ॥ हरिः ॐ तत्सत् ॥

इति श्रीजाबालदर्शनोपनिषत्समाप्ता ॥

Encoded by Sunder Hattangadi (sunderh@hotmail.com)

# .. Kshurika Upanishad ..

## ॥ क्षुरिकोपनिषत् ॥

### Document Information

```
Text title : Kshurika Upanishad
File name : kshurika.itx
Category : upaniShat
Location : doc_upanishhat
Author : Vedic Rishis
Language : Sanskrit
Subject : philosophy/hinduism
Transliterated by : Sunder Hattangadi (sunderh at hotmail.com)
Proofread by : Sunder Hattangadi (sunderh at hotmail.com)
Description-comments : 31/108; Krishna Yajurveda Ypga Upanishad
Latest update : Jan. 8, 2000
Send corrections to : Sanskrit@cheerful.com
Site access : http://sanskritdocuments.org
```



August 2, 2016

*sanskritdocuments.org*

# ॥ क्षुरिकोपनिषत् ॥

कैवल्यनाडीकान्तस्थपराभूमिनिवासिनम् ।
क्षुरिकोपनिषद्योगभासुरं राममाश्रये ॥

ॐ सहनाववतु ॥ सह नौ भुनक्तु ॥ सह वीर्यं करवावहै ॥

तेजस्विनावधीतमस्तु मा विद्विषावहै ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

ॐ क्षुरिकां सम्प्रवक्ष्यामि धारणां योगसिद्धये ।
यं प्राप्य न पुनर्जन्म योगयुक्तस्य जायते ॥ १॥

वेदतत्त्वार्थविहितं यथोक्तं हि स्वयंभुवा ।
निःशब्दं देशमास्थाय तत्रासनमवस्थितः ॥ २॥

कूर्मोऽङ्गानीव संहृत्य मनो हृदि निरुध्य च ।
मात्राद्वादशयोगेन प्रणवेन शनैः शनैः ॥ ३॥

पूरयेत्सर्वमात्मानं सर्वद्वारं निरुध्य च ।
उरोमुखकटिग्रीवं किञ्चिद्धृदयमुन्नतम् ॥ ४॥

प्राणान्सन्धारयेत्तस्मिनासाभ्यन्तरचारिणः ।
भूत्वा तत्र गतः प्राणः शनैरथ समुत्सृजेत् ॥ ५॥

स्थिरमात्रादृढं कृत्वा अङ्गुष्ठेन समाहितः ।
द्वे गुल्फे तु प्रकुर्वीत जङ्घे चैव त्रयस्त्रयः ॥ ६॥

द्वे जानुनी तथोरुभ्यां गुदे शिश्ने त्रयस्त्रयः ।
वायोरायतनं चात्र नाभिदेशे समाश्रयेत् ॥ ७॥

तत्र नाडी सुषुम्ना तु नाडीभिर्बहुभिर्वृता ॥

अणु रक्तश्च पीताश्च कृष्णास्ताम्रा विलोहिताः ॥ ८॥

अतिसूक्ष्मां च तन्वीं च शुक्लां नाडीं समाश्रयेत् ।
तत्र संचारयेत्प्राणानूर्णनाभीव तन्तुना ॥ ९॥

ततो रक्तोत्पलाभासं पुरुषायतनं महत्
दहरं पुण्डरीकं तद्वेदान्तेषु निगद्यते ॥ १०॥

तद्भित्त्वा कण्ठमायाति तां नाडीं पूरयन्यतः ।
मनसस्तु क्षुरं गृह्य सुतीक्ष्णं बुद्धिनिर्मलम् ॥ ११॥

पादस्योपरि यन्मध्ये तद्रूपं नाम कृन्तयेत् ।

मनोद्वारेण तीक्ष्णेन योगमाश्रित्य नित्यशः ॥ १२॥

इन्द्रवज्र इति प्रोक्तं मर्मजङ्घानुकीर्तनम् ।
तद्ध्यानबलयोगेन धारणाभिर्निकृन्तयेत् ॥ १३॥

ऊर्वोर्मध्ये तु संस्थाप्य मर्मप्राणविमोचनम् ।
चतुरभ्यासयोगेन छिन्देदनभिशङ्कितः ॥१४॥

ततः कण्ठान्तरे योगी समूहन्नाडिसञ्चयम् ।
एकोत्तरं नाडिशतं तासां मध्ये वराः स्मृताः ॥ १५॥

सुषुम्ना तु परे लीना विरजा ब्रह्मरूपिणी ।
इडा तिष्ठति वामेन पिङ्गला दक्षिणेन च ॥ १६॥

तयोर्मध्ये वरं स्थानं यस्तं वेद स वेदवित् ।
द्वासप्ततिसहस्राणि प्रतिनाडीषु तैतिलम् ॥ १७॥

छिद्यते ध्यानयोगेन सुषुम्नैका न छिद्यते ।
योगनिर्मलधारेण क्षुरेणानलवर्चसा ॥ १८॥

छिन्देन्नाडीशतं धीरः प्रभावादिह जन्मनि ।
जातीपुष्पसमायोगैर्यथा वास्यति तैतिलम् ॥ १९॥

एवं शुभाशुभैर्भावैः सा नाडीति विभावयेत् ।
तद्भाविताः प्रपद्यन्ते पुनर्जन्मविवर्जिताः ॥ २०॥

तपोविजितचित्तस्तु निःशब्दं देशमास्थितः ।
निःसङ्गतत्त्वयोगज्ञो निरपेक्षः शनैः शनैः ॥ २१॥

पाशं छित्त्वा यथा हंसो निर्विशङ्कं खमुत्क्रमेत् ।
छिन्नपाशस्तथा जीवः संसारं तरते सदा ॥ २२॥

यथा निर्वाणकाले तु दीपो दग्ध्वा लयं व्रजेत् ।
तथा सर्वाणि कर्माणि योगी दग्ध्वा लयं व्रजेत् ॥ २३॥

प्राणायामसुतीक्ष्णेन मात्राधारेण योगवित् ।
वैराग्योपलघृष्टेन छित्त्वा तं तु न बध्यते ॥ २४॥

अमृतत्वं समाप्नोति यदा कामात्स मुच्यते ।
सर्वेषणाविनिर्मुक्तश्छित्त्वा तं तु न बध्यत इत्युपनिषत् ॥

ॐ सह नाववतु ॥ सह नौ भुनक्तु ॥ सह वीर्यं करवावहै ॥

तेजस्विनावधीतमस्तु मा विद्विषावहै ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

# Pashupatabrahma Upanishad

# पाशुपतब्रह्मोपनिषत्

## Sanskrit Document Information

Text title : Pashupatabrahma Upanishad

File name : pashupata.itx

Category : upanishhat, svara, upanishad

Location : doc_upanishhat

Author : Vedic tradition

Transliterated by : Sunder Hattangadi (sunderh at hotmail.com)

Proofread by : Sunder Hattangadi (sunderh at hotmail.com)

Description-comments : 77 / 108; Atharva Veda - Yoga upanishad

Latest update : August 12, 2000

Send corrections to : Sanskrit@cheerful.com



February 10, 2019

*sanskritdocuments.org*

# पाशुपतब्रह्मोपनिषत्

पाशुपतब्रह्मविद्यासंवेद्यं परमाक्षरम् ।
परमानन्दसम्पूर्णं रामचन्द्रपदं भजे ॥

ॐ भद्रं कर्णेभिः शृणुयाम देवाः ॥ भद्रं पश्येमाक्षभिर्यजत्राः ॥

स्थिरैरङ्गैस्तुष्टुवाँ सस्तनूभिः ॥ व्यशेम देवहितं यदायुः ॥

स्वस्ति न इन्द्रो वृद्धश्रवाः ॥ स्वस्ति नः पूषा विश्ववेदाः ॥

स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः ॥ स्वस्ति नो बृहस्पतिर्दधातु ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

हरिः ॐ ॥ अथ ह वै स्वयंभूर्ब्रह्मा प्रजाः सृजानीति कामकामो जायते
कामेश्वरो वैश्रवणः । वैश्रवणो ब्रह्मपुत्रो वालखिल्यः स्वयंभुवं
परिपृच्छति जगतां का विद्या का देवता जाग्रत्तुरीययोरस्य को देवो यानि
तस्य वशानि कालाः कियत्प्रमाणाः कस्याज्ञया रविचन्द्रग्रहादयो भासन्ते
कस्य महिमा गगनस्वरूप एतदहं श्रोतुमिच्छामि नान्यो जानाति
त्वं ब्रूहि ब्रह्मन् । स्वयंभूरुवाच कृत्स्नजगतां मातृका विद्या
द्वित्रिवर्णसहिता द्विवर्णमाता त्रिवर्णसहिता । चतुर्मात्रात्मकोङ्कारो मम
प्राणात्मिका देवता । अहमेव जगत्त्रयस्यैकः पतिः । मम वशानि सर्वाणि
युगान्यपि । अहोरात्रादयो मत्संवर्धिताः कालाः । मम रूपा
रवेस्तेजश्चन्द्रनक्षत्रग्रहतेजांसि च । गगनो मम त्रिशक्तिमायास्वरूपः
नान्यो मदस्ति । तमोमायात्मको रुद्रः सात्विकमायात्मको विष्णू
राजसमायात्मको ब्रह्मा ।
इन्द्रादयस्तामसराजसात्मिका न सात्विकः कोऽपि अघोरः
सर्वसाधारणस्वरूपः । समस्तयागानां रुद्रः पशुपतिः कर्ता ।
रुद्रो यागदेवो विष्णुरध्वर्युर्होतेन्द्रो देवता यज्ञभुग्
मानसं ब्रह्म माहेश्वरं ब्रह्म मानसं हंसः

सोऽहं हंस इति । तन्मययज्ञो नादानुसंधानम् ।
तन्मयविकारो जीवः । परमात्मस्वरूपो हंसः । अन्तर्बहिश्चरति
हंसः । अन्तर्गतोऽनकाशान्तर्गतसुपर्णस्वरूपो हंसः ।
षण्णवतितत्त्वतन्तुवद्व्यक्तं चित्सूत्रत्रयचिन्मयलक्षणं
नवतत्त्वत्रिरावृतं ब्रह्मविष्णुमहेश्वरात्मकमग्नित्रयकलोपेतं
चिद्ग्रन्थिबन्धनम् । अद्वैतग्रन्थिः यज्ञसाधारणाङ्गं
बहिरन्तर्ज्वलनं यज्ञाङ्गलक्षणब्रह्मस्वरूपो हंसः ।
उपवीतलक्षणसूत्रब्रह्मगा यज्ञाः । ब्रह्माङ्गलक्षणयुक्तो
यज्ञसूत्रम् । तद्ब्रह्मसूत्रम् । यज्ञसूत्रसंबंधी ब्रह्मयज्ञः ।
तत्स्वरूपोऽङ्गानि मात्राणि मनो यज्ञस्य हंसो यज्ञसूत्रम् ।
प्रणवं ब्रह्मसूत्रं ब्रह्मयज्ञमयम् । प्रणवान्तर्वर्ती हंसो
ब्रह्मसूत्रम् । तदेव ब्रह्मयज्ञमयं मोक्षक्रमम् ।
ब्रह्मसन्ध्याक्रिया मनोयागः । सन्ध्याक्रिया मनोयागस्य लक्षणम् ।
यज्ञसूत्रप्रणवब्रह्मयज्ञक्रियायुक्तो ब्राह्मणः । ब्रह्मचर्येण
हरन्ति देवाः । हंससूत्रचर्या यज्ञाः । हंसप्रणवयोरभेदः ।
हंसस्य प्रार्थनास्त्रिकालाः । त्रिकालस्त्रिवर्णाः । त्रेताग्न्यनुसन्धानो यागः ।
त्रेताग्न्यात्माकृतिवर्णोङ्कारहंसानुसन्धानोऽन्तर्यागः ।
चित्स्वरूपवत्तन्मयं तुरीयस्वरूपम् । अन्तरादित्ये ज्योतिःस्वरूपो हंसः ।
यज्ञाङ्गं ब्रह्मसम्पत्तिः । ब्रह्मप्रवृत्तौ तत्प्रणवहंससूत्रेणैव
ध्यानमाचरन्ति । प्रोवाच पुनः स्वयंभुवं प्रतिजानीते ब्रह्मपुत्रो
ऋषिर्वालखिल्यः । हंससूत्राणि कतिसंख्यानि कियद्वा प्रमाणम् ।
हृद्यादित्यमरीचीनां पदं षण्णवतिः । चित्सूत्रघ्राणयोः स्वर्निर्गता
प्रणवधारा षडङ्गुलदशाशीतिः । वामबाहुर्दक्षिणकट्योरन्तश्चरति
हंसः परमात्मा ब्रह्मगुह्यप्रकारो नान्यत्र विदितः । जानन्ति तेऽमृतफलकाः ।
सर्वकालं हंसं प्रकाशकम् । प्रणवहंसान्तर्ध्यानप्रकृतिं विना न मुक्तिः ।
नवसूत्रान्परिचर्चितान् । तेऽपि यद्ब्रह्म चरन्ति । अन्तरादित्ये न ज्ञातं
मनुष्याणाम् । जगदादित्यो रोचत इति ज्ञात्वा ते मर्त्या विबुधास्तपन
प्रार्थनायुक्ता आचरन्ति ।
वाजपेयः पशुहर्ता अध्वर्युरिन्द्रो देवता अहिंसा
धर्मयागः परमहंसोऽध्वर्युः परमात्मा देवता
पशुपतिः ब्रह्मोपनिषदो ब्रह्म । स्वाध्याययुक्ता
ब्राह्मणाश्चरन्ति । अश्वमेधो महायज्ञकथा ।

तद्राज्ञा ब्रह्मचर्यमाचरन्ति । सर्वेषां
पूर्वोक्तब्रह्मयज्ञक्रमं मुक्तिक्रममिति ब्रह्मपुत्रः
प्रोवाच । उदितो हंस ऋषिः । स्वयंभूस्तिरोदधे । रुद्रो
ब्रह्मोपनिषदो हंसज्योतिः पशुपतिः प्रणवस्तारकः स एवं वेद ।
हंसात्ममालिकावर्णब्रह्मकालप्रचोदिता ।
परमात्मा पुमानिति ब्रह्मसम्पत्तिकारिणी ॥ १॥

अध्यात्मब्रह्मकल्पस्याकृतिः कीदृशी कथा ।
ब्रह्मज्ञानप्रभासन्ध्याकालो गच्छति धीमताम् ।
हंसाख्यो देवमात्माख्यमात्मतत्त्वप्रजा कथम् ॥ २॥

अन्तःप्रणवनादाख्यो हंसः प्रत्ययबोधकः ।
अन्तर्गतप्रमागूढं ज्ञाननालं विराजितम् ॥ ३॥

शिवशक्त्यात्मकं रूपं चिन्मयानन्दवेदितम् ।
नादबिन्दुकला त्रीणि नेत्रं विश्वविचेष्टितम् ॥ ४॥

त्रियङ्गानि शिखा त्रीणि द्वित्राणां संख्यमाकृतिः ।
अन्तर्गूढप्रमा हंसः प्रमाणान्निर्गतं बहिः ॥ ५॥

ब्रह्मसूत्रपदं ज्ञेयं ब्राह्मं विध्युक्तलक्षणम् ।
हंसार्कप्रणवध्यानमित्युक्तो ज्ञानसागरे ॥ ६॥

एतद्विज्ञानमत्रेण ज्ञानसागरपारगः ।
स्वतः शिवः पशुपतिः साक्षी सर्वस्य सर्वदा ॥ ७॥

सर्वेषां तु मनस्तेन प्रेरितं नियमेन तु ।
विषये गच्छति प्राणश्चेष्टते वाग्वदत्यपि ॥ ८॥

चक्षुः पश्यति रूपाणि श्रोत्रं सर्वं शृणोत्यपि ।
अन्यानि कानि सर्वाणि तेनैव प्रेरितानि तु ॥ ९॥

स्वं स्वं विषयमुद्दिश्य प्रवर्तन्ते निरन्तरम् ।
प्रवर्तकत्वं चाप्यस्य मायया न स्वभावतः ॥ १०॥

श्रोत्रमात्मनि चाध्यस्तं स्वयं पशुपतिः पुमान् ।
अनुप्रविश्य श्रोत्रस्य ददाति श्रोत्रतां शिवः ॥ ११॥

मनः स्वात्मनि चाध्यस्तं प्रविश्य परमेश्वरः ।

मनस्त्वं तस्य सत्त्वस्थो ददाति नियमेन तु ॥ १२॥

स एव विदितादन्यस्तथैवाविदितादपि ।
अन्येषामिन्द्रियाणां तु कल्पितानामपीश्वरः ॥ १३॥

तत्तद्रूपमनु प्राप्य ददाति नियमेन तु ।
ततश्चक्षुश्च वाक्चैव मनश्चान्यानि खानि च ॥ १४॥

न गच्छन्ति स्वयंज्योतिःस्वभावे परमात्मनि ।
अकर्तृविषयप्रत्यक्प्रकाशं स्वात्मनैव तु ॥ १५॥

विना तर्कप्रमाणाभ्यां ब्रह्म यो वेद वेद सः ।
प्रत्यगात्मा परंज्योतिर्माया सा तु महत्तमः ॥ १६॥

तथा सति कथं मायासंभवः प्रत्यगात्मनि ।
तस्मात्तर्कप्रमाणाभ्यां स्वानुभूत्या च चिद्घने ॥ १७॥

स्वप्रकाशैकसंसिद्धे नास्ति माया परात्मनि ।
व्यावहारिकदृष्ट्येयं विद्याविद्या न चान्यथा ॥ १८॥

तत्त्वदृष्ट्या तु नास्त्येव तत्त्वमेवास्ति केवलम् ।
व्यावहारिक दृष्टिस्तु प्रकाशाव्यभिचारितः ॥ १९॥

प्रकाश एव सततं तस्माद्द्वैत एव हि ।
अद्वैतमिति चोक्तिश्च प्रकाशाव्यभिचारतः ॥ २०॥

प्रकाश एव सततं तस्मान्मौनं हि युज्यते ।
अयमर्थो महान्यस्य स्वयमेव प्रकाशितः ॥ २१॥

न स जीवो न च ब्रह्मा न चान्यदपि किंचन ।
न तस्य वर्णा विद्यन्ते नाश्रमाश्च तथैव च ॥ २२॥

न तस्य धर्मोऽधर्मश्च न निषेधो विधिर्न च ।
यदा ब्रह्मात्मकं सर्वं विभाति तत एव तु ॥ २३॥

तदा दुःखादिभेदोऽयमाभासोऽपि न भासते ।
जगज्जीवादिरूपेण पश्यन्नपि परात्मवित् ॥ २४॥

न तत्पश्यति चिद्रूपं ब्रह्मवस्त्वेव पश्यति ।
धर्मधर्मित्ववार्ता च भेदे सति हि भिद्यते ॥ २५॥

भेदाभेदस्तथा भेदाभेदः साक्षात्परात्मनः ।
नास्ति स्वात्मातिरेकेण स्वयमेवास्ति सर्वदा ॥ २६॥

ब्रह्मैव विद्यते साक्षाद्वस्तुतोऽवस्तुतोऽपि च ।
तथैव ब्रह्मविज्ज्ञानी किं गृह्णाति जहाति किम् ॥ २७॥

अधिष्ठानमनौपम्यमवाङ्मनसगोचरम् ।
यत्तदद्रेश्यमग्राह्यमगोत्रं रूपवर्जितम् ॥ २८॥

अचक्षुःश्रोत्रमत्यर्थं तदपाणिपदं तथा ।
नित्यं विभुं सर्वगतं सुसूक्ष्मं च तदव्ययम् ॥ २९॥

ब्रह्मैवेदममृतं तत्पुरस्ताद्-
ब्रह्मानन्दं परमं चैव पश्चात् ।
ब्रह्मानन्दं परमं दक्षिणे च
ब्रह्मानन्दं परमं चोत्तरे च ॥ ३०॥

स्वात्मन्येव स्वयं सर्वं सदा पश्यति निर्भयः ।
तदा मुक्तो न मुक्तश्च बद्धस्यैव विमुक्तता ॥ ३१॥

एवंरूपा परा विद्या सत्येन तपसापि च ।
ब्रह्मचर्यादिभिर्धर्मैर्लभ्या वेदान्तवर्त्मना ॥ ३२॥

स्वशरीरे स्वयंज्योतिःस्वरूपं पारमार्थिकम् ।
क्षीणदोषः प्रपश्यन्ति नेतरे माययावृताः ॥ ३३॥

एवं स्वरूपविज्ञानं यस्य कस्यास्ति योगिनः ।
कुत्रचिद्गमनं नास्ति तस्य सम्पूर्णरूपिणः ॥ ३४॥

आकाशमेकं सम्पूर्णं कुत्रचिन्न हि गच्छति ।
तद्वद्ब्रह्मात्मविच्छ्रेष्ठः कुत्रचिन्नैव गच्छति ॥ ३५॥

अभक्ष्यस्य निवृत्त्या तु विशुद्धं हृदयं भवेत् ।
आहारशुद्धौ चित्तस्य विशुद्धिर्भवति स्वतः ॥ ३६॥

चित्तशुद्धौ क्रमाज्ज्ञानं त्रुट्यन्ति ग्रन्थयः स्फुटम् ।
अभक्ष्यं ब्रह्मविज्ञानविहीनस्यैव देहिनः ॥ ३७॥

न सम्यग्ज्ञानिनस्तद्वत्स्वरूपं सकलं खलु ।
अहमन्नं सदान्नाद इति हि ब्रह्मवेदनम् ॥ ३८॥

ब्रह्मविद्ग्रसति ज्ञानात्सर्वं ब्रह्मात्मनैव तु ।
ब्रह्मक्षत्रादिकं सर्वं यस्य स्यादोदनं सदा ॥ ३९॥

यस्योपसेचनं मृत्युस्तं ज्ञानी तादृशः खलु ।
ब्रह्मस्वरूपविज्ञानाज्जगद्भोज्यं भवेत्खलु ॥ ४०॥

जगदात्मतया भाति यदा भोज्यं भवेत्तदा ।
ब्रह्मस्वात्मतया नित्यं भक्षितं सकलं तदा ॥ ४१॥

यदाभासेन रूपेण जगद्भोज्यं भवेत तत् ।
मानतः स्वात्मना भातं भक्षितं भवति ध्रुवम् ॥ ४२॥

स्वस्वरूपं स्वयं भुङ्क्ते नास्ति भोज्यं पृथक् स्वतः ।
अस्ति चेदस्तितारूपं ब्रह्मैवास्तित्वलक्षणम् ॥ ४३॥

अस्तितालक्षणा सत्ता सत्ता ब्रह्म न चापरा ।
नास्ति सत्तातिरेकेण नास्ति माया च वस्तुतः ॥ ४४॥

योगिनामात्मनिष्ठानां माया स्वात्मनि कल्पिता ।
साक्षिरूपतया भाति ब्रह्मज्ञानेन बाधिता ॥ ४५॥

ब्रह्मविज्ञानसम्पन्नः प्रतीतमखिलं जगत् ।
पश्यन्नपि सदा नैव पश्यति स्वात्मनः पृथक् ॥ ४६॥ इत्युपनिषत् ॥

ॐ भद्रं कर्णेभिः शृणुयाम देवाः ॥ भद्रं पश्येमाक्षभिर्यजत्राः ॥

स्थिरैरङ्गैस्तुष्टुवाꣳसस्तनूभिः ॥ व्यशेम देवहितं यदायुः ॥

स्वस्ति न इन्द्रो वृद्धश्रवाः ॥ स्वस्ति नः पूषा विश्ववेदाः ॥

स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः ॥ स्वस्ति नो बृहस्पतिर्दधातु ॥

ॐ शान्तिः शान्तिः शान्तिः ॥ हरिः ॐ तत्सत् ॥

इति पाशुपतब्रह्मोपनिषत्समाप्ता ॥

Encoded by Sunder Hattangadi (sunderh@hotmail.com)

# Mandalabrahmana Upanishad

# मण्डलब्राह्मणोपनिषत्

## Sanskrit Document Information

Text title : Mandalabrahmana Upanishad

File name : mandala.itx

Category : upanishhat, upanishad

Location : doc_upanishhat

Author : Vedic tradition

Transliterated by : Sunder Hattangadi (sunderh at hotmail.com)

Proofread by : Sunder Hattangadi (sunderh at hotmail.com)

Description-comments : 48 / 108; Shukla Yajurveda - Yoga upanishad

Latest update : Mar. 17, 2000

Send corrections to : Sanskrit@cheerful.com



February 10, 2019

*sanskritdocuments.org*

# मण्डलब्राह्मणोपनिषत्

बाह्यान्तस्तारकाकारं व्योमपञ्चकविग्रहम् ।
राजयोगैकसंसिद्धं रामचन्द्रमुपास्महे ॥

ॐ पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते ।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

ॐ याज्ञवल्क्यो ह वै महामुनिरादित्यलोकं जगाम ।
तमादित्यं नत्वा भो भगवन्नादित्यात्मतत्त्वमनुब्रूहीति ।
सहोवाच नारायणः ।
ज्ञानयुक्तयमाद्यष्टाङ्गयोग उच्यते ।
शीतोष्णाहारनिद्राविजयः सर्वदा शान्तिर्निश्चलत्वं
विषयेन्द्रियनिग्रहश्चैते यमाः ।
गुरुभक्तिः सत्यमार्गानुरक्तिः सुखागतवस्त्वनुभवश्च
तद्वस्त्वनुभवेन तुष्टिर्निःसङ्गता एकान्तवासो मनोनिवृत्तिः
फलानभिलाषो वैराग्यभावश्च नियमाः ।
सुखासनवृत्तिश्चीरवासाश्चैवमासननियमो भवति ।
पूरककुम्भकरेचकैः षोडशचतुष्षष्टि-
द्वात्रिऽन्शत्सङ्ख्या यथाक्रमं प्राणायामः ।
विषयेभ्य इन्द्रियार्थेभ्यो मनोनिरोधनं प्रत्याहारः ।
सर्वशरीरेषु चैतन्यैकतानता ध्यानम् ।
विषयव्यावर्तनपूर्वकं चैतन्ये चेतःस्थापनं
धारणं भवति ।
ध्यानविस्मृतिः समाधिः ।
एवं सूक्ष्माङ्गानि । य एवं वेद स मुक्तिभाग्भवति ॥ १॥

देहस्य पञ्चदोषा भवन्ति कामक्रोधनिःश्वासभयनिद्राः ।

तन्निरासस्तु निःसङ्कल्पक्षमालघ्वाहारप्रमादतातत्त्वसेवनम् ।
निद्राभयसरीसृपं हिंसादितरङ्गं तृष्णावर्तं
दारपङ्कं संसारवार्धिं तर्तुं सूक्ष्ममार्गमवलम्ब्य
सत्त्वादिगुणानतिक्रम्य तारमवलोकयेत् ।
भ्रूमध्ये सच्चिदानन्दतेजःकूटरूपं तारकं ब्रह्म ।
तदुपायं लक्ष्यत्रयावलोकनम् ।
मूलाधारादारभ्य ब्रह्मरन्ध्रपर्यन्तं सुषुम्ना सूर्याभा ।
मृणालतन्तुसूक्ष्मा कुण्डलिनी । ततो तमोनिवृत्तिः ।
तद्दर्शनात्सर्वपापनिवृत्तिः । तर्जन्यग्रोन्मीलितकर्णरन्ध्रद्वये
फूत्कारशब्दो जायते । तत्र स्थिते मनसि चक्षुर्मध्य नीलज्योतिः
पश्यति । एवं हृदयेऽपि । बहिर्लक्ष्यं तु नासाग्रे चतुः-
षडष्टदशद्वादशाङ्गुलीभिः क्रमान्नीलद्युतिश्यामत्व-
सदृग्रक्तभङ्गीस्फुरत्पीतवर्णद्वयोपेतं व्योमत्वं पश्यति
स तु योगी चलनदृष्ट्या व्योमभागवीक्षितुः पुरुषस्य
दृष्ट्यग्रे ज्योतिर्मयूखा वर्तन्ते । तद्दृष्टिः स्थिरा भवति ।
शीर्षोपरि द्वादशाङ्गुलिमानज्योतिः पश्यति तदाऽमृतत्वमेति ।
मध्यलक्ष्यं तु प्रातश्चित्रादिवर्णसूर्यचन्द्रवह्निज्वाला-
वलीवत्तद्विहीनान्तरिक्षवत्पश्यति ।
तदाकाराकारी भवति । अभ्यासान्निर्विकारं
गुणरहिताकाशं भवति । विस्फुरत्तारकाकारगाढ-
तमोपमं पराकाशं भवति । कालानलसमं
द्योतमानं महाकाशं भवति । सर्वोत्कृष्ट-
परमाद्वितीयप्रद्योतमानं तत्त्वाकाशं भवति ।
कोटिसूर्यप्रकाशं सूर्याकाशं भवति ।
एवमभ्यासात्तन्मयो भवति । य एवं वेद ॥ २॥

तद्योगं च द्विधा विद्धि पूर्वोत्तरविभागतः ।
पूर्वं तु तारकं विद्यादमनस्कं तदुत्तरमिति ।
तारकं द्विविधम् । मूर्तितारकममूर्तितारकमिति ।
यदिन्द्रियान्तं तन्मूर्तितारकम् । यद्भ्रूयुगातीतं
तदमूर्तितारकमिति । उभयमपि मनोयुक्तमभ्यसेत् ।
मनोयुक्तान्तरदृष्टिस्तारकप्रकाशाय भवति ।

भ्रूयुगमध्यबिले तेजस आविर्भावः । एतत्पूर्वतारकम् ।
उत्तरं त्वमनस्कम् । तालुमूलोर्ध्वभागे महाज्योतिर्विद्यते ।
तद्दर्शनादणिमादिसिद्धिः । लक्ष्येऽन्तर्बाह्यायां
दृष्टौ निमेषोन्मेषवर्जितायां च इयं शाम्भवी
मुद्रा भवति । सर्वतन्त्रेषु गोप्यमहाविद्या भवति ।
तज्ज्ञानेन संसारनिवृत्तिः । तत्पूजनं मोक्षफलदम् ।
अन्तर्लक्ष्यं जलज्योतिःस्वरूपं भवति । महर्षिवेद्यं
अन्तर्बाह्येन्द्रियैरदृश्यम् ॥ ३॥

सहस्रारे जलज्योतिरन्तर्लक्ष्यम् । बुद्धिगुहायां
सर्वाङ्गसुन्दरं पुरुषरूपमन्तर्लक्ष्यमित्यपरे ।
शीर्षान्तर्गतमण्डलमध्यगं पञ्चवक्त्रमुमासहायं
नीलकण्ठं प्रशान्तमन्तर्लक्ष्यमिति केचित् ।
अङ्गुष्ठमात्रः पुरुषोऽन्तर्लक्ष्यमित्येके ।
उक्तविकल्पं सर्वमात्मैव । तल्लक्ष्यं शुद्धात्मदृष्ट्या
वा यः पश्यति स एव ब्रह्मनिष्ठो भवति । जीवः
पञ्चविंशकः स्वकल्पितचतुर्विंशतितत्त्वं परित्यज्य
षड्विंशः परमात्माहमिति निश्चयाज्जीवन्मुक्तो भवति ।
एवमन्तर्लक्ष्यदर्शनेन जीवन्मुक्तिदशायां स्वयमन्तर्लक्ष्यो
भूत्वा परमाकाशाखण्डमण्डलो भवति ॥ ४॥

इति प्रथमं ब्राह्मणम् ॥

अथ ह याज्ञवल्क्य आदित्यमण्डलपुरुषं पप्रच्छ ।
भगवन्नन्तर्लक्ष्यादिकं बहुधोक्तम् । मया तन्न
ज्ञातम् । तद्ब्रूहि मह्यम् । तदुहोवाच पञ्चभूत-
कारणं तडित्कूटाभं तद्वच्चतुःपीठम् । तन्मध्ये
तत्त्वप्रकाशो भवति । सोऽतिगूढ अव्यक्तश्च ।
तज्ज्ञानप्लवाधिरूढेन ज्ञेयम् । तद्बाह्याभ्यन्तर्लक्ष्यम् ।
तन्मध्ये जगल्लीनम् । तन्नादबिन्दुकलातीतमखण्डमण्डलम् ।
तत्सगुणनिर्गुणस्वरूपम् । तद्वेत्ता विमुक्तः । आदावग्निमण्डलम् ।
तदुपरि सूर्यमण्डलम् । तन्मध्ये सुधाचन्द्रमण्डलम् ।
तन्मध्येऽखण्डब्रह्मतेजोमण्डलम् । तद्विद्युल्लेखावच्छुक्ल-
भास्वरम् । तदेव शाम्भवीलक्षणम् । तद्दर्शने तिस्रो मूर्तय

अमा प्रतिपत्पूर्णिमा चेति । निमीलितदर्शनममादृष्टिः ।
अर्धोन्मीलितं प्रतिपत् । सर्वोन्मीलनं पूर्णिमा भवति । तासु
पूर्णिमाभ्यासः कर्तव्यः तल्लक्ष्यं नासाग्रम् । तदा
तालुमूले गाढतमो दृश्यते । तदभ्यासादखण्डमण्डलाकार-
ज्योतिर्दृश्यते । तदेव सच्चिदानन्दं ब्रह्म भवति । एवं
सहजानन्दे यदा मनो लीयते तदा शान्तो भवी भवति । तामेव
खेचरीमाहुः । तदभ्यासान्मनःस्थैर्यम् । ततो वायुस्थैर्यम् ।
तच्चिह्नानि । आदौ तारकवद्दृश्यते । ततो वज्रदर्पणम् । तत
उपरि पूर्णचन्द्रमण्डलम् । ततो वह्निशिखामण्डलं क्रमाद्दृश्यते ॥ १॥

तदा पश्चिमाभिमुखप्रकाशः स्फटिकधूम्र-
बिन्दुनादकलानक्षत्रखद्योतदीपनेत्रसवर्णनव-
रत्नादिप्रभा दृश्यन्ते । तदेव प्रणवस्वरूपम् ।
प्राणापानयोरैक्यं कृत्वा धृतकुम्भको नासाग्र-
दर्शनदृढभावनया द्विकराङ्गुलिभिः षण्मुखी-
करणेन प्रणवध्वनिं निशम्य मनस्तत्र लीनं भवति ।
तस्य न कर्मलेपः । रवेरुदयास्तमययोः किल कर्म
कर्तव्यम् । एवंविदश्चिदादित्यस्योदयास्तमयाभावा-
त्सर्वकर्माभावः । शब्दकाललयेन दिवारात्र्यतीतो भूत्वा
सर्वपरिपूर्णज्ञानेनोन्मन्यवस्थावशेन ब्रह्मैक्यं
भवति । उन्मन्या अमनस्कं भवति । तस्य निश्चिन्ता
ध्यानम् । सर्वकर्मनिराकरणमावाहनम् ।
निश्चयज्ञानमासनम् । उन्मनीभावः पाद्यम् ।
सदाऽमनस्कमर्घ्यम् । सदादीप्तिरपारामृतवृत्तिः
स्नानम् । सर्वत्र भावना गन्धः । दृक्स्वरूपावस्थान-
मक्षताः । चिदाप्तिः पुष्पम् । चिदग्निस्वरूपं धूपः ।
चिदादित्यस्वरूपं दीपः । परिपूर्णचन्द्रामृतरसस्यैकीकरणं
नैवेद्यम् । निश्चलत्वं प्रदक्षिणम् । सोहंभावो नमस्कारः ।
मौनं स्तुतिः । सर्वसन्तोषो विसर्जनमिति य एवं वेद । ॥ २॥

एवं त्रिपुट्यां निरस्तायां निस्तरङ्गसमुद्रवन्निवात-
स्थितदीपवदचलसम्पूर्णभावाभावविहीनकैवल्यद्योतिर्भवति ।
जाग्रन्निन्द्रान्तःपरिज्ञानेन ब्रह्मविद्भवति ।

सुषुप्तिसमाध्योर्मनोलयाविशेषेऽपि महदस्त्युभयो-
र्भेदस्तमसि लीनत्वान्मुक्तिहेतुत्वाभावाच्च । समाधौ
मृदिततमोविकारस्य तदाकाराकारिताखण्डाकार-
वृत्त्यात्मकसाक्षिचैतन्ये प्रपञ्चलयः सम्पद्यते
प्रपञ्चस्य मनःकल्पितत्वात् । ततो भेदाभावात्कदाचि-
द्बहिर्गतेऽपि मिथ्यात्वभानात् । सकृद्विभातसदानन्दा-
नुभवैकगोचरो ब्रह्मवित्तदेव भवति । यस्य सङ्कल्पनाशः
स्यात्तस्य मुक्तिः करे स्थिता । तस्माद्भावाभावौ परित्यज्य
परमात्मध्यानेन मुक्तो भवति । पुनःपुनः सर्वावस्थासु
ज्ञानज्ञेयौ ध्यानध्येयौ लक्ष्यालक्ष्ये दृश्यादृश्ये
चोहापोहादि परित्यज्य जीवन्मुक्तो भवेत् । य एवं वेद ॥ ३॥

पञ्चावस्थाः जाग्रत्स्वप्नसुषुप्तितुरीयतुरीयातीताः ।
जाग्रति प्रवृत्तो जीवः प्रवृत्तिमार्गासक्तः ।
पापफलनरकादिमांस्तु शुभकर्मफलस्वर्गमस्त्विति
काङ्क्षते । स एव स्वीकृतवैराग्यात्कर्मफलजन्माऽलं
संसारबन्धनमलमिति विमुक्त्यभिमुखो निवृत्तिमार्ग-
प्रवृत्तो भवति । स एव संसारतारणाय गुरुमाश्रित्य
कामादि त्यक्त्वा विहितकर्माचरन्साधनचतुष्टयसम्पन्नो
हृदयकमलमध्ये भगवत्सत्तामात्रान्तर्लक्ष्यरूपमासाद्य
सुषुप्त्यवस्थाया मुक्तब्रह्मानन्दस्मृतिं लब्ध्वा
एक एवाहमद्वितीयः कञ्चित्कालमज्ञानवृत्त्या
विस्मृतजाग्रद्वासनानुफलेन तैजसोऽस्मीति तदुभयनिवृत्त्या
प्राज्ञ इदानीमस्मीत्यहमेक एव स्थानभेदादवस्थाभेदस्य
परंतु नहि मदन्यदिति जातविवेकः शुद्धाद्वैतब्रह्माहमिति
भिदागन्धं निरस्य स्वान्तर्विजृम्भितभानुमण्डलध्यान-
तदाकाराकारितपरंब्रह्माकारितमुक्तिमार्गमारूढः
परिपक्वो भवति । सङ्कल्पादिकं मनो बन्धहेतुः । तद्वियुक्तं
मनो मोक्षाय भवति । तद्वांश्चक्षुरादिबाह्यप्रपञ्चरतो
विगतप्रपञ्चगन्धः सर्वजगदात्मत्वेन पश्यंस्त्यक्ताहङ्कारो
ब्रह्माहमस्मीति चिन्तयन्निदं सर्वं यदयमात्मेति
भावयन्कृतकृत्यो भवति ॥ ४॥

सर्वपरिपूर्णतुरीयातीतब्रह्मभूतो योगी भवति ।
तं ब्रह्मेति स्तुवन्ति । सर्वलोकस्तुतिपात्रः सर्वदेश-
संचारशीलः परमात्मगगने बिन्दुं निक्षिप्य
शुद्धाद्वैताजाड्यसहजामनस्कयोगनिद्राखण्डा-
नन्दपदानुवृत्त्या जीवन्मुक्तो भवति । तच्चानन्द-
समुद्रमग्ना योगिनो भवन्ति । तदपेक्षया इन्द्रादयः
स्वल्पानन्दाः । एवं प्राप्तानन्दः परमयोगी भवतीत्युपनिषत् ॥ ५॥

इति द्वितीयं ब्राह्मणम् ॥ २॥

याज्ञवल्क्यो महामुनिर्मण्डलपुरुषं पप्रच्छ
स्वामिन्नमनस्कलक्षणमुक्तमपि विस्मृतं
पुनस्तल्लक्षणं ब्रूहीति । तथेति मण्डलपुरुषोऽब्रवीत् ।
इदममनस्कमतिरहस्यम् । यज्ज्ञानेन कृतार्थो
भवति तन्नित्यं शांभवीमुद्रान्वितम् । परमात्मदृष्ट्या
तत्प्रत्ययलक्ष्याणि दृष्ट्वा तदनु सर्वेशमप्रमेयमजं
शिवं परमाकाशं निरालम्बमद्वयं ब्रह्मविष्णुरुद्रादीना-
मेकलक्ष्यं सर्वकारणं परंब्रह्मात्मन्येव पश्यमानो
गुहाविहरणमेव निश्चयेन ज्ञात्वा भावाभावादिद्वन्द्वातीतः
संविदितमनोन्मन्यनुभवस्तदनन्तरमखिलेन्द्रियक्षयवशादमनस्क-
सुखब्रह्मानन्दसमुद्रे मनःप्रवाहयोगरूपनिवातस्थितदीपवदचलं
परंब्रह्म प्राप्नोति । ततः शुष्कवृक्षवन्मूर्च्छानिद्रामय-
निःश्वासोच्छ्वासाभावान्नष्टद्वन्द्वः सदाचञ्चलगात्रः
परमशान्तिं स्वीकृत्य मनः प्रचारशून्यं परमात्मनि लीनं भवति ।
पयस्स्रावानन्तरं धेनुस्तनक्षीरमिव सर्वेन्द्रियवर्गे परिनष्टे
मनोनाशं भवति तदेवामनस्कम् । तदनु नित्यशुद्धः
परमात्माहमेवेति तत्त्वमसीत्युपदेशेन त्वमेवाहमहमेव
त्वमिति तारकयोगमार्गेणाखण्डानन्दपूर्णः कृतार्थो भवति ॥ १॥

परिपूर्णपराकाशमग्नमनाः प्राप्तोन्मन्यवस्थः
संन्यस्तसर्वेन्द्रियवर्गः अनेकजन्मार्जितपुण्यपुञ्जपक्व-
कैवल्यफलोऽखण्डानन्दनिरस्तसर्वक्लेशकश्मलो ब्रह्माहमस्मीति
कृतकृत्यो भवति । त्वमेवाहं न भेदोऽस्ति पूर्णत्वात्परमात्मनः ।
इत्युच्चरन्त्समालिङ्ग्य शिष्यं ज्ञप्तिमनीनयत् ॥ २॥

इति तृतीयं ब्राह्मणम् ॥ ३॥

अथ ह याज्ञवल्क्यो मण्डलपुरुषं पप्रच्छ
व्योमपञ्चकलक्षणं विस्तरेणानुब्रूहीति । स
होवाचाकाशं पराकाशं महाकाशं
सूर्याकाशं परमाकाशमिति पञ्च भवन्ति ।
बाह्याभ्यन्तरमन्धकारमयमाकाशम् ।
बाह्यस्याभ्यन्तरे कालानलसदृशं पराकाशम् ।
सबाह्याभ्यन्तरेऽपरिमितद्युतिनिभं तत्त्वं महाकाशम् ।
सबाह्याभ्यन्तरे सूर्यनिभं सूर्याकाशम् ।
अनिर्वचनीयज्योतिः सर्वव्यापकं निरतिशयानन्दलक्षणं
परमाकाशम् । एवं तत्तल्लक्ष्यदर्शनात्तत्तद्रूपो भवति ।
नवचक्रं षडाधारं त्रिलक्ष्यं व्योमपञ्चकम् ।
सम्यगेतन्न जानाति स योगी नामतो भवेत् ॥ १॥

इति चतुर्थं ब्राह्मणम् ॥ ४॥

सविषयं मनो बन्धाय निर्विषयं मुक्तये भवति ।
अतः सर्वं जगच्चित्तगोचरम् । तदेव चित्तं निराश्रयं
मनोन्मन्यवस्थापरिपक्वं लययोग्यं भवति । तल्लयं
परिपूर्णे मयि समभ्यसेत् । मनोलयकारणमहमेव ।
अनाहतस्य शब्दस्य तस्य शब्दस्य यो ध्वनिः ।
ध्वनेरन्तर्गतं ज्योतिर्ज्योतिरन्तर्गतं मनः ।
यन्मनस्त्रिजगत्सृष्टिस्थितिव्यसनकर्मकृत् ।
तन्मनो विलयं याति तद्विष्णोः परमं पदम् ।
तल्लयाच्छुद्धाद्वैतसिद्धिर्भेदाभावात् ।
एतदेव परमतत्त्वम् । स तज्ज्ञो बालोन्मत्त-
पिशाचवज्जडवृत्त्या लोकमाचरेत् एवममनस्काभ्यासेनैव
नित्यतृप्तिरल्पमूत्रपुरीषमितभोजनदृढाङ्ग-
जाड्यनिद्रादृग्वायुचलनाभावब्रह्मदर्शनाज्ज्ञात-
सुखस्वरूपसिद्धिर्भवति । एवं चिरसमाधिजनित-
ब्रह्मामृतपानपरायणोऽसौ संन्यासी परमहंस
अवधूतो भवति । तद्दर्शनेन सकलं जगत्पवित्रं भवति ।

तत्सेवापरोऽज्ञोऽपि मुक्तो भवति । तत्कुलमेकोत्तरशतं तारयति ।
तन्मातृपितृजायापत्यवर्गं च मुक्तं भवतीत्युपनिषत् ॥

ॐ पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते ।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

इति मण्डलब्राह्मणोपनिषत्समाप्ता ॥

Encoded by Sunder Hattangadi (sunderh@hotmail.com)

---

*Mandalabrahmana Upanishad*

pdf was typeset on February 10, 2019

Please send corrections to *sanskrit@cheerful.com*

# शाण्डिल्योपनिषत्

शाण्डिल्योपनिषत्प्रोक्तयमाद्यष्टाङ्गयोगिनः ।
यद्बोधाद्यान्ति कैवल्यं स रामो मे परा गतिः ॥

ॐ भद्रं कर्णेभिः श्रुणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः ।
स्थिरैरङ्गैस्तुष्टुवाꣳसस्तनूभिर्व्यशेम देवहितं यदायुः ॥

स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः ।
स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

शाण्डिल्यो ह वा अथर्वाणं पप्रच्छात्मलाभोपायभूत-
मष्टाङ्गयोगमनुब्रूहीति । स होवाचाथर्वा यमनियमासन-
प्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टाङ्गानि ।
तत्र दश यमाः । तथा नियमाः । आसनान्यष्टौ । त्रयःप्राणायामाः ।
पञ्चप्रत्याहाराः । तथा धारणा । द्विप्रकारं ध्यानम् ।
समाधिस्त्वेकरूपः । तत्राहिंसासत्यास्तेयब्रह्मचर्यदयाजप-
क्षमाधृतिमिताहारशौचानि चेति यमादश । तत्र हिंसा नाम
मनोवाक्कायकर्मभिः सर्वभूतेषु सर्वदा क्लेशजननम् ।
सत्यं नाम मनोवाक्कायकर्मभिर्भूतहितयथार्थाभिभाषणम् ।
अस्तेयं नाम मनोवाक्कायकर्मभिः परद्रव्येषु निःस्पृहा ।
ब्रह्मचर्यं नाम सर्वावस्थासु मनोवाक्कायकर्मभिः सर्वत्र मैथुनत्यागः ।
दया नाम सर्वभूतेषु सर्वत्रानुग्रहः । आर्जवं नाम मनोवाक्कायकर्मणां
विहिताविहितेषु जनेषु प्रवृत्तौ निवृत्तौ वा एकरूपत्वम् । क्षमा नाम
प्रियाप्रियेषु सर्वेषु ताडनपूजनेषु सहनम् । धृतिर्नामार्थहानौ
स्वेष्टबन्धुवियोगे तत्प्राप्तौ सर्वत्र चेतः स्थापनम् । मिताहारो नाम
चतुर्थांशावशेषकसुस्निग्धमधुराहारः । शौचं नाम द्विविधं
बाह्यमान्तरं चेति । तत्र मृज्जलाभ्यां बाह्यम् । मनःशुद्धिरान्तरम् ।

तदध्यात्मविद्यया लभ्यम् ॥ १॥

तपःसन्तोषास्तिक्यदानेश्वरपूजनसिद्धान्तश्रवणह्रीमतिजपो
व्रतानि दश नियमाः । तत्र तपो नाम विध्युक्तकृच्छ्रचान्द्रायणादिभिः
शरीरशोषणम् । सन्तोषो नाम यदृच्छालाभसन्तुष्टिः ।
आस्तिक्यं नाम वेदोक्तधर्माधर्मेषु विश्वासः । दानं नाम
न्यायार्जितस्य धनधान्यादिः श्रद्धयार्थिभ्यः प्रदानम् ।
ईश्वरपूजनं नाम प्रसन्नस्वभावेन यथाशक्ति विष्णुरुद्रादि
पूजनम् । सिद्धान्तश्रवणं नाम वेदान्तार्थविचारः ।
ह्रीर्नाम वेदलौकिकमार्गकुत्सितकर्मणि लज्जा । मतिर्नाम
वेदविहितकर्ममार्गेषु श्रद्धा । जपो नाम विधिवद्गुरूपदिष्ट-
वेदाविरुद्धमन्त्राभ्यासः । तद्द्विविधं वाचिकं मानसं चेति ।
मानसं तु मनसा ध्यानयुक्तम् । वाचिकं द्विविधमुच्चै-
रुपांशुभेदेन । उच्चैरुच्चारणं यथोक्तफलम् । उपांशु
सहस्रगुणम् । मानसं कोटिगुणम् । व्रतं नाम वेदोक्तविधि-
निषेधानुष्ठाननैयत्यम् ॥ २॥

स्वस्तिकगोमुखपद्मवीरसिंहभद्रमुक्तमयूराख्यान्यासनान्यष्टौ ।
स्वस्तिकं नाम-जानूर्वोन्तरे सम्यक्कृत्वा पादतले उभे ।
ऋजुकायः समासीनः स्वस्तिकं तत्प्रचक्षते ॥ १॥

सव्ये दक्षिणगुल्फं तु पृष्ठपार्श्वे नियोजयेत् ।
दक्षिणेऽपि तथा सव्यं गोमुखं गोमुखं यथा ॥ २॥

अङ्गुष्ठेन निबध्नीयाद्धस्ताभ्यां व्युत्क्रमेण च ।
ऊर्वोरुपरि शाण्डिल्य कृत्वा पादतले उभे ।
पद्मासनं भवेदेतत्सर्वेषामपि पूजितम् ॥ ३॥

एकं पादमथैकस्मिन्विन्यस्योरुणि संस्थितः ।
इतरस्मिंस्तथा चोरूं वीरासनमुदीरितम् ॥ ४॥

दक्षिणं सव्यगुल्फेन दक्षिणेन तथेतरम् ।
हस्तौ च जान्वोः संस्थाप्य स्वाङ्गुलीश्च प्रसार्य च ॥ ५॥

व्यक्तवक्त्रो निरीक्षेत नासाग्रं सुसमाहितः ।
सिंहासनं भवेदेतत्पूजितं योगिभिः सदा ॥ ६॥

योनीं वामेन सम्पीड्य मेढ्राद्रुपरि दक्षिणम् ।
भ्रूमध्ये च मनोलक्ष्यं सिद्धासनमिदं भवेत् ॥ ७॥

गुल्फौ तु वृषणस्याधः सीवन्याः पार्श्वयोः क्षिपेत् ।
पादपार्श्वे तु पाणिभ्यां दृढं बध्वा सुनिश्चलम् ।
भद्रासनं भवेदेतत्सर्वव्याधिविषापहम् ॥ ८॥

सम्पीड्य सीविनीं सूक्ष्मां गुल्फेनैव तु सव्यतः ।
सव्यं दक्षिणगुल्फेन मुक्तासनमुदीरितम् ॥ ९॥

अवष्टभ्य धरां सम्यक्तलाभ्यां तु करद्वयोः ।
हस्तयोः कूर्परौ चापि स्थापयेन्नाभिपार्श्वयओः ॥ १०॥

समुन्नतशिरःपादो दण्डवद्व्योम्नि संस्थितः ।
मयूरासनमेतत्तु सर्वपापप्रणाशनम् ॥ ११॥

शरीरान्तर्गताः सर्वे रोगा विनश्यन्ति । विषाणि जीर्यन्ते ।
येन केनासनेन सुखधारणं भवत्यशक्तस्तत्समाचरेत् ।
येनासनं विजितं जगत्त्रयं तेन विजितं भवति ।
यमनियमाभ्यां संयुक्तः पुरुषः प्राणायामं चरेत् ।
तेन नाड्यः शुद्धा भवन्ति ॥ ३॥

अथ हैनमथर्वाणं शाण्डिल्यः पप्रच्छ केनोपायेन
नाड्यः शुद्धाः स्युः । नाड्यः कतिसंख्याकाः ।
तासामुत्पत्तिः कीदृशी । तासु कति वयवस्तिष्ठन्ति ।
तेषां कानि स्थानानि । तत्कर्माणि कानि ।
देहे यानि यानि विज्ञातव्यानि तत्सर्वं मे ब्रूहीति ।
स होवाच अथर्वाण अथेदं शरीरं षण्णवत्यङ्गुलात्मकं
भवति । शरीरात्प्राणो द्वादशाङ्गुलाधिको भवति ।
शरीरस्थं प्राणमग्निना सह योगाभ्यासेन समं न्यूनं वा
यः करोति स योगिपुङ्गवो भवति । देहमध्ये शिखिस्थानं
त्रिकोणं तप्तजाम्बूनदप्रभं मनुष्याणाम् ।
चतुष्पदां चतुरस्रम् । विहङ्गानां वृत्ताकारम् ।
तन्मध्ये शुभा तन्वी पावकी शिखा तिष्ठति ।
गुदाद्व्यङ्गुलादूर्ध्वं मेढ्राद्व्यङ्गुलादधो देहमध्यं
मनुष्याणां भवति । चतुष्पदां हृन्मध्यम् ।

विहङ्गानां तुङ्गमध्यम् । देहमध्यं नवाङ्गुलं
चतुरङ्गुलमुत्सेधायतमण्डाकृति । तन्मध्ये नाभिः ।
तत्र द्वादशारयुतं चक्रम् । तच्चक्रमध्ये
पुण्यपापप्रचोदितो जीवो भ्रमति । तन्तुपञ्जरमध्यस्थलूतिका
यथा भ्रमति तथा चासौ तत्र प्राणश्चरति । देहेऽस्मिञ्जीवः
प्राणारूढो भवेत् । नाभेस्तिर्यगधऊर्ध्वं कुण्डलिनीस्थानम् ।
अष्टप्रकृतिरूपाष्टधा कुण्डलीकृता कुण्डलिनी शक्तिर्भवति ।
यथावद्वायुसंचारं जलान्नादीनि परितः स्कन्धः पार्श्वेषु
निरुध्यैनं मुखेनैव समावेष्ट्य ब्रह्मरन्ध्रं योगकाले
चापानेनाग्निना च स्फुरति । हृदयाकाशे महोज्ज्वला
ज्ञानरूपा भवति । मध्यस्थकुण्डलिनीमाश्रित्य
मुख्या नाड्यश्चतुर्दश भवन्ति । तत्र सुषुम्ना
विश्वधारिणी मोक्षमार्गेति चाचक्षते ।
गुदस्य पृष्ठभागे वीणादण्डाश्रिता मूर्धपर्यन्तं
ब्रह्मरन्ध्रे विज्ञेया व्यक्ता सूक्ष्मा वैष्णवी भवति ।
सुषुम्नायाः सव्यभागे इडा तिष्ठति । दक्षिणभागे
पिङ्गला इडायां चन्द्रश्चरति । पिङ्गलायां रविः ।
तमोरूपश्चन्द्रः । रजोरूपो रविः । विषभागो रविः ।
अमृतभागश्चन्द्रमाः । तावेव सर्वकालं धत्ते ।
सुषुम्ना कालभोक्त्री भवति । सुषुम्ना पृष्ठपार्श्वयोः
सरस्वतीकुहू भवतः । यशस्विनीकुहूमध्ये वारुणी प्रतिष्ठिता
भवति । पूषासरस्वतीमध्ये पयस्विनी भवति । गान्धारी-
सरस्वतिमध्ये यशस्विनी भवति । कन्दमयेऽलम्बुसा भवति।
सुषुम्नापूर्वभागे मेढ्रान्तं कुहूर्भवति । कुण्डलिन्या
अधश्चोर्ध्वं वारुणी सर्वगामिनी भवति । यशस्विनी सौम्या च
पादाङ्गुष्ठान्तमिष्यते । पिङ्गला चोर्ध्वगा याम्यनासान्तं
भवति । पिङ्गलायाः पृष्ठतो याम्यनेत्रानतं पूषा भवति ।
याम्यकर्णान्तं यशस्विनी भवति । जिह्वाया ऊर्ध्वानतं सरस्वती भवति ।
आसव्यकर्णान्तमूर्ध्वगा शङ्खिनी भवति । इडापृष्ठभागा-
त्सव्यनेत्रान्तगा गान्धारी भवति । पायुमूलादधोर्ध्वगालम्बुसा
भवति । एताश्च चतुर्दशसु नाडीष्वन्या नाड्यः संभवन्ति ।
तास्वन्यास्तास्वन्या भवन्तीति विज्ञेयाः ॥

यथाश्वत्थादिपत्रं शिराभिर्व्याप्तमेवं शरीरं नाडीभिर्व्याप्तम् ।
प्राणापानसमानोदानव्याना नागकूर्मकृकरदेवदत्तधनञ्जया
एते दश वायवः सर्वासु नाडीषु चरन्ति । आस्यनासिकाकण्ठनाभि-
पादाङ्गुष्ठद्वयकुण्डल्यधश्चोर्ध्वभागेषु प्राणः संचरति ।
श्रोत्राक्षिकटिगुल्फघ्राणगलस्फिग्देशेषु व्यानः संचरति ।
गुदमेढ्रोरुजानूदरवृषणकटिजङ्घानाभिगुदाग्न्यगारेष्वपानः
संचरति । सर्वसन्धिस्थ उदानः । पादहस्तयोरपि सर्वगात्रेषु सर्वव्यापी
समानः । भुक्तान्नरसादिकं गात्रेऽग्निना सह व्यापयन्द्विसप्ततिसहस्रेषु
नाडीमार्गेषु चरन्समानवायुरग्निना सह साङ्गोपाङ्गकलेवरं
व्याप्नोति । नागादिवायवः पञ्चत्वगस्थ्यादिसंभवाः । तुन्दस्थं
जलमन्नं च रसादिषु समीरितं तुन्दमध्यगतः प्रागस्तानि पृथक्कुर्यात् ।
अग्नेरुपरि जलं स्थाप्य जलोपर्यन्नादीनि संस्थाप्य स्वयमपानं सम्प्राप्य
तेनैव सह मारुतः प्रयाति देहमध्यगतं ज्वलनम् । वायुना पालितो
वह्निरपानेन शनैर्देहमध्ये ज्वलति । ज्वलनो ज्वालाभिः प्राणेन कोष्ठमध्यगतं
जलमत्युष्णमकरोत् । जलोपरि समर्पितव्यञ्जनसंयुक्तमन्नं वह्निसंयुक्तवारिणा
पक्वमकरोत् । तेन स्वेदमूत्रजलरक्तवीर्यरूपरसपुरीषादिकं प्राणः
पृथक्कुर्यात् । समानवायुना सह सर्वासु नाडीषु रसं व्यापयञ्श्वासरूपेण
देहे वायुश्चरति । नवभिर्व्योमरन्ध्रैः शरीरस्य वायवः कुर्वन्ति विण्मूत्रादिविसर्जनम् ।
निश्वासोच्छ्वासकासश्च प्राणकर्मोच्यते । विण्मूत्रादिविसर्जनमपानवायुकर्म ।
हानोपादानचेष्टादि व्यानकर्म । देहस्योन्नयनादिकमुदानकर्म ।
शरीरपोषणादिकं समानकर्म । उद्गारादि नागकर्म । निमीलनादि कूर्मकर्म ।
क्षुत्करणं कृकरकर्म । तन्द्रा देवदत्तकर्म । श्लेष्मादि धनञ्जयकर्म ।
एवं नाडीस्थानं वायुस्थानं तत्कर्म च सम्यग्ज्ञात्वा नाडीसंशोधनं कुर्यात् ॥ ४॥

यमनियमयुतः पुरुषः सर्वसङ्गविवर्जितः कृतविद्यः
सत्यधर्मरतो जितक्रोधो गुरुशुश्रूषानिरतः पितृमातृविधेयः
स्वाश्रमोक्तसदाचारविद्वच्छिक्षितः फलमूलोदकान्वितं
तपोवनं प्राप्य रम्यदेशे ब्रह्मघोषसमन्विते
स्वधर्मनिरतब्रह्मवित्समावृते फलमूलपुष्पवारिभिः
सुसम्पूर्णे देवायतने नदीतीरे ग्रामे नगरे वापि सुशोभनमठं
नात्युच्चनीचायतमल्पद्वारं गोमयादिलिप्तं सर्वरक्षासमन्वितं

कृत्वा तत्र वेदान्तश्रवणं कुर्वन्योगं समारभेत् । आदौ
विनायकं सम्पूज्य स्वेष्टदेवतां नत्वा पूर्वोक्तासने स्थित्वा
प्राङ्मुख उदङ्मुखो वापि मृद्वासनेषु जितासनगतो
विद्वान्समग्रीवशिरोनासाग्रदृग्भ्रूमध्ये शशभृद्बिंबं
पश्यन्नेत्राभ्याममृतं पिबेत् । द्वादशमात्रया इडया
वायुमापूर्योदरे स्थितं ज्वालावलीयुतं रेफबिन्दुयुक्तमग्निमण्डलयुतं
ध्यायेद्रेचयेत्पिङ्गलया । पुनः पिङ्गलयापूर्य कुम्भित्वा
रेचयेदिडया । त्रिचतुस्त्रिचतुःसप्तत्रिचातुर्मासपर्यन्तं त्रिसन्धिषु
तदन्तरालेषु च षट्कृत्व आचरेन्नाडीशुद्धिर्भवति । ततः
शरीरे लघुदीप्तिवह्निवृद्धिनादाभिव्यक्तिर्भवति ॥ ५॥

प्राणापानसमायोगः प्राणायामो भवति ।
रेचकपूरककुम्भकभेदेन स त्रिविधः ।
ते वर्णात्मकाः । तस्मात्प्रणव एव प्राणायामः
पद्माद्यासनस्थः पुमान्नासाग्रे
शशभृद्बिम्बज्योत्स्नाजालवितानिताकारमूर्ती रक्ताङ्गी
हंसवाहिनी दण्डहस्ता बाला गायत्री भवति । उकारमूर्तिः
श्वेताङ्गी ताक्ष्र्यवाहिनी युवती चक्रहस्ता सावित्री भवति ।
मकारमूर्तिः कृष्णाङ्गी वृषभवाहिनी वृद्धा
त्रिशूलधारिणी सरस्वती भवति । अकारादित्रयाणां
सर्वकारणमेकाक्षरं परंज्योतिः प्रणवं भवतीति ध्यायेत् ।
इडया बाह्याद्वायुमापूर्य षोडशमात्राभिरकारं
चिन्तयन्पूरितं वायुं चतुःषष्टिमात्राभिः कुम्भयित्वोकारं
ध्यायन्पूरितं पिङ्गलया द्वात्रिंशन्मात्रया मकारमूर्ति-
ध्यानेनैवं क्रमेण पुनः पुनः कुर्यात् ॥ ६॥

अथासनदृढो योगी वशी मितहिताशनः
सुषुम्नानाडीस्थमलशोषार्थं योगी
बद्धपद्मासनो वायुं चन्द्रेणापूर्य
यथाशक्ति कुम्भयित्वा सूर्येण रेचयित्वा
पुनः सूर्येणापूर्य कुम्भयित्वा चन्द्रेण
विरेच्य यया त्यजेत्तया सम्पूर्य धारयेत् ।
तदेते श्लोका भवन्ति ।

प्राणं प्रागिडया पिबेन्नियमितं भूयोऽन्यया रेचये-
त्पीत्वा पिङ्गलया समीरणमथो बद्ध्वा त्यजेद्वामया ।
सूर्याचन्द्रमसोरनेन विधिनाऽभ्यासं सदा तन्वतां
शुद्धा नाडिगणा भवन्ति यमिनां मासत्रयादूर्ध्वतः ॥ १॥

प्रातर्मध्यन्दिने सायमर्धरात्रे तु कुम्भकान् ।
शनैरशीतिपर्यन्तं चतुर्वारं समभ्यसेत् ॥ २॥

कनीयसि भवेत्स्वेदः कंपो भवति मध्यमे ।
उत्तिष्ठत्त्युत्तमे प्राणरोधे पद्मासनं महत् ॥ ३॥

जलेन श्रमजातेन गात्रमर्दनमाचरेत् ।
दृढता लघुता चापि तस्य गात्रस्य जायते ॥ ४॥

अभ्यासकाले प्रथमं शस्तं क्षीराज्यभोजनम् ।
ततोऽभ्यासे स्थिरीभूते न तावन्नियमग्रहः ॥ ५॥

यथा सिंहो गजो व्याघ्रो भवेद्वश्यः शनैः शनैः ।
तथैव सेवितो वायुरन्यथा हन्ति साधकम् ॥ ६॥

युक्तं युक्तं त्यजेद्वायुं युक्तं युक्तं च पूरयेत् ।
युक्तं युक्तं च बध्नीयादेवं सिद्धिमवाप्नुयात् ॥ ७॥

यथेष्टधारणाद्वायोरनलस्य प्रदीपनम् ।
नादाभिव्यक्तिरारोग्यं जायते नाडिशोधनात् ॥ ८॥

विधिवत्प्राणसंयामैर्नाडीचक्रे विशोधिते ।
सुषुम्नावदनं भित्त्वा सुखाद्विशति मारुतः ॥ ९॥

मारुते मध्यसंचारे मनःस्थैर्यं प्रजायते ।
यो मनःसुस्थिरो भावः सैवावस्था मनोन्मनी ॥ १०॥

पूरकान्ते तु कर्तव्यो बन्धो जालन्धराभिधः ।
कुम्भकान्ते रेचकादौ कर्तव्यस्तूड्डियाणकः ॥ ११॥

अधस्तात्कुञ्चनेमाशु कण्ठसङ्कोचने कृते ।
मध्ये पश्चिमतानेन स्यात्प्राणो ब्रह्मनाडिगः ॥ १२॥

अपानमूर्ध्वमुत्थाप्य प्राणं कण्ठादधो नयन् ।
योगी जराविनिर्मुक्तः षोडशो वयसा भवेत् ॥१३॥

सुखासनस्थो दक्षनाड्या बहिस्थं पवनं
समाकृष्याकेशमानखाग्रं कुम्भयित्वा सव्यनाड्या
रेचयेत् । तेन कपालशोधनं वातनाडीगतसर्वरोग-
सर्वविनाशनं भवति । हृदयादिकण्ठपर्यन्तं सस्वनं
नासाभ्यां शनैः पवनमाकृष्य यथाशक्ति
कुम्भयित्वा इडया विरेच्य गच्छंस्तिष्ठन्कुर्यात् ।
तेन श्लेष्महरं जठराग्निवर्धनं भवति । वक्रेण
सीत्कारपूर्वकं वायुं गृहीत्वा यथाशक्ति कुम्भयित्वा
नासाभ्यां रेचयेत् । तेन क्षुत्तृष्णालस्यनिद्रा न जायते ।
जिह्वया वायुं गृहीत्वा यथाशक्ति कुम्भयित्वा नासाभ्यां
रेचयेत् । तेन गुल्मप्लीहज्वरपित्तक्षुधादीनि नश्यन्ति ॥

अथ कुम्भकः । स द्विविधः सहितः केवलश्चेति । रेचकपूरकयुक्तः
सहितः तद्विवर्जितः केवलः । केवलसिद्धिपर्यन्तं सहितमभ्यसेत् ।
केवलकुम्भके सिद्धे त्रिषु लोकेषु न तस्य दुर्लभं भवति ।
केवलकुम्भकात्कुण्डलिनीबोधो जायते । ततः कृशवपुः
प्रसन्नवदनो निर्मललोचनोऽभिव्यक्तनादो निर्मुक्तरोगजालो
जितबिन्दुः पट्वग्निर्भवति ।
अन्तर्लक्ष्यं बहिर्दृष्टिर्निमेषोन्मेषवर्जिता ।
एषा सा वैष्णवी मुद्रा सर्वतन्त्रेषु गोपिता ॥ १४॥

अन्तर्लक्ष्यविलीनचित्तपवनो योगी सदा वर्तते
दृष्ट्या निश्चलतारया बहिरधः पश्यन्नपश्यन्नपि ।
मुद्रेयं खलु खेचरी भवति सा लक्ष्यैकताना शिवा
शून्याशून्यविवर्जितं स्फुरति सा तत्त्वं पदं वैष्णवी ॥ १५॥

अर्धोन्मीलितलोचनः स्थिरमना नासाग्रदत्तेक्षण-
श्चन्द्रार्कावपि लीनतामुपनयन्निष्पन्दभावोत्तरम् ।
ज्योतीरूपमशीषबाह्यरहितं देदीप्यमानं परं
तत्त्वं तत्परमस्ति वस्तुविषयं शाण्डिल्य विद्धीह तत् ॥ १६॥

तारं ज्योतिषि संयोज्य किञ्चिदुन्नमयन्भ्रुवौ ।
पूर्वाभ्यासस्य मार्गोऽयमुन्मनीकारकः क्षणात् ॥ १७॥

तस्मात्खेचरीमुद्रामभ्यसेत् । तत उन्मनी भवति ।

ततो योगनिद्रा भवति । लब्धयोगनिद्रस्य योगिनः कालो नास्ति ।
शक्तिमध्ये मनः कृत्वा शक्तिं मानसमध्यगाम् ।
मनसा मन आलोक्य शाण्डिल्य त्वं सुखी भव ॥ १८॥

खमध्ये कुरु चात्मानमात्ममध्ये च खं कुरु ।
सर्वं च खमयं कृत्वा न किञ्चिदपि चिन्तय ॥ १९॥

बाह्यचिन्ता न कर्तव्या तथैवान्तरचिन्तिका ।
सर्वचिन्तां परित्यज्य चिन्मात्रपरमो भव ॥ २०॥

कर्पूरमनले यद्वत्सैन्धवं सलिले यथा ।
तथा च लीयमानं च मनस्तत्त्वे विलीयते ॥ २१॥

ज्ञेयं सर्वप्रतीतं च तज्ज्ञानं मन उच्यते ।
ज्ञानं ज्ञेयं समं नष्टं नान्यः पन्था द्वितीयकः ॥ २२।
ज्ञेयवस्तुपरित्यागाद्विलयं याति मानसम् ।
मानसे विलयं याते कैवल्यमवशिष्यते ॥ २३॥

द्वौ क्रमौ चित्तनाशस्य योगो ज्ञानं मुनीश्वर ।
योगस्तद्वृत्तिरोधो हि ज्ञानं सम्यगवेक्षणम् ॥ २४॥

तस्मिन्निरोधिते नूनमुपशान्तं मनो भवेत् ।
मनःस्पन्दोपशान्तायं संसारः प्रविलीयते ॥ २५॥

सूर्यालोकपरिस्पन्दशान्तौ व्यवहृतिर्यथा ।
शास्त्रसज्जनसम्पर्कवैराग्याभ्यासयोगतः ॥ २६॥

अनास्थायां कृतास्थायां पूर्वं संसारवृत्तिषु ।
यथाभिवाञ्छितध्यानाच्चिरमेकतयोहितात् ॥ २७॥

एकतत्त्वदृढाभ्यासात्प्राणस्पन्दो निरुध्यते ।
पूरकाद्यनिलायामादृढाभ्यासदखेदजात् ॥ २८॥

एकान्तध्यानयोगाच्च मनःस्पन्दो निरुध्यते ।
ओङ्कारोच्चारणप्रान्तशब्दतत्त्वानुभावनात् ।
सुषुप्ते संविदा ज्ञाते प्राणस्पन्दो निरुध्यते ॥ २९॥

तालुमूलगतां यत्नाज्जिह्वयाक्रम्य घण्टिकाम् ।
ऊर्ध्वरन्ध्रं गते प्राणे प्राणस्पन्दो निरुध्यते ॥ ३०॥

प्राणे गलितसंवित्तौ तालूर्ध्वं द्वादशान्तगे ।
अभ्यासादूर्ध्वरन्ध्रेण प्राणस्पन्दो निरुध्यते ॥ ३१॥

द्वादशाङ्गुलपर्यन्ते नासाग्रे विमलेऽम्बरे ।
संविद्दृशि प्रशाम्यन्त्यां प्राणस्पन्दो निरुध्यते ॥ ३२॥

भ्रूमध्ये तारकालोकशान्तावन्तमुपागते ।
चेतनैकतने बद्धे प्राणस्पन्दो निरुध्यते ॥ ३३॥

ओमित्येव यदुद्भूतं ज्ञानं ज्ञेयात्मकं शिवम् ।
असंस्पृष्टविकल्पांशं प्राणस्पन्दो निरुध्यते ॥ ३४॥

चिरकालं हृदेकान्तव्योमसंवेदनान्मुने ।
अवासनमनोध्यानात्प्राणस्पन्दो निरुध्यते ॥ ३५॥

एभिः क्रमैस्तथान्यैश्च नानासंकल्पकल्पितैः ।
नानादेशिकवक्त्रस्थैः प्राणस्पन्दो निरुध्यते ॥ ३६॥

आकुञ्चनेन कुण्डलिन्याः कवाटमुद्घाट्य मोक्षद्वारं विभेदयेत् ।
येन मार्गेण गन्तव्यं तद्द्वारं मुखेनाच्छाद्य प्रसुप्ता
कुण्डलिनी कुटिलाकारा सर्पवद्वेष्टिता भवति । सा शक्तिर्येन
चालिता स्यात्स तु मुक्तो भवति । सा कुण्डलिनी कण्ठोर्ध्वभागे
सुप्ता चेद्योगिनां मुक्तये भवति । बन्धनायाधो मूढानाम् ।
इडादिमार्गद्वयं विहाय सुषुम्नामार्गेणागच्छेत्तद्विष्णोः
परमं पदम् ।
मरुदभ्यसनं सर्वं मनोयुक्तं समभ्यसेत्
इतरत्र न कर्तव्या मनोवृत्तिर्मनीषिणा ॥ ३७॥

दिवा न पूजयेद्विष्णुं रात्रौ नैव प्रपूजयेत् ।
सततं पूजयेद्विष्णुं दिवारात्रं न पूजयेत् ॥ ३८॥

सुषिरो ज्ञानजनकः पञ्चस्रोतःसमन्वितः ।
तिष्ठते खेचरी मुद्रा तस्मिन्स्थाने न संशयः ॥ ३९॥

सव्यदक्षिणनाडीस्थो मध्ये चरति मारुतः ।
तिष्ठतः खेचरी मुद्रा तस्मिन्स्थाने न संशयः ॥ ४०॥

इडापिङ्गलयोर्मध्ये शून्यं चैवानिलं ग्रसेत् ।
तिष्ठन्ती खेचरी मुद्रा तत्र सत्यं प्रतिष्ठितम् ॥ ४१॥

सोमसूर्यद्वयोर्मध्ये निरालम्बतले पुनः ।
संस्थिता व्योमचक्रे सा मुद्रा नाम्ना च खेचरी ॥ ४२॥

छेदनचालनदाहैः फलां परां जिह्वां कृत्वा
दृष्टिं भ्रूमध्ये स्थाप्य कपालकुहरे जिह्वा विपरीतगा
यदा भवति तदा खेचरी मुद्रा जायते । जिह्वा चित्तं च
खे चरति तेनोर्ध्वजिह्वः पुमानमृतो भवति । वामपादमूलेन
योनिं सम्पीड्य दक्षिणपादं प्रसार्य तं कराभ्यां धृत्वा
नासाभ्यां वायुमापूर्य कण्ठबन्धं समारोप्योर्ध्वतो
वायुं धारयेत् । तेन सर्वक्लेशहानिः । ततः पीयूषमिव
विषं जीर्यते । क्षयगुल्मगुदावर्तजीर्णत्वगादिदोषा नश्यन्ति ।
एष प्राणजयोपायः सर्वमृत्यूपघातकः । वामपादपार्ष्णिं
योनिस्थाने नियोज्य दक्षिणचरणं वामोरूपरि संस्थाप्य
वायुमापूर्य हृदये चुबुकं निधाय योनिमाकुञ्च्य मनोमध्ये
यथाशक्ति धारयित्वा स्वात्मानं भावयेत् । तेनापरोक्षसिद्धिः ।
बाह्यात्प्राणं समाकृष्य पूरयित्वोदरे स्थितम् ।
नाभिमध्ये च नासाग्रे पदाङ्गुष्ठे च यत्नतः ॥ ४३॥

धारयेन्मनसा प्राणं सन्ध्याकालेषु वा सदा ।
सर्वरोगविनिर्मुक्तो भवेद्योगी गतक्लमः ॥ ४४॥

नासाग्रे वायुविजयं भवति । नाभिमध्ये सर्वरोगविनाशः ।
पादाङ्गुष्ठदारणाच्छरीरलघुता भवति ।
रसनाद्वायुमाकृष्य यः पिबेत्सततं नरः ।
श्रमदाहौ तु न स्यातां नश्यन्ति व्याधयस्तथा ॥ ४५॥

सन्ध्ययोर्ब्राह्मणः काले वायुमाकृष्य यः पिबेत् ।
त्रिमासात्तस्य कल्याणी जायते वाक् सरस्वती ॥ ४६॥

एवं षण्मासाभ्यासात्सर्वरोगनिवृत्तिः ।
जिह्वया वायुमानीय जिह्वामूले निरोधयेत् ।
यः पिबेदमृतं विद्वान्सकलं भद्रमश्नुते ॥ ४७॥

आत्मन्यात्मानमिडया धारयित्वा भ्रुवोन्तरे ।
विभेद्य त्रिदशाहारं व्याधिस्थोऽपि विमुच्यते ॥ ४८॥

नाडीभ्यां वायुमारोप्य नाभौ तुन्दस्य पार्श्वयोः ।
घटिकैकां वहेद्यस्तु व्याधिभिः स विमुच्यते ॥ ४९॥

मासमेकं त्रिसन्ध्यं तु जिह्वयारोप्य मारुतम् ।
विभेद्य त्रिदशाहारं धारयेत्तुन्दमध्यमे ॥ ५०॥

ज्वराः सर्वेऽपि नश्यन्ति विषाणि विविधानि च ।
मुहूर्तमपि यो नित्यं नासाग्रे मनसा सह ॥ ५१॥

सर्वं तरति पाप्मानं तस्य जन्म शतार्जितम् ।
तारसंयमात्सकलविषयज्ञानं भवति ।
नासाग्रे चित्तसंयमादिन्द्रलोकज्ञानम् ।
तदधश्चित्तसंयमादग्निलोकज्ञानम् ।
चक्षुषि चित्तसंयमात्सर्वलोकज्ञानम् ।
श्रोत्रे चित्तस्य संयमाद्यमलोकज्ञानम् ।
तत्पार्श्वे संयमान्निर्ऋतिलोकज्ञानम् ।
पृष्ठभागे संयमाद्वरुणलोकज्ञानम् ।
वामकर्णे संयमाद्वायुलोकज्ञानम् ।
कण्ठे संयमात्सोमलोकज्ञानम् ।
वामचक्षुषि संयमाच्छिवलोकज्ञानम् ।
मूर्ध्नि संयमाद्ब्रह्मलोकज्ञानम् ।
पादादोभागे संयमादतललोकज्ञानम् ।
पादे संयमाद्वितललोकज्ञानम् ।
पादसन्धौ संयमान्नितललोकज्ञानम् ।
जङ्घे संयमात्सुतललोकज्ञानम् ।
जानौ संयमान्महातललोकज्ञानम् ।
ऊरौ चित्तसंयमाद्रसातललोकज्ञानम् ।
कटौ चित्तसंयमात्तलातललोकज्ञानम् ।
नाभौ चित्तसंयमाद्भूलोकज्ञानम् ।
कुक्षौ संयमाद्भुवर्लोकज्ञानम् ।
हृदि चित्तस्य संयमात्स्वर्लोकज्ञानम् ।
हृदयोर्ध्वभागे चित्तसंयमान्महर्लोकज्ञानम् ।
कण्ठे चित्तसंयमाज्जनोलोकज्ञानम् ।

भ्रूमध्ये चित्तसंयमात्तपोलोकज्ञानम् ।
मूर्ध्नि चित्तसंयमात्सत्यलोकज्ञानम् ।
धर्माधर्मसंयमादतीतानागतज्ञानम् ।
तत्तज्जन्तुध्वनौ चित्तसंयमात्सर्वजन्तुरुतज्ञानम् ।
संचितकर्मणि चित्तसंयमात्पूर्वजातिज्ञानम् ।
परचित्ते चित्तसंयमात्परचित्तज्ञानम् ।
कायरूपे चित्तसंयमादन्यादृश्यरूपम् ।
बले चित्तसंयमाद्धनुमदादिबलम् ।
सूर्ये चित्तसंयमाद्भुवनज्ञानम् ।
चन्द्रे चित्तसंयमात्ताराव्यूहज्ञानम् ।
ध्रुवे तद्गतिदर्शनम् । स्वार्थसंयमात्पुरुषज्ञानम् ।
नाभिचक्रे कायव्यूहज्ञानम् । कण्ठकूपे क्षुत्पिपासा निवृत्तिः ।
कूर्मनाड्यां स्थैर्यम् । तारे सिद्धदर्शनम् ।
कायाकाशसंयमादाकाशगमनम् ।
तत्तत्स्थाने संयमात्तत्तत्सिद्धयो भवन्ति ॥ ७॥

अथ प्रत्याहारः । स पञ्चविधः विषयेषु विचरतामिन्द्रियाणां
बलादाहरणं प्रत्याहरः । यद्यत्पश्यति तत्सर्वमामेति प्रत्याहारः ।
नित्यविहितकर्मफलत्यागः प्रत्याहारः ।
सर्वविषयपराङ्मुखत्वं प्रत्याहारः ।
अष्टादशसु मर्मस्थानेषु क्रमाद्धारणं प्रत्याहारः ।
पादाङ्गुष्ठगुल्फजङ्घाजानूरुपायुमेढ्रनाभिहृदय-
कण्ठकूपतालुनासाक्षिभ्रूमध्यललाटमूर्ध्नि स्थानानि ।
तेषु क्रमादारोहावरोहक्रमेण प्रत्याहरेत् ॥ ८॥

अथ धारणा । सा त्रिविधा । आत्मनि मनोधारणं दहराकाशे
बाह्याकाशधारणं पृथिव्यप्तेजोवाय्वाकाशेषु
पञ्चमूर्तिधारणं चेति ॥ ९॥

अथ ध्यानम् । तद्द्विविधं सगुणं निर्गुणं चेति ।
सगुणं मूर्तिध्यानम् । निर्गुणमात्मयाथात्म्यम् ॥ १०॥

अथ समाधिः । जीवात्मपरमात्मैक्यावस्थात्रिपुटीरहिता
परमानन्दस्वरूपा शुद्धचैतन्यात्मिका भवति ॥ ११॥

इति प्रथमोऽध्यायः ॥ १॥

अथ ह शाण्डिल्यो ह वै ब्रह्मऋषिश्चतुर्षु वेदेषु
ब्रह्मविद्यामलभमानः किं नामेत्यथर्वाणं
भगवन्तमुपसन्नः पप्रच्छाधीहि भगवन् ब्रह्मविद्यां
येन श्रेयोऽवाप्स्यामीति । स होवाचाथर्वा शाण्डिल्य सत्यं
विज्ञानमनन्तं ब्रह्म यस्मिन्निदमोतं च प्रोतं च ।
यस्मिन्निदं सं च विचैति सर्वं यस्मिन्विज्ञाते सर्वमिदं
विज्ञातं भवति । तदपाणिपादमचक्षुःश्रोत्रमजिह्वमशरीर-
मग्राह्यमनिर्देश्यम् । यतो वाचो निवर्तन्ते । अप्राप्य मनसा
सह । यत्केवलं ज्ञानगम्यम् । प्रज्ञा च यस्मात्प्रसृता
पुराणी । यदेकमद्वितीयम् । आकाशवत्सर्वगतं सुसूक्ष्मं
निरञ्जनं निष्क्रियं सन्मात्रं चिदानन्दैकरसं शिवं
प्रशान्तममृतं तत्परं च ब्रह्म । तत्त्वमसि । तज्ज्ञानेन हि
विजानीहि य एको देव आत्मशक्तिप्रधानः सर्वज्ञः सर्वेश्वरः
सर्वभूतान्तरात्मा सर्वभूताधिवासः सर्वभूतनिगूढो
भूतयोनिर्योगैकगम्यः । यश्च विश्वं सृजति विश्वं बिभर्ति
विश्वं भुङ्क्ते स आत्मा । आत्मनि तं तं लोकं विजानीहि । मा
शोचीरात्मविज्ञानी शोकस्यान्तं गमिष्यति ॥

इति द्वितीयोऽध्यायः ॥ २॥

अथैनं शाण्डिल्योऽथर्वाणं पप्रच्छ यदेकमक्षरं
निष्क्रियं शिवं सन्मात्रं परंब्रह्म । तस्मात्कथमिदं
विश्वं जायते कथं स्थीयते कथमस्मिंल्लीयते । तन्मे संशयं
छेत्तुमर्हसीति । स होवाचाथर्वा सत्यं शाण्डिल्य परंब्रह्म
निष्क्रियमक्षरमिति । अथाप्यस्यारूपस्य ब्रह्मणस्त्रीणि
रूपाणि भवन्ति सकलं निष्कलं सकलनिष्कलं चेति ।
यत्सत्यं विज्ञानमानन्दं निष्क्रियं निरञ्जनं सर्वगतं
सुसूक्ष्मं सर्वतोमुखमनिर्देश्यममृतमस्ति तदिदं निष्कलं
रूपम् । अथास्य या सहजास्त्यविद्या मूलप्रकृतिर्माया
लोहितशुक्लकृष्णा । तया सहायवान् देवः कृष्णपिङ्गलो
ममेश्वर ईष्टे । तदिदमस्य सकलनिष्कलं रूपम् ॥ अथैष
ज्ञानमयेन तपसा चीयमानोऽकामयत बहु स्यां प्रजायेयेति ।

अथैतस्मात्तप्यमानात्सत्यकामात्त्रीण्यक्षराण्यजायन्त । तिस्रो
व्याहृतयस्त्रिपदा गायत्री त्रयो वेदास्त्रयो देवास्त्रयो वर्णास्त्रयोऽग्नयश्च
जायन्ते । योऽसौ देवो भगवान्सर्वैश्वर्यसम्पन्नः सर्वव्यापी
सर्वभूतानां हृदये संनिविष्टो मायावी मायया क्रीडति स ब्रह्मा
स विष्णुः स रुद्रः स इन्द्रः स सर्वे देवाः सर्वाणि भूतानि स एव
पुरस्तात्स एव पश्चात्स एवोत्तरतः स एव दक्षिणतः स एवाधस्तात्स
एवोपरिष्टात्स एव सर्वम् । अथास्य देवस्यात्मशक्तेरात्मक्रीडस्य
भक्तानुकंपिनो दत्तात्रेयरूपा सुरूपा तनूरवासा इन्दीवरदलप्रख्या
चतुर्बाहुरघोरापापकशिनी । तदिदमस्य सकलं रूपम् ॥ १॥

अथ हैनमथर्वाणं शाण्डिल्यः पप्रच्छ भगवन्सन्मात्रं
चिदानन्दैकरसं कस्मादुच्यते परं ब्रह्मेति । स होवाचाथर्वा
यस्माच्च बृहति बृंहयति च सर्वं तस्मादुच्यते परंब्रह्मेति ।
अथ कस्मादुच्यते आत्मेति । यस्मात्सर्वमाप्नोति सर्वमादत्ते सर्वमत्ति
च तस्मादुच्यते आत्मेति । अथ कस्मादुच्यते महेश्वर इति । यस्मान्महत
ईशः शब्दध्वन्या चात्मशक्त्या च महत ईशते तस्मादुच्यते
महेश्वर इति । अथ कस्मादुच्यते दत्तात्रेय इति । यस्मात्सुदुश्चरं
तपस्तप्यमानायात्रये पुत्रकामायातितरां तुष्टेन भगवता
ज्योतिर्मयेनात्मैव दत्तो यस्माच्चानसूयायामत्रेस्तनयोऽभव-
त्तस्मादुच्यते दत्तात्रेय इति । अथ योऽस्य निरुक्तानि वेद स सर्वं वेद ।
अथ यो ह वै विद्ययैनं परमुपास्ते सोऽहमिति स ब्रह्मविद्भवति ॥

अत्रैते श्लोका भवन्ति ॥

दत्तात्रेयं शिवं शान्तमिन्द्रनीलनिभं प्रभुम् ।
आत्ममायारतं देवमवधूतं दिगम्बरम् ॥ १॥

भस्मोद्धूलितसर्वाङ्गं जटाजूटधरं विभुम् ।
चतुर्बाहुमुदाराङ्गं प्रफुल्लकमलेक्षणम् ॥२॥

ज्ञानयोगनिधिं विश्वगुरुं योगिजनप्रियम् ।
भक्तानुकंपिनं सर्वसाक्षिणं सिद्धसेवितम् ॥ ३॥

एवं यः सततं ध्यायेद्देवदेवं सनातनम् ।
स मुक्तः सर्वपापेभ्यो निःश्रेयसमवाप्नुयात् ॥ ४॥

इत्यों सत्यमित्युपनिषत् ॥

इति तृतीयोऽध्यायः ॥ ३॥

ॐ भद्रं कर्णेभिः श्रृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः ।
स्थिरैरङ्गैस्तुष्टुवाँ सस्तनूभिर्व्यशेम देवहितं यदायुः ।
स्वस्ति न इन्द्रो वृद्धश्रवाः । स्वस्ति नः पूषा विश्ववेदाः ।
स्वस्ति नस्ताक्ष्र्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

इति शाण्डिल्योपनिषत्समाप्ता ॥

Encoded by Sunder Hattangadi (sunderh@hotmail.com)

*Shandilya Upanishad*

pdf was typeset on February 10, 2019

Please send corrections to *sanskrit@cheerful.com*

# Trishikhibrahmana Upanishad

# त्रिशिखिब्राह्मणोपनिषत्

## Sanskrit Document Information

Text title : Trishikhibrahmana Upanishad

File name : trishikhi.itx

Category : upanishhat, upanishad

Location : doc_upanishhat

Author : Vedic Tradition

Transliterated by : Sunder Hattangadi (sunderh at hotmail.com)

Proofread by : Sunder Hattangadi (sunderh at hotmail.com)

Description-comments : 44 / 108; Shukla YajurVeda - Yoga upanishad

Latest update : Mar. 4, 2000

Send corrections to : Sanskrit@cheerful.com



June 21, 2018

*sanskritdocuments.org*

# त्रिशिखिब्राह्मणोपनिषत्

योगज्ञानैकसंसिद्धशिवतत्त्वतयोज्ज्वलम् ।
प्रतियोगिविनिर्मुक्तं परंब्रह्म भवाम्यहम् ॥

ॐ पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते ।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

ॐ त्रिशिखी ब्राह्मण आदित्यलोकं जगाम तं गत्वोवाच ।
भगवन् किं देहः किं प्राणः किं कारण किमात्मा स
होवाच सर्वमिदं शिव एव विजानीहि । किंतु नित्यः शुद्धो
निरञ्जनो विभुरद्वयः शिव एकः स्वेन भासेदं सर्वं
दृष्ट्वा तप्तायःपिण्डवदेकं भिन्नवदवभासते ।
तद्भासकं किमिति चेदुच्यते । सच्छब्दवाच्य-
मविद्याशबलं ब्रह्म । ब्रह्मणोऽव्यक्तम् । अव्यक्तान्महत् ।
महतोऽहङ्कारः । अहङ्कारात्पञ्चतन्मात्राणि ।
पञ्चतन्मात्रेभ्यः पञ्चमहाभूतानि ।
पञ्चमहाभूतेभ्योऽखिलं जगत् ॥

तदखिलं किमिति । भूतविकारविभागादिरिति । एकस्मिन्पिण्डे
कथं भूतविकारविभाग इति । तत्तत्कार्यकारणभेदरूपे-
णांशतत्त्ववाचकवाच्यस्थानभेदविषयदेवताकोश-
भेदविभागा भवन्ति । अथाकाशोऽन्तःकरणमनोबुद्धि-
चिताहङ्कारः । वायुः समानोदानव्यानापानप्राणाः ।
वह्निः श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणानि । आपः शब्दस्पर्श-
रूपरसगन्धाः । पृथिवी वाक्पाणिपादपायूपस्थाः ।
ज्ञानसङ्कल्पनिश्चयानुसन्धानाभिमाना आकाश-
कार्यान्तःकरणविषयाः । समीकरणोन्नयनग्रहण-

कुण्डल्याः स्थानं स्वरूपं च

नाभिकन्दादधः स्थानं कुण्डल्या द्व्यङ्गुलं मुने ।
अष्टप्रकृतिरूपा सा कुण्डली मुनिसत्तम ॥ ११ ॥
यथावद्वायुचेष्टां च जलान्नादीनि नित्यशः ।
परितः कन्दपार्श्वेषु निरुध्यैव सदा स्थिता ॥ १२ ॥
स्वमुखेन [1]सदाऽऽवेष्ट्य ब्रह्मरन्ध्रमुखं मुने ।

कुण्डलिनीस्थानं तत्स्वरूपं चाह— नाभीति । पृथिव्यप्तेजोवाय्वाकाशमनोबुद्ध्यहङ्काररूपिण्यः अष्टौ प्रकृतयः ॥ ११–१२ ॥

नाडीस्थानानि

सुषुम्नाया इडा मध्ये दक्षिणे पिङ्गला स्थिता ॥ १३ ॥
सरस्वती कुहूश्चैव सुषुम्नापार्श्वयोः स्थिते ।
गान्धारा हस्तिजिह्वा च इडायाः पृष्ठपूर्वयोः ॥ १४ ॥
पूषा यशस्विनी चैव पिङ्गलापृष्ठपूर्वयोः ।
कुहोश्च हस्तिजिह्वाया मध्ये विश्वोदरा स्थिता ॥ १५ ॥
यशस्विन्याः कुहोर्मध्ये वरुणा सुप्रतिष्ठिता ।
पूषायाश्च सरस्वत्या मध्ये प्रोक्ता यशस्विनी ॥ १६ ॥
गान्धारायाः सरस्वत्या मध्ये प्रोक्ता च शङ्खिनी ।
अलम्बुसा स्थिता पायुपर्यन्तं कन्दमध्यगा ॥ १७ ॥
पूर्वभागे सुषुम्नाया राकायाः संस्थिता कुहूः ।
अधश्चोर्ध्वं स्थिता नाडी [2]याम्यनासान्तमिष्यते ॥ १८ ॥

[1] समावेष्ट्य—क, अ २.     [2] वामना—अ, अ १.

इडा तु सव्यनासान्तं संस्थिता मुनिपुङ्गव ।
यशस्विनी च वामस्य पादाङ्गुष्ठान्तमिष्यते ॥ १९ ॥
पूषा वामाक्षिपर्यन्ता पिङ्गलायास्तु पृष्ठतः ।
पयस्विनी च याम्यस्य कर्णान्तं प्रोच्यते बुधैः ॥ २० ॥
सरस्वती तथा [1]चोर्ध्वं गता जिह्वा तथा मुने ।
हस्तिजिह्वा तथा सव्यपादाङ्गुष्ठान्तमिष्यते ॥ २१ ॥
शङ्खिनी नाम या नाडी सव्यकर्णान्तमिष्यते ।
गान्धारा सव्यनेत्रान्ता प्रोक्ता वेदान्तवेदिभिः ॥ २२ ॥
विश्वोदराभिधा नाडी कन्दमध्ये व्यवस्थिता ।

सुषुम्नानाडीपरितः प्रधाननाड्यः तिष्ठन्तीत्याह—सुषुम्नाया इति ॥ १३–२२ ॥

नाडीषु वायुसञ्चारः

प्राणोऽपानस्तथा व्यानः समानोदान एव च ॥ २३ ॥
नागः कूर्मश्च कृकरो देवदत्तो धनंजयः ।
एते नाडीषु सर्वासु चरन्ति दश वायवः ॥ २४ ॥
तेषु प्राणादयः पञ्च मुख्याः पञ्चसु सुव्रत ।
प्राणसंज्ञस्तथाऽपानः पूज्यः प्राणस्तयोर्मुने ॥ २५ ॥
आस्यनासिकयोर्मध्ये नाभिमध्ये तथा हृदि ।
प्राणसंज्ञोऽनिलो नित्यं वर्तते मुनिसत्तम ॥ २६ ॥

[1] चोर्ध्वगा जिह्वान्तं स्थिता मुने—क, अ २. चोर्ध्वानाजिह्वायास्तथा मुने—अ १. चोर्ध्वाजिह्वायाश्च तथा मुने—अ.

अपानो वर्तते नित्यं गुद[1]मध्योरुजानुषु ।
उदरे सकले कट्यां नाभौ जङ्घे च सुव्रत ॥ २७ ॥
व्यानः श्रोत्राक्षिमध्ये च ककुद्भ्यां गुल्फयोरपि ।
प्राणस्थाने गले चैव वर्तते मुनिपुङ्गव ॥ २८ ॥
उदानसंज्ञो विज्ञेयः पादयोर्हस्तयोरपि ।
समानः सर्वदेहेषु व्याप्य तिष्ठत्य[2]संशयः ॥ २९ ॥
नागादिवायवः पञ्च त्वगस्थ्यादिषु संस्थिताः ।

एवमुक्तासु नाडीषु प्राणादयश्चरन्तीत्याह—प्राण इति ॥ २३–२६ ॥ उदरे सकले यावदुदरे । जङ्घे जङ्घायां ॥ २७–२९ ॥

वायुव्यापाराः

निःश्वासोच्छ्वासकासाश्च प्राणकर्म हि सांकृते ॥ ३० ॥
अपानाख्यस्य वायोस्तु विण्मूत्रादिविसर्जनम् ।
समानः सर्वसामीप्यं करोति मुनिपुङ्गव ॥ ३१ ॥
उदान ऊर्ध्वगमनं करोत्येव न संशयः ।
व्यानो [3]विवादकृत् प्रोक्तो मुने वेदान्तवेदिभिः ॥ ३२ ॥
उद्गारादिगुणः प्रोक्तो नागाख्यस्य महामुने ।
धनंजयस्य शोभादि कर्म प्रोक्तं हि सांकृते ॥ ३३ ॥
निमीलनादि कूर्मस्य क्षुधा तु कृकरस्य च ।
देवदत्तस्य विप्रेन्द्र तन्द्रीकर्म प्रकीर्तितम् ॥ ३४ ॥

प्राणादिदशवायुव्यापारानाह—निःश्वासेति ॥ ३०–३४ ॥

[1] मेढ्रोरु—क, अ २.   [2] संशयम्—अ.   [3] विनाद—क.

नाडीदेवता:

सुषुम्नायाः शिवो देव इडाया देवता हरिः ।
पिङ्गलाया विरिञ्चिः स्यात् सरस्वत्या विराण्मुने ॥ ३५ ॥
पूषाऽधिदेवता प्रोक्तो वरुणा वायुदेवता ।
हस्तिजिह्वाभिधायास्तु वरुणो देवता भवेत् ॥ ३६ ॥
यशस्विन्या मुनिश्रेष्ठ भगवान् भास्करस्तथा ।
अलम्बु[1]साया अत्रात्मा वरुणः परिकीर्तितः ॥ ३७ ॥
कुहोः क्षुद्देवता प्रोक्ता गान्धारी चन्द्रदेवता ।
शङ्खिन्याश्चन्द्रमास्तद्वत् पयस्विन्याः प्रजापतिः ॥ ३८ ॥
विश्वोदराभिधायास्तु भगवान् पावकः पतिः ।

सुषुम्नादिचतुर्दशनाडीदेवताभेदमाह सुषुम्नाया इति ॥ ३५--३८ ॥

नाडीषु चन्द्रसूर्यसञ्चार:

इडायां चन्द्रमा नित्यं चरत्येव महामुने ॥ ३९ ॥
पिङ्गलायां रविस्तद्वन्मुने वेदविदां वर ।

सदेडापिङ्गळयोश्चन्द्रसूर्यौ चरतः इत्याह--इडायामिति ॥ ४० ॥

नाडीषु संवत्सरात्मकप्राणसूर्यसञ्चार:

पिङ्गलाया इडायां तु वायोः संक्रमणं तु यत् ॥ ४० ॥
तदुत्तरायणं प्रोक्तं मुने वेदान्तवेदिभिः ।
इडायाः पिङ्गलायां तु प्राणसंक्रमणं मुने ॥ ४१ ॥

[1] षाधमन्यात्मा—अ, अ १.

दक्षिणायनमित्युक्तं पिङ्गलायामिति श्रुतिः ।
इडापिङ्गलयोः संधिं यदा प्राणः समागतः ॥ ४२ ॥
अमावास्या तदा प्रोक्ता देहे देहभृतां वर ।
मूलाधारं यदा प्राणः प्रविष्टः पण्डितोत्तम ॥ ४३ ॥
तदाद्यं विषुवं प्रोक्तं तापसैस्तापसोत्तम ।
प्राणसंज्ञो मुनिश्रेष्ठ मूर्धानं [1]प्राविशद्यदा ॥ ४४ ॥
तदन्त्यं विषुवं प्रोक्तं तापसैस्तत्त्वचिन्तकैः ।
निःश्वासोच्छ्वासनं सर्वं मासानां संक्रमो भवेत् ॥ ४५ ॥
[2]इडया कुण्डलीस्थानं यदा प्राणः समागतः ।
सोमग्रहणमित्युक्तं तदा तत्त्वविदां वर ॥ ४६ ॥
यदा पिङ्गलया प्राणः कुण्डलीस्थानमागतः ।
तदातदा भवेत् सूर्यग्रहणं मुनिपुङ्गव ॥ ४७ ॥

संवत्सरात्मकप्राणसूर्यस्य नाडीराशिसञ्चारतो दिनपक्षमासायनादिग्रहणादिः भवतीत्याह—पिङ्गलाया इति ॥ ४१–४७ ॥

अन्तस्तीर्थप्राशस्त्यम्

श्रीपर्वतं शिरःस्थाने केदारं तु ललाटके ।
वाराणसीं महाप्राज्ञ भ्रुवोर्घ्राणस्य मध्यमे ॥ ४८ ॥
कुरुक्षेत्रं कुचस्थाने प्रयागं हृत्सरोरुहे ।
चिदम्बरं तु हृन्मध्ये आधारे कमलालयम् ॥ ४९ ॥

[1] प्रविशेद्यदा—अ.
[2] इडायाः—अ, अ १, अ २.

आत्मतीर्थं समुत्सृज्य बहिस्तीर्थानि यो व्रजेत् ।
करस्थं स महारत्नं त्यक्त्वा काचं विमार्गते ॥ ५० ॥
भावतीर्थं परं तीर्थं प्रमाणं सर्वकर्मसु ।
अन्यथाऽऽलिङ्ग्यते कान्ता [1]अन्यथाऽऽलिङ्ग्यते सुता ॥ ५१ ॥
तीर्थानि तोयपूर्णानि देवान् काष्ठादिनिर्मितान् ।
योगिनो न प्रपद्यन्ते स्वात्मप्रत्ययकारणात् ॥ ५२ ॥
बहिस्तीर्थात् परं तीर्थमन्तस्तीर्थं महामुने ।
आत्मतीर्थं महातीर्थमन्यत्तीर्थं निरर्थकम् ॥ ५३ ॥
चित्तमन्तर्गतं दुष्टं तीर्थस्नानैर्न शुध्यति ।
शतशोऽपि जलैर्धौतं सुराभाण्डमिवाशुचि ॥ ५४ ॥
विषुवायनकालेषु ग्रहणे चान्तरे सदा ।
वाराणस्यादिके स्थाने स्नात्वा शुद्धो भवेन्नरः ॥ ५५ ॥
ज्ञानयोगपराणां तु पादप्रक्षालितं जलम् ।
भावशुद्ध्यर्थ[2]मज्ञानां तत्तीर्थं मुनिपुङ्गव ॥ ५६ ॥

मस्तकाद्याधारान्तं श्रीशैलादिपुण्यस्थलं भवतीत्याह—**श्रीपर्वतमिति** ॥ ४८–४९ ॥ एवं भावनामयमात्मतीर्थं तदेव मुमुक्षुभिः सेव्यं इति स्तौति—**आत्मतीर्थमिति** । **काचं**—काचमणिम् ॥ ५० ॥ देहादिनिर्वर्त्य-सर्वकर्मसु तीर्थबुद्धिः गरीयसीत्यर्थः । तत्र दृष्टान्तस्तु—**अन्यथेति** ॥ ५१ ॥ अत एवं **तीर्थानीति** ॥ ५२ ॥ तदेव **आत्मतीर्थम्** ॥ ५३ ॥ बाह्यतीर्थस्नानेन कोऽपि न शुध्यतीति सदृष्टान्तमाह—**चित्तमिति** ॥ ५४ ॥ न तथा

[1] 'भावेनदुहिताऽन्यथा' इति पाठान्तरम्—उ. [2] मज्ञानात्—अ, अ १.

भावतीर्थस्नानेनेत्याह—विषुवेति । भ्रूमध्यादिस्थानेषु स्वात्मलक्ष्यानुसन्धानतः शुद्धात्मैव भवतीत्यर्थः ॥ ९५ ॥ एवमात्मतीर्थस्नानानधिकारे[री]तीर्थपादचरणोदकस्पर्शतः शुद्धो भवतीत्याह—ज्ञानेति ॥ ९६ ॥

### आत्मनि शिवदृष्टिः

तीर्थे दाने जपे यज्ञे काष्ठे पाषाणके सदा ।
शिवं पश्यति मूढात्मा शिवे देहे प्रतिष्ठिते ॥ ९७ ॥
अन्तःस्थं मां परित्यज्य बहिष्ठं यस्तु सेवते ।
हस्तस्थं पिण्डमुत्सृज्य लिहेत् कूर्परमात्मनः ॥ ९८ ॥
शिवमात्मनि पश्यन्ति प्रतिमासु न योगिनः ।
अज्ञानां भावनार्थाय प्रतिमाः परिकल्पिताः ॥ ९९ ॥

स्वाज्ञाः स्वातिरिक्तात्मानं द्रष्टुमिच्छन्ति, स्वज्ञाः स्वमात्मानं पश्यन्तीत्याह—तीर्थे इति ॥ ९७–९८ ॥ अत एव शिवमिति । अयोगिजनानुकम्पया प्रतिमाऽपि विकल्पितेत्याह—अज्ञानामिति ॥ ९९ ॥

### ब्रह्मदर्शनेन ब्रह्मभावः

अपूर्वमपरं ब्रह्म स्वात्मानं सत्यमद्वयम् ।
प्रज्ञानघनमानन्दं यः पश्यति स पश्यति ॥ ६० ॥
नाडीपुञ्जं सदाऽसारं नरभावं महामुने ।
समुत्सृज्यात्मनाऽऽत्मानमहमित्यवधारय ॥ ६१ ॥
अशरीरं शरीरेषु महान्तं विभुमीश्वरम् ।
आनन्दमक्षरं साक्षान्मत्वा धीरो न शोचति ॥ ६२ ॥

विभेदजनके ज्ञाने नष्टे ज्ञानबलान्मुने ।

आत्मनो ब्रह्मणो भेदमसन्तं [1]किं करिष्यति ॥ ६३ ॥

निर्विशेषं ब्रह्म यः पश्यति स तदेव भवतीत्याह—अपूर्वमिति । यस्मात् पूर्वं कारणं परं कार्यं वा न विद्यते तत् कार्यकारणकलनाशून्यं ब्रह्म स्वमात्रमिति यः पश्यति स तन्मात्रमवशिष्यते इत्यर्थः ॥ ६० ॥ यावच्चित्तशुद्धिः तावत् नरभावनया योगं युञ्जीत, ततः शुद्धावुदितायां नरभावं विहाय ब्रह्मभावेन वर्तस्वेत्याह—नाडीति ॥ ६१ ॥ यः कोऽप्येवमात्मानं जानाति स कृतकृत्यो भवतीत्याह—अशरीरमिति ॥ ६२ ॥ स्वाज्ञान-जभेदद्दष्ट्यपाये निर्भेदं ब्रह्म प्रसीदतीत्याह—विभेदेति । वस्तुतः कालत्रये-ऽप्यसंभवभेदः किं करिष्यति? स्वस्य लब्धात्मकत्वान्निर्भेदं ब्रह्मावशिष्यते इत्यर्थः ॥ ६३ ॥

इति चतुर्थः खण्डः

## नाडीशोधनम्

सम्यक्कथय मे ब्रह्मन् नाडीशुद्धिं समासतः ।

यया शुद्ध्या सदा ध्यायन् जीवन्मुक्तो भवाम्यहम् ॥ १ ॥

सांकृते शृणु वक्ष्यामि नाडीशुद्धिं समासतः ।

विध्युक्तकर्मसंयुक्तः कामसंकल्पवर्जितः ॥ २ ॥

यमाद्यष्टाङ्गसंयुक्तः शान्तः सत्यपरायणः ।

स्वात्मन्यवस्थितः सम्यक् ज्ञानिभिश्च सुशिक्षितः ॥ ३ ॥

[1] कः—अ.

पर्वताग्रे नदीतीरे बिल्वमूले वनेऽथवा ।
मनोरमे शुचौ देशे मठं कृत्वा समाहितः ॥ ४ ॥
आरभ्य चासनं पश्चात् प्राङ्मुखोदङ्मुखोऽपि वा ।
समग्रीवशिरःकायः संवृतास्यः सुनिश्चलः ॥ ५ ॥
नासाग्रे शशभृद्बिम्बे बिन्दु[1]मध्ये तुरीयकम् ।
स्रवन्तममृतं पश्येन्नेत्राभ्यां सुसमाहितः ॥ ६ ॥
[2]इडया प्राणमाकृष्य पूरयित्वोदरस्थितम् ।
ततोऽग्निं देहमध्यस्थं ध्यायन् ज्वालावलीयुतम् ॥ ७ ॥
बिन्दुनादसमायुक्तमग्निबीजं विचिन्तयेत् ।
पश्चाद्विरेचयेत् सम्यक् प्राणं पिङ्गलया बुधः ॥ ८ ॥
पुनः पिङ्गलयाऽऽपूर्य वह्निबीजमनुस्मरेत् ।
पुनर्विरेचयेद्धीमानिडयैव शनैःशनैः ॥ ९ ॥
त्रिचतुर्वासरं [3]वाऽथ त्रिचतुर्वारमेव [4]च ।
षट्[5]कृत्वो विचरेन्नित्यं [6]रहस्येवं त्रिसंधिषु ॥ १० ॥

नरभावभावितनाडीशुद्धिबुभुत्सया पृच्छतीत्याह—सम्यगिति ॥ १ ॥ प्रश्नोत्तरं भगवानाह—साङ्कृत इति ॥ कस्तत्प्रकारः इत्यत्र—विध्युक्तेति ॥ २–५ ॥ स्रवदमृतचन्द्रबिम्बं नासाग्रे अवलोकयन् योगं समारभेदित्यर्थः ॥ ६–७ ॥ रामिति अग्निबीजम् ॥ ८–९ ॥ प्रतिदिनं त्रिचतुर्वारम् ॥ १०–१४ ॥

[1] मध्यतु—अ १. मध्यं तु—अ. [2] इडायाः—अ. [3] वाऽपि—अ.
[4] वा—अ. [5] कृत्वा—अ १, अ २, क. [6] रहस्ये—उ, अ १.

नाडीशुद्धिचिह्नानि

नाडीशुद्धिमवाप्नोति पृथक्चिह्नोपलक्षितः ।
शरीरलघुता दीप्तिर्वह्नेर्जाठरवर्तिनः ॥ ११ ॥
नादाभिव्यक्तिरित्येतच्चिह्नं तत्सिद्धिसूचकम् ।
यावदेतानि संपश्येत्तावदेवं समाचरेत् ॥ १२ ॥

स्वात्मशुद्धिः

अथवैतत् परित्यज्य स्वात्मशुद्धिं समाचरेत् ।
आत्मा शुद्धः सदा नित्यः सुखरूपः स्वयंप्रभः ॥ १३ ॥
अज्ञानान्मलिनो भाति ज्ञानाच्छुद्धो [1]विभात्ययम् ।
अज्ञानमलपङ्कं यः क्षालयेज्ज्ञानतोयतः ।
स एव सर्वदा शुद्धो नान्यः कर्मरतो हि सः ॥ १४ ॥

इति पञ्चमः खण्डः

प्राणायामलक्षणम्

प्राणायामक्रमं वक्ष्ये सांकृते शृणु सादरम् ।
प्राणायाम इति प्रोक्तो रेचपूरककुम्भकैः ॥ १ ॥
वर्णत्रयात्मकाः प्रोक्ता रेचपूरककुम्भकाः ।
स एष प्रणवः प्रोक्तः प्राणायामश्च तन्मयः ॥ २ ॥

[1] भव—उ,

इडया वायुमाकृष्य पूरयित्वोदरस्थितम् ।
शनैः षोडशभिर्मात्रैरकारं तत्र संस्मरेत् ॥ ३ ॥
पूरितं धारयेत् पश्चाच्चतुःषष्ट्या तु मात्रया ।
उकारमूर्तिमत्रापि संस्मरन् प्रणवं जपेत् ॥ ४ ॥
यावद्वा शक्यते तावद्धारयेज्जपतत्परः ।
पूरितं रेचयेत् पश्चान्मकारेणानिलं बुधः ॥ ५ ॥
शनैः पिङ्गलया तत्र द्वात्रिंशन्मात्रया पुनः ।
प्राणायामो भवेदेषः ततश्चैवं समभ्यसेत् ॥ ६ ॥
पुनः पिङ्गलयाऽऽपूर्य मात्रैः षोडशभिस्तथा ।
अकारमूर्तिमत्रापि स्मरेदेकाग्रमानसः ॥ ७ ॥
धारयेत् पूरितं विद्वान् प्रणवं संजपन् वशी ।
उकारमूर्तिं [1]स ध्यायन् चतुःषष्ट्या तु मात्रया ॥ ८ ॥
मकारं तु स्मरन् पश्चाद्रेचयेदिडयाऽनिलम् ।
एवमेव पुनः कुर्यादिडयाऽऽपूर्य बुद्धिमान् ॥ ९ ॥
एवं समभ्यसेन्नित्यं प्राणायामं मुनीश्वर ।
एवमभ्यासतो नित्यं षण्मासाद् ज्ञानवान् भवेत् ॥ १० ॥
वत्सराद्ब्रह्मविद्वान् स्यात् तस्मान्नित्यं समभ्यसेत् ।
योगाभ्यासरतो नित्यं स्वधर्मनिरतश्च यः ॥ ११ ॥
प्राणसंयमनेनैव ज्ञानान्मुक्तो भविष्यति ।

विशेषतः प्राणायामेति ॥ १–११ ॥

[1] संधाय च—अ २. संध्यायां च—अ १. स ध्यायात् च—अ.

पूरकादिलक्षणम्

बाह्यादापूरणं वायोरुदरे पूरको हि सः ॥ १२ ॥

संपूर्णकुम्भवद्वायोर्धारणं कुम्भको भवेत् ।

बहिर्विरेचनं वायोरुदराद्रेचकः स्मृतः ॥ १३ ॥

पूरकादिलक्षणमाह—बाह्यादिति ॥ १२–१३ ॥

प्राणायामसिद्धयः

प्रस्वेदजनको यस्तु प्राणायामेषु सोऽधमः ।

कम्पनं मध्यमं विद्यादुत्थानं चोत्तमं विदुः ॥ १४ ॥

पूर्वपूर्वं प्रकुर्वीत यावदुत्थानसंभवः ।

संभवत्युत्तमे प्राज्ञः प्राणायामे सुखी भवेत् ॥ १५ ॥

प्राणायामेन चित्तं तु शुद्धं भवति सुव्रत ।

चित्ते शुद्धे शुचिः साक्षात् प्रत्यग्ज्योतिर्व्यव[1]स्थितः ॥ १६

[2]प्राणश्चित्तेन संयुक्तः परमात्मनि तिष्ठति ।

प्राणायामपरस्यास्य पुरुषस्य महात्मनः ॥ १७ ॥

देहश्चोत्तिष्ठते तेन किंचिज्ज्ञानाद्विमुक्तता ।

रेचकं पूरकं मुक्त्वा कुम्भकं नित्यमभ्यसेत् ॥ १८ ॥

सर्वपापविनिर्मुक्तः सम्यज्ज्ञानमवाप्नुयात् ।

मनोजवत्वमाप्नोति पलितादि च नश्यति ॥ १९ ॥

[1] स्थितम्—अ. [2] प्राणचि—उ, क.

प्राणायामैकनिष्ठस्य न किंचिदपि दुर्लभम् ।
तस्मात् सर्वप्रयत्नेन प्राणायामान् समभ्यसेत् ॥ २० ॥

स्वेदादिसिद्धिमाह— प्रस्वेदेति ॥ १४–१७ ॥ उत्तिष्ठते भूतलात् ॥ १८–२० ॥

रोगनिवर्तकप्राणायामभेदाः

विनियोगान् प्रवक्ष्यामि प्राणायामस्य सुव्रत ।
संध्ययोर्ब्राह्मकालेऽपि मध्याह्ने वाऽथवा सदा ॥ २१ ॥
बाह्यं प्राणं समाकृष्य [1]पूरयित्वोदरेण च ।
नासाग्रे नाभिमध्ये च पादाङ्गुष्ठे च धारणात् ॥ २२ ॥
सर्वरोगविनिर्मुक्तो जीवेद्वर्षशतं नरः ।
नासाग्रधारणाद्वाऽपि जितो भवति सुव्रत ॥ २३ ॥
सर्वरोगनिवृत्तिः स्यान्नाभिमध्ये तु धारणात् ।
शरीरलघुता विप्र [2]पादाङ्गुष्ठनिरोधनात् ॥ २४ ॥
जिह्वया वायुमाकृष्य यः पिबेत् सततं नरः ।
श्रमदाहविनिर्मुक्तो योगी नीरोगतामियात् ॥ २५ ॥
जिह्वया वायुमाकृष्य जिह्वामूले निरोधयेत् ।
पिबेदमृतमव्यग्रं सकलं सुखमाप्नुयात् ॥ २६ ॥
इडया वायुमाकृष्य भ्रुवोर्मध्ये निरोधयेत् ।
यः पिबेदमृतं शुद्धं व्याधिभिर्मुच्यते हि सः ॥ २७ ॥

[1] पूरयित्वाऽऽद—अ १.  [2] पादाङ्गुष्ठे—अ.

इडया वेदतत्त्वज्ञ तथा पिङ्गलयैव च ।
नाभौ निरोधयेत्तेन व्याधिभिर्मुच्यते नरः ॥ २८ ॥
माससमात्रं त्रिसन्ध्यायां जिह्वयाऽऽरोप्य मारुतम् ।
अमृतं च [1]पिबन्नाभौ मन्दंमन्दं निरोधयेत् ॥ २९ ॥
वातजाः पित्तजा दोषा नश्यन्त्येव न संशयः ।
नासाभ्यां वायुमाकृष्य नेत्र[2]द्वन्द्वे निरोधयेत् ॥ ३० ॥
नेत्ररोगा विनश्यन्ति तथा श्रोत्रनिरोधनात् ।
तथा वायुं समारोप्य धारयेच्छिरसि स्थितम् ॥ ३१ ॥
शिरोरोगा विनश्यन्ति सत्यमुक्तं हि सांकृते ।

योगसिद्ध्यन्तरायरोगनिरासकान् धारणाभेदानाह — विनियोगानिति । ब्राह्मकाले ब्राह्मे मुहूर्ते ॥ २१–३१ ॥

षण्मुखीमुद्राभ्यासादिना वायुजयः

स्वस्तिकासनमास्थाय समाहितमनास्तथा ॥ ३२ ॥
अपानमूर्ध्वमुत्थाप्य प्रणवेन शनैः शनैः ।
हस्ताभ्यां धारयेत्सम्यक् कर्णादिकरणानि च ॥ ३३ ॥
अङ्गुष्ठाभ्यां मुने श्रोत्रे तर्जनीभ्यां तु चक्षुषी ।
नासापुटावथान्याभ्यां प्रच्छाद्य करणानि वै ॥ ३४ ॥
आनन्दावि[3]र्भवो यावत् तावन्मूर्धनि [4]धारयेत् ।
प्राणः प्रयात्यनेनैव ब्रह्मरन्ध्रं महामुने ॥ ३५ ॥

[1] पिबं—क, अ २.
[2] द्वन्द्वं—अ १.
[3] र्भवं—अ १.
[4] धाराणात्—क, अ १, अ २.

ब्रह्मरन्ध्रं गते वायौ नादश्चोत्पद्यतेऽनघ ।
शङ्खध्वनिनिभश्चादौ मध्ये मेघध्वनिर्यथा ॥ ३६ ॥
शिरोमध्यगते वायौ गिरिप्रस्रवणं यथा ।
पश्चात् प्रीतो महा[1]प्राज्ञ साक्षादात्मोन्मुखो भवेत् ॥ ३७ ॥
पुनस्तज्ज्ञाननिष्पत्तिर्योगात् संसारनिह्नुतिः ।
[2]दक्षिणोत्तरगुल्फेन सीविनीं पीडयेत् स्थिराम् ॥ ३८ ॥
सव्येतरेण गुल्फेन पीडयेद्बुद्धिमान् नरः ।
जान्वोरधः स्थितां सन्धिं स्मृत्वा देवं त्रियम्बकम् ॥ ३९ ॥
विनायकं च संस्मृत्य तथा वागीश्वरीं पुनः ।
[3]लिङ्गनालात् समाकृष्य वायुमप्यग्रतो मुने ॥ ४० ॥
प्रणवेन नियुक्तेन बिन्दुयुक्तेन बुद्धिमान् ।
मूलाधारस्य विप्रेन्द्र मध्ये तं तु निरोधयेत् ॥ ४१ ॥
निरुध्य वायुना दीप्तो वह्निरूहति कुण्डलीम् ।
पुनः सुषुम्नया वायुर्वह्निना सह गच्छति ॥ ४२ ॥
एवमभ्यसतस्तस्य जितो वायुर्भवेद्भृशम् ।

एवं षण्मुखीमुद्राभ्यासतः ब्रह्मरन्ध्रमिति ॥ ३६ ॥ यथा तथा चन्द्रमण्डलगिरितः अमृतप्रवाहो जायते । तेन भ्रूमध्यस्थज्योतिर्लिङ्गमभिषिच्य तदमृतास्वादनतो योगी विमृत्युः भवति । ततः पश्चात् ॥ ३७–३८ ॥ दक्षिणेतरगुल्फाभ्यां सीविनीं मेढ्रगुदान्तरालस्थनाडीं सम्पीडयन् जान्वोरधः-स्थितसन्धिं शिवलिङ्गं स्मृत्वा विनायकं वागीश्वरीं च ध्यात्वा ततो लिङ्गनालादित्यादि ॥ ३९–४२ ॥

[1] प्रज्ञः—अ. [2] दक्षिणेतर—अ, अ २, क. [3] लिङ्गे—क.

वायुजयचिह्नानि

प्रस्वेदः प्रथमः पश्चात् कम्पनं मुनिपुङ्गव ॥ ४३ ॥

उत्थानं च शरीरस्य चिह्नमेतज्जितेऽनिले ।

वायुजयसूचकचिह्नान्याह — प्रस्वेद इति ॥ ४३–४८ ॥

वायुजयेन रोगपापविनाशवैराग्यपूर्विका ज्ञानोत्पत्तिः

एवमभ्यसतस्तस्य मूलरोगो विनश्यति ॥ ४४ ॥

भगन्धरं च नष्टं स्यात् सर्व[1]रोगाश्च सांकृते ।

पातकानि विनश्यन्ति क्षुद्राणि च महान्ति च ॥ ४५ ॥

नष्टे पापे विशुद्धं स्याच्चित्तदर्पणमद्भुतम् ।

पुनर्ब्रह्मादिभोगेभ्यो वैराग्यं जायते हृदि ॥ ४६ ॥

विरक्तस्य तु संसाराज्ज्ञानं कैवल्यसाधनम् ।

तेन पाशापहानिः स्यात् [2]ज्ञात्वा देवं सदाशिवम् ॥ ४७ ॥

ज्ञानामृतरसो येन सकृदास्वादितो भवेत् ।

स सर्वकार्यमुत्सृज्य तत्रैव परिधावति ॥ ४८ ॥

ज्ञानस्वरूपमेवाहुर्जगदेतद्वि[3]चक्षणाः ।

अर्थस्वरूपमज्ञानात् पश्यन्त्यन्ये कुदृष्टयः ॥ ४९ ॥

आत्मस्वरूपविज्ञानादज्ञानस्य परिक्षयः ।

क्षीणेऽज्ञाने महाप्राज्ञ रागादीनां परिक्षयः ॥ ५० ॥

[1] रोगाणि—उ. [2] ज्ञाना—अ १. ज्ञानादेव सदाशिवः—अ. [3] लक्ष—उ.

रागाद्यसंभवे प्राज्ञ पुण्यपापवि[1]मर्शनम् ।
तयोर्नाशे शरीरेण न पुनः संप्रयुज्यते ॥ ५१ ॥

विचक्षणाः ज्ञानिनः ॥ ४९–५० ॥ विमर्शनं विशोधनं विनाशनमित्यर्थः ॥ ५१ ॥

इति षष्ठः खण्डः

---

प्रत्याहारलक्षणम्, तद्भेदाश्च

अथातः संप्रवक्ष्यामि प्रत्याहारं महामुने ।
इन्द्रियाणां विचरतां विषयेषु स्वभावतः ॥ १ ॥
बलादाहरणं तेषां प्रत्याहारः स उच्यते ।
यत्पश्यति तु तत्सर्वं ब्रह्म पश्यन्समाहितः ॥ २ ॥
प्रत्याहारो भवेदेष ब्रह्मविद्भिः पुरोदितः ।
[2]यद्यच्छुद्धमशुद्धं वा करोत्यामरणान्तिकम् ॥ ३ ॥
तत्सर्वं ब्रह्मणे कुर्यात् प्रत्याहारः स उच्यते ।
अथवा नित्यकर्माणि ब्रह्माराधनबुद्धितः ॥ ४ ॥
काम्यानि च तथा कुर्यात् प्रत्याहारः स उच्यते ।
अथवा वायुमाकृष्य स्थानात् स्थानं निरोधयेत् ॥ ५ ॥
दन्तमूलात्तथा कण्ठे कण्ठादुरसि मारुतम् ।
उरोदेशात् समाकृष्य नाभिदेशे निरोधयेत् ॥ ६ ॥

[1] मर्दनम्—अ, अ १, अ २, क. [2] यदिछु—अ २.

नाभिदेशात् समाकृष्य कुण्डल्यां तु निरोधयेत् ।
कुण्डलीदेशतो विद्वान् मूलाधारे निरोधयेत् ॥ ७ ॥

अथापानात् कटिद्वन्द्वे तथोरौ च सुमध्यमे ।
तस्माज्जानुद्वये जङ्घे पादाङ्गुष्ठे निरोधयेत् ॥ ८ ॥

प्रत्याहारोऽयमुक्तस्तु प्रत्याहारपरैः पुरा ।

यमनियमासनप्राणायामेयत्ता प्रतिपाद्य ततः प्रत्याहारस्वरूपमाह—अथेति ॥ १–१२ ॥

प्रत्याहारफलम्

एवमभ्यासयुक्तस्य पुरुषस्य महात्मनः ॥ ९ ॥
सर्वपापानि नश्यन्ति भवरोगश्च सुव्रत ।

वायुधारणात्मकप्रत्याहारः

नासाभ्यां वायुमाकृष्य निश्चलः स्वस्तिकासनः ॥ १० ॥
पूरयेदनिलं विद्वानापादतलमस्तकम् ।

पश्चात् पादद्वये तद्वत् मूलाधारे तथैव च ॥ ११ ॥
नाभिकन्दे च हृन्मध्ये कण्ठमूले च तालुके ।

भ्रुवोर्मध्ये ललाटे च तथा मूर्धनि धारयेत् ॥ १२ ॥

वेदान्तसम्मतप्रत्याहारः

देहे त्वात्ममतिं विद्वान् समाकृष्य समाहितः ।
आत्मनाऽऽत्मनि निर्द्वन्द्वे निर्विकल्पे निरोधयेत् ॥ १३ ॥

प्रत्याहारः समाख्यातः साक्षाद्वेदान्तवेदिभिः ।
एवमभ्यसतस्तस्य न किंचिदपि दुर्लभम् ॥ १४ ॥

किं बहुना—देहे इति ॥ १३–१४ ॥

इति सप्तमः खण्डः

पञ्चभूतेषु धारणा

अथातः संप्रवक्ष्यामि धारणाः पञ्च सुव्रत ।
देहमध्यगते व्योम्नि बाह्याकाशं तु धारयेत् ॥ १ ॥
प्राणे बाह्यानिलं तद्वत् ज्वलने चाग्निमौदरे ।
तोयं तोयांशके भूमिं भूमिभागे महामुने ॥ २ ॥
हयरावलकाराख्यं मन्त्रमुच्चारयेत् क्रमात् ।
धारणैषा परा प्रोक्ता सर्वपापविशोधिनी ॥ ३ ॥
[1]जान्वन्तं पृथिवी ह्यंशो ह्यपां [2]पाय्वन्तमुच्यते ।
[3]हृदयांशस्तथाग्न्यंशो भ्रू[4]मध्यान्तोऽनिलांशकः ॥ ४ ॥
आकाशांशस्तथा प्राज्ञ मूर्धांशः परिकीर्तितः ।
ब्रह्माणं पृथिवीभागे विष्णुं तोयांशके तथा ॥ ५ ॥
अग्न्यंशे च महेशानमीश्वरं चानिलांशके ।
आकाशांशे महाप्राज्ञ धारयेत्तु सदाशिवम् ॥ ६ ॥

प्रत्याहारलक्षणमुक्त्वा धारणालक्षणमाह—अथेति ॥ १–६ ॥

[1] जान्वन्तः—अ.
[2] पाय्वंश—अ २, क. पाय्वन्त उ, अ.
[3] हृदयान्त—अ, अ १.
[4] मध्यांशो—क, अ २.

आत्मनि धारणा

अथ वा तव वक्ष्यामि धारणां मुनिपुङ्गव ।
पुरुषे सर्व[1]शास्तारं बोधानन्दमयं शिवम् ॥ ७ ॥
धारयेद्बुद्धिमान् नित्यं सर्वपापविशुद्धये ।
ब्रह्मादिकार्यरूपाणि स्वेस्वे संहृत्य कारणे ॥ ८ ॥
सर्वकारणमव्यक्तमनिरूप्यमचेतनम् ।
साक्षादात्मनि संपूर्णे धारयेत् प्रणवे मनः ।
इन्द्रियाणि समाहृत्य मनसात्मनि योजयेत् ॥ ९ ॥

पुरुषे प्रतीचि स्वातिरिक्तसर्वग्रासतया शिवं धारयेत् । यद्वा—पुरुषे परमात्मनि सर्वशास्तारं प्रत्यञ्चं धारयेत् ॥ ७–९ ॥

इत्यष्टमः खण्डः

सविशेषब्रह्मध्यानम्

अथातः संप्रवक्ष्यामि ध्यानं संसारनाशनम् ।
ऋतं सत्यं परं ब्रह्म सर्वसंसारभेषजम् ॥ १ ॥
ऊर्ध्व[2]रेतं विरूपाक्षं विश्वरूपं महेश्वरम् ।
सोऽहमित्यादरेणैव ध्यायेद्योगीश्वरेश्वरम् ॥ २ ॥

धारणामुक्त्वा सविशेषनिर्विशेषब्रह्मध्यानमाह—अथेति । ऋतं कर्मफलमपरं ब्रह्म । सत्यं ज्ञानफलं परं ब्रह्म ॥ १–२ ॥

[1] शास्ता—उ १. [2] रूपं—अ, अ१.

निर्विशेषब्रह्मध्यानम्

अथ वा सत्यमीशानं ज्ञानमानन्दमद्वयम् ।
अत्यर्थ[1]ममलं नित्यमादिमध्यान्तवर्जितम् ॥ ३ ॥
तथाऽस्थूलमनाकाशमसंस्पृश्यमचाक्षुषम् ।
न रसं न च गन्धाख्यमप्रमेयमनूपमम् ॥ ४ ॥
आत्मानं सच्चिदानन्दमनन्तं ब्रह्म सुव्रत ।
अहमस्मीत्यभिध्याये[2]देहातीतं विमुक्तये ॥ ५ ॥

अर्थजातमतीत्य ज्ञप्तिमात्रतया वर्तते इति अत्यर्थम ॥ ३ ॥ अनाकाशमित्यादिपञ्चविशेषणतः पञ्चभूतवैलक्षण्यमुक्तं भवति ॥ ४–६ ॥

ध्यानफलम्

एवमभ्यासयुक्तस्य पुरुषस्य महात्मनः ।
क्रमाद्वेदान्तविज्ञानं [3]विजायेत न संशयः ॥ ६ ॥

इति नवमः खण्डः

समाधिस्वरूपम्

अथातः संप्रवक्ष्यामि समाधिं भवनाशनम् ।
समाधिः संविदुत्पत्तिः परजीवैकतां प्रति ॥ १ ॥
नित्यः सर्वगतो ह्यात्मा कूटस्थो दोषवर्जितः ।
[4]एकः सन् भिद्यते भ्रान्त्या मायया न स्वरूपतः ॥ २ ॥

[1] मचलं—अ, अ १, अ २, क.
[2] द्ध्येया—मु.
[3] विज्ञायेत—अ २.
[4] एकस्मिन्—उ.

तस्मादद्वैतमेवास्ति न प्रपञ्चो न संसृतिः ।
यथाऽऽकाशो घटाकाशो [1]मठाकाश इतीरितः ॥ ३ ॥
तथा भ्रान्तैर्द्विधा प्रोक्तो ह्यात्मा जीवेश्वरात्मना ।
नाहं देहो न च प्राणो नेन्द्रियाणि मनो न हि ॥ ४ ॥
सदा साक्षिस्वरूपत्वाच्छिव [2]एवास्मि केवलः ।
इति धीर्या मुनिश्रेष्ठ सा समाधिरिहोच्यते ॥ ५ ॥

ध्यानप्रकारमुक्त्वा समाधिप्रकारमाह— अथेति ॥ १–२ ॥ यस्मादेवं तस्मात् । यथाऽऽकाश एव घटाकाशः ॥ ३–६ ॥

ब्रह्ममात्रावशेषः

सोऽहं ब्रह्म न संसारी न मत्तोऽन्यः कदाचन ।
यथा फेनतरङ्गादि समुद्रादुत्थितं पुनः ॥ ६ ॥
समुद्रे लीयते तद्वत् जगन्मय्यनुलीयते ।
तस्मान्मनः पृथङ् नास्ति जगन्माया च नास्ति हि ॥ ७ ॥
यस्यैवं परमात्माऽयं प्रत्यग्भूतः प्रकाशितः ।
स तु याति [3]च पुंभावं स्वयं साक्षात् परामृतम् ॥ ८ ॥
यदा मनसि चैतन्यं भाति सर्वत्रगं सदा ।
योगिनोऽव्यवधानेन तदा संपद्यते स्वयम् ॥ ९ ॥
यदा सर्वाणि भूतानि स्वात्मन्येव हि पश्यति ।
सर्वभूतेषु चात्मानं ब्रह्म संपद्यते तदा ॥ १० ॥

[1] महाकाश—अ, अ १. [2] एवास्ति—अ २.
[3] सपुं—क, अ १, अ २, उ १. स्वपुं—अ.

यदा सर्वाणि भूतानि समाधिस्थो न पश्यति ।
एकीभूतः परेणासौ तदा भवति केवलः ॥ ११ ॥
यदा पश्यति चात्मानं केवलं परमार्थतः ।
मायामात्रं जगत् कृत्स्नं तदा भवति निर्वृतिः ॥ १२ ॥

यस्मादेवं तस्मात् मनः मत्तः पृथक् नास्ति ॥ ७ ॥ प्रत्यक्परचितोरेकत्वात् स्वयं इत्यादि । स्वातिरिक्तप्रपञ्चे मायामात्रपदं गते स्वयमेव निष्प्रतियोगिकब्रह्ममात्रमवशिष्यते इति दर्शनोपनिषत्फलितोऽर्थः ॥ ८–१२ ॥

उपसंहारः

एवमुक्त्वा स भगवान् दत्तात्रेयो महामुनिः ।
[1]सांकृतिः स्वस्वरूपेण सुख[2]मास्तेऽतिनिर्भयः ॥ १३ ॥
इति ॥

आख्यायिकामुपसंहरति—एवमिति । इतिशब्दो दर्शनोपनिषत्परिसमाप्त्यर्थः ॥ १३ ॥

इति दशमः खण्डः

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना ।
दर्शनोपनिषद्व्याख्या लिखिता ब्रह्ममात्रगा ॥
दर्शनोपनिषद्व्याख्याग्रन्थस्तु द्विशतं स्मृतः ॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे नवतिसंख्यापूरकं
दर्शनोपनिषद्विवरणं सम्पूर्णम्

[1] सांकृतेः—अ. [2] मास्थे—क, अ १.

XXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXX
X
X title: ha.msasaara
X
X copied from manuscript c 4244 of banares hindu university
X
X
X
X data entered by the staff of muktabodha
X under the supervision of mark s.g. dyczkowski
X
X revision 0: april 7, 2012
X
XXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXX

ॐ नमः शिवाय स शिवाय शिवदाय नमो नमः ।

ॐ नमः परमात्मने ।

ॐ नमो विघ्नहर्त्रे ।

अथ हंससारं लिख्यते ॥

श्रुतं देव मया पूर्वममलं हंसयामलम्।
पुनर्हि श्रोतुमिच्छामि सारात्सारतरं परम्॥ १॥

यत्पुरा कथितं देव सूचितं न प्रकाशितम्।
वदमे वस्तु सद्भावं प्रसादं कुरु शूल भृत्॥ २॥

साधु साधु महाप्राज्ञे सर्वसत्वार्थबोधिनि।
तदर्थं संप्रवक्ष्यामि तवस्नेहान्महेश्वरि॥ ३॥

दुर्लभं सर्वदेवानां योगिनीनां तथैव च।
यो सौ शान्तो ह्यजो देवः शक्त्याधारो ह्यविग्रहः॥ ४॥

जीवभूतः सदा तिष्टेद्वामदक्षिणमध्यगः।
p. 68b) च चैष परमोहंसः स वै देवः सनातनः॥ ५॥

स ब्रह्मा स च वै रुद्र ईश्वरो विष्णुरेव च।
सदाशिवः परंधाम तारकं ब्रह्म एव च॥ ६॥

वाराणस्यां तु देवेशि स्वकं मार्गं प्रकाशितम्।

अज्ञानं चैव तत्क्षेत्रं ज्ञानिनामव्रतः स्थितम् ॥ ७ ॥

लक्षणं तस्य वक्ष्यामि येन ज्ञास्यन्ति साधकाः ।
गुर्ववस्था गमः सो हि दृश्यते न तु लक्ष्यते ॥ ८ ॥

स परः सर्वतो ह्यात्मा चञ्चलत्वे व्यवस्थितः ।
स बाह्याभ्यन्तरस्थो हि स्पन्दते सर्वदेहिनाम् ॥ ९ ॥

नित्योदितश्च निष्टश्च अनादिर्निधनेश्वरः ।
अव्यक्तो व्यक्तरूपश्च अग्राह्यश्च चलाचलः ॥ १० ॥

भावग्राह्यस्सचिन्मात्रचैतन्यासुस्थितः स्थितः ।
तेजोरूपी हि भगवान्हृद्व्योम्नेवस्थितः परः ॥ ११ ॥

p. 69a) बाह्यव्योम्नि स्थितो धूम्रो धूम्राग्रे प्रकृतिर्वपुः ।
शुद्ध स्फटिकसङ्काशं भिन्नं व्योम्नि तु व्योमवत् ॥ १२ ॥

मुक्तेर्लता तदाकारं चित्रावलितताद्दशम् ।
भ्रमरेण प्रतीकाशं हकारमशिराहतम् ॥ १३ ॥

कुलनाथं परं शान्तं कुलसन्तति दृश्यते ।
सिद्धोति नूनं तत् तस्मिश्चिव पुष्पाणि पश्यति ॥ १४ ॥

एकोनेक विभेदेन कोटिभेदेन दृश्यते ।
नानाकार विभागेन दृश्यते परमेश्वरः ॥ १५ ॥

हविता पिङ्गलो दीप्तो निशि वेश्मनि दृश्यते ।
सद्योमज्योतिरूपोसौ नदते स मुहुर्मुहुः ॥ १६ ॥

स बाह्याभ्यन्तरं लक्ष्यं यो ददाति दिने दिने ।
अघंशमय ते देवि न क्वचिद्योनि सम्भवः ॥ १७ ॥

p. 69b) जन्मान्तर सहस्राणि शिवभक्ति परायणः ।
तस्य चापश्चिमंजन्म हंसो दृश्यो वरानने ॥ १८ ॥

भिद्यते हृदयग्रन्थि च्छिद्यन्ते सर्वसंशयः ।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परापरे ॥ १९ ॥

हंसज्ञानप्रदाता वै दुर्लभो * विदैशिकः ।
पृथिव्यां नास्ति तद् द्रव्यं यद् दत्वा चारिणी * ? वेत् ॥ २० ॥

अथातः संप्रवक्ष्यामि कालज्ञानं च?णाम्बिके ।
कालचिह्नपरिज्ञानं नाधोगतिषु योगिनाम् ॥ २१ ॥

भु?जङ्ग कुटिलाकारमग्रतः सर्वतन्तुषु ।
तं दृष्ट्वापि चिरं देवि पुनर्जन्म न विद्यते ॥ २२ ॥

लिङ्गाकारे ऋ?वेन्मोक्षं घनेन बन्धनं भवेत् ।
रक्तो यदा तनुर्विद्यात्पीते चार्थस्य सम्भवः ॥ २३ ॥

p. 70a) व्यालैर्विशेषगमनं बिन्दुनादप्रसादनम् ।
सुभिक्षं च प्रचारे च दुर्भिक्षं चञ्चु बन्धने ॥ २४ ॥

मध्यच्छेदे त्रिभिर्मासैर्म्रियते नात्रसंशयः ।
त्रिदिवैर्दिवसे युक्ते म्रियते च ततो ध्रुवम् ॥ २५ ॥

पूर्वाह्णे पूर्वसंस्थं तु यथा दृष्ट्वा वरानने ।

अञ्जलिं वारिपूर्णायां भावयेत विचक्षणः ॥ २६ ॥

सामस्थो दक्षिणं गत्वा षण्मासान्मृत्युमादिशेत् ।
सोमसूर्यविभागेन अहोरात्रं निरीक्षयेत् ॥ २७ ॥

द्वौ मासौ सोमसूर्याभ्यां मासं सोमस्य दक्षिणे ।
पूर्वे दक्षिणमावस्यां प्रविशेद्रविमण्डले ॥ २८ ॥

सोमावस्यां दशाहेतु पञ्चाहं सूर्यगोत्तरे ।
एकः कालस्य पर्यायं कथितं तव सुन्दरि ॥ २९ ॥

p. 70b) कालस्य वञ्चनं देव कथं जानाति तत्त्वतः ।
एतद्धि संशयं ब्रूहि अत्रकौतूहलं मम ॥ ३० ॥

शृणु देवि परं गुह्यं रहस्यं भुवि दुर्लभम् ।
यन्न कस्य चिदाख्यातं तत् ते वक्ष्यामि सुव्रते ॥ ३१ ॥

चन्द्रमण्डलमध्ये तु ठकारं चिन्तयेत् प्रिये ।
ठ मध्यमे गतोहंसश्चिन्तनीयः प्रयत्नतः ॥ ३२ ॥

ब्रह्मरन्ध्रात्स्रवन्ती च परमामृतरूपिणी ।
अव्यया सर्वगा सूक्ष्मा परा चास्य पराकला ॥ ३३ ॥

हंसोदर गता सा तु स्रवन्ती चिन्तयेत् प्रिये ।
कालो न कलयेच्चात्र न जराव्याधिरेव च ॥ ३४ ॥

p. 71a) कालस्य वञ्चनं देवि गोप्तव्यं वीरवन्दिते ।
गुप्तोसान्निध्यमिच्छन्ति मातरः साधकेश्वरि ॥ ३५ ॥

तस्मात् सर्वप्रयत्नेन न देयं यस्य कस्यचित् ।
दातव्यं भक्ति युक्तानां गुरुभक्तिरतात्मनाम् ॥ ३६ ॥

गुरुश्शिव गतोज्ञेयः शिवोगुरुमुखोद्गतः ।
यो गुरुः स शिवः साक्षात् पूजनीयः प्रयत्नतः ॥ ३७ ॥

शुचिर्दक्षो विनीतश्च शक्तिश्चाप्यस्य तत् प्लुता ।
तस्य ज्ञानं च मोक्षं च सिद्ध्यते परमार्थतः ॥ ३८ ॥

तस्मिन् स्थाने यदा लीनं चित्तं विगतवृत्तिकम्।
वलीपलितनिर्मुक्तः षण्मासेन भविष्यति॥ ३९॥

न कालं कलयेच्चात्र न च साव्याधिरेव च।
हंससारं परं ब्रह्म परं व्योम परः शिवः॥ ४०॥

त्वच्छ्रेयोर्थमिदं ख्यातं हंससारसमुच्चयम्।
p. 71b) अनास्तिकानां नादेयं शठानां क्रुरचेतसाम्॥

दाम्भिकानामभक्तानां तन्त्राचाररतात्मनाम्।
यतस्ते पशवः कीटा महामार्गबहिष्कृताः॥ ३२॥

शङ्काविकल्पनिर्दग्धा महामोहान्ध्यपीडिताः।
अनाश्वस्ता असन्तुष्टाः पशुशास्त्रेषु भाविताः॥ ३३॥

न ते लभन्ते परमं महोर्मिनिकराकुलम्।
ओघसर्वस्वमतुलं गुरुवक्त्रे समागतम्॥ ३४॥

तस्मात् सर्वप्रयत्नेन दातव्यं वीरवन्दिते।

गुरुभक्ताय शान्ताय नित्याभ्यासरताय च ॥ ३५ ॥

वीराचारनिषण्णाय द्रव्याद्वैतपराय च ।
समया सेविने नित्यं कुलकालोदिते शिवे ॥ ३६ ॥

p. 72a) अदाम्भिकाय गुप्ताय गुप्ताचाररताय च ।
यतः स्वरस्मिरूपस्थाः पीठेभ्यः पीठविग्रहः ॥ ३७ ॥

नित्यं भ्रान्ति विहीनानां परोक्षाकारितांश्रिताः ।
रक्षन्तिताः कृपाविष्टाः समयाचारपालकाः ॥ ३८ ॥

सर्वभावैः प्रयत्नेन प्राणमध्ये च मातरः ।
विकासयन्ति परमं तेजो यद्वान्तसम्भृतम् ॥ ३९ ॥

ते नोदितो नोदयन्ति मेलापादि समृद्धयः ।
प्रत्यक्षरूपो वीराणां स बाह्याभ्यन्तरं स्थिताः ॥ ४० ॥

संविद्या हृदयादीनां योगिनां कौलशासने ।
रहस्यं ज्ञेयगमनं भूमिरत्रमगाह्यगा ॥ ४१ ॥

जीवन्मुक्तिरहस्यं च वीरेशानां सुखागमम् ।
कथितं सारसर्वस्वमुमयासहरं परम् ॥ ४२ ॥

p. 72b) उपेय गह्वरं प्रायः सतशोथ सहस्त्रशः ।
तस्मात् सर्वप्रयत्नेन न देयं यस्य कस्यचित् ॥ ४३ ॥

एकशिष्यमिदं ज्ञानमप्रख्याप्यमहात्मभिः ।
सर्वशास्त्रबहिर्भूतं हृदयं योगिनी कुले ॥ ४४ ॥

प्रपञ्चसारसिंहराजप्रकाशाभिधानेन सुभगानन्दनाथेन

विरचितायां मनोरमाख्यायां व्याख्यायां

षोडशनित्याव्याप्तिवैभवप्रकाशक मन्त्रस्य व्याप्तिप्रकाशनपरं

षड्विंशपटलं परिपूर्णं परामृष्टम् ॥ २६ ॥ ॐ तत्सत् ॥

यन्त्रसंख्या  २२७७७३८५९८३६७२३२००००००।

ज्ञानेन निम्ना श्रीगौरीसिताङ्गा दुग्धशब्दगा।

स्वात्मसुरश्रीरित्येकविंशार्णयन्त्रसंख्यकाः ॥

ग्रन्थसंख्या - षड्विंशे पटले प्रोक्ता व्याख्याग्रन्थाश्चतुःशतात्।

परमष्टयुतं त्रिंशदधिकं संख्यया स्फुटम् ॥

## सप्तविंशपटलम्।

अथ षोडशनित्यानां कालेन प्राणतोच्यते।

मातृकाभूतनाथाद्यैः श्रीचक्रेण च शक्तिभिः ॥ १ ॥

लवादीनान्तु कालस्य दुर्लक्ष्यत्वात्तदीरितम्।

एकश्वासं समारभ्य तत्संख्याभिः क्रमेण वै ॥ २ ॥

अहोरात्रस्य तद्व्याप्तिमुक्त्वा तेनान्यदूहयेत्।

विशेषांश्चान्तराद्वाह्यात्तत्तत्सिद्ध्युपपादकान्॥ ३॥

पूर्वस्मिन् षड्विंशे पटले षोडशनित्यानां व्याप्तिवैभवप्रकाशनपरं मन्त्रव्याप्तिं तन्मयामृतेश्वरीविद्यादिकञ्चोपदिश्यानन्तरं षोडशनित्यानां मातृकाभूतनाथाद्यैः श्रीचक्रेण शक्तिभिश्च कालेन प्राणात्मतादिकमुपदिशत्यथषोडशेत्यादिभिर्भवेदित्यन्तेन श्लोकशतरूपेण सप्तविंशेन पटलेन। तत्र अथ षोडशेत्यादिभि रुपपादकानित्यन्तैस्त्रिभिः श्लोकैः पटलार्थमुपदिशति। तत्र कालेन प्राणता प्राणात्मककालत्रयेण तदात्मता। मातृकाभूतनाथाद्यैः। आदिक्षान्तैर्विसर्जनीयरहितैः पञ्चाशद्भिर्मातृकाक्षरैः पञ्चभिर्भूतैः नवभिर्नाथैः आद्यशब्देन षट्त्रिंशत्तत्वादिभिश्च। श्रीचक्रेण नवचक्रात्मकेन शक्तिभिः तत्रस्थषणवतिभिरेकनवतिभिश्च । लवादीनान्तु कालस्य लवादित्रुटयन्तानां मात्रायादुर्लक्ष्यत्वात् ज्ञातुमशक्यत्वात्तदीरितं स्वरूपमिति शेषः। तत्संख्याभिः श्वाससंख्याभिः घटिकाहोरात्रादिरूपसंजाताभिः। क्रमेण वक्ष्यमाणक्रमेण अहोरात्रस्येत्यस्य तत्संख्याभिरिति पूर्वत्रान्वयः। तद्व्याप्तिं श्वासात्मकत्वं उक्त्वा तेनान्यदूहयेदिति। भिन्न कर्त्तृत्वं

स्वातन्त्र्यात्। अन्यन्मासवर्षादिकालरूपं विशेषात् गतिवृती श्वासानामिति शेषः। आन्तरात् भूतोदयाद्यात्मकात् वाह्यात् दक्षवामपार्श्वाद्युद्देशात् तत्तत्सिद्द्युपपादकान् शुभाशुभसिद्धिकरान्। एतदुक्तं भवति षोडशनित्यानां तदात्मकानां मातृकादीनां स्वरूपेण श्वासात्मकेन कालरूपेण सवाह्याभ्यन्तरव्याप्तिद्वयं

p. 514) मूलाधारोद्भवो वायुः प्राणाद्याख्यां समश्नुते।
स तु पञ्चविधो भूतभेदादुद्भवदेशतः॥ ४॥

नासायाः पुटयोः पार्श्वतुङ्गमध्याधरन्ध्रगाः।
प्राणाग्नीलाम्बुखात्मानः पवनाः स्युर्यथाक्रमन्॥ ५॥

गुरुकेतू भृगुकुजौ वुधार्कौ चन्द्रसुर्य्यजौ।
क्रमाच्चतुर्षु भूतेषु व्योम सर्व्वात्मकं भवेत्॥ ६॥

उभयस्थो भवेद्राहुश्चन्द्रसूर्य्यौ पुटक्रमात्।
वामदक्षौ तयोस्तस्य प्रवेशो निर्गमस्तथा॥ ७॥

जीवश्चन्द्रो रविः शून्यो भागः स्त्रीपुरुषौ तथा।

पृथिवी सलिलं चन्द्रो रविरन्यत्त्रयं भवेत् ॥ ८ ॥

तेषां श्वासानां शुभाशुभफलप्रदानाद्वक्ष्यमाणात्

वाह्याभ्यन्तरान् विशेषान् वच्मीत्युक्तं भवतीति ॥ ३ ॥

मूलाधारेत्यादिना यथाक्रममित्यन्तेन श्लोकद्वयेन

श्वासानामुदयं तद्वृत्तिभेदात्तत्तत्संज्ञाप्राप्तिं तस्य

भूतात्मकत्वेनोदयविशेषक्रमञ्चोपदिशति । तत्र मूलाधावोद्भवः

नित्यानित्यापटलोक्तरूपमूलाधारप्रदेशसमुद्भवः ।

प्राणाद्याख्यां आदिशब्दस्त्वपानव्यानादीतरभेदविषयः । स

प्रोक्तरूपो वायुरुद्भवदेशतः

उपलब्धिस्थानेष्यनन्तरवक्ष्यमाणनासापुठद्वयगतेषु । पुटयोः

रन्ध्रयोः । पार्श्वतुङ्गमध्याधोरन्ध्रगाः

तिर्य्यगूर्द्ध्वदण्डाधरमध्यगतप्रवाहाः । विसर्गलोपः स्वातन्त्र्यात् ॥

५ ॥

गुर्वित्यादिभिरीरितावित्यन्तैः सप्तभिः श्लोकैः

श्वासानामुदयविशेषैः इष्टस्थान

पञ्चकालविशेषैश्चैकादशविधचन्द्रसूर्यात्मकत्वं

राह्वात्मकत्वसहितमुषदिशति । तत्र गुरुकेत्वित्यादिना श्लोकेनैतदुक्तं

भवति । उभयोरपि नासापुटयोः प्राणाग्नीलाम्बुरूपेषु चतुर्षु

भूतोदयेषु वामदक्षिणपुटक्रमेण प्रवाहे

प्रोक्तक्रमग्रहद्वन्द्वात्मकत्वं व्योमोदये

राहुविधुग्रहाष्टकात्मकत्वं च भवतीति । उभयस्थः उभयपुटस्थः

श्वासानामेवमेवं प्रकारप्रवाहकारणं गुरुमुखादवगन्तव्यम् ।

वामदक्षावित्यस्य पुटाविति पूर्वत्रान्वयः । तयोः पुटयोरेकैकस्मिन्नपि

। तथा चन्द्रसूर्यौ जीव

p. 515) गृहेषु चन्द्रो गुर्व्विन्दुगुरुज्ञा भास्करः परे ।

मातृकाश्च तथा विद्या स्वरव्यञ्जनभेदतः ॥ ९ ॥

अधः पृष्ठञ्च चन्द्रः स्यादूद्र्ध्वाग्रे दिनकृद्भवेत् ।

शरीरेऽपि घटेरूर्द्ध्वं चन्द्राधो रविरीरितः ॥ १० ॥

अस्तीति वाक्यं चन्द्रः स्यान्नास्तीत्युक्तो रविः स्मृतः ।

शुक्लकृष्णौ तथा प्रक्षाविति चन्द्रा दशान्तराः ॥ ११ ॥

एवं सूर्य्या दश प्रोक्ता वाह्याभ्याञ्च यशस्विनि ।

एकादशविधौ चन्द्रभास्करौ सम्यगीरितौ ॥ १२ ॥

तयोश्चन्द्राः प्रीतिकरा भास्कराः क्लेशकारिणः ।

राहुः शून्यश्च सर्व्वत्र नाशाय भवति क्षणात् ॥ १३ ॥

सूर्य्येषु शस्तः सर्व्वत्र मृधभोजनमैथुनैः।

संग्रहश्चान्यदखिलं चन्द्रे सिध्यत्ययत्नतः॥ १४॥

भाग इत्युत्तरत्रान्वयः। तथा चन्द्रसूर्य्यावित्यर्थः। अन्यत्त्रयं

अग्नीरव्योमात्मकं परे कुजसौरिकेत्वर्काः। तथा चन्द्रसूर्य्यौ

ऊद्‌ध्वाग्रे प्रथमाद्विवचनमेतत्। तथा चन्द्रसूर्यौ आन्तराः

पक्षात्मकत्वविधुराः। एवमुक्तप्रकारेण। दशेत्यस्य आन्तरा इति

पूर्व्वत्रान्वयः। वाह्याभ्यां शुक्लकृष्णरूपाभ्यां

चन्द्रसूर्य्याभ्यां। चकारः समाहारे॥ १२॥

तयोरित्यादिना श्लोकेन प्रोक्तचन्द्रसूर्य्यराहुशून्यानां

सामान्यं फलमुपदिशति। तत्र भास्कराः शून्यरूपविधुराः॥ १३॥

सूर्य्येष्वित्यादिभिः परमेश्वरीत्यन्तैश्चतुर्भिः श्लोकैः

चन्द्रसूर्य्यराहुशून्येषु कर्त्तव्यानि कर्म्माणि प्रश्नप्रकारविशेषे

फलविशेषादिकञ्चोपदिशति। तत्र सूर्य्येषु एकादशविधेषु।

मृधभोजनमैथुनैः युद्धभोजनमैथुनैः सहेति शेषः। संग्रह

इत्यस्य शस्त इति पूर्व्वत्रान्वयः। अन्यदखिलं

शिष्टमङ्गलरूपकर्म्मजातं। चन्द्रे एकादशविधे।

तथ्यं इष्टं वानिष्टं वा निश्चित्य भवतीत्युक्तं अस्तीति निश्चित्य नास्तीति

निश्चित्य

p. 516) जीवे तु कथितं तथ्यं मेध्यदर्शश्च सिध्यति ।
निश्चित्य भवतीत्युक्तमन्यथा चेत्तदन्यथा ॥ १५ ॥

अनिश्चिते विधौ कन्या गर्भप्रश्नेऽन्यतः पुमान् ।
शून्ये गर्भविपत्तिः स्यादित्याद्यूह्य वदेद्दृढम् ॥ १६ ॥

शून्ये नभसि राहौ च शुभान्येवाशुभान्यपि ।
शुबानि तत्र सर्व्वाणि नश्यन्ति परमेश्वरि ॥ १७ ॥

वामे वहति वायौ तु वदेद्देशिकशिष्ययोः ।
तत्स्थाने स्थापयित्वा तं तत्कर्णे कथयेन्मनुम् ॥ १८ ॥

अथवा जीवगस्थाने तत्कर्णे मन्त्रमादिशेत् ।
अन्यथा शून्यराहोस्तु नाशाय गुरुशिष्ययोः ॥ १९ ॥

चोक्तं कार्य्यं भवतीति यावत् । अन्यथा चेत्तदन्यथा शून्ये कथितं चेच्छुन्यं भवति । अनिश्चये निश्चयरहिते गर्भप्रश्न इत्यस्य विशेषणं गर्भप्रश्न इति पदच्छेदः । अन्यतः सूर्ये शून्यव्यतिरिक्ते शून्ये शून्यरूपसूर्ये इत्यादीत्यत्रादिशब्दः निश्चितकार्य्यप्रश्न विषयः ।

एतदुक्तं भवति अनिश्चिते कार्य्यप्रश्ने चन्द्रश्चेद्यद्यदभिमतं

तद्भवति । सूर्यश्चेद्यदनभिमतं तच्च भवतीति । तत्र

शून्यनभोराहुषु नश्यन्ति अशुभानि भवन्तीत्यर्थः ॥ १७ ॥

वामे इत्यादिना शिष्ययोरित्यन्तेन श्लोकद्वयेन गुरुणा शिष्यस्य

मन्त्रोपदेशकालविशेषं तदकरणे प्रत्यवायञ्चोपदिशति । तत्र

देशिकशिष्ययोरित्यस्य वामे इति पूर्वत्रान्वयः । तत्स्थाने वामभागे ।

तं शिष्यं तत्कर्णे वामकर्णे । अथवा पक्षान्तरे जीवगस्थाने

वामदक्षिणभेदतः । तत्कर्णेजीवकर्णे । अन्यथा उक्त

प्रकारद्वयवैपरीत्येन । एतद्वामभागजीवस्थापनं

नित्याविद्याविधुरसमस्तमन्त्रोपदेशे नित्यानान्तु

सवाराहीकुरुकुल्लानां तत्तत्पूजाचक्रे स्वपुरस्थापनमस्माभिः

पूर्वोक्तमेव । अत्र स्वासानां

भूतादिस्वरूपोदयावगमनोपायान्तरमाराध्यमुखादवगन्तव्यम् ॥

१९ ॥

p. 517) षष्ट्या युतैस्तु त्रिशतैर्निश्वासैर्नाडिका मता ।

तासां षष्ट्या दिनं पूर्णं तद्दिनं स्यात् पुनः पुनः ॥ २० ॥

एकस्मिंस्तु दिने श्वासाः सहस्राण्येकविंशतिः ।

षट्शतञ्च ततस्तेषां स्वरूपं शृणु सुन्दरि ॥ २१ ॥

आरभ्यार्कोदयं प्रातः सप्तत्या द्विशतं क्रमात्।

प्राणाग्नीलाम्बुखानि स्युर्नवत्यान्यत्र संक्रमः॥ २२॥

तत्राप्येवमतोन्यत्राप्येवञ्च दशमक्रमात्।

दिनमेवं ब्रजेदादौ दर्शप्रतिपदं प्रति॥ २३॥

षष्ट्येत्यादिना सुन्दरीत्यन्तेन श्लोकद्वयेन घटिकादिनरूपेण

स्वासानां संख्याविशेषैः कालात्मकत्वोपदेशं

तत्श्वासरूपप्रस्तावञ्च करोति। तत्र तासां नाडिकानां। तद्दिनं

नाडिकाषष्ट्यात्मकं। पुनः पुनः परिवृत्तितः। तेषां श्वासानां।

सुन्दरीति देवीसम्बुद्धिः॥ २१॥

आरभ्येत्यादिभिर्भवन्ति हीत्यन्तैस्त्रिभिः श्लोकैः श्वासानां

पुटयोः पूर्वपक्षप्रतिपदादिभूतेषूदयकालं

पुटान्तरसंक्रमणकालक्रमं प्रोक्तनिगमनविपर्य्यासे

फलञ्चोपदिशति। तत्र सप्तत्या द्विशतं प्रतिभूतं श्वासा इति। नवत्या

श्वासैरन्यत्र पुटान्तरे संक्रमः पुटात् पुटसंक्रान्तकालः

तदुभयपुटप्रवाहितया स राहुर्भवतीति यावत्। तत्रापि

संक्रान्तपुटान्तरेपि। एवं प्रोक्तकालावधि। अतोन्यत्र

संक्रान्तपुटान्तरसंक्रम इति पूर्वोक्तकालावधि। एवं

प्रोक्तप्रकारपरिवृत्त्या पञ्चदशपरिवृत्तयः। आदौ युगानामिति शेषः।
दर्शप्रतिपदं प्रति प्रतिदर्शं प्रतिप्रतिपदमित्यन्वयः
प्रतिशुक्लप्रतिपदमित्यर्थः। सर्वेषां जीवानां एतदुक्तं भवति
युगादिषु शुक्लप्रतिपदि सूर्योदयमारभ्य एकस्मिन् पुटे
पञ्चाशदधिकत्रयोदशशत ॥ १३५० ॥ श्वासैः पञ्चानां
भूतानामुदयः। ततो नवत्या श्वासैः नाड्यन्तरे संक्रमः। एवञ्च
चत्वारिंशदधिकचतुर्द्दशशत ॥ १४४० ॥ श्वासै रेकावृत्तिः। एवं
पञ्चदशावृत्तिषु षट्शताधिकान्येकविंशतिसहस्राणि श्वासा
भवन्तीति पर्य्यवसितोऽर्थः। युगादिषु शुक्लप्रतिपदि प्रातरर्कोदयं
प्रारभ्य पुटयोर्वामदक्षिणक्रमेण

p. 518) एवं क्रमेण सर्व्वेषां प्राणोदय उदीरितः।
एतत्क्रमविपर्य्यासादभव्यानि भवन्ति हि ॥ २४ ॥

वलाधिकाश्चरा वामे वलिनो दक्षिणे स्यिराः।
उभयत्रोभयात्मानः शुभाशुभपरीक्षणे ॥ २५ ॥

सार्द्धद्वाविंशतिश्वासक्रमाद्द्वादशराशयः।
तत्र सार्द्धचतुष्केण भूतानि स्युरिति क्रमात् ॥ २६ ॥

घटिकार्णेषु सर्वत्र वाय्वाद्येकान्तरोदये।

तत्तदर्णभवाः श्वासाः षष्ट्या त्रिशतमीरितम्॥ २७॥

पञ्चभूतेषु प्रतिभूतं प्रोक्तकालावधि श्वासानां

प्रवाहसंक्रमौ। प्रवाहसंक्रमावेवं पञ्चदशपरिवृत्तितो

दिनमेकं भवति। अनन्तरदिने दक्षिणपुटमारभ्यैवं क्रमाद्भवति।

एवं क्रमेण दर्शान्तं प्रतिदिनं पुटव्यत्यासारम्भक्रमेण

सर्वेषां प्राणोदयो भवत्येतत् क्रमविपर्यासे तु महान्त्यमङ्गलानि च

भवन्तीति॥ २४॥

वलाधिका इत्यादिना श्लोकेन श्वासानां

वामदक्षिणोभयप्रवाहकाले चरादीनां वस्तूनां

वलाधिक्यमुपदिशति। तत्र वामे वायौ प्रवहति दक्षिणे इत्यत्र प्राग्वत्।

उभयत्रेति च प्राग्वत् शुभाशुभपरीक्षणे। चरस्थिरोभयात्मकानां

कर्म्मणामिति शेषः॥ २५॥

सार्द्धेत्यादिना श्लोकेन भूतानां राशीनाञ्च

श्वासक्रमादन्योन्यंव्याप्त्याकारत्वमुपदिशति। तत्र

सार्द्धद्वाविंशतिश्वासक्रमाद्द्वादशराशयः

प्रतिराश्युक्तसंख्य (२२) श्वासक्रमात् सम्भूय राशिद्वादशकं

(२७०) प्रागुक्तसंख्यश्वासात्मकं एकैकं भूतं भवतीत्यर्थः।

तत्र राशिषु एकस्मिन्नेकस्मिन्निति शेषः। सार्द्धचतुष्केण श्वासानामिति

शेषः। एतदुक्तं भवति प्रत्येकं प्रोक्तसंख्यश्वासात्मकेषु द्वादशसु राशिष्वेकस्मिन्नेकस्मिन् राशौ प्रतिभूतं प्रोक्तसंख्यश्वासात्मकानि च भूत्वा भूतानि समुद्यन्तीति॥ २६॥
घटिकेत्यादिना अक्षरैरित्यन्तेन श्लोकद्वयेन प्रतिदिनमुदयघटिकाक्षराणि तद्घटिकाक्षराणां श्वासात्मकत्वं तेषु श्वासेषु भूताक्षरोदयक्रमञ्चोपदिशति। तत्र

p. 519) तेषु तद्भूतवर्णानां दशानामादितो दश।
सप्तावृत्त्या ततः शेषाः प्राणाग्नीलाम्बुखाक्षरैः॥ २८॥

संख्याभिर्व्वासनाव्याप्तिं श्वासानां शृणु सुन्दरि।
यया विहितया मन्त्री सदा दर्शनवान् भवेत्॥ २९॥

सर्वत्र सर्वेषु दिनेषु वाय्वादि एकान्तरा उदये इति पदच्छेदः। एतदुक्तं भवति सर्वेषु युगदिनेषु घटिकार्णेषु विषये एकैकान्तरितं। अत एव य इति वायव्याक्षरपञ्चकं दिवसपञ्चकक्रमादुदयघटिकाक्षरत्वं प्रतिपद्यत इति। तत्तदर्णभवाःतत्तदघटिकार्णात्मकाः। एतदुक्तं भवति पूर्वोक्तप्रकारा घटिकात्मकाः श्वासास्तत्तद्घटिकात्मकाः वर्णरूपाश्च भवन्तीति। तेषु श्वासेषु प्रोक्तषष्ट्युत्तरत्रिशतसंख्येषु तद्भुतवर्णानां घटिकाक्षरेषु

प्रत्यक्षरं तत्तत्प्राप्तभूतवर्णानां दशश्वासा इति शेषः। शेषाः

पञ्चाशदधिकशतत्रयसंख्याः। एतदुक्तं भवति

पूर्वोक्तोदयाक्षरादि षष्ट्यात्मकाक्षरात्मिकासु घटिकासु

प्रतिघटिकं षष्ट्युत्तरत्रिशतसंख्येषु श्वासेष्वादितो

दशश्वासास्तत्तद्घटिकाप्राप्ताक्षरप्राप्तभूताक्षरवर्णानां

दशानां तदादितत्पूर्वान्तानां स्वरूपेण समुद्यन्ति। शेषास्तु

पञ्चाशदुत्तरत्रिशतसंख्याः श्वामा एवं दशदशक्रमेण

तदनन्तरभूतादितद्भूतान्तानां पञ्चानां प्रतिभूतं

दशदशाक्षररूपाणां स्वरूपेण सप्तावृत्त्योद्यन्ति। एवंभूते सति

प्रतिघटिकं तत्तदक्षरप्राप्तभूताक्षराणां

दशानामष्टावावृत्तयः शेषभूत चतुष्टयाक्षराणां

सप्तावृत्तयश्चैवं क्रमेणैकैकघटिकाक्रमेण

पञ्चभूतात्मकवर्णात्मिका भवतीति॥ २८॥

संख्याभिरित्यादिभिरीश्वरीत्यन्तैश्चतुर्भिः श्लोकैः

प्रस्तावादिपुरःसरमहोरात्रादि श्वासानां प्रोक्तसंख्यानां

कालनित्यादिश्रीचक्रस्थशक्त्यन्तानामेकादशविधानामप्यवान्तरव्या

प्तिं समव्याप्तिं तदनुसन्धानवैभवञ्चोपदिशति। तत्र संख्याभिः

श्वासानामित्युत्तरत्रान्वयः। वासनाव्याप्तिं वासनाञ्च व्याप्तिं च

वासनात्मिकाव्याप्तिमित्यर्थः। वक्ष्यमाणामेकादशविधानामिति

शेषः। सुन्दरीति देवीसम्बुद्धिः। यया व्याप्त्या

नित्यातद्व्याप्तिविद्यानां पञ्चविंशपटलप्रोक्तसंख्यानां पूर्वमहोरात्रश्वाससंख्यानां मध्ये एकशः प्रतिविद्यमेकैकश्वासु इत्यर्थः। ततः पूर्वोक्तश्वाससंख्यायाः परमित्यर्थः।

p. 520) नित्याविद्याप्तितत्त्वानां संख्याः स्युः पूर्वमेकशः।
ततो दिनार्णाः सन्ध्याः स्युस्ततश्च घटिकार्णकाः॥ ३० ॥

राशयो द्वादश ततो ग्रहा भूतानि पञ्च वै।
मातृकाश्चापि पञ्चाशच्छ्रीचक्रस्थाश्च शक्तयः॥ ३१ ॥

दिनार्णाः पूर्णमण्डलार्णाः। सन्ध्याः सन्ध्यात्रयप्राप्तैकषष्टिसंख्याः। पूर्णमण्डलश्वाससंख्यायाः परमिति शेषः। ततस्तत्संख्यायाः परं। घटिकार्णकाः षष्टिसंख्या इति शेषः। द्वादशराशयो घटिकार्णसंख्यायाः परमिति शेषः। ततः राशिसंख्यातः। ग्रहाः नव भूतानि पञ्चसंख्यातः। मातृका भूतसंख्यातः परमिति शेषः। पञ्चाशद्विसर्जनीयविधुरा वर्णा इति शेषः। शक्तयः मातृकासंख्यातः परमिति शेषः। सैका नवतयः आयुधाष्टकस्य मिथुनचतुष्टयत्वेन गृह्यमाणत्वान्मध्यदेवताविधुरत्वाच्च। देवी

ललिता सर्वात्मना श्वाससमष्टिरूपेण। एतदुक्तं भवति

अहोरात्रात्मकानां षट्शतोत्तरैकविंशतिसहस्रसंख्यानामादितः

कालनित्यारूपाः षट्त्रिंशदधिकसप्तशतोत्तरविंशतिसहस्रसंख्याः

श्वासा भवन्ति। तच्छिष्टेषु चतुःषष्ट्यधिकाष्टशतसंख्येषु

श्वासेषु षठ्सप्तत्यधिकपञ्चशतसंख्यश्वासाः

पूर्णमण्डलवर्णरूपा भवन्ति।

तच्छिष्टेष्वष्टाशीत्यधिकद्विशतसंख्येषु श्वासेषु

सन्ध्यात्रयरूपनाथतत्त्वनित्यात्मकरूपा एकषष्टिश्वासा भवन्ति।

तच्छिष्टसप्तविंशत्यधिकद्विशतश्वासेषु षष्टिश्वासा

अहोरात्रषष्टिकाक्षरूपा भवन्ति। तच्छिष्टेषु

सप्तषष्ट्यधिकशतश्वासेषु द्वादश श्वासा द्वादश राश्यात्मका

भवन्ति। तच्छिष्टेषु पञ्चपञ्चाशदुत्तरशतश्वासेषु नवश्वासा

नवग्रहात्मका भवन्ति। तच्छिष्टेषु षट्चत्वारिंशदधिकशतश्वासेषु

पञ्चश्वासाः पञ्चभूतात्मका भवन्ति।

तच्छिष्टेष्वेकचत्वारिंशदुत्तरशतश्वासेषु पञ्चाशच्छ्वासाः

विसर्जनीयरहिता मातृकाक्षरात्मका भवन्ति। तच्छिष्टा

एकनवतिसंख्य श्वासाः प्रोक्तक्रमसंख्यश्रीचक्रस्य शक्तिरूपा

भवन्ति। एवं क्रमेणाहोरात्रात्मकश्वासाः समष्टिरूपा

परिच्छिन्नविग्रहविश्वरूपा ललितात्मका भवन्ति। अत्र

पूज्यपादमुखादवगतोऽर्थस्तदाज्ञया लिख्यते यथा

अहोरात्रोक्तसंख्याः श्वासाः पञ्चाशदक्षरात्मिकाया मातृकाया द्वात्रिंशदधिकचतुःशतावृत्त्या तदात्मका भवन्ति । ते

p. 521) सैका नवतयः प्रोक्ता देवी सर्व्वात्मना स्थिता ।
एवं विद्यां वासनां यो भावयेत् परमेश्वरि ॥ ३२ ॥

नाडीचक्रञ्च मर्माणि देहान्तर्म्मरुतां क्रियाम् ।
योगाभ्यासं तदङ्गैश्च स्वेच्छोत्क्रान्तिविधानकम् ॥ ३३ ॥

परकायप्रवेशञ्च योगसिद्धस्य लक्षणम् ।
आसन्नमृत्युचिह्नानि कथयामि यथाक्रमम् ॥ ३४ ॥

प्राक्प्रोक्तमूलाधारस्य मध्यगा त्र्यस्रमध्यतः ।
सुषुम्ना पृष्ठवंशाख्यवीणादण्डस्य मध्यगा ॥ ३५ ॥

मूलादिब्रह्मरन्ध्रान्ता नासाग्राद्द्वादशाङ्गुले ।
तदग्रात् पायुगा प्रोक्तालम्बुषाख्या तु नाडिका ॥ ३६ ॥

पुनरपि विंशत्युत्तरशतत्रयाधिकचतुःसहस्रपरिवृत्तितः पञ्चभूतात्मका भवन्ति । पुनरपि ते नवनाथश्रीचक्रग्रहाणां

चतुःशतोत्तरद्विसहस्रावृत्त्या तत्तदात्मका भवन्ति। ते पुनरपि षट्त्रिंशत्तत्त्वानां षट्शतावृत्त्या तदात्मका भवन्ति। ते पुनरपि षोडशनित्यात्मकस्वराणां पञ्चाशदुत्तरशतत्रयाधिकसहस्रसंख्यावृत्त्या तदात्मका भवन्ति। ते पुनरपि षष्टिघटिकाक्षराणां षष्ट्युत्तरत्रिशतावृत्त्या तदात्मका भवन्ति। ते पुनरपि द्वादशराशीनां अष्टशतोत्तरसहस्रावृत्त्या तदात्मका भवन्ति। ते पुनरपि श्रीचक्रस्थानां षणवतिशक्तीनां पञ्चविंशत्युत्तरशतद्वयावृत्त्या तदात्मका भवन्तीति। अत्रान्यद्रहस्यं पूज्यपादमुखादवगन्तव्यम्॥ ३२॥

नाडीत्यादिना यथाक्रममित्यन्तेन श्लोकद्वयेन पटलशेषार्थानुपदिशति। तत्र मर्माणि स्थानानीति शेषः। स्वेच्छोत्क्रान्तिर्नाम स्वेच्छया प्राणपरित्यागः। परकायप्रवेशं मृतशरीरे स्वजीवप्रवेशनं तस्मात् स्वशरीरे तत्प्रवेशनं वा॥ ३४॥

प्रागित्यादिभिः परेत्यन्तैर्दशभिः श्लोकैर्नाडीचक्रस्वरूपं तत्र कुण्ठलिनीस्थितिञ्चोपदिशति। तत्र प्राक्प्रोक्तमूलाधारस्य नित्यानित्यापटलप्रोक्तस्य। मध्यगा मणौ सूत्रवन्मध्यरन्ध्रस्यूतेत्यर्थः। ब्रह्मरन्ध्रान्ता ब्रह्मरन्ध्रावसाना सुषुम्नेति पूर्वत्रान्वयः।

p. 522) त्र्यस्राग्रादुत्थिता नाडी कुहूर्नाम ध्वजान्तिका।

तद्वामदक्षपार्श्वाभ्यां सविश्वोदरवारणे ॥ ३७ ॥

जठरान्ता सर्वगा च प्रोक्ते तद्वदनन्तरे ।
हस्तिजिह्वायशस्विन्यौ तत्तदङ्गुष्ठगे पदोः ॥ ३८ ॥

तथैवेडापिङ्गले च नासारन्ध्रद्वयान्तगे ।
गान्धारी च तथा पूषा नेत्रद्वयगते क्रमात् ॥ ३९ ॥

तया कर्णगते शङ्खपयस्विन्यौ क्रमेण वै ।
सरस्वती तु या नाडी सा तु जिह्वाग्रगामिनी ॥ ४० ॥

एवं चतुर्दश प्रोक्ता नाड्यो देहे प्रधानकाः ।
तासां सन्धिषु तत्सन्धिष्वेवं नाड्यः स्थितास्तनौ ॥ ४१ ॥

नासाग्रात् द्वादशाङ्गुले नासाग्रमारभ्य
द्वादशाङ्गुलमानावधिके स्थाने ब्रह्मरन्ध्रमित्यर्थः । तदग्रात्
सुषुम्नारम्भपुरोभागस्थानमारभ्य पायुगा गुदरन्ध्रावसाना ।
त्र्यस्राग्रात् मूलाधाररूपत्र्यस्राग्रकोणात् ध्वजान्तिका
मेहनपर्य्यवसाना । तद्वामदक्षपास्वाभ्यां कुहूसंज्ञिकाया
नाड्या इति शेषः । जठरान्ता विश्वोदरा जठरमध्यान्ता सर्वगा

अधश्चोद्ध्र्वप्रसृता सर्वगा वारणा। प्रोक्ते इत्यस्य विश्वोदरवारणेति पूर्वत्रान्वय। तद्वदनन्तरे तदनन्तरवामदक्षस्थिते। तत्तदङ्गुष्ठगे पदोः वामदक्षयोः पादयोस्तत्तदङ्गुष्ठावसानके भवत इत्यर्थः। तथैव तदनन्तर वामदक्षपार्श्वारम्भतः नासारन्ध्रद्वयान्तगे। एतदुक्तं भवति मूलाधारत्र्यस्रमध्यस्थसुषुम्नाया वामपार्श्वमारभ्य प्रोत्थितवक्राकारा ध्वजमूले सुषुम्नाश्लेषतो दक्षिणभागं गत्वा पुनस्तत्रापि वक्रगत्या नाभिप्रदेशे पुनरपि सुषुम्नाश्लेषतो वामभागवक्रगत्या हृदये भूयोऽपि सुषुम्नाश्लेषदक्षिणभागाष्टकाश्रयवक्रगत्या कण्ठदेशे पुनरपि सुषुम्नाश्लेषतो वामांशजत्रुमध्योद्ध्र्ववक्रगत्या ब्रह्मरन्ध्रप्रदेशे पुनरपि सुषुम्नाग्राश्लेषतो दक्षिणवक्रगत्याधोमुखा सुषुम्ना भ्रूमध्यप्रदेशे सुषुम्नाश्लषतो वामनासारन्ध्रपर्य्यवशायिनी इडासंज्ञा नाडी भवति। पिङ्गला तु प्राग्वद्दक्षिणभागारम्भा दक्षिणवामदक्षिणवामविनिमयक्रमवक्रगत्या सुषुम्नोद्ध्र्वाश्लेषपर्वमर्ममध्यगा

p. 523) तासां प्रधाननाडीनां संख्या सार्द्धत्रिलक्षकम्।
अप्रधानाः शिरा देहे त्वसंख्या याभिरेव वै॥ ४२॥

वेष्टितैर्य्यैर्नरः सर्वैः स्वकीयैरक्षया निशम् ।
नाडयः सुषिरा रक्तमरुत्पूर्णाश्च सर्व्वगाः ॥ ४३ ॥

सुषुम्नामध्यगा वज्रा नाडी तन्मध्यगा परा ।
चित्राभिधाना तन्मध्ये स्थिता सा कुण्डली परा ॥ ४४ ॥

दक्षिणनासिकान्ता च भवतीति । तथा अनन्तरवामदक्षिणारम्भतः
नेत्रद्वयगते तत्तन्नेत्रद्वयपर्य्यवसिते तथा तदनन्तरवामारम्भतः
कर्णगते तत्तत् कर्णपर्य्यवसिते । सरस्वती
पूर्वोक्तनाडीद्वयावशिष्टमध्यस्था नासारम्भतः जिह्वाग्रगामिनी
जिह्वाग्रपर्य्यवसिता ॥ तासां चतुर्द्दशानां तत्सन्धिषु
प्रधाननाडीनां सन्धिषु । तासां
प्रधानचतुर्द्दशनाडीसन्ध्यारम्भानां तत्सन्ध्याख्यानाञ्च
सार्द्धत्रिलक्षकं पञ्चाशत्सहस्राधिकत्रिलक्षमित्यर्थः । याभिः
प्रधानाभिः अप्रधानाभिश्च । नाडयो नाडिकाः प्रोक्तास्ताः सर्व्वाः
सुषिराः रन्ध्रवत्यः । सुषुम्नामध्यगा
सुषुम्नामध्यरन्ध्रान्तरालगता । तन्मध्यगा
वज्रानाडीरन्ध्रान्तरालगता । तन्मध्ये स्थिता चित्रानाडयन्तःस्थिता सा
त्रिंशे पटले चतुःषष्टितमश्लोकादिभिः षड्भिः

श्लोकैर्वक्ष्यमाणरूपा । भूमौ त्रिकोणमालिख्य तद्बहिस्त्र्यङ्गुले च त्रिकोणं लिखित्वा तयोर्मध्ये तिर्य्यक् द्वादशरेखा विलिख्य सर्वमध्ये सुषुम्नाया आद्यक्षरं तस्याधोभागे अलम्बुषाया आद्यक्षरं तत्पूर्वभागे त्र्यस्त्रयोर्मध्यकोष्ठे कुह्वा आद्यक्षरं एवं प्रादक्षिण्येन कोष्ठान्तरालेषु च नाडीनामाद्यक्षराणि वायुषी पूषर्श संज्ञां इहयि वापपि पूयसाशङ्गां पूर्वोक्तैः सह चतुर्दशाक्षराणि लिखित्वा प्रदर्शयेदिति सम्प्रदायः । अत्र संग्रहश्लोकास्त्रयो लिख्यन्ते ।

सुषुम्नालम्बुषामध्ये कुहूच्चारणसंज्ञिका ।
पयस्विनी पिङ्गला तु सुषुम्ना सुयशास्विनी ॥
सरस्वती शङ्खिनी च गान्धारीडा द्विपास्यगा ।
विश्वोदरेति नाड्यः स्युरयं तासां स्थितिक्रमः ॥
रन्ध्रपायुध्वजाश्लेषपन्नासानेत्रकर्णगाः ।
जिह्वाकर्णाक्षिनासाङ्घ्रि जठरान्ताः प्रदक्षिणात् ॥ इति ॥ ४४ ॥

p. 524) मर्म्माण्यङ्गुष्ठगुल्फाङ्घ्रिपृष्ठजङ्घाख्यजानुषु ।
ऊरूसौवनिकामुष्कमेढ्रनाभिषु पार्श्वयोः ॥ ४५ ॥

हृदयस्तनकण्ठांसकृकाटीकर्णमूर्द्धसु ।

शङ्खयोः फाल्गुनासादिमध्यान्तास्यकपोलतः ॥ ४६ ॥

अष्टत्रिंशदिति प्रोक्तान्येषु वायोस्तु धारणात् ।
परकायप्रवेश्च स्वेच्छोत्क्रान्तिश्च सिध्यति ॥ ४७ ॥

दशानामपि वयूनां देहस्थानां क्रियाः शृणु ।
ऊर्द्धाधोगमनासक्तौ प्राणापानौ सदा तनौ ॥ ४८ ॥

नाग उद्गारकृत् प्रोक्तः क्षुत्कृत् कृकरकस्तथा ।
देवदत्तो जृम्भणकृत् रवकृच्च धनञ्जयः ॥ ४९ ॥

कूर्म्म उन्मेषकृत् प्रोक्त उदानोऽपि तथा द्विकृत् ।
समानवायुः कायाग्निं सन्धुक्षयति पाचितुम् ॥ ५० ॥

व्यानाख्यो रसमादाय व्यापयेदखिलां तनुम् ।
एषां दशानामंशास्तु मरुतां स्युरनन्तकाः ॥ ५१ ॥

मर्माणीत्यादिभिः सिध्यतीत्यन्तैस्त्रिभिः
श्लोकैरष्टत्रिंशत्मर्मस्थानानि तेषु वायुधारणफलं चोपदिशति ।
तत्र सोवनिका मुष्कपायुरन्ध्रयोर्मध्यगता नाडी कृकाटी

कर्णोपरिभागस्थोन्नतास्थिपार्श्वप्रदेशः। शङ्ख्योः भालपार्श्वोन्नतास्थ्नोः। कपोलतः कपोलेषु अष्टत्रिंशत् एतेष्वष्टत्रिंशन्मर्मसु द्वन्द्वस्थानानि षडविंशति। शेषस्थानानि द्वादश सम्भूयाष्टत्रिंशन्मर्माणि। एषु मर्मसु॥ ४७॥

दशानामित्यादिभिः कल्प्यते इत्यन्तैः पञ्चभिः श्लोकैस्ततप्रस्तावपुरःसरं देहस्थानां दशानां वायूनां नामानि तत्क्रियास्तदनुभावञ्चोपदिशति। तत्र ऊर्द्ध्वाधोगमनासक्तौ परस्परं शृङ्खलावत् वद्धस्वरूपावेककाले ईर्षयेति शेषः। प्राणापानौ प्राणापानाख्यौ। नाग इति वायुनाम कृकर इति च देवदत्तो धनञ्जयश्चेति। कूर्म इति वायुनाम। उदान इति द्विकृत् उन्मेषनिमेषकृत्। समानवायुः

p. 525) तेषां प्रसाराद्देहस्य समीचीना स्थितिर्भवेत्।
वैलोम्ये विकृताङ्गत्वाल्लोकैर्नाशाय कल्प्यते॥ ५२॥

जीवात्माभेदरूपेण मनसा परमात्मनः।
योगो योगस्तु विज्ञेयस्तस्याङ्गानि तथाष्ट वै॥ ५३॥

यमोथ नियमः पश्चादासनं तदनन्तरम्।
प्राणायामस्तथा प्रत्याहारस्तदनु धारणम्॥ ५४॥

ध्यानं समाधिरित्युक्तान्यष्टाङ्गानि यथाक्रमात्।
कथयामि शृणु प्राज्ञे यैर्म्मर्त्त्यो मत्समो भवेत्॥ ५५॥

तत्प्रत्यूहाः षडाख्याताः कामक्रोधौ ततस्तथा।
लोभमोहौ मानमदौ वह्निवत् सर्वनाशकाः॥ ५६॥

समानाख्योवायुः। कायाग्निं जठराग्निं ग्रहण्यधःस्थं इत्यर्थः
। पाचितुं भुक्ताहारं। व्यानाख्यः वायुरिति शेषः। रसं
भुक्ताहारस्येति शेषः। अंशाः सम्भवाः। प्रसारात् यथावत्
संचारानुकूल्येन। वैलोम्ये अयथातथा सञ्चारप्रातिकूल्यैः
विकृताङ्गत्वात् अहितादिभिः॥ ५२॥
जीवात्मेत्यादिना श्लोकेन योगनिर्वचनोपदेशं तदङ्गप्रस्तावञ्च
करोति। तत्र जीवात्माभेदरूपेण एतदेकं पदं मनसा सहेति शेषः।
परमात्मनः सन्मात्रस्फुरत्तारूपस्य चित इत्यर्थः। योगः
तादात्म्यसम्बन्धः। तस्य योगस्य। एतदुक्तं भवति भेदरूपवत्
प्रतीयमानानां जीवमनःपरमात्मनां इदन्ताविलयनरूपमैक्यं
योग इति॥ ५३॥
यमेत्यादिना भवेदित्यन्तेन श्लोकद्वयेन योगस्याष्टाङ्गनामानि
तत्स्वरूपप्रस्तावं तदनुभावञ्चोपदिशति। तत्र तथा समुच्चये।

अष्टाङ्गानीत्यस्य काकाक्षिवदुक्तानीति पूर्वत्र

कथयामीत्युत्तरत्रान्वयः। कथयामि स्वरूपत इति शेषः। यैः

अष्टाङ्गस्वरूपैः। मत्समः मन्मयः शिवरूपः॥ ५५॥

तत्प्रत्यूहेत्यादिना यम इत्यन्तेनाध्यर्द्धेन श्लोकेन प्रत्यूहान्

यमस्वरूपञ्चोपदिशति। तत्र तत्प्रत्यहाः योगप्रत्यूहाः।

सर्वनाशकाः स्वरूपलाभप्रत्यूहरूपत्वात्।

आत्मापरोक्षप्रत्यूहकर्मणस्तु यमो यमः।

स्वरूपापरोक्षप्रत्यूहभूतानां प्रोक्तानां कामादीनां षणां

उद्योगेभ्य उपरमणं यमः यमाख्यमङ्गम्॥ ५६॥

p. 526) आत्मापरोक्षप्रत्यूहकर्म्मणस्तु यमो यमः।

तथैकादशरूपः स्यान्नियमः परिकीर्त्तितः॥ ५७॥

अहिंसा सत्यमास्तिक्यमार्जवं समता धृतिः।

क्षमा दया त्रिधाशौचं सन्तोषो गुरुसेवनम्॥ ५८॥

पद्मस्वस्तिकवीराख्यभद्राण्युक्तानि वै क्रमात्।

आसनानि मनःस्थैर्य्यकरणे साधकानि वै॥ ५९॥

ऊर्वोरुपरि विन्यस्य व्यत्यासात् पादयोस्तले।

बाह्यपार्श्वद्वयस्पर्शात्तत् पद्मासनमीरितम् ॥ ६० ॥

तथा तयोरधोभागतदन्तः पार्श्वसङ्गमात् ।
स्वस्तिकाकारतः प्रोक्तं तद्भद्रासनमीश्वरि ॥ ६१ ॥

तथैकादशेत्यादिना सेवनमित्यन्तेनार्द्धाद्येन
एकश्लोकेनैकादशविधनियमस्वरूपमुपदिशति । तत्र तथा यथा यमः
तथा नियमः नियमाख्यमङ्गं । समता लाभहान्योः । त्रिधा शौचं
मनोवाक्कायरूपतः । सन्तोषः पूर्णता ॥ ५८ ॥
पद्मेत्यादिभिः स्मृतमित्यन्तैश्चतुर्भिः
श्लोकैर्नामपुरःसरमष्टविधान्यासनस्वरूपाण्युपदिशति । तत्र
मनस्थैर्य्यकरणे योगाभ्यास इति शेषः । साधकानि उपकारकानि ।
ऊर्वोरुपरीत्यादिना श्लोकेनैतदुक्तं भवति
वामपादतलकनिष्ठासम्बन्धिपार्श्वस्य दक्षिणोरुमध्योपरि
दक्षिणपादतलकनिष्ठासम्बन्धिपार्श्वस्य
वामजङ्घोपर्य्याक्रमणेन वामोरुमध्योपरि चैव व्यत्यासक्रमात्
विन्यासेन वामजङ्घाया दक्षिणजङ्घोपर्य्याक्रमणेन च
पूर्ववद्विन्यासाद्द्विविधं पद्मासनं भवतीति । तथा
द्विविधव्यत्यासक्रमात् । तयोरूर्वोः तदन्तःपार्श्वसङ्गमात् । एतदुक्तं
भवति वामपादतलाङ्गुष्ठसम्बन्धिदक्षिणोरोरधोभागस्य

दक्षिणपादतलाङ्गुष्ठसम्बन्धिपार्श्वोपरि वामोरोरधोभागस्य च प्राग्वत् व्यत्यासविन्यासात् पुनः पूर्ववत् जङ्घाद्वयोपर्य्यन्योन्याक्रमणविन्यासात् च पादतलद्वयाङ्गुष्ठसम्बन्धिपार्श्वान्योन्याक्रमेण विन्यासाच्च द्विविधं स्वस्तिकासनं भवतीति। तलान्त इत्यादिना श्लोकेनैतदुक्तं भवति एकं पादमूर्वोरन्यतमस्याधोभागे स्वतलाङ्गुष्ठसम्बन्धिपार्श्वेन सङ्गतं कुर्य्यात्। पुनश्च वामदक्षिणव्यत्यासेनैव कुर्य्यात्। तेनैतद्द्विविधं भद्रासनं भवतीति।

p. 527) तलान्तः पार्श्वगं कुर्य्यादेकमन्यन्तु वाह्यगम्।
ऊर्वोरधस्तथोर्द्ध्वे च द्विधा भद्रासनं स्मृतम्॥ ६२॥

व्यत्यस्ततलयोरूर्द्धसंस्पर्शादुच्चजङ्घयोः।
पादयोर्जानुदेशे वै वीराख्यं योगपट्टतः॥ ६३॥

प्राणायामस्त्रिधा प्रोक्त उत्तमाधममध्यमाः।
लाघवो भूतलत्याग उत्तमे चित्तनिर्वृतिः॥ ६४॥

सर्व्वाङ्गे स्वेदसंवृद्धिरधमे मध्यमे तथा।

सर्व्वाङ्गकम्पनं प्रोक्तमभ्यासात् कालसंयुतात् ॥ ६५ ॥

तेप्युत्तमगुणा भूयुरभ्यासात् कालयोगतः ।
तस्मात् समभ्यसेत् प्रातः सायञ्च नियमेन वै ॥ ६६ ॥

वामेन नासारन्ध्रेण पूरयेदमृतात्मना ।
स्मरन्नम्बु मरुत् पश्चाद्दक्षिणेनापसारयेत् ॥ ६७ ॥

सम्भूयाष्टावासनानि । अत्र द्विधेत्युक्त्या सर्वासनद्वैविध्यमिति
सम्प्रदायः ॥ ६२ ॥
व्यत्यस्तेत्यादिना श्लोकेनैतदुक्तं भवति
जङ्घोर्द्धसंस्पर्शादूर्द्धभूतं
जङ्घयोर्वत्यस्ततलकनिष्ठासम्बन्धिपार्श्वाक्रान्तभूतलयोः
पादयोर्जानुदेशे स्वान्तराधिमध्ये च योगपट्टवन्धनाज्जान्वोरुपरि
प्रसारितवाहुदण्डप्रकोष्ठविन्यासात्
पुनःप्राग्वज्जङ्घाद्वयवाह्याभ्यन्तरस्पर्शविन्यासभेदाच्च
द्विविधं वीरासनं भवतीति ॥ ६३ ॥
प्राणायामेत्यादिभिस्तुरीयत इत्यन्तैः पञ्चभिः श्लोकैः
प्राणायामभेदांस्तद्ध्यानं तस्य स्वरूपञ्चोपदिशति । तत्र
लाघवः देहस्येति शेषः । भूतलत्यागः तूलाघटयोरेकैकस्यां

पूर्वतः स्वसमानप्रमाणानि वस्तूनि निक्षिप्यान्यस्यां स्थित्वा प्राणायामेण स्वघटोन्नतिरिति सम्प्रदायार्थः। उत्तमे प्राणायामे इति शेषः। अधमे प्राणायामे मध्यमे प्राणायामे इति शेषः। अभ्यासात् कालसंयुतात् चिरकालकृतादभ्यासादित्यर्थः। उत्तममध्यमाधमाः भूयुरिति

p. 528) एवं सुसाधिते पश्चाद्द्वात्रिंशन्मात्रयाहरेत्।
धारयेत्तच्चतुःषष्ट्या रेचयेत्तत्तुरीयतः॥ ६८॥

कम्पश्च पुलकानन्दौ वैमल्यस्थैर्य्यलाघवाः।
तद्वत् कान्तिप्रकाशौ च योगसिद्धस्य लक्षणम्॥ ६९॥

मूलाधारे मनः कृत्वा वायुनापूर्य्य मूलतः।
नाडीचक्रान्तरं नीत्वा सर्व्वाङ्गानि च चारयेत्॥ ७०॥

एवं संसाधिते वायावष्टत्रिंशत्सु मर्म्मसु।
धारयन् वारयेदिच्छावशेनाङ्गानि सर्वतः॥ ७१॥

तथाधारगतं कृत्वा मनः पवनसंयुतम्।
रसाम्बुदाहव्याप्तस्वैः सहंसैर्व्यापयेत्तनुम्॥ ७२॥

दिव्यत्वात् भूयासुरित्यर्थः। समभ्यसेत् प्राणायामान्। अम्बु वकारं मरुद्दिव्यात्वान्मरुतमित्यर्थः। अस्यार्थद्वयं विद्यते एकदा यकाराक्षरं स्वरन्निति पूर्वत्रान्वयः। अन्यदा श्वासं अपसारयेदित्युत्तरत्रान्वयः। रेचयेदित्यर्थः। मात्रा नाम स्वाङ्गुलीस्फोटाष्टककालः। चतुःषष्ट्या मात्राभिरिति शेषः। तुरीयतः षोडशमात्राभिः॥ ६८॥

कम्प इत्यादिना श्लोकेन योगसिद्धलक्षणमुपदिशति। वैमल्यस्थैर्य्यलाघवाः वैमल्यं मनोविषयं स्थैर्य्यलाघवे देहविषये। प्रकाश इति स्वतेजसो बहिः प्रकाशनं बीजादिवत्॥ ६९॥

मूलाधारेत्यादिना श्लोकेन प्रत्याहारस्वरूपमुपदिशति। तत्र मूलतः मूलाधारात्॥ ७०॥

एवमित्यादिना श्लोकेन धारणस्वरूपमुपदिशति। तत्र चारयेत् वायुमिति शेषः। इच्छावशेन स्याभिमताङ्गधारणवशेन॥ ७१॥

तथेत्यादिभिर्व्रजेदित्यन्तैर्नवभिः श्लोकैर्धारणासिद्धिफलानि समाधिस्वरूपसहितान्युपदिशति। तत्र तथेत्यादिना भुवीत्यन्तेन श्लोकद्वयेन समाधिना त्रिकालज्ञानादिसिद्ध्युपायमुपदिशति। तथा प्राग्वत्। रसाम्बुदाहव्याप्तस्वैः सहंसैः लकारवकाररेफयकारहकारैः प्रत्यक्षरं बिन्दुसहितैः सहेति शेषः।

p. 529) एवं तैरक्षरैर्देहे वायुना तन्मयीकृते ।
त्रिकालज्ञो विशुद्धात्मा सुखी जीवेच्चिरं भुवि ॥ ७३ ॥

स्वेच्छाचारी व्योमगश्च व्रजेद्देवैश्च सङ्गमम् ।
स्वेच्छया देहमध्यस्थः कुड्मगृहगतो यथा ॥ ७४ ॥

एवं संसिद्धयोगस्तु स्वेच्छया देहमात्मनः ।
प्राणानाकृष्य मध्यस्थसुषुम्नारन्ध्रतस्तथा ॥ ७५ ॥

ब्रह्मरन्ध्राद्विनिर्गत्य भूयात् सर्व्वात्मनात्मवान् ।
अथवोत्तरसंप्रोक्तचूर्णास्वादनतो वशी ॥ ७६ ॥

विरक्तचित्तः स्वं देहं तेनोपायेन सन्त्यजेत् ।
स्वेच्छोत्क्रान्तिरिति प्रोक्ता योगयुक्तात्मनां प्रिये ॥ ७७ ॥

व्यापयेत् पवनमिति शेषः । तन्मयीकृते
ध्यातृध्यानध्येयविभेदसमाधिना तत्तद्भूतमयीकृते । एतदुक्तं
भवति प्राग्वन्मूलाधारे मनः संयोज्य तत्र वायुं सन्धार्य्य
प्रोक्तैर्भूताक्षरैः पञ्चभिः सह तं पवनं सर्वदेहव्यापनेन
स्वदेहे तत्तद्भूतमयीकृते प्रोक्तफलसिद्धिरिति ॥ ७३ ॥

स्वेच्छेत्यादिना श्लोकेनाकाशगमनादिसिद्ध्युपायमुपदिशति । तत्र स्वेच्छाचारी अव्याहतगतिर्गृहगतो यथा गृहगतपुरुषवत् शरीरव्यासङ्गरहितः ॥ ७४ ॥

एवमित्यादिभिः प्रिये इत्यन्तैस्त्रिभिः श्लोकैः स्वेच्छोत्क्रान्त्युपायद्वयमुपदिशति । तत्र देहं संत्यजेदिति शेषः । प्राणान् श्वासान् मध्यस्थसुषुम्नारन्ध्रतः नाडीचक्रस्येति शेषः । तथा प्राग्वत् । सर्वात्मनात्मवान् देहपरिच्छेदं संत्यज्यापरिच्छिन्नबहुरूपवान् । अथवा पक्षान्तरे । उत्तरसंप्रोक्तचूर्णास्वादनतः उत्तरत्रचतुस्त्रिंशपटले उग्रेत्याद्यात्मवानित्यन्तश्लोकत्रयप्रोक्तचूर्णास्वादनतः तेन चूर्णास्वादनरूपेण । एतदुक्तं भवति पूर्वोवस्थानचारितान् प्राणान् मनसा सुषुम्नारन्ध्रमार्गेण निःशेषमाकृष्य ब्रह्मरन्ध्रात् विनिर्गमय्य वक्ष्यमाणचूर्णास्वादनसंजातानुसन्धानेन वानवच्छिन्नस्वरूपो भवतीति ॥ ७७ ॥

p. 530) परकायप्रवेशन्तु वक्ष्ये देवि महाद्भुतम् ।
कलौ दुःशाटकं प्रायो मर्त्त्यै सिद्धिरपीश्वरि ॥ ७८ ॥

अक्लेशतः परित्यज्य प्राणान् स्वकतनुं तथा ।
परिपूर्णाङ्गसंयुक्तामग्रतो वीक्ष्य योगतः ॥ ७९ ॥

प्रविशेत्तत्तनुं प्राणप्रतिष्ठोक्तविधानतः।
स्वां तनुं गोपयेत् स्वियैस्ततस्ताञ्च तथा ब्रजेत्॥ ८०॥

सिद्धस्य लक्षणान्यष्टौ योगाभ्यासेन सर्वदा।
शृणु तानि महादेवि यैरन्यैर्जायते गुणैः॥ ८१॥

द्वन्द्वहानिः सुखावाप्तिरारोग्यं वश्यवृत्तिता।
जितेन्द्रियत्वमक्रोधः कृपया जनगोपिता॥ ८२॥

आसन्नमृत्योश्चिह्नानि कथयामि शृणु प्रिये।
यैः साध्यसाधकौ ज्ञात्वा देहत्यागमतन्द्रितौ॥ ८३॥

देवतास्वात्मभजनपरौ स्यातां ततस्तु तौ।
सुगतिं प्राप्य सिद्ध्यै तु भवतो जातमात्रतः॥ ८४॥

परकायेत्यादिभिर्व्रजेदित्यन्तैस्त्रिभिः श्लोकैः प्रस्तावपुरःसरं परकायप्रवेशनं तस्माद्भूयोऽपि स्वकायप्रवेशञ्चोपदिशति। तत्र दुःशाटकं दुष्करं परकायप्रवेशमिति पूर्वत्रान्वयः। अक्लेशतः क्रूरव्याध्यादिभिः कृतक्लेशाभावेन। योगतः

प्रविशेदित्युत्तरत्रान्वयः। प्राणप्रतिष्ठोक्तविधानतः दूतीनित्यापटले।
इति शेषः। स्वीयैः स्निग्धैः पुरुषैरिति शेषः। ततः तस्मात्
प्रतिष्ठान्यशरीरात्तां स्वतनुं। तथा प्राग्वत् प्राणप्रतिष्ठाविधिना

॥ ८० ॥

सिद्धस्येत्यादिना शोचितेत्यन्तेन श्लोकद्वयेन
प्रस्तावसंख्यापुरःसरं योगसिद्धलक्षणान्युपदिशति। तत्र तानि
लक्षणानि। गुणैः लक्षणैरित्यर्थः। द्वन्द्वहानिः
शीतोष्णसुखदुःखादिविकारहानिः। सुखावाप्तिः स्वरूपानुसन्धानेन

॥ ८२ ॥

आसन्नेत्यादिभिर्भवेदित्यन्तैरष्टादशभिः श्लोकैः
प्रस्तावज्ञानफलपुरःसरमासन्न मृत्युचिह्नान्युपदिशति। तत्र
आसन्नमृत्योः पुरुषस्य। यैः चिह्नैः। तौ साध्यसाधकौ।

p. 531) अकारणं निजां पूर्वां विमुच्य प्रकृतिं नरः।
समाश्रयेत्ततस्त्वब्दान्मृतिस्तस्य सुनिश्चितम्॥ ८५॥

अरुन्धतीं ध्रुवं व्योम्नि नेक्षते च तदर्द्धतः।
दृशौ नासान्तिकाक्रान्त्या चन्द्रके योङ्घ्योर्न चेत्॥ ८६॥

विलोकयति तस्यार्द्धान्मृतिमेति सुनिश्चितं।

गुल्फाधः स्फुरणं नाड्योः  पादयोश्चेन्न जायते ॥ ८७ ॥

तस्याशु नाशो गदितो भानौ रुण्डं च पश्यतः ।
निरुद्धकर्णरन्ध्रस्य न चेत् कुण्डलिनीध्वनिः ॥ ८८ ॥

धूमो वा दृश्यते मूर्द्धि्न गृहक्षेत्रादितोऽपि वा ।
मूर्द्धि्नगा विहगा लीनाः परासुं तं न को वदेत् ॥ ८९ ॥

पश्चात्कृतार्को गण्डूषे न पश्येच्छक्रचापकम् ।
सद्यः परासुमात्मानं जानीयात् सर्वथा नरः ॥ ९० ॥

स्वमस्तककरः पश्येत् प्रकोष्ठं स्थूलमात्मनः ।
आगुल्फोरन्तराष्टभ्या पश्यन्नातो विनश्यति ॥ ९१ ॥

सुगतिमित्यस्य जातमात्रत इत्यस्य चार्थो गुरुमुखादवगन्तव्यः ।
पूर्वां सौम्यां क्रूरां वा समाश्रयेत् पूर्वविपरीतामिति शेषः ।
ततः समाश्रयतः । ध्रुवं नक्षत्ररूपं । तदर्द्धतः षण्मासतः ।
नासान्तिकाक्रान्त्या नासान्तिकयोरङ्गुलिद्वयाक्रान्त्या । चन्द्रके
मयूरविम्बमध्यस्थचन्द्रकरूपे ज्योतिषी । न चेदित्यस्य विलोकयति
इत्युत्तरत्रान्वयः विलोकयतीत्यस्य चन्द्रके इति पूर्वत्रान्वयः । तस्यार्द्धात्

मासत्रयात्। तस्य गुल्फाधोनाडीद्वयस्फुरणहीनस्य। रुण्डं कवन्धं। चकारो भिन्नक्रमः। पश्यतश्चेति पक्षान्तरे। गृहक्षेत्रादिषु आदिशब्दः पुरपत्तनादिविषयः। अपि धूमो दृश्यत इत्याकृष्यते। वा विकल्पे। तं पुरुसं। पश्चात्कृतार्कः पृष्ठीकृतार्कः गण्डूषे पूरितविनिर्गमितमुखजले। चापकं शक्रचापसदृशं ज्योतिः। प्रकोष्ठं कूर्परं। कूर्परमणिबन्धयोर्मध्यप्रदेशं। तौ जनौ।

p. 532) श्लेष्मशुक्रमलानि स्युर्निमग्नानि जले यदा।
तस्मिन् पक्षे प्रयात्येव यमं सन्त्यज्य जीवितम्॥ ९२॥

हाटकां प्रतिमां पश्यन् ध्रुवं याति यमालयम्।
भास्करं भगणैः पश्यन्नपि याति यमालयम्॥ ९३॥

जलादिषु तनुच्छायां विकृतां वीक्ष्य मासतः।
प्रयाति निधनं छिद्रं पश्यन् भानोश्च मण्डले॥ ९४॥

स्नातानुलिप्तगात्रस्य पुरः शुष्यति चेदुरः।
स पक्षाद्याति निधनं सर्वैरपि सुरक्षितः॥ ९५॥

गुरुमातृगणान् विप्रान् चन्द्रसूर्य्यौ च देवताः।

आस्तिकान् सततं निन्दन्नकारणत एव च ॥ ९६ ॥

श्वास्ववैरस्य दलने परित्यागे स्वरोषतः।
गुरुमन्त्रपरित्यागेऽप्यचिराज्जायते मृतिः ॥ ९७ ॥

गुरुं विद्याञ्च जनकं जननीं सर्वदेवताः।
सदाधिक्षेपशापाभ्यां न्यक्कुर्वन्नाशु नश्यति ॥ ९८ ॥

पुस्तकं निजगेहं वा विष्टरं शयनन्तु वा।
निष्कारणे निराकुर्वन्नाशु नश्यति मानवः ॥ ९९ ॥

तस्मिन् पक्षे अर्द्धमासादर्वाक्। भगणैः सहेति शेषः। विकृतां कुत्सिताकारां निरोजस्कां। भानौ छिद्रं रन्ध्रं। सर्वैरपि ब्रह्मादिभिः। अकारणत इत्यस्य श्वाश्ववेरस्य दलने इत्युत्तरत्रान्वयः। परित्यागे श्वाश्ववैरस्य। अधिक्षेपशापाभ्यां

p. 533) दृग्देहचक्रवालानां वैवर्ण्ये मासतो मृतिः।
ध्याते स्वदेववैरूप्ये मासतो निधनं भवेत् ॥ १०० ॥

कालतत्त्वमयी व्याप्तिरिति सम्यक् समीरिता।

अस्या निफालनाच्चित्ते तत्तत्त्वं स्वात्मसात् कृतम् ॥ १०१ ॥

इति षोडशनित्यातन्त्रे श्रीकादिमते श्वासरूपं नाम सप्तविंशं पटलम् ॥ २७ ॥

निन्दनाप्रियवचनाभ्यां । निराकुर्वन् परित्यजन् । वैवर्ण्यं रुक्षता । स्वदेववैरूप्यं वर्णविग्रहप्रसादादिभिरिति शेषः ॥ १०० ॥

इति षोडशनित्यातन्त्रेषु श्रीकादिमताख्यस्य परिपूर्णस्य तन्त्रस्य प्रपञ्चसारसिंहराजप्रकाशाभिधानेन श्रीसुभगानन्दनाथेन विरचितायां मनोरमाख्यायां व्याख्यायां षोडशनित्यानां कालात्मकप्राणव्याप्त्यादिविधानप्रकाशनपरं सप्तविंशं पटलम् परिपूर्णं परामृष्टम् ॥ २७ ॥ ॐ तत्सत् ॥

ग्रन्थसंख्या

सप्तविंशे यन्त्रमेकं व्याख्याग्रन्थाश्च संख्यया ।
पादार्द्धं पञ्चपञ्चाशदधिकं द्विशतं स्मृताः ॥

## अष्टविंशपटलम्

विदध्यादखिलं क्षुद्रक्लेशशान्त्यै समृद्धये ।

दारिद्र्यादीन्यमङ्गलानि । तद्गृहे अर्चितवास्तुदेवताभिः परिरक्षितगृहे ।
सर्वत्र राजनिवासस्थानेषु मण्डपादिषु । तथा च महिषीगृहे
राजमहिषीणां गृहे विनिवासस्थानेषु । तथा सर्वदिग्विदिक्षु मध्ये
चेत्यर्थः । तुरवधारणे । नचेत् प्रोक्तक्रमाद्वास्तुदेवतापूजा न कृता चेत्
॥ ३९ ॥
त्रिलोहेत्यादिभिः समृद्धये इत्यन्तेरध्यर्द्धैस्त्रिभिः
श्लोकैरधिकरणेषु वास्तुचक्रनिम्र्माणविधानादिकं गृहादिषु
तत्प्रतिष्ठां तत्फलञ्चोपदिशति । तत्र त्रिलोहाश्मतलेषु
हिरण्यरूप्यताम्राश्मतलेषु । हस्तप्रमाणके विस्तारायामाभ्यां ।
तत्तद्दैवतनामानि प्रोक्तानि द्वितीयान्तानीति शेषः । तेषां
द्वितीयान्तत्वं पूजयामीत्यस्य तच्चक्रे लेख्यत्वेनोपदिष्टत्वात्
भूम्यादिनामचतुष्टयविलेखने द्वितीयान्तत्वविधानाच्च । मायागर्भे
हृल्लेखोदरे । तत्र चक्रे । तान् देवन् । क्वापि अनुपहतदेशे । तत्र स्थापितदेशे
। त्रिशः त्रिवारादहीनं । खर्वटकादिष्वित्यत्रादिशब्दः
पत्तनादिविषयः । विदध्यात् प्रोक्तप्रकारेण वास्तुदेरताचक्रे
प्रतिष्ठादिकमिति शेषः ॥ ४२ ॥

p. 586) ततः सूक्ष्मैः पराख्यैश्च होमैः सिद्धिं शृणु प्रिये ॥ ४३ ॥

स्वमूलाधारके वह्नौ कुण्डलिन्यास्यगामिनि ।
वाच्यवाचकरूपञ्च प्रपञ्चं जुहुयात्तथा ॥ ४४ ॥

येनावयोः समो देवि जायते हवनेन वै ।
तद्विधानं वद प्राज्ञ शम्भो सम्यङ्ममाधुना ॥ ४५ ॥

आधारे वह्निसंस्थानं कुण्डलिन्याः स्थितिं ततः ।
तद्रूपं तत्क्रियां सर्वं वद मे विशदं प्रभो ॥ ४६ ॥

शृणु वक्ष्ये विधानं ते सम्यग्विस्तरतोऽधुना ।
प्राणाग्निहोत्रविद्येति यत्त्रय्यां श्रूयते परम् ॥ ४७ ॥

तत इत्यादिना वै इत्यन्तेनार्द्धाद्यन्तेन श्लोकेन सूक्ष्मपरहोमैः सिद्धिकथनप्रस्तावपुरःसरं संक्षेपात् सूक्ष्महोमविधानं तद्वैभवञ्चोपदिशति तत्र चः समाहारे । प्रिये इति सम्बुद्धिः । स्वमूलाधारके षोडशपटलप्रोक्तरूपे । वाच्यवाचकरूपं वाच्यवाचकात्मकं । तथा वक्ष्यमाणप्रकारेण । येन विधानेन । आवयोः शक्तिशिवयोः । एतदुक्तं भवति मूलाधारस्थकुण्डलिनीशक्तिमुखगामिवह्नौ वाच्यवाचकात्मकं

प्रपञ्चं तथा जुहुयात येन हवनविधानेन आवयोः समः साधको जायते इति ॥ ४४ ॥

तद्विधानमित्यादिना प्रभो इत्यन्तेनार्द्धार्द्धेन श्लोकेन तद्विधानं मूलाधारे वह्निसंस्थानं कुण्डलिन्याः स्थितिं तद्रूपं तत्क्रियाञ्च देवी पृच्छति । तत्र तद्विधानं सूक्ष्महोमाङ्गविधानं । प्राज्ञ शम्भो इति पदद्वयमीश्वरसम्बुद्धिः । अधुना अस्मिन् पटले । तद्रूपं कुण्डलिनीरूपं तत्क्रियां कुण्डलिनीक्रियां । विशदं सुष्पष्टं । प्रभो इति देवसम्बुद्धिः ॥ ४६ ॥

शृणिवत्यादिभिः किञ्चनेत्यन्तैश्चतुर्भिः श्लोकैस्तद्विधानकथनप्रस्तावपुरःसरं तद्विद्यानां वेदुषु प्रशस्तिं तद्वैभवादिकञ्चोपदिश्यास्मिन् पटले प्रोक्ततद्वैभवशेषस्य

p. 587) यज्ज्ञात्वा वनितागर्भं न प्रयाति नरो ध्रुवम् ।
यद्व्ययायासरहितमनन्या पेक्षनिर्वहम् ॥ ४८ ॥

यन्मनः क्लेशविश्रान्तेः स्थानं निःशेषकल्मषम् ।
सुखास्पदं स्वगं विश्वमयं चिद्वेद्यवेदनात् ॥ ४९ ॥

अत्रोक्तशेषमखिलं षड्त्रिंशे पटले स्फुटम् ।

प्रदर्श्यते ततस्तत्र वर्णयामि च किञ्चन ॥ ५० ॥

नित्यानित्योदिते मूलाधारमध्येऽस्ति पावकः ।
सर्वेषां प्राणिनां तद्वद्धृदये च प्रभाकरः ॥ ५१ ॥

मूर्द्धनि ब्रह्मरन्धाधश्चन्द्रमाश्च व्यवस्थितः ।
तत्तयात्मकमेव स्यादाद्या नित्या त्रिखण्डकम् ॥ ५२ ॥

षट्त्रिंशपटले वक्ष्यमाणत्वं कथयति । तत्र विधानं
सूक्ष्महोमाङ्गं । अधुना अस्मिन् पटले । यद्विधानं परं
निरतिशयं । वनितागर्भं मातुरुदरं । यत् व्ययायासरहितं
चर्य्याज्यदक्षिणाद्यर्थव्ययकृच्छचान्द्रायणाद्यायासानपेक्षत्वादन्
उसन्धान मन्त्रत्वाच्च । अनन्यापेक्षनिर्वहं
ऋग्विशेषर्त्विग्गुपद्रष्टाद्यनपेक्ष्यत्वात् स्वभेदप्रतीतेः स्वात्मन्येव
विलयनानुसन्धानमात्रत्वाच्च । यन्मनः । क्लेशविश्रान्तेः स्थानं
सङ्कल्पविकल्पविलयरूपत्वात् । निःशेषकल्मषं स्वव्यतिरिक्ताभावात् ।
सुखास्पदं स्वस्मिन्नेव मनसो निर्व्युत्थानविलापकत्वात् । स्वगं स्वस्मिन्
अन्तर्हितत्वात् । विश्वमयं चिद्वेद्यवेदनात्
ज्ञातृज्ञानज्ञेयात्मकत्वाद्विश्वमयं । अत्र अस्मिन् पटले । ततस्तस्मात् ॥
५० ॥

नित्येत्यादिभिस्तैरित्यन्तैः पञ्चभिः श्लोकैः सूक्ष्मस्वरूपं
तदनुसन्धानं तद्धोमप्रकारञ्चोपदिशति। तत्र नित्यानित्योदिते
नित्यानित्यपटले प्रोक्ते तद्वत् तन्त्रोक्तवत् स्थिते हृदये अनाहतचक्रे
ब्रह्मरन्ध्राधः शिरःकपाले ब्रह्मरन्ध्रपदे णधोभागे
त्वधोमुखपद्ममध्ये। तत्त्रयात्मकं अग्निसूर्य्यसोमत्मकं
आद्यानित्यात्रिखण्डकं श्रीविद्याखण्डत्रयम्॥ तेषामित्यादिना
श्लोकेनैतदुक्तं भवति मूलाधारे वह्न्यात्मकं श्रीविद्यायाः

p. 588) तेषां त्रयाणामैक्यन्तु मनसा भावयेत्तथा।
गमागमाभ्यां तेजोभिस्तेषामन्योन्यजैः शिवे॥ ५३॥

तथा समिद्धं तत्तेजस्त्रयं वुद्ध्वाथ तन्मयम्।
चित्तविकल्पविधुरं भावयेदद्भुताञ्च यत्॥ ५४॥

तेषां त्रयाणां वर्णानां प्रागुक्तानां क्रमेण वै।
द्वाभ्यामन्यतमं कृत्वा पुटितं जुहुयाच्च तैः॥ ५५॥

पुटितान् भानुहृद्वर्णैः स्वरांस्तारेण हुङ्कृतैः।
कुण्डलीमुखमार्गाग्नौ जुहुयान्निश्चलाशयः॥ ५६॥

प्रथमखण्डमूद्ध्र्वमुखप्रसृततेजस्कत्वात्तदादिब्रह्मरन्ध्रान्तं
हृदये सूर्यात्मकं श्रीविद्याया मध्यमखण्डमुभयतः
प्रसृततेजस्कत्वात्तदादिकं मूलाधारान्तं ब्रह्मरन्ध्रान्तगञ्च
ब्रह्मरन्ध्राधःप्रदेशाधोमुखपद्मकर्णिकायां श्रीविद्यायाः
तृतीयखण्डं चन्द्रात्मकममृतमयत्वेनाधोमुखप्रसृततेजस्कत्वात्
तदादिकं मूलाधारान्तमेवं तेजस्त्रयात्मकं खण्डत्रयं
गमागमानुसन्धानेनान्योन्यमेकीभूतं तन्मयमनसा सह
स्वात्मानं च भावयेदिति। तथा प्रोक्तप्रकारेण। तन्मयं
कनकादिभिन्नमुकुरादिभेदवदिति शेषः। विकल्पविधुरं भेदरहितं।
तेषां त्रयाणां अग्निसूर्य्यसोमानां व्यधिकरणे षष्ठा।
वर्णानां प्रागुक्तानां पञ्चदशे पटले अकारादीत्यादिना
चतुःषष्टितमेन श्लोकेनाभिप्रेतत्वेनाक्तानां।
द्वाभ्यामग्निसूर्यसोमात्मकवर्गवर्णत्रयान्यतमाभ्यां
अन्यतमं वर्णवर्गा तैः वक्ष्यमाणक्रमेण पुटितैः। एतदुक्तं
भवति पञ्चदशपटलोक्तानां
सूर्य्यसोमात्मककुलासनरेखात्रयात्मकत्रयाभिप्रेतानां वर्णानां
मध्ये सोमात्मकषोडशस्वरवर्णैः
सूर्य्यात्मकककारादितकारान्तषोडश
वर्णवर्गष्वग्न्यात्मकथकारादिसकारान्तषोडशवर्णवर्ग
चान्यतमाभ्यां वर्गाभ्यां द्वितेजोमयाभ्यां

तत्तदितरतेजोमयवर्गावण वक्षमाणक्रमात्तैस्तैवर्णैः पुटिताभिः

ज्ञातृज्ञानज्ञेयात्मिकाभिः षोडशभिः प्रोक्त निर्विकल्पे स्वतेजसि

वक्ष्यमाणक्रमेण जुहुयादिति ॥ ५५ ॥

पुटितानित्यादिभिः सममित्यन्तैः पञ्चभिः श्लोकैः

प्राणाग्निहोत्रमन्त्रादिकमुपदिशति । अत्र भानुहृद्वर्णैः कुलासने

सूर्यात्मकरेखास्थककारादितकारान्ताः

p. 589) वह्निभानुपुटान्तःस्थैश्चान्द्रैस्तद्वद्धुनेत् क्रमात् ।

चन्द्रभानुपुटान्तःस्थैर्व्वह्नयर्णैर्जुहुयात्तथा ॥ ५७ ॥

भानुचन्द्रपुटान्तःस्थैर्व्वह्नयर्णैर्जुहुयात्तथा ।

चन्द्रवह्निपुटान्तःस्थैर्भान्वर्णैर्जुहुयादपि ॥ ५८ ॥

वह्निचन्द्रपुटान्तःस्थैरपि तद्वद्धनेत्ततः ।

तथा तेषां प्रातिलोम्यात् षोडशानां हुनेदपि ॥ ५९ ॥

षोडश भानुवर्णाः । हृदिति सकारः । तदासने

वह्निरेखास्थानामाग्नेयाक्षराणां प्रतिलोमक्रमात् सकारस्य

प्रथमभवितया तद्वाचकरूपहृच्छब्देन तदादिथकारान्ता

वह्निरूपाः षोडशवर्णा उच्यन्ते । तस्मात् ककारादितकारान्तैः

षोडशभिर्भानुवर्णैः सकारादिथकारान्तैर्व्युतक्रमात्

षोडशभिरग्निवर्णैश्च। स्वरान् तत्कुलासने

सोमात्मकरेखास्थानकारादींश्चन्द्रात्मकान्। तारेण प्रणवेन

हुङ्कृतैरित्यत्र हुङ्कारस्यार्थो गुरुमुखादवगन्तव्यः।

निश्चलाशयः अनन्यमनाः तन्मन्ता यथा क असौं, ख आषौं इत्यादयः त

अःथौं इत्यन्ताः षोडश। वह्नि भानुपुटान्तःस्थैः

थकारादिसकारान्तानामनुलोमानां ककारादितकारान्तानां

प्रतिलोमानां वर्णानां पुटान्तःस्थैश्चान्द्रैः स्वरैः। तद्वत्

प्रणवन हुङ्कृतैरित्यर्थः। क्रमात् अकारादिविसर्जनायान्तक्रमात्।

तन्मन्त्रा यथा थ अतौं द आणौं इत्यादयः स अःकौं इत्यन्ताः षोडश।

चन्द्रभानुपुटान्तःस्थैः अकारादि विसर्जनीयान्तानां

सौम्यषोडशवर्णानां तकारादिककारान्तानां

भानुषोडशवर्णानां पुटान्तःस्थैर्वह्न्यर्णैः

थकारादिसकारान्तैः। तथा तारेण हुङ्कृतैरिति यावत्। तन्मन्त्रा यथा

अथतौं आदणौं इत्यादयः अःसकौं इत्यन्ताः षोडश।

भानुचन्द्रपुटान्तःस्थैः ककारादितकारान्तानां भूनुवर्णानां

विसर्जनीयाद्यकारान्तानां चन्द्रवर्णानां पुटान्तःस्थैर्वह्न्यर्णैः

थकारादिसकारान्तैः। तथा प्राग्वत्तारेण हुङ्कृतैः। तन्मन्त्रा यथा

कथः ॐ खदं ॐ गधौ ॐ इत्यादयः तस ॐ इत्यन्ताः षोडश।

चन्द्रवह्निपुटान्तःस्थैः स्वराणां अकारादिविसर्जनीयान्तानां

सकारादिथकारान्तानां च पुटान्तःस्थैः। भान्वर्णैः

ककारादितकारान्तैः। अप्या तारेण हुङ्कृतैः इत्यनुकृष्यते। तन्मन्त्रा

p. 590) एवं द्द्वादशधा होममक्षरैः स्यादुदीरितैः।

कृत्वा तद्वाच्यमखिलमर्थरूपञ्च तैः समम्॥ ६० ॥

तेजस्त्रयात्मरूपं स्यादावयोरपि तद्वपुः।

अन्यानि चावयोरिच्छागृहीतानि वपूंषि वै॥ ६१ ॥

तान्यन्यदेवतादेहसम्यगिच्छावशानि च।

मुक्तिश्च तन्मयीभावस्थैर्य्यमेव समीरितम्॥ ६२ ॥

यथा अकसौँ आकषौँ इत्यादयः अःतथौँ इत्यन्ताः षोडश।

वह्निचन्द्रपुटान्तस्थैः थकारादिसकारान्तानां

विसर्जनीयाद्यकारान्तानाञ्च पुटान्तःस्थैः। तद्वत्तारेण हुङ्कृतैः।

अप्या ककारादितकारान्तैः भान्वर्णैः। तन्मन्त्रा यथा थकः ॐ

दखं ॐ इत्यादयः सत ॐ इत्यन्ताः षोडश। एवमुक्तप्रकारेण

षड्विधप्रकारप्रोक्तभेदानां मन्त्राणां तारेण

चतुरक्षरात्मकत्वे सत्यपि सम्प्रदायेन ते कृतसन्धिका एव लिखिताः।

तेषां षड्विधभेदप्रकारप्रोक्तानां प्रातिलोम्यात् षोडशानां

षोडशमन्त्राणामिति शेषः। एवमनुलोमविलोमाभ्यां। होमं

दिव्यत्वात् होमः स्यादित्यर्थः। अक्षरैस्तेजस्त्रयात्मभिरिति शेषः।

उदीरितैः प्रोक्तेषु द्विनवत्युत्तरशतरूपेष्वभीष्टैः षोडशभिर्मन्त्रैः

। अखिलं ज्ञातृज्ञानज्ञेयात्मकं।

तैर्ज्ञातृज्ञानज्ञेयात्मभिर्वाचकरूपैः त्रिभिस्त्रिभिरक्षरैः समं

तदपृथग्रूपं। एतदुक्तं भवति एवं प्रोक्तेषु द्वादशसु

भेदेष्वभीष्टभेदमन्त्ररूपैस्त्रितय

ज्ञानमयैर्वाचकरूपैस्त्रिभिस्त्रिभिरक्षरैस्तत्तत्तेजस्त्रयात्मकं

वाच्यमखिलमर्थरूपमपृथग्रूपं कृत्वा

मूलाधारस्थनिर्विकल्परूपमात्ममहावह्नौ होमः स्यादिति॥ ६०॥

तेजस्त्रयेत्यादिना समीरितमित्यन्तेन श्लोकद्वयेन शक्तिशिवयोः

याथात्म्य स्वरूपस्य तेजस्त्रयात्सकत्वमितरं

पाञ्चभौतिकविग्रहस्वेच्छागृहीतात्मकत्वं मुक्तिस्वरूपञ्चोपदिशति

। तत्र आवयोः शक्तिशिवयोः। तद्वपुः अनश्वरं वपुः। अन्यानि

पाञ्चभौतिकानि। आवयोः प्राग्वत्। तन्मयीभावस्थैर्य्यं

प्रोक्ततेजस्त्रयतादात्म्यभावस्थैर्य्यम्॥ ६२॥

p. 591) तत्र कुण्डलिनीं ब्रूहि स्फुटं मे परमेश्वर।

तां वदामि शृणु प्राज्ञे रहस्यं परमाद्भुतम्॥ ६३॥

मूलाधारस्थवह्न्यात्मतेजोमध्ये व्यवस्थिता ।

जीवशक्तिः कुण्डलाख्या प्राणाकारेण तेन सा ॥ ६४ ॥

प्रसुप्तभुजगाकारा त्रिरावर्त्ता महाद्युतिः ।

मायाशीर्षा नदन्ती तामुच्चरन्त्यनिशं स्वगे ॥ ६५ ॥

सुषुम्नामध्यदेशे सा यदा कर्णद्वयस्य तु ।

पिधाय न शृणोत्यस्या ध्वनिं तस्य तदा मृतिः ॥ ६६ ॥

एवं सा जीवशक्तिस्तु यदा कुण्डलिनीस्थितिम् ।

विहाय ऋजुतां याति स्वेच्छादण्डाहता सती ॥ ६७ ॥

तदा विश्वप्रतीतिः स्यात् प्राणिनामन्यदा पुनः ।

निशान्धकारे भुवनस्थितिवत् स्वात्मनः स्थितिः ॥ ६८ ॥

तत्रेत्यादिना श्लोकपूर्वार्द्धेन कुण्डलिनीस्वरूपं देवी पृच्छति ।

तत्र स्फुटं सुस्पष्टं । तामित्यादिना श्लोकोत्तरार्द्धेन

कुण्डलिनीस्वरूपकथनं प्रस्तौति । तत्र तां कुण्डलिनीं । रहस्यं

देशिककटाक्षादृते ज्ञातुमशक्यत्वात् । परमाद्भुतम्

ज्ञानात्मकत्वात्तादात्म्यात्मकत्वाच्च ॥ ६३ ॥

भूलाधारेत्यादिभिः साधक इत्यन्तैः षड्भिः श्लोकैः
कुण्डलिनीस्वरूपं तदनुभावञ्चोपदिशति। तत्र तेन प्राणाकारेण। सा
कुण्डलिनी। महाद्युतिः विश्वप्रकाशकत्वात्। मायाशीर्षा
विसर्जनीयशीर्षा। तां मायां उच्चरन्ती तदात्मना ऊद्ध्वोद्ध्वं
सञ्चरन्ती। स्वगे इत्येतदुत्तरत्र सुषुम्नामध्यदेशे इत्यस्य विशेषणं।
सा कुण्डलिनी। तदा अत्यासन्नतः। एवमुक्तरूपा। तुर्विशेषे। ऋजुतां याति
भूलाधाराद्विनिर्गत्य तदुपरि श्रोत्रादीन्द्रियगामिनी।
स्वेच्छादण्डाहता स्वेच्छाप्रेरणापर वशा। अन्यदा तस्यां
प्रसुप्तभुजगाकारतया स्थितायां। निशान्धकारे भुवनस्थितिवत्
अप्रकाशतया। एतदुक्तं भवति यदा स्वात्मस्फुरत्तारूपिणी
बुद्ध्यात्मिका कुण्डलिनी शक्तिः मूलाधारात् प्रसुप्तभुजगाकारतां
विहाय स्वेच्छाप्रेरिता

p. 592) एवं तां वेत्ति यो देहे देशिकादेशदर्शिताम्।
स वेत्ति ब्रह्म परमं मां त्वामपि च साधकः॥ ६९॥

जीवन्मुक्तः स विज्ञेयः शुद्धात्मासक्तमानसः।
अस्पृष्टपुण्यपापश्च शोकहर्षातिभूमिगः॥ ७०॥

रागद्वेषविनिर्मुक्तस्त्यक्तसर्वक्रियाफलः।

निरुपाधिकसन्तुष्टः स्वेच्छाधीनेच्छया युतः ॥ ७१ ॥

स्वदेहमात्रयात्रश्च समश्च स्तुतिनिन्दयोः ।
समारिमित्रकल्याणगुणशीलदयान्वितः ॥ ७२ ॥

एवं स कथितो जीवन्मुक्तो लोकेषु साधकः ।
इतरः पूजने देव्या भजने च सकौतुकः ॥ ७३ ॥

कालेन सिद्धिभाग्भूयादितरो दुःखभाजनम् ।
जन्मभिर्व्वहुभिः क्लिष्टो मूर्खो विद्याधनोद्भवैः ॥ ७४ ॥

उर्द्ध्वं गता व्याप्ता विलदेहात्तत्तदिन्द्रियद्वारा विनिर्गत्य विश्वं
कबलीकरोति तदा विश्वप्रतीतिर्भवति । पुनः स्वेच्छया यदा मूलाधारे
सा प्रसुप्तभुजगाकारमात्रस्वरूपतां याति तदा निशास्वन्धकारे
भुवनस्थितिवत् तद्विश्वप्रतीतिः न स्यादिति । एवं प्रकाशकरीं । तां
कुण्डलिनीं । देशिकादेशदर्शितां देशिकोपदेशदर्शितां । मामपि
शिवं शक्तिञ्च त्वाम् ॥ ६९ ॥
जीवन्मुक्त इत्यादिभिः साधक इत्यन्तैरध्यर्द्धैस्त्रिभिः
श्लोकैर्जीवन्मुक्तलक्षणमुपदिशति । तत्र असक्तमानसः इति पदच्छेदः ।
शोकहर्षातिभूमिगः शोकहर्षयोरपि पारं गतः ।

निरुपाधिकसन्तुष्टः स्वभावसन्तोषयुक्तः। स्वेञ्छाधीनेच्छया युतः अपरप्रेरितबुद्धिः। समारिमित्रः रागद्वेषाभावात्। जीवन्मुक्तः जीवन्नेव मुक्तः परमार्थतः स्वात्मनीन्याद्यभावादित्यर्थः॥ ७२॥

इतर इत्यादिना योनिष्वित्यन्तेनार्द्धाद्यन्तेन श्लोकेनोक्तज्ञानरहितस्यापि देव्यर्चनात् कालेन तत्सिद्धिः भक्तितः तदर्चनादिरहितस्य प्रत्यवायञ्चोपदिशति।

p. 593) मुदैरुन्मत्तचित्तः सन्नधोधो याति योनिषु।
नित्यासु भक्तिर्भुवने प्रक्षीणे पापकर्म्मणि॥ ७५॥

जायते यद्बलाल्लोके भवेत् प्रगुक्तलक्षणः।
नरो भवन्ति तां भक्तिं प्राप्य लोकेषु देवताः॥ ७६॥

दृश्यन्ते भानुचन्द्रारबुधजीवसितासिताः।
अन्ये च लोकपालाद्यास्तद्भक्तिप्राप्तसम्पदः॥ ७७॥

बहुना किं परं देवि नित्याभिः सदृशानघे।
न सन्ति देवता विद्यास्तस्मात्ता एव सर्व्वदा॥ ७८॥

भावयाम्यहमद्यापि त्रिकाले विग्रहान्वितः।

* * * * * * त्मान स्थिरो देह जीवकः।

बहुकालसमाभ्यासात् स्थिरो भवति शाश्वते॥

पश्चान्नास्ति रुजो देहे वार्धक्यं नैव दृश्यते।

सिद्धः सर्वगुणोपेतो नानाछ्नैरुप स्थितः।

गुप्त लिङ्गी सदाकाले वर्तते वनमध्यतः॥

सुतनुर्वितनुः क्वापि प्राणिनां प्रविभासते।

अतर्क्य महिमा यस्मात्तस्मात्तं नावमानयेत्॥

अश्रद्धधानः पापात्मा नास्तिको भिन्न संशयः।

हेतुको बकवृत्तिश्च तेषां योगी न गोचरः॥

तस्य लीलां न जानन्ति निन्दां कुर्वन्ति येधमाः।

योगीश्वरस्य पापिष्ठाः पतन्ति नरके ध्रुवम्॥

जनोपि योगिनां देहे वितर्कं नैव कारयेत्।

क्रीडन्ति लोकमध्ये तु यथा वै प्राकृतो नरः॥

योगीश्वरस्य योगस्य योगशास्त्रस्य पार्वति।

निन्दां च ये प्रकुर्वन्ति राक्षसास्तेन राक्षसः॥

पाषण्डिनः पापरताः स्वधर्म विमुखास्तुते।

यैश्चावमानितोयोगी तेषां त्राता न भूतले॥

आयुः कान्तिर्यशः पुण्यं नश्यन्ते तस्य सुव्रते।

यस्य योगे मतिर्दुष्टा जायते मोक्षरूपिणी॥

स्वधर्म प्रतिकूलोयो योगस्तस्य न रोचते।

सोपि गर्भो भवेद्दुःखं भुंजते च निरन्तरम्॥ १० ॥

* * * * * * * * * * * * *

* * * *।

* * * * * * * * * * * * *

संकृते॥

प्।३)

चतुराशीति लक्षे तु आसनेषूत्तमा शृणु।

आदि नाथेन संप्रोक्तं पद्मासनमिहोच्यते॥

उत्तानौ चरणौ कृत्वा ऊरू संस्थौ प्रयत्नतः।
ऊरुमध्ये तथोत्तानौ पाणी कृत्वा ततो दृशौ॥

नासाग्रे विन्यसेत्प्राज्ञः दन्तमूलञ्च जिह्वया।
उत्तभ्य चुबुकं वक्षे संस्थाप्य पवनं शनैः॥

इदं पद्मासनं प्रोक्त सर्वव्याधि विनाशनम्।
दुर्लभं येन केनापि धीमता लभ्यते भुवि॥

सांकृते शृणु तत्वज्ञ योगाभ्यासक्रमं मया।
वक्ष्यमाणं प्रयत्नेन योगानाञ्च सलक्षणैः॥

युवा वाप्यति वृद्धो वा व्याधितो वा शनैः शनैः।
अभ्यासात् सिद्धिमाप्नोति सर्वयोगेष्वतन्द्रितः॥

ब्रह्मणा श्रमणोवापि बौद्धो वा पतितोपि वा।
कापालिको वा चार्वाकः श्रद्धया सहितः सुधीः॥

योगाभ्यासरसोनित्यं सर्वसिद्धिमवाप्नुयात्।
क्रिया युक्तस्य सिद्धिः स्यादक्रियस्य कथं भवेत्॥

न शास्त्र पाठमात्रेण योगसिद्धिः प्रजायते ॥

मुण्डी वा मण्डधारी वा काषाय वसनोपि वा ।
नारायण परो वापि जटिलो भस्म लेपनः ॥

नमः शिवाय वाक्यो वा बाह्यार्चा पूजकोपि वा ।
स्थान द्वादश पूराक्षमाला बहु विभूषितः ॥

क्रियाहीनोथवा क्रूरः कथं सिद्धिमवाप्नुयात् ।
सवेष धारणं सिद्धि कारणं तञ्च तत्कथम् ।
क्रियैव कारणं सिद्धेस्सत्यमेच्च सांकृते ॥

शिश्नोदरार्थ योगश्च कथयं योगधारणः ।
अनुष्ठान विहीनास्तु वञ्चयन्ति जनाः किल ॥

प् । ४)

उच्चावचा विप्रलंभामूढा योगपरायणाः ।
शनैस्तान् तद्विधाज्ञात्वा योगाभ्यास विवर्जितान् ॥

कृत्वार्थ वञ्चने नैव वर्जयेद्वेषधारिणः ।
यदस्ति विघ्न भूतानि योगाभ्यासस्य सर्वदा ॥

वर्जयेत् तद्विशेषेण ईदृशान् सिद्धिजाः क्रियाः।
प्रथमाभ्यासकाले तु प्रमादा विविधा मुने॥ १६॥

आलस्यं प्रथमो विघ्नो द्वितीयस्तु प्रकथ्यते।
पूर्वोक्तधूर्त गोष्ठी च तृतीयोमन्त्रसाधनम्॥

चतुर्थो धातु वादश्च कक्ष्यावादस्तु पञ्चमः।
इत्येवं बहवो विघ्नाः मृगतृष्णा समामुने॥

स्थिरासनस्य जायन्ते तान् ज्ञात्वा सन्त्यजेत् सुधीः।
प्राणायामं ततः कुर्यात् पद्मासनगतः स्वयम्।
सुशोभनं मठं कुर्यात् सूक्ष्मद्वारञ्च निर्व्रणम्॥

सुष्ठु लिप्तं गोमयेन सुधया वा प्रयत्नतः।
मत्कुणैः मशकैर्लूतैर्वर्जितञ्च दिने दिने॥

संमृष्टं संमार्जन्या * * * * * न तन्द्रितः।
वासितञ्च सुगन्धेन धूपितं गुग्गुलादिभिः।
मलमूत्रादिभिर्वेगैरष्टादशभिरेव च॥

वर्जितश्चान्न सम्पन्नं कबलादिन संयुतम्।
नात्युन्नतं नातिनी चं परसङ्ग विवर्जितम्॥

तस्मिन् मठे समास्तीर्य ह्यासनं निस्तरङ्गकम्।
तत्रोपविश्यमेधावी पद्मासन समन्वितः।
ऋजु कायः प्राञ्जलिश्च प्रणम्याभीष्ट देवताः॥

ततो दक्षिणहस्तस्याङ्गुष्ठे नैव पिङ्गलाम्।
निरुध्य पूरयेद्वायुमिडया तु शनैः शनैः॥

यथा शक्त्या निरोधेन ततः कुर्याच्च कुम्भकम्॥

पृ। ५)

पुनस्त्यजेत् पिङ्गलया शनैरेव न वेगतः।
पुनः पिङ्गल्या पूर्य पूरयेदुदरं शनैः॥

धारयित्वा यथा शक्तिरेचयेदिडया शनैः।
यथा त्यजेत् यथा पूर्य धारयेदनिरोधनः॥

एवं प्रातः प्रकूर्वीत शक्त्या विंशति संख्यया।
कुम्भकः सहितो नाम सर्वग्रह विवर्जितः॥

एवमेवार्ध रात्रेपि पुनर्विंशति कुम्भकान्।
कुर्वीत रेचपूराभ्यां सहितं प्रति वासरम्॥

सहितो रेचपूराभ्यां तस्मात्सहित कुम्भकः।
एवं मासत्रयं कुर्यान्नाडीशुद्धिस्ततो भवेत्॥

यदा तु नाडिशुद्धिः स्यात् तदा चिह्नानि बाह्यतः।
जायन्ते योगिनो देहे तानि वक्ष्याम्यशेषतः॥

शरीर लघुतादीप्तिर्वह्नेर्जठर वर्तिनः।
कृशत्वं च शरीरस्य तदा जायेत निश्चितम्॥ १७॥

तथा भोज्यानि वक्ष्यामि क्षिप्रं योग प्रसिद्धये।
क्षीरं घृतञ्च मिष्टान्नं मिताहारञ्च शस्यते॥

पूर्वोक्त काले कुर्याच्च पवनाभ्यासमेव च।
ततः परं यथेष्टं तु शक्तिः स्याद्वायुधारणे॥

यथेष्ठ धारणाद्वायोः सिद्ध्येत् केवल कुम्भकः।
केवले कुम्भके सिद्धे रेचपूर विवर्जिते॥

न तत्र दुर्लभं किञ्चित् त्रिषु लोकेषु विद्यते।
प्रस्वेदो जायते पूर्वं मर्दनं तेन कारयेत्॥

ततोपि धारणाद्वायोः क्रमेणैव शनैः शनैः।
क पा भवति देहस्य आसने तस्य योगिनः॥

ततोधिकतराभ्यासाद्दुर्दरो जायते ध्रुवम्।
यथा च दद्द्रुरोद्धोषमुत्पत्योत्पत्य भूतले॥

पृ। ६)

पद्मासन स्थितो योगी तथा च गति भूतले।
ततोधिकतराभ्यासाद्भूमिस्त्यागश्च जायते॥

पद्मासनस्थ एवासौ भूमिमस्पृश्य वर्तते।
निराधारो विचित्रं हि तथा सामर्थ्यमाप्नुयात्॥

अभुक्त्वा यदि वा भुक्त्वा योगी न व्यथते तथा।
अल्पमूत्र पुरीषः स्यात् स्वल्पनिद्रा च जायते।
कीटका दूषिता लाला स्वेदो दुर्गन्धताननें॥

एतानि सर्वदा तस्य न जायन्ते ततः परम्।
ततोधिक तराभ्यासात् बलमुत्पद्यते भृशम्॥

येन भूचरसिद्धिस्स्याद्भूचरणां जये क्षमः।
व्याघ्रो लुलायो वन्यो वा गवयो गज एव वा॥

सिंहो वा योगिना तेन म्रियते नात्र संशयः।
* * र्पस्य समोरूपः तदा तस्यैव योगिनः॥

तस्मिन् काले महाविघ्नो योगिनः स्यात् प्रमादतः।
तद्रूप वशगानार्य कासृ?क्षन्ते तस्य सङ्गमम्।
यदि सङ्गं करोत्येव बिन्दुस्तस्य विनश्यति॥

आयुः क्षयो बिन्दु हानि रसामर्थ्यञ्च जायते।
तस्मात् स्त्रीणां वर्ज्य सङ्गं कुर्यादभ्यासमादरात्॥

योगिनोङ्गे सुगन्धः स्यात् सततं बिन्दुधारणात्।
तस्मात् सर्व प्रयत्नेन बिन्दुरक्षा हि योगिनः।
ततो रहस्युपाविष्टः प्रणवं प्लुतं मात्रया॥

जपेत् पूर्वार्जितानाञ्च पापानां नाशहतवे।
सर्व विघ्न हरश्चायं प्रणवस्सर्व दोषहा॥

एवमभ्यास योगेन सिद्धिरारंभ संभवा।
भवेत्ततो घटावस्था पवनाभ्यासतस्सदा॥

प्राणापानो मनोवायुर्जीवात्म परमात्मनोः।

अन्योन्यस्या विशुद्धैनैकतां घटे यतः।
तस्माद् घटाख्यायावस्था प्रसिद्धा योगिनः स्मृता॥

तत्र चिह्नानि यानि स्युस्तानि वक्ष्याम्यशेषतः।
पूर्वं चत्कथिताभ्यास चतुर्थात्संपरित्यजेत्॥

दिवा वा यदि वा रात्रौ याम मात्रं समभ्यसेत्।
एकवारं पृ कुर्यात् केवल कुम्भकम्।
प्रत्याहारो यमेनस्या देव कर्तुं हि योगिनः॥

इन्द्रियाणीन्द्रियार्थेभ्यो यः प्रत्याहरति स्वयम्।
योगीकुम्भकमास्थाय प्रत्याहारः स उच्यते॥

यद्यत् पश्यति चक्षुर्भ्यां तंतमात्मेति भावयेत्।
यद्यच्छ्रुणोति कर्णाभ्यातंतमात्मेति भावयेत्॥

यद्यज्जिघ्रति नासायां तंतमात्मेति भावयेत्।
जिह्वया यद्रसयतितंतमात्मेति भावयेत्॥

त्वचा यत् स्पृश्यते योगी तंतमात्मेति भावयेत्॥

एवं ज्ञानेन्द्रियाणाञ्च तत्तत्संख्याञ्च भावयेत्।

याममात्रं प्रतिदिनं योगी यत्नादतन्द्रितः॥

ततो विचित्रसामर्थ्यं जायते योगिनो भृशम्।
दूरदृष्टिर्दूरश्रुतिः क्षणाद्दूरा गमस्तथा।
खेचरत्वं हि जायेत सन्तताभ्यास योगतः॥

तथा बुद्धिमतां भाव्यं योगिनां योगसिद्धये।
एते विघ्ना महासिद्धेर्नरमेत्तेषु बुद्धिमान्॥

न दर्शयेच्च लोकाय स्वसामर्थ्यं हि सर्वदा।
कदाचिद्दर्शयेत् प्रीत्या भक्ति युक्ताय वा पुनः॥

यथा मुक्तो यथा मूढो यथा बधिर एव वा।
तथा वर्तेत लोकेषु स्वसामर्थ्यस्य गुप्तये॥

पृ। ८)

नोचेच्छिष्य बहवो भवन्त्येव प्रियङ्कराः।
स्वस्वकार्येषु योगीन्द्रं प्रार्थयन्ति न संशयः॥

तत्कर्मकारणात्युग्र स्वाभ्यासो विस्मृतो भवेत्।
अभ्यासेन विहीनस्तु ततो लौकिकतां व्रजेत्॥

अविस्मृत्य गुरोर्वाक्यमभ्यसेत् तदहर्निशम्।
एवं भवेद् घटावस्था सतताभ्यासयोगतः॥

अनभ्यासेन तच्चैव वृथा गोष्ठ्यो न सिद्ध्यति।
तस्मात् सर्व प्रयत्नेन योगमेव समभ्यसेत्।
ततः परिचयावस्था जायते भ्यास योगतः॥

वायुः परिचितो यस्मात् अग्निना सहकुण्डलीम्।
बोधयित्वा सुषुम्नायां प्रविशेदविरोधतः॥

वायुना सह चित्तञ्च प्रविशेच्च महापथम्।
महापथ श्मशानं च सुषुम्नाप्येकमेव हि।
नाम्ना मंतान्तरे भेदः फलभेदेन विद्यते॥

वर्तमानं भविष्यञ्च भूतासन्नैव वेष्ठियम्।
यस्य चित्रं सवपनं सुषुम्नं प्रविशेदिह॥

भाव्यान्यर्थानि विज्ञेया योगोरहस्ति यत्नतः।
पञ्चवाधारणं कुर्यात् तत्तद्भूत भयापहाम्॥

नाभेरधो गुदस्योर्ध्वं घुटिका पञ्चधारयेत्।
वाय्वो लभते पृथ्वी धारणात् तद्भयापहा॥

पृथिवी संभवो मृत्युर्न भवेदस्य योगिनः।

इति पृथ्वी धारणा॥

नाभिस्थान ततो वायुः धारयेत् पञ्च नाडिकाः॥

अग्नि यथा विधन्न मृत्युस्तस्य वह्निना।
नदह्यतश्शरीरञ्च प्रतिष्ठेदग्नि मण्डल इत्यग्नि धारणम्॥

नाभि भ्रूघ्राण मध्ये तु प्रदेश त्रयसंमिते।
धारयत् पञ्चघटिकां वायुशेषा हि वायवि॥

पृ। ९)

धारणान्न तु वाय्वोस्तु भयं भवतु योगिनः॥ इति वायु धारणा॥
भ्रुमध्यादुपरि तु धारयेत् पञ्चनाडिकाः। वायुं योगी प्रयत्नेन
व्ययमाकाश धारणा॥ आकाशधारणं कुर्वन् मृत्युं जयति अद्भुतम्।
यत्र कुत्र स्थितो वापि सुखमत्यन्तमश्नुते॥ इति पञ्च विधां भूतां
भूतधारणां यः समभ्यसेत्। ब्रह्मणः प्रलयेद्यापि तस्य मृत्युर्न
विद्यते॥ समभ्यसेत् तदा ध्यानं घटिका षष्टिमेव च। वायुमारुध्य
चाकारादेवतामिष्टदायिनीम्॥ सगुण ध्यानमेतस्य दणिमादि गुण प्रदम्।
निर्गुणं खमिव ध्यात्वा मोक्षमार्गं प्रपद्यते॥ निर्गुणध्यानमेतञ्च

समाधिञ्च ततो भ्यसेत्। दिनद्वादशकेनैव समाधिं समवाप्नुयात्॥ वायुं निरुध्य मेधावी जीवन्मुक्तो भवेद् दृढम्। समाधिः समतावस्था जीवात्म परमात्मनोः॥

यदि स्वदेहमुत्सृष्टमिच्छेच्छेदुद्व्रजेत् स्वयम्।
पर ब्रह्मणि लीयन्ते त्यक्त्वा कर्म शुभाशुभम्॥

अचनोचेत् समुत्स्रष्टुं स्वशरीरं यदि प्रियम्।
सर्वलोकेषु विचरेत् दक्षिणमादि गुणान्वितः॥

कदाचित्स्वेच्छया देहो भूत्वा स्वर्गेपि संभवे।
मनुष्यो वापि योषा वा स्वेच्छया पेक्षणाद्भवेत्॥

सिंहो व्याघ्र गजो वा स्यात् इच्छया जन्तुनां व्रजेत्।
यदीष्टमेव धत्ते तु योगी यद्यन्महेश्वरः।
कपि मार्गोयमुक्तस्ते सांस्कृतेष्टांग योगतः॥

ततो भवेद्राज योगोनानान्तरा भवति ध्रुवम्।
न चिन्मात्रेण सिद्धिः स्यात् दभ्यासादेव जायते॥

राज योगपदं प्राप्य सर्वसत्ववशंकर।
सर्वं कुर्यान्नवा कुर्याद्यथा रुचिविशेषयेत्॥

यथा तु राजयोगेन निष्पन्ना योगिनः क्रिय ।
तदा वस्था दिनिष्पन्ना उन्मन्या नन्दरूपिणी ॥

संसिद्धा योगिनश्चास्य भुक्तिमुक्ति प्रदापयेत् ।
सर्वं तु कलितं ब्रह्मन् संस्मृतं योगमाचरेत् ॥ १६ ॥

सर्वसिद्धिमवाप्यास्मद्दत्तात्रेय प्रसादतः ।
यस्तदित्थं पठेन्नित्यं साधुभ्यः कथयेदिति ।
तस्य योग क्रमेणैव सिध्यत्येव न संशयः ॥

पृ। १०)

योगिनोभ्यास संसक्ता अरण्येषु गृहेषु वा ।
बहुकालं रमन्त्येव जनसंघविवर्जिताः ॥

तस्मात्सर्वप्रयत्नेन सांगमेव समभ्यसेत् ॥

योगाभ्यासो जन्म फलं निष्फला इतराः क्रियाः ।
महामाया प्रभावेण सर्वेषामस्तु चित्सुखम् ।
यत्नस्सर्वस्तदायत्तत्तामेवा राधयेत् ततः ॥

इति दत्तात्रेयबोधः समाप्तः ॥

# ॥ शिवयोगदर्पणम् ॥

भ्रुवोर्मध्ये शिवस्थानं मनस्तत्र विलीयते ।
ज्ञातव्यं तद् पदं दिव्यं तत्र कालो न विद्यते ॥ १॥

सूर्याचन्द्रमसोर्मध्ये मुद्रां दद्याच्च खेचरीम् ।
निरालम्बे महाशून्ये ब्रह्मचक्रं व्यवस्थितम् ॥ २॥

तत्त्वं बीजं हठः क्षेत्रमौदासीन्यं जलं त्रिभिः ।
उन्मनी कल्पलतिका सद्य एवोद्भविष्यति ॥ ३॥

अत्याहारः प्रयासश्च प्रजल्पो नियमग्रहः ।
जनसङ्गश्च लौल्यञ्च षड्भिर्योगो विनश्यति ॥ ४॥

उत्साहो निश्चयं धैर्यं तत्त्वज्ञानार्थदर्शनम् ।
जनसङ्गपरित्यागः षड्भिर्योगः प्रसिध्यति ॥ ५॥

हठं विना राजयोगो राजयोगं विना हठः ।
न सिध्यति ततो युग्मं मनीषी तत् समभ्यसेत् ॥ ६॥

न दृष्टिलक्षाणि न चित्तबन्धो न देशकालौ न च वायुरोधः ।
न धारणा ध्यान परिश्रमो वा समेधमानेसति राजयोगे ॥ ७॥

तारकाग्रस्थितं तेजस्तद्बिन्दुस्यूतिर्ते यदि ।
योगं तारकमित्याहुर्योगिनो ब्रह्मवादिनः ॥ ८॥

भालोर्ध्वगोल्लाटविशेषमण्डले
निरन्तरं चिद्गगने महामनाः ।
सतारकं विस्फुरदीक्षणेन
विलोकयेच्चेत् स तु सिद्धिमाप्नुयात् ॥ ९॥

द्वादशाङ्गुलदूरेऽस्मिन् शिरोदेशे महाप्रभे ।
प्रादेशमात्रव्यायामं ज्योतिःपुञ्जं महाद्भुतम् ॥ १०॥

तद्दर्शनेन सततममृतत्त्वं भविष्यति ।
तारकं दुर्भराम्भोधेस्तारकं मोक्षकारकम् ॥ ११॥

अमनस्कात् सिद्धिरस्मादभ्यासेन भवत्यलम् ।
अतिमूढमतिव्यक्तमतिरम्यमनामयम् ॥ १२॥

आत्मस्थानं परं गुप्तं ज्ञायते गुरुवाक्यतः ।
उन्मेषः प्रतिपच्चक्षुरमावास्यास्तलोचनम् ॥ १३॥

अर्धावलोकनं यत् स्यात् पौर्णमासीं वदन्ति ताम् ।
आदिद्वयं परित्यज्य तृतीयन्तु समभ्यसेत् ॥ १४॥

पौर्णिमादृष्टियोगेन स्थित्वा तारकलक्षणे ।
सावधानेन योगीन्द्रस्तिष्ठच्चेत् स सुखी भुवि ॥ १५॥

तालुमूले द्वादशाङ्गुल्यग्रभागस्य मध्यमे ।
पुरतो बाह्यहीनं चेत् तमोरूपं प्रकाशते ॥ १६॥

तन्मध्यभागे चिद्योनिमनोदृष्ट्या निरन्तरम् ।
विलोकयेच्चेत् तत्काले ज्योतिःपुञ्जं महाद्भुतम् ॥ १७॥

अखण्डेन्दुसमाकारं परं चिन्मयात्मकम् । ?
सत्यज्ञानानन्दरूपं महालिङ्गं प्रकाशते ॥ १८॥

जपयोगानभिज्ञस्य मनःस्थैर्यं न जायते ।
गुरूणा शाम्भवी मुद्रा दत्ता चेल्लभते ध्रुवम् ॥ १९॥

वक्त्रे प्राणानिलं पूर्यं वह्निस्थानानिलं तथा ।
आकुञ्चयेद् गलं किञ्चिन्नादो व्यक्तो भविष्यति ॥ २०॥

निस्संशयेन मनसा वर्तते यदि निश्चलः ।
राजयोगीति विख्यातो योगनिद्रासमाश्रितः ॥ २१॥

अश्रुसम्पातपर्यन्तमाचार्यैस्त्राटकं स्मृतम् ।
व्यापारशून्ये मनसि स्थिरयोस्तारयोर्बहिः ॥ २२॥

चान्द्री कला चिदाकाशादाविर्भवति योगिनः ।
समदृष्टिरवाग्दृष्टिरिति ?? त्रिधा ॥ २३॥ ??
काकाक्षिन्यायतस्तत्र सम्यक् स्याद् बिन्दुदर्शनम् ।
मनः पवनयोगेन यावच्छक्तिप्रधानकम् ॥ २४॥

तावन्मात्रन्तु विश्राम्य चिदाकाशं तु लक्षयेत् ।
आकाशे तिष्ठते सूर्यः सर्वयोगेषु गोपितः ॥ २५॥

लक्ष्यैकलग्ने मनसि ह्यमनस्कं प्रजायते ।
समनस्के तु सञ्जाते स्वरूपं सम्प्रजायते ॥ २६॥

॥ इति शिवगोरक्षकृत शिवयोगदर्पणं सम्पूर्णम् ॥

Encoded and proofread by DPD, NA

.. shivayogadarpaNam ..
was typeset using XƎLATEX 0.99996
on July 14, 2017

Please send corrections to *sanskrit@cheerful.com*

अघोरशिवाचार्यकृतव्याख्यासहिता

बुद्ध्यस्मितामनोभ्यो विद्यातो रागतः कलायाश्च।
मायापुंशक्तिभ्यो नादोऽन्यो दृश्यते ध्वनिभ्योऽपि॥ १॥

नादातीतं शिवं नत्वा नादज्ञानप्रसिद्धये।
श्रीरामकण्ठरचितां व्याख्यास्ये नादकारिकाम्॥

अस्मिता अहङ्कारः। ततश्च बुद्ध्यादीनां मायान्तानां तत्त्वानां स्वकार्यैरेव सिद्धेः कार्यान्तरहेतुत्वे च प्रमाणाभावात् पुरुषस्य तच्छक्तेश्चाविकारित्वेन वाक्समवायायोगाद् ध्वनीनां च स्थूलानामुत्पत्त्यपवर्गयोगित्वेन कारणान्तरापेक्षित्वाद् अपिशब्देन तदुद्भूतानां वर्णानां च क्रमभावित्वेनाभिधायकत्वानुपपत्तेस्तत्कारणत्वेन नादो दृश्यते, प्रमाणेन निश्चीयत इत्यर्थः॥ १॥

तथा हि-

श्रोत्रग्राह्या वर्णा उच्चरितध्वंसिनः क्रमस्थितयः।
अपरस्परोपकारादविशिष्टा नार्थवाचका युक्ताः॥ २॥

ननु पदान्येव तावत्प्रकृतिप्रत्ययविभागेनार्थप्रतीतिकारणानि भवन्तु, वाक्यमे(व) वा विशिष्टक्रियाकाराकान्वयं (रकान्वितं) तद्धेतुत्वेनास्तु, अत आह-

न च वर्णव्यतिरिक्तं  पदमन्यच्छ्रूयतेऽथ वाक्यं वा।

पदवाक्यैकदेशभूतानां वर्णानां क्षणविध्वंसित्वेन परस्परोपकारकत्वाभावस्योक्तत्वात्, तद्यतिरिक्तयोश्च पदवाक्ययोर्भेदेनादर्शनान्न तयोरप्यभिधायकत्वमिति प्रत्यक्षनिराकृतत्वेनानुमानेनापि न तयोः सद्भाव इत्याह

यच्चाक्षमिति निषिद्धं तत्सदिति निषिध्यतेऽन्यतो ज्ञातुम्।

एतदेवाशङ्कापूर्वकं प्रपञ्चयति-

गौरिति नामादिपदं श्रोत्रग्राह्यं सदस्ति चेन्नैवम्।
न गकारौकारविसर्जनीयबाह्यं यतोऽन्यदत्रास्ति॥ ४॥

नामादीत्यादिग्रहणाद् रक्तेत्यादिविशेषणपदम्, गच्छतीत्यादिक्रियापदं च गृह्यते॥ ४॥

ततश्च-

तेषां युगपदभावात् परोपलम्भे न पूर्वयोर्भावः।
प्राप्ताद्विसर्जनीयात् खुरकम्बललक्षणा न चिद्यक्तिः॥ ५॥

चिद्यक्तिरर्थसंविदुदयः। केवलाद् विसर्जनीयात् सास्नादिप्रतिपत्तौ अश्वः, पुरुषः इत्यादावपि स्यादिति भावः॥ ५॥

नन्वस्तु केवलाद् विसर्जनीयान्नार्थबुद्धिः, पूर्ववर्णजनितसंस्कारयुक्तात्तु भवेदेव, यतो वर्णानां क्षणविध्वंसेऽपि न तत्संस्कारनाशः, कालान्तरे स्मृतिदर्शनादित्याशङ्कते-

अथ चेद् विसर्जनीयात् पूर्वाक्षरजातसंस्कृतिसहायात्।
इष्टैव वाच्यबुद्धिरविशिष्टाद् या न संभवति॥ ६॥

परिहरति-

नैतत् संस्कारा अपि यैर्बुद्धौ पूर्वमाहितास्तेषु।
विज्ञानहेतवः स्युर्न ततोऽर्थे धीः प्रकल्प्यते येन॥ ७॥

संस्कारा हि यैरेव पूर्वानुभूतैरर्थैर्बुद्धावारोपिताः, तेष्वेव घटादिषु

स्मृतिहेतवो दृष्टाः, नाननुभूतेषु घटादिषु। ततोऽत्रापि यैर्वर्णैस्ते बुद्धावाहितास्तेष्वेव ज्ञानहेतवो युक्ताः, नार्थ इति पदस्य वाक्यस्य वा नार्थप्रतिपादकत्वं संभवति। यदाहुः संस्काराः खलु यद्वस्तुरूपप्रख्याप्रभाविताः। विज्ञानहेतवस्तत्र ततोऽर्थे धीर्न कल्प्यते॥ इति। स्मर्यमाणानुभूयमानवर्णसमूहात्मकं पदमभिधायकमिति चेत्, तन्न, स्मर्यमाणानां प्रदीपानामर्थप्रकाशकत्वादर्शनात्।

ननूक्तवद्वर्णानामर्थप्रतिपादकत्वासंभवात् तदन्यथानुपपत्त्या तदभिव्यङ्ग्योऽन्य एवाविनिर्भक्तो मायूराण्डरसवदनेकवर्णावभासकःक्रम एव पदात्मा पदव्यतिरिक्तश्च वाक्यस्वभावः समस्तस्य जगतो युगपत्क्रमेण वाऽर्थप्रतीतिहेतुत्वाद् व्यापको नित्यश्च स्फोटोऽभ्युपगन्तव्यः, यतः स एव व्यवहर्तॄणामर्थं स्फुटयतीति वैयाकरणाः। तदेतन्नोपपद्यते, तथाहि तत्र यत्तावदुक्तं वर्णव्यतिरिक्तः स्फोट इति, तदयुक्तम्, न वर्णव्यतिरेकेण तस्य स्फोटस्य तद्ग्राहकयोर्मध्ये स्थितिरुपपद्यते। यतः स हि वर्णेभ्यो भिन्नो वा स्यादभिन्नो वा ? न तावद्भिन्नः, वर्णव्यतिरेकेण तस्योपलब्धिलक्षणप्राप्तस्यानुपलब्धेः, शशविषाणादेरिव। न चानुमानात् स्थितिरुपपद्यते, तस्य प्रत्यक्षनिराकृतत्वात्। न चोपलब्धिप्राप्तत्वं तस्यासिद्धमिति वक्तव्यम्, ज्ञापकत्वात्। कारको हीन्द्रियादिः शक्त्यैवाज्ञातोऽपि कार्यं जानाति करोति, संस्कारवद्बीजादिवच्च। ज्ञापकस्याक्षिनिकोचादेरिव ज्ञापकत्वस्यासंभवान्नानुमानादनवस्था। नाज्ञापकश्च स्फोटोऽभ्युपगन्तव्यः, अक्षिनिकोचादिवदग्रतः संबन्धस्याज्ञापकत्वादिति कथमसाविन्द्रियादिवदनुपलभ्यो

विकल्पयितुं शक्यते। यदाऽभिन्नः, तदा वर्ण एव स्फोटः, न तु तेभ्यो भेदेनावस्थित इति हस्तः कर इतिवत् स्फोटो वर्ण इति समा श्रुतिः, एकार्थाभिधानात्। ततो न तद्भेदादत्रार्थभेदः। तेन चार्थबुद्धिरुपपद्यते। यदप्युक्तं वर्णव्यङ्ग्य इति, तदप्ययुक्तम्, स्फोटो

हि बहुभिर्वर्णैरभिव्यक्तोऽर्थप्रतीतिहेतुः, स्यात्, एकैकेन वा ? यदि बहुभिरभिव्यङ्ग्यः, तदा तेषामुच्चरितध्वंसित्वेन विसर्जनीयकाले गकारौकाराभावान्न विसर्जनीयमात्रात् तदभिव्यक्तिरिति पूर्वोक्तो दोषः। अथ पूर्वसंस्कारसहितोऽन्त्यो वर्णस्तद्व्यञ्जक इष्यते, तत्रापि स एव दोष इति केन हेतुनाऽत्यन्ताप्रसिद्धः स्फोटः कल्प्यते। अथ द्वितीयः, गकारादिना गोगवयगगनादिस्फोटानां बहूनामभिव्यक्तितो विशेषाभावादनेकार्थप्रतिपत्तिप्रसङ्गः। किञ्च, विभुत्वे चास्यैकपुरुषोच्चारितैर्वर्णैरभिव्यक्तिमत्त्वे सति विशेषाभावाद् देशान्तरेऽपि प्रमातॄणामर्थप्रतिपत्तिः स्यात्, तथा कालान्तरेऽपि नित्यत्वेनाधेयाविशेषत्वात्। न च तथाप्युच्यते। ततो न विभूर्नित्यो वा कश्चिदर्थप्रतिपादको युक्तः, नितरामेव स्फोट इति॥ ७ ॥

प्रकारान्तरेण पराभिप्रायमाह-

तद्बुद्ध्यधिरोहपदं क्रमवृत्तस्य क्रमेण विज्ञानम्।
वाचकमिष्टमदुष्टं हेतुश्चेत् स्थूलशब्दजातस्य॥ ८॥

व्यक्तं हि तावत् खुरकम्बलादिलक्षणमर्थं बुद्ध्याऽध्यवस्य तदनुगुणं गौरित्यादिपदं चिन्तयैवानुसन्धाय ततः स्थूलशब्दं प्रयुङ्क्ते। ततश्च बुद्ध्यदिरोहितपदबुद्ध्याधिरूढगवादिपदसहकृतं विवक्षिततत्तद्गोगवयाद्यर्थक्रमेण तत्तदर्थाकारमुत्पद्यमानं तत्तत्स्थूलशब्दोच्चारणकारणं तत्तद्बुद्धिवृत्त्यात्मकमेव विज्ञानं क्रमेण वास्य गवादेरर्थस्यादुष्टमभिधायकमिष्यतामिति ॥ ८ ॥

एतदपि निराकरोति-

अस्त्वित्थं वाचकता वाच्येभ्यो नैव भिद्यते येन।
तद्वस्तु निरवशेषमविशेषेणैव बुद्ध्युपारोहि ॥ ९ ॥

इत्थं परामर्शज्ञानस्यान्तरस्य वाचकताऽस्तु। एवं सति वाच्यवाचकयोरभेदः। उभयोरपि सास्नादिरूपत्वेनैककारणत्वात् तत्सास्नादिरूपं वस्तु निरवशेषं बाह्याकारविशेषेण बुद्ध्युपारूढं यतः ॥ ९ ॥

अत्र भेदमाशङ्कते-

वाचकतैव विशेषो वाच्याच्चेत् तद्विमर्शरूपत्वात्।
अस्य विमृश्या वाच्या भेदाभेदैरिदं च सत् किन्तु ॥ १० ॥

अयमेवास्य बुद्ध्याकारस्य वाचकस्य वाच्याद्बाह्याकाराद्-विशेषो यद्बाह्याकारपरामर्शरूपत्वाद्वाचकत्वम्। ततश्च वाचकैः परामर्शज्ञानभेदैर्गवादिलक्षणा बाह्याकारभेदा विमृश्यमाना वाच्या भवन्तीति विशेषः। अत्रोच्यते- इदं च सत् किन्त्विति॥ १०॥

रूपरसगन्धशब्दाद्यर्था येनावमृश्यतां नीताः।
सोऽन्तःसंजल्पात्मा नादः सिद्धो न विषयभावेन॥ ११॥

सत्यमस्त्येवेदं वाच्याद् भिन्नमान्तरं विमर्शात्मकं विज्ञानम्। तत्तु नाकारणमुत्पद्यते, कादाचित्कत्वात्। एतदुक्तं भवति- विद्धिर्हि तावद्बाह्ये चक्षुरादिना विषयीकृत एवार्थेऽध्यवसायिनी दृष्टा, नाविषयीकृते, अतिप्रसङ्गात्। ततश्चान्तरे बुद्धिः केनापि विषयीकृत एवार्थे परामर्शं करोति, अन्यथा सर्वदा सर्वार्थपरामर्शप्रसङ्गात् । तस्माद् रूपरसादयोऽर्था येन वक्तृबुद्धेः परामृश्यतां नीताः, स एवात्र नादः। अन्तः संजल्पात्मेति। आन्तरः संजल्पो बिन्द्वाकाराऽऽत्मा कार्यत्वेन विद्यते यस्य स तादृग्विधः। तस्यापि परामर्शज्ञानस्य कारणं वाचकत्वेन सिद्धो न तु विषयाकारतया परिणतः स्थूलशब्द इति। कथं पुनर्वक्तृगतो नादः प्रतिपत्तुर्वाच्यबुद्धिं जनयतीति चेत्, तदुच्चरितस्थूलशब्दाभिव्यक्तः प्रतिपत्तृगतो नादस्तस्याऽपि वाच्यबुद्धिं जनयतीति वक्ष्यति कारिकोपसंहारे॥ ११॥

विषयीकुर्वन् सर्वान् शब्दार्थानेष वाचको नान्यः।
दृष्टं सदप्यसत् तद् यस्मादेतेन सदा परामृष्टम्॥ १२॥

तदुक्तम् न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते। अनुविद्धमिह ज्ञानं सर्वं शब्देन जायते॥ (वा० प० १।११५) इति। कथं पुनः श्रीमत्पराख्ये पूर्ववर्णजसंस्कारयुक्तोऽन्त्योऽर्णोऽभिधायकः इत्युक्तम् नादाभिव्यञ्जकत्वेनोपचारादित्यदोषः॥ १२॥

इत्थं नादस्य वाचकत्वं प्रसाध्य पूर्वप्रतिज्ञातं बुद्ध्यादीनां तत्कारणत्वमाह-

बुद्ध्याकारो नास्मान्न मनोऽहङ्कारयोः कृतिर्येन।
तत्कार्यशरीरेन्द्रियविकृतेः पृथगेवमव्यक्तम्॥ १३॥

यदेतद्वाचकत्वं तदस्मादेवोक्तात् कारणान्न बुद्ध्याकार इत्युक्तम्। न च मनोऽहङ्कारयोः पृथग्भूतम्। एवमव्यक्तमपि न वाचकत्वेनेष्टमिति शेषः, तस्य गुणकारणत्वेनैव सिद्धेः, कार्यान्तरहेतुत्वे च प्रमाणाभावादिति॥ १३॥

अयं च-

अव्यक्तत्वान्नादः सूक्ष्मः शब्दस्तु वाचकत्वेन।
वाक्यपदे प्रविभिन्नः पदार्थबुद्धेरसङ्करो यस्मात्॥ १४॥

यस्मात् प्रतिपत्तृषु पदार्थबुद्धेरसङ्करो दृश्यते, तस्मात् प्रतिपुरुषं तेषु वाक्येषु पदेषु च वाचकत्वेन भिन्नरूपोऽयं नादोऽव्यक्तत्वेन सूक्ष्मशब्दवाच्यो वाचकत्वेन स्थूलशब्दवाच्य इति॥ १४॥

इत्थं नादस्वरूपमुक्त्वा तत्कारणभूतां महामायां प्रतिपादयितुमाह-

संवेद्यते न तद्वच्चागोपालाङ्गनादिपशुवृन्दैः।
बालैर्भिन्ना नादा उत्पत्त्यपवर्गयोगिनस्तेन॥ १५॥

इह हि एकपुरुषविमर्शकाले सर्वेषां तदुदयादर्शनात् परस्परभिन्नस्वभावैः पश्चात्मभिर्हेतुभूतैः प्रत्यवस्थाभिन्ना एव नादाः संवेद्यन्ते, पदार्थबुद्ध्यन्यथानुपपत्त्या शास्त्रतश्चोपलभ्यन्ते।

यदुक्तम्- आगोपालाङ्गना बाला म्लेच्छाः प्राकृतभाषिणः। अन्तर्जलगताः सत्त्वास्तेऽपि नित्यं, ब्रुवन्ति ते॥ इति। किमतः? इत्यत आह- उत्पत्त्यपवर्गेति। तेन कारणेन उत्पत्तिविनाशधर्मित्वं कार्यत्वमेषां सिद्धमित्यर्थः॥ १५॥

ततश्चैषां कार्यत्वेनोपादानकारणं वाच्यम्।

तत्सिद्धो नादः परः सुमङ्गला मालिनी महामाया॥ १६॥

समनाऽनाहतबिन्दुरघोषा वाग् ब्रह्मकुण्डलिनीतत्त्वम्।

विद्याख्यं तत्त्वमित्युक्तं तैस्तैस्तदागमेष्वित्थम्॥ १७॥

पराभिप्रायमनूद्य दूषयति-

सेयमवस्था कैश्चित् पदविद्भिर्वर्ण्यते क्रियाशक्तेः।

इह पुनरन्यैवोक्ता पुरुषासमवायिनी वाग् यस्मात्॥ १८॥

यस्मात् प्रतिपुरुषस्य वाक्समवायाभावान्नादादिक्रमेण शब्दोत्पादकत्वं न

युक्तम्, परिणामित्वप्रसङ्गात तस्मान्नैवेयमत्रोक्ता॥ १८॥

एतदेव प्रपञ्चयति-

अविकार्यत्रात्मोक्तस्तच्छक्तिश्चाप्यतो न योग्यौ तौ।

बहुधा स्थातुं यद्वा चैतन्यविनाकृतौ विकारित्वात्॥ १९॥

तत्पुंशक्तेर्भिन्नो नादोपादानकारणत्वेन।

तस्मात् प्रतिपुरुषात्तच्छक्तेश्च भिन्नाकुण्डलिनी नादकारणं सिद्धेति ॥ १९ ॥

यद्येवं मायैव परिणामिनी नादोपादानकारणमिष्यताम्, अत आह-

अचिदपि शुद्धत्वान्मायातोऽप्यन्या तदूर्ध्वगा कथिता ॥ २० ॥

यदुक्तम्  मायोपरि महामाया (रौ० सं० ४ ।२८) इति ॥ २० ॥

आगमप्रमाणसिद्धा चेयं शुद्धाध्वोपादानभूता महामायेत्याह-

शुद्धं विद्यातत्त्वं विद्येशानां च भोगदं भुवनम् ।

अध्वन्युक्तं चान्यैः सदागमैः श्रेयसे च तद्धेतुः ॥ २१ ॥

वाग्ब्रह्मणि निष्णातश्चिद्ब्रह्माप्नोति येन कथयन्ति ।

यदाहुः- शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति (मै० उ० ६ ।२२ ) इति ॥ २१ ॥

किञ्च-

सिद्धिर्मुक्तिश्च परा नादज्ञानक्रिया च सफलेति ॥ २२ ॥

कथयन्तीति पूर्वक्रियानुषङ्गः ॥ २२ ॥

यद्येवं नादज्ञानादेव परमुक्तिसिद्धेः कथं दीक्षैव मोचिनीति श्रीमत्स्वायंभुवादावुक्तम्। ज्ञानस्यापि दीक्षाङ्गत्वेनैव मोक्षसाधनत्वान्न केवलस्येति वक्ष्यामः। अपि च, स्थूलस्य पाशरूपस्य मायीयस्य शब्दस्य शिवादिशुद्धवस्तुप्रतिपादकत्वासंभवात् शुद्धस्य मन्त्रतन्त्रात्मनः शब्दस्य कारणत्वेनाऽप्येषा सिद्धेत्याह-

मन्त्रादिकारणत्वाद्

ततश्चाङ्गारस्थानीयेष्वेषु शब्देष्वभिव्यक्ता अग्निस्थानीयाः सूक्ष्मा मन्त्रशब्दाः कार्यकरा भवन्तीत्युक्तं श्रीमन्मतङ्गादौ।

ततश्चायं तत्कार्यभूतः प्रागुक्तो नादः

विद्यारागादिकञ्चुकाद् भिन्नम्।
तत्कार्यमभिष्वङ्गाद् दृक्क्रिययोर्मीलनाच्च भिन्नं यत्॥ २३॥

रागविद्याकलानां स्वकार्यैरेव सिद्धेः कार्यान्तरहेतुत्वे प्रमाणाभावात् अनेक तत्त्वपरिकल्पनाभावप्रसङ्गाच्च ॥ २३ ॥

स महामायाजन्यो नादः परमार्थवाचको युक्तः।
येन स्थूलं शब्दं मन्त्रं तन्त्रात्मकं प्रवर्तते वापि॥ २४॥

स्थूलस्य तु तदभिव्यञ्जकत्वाद् वाचकत्वमित्युक्तम्॥ २४॥

एतदेवोपसंहरन्नाह-

सा प्रतिपुरुषं भिन्ना वाक्शक्तिर्वाचिका स्थितेति ततः।
वाचकजातं निर्मायान्तरतस्तद् व्यनक्ति बाह्येऽपि॥ २५॥
स्थूलैः शब्दैर्व्यक्ताः सूक्ष्मा नादात्मकास्ततो ध्वनयः।
वाच्यविभिन्नां बुद्धिं कुर्वन्तो वर्धयन्ति जनयात्राम्॥ २६॥

अनेनैव च क्रमेण मन्त्राः शब्दा अपि शिवादेरर्थस्याभिधायका भवन्तीत्युक्तम्
॥ २५ २६॥

इति नादसिद्धिमेनामकरोत् श्रीभट्टरामकण्ठोऽत्र।
नारायणकण्ठसुतः काश्मीरे वृत्तपञ्चविंशत्या॥ २७॥

श्रीमद्घोरशिवाचार्यजन्ययाऽपरसंज्ञया।

व्याख्याता नादसिद्धिश्च प्रार्थितेन गुरुत्तमैः ॥

************************************************************************************
******************
*  "Siva Sa.mhitaa
* Published by the Theosophical Society
* Tara Press, Varanasi 1928
* Data-entered by the staff of Muktabodha under the supervision of Mark S.G. Dyczkowski
* Velthius transliteration
* revision 0 January 28, 2007
************************************************************************************
*******************

प्रथमः पटलः

एकं ज्ञानं नित्यमाद्यन्तशून्यं नान्यत् किञ्चिद्वर्त्तते वस्तु सत्यम्।

यद्भेदोस्मिन्निन्द्रियोपाधिना वै ज्ञानस्यायं भासते नान्यथैव॥ १-१॥

अथ भक्तानुरक्तोऽहं वक्ति योगानुशासनम्।

ईश्वरः सर्वभूतानामात्ममुक्तिप्रदायकः॥ १-२॥

त्यक्त्वा विवादशीलानां मतं दुर्ज्ञानहेतुकम्।

आत्मज्ञानाय भूतानामनन्यगतिचेतसाम्॥ १-३॥

सत्यं केचित्प्रशंसन्ति तपः शौचं तथापरे ।

क्षमां केचित्प्रशंसंति तथैव सममार्ज्जवम् ॥ १-४ ॥

केचिद्दानं प्रशंसन्ति पितृकर्म तथापरे ।

केचित्कर्म प्रशंसन्ति केचिद्वैराग्यमुत्तमम् ॥ १-५ ॥

केचिद्गृहस्थकर्माणि प्रशंसन्ति विचक्षणाः ।

अग्निहोत्रादिकं कर्म तथा केचित् परं विदुः ॥ १-६ ॥

मन्त्रयोगं प्रशंसन्ति किचित्तिर्थानुसेवनम् ।

एवं बहूनुपायांस्तु प्रवदन्ति हि मुक्तये ॥ १-७ ॥

एवं व्यवसिता लोके कृत्याकृत्यविदो जनाः ।

व्यामोहमेव गच्छंति विमुक्ताः पापकर्मभिः ॥ १-८ ॥

एतन्मतावलम्बी यो लब्ध्वा दुरितपुण्यके ।

भ्रमतीत्यवशः सोऽत्र जन्ममृत्युपरम्पराम् ॥ १-९ ॥

अन्यैर्मतिमता । श्रेष्ठैर्गुप्तालोकनतत्परैः ।

आत्मानो बहवः प्रोक्ता नित्याः सर्वगतास्तथा ॥ १-१० ॥

यद्यत्प्रत्यक्षविषयं तदन्यन्नास्ति चक्षते ।

कुतः स्वर्गादयः सन्तीत्यन्ये निश्चितमानसाः ॥ १-११ ॥

ज्ञानप्रवाह इत्यन्ये शून्यं केचित्परं विदुः ।

द्वावेव तत्त्वं मन्यन्तेऽपरे प्रकृतिपूरुषौ ॥ १-१२ ॥

अत्यन्तभिन्नमतयः परमार्थपराङ्मुखाः ।

एवमन्ये तु संचिन्त्य यथामति यथाश्रुतम् ॥ १-१३ ॥

निरीश्वरमिदं प्राहुः सेश्वरञ्च तथापरे ।

वदन्ति विविधैर्भेदैः सुयुक्त्या स्थितिकातराः ॥ १-१४ ॥

एते चान्ये च मुनयः संज्ञाभेदा पृथग्विधाः ।

शास्त्रेषु कथिता ह्येते लोकव्यामोहकारकाः ॥ १-१५ ॥

एतद्विवादशीलानां मतं वक्तुं न शक्यते ।

भ्रमन्त्यस्मिञ्जनाः सर्वे मुक्तिमार्गबहिष्कृताः ॥ १-१६ ॥

आलोक्य सर्वशास्त्राणि विचार्य च पुनः पुनः ।
इदमेकं सुनिष्पन्नं योगशास्त्रं परं मतम् ॥ १-१७ ॥

यस्मिन् याते सर्वमिदं यातं भवति निश्चितम् ।
तस्मिन्परिश्रमः कार्यः किमन्यच्छास्त्रभाषितम् ॥ १-१८ ॥

योगशास्त्रमिदं गोप्यमस्माभिः परिभाषितम् ।
सुभक्ताय प्रदातव्यं त्रैलोक्ये च महात्मने ॥ १-१९ ॥

कर्मकाण्डं ज्ञानकाण्डमिति वेदो द्विधा मतः ।
भवति द्विविधो भेदो ज्ञानकाण्डस्य कर्मणः ॥ १-२० ॥

द्विविधः कर्मकाण्डः स्यान्निषेधविधिपूर्वकः ॥ १-२१ ॥

निषिद्धकर्मकरणे पापं भवति निश्चितम् ।
विधिना कर्मकरणे पुण्यं भवति निश्चितम् ॥ १-२२ ॥

त्रिविधो विधिकूटः स्यान्नित्यनैमित्तकाम्यतः ।
नित्येऽकृते किल्विषं स्यात्काम्ये नैमित्तिके फलम् ॥ १-२३ ॥

द्विविधन्तु फलं ज्ञेयं स्वर्गो नरक एव च।

स्वर्गो नानाविधश्चैव नरकोपि तथा भवेत्॥ १-२४॥

पुण्यकर्माणि वै स्वर्गो नरकः पापकर्माणि।

कर्मबंधमयी सृष्टिर्नान्यथा भवति ध्रुवम्॥ १-२५॥

जन्तुभिश्चानुभूयंते स्वर्गे नानासुखानि च।

नानाविधानि दुःखानि नरके दुःसहानि वै॥ १-२५॥

पापकर्मवशाद्दुखं पुण्यकर्मवशात्सुखम्।

तस्मात्सुखार्थी विविधं पुण्यं प्रकुरुते ध्रुवम्॥ १-२७॥

पापभोगावसाने तु पुनर्जन्म भवेत्खलु।

पुण्यभोगावसाने तु नान्यथा भवति ध्रुवम्॥ १-२८॥

स्वर्गेऽपि दुःखसंभोगः परश्रीदर्शनादिषु।

ततो दुःखमिदं सर्वं भवेन्नास्त्यत्र संशयः॥ १-२९॥

तत्कर्मकल्पकैः प्रोक्तं पुण्यं पापमिति द्विधा।

पुण्यपापमयो बन्धो देहिनां भवति क्रमात्॥ १-३०॥

इहामुत्र फलद्वेषी सफलं कर्म संत्यजेत्।

नित्यनैमित्तिकं संज्ञं त्यक्त्वा योगे प्रवर्तते॥ १-३१॥

कर्मकाण्डस्य माहात्म्यं ज्ञात्वा योगी त्यजेत्सुधीः।

पुण्यपापद्वयं त्यक्त्वा ज्ञानकाण्डे प्रवर्तते॥ १-३२॥

आत्मा वाऽरेतु द्रष्टव्यः श्रोतव्येत्यादि यच्छ्रुतिः।

सा सेव्या तत्प्रयत्नेन मुक्तिदा हेतुदायिनी॥ १-३३॥

दुरितेषु च पुण्येषु यो धीवृत्तिं प्रचोदयात्।

सोऽहं प्रवर्तते मत्तो जगत्सर्वं चराचरम्॥

सर्वं च दृश्यते मत्तः सर्वं च मयि लीयते।

न तद्भिन्नोऽहमस्मीह मद्भिन्नो न तु किंचन॥ १-३४॥

जलपूर्णेष्वसंख्येषु शरावेषु यथा भवेत्।

एकस्य भात्यसंख्यत्वं तद्भेदोऽत्र न दृश्यते॥

उपाधिषु शरावेषु या संख्या वर्तते परा।

सा संख्या भवति यथा रवौ चात्मनि तत् तथा॥ १-३५॥

यथैकः कल्पकः स्वप्ने नानाविधितयेष्यते ।
जागरेपि तथाप्येकस्तथैव बहुधा जगत् ॥ १-३६ ॥

सर्पबुद्धिर्यथा रज्जौ शुक्तौ वा रजतभ्रमः ।
तद्वदेवमिदं विश्वं विवृतं परमात्मनि ॥ १-३७ ॥

रज्जुज्ञानाद्यथा सर्पो मिथ्यारूपो निवर्तते ।
आत्मज्ञानात् तथा याति मिथ्याभूतमिदं जगत् ॥ १-३८ ॥

रौप्यभ्रान्तिरियं याति शुक्तिज्ञानाद्यथा खलु ।
जगद्भ्रान्तिरियं याति चात्मज्ञानात् सदा तथा ॥ १-३९ ॥

यथा वंशो रगभ्रान्तिर्भवेद्भेकवसाञ्जनात् ।
तथा जगदिदं भ्रांतिरभ्यासकल्पनाञ्जनात् ॥ १-४० ॥

आत्मज्ञानाद्यथा नास्ति रज्जुज्ञानाद्भुजङ्गमः ।
यथा दोषवशाच्छुक्लः पीतो भवति नान्यथा ।
अज्ञानदोषादात्मापि जगद्भवति दुस्त्यजम् ॥ १-४१ ॥

दोषनाशे यथा शुक्लो गृह्यते रोगिणा स्वयम् ।

शुक्तिज्ञानात्तथाऽज्ञाननाशादात्मा तथा कृतः ॥ १-४२ ॥

कालत्रयेपि न यथा रज्जुः सर्पो भवेदिति ।
तथात्मा न भवेद्विश्वं गुणातीतो निरञ्जनः ॥ १-४३ ॥

आगमाऽपायिनोऽनित्यानाश्यत्वेनेश्वरादयः ।
आत्मबोधेन केनापि शास्त्रादेतद्विनिश्चितम् ॥ १-४४ ॥

यथा वातवशात्सिन्धावुत्पन्नाः फेनबुद्बुदाः ।
तथात्मनि समुद्भूतं संसारं क्षणभंगुरम् ॥ १-४५ ॥

अभेदो भासते नित्यं वस्तुभेदो न भासते ।
द्विधात्रिधादिभेदोऽयं भ्रमत्वे पर्यवस्यति ॥ १-४६ ॥

यद्भूतं यच्च भाव्यं वै मूर्तामूर्तं तथैव च ।
सर्वमेव जगदिदं विवृतं परमात्मनि ॥ १-४७ ॥

कल्पकैः कल्पिता विद्या मिथ्या जाता मृषात्मिका ।
एतन्मूलं जगदिदं कथं सत्यं भविष्यति ॥ १-४८ ॥

चैतन्यात्सर्वमुत्पन्नं जगदेतच्चराचरम् ।

तस्मात्सर्वं परित्यज्य चैतेन्यं तं समाश्रयेत् ॥ १-४९ ॥

घटस्याभ्य तरे बाह्ये यथाकाशं प्रवर्तते ।

तथात्माभ्यंतरे बाह्ये कार्यवर्गेषु नित्यशः ॥ १-५० ॥

असंलग्नं यथाकाशं मिथ्याभूतेषु पंचसु ।

असंलग्नस्तथात्मा तु कार्यवर्गेषु नान्यथा ॥ १-५१ ॥

ईश्वरादिजगत्सर्वमात्मव्याप्यं समन्ततः ।

एकोऽस्ति सच्चिदानंदः पूर्णो द्वैतविवर्जितः ॥ १-५२ ॥

यस्मात्प्रकाशको नास्ति स्वप्रकाशो भवेत् ततः ।

स्वप्रकाशो यतस्तस्मादात्मा ज्योतिः स्वरूपकः ॥ १-५३ ॥

अवछिन्नो यतो नास्ति दशकालस्वरूपतः ।

आत्मनः सर्वथा तस्मादात्मा पूर्णो भवेत्खलु ॥ १-५४ ॥

यस्मान्न विद्यते नाशः पंचभूतैर्वृथात्मकैः ।

तस्मादात्मा भवेन्नित्यस्तन्नाशो न भवेत्खलु ॥ १-५५ ॥

तथा चेद्विश्वकर्तारं को न मुच्येत बन्धनात् ॥ १३ ॥

मद्भावापत्तिहेतुमद्भक्तिं विना कोपि न मुच्यत इति सदृष्टान्तमुपपादयति- दिनकरेति। दिनकृत्प्रभया विनाशमेति ॥ ११-१२ ॥ कश्चिद्राजसेव्यपि दारिद्र्यतो मुच्यते तथा मामुपास्य को वा स्वातिरिक्तभ्रमतः न मुच्यत इत्याह- आदरेणेति ॥ १३ ॥

ईश्वरस्य सर्वसमत्वम्

आदित्यसंनिधौ लोकश्चेष्टते स्वयमेव तु।
तथा मत्संनिधावेव समस्तं चेष्टते जगत् ॥ १४ ॥

शुक्तिकायां यथा तारं कल्पितं मायया तथा।
महदादि जगन्मायामयं मय्येव केवलम् ॥ १५ ॥

चण्डालदेहे पश्वादिस्थावरे ब्रह्मविग्रहे।
अन्येषु तारतम्येन स्थितेषु न तथा ह्यहम् ॥ १६ ॥

विनष्टदिग्भ्रमस्यापि यथापूर्वं विभाति दिक्।

तथा विज्ञानविध्वस्तं जगन्मे भाति तन्न हि ॥ १७ ॥

पृ। ४८९) न देहो नेन्द्रियप्राणो न मनोबुद्ध्यहंकृतिः।
न चित्तं नैव माया च न च व्योमादिकं जगत्॥ १८ ॥

न कर्ता नैव भोक्ता च न च भोजयिता तथा।
केवलं चित्सदानन्दब्रह्मैवाहं जनार्दनः॥ १९ ॥

स्वाज्ञादिलोकप्रवृत्तिनिवृत्तिनिमित्तमप्यहमेवेत्याह- आदित्येति ॥ १४ ॥ मदतिरिक्तं मय्येव विकल्पितम्। विषमेष्वपि समोहमेवेत्याह- शुक्तिकायामिति ॥ १५-१६ ॥ मदज्ञानविकल्पितं मज्ज्ञानतो न भातीत्याह- विनष्टेति। विनष्टदिग्भ्रमस्यापि भ्रमापाये ॥ १७ ॥ तवापि जगदन्तःपातिदेहेन्द्रियादिसत्त्वात् कथं जगत् न भातीत्युच्यते इत्यत्राह- न देह इति ॥ १८-१९ ॥

चित्तमेव संसारकारणम्

जलस्य चञ्चलादेव चञ्चलत्वं यथा रवेः।
तथाहंकारसंबन्धादेव संसार आत्मनः॥ २० ॥

चित्तमूलं हि संसारस्तत्प्रयत्नेन शोधयेत्।
हन्त चित्तमहत्तायां कैषा विश्वासता तव॥ २१॥

क्व धनानि महीपानां ब्राह्मणः क्व जगन्ति वा।
प्राक्तनानि प्रयातानि गताः सर्गपरंपराः॥ २२॥

कोटयो ब्रह्मणां याता भूपा नष्टाः परागवत्।
स चाध्यात्माभिमानोपि विदुषोप्यासुरत्वतः॥ २३॥

विदुषोप्यासुरश्चेत् स्यान्निष्फलं तत्त्वदर्शनम्।

पृ। ४९०) तव ईश्वरस्य देहादिवैरल्यमस्तु वस्तुतो निर्विशेषब्रह्मरूपत्वात्। जीवानां बन्धमोक्षहेतू कावित्यत्र अतस्मिंस्तद्भावातद्भावावित्याह- जलस्येति॥ २०॥ एवं संसारमूलं किम् इत्यत्र चित्तमित्याह- चित्तेति। संसारमूलचित्तस्य सत्त्वात् तद्विकल्पितं सर्वं सत्यम् इति मन्यमानं प्रत्याह- हन्तेति। चित्ततत्कार्यस्य भ्रान्त्युज्जीवकत्वात् तदपाये यथापूर्वमदर्शनात् चित्ततत्कार्यकलना नास्त्येवेत्यर्थः॥ २१-२२॥ विदुषोप्येवं सत्यवत्

भातं चेत् तस्य वैदुष्यं नास्तीत्याह- स चेति। यः अनात्मनि आत्मधीप्रभवः अविद्वद्गोचरः स चाध्यात्माभिमानः देहाभिमानः स्वान्यत्र ममतापि विदुषोप्यनर्थकर एव। कुतः ? देहादावात्मात्मीयाभिमानस्य आसुरत्वतः आसुरकृत्यत्वात्॥ २३॥ अविदुष इव विदुषोपि आसुरश्चेत् तदार्जिततत्त्वदर्शनं निष्फलमेव स्यात्। तथा च श्रुतिः-

ज्ञानामृतेन तृप्तस्य कृतकृत्यस्य योगिनः।
नचास्ति किंचित् कर्तव्यमस्ति चेन्न स तत्त्ववित्॥

इति॥

अनात्मनि रागाद्यनुभवो विद्वल्लक्षणम्

उत्पाद्यमाना रागाद्या विवेकज्ञानवह्निना॥ २४॥

यथा तदैव दह्यन्ते कुतस्तेषां प्ररोहणम्।
यथा सुनिपुणः सम्यक् परदोषेक्षणे रतः॥ २५॥

तथा चेन्निपुणः स्वेषु को न मुच्येत बन्धनात्।

अनात्मविदमुक्तोपि सिद्धिजालानि वाञ्छति ॥ २६ ॥

द्रव्यमन्त्रक्रियाकालयुक्त्याप्नोति मुनीश्वर ।
नात्मज्ञस्यैष विषय आत्मज्ञो ह्यात्ममात्रदृक् ॥ २७ ॥

आत्मनात्मनि संतृप्तो नाविद्यामनुधावति ।
ये केचन जगद्भावास्तानविद्यामयान् विदुः ॥ २८ ॥

पृ। ४९१) कथं तेषु किलात्मज्ञस्त्यक्ताविद्यो विमज्जति ।
द्रव्यमन्त्रक्रियाकालयुक्तयः साधुसिद्धिदाः ॥ २९ ॥

परमात्मपदप्राप्तौ नोपकुर्वन्ति काश्चन ।
सर्वेच्छाकलना शान्तावात्मलाभोदयाभिधः ॥ ३० ॥

स कथं सिद्धिवाञ्छायां कथमर्हत्यचित्तकः ॥

इति ॥

अविद्वत्सेव्यासुरभावस्य विद्वद्दशासमकालमेव

ज्ञानाग्निग्धत्वात् भस्मावशेषितस्य पुनः प्ररोहासंभवमाह-
उत्पाद्येति ॥ २४ ॥ परदोषान्वेषणवत् स्वासुरभावोदितश्चेत् ततः को वा न
मुच्यते इत्याह- यथेति ॥ २५ ॥ अनात्मज्ञोणिमादिसिद्धिं
तदुचितसाधनतो गच्छति । आत्मज्ञस्तु तदनात्मकार्यं मत्वा
तत्रोपरमते । तस्य तदिच्छैव नोदेतीत्याह- अनात्मविदिति ॥ २६-२७ ॥
महान्तस्तु ये केचन जगद्भावाः सिद्धिरूपाः तान् ॥ २८ ॥ द्रव्यादयः
सिद्धिदा अपि ब्रह्मभावापत्तौ नोपकुर्वन्तीत्याह- द्रव्येति ॥ २९ ॥
जीवन्मुक्तस्य ब्रह्मातिरेकेण वाञ्छनीयाभावान्न किमपि अयं
वाञ्छतीत्यर्थः ॥ ३० ॥ इतिशब्दः अध्यायपरिसमाप्त्यर्थः ॥

इति तृतीयोध्यायः

चतुर्थोध्यायः

१ । ब्राह्मणम्

सप्तभूमिकासु जीवन्मुक्तिभूमिकाचतुष्टयम्

अथ ह ऋभुं भगवन्तं निदाघः पप्रच्छ

जीवन्मुक्तिलक्षणमनुब्रूहीति ॥ १ ॥ तथेति स होवाच । सप्तभूमिषु जीवन्मुक्ताश्चत्वारः ॥ २ ॥

पृ। ४९२) शुभेच्छा प्रथमा भूमिका भवति । विचारणा द्वितीया । तनुमानसी तृतीया । सत्त्वापत्तिस्तुरीया । असंसक्तिः पञ्चमी । पदार्थभावना षष्ठी । तुरीयगा सप्तमी ॥ ३ ॥

अचित्तजीवन्मुक्तलक्षणं जिज्ञासुः निदाघः ऋभुं तदियत्तां पृच्छतीत्याह- अथेति । पप्रच्छ- किमिति ? जीवन्मुक्तिलक्षणमनुब्रूहीति ॥ १ ॥ किं तदुवाचेत्यत्र- सप्तभूमिष्विति ॥ २ ॥ कीदृश्यः भूमयः इत्यत्राह- शुभेति ॥ ३ ॥

प्रणवविकृत्यकारादेः चातुर्विध्यम्

प्रणवात्मिका भूमिकाः अकारोकारमकारार्धमात्रात्मकाः ॥ ४ ॥ स्थूलसूक्ष्मबीजसाक्षिभेदेनाकारादयश्चतुर्विधाः ॥ ५ ॥

प्रणवविकृतयस्तु अकारोकारमकारार्धमात्रात्मकाः ॥ ४ ॥ प्रणवविकृत्यकारादेः चातुर्विध्यमाह- स्थूलेति ॥ ५ ॥

अकारस्थूलादीनामध्यक्षाः

तदवस्था जाग्रत्स्वप्नसुषुप्तितुरीयाः ॥ ६ ॥ अकारस्थूलांशे जाग्रद्विश्वः । सूक्ष्मांशे तत्तैजसः । बीजांशे तत्प्राज्ञः । साक्ष्यंशे तत्तुरीयः ॥ ७ ॥ उकारस्थूलांशे स्वप्नविश्वः । सूक्ष्मांशे तत्तैजसः । बीजांशे तत्प्राज्ञः । साक्ष्यंशे तत्तुरीयः ॥ ८ ॥ मकारस्थूलांशे सुषुप्तविश्वः । सूक्ष्मांशे तत्तैजसः । बीजांशे तत्प्राज्ञः । साक्ष्यंशे तत्तुरीयः ॥ ९ ॥ अर्धमात्रास्थूलांशे तुरीयविश्वः । सूक्ष्मांशे तत्तैजसः । बीजांशे तत्प्राज्ञः । साक्ष्यंशे तुरीयतुरीयः ॥ १० ॥

प् । ४९३) या अकारादिप्रविभक्ताः तदवस्थाः ॥ ६ ॥ अकारस्थूलादिक्रमेण तदध्यक्षविभागमाह- अकारेति । समष्टिजाग्रज्जाग्रदाद्यध्यक्षा विराड्विराडादितुर्यबीजान्ताः, तद्व्यष्टिसमष्ट्यैक्याध्यक्षास्तु ओत्रोत्राद्यविकल्पानुज्ञैकरसान्ता भवन्तीति ज्ञातव्याः ॥ ७-९ ॥
व्यष्टिसमष्टिकलनाविरलसाक्ष्यंशप्रविभक्तसाक्ष्यंशेस्वातिरिक्तव्यष्
ट्यादिकलनाकलिताकारस्थूलांशादिप्रविभक्तजाग्रज्जाग्रदादिपञ्चदशा

वस्थातदध्यक्षपटलासंभवप्रबोधादपि पराभूमिरूपः
तुरीयतुरीयः विजयत इत्यर्थः ॥ १० ॥

प्रणवावयवशः भूमिकाभेदाः

अकारादितुरीयांशाः प्रथमद्वितीयतृतीयभूमिकाः ।
उकारतुरीयांशाः चतुर्थी भूमिका । मकारतुरीयांशाः पञ्चमी ।
अर्धमात्राप्रविभक्तप्रथमद्वितीयतृतीयांशाः षष्ठी भूमिका ।
तदतीता सप्तमी भूमिका ॥ ११ ॥

तत्र अकारादितुरीयांशाः । तदतीता सप्तमी भूमिका भवतीत्यर्थः ॥
११ ॥

चतुर्विधाः जीवन्मुक्ताः

भूमित्रयेषु विहरन् मुमुक्षुर्भवति । तुरीयभूम्यां विहरन्
ब्रह्मविद्भवति । पञ्चमभूम्यां विहरन् ब्रह्मविद्वरो भवति ।
षष्ठभूम्यां विहरन् ब्रह्मविद्वरीयान् भवति । सप्तमभूम्यां
विहरन् ब्रह्मविद्वरिष्ठो भवति ॥ १२ ॥

जीवन्मुक्तचातुर्विध्यं कथमित्यत्र- भूमित्रयेष्विति ॥ १२ ॥

पृ। ४९४)

२। मन्त्रः

सप्तभूमिकानिर्देशः

तत्रैते श्लोका भवन्ति-

ज्ञानभूमिः शुभेच्छा स्यात् प्रथमा समुदीरिता।
विचारणा द्वितीया तु तृतीया तनुमानसी ॥ १ ॥

सत्त्वापत्तिश्चतुर्थी स्यात् ततोसंसक्तिनामिका।
पदार्थभावना षष्ठी सप्तमी तुर्यगा स्मृता ॥ २ ॥

अत्र मन्त्रग्रामानुवादं दर्शयति- तत्रैते श्लोका भवन्तीति।
संक्षेपतो भूमिकानामानि उक्तानि ॥ १-२ ॥

सप्तभूमिकाविवरणम्

स्थितः किं मूढ एवास्मि प्रेक्ष्योहं शास्त्रसज्जनैः ।
वैराग्यपूर्वमिच्छेति शुभेच्छेत्युच्यते बुधैः ॥ ३ ॥

शास्त्रसज्जनसंपर्कवैराग्याभ्यासपूर्वकम् ।
सदाचारप्रवृत्तिर्या प्रोच्यते सा विचारणा ॥ ४ ॥

विचारणाशुभेच्छाभ्यामिन्द्रियार्थेषु रक्तता ।
यत्र सा तनुतामेति प्रोच्यते तनुमानसी ॥ ५ ॥

भूमिकात्रितयाभ्यासाच्चित्तेर्थविरतेर्वशात् ।
सत्त्वात्मनि स्थिते शुद्धे सत्त्वापत्तिरुदाहृता ॥ ६ ॥

पृ। ४९५) दशाचतुष्टयाभ्यासादसंसर्गफला तु या ।
रूढसत्त्वचमत्कारा प्रोक्तासंसक्तिनामिका ॥ ७ ॥

भूमिकापञ्चकाभ्यासात् स्वात्मारामतया भृशम् ।
आभ्यन्तराणां बाह्यानां पदार्थानामभावनात् ॥ ८ ॥

परप्रयुक्तेन चिरं प्रयत्नेनावबोधनम् ।
पदार्थभावना नाम षष्ठी भवति भूमिका ॥ ९॥

भूमिषट्कचिराभ्यासाद्भेदस्यानुपलम्भनात् ।
यत्स्वभावैकनिष्ठत्वं सा ज्ञेया तुर्यगा गतिः ॥ १० ॥

तासां लक्षणमाह- स्थित इति । इमाः
शुभेच्छेत्यादिसप्तभूमिकाः महदन्नपूर्णाक्ष्युपनिषत्सु प्रायशो
व्याख्याताः ॥ ३-१७ ॥

सप्तभूमिकासु बुद्ध्यवस्थाभेदनिरूपणम्

शुभेच्छादित्रयं भूमिभेदाभेदयुतं स्मृतम् ।
यथावद्वेद बुद्ध्येदं जगज्जाग्रति दृश्यते ॥ ११ ॥

अद्वैते स्थैर्यमायाते द्वैते च प्रशमं गते ।
पश्यन्ति स्वप्नवल्लोकं तुर्यभूमिसुयोगतः ॥ १२ ॥

विच्छिन्नशरदभ्रांशविलयं प्रविलीयते ।
सत्वावशेष एवास्ते हे निदाघ दृढीकुरु ॥ १३ ॥

पञ्चभूमिं समारुह्य सुषुप्तिपदनामिकाम् ।
शान्ताशेषविशेषांशस्तिष्ठत्यद्वैतमात्रके ॥ १४ ॥

पृ। ४९६) अन्तर्मुखतया नित्यं बहिर्वृत्तिपरोपि सन् ।
परिश्रान्ततया नित्यं निद्रालुरिव लक्ष्यते ॥ १५ ॥

कुर्वन्नभ्यासमेतस्यां भूम्यां सम्यग्विवासनः ।
सप्तमी गूढसुप्त्याख्या क्रमप्राप्ता पुरातना ॥ १६ ॥

यत्र नासन्न सद्रूपो नाहं नाप्यनहंकृतिः ।
केवलं क्षीणमनन आस्तेऽद्वैतेतिनिर्भयः ॥ १७ ॥

केवलब्रह्मात्मभावनाविधिः

अन्तःशून्यो बहिःशून्यः शून्यकुम्भ इवाम्बरे ।
अन्तःपूर्णो बहिःपूर्णः पूर्णकुम्भ इवार्णवे ॥ १८ ॥

मा भव ग्राह्यभावात्मा ग्राहकात्मा च मा भव ।

भावनामखिलां त्यक्त्वा यच्छिष्टं तन्मयो भव ॥ १९ ॥

द्रष्टृदर्शनदृश्यानि त्यक्त्वा वासनया सह ।

दर्शनप्रथमाभासमात्मानं केवलं भज ॥ २० ॥

हे निदाघ त्वम् अन्तर्बाह्यकलनाविरलं ब्रह्म निष्प्रतियोगिकस्वमात्रमिति भजेत्याह- अन्तरिति ॥ १८ ॥ मनःकल्पितभेदजातं ग्राह्यं तद्ग्राहकं मानसं तदुभयं मा भवेत्यर्थः ॥ १९ ॥ अन्तःशून्य इत्यादि केवलं भज इत्यन्तं मैत्रेयोपनिषदि व्याख्यातम् ॥ २० ॥

जीवन्मुक्तलक्षणम्

यथास्थितमिदं यस्य व्यवहारवतोपि च ।

अस्तंगतं स्थितं व्योम स जीवन्मुक्त उच्यते ॥ २१ ॥

प्। ४९७) नोदेति नास्तमायाति सुखे दुःखे मनःप्रभा ।

यथाप्राप्तस्थितिर्यस्य स जीवन्मुक्त उच्यते ॥ २२ ॥

यो जागर्ति सुषुप्तिस्थो यस्य जाग्रन्न विद्यते ।
यस्य निर्वासनो बोधः स जीवन्मुक्त उच्यते ॥ २३ ॥

रागद्वेषभयादीनामनुरूपं चरन्नपि ।
योन्तर्व्योमवदत्यच्छः स जीवन्मुक्त उच्यते ॥ २४ ॥

यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते ।
कुर्वतोकुर्वतो वापि स जीवन्मुक्त उच्यते ॥ २५ ॥

यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः ।
हर्षामर्षभयोन्मुक्तः स जीवन्मुक्त उच्यते ॥ २६ ॥

यः समस्तार्थजालेषु व्यवहार्यपि शीतलः ।
परार्थेष्विव पूर्णात्मा स जीवन्मुक्त उच्यते ॥ २७ ॥

प्रजहाति यदा कामान् सर्वांश्चित्तगतान् मुने ।
मयि सर्वात्मके तुष्टः स जीवन्मुक्त उच्यते ॥ २८ ॥

चैत्यवर्जितचिन्मात्रे पदे परमपावने ।

अक्षुब्धचित्तो विश्रान्तः स जीवन्मुक्त उच्यते ॥ २९ ॥

इदं जगदहं सोयं दृश्यजातमवास्तवम् ।

यस्य चित्ते न स्फुरति स जीवन्मुक्त उच्यते ॥ ३० ॥

जीवन्मुक्ताः चत्वारः इत्युक्तम् । तेषां लक्षणमाह- यथेत्यादि

। यथा घटशरावादिसत्त्वासत्त्वाभ्यां व्योम यथास्थितं व्योमैव

भवति तथा यस्य

पृ। ४९८) तूष्णींभूतस्य व्यवहारवतोपि च स्वापाद्यवस्थात्रये

मनोस्तं गतं स्थितं वापि ब्रह्ममात्रगोचरं भवति स जीवन्मुक्त

उच्यते इति ॥ २१ ॥ किंच- नोदेतीति ॥ २२ ॥ किंच- यो जागर्तीति ॥ २३-२६

॥ शीतलः अन्तस्तापवैरल्यात् ॥ २७-३० ॥

भूमब्रह्मनिष्ठाविधिः

सद्ब्रह्मणि स्थिरे स्फारे पूर्णे विषयवर्जिते ।

आचार्यशास्त्रमार्गेण प्रविश्याशु स्थिरो भव ॥ ३१ ॥

शिवो गुरुः शिवो वेदः शिवो देवः शिवः प्रभुः ।
शिवोऽस्म्यहं शिवः सर्वं शिवादन्यन्न किंचन ॥ ३२ ॥

तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः ।
नानुध्यायाद् बहूञ्छब्दान् वाचो विग्लापनं हि तत् ॥ ३३ ॥

त्वमपि सद्ब्रह्मणि । हे निदाघ सन्मात्रे भूमब्रह्मणि
श्रुत्याचार्योपदेशेन प्रविश्य झटिति स्थिरो भव । तन्मात्रपदवीं
भजस्वेत्यर्थः ॥ ३१ ॥ स्फारानन्दात्मा कीदृश इत्यत आह- शिव इति ॥
३२ ॥ यः स्वातिरिक्ताशिवं ग्रसित्वा स्वमात्रमवशिष्यते तमेव । एतत्
बृहदारण्यके व्याख्यातम् ॥ ३३ ॥

विहंगमपिपीलिकामार्गविवेकः

शुको मुक्तो वामदेवोऽपि मुक्त-
स्ताभ्यां विना मुक्तिभाजो न सन्ति ।
शुकं मार्गं येऽनुसरन्ति धीराः

सद्योमुक्तास्ते भवन्तीह लोके ॥ ३४ ॥

प्।  ४९९) वामदेवं येनुसरन्ति नित्यं
मृत्वा जनित्वा च पुनःपुनस्तत्।
ते वै लोके क्रममुक्ता भवन्ति
योगैः सांख्यैः कर्मभिर्भक्तियुक्तैः ॥ ३५ ॥

शुकश्च वामदेवश्च द्वे सृती देवनिर्मिते।
शुको विहङ्गमः प्रोक्तो वामदेवः पिपीलिका ॥ ३६ ॥

अतद्व्यावृत्तिरूपेण साक्षाद्विधिमुखेन वा।
महावाक्यविचारेण सांख्ययोगसमाधिना ॥ ३७ ॥

विदित्वा स्वात्मनो रूपमसंप्रज्ञासमाधितः।
शुकमार्गेण विरजाः प्रयान्ति परमं पदम्॥ ३८ ॥

यमाद्यासनजायासहठाभ्यासात् पुनःपुनः।
संजातविघ्नबाहुल्यः अणिमादिवशादिह ॥ ३९ ॥

अलब्ध्वापि फलं सम्यक् पुनर्भूत्वा महाकुले ।
पूर्ववासनयैवायं योगाभ्यासं पुनश्चरन् ॥ ४० ॥

अनेकजन्माभ्यासेन वामदेवेन वै पथा ।
सोपि मुक्तिं समाप्नोति तद्विष्णोः परमं पदम् ॥ ४१ ॥

द्वाविमावपि पन्थानौ ब्रह्मप्राप्तिकरौ शिवौ ।
सद्योमुक्तिप्रदश्चैकः क्रममुक्तिप्रदः परः ॥ ४२ ॥

प् । ५००) ननु शुको मुक्तो वामदेवोपि मुक्तः इत्यनेन द्वावेव मुक्तौ भवतः । न हि ताभ्यां तृतीयो मुक्तत्वेन परिगणितो भवितुमर्हति । तथा सति किमर्थं लोके नित्यादिकर्मचित्तशुद्धिसाधनचतुष्टयसंन्यास-वेदान्तश्रवणमननादिसाधनानुष्ठानेन मुक्त्यर्थं केचन यतन्ते । तद्यत्नो न हि फलवान् भवितुमर्हतीति चेन्न  शुको मुक्तो वामदेवोपि मुक्तः इति श्रुतेः अन्यार्थत्वेन विहंगमपिपीलिकामार्गपरत्वात् । अतो ज्ञानसाधनप्रवृत्तिः फलवती भवतीत्याह- शुक इति । शुको विहंगममार्गानुसारी सद्योमुक्तो भवति । वामदेवः पिपीलिकामार्गानुसार्यपि क्रममुक्तो भवति । ताभ्यां तौ मार्गावतिक्रम्य न हि केपि मुक्तिभाजः सन्ति । इत्येतदर्थं विस्पष्टं

श्रुतिरेव प्रकाशयति- शुकमिति ॥ ३४-३६ ॥

शुकमार्गसाधनमाह- अतदिति । नेति नेति न ह्येतस्मात् इत्यादि अतद्व्यावृत्तिरूपेण स्वातिरिक्तकलनासंभवसिद्धं ब्रह्म निष्प्रतियोगिकस्वमात्रमिति साक्षाद्विधिमुखेन वा ॥ ३७-३८ ॥ वामदेवमार्गस्वरूपमाह- यमेति ॥ ३९-४० ॥ सोपि मुक्तिं क्रमेण समाप्नोति ॥ ४१ ॥ फलितार्थमाह- द्वाविति ॥ ४२ ॥

ब्रह्मविद्दृष्टिप्रसरस्य पावनत्वम्

तत्र को मोहः कः शोक एकत्वमनुपश्यतः ।
यस्यानुभवपर्यन्ता बुद्धिस्तत्त्वे प्रवर्तते ॥ ४३ ॥

तद्दृष्टिगोचराः सर्वे मुच्यन्ते सर्वपातकैः ।
खेचरा भूचराः सर्वे ब्रह्मविद्दृष्टिगोचराः ॥ ४४ ॥

सद्य एव विमुच्यन्ते कोटिजन्मार्जितैरघैः ॥

इति ॥

यत् सांख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते।
एकं सांख्यं च योगं च यः पश्यति स पश्यति॥

पृ। ५०१) इति स्मृत्यनुरोधेन मार्गद्वयप्राप्यफलयोः पर्यवसान
एकत्वमित्यर्थे- तत्रेति। इत्थंभूतज्ञानिदृष्टिपूतोप्यशुभात्
मुच्यत इत्याह- यस्येति। ब्रह्मवित् स्वातिरिक्तं यद्यत् पश्यति
तत्तद्ब्रह्मातिरिक्तं न पश्यति॥ ४३॥ तत्पुण्यप्रभावेन तद्दृष्टिपूताः
कृतकृत्या भवन्तीत्यर्थः॥ ४४॥ इतिशब्दः अध्यायपरिसमाप्त्यर्थः॥

इति चतुर्थोध्यायः

पञ्चमोध्यायः

योगेच्छोः देहज्ञानमावश्यकम्

अथ हैनम् ऋभुं भगवन्तं निदाघः पप्रच्छ
योगाभ्यासविधिमनुब्रूहीति। तथेति स होवाच।

पञ्चभूतात्मको देहः पञ्चमण्डलपूरितः।

काठिन्यं पृथिवीमेकां[ह्येषा]पानीयं तद्द्रवाकृति ॥ १ ॥

दीपनं च भवेत् तेजः प्रचारो वायुलक्षणम् ।

आकाशः सत्त्वतः सर्वं ज्ञातव्यं योगमिच्छता ॥ २ ॥

देशिकमुखात् निदाघो जीवन्मुक्तिलक्षणं यथावदवगम्य

जीवन्मुक्तिहेतुनिर्विशेषब्रह्मज्ञानोपायभूतयोगाभ्यासलक्षण-

बुभुत्सया ऋभुं पृच्छतीत्याह- अथेति । पप्रच्छह्- किमिति

? योगेति । निदाघप्रश्नमङ्गीकृत्य तथेति स होवाच ।

योगाभ्यासस्य देहनिर्वर्त्यत्वादित्यादौ देहेयत्तामाह- पञ्चेति ।

देहस्य पञ्चभूतात्मकता कथमित्यत आह- काठिन्यमिति ॥ १-२ ॥

पृ। ५०२)

श्वाससंख्या

षट्छतान्यधिकान्यत्र सहस्राण्येकविंशतिः ।

अहोरात्रवहैः श्वासैर्वायुमण्डलघातकः ॥ ३ ॥

यावदहोरात्रनिर्वर्त्यश्वाससंख्या का इत्यत्राह- षडिति ॥ ३ ॥

देहक्षयनिवारणाय भूतधारणविधिः

तत्पृथ्वीमण्डले क्षीणे वलिरायाति देहिनाम् ।
तद्वदापोगणापाये केशाः स्युः पाण्डराः क्रमात् ॥ ४ ॥

तेजःक्षये क्षुधा कान्तिर्नश्यते मारुतक्षये ।
वेपथुः संभवेन्नित्यं नाभसे नैव जीवति ॥ ५ ॥

इत्थंभूतक्षयान्नित्यं जीवितं भूतधारणम् ।

देहप्रविभक्तपञ्चभूतांशाः यावन्न क्षीयन्ते तावदविकलो
देहो भवति । तत्क्षये तु विकृतिमेतीत्याह- तदिति ॥ ४ ॥ नाभसे क्षीणे ॥ ५
॥ यतो भूतक्षयतो देहः क्षीयते अतो नित्यं देहस्य जीवितं प्रति
तत्तद्भूतधारणं कर्तव्यमित्यर्थः ॥

भूतधारणाय उड्याणबन्धाभ्यासः

उड्याणं कुरुते यस्मादविश्रान्तं महाखगः ॥ ६ ॥

उड्डियाणं तदेव स्यात् तत्र बन्धोभिधीयते ।
उड्डियाणो ह्यसौ बन्धो मृत्युमातङ्गकेसरी ॥ ७ ॥

पृ। ५०३) तस्य भुक्तिस्तनोः कायात् तस्य बन्धो हि दुष्करः ।
अग्नौ तु चलिते कुक्षौ वेदना जायते भृशम् ॥ ८ ॥

न कार्या क्षुधितेनापि नापि वुण्मूत्रवेगिना ।
हितं मितं च भोक्तव्यं स्तोकंस्तोकमनेकधा ॥ ९ ॥

भूतधारणानुकूलोड्याणबन्धमाह- उड्याणमिति ॥ ६-७
॥ तस्योड्याणबन्धस्य मुक्तिः कायात् कायदार्ढ्यात् भवति । तस्य
सदा कर्तुमशक्यत्वात् तस्य दुष्करत्वम् । सदाकरणे का
हानिरित्यत्राह- अग्नाविति ॥ ८ ॥ क्षुच्छान्तये हितं मितं च
भोक्तव्यम् ॥ ९ ॥

लयमन्त्रहठाख्यास्त्रयो योगाः

मृदुमध्यममन्त्रेषु क्रमान्मन्त्रं लयं हठम्।
लयमन्त्रहठा योगा योगो ह्यष्टाङ्गसंयुतः॥ १० ॥

एवं क्षुच्छान्तिं कृत्वा योगाभ्यासः कर्तव्यः इत्याह-
मृद्विति। मृदुः लयः, मध्यमो हठः, मन्त्रो
नादानुसंधानं, नादस्य सर्वमन्त्रमूलत्वात्। तेषु
मृदुमध्यममन्त्रेषु क्रमान्मन्त्रं नादानुसंधानं, ततो
लयं, तत्साधनं हठं विद्धि। तत्र लयहेतुः मन्त्रः,
तद्धेतुः हठः। एवं योगाः त्रिप्रकारा भवन्ति। तत्र आद्यहठयोगस्तु
यमाद्यष्टाङ्गसंयुतो भवतीत्यर्थः॥ १० ॥

योगाष्टाङ्गानि

यमश्च नियमश्चैव तथा चासनमेव च।
प्राणायामस्तथा पश्चात् प्रत्याहारस्तथा परम्॥ ११ ॥

धारणा च तथा ध्यानं समाधिश्चाष्टमो भवेत्।

प्।५०४) कानि योगाष्टाङ्गानि इत्यत आह- यमश्चेति॥ ११ ॥

यमनियमभेदाः

अहिंसा सत्यमस्तेयं ब्रह्मचर्यं दयार्जवम् ॥ १२ ॥

क्षमा धृतिर्मिताहारः शौचं चेति यमा दश ।
तपः संतोषमास्तिक्यं दानमीश्वरपूजनम् ॥ १३ ॥

सिद्धान्तश्रवणं चैव ह्रीर्मतिश्च जपो व्रतम् ।
एते हि नियमाः प्रोक्ता दशधैवं महामते ॥ १४ ॥

संक्षेपतो यमाद्यष्टाङ्गनामानि निर्दिशति- अहिंसेति ॥ १२-१६ ॥

एकादशासनानि

एकादशासनानि स्युश्चक्राद्या मुनिसत्तम ।
चक्रं पद्मासनं कूर्मं मयूरं कुक्कुटं तथा ॥ १५ ॥

वीरासनं स्वस्तिकं च भद्रं सिंहासनं तथा ।

मुक्तासनं गोमुखं च कीर्तितं योगवित्तमैः ॥ १६ ॥

चक्रसनलक्षणम्

सव्योरु दक्षिणे गुल्फे दक्षिणं दक्षिणेतरे ।
निदध्यादृजुकायस्तु चक्रासनमिदं मतम् ॥ १७ ॥

तत्र चक्रासनलक्षणमाह- सव्येति ॥ १७ ॥

पृ। ५०५)

प्राणायामः

पूरकः कुम्भकस्तद्वद्रेचकः पूरकः पुनः ।
प्राणायामाः स्वनाडीभिस्तस्मान्नाडीः प्रचक्षते ॥ १८ ॥

यमादिप्रविभक्ताहिंसादीनि दर्शनाद्युपनिषद्रीत्या योजनीयानि ।
अथ प्राणायाममाह- पूरक इति ॥ १८ ॥

देहतदवयवमानानि

शरीरं सर्वजन्तूनां षण्णवत्यङ्गुलात्मकम् ।
तन्मध्ये पायुदेशात्तु द्व्यङ्गुलात् परतः परम् ॥ १९ ॥

मेढ्रदेशादधस्तात्तु द्व्यङ्गुलान्मध्यमुच्यते ।
मेढ्रान्नवाङ्गुलादूर्ध्वं नाडीनां कन्दमुच्यते ॥ २० ॥

चतुरङ्गुलमुत्सेधं चतुरङ्गुलमायतम् ।
अण्डाकारं परिवृतं मेदोमज्जास्थिशोणितैः ॥ २१ ॥

अथ देहमानप्रकाशनपूर्वकं नाडीचक्रं विवेचयति- शरीरमिति ॥
१९-२४ ॥

नाडीचक्रम्

तत्रैव नाडीचक्रं तु द्वादशारं प्रतिष्ठितम् ।
शरीरं ध्रियते येन वर्तते तत्र कुण्डली ॥ २२ ॥

ब्रह्मरन्ध्रं सुषुम्ना या वदनेन पिधाय सा ।
अलम्बुसा सुषुम्नायाः कुहूर्नाडी वसत्यसौ ॥ २३ ॥

अनन्तरारयुग्मे तु वारुणा च यशस्विनी ।
दक्षिणारे सुषुम्नायाः पिङ्गला वर्तते क्रमात् ॥ २४ ॥

प्। ५०६) तदन्तरारयोः पूषा वर्तते च पयस्विनी ।
सुषुम्ना पश्चिमे चारे स्थिता नाडी सरस्वती ॥ २५ ॥

शङ्खिनी चैव गान्धारी तदनन्तरयोः स्थिते ।
उत्तरे तु सुषुम्नाया इडाख्या निवसत्यसौ ॥ २६ ॥

अनन्तरं हस्तिजिह्वा ततो विश्वोदरी स्थिता ।
प्रदक्षिणक्रमेणैव चक्रस्यारेषु नाडयः ॥ २७ ॥

वर्तन्ते द्वादश ह्येता द्वादशानिलवाहकाः ।
पटवत्संस्थिता नाड्यो नानावर्णाः समीरिताः ॥ २८ ॥

पटमध्यं तु यत्स्थानं नाभिचक्रं तदुच्यते ।

नादाधारा समाख्याता ज्वलन्ती नादरूपिणी ॥ २९ ॥

पररन्ध्रा सुषुम्ना च चत्वारो रत्नपूरिताः ।

कुण्डल्या पिहितं शश्वद्ब्रह्मरन्ध्रस्य मध्यमम् ॥ ३० ॥

एवमेतासु नाडीषु चरन्ति दश वायवः ।

तदन्तरारयोः दलयोरन्तरा मध्य इत्यर्थः ॥ २५-३२ ॥

तुरीयदर्शनाभ्यासविधिः

एवं नाडीगतिं वायुगतिं ज्ञात्वा विचक्षणः ॥ ३१ ॥

समग्रीवशिरःकायः संवृतास्यः सुनिश्चलः ।

नासाग्रे चैव हृन्मध्ये बिन्दुमध्ये तुरीयकम् ॥ ३२ ॥

स्रवन्तममृतं पश्येन्नेत्राभ्यां सुसमाहितः ।

पृ। ५०७)

कालवञ्चनोपायभूतो योगः

अपानं मुकुलीकृत्य पायुमाकृष्य चोन्मुखम् ॥ ३३ ॥

प्रणवेन समुत्थाप्य श्रीबीजेन निवर्तयेत् ।
स्वात्मानं च श्रियं ध्यायेदमृतप्लावनं ततः ॥ ३४ ॥

कालवञ्चनमेतद्धि सर्वमुख्यं प्रचक्षते ।
मनसा चिन्तितं कार्यं मनसा येन सिध्यति ॥ ३५ ॥

जलेग्निज्वलनाच्छाखापल्लवानि भवन्ति हि ।
नाधन्यं जागतं वाक्यं विपरीता भवेत् क्रिया ॥ ३६ ॥

कालवञ्चनोपायमाह- अपानमिति ॥ ३३ ॥ प्रणवेन
अपानमूर्ध्वमुत्थाप्य श्रीबीजेन प्राणम् अधो निवर्तयन् अपानप्राणयोः
संधिदेशस्थं स्वात्मानं मुक्तिश्रियं भावयित्वा
ततोमृतप्लावनम् अमृताभिषेचनं कुर्यात् ॥ ३४ ॥ इति यत् तदेव
कालवञ्चनमायुस्स्तम्भनं, तदेव योगिनां मुख्यम् इत्याचक्षते ।

कालवञ्चनयोगफलमाह- मनसेति ॥ ३५ ॥ कीदृशी सिद्धिः सिध्यति
इत्यत्र- जल इति । तेन यद्यदुक्तं तत्तत् नाधन्यम् ॥ ३६ ॥

कायदार्ढ्यबलादिसाधनभूताः योगाः

मार्गे बिन्दुं समाबध्य वह्निं प्रज्वाल्य जीवने ।
शोषयित्वा तु सलिलं तेन कायं दृढं भवेत् ॥ ३७ ॥

गुदयोनिसमायुक्तमाकुञ्चत्येककालतः ।
अपानमूर्ध्वगं कृत्वा समानेन नियोजयेत् ॥ ३८ ॥

पृ। ५०८) स्वात्मानं च श्रियं ध्यायेदमृतप्लावनं ततः ।
बलं समारभेद्योगी मध्यमद्वारभागतः ॥ ३९ ॥

भावयेदूर्ध्वगत्यर्थं प्राणापानसुयोगतः ।
एष योगवरो देहे सिद्धिमार्गप्रकाशकः ॥ ४० ॥

सुषुम्नामार्गे बिन्दुं मानसं समाबध्य आकुञ्चनेन जीवने
मूलाधारे तत्रत्यवायुं प्रज्वाल्य तेन प्राणसहितवह्निना

सुषुम्नानाडीगतवसात्मकं शोषयित्वा प्राणादिकं स्तम्भयेत्। तेन योगी दृढकायो भवेदित्यर्थः॥ ३७॥ बलकृद्योगवरमाह- गुदेति । युगपत् गुदं योनिं च आकुञ्च्य ततोपानमूर्ध्वमुत्थाप्य समानेन नियोज्य॥ ३८॥ प्राणापानसमानसंधिदेशाधिकरणम् आत्मानं ज्ञानश्रियं ध्यात्वा अमृतेन अभिषिच्य मध्यमद्वारभागतो योगी यथाबलं कुम्भकं समारभेत्॥ ३९॥ ततः प्राणापानसुयोगतः ऊर्ध्वगत्यर्थमुदानसहितं प्राण भावयेदिति योभ्यासोभिहितः स एव योगवरो देहे सिद्धिमार्गसूचको भवति। अयं योगो ब्रह्मलोकप्रापक इत्यर्थः॥ ४०॥

देहच्छायाज्ञानविधिः

यथैवापां गतः सेतुः प्रवाहस्य निरोधकः।
तथा शरीरगा च्छाया ज्ञातव्या योगिभिः सदा॥ ४१॥

देहावसानकालज्ञानाय स्वदेहच्छाया ज्ञातव्येत्याह-
यथेति। यथा नदीगतपाषाणसेतुः प्रवाहनिरोधको भवति तथा शरीरगा चिच्छाया जीवशक्तिः तद्गतशक्त्यंशमपहाय प्रत्यगभिन्नकालात्माहमस्मीति योगिभिः प्रत्यगभिन्नपरचित् सदा

ज्ञातव्या। ततो देहाभिमानावसानाधिकरणकालज्ञानी भूत्वा
कालात्मरूपेण अवशिष्यते। अयं चिच्छक्तियोगयोगसेतुः
पराक्प्रवाहनिरोधको भवतीत्यर्थः॥ ४१॥

पृ। ५०९)

चतुष्पथबन्धोपायः संपुटयोगः

सर्वासामेव नाडीनामेष बन्धः प्रकीर्तितः।
बन्धस्यास्य प्रसादेन स्फुटीभवति देवता॥ ४२॥

एष चतुष्पथो बन्धो मार्गत्रयनिरोधकः।
एकं विकासयन् मार्गं येन सिद्धाः सुसंगताः॥ ४३॥

उदानमूर्ध्वगं कृत्वा प्राणेन सह वेगतः।
बन्धोयं सर्वनाडीनामूर्ध्वं याति निरोधकः॥ ४४॥

अयं च संपुटो योगो मूलबन्धोप्ययं मतः।
बन्धत्रयमनेनैव सिध्यत्यभ्यासयोगतः॥ ४५॥

चतुष्पथबन्धोपायरूपसंपुटयोगमाह- सर्वासामिति ।
वक्ष्यमाणोयं सर्वासामिति । अनेन किं भवेदित्यत्र- बन्धस्येति ।
देवता प्रत्यक् चित् प्रकाशत इत्यर्थः ॥ ४२ ॥ किंच- एष इति । यत्र
सुषुम्नेडापिङ्गलाकुहूनाड्यः एकतां गच्छन्ति स एष चतुष्पथः
चतुर्द्वारो मूलाधाराश्रयो भवति । तत्र बन्धो मूलबन्धः
स[त]दाकुञ्चनात्मकः । तत्र येन सुषुम्नाबिलप्रवेशेन सिद्धा
ब्रह्मभावभावितां सिद्धिं भजन्ति तमेकं सुषुम्नामार्गं
विकासयन् इडापिङ्गलाकुहूनाडीगतमार्गत्रयनिरोधको भवति ।
कुहूशब्देन अपानबिलमुच्यत इत्यर्थः ॥ ४३ ॥ तत्प्रकारमाह-
उदानमिति । प्राणेन सह वेगत उदानमूर्ध्वगं योगाभ्यासेन कृत्वा
मूलबन्धं जालंधरं च समारोप्य बन्धोयं सर्वनाडीनां
मार्गनिरोधकः सन् संपुटवद्विराजते ॥ ४४ ॥ तदानीं प्राणः
कुण्डलिनीमनोदृष्ट्यग्निभिः सह सुषुम्नामार्गेण ऊर्ध्वं
सहस्राचक्रं यातीति यत् तदयं योगः संपुट इत्यभिधीयते ।
मूलबन्धोप्ययमेवेत्यर्थः । एवम् अभ्यासयोगतः अनेन संपुटयोगेन
बन्धत्रयमपि सिध्यति ॥ ४५ ॥

संपुटाभ्यासेन ब्रह्मज्ञानप्राप्तिक्रमः

दिवारात्रमविच्छिन्नं यामे यामे यदा तदा ।
अनेनाभ्यासयोगेन वायुरभ्यसितो भवेत् ॥ ४६ ॥

वायावभ्यसिते वह्निः प्रत्यहं वर्धते तनौ ।
वह्नौ विवर्धमाने तु सुखमन्नादि जीर्यते ॥ ४७ ॥

अन्नस्य परिपाकेन रसवृद्धिः प्रजायते ।
रसे वृद्धिं गते नित्यं वर्धन्ते धातवस्तथा ॥ ४८ ॥

धातूनां वर्धनेनैव प्रबोधो वर्धते तनौ ।
दह्यन्ते सर्वपापानि जन्मकोट्यर्जितानि च ॥ ४९ ॥

यदा तदा दिवारात्रमविच्छिन्नं यामे यामे वा अनेन अभ्यासयोगेन प्राणोभ्यसितो भवेदित्यर्थः ॥ ४६ ॥ अनेन अभ्यासेन क्रमेण ब्रह्मज्ञानमपि प्रकाशत इत्याह- वायाविति ॥ ४७-४८ ॥ निःशेषसर्वपापनाशे ब्रह्माहमस्मीति निर्विशेषब्रह्मज्ञानमुदेति ।

तत्समकालं विद्वान् विमुक्तो भवतीत्यर्थः ॥ ४९ ॥

शिवशक्तिस्थाननिरूपणम्

गुदमेढ्रान्तरालस्थं मूलाधारं त्रिकोणकम् ।
शिवस्य बिन्दुरूपस्य स्थानं तद्धि प्रकाशकम् ॥ ५० ॥

यत्र कुण्डलिनी नाम परा शक्तिः प्रतिष्ठिता ।
यस्मादुत्पद्यते वायुर्यस्माद्वह्निः प्रवर्धते ॥ ५१ ॥

पृ। ५११) यस्मादुत्पद्यते बिन्दुर्यस्मान्नादः प्रवर्धते ।
यस्मादुत्पद्यते हंसो यस्मादुत्पद्यते मनः ॥ ५२ ॥

मूलाधारादिषट्चक्रं शक्तिस्थानमुदीरितम् ।
कण्ठादुपरि मूर्धान्तं शांभवं स्थानमुच्यते ॥ ५३ ॥

शिवशक्तिस्वरूपमाह- गुदेति ॥ ५०-५३ ॥

ब्रह्मानुसंधानसहितप्राणायामः

नाडीनामाश्रयः पिण्डो नाड्यः प्राणस्य चाश्रयाः ।
जीवस्य निलयः प्राणो जीवो हंसस्य चाश्रयः ॥ ५४ ॥

हंसः शक्तेरधिष्ठानं चराचरमिदं जगत् ।
निर्विकल्पः प्रसन्नात्मा प्राणायामं समभ्यसेत् ॥ ५५ ॥

सम्यग्बन्धत्रयस्थोपि लक्ष्यलक्षणकारणम् ।
वेद्यं समुद्धरेन्नित्यं सत्यसंधानमानसः ॥ ५६ ॥

रेचकं पूरकं चैव कुम्भमध्ये निरोधयेत् ।
दृश्यमाने परे लक्ष्ये ब्रह्मणि स्वयमाश्रितः ॥ ५७ ॥

स्वान्तस्थविषयं सर्वं रेचकः समुदाहृतः ।
पूरकं शास्त्रविज्ञानं कुम्भकं स्वगतं स्मृतम् ॥ ५८ ॥

एवमभ्यासचित्तश्चेत् स मुक्तो नात्र संशयः ।
कुम्भकेन सदारोप्य कुम्भकेनैव पूरयेत् ॥ ५९ ॥

पृ। ५१२) कुम्भेन कुम्भयेत् कुम्भं तदन्तस्थः परं शिवम्।

पुनरास्फालयेदद्य सुस्थिरं कण्ठमुद्रया॥ ६०॥

वायूनां गतिमावृत्य धृत्वा पूरककुम्भकौ।

एवं ज्ञात्वा प्राणायामं कुर्यादित्याह- नाडीनामिति॥ ५४॥

हंसः प्रत्यगभिन्नपरमात्मा शक्तेरधिष्ठानम्।

मायाशक्तिकार्यमेव चराचरम्॥ ५५॥ एवं यथोक्तसाधनसंपन्नो योगी

स्वातिरिक्तभ्रमतो मुक्तो भवतीत्याह- सम्यगिति।

मूलोड्याणजालंधरभेदेन सम्यग्बन्धत्रयस्थोपि। वेद्यं

प्रत्यग्ब्रह्मैक्यम्॥ ५६॥ वक्ष्यमाणलक्षणरेचकम्॥ ५७॥

स्वाज्ञविकल्पितस्वान्तस्थविषयम्। स्वस्वरूपानुसंधानमेव

कुम्भकमित्यर्थः॥ ५८॥ इत्थंभूतेन कुम्भकेन।

रेचपूरविरलकेवलकुम्भकमेव ब्रह्मस्वरूपानुसंधानपूर्वकं

सदा कुर्यादित्यर्थः॥ ५९॥ यदि चित्तं बहिर्गतं स्यात् तदा पुनरास्फालयेत्

। केवलकुम्भकतो यदि प्राणः स्वपरिकरेण साकं बहिः निर्गच्छति तदा

जालंधरबन्धाख्यकण्ठमुद्रया अद्य सुस्थिरं यथा भवति तथा

वायूनां ऊर्ध्वाधोगतिमावृत्य आक्रम्य पुनः पूरककुम्भकौ

धृत्वा आस्फालयेत् अभ्यसेदित्यर्थः॥ ६०॥

वेधकयोगाभ्यासक्रमः

समहस्तयुगं भूमौ समं पादयुगं तथा ॥ ६१ ॥

वेधकत्रययोगेन चतुष्पीठं तु वायुना ।

आस्फालयेन्महामेरुं वायुवक्त्रे प्रकोटिभिः ॥ ६२ ॥

पुटद्वयं समाकृष्य वायुः स्फुरति सत्वरम् ।

सोमसूर्याग्निसंबन्धात् जानीयादमृताय वै ॥ ६३ ॥

प्। ५१३) मेरुमध्यगता देवाश्चलन्ते मेरुचालनात् ।

आदौ संजायते क्षिप्रं वेधोस्य ब्रह्मग्रन्थितः ॥ ६४ ॥

ब्रह्मग्रन्थिं ततो भित्त्वा विष्णुग्रन्थिं भिनत्त्यसौ ।

विष्णुग्रन्थिं ततो भित्त्वा रुद्रग्रन्थिं भिनत्त्यसौ ॥ ६५ ॥

रुद्रग्रन्थिं ततो भित्त्वा छित्त्वा मोहमलं तथा ।

अनेकजन्मसंस्कारगुरुदेवप्रसादतः ॥ ६६ ॥

योगाभ्यासात् ततो वेधो जायते तस्य योगिनः।
इडापिङ्गलयोर्मध्ये सुषुम्नानाडिमण्डले॥ ६७॥

मुद्राबन्धविशेषेण वायुमूर्ध्वं च कारयेत्।

एवं वेधकयोगाभ्यासक्रममाह- समेति। योगी
योगमठस्थसमभूमौ पद्मासनमारुह्य समहस्तपादयुगं यथा
भवति तथा निश्चेष्टो भूत्वा॥ ६१॥ सपरिकरेण प्राणवायुना
ब्रह्मविष्णुरुद्रग्रन्थिवेधनं कृत्वा, एवं वेधकत्रययोगेन
वायुवक्रे सुषुम्नावदने प्रकोटिभिः स्वपरिकरैः प्राणकुण्डलिनी-
दृष्टिमनोग्निभिः साकं मूलाधारादिषट्चक्रगतचतुष्पीठं
त्वासाद्य, तदुपरि विद्यमानमहामेरुं
सहस्रारचक्रासनतुर्यचैतन्यम् अहमस्मीत्यास्फालयेत् आस्फारयेत्
सर्वव्यापकतया ध्यायेदित्यर्थः॥ ६२॥ ततः किमित्यत्र यदा
भ्रूमध्याख्यत्रिकूटोपरि सोमसूर्याग्नि संबन्धात्
सोमसूर्यकुण्डल्यग्निपुटद्वयनिष्पन्नममृतं समाकृष्य ग्रसित्वा
सत्वरं यदा प्राणः स्फुरति तदा अमृताय अमृतत्वायैव
प्राणादिलयस्फूर्तिः भवतीति जानीयादित्यर्थः॥ ६३॥ विश्वविराडोत्रादयो

ब्रह्मादयो वा देवाः कूटस्थचैतन्यात्मकमेरुमध्यगता भवन्ति।
मेरावारोपितविशेषांशचालनात् निर्विशेषापादनात् तेपि चलन्ते निर्विशेषा
भवन्तीत्यर्थः। सहस्रारगतकूटस्थावगतेः
ग्रन्थित्रयभेदनपूर्वकत्वादिति ग्रन्थित्रयभेदनप्रकारमाह-
आदाविति। आदावस्य

प्। ५१४) योगिनः ब्रह्मग्रन्थितः ब्रह्मग्रन्थेः वेधो भेदनं जायते
॥ ६४-६५॥ ततः क्रमेण ब्रह्मादिग्रन्थित्रयं स्वाज्ञानमलं च
भित्त्वा ब्रह्मातिरिक्तं न किंचिदस्ति इति ज्ञात्वा तज्ज्ञानसमकालं
कृतकृत्यो भवतीत्यर्थः। इत्थं मुक्तिप्रदवेधकयोगं स्तौति-
अनेकेति॥ ६६॥
अनन्तकोटिजन्मसुकृतासादितश्रुत्याचार्यप्रसादलब्धवेधकयोगा-
भ्यासात् तस्य योगिनः ब्रह्मग्रन्थ्यादिवेधो जायते नेतरस्येत्यर्थः।
वेधसिद्ध्युपायस्तु- इडापिङ्गलयोर्मध्ये
विलसितसुषुम्नानाडिमण्डले इत्यादि॥ ६७॥ सुषुम्नायां वायुगत्या
उक्तलक्षणलक्षितवेधो भवतीत्यर्थः॥

विघ्नशान्तये प्रणवजपः

ह्रस्वो दहति पापानि दीर्घो मोक्षप्रदायकः ॥ ६८ ॥

आप्यायनः प्लुतो वापि त्रिविधोच्चारणेन तु ।
तैलधारामिवाच्छिन्नं दीर्घघण्टानिनादवत् ॥ ६९ ॥

अवाच्यं प्रणवस्याग्रं यस्तं वेद स वेदवित् ।
ह्रस्वं बिन्दुगतं दैर्घ्यं ब्रह्मरन्ध्रगतं प्लुतम् ।
द्वादशान्तगतं मन्त्रं प्रसादं मन्त्रसिद्धये ॥ ७० ॥

सर्वविघ्नहरश्चायं प्रणवः सर्वदोषहा ।

वेधकोपायभूतप्राणोर्ध्वयोगसिद्धिविघ्नशान्तये
प्रणवाग्रलक्ष्यधारणपूर्वकं चतुर्मात्रात्मकं प्रणवजपं
कुर्यात् इत्याह- ह्रस्व इति । एकमात्राप्रणवजपतः पापहानिः भवति ॥
६८ ॥ आप्यायनो नाम द्विमात्राप्रणवः तज्जपादस्य श्रीर्भवति । दीर्घः
त्रिमात्रात्मकः चतुर्मात्रात्मकः प्लुतो वा मोक्षप्रदायको

पृ। ५९५) भवति । एवं त्रिविधोच्चारणेन यथोक्तफलम् अश्नुत इत्यत्र
यदि ह्रस्वा भवति सर्वं पाप्मानं दहति अमृतत्वं च गच्छति यदि

दीर्घा भवति महतीं श्रियं आप्नोति अमृतत्वं च गच्छति यदि प्लुता भवति ज्ञानवान् भवति अमृतत्वं च गच्छति इति श्रुतेः ॥ ६९ ॥ यतः एवम् अतः प्रणवानुष्ठानं कर्तव्यमित्याह- ह्रस्वमिति । बिन्दुगतं हृदयगतम् । द्वादशान्तगतं ब्रह्मरन्ध्रोर्ध्वभागगतम् । प्रसादं प्रसादकरं विद्धि ॥ ७० ॥ अतः सर्वेति । सर्वदोषहा भवतीत्यर्थः ॥

आरम्भादियोगभूमिकाचतुष्टयम्

आरम्भश्च घटश्चैव तथा परिचयस्तथा ॥ ७१ ॥

निष्पत्तिश्चेति कथिता श्चतस्रस्तस्य भूमिकाः ।
करणत्रयसंभूतं बाह्यं कर्म परित्यजन् ॥ ७२ ॥

अन्तरं कर्म कुरुते यत्रारम्भः स उच्यते ।
वायुः पश्चिमतो वेधं कुर्वन्नापूर्य सुस्थिरम् ॥ ७३ ॥

यत्र तिष्ठति सा प्रोक्ता घटाख्या भूमिका बुधैः ।
न सजीवो न निर्जीवः काये तिष्ठति निश्चलम् ।

यत्र वायुः स्थिरः खे स्यात् सेयं प्रचयभूमिका ॥ ७४ ॥

यत्रात्मानं सृष्टिलयौ जीवन्मुक्तिदशां गतः ।
सहजः कुरुते योगं सेयं निष्पत्तिभूमिका ॥ ७५ ॥

इति ॥

प्। ५१६) एवं प्रणवजपशुद्धान्तरस्य महावेधकयोगोपायतया योगभूमिकाचतुष्टयमाह- आरम्भश्चेति ॥ ७१ ॥ तत्रारम्भभूमिकालक्षणमाह- करणेति । मनोवाक्कायाख्यकरणत्रयसंभूतम् ॥ ७२ ॥ द्वितीयभूमिकामाचष्टे- वायुरिति । वायुः पश्चिमतः सुषुम्नामार्गेण शरीरमापूर्य सुस्थिरं यथा भवति तथा ग्रन्थित्रयं वेधं कुर्वन् यत्रावतिष्ठति सेयं घटभूमिका भवतीत्यर्थः ॥ ७३ ॥ प्रचयभूमिकालक्षणमाह- न सेति । चेष्टाभावान्न सजीवः । सप्राणत्वान्न निर्जीवः । यत्र सहस्राराकाशे वायुः स्थिरो भवति सेयं प्रचयभूमिकेत्यर्थः ॥ ७४ ॥ निष्पत्तिभूमिकालक्षणमाह- यत्रेति । यत्र तुरीयभूमिकायां ईश्वरात्मना योगी जाग्रदादिप्रपञ्चसृष्टिलयौ कृत्वा जीवन्मुक्तिदशामेत्य सहजः सहजं योगम् असंप्रज्ञाताख्यं कुरुते

सेयं निष्पत्तिभूमिका भवति ॥ ७५ ॥ इतिशब्दो
भूमिकाचतुष्टयसमाप्त्यर्थः ॥

एतद्विद्यापठनवेदनयोः फलम्

एतदुपनिषदं योधीते सोग्निपूतो भवति । स वायुपूतो भवति ।
सुरापानात् पूतो भवति । स्वर्णस्तेयात् पूतो भवति । स जीवन्मुक्तो भवति ॥ ७६
॥ तदेतदृचाभ्युक्तम् । तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः ।
दिवीव चक्षुराततम् । तद्विप्रासो विपन्यवो जागृवांसः समिन्धते ।
विष्णोर्यत्परमं पदमित्युपनिषत् ॥ ७७ ॥

एतद्विद्यापठनफलमाह- एतदिति । एतदुपनिषदम्
एतामुपनिषदं योधीते । वेदनफलमाह- स जीवन्मुक्त इति ॥ ७६ ॥
अयं

पृ । ५१७) मन्त्रः आरुणिकोपनिषदि व्याख्यातः । इत्युपनिषच्छब्दो
वराहोपनिषत्परिसमाप्त्यर्थः ॥ ७७ ॥

इति पञ्चमोध्यायः

श्रीवासुदेवन्द्रशिष्योपनिषद्ब्रह्मयोगिना ।

वराहोपनिषद्व्याख्या लिखिता ब्रह्मगोचरा ।

वराहोपनिषद्व्याख्याग्रन्थजातं चतुश्शतम् ॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे

अष्टनवतिसंख्यापूरकं वराहोपनिषद्विवरणं

संपूर्णम्

XXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXX



XXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXX

**********************************************************
*"saa.n.dilyopani.sat
*
* From the Yoga Upanisads with the commentary of sri Upanisad-brahmayogin
* edited by Pandit A. Mahadeva Sastri, B.A.
*
* THE ADYAR LIBRARY AND RESEARCH CENTRE
* First published 1920
*
* Data entered by the staff of Muktabodha
* under the supervision of Dr. Mark S. G. Dyczkowski
*
* Velthius transliteration
* revision 0 Jan 28, 2007

*
*
**********************************************************

शाण्डिल्योपनिषत्

भद्रं कर्णेभिः- इति शान्तिः

प्रथमोऽध्यायः

योगाष्टाङ्गनिर्देशः

शाण्डिल्यो ह वा अथर्वाणं

पप्रच्छात्मलाभोपायभूतमष्टाङ्गयोगमनुब्रूहीति ॥ १ ॥ स

होवाचाथर्वा- यमनियमासनप्राणायामप्रत्याहारधारणा-

ध्यानसमाधयोऽष्टाङ्गानि ॥ २ ॥ तत्र दश यमाः । तथा नियमाः ।

आसनान्यष्टौ । त्रिः प्राणायामः । पञ्च प्रत्याहाराः । तथा

धारणाः । द्विप्रकारं ध्यानम् । समाधिस्त्वेकरूपः ॥ ३ ॥

शाण्डिल्योपनिषत्प्रोक्तयमाद्यष्टाङ्गयोगिनः ।

यद्बोधाद्यान्ति कैवल्यं स रामो मे परा गतिः ॥

इह खलु अथर्वणवेदप्रविभक्तेयं शाण्डिल्योपनिषत्

यमाद्यष्टाङ्गयोगतद्गौणमुख्यसिद्धिप्रकाशनव्यग्रा

निष्प्रतियोगिकब्रह्ममात्रपर्यवसन्ना विजृम्भते । अस्याः

p. 519) स्वल्पग्रन्थतो विवरणमारभ्यते ।

शाण्डिल्याथर्वप्रश्नप्रतिवचनरूपेयमाख्यायिका विद्यास्तुत्यर्था ।

आख्यायिकामवतारयति- शाण्डिल्य इति । किमिति ? आत्मेति ॥ १ ॥ एवं

शाण्डिल्येन पृष्टः स होवाच । किं तत् ? योगोऽष्टाङ्ग उच्यते- यमेति ॥ २-

१४ ॥

## दशविधयमनिरूपणम्

तत्राहिंसासत्यास्तेयब्रह्मचर्यदयार्जवक्षमाधृतिमिताहार-
शौचानि चेति यमा दश ॥ ४ ॥ तत्राहिंसा नाम मनोवाक्कायकर्मभिः
सर्वभूतेषु सर्वदाक्लेशजननम् ॥ ५ ॥ सत्यं नाम
मनोवाक्कायकर्मभिर्भूतहितयथार्थाभिभाषणम् ॥ ६ ॥ अस्तेयं
नाम मनोवाक्कायकर्मभिः परद्रव्येषु निःस्पृहा ॥ ७ ॥ ब्रह्मचर्यं
नाम सर्वावस्थासु मनोवाक्कायकर्मभिः सर्वत्र मैथुनत्यागः ॥ ८
॥ दया नाम सर्वभूतेषु सर्वत्रानुग्रहः ॥ ९ ॥ आर्जवं नाम
मनोवाक्कायकर्मणां विहिताविहितेषु जनेषु प्रवृत्तौ निवृत्तौ वा
एकरूपत्वम् ॥ १० ॥ क्षमा नाम प्रियाप्रियेषु सर्वेषु ताडनपूजनेषु
सहनम् ॥ ११ ॥ धृतिर्नामार्थहानौ स्वेष्टबन्धुयोगे तत्प्राप्तौ सर्वत्र
चेतःस्थापनम् ॥ १२ ॥ मिताहारो नाम
चतुर्थांशावशेषकसुस्निग्धमधुराहारः ॥ १३ ॥ शौचं नाम
द्विविधं बाह्यमान्तरं चेति । तत्र मृज्जलाभ्यां बाह्यम् ।
मनःशुद्धिरान्तरम् । तदध्यात्मविद्यया लभ्यम् ॥ १४ ॥

इति प्रथमः खण्डः

दशविधनियमनिरूपणम्

तपःसंतोषास्तिक्यदानेश्वरपूजनसिद्धान्तश्रवणह्रीमतिजप-
व्रतानि दश नियमाः ॥ १ ॥ तत्र तपो नाम
विध्युक्तकृच्छ्रचान्द्रायणादिभिः शरीरशोषणम् ॥ २ ॥ संतोषो नाम
यदृच्छालाभतुष्टिः ॥ ३ ॥ आस्तिक्यं नाम वेदोक्तधर्माधर्मेषु
विश्वासः ॥ ४ ॥ दानं नाम न्यायार्जितधनधान्यादेः
श्रद्धयार्थिभ्यः प्रदानम् ॥ ५ ॥ ईश्वरपूजनं नाम
प्रसन्नस्वभावेन यथाशक्ति विष्णुरुद्रादिपूजनम् ॥ ६ ॥
सिद्धान्तश्रवणं नाम वेदान्तार्थविचारः ॥ ७ ॥ ह्रीर्नाम
वेदलौकिकमार्गकुत्सितकर्मणि लज्जा ॥ ८ ॥ मतिर्नाम
वेदविहितकर्ममार्गेषु श्रद्धा ॥ ९ ॥ जपो नाम
विधिवद्गुरूपदिष्टवेदाविरुद्धमन्त्राभ्यासः । तद्द्विविधं वाचिकं
मानसं चेति । मानसं तु मनसा ध्यानयुक्तम् । वाचिकं
द्विविधमुच्चैरुपांशुभेदेन । उच्चैरुच्चारणं यथोक्तफलम् ।
उपांशु सहस्रगुणम् । मानसं कोटिगुणम् ॥ १० ॥ व्रतं नाम
वेदोक्तविधिनिषेधानुष्ठाननैयत्यम् ॥ ११ ॥

दशधा भिन्नयमस्वरूपमुक्त्वा तथा नियमस्वरूपमाह-
तप इति ॥ १-९ ॥ मन्त्रार्थानुसंधानं मानसमित्यर्थः ॥ १०-११ ॥

इति द्वितीयः खण्डः

## अष्टविधासननिरूपणम्

स्वस्तिकगोमुखपद्मवीरसिंहभद्रमुक्तमयूराख्यान्यासना-
न्यष्टौ ।

स्वस्तिकं नाम-

जानूर्वोरन्तरे सम्यक्कृत्वा पादतले उभे ।
ऋजुकायः समासीनः स्वस्तिकं तत्प्रचक्षते ॥ १ ॥

सव्ये दक्षिणगुल्फं तु पृष्ठपार्श्वे नियोजयेत् ।
दक्षिणेऽपि तथा सव्यं गोमुखं गोमुखं यथा ॥ २ ॥

अङ्गुष्ठेन निबध्नीयाद्धस्ताभ्यां व्युत्क्रमेण च ।
ऊर्वोरुपरि शाण्डिल्य कृत्वा पादतले उभे ।
पद्मासनं भवेदेतत् सर्वेषामपि पूजितम् ॥ ३ ॥

एकं पादमथैकस्मिन् विन्यस्योरुणि संस्थितः।
इतरस्मिंस्तथा चोरुं वीरासनमुदीरितम्॥ ४॥

दक्षिणं सव्यगुल्फेन दक्षिणेन तथेतरम्।
हस्तौ च जान्वोः संस्थाप्य स्वाङ्गुलीश्च प्रसार्य च॥ ५॥

व्यात्तवक्त्रो निरीक्षेत नासाग्रं सुसमाहितः।
सिंहासनं भवेदेतत् पूजितं योगिभिः सदा॥ ६॥

योनिं वामेन संपीड्य मेढ्रादुपरि दक्षिणम्।
भ्रूमध्ये च मनोलक्ष्यं सिद्धासनमिदं भवेत्॥ ७॥

गुल्फौ तु वृषणस्याधः सीवन्याः पार्श्वयोः क्षिपेत्।
पादपार्श्वे तु पाणिभ्यां दृढं बद्ध्वा सुनिश्चलम्।
भद्रासनं भवेदेतत् सर्वव्याधिविषापहम्॥ ८॥

p. 522) संपीड्य सीविनीं सूक्ष्मां गुल्फेनैव तु सव्यतः।
सव्यं दक्षिणगुल्फेन मुक्तासनमिदं भवेत्॥ ९॥

अवष्टभ्य धरां सम्यक् तलाभ्यां तु करद्वयोः।

हस्तयोः कूर्परौ चापि स्थापयेन्नाभिपार्श्वयोः ॥ १० ॥

समुन्नतशिरःपादो दण्डवद्व्योम्नि संस्थितः ।
मयूरासनमेतत्तु सर्वपापप्रणाशनम् ॥ ११ ॥

शरीरान्तर्गताः सर्वरोगा विनश्यन्ति । विषाणि जीर्यन्ते ॥ १२ ॥ येन
केनासनेन सुखधारणं भवत्यशक्तस्तत्समाचरेत् ॥ १३ ॥

स्वस्तिकाद्यष्टासनप्रकारमाह- स्वस्तिकेति ॥ १ ॥
गोमुखासनमाह- सव्य इति ॥ २ ॥ पद्मासनमाचष्टे- अङ्गुष्ठेनेति ॥ ३ ॥
वीरासनलक्षणमाह- एकमिति ॥ ४ ॥ सिंहासनप्रकारमाह- दक्षिणमिति
॥ ५-६ ॥ सिद्धासनस्वरूपमाह- योनिमिति ॥ ७ ॥ भद्रासनमाह- गुल्फाविति
॥ ८ ॥ मुक्तासनप्रकारमाह- संपीड्येति ॥ ९॥ मयूरासनमाह-
अवष्टभ्येति ॥ १०-१३ ॥

आसनजयफलम्

येनासनं विजितं जगत्त्रयं तेन विजितं भवति ॥ १४ ॥
यमनियमासनाभ्यासयुक्तः पुरुषः प्राणायामं चरेत् । तेन
नाडयः शुद्धा भवन्ति ॥ १५ ॥

आसनजयफलमाह- येनेति ॥ १४ ॥ ततः किमित्यत आह- यमेति ॥ १५ ॥

इति तृतीयः खण्डः

नाडीसंख्यादिजिज्ञासा

अथ हैनमथर्वाणं शाण्डिल्यः पप्रच्छ केनोपायेन नाडयः
शुद्धाः स्युः । नाडयः कतिसंख्याकाः तासामुत्पत्तिः कीदृशी । तासु
कति वायवस्तिष्ठन्ति । तेषां कानि स्थानानि । तत्कर्माणि कानि । देहे यानि
यानि विज्ञातव्यानि तत्सर्वं मे ब्रूहीति ॥ १ ॥

शाण्डिल्यः प्रश्नबीजमवष्टभ्याथर्वाणं पृच्छतीत्याह-
अथेति ॥ १ ॥

शरीरप्राणप्रमाणम्

स होवाचाथर्वा । अथेदं शरीरं षण्णवत्यङ्गुलात्मकं
भवति । शरीरात् प्राणो द्वादशाङ्गुलाधिको भवति ॥ २ ॥

शाण्डिल्येन एवं पृष्टः सः। स्वस्वाङ्गुलिमानेन षण्णवतीति ॥ २ ॥

कुम्भकविधिः

शरीरस्थं प्राणमग्निना सह योगाभ्यासेन समं न्यूनं
वा यः करोति स योगिपुङ्गवो भवति ॥ ३ ॥

समन्यूनशब्दाभ्यां कुम्भकदीर्घकुम्भकावुच्येते इत्यर्थः ॥ ३ ॥

मनुष्यादीनामग्निस्थानम्

देहमध्ये शिखिस्थानं त्रिकोणं तप्तजाम्बूनदप्रभं
मनुष्याणाम्। चतुष्पदां चतुरश्रम्। विहगानां वृत्ताकारम्।
तन्मध्ये शुभा तन्वी पावकी शिखा तिष्ठति ॥ ४ ॥

p. 524) मनुष्यादीनामग्निस्थानमाह- देहेति ॥ ४ ॥

मनुष्यादिदेहमध्यलक्षणम्

गुहाद् व्यङ्गुलादूर्ध्वं मेढ्राद् व्यङ्गुलादधो

देहमध्यं मनुष्याणां भवति। चतुष्पदां हृन्मध्यम्।
विहगानां तुन्दमध्यम्। देहमध्यं नवाङ्गुलं
चतुरङ्गुलमुत्सेधायतमण्डाकृति॥ ५॥

मनुष्यादिदेहमध्यलक्षणमाह- गुदादिति॥ ५-७॥

नाभिचक्रे जीवभ्रमणम्

तन्मध्ये नाभिः। तत्र द्वादशारयुतं चक्रम्। तच्चक्रमध्ये
पुण्यपापप्रचोदिता जीवो भ्रमति॥ ६॥ तन्तुपञ्जरमध्यस्थलूतिका
यथा भ्रमति तथा चासौ तत्र प्राणश्चरति। देहेऽस्मिन् जीवः
प्राणारूढो भवेत्॥ ७॥

कुण्डलिनीस्वरूपचेष्टाः

नाभेस्तिर्यगधोर्ध्वं कुण्डलिनीस्थानम्।
अष्टप्रकृतिरूपाष्टधा कुण्डलीकृता कुण्डलिनी शक्तिर्भवति।
यथावद्वायुसंचारं जलान्नादीनि परितः स्कन्धपार्श्वेषु
निरुध्यैनं मुखेनैष समावेष्ट्य ब्रह्मरन्ध्रं
योगकालेऽपानेनाग्निना च स्फुरति हृदयाकाशं महोज्ज्वला

ज्ञानरूपा भवति ॥ ८ ॥

तत्स्वरूपं तच्चेष्टां चाह- अष्टेति । ब्रह्मरन्ध्रं पुच्छेन च ॥ ८ ॥

p. 525) चतुर्दशनाढ्यः

मध्यस्थकुण्डलिनीमाश्रित्य मुख्या नाड्यश्चतुर्दश भवन्ति ।
इडा पिङ्गला सुषुम्ना सरस्वती वारुणा पूषा हस्तिजिह्वा यशस्विनी
विश्वोदरा कुहूः शङ्खिनी पयस्विनी अलम्बुसा गान्धारीति
नाड्यश्चतुर्दश भवन्ति ॥ ९ ॥

देहमध्यस्थेति । कास्ता इत्यत्र इडेति ॥ ९ ॥

सुषुम्नानाडी

तत्र सुषुम्ना विश्वधारिणी मोक्षमार्गेति चाचक्षते । गुदस्य
पृष्ठभागे वीणादण्डाश्रिता मूर्धपर्यन्तं ब्रह्मरन्ध्रेति
विज्ञेया व्यक्ता सूक्ष्मा वैष्णवी भवति ॥ १० ॥

सुषुम्नास्वरूपमाह- गुदस्येति ॥ १० ॥

सुषुम्नापरितः इतरनाडीस्थानानि

सुषुम्नायाः सव्यभागे इडा तिष्ठति। दक्षिणभागे पिङ्गला।
इडायां चन्द्रश्चरति। पिङ्गलायां रविः। तमोरूपश्चन्द्रः।
रजोरूपो रविः। विषभागो रविः अमृतभागश्चन्द्रमाः। तावेव
सर्वकालं धत्ते। सुषुम्ना कालभोक्त्री भवति।
सुषुम्नापृष्ठपार्श्वयोः सरस्वतीकुहू भवतः।
यशस्विनीकुहूमध्ये वारुणी प्रतिष्ठिता भवति। पूषासरस्वतीमध्ये
पयस्विनी भवति। गान्धारीसरस्वतीमध्ये यशस्विनी

p. 526) भवति। कन्दमध्येऽलम्बुसा भवति। सुषुम्नापूर्वभागे
मेढ्रान्तं कुहूर्भवति। कुण्डलिन्या अधश्चोर्ध्वं वारुणी
सर्वगामिनी भवति। यशस्विनी सौम्या च पादाङ्गुष्ठान्तमिष्यते।
पिङ्गला चोर्ध्वगा याम्यनासान्तं भवति। पिङ्गलायाः पृष्ठतो
याम्यनेत्रान्तं पूषा भवति। याम्यकर्णान्तं यशस्विनी भवति।
जिह्वाया ऊर्ध्वान्तं सरस्वती भवति। आसव्यकर्णान्तमूर्ध्वगा
शङ्खिनी भवति। इडापृष्ठभागात् सव्यनेत्रान्तगा गान्धारी भवति।
पायुमूलादधोर्ध्वगालम्बुसा भवति। एतासु चतुर्दशनाडीष्वन्या
नाड्यः संभवन्ति। तास्वन्यास्तास्वन्या भवन्तीति विज्ञेयाः।

यथाश्वत्थादिपत्रं सिराभिर्व्याप्तमेवं शरीरं नाडीभिर्व्याप्तम्

॥ ११ ॥

सुषुम्नायाः परितः इडादिनाड्यस्तिष्ठन्तीत्याह- सुषुम्नाया इति

॥ ११ ॥

प्राणादिदशवायुस्थानचेष्टाः

प्राणापानसमानोदानव्याना नागकूर्मकृकरदेवदत्त-
धनंजया एते दश वायवः सर्वासु नाडीषु चरन्ति ॥ १२ ॥
आस्यनासिकाकण्ठनाभिपादाङ्गुष्ठद्वयकुण्डल्यधश्चोर्ध्व-
भागेषु प्राणः संचरति । श्रोत्राक्षिकटिगुल्फघ्राणगलस्फिग्देशेषु
व्यानः संचरति । गुदमेढ्रोरुजानूदरवृषणकटिजङ्घानाभि-
गुदाग्न्यगारेष्वपानः संचरति । सर्वसंधिस्थ उदानः ।
पादहस्तयोरपि सर्वगात्रेषु सर्वव्यापी समानः । भुक्तान्नरसादिकं
गात्रेऽग्निना सह व्यापयन् द्विसप्ततिसहस्रेषु नाडीमार्गेषु

p. 527) चरन् समानवायुरग्निना सह साङ्गोपाङ्गकलेवरं व्याप्य-
नागादिवायवः पञ्च त्वगस्थ्यादिसंभवाः तुन्दस्थं जलमन्नं
च रसादिषु समीरितं- तुन्दमध्यगतः प्राणस्तानि पृथक्कुर्यात् ।

अग्नेरुपरि जलं स्थाप्य जलोपर्यन्नादीनि संस्थाप्य स्वयमपानं संप्राप्य तेनैव सह मारुतः प्रयाति देहमध्यगतं ज्वलनम्। वायुना पतितो वह्निरपानेन शनैर्देहमध्ये ज्वलति। ज्वलनो ज्वालाभिः प्राणेन कोष्ठमध्यगतं जलमत्युष्णमकरोत्। जलोपरि समर्पितं व्यञ्जनसंयुक्तमन्नं वह्निसंयुक्तवारिणा पक्वमकरोत्। तेन स्वेदमूत्रजलरक्तवीर्यरूपरसपुरीषादिकं प्राणः पृथक्कुर्यात्। समानवायुना सह सर्वासु नाडीषु रसं व्यापयन् श्वासरूपेण देहे वायुश्चरति। नवभिर्व्योमरन्ध्रैः शरीरस्य वायवः कुर्वन्ति विण्मूत्रादिविसर्जनम्। निश्वासोच्छ्वासकासश्च प्राणकर्मोच्यते। विण्मूत्रादिविसर्जनमपानवायुकर्म। हानोपादानचेष्टादि व्यानकर्म। देहस्योन्नयनादिकमुदानकर्म। शरीरपोषणादिकं समानकर्म। उद्गारादि नागकर्म निमीलनादि कूर्मकर्म। क्षुत्करणं कृकरकर्म। तन्द्री देवदत्तकर्म। श्लेष्मादि धनंजयकर्म॥ १३॥

नाडीभेदमुक्त्वा वायुभेदमाह- प्राणेति॥ १२॥
प्राणादिचेष्टामाचष्टे- आस्येति॥ १३-१४॥

नाडीशोधनविधिः

एवं नाडीस्थानं वायुस्थानं तत्कर्म च सम्यज्ज्ञात्वा
नाडीसंशोधनं कुर्यात् ॥ १४ ॥

इति चतुर्थः खण्डः

योगाधिकारियोगमठयोः लक्षणम्

यमनियमयुतः पुरुषः सर्वसङ्गविवर्जितः कृतविद्यः
सत्यधर्मरतो जितक्रोधो गुरुशुश्रूषानिरतः पितृमातृविधेयः
स्वाश्रमोक्तसदाचारविद्वच्छिक्षितः फलमूलोदकान्वितं तपोवनं
प्राप्य रम्यदेशे ब्रह्मघोषसमन्विते स्वधर्मनिरतब्रह्मवित्समावृते
फलमूलपुष्पवारिभिः सुसंपूर्णे देवायतने नदीतीरे ग्रामे नगरे
वापि सुशोभनमठं नात्युच्चनीचायतमल्पद्वारं गोमयादिलिप्तं
सर्वरक्षासमन्वितं कृत्वा तत्र वेदान्तश्रवणं कुर्वन् योगं
समारभेत् ॥ १ ॥

सप्रकारं सोपायं सामान्यविशेषप्राणायामलक्षणमाह-
यमेति । योगाधिकारिलक्षणमुक्त्वा योगमठलक्षणमाह- फलेति । तत्र
योगमठे ॥ १ ॥

प्राणायामारम्भप्रकारः

आदौ विनायकं संपूज्य स्वेष्टदेवतां नत्वा पूर्वोक्तासने
स्थित्वा प्राङ्मुख उदङ्मुखो वापि मृद्वासनेषु जितासनगतो विद्वान्
समग्रीवशिरोनासाग्रदृग्भ्रूमध्ये शशभृद्बिम्बं पश्यन्
नेत्राभ्यासमृतं द्वादशमात्रया इडया वायुमापूर्योदरे स्थितं
ज्वालावलीयुतं रेफबिन्दुयुक्तमग्निमण्डलयुतं ध्यायेद्रेचयेत्
पिङ्गलया। पुनः पिङ्गलयापूर्य कुम्भित्वा रेचयेदिडया॥ २॥

योगारम्भप्रकारमाह- आदाविति। अमृतं स्रवन्तं
चन्द्रमण्डलं पश्यन्॥ २॥

p. 529) नाडीशोधकप्राणायामाभ्यासकालावधिः

त्रिचतुस्त्रिचतुः सप्तत्रिचतुर्मासपर्यन्तं त्रिसंधिषु तदन्तराले च
षट्कृत्व आचरेन्नाडीशुद्धिर्भवति॥ ३॥

कियन्तं कालं कर्तव्यमित्यत्र अवधिमाह- त्रिचतुरिति।
त्रिचतुस्त्रिचत्वारिंशद्दिनपर्यन्तं वा, त्रिचतुस्त्रिमासं चतुर्मासं
सप्तमासं वा, त्रिचतुर्मासपर्यन्तं संवत्सरपर्यन्तं वा, एवं

षट्कालं प्राणायामं कुर्वतो नाडीशुद्धिः भवति ॥ ३ ॥

नाडीशुद्धिचिह्नानि

ततः शरीरलघुदीप्तिवह्निवृद्धिनादाभिव्यक्तिर्भवति ॥ ४ ॥

ततः किमित्यत आह- तत इति । योगिनः शरीरस्य लघुत्वं
दीप्तिमत्त्वं सौन्दर्यादिः जायते इत्यर्थः ॥ ४ ॥

इति पञ्चमः खण्डः

प्रणवात्मकप्राणायामः

प्राणापानसमायोगः प्राणायामो भवति ।
रेचकपूरककुम्भकभेदेन स त्रिविधः ॥ १ ॥ ते वर्णात्मकाः । तस्मात्
प्रणव एव प्राणायामः ॥ २ ॥

प्रणवात्मकप्राणायामस्वरूपमाह- प्राणेति ॥ १ ॥
रेचकादयः ते । यस्मात् रेचकादयः अकारोकारमकारात्मकाः तस्मात् ॥
२ ॥

p. 530) प्रणववर्णध्यानप्रकारः

पद्माद्यासनस्थः

पुमान्नासाग्रशशभृद्बिम्बज्योत्स्नाजालवितानिताकारमूर्ति रक्ताङ्गी

हंसवाहिनी दण्डहस्ता बाला गायत्री भवति। उकारमूर्तिः

श्वेताङ्गी तार्क्ष्यवाहिनी युवती चक्रहस्ता सावित्री भवति।

मकारमूर्तिः कृष्णाङ्गी वृषभवाहिनी वृद्धा त्रिशूलधारिणी

सरस्वती भवती ॥ ३ ॥ अकारादित्रयाणां सर्वकारणमेकाक्षरं

परंज्योतिः प्रणवं भवति ॥ ४ ॥

यथोक्तसाधनसंपन्नो योगी

अकारादिवर्णत्रयवाच्यगायत्र्यादिमूर्तित्रयध्यानपूर्वकं

यथाविधि प्राणायामं कुर्यादित्याह- पद्मेति ॥ ३ ॥

अकारादिमात्रात्रयसमष्टिः प्रणवो भवतीत्याह- अकारादीति।

प्रणवं प्रणवस्वरूपम् ॥ ४ ॥

प्राणाभ्यासप्रकारः

इडया बाह्याद्वायुमापूर्य षोडशमात्राभिरकारं चिन्तयन्

पूरितं वायुं चतुःषष्टिमात्राभिः कुम्भयित्वोंकारं ध्यायन्
पूरितं पिङ्गलया द्वात्रिंशन्मात्रया मकारमूर्तिध्यानेनैवं
क्रमेण पुनः पुनः कुर्यात्॥ ५॥

प्राणाभ्यासप्रकारमाह- इडयेति॥ ५॥

इति षष्ठः खण्डः

p. 531)सुषुम्नामलशोधनार्थप्राणायामः

अथासनदृढो योगी वशी मितहिताशनः
सुषुम्नानाडीस्थमलशोषार्थं योगी बद्धपद्मासनो वायुं
चन्द्रेणापूर्य यथाशक्ति कुम्भयित्वा सूर्येण रेचयित्वा पुनः
सूर्येणापूर्य कुम्भयित्वा चन्द्रेण विरेच्य यया त्यजेत् तया संपूर्य
धारयेत्। तदेते श्लोका भवन्ति-

प्राणं प्रागिडया पिबेन्नियमितं भूयोऽन्यया रेचयेत्
पीत्वा पिङ्गलया समीरणमथो बद्ध्वा त्यजेद्वामया।
सूर्याचन्द्रमसोरनेन विधिनाभ्यासं सदा तन्वतां
शुद्धा नाडिगणा भवन्ति यमिनां मासत्रयादूर्ध्वतः॥ १॥

योगी सुषुम्नान्तर्गतमलशोधनार्थं पुरोक्तरीत्या
प्राणायामं कुर्यादित्याह- अथेति। उक्तार्थे वक्ष्यमाणाः श्लोकाः
मन्त्रा भवन्तीत्याह- तदिति॥ १॥

अहरहः कर्तव्यप्राणायामसंख्या

प्रातर्मध्यंदिने सायमर्धरात्रे तु कुम्भकान्।
शनैरशीतिपर्यन्तं चतुर्वारं समभ्यसेत्॥ २॥

अहरहः कति प्राणायामाः कर्तव्याः इत्यत आह- प्रातरिति॥ २॥

अभ्यासोचितसिद्धिभेदः

कनीयसि भवेत् स्वेदः कम्पो भवति मध्यमे।
उत्तिष्ठत्युत्तमे प्राणरोधे पद्मासनं भवेत्॥ ३॥

p. 532) जलेन श्रमजातेन गात्रमर्दनमाचरेत्।
दृढता लघुता चापि तस्य गात्रस्य जायते॥ ४॥

अभ्यासोचितसिद्धिभेदमाचष्टे- कनीयसीति ॥ ३ ॥ तेन किं स्यादित्यत्र जलेनेति ॥ ४ ॥

अभ्यासकाले आहारनियमः

अभ्यासकाले प्रथमं शस्तं क्षीराज्यभोजनम्।
ततोऽभ्यासे स्थिरीभूते न तावन्नियमग्रहः ॥ ५ ॥

आहारनियममाह- अभ्यासेति ॥ ५ ॥

अभ्यासे सावधानताविधिः

यथा सिंहो गजो व्याघ्रो भवेद्वश्यः शनैः शनैः।
तथैव सेवितो वायुरन्यथा हन्ति साधकम्॥ ६ ॥

युक्तंयुक्तं त्यजेद्वायुं युक्तंयुक्तं च पूरयेत्।
युक्तं युक्तेन बध्नीयादेवं सिद्धिमवाप्नुयात्॥ ७ ॥

यावत् सुषुम्नाप्रवेशः तावत् सावधानतया अभ्यासः कार्यः इत्यत आह- यथेति ॥ ६ ॥ तत्रोपायस्तु युक्तमिति। एवम् अभ्यासं कुर्वतो

नाडीशुद्धिः भवति ॥ ७ ॥

नाडीशुद्धितो मनोन्मन्यवस्थाप्राप्तिः

यथेष्टधारणं वायोरनलस्य प्रदीपनम् ।
नादाभिव्यक्तिरारोग्यं जायते नाडिशोधनात् ॥ ८ ॥

p. 533) विधिवत् प्राणसंयामैर्नाडीचक्रे विशोधिते ।
सुषुम्नावदनं भित्त्वा सुखाद्विशति मारुतः ॥ ९ ॥

मारुते मध्यसंचारे मनःस्थैर्यं प्रजायते ।
यो मनःसुस्थिरीभावः सैवावस्था मनोन्मनी ॥ १० ॥

ततो वायुः सुषुम्नां प्रविश्य योगिनं
मनोन्मन्यवस्थारूढं कुर्यादित्याह- यथेष्टेति ॥ ८-९ ॥ तेन किं
स्यादित्यत्र- मारुत इति ॥ १० ॥

बन्धत्रयस्य कर्तव्यता

पूरकान्ते तु कर्तव्यो बन्धो जालंधराभिधः ।

कुम्भकान्ते रेचकादौ बन्धो जालंधराभिधः ॥ ११ ॥

अधस्तात्कुञ्चनेनाशु कण्ठसंकोचने कृते ।

मध्ये पश्चिमतानेन स्यात् प्राणो ब्रह्मनाडिगः ॥ १२ ॥

बन्धत्रयपूर्वकाभ्यास एव फलवानित्याह- पूरकान्त इति ॥ ११-१२ ॥

प्राणापानयोगफलम्

अपानमूर्ध्वमुत्थाप्य प्राणं कण्ठादधो नयन् ।

योगी जराविनिर्मुक्तं षोडशो वयसा भवेत् ॥ १३ ॥

प्राणापानयोगफलमाह- अपानमिति ॥ १३ ॥

कपालशोधनोपायः

सुखासनस्थो दक्षनाड्या बहिस्थं पवनं

समाकृष्याकेशमानखाग्रं कुम्भयित्वा सव्यनाड्या रेचयेत् । तेन

कपालशोधनं वातनाडीगतसर्वरोगविनाशनं भवति ॥ १३-१ ॥

p. 534) कपालशोधनोपायमाह- सुखेति। योगी सुखासनस्थः। कपालशोधनं भवति। तेन किं भवतीत्यत्र- वातेति ॥ १३-१ ॥

उज्जायीप्राणायामः

हृदयादिकण्ठपर्यन्तं सस्वनं नासाभ्यां शनैः पवनमाकृष्य यथाशक्ति कुम्भयित्वा इडया विरेच्य गच्छंस्तिष्ठन् कुर्यात्। तेन श्लेष्महरं जाठराग्निवर्धनं भवति ॥ १३-२ ॥

श्लेष्महरोज्जायीलक्षणमाह- हृदयादीति। तिष्ठन् उज्जायीनामकं प्राणायामं कुर्यात् ॥ १३-२ ॥

सीत्कारप्राणायामः

वक्त्रेण सीत्कारपूर्वकं वायुं गृहीत्वा यथाशक्ति कुम्भयित्वा नासाभ्यां रेचयेत्। तेन क्षुत्तृष्णालस्यनिद्रा न जायन्ते ॥ १३-३ ॥

सीत्कारप्राणायाममाह- वक्त्रेणेति ॥ १३-३ ॥

शीतलप्राणायामः

जिह्वया वायुं गृहीत्वा यथाशक्ति कुम्भयित्वा नासाभ्यां रेचयेत्। तेन गुल्मप्लीहज्वरपित्तक्षुधादि नश्यति॥ १३-४॥

शीतली तु जिह्वया॥ १३-४॥

उपायोपेयकुम्भकद्वयम्

कुम्भकः स द्विविधः सहितः केवलश्चेति। रेचकपूरकयुक्तः सहितः। तद्विवर्जितः केवलः। केवलसिद्धिपर्यन्तं सहितमभ्यसेत्।

p. 535) केवलकुम्भके सिद्धे त्रिषु लोकेषु न तस्य दुर्लभं भवति। केवलकुम्भकात् कुण्डलिनीबोधो जायते॥ १३-५॥

उपायोपेयकुम्भकद्वयमाह- कुम्भक इति। ततः किं जायत इत्यत्र- केवलेति॥ १३-५॥

कुम्भकाभ्यासफलम्

ततः कृशवपुः प्रसन्नवदनो निर्मललोचनोऽभिव्यक्तनादो
निर्मुक्तरोगजालो जितबिन्दुः पट्वग्निर्भवति ॥ १३-६ ॥

ततः किं स्यादित्यत्र ततः इति ॥ १३-६ ॥

वैष्णवीमुद्राप्राप्तिः

अन्तर्लक्ष्यं बहिर्दृष्टिर्निमेषोन्मेषवर्जिता ।
एषा सा वैष्णवी मुद्रा सर्वतन्त्रेषु गोपिता ॥ १४ ॥

तेन किमित्याकाङ्क्षायाम् अनेन योगी वैष्णवीमुद्रारूढो
भवतीत्याह- अन्तर्लक्ष्यमिति । मूलाधारानाहताज्ञासहस्रारेषु
यथाक्रमं विराट् सूत्रं बीजं तुरीयं वा अन्तर्लक्ष्यं
तदेकतानं मनः बहिर्दृष्टिस्तु अन्तर्दृष्टिर्भूत्वा यदा
निमेषोन्मेषवर्जिता भवति तदा दृष्टिरियं वैष्णवीमुद्रा
भवतीत्यर्थः ॥ १४ ॥

खेचरीप्राप्त्या ब्रह्मदर्शनम्

अन्तर्लक्ष्यविलीनचित्तपवनो योगी सदा वर्तते

दृष्ट्या निश्चलतारया बहिरधः पश्यन्नपश्यन्नपि ।

मुद्रेयं खलु खेचरी भवति सा लक्ष्यैकताना शिवा

शून्याशून्यविवर्जितं स्फुरति सा तत्त्वं पदं वैष्णवी ॥

p. 536) अर्धोन्मीलितलोचनः स्थिरमना नासाग्रदत्तेक्षण-

श्चन्द्रार्कावपि लीनतामुपनयन्निष्यन्दभावोत्तरम् ।

ज्योतीरूपमशेषबाह्यरहितं देदीप्यमानं परं

तत्त्वं तत्परमस्ति वस्तु विषयं शाण्डिल्य विद्धीह तत् ॥

यदा योगी वैष्णवीमुद्रारूढो भवति तदा इयं

वैष्णवीमुद्रा खेचरीपदवीमेत्य

तत्त्वंपदलक्ष्यैक्यप्रत्यगभिन्नब्रह्मगोचरा भवतीत्याह- अन्तरिति ।

अन्तर्दृष्टिभावमापन्ननिश्चलबहिर्दृष्टिरेव मुद्रेयम् । शून्यं

सुषुप्तिः अशून्यं स्वप्नादिकं तदुभयवर्जितं यथा भवति तथा

लक्ष्यैकताना वैष्णवी स्फुरतीत्यर्थः ॥ १५ ॥

खेचरीमुद्रारूढयोगिनः स्थितिं तद्ध्येयस्वरूपं चाह- अर्धेति ।

अर्धोन्मीलितलोचनः इत्यादिविशेषणविशिष्टो योगी चन्द्रार्कौ

इडापिङ्गलागोचरवायू मनोदृष्ट्यग्निभिः सह सुषुम्नायां

लीनतां लयभावं उपनयन् यदा तिष्ठति तदा

स्वान्तर्बाह्यविस्मारकब्रह्मानन्दनदी प्रवहति । ततो

निष्यन्दभावोत्तरं नितरां स्रवदानन्दभावानुभवानन्तरं

तदनुभूत्यसंगतया यद्वस्तु प्रत्यग्ज्योतीरूपम्

अशेषबाह्यान्तःकलनाविरलं परमात्माभेदेन देदीप्यमानं परो

दिवो ज्योतिर्दीप्यते इति श्रुतिसिद्धं परं तत्त्वमस्ति हे शाण्डिल्य

तद्विषयं तद्भावापन्नं वस्तु ब्रह्माहमिति विद्धि ॥ १६ ॥

खेचर्या उन्मनीभावापत्तिः

तारं ज्योतिषि संयोज्य किंचिदुन्नमय भ्रुवौ ।

पूर्वाभ्यासस्य मार्गोऽयमुन्मनीकारकः क्षणात् ॥ १७ ॥

तस्मात् खेचरीमुद्रामभ्यसेत् । ततोन्मनी भवति । ततो योगनिद्रा

भवति । लब्धयोगनिद्रस्य योगिनः कालो नास्ति ॥ १७-१ ॥

कथमेवं ज्ञातुं शक्यते इत्यत्रोपायमाह- तारमिति ।

भ्रूमध्यविलसज्ज्योतिषि समभावमापन्नकृष्णतारयुगलं दृढं

संयोज्य अवलोक्य किंचित्

p. 537) भ्रुवौ ऊर्ध्वमुन्नमय्य उर्ध्वोत्क्षेपणं कृत्वा अथ

सहस्रारविलसिततुरीयं तत्कलनाविरलतुरीयातीतं वा स्वावशेषधिया

पश्येदिति शेषः। तारं ज्योतिषि संयोज्य इति यो दर्शितः अन्तर्लक्ष्यम्
इत्यादिपूर्वाभ्यासस्य अयमेव मार्गः क्षणादुन्मनीकारकः
निर्विकल्पकब्रह्मभावापत्तिहेतुरित्यर्थः॥ १७॥ यस्मादेवं तस्मात्।
ततोन्मनीभवति निर्व्यापारं मनो भवतीत्यर्थः। ततः किमित्यत आह-
तत इति। योगनिद्रा निर्विकल्पभावापत्तिः ततो व्युत्थानशङ्कां वारयति-
लब्धेति। एवं लब्धयोगनिद्रस्य योगिनः निर्विकल्पकतो व्युत्थापककालो
नास्ति॥ १७-१॥

कालापरिच्छिन्नब्रह्मप्राप्तिसाधनम्

शक्तिमध्ये मनः कृत्वा शक्तिं च मनमध्यगाम्।
मनसा मन आलोक्य शाण्डिल्यं त्वं सुखी भव॥ १८॥

खमध्ये कुरु चात्मानमात्ममध्ये च खं कुरु।
सर्वं च खमयं कृत्वा न किंचिदपि चिन्तय॥ १९॥

कालापरिच्छिन्ननिर्विकल्पकब्रह्मभावापत्त्युपायमाह-
कुण्डलिनीशक्तिमध्ये मनः कृत्वा मनोलयं कृत्वा ततः
कुण्डलिनीशक्तिं, चशब्दात् दृष्टिं, मनमध्यगां
मनःप्रवृत्तिनिमित्तप्रत्यक्चैतन्यपर्यवसन्नां कृत्वा

प्रत्यग्भावापन्नेन मनसा मनः

मनोवृत्तिसहस्रभावाभावप्रकाशकप्रत्यगभिन्नं ब्रह्म

अहभस्मीत्यालोक्य हे शाण्डिल्य त्वं

तन्मात्रावस्थानलक्षणकैवल्यसुखी भवेत्यर्थः ॥ १८ ॥

प्रकारान्तरमाह- खमध्य इति । चित्खमध्ये आत्मानमन्तःकरणं

कुरु आत्मान्तःकरणमध्ये च खं कुरु । एव व्यतिहारेण सर्वं

चित्खमयं कृत्वा चिदाकाशातिरिक्तं न किंचिदस्ति इति चिन्तय ॥ १९ ॥

p. 538) मनोविलापनेन कैवल्यप्राप्तिः

बाह्यचिन्ता न कर्तव्या तथैवान्तरचिन्तिका ।

सर्वचिन्तां परित्यज्य चिन्मात्रपरमो भव ॥ २० ॥

कर्पूरमनले यद्वत् सैन्धवं सलिले यथा ।

तथा च लीयमानं च मनस्तत्त्वे विलीयते ॥ २१ ॥

ज्ञेयं सर्वप्रतीतं च तज्ज्ञानं मन उच्यते ।

ज्ञानं ज्ञेयं समं नष्टं नान्यः पन्था द्वितीयकः ॥ २२ ॥

ज्ञेयवस्तुपरित्यागे विलयं याति मानसम् ।

मानसे विलयं याते कैवल्यमवशिष्यते ॥ २३ ॥

बाह्यान्तर्वृत्त्यावृतस्य कथं चिदाकाशदृष्टिः उदेतीत्यत आह-
बाह्येति ॥ २० ॥ निष्प्रतियोगिकचिन्मात्रावगतेः
अन्तर्बाह्यविभागकलनापह्नवपूर्वकत्वात्
ज्ञेयसामान्यासंभवप्रबोधसमकालं योगी कैवल्यरूपेण
अवशिष्यते इत्याह- कर्पूरमिति । दग्धकर्पूरवत्
जलगतसैन्धवपिण्डवच्च जाग्रदाद्यवस्थात्रयलीयमानं मनः
स्वरूपध्यानसंस्कृतं सत्प्रपञ्चविमुखं भूत्वा स्वतत्त्वे
ब्रह्मणि लीयते ॥ २१ ॥ प्रपञ्चतद्गोचरज्ञेयज्ञानसत्त्वात् कथं मनः
स्वतत्त्वे विलीयत इत्यत आह- ज्ञेयमिति । सर्वत्र स्वातिरेकेण प्रतीयत इति
सर्वप्रतीतम् । अविद्यापदशब्दात् जाग्रदादितत्कार्यप्रपञ्च उच्यते । तत्
सर्वं ज्ञेयशब्दार्थः तद्गोचरं मनः ज्ञानमुच्यते ।
ब्रह्मातिरिक्तं न किंचिदस्ति इति यज्ज्ञानसमकालं ज्ञानं ज्ञेयं
समं युगपन्नष्टं भवति अयमेव अद्वितीयब्रह्मप्रापकः पन्थाः
नातोऽन्यः कश्चिदस्तीत्यर्थः ॥ २२ ॥ युगपत् कथं लीयते इत्यत आह-
ज्ञेयेति ॥ २३ ॥

p. 539) योगज्ञानाभ्यां मनोलयः

द्वौ क्रमौ चित्तनाशस्य योगो ज्ञानं मुनीश्वर।
योगस्तु वृत्तिरोधो हि ज्ञानं सम्यगवेक्षणम्॥ २४॥

तस्मिन्निरोधिते नूनमुपशान्तं मनो भवेत्।
मनःस्पन्दोपशान्त्यायां संसारः प्रविलीयते॥ २५॥

सूर्यालोकपरिस्पन्दशान्तौ व्यवहृतिर्यथा।

कथं पुनः मानसं विलीयते इत्याशङ्क्य
प्रत्यगभिन्नब्रह्मगोचरयोगज्ञानाभ्यां मानसं विलीयत इति
सदृष्टान्तमाह- द्वाविति। योगस्तु स्वातिरिक्तास्तित्वगोचरतच्चित्तवृत्तिरोधः,
ज्ञानं ब्रह्मातिरिक्तं न किंचिदस्तीति सम्यगवेक्षणम्॥ २४॥ यः
स्वातिरिक्तमस्तीति भ्रम उदेति तस्मिन्। संसारे सति कथं मनः
शाम्यतीत्यत्र- मन इति। मनःस्पन्दोपशान्त्यायामित्यस्य
मनःस्पन्दोपशान्तावित्यर्थः। मनःस्पन्दोपशान्त्यायम् इत्यकं
पाठान्तरमपि वर्तते। संसारः प्रविलीयते, संसारस्य
मनःकल्पितत्वात् कल्पकाभावे कल्प्याभावो युज्यते इत्यर्थः॥ २५॥ अत्र
दृष्टान्तः- सूर्येति॥

मनोलयात् प्राणस्पन्दनिरोधः

शास्त्रसज्जनसंपर्कवैराग्याभ्यासयोगतः ॥ २६ ॥

अनास्थायां कृतास्थायां पूर्वं संसारवृत्तिषु ।
यथाभिवाञ्छितध्यानाच्चिरमेकतयोदितात् ॥ २७ ॥

एकतत्त्वदृढाभ्यासात् प्राणस्पन्दो निरुध्यते ।

स्वाज्ञानविकल्पितमनःस्पन्दस्य प्राणस्पन्दनपूर्वकत्वात् । यत
एवमतः तच्छान्तावुपाय उच्यते- शास्त्रेति ॥ २६ ॥ अनास्थायां
निवृत्तिमार्गे

p. 540) कृतास्थायां सत्यां ब्रह्म सत्यं जगत् मिथ्येति ज्ञानमुदेति ।
ततः यथेति ॥ २७ ॥

प्राणस्पन्दनिरोधात् मनःस्पन्दनिरोधः

पूरकाद्यनिलायामाद् दृढाभ्यासादखेदजात् ॥ २८ ॥

एकान्तध्यानयोगाच्च मनःस्पन्दो निरुध्यते ।

मनःस्पन्दशान्तिः कथमित्यत्र- पूरकेति ॥ २८ ॥

प्राणस्पन्दशान्तिसमकालं मन इति ॥

प्राणस्पन्दनिरोधविविधोपायाः

ओंकारोच्चारणप्रान्तशब्दतत्त्वानुभावनात् ।

सुषुप्ते संविदो जाते प्राणस्पन्दो निरुध्यते ॥ २९ ॥

तालुमूलगतां यत्नाज्जिह्वयाक्रम्य घण्टिकाम् ।

ऊर्ध्वरन्ध्रं गते प्राणे प्राणस्पन्दो निरुध्यते ॥ ३० ॥

प्राणे गलितसंवित्तौ तालूर्ध्वद्वादशान्तगे ।

अभ्यासादूर्ध्वरन्ध्रेण प्राणस्पन्दो निरुध्यते ॥ ३१ ॥

द्वादशाङ्गुलपर्यन्ते नासाग्रे विमलाम्बरे ।

संविद्दृशि प्राशाम्यन्त्यां प्राणस्पन्दो निरुध्यते ॥ ३२ ॥

भ्रूमध्ये तारकालोकशान्तावन्तमुपागते ।

चैतनैकतने बद्धे प्राणस्पन्दो निरुध्यते ॥ ३३ ॥

ओमित्येव यदुद्भूतं ज्ञानं ज्ञेयात्मकं शिवम्।
असंस्पृष्टविकारांशं प्राणस्पन्दो निरुध्यते॥ ३४॥

p. 541) चिरकालं हृदेकान्तव्योमसंवेदनान्मुने।
अवासनमनोध्यानात् प्राणस्पन्दो निरुध्यते॥ ३५॥

एभिः क्रमैस्तथान्यैश्च नानासंकल्पकल्पितैः।
नानादेशिकवक्त्रस्थैः प्राणस्पन्दो निरुध्यते॥ ३६॥

प्लुतप्रणवानुसंधानेनापि प्राणस्पन्दो निरुध्यत इत्याह-
ओंकारेति। ओंकार - - - भवनात् कांस्यघण्टानिनादवत्
प्रणवनादानुसंधानात्। बाह्यान्तर्भवसंविदो विषयज्ञानततेः
सुषुप्ते जाते सति अथ प्राणेति॥ २९॥ लम्बिकयापि प्राणस्पन्दशान्तिः
स्यादित्याह- ताल्विति। तदुपायतः ऊर्ध्वरन्ध्रं गते॥ ३०॥
राजयोगाभ्यासपाटवतः प्राण इति। षण्मुखीमुद्रया गलितसंवित्तौ
विगलितबाह्यान्तः संवित्कलनायां सत्याम् अभ्यासात्
तालूर्ध्वरन्ध्रेण प्राणे तालूर्ध्वविलसितद्वादशान्तं
सहस्रारचक्रं गते सति अथ प्राणेति॥ ३१॥ बहिःकुम्भकेनापि
प्राणजयः स्यादित्याह- द्वादशेति। संविद्दृशि प्राशाम्यन्त्यां

स्वातिरिक्तविषयवृत्तौ नाष्टायाम्॥ ३२॥ तारकानुसंधानतोऽपि भ्रूमध्ये। तारकालोकनशान्तौ सत्याम्। तारकालोकनं कर्तव्यमिति संकल्पे अन्तमुपागते अथ मनसि चेतनैकताने, चेतने प्रतीचि एकताने बद्धे एकतानतया बद्धे मनोन्मनीभावं गते सति, अथ प्राणेति॥ ३३॥ ब्रह्मज्ञानेनापि प्राणस्पन्दशान्तिः स्यादित्याह- ओमिति। तदेव चाहं सकलं विमुक्त ओमिति ओंकारार्थविचारणसंजातासंस्पृष्टविकारांशज्ञानसमकालं प्राणेति॥ ३४॥ ध्यानात् वासनाक्षयाच्च प्राणस्पन्दशान्तिः स्यादित्याह- चिरेति। हृदा एकान्तव्योमसंवेदनात् चिद्व्योमातिरिक्तं न किंचिदस्ति इति ज्ञानात् वासना क्षीयते। ततो ध्येयैकगोचरं मनो भवति। प्राणस्पन्दशान्तिः भवेदित्यर्थः॥ ३५॥ उक्तैरनुक्तैर्वा उपायैः चिरानुष्ठितैः प्राणस्पन्दशान्तिः स्यादित्याह- एभिरिति॥ ३६॥

p. 542) कुम्भकेन सुषुम्नाभेदनद्वारा परमपदगमनम्

आकुञ्चनेन कुण्डलिन्याः कवाटमुद्घाट्य मोक्षद्वारं विभेदयेत्॥ ३६-१॥ येन मार्गेण गन्तव्यं तद्द्वारं मुखेनाच्छाद्य प्रसुप्ता कुण्डलिनी कुटिलाकारा सर्पवद्वेष्टिता भवति॥ ३६-२॥ सा शक्तिर्येन चालिता स्यात् स तु मुक्तो भवति। सा कुण्डलिनी कण्ठोर्ध्वभागे सुप्ता चेद्योगिनां मुक्तये भवति। बन्धनायाधो

मूढानाम्॥ ३६-३॥ इडादिमार्गद्वयं विहाय सुषुम्नामार्गेण

गच्छेत् तद्विष्णोः परमं पदम्॥ ३६-४॥

प्राणस्पन्दनिरोधलक्षणकेवलकुम्भकतो योगी कुण्डलिन्या

सुषुम्नावदनं भेदयेदित्याह- आकुञ्चनेनेति। सुषुम्नाकवाटम्।

मोक्षद्वारं ब्रह्मरन्ध्रं विभेदयेत्॥ ३६-१॥

मोक्षद्वारभेदककुण्डलिनीस्वरूपं तच्चालनफलं चाह- येनेति॥

३६-२,३॥ यत् एवम् अतः इडादीति। सुषुम्नायाः विष्णुपदाप्तिद्वारत्वात्॥

३६- ४॥

मनोयुक्तप्राणस्य सुसुम्नाप्रवेशनविधिः

मरुदभ्यसनं सर्वं मनोयुक्तं समभ्यसेत्।

इतरत्र न कर्तव्या मनोवृत्तिर्मनीषिणा॥ ३७॥

दिवा न पूजयेद्विष्णुं रात्रौ नैव प्रपूजयेत्।

सततं पूजयेद्विष्णुं दिवारात्रं न पूजयेत्॥ ३८॥

मनोयोगाभ्यासः फलवानित्यर्थः॥ ३७॥ मनोयुक्तप्राणम्

इडादिमार्गद्वयमप्रापयित्वा महापथव्यापृतं कुर्यादित्याह-

दिवेति। मनोयोगतो विष्णुं प्राणं

p. 543) दिवा सूर्यनाड्यां न पूजयेत् न व्यापारयेत्। तथा चन्द्रनाड्यां रात्रौ नैव प्रपूजयेत्। ततः अव्याकृताकाशं तेन पूरितं सततं सुषुम्नाख्यं महापथं प्रति विष्णुं पूजयेत्। कदापि दिवारात्रं न पूजयेदित्यर्थः॥ ३८॥

खेचरीमुद्राप्राप्तिः

सुषिरो ज्ञानजनकः पञ्चस्रोतःसमन्वितः।
तिष्ठते खेचरी मुद्रा त्वं हि शाण्डिल्य तां भज॥ ३९॥

सव्यदक्षिणनाडीस्थो मध्ये चरति मारुतः।
तिष्ठते खेचरी मुद्रा तस्मिन् स्थाने न संशयः॥ ४०॥

इडापिङ्गलयोर्मध्ये शून्यं चैवालिनं ग्रसेत्।
तिष्ठन्ती खेचरी मुद्रा तत्र सत्यं प्रतिष्ठितम्॥ ४१॥

सोमसूर्यद्वयोर्मध्ये निरालम्बतले पुनः।
संस्थिता व्योमचक्रे सा मुद्रा नाम च खेचरी॥ ४२॥

सुषुम्नाप्रवेशतः किं स्यादित्याशङ्क्य तत्र खेचरीमुद्रा वर्तते तत्साक्षात्कारात् कृतकृत्यो भवसीत्याह- सुषिर इति। यत्र सुषुम्नामध्ये सुषिरः विराडादितुरीयातीतान्तपञ्चस्रोतस्समन्वितः सन् मूलाधारानाहताज्ञासहस्रारेषु योगिनः क्रमेण विराडादिज्ञानजनको भवति तत्रैव खेचरीमुद्रा निर्विकल्पकरूपिणी वर्तते। मत्प्रसादतः तां त्वं भजेत्यर्थः॥ ३९॥ उक्तार्थमेव पुनः पुनः शब्दान्तरेण विशदयति- सव्येति॥ ४०॥ शून्यशब्देन अव्याकृतमाकाशमुच्यते, आकाशस्य वायुग्रासत्वात्॥ ४१॥ व्योमचक्रस्य निरालम्बत्वात्॥ ४२॥

p. 544) बाह्यखेचरीसिद्ध्युपायः

छेदनचालनदोहैः कलां परां जिह्वां कृत्वा दृष्टिं भ्रूमध्ये स्थाप्य कपालकुहरे जिह्वा विपरीतगा यदा भवति तदा खेचरी मुद्रा जायते। जिह्वा चित्तं च खेचरति। तेनोर्ध्वजिह्वः पुमानमृतो भवति॥ ४२-१॥

बाह्यखेचरीसिद्ध्युपायमाह- छेदनेति। प्रतिभानुवासरं षण्मासावधि स्नुहिपत्रनिभशस्त्रेण रोममात्रं जिह्वासिराच्छेदनेन

प्रतिब्राह्मे मुहूर्ते जिह्वाचालनतः प्रातः सैन्धवपथ्याचूर्णतो
दोहैः कलां परां सूक्ष्मां जिह्वां कृत्वा दृष्टियुग्मं
भ्रूमध्ये स्थाप्य घण्टिकारन्ध्रेण कपालकुहरे जिह्वा विपरीतगा
यदा भवति तदा खेचरीमुद्रा उदेति। सहस्रारजिह्वाप्रवेशतो योगी
कृतकृत्यो भवतीत्यर्थः॥ ४२-१॥

अभ्यासकाले प्राणजयोपायः

वामपादमूलेन योनिं संपीड्य दक्षिणपादं प्रसार्य तं
कराभ्यां धृत्वा नासाभ्यां वायुमापूर्य कण्ठबन्धं
समारोप्योर्ध्वतो वायुं धारयेत्। तेन सर्वक्लेशहानिः। ततः
पीयूषमिव विषं जीर्यते। क्षयगुल्मगुदावर्तजीर्णत्वगादिदोषा
नश्यन्ति। एष प्राणजयोपायः सर्वमृत्यूपघातकः॥ ४२-२॥

अभ्यासकाले प्राणजयोपायमाह- वामेति। महामुद्राभ्यासेन
तेन॥ ४२-२॥

p. 545) स्वात्मापरोक्षसिद्ध्युपायः

वामपादपार्ष्णिं योनिस्थाने नियोज्य दक्षिणचरणं वामोरुपरि

संस्थाप्य वायुमापूर्य हृदये चुबुकं निधाय योनिमाकुञ्च्य
मनोमध्ये यथाशक्ति धारयित्वा स्वात्मानं भावयेत्।
तेनापरोक्षसिद्धिः॥ ४२-३॥

स्वात्मापरोक्षसिद्ध्युपायमाह- वामेति। स्वात्मानं
ब्रह्माहमस्मीति भावयेत्। सिद्धिः भवति॥ ४२-३॥

सर्वरोगविनिर्मोकसाधनं धारणाविशेषः

बाह्यात् प्राणं समाकृष्य पूरयित्वोदरे स्थितम्।
नाभिमध्ये च नासाग्रे पादाङ्गुष्ठे च यत्नतः॥ ४३॥

धारयेन्मनसा प्राणं संध्याकालेषु वा सदा।
सर्वरोगविनिर्मुक्तो भवेद्योगी गतक्लमः॥ ४४॥

धारणाविशेषमाह- बाह्यादिति॥ ४३-४४॥

नासाग्रादिषु संयमेन विविधसिद्धयः

नासाग्रे वायुविजयं भवति। नाभिमध्ये सर्वरोगविनाशः।

पादाङ्गुष्ठधारणाच्छरीरलघुता भवति ॥ ४४-१ ॥

रसनाद्वायुमाकृष्य यः पिबेत् सततं नरः ।
श्रमदाहौ तु न स्यातां नश्यन्ति व्याधयस्तथा ॥ ४५ ॥

संध्ययोर्ब्राह्मणः काले वायुमाकृष्य यः पिबेत् ।
त्रिमासात् तस्य कल्याणी जायते वाक् सरस्वती ॥ ४६ ॥

p. 546) एवं षण्मासाभ्यासात् सर्वरोगनिवृत्तिः ।
जिह्वया वायुमानीय जिह्वामूले निरोधयेत् ।
यः पिबेदमृतं विद्वान् सकलं भद्रमश्नुते ॥ ४७ ॥

आत्मन्यात्मानमिडया धारयित्वा भ्रुवोऽन्तरे ।
विभेद्य त्रिदशाहारं व्याधिस्थोऽपि विमुच्यते ॥ ४८ ॥

नाडीभ्यां वायुमारोप्य नाभौ तुन्दस्य पार्श्वयोः ।
घटिकैकां बहेद्यस्तु व्याधिभिः स विमुच्यते ॥ ४९ ॥

मासमेकं त्रिसंध्यं तु जिह्वयारोप्य मारुतम् ।
विभेद्य त्रिदशाहारं धारयेत्तुन्दमध्यमे ॥ ५० ॥

ज्वराः सर्वे विनश्यन्ति विषाणि विविधानि च।

मुहूर्तमपि यो नित्यं नासाग्रे मनसा सह ॥ ५१ ॥

सर्वं तरति पाप्मानं तस्य जन्मशतार्जितम्।

तारसंयमात् सकलविषयज्ञानं भवति। नासाग्रे

चित्तसंयमादिन्द्रलोकज्ञानम्। तदधश्चित्तसंयमादग्निलोकज्ञानम्

। चक्षुषि चित्तसंयमात् सर्वलोकज्ञानम्। श्रोत्रे चित्तस्य

संयमाद्यमलोकज्ञानम्। तत्पार्श्वे संयमान्निर्-ऋतिलोकज्ञानम्।

पृष्ठभागे संयमाद्वरुणलोकज्ञानम्। वामकर्णे

संयमाद्वायुलोकज्ञानम्। कण्ठे संयमात् सोमलोकज्ञानम्।

वामचक्षुषि संयमाच्छिवलोकज्ञानम्। मूर्ध्नि

संयमाद्ब्रह्मलोकज्ञानम्। पादाधोभागे

संयमादतललोकज्ञानम्। पादे संयमाद्वितललोकज्ञानम्।

पादसंधौ संयमान्नितललोकज्ञानम्। जङ्घे

संयमात्सुतललोकज्ञानम्। जानौ संयमान्महातललोकज्ञानम्।

ऊरौ चित्तसंयमाद्रसातललोकज्ञानम्।

p. 547) कटौ चित्तसंयमात्तलातललोकज्ञानम्। नाभौ

चित्तसंयमाद्भूलोकज्ञानम्। कुक्षौ संयमाद्भुवर्लोकज्ञानम्।
हृदि चित्तसंयमात् स्वर्लोकज्ञानम्। हृदयोर्ध्वभागे
चित्तसंयमान्महर्लोकज्ञानम्। कण्ठे चित्तसंयमाज्जनोलोकज्ञानम्
। भ्रूमध्ये चित्तसंयमात्तपोलोकज्ञानम्। मूर्ध्नि चित्तसंयमात्
सत्यलोकज्ञानम्। धर्माधर्मसंयमादतीतानागतज्ञानम्।
तत्तजन्तुध्वनौ चित्तसंयमात् सर्वजन्तुरुतज्ञानम्। संचितकर्मणि
चित्तसंयमात् पूर्वजातिज्ञानम्। परचित्ते चित्तसंयमात्
परचित्तज्ञानम्। कायरूपे चित्तसंयमादन्यादृश्यरूपम्। बले
चित्तसंयमाद्धनुमदादिबलम्। सूर्ये चित्तसंयमाद्भुवनज्ञानम्।
चन्द्रे चित्तसंयमात्तारव्यूहज्ञानम्। ध्रुवे तद्गतिदर्शनम्।
स्वार्थसंयमात् पुरुषज्ञानम्। नाभिचक्रे कायव्यूहज्ञानम्।
कण्ठकूपे क्षुत्पिपासानिवृत्तिः। कूर्मनाड्यां स्थैर्यम्। तारे
सिद्धदर्शनम्। कायाकाशसंयमादाकाशगमनम्। तत्तत्स्थाने
संयमात्तत्तत्सिद्धयो भवन्ति॥ ५२॥

नासाग्रादिकायाकाशान्तसंयमाद्विचित्रसिद्धयो भवन्तीत्याह-
नासाग्र इति। नासाग्रे वायुधारणात्॥ ४४-१॥ रसनात् रसनया॥ ४५-४७॥
चन्द्रमण्डलं विभेद्य। त्रिदशाहारम् अमृतं पीत्वा॥ ४८-५०॥ मनसा
सह यो लक्ष्यं पश्यति॥ ५१॥ तारसंयमात् तारकचित्तसंयमात्
भवतीति सर्वत्रानुवर्तते। जङ्घे जङ्घायाम्। इत्थंभूतसिद्धिः

पुरुषार्थसाधनमिति चेन्न, सिद्धेः पुरुषार्थपरिपन्थित्वात्। न हि

स्वातिरेकेण स्वपरशरीरचतुर्दशलोकतद्विषयकज्ञानं वास्ति। तस्मात्

मुमुक्षुभिः सिद्धिमार्गो नादर्तव्यः इत्यर्थः॥ ५२॥

इति सप्तमः खण्डः

पञ्चविधप्रत्याहारः

अथ प्रत्याहारः। स पञ्चविधः। विषयेषु

विचरतामिन्द्रियाणां बलादाहरणं प्रत्याहारः। यद्यत् पश्यति तत्

सर्वमात्मेति प्रत्याहारः। नित्यविहितकर्मफलत्यागः प्रत्याहारः।

सर्वविषयपराङ्मुखत्वं प्रत्याहारः। अष्टादशसु मर्मस्थानेषु

क्रमाद्धारणं प्रत्याहारः॥ १॥ पादाङ्गुष्ठगुल्फजङ्घाजानू-

रुपायुमेढ्रनाभिहृदयकण्ठकूपतालुनासाक्षिभ्रूमध्यललाट-

मूर्ध्नि स्थानानि। तेषु क्रमादारोहावरोहक्रमेण प्रत्याहरेत्॥ २॥

यमनियमासनप्राणायामप्रासङ्गिकपरमार्थोपदेशतत्प्रति-

पन्थिनानाविधसिद्धीः प्रतिपाद्य अथ

योगाङ्गप्रकृतप्रत्याहारमाचष्टे- अथेति। स्वस्वविषयतो बलात्।

क्रमाद्धारणं, धारणं हारणं संक्रमणं प्रत्याहारः॥ १

॥ मर्मस्थानानि कानीत्यत्र पादेति ॥ २ ॥

इत्यष्टमः खण्डः

पञ्चविधाः धारणाः

अथ धारणाः । स पञ्चविधः । आत्मनि मनोधारणं
दहराकाशे बाह्याकाशधारणं पृथिव्यप्तेजोवाय्वाकाशेषु
पञ्चमूर्तिधारणं चेति ॥

स पञ्चविधः ताः पञ्चविधाः । पञ्चब्रह्म-
पञ्चमूर्तिधारणम् ॥

इति नवमः खण्डः

द्विविधं ध्यानम्

अथ ध्यानम् । तद्द्विविधं सगुणं निर्गुणं चेति । सगुणं
मूर्तिध्यानम् । निर्गुणमात्मयाथात्म्यम् ॥

अनात्मापह्नवसिद्धात्ममात्रावशेषो हि आत्मयाथात्म्यम् ॥

इति दशमः खण्डः

## समाधिस्वरूपम्

अथ समाधिः। जीवात्मपरमात्मैक्यावस्था त्रिपुटीरहिता परमानन्दस्वरूपा शुद्धचैतन्यात्मिका भवति ॥

तूलाविद्योपाधिको जीवः मूलाविद्योपाधिकः परमात्मा तयोरौपाधिकविशेषांशापायात् प्रत्यक्परैक्यं यस्यामाभाति सेयं जीवात्मपरमात्मैक्यावस्था निर्विकल्पकरूपिणीत्यर्थः। त्रिपुट्यां सत्यां निर्विकल्पता कुत इत्यत आह- त्रिपुटीति। निर्विकल्पकप्रकृतेः त्रिपुट्यादिविकृतिग्रासत्वात् त्रिपुट्यभावे दुःखरूपा स्यादित्यत आह- परमानन्देति। त्रिपुटीदुःखग्रासनिर्विकल्पकस्थितेः परमानन्दस्वरूपत्वात् ऐक्यावस्थाया जडत्वं स्यादित्याशङ्क्य अस्य असंप्रज्ञातसमाधिरूपतया शुद्धचैतन्यतामाह- शुद्धेति। अत्र जीवात्मपरमात्मैक्यावस्थाशब्देन असंप्रज्ञातसमाधिरुच्यते इत्यर्थः ॥

इत्येकादशः खण्डः

इति प्रथमोऽध्यायः

## द्वितीयोऽध्यायः

### निर्विशेषब्रह्मस्वरूपम्

अथ ह शाण्डिल्यो ह वै ब्रह्म-ऋषिश्चतुर्षु वेदेषु ब्रह्मविद्यामलभमानः किं नामेत्यथर्वाणं भगवन्तमुपसन्नः पप्रच्छ अधीहि भगवन् ब्रह्मविद्यां येन श्रेयोऽवाप्स्यामीति ॥ १ ॥ स होवाचाथर्वा शाण्डिल्य सत्यं विज्ञानमनन्तं ब्रह्म ॥ २ ॥

अष्टाङ्गयोगच्छलेन स्वात्मतत्त्वं श्रुत्वापि यथावदनधिगत-तया निष्प्रतियोगिकनिर्विशेषब्रह्ममात्रज्ञानबुभुत्सया शाण्डिल्यः पुनः अथर्वाणं पृच्छतीत्याह- अथेति। वेदेषु अर्थतोऽवधारितेष्वपि निष्प्रतियोगिकब्रह्ममात्रविद्याम्। किं नाम ब्रह्म। पप्रच्छ- किमिति ? अधीहि। येन त्वदुपदेशेन ॥ १ ॥ शाण्डिल्येनैवं पृष्टः स होवाच। किं नाम ब्रह्मेति प्रश्नोत्तरं- शाण्डिल्येति। सत्यं विज्ञानमनन्तं

ब्रह्म इति तैत्तिरीयके सम्यक् व्याखातमेतत्॥ २॥

ब्रह्मणः अनिर्देश्यत्वम्

यस्मिन्निदमोतं च प्रोतं च यस्मिन्निदं संच विचैति सर्वं
यस्मिन् विज्ञाते सर्वमिदं विज्ञातं भवति तदपाणिपादमचक्षुः-
श्रोत्रमजिह्वमशरीरमग्राह्यमनिर्देश्यम्॥ ३॥

यत् सर्वाधिकरणं तदनिर्देश्यमित्याह- यस्मिन्निति। इदम्
अविद्यापदतत्कार्यजातं यत्र ओतप्रोतभावमेत्य संच विचैति
संकोचविकासतां भजति, यन्मात्रज्ञानतः इदं स्वातिरिक्तं नेति
विज्ञातं भवति, तदेतत्पाणिपादादिमद्व्यष्टिसमष्ट्यात्मकशरीरा-
पह्नवसिद्धं तत्त्वेन निर्देष्टुमशक्यत्वात् अनिर्देश्यम्॥ ३॥

p. 551)ब्रह्मणः आवाङ्मानसगोचरत्वम्

यतो वाचो निवर्तन्ते अप्राप्य मनसा सह। यत्केवलं
ज्ञानगम्यम्। प्रज्ञा च यस्मात् प्रसृता पुराणी। यदेकमद्वितीयम्।
आकाशवत् सर्वगतं सुसूक्ष्मं निरञ्जनं निष्क्रियं सन्मात्रं
चिदानन्दैकरसं शिवं प्रशान्तममृतं तत् परं च ब्रह्म।

तत्त्वमसि तज्ज्ञानेन हि विजानीहि ॥ ४ ॥

तस्यावाङ्मानसगोचरत्वं ज्ञानैकगम्यत्वं
प्रज्ञाजनकत्वम् अद्वितीयत्वं वस्तुतः सच्चिदानन्दमात्रत्वं चाह-
यत इति। केवलं ज्ञानगम्यं ज्ञानेतरसाधनैरगम्यमित्यर्थः,
नान्यः पन्था विद्यतेऽयनाय इति श्रुतेः। निर्विकल्पा च चिन्मात्रा वृत्तिः
प्रज्ञेति कथ्यते इति श्रुतिसिद्धा प्रज्ञा पुराणी,
आकैवल्यभावस्थायित्वात्। सा यस्मात् प्रसृता विजृम्भिता।
यच्चैतन्यमात्रं द्वैतादिविकृतिप्रसक्तौ अद्वितीयमित्यादिविशेषणवत्
तदभावे सन्मात्रम् असदन्यत् इति श्रुतेः
यत्सर्वासदपह्नवसिद्धनिष्प्रतियोगिकसन्मात्रमवशिष्यते तत्। तदेव
सर्वं तदतिरिक्तं नास्तीति बुध्यस्वेत्यर्थः ॥ ४ ॥

सर्वस्य परमात्मत्वम्

य एको देव आत्मशक्तिप्रधानः सर्वज्ञः सर्वेश्वरः
सर्वभूतान्तरात्मा सर्वभूताधिवासः सर्वभूतनिगूढो
भूतयोनिर्योगैकगम्यः। यश्च विश्वं सृजति विश्वं बिभर्ति विश्वं
भुङ्क्ते स आत्मा। आत्मनि तं तं लोकं विजानीहि ॥ ५॥

कथं पुनस्तद्धिया सर्वं ज्ञातुं शक्यते तद्ब्रह्मातिरेकेण विश्वकृदीश्वरसत्त्वादित्याशङ्क्य यः स्वाज्ञदृष्ट्या स्वातिरिक्तेश्वरवत् भातः स एव स्वज्ञदृष्ट्या

p. 552) परमात्मतया अवशिष्यते इत्याह- य इति।
यस्यानात्मापह्नवसिद्धात्ममात्रशक्तिः प्रकृतिः प्रधाना मुख्या भवति साक्षित्वेश्वरत्वादिशक्तिस्तु उपसर्जनभूता च भवति सोऽयम् आत्मशक्तिप्रधानः। उपसर्जनशक्तिमवष्टभ्य सर्वज्ञ इत्यादि। ईश्वरसाक्षात्कारस्य योगैकसाध्यत्वात् ईश्वरसद्भावलिङ्गमाह- यश्चेति। यस्य लिङ्गं प्रपञ्चं वा स म आत्मा न संशयः इति श्रुतिसिद्धतटस्थलक्षणेनेश्वरास्तित्वमवगम्य तस्मिन् स्वाज्ञसमर्पितविशेषापाये यो य ईश्वरः साक्षी जीवो जगदिति च व्यपदिष्टः तं तं लोकं निष्प्रतियोगिकब्रह्ममात्रमिति विजानीहि॥ ५॥

गुरूपदेशतः सर्वात्मत्वज्ञानप्राप्तिः

मा शोचीरात्मविज्ञानी शोकस्यान्तं गमिष्यसि॥ ६॥

कथम् एवं ज्ञातुं शक्यमिति मा शुचः मदुपदेशमहिम्ना स्वातिरिक्तास्तिताप्रभवशोकान्तब्रह्म भवसीत्याह- मा शोचीरिति॥ ६॥

इति द्वितीयोऽध्यायः

## तृतीयोऽध्यायः

### ब्रह्मणो वस्तुतः निष्प्रतियोगिकस्वमात्रत्वम्

अथ हैनं शाण्डिल्योऽथर्वाणं पप्रच्छ यदेकमक्षरं
निष्क्रियं शिवं सन्मात्रं परं ब्रह्म । तस्मात् कथमिदं विश्वं
जायते कथं स्थीयते कथमस्मिंल्लीयते । तन्मे संशयं
छेत्तुमर्हसीति ॥ १ ॥ स होवाचाथर्वा सत्यं शाण्डिल्य परब्रह्म
निष्क्रियमक्षरमिति ॥ २ ॥

p. 553) ब्रह्मणो निष्प्रतियोगिकस्वमात्रत्वमुक्तं, ततो विश्वं जायते इति
च । निष्प्रतियोगिकस्वमात्रत्वे विश्वहेतुत्वं न संभवति, विश्वहेतुत्वे
निष्प्रतियोगिकत्वं च न संभवतीति ब्रह्मातिरिक्तेयत्ताबुभुत्सया
शाण्डिल्योऽथर्वाणं पृच्छतीत्याह- अथेति ॥ १ ॥ ब्रह्म तु
सन्मात्रप्रकृतिकं तन्निष्प्रतियोगिकस्वप्रकृतिं विना
जगज्जनम्स्थितिभङ्गविकृतितां नैति । वतुयाथात्म्याज्ञानतो निरतां
संशयाविष्टशाण्डिल्यप्रश्नोत्तरं स होवाच । हे शाण्डिल्य

यन्मयोक्तं सन्मात्रं परं ब्रह्म निष्प्रतियोगिकं स्वातिरेकेण अस्तीति विश्वसनीयविश्वोत्पादस्थितिभङ्गकार्यकारणविक्रियापह्नवसिद्धं परमाक्षरमिति तदेव सत्यम्। तस्य निष्प्रतियोगिकत्वे न हि संशयोऽस्ति स्वाज्ञादिदृष्टिमोहे सत्यसति स्वस्यैकरूपतया स्थिततत्वात्॥ २॥

ब्रह्मणो रूपत्रयम्

अथाप्यस्यारूपस्य ब्रह्मणस्त्रीणि रूपाणि भवन्ति निष्कलं सकलं सकलनिष्कलं चेति॥ ३॥

तथा चेद्विश्वकारणता कुत इत्याशङ्क्य पारमार्थिकस्वज्ञस्वाज्ञदृष्टिवैचित्र्यात् निष्प्रतियोगिकनिष्कलमपि ब्रह्म सप्रतियोगिकनिष्कलवत् सकलवत् सकलनिष्कलवच्च भातीत्याह- अथेति॥ ३॥

निष्कलं ब्रह्म

यत्सत्यं विज्ञानमानन्दं विष्क्रियं निरञ्जनं सर्वगतं सुसूक्ष्मं सर्वतोमुखमनिर्देश्यममृतमस्ति तदिदं निष्कलं रूपम्॥ ४॥

परमार्थदृष्ट्या यत् निष्प्रतियोगिकनिष्कलमित्युक्तं तत् तिष्ठतु,
तदवगतेः सप्रतियोगिककलनापह्नवपूर्वकत्वात्,

चिन्मात्रमेव चिन्मात्रमखण्डैकरसं रसम्।
सर्ववर्जितचिन्मात्रं ब्रह्ममात्रमसन्न हि॥

p. 554) इत्यादि श्रुतेः। तत्र आदौ स्वज्ञदृष्टिमवष्टभ्य
सप्रतियोगिकनिष्कलस्वरूपं विशदयति- यदिति।
सत्यज्ञानानन्दाद्युक्तविशेषणानामनृतजडदुःखादिप्रतिषेधकत्वे
सप्रतियोगिकत्वं युज्यते, निष्प्रतियोगिकपक्षे तु तद्दृष्ट्या
अपह्नोतव्यविषयसामान्यमस्ति नास्तीति विभ्रमस्याप्यपह्नवं
गतत्वात्॥ ४॥

सकलं ब्रह्म

अथास्य या सहजास्ति विद्या मूलप्रकृतिर्माया लोहितशुक्लकृष्णा
तया सहजवान् देवः कृष्णपिङ्गलो महेश्वर ईष्टे। तदिदमस्य सकलं
रूपम्॥ ५॥

सप्रतियोगिकसकलरूपं स्पष्टयति- अथेति। य एष निष्प्रतियोगिक-

निष्कलतया अवशिष्टः स एव स्वाज्ञदृष्ट्या सप्रतियोगिकनिष्कल इति ख्यातः। स एवाथ स्वाज्ञदृष्ट्या विकल्पानन्तरं सर्वेश्वरो भवति। अस्येश्वरत्वहेतुः केत्यत आह- येति। स्वाज्ञदृष्टिसहजा या मूलप्रकृतित्वेन प्रकृता त्रिगुणात्मिका मायास्ति तया सहजवान् देवः त्रिगुणयोगतः कृष्णपिङ्गलो महेश्वरः सर्वेश्वरत्वमवलम्ब्य स्वाज्ञदृष्टिप्रसक्तस्वाविद्यापदतत्कार्यजातम् ईष्टे। तदिदमस्य सकलं रूपम्, ईश्वरस्य निरावृतक्रियाज्ञानेच्छाशक्तिमत्त्वेन स्वदृष्ट्येशितव्यस्वाविद्यापदतत्कार्यवैरल्यात् स्वस्यैव निष्प्रतियोगिक-निष्कलत्वात् अस्य सकलत्वं स्वाज्ञदृष्टिनिष्ठमेवेत्यर्थः॥ ५॥

सकलनिष्कलं ब्रह्म

अथैष ज्ञानमयेन तपसा चीयमानोऽकामयत बहु स्यां प्रजायेयेति। अथैतस्मात् तप्यमानात् त्रीण्यक्षराण्यजायन्त।

p. 555) तिस्रो व्याहृतयस्त्रिपदा गायत्री त्रयो वेदास्त्रयो देवास्त्रयो वर्णास्त्रयोऽग्नयश्च जायन्ते। योऽसौ देवो भगवान् सर्वैश्वर्यसंपन्नः सर्वव्यापी सर्वभूतानां हृदये संनिविष्टो मायावी माययाकृतिः स ब्रह्मा स विष्णुः स रुद्रः स इन्द्रः स सर्वे देवाः सर्वाणि भूतानि स एव पुरस्तात् स एव पश्चात् स एवोत्तरतः स एव

दक्षिणतः स एवाधस्तात् स एवोपरिष्टात् स एव सर्वम्। अथास्य देवस्यात्मशक्तिक्रीडस्य भक्तानुकम्पिनो दत्तात्रेयरूपा सुरूपा तनूरवासा इन्दीवरदलप्राख्या चतुर्बाहुरघोरापापकाशिनी। तदिदमस्य सकलनिष्कलं रूपम्॥ ६॥

अर्धस्वज्ञदृष्टिमवष्टभ्य सकलस्वरूपप्रपञ्चनपूर्वकं सकलनिष्कलस्वरूपमाचष्टे- अथेति। आद्यन्तयोः सकलं मध्ये निष्कलं यत्र दृश्यते तत् सकलनिष्कलस्वरूपम्। तत्रादौ ईश्वर एकोऽपि तपसा चीयमानो वर्धमानः सन् बहु स्यां प्रजायेय इति बहुभु[भ]वनसंकल्पं कृतवान्। एवं सत्यसंकल्पात्तस्मादीश्वरात् अकारोकारमकारभेदेन त्रीण्यक्षराण्यजायन्त- इति सर्वत्र वचनानुरोधेन ऊह्यम्। भूरादि भेदेन तिस्रो व्याहृतयः, पदत्रयात्मिका गायत्री, ऋगादिभेदेन त्रयो वेदाः, ब्रह्मादिभेदेन त्रयो देवाः, ब्राह्मणादिभेदेन त्रयो वर्णाः, गार्हपत्यादिभेदेन त्रयोऽग्नयश्च जायन्ते। सोऽयमीश्वरो निरवधिकविभूतिसंपन्नः स्वेन अन्तर्यामिरूपेण सर्वव्यापी सर्वभूतहृदासनः। तस्याकृतिमत्वं मायया, न स्वतः, स्वतो निराकृतित्वात्। ब्रह्मादिरूपेणापि स एव वर्तते। दिग्विदिकधश्चोर्ध्वं चापि स एव। दत्तात्रेयरूपेणापि स एव वर्तते। सुरूपा तनू अवासाः इति विशेषणतोऽस्या अवधूतत्वमवगम्यते, जडभरतदत्तात्रेयरैवतक-

ऋभुनिदाघ इति श्रुतेः। एवं अर्धस्वज्ञदृष्ट्यनुरोधेन सकलनिष्कलस्वरूपं प्रतिपादितमित्यर्थः॥ ६॥

इति प्रथमः खण्डः

सन्मात्रस्य परब्रह्मत्वनिर्वचनम्

अथ हैनमथर्वाणं शाण्डिल्यः पप्रच्छ भगवन् सन्मात्रं चिदानन्दैकरसं कस्मादुच्यते परं ब्रह्मेति॥ १॥ स होवाचाथर्वा यस्माच्च बृहति बृंहयति च सर्वं तस्मादुच्यते परं ब्रह्मेति॥ २॥

ब्रह्मणः सन्मात्रत्वं परब्रह्मत्वम् आत्मत्वं महेश्वरत्वं च कथमिति शाण्डिल्योऽथर्वाणं पृच्छति, भगवानथर्वापि तत्प्रश्नपूरणं कृतवानित्याह- अथेति। निष्प्रतियोगिकसच्चिदानन्दमात्रं कस्मात्॥ १-८॥

सन्मात्रस्य आत्मत्वनिर्वचनम्

अथ कस्मादुच्यते आत्मेति॥ ३॥ यस्मात् सर्वमाप्नोति सर्वमादत्ते सर्वमत्ति च तस्मादुच्यते आत्मेति॥ ४॥

सन्मात्रस्य महेश्वरत्वनिर्वचनम्

अथ कस्मादुच्यते इति ॥ ५॥ यस्मान्महत ईशः शब्दध्वन्या चात्मशक्त्या तस्मादुच्यते महेश्वर इति ॥ ६ ॥

सन्मात्रस्य दत्तात्रेयत्वनिर्वचनम्

अथ कस्मादुच्यते दत्तात्रेय इति ॥ ७ ॥ यस्मात् सुदुश्चरं तपस्तप्यमानायात्रये पुत्रकामायातितरां तुष्टेन ज्योतिर्मयेनात्मैव

p. 557) दत्तो यस्माच्चानसूयायामत्रेस्तनयोऽभवत् तस्मादुच्यते दत्तात्रेय इति ॥ ८ ॥

निरुक्तिवेदनफलम्

अथ योऽस्य निरुक्तानि वेद स सर्वं वेद ॥ ९॥ अथ यो ह वै विद्यैनं परमुपास्ते सोऽहमिति स ब्रह्मविद्भवति ॥ १० ॥

अत्रैते श्लोका भवन्ति-

दत्तात्रेयं शिवं शान्तमिन्द्रनीलनिभं प्रभुम्।

आत्ममायारतं देवमवधूतं दिगम्बरम्॥ ११॥

भस्मोद्धूलितसर्वाङ्गं जटाजूटधरं विभुम्।

चतुर्बाहुमुदाराङ्गं प्रफुल्लकमलेक्षणम्॥ १२॥

ज्ञानयोगनिधिं विश्वगुरुं योगिजनप्रियम्।

भक्तानुकम्पिनं सर्वसाक्षिणं सिद्धसेवितम्॥ १३॥

एवं यः सततं ध्यायेद्देवदेवं सनातनम्।

स मुक्तः सर्वपापेभ्यो निःश्रेयसमवाप्नुयात्॥ १४॥

इत्योंं सत्यमित्युपनिषत्॥ १५॥

उक्तनिरुक्तत्रयवेदनफलमाह- अथेति। ब्रह्मणः

सर्वव्यापकत्वेन ब्रह्मवेदनतः सर्ववित्त्वं स्यादित्यर्थः॥ ९॥ य

एतद्ब्रह्म विदित्वोपास्ते स तदेव भवतीत्याह- अथेति। विद्य विदित्वेत्यर्थः॥

१०-१३॥ य एवमुक्तप्रकारेण सदा देवदेवं परमात्मानम्

अयमहमस्मीति विदित्वा ध्यायेत् स निःश्रेयसं

p. 558) तत्पदमाप्नुयात् ॥ १४ ॥ यत् सत्यमोंकाराग्रविद्योतमानं तदेव भवतीत्यर्थः ॥ इत्युपनिषच्छब्दः शाण्डिल्योपनिषत्समाप्त्यर्थः ॥ १५ ॥

इति द्वितीयः खण्डः समाप्तः, तृतीयोऽध्यायश्च ॥

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना ।
शाण्डिल्योपनिषद्व्याख्या लिखिता ब्रह्मगोचरा ।
शाण्डिल्योपनिषद्व्याख्याग्रन्थस्तु त्रिशतं स्मृतः ॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे
अष्टपञ्चाशत्संख्यापूरकं शाण्डिल्योपनिषद्विवरणं
संपूर्णम्

***********************************************************************************
*******
* The Yoga upani.sads with the commentary of
* "srii upani.sad - Brahmayogin
* Edited by Pandit A. Mahadeva Sastri, B.A.
* First published 1920 by the Adyar Library and Research Centre
*
* ha.msopani.sat
*
* Data-entered by the staff of Muktabodha supervised by Mark Dyczkowski
*
* revision 0 June 14, 2007
* Velthius transliteration
***********************************************************************************
***********

हंसोपनिषत्

पूर्णमदः- इति शान्तिः

ब्रह्मविद्यासाधनहंसविद्याया अतिगुह्यत्वम्

गौतम उवाच-

भगवन् सर्वधर्मज्ञ सर्वशास्त्रविशारद ।

ब्रह्मविद्याप्रबोधो हि येनोपायेन जायते ॥ १ ॥

सनत्कुमार उवाच–

विचार्य सर्वधर्मेषु मतं ज्ञात्वा पिनाकिनः ।

पार्वत्या कथितं तत्त्वं शृणु गौतम तन्मम ॥ २ ॥

अनाख्येयमिदं गुह्यं योगिने कोशसंनिभम् ।

हंसस्याकृतिविस्तारं भुक्तिमुक्तिफलप्रदम् ॥ ३ ॥

विवरणम्

हंसाख्योपनिषत्प्रोक्तनादालिर्यत्र विश्रमेत् ।

तदाधारं निराधारं ब्रह्ममात्रमहं महः ॥

इह खलु हंसोपनिषदः शुक्लयजुर्वेदप्रविभक्तत्वेन

ईशावास्यबृहदारण्यकादौ य उपोद्घाताः स एव अत्रापि द्रष्टव्यः ।

सनत्कुमारगौतमप्रश्नप्रतिवचनरूपेयमाख्यायिका

p. 560) विद्यास्तुत्यर्था। तत्रादौ गौतमः सनत्कुमारं ब्रह्मज्ञानं तदुपायं च पृच्छतीत्याह- भगवन्निति। हे भगवन् षण्गुणैश्वर्यसंपन्न, सर्वधर्मज्ञ, सर्वशास्त्रविशारद, इति संबोधनत्रयेण त्वं सर्वज्ञोऽसि सर्वज्ञेश्वरभावारूढत्वात् येनोपायेन मे झटिति अनायासेन ब्रह्मविद्याप्रबोधो हि निर्विशेषब्रह्ममात्रज्ञानं जायते तदुपायं कृपया उपदिश ॥ १ ॥ इति गौतमेन पृष्टः सनत्कुमारो मुनिः श्रोतुबुद्धिप्ररोचनाय वक्ष्यमाणविद्यां स्तुवन्निदमुवाचेत्याह- सनत्कुमार उवाचेति। हे गौतम सर्वेशितुः पिनाकिनो यन्मतं स्वातिरिक्तसर्वकलनाविरलं ब्रह्म स्वमात्रमिति तदेव तन्मुखतो ज्ञात्वा तदनुरोधेन स्वातिरिक्तासदपह्नवसिद्धं ब्रह्म सन्मात्रमिति धारणार्हौ धर्मौ येषु वेदान्तेषु धार्यते तेषु सर्वधर्मेषु ईशाद्यष्टोत्तरशतवेदान्तेषु सम्यक् विचार्य निश्चित्य लोकमात्रा ब्रह्मविद्यारूपया पार्वत्या यत् ब्रह्मतत्त्वं मे केवलकृपया कथितं यत् पिनाकिनोऽभिमतं तन्मतं सावधानमना भूत्वा शृणु, श्रुत्वा सम्यगवधारयेत्यर्थः ॥ २ ॥ तत् कीदृशमित्यत आह- अनाख्येयमिति। यत् मया वक्ष्यमाणं ब्रह्मविज्ञानं तदिदं गुह्यम् अयोगिषु गोपनीयमित्याह- अनाख्येयमिति। कदापि न वक्तव्यमित्यर्थः। अनधिकारिषु ख्यापने महाननर्थो भवेदित्यत्र-

अज्ञस्यार्धप्रबुद्धस्य सर्वं ब्रह्मेति यो वदेत्।

महानरकसाम्राज्ये स तेन विनियोजयेत्॥ इति,

न बुद्धिभेदं जनयेदज्ञानां ज्ञानसङ्गिनाम्॥

इति च श्रुतिस्मृती मानम्। तर्हि इदं कस्मै आख्येयमित्यत आह- योगिन इति।

स्वाश्रमाचारपुरस्सरं ब्रह्मविद्योपयोगसाधनयुक् योगी तस्मै

योगिने देशिकेन इदं वक्तव्यमित्यर्थः। तत् कीदृशं

किंफलदमित्यत्राह- हंसस्येति। स्वमात्रप्रबोधेन स्वातिरिक्तकलनां

हन्ति अपह्नवं करोतीति हंसः परमात्मा तस्याकृतिविस्तारो

विश्वविराडोत्रादिः तं तदेव ब्रह्म ज्ञानरत्नकोशसंनिभं

स्वातिरिक्तमुक्तेः स्वाज्ञताया मुक्तिः अपह्नवः ततो यत् फलं

स्वमात्रावस्थानलक्षणकैवल्यमवशिष्यते तत्फलप्रदं, मया

उच्यमानं शृण्विति पूर्वेण अन्वयः॥ ३॥

p. 561)हंसविद्याधिकारिस्वरूपम्

अथ हंसपरमहंसनिर्णयं व्याख्यास्यामो ब्रह्मचारिणे

दान्ताय गुरुभक्ताय हंसहंसेति सदा ध्यायन्॥ ४॥

हंसस्य आकृतिविस्तारः तदधिकारी वा कीदृशः किं

तद्विद्याफलं किं तत्साधनमित्याकाङ्क्षायां
योग्याधिकारिणमुपलभ्य मुनिः एतत् सर्वमाचष्टे- अथेति। अथ
यथोक्ताधिकारसंपत्त्यनन्तरं क्रमेण जाग्रदाद्यवस्थात्रयं
हत्वा तुर्यपदं गच्छतीति हंसः व्यष्टितुर्यः प्रत्यगात्मा, स एव
परमः सर्वोत्कृष्टः समष्ट्यवस्थात्रयं हत्वा तत्तुर्यपदं
गच्छतीति परमहंसः तयोः हंसपरमहंसयोः प्रत्यक्परयोः
निर्णयं यथात्म्यं प्रत्यक्परविभागैक्यासहब्रह्ममात्रज्ञानं
विस्पष्टमाख्यास्यामः वक्ष्यामः। कस्मा अधिकारिणे वक्ष्यसीत्यत्र
हंसः होऽहमित्यर्थे हंसहंसेत्यावृत्तिः। यः सदैवं हंसः
सोऽहमित्यनुसंधानपूर्वकं तत्स्वरूपं ध्यायन् ब्रह्मणि चरति
ब्रह्मनिष्ठामारोढुमिच्छति स ब्रह्मचारी तस्मै ब्रह्मचारिणे
दान्ताय वशीकृतकरणग्रामाय परमार्थोपदेष्ट्टगुरुभक्ताय
गुरूपदिष्टार्थश्रद्धालवे तुभ्यं व्याख्यास्याम इति
पूर्वेणान्वयः॥ ४॥

हंसस्वरूपं तज्ज्ञानफलं च

सर्वेषु देहेषु व्याप्य वर्तते यथा ह्यग्निः काष्ठेषु तिलेषु
तैलमिव। तं विदित्वा न मृत्युमेति॥ ५॥

स हंसः किंपरिच्छिन्नः कुत्रासनमर्हतीत्यत्र सदृष्टान्तमाह- सर्वेष्विति । यथा ह्यग्निः काष्ठेषु स्वावारकेषु स्वदाह्येषु च व्याप्य वर्तते तिलेषु तैलमिव च तथा स्वाज्ञदृष्टिप्रसक्तसर्वेषु ब्रह्मादिस्तम्बान्तदेहेषु सत्सु तदारोपापवादाधिकरणजीवेशप्रत्यक्परस्वरूपेण व्याप्य वर्तते, स्वज्ञानेन स्वाज्ञानहानौ सत्यां

p. 562) व्याप्यत्वसापेक्षव्यापकत्ववैरल्यात् निष्प्रतियोगिकब्रह्ममात्रमवशिष्यते । तज्ज्ञानफलमाह- तमिति । तमेवं विदित्वा वेदनसमकालं मृत्युं स्वातिरिक्तास्तितामोहं नैति विद्वान् । स्वातिरिक्तापह्नवसिद्धब्रह्ममात्रतया अवशिष्यते इत्यर्थः ॥ ५ ॥

हंसज्ञानोपायो योगः

गुदमवष्टभ्याधाराद्वायुमुत्थाप्य स्वाधिष्ठानं त्रिः प्रदक्षिणीकृत्य मणिपूरकं गत्वा अनाहतमतिक्रम्य शिश्नाभे पार्श्वे भवतः । विशुद्धौ प्राणान्निरुध्याज्ञामनुयायन् ब्रह्मरन्ध्रं ध्यायन् त्रिमात्रोऽहमित्येवं सर्वदा पश्यत्यनाकारश्च भवति ॥ ६ ॥ एषोऽसौ परमहंसो

भानुकोटिप्रतीकाशो येनेदं सर्वं व्याप्तम्॥ ७॥

एवं सम्यग्ज्ञानावाप्तौ उपायः कः इत्याकाङ्क्षायां
तदुपायत्वेन योगमुपदिशति- गुदमवष्टभ्येति। तं विदित्वा न
मृत्युमेतीत्युक्तितो वेदनादेव मृत्युग्रासब्रह्माप्तिरवगम्यते।
केषांचिन्मलिनचित्तानां मुमुक्षायां सत्यामपि केवलवेदान्त-
श्रवणतो मृत्युग्रासब्रह्मज्ञानं नोदेति। तत्रान्तरायो मलिनचित्तता।
योगाख्यशुद्धवारिणा यदि सा शोधिता तदा पूर्वश्रुतज्ञानमेव
स्वगताभासतां विहाय सम्यग्ज्ञानपदवीं भजति। ततः
सम्यग्ज्ञानसमकालं मृत्युग्रासब्रह्माप्तिरिष्यते। तस्मात्
ब्रह्माप्तिहेतुज्ञानसाधनत्वेन अष्टाङ्गयोगोऽभ्यसनीयः।
कोऽयमष्टाङ्गयोगः ? यमनियमासनप्राणायामप्रत्याहार-
धारणाध्यानसमाधयः इत्यष्टाङ्गानि गुरुसंनिधौ
यथावदभ्यस्य अथ समाध्यर्थं जनसंबाधरहितगुहां
प्रविश्य योगी सिद्धासनारूढः सन् वामगुल्फेन गुदमवष्टभ्य
नासिकाभ्यां वक्रेण वा वायुमापूर्य कुम्भयित्वा
सम्यगाकुञ्चनेन मूलाधाराद्वायुमुत्थाप्य प्राणापानयोरैक्यं
कृत्वा अयं मूलाधारत्रिकोणगतवह्निप्राणापानान् मिलित्वा
कुण्डलिनीं बोधयित्वा तया
मूलाधारस्थसुषुम्नाकवाटब्रह्मग्रन्थिं विभिद्य चतुर्दलयुक्तं

p. 563) मूलाधारचक्रं प्रविश्य विराजं तत्तुर्यं वा ध्यात्वा अथ
स्वाधिष्ठानं षड्दलशोभितं त्रिः प्रदक्षिणीकृत्य अथ
दशारशोभितं मणिपूरकं गत्वा अनाहतचक्रं द्वादशदलं
तन्मूलस्थविष्णुग्रन्थिं विभिद्य अनाहतचक्रमध्ये सूत्रं तत्तुर्यं
वा ध्यात्वा तत्र निर्विकल्पसमाधिमेत्य, अथ अनाहतमतिक्रम्य, अथ
विशुद्धिचक्रं षोडशदलं, तदधोभागे शिश्नाभे पार्श्वे भवतः
विशुद्धचक्राधोभागे लम्बमानशिश्नतुल्यमांसखण्डे भवतः,
य एषः स्तन इवावलम्बते। सेन्द्रयोनिः इति श्रुत्यन्तरात्। तत्पार्श्वस्थ-
मार्गद्वयं विहाय तन्मांसखण्डमध्यमार्गेण विशुद्धिचक्रं
प्रविश्य तत्र विशुद्धौ विशुद्धिचक्रे प्राणान्निरुध्य अथ भ्रूमध्ये
द्विदलाढ्यम् आज्ञाचक्रं तन्मूलस्थरुद्रग्रन्थिं विभिद्य
आज्ञाचक्रं प्रविश्य तन्मध्ये बीजं तत्तुर्यं वा अनुयायन् ध्यायन्
निर्विकल्पकसमाधिमेत्य, अथ चन्द्रसूर्याग्न्यैक्यसंजातामृत-
मास्वाद्य अजरामरपिण्डो योगी सहस्रारशोभि ब्रह्मरन्ध्रं प्रविश्य,
तत्रत्यत्रिमात्रारोपाधिकरणतुर्यस्त्रिमात्रोऽहं, यद्वा त्रिपञ्चमात्रा
यत्रापह्नवं भजति तत्तुर्यतुर्यं वाहमस्मीति यदि सर्वदा पश्यति
तदा योगी त्रिमात्राधिकरणकिंचित्साकारवत् तुर्यो वा, अनाकारवत्
तुर्यतुर्यो वा भवति। तुर्यतुर्यस्य निष्प्रतियोगिकत्वख्यापकः चशब्दः॥
६॥ यः तुर्यतुरीयत्वेन उक्तः एषोऽसौ परमहंसः परमात्मा

स्वांशजतुर्याभेदेन भानुकोटिप्रतीकाशः
युगपदुदितानन्तकोटिभानुसदृशप्रकाशः येन तुर्यप्रकाशेन इदं
सर्वं जगत् व्याप्तं कबलितम्॥ ७॥

हृत्पद्मे हंसभावनया तुर्यात्मदर्शनम्

तस्याष्टधा वृत्तिर्भवति। पूर्वदले पुण्ये मतिः। आग्नेये
निद्रालस्यादयो भवन्ति। याम्ये क्रौर्ये मतिः। नैर्-ऋते पापे मनीषा।
वारुण्यां क्रीडा। वायव्यां गमनादौ बुद्धिः। सौम्येरतिप्रीतिः।
ईशान्ये द्रव्यादानम्। मध्ये वैराग्यम्। केसरे जाग्रदवस्था।
कर्णिकायां स्वप्नम्। लिङ्गे सुषुप्तिः। पद्मत्यागे तुरीयम्

p. 564) यदा हंसे नादो विलीनो भवति तत् तुरीयातीतम्॥ ८॥ अथो नाद
आधाराद् ब्रह्मरन्ध्रपर्यन्तं शुद्धस्फटिकसंकाशः स वै
ब्रह्म परमात्मेत्युच्यते॥ ९॥

तस्यैव पुनर्व्यष्टिप्रपञ्चारोपाधिकरणजीवभावमापन्नस्य
अष्टधा अष्टप्रकारा वृत्तिर्भवति। कथमित्यत्र- तदधिष्ठेयं
हृत्पद्मं द्वादशदलयुक्तम् इत्युक्तम्। तत्र दलचतुष्टयं
हंसास्पृश्यं, शिष्टाष्टदलं व्यवहारयोग्यं भवतीति कृत्वा

तत्प्रकार उच्यते। तत्र हंसः प्राणोपाधिकजीवः यदा पूर्वदले प्रविशति तदा पुण्ये कर्मणि मतिः भवति। यदा आग्नेयदले प्रविशति तदा निद्रालस्यादयो भवन्ति। यदा याम्यदले प्रविशति तदा क्रौर्ये कर्मणि मतिर्जायते। यदा नैर्-ऋते दले प्रविशति तदा पापे कर्मणि कर्तुं मनीषा उदेति। यदा वारुण्यां दिशि विद्यमानदले प्रविशति तदा क्रीडाविनोदमतिर्भवति। वायव्यां दिशि विद्यमानदले यदा प्रविशति तदा चलनगमनादौ बुद्धिः उदेति। यदा सौम्ये दले प्रविशति तदा विद्वदविदुषोः आत्मानात्मरतिप्रीतिः उदेति। यदा ईशान्ये दले प्रविशति तदा इहामुत्रोपयोगिद्रव्यादानमतिः जायते। यदा दलानां मध्ये प्रविशति तदा स्वातिरिक्तविषये वैराग्यमुदेति। यदा तत्केसरे संचरति तदा जाग्रदवस्था भवति। तदानीमहंकृतिः पूर्णविकासतामेति। यदा तत्कर्णिकायां संचरति तदा स्वप्नं पश्यति। तदानीमहंकृतेः अर्धविकासो भवति। तदन्तः सुषिरं तत्र यदा प्रविशति तदा सुषुप्तिः भवति। यथोक्तलक्षणपद्मत्यागे तुरीयं तत्साक्षात्कारो भवति। तदानीं हंसः प्रत्यगभिन्नपरमात्मतया अवशिष्यते। यदा हंसे प्रत्यगभिन्नपरमात्मनि नादोऽर्धमात्रात्-मको विलीनो भवति तदा स्वाधिष्ठेयगुणसाम्यादिप्रपञ्चवैरल्यात् तन्निरूपिताधिष्ठानताविरलं निरधिष्ठानं तुरीयातीतं निष्प्रतियोगिकब्रह्ममात्रं अवशिष्यते॥ ८॥ एवं भावनाविशिष्टयोगिनः स्वदेहे तुर्यात्मा प्रकाशत इत्याह- अथो इति। अथो

निर्विकल्पकसमाधिसिद्ध्यन्तरं योगिनो हृदये नादो

p. 565) गुणसाम्यासङ्गचिद्धातुः तुर्यः आधारात्

मूलाधारमारभ्य ब्रह्मरन्ध्रपर्यन्तं तुर्यस्वरूपं

शुद्धस्फटिकसंकाशं निर्दुष्टस्फटिकाचलवत् शुक्लतेजोमयं

ब्रह्म स वै नादावभासकपरमात्मेत्युच्यते ॥ ९ ॥

अजपाहंसमन्त्रजपप्रकारः

अथ हंस ऋषिः। अव्यक्तगायत्री छन्दः। परमहंसो देवता।

हं बीजम्। सः शक्तिः। सोऽहं कीलकम्॥ १० ॥ षट्संख्यया

अहोरात्रयोरेकविंशतिसहस्राणि षट्छतान्यधिकानि भवन्ति। सूर्याय

सोमाय निरञ्जनाय निराभासायातनुसूक्ष्म प्रचोदयादिति ॥ ११ ॥

अग्नीषोमाभ्यां वौषट् हृदयाद्यङ्गन्यासकरन्यासौ भवतः ॥ १२ ॥

एवं कृत्वा हृदये हंसमात्मानं ध्यायेत्॥ १३ ॥

इत्थंविधतुर्यसाक्षात्कारात्ममन्त्रस्य

ऋषिछन्दोदेवताङ्गन्यासध्यानसहितजपप्रकार उच्यते। अथ

शयनादुत्थानानन्तरमहोरात्रगणनीयश्वाससंख्यया

मुमुक्षुभिः अजपानुसंधानं कर्तव्यम्। तत उच्छ्वासनिश्वास एव

आत्ममन्त्र उच्यते। निश्वास एव सकारस्त्वंपदार्थः। उच्छ्वास एव सबिन्दुकवियद्बीजं हमिति तत्पदार्थः। पुनःपुनः तयोर्योग एव असिपदार्थः॥

सकारः खेचरी प्रोक्तस्त्वंपदं चेति निश्चितम्।
हकारः परमेशः स्यात्तत्पदं चेति निश्चितम्।
सकारो ध्यायते जन्तुः हकारो हि भवेत् ध्रुवम्॥

इति श्रुतेः। अथ अजपात्ममन्त्रस्य हंसः प्रत्यगात्मैव ऋषिः। अव्यक्तगायत्री छन्दः। परमहंसः परमात्मा देवता। हं बीजम्। सः

p. 566) शक्तिः। सोऽहं कीलकम्। हंसात्मसाक्षात्कारार्थे विनियोगः। हंसामित्यादिषडङ्गन्यासः। ध्यानम्-

गमागमस्थं गमनादिशून्यं चिद्रूपमेकं परमाद्वितीयम्।
ध्यायन्ति ये सर्वजनान्तरस्थं नमामि हंसं परमात्मरूपम्॥

इति॥

लमित्यादि पञ्चपूजा। सोऽहमिति मन्त्रः।

निश्वासोच्छ्वासवर्तनमेव हि जपः॥ १०॥ षट्संख्याकाः

षडाधारदेवता गणेशादयः जपसंख्याकर्तारो भवन्ति।

अहोरात्रविभक्तश्वाससंख्या निगद्यते।

अहोरात्रयोरेकविंशतिसहस्राणि षट्छतान्यधिकानि भवन्ति। दिने दिने

षट्छताधिकैकविंशतिसहस्रसंख्यया निश्वासोच्छ्वासाः सोऽहं

सोऽहमिति जपन्ति। अजपां विशिष्टां चतुर्धा विभज्य तत्राद्यो भागः

विराडात्मने सूर्याय समर्पयेत्। द्वितीयो भागः

सूत्रभावमापन्नाय सोमाय प्रचोदयात् समर्पयेत्। तथा तृतीयो

भागः अतनुसूक्ष्माभिधविराट्सूत्रारोपाधिकरणतया

स्वाधिष्ठेयनिरञ्जनाय सर्वेश्वराय प्रचोदयात् विनियोजयेत्।

अवशिष्टतुर्यभागस्तु स्वातिरिक्तस्थूलसूक्ष्मबीजाभासतदध्यक्ष-

विराडादिगतहेयांशापवादाधिकरणतया निराभासाय

प्रत्यगभिन्नपरमात्मने अतनुसूक्ष्मादिप्रपञ्चं प्रचोदयात्

विलापयेत्॥ ११॥ अग्नीषोमाभ्यां वौषट् हृदयाद्यङ्गन्यासकरन्यासौ

भवतः इति। हंसौं इति दीर्घभाक् षट्पर्यायेषु, संसौं इति

पञ्चमपर्यायस्थाने तदेव, नो चेदग्नीषोमाभ्यां वौषडिति वा

कुर्यादित्यर्थः॥ १२॥ एवमङ्गन्यासादिकं कृत्वैव हृदये

हंसमात्मानं प्रत्यगभिन्नं ब्रह्मास्मीति ध्यायेत्॥ १३॥

सगुणहंसध्यानेन परमात्मदर्शनम्

अग्नीषोमौ पक्षावोंकारः शिर उकारो बिन्दुस्त्रिणेत्रं मुखं
रुद्रो रुद्राणी चरणौ द्विविधं कण्ठतः कुर्यादित्युन्मनाः

p. 567) अजपोपसंहार इत्यभिधीयते ॥ १४ ॥ एवं हंसवशान्मनो
विचार्यते ॥ १५ ॥

एवं निर्गुणध्यानाशक्तस्य सगुणध्यानप्रकार उच्यते-
अग्नीषोमाविति । वैराजभावमापन्नहंसस्य अग्नीषोमौ
सूर्याचन्द्रमसौ पक्षौ बाहू भवतः । अस्य शिरस्तु ओंकारः । अस्य
त्रिणेत्रं सबिन्दुकाकारोकारमकाराः । अस्य मुखं रुद्रः । अस्य
चरणौ पादौ रुद्राणी गङ्गा च भवतः । एवं सगुणनिर्गुणभेदात्
द्विविधं हंसध्यानं कण्ठतः कण्ठरवेण मुमुक्षुः
निश्शङ्कं कुर्यात् । इत्येवं प्रकारद्वयध्यानेन उद्गतं निरस्कृतं
मनः तत्कार्यं यस्य सोऽयमुन्मनाः मुनिः । अजपा हंसविद्या तस्या
उपसंहारः विलापनं यत्र प्रत्यगभिन्नपरमात्मनि सोऽयम्
अजपोपसंहारः परमात्मेत्यभिधीयते ॥ १४ ॥ एवं सोऽहमिति
हंसध्यानवशात् हंसातिरेकेण मनस्तत्कार्यं नेति नेति इति विचार्यते
निर्धार्यते ॥ १५ ॥

अजपाजपेन दशनादानुभवः

अस्यैव जपकोट्या नादमनुभवति । स च दशविधो जायते । चिणिति

प्रथमः चिणिचिणीति द्वितीयः । घण्टानादस्तृतीयः ।

शङ्खनादश्चतुर्थः । पञ्चमस्तन्त्रीनादः । षष्ठस्तालनादः ।

सप्तमो वेणुनादः । अष्टमो भेरीनादः । नवमो मृदङ्गनादः ।

दशमो मेघनादः ॥ १६ ॥

यदि मुमुक्षुः सगुणनिर्गुणध्यानाशक्तो भवति तदा

तूष्णीमहोरात्रनिर्वर्त्यनिश्वासोच्छ्वासरूपेण

केवलाजपात्महंसमन्त्रजपं कुर्वतः स्वानुभवजन्यनादेयत्तं

तदनुसंधानावान्तरफलं परमफलं चाह- अस्यैवेति । एवं

p. 568) यथोक्तस्य अस्यैव हंसमनोर्जपकोट्या

कोटिसंख्याजपप्रभावेनायं मुमुक्षुः अनाहतचक्रे नादब्रह्म

अनुभवति स्वानुभूतिप्रमाणतो जानाति । योऽयमनुभूतो नादः स च

दक्षिणकर्णे दशविध उपजायते अभिव्यज्यते । क्रमशः

तत्प्रकारमाह- चिणितीति । प्राथमिको नादः चिणितिध्वन्यात्मको भवति ।

द्वितीयो नादः चिणिचिणीति ध्वन्यात्मकः । तृतीयो नादः

घण्टानादसमो भवति। चतुर्थस्तु शङ्खनादवदभिव्यक्तो भवति।
पञ्चमस्तु वीणातन्त्रीनादवदभिव्यज्यते। षष्ठः तालनादनिभो
भवति। सप्तमनादस्तु सुस्वरवेणुनादसमानो भवति।
भेरीनादतुल्योऽयमष्टमः। मृदङ्गनादनिभोऽयं नवमः।
दशमस्तु मेघनादसंनिभः॥ १६॥

केवलदशमनादाभ्यासविधिः

नवमं परित्यज्य दशममेवाभ्यसेत्॥ १७॥

एवं दशविधनादेषु प्रथमादिनवमान्तं परित्यज्य
मुमुक्षुः दशममेव अभ्यसेत्॥ १७॥

तत्तन्नादानुभवफलम्

प्रथमे चिञ्चिणीगात्रं द्वितीये गात्रभञ्जनम्।
तृतीये भेदनं याति चतुर्थे कम्पते शिरः॥ १८॥

पञ्चमे स्रवती तालू षष्ठेऽमृतनिषेवणम्।
सप्तमे गूढविज्ञानं परावाचा तथाष्टमे॥ १९॥

अदृश्यं नवमे देहं दिव्यं चक्षुस्तथामलम् ।

दशमं च परं ब्रह्म भवेद्ब्रह्मात्मसंनिधौ ॥ २० ॥

p. 569) चिणिति प्राथमिको नादो य उक्तः तस्मिन् प्रथमे नादे यथावदनुभूते तदा स्वस्य चिञ्चिणीगात्रं प्रतिभाति । तथा द्वितीये तद्गात्रभञ्जनं भवति । तृतीये तु हृदयं भेदनं याति हृत्पद्मं विकासमेति । चतुर्थे तु स्वशिरः कम्पते- षण्मुखीमुद्रारूढस्य कुम्भकावस्थायां वायावाज्ञाचक्रं प्रविष्टे शिरः कम्पयतीत्यर्थः ॥ १८ ॥ पञ्चमे तन्त्रिनादेऽभिव्यक्ते स्वतालू स्रवती । षष्ठाख्यतालनादाभिव्यक्तौ चन्द्रसूर्यमण्डलद्वयैक्यसंजाता- मृतनिषेवणममृतास्वादनं भवति । सप्तमवेणुनादाभिव्यक्तौ स्वातिरिक्तजनानां यत् गूढं ब्रह्म तद्विषयकविज्ञानं जायते । अष्टमभेरीनादाभिव्यक्तौ सर्ववेदशास्त्ररूपिण्या परावाचा अयं योगी विजृम्भते, सकलविषयकशास्त्रविज्ञानी सर्वज्ञो भवति ॥ १९ ॥ नावमिकमृदङ्गनादाभिव्यक्तौ देहं पश्यतामदृश्यं भवति अन्तर्धानादिशक्तिमान् भवति । निर्मलदिव्यचक्षुः त्रिकालज्ञः ईश्वरो भवति । प्रथमादिनवमान्तनादतद्ध्वनानाविधसिद्ध्युपेक्षा- पूर्वकं दशममेघनादाभिव्यक्तौ ब्रह्मात्मसंनिधौ प्रत्यगभिन्ने ब्रह्मणि स्वाज्ञादिदृष्टिप्रसक्ततद्गतभेदैक्यकलना-

पह्वसिद्धब्रह्म भवेत्, तन्मात्रतया अवशिष्यत इत्यर्थः ॥ २० ॥

मनोलयात् ब्रह्मात्मत्वप्रकाशः

तस्मान्मनो विलीने मनसि गते संकल्पविकल्पे दग्धे पुण्यपापे सदाशिवः शक्त्यात्मा सर्वत्रावस्थितः स्वयंज्योतिः शुद्धो बुद्धो नित्यो निरञ्जनः शान्ततमः प्रकाशयतीति वेदानुवचनं भवतीत्युपनिषत् ॥ २१ ॥

कथं पुनरेव ब्रह्ममात्रमवशिष्यते स्वातिरिक्तमनस्तत्कार्यसंकल्पपुण्यपापादिसत्त्वादित्यत आह- तस्मादिति । यस्मात् स्वाज्ञानविकल्पितोऽयं मन-आदिविकारपूगः तस्मात् स्वज्ञानेन मनो मनसि विलीने निर्मूलभावं

p. 570) गते तत्कार्यसंकल्पविकल्पे तत्कार्यपुण्यपापादावपि दग्धे सम्यग्ज्ञानाग्निना भस्मीकृतेऽथ स्वातिरिक्तमनस्तत्कार्यारोपाप-वादाधिकरणतया (ब्रह्मप्रणवार्थतुर्यतुर्यतया) सदाशिवः परमेश्वरः तत्तत्पदार्थगतसर्वशक्त्यात्मा सर्वत्र व्यक्ताव्यक्तप्र-पञ्चे सच्चिदानन्दात्मना अवस्थितः । जडप्रपञ्चानुयोगतो जडत्वं स्यादित्यत्र आह- स्वयंज्योतिरिति । स्वाज्ञदृष्टिप्रसक्तजडप्रपञ्चस्य

स्वज्ञदृष्ट्या मिथ्यात्वेन तदनुयोगस्यापि तथात्वात् स्वयंज्योतिरात्मा
ह्यजडात्मकः। अत एवायं शुद्धः अशुद्धमायावैरल्यात्। माया-
पाये तदनुगतस्यापि तदात्वं स्यादित्यत आह- नित्य इति। सत्तामात्रत्वात्।
मात्रशब्दस्येतरव्यवच्छेदकत्वेन तत्राञ्जनता स्यादित्यत आह-
निरञ्जन इति। सत्तामात्रस्य निष्प्रतियोगिकत्वेनेतररञ्जनता कथं
सेद्धुं पारयति ? स्वातिरिक्तास्तिताहेतुस्वाज्ञानहेतुतमःसत्त्वे
निष्प्रतियोगिकसत्तामात्रता कुत इत्यत्र आह- शान्ततमः प्रकाशयतीति।
यदवगतिसमकालं स्वाज्ञानतत्कार्यं तमोऽपह्नवपदं भजति
सोऽयं शान्ततमः अत एवायं निष्प्रतियोगिकतया प्रकाशयति।
अस्मिन्नर्थे पश्यतेहापि सन्मात्रमसदन्यत्, ब्रह्मव्यतिरिक्तं न
किंचिदस्ति, अतोऽन्यदार्तं ब्रह्ममात्रमसन्न हि

सिद्धान्तोऽध्यात्मशास्त्राणां सर्वापह्नव एव हि।
नाविद्यास्तीह नो माया शान्तं ब्रह्मेदमक्लमम्॥

इत्यादिवेदानुवचनं भवति। इत्युपनिषच्छब्दौ
उपनिषत्परिसमाप्त्यर्थौ॥ २१॥

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना।
लिखितं स्याद्विवरणं हंसोपनिषदः स्फुटम्।

संसोपनिषदो व्याख्या सप्तत्यधिशतं स्मृता ॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे

पञ्चदशसंख्यापूरकं

हंसोपनिषद्विवरणं संपूर्णम्

XXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXX
X
X title: timirodghaa.tatantra
X
X copied from ngmpp access no. 5/690 reel no: A 1380/9
X folios 34
X script: newari
X material: paper
X
X data entered by the staff of muktabodha under the
X direction of mark s.g. dyczkowski
X
X
X revision 0: april 6, 2012
X
XXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXXX

त केशवार्जुना ॥

संजय उवाच ॥

उभायारथमा * * * * *?सान्तमो? ।

* * * * * * * * क्षरकास्व मनुत्तम * * * * * * ? भ्रां *?वत नियम कृतावुभौ ।

तस्मिं पितृगणं पूज्यनिविष्टौ सुलक्षणौ ॥

एकान्ते च * * * * * ?ल्यते च परस्परम् ।

कृताङ्जलिपुटि * *? अर्जुनावाक्यमव्रवीत् ॥

अर्जुन उवाच ॥

सैन्ययोरुभयोरूढा उद्यतो युद्धपाणयः ।
शङ्खतूर्यैश्च भेरिश्च सिंहनाद ह?तेरधौ ॥

गीतया कथितम्पूर्वं व्याकुलेस्तस्य मे नमे ।
नावधारितया कृष्ण तज्ज्ञेयं ममरं पदम् ॥

पूर्वयुद्धे स्वयमेव पुनः पुनरे? भाषसे ।
च्छिन्दभिन्दवधस्वेति राज्यकुर्याद क *?क ॥

प्रधानशत्रू वाक्येति वधयस्तु मरिन्दमः ।
ज्ञान तेन पुनर्वक्त्य सर्वशत्रु वधे कृते ॥

भगवानुवाच ।

यथा न लिप्यते पार्थ पुनः पापैः कथञ्चन ।
योगयुक्तं स विज्ञानम्पश्चाच्चेत्कथयाम्यहम् ॥

p. 2)

अर्जुन उवाच ॥

हत्वा सहोदरा भ्रातृज्ञातीनाञ्च कुलक्षयम् ।
भीतास्मिं नरकस्येहं ज्ञेयं कथयस्व मे ॥

कथं ज्ञान कथं ज्ञेयं परमात्मा कथम्भव ।
आत्मानम्वै कथञ्चेहमन्तरात्मा कथम्भवेत् ॥

सर्वमेतत् समाख्याहि यथा ज्ञास्यन्ति तत्वतः ।
ये नाहं योगयुक्तात्मा दुष्कृतं तरयाम्यहम् ॥

संसारसागरै घोरे पुत्रदारौहराकुले ।
ज्ञाति वान्धवमीनार्मेरर्थ ग्राहभयावहे ॥?

अगाधे मे प्लब्ध? दुर्गे महापातैस्तु दुस्तर ।
मज्जयानां च मात्रा हि यस्मिं संसारसागरे ॥

कुलालमिव वज्रस्य सुःखदुःखमशेषतः ।
स्वर्गनरके भ्रमच्छीघ्रं चक्रदाताहतं ॥

यथात्वं अब्दस्यपि? वा आगच्छन्ति व्रजन्ति च ।
एवं सर्वजगत्कृष्ण भ्रमन्ति संसारसागरात्? ॥

ज्ञानं मे कथय कृष्ण येन सूयाग?सम्भव ।
ज्ञातं मे कथय कृष्ण येन तूर्या? सम्भव ॥

उप? सं? न हिसां सा हि सरणा * * * * * ॥

ता * * * * * * * * * * * * * * *? ।

p. 2b)

यस्याहं प्रावयिष्यामि प्रसीद् मम माधवः ।
यस्य तं लोकनाथस्य सदा तु ग्रहो * * *? ॥

तेन? रहिरंमदुर्ग नात्रकार्य वचारणाः ।?

तद्येवयमिद् * * *? नम्परमदुर्लभम् ॥

ये नाहं पुण्यपापेभ्यो न वध्नीया कदाचन ।

भगवानुवाच ॥

हन्तते कथयिष्यामि * * ? ख सुखावह ।

यथा न लिप्यते कर्मैं पद्मपत्रमिवाम्भसि ॥

शरीरेपि स्थितन्नित्यं न विन्दन्त्य विबोधतः ।

स एव न ततस्यान्त तं ज्ञेयं ममरं पदं ॥

यं प्राप्य लीयते जीवा यं प्राप्यं सृजते पुनः ।

क्षणे क्षणेन कौन्तेय तज्ञेयममरम्पदम् ।

मान्तेषा? क्षीणमेषाष्टा भागोक्षण क्षण द्वयं ॥

तुटि तुटि लवण द्वयोर्निमिषाष्टादशभिः।

प्राणो विनाभिकानां षष्टिं भिन्नांभिका प्रोक्ता षष्टिभिन्ना आवहते निसि।

अ * *? भव देवेशौ न मृयेत्व क्षरेत् पुनः।

स्थावरा जङ्गमा जीवा उपजीवन्ति तं सदा॥

उस्वसं निस्वसं तस्थायं प्रानमिवर्तते।

p. 3a)

तेन? हि? *? कजराद्विश्वं व्यापिन्या या स्थितं प्रभुः।

रेमृसमालमङ्कृत्वा जिह्वादन्तान्तरे स्थितः॥

स्वयं मुच्चरिते यस्तु * *? ब्रह्म विष्णु? दुच्यते।

क?तरे स्थूल मे नाभि? क्षरते च पुनः पुनः॥

यासौ परापरा स्वस्थानक्षर व्यापकस्तदा।

लक्षङ्कृत्वा परशान्ते एकचित्तमनंधतुः॥

उच्चार्यन्तेन बाणेन बिन्दुः परमयोगिनः।

यावदुच्चरते ह्यात्मा सकलस्तु कलैस्सह॥

कलाती * *?तस्थायं लयं गच्छति रञ्जते।
तत्रस्था भूयभूयाप्येक चित्तमनं धनु॥

क्षणे नैकेन मुच्येत किं पुनः सततं नरः।
उच्चार्यन्तु परं ज्ञात्वा अभावभावनां कुरु॥

भ्रमरः कुसुमो सक्तः तथा योगपरायणः।
दहन्त्यक्त्वा व्रजेद्यस्तु सर्वभावान्विभावयेत्॥

याग युक्तमतिन्द्रि? च? पर?निर्वाणमाप्नुयात्।?
यस्य गमेन *? तदा पठते ग्रन्थविस्तराः॥?

नव*विटचे? प्राज्ञः परं सुखमवाप्नुयात्।?

p. 3b) वेदस्य विन्दनं नाम यो वेत्ति परमं पदम्।
यस्तं विन्दति वेदज्ञ स भवेद् वेदपारगः॥

वेदा विन्दति तत्वज्ञ वेदशास्त्र *? तत्पराः।
परम ब्रह्म इति ज्ञात्वा स भवेद् वेदपारगः॥

तृस्थानश्च तृमात्रश्च तृब्रह्मश्च तृरक्षरम्।

अर्द्धमात्रार्द्ध यो वेत्ति स भवेद् वेदपारगः॥

वेद विदुषस्तु यो विप्रौ ब्रह्मविद्यपरायणः।
परं वत्तः स विज्ञाय स पूज्यनारये जगत्॥

यस्मिन् दशेवसद्योगी स देशः परतां व्रजेत्।
भुञ्जते सकृदप्येवं स कुलम्बा धृतो भवेत्॥

आगमो ज्ञान नित्या च विज्ञेयश्च तदा गमैः।

ज्ञेयश्च तत्त्वतो ज्ञात्वा त्यजेत् सत्वमशेषतः।
ज्ञेयं ज्ञात्वा त्यजेज्ज्ञानं च्छन्दसत्वन्तथैव च॥?

पलालमिव धान्याधी त्यजेद्ग्रन्थमशेषतः।?
उल्कहस्तो यथा * स्वि? द्रव्यमालोक्यता व्रजेत्॥?

p. 4a) ज्ञानेन ज्ञेयमालोक्य ततो ज्ञानम्परित्यजेत्।
यथामृतेन तृप्तस्य क्षीरणास्ति प्रयोजनम्॥

एवं तत्व प *? ज्ञात्वा वेदे नास्ति प्रयोजनम्।
वेदेयाज्ञैस्तप्यैन्दानै कृयाशक्ति न हिन्सया॥

मोक्षस्तु न भवे तेषां जन्ममृत्यु पुनः पुनः।
पठित्वा चतुरावेदा धर्मशास्त्राण्यनेकधा॥

यज्ञेयं नाभि विन्दन्ति सर्वे ते पशवस्मृता।
आत्मानं येन विन्दन्ति पशुपाशैर्विमोहिताः॥

भ्रमन्त्यस्तु चिरं कालं यान्योनेनैक सहस्त्रशः।
अस्वमेधै स्वधैः सन्त्यैः तीर्थैदानैस्समैरपि॥

परमात्मा विदुर्यस्तु तस्यासनैव पूरयेत्।
तत्तेव ससतं सा * एकपादहस्तिनोनरः॥?

एकध्यानेन योगीनां सममेतन्न संशयः।
अग्नि * *? दिभिर्यज्ञे येन यष्टं स दक्षिणम्॥

p. 4b) एकध्यानेन योगीनां सममेतन्न संशयः।
पृथिच्छा? सर्वतो वानस्ततो सुचि समन्ततः॥

एक * * ? योगीनां सममेतन्न संशयः।

ब्रह्मचर्यदघ? सत्य अहिन्सा लक्षणेन तु ॥

एकध्यानेन योगीनां सममेतन्न संशयः।
क्षर *?तानि सर्वाणि कुर्वन्ति गतिरागति ॥

योगिनो तत्व विद्यस्तु न क्षरेत परङ्गतः।
नात्यन्तु भुक्षितश्चैव नान्यन्तनिमुनेन तु ॥

दुर्मनाव्याकुलो यस्य तस्य योगो न सिध्यति।
शरीरं सुस्थितं यस्य मनं सोम्य तथैव च ॥

निर्तयोनिरतु क्षारी तस्य यागस्तु सिध्यति।?

भगवानुवाच ॥

जीवं तृधा स्थितकायेदात्मादुच्चरितस्वयम्।
नदते परमात्मात्मा कर्षणान्तनात्मनि ॥

p. 5a) पूरकः कुम्भकश्चैव रेचकस्व विधीयते।
यागस्यैतानि नामानि तृधासारमते परः ॥

वायुस्तेजस्तथाकास तृतीय जीव उ * * ? ।
जीवप्राणमिति प्रोक्तं वालाग्रसत कल्पितम् ॥

शब्दमूर्तिमयः प्राणाहृद्याकासेषु मुच्चरै ।
पूरितत्तेन सर्वाङ्ग पूरकस्तु तदुच्यते ॥

आपूयमानमचलं प्रतिष्ठं विस्वरूपेण संस्थितम् ।
निश्चल स्थिर भूतात्मा कुम्भकस्तेन उच्यते ॥

चरितं येन सर्वत्र त्रैलोक्य सचरारम् ।
सर्वभूतात्मकः शम्भुरेवकस्तु विधीयते ॥

ब्रह्माण पूरकम्विद्या कुम्भको विष्णुरुच्यते ।
रेचकै शङ्करश्चैव तृविधाधारणा स्मृतः ॥

पुण्यपाप विनिर्मुक्ता मुक्तिराकाशमात्मिका ।
एक मूर्ति त्रयो भागो ब्रह्मविष्णुमहेश्वरः ॥

सहजागन्तुकैर्पासैः नैरोधिक समुद्भवैः।
बद्ध समुच्यते नेद्यः तत्वभेद कृतेन तु।

अर्जुन उवाच॥

कथन्ते सहजा पासनैरोधिक कथम्भवेत्।
आगन्तुना? कथं कृष्ण कथमेकस्तु लीयते॥?

भगवानुवाच॥

शब्दस्पर्शश्च रूपश्च रसोगन्धस्तु पश्चमे।
मनोबुद्धिरहङ्कारा अष्टभिर्वै स्थितम्परः।
एतद्गुणपरा मुञ्चे न गणात्मञ्च ते परम्॥

भाण्डे बीजं यथा न्यस्तं क्षणमेकं न मुञ्चति।

गर्भते स्वर्ग मध्ये च नरकम्बाम्ब कर्मभिः।
यदा स भवते जन्मतैर्गुणै सहिता भवेत्।

अर्जुन उवाच॥

भिन्न पश्चात्मके देहे गता पञ्च सुपञ्चधा ।
प्राणैर्विमुक्त देहस्य पुण्यपापक्ष तिष्ठति ॥

भगवानुवाच ॥

पृ ।येषु ष्वेषु स्वकृतंमपृयेषु च दुष्कृतम् ॥

विसृष्ट ध्यनयोगीनां ब्रह्ममध्य सनातनः ।
पुण्यपापम * श्चैव व्य?वाम्य पञ्चदेवता ॥

जीवेन सह गच्छन्ति यावदेहे प्रतिष्ठित ॥

कर्मरष्टगणेर्वद्ध तृधाजीवास्तु भाण्डयाः ।
नीयमानस्तुतिः पासैः शुभैर्वाप्य शुभैस्तथा ॥

p. 6a)

बध्यास्तै कर्मपासैस्तु पशवोबन्धने यथा ।
मुच्यते तस्वमात्मानं मोक्षस्तथाम्विधीयते ॥

एषान्ते रु * ? जापासानैरोधानिन्द्रियाणि च ।
उदीर्णानि तु सर्वाणि प्रकीर्णानि रमन्ति तु ॥

आगन्तुकापि ये पाशा लोभक्रोधसमन्वितम् ।
कामराग विकीर्णस्तु शरीरन्तमोहन्ति वै ॥

एवं तृविधपाशैस्तु बद्धामूह्यन्ति जन्तव ।
भ्रमंत्यनेक जन्मानि शुभा नित्य शुभानि तु ॥

आत्मानं यस्तु पश्ये तु योगी तु परमम्पदम् ।
विघट्टयत्येक पाशां घनाग्नीव प्रभञ्जनम् ॥

अर्जुन उवाच ॥

कथं सञ्चरते ह्याषा ग * त *? यथेन तु ।
उत्पथेकानि स्थानानि ते स्थानेकात्र तिष्ठति ॥

प्राणिनाशुश्वसंकृत्वानिश्वशञ्च मुहुर्मुहुः ।
निर्गतस्तु स्वदेहास्तु पुन प्रविसते तु किं ? ॥

क्व स्थानं व्रजते तत्र किमथ?श्च निवर्तते ।
किन्ता वदात्मनाथायपराथाय मथापि वा ॥

एकाकी सञ्चरते किन्तु अथवा * * * ?वापि वा ।
एतन्मे संशयं कृष्णच्छेतु मर्हस्यशेषतः ॥

भगवानुवाच ॥

जाग्रस्वप्नं सुसुप्ते चैव तुर्य चैव तथा परम् ।
तुर्यावत्किम्वा? स्वतश्च षट्स्थानानि परस्य तु ॥

जाग्रे तु हृदयस्थानं कण्ठे स्वप्नसमादिशेत् ।
सुषुप्तं नेत्रयाश्चैव तूर्यन्तु मूर्द्धनि स्थितम् ॥

न * * *? तूर्यवस्था तु नासाग्रैतीतमेव च ।
एवं सञ्चरते ह्यात्मा योगिनान्तु सदा स्थितम् ॥

जाग्रे तु ब्रह्मणश्चैव स्वप्ने विष्णु सदा स्थितः ।

स्थित रुद्र सुषुप्तेषु ईश्वरः तूर्यमास्थितं ॥

सदासिवस्तु तूर्यान्ते तस्यातीते परः शिवः ।
आत्मना निर्गम हूत्वाने नैव विशने पुनः ॥

सहपूर्याष्टकै गच्छै सकलस्तु कलैस्सह ।
त्यक्त्वा गमविसे ह्यात्मामम‌ृतस्या प्रकारणा ॥

तस्यागम पक्षन्तु आगच्छ ह्यात्मन प्रति ।
p. 7a) सर्वैः स * * *? भूयाप्राणाना कारणात् ॥?

यातं जननि यागा तु स मुक्तन्सर्व वन्धनः ।?
अज्ञात्वा * *? गर्भ? संसारा पच्यते बहुम् ॥

यावदेतनमुञ्चेत शब्दादिगुणमस्तकम् ।
भूयोपि बध्यते तेभासंसारा पच्यते बहूम् ॥

शब्दस्पर्श स्व * *? सूलमं? गच्छति ब्रह्मणे ।
रूपरसोमनश्चैव विष्णुनीलयतां व्रजेत् ॥

अहङ्कारश्च शन्धश्च? लयं गच्छन्ति सङ्करः।
याशौ परापरालीना अमृतत्र?श्च गच्छति॥

पूरक कुम्भकलीनं? कुम्भा?कारेचतं स्पृसेत्।?
रेचकापि परसान्तेय उत्पदमनामयम्॥

यच्छते? * *?जुन? क्षिप्तं क्षीरक्षीर घृते घृतम्।
अविषेयम्भवेतदुत्परमात्मानमात्मनि॥

त्यक्तवाष्ट? गणवर्गन्तु बन्धा मुक्ता व्रजेत्परम्।
मुद्य?पुन * * * * सान्तथा विधीयते॥?

* *?सद्भावज्ज्ञेयन्तु विजित्यनुक्त क्षणेन तु।?

ज्ञानमात्रेण मुच्यन्ते किं पुनः यागधारणा।
परतरं नास्ति वेदैर्यन्तु तदा क्ष?र॥

तत्क्षणं निस्यते सर्वब्रह्महत्यादि वातकैः।
सन्धासन्धक्षणा तु स्वपुण्यपाप विवर्जित?॥

* * ?र्विमुक्तस्तु तत्वभेद कृतेन तु रिति॥ ०॥

अर्जुन उवाच ॥

यत्वया कथितं ब्रह्मज्ञानम्परमदुर्लभम् ।
अरुपञ्चमविज्ञान * * * * * * * ? ॥

ध्यानयोग सदाश्चैव अहन्यहनि योगिनः ।
इहत्र प्रत्ययङ्किञ्चि ब्रूहिमे मधुसदनः ॥

भगवानुवाच ॥

* * * * * * * * * *ग्नि प्रज्वलनन्तथा ।?
तुला पुरुष विज्ञान सट्चाक्रामणमेव च ॥?

गिरिक्षेपिच्छितेभ्यासौ ज्योतिदर्शन तथा ।
* * *? तानि योगानां ब्रह्मविद्याभ्यसे कृते ।
अष्टप्रत्ययोन्यतरं सिद्धिस्तु परदर्शने ॥

सा सिद्धि परमाज्ञेया प्रत्यक्षदर्शनेन तु ।
अन्यपि विना ज्ञानन्तु प्रज्वलयन्ति योगिनः ॥

महाख्याति सत्वस्य अग्निप्रज्वलनम्महत्।
वीजानां संहर तत्वेन पुराहन्ति धापिताम्॥

संहरन्तु तथा चैव पुनर्लघुतरम्भवेत्।

p. 8)

बुद्धिर्मनस्त्वहङ्कार शब्दस्य शङ्खरूपध्याः।
रसगन्धामेव वाष्टो प्राणा * * * * * * ॥?

* * * * * * * * * * * * *? कृतो यथा।
प्रविशेत परदेहलया मृतकस्य तु॥

चालनाज्ञापनङ्कृत्वा पुनः शीघ्रं निवर्त्तया।
स्थिर बुद्धिं च सन्मूढः ब्रह्मविद्ब्रह्मणे॥

स्वेतः पिङ्गलायान्तु वै नाभ्या स्वपुरं प्रविसे पुनः।
परमानेन कर्तव्य प्रवेसो निर्गमस्तथा॥

कदाविलम्ब सा * *?मुहु परपुरं गतः।

त ज्ञांति सीलो भवंति तस्माच्छीघ्रं निवर्तयेत् ॥

प्रयाग घटिका कृत्वा जिह्वातल न च्छादयेत् ।
सद्ये * *? भवति स्व * *? यायेन संशयः ॥

स्वकाम भवते मृत्यु न कालवसो भवेत् ।
अनागतमतीते वा स्वच्छन्दो योगिनो भवेत् ॥

* * * * * * * * * *?पद्मासनं शुभं ।
परशान्त लयं गच्छविमुक्तया सवन्धनैः ॥

समाप्ते योगिनां योगे यम्यस्ये स्पृशतेपि वा ।
यस्य सम्भ * * * * * * * * * * * *? ॥

तथा विष्णु सम * तिनासाग्रे निसि दर्शयम् ।
प्रत्तया जायते ह्येवा अग्नेयाधारणा न्यसेत् ॥

विष्णु ज्ञान * * * * ? नासाग्रे योगिनस्य तु ।
महापातक युक्तोपि मुच्यते नात्र संशयः ॥

रेचक पूरकयो मध्ये कुम्भके नैव योगिनाम्।

संहर्षणे क्षिप्ता? वह्नि प्रकाशोच्यन्तराद्वहि ॥

एवं प्रवर्तना मध्य स्त्रद्धया परमाप्नुयः।

सम्वत्सरेण सिद्धतव्याग्नेयीन्धारणा? भ्यसेत्? ॥

* * ?न्नोहहं यस्या सिद्धयते नात्र संशयः।

* प्रसन्ना नमो याव? इहत्र प्रत्ययेन तु ॥

येषा पर्वत धातूनां यवदह्यन्ति धान्यता।

कृत यकृता? दाषादह्यंत प्राण निग्रहा ॥

कृत्वायाप सहस्राणि पश्चा ध्यानपरा भवेत्॥

ध्यानं सोधयते सर्व तु * * * * * * * ।?

* * * * * * * * * * * * * * * * ॥?

* * * * * * * * * * * * * * * * ।?

p. 18) दुष्कृतान्येकसः कृत्वा महापातक जात्येपि ॥

अग्नेयं धारणं ध्यात्वा भग्नी भवतिकास्त?वत् ।
ब्रह्महत्या सहस्त्राणि असम्यायमनानि * * * *? ॥

* नेन योगेन सर्वन्नस्यन्ति तत्क्षणात् ।
यथा महासमृद्धाग्नि वारिधारैर्न्नवार्य्यति ॥

योगिना तत्वविद्यस्तु वर्णावर्णैर्न्ननाश्यते? ।
भक्षयित्वा विषं यद्वदमन्त्रीणो व जीवति ॥

तथा ब्रह्मविदो नित्यं कुकर्म नरकं वसेत् ॥
अगाधे संलले? यद्वनिमज्येद * * * * * * * * ॥?

अभक्षभक्षी तथासौ चीनिमज्ये तत्वभिर्भिन्ना ।
काशकारकृमि यद्वदथवत्वाक्षयं व्रजेत् ॥

कर्माकर्मैरनेकस्तुरंतवीवध्वावतिष्ठति ।
तावत् सत्पञ्चासौ चञ्च जप यजुहुतन्तथा ॥

दानाध्ययन तीथञ्च यावद्ब्रह्मन्न विन्दति ।

परम्ब्रह्म विदुर्यस्तु सर्वव्यापि भवेतु सः ॥

इतरेसुखदुःखानि भ्रमन्ते नेकजन्मनि ।
ज्ञात्वात्वेकाक्षरो ब्रह्ममात्रारेख विवर्जितम् ॥

आचर सर्ववर्णेषु न तु भक्षम्विचारयेत् ।
न मालिप्यति पापेन पुण्या नैव न लिप्यते ॥

स याति देहपतनं यत्तत्पदमनामयम् ।
तावद्वर्ण विशेषस्तु यावद्ब्रह्म न विन्दति ॥

विदित्वा तु परम्ब्रह्म सत्ववर्णद्विजातयः ।
यं ज्ञानेन हता स्मरन्ति गुरुभ्रातृ सबान्धवात् ॥

चिन्तघ्नीस्तु? वनवासा? वास? * * * * * * ? ।

ब्रह्मविद्या प्रभावेन याग युक्त बलेन च ।
पुण्यपापैर्विमुक्तैस्तु सयाति परमागति ॥

अव्यस्व?तव स्नेहेन कथितन्गुह्यमुत्तमम् ।
आत्मा वै स्वयमेव तु ज्ञानेनैव तु लभ्यते ॥

यं ज्ञाने तु जपं कुर्यान चैवा ज्ञाने नैव लभ्यते ॥

अयुतन्वो? सहस्त्रे च यच्छतानि तथैव च ।
*? होरात्रेण योगीनां जपसंख्या करोति यः ॥

मनोरन्यत्र निक्षिप्तं चक्षुरन्यत्र भारत ।
तथापि योगिनां योगो * * * * * *? प्रवर्तते? ।

p. 19) एत तत्वस् *? नना? जाप्य अनन्य मनसार्जुनः ।
ज्ञानिनामेष जाप्ययाङ्गजालविमोक्षणा ॥?

स्थिर बुद्धिरसन्मूढा ब्रह्म * * * * * *? ।
स्नातः सुचि जपेयस्तु व्रतनियम परायणा ॥

तत्सर्वं समभागन्तु ज्ञानेन तु कृतं भवम् ।
सृणुयाव समासेन षन्तिधं? यागलक्षणं ॥

ये इति बौद्धाः। इत्थमिति स्पन्दान्तरोदय एव विकल्पान्तराणामुदयो नत्वेकस्मिन्नेव स्पन्दे इत्यर्थः। एक इति, येन स्मृत्यपलापाद्यनेकाश्रयनिबन्धनो बाह्यो व्यवहारः सिद्ध्येत्। एतदेव दर्शयति   शब्दारूषणया ज्ञानं विकल्पः किल कथ्यते॥ ३३॥

सा च स्यात्क्रमिकैवेत्थं किं कथं को विकल्पयेत्।

घट इत्यपि नेयान्स्याद्विकल्पः का कथा स्थितौ॥ ७-३४॥

न विकल्पश्च कोऽप्यस्ति यो मात्रामात्रनिष्ठितः।

कथ्यते इति भवद्भिः। यदुक्तं  अभिलापसंसर्गयोग्यप्रतिभासा प्रतीतिः कल्पना इति। सेति  शब्दारूषणा, क्रमिकेति  वाचः क्रमभावित्वात्, इत्थं क्रमिकत्वाद्विकल्पस्योदितानां तत्क्षणानां प्रध्वस्तत्वान्नवानां चानुदयात् को न कश्चित्कल्पितोऽपि विकल्पात्मा प्रमाता किमुत्पन्न प्रध्वस्तप्रकल्प्यं पूर्वापरानुसंधानादेरभावाच्च कथं विकल्पयेत् विकल्पस्य स्वरूपलाभ एव न भवेदित्यर्थः। अत एव घकारोच्चारकाले टकारस्याभावात्तदुच्चारकाले च तस्य प्रध्वस्तत्वात् यत्र घट

इत्येतावन्मात्रोऽपि विकल्पो न सिध्येत् तत्र व्यवहारादिचिन्ता दूर एवास्तां, तदवस्थानमात्रेऽपि का वार्तेत्यर्थः। नहि तन्मते कोऽप्येवंविधो विकल्पोऽस्ति यस्यांशमात्रेऽपि परिनिष्ठितत्वं, तथात्वे ह्येषां क्षणभङ्गव्रतविलोपो भवेदिति भावः॥ ३३-३४॥

नन्वेकमेव मालासूत्रवत्सर्वत्रानुयायि ज्ञानं किंचिन्नास्ति, इत्यस्माकं मतं नतु क्षणभङ्गुराण्यनेकानि ज्ञानानि न सन्तीति तत्तान्येव समुदितानि बाह्यव्यवहारनैपुण्यभाञ्जि भविष्यन्ति, इति को दोषः ? इत्याशङ्क्याह

न च ज्ञानसमूहोऽस्ति तेषामयुगपत्स्थितेः॥ ७-३५॥

अयुगपत्स्थितेरिति, उत्पादानन्तरं तन्निरोधस्याभिधानात्॥ ३५॥

तस्माद्वैकल्पिकः सकल एवायं व्यवहारस्तन्मते न सिद्धयेत्, इत्याह

तेनास्तङ्गत एवैष व्यवहारो विकल्पजः।

तेनास्मत्पक्ष एव ज्यायानित्याह

तस्मात्स्पन्दान्तरं यावन्नोदियात्तावदेककम्॥ ७-३६ ॥

विज्ञानं तद्विकल्पात्मधर्मकोटीरपि स्पृशेत्।

तद्यावद्विकल्पान्तरनिष्ठं स्पन्दान्तरं नोदेति तावद्
गोत्वशुक्लत्वचलत्वाद्यात्मकं धर्मौघमपि विकल्पयेत्
एकमेवैतद्वैकल्पिकं ज्ञानं स्यात् येनैकानुसंध्यनुप्राणितः समग्र
एवायं व्यवहारः सिध्येत्॥ ३६ ॥

न चैतदपूर्वतया स्वोपज्ञमेवोक्तमित्याह

एकाशीतिपदोदारशक्त्यामर्शात्मकस्ततः॥ ७-३७ ॥

विकल्पः शिवतादायी पूर्वमेव निरूपितः।

तत
उक्तानेकधर्मपरामर्शकत्वेऽप्येकत्वलक्षणाद्धेतोर्व्योमव्यापिरूपः
शुद्धविद्यात्मा विकल्पस्तत्तदनेकहृदादिशक्त्यामर्शकत्वेऽप्येकत्वात्
पार्यन्तिकफलरूपां शिवतामेव ददातीति पूर्वमेवास्माभिरुक्तम्॥ ३७
॥

नन्वेवमेकस्मिन्नेव प्राणचारे एकपिण्डात्मकाच्चक्रादारभ्य सचतुःशतद्व्यशीतिसहस्राधिकत्रयोदशलक्षात्मकचक्राद्यन्तं यावच्चक्राणां स्वारसिक एवोदयो वर्तते, इति योगिनां प्रतिनियतचक्रविषयः कथमवगमो भवेत्? इत्याशङ्कां दृष्टान्तोपदर्शनेनोपशमयति यथा

कर्णौ नर्तयामीत्येवं यत्नात्तथा भवेत्॥ ७-३८ ॥

चक्रचारगताद्यत्नात्तद्वत्तच्चक्रगैव धीः।

कर्णौ नर्तयामीत्येवमिच्छापूर्वकात्प्राणीयाद्यत्नात् यद्वद्योगिनस्तथा भवेत्, गोस्फुरितादिन्यायेन कर्णद्वयमेव नृत्यत्स्यात् तद्वदेकपिण्डादिचक्रप्रधानो यः प्राणीयश्चारस्तद्गतादपि यत्नात्तच्चक्रगैव धीः प्रारिप्सितोदयप्रतिनियतचक्रनिष्ठ एवावबोधो भवेदित्यर्थः। अयमत्र भावः इह खलु योगिना यत्र क्वापि कर्मणि यस्य कस्यचिन्मन्त्रस्यावश्यं प्राणसाम्येनोच्चारः कार्यः अन्यथा हि न कार्यसिद्धिः स्यात्। तदुक्तम्

जपेत्तु प्राणसाम्येन ततः सिद्धिर्भवेद् ध्रुवम्।

नान्यथा सिद्धिमाप्नोति हास्यमाप्नोति सुन्दरि ॥

इति । ततश्चैकपिण्डात्मनोऽन्यस्य वा चक्रस्योदये तुल्य एव विधिः प्राणसाम्यस्य सर्वत्राविशेषात् ॥ ३८ ॥

तदाह

जपहोमार्चनादीनां प्राणसाम्यमतो विधिः ॥ ७-३९ ॥

होमेति, तत्रापि मन्त्रोच्चारस्य भावात् । अत इत्युक्ताच्चक्रोदयाद्धेतेः, संख्यायास्तु स्वारसिकप्राणचाराभिप्रायेण वर्णभूयस्त्वाभूयस्त्वनिबन्धनं तथात्वमिति न कश्चिद्विरोधः ॥ ३९ ॥

किमत्र प्रमाणम् ? इत्याशङ्क्याह

सिद्धामते कुण्डलिनीशक्तिः प्राणसमोन्मना ।

उक्तं च योगिनीकौले तदेतत्परमेशिना ॥ ७-४० ॥

तदेतत्परमेशिना श्रीसिद्धयोगीश्वरीमते श्रीयोगिनीकौले चोक्तमिति संबन्धः। तत्तदेकपिण्डाद्यात्मकमन्त्ररूपतया बहिरुल्लसन्ती वर्णकुण्डलिन्याख्या पारमेश्वरी शक्तिर्यदि नाम प्राणसमा प्राणसाम्येनोदयमियात् तदुन्मना शिवैकात्म्येन प्रस्फुरेदित्यर्थः। यदुक्तं तत्र

कुर्यात्प्राणसमं जप्यं होमं प्राणसमं कुरु।

एवं प्राणसमा शक्तिः कुण्डलाख्या मनोन्मनी॥

इति॥ ४०॥

श्रीयोगिनीकौलग्रन्थं पठति

पदमन्त्राक्षरे चक्रे विभागं शक्तितत्त्वगम्।

पदेषु कृत्वा मन्त्रज्ञो जपादौ फलभाग्भवेत्॥ ७-४१॥

पदप्रधानानि मन्त्राक्षराणि यत्रैवंविधे चक्रे पदेषु

शक्तितत्त्वगं विभागं कृत्वा एकैकं पदं प्रतिप्राणचारं प्रविभागेनोदयं कारयित्वा जपहोमादौ मन्त्रोदयं जानानो योगी फलभाग्भवेत्, यथोचितं फलमाप्नुयादित्यर्थः ॥ ४१ ॥

ननु कोऽसौ विभागः किं वा फलम् ? इत्याशङ्क्याह

द्वित्रिसप्ताष्टसंख्यातं लोपयेच्छतिकोदयम् ।

इह चक्राणां प्रागुक्तवदेकद्वित्रिसप्ताष्टादिपदपिण्डसंख्यातम्, अर्थात् शतिकोदयमनेकपदपिण्डात्मकचक्रपर्यन्तं विभागमाश्रित्य, अर्थात् प्राणचारं लोपयेत् प्राणग्रासं कुर्यादित्यर्थः । एतदेव हि मुख्यं फलं योगिनां यदकालकलितायां परस्यां संविद्यनुप्रवेश इति । एवं चात्रैवावधातव्यमित्याह

इति शक्तिस्थिता मन्त्रा विद्या वा चक्रनायकाः ॥ ७-४२ ॥

पदपिण्डस्वरूपेण ज्ञात्वा योज्याः सदा प्रिये ।

नित्योदये महातत्त्वे उदयस्थे सदाशिवे ॥ ७-४३ ॥

अयुक्ताः शक्तिमार्गे तु न जप्ताश्चोदयेन ये ।

ते न सिद्ध्यन्ति यत्नेन जप्ताः कोटिशतैरपि ॥ ७-४४ ॥

इति प्रागुक्तं सर्वं ज्ञात्वा चक्रप्रधाना मन्त्रा विद्या वा पदपिण्डस्वरूपेण समनन्तरोक्तपदपिण्डादिगत्या शक्तिस्थिताः प्राणसाम्येनोदिताः सर्वकालं जपादौ योज्या येन यथोचिता योगिनां सिद्धिः स्यात् । अन्यथा हि नित्योदयेऽत एव परमुपेयत्वान्महातत्त्वे, सृष्टिप्राधान्यादुदयस्थेऽत एव तत्सिद्धिप्रदायित्वात् सदैव श्रेयोरूपे शक्तिरूपे मध्यधाम्न्ययोजिताः, तथा प्राणस्योदयेन निर्गमने अर्थात्प्रवेशेनापि ये मन्त्रादयो न जप्तास्ते कोटिशतैर्यत्नेनापि जप्ता न सिद्ध्यन्ति, तां पूर्णां दातुं न शक्ता इत्यर्थः । यदुक्तम्

ङ विन्दति यदा मन्त्री सृष्टिसंहारवर्त्मनी ।

उदयास्तमरूपेण मन्त्रा अल्पफलप्रदाः ॥

भोगं मोक्षं न यच्छन्ति जप्ता ध्यातास्तु पूजिताः ।

रिषत्फलं प्रयच्छन्ति शिवाज्ञासंप्रचोदिताः ॥

इति । मन्त्रा विद्या वेत्यनेनानुजोद्देशोद्दिष्टो मन्त्रविद्याभेदोऽप्यासूत्रितः ॥ ४४ ॥

ननु सर्वेषां मन्त्रादीनामविशेषेणैव किमियं व्यवस्था किमन्यथा वा ? इत्याशङ्क्याह

मालामन्त्रेषु सर्वेषु मानसो जप उच्यते ।

उपांशुर्वा शक्त्युदयं तेषां न परिकल्पयेत् ॥ ७-४५ ॥

सर्वेष्विति विद्यास्वपि, मानस इति । तदुक्तम्

आत्मा न शृणुते यं स मानसो जप उच्यते ।

आत्मना शृणुते यस्तु तमुपांशं विजानते ॥

परे शृण्वन्ति यं देवि सशब्दः स उदाहृतः । (स्वटं । २ ।१४७)

इति । वेति विकल्पे । सशब्दस्यार्थसिद्धो निषेधः ॥

ननु समनन्तरमेवोक्तं यच्छक्तिवर्त्मन्ययोजिता मन्त्रा न सिद्ध्यन्तीति

तत्कथमिदमुच्यते  शक्त्युदयं तेषां न परिकल्पयेत ?

इत्याशङ्क्याह

पदमन्त्रेषु सर्वेषु यावत्तत्पदशक्तिगम्।

शक्यते सततं युक्तैस्तावज्जप्यं तु साधकैः॥ ७-४६॥

तावती तेषु वै संख्या पदेषु पदसंज्ञिता।

तावन्तमुदयं कृत्वा त्रिपदोक्त्यादितः क्रमात्॥ ७-४७॥

द्वादशाख्ये द्वादशिते चक्रे सार्धं शतं भवेत्।

उदयस्तद्धि सचतुश्चत्वारिंशच्छतं भवेत्॥ ७-४८॥

षोडशाख्ये द्वादशिते द्वानवत्यधिके शते।

चारार्धेन समं प्रोक्तं शतं द्वादशकाधिकम्॥ ७-४९॥

षोडशाख्ये षोडशिते भवेच्चतुरशीतिगः।

उदयो द्विशतं तद्धि षट्पञ्चाशत्समुत्तरम्॥ ७-५० ॥

चाराष्टभागांस्त्रीनत्र कथयन्त्यधिकान्बुधाः।

अष्टाष्टके द्वादशिते पादार्धं विंशतिं वसून्॥ ७-५१ ॥

उदयः सप्तशतिका साष्टा षष्टिर्यतो हि सः।

पदप्रधानेषु सर्वेषु विद्यादिरूपेषु मन्त्रेषु पदानां प्राणशक्तेश्च साम्यं गतं तज्जपादि अभियुक्तैः साधकैर्यावत्कर्तुं शक्यते तावदेव सर्वकालं जपनीयं, येन तेषु पदेषु त्रिपदोत्त्यादिकं क्रममवलम्ब्य त्रिषु बहुत्वं परिसमाप्यते इत्यादिनीत्या क्रमेणैकैकं पदं बहुपदतया विभज्य समस्तस्य परस्य प्राणचारसाम्येन सकृदुच्चारयितुमशक्यत्वात् तावन्तं पदांशपरीमाणं प्राणशक्तावुदयं कृत्वा तावती पदांशपरिमाणैव पदसंज्ञिता जपस्य संख्या स्यादिति। अयमत्र भावः न केवलमनेकपदस्य मन्त्रस्य प्राणशक्तौ

सकृदुच्चारियतुमशक्यत्वं यावद् बह्वर्णतया तत्पदस्यापीति तस्याप्यंशांशिकया विभागः कार्यो येन शनैः शनैरेकमेकं तदंशे प्राणसाम्येनोच्चारयतां योगिनां लक्षजपादि सिद्ध्येदिति ।
तदुक्तं तत्र

पदमन्त्राक्षरे चक्रे विभागं शक्तितत्त्वगम् ।

पदेषु कृत्वा मन्त्रज्ञो जपं नित्यं तु कारयेत् ॥

द्वित्रिसप्ताष्टसंख्यातं लोपयेच्छतिकोदयम् ।

इति शक्तिस्थिता मन्त्रा विद्या वा चक्रनायकाः ॥

पदपिण्डस्वरूपेण ज्ञात्वा योज्याः सदा प्रिये ।

नित्योदये महातत्त्वे उदयस्थे सदाशिवे ॥

अयुक्तः शक्तिमार्गे तु अजप्ताश्चोदयेन तु ।

नैव सिद्ध्यन्ति यत्नेन ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ । ॥

इति। तथा

मालामन्त्रेषु सर्वेषु मानसो जप उच्यते।

शक्त्योदयं तु वै तेषु न कदाचित्प्रकल्पयेत्॥

यतस्तेषां वरारोहे मानसस्तु जपः स्मृतः।

क्वचिच्चैव उपांशुः स्याज्जपः शास्त्रेषु कीर्तितः॥

महामन्त्रेषु सर्वेषु यावत्तत्पदशक्तिगम्।

शक्यते सततं युक्तैः प्रजप्तुं साधकोत्तमैः॥

तावती तेषु वै संख्या पदेषु पदसंज्ञिता।

तावन्तमुदयं कृत्वा त्रिपदोत्त्यादितः क्रमात्॥

इति। अतश्च सामस्त्येन मालामन्त्रादीनां प्राणशक्तावुदयं कर्तुं

न शक्यते  इत्युक्तमेषां शक्त्युदयं न परिकल्पयेदिति। न तु सर्वंसर्विकया, तथात्वे हि जपस्याल्पफलप्रदत्वादधमत्वं स्यात्। यदुक्तम्

अधमस्तु जपः प्रोक्तः प्राणसंख्याविवर्जितः।

इति। पदविभागमेव दर्शयति द्वादशेत्यादिना। द्वादशाख्ये द्वादशपदात्मके मालामन्त्राद्यात्मनि चक्रे द्वादशिते सञ्जातद्वादशसंख्याके प्रत्येकं पदद्वादशकस्य द्वादशधा विभागे कृते सति द्वादशानां चतुश्चत्वारिंशदधिकं शतं भवेत् येन तस्यापि प्रत्येकं सार्धं शतं प्राणचाराणामुदयः,  इति सषट्शता सहस्रैकविंशतिः प्राणचारणां स्यात्। तथा षोडशपदात्मके चक्रे द्वादशधा कृते तदंशानां द्वानवत्यधिकं शतं षण्णवतेरवशिष्टत्वादयं चोदयः। तथा षोडशाख्ये एव चक्रे षोडशधा कृते षोडशांशानां षट्पञ्चाशदधिकं शतद्वयं भवेदिति भावः। तस्य प्रत्येकं प्राणचाराणां चतुरशीतिः षण्णवतेरेवावशिष्टत्वात् चाराष्टभागैरयमुदयो भवेत्। तथाष्टाष्टके चतुष्षष्टिपदात्मके चक्रे द्वादशधा कृते प्रतिपदं द्वादशकं प्राणचाराणां विंशतिवसूनष्टाविंशतिं तथा षण्णवतेरर्धावशिष्टत्वात् पादार्धमष्टभागमुदयो

यतश्चतुःषष्ट्यात्मनश्चक्रस्य द्वादशभिर्गुणनात्
अष्टषष्ट्यधिकशतसप्तकलक्षणा सा संख्या भवेदित्येवमत्र
सर्वत्र प्राणचाराणां सषट्शता सहस्रैकविंशतिरेव भवेत् ॥

एतदेवोपसंहरति

एष चक्रोदयः प्रोक्तः साधकानां हितावहः ॥ ७-५२ ॥

ननु प्राणचारोदयानुसारं चक्राणामुदय इति स एव कीदृक् येन सोऽपि
स्यात् ? इत्याशङ्क्याह

निरुद्ध्य मानसीर्वृत्तीश्चक्रे विश्रान्तिमागतः ।

व्युत्थाय यावद्विश्राम्येत्तावच्चारोदयो ह्ययम् ॥ ७-५३ ॥

इह खलु योगी सङ्कल्पात्मिका मानसीर्वृत्तीः ङिरुद्ध्य
अन्तर्मुखीकृत्य चक्रस्य एकपिण्डाद्यात्मनो मन्त्रस्य विश्रान्तिं
मध्यधामैकात्म्यमागतः सन् यावदुत्थाय हृद आरम्भ्य
द्वादशान्तपर्यन्तं निर्गम्य पुनरन्तः प्रविश्य हृद्येव विश्राम्येत्
तावदयं प्राणस्योदयो भवेदित्यर्थः ॥ ५३ ॥

अत्रैव त्रैरूप्यं निरूपयन् सिद्ध्यादिविभागमप्याह

पूर्णे समुदये त्वत्र प्रवेशैकात्मनिर्गमाः ।

त्रय इत्यत एवोक्तः सिद्धौ मध्योदयो वरः ॥ ७-५४ ॥

अत्र पुनः सम्यक् मध्यधामैकात्म्येन प्रवेशपर्यन्तं प्राणस्योदये
निर्गमे पूर्णे यथोक्तगत्या परिपूर्तिं प्राप्ते
प्रवेशैकात्म्यनिर्गमलक्षणास्त्रयः प्रकाराः सन्तीत्यतः
प्रकारत्रयमध्यात्सिद्धिनिमित्तमैकात्म्यलक्षणो मध्योदय एव
प्रवेशादपि वरः श्रेष्ठ उक्त इत्यर्थः ॥ ५४ ॥

नन्वेवंवचने किं प्रमाणम् ? इत्याशङ्क्याह

आद्यन्तोदयनिर्मुक्ता मध्यमोदयसंयुताः ।

मन्त्रविद्याचक्रगणाः सिद्धिभाजो भवन्ति हि ॥ ७-५५ ॥

मन्त्रचक्रोदयज्ञस्तु विद्याचक्रोदयार्थवित् ।

क्षिप्रं सिद्ध्येदिति प्रोक्तं श्रीमद्विंशतिके त्रिके ॥ ७-५६ ॥

आद्यन्तोदयौ निर्गमप्रवेशौ, मध्यमोदयो मध्यधामैकात्म्यम्। हिर्हेतौ। तेनैवं मन्त्रविद्याचक्रोदयं जानानो योगी निर्विलम्बमेव सिद्धिभाग्भवेदित्यर्थः ॥ ५६ ॥

ननु जितप्राणस्यारूढस्य योगिनः किं नामासाध्यं यन्न प्राणगं कुर्यात्, प्राणं जयतः पुनरारुरुक्षोः कथमेतत्सिध्येत् ? इत्याशङ्क्याह

द्विस्त्रिश्चतुर्वा मात्राभिर्विद्यां वा चक्रमेव वा।

तत्त्वोदययुतं नित्यं पृथग्भूतं जपेत्सदा ॥ ७-५७ ॥

पिण्डाक्षरपदैर्मन्त्रमेकैकं शक्तितत्त्वगम्।

बह्वक्षरस्तु यो मन्त्रो विद्या वा चक्रमेव वा ॥ ७-५८ ॥

शक्तिस्थं नैव तं तत्र विभागस्त्वोंनमोन्तगः।

आरुरुक्षुः पुनर्योगी नित्यं

द्विःत्रिश्चतुर्वाभ्यासतारतम्यानुसारमेकद्व्यादिक्रमेण

त्रिर्जानुवेष्टनान्मात्रा त्रिगुणच्छोटिकात्रयात्। (मा। वि। १७।१२)

इति लक्षिताभिर्मात्राभिरनेकाक्षरां विद्यामनेकपिण्डं वा
चक्रमनेकपदं वा मन्त्रमेकैकं पिण्डाक्षरपदैः
पृथग्भूतमेकमेव पिण्डमक्षरं पदं वा पूर्वोक्तयुक्त्या
प्राणशक्तितत्त्वगतं कृत्वा तत्त्वोदययुतं मध्यधामैकात्म्येन सदा
जपेत् लक्षजपादि कुर्यादित्यर्थः। अत एव पदादिविभागशून्यो
बह्वक्षर एव यः पुनर्मन्त्रादिस्तमारुरुक्षुर्योगी तावतः
प्राणनिरोधस्याशक्यत्वात् शक्तिस्थं नैव कुर्यात् शक्त्युदयमेषां न
परिकल्पयेदित्यर्थः। ननु यद्येषां बह्वक्षरतया सामस्त्येन
प्राणशक्तावुदयं कर्तुं न शक्यते तत्समनन्तरोक्तक्रमेण
व्यस्ततयैतदस्तु इत्याशङ्क्योक्तं तत्रेत्यादि। आंनमोन्तग इति,
नतु मन्त्रान्तरवत् पदपिण्डादिक्रमेणैषां विभागोऽस्ति
येनांशांशिकयापि शक्तावुदयः सिद्ध्येत्
अतश्चारुरुक्षुभिरेवंविधानां मन्त्राणां जप एव न कार्यः
इत्युक्तं स्यात्॥ ५९॥

आरूढस्य पुनर्योगिनो न केवलं पूर्ण एव समुदये
प्रवेशादित्रैविध्यं यावत्तदंशेष्वपीत्याह

अस्मिंस्तत्त्वोदये तस्मादहोरात्रस्त्रिशस्त्रिशः ॥ ७-५९ ॥

विभज्यते विभागश्च पुनरेव त्रिशस्त्रिशः ।

तस्मात्पूर्वोक्ताद्धेतोः, अस्मिन् प्रक्रान्ते तत्त्वोदये
कार्यकारणयोरभेदोपचारात् चक्रोदये
प्राणापानत्माहोरात्रस्त्रिशस्त्रिशो विभज्यते, केवल एव प्राणोऽपानो
वा प्रवेशैकात्म्यनिर्गमात्मना प्रकारत्रयेण विभागमापद्यते
इत्यर्थः । तेन षट्त्रिंशदात्मनोरुभयोरपि प्राणापानवाहयोः
प्रत्येकं प्रवेशादित्रैविध्यमिति प्रवेशादेः
प्रत्यङ्गुलद्वादशकमुदयः । एवमात्मा विभागोऽपि पुनस्त्रिशस्त्रिश
एव, प्रवेशाद्यपि
प्रवेशष्निर्गमैकात्म्यलक्षणप्रकारत्रयभाग्भवेदित्यर्थः, । तेन
प्रत्यङ्गुलचतुष्टयमपि प्रवेशादीनामुदयः, इति सिद्धम्
तदारूढस्य योगिनः परिमिते प्राणचारीयेऽप्यंशेऽप्येवं चक्रोदयः
सिद्ध्येयेदित्यभिप्रायः ॥

एवमेतत्प्रसङ्गादभिधाय प्रकृतमेवानुसरति

पूर्वोदये तु विश्रम्य द्वितीयेनोल्लसेद्यदा ॥ ७-६० ॥

विशेच्चार्धार्धिकायोगात्तदोक्तार्धोदयो भवेत्।

यदा पूर्णोदयात्मा तु समः कालस्त्रिके स्फुरेत्॥ ७-६१ ॥

प्रवेशविश्रान्त्युल्लासे स्यात्स्वत्र्यंशोदयस्तदा।

तस्मात् पूर्वस्मिन् प्रधाने मध्यधामात्मनि उदये विश्रम्य
तदैकात्म्येन स्थित्वा यदा द्वितीयेन निर्गमात्मना प्रकारेण उल्लसेत
प्राणक्रमेणोर्ध्वं गच्छेत्, अर्थात्तृतीयेनापि प्रवेशात्मना प्रकारेण
विशेत अपानक्रमेण हृदन्तं प्रवेशं कुर्यात् तदा प्राणापानयोः
प्रत्येकमर्धार्धिकया संबन्धात् सषट्शतसहस्रैकविंशत्यात्मन
उक्तस्य कालस्यार्धेन प्राणचाराणां साष्टशतं सहस्रदशकमुदयो
भवेत्। यदा पुनः पूर्णः सषट्छतसहस्रैकविंशतिरूपो
योऽसावुदयस्तदात्मा कालः प्रवेशविश्रान्त्युल्लासाख्ये त्रिके साम्येन
स्फुरेत् तदा प्रवेशादीनां प्रत्येकं श्वः आत्मीयो यः
सशतद्वयसहस्रसप्तकात्मा त्र्यंशः तस्योदयो भवेदित्यर्थः ॥

ननु प्राक्

अन्तः संविदि सर्वोऽयमध्वा विश्रम्य तिष्ठति। (तं। ६।२८)

इति प्रतिज्ञातं तत्कथमिह कालाध्वनः प्राण एवैवं प्रतिष्ठितत्वमुच्यते ? इत्याशङ्क्याह

इत्येष कालविभवः प्राण एव प्रतिष्ठितः॥ ७-६२॥

स स्पन्दे खे स तच्चित्यां तेनास्यां विश्वनिष्ठितिः।

प्राण इति प्राधान्यात् तेनापानादावपि। स इति प्राणः। श्पन्दे इति सामान्यात्मिकायामाद्यप्रसररूपायां प्राणनावृत्तौ। खे इति शून्यप्रमातरि। स इति मेयौत्सुक्येन बहिःसमुच्छलन्प्राणस्पन्दादिशब्दव्यपदेश्यो भवेदिति भावः। तदिति खं, चित एव स्वातन्त्र्याच्छून्यरूपत्वेन परिस्फुरणात्। तेनेत्युक्तेन पारम्पर्येण हेतुना, विश्वेति षड्विधस्याध्वनः। यद्वक्ष्यति

अध्वा समस्त एवायं चिन्मात्रे संप्रतिष्ठितः।

यत्तत्र न हि विश्रान्तं तन्नभःकुसुमायते ॥

संविद्द्वारेण तत्सृष्टे शून्ये धियि मरुत्सु च ।

नाडीचक्रानुचक्रेषु बहिर्देहेऽध्वसंस्थितिः ।(तं । ८ ।४)

इति ॥

एवं संविदधीनावेव विश्वस्य सृष्टिसंहारावित्याह

अतः संवित्प्रतिष्ठानौ यतो विश्वलयोदयौ ॥ ७-६३ ॥

शक्त्यन्तेऽध्वनि तत्स्पन्दासंख्याता वास्तवी ततः ।

अतः कालस्य पारम्पर्येण संविद्येव निष्ठितत्वात् संवित्कर्तृकावेव
यतो विश्वस्य सृष्टिसंहारौ, ततः शक्त्यन्तेऽध्वनि तेषां
प्रागुक्तानां सृष्टिसंहाराद्यात्मनां स्पन्दानां

तत्सृष्टौ सृष्टिसंहारा निःसंख्या जगतां यतः ।

अन्तुर्भूता ततः शाक्ती महासृष्टिरुदाहृता ॥

इत्याद्युक्तयुक्त्यावान्तराणां स्पन्दानामन्तर्भावात् असंख्यातापि
वास्तवी सन्मात्रैकरूपत्वात् पारमार्थिकीत्यर्थः। या हि नाम बहिः
कश्चन परिस्पन्दः स संवित्सतत्त्व एव  इत्यभिप्रायः॥

न चैतदस्मदुपज्ञमेव, यावदागमेऽपि एवमित्याह

उक्तं श्रीमालिनीतन्त्रे गात्रे यत्रैव कुत्रचित्॥ ७-६४ ॥

विकार उपजायेत तत्तत्त्वं तत्त्वमुत्तमम्।

इह खलु परसंविदावेशशालिनो योगिनो यत्रैव कुत्रचिच्चक्षुरादौ गात्रे
शर्वो ममायं विभवः इत्यादिसङ्कल्पपूर्वक उपजायमानो यो विकारः
स्पन्दस्तस्य यत्तत्त्वं सर्वभावानां स्वाविभागेनावभासनं
तदुत्तमं तत्त्वं, संविदनतिरेकात्परः परमार्थ इत्यर्थः।
तदुक्तं तत्र

यत्रैव कुत्रचिद् गात्रे विकार उपजायते।

सङ्कल्पपूर्वको देवि तत्तत्त्वं तत्त्वमुत्तमम्॥

इति । (मा ।वि । १८ ।४२) ननु भवतु नामैतत् तत्राप्यस्य प्राणस्य देहनिष्ठत्वेन कस्माद्रूपमुच्यते ? इत्याशङ्क्याह

प्राणे प्रतिष्ठितः कालस्तदाविष्टा च यत्तनुः ॥ ७-६५ ॥

देहे प्रतिष्ठितस्यास्य ततो रूपं निरूप्यते ।

तदाविष्टेति, तच्छब्देन प्राणपरामर्शः । तत इति, प्राणस्य तनावाविष्टत्वात् ॥

ननु कथं नाम देहस्य तदावेशः ? इत्याशङ्क्याह

चित्स्पन्दप्राणवृत्तीनामन्त्या या स्थूलता सुषिः ॥ ७-६६ ॥

सा नाडीरूपतामेत्य देहं संतानयेदिमम् ।

प्राङ्निरूपितस्वरूपाणां चिदादीनां कार्यजननौन्मुख्यादन्त्या, अत एव चिदादेरन्तःकरणात् सुषिशब्दव्यपदेश्या या स्थूलता बहीरूपतया श्यानीभावः सा

पादाङ्गुष्ठाग्रतो व्यक्ता नाभितो हृदयं गता ।

सुषुम्ना नाम सा ज्ञेया ब्रह्मरन्ध्राब्जनिर्गता ।

प्राणिनां प्राणसञ्चारे निर्मिता परमेष्ठिना ॥

इत्याद्युक्त्या प्रथमं मध्यस्थूणान्यायेन मध्यनाडीरूपतामाश्रित्य वक्ष्यमाणप्रमाणमिमं देहं संतानयेत् सर्वतो भेदोपभेदरूपतया नाड्यन्तरोपजननात् जालवत् संतानवन्तं कुर्यादित्यर्थः ॥

अतश्चागमोऽप्येवमित्याह

श्रीस्वच्छन्देऽत एवोक्तं यथा पर्णं स्वतन्तुभिः ॥ ७-६७ ॥

व्याप्तं तद्वत्तनुर्द्वारद्वारिभावेन नाडिभिः ।

यथा पलाशपत्रं मध्यतन्त्ववलम्बिभिरात्मीयैस्तन्त्वन्तरैः सर्वत्र व्याप्तं तथा शरीरमपि भेदोपभेदरूपत्वेन द्वारद्वारिकया मध्यनाडिसंलग्नाभिर्गुणप्रधानभावेनावस्थिताभिर्नाडीभिरिति

वाक्यार्थः। यदुक्तं तत्र

ङाभ्यधो मेढ्रकन्दे च स्थिता वै नाभिमध्यतः।

तस्माद्विनिर्गता नाड्यस्तिर्यगूर्ध्वमधः प्रिये॥

चक्रवत्संस्थितास्तत्र प्रधाना दश नाडयः।

द्वासप्ततिसहस्राणि नाड्यस्ताभ्यो विनिर्गताः॥

पुनर्विनिर्गताश्चान्याः आभ्योऽप्यन्याः पुनः पुनः।

यावत्यो रोमकोट्यस्तु तावस्यो नाडयः स्मृताः।

यथा पर्णं पलाशस्य व्याप्तं सर्वत्र तन्तुभिः। (स्वटं। ७।११)

इति। ननु मारुतापूरिताः सर्वाः इत्याद्युक्त्या सर्वा एव तावन्नाडयः प्राणवहाः, ताभिश्च निखिलमेव शरीरं व्याप्तमिति नास्त्यत्र विमतिः, तत्कथं हृदयाद् द्वादशान्तं मत्तगन्धस्थानं वा यावत्षट्त्रिंशदङ्गुल एव प्राणचार उक्तः ? इत्याशङ्क्याह -

-

पादाङ्गुष्ठादिकोर्ध्वस्थब्रह्मकुण्डलिकान्तगः ॥ ७-६८ ॥

कालः समस्तश्चतुरशीतावेवाङ्गुलेष्वितः ।

द्वादशान्तावधिं किंचित्सूक्ष्मकालस्थितिं विदुः ॥ ७-६९ ॥

षण्णवत्यामधः षड्द्विक्रमाच्चाष्टोत्तरं शतम् ।

उर्ध्वस्था ब्रह्मकुण्डलिका ब्रह्मबिलं, समस्तः प्रागुक्तः कालश्चतुरशीतावङ्गुलेष्विति सार्धत्रिहस्तात्मकत्वात् देहस्य । इत इति, गतः स्थित इत्यर्थः । षण्णवत्यामङ्गुलेष्विति पूर्वतो योज्यम् । तथात्वे च द्वादशानामङ्गुलानामाधिक्येनोपादानात् सूक्ष्मशब्दसन्निधेः पूर्वापरयोर्मानयोः स्थूलत्वं परत्वं चार्थसिद्धम् । अध इति पादाङ्गुष्ठात् । षड्द्विक्रमादिति, षण्णां द्वियोऽसौ द्वादशाङ्गुलात्मा क्रमस्तस्माद्यदूर्ध्व इवाधोऽपि द्वादशान्तः संभवेदिति भावः ॥

नन्वेवं देहस्य मानवैचित्र्ये प्राणादेरपि कश्चिदतिशयो न वा ? इत्याशङ्क्याह

अत्र मध्यमसञ्चारिप्राणोदयलयान्तरे ॥ ७-७० ॥

विश्वे सृष्टिलयास्ते तु चित्रा वाय्वन्तरक्रमात् ।

अत्र त्रिप्रकारप्रमाणावच्छिन्ने देहे प्राधान्यान्मध्यवाहिनः प्राणस्य ये उदयलया निर्गमप्रवेशास्तदन्तराले विश्वे प्रागुक्तकलना एव सर्वे सृष्टिसंहारा भवन्ति, किंत्वेषामपानवाय्वन्तरक्रमादेव प्राग्वद्वैचित्र्यं नतु देहवैचित्र्यादित्यर्थः ॥

इदानीमाह्निकार्थमेव श्लोकस्य प्रथमार्धेनोपसंहरति इत्येष सूक्ष्मपरिमर्शनशीलनीयश्चक्रोदयोऽनुभवशास्त्रदृशा मयोक्तः ॥ ७१ ॥

इति श्रामदाचार्याभिनवगुप्तपादविरचिते श्रीतन्त्रालोके चक्रोदयप्रकाशनं नाम सप्तममाह्निकम् ॥ ७ ॥

सूक्ष्मपरिमर्शनेत्यनेन अत्यन्तमस्यावधानगम्यत्वमुक्तमिति शिवम् ॥

प्रतिनियतमन्त्रसमुदयचारभिदनुभवनिभालनोद्युक्तः ।

सप्तममाह्निकमेतद्व्याकृतावाङ्जयरथाभिख्यः ॥

इति श्रीमन्महामाहेश्वराचार्यवर्यश्रीमदभिनवगुप्तविरचिते
श्रीतन्त्रालोके श्रीजयरथविरचितविवेकाभिख्यव्याख्योपेते
चक्रोदयप्रकाशनं नाम सप्तममाह्निकं समाप्तम् ॥ ७ ॥

## अष्टममाह्निकम्

विवेक

जयकीर्तिरियं जयताज्जगदम्भोजं विभक्तभुवनदलम् ।

रविरिव विकासयति यश्चिदेकनालाश्रयत्वेन ॥

इदानीं द्वितीयार्धेन देशाध्वनः स्वरूपं संगिरितुमुपक्रमते

देशाध्वनोऽप्यथ समासविकासयोगात्सङ्गीयते विधिरयं
शिवशास्त्रदृष्टः ॥ १ ॥

चतुर्थाश्रमिणां देवि मोक्षदात्वं सदा कथं ।
कुलभाव विरोधि त्वात् संशयं मनदूरय ॥

देव्युवाच ॥

मोक्षद्वारस्तु वहुधा यद्यस्ति कुलभैरव ।
केवलं कुलयोगेन प्रसीदामि न संशयः ॥

चतुर्थाश्रमिणां देव अवधूत श्रमो महान् ।
तत्राहं कुल योगेन प्रसन्नामोक्षदायिणी ॥

यदि न स्यास्तथा वत्स शृणु तत् कथयामि ते ।
ज्ञानाभावे समुत्पन्ने सम्प्राथ्र्य निजकौलिकीं ॥

तस्मान्नयामि मुक्तिः स्यात् तां संपूज्य कुलान्तरे ।
कुण्डली शक्ति विवरे तदा योग्यं समभ्यसेत् ॥

निर्द्वन्द्वो निरहंकारः शुद्धनाडी गणोव्रती ।
मृद्वासने समासीनः खगसंयमने रतः ॥

मेलुदण्ड वहिः पार्श्वे चन्द्रसूर्यात्मिके शिव ।

२३ब्)

मध्ये सुषुम्ना सन्दिष्टा तन्मध्ये चित्ररूपिणी ।
ते नैव ग्रथितं पद्मं मूलादि पद्मपंचकं ॥

कालिकाकालरूपेण डाकिन्याद्यवलम्बितं ।
मूलद्वारं समाच्छाद्य स्थिता सा नागरूपिणी ॥

वायुनाभिद्य तद्वक्रं दृढविद्रावयेत् ततः ।
तच्छ्वासो ज्वरकामस्य शिखायाति समुज्वला ॥

प्रतिचक्रं प्रबुद्धासौ जीवात्मानं परे कुले ।
नियोजयति तद्योगाद्यात्येय ममृतं चिरं ॥

व्योमप्रोद्भिद्य नासान्तं गतौ चन्द्रदिवाकरौ ।
अधोवक्रं महापद्मं क्रोडीकृत्य सुषुम्नया ॥

व्याघ्रुष्ठानासिका मध्यं गता चित्रान्तसङ्गता ।
ऊर्द्धं भित्वा तु लिङ्गम्वै इतरं पुष्करन्ततः ॥

वहिरत्न मनो कांखिनी * * मोक्षदायिनी ।
जीवना दृष्टसंरुद्धा स्थिता सा पुरसन्निधौ ॥

एतद् भेदं विजानाति भित्वा याति परं पदं ।
अदृष्ट धातु जीवासौ वहिर्याति दिने दिने ॥

दिनशाङ्गुलि मानेन तदर्द्धञ्चोपरासतः ।
द्विगुणं रतिकालस्यान्त्रिगुणं भोजनाद् वहि ॥

अर्द्ध ऊर्द्धं वहेद् देविस्त्रिदिनं यदि भैरवः ।
नूनम्वा तदधः प्राणः शरीरं परिमुञ्चति ॥

शरीरसमतां नीत्वा नूनम्वा वहुकेश्वर ।
कुम्भयित्वा अधो वायुं कुण्डलीमुखवर्न्मनि ॥

योजयित्वा ततो जीवं नीत्वानादावसानकं ।

गमागमं कारयित्वा सिवो? भवति मानवः ॥

पीयते खाद्यते यत् तत् तत्सर्वं कुण्डली मुखे ।
हुत्वा सिद्धिमवाप्नोति न स वन्धेन वध्यते ॥

भित्वाकार्या न च स्वार्थं कुण्डलीन्याः कृते पुनः ।

२४अ)

रे मातर्देहि मे भिक्षां कुण्डलीं तर्पयाम्यहं ।
अवधूताश्रमे स्थित्वा भैरवानन्द तत्परः ॥

भैरवोहं न चान्यस्मिन् न देवो मत्परः क्वचित् ।
मन्त्र तन्त्रार्जनं सर्वं मयिजातं न चान्यथा ॥

शिवोहं भैरवानन्दो मत्तोहं कुलनायकः ।
रक्तचन्दन दिग्धाङ्गो रक्तकौपीनभूषितः ॥

रक्तमाल्याम्वरधरो हेतु युक्तः सदा भवेत् ।
एवं भिक्षां प्रजन् भिक्षुर्भैरवाचार तत्परः ॥

प्। १अ)

ओं नमो गुरुपादुकेभ्यः ॥

ऐं परं प्रकाशमानंदमोवलित्रयवृंहितं ।

षट्प्रकारं महास्फारं तत्वं वंदे कुश्वरं ॥

आदौ पचाणया सामान्यार्घपात्र कृत्वा ॥

ऐं ह्रीं श्रीं कुंडमालिनी अव्वा पापू ॥

इच्छाशक्ति अव्वा पापू ॥ ज्ञानशक्ति अव्वा पापू ॥ कृयाशक्ति अव्वा पापू ॥

वर्णमालिन अव्वा पापू ॥

स्वासने त्रिकोणं संचिंत्य कोणत्रये तथा मध्ये उपरिपूज्यं ॥

ऐं या सा शक्तिर्भगाख्या त्रिपथगति युता त्र्यक्ष त्रिप्रकारा ह्रीं तस्या श्री
ओड्डियाणं परकल सहितं मध्यसंस्थं सुदीप्तं। श्रीतच्छ्री
जालंधराख्यं प्रकटित निलय दक्षिण चैव कोणे ख्फ्रें वामे
श्रीपूर्णपीठं पशुभयजन कृत्पुरित येन विश्वं॥

ह्स्वं तस्याग्रे श्रीकामरूपं मदनकलयुतं सर्वसिद्धालयं च शौं।
त्रिकोणां तस्समस्तं परमशिवकलालंकृतयोगिवृंदं॥

फ्रेत मध्ये दिव्यलिंगं परमसुखकरं विंदुरूपं स्वरूपं क्लीं
नित्यानंदस्वरूपं तदुपरि मथनं षट्प्रकारैर्विभिन्नं॥

ग्लूं विद्याभोगोपभोग्यं अनुभव विमलं तिस्रपीठललाटे ऐं एवं व्याप्तं
समस्तं स्थितिलय जननी रुद्रशक्तिस्त्रिभेदैः।

पृ। १ब्)

इं तत्रस्था देवदेवी अकुलकुलमयानंददावीस्वतंत्रा भ्रुं(?)
उह्वाज्ञा(?) वंधभूता पशुभयहरणी दिव्यसिद्धौघरूपा॥
ब्लें नित्य क्लिन्ना सुरक्ता भगमुदितपरानंदशक्तिः प्रसिद्धा क्ष्मा

कुर्वतीतानि कामान् क्षुभितवरतनुं श्रीकुब्जिकाख्यो नमामि ॥

इति शक्तिसूत्रं ॥

संतानमेरुमार्गे तु अन्वयसूत्रदेवता ।
निर्गमः पीठं ऊकारे सिद्धं द्वयं प्रकीर्तितं ॥

तूष्णीभूतो गुहावासी वृक्षश्चैव कदंवकः ।
संकेतः सिंहिकः प्रोक्तो अव्वा च गुहवासिनी ॥

गृहं चंद्रपुरं प्रोक्तं भेदं मंथान भैरवं ।
गोत्रं अमरिका देवी वाममागे प्रकल्पयेत् ॥

अन्वये प्रत्ययं सारमधिकारस्तु कोंकणे ।
जन्म ब्रह्मशिलास्थाने स्थितिः श्रीकामरूपके ॥

कीर्तिश्चिंचिणि वृक्षे तु सिद्धिश्चैव तु सागरे ।
तुष्टहे तस्य देवेश योजानाति कुलक्रम ॥

इति संतानसूत्रं ॥

पू। २अ)

* *? सतान सूत्रादौ स्मृत्वा रूजां समारभेत् ॥

ऐं मित्रनाथायविद्महे श्री श्रीकंठाय धीमहे सिद्धासिद्धि * *?

दया न ए ॥

ऐं मित्रनाथाय मूर्द्धिर्न वक्राय ऐं अंगुष्ठद्वये ब्रह्मरंध्रे च ॥

ऐं विद्महे ऊद्ध्र्ववक्राय ऐं मुखे पुनरंगुष्ठद्वये ॥

ऐं श्री श्रीकंठाय पूर्ववक्राय ऐं तर्जनिका द्वय हृदये च। ऐं

धीमहे दक्षिण वक्राय ऐं मध्य द्वये नाभौ च ॥ ऐं तन्नो उत्तर वक्राय।

अनामाद्वये ऊरूभ्यां च ॥ ऐं सिद्धिः प्रचोदयात् ऐं कनीयसा द्वये

पादयाश्च ॥ इति वक्रन्यासः ॥

मित्रनाथाय हृदयाय ऐं ॥

ऐं विद्महे शिरसे ऐं ॥

ऐं श्री श्रीकंठाय शिखायै ऐं ॥

ऐं धीमहे कवचाय ऐं ॥

ऐं तन्नो नेत्रत्रयाय ऐं ॥

ऐं सिद्धिः प्रचोद्यादस्त्राय ऐं ॥

इत्यंग न्यासः पूर्ववन्न्यस्तव्यः ॥

दिग्बंधने अस्त्रं ॥

देवी पूर्णोपूर्णदेहा रक्तवर्णा त्रिनेत्रा केकरेक्षणी । त्रिपिटनाशा एकवक्रां
द्विभुजा कपालशूलहस्ता अधो दृष्टिः हरित प्रतोपरिस्थिता ।
प्रभवे ब्रह्मभागे कंदस्थाने ध्यायेत् ॥

प्। २ब्)

ह्स्वौः श्रीपरायै ऐं ॥

अनया सप्त विप्रुषः ऊर्द्धे एका अधः। ऐं ह्रीं सः सूर्यादि ग्रहोपग्रहेभ्यः ३ कारणेभ्यः ३ लोकपालेभ्यः ३ नक्षत्रेभ्यः ३ राशिभ्यः ३ त्रयत्रिंशद्देव कोटीभ्यः ३ समस्तभूतप्रेतयक्षराक्षसपिशाच जातिभ्यः॥

पाताले चांतरिक्षे च मर्त्ये च भुवनत्रये।
खेचरी भूचरीणां च दिक्करीसां शिवं ऊमः॥

जलतर्पणं॥

न मृदा न जलं मंत्रं न तिलादिषु शोधनं।
मलप्रध्वन्सनार्थाय पुष्ट्यर्थं स्नानमाचरेत्॥

स्नात्वा राजोपचारेण अपुण्य फलवांछया।
कुलद्रव्यैश्च संमार्ज्य स्वतनुं गुप्तचर्यया॥

सुसूक्ष्मा परमाभासा ऊर्णातंतु स्वरूपिणीं।
लुलंती सा परा सूक्ष्मा अमा सप्तादशी कला॥

श्रवंती चामृतं दिव्यं न तीर्थं नियमं न च।

शिवतीर्थं महातीर्थं तजनो(?) न भविष्यति ॥

विमलं तु निभाकारा सुषुम्नांतः पराकला ।

श्रवंती श्वेतरूपेण उन्मना सागमागमा ॥

व्यापिनी च पदं प्राप्य नादां * * * *(?) यन् ।

नावमादाय तत्वस्य स्नानं मूलन मंडले ॥?

प् । ३अ)

शिवस्नानं त्रयोलीनां रौद्री ज्ञानशलाकया ॥

इति प्रातः संध्याविधिः ॥

ऐं षष्ठनाथाय विद्महे श्रीकुमाराय धीमहे । तन्नो लक्ष्मि प्रचोदयात् ऐं ॥

वक्रांगाणि च पूर्ववत् ॥

ऐं ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः अपरायै ऐं ॥

अनया सप्तविप्रुष ऊर्ध्वें ॥ एकाधः ॥

श्वेताश्वेतांवरधरा सुरूपां एकवक्त्रा त्रिनेत्रा द्विभुजा। कर्णांतायत नेत्रा चारुहासिनी। काद्य खट्वांगधरा समदृष्टिः रक्तप्रेतो परिस्थिता विष्णुभागे हृदय ध्यायेत्॥ मध्याह्न संध्या॥

ऐं ओड्डुनाथाय विद्महे श्रीदुर्वासाय धीमहे। तन्नो कौलिः प्रचोदयात् ऐं॥ वक्त्रांगाणि च पूर्ववत्॥

ऐं अघोरे घोरवदनि भीमभीषणे वमवम पिव पिव अमृती कुरु कुरु र र र र रौद्रि श्रीपरापरायै ऐं॥ अनया सप्तविप्रुष ऊद्ध्र्वे। एको अधः॥

कृष्णवर्णा सुशुष्का त्रिनेत्रा द्विभुजा कपाल डमरु हस्ता॥

पृ। ३ब)

ऊद्ध्र्वदृष्टिः॥

श्वेतप्रेतो परिस्थिता। सायं रुद्रभागे भ्रूमध्ये ध्यायेत्॥ इति सायं संध्याविधिः॥

उपयोक्त सामान्यार्घ पात्रेण द्वारपूजा कार्या ॥ ऐं ह्रीं श्रीं ख्फ्रें
ह्स्वूँ देवीपुत्र श्रीगणपतिनाथ पापू ऐं ॥ ५ देवीपुत्र श्रीवटुकनाथ पापू
ऐं ॥ ५ श्रीमार्तंड भैरवी अव्वा पापू ऐं ॥ द्वारार्द्धे ॥

५ श्रीकालसंकर्षणी देवी रागद्वयांतकि अव्वा पापू ऐं ॥ द्वारदक्षिणे ॥

५ श्रीशिवादूती देवी द्वेषद्वयांतकी अव्वा पापू ऐं? ॥ द्वारवामे ॥

५ श्रीय भट्टारिका देवी अव्वा पापू ऐं ॥ देहल्यां ॥

५ श्रीक्षेत्राधिपति उंड्डामर भैरवनाथ पापू ऐं द्वारमध्ये ॥ इति
द्वारपूजा ॥

५ ह्रीं ह्रः ह्रः अघोरास्त्राय खः द्वारांत प्रविश्यांतः पुष्पं नारा च
मुद्रया क्षिपेत्। प्रविश्य ५ श्री दिक्करी(?) चक्रपापू ऐं
दक्षदिक्षुः ॥ ५ श्री दिक्करी(?) चक्रपापू ऐं ऊर्द्धे ॥ श्रीभूचरी
चक्रपापू ऐं अर्चामंडपमध्ये भूमौ ॥ आदौ द्रनु * *? रः ॥

पृ। ४अ)

ऐं संजीवनि संजीवनि सौः। हृदयाय ऐं पुष्पसंस्कारः॥ ऐं सौं ह्रीं सौं श्रीं सौं ख्फ्रें सौं ह्स्त्रूं सौं श्रीपरमामृतायै विद्यातत्वे शिरसे ऐं चंदन कुंकुमादि संस्कारः॥ ऐं रां ह्रीं रीं श्री रं ख्व्यं रैं ह्स्त्रुं रौं रः श्रीज्योतीरूपात्मने शिखीयै ऐं दीपसंस्कारः॥ ह सहस परमानंदामृतायै कवचाय ऐं धूपसंस्कारः॥ जयजय श्रीमत्तमातंगिनी विच्चा देवी अलिवलि पिसित रक्तमुखे द्दंभ *? भं श्रीमहंतारिकायै नेत्रत्रयाय ऐं चरु नैवेद्य संस्कारः॥ ऐं ह्स्त्रूं श्रीवरुण देवी ऐं अप्संस्कारः॥ ह्स्त्रूं अनंत वलवीर्य पराक्रमाय अस्त्राय ऐं अर्घासंस्कारः॥ ऐं ह्रीं श्रीं अलिनाथ पापू ऐं॥ ऐं ह्रीं श्रीं श्रीचिंचिणीना पापू ऐं॥

आदौ अर्घपात्रः॥ अथ गुरुमंडलविधिः॥ ऐं आदौ मंडलस्य अंगुष्ठस्थापने पुष्पं। ऐं कुलनाथाय विद्महे श्रीकुलाकुलाय धीमहे तन्नो ज्ञानः प्रचोदयात्॥

पृ। ४ब्)

५ ह्सक्ष्माल्वर्यूं अकलमंडलाधिकारे श्रीगुरु विमलाज्ञा श्री उदय गुरुनाथ श्री उदयावली अव्वा पादुकां पूजयामि ह्स्त्रूं ख्फ्रें श्रीं ह्रीं ऐं॥ ५ ह्सुक्ष्मल्वर्यूं श्री अक्षय मंडलाधिकारे श्रीगुरु अनादि आज्ञा श्रीसमय

गुरुनाथ श्रीसमयावली अव्वा पापू ॥ ५ ह्सक्ष्मल्वर्यूं श्री
अनंतमंडलाधिकारे श्रीगुरु कौलिकाज्ञा श्रीसर्वज्ञगुनाथ
श्रीसर्वज्ञावली अव्वा पापू ९५ ॥ ५ ह्सक्ष्मल्वर्यूं श्री अमरमंडलाधिकारे
श्रीगुरुक्रमाज्ञा ॥ श्रीकदंव गुरुनाथ श्रीकदंवावली अव्वा पापू
ह्सक्ष्मल्वर्यूं ५ ॥ ५ ह्सक्ष्मल्वर्यूं श्री अखंडमंडलाधिकारे
श्रीगुरुकुलाज्ञा श्रीखग गुरुनाथ श्रीखगावली अव्वा पापू ह्सक्ष्मल्वर्यूं ५
॥ इति गुरुमंडल पंचकं हृदयकंठतालु भ्रूमध्य द्वादशांते
*? पूजयेत् ॥

श्री * * * *? र्यं श्रीमहाभैरवाधिपति मित्रनाथ ।
शक्ष्मल्वर्यीं श्रीषष्ठमदनसुंदरी अव्वा पापू ५ ॥ षष्ठमित्रगायत्री ॥ ५९

श्री उंदुचर्या

पृ। ५अ)

* * *? श्री सुंदरी अव्वा पापू ऐं ॥ ऐं * *
*(?) क्षाय विद्महे श्रीनंदिरुद्राय धीमहे तन्नो कालिः
प्रचोदयात् ऐं ॥ ५ ह्सक्ष्मल्वर्यं श्रीषष्ठनाथ । ऐं शक्ष्मल्वर्यीं
श्रीषष्ठसुंदरी अव्वा पापू ऐं ॥ षष्ठ गायत्री वामे ॥ ५ ह्सक्ष्मल्वर्यूं श्री

उंदुनाथ शक्ष्मल्वर्यीं श्री उंदुसुंदरी * *(?) पापू

ऐं ॥ उंदु गायत्री अग्रे पूज्या ॥ ५ श्रीशांभवाधिकारे ह्सख्फ्रें । श्री

उन्मनायी श्रीसजाज्ञा । ह्सक्ष्मल्वर्यूं श्रीवृक्षनाथ श्रीतूष्णीशनाथ

श्रीश्रीनाथ पापू ऐं ॥ ऐं वृक्षनाथाय विद्महे श्रीभैरवाय धीमहे

तन्नो कुब्जिः प्रचोदयात् ऐं पुनर्मध्ये पूज्या ॥ इति श्रीनादिपंचकं गायत्री

सहितं ॥ ५ श्री उन्मन व्योम्नि श्री उन्मनायीसं श्रीभृगुनाथ पापू ऐं ॥ ५

श्रीमनोन्मनव्योम्नि श्रीमनोन्मनायी हं श्रीलकुलीशनाथ पापू ऐं ॥ ५

श्रीसमनाव्योम्नि श्रीसमनायी क्षं श्रीसंवर्तनाथ पापू ऐं ॥ ५

श्रीव्यापिन्या व्योम्नि श्रीव्यापिन्यायीमं श्रीमहाकालानलनाथ पापू ऐं ॥ ५

पृ। ५ब्)

श्रीशाक्तव्योम्नि श्रीनिरोधिन्यायी लं श्रीपिनाकीशनाथ पापू ऐं ॥ ५

श्रीध्वन्यंत व्योम्नि श्रीनाहतायी वं श्रीखड्गीशनाथ पापू ऐं ॥ ५

श्रीनादव्योम्नि श्रीनादिन्यायी रं श्रीभुंजंगीशनाथ पापू ऐं ॥ ५ श्री

अर्द्धचंद्रव्योम्नि श्री आह्लादिन्यायी यं श्रीवागीशनाथ पापू ऐं ॥ ५

श्रीविन्दुव्योम्नि श्री अमृतवर्षिण्यायी ऊं श्री अर्घीशनाथ पापू ऐं ॥ इति

सिद्धनवकं ब्रह्मशिलायां नवात्म संकेत क्रमेण पूज्यं ॥

५ ह्सक्ष्मल्वर्यं श्रीगगनानंदनाथ पापू ऐं ॥ ५ ह्सक्ष्मल्वर्यां

श्रीकुमुदानंदनाथ पापू ऐं ॥ ५ ह्सक्ष्मल्वर्यिं श्रीपद्मानंदनाथ पापू ऐं ॥ ५ ह्सक्ष्मल्वर्यीं श्रीभैरवानंदनाथ पापू ऐं ॥ ५ ह्सक्ष्मल्वर्युं श्रीदेवानंदनाथ पापू ऐं ॥ ५ ह्सक्ष्मल्वर्यूं श्रीकमलानंदनाथ पापू ऐं ॥ ह्सक्ष्मल्वर्यें श्रीशिवानंदनाथ पापू ऐं ॥ ५ ह्सक्ष्मल्वर्यें श्रीरामानंदनाथ पापू ऐं ॥

पृ। ६अ)

ह्सक्ष्मल्वर्यें श्रीकृष्णानंदनाथ पापू ऐं ॥ ५ ह्सक्ष्मल्वर्यौं श्रीसुलोचनानंदनाथ पापू ऐं ॥ इति सिद्धदशकं प्रथमद्वितीयमेखलामध्ये पूपा ऐं ॥ ५ ह्सक्ष्मल्वर्यं श्रीशूरानंदनाथ पापू ऐं ॥ ५ ह्सक्ष्मल्वर्यां श्रीतीव्रानंदनाथ पापू ऐं ॥ ५ ह्सक्ष्मल्वर्यिं श्रीखेचरानंदनाथ पापू ऐं ॥ ५ ह्सक्ष्मल्वर्यीं श्रीगर्भमुक्तानंदनाथ पापू ऐं ॥ ५ ह्सक्ष्मल्वर्युं श्रीसिंहानंदनाथ पापू ऐं ॥ ५ ह्सक्ष्मल्वर्यूं श्रीजयानंदनाथ पापू ऐं ॥ ५ ह्सक्ष्मल्वर्यं श्रीविजयानंदनाथ पापू ऐं ॥ ५ ह्सक्ष्मल्वर्युं श्रीमित्रानंदनाथ पापू ऐं ॥ ५ ह्सक्ष्मल्वर्यं श्रीवीरानंदनाथ पापू ऐं ॥ ५ ह्सक्ष्मल्वर्युं श्रीविमलानंदनाथ पापू ऐं ॥ ५ ह्सक्ष्मल्वर्यें श्रीरत्नानंदनाथ पापू ऐं ॥ ५ ह्सक्ष्मल्वर्यें श्रीकेशवानंदनाथ पापू ऐं ॥ ५ ह्सक्ष्मल्वर्यां श्री उन्मत्तानंदनाथ पापू ऐं ॥ ५ ह्सक्ष्मल्वर्यों

शीमुद्रास्फोटानंदनाथ पापू ऐं ॥ ५ ह्सक्ष्मल्वर्ये श्रीश्रोतानंदनाथ
पापू ऐं ॥

पृ। ६ब्)

५ ह्सक्ष्मल्वर्यः श्रीमहानंदनाथ पापू ऐं ॥ ५ ह्सक्ष्मल्वर्यीं
श्रीमिर्यालनाथ पापू ऐं ॥ इति सिद्धषोडशकं तृतीयमेखलायां पूजयेत् ॥

ऐं ह्रीं श्रीं देवी पुत्र अवतर २ कपिल मूर्तये कपिल जटाभारभासुर ।
त्रिनेत्रज्वालामुख । गंधपुष्पधूपदीप अलिवलिपिसितं । गृह्ण २ प्रयच्छ मे
। मुहुर्मुहु । क्षः क्षः क्षपणोन्मत्तकाय वटुकोल्काभिमुखाय पादाज्ञा
प्रसादं भव मे ॥ इति वटुकवलिः ॥ गुरुमंडल दक्षिणे पात्रं वामहस्ते
गृहीत्वा दक्षहस्त तर्जन्या दंडमुद्रया दातव्यं ॥ ऐं ह्रीं श्रीं हूं
फ्रें सर्वपीठोपपीठानि द्वारोपद्वारमेव च । क्षेत्रोपक्षेत्र संदोहाः सर्वे
दिग्भाग संस्थिताः ॥ योगिनी सिद्धवीरेंद्रास्सर्वे तत्रैव चागताः । इदं प
* * * *(?) श्रीनाथो वरदो मम ॥

ये भक्ताः शासने चात्र गुरुपूजार्चने रता ।
सर्वे सिद्धिप्रदास्ता वै सदा तेषां भवंति हि ॥

पू। ७अ)

वीरा * * * * * *? येद्विषंति महीतले ।
ते दत्तात्रवलौ देवि समयाचार मेलके ॥

श्रुति स्मृतिर्मनस्तुष्टिं मांसो मर्जास्थ जीवितं ।
* *? न्तयंतु दुष्टानां योगिनीगण संकुलं ॥

उंकाराद्यास्तु ये पीठास्त्रयस्सारा: प्रकीर्तिता: ।
उपपीठास्तु संदोहादिव्यासु विदिशासु च ॥

महीपाताल ब्रह्माण्डे मनुस्थानांतरेषु च ।
योगिन्यो योगयुक्तात्मा समयस्थास्तु साधका: ॥

वीरकर्म सुवीरेंद्रा: सर्वे तत्रैव चागता: ।
नगरे वाथ ग्रामे वा अटव्यां गिरि गह्वरे ॥

वापीकूपैक वृक्षेषु श्मसाने मातृमंडले ।
नानारूपधरा देव्यो वहुधाया व्यवस्थिता: ॥

संतुष्टाः संतुते सर्वे वलिं गृह्नं तु मे सदा।
शरणागतो ह्यहंतासां सर्वमेव फलप्रदं॥

प्रारब्धं यन्मया कर्म यत्करिष्यामि यत्कृतं।
शिवशक्ति प्रसादेन श्रीकुजाव्वां नमाम्यहं॥

प्। ७ब्)

सर्वसिद्धि प्रसादं मे प्रारब्धस्य प्रसादवान्॥

इति योगिनी वलिः पात्रं दक्षरे गृहीत्वा वामहस्त तर्जन्या दंडमुद्रया दातव्यं गुरुमंडल वामे॥

ऐं ह्रीं श्रीं क्ष्मौं क्षेत्रपाल ओड्डुमराय। अवतर २ गंधपुष्पधूपदीप अलिपिसितं वलिं। गृह्न २ भैरव रूपेण विघ्नान् प्रोच्छादय प्रोच्छादय अस्तुक्षः॥ इति क्षेत्रपाल ओड्डामर वलिं गुरुमंडल पश्चिमे। दक्षहस्ते पात्रं गृहीत्वा वामहस्ता नामिकया दंडमुद्रया दातव्यं॥ अत्रैव पश्चिमे मार्गे पंचमंगल्य मंडलं॥ सः सः सः ततो मृगाजिनादुपरि तत्र विंदुस्पर्शवश्यंत्कारयेत् करसंपुटं। करशुद्धिस्ततो न्यास क्रमं न्यसनीयं॥ अथार्घ पात्रः काद्यं वा विश्वामित्र * * *(?

) वा तत्र मध्ये पंचार्णया पुष्पं देयं । सिंदूरेण त्रिकोणं षट्कोण मध्ये भूरि विद्यां प्रपूजयेत्॥ अलिनापूर्य तस्मिन् पात्रे * * * * * * (?) पंचकं पूजयेत्॥

पृ। ८अ)

५ श्रीब्रह्मदेव । ह्स ख्फ्रें । श्रीमनोन्मनायी ग्लूँ श्रीगगनलोकभोगगामिनी चतुःषष्टि लक्षकोटि योगिनी स्वामिनी ऐं श्री विज्ञाव्वा पापू ऐं॥ ५ श्रीविष्णुदेव । ह्स ख्फ्रें । श्रीसमनायी म्लूं श्रीस्वर्गलोक भोगगामिनी द्वात्रिंशल्लक्षकोटि योगिनी स्वामिनी ह्रीं श्रीनयनाव्वा पापू ऐं॥ ५ श्रीरुद्रदेव । ह्स ख्फ्रें । श्रीव्यापिन्यायी प्लूं श्रीपवनलोक भोगगामिनी श्रीषोडशलक्षकोटि योगिनी स्वामिनी श्रीं श्रीविद्युन्माला अव्वा पापू ऐं॥ ५ श्री ईश्वरदेव ह्स ख्फ्रें । श्री अव्यक्तायी म्लूं श्रीमर्त्यलोक भोगगामिनी अष्टलक्ष कोटि योगिनी स्वामिनी  ख्फ्रें श्रीप्रद्युम्ना अव्वा पापू ऐं॥ ५ श्रीसदाशिव देव । ह्स ख्फ्रें । श्रीनंदिन्यायी न्लूं श्रीनागलोक भोगगामिनी चतुर्लक्ष कोटि योगिनी स्वामिनी॥ ह्स्वूं श्रीशंखिनी अव्वा पापू ऐं॥

पृ। ८ब्)

ततो पुनर्विद्यां पूजयेत् विशेषार्घ पात्र विधिः॥

या सा परा परा शक्तिः खगस्था खगरूपिणी।
सोमसूर्यपदातस्था आयाहि इह मंडले॥

आह्वानं॥

ततः पर सूक्ष्मस्थूल भेदेन ध्यानं कार्यं। ऐं श्री अनादि निधनेश्व राधिकारे अं श्रीपरापरोत्तीर्णाद्यनादि नाथ ऐं। श्रीपरा परोत्तीर्णाद्या अकुलेश्वरी महाव्याप्ति व्यापिनी अव्वा पापू ऐं॥ ऐं ह्रीं श्रीरौद्री अव्वा पापू ऐं॥ ऐं श्रीं गुणस्फारिणी अव्वा पापू ऐं॥ ऐं ख्फ्रें श्रीरजोन्मादिनी अव्वा पापू ऐं॥ ऐं ह्स्वूं श्रीत्रिशून्य व्यापिनी अव्वा पापू ऐं॥ इति पंचवाहाख्यं परक्रमं परान्ते पूजयेत्॥ ५ आं श्रीसिंहकीर्तिनाथ इं श्रीसुशुद्धाव्वा पापू ऐं॥ ५ इं श्री अव्यक्तनाथ उं श्री अव्यक्ताव्वा पापू ऐं॥ ५ ऊं श्रीयोनिचक्रक्रामिनाथ ॠं श्रीयोनिचक्रक्रामिणी अव्वा पापू ऐं॥

पृ। ९अ)

श्रीकालिकनाह ऌ श्रीकालिकाव्वा पापू ऐं॥ ५ ॡं श्री ऊहकनाथ एं श्री ऊहकाव्वा पापू ऐं॥ ५ ऊं श्रीपर्वाद्यनाथ ॠं श्रीपर्वाद्याव्वा पापू ऐं ॥ ५ अं श्री रक्षाद्यनाथ अः श्रीरक्षिणी अव्वा पापू ऐं॥ ऐं ह्स ख्फ्रें ऐं॥

एकाक्षरा मध्ये पूज्या जप्या च ॥ इति सूक्ष्माख्यो प्रकास क्रमः सप्तकं सूक्ष्मांते पूज्यं ॥

व्योमेश्या सहिताः सर्वा गुरुवक्त्रोपदेशतः ।
कक्रोमि व्योम खच *? क्रमेणैव च योजयेत् ॥

तथाप्यत्र क्रमं वक्ष्ये संकेताक्षरकैः शुभैः ।
गप्रप्रव्योघसिङ्गा च ध्वा? कङ्गा तु च कूकवै छ ए सि ।

ज च धश्चापि । खा अमश्च ऋसक्र च । टसोकं तु ठलाकश्च । डुडायो पुनरेव च । ढ अविश्वण उयवैः त आय खदिकस्तथा दधाधौ वैधमी प्रश्च नमे विपलौवीशु च । फशिर । पल्लगा चैव । तद्विक्रो ममसुस्तथा

पृ । ९ब्)

यवावरभुस्विश्चैव लपिशवखभूस्तथा ।
शवदुश्च षश्चेदुश्च सभृप्रह्चल प्रवै ॥

क्षप्रसंभमावदेतच्चतुस्त्रिंशाब्जसंख्यया ।
व्योमेश्वरीति सर्वासां पश्चाद्देया ह्यनुक्रमात् ॥

एवं क्रमेण कर्तव्यं वर्णक्रम महोदयं ॥

इति श्रीसम्यक् सूत्रगंजकात् ॥

५ भकं ककलाद्या क्रोध भैरव मित्र व्योमेश्वरी अव्वा पापू ऐं ॥ ५ गखं स्वकलाद्या चंडभैरव भूतव्योमेश्वरी अव्वा पापू ऐं ॥ ५ वगंगणाद्या प्रचंडभैरव प्रभूतव्योमेश्वरी अव्वा पापू ऐं ॥ ५ तिघंघस्मराद्या शिवभैरव ज्वालिनी व्योमेश्वरी अव्वा पापू ऐं ॥ ५ अं ङ ज्ञाननेत्राद्या कपर्दि भैरव ज्वाला मालिनि व्योमेश्वरी अव्वा पापू ऐं ॥ ५ वेचं चामुंडाद्या कूर्मभैरव कल्पिनी व्योमेश्वरी अव्वा पापू ऐं ॥ ५ ह्स ख्फ्रें छंछलत्रासिन्याद्या एकनेत्र भैरव सिद्धशक्ति व्योमेश्वरी अव्वा पापू ऐं ॥ ५ श्रीजंजागाद्या चतुरानन भैरव ॥

पृ। १०अ)

* * (?) व्योमेश्वरी अव्वा पापू ऐं ॥ ५ कुरां?
कंकार्याद्या अजित भैरव मदनशक्ति व्योमेश्वरी अव्वा पापू ऐं ॥ ५ ञि अं ज्ञानाद्याशर्म भैरव क्रंदिनी शक्ति व्योमेश्वरी अव्वा पापू ऐं ॥ ५ केटां टंकाद्या सोमेश्वर भैरव कंदली शक्ति व्योमेश्वरी अव्वा पापू ऐं ॥ ५

ह्स्रां ठं ठाण वंधाद्या लांगलीश भैरव कनका देवी व्योमेश्वरी अव्वा पापू ऐं॥ ५ ह्स्रीं डंडामराद्याडारुक भैरवयोगीशिविद्याशक्ति व्योमेश्वरी अव्वा पापू ऐं॥ ५ ह्स्रूं ढँढमराद्या अर्द्धनारीश्वर भैरवविद्युंता व्योमेश्वरी अव्वा पापू ऐं॥ ५ ङ णंणति पृयाद्या उमाकांतं भैरवयशावर व्योमेश्वरी अव्वा पापू ऐं॥ ५ ञ तंतरणि कलाद्या आषाढ भैरव यक्षी शक्ति व्योमेश्वरी अव्वा पापू ऐं॥ ५ णर्थ स्थान कलाद्यादिंडि भैरव करणावली देवी व्योमेश्वरी अव्वा पापू ऐं॥ ५ नदं दर्शनाद्याधात्रीश भैरव वौधावली व्योमेश्वरी अव्वा पापू ऐं॥

पृ। १०ब)

५ मेधं धनाद्यामीन भैरव प्रवोधशक्ति व्योमेश्वरी अव्वा पापू ऐं॥ ५ अनं नयनाद्या मेष भैरव विमलाशक्ति व्योमेश्वरी अव्वा पापू ऐं॥ ५ घोपं पराद्या लोहित भैरव विभत्सा शक्ति व्योमेश्वरी अव्वा पापू ऐं॥ ५ राफं पलप्राप्तिन्याद्याशिखीश भैरवरति विद्या व्योमेश्वरी अव्वा पापू ऐं ॥ ५ मुवं वर्वराद्या छगलंड भैरव गारुडी शक्ति व्योमेश्वरी अव्वा पापू ऐं॥ ५ खेभं भवभेदिन्याद्याद्विरंड भैरव क्रोधी शक्ति व्योमेश्वरी अव्वा पापू ऐं॥ ५ छां मं मंत्राद्या महाकाल भैरव सुवर्ण राजशक्ति व्योमेश्वरी अव्वा पापू ऐं॥ ५ छीं यं यश पृयाद्या वालीश भैरववन्या शक्ति व्योमेश्वरी अव्वा पापू ऐं॥ ५ किरं रति चक्राद्या भुजंग भैरव

सिंदूरा शक्ति व्योमेश्वरी अव्वा पापू ऐं॥ ५ निलं लंपटाद्या पिनाक भैरवशशिनी शक्ति व्योमेश्वरी अव्वा पापू ऐं॥ ५ किवं वक्राद्या खड्ग भैरव भूतवल्लभाशक्ति व्योमेश्वरी अव्वा पापू ऐं॥

पृ। ११अ)

५ निशं शंवराद्याव केश भैरव दुःखांतकी शक्ति व्योमेश्वरी अव्वा पापू ऐं॥ ५ विषं षट्काद्या श्वेत भैरव दुरितांतकी शक्ति व्योमेश्वरी अव्वा पापू ऐं॥ ५ चेसं सर्वाद्या भृगु भैरव प्रसन्ना शक्ति व्योमेश्वरी अव्वा पापू ऐं॥ ५ लृं हंसव्योमेश्वरी चक्रव्योमेश्वरी चक्राद्यनाथ लकुलीश भैरव प्रलयावलि शक्ति व्योमेश्वरी अव्वा पापू॥ ५ ह्सक्ष्मल्वर्यूं क्षं प्रलयावल्याद्या संवर्त भैरव भय शृंगार चतुरवीरेश्वरी देवी व्योमेश्वरी अव्वा पापू॥

इति व्योमेशि चक्राख्यमानंदचक्रं षोडशांते पूज्यम्॥

ऐं ह्रीं श्रीं ख्फ्रें ह्सूं भगवति अंबे।
ह्स ख्फ्रें। श्रीकुब्जिके।
ह्स्रां ह्स्रीं ह्स्रं। ङ ञ ण न मे। अघोरामुखि।
छां छीं किनिकिनि विच्चे ह्स्रूं ख्फ्रें श्रीं ह्रीं ऐं॥ श्री कुब्जिकायी

मंत्राज्ञा श्रीनाथ कुब्ज चंद्रशेखर श्रीकुजेशी अव्वा पादुकां पूजयामि

ऐं शक्ष्मल्वर्यूं ईं? ॥ मूलविद्या ॥

पू। ११ब)

५ ह्स्त्रूं भगवति अंबे श्रीपरादेवी परमकलायै श्रीमूर्द्धिर्न वक्राय श्री

अनादिनाथ पापू ह्स्त्रूं ५ ॥ ५ ह्स्त्रूं ख्फ्रें श्रीकुब्जिके श्रीकुलमालिनी देवी

श्रीसमयायै श्री ऊद्ध्र्ववक्राय श्री अमोघनाथ पापू ह्स्त्रूं ५ ॥ ५ ख्फ्रें

ह्स्त्रां ह्स्त्रीं ह्स्त्रूं श्रीसिद्धयोगेश्वरी देवी मुद्रायै श्रीपूर्ववक्राय

श्रीशिलाशेखरनाथ पापू ख्फ्रें ५ ॥ ५ श्रीं ङ ञ ण न मे अघोरामुखि

श्रीमहाकाली देवी श्रीविद्यायै श्रीदक्षिणवक्राय श्रीशक्तिनाथ पापू श्रीं ५ ॥

५ ह्रीं छां छीं श्रीमहालक्ष्मी देवी श्रीमंत्रायै श्री उत्तरवक्राय

श्रीज्योतिनाथ पापू ह्रीं ५ ॥ ५ ऐं किनि किनि विच्चे श्री उमा देवी श्री आज्ञायै

श्रीपश्चिमवक्राय श्रीव्य व्यापकनाथ पापू ऐं ५ ॥ इति वक्र षट्कं ॥

५ ऐं भगवति अंबे श्रीहृत्कमलायै हृदया * * *(?

) नंदनाथ पापू ऐं ५ ॥ ५ ह्रीं ह्स ख्फ्रें श्रीकुब्जिके श्रीकुलदीपायै

शिरसे श्रीव्योमानंदनाथ पापू ह्रीं ५ ॥ ५ श्रीं ह्स्त्रां ह्स्त्रीं ह्स्त्रूं श्री

* * * * * * (?) ॥

पू। १२अ)

शिखायै श्री उदयानंदनाथ पापू श्रीं ५॥ ५ रव्फ्रें ङ ञ ण नमे
अघोरामुखि श्रीवहुरूपायै कवचाय श्रीविमलानंदनाथ पापू ५॥ ५ ह्स्त्रूं
छां छीं श्रीमहांतारिकायै नेत्रत्रयाय श्री अमृतानंदनाथ पापू
ह्स्त्रूं ५॥ ५ ह्स्त्रूं किनि किनि विच्चे श्रीकुंकणाथायै अस्त्राय श्रीविंदुनाथ पापू
ह्स्त्रूं॥ इति अंग षट्कं॥ अस्या विद्याया व्याप्तिः कथ्यते॥

श्रीकौलिन्युवाच॥

या सा परा परा विद्या त्रिस्वरूपात्मिका शुभा।
अहं सा रुद्रशक्तिर्वैद्वा त्रिं व्याक्षरिका भवेत्॥

सा सूक्ष्मा सा भवेत् स्थूला सा रौद्री त्रिप्रकारका।
अस्याः स्मरणमात्रेण कंपते देहपंजरं॥

न चास्याः सदृशी विद्या न चास्याः सदृशं क्रमं।
न चास्याः सदृशी माया न चास्याः सदृशं कुलं॥

अस्या भेदं पुनर्वक्ष्ये मंत्रो द्वारस्य धीमत।

पंचादौ पश्चिमाः पंच प्रणवाश्च वरानन ॥

तेषां मध्यगता विद्या संपुटेन निरोधिता ।
हिमवंतस्य पिंडस्य आदिगर्भ स्थितस्य च ॥

पृ। १२ब्)

तस्या रेफनिरोधेन तत्र सा वारुणी कला ।
एतत्करणविद्याया पूर्णिमा सा प्रकाशिता ॥

तत्स्थमाराधयेद् विद्यामन्यथा सा पराङ्मुखी ।
भगवति पदमादौ कौलिनी प्रकृतिर्भवेत् ॥

शिरस्तु मालिनी वीजममृतं हृदि पंकजं ।
चंद्रादित्यौ विसर्गश्च स्तनयोभो वरार्चित ॥

खेचरं षड्विधं मध्ये षट्पीठेषु अधिष्ठितं ।
उड्डियानं हसकामाख्यं खफौ कुंकण पूर्णकौ ॥

रेफं जालंधरं पीठं यत्र सा कौलिनी वसेत् ।

तिस्रः स्रोतस्त्रिकोणायामेतत् षडविध खेचरं ॥

विद्याः सप्तमधिष्ठानं स चात्मा कौलिकी भवेत् ।

पयो मध्ये यथा सर्पिर्ग्रहाणां च यथा शशी ।
नागानां तक्षको यद्वत् तथासौ खेचरः शिवः ॥

न चास्याः सदृशो मंत्रो मंत्रकोटि शतैरपि ।
अस्या स्मरणमात्रेण कुष्मावस्था प्रवर्तते ॥

श्रीनाम कुब्जिकायोनिर्विद्या जिह्वा प्रभेदतः ।
अनुनासैर्भवेन्नासा मणिपूरेकरंध्रके ॥

प्। १३अ)

* * *(?) वदन तस्या आस्यं मुखि निपातितं ।
छां छीं शब्दद्वयं नेत्रे किनि किनि देवता ॥

विच्चे सर्वांग रुधिर मेतन्मंत्रोपदेशकं ।
पदभेद क्रमाच्छंभो ज्ञात्वा क्षोभः प्रवर्तते ॥

यो योगिनी कुले जातो येषां तुष्टास्म्यहं शिव ।
ते लभंते क्रमोद्वारं कौमारं दुरति क्रमं ॥

एषा प्रकृति रस्माकं ब्रह्मांडोर्द्धमपंचकं ।
पाताले पंचधा भेदस्त्रिगतिस्त्रिपथाश्रमं ॥

एष वै मूलमंत्रस्य उपोद्घातो वरानन ॥

अनन्तरं दिव्यदिव्यादिव्यसिद्धमानव अधिकार शिष्योघक्रमेण गुरुशुद्धिर्लिख्यते ॥

५ ह्स्त्रूं श्रीशंभुनाथाधिकारे श्रीकुलकौली सिद्धाज्ञा ह्सख्फ्रें । श्री उन्मनायै श्री क्रौंचिकाज्ञावली अव्वा । शक्ष्मल्वर्यूं । श्रीसद्य देव श्रीतूष्णीशनाथ पापू ऐं ॥ ५ ह्स्त्रूं श्रीमेरुनाथाधिकारे ख्फ्रें श्रीमहाकाली कुलाज्ञा ॥ ह्सख्फ्रें श्रीमनोन्मनायै श्रीवक्राज्ञावली अव्वा । शक्ष्मल्वर्यूं । श्रीचिंचिणीनाथ श्रीश्रीनाथ पापू ऐं ॥

पृ। १३ब)

५ ह्स्त्रूं अं श्री आत्मतत्वाधिकारे फ्रें श्रीकालिकाले गुरु आज्ञा ह्सख्फ्रें श्रीसमनाये श्रीकुब्जिकाज्ञावली अव्वा। शक्ष्मल्वर्यूं श्री उंड्डीशनाथ पापू ऐं॥ इति शांभवन्त्रिकं॥

दिव्योघः॥

५ श्री उन्मत्तानंदनाथ ह्स्त्रूं श्री उन्मत्ता देवी अव्वा ह्सख्फ्रें। श्रीपरा देवी परा पापू ऐं॥ ५ श्रीसमनानंदनाथ ह्स्त्रूं श्रीसमनादेवी अव्वा। ह्सख्फ्रें श्रीकौलिनी देवी परा पापू ऐं॥ ५ श्रीव्यापिन्यानंदनाथ ह्स्त्रूं श्रीव्यापिनी देवी अव्वा॥ ह्सख्फ्रें। श्रीव्याप्ति देवी परा पापू ऐं॥ ५ श्री अव्यक्तानंदनाथ ह्स्त्रूं श्री अव्यक्ता देवी अव्वा। ह्सख्फ्रें। श्रीशांभवा देवी परा पापू ऐं॥ ५ श्रीनंदिन्यानंदनाथ ह्स्त्रूं श्रीनंदिनी देवी अव्वा। ह्सख्फ्रें श्रीषष्ठादेवी परा चाषयों(?) ॥ ५ श्रीमंथानानंदनाथ ह्स्त्रूं श्रीमंथानादेवी अव्वा। ह्सख्फ्रें श्रीचक्रदेवी परा पापू ऐं॥ ५ श्रीहेरुकानंदनाथ ह्स्त्रूं श्रीहेरु * * * *? अव्वा।

पृ। १४अ)

ह्सख्फ्रें श्रीसिद्धादेवी परा पापू ऐं॥ ५ श्रीसमयाख्यनंदनाथ ह्स्त्रूं

श्रीसमयाख्यादेवी अव्वा। ह्सख्फ्रें श्रीनयादेवी। परा पापू ऐं॥ ५
श्रीजृंभानंदनाथ ह्स्त्रूं श्रीजृंभादे अव्वा। ह्सख्फ्रें श्री अपरादेवी
परा पापू ऐं॥ ५ श्रीकालसंकर्षणानंदनाथ ह्स्त्रूं श्रीकालसंकर्षणी
देवी अव्वा। ह्सख्फ्रें श्रीसूर्यादेवी परा पापू ऐं॥ ५ श्रीचंडानंदनाथ
ह्स्त्रूं श्रीचंडादेवी अव्वा। ह्सख्फ्रें श्रीनिर्णयादेवी परा पापू ऐं॥ ५ श्री
अघोरेशानंदनाथ ह्स्त्रूँ श्री अघोरेशी देवी अव्वा। ह्सख्फ्रें श्रीशांतादेवी
परा पापू ऐं॥ ५ श्री त्रैलोक्यानंदनाथ ह्स्त्रूं श्रीत्रैलोक्या देवी अव्वा।
ह्सख्फ्रें। श्रीचक्रेशी देवी परा पापू ऐं॥ ५ श्रीविमलानंदनाथ ह्स्त्रूं
श्रीविमलादेवी अव्वा। ह्सख्फ्रें। श्रीमदत्रिकादेवी परा पापू ऐं॥ ५
श्रीकमलानंदनाथ ह्स्त्रूं श्रीकमलादेवी अव्वा। ह्सख्फ्रें श्रीकुब्जिकादेवी
परा पापू ऐं॥

पू। १४ब्)

५ श्रीचर्चिकानंदनाथ ह्स्त्रूं श्रीचर्चिकादेवी अव्वा। ह्सख्फ्रें। श्रीचर्यादेवी
परा पापू ऐं॥ श्रीशाक्त पराधिकारे ह्स्त्रूं श्री उन्मनायै। ह्सख्फ्रें।
श्रीचक्रदेवी आज्ञावली अव्वा। शक्ष्मल्वर्यूं श्रीचिंचिणीनाथ श्रीश्रीनाथ
पापू ऐं॥ इत्यष्ट दशधा पुष्पसंकेतो दिव्यादिव्योघः॥

पश्चादकलादि मंडलपंचकं उपरि गुरुमंडले लिखितं। तद्धृदय

कंठतालुभ्रूमध्य द्वादशांतेषु पूज्यं ॥

५ ह्स्त्रूं श्रीशांभवाधिकारे ह्सख्फ्रें सहजाज्ञा । शक्ष्मल्वर्यूं ।
श्रीवृक्षनाथ श्रीश्रीनाथ पापू ऐं ॥ वृक्षगायत्री ॥
५ श्रीमंत्रतत्वाधिकारे श्रीगुरुसिद्धाज्ञा । ह्सख्फ्रें । श्रीमनोन्मन्योवल्लि
श्रीमनोन्मनी मालिनी श्रीकुब्जिकाव्वा । शक्ष्मल्वर्यूं । श्रीचिंचिणी मित्रनाथ
पापू ऐं ॥ मित्रगायत्री ॥ ५ श्रीविद्यातत्वाधिकारे श्री * *?
सिद्धाज्ञा । ह्सख्फ्रें । श्रीसमनांवल्लि श्रीसमनायै श्रीत्रिपुरा
श्रीकुब्जिकाव्वा । शक्ष्मल्वर्यूं । श्रीचिंचिनी षष्ठनाथ पापू ऐं ॥ ततः
षष्ठगायत्री ॥

पू । १५अ)

* * (?) त्मतत्वाधिकारे श्रीगुरुसिद्धाज्ञा । ह्सख्फ्रें
श्रीव्यापिन्यो वल्लि श्रीव्यापिनी वृद्धा काली श्रीकुब्जिकाव्वा । शक्षल्वर्यूं ।
श्रीचिंचिणी ओड्डुनाथ पापू ऐं ॥ तत ओड्डु गायत्री ॥ इत्यावल्लि शुद्धिः ॥ ५
महाश्रीसिद्धिसागराधिकारे ह ह ह श्रीत्रिशून्यद्रीपनाथ श्रीनिरौपम्यनाथ
। श्रीनिरानंदनाथ श्रीनिरालंवनाथ पापू ऐं ॥ ५ श्रीशाक्ते चंद्रपुरे
गृहे । ह्स्त्रूं श्रीपराधिकारे श्रीसहजा कौलिनी आज्ञा । ह्सख्फ्रें
श्रीमनोन्मनी श्रीचक्राज्ञावलि अव्वा । शक्ष्मल्वर्यूं श्रीचिंचिणी आदिनाथ

श्रीसद्यानंददेव श्रीतूष्णीशनाथदेव श्री श्रीनाथ पापू ऐं॥ ५ श्रीकैलास
गृहे मूर्द्धिर्न स्थाने अ आत्मतत्वाधिकारे श्रीसिद्धशांभवाज्ञा।
ह्सख्फ्रें श्रीव्यापिन्योवल्लि श्रीव्यापिनी वृद्धाकाली श्रीकुब्जिकाव्वा।
शक्ष्मल्वर्यूं। श्री आदिनाथ श्रीचिंचिणि मित्रनाथ पापू ऐं॥ तत
मित्रगायत्री॥ ५ श्रीशांभवाधिकारे। ह्सख्फ्रें श्रीसहजाज्ञा
शक्ष्मल्वर्यूं श्रीवृक्षनाथ श्री श्रीनाथ पापू ऐं॥

पृ। १५ब्)

तत वृक्षगायत्री॥

५ शक्ष्मल्वर्यूं श्रीमहाभैरवाधिपति मित्रनाथ। शक्ष्मल्वर्यीं
श्रीमदनसुंदरी अव्वा पापू ऐं॥ इति सिद्धोघः॥

श्रीवलिपत्तने विज्ञानपुरे च्छायाग्रामाधिकारे पुष्पाज्ञासमये प्ला
श्रीगगनानंदनाथ श्रीचंदुली अव्वा श्रीगगनाव्वा श्री अव्वाये अव्वा पापू
ऐं॥ इति मानवौघः॥

५ मदोनीनगरे अर्वुदग्रामाधिकारेर्ल्रीं श्रीगर्भमुक्तानंदनाथ
श्रीभग्याव्वा श्रीवाली अव्वा श्रीमहलाव्वा पापू ऐं॥ श्रीमन्नखेटनगरे

श्रीगारुड चक्रवर्तिल्लूं श्रीवेधानंदनाथ श्रीरहसानंदनाथ

श्रीखेचरानंदनाथ श्रीखेचरी अव्वा श्रीकनकाभरणिकाव्वा

श्रीचंद्रगर्भाव्वा पापू ऐं ॥ अधिकारोघः ॥ ५ श्रीकान्तौर नगराधिकारे

व्लें श्रीचित्रानन्दनाथ श्रीमदनवती श्रीचित्रावलि अव्वा पापू ऐं ॥ ५

श्रीशन्मले हरिकाधिकारे जन्म । जाति ब्राह्मण । राहु ल * * *
(?)

पू । १६अ)

श्रीचे-उलानंदनाथ श्रीचे-उलावलि अव्वा पापू ऐं ॥ ५ श्रीकश्मीरायां

माह्रीसंगम कृताधिकारे जन्म । जाति ब्राह्मण आथर्वणभुते कर्णः

श्रीभुवनानंदनाथ श्रीभुवनावली अव्वा पापू ऐं ॥ इति शिष्याद्यः ॥

५ श्री ओड्डियाणपीठ श्री ओड्डाव्वा श्री चर्च्चिकादेवी अव्वा देवी ॥ ५ शक्ष्मल्वर्या

श्री आज्ञापीठ ह्स्रु श्रीकुब्जिकाव्वा पापू ऐं ॥ ५ श्रीजालंधर पीठ

श्रीजालपाव्वा श्रीमहाकाली देवी । जशक्ष्मल्वर्यी श्रीविद्यापीठ स्फ्रें

श्रीमहन्तारिकाव्वा पापू ऐं ॥ अनाहते ॥ ५ श्रीपूर्णगिरिपीठ श्रीपूर्णाव्वा

श्रीमहालक्ष्मी देवी ॥ पशक्ष्मल्वर्यूं श्रीमंत्रपीठ श्री ह्रीं

श्रीशवरिकाव्वा पापू ऐं ॥ मणिपुरे ॥ ५ श्रीकामरूप पीठ श्रीकामाव्वा

श्रीसिद्धयोगेश्वरी देवी । कं शक्ष्मल्वर्यैं । श्रीमुद्रापीठ ऐं श्री

कदंविनी अव्वा पापू ऐं ॥

पृ। १६ब)

स्वाधिष्ठाने॥ इति पीठ चतुःकं॥

५ श्रीभैरवदेव। ह्सख्फ्रें। श्रीचिंचिणीनाथ श्रीसहजाज्ञा ह्स्रूं
श्रीकुब्जिकाव्वा पापू ऐं॥ आज्ञा स्थाने॥ ५ श्रीनंदिदेव। ह्सख्फ्रें॥
श्रीखेचर्यनाथ श्री उन्मनाज्ञा ख्फ्रें श्रीसिद्धाव्वा पापू ऐं विशुद्धौ॥
५ श्रीदुर्व्वास देव। ह्सख्फ्रें। श्री ओड्डीशनाथ श्रीशवरिकाज्ञा ह्रीं
श्रीकमलादेवी अव्वा पापू ऐं अनाहते॥ ५ श्रीस्कंधदेव। ह्सख्फ्रें।
श्रीषष्ठनाथ श्रीसमनाज्ञा श्री श्री उदयादेवी अव्वा पापू ऐं मणिपूरे॥ ५
श्रीश्रीकंठदेव। ह्सख्फ्रें। श्रीमित्रनाथ श्रीमदनाज्ञा ऐं
श्रीविंदुदेवी अव्वा पापू ऐं स्वाधिष्ठाने॥ इति सिद्धपंचकं॥ ५ ऐं लृं
ह्रीं लृं श्रीं लृ ख्फ्रें लृं ह्स्रूं लृं श्री आज्ञाचक्रे श्रीविंदुकूटे
स्वरनाथ पापू ऐं। आज्ञा स्थाने॥ ५ ऐं ह्स्रूं ह्रीं ह्स्रूं श्रीं ह्स्रूं
ख्फ्रें ह्स्रूं ह्स्रूं ह्स्रूं श्रीविशुद्धिचक्रे श्रीसमयकूटे। स्वरनाथ पापू
ऐं विशुद्धौ॥

पृ। १७अ)

५ ऐं ख्फ्रें ह्रीं ख्फ्रें श्रीं ख्फ्रें ख्फ्रें ख्फ्रें ह्स्रूं ख्फ्रें श्री

अनाहत चक्रे श्रीविद्याकूटे स्वरनाथ पापू ऐं अनाहते ॥ ५ ऐं श्रीं ह्रीं
श्रीं श्रीं श्रीं ख्फ्रें श्रीं ह्स्त्रूं श्रीं श्रीमणिपूरकचक्रे
श्रीमंत्रकूटे स्वरनाथ पापू ऐं मणिपूरे ॥ ५ ऐं ह्रीं ह्रीं ह्रीं श्रीं
ह्रीं ख्फ्रें ह्रीं ह्स्त्रूं ह्रीं श्रीं स्वाधिष्ठान चक्रे
श्रीमुद्राकूटेश्वरनाथ पापू ऐं स्वाधिष्ठाने ॥ ५ ऐं ऐं ह्रीं ऐं श्रीं
ऐं ख्फ्रें ऐं ह्स्त्रूं ऐं श्री आधारचक्रे श्रीसिद्धकूटेश्वरनाथ पापू
ऐं आधारे ॥ इति आज्ञा षट्कं ॥ ५ ह्स्त्रां श्रीं अव्यक्त पुष्प पापू ऐं आज्ञा
स्थाने ॥ ५ ह्सीं श्री अनंतपुष्प पापू ऐं अनाहते ॥ ५ ह्स्त्रूं श्री अखंड पुष्प
पापू ऐं मणिपूरे ॥ ५ ह्सैं श्रीशृंगाटक पुष्प पापू ऐं स्वाधिष्ठाने ॥
इति पुष्प चतुःकं ॥

५ श्री अनादि समये ऐं श्रीमातंगिनी अव्वा पापू ऐं आज्ञास्थाने ॥ ५
श्रीसर्वज्ञसमये ह्रीं श्रीपुलिंदिनी अव्वा पापू ऐं विशुद्धौ ॥ ५
श्रीयोगसमये श्रीं श्रीशवरिकाव्वा पापू ऐं अनाहते ॥

पृ। १७ब्)

५ श्रीसमानसमये ख्फ्रें श्रीचंद्राव्वा पापू ऐं मणिपूरे ॥ ५ श्री
आज्ञासमये ह्स्त्रूं श्रीकुंकणाव्वा पापू ऐं स्वाधिष्ठाने ॥ इति
महंतारीपंचकं ॥

५ श्रीब्रह्मदेव । ह्सक्लरां । श्री अद्वैत चरणार्चित श्रीकंदर्पनाथ पापू ऐं वामनेत्रे ॥ ५ श्रीविष्णुदेव । ह्सक्लरीं ॥ श्रीकदंव चरणार्चित श्रीकुलनाथ पापू ऐं दक्षनेत्रे ॥ ५ श्री रुद्रदेव । ह्सक्लरूं । श्रीविमलचरणार्चित श्रीकुमारनाथ पापू ऐं ॥ विंदुस्थाने ॥ इति आज्ञा सिद्धत्रिकं ॥ ५ श्री आत्मतत्वे ह्सख्फ्रें श्रीपरमहंसनाथ श्रीहंसमालिनी अव्वा पापू ऐं इत्युप भेदं पृष्ठिवंशे ॥ इति अष्टाविंशति क्रमः ॥

५ ड्मर्यौं-ऊं । डां डीं डूं डैं डौं डः डां फ्रें डडसि डडसि श्रीडाकिनी कोटि योगिनी स्वामि * * (?) श्रीहरुकाव्वा पापू ऐं आधारे ॥ ५ र्मयौ-ऊं ॥ रां रीं रूं रैं रौं रः रां फ्रें । र र सिररसि श्रीराकिनी कोटि योगिनी स्वामिनी ह्रीं सेहारी * * * * * (?) ष्वाधिष्ठाने ॥

पृ । १८अ)

५ ल्मर्यौं-ऊं । लां लीं लूं लैं लौं लः लां फ्रें ललसि ललसि लाकिनी कोटियोगिनी स्वामिनी श्रीं श्रीधूर्जटी अव्वा पापू ऐं मणिपूरे ॥ ५ क्सर्यौं-ऊं । कां कीं कूं कैं कौं कः कां फ्रें ककसि ककसि काकिनी कोटियोगिनी स्वामिनी ख्फ्रें श्रीसिंहिकार्वा पापू ऐं अनाहते ॥ ५ स्मयौ-ऊं ॥ सां सीं

सूं सैं सौं सः सां फ्रें ससिस ससिस साकिनी कोटियोगिनी स्वामिनी ह्स्त्रूं
श्रीकालिकाव्वा पापू ऐं विशुद्धौ ॥ ५ ह्मयौ-ऊं । हां हीं हूं हैं
हौं हः फ्रें हहसि हहसि हाकिनी कोटि योगिनी स्वामिनी ह्स्त्रूं श्रीखेचरी अव्वा
पापू ऐं आज्ञा स्थाने ॥ ५ य्मं यूं यों यीं यूं यैं यौं यः यां फ्रें
ययसि ययसि याकिनी कोटियोगिनी स्वामिनी । ह्सख्फ्रें । श्रीकूष्मांड भैरवी
अव्वा पापू ऐं ब्रह्मरंध्रे । ५ डरलक सहय ह्सख्फ्रें । डां रां लां
कां सां हां यां । देवदत्तं ग्रह ग्रह । डां मांसं भक्ष भक्ष । रां
रक्तं पिव पिव । लीस्नाय्वस्थिचर्चयचर्चय । कामज्ञा स्वादय स्वादय ।

पृ। १८ब्)

सांमेद्माकर्षय आकर्षय । हां वसा शुक्रं ग्राहय ग्राहय । यां
जीवमुड्डामरय उड्डामरय । ह्रां ह्रीं ह्रूं श्रीकालसंकर्षणी अव्वा
पापू ऐं ॥ इति निग्रहचक्रं शिखा शृंगाटो परिपूज्यं ॥

ततश्चक्रेश्वरीविद्या ॥

५ आख्यायै श्रीब्रह्माणी अव्वा पापू ऐं शिरसि ॥ ५ ईलायै श्रीमाहेश्वरी अव्वा
पापू ऐं मुखे ॥ ५ ऊह्ययै श्री कौमारी अव्वा पापू ऐं कंठे ॥ ५ ऋसायै
श्रीवैष्णवी अव्वा पापू ऐं हृदये ॥ ५ ॠसायै श्रीवाराही अव्वा पापू ऐं

नाभौ ॥ ५ ऐं सायै श्री ऐन्द्री अव्वा पापू ऐं गुह्ये ॥ ५ अंवायै श्रीचामुंडाव्वा पापू ऐं ऊरूभ्यां ॥ ५ अः विकायै श्रीमहालक्ष्मी अव्वा पापू ऐं पादयोः ॥ इति कुलाष्टकं ॥

५ ऐं अघोरे फें ऐं ह्रीं फ्रें श्रीज्येष्ठायै श्रीज्येष्ठाव्वा पापू ऐं ॥ त्रिखंडा लघ्वी समयं विद्या ॥ ५ हयरलव ह्रीं श्रीकुब्जिकायै श्रीसमय भैरवी अव्वा पापू ऐं ॥ समया द्वयं द्वादशांते पूज्यम् ॥ ऐं ह्रीं श्रीं श्री श्रीनाथ पापू ऐं ॥

पृ। १९अ)

अर्हें श्रीमहासूर्य रश्मिपाद १ ॥ अर्हें श्रीमहामरीचि रश्मिपाद २ ॥ अर्हें श्रीमहाभासा रश्मिपाद ३ ॥ अर्हें श्रीमहाप्रकाश रश्मिपाद ४ ॥ अर्हें श्रीमहा अनच्क रश्मिपाद ५ ॥ अर्हें श्रीमहा अनुच्चार रश्मिपाद ६ ॥ अर्हें श्रीमहाकाल रश्मिपाद ७ ॥ अर्हें श्रीमहावर्ण रश्मिपाद ८ ॥ अर्हें श्रीमहाब्रह्मराव रश्मिपाद ९ ॥ अर्हें श्रीमहापिंड रश्मिपाद १० ॥ अर्हें श्रीमहारश्मिकदंव रश्मिपाद ११ ॥ अर्हें श्री अनिर्वाच्य कूट रश्मिपाद १२ ॥ एवं द्वादश ॥ ५ ह्सरव्फ्रें । शक्ष्मल्वर्यूं । श्रीनवात्मानंदनाथ श्रीनवात्मिकाव्वा पाद ॥ ५ ह्सरव्फ्रें । श्रीनवात्मिकाव्वा पाद ॥ ५ शक्ष्मल्वर्यूं श्रीनवात्मानंदनाथ पाद ॥ ५ ह्सरव्फ्रें श्री अनामिकाव्वा

गगनी मर्दनी चैव रोदनी दक्षिणे करे।

रसवादी मृदंगी च संगिनी वामबाहुके॥ २२॥

बाहुमूलैकमावृत्य त्रिष्वग्रं चैकवद्भवेत्।

तदस्याग्रादष्टशाखा स्युः दक्षिणेऽदक्षिणे तथा॥ २३॥

बाहुमूलाग्रचान्तं तु नाड्योऽष्टौ प्रसारिताः।

तेषामग्रैकवद्विप्र  मणिबन्धैकमावृतम्॥ २४॥

एकं वाऽनेकहस्तं वा हस्तं प्रत्येकमाचरेत्।

एवं हि प्रतिमानां तु मुख्यनाड्यष्टविंशतिः॥ २५॥

प्रधाननाडयस्त्वेवं कल्पयेत्कल्पवित्तमः।

तेषां भिन्नास्तथा विप्र चतुष्षष्टिश्च नाडयः॥ २६॥

तस्मादनेकधा नाडी सर्वांगं तु समावृताः।

द्विसप्तति सहस्राणि नाडयः परिकीर्तिताः॥ २७॥

स्वावृतं शूलजीर्णकाश्वत्थ पत्रवत्।

नालिकेरफलत्वग्म्यन्नत्यल्प सलिलान्वितम्॥ २८॥

चर्मसारं गृहीत्वा तु सारमन्यं व्यपोह्य च ।
नाडयस्तेऽपि संकल्प्य पश्चादावृतनाडिकाः ॥ २९ ॥

षड्यवं तु परीणाहं रज्जुमापादयेद्दृढम् ।
पश्चान्निरन्ध्रं रज्जुभ्यां बन्धयेद्दक्षिणा वृतम् ॥ ३० ॥

p. 368) हृत्पद्ममष्टपत्रं तु रज्जुना कारयेद्बुधः ।
तस्यनालं तु नाभ्यन्तं सुषुम्ना सहबन्धितम् ॥ ३१ ॥

जीवस्थानं तु तत्पद्मं इत्युक्तं हि मया तव ।
मूलमंत्रमनुस्मृत्य रज्जुबन्धमिदं कुरु ॥ ३२ ॥

रज्जुबन्धमिदं ख्यातं मृत्संस्कारमतः परम् ।

इत्यंशुमान्काश्यपे रज्जुबन्धविधानपटलः (पंचाशीतितमः) ॥ ८५ ॥

मृत्संस्कारमहं वक्ष्ये संक्षेपाच्छृणु सुव्रत ।
जांगलं चानुरूपं च समंशं मृत्त्रिधा भवेत् ॥ १ ॥

॥ षडाधारदलम् ॥

आधारन्तु चतुर्दलं रुणरसन् वासान्तवर्णाश्रियं
स्वाधिष्ठानमनेकवैद्युतनिभं बालान्न षट्वत्रिकम् ।
रक्ताभं मणिपूरकं दशदलं माद्यं विकाराब्धकं
पत्रैः द्वादशभिः स्वनाहतदहै मम रिमान्नाव्रतम् ॥

मात्राभिद्विदिशाषोडशस्वरयुतं ज्योतिर्विशुद्धाम्बुजं
हलैत्यक्षरबीजयुग्मसयुतं रक्ताभमाज्ञाम्बुजम् ।
तस्मादूर्ध्वगतं प्रभदिसितं पद्मं सहस्रश्छदं
नित्यानन्दमयं सदाशिवपदं नित्यान्नमस्योदरम् ॥ ६२ ॥

मूलाधारस्वाधिष्ठान मणिपूरकहनाहत विशुद्धाख्यै-

प् । ९७)

आज्ञायमिध ई मूलाधार विघ्नेश ध्यानम् ॥

गजवक्रश्च रक्ताभं त्रिणेत्रश्च महोदरम् ।
दन्तपाशाङ्कुशापूपं चारुबाहु चतुष्टयम् ॥

महादेव सुतं मूलं मन्त्रमूर्तिमहं भजे ॥ ६३ ॥

॥ स्वाधिष्ठानं ब्रह्माम् ॥

हेमाकारं चतुर्वक्त्रं शुभ्रवस्त्रोपवीतिनम् ।
सृगक्षमालाकलशं दण्डचारुचतुर्भुजम् ॥ ६४ ॥

नेत्राष्टक समायुक्तं नित्यं वन्दे पितामहम् ।

॥ मणिपूरकं विष्णु ॥

लक्ष्मीकान्तञ्च नीलाभं शङ्खञ्च मृगगदाधरम् ।
श्रीवत्सलाञ्छनं देवं पीताम्बर विराजितम् ॥

वनमालाकिरीटञ्च कुण्डले दधतस्सदा ।
अभयं सर्वदेवानां अम्बुजाक्षमनामयम् ॥ ६५ ॥

अनेकादित्य संकाशं वन्दे विष्णुमनिन्दितम् ।

॥ अनाहते रुद्र् ॥

क्षीराभं कालकण्ठञ्च त्रित्रें चन्द्रशेरम् ।
गङ्गाधरञ्चतुर्बाहुं त्रिशूलाग्नि वरदाभयम् ॥

ज्ञानमुद्रधरन्देवं गङ्गेन्द्रकृत किङ्किणाम् ।

पृ । ९८)

पुण्डरीकाञ्जनधरं भूतिशोभित विग्रहम् ।
प्रलयोदरकर्तारं वन्देरुद्रं पिनाकिनम् ॥ ६६ ॥

॥ विशुद्धाख्ये महेश्वरर् ॥

टङ्ककुन्देन्दुशोभाढ्यं शार्दूलाजिनवासिनम् ।
इन्दुगङ्गा जटाचूटं महेशाख्यं महेद्युतिम् ॥

अर्केन्दु वह्निनयनं कालकण्ठमनामयम् ।
चण्डांशुकोटिसदृशं सर्पयज्ञोपवीतिनम् ॥

वरदाभयपाशाढ्यं वामदक्षिणबाहुकम् ।
परशुं डमरुञ्चापि दधानञ्चात्मरूपिणम् ॥ ६७ ॥

वामे महेश्वरी युक्तं वन्दे देवमहेश्वरम् ।

॥ आज्ञेय सदाशिवम् ॥

शुद्धस्फटिकसंकाशं द्वात्रिंशल्लक्षणान्वितम् ।

वृक्तपद्मासिनं पञ्च * * वक्तं मनोहरम् ॥

त्रिपञ्चनयनश्चास्यं सोमचूडशुभावहम् ।
दशबाहसमायुक्तं चित्रकायजिनाम्बरम् ॥

वरदाभयसंयुक्तं वामदक्षिणहस्तकम् ।
शूलवज्रातथा खड्गं परशुं पाशमेव च ॥

नागं वह्निञ्च दधतं शान्तरूपिणम् ।



पञ्चावरणसंयुक्तं पञ्चकृत्य परायणम् ।
पञ्चाक्षरजपं देवं पञ्चमन्त्र महातनुम् ॥

अष्टत्रिंशत्कलोपेतं आदि मध्यान्तवर्जितम् ।
विद्यानामार्थि भक्तेशं बिन्दुनादसमन्वितम् ॥

सर्वालङ्कारसंयुक्तं षट्त्रिंशतत्त्वनायकम् ।
मनोन्मति समायुक्तं वन्दे देवं सदाशिवम् ॥ ६८ ॥

॥ सच्चिदानन्तम् ॥

षडाधारापरे मूर्ध्नी सहस्त्रदलपङ्कजे ।
गुरुनाथं कृपामूर्तिं जपाकुसुमसन्निभम् ॥

द्विनेत्रं द्विभुजं शान्तं रक्तवस्त्रानुलेपनम् ।
रक्तोत्पलधरं नित्यं माणिक्यमकुटोज्ज्वलम् ॥

तत्त्वाधिकपरं शक्तिं साक्षामूर्ति प्रदायकम् ।
सन्मार्गदेशिकं वन्दे सच्चिदानन्दविग्रहम् ॥ ६९ ॥

॥ नन्दिध्यानम् ॥

त्रिणेत्रश्चतुर्भुजश्चैवाभयं वरदान्वितम् ।
उग्रतोमरशूलञ्चाक्षमाला समन्वितम् ॥ ७० ॥

रक्तवस्त्रसमायुक्तं नन्दिनं संप्रपूजयेत् ।

॥ नन्दिकेश्वरध्यानम् ॥

प् । १००)

रक्तं त्रिणेत्रं जटिलं सव्यवामकरद्वयम् ।
अक्षमालात्रिशूलञ्च दधानं नन्दिकेश्वरम् ॥ ७१ ॥

*************************************************************************************
*********
* bhuuta"suddhitantram
* Transcribed by the staff of Muktabodha under the supervision of Mark S.G. Dyczkowski
*  from the edition by Chatterjee published in Calcutta end of 19th century.
*  Script Bengali
* revision 0 January 28, 2007
* Velthius transliteration
*************************************************************************************
*********************

# भूतशुद्धितन्त्रे

## प्रथमः पटलः

श्रीदेवी उवाच

देव देव महादेव साम्प्रतं कथय प्रभो ।

भूतशुद्धिं देहशुद्धिं प्राणायामं ततः परम् ॥ १ ॥

क्रमेण कथ्यतां देव शूलपाणे पिणाकधृक् ।

मन्त्रं यन्त्रं महादेव येन शुध्यति भूतले ॥ २ ॥

श्री-ईश्वर उवाच

कथयामि वरारोहे खञ्जनाक्षि शुचिस्मिते ।

तत्त्वत्रयं प्रवक्ष्यामि गुह्याद् गुह्यतरं महत् ॥ ३ ॥

तत्त्वत्रयं विना देवि  सिद्धिविद्यां जपेत् तु यः ।

तस्य सर्वार्थहानिः स्याज्जपं च विफलं प्रिये ॥ ४ ॥

भूतशुद्धिं महेशानि  न्यासं परमदुर्लभम् ।

प्राणायामं ततः कुर्यात् तत्त्वत्रयमिदं स्मृतम् ॥ ५ ॥

सर्वं कुर्यान्महेशानि  मातृकाक्षरसंयुतम् ।

अकारादिक्षकारान्तां मातृकाक्षररूपिणीम् ॥ ६ ॥

वैदिकं तान्त्रिकं स्नानं कृत्वा सन्ध्यामुपाश्रयेत् ।

आगत्य देवदेवेशि  यागमण्डलसनीधिम् ॥ ७ ॥

अन्तःस्नानं ततः कृत्वा अन्तःसन्ध्यामुपाश्रयेत् ।

अन्तःस्नानं च सन्ध्यां च कथयामि शृणु प्रिये  ॥ ८ ॥

गुरुध्यानं प्रथमतस्ततः स्नानं समाचरेत् ।

प्रणवेन महेशानि  जीवं धृत्वा शुचिस्मिते ॥ ९ ॥

मूलाधारात् समाकृष्य द्वादशार्णं नयेत् सुधीः ।

स्नायाच्च विमले तीर्थे पुष्करे हृदयान्विते ॥ १० ॥

मूलाधारात् महेशानि सह स्त्रदलमानयेत् ।

सङ्गं परशिवे कृत्वा आनन्द उपजायते ॥ ११ ॥

तेनानन्देन देवेशि स्नायाज्जीवमनाहते ।

ततस्तु परमेशानि अजपां प्राणरूपिणीम् ॥ १२ ॥

अष्टोत्तरशतं जप्त्वा स्नातो भवति पार्वति ।

अन्तःसन्ध्यां महेशानि कुरु यत्नेन पार्वति ॥ १३ ॥

शिवशक्तिसमायोगो यस्मिन् काले प्रजायते ।

सा सन्ध्या कुलसाधूनां समाधिस्थः प्रतीयते ॥ १४ ॥

एवं तु ते महेशानि सन्ध्यापूतो भवेद् ध्रुवम् ।

श्रीदेवी उवाच

अजपां परमेशान कथ्यतां मे दयानिधे ॥ १५ ॥

श्री-ईशवर उवाच

शृणु वक्ष्यामि देविशि  गुह्याद् गुह्यतरं प्रिये ।

ध्यानमस्याः प्रवक्ष्यामि यथा ध्यात्वा जपेन्नरः ॥ १६ ॥

हंसं नित्यमनन्तमक्षयगुणं स्वाभावतो निर्गता ।

यान्ती स्वाश्रयमर्ककोटिरुचिरा ध्येया जगन्मोहिनी
इति ध्यानं महेशानि कृत्वा समारभेत् जपम् ।

षट्चक्रं मध्यगं कृत्वा अजपां परमाक्षराम् ॥ १७ ॥

शिवबीजं समुद्धृत्य भृगुबीजं ततः परम् ।

बिन्द्वर्द्धं चन्द्रसंयुक्तं कुरु यत्नेन सुन्दरि  ॥ १८ ॥

एषा विद्या वरारोहे  चातुर्वर्णेषु शस्यते ।

एतज्जपं विना देवि भूतशुद्धिश्च निष्फला ॥ १९ ॥

तस्मादादौ जपेद् विद्यामजपां प्राणरूपिणीम् ।

अष्टोत्तरशतं जप्त्वा भूतशुद्धिं समाचरेत् ॥ २० ॥

षट्चक्रदलसंस्थाने यानि वर्णानि पार्वति ।

तानि सर्वाणि देवेशि जीवं संन्यस्य पार्वति ॥ २१ ॥

भूतशुद्धिं महेशानि यत्नतः समुपास्महे ।

मूलाधारान्महेशानि मूलपद्मं शुचिस्मिते ॥ २२ ॥

चतुर्दलयुतं मूलं दशवर्णेन संयुतम् ।

रक्तवर्णं सदा सेव्यं योगिभिः परमेश्वरि ॥ २३ ॥

त्रिकोणं सुन्दरं शुद्धं पृथ्वीबीजं तु मध्यगम् ।

तन्मध्ये भावयेद् देवं शिवं श्यामलसुन्दरम् ॥ २४ ॥

अत्र कुण्डलीनी देवि परं प्रकृतिरूपिणी ।

शिवं वेष्ट्य महेशानि  सर्वदा तत्र तिष्ठति ॥ २५ ॥

प्रसुप्तभुजगाकारं विद्युत्कोटिनिभां पराम् ।

ब्रह्मविष्णुस्तुतां देवीं कुण्डलीं ब्रह्मरूपिणीम् ॥ २६ ॥

मूलाधारे मनो देवि विन्यस्य भावयेत् सदा ।

चतुर्दलयुतं वर्णं तारणं विघ्ननाशनम् ॥ २७ ॥

बिन्द्वर्धसंयुतं कृत्वा दशधा प्रजपेत् ततः ।

अजपानां महेशानि  चतुर्दलगतं कुरु ॥ २८ ॥

स्वाधिष्ठाने ततो नीत्वा पुष्पहंससमन्वितम् ।

तत्पुरीं च महेशानि  नीरेण परिपूरितम् ॥ २९ ॥

मूलाधारं यथा पृथ्व्या शोभते परमेश्वरि ।

नीरेण शोभितं देवि  स्वाधिष्ठानं शुचिस्मिते ॥ ३० ॥

षडङ्गविद्युदाधारं षडक्षरसमन्वितम् ।

व - भ - म - य - र - लैर्युक्तं कुन्दपुष्पसमन्वितम् ॥ ३१ ॥

स्वाधिष्ठानस्थितं देवि शिवं सर्वज्ञभावनम् ।

मूलाधारात् समुत्थाप्य कुण्डलीं ब्रह्मरूपिणीम् ॥ ३२ ॥

नीत्वा मणिपुरं देवि  तद्वर्णं जपमाचरेत् ।

बिन्द्वर्धसंयुतं कृत्वा शोभितं शिवमर्चयेत् ॥ ३३ ॥

तत्रैव परमेशानि  षडक्षरजपं कुरु ।

षट्पापं नाशयेद् देवि  तत्क्षणात् परमेश्वरि ।

षड्दलं षड्गुणं देवि  गुदं च चतुरङ्गुलम् ॥ ३४ ॥

॥ इति श्रीभूतशुद्धितन्त्रे हरगौरीसंवादे प्रथमः पटलः ॥ १ ॥

अथ द्वितीयः पटलः

ततस्तु प्रमेशानि  मणिपूरं विभिद्यते ।

वायुं च तत्र वै नीत्वा मनसा परमेश्वरि ॥ १ ॥

समानं संयुतं कुर्यादपानं परमेश्वरि  ।

ततो ब्रह्मनदीं भित्त्वा वायुर्मणिपुरं ययौ ॥ २ ॥

तत्रस्थं शिवलिङ्गं तु नीलनीरदसन्निभम् ।

तत्पात्रं कृष्णवर्णं च अक्षरं कृष्णरूपकम् ॥ ३ ॥

तन्मध्यस्थं महादेवं सर्वदेवादिकारणम् ।

मणिपूरं महेशानि  महामरकतप्रभम् ॥ ४ ॥

शिवं सम्भाव्य देवेशि  दशवर्णं मनुं जपेत् ।

डकारादिककारान्तं बिन्द्वर्धसंयुतं कुरु ॥ ५ ॥

दशपत्रस्थितं वर्णं पूर्वादिक्रमतो जपेत् ।

दशपत्रं कृष्णवर्णं अक्षरं कृष्णरूपकम् ॥ ६ ॥

तन्मध्यस्थं महादेवं सर्वदेवादिकारणम् ।

दशाक्षरजपाद् देवि दशजन्माघनाशदम् ॥ ७ ॥

ततो वायुर्महेशानि  अनाहतपुरीं ययौ ।

आदित्यपत्रसंयुक्तं वर्णैर्द्वादशभिर्युतम् ॥ ८ ॥

तत्पत्रं परमेशानि  वर्णं च शुक्लरूपकम् ।

कादिठान्ताक्षरैर्वर्णैः शोभितं परमाक्षरम् ॥ ९ ॥

हृत्पद्मं परमेशानि शुद्धसत्त्वात्मकं सदा ।

प्रदीपकलिकाकारं तन्मध्ये ब्रह्मरूपिणम् ॥ १० ॥

वेष्टितं द्वादशवर्णैः सर्वशक्तिमयं प्रिये ।

सम्मुखे तस्य देवेशि  जीवस्तिष्ठति सर्वदा ॥ ११ ॥

तत्र जीवो महेशानि सदा तिष्ठति पार्वति  ।

वायुं तेजोयुतं जीवं दृष्ट्वा मनोलयं कुरु ॥ १२ ॥

आत्मरूपं वायुरूपं निरीहं निर्मलं सदा ।

यकारस्याष्टसंबीजं जीवं हेमप्रभं सदा ॥ १३ ॥

तत्रादित्याक्षरं देवि बिन्द्वर्धसंयुतं कुरु ।

कृत्वा जपं महेशानि  यत्नेन कुरु सुन्दरि ॥ १४ ॥

जन्मभिश्च द्वादशभिर्देवि यत् [कृतम्] पापमर्जितम् ।

तत्सर्वं नाशयत्येव तत्क्षणात् परमेश्वरि ॥ १५ ॥

एवं हि मरुतो भित्त्वा विशुद्धं प्रतिगच्छति ।

विशुद्धं निर्मलं शुद्धं षोडशस्वरसंयुतम् ॥ १६ ॥

धूम्रवर्णं महेशानि  विशुद्धाख्यं मनोहरम् ।

तस्य मध्ये स्थितं देवि आकाशं शक्तिरूपिणम् ॥ १७ ॥

क्रमाज्जीवं कुण्डलिन्या प्रणवेण समाहरेत् ।

मनस्तत्र महेशानि  सारथिः सर्वतः सदा ॥ १८ ॥

सर्वं मनसि कर्तव्यं भूतशुद्ध्यादिकं प्रिये  ।

स्वरं च षोडशं देवि बिन्द्वर्धसंयुतं कुरु ॥ १९ ॥

ततस्तु परमेशानि  जपेत् षोडशमक्षरम् ।

पूर्वादिक्रमतो देवि दशधा प्रजपेत् प्रिये ॥ २० ॥

जन्मभिः षोडशभिर्यत् तु (कृतं) पापं शुभाशुभम् ।

दहेत् तस्य जपाद् देवि तृणं वह्निर्यथा दहेत् ॥ २१ ॥

ततो वायुं महेशानि  द्रुतमाज्ञापुरीं नयेत् ।

तत्पुरीं परमेशानि द्विदलं युगवर्णकम् ॥ २२ ॥

वर्णं हेमप्रभं देवि  पुरीं चन्द्रप्रभं सदा ।

बिन्द्वर्धसंयुतं कृत्वा साधको जपमाचरेत् ॥ २३ ॥

मनःसारथिना देवि  जीवं कुण्डलिनीं प्रिये ।

आज्ञां पुरीं नयेत् शीघ्रं मनो मनसि भावनम् ॥ २४ ॥

मनसः परमेशानि  आज्ञापुर्यां स्थितिः सदा ।

गुरोराज्ञाधारणात् तु आज्ञापुरमिमं स्मृतम् ॥ २५ ॥

सदाशिवपुरद्वारं गवाक्षं परमेश्वरि  ।

एवं प्रपञ्चं भित्त्वा वै कुण्डलीं जीवसंयुताम् ॥ २६ ॥

मनःसारथिना देवि सदाशिवपुरं नयेत् ।

पञ्चप्राणसमायुक्ता चतुर्विंशतिसंयुता ॥ २७ ॥

इन्द्रियाणि दशैकं च महाभूतानि पञ्च च ।

बुद्ध्यहङ्कारचित्तानि नयेत् शिवपुरं प्रति ॥ २८ ॥

सहस्रारे ततो नीत्वा मनसा योजयेत् सदा ।

श्रीदेवी उवाच

तत्र गत्वा महेशान कुण्डली किमकरोत् प्रभो ॥ २९ ॥

श्री-ईश्वर उवाच

चतुर्विंशतितत्त्वेन पञ्चप्राणेन सुन्दरि ।

इन्द्रियैरक्षरैर्देवि  एकत्वं जायते यदा ॥ ३० ॥

तत्र देवि महेशानि कुण्डलीं भावतत्पराम् ।

पूर्वोक्तध्यानमार्गेण परां तत्र विभावयेत् ॥

सर्वात्मसम्पुटं देवि  सर्वविद्याभिधारणम् ॥ ३१ ॥

इति श्रीभूतशुद्धितन्त्रे हरगौरीसंवादे द्वितीयः पटलः ॥ २ ॥

अथ तृतीयः पटलः

श्री-ईश्वर उवाच

शृणु पार्वति  वक्ष्यामि रहस्यं परमाद्भुतम्।

गुह्याद् गुह्यतरं देवि सुगोप्यं भुवनत्रये॥ १॥

ब्रह्मरन्ध्रे सहस्रारे यत्र देवः सदाशिवः।

संवेष्ट्य परमा देवी यत्रास्ते परमेश्वरि ॥ २॥

कुण्डलीं योजयेत् तत्र एकत्वं जायते तदा।

अकारादिक्षकारान्ताः सर्वबीजे नियोजयेत्॥ ३॥

आदौ मनसि देवेशि  प्राणविद्यां वरानने।

प्रजप्य दशधा देवि  कुण्डलीं परमां व्रजेत्॥ ४॥

पुरीं शक्तिमयीं देवि नित्यानन्दमयं सदा।

सहस्रदलसंयुक्तं पद्मं नित्यागमं प्रिये ॥ ५ ॥

पद्ममध्ये महेशानि  पुरीं शक्तिमयीं प्रिये ।

सदाशिवो महेशानि  यत्रास्ते परमेश्वरि ॥ ६ ॥

शुद्धतत्त्वादिकं देवं निर्मलं निश्चलं सदा ।

शिवं प्राप्य महेशानि  कुण्डली शिवसन्निधौ ॥ ७ ॥

शिवस्य मुखपद्मं हि चुचुम्बे कुण्डली प्रिये ।

सर्वत्र सम्पुटं दत्त्वा मोहयेत् परमं शिवम् ॥ ८ ॥

सदाशिवः शिवस्तत्र शान्तो भवति सुप्रिये ।

पद्ममध्ये स्थितं देवं निरीहं शवरूपवत् ॥ ९ ॥

शवरूपो महादेवो हृद्यो नास्ति कदाचन ।

शक्तिसंयोगमात्रेण कर्मकर्ता स उच्यते ॥ १० ॥

तस्मात् तत् परमेश्वानि  शक्तेः प्राधान्यमुच्यते ।

शक्तिं विना महेशानि न किञ्चिदपि वर्तते ॥ ११ ॥

सदाशिवो महाप्रेतः केवलं निश्चयं प्रिये ।

सदाशिवपुरं देवि वैकुण्ठं परमं पदम् ॥ १२ ॥

सदाशिवपुरं गत्वा कुण्डली परदेवता ।

सदाशिवेन च समं क्षणमात्रं रमेत् प्रिये  ॥ १३ ॥

सदाशिवेन देवेशि सङ्गमं जायते प्रिये ।

अमृतं जायते देवि तत्क्षणात् परमेश्वरि ।

तेनामृतेन देवेशि षट्चक्रं प्लावयेत् क्रमात् ॥ १४ ॥

श्री-ईश्वर उवाच

शृणु पार्वति  वक्ष्यामि रहस्यं भुवि दुर्लभम्।

गुह्याद् गुह्यतरं रम्यं त्रिषु लोकेषु दुर्लभम्॥ १५॥

अपानमूर्ध्वगं कृत्वा दिव्यमर्थं प्रपूर्य च।

प्राणमन्त्रेण देवेशि  शक्तिं कुण्डलिनीं पराम्॥ १६॥

क्रमाच्चक्राणि निर्भिद्यं जीवात्मानमनोहरात्।

सहस्रारे शिरःपद्मे परे ब्रह्मणि योजयेत्॥ १७॥

बुद्ध्यहङ्कारचित्तानि तत्त्वानि प्रकृतिर्वपुः।

तस्मात् सर्वाणि तत्त्वानि बीजरूपेण भावयेत्॥ १८॥

ततः शून्ये शरीरे च कुक्षौ वामे विचिन्तयेत्।

सर्वपापात्मकं क्रूरं पुरुषं पिङ्गमूर्धजम्॥ १९॥

ततो नाभौ वायुबीजं धूम्रं सञ्चिन्त्य तज्जपेत्।

दशधा वायुमुत्पाद्य वपुः पापं विशोधयेत्॥ २०॥

स पापं तु ततो मन्त्री हृदये वह्निबीजकम्।

रक्तं विभाव्य दशधा तज्जपाच्च हुताशनम्॥ २१॥

समुत्पाद्य दहत्येनं सपापं तद्वपुः प्रिये।

ललाटे वारुणं बीजं शुद्धं सञ्चिन्त्य तज्जपात्॥ २२॥

दशधामृतविष्टिन्तु समुत्पाद्य शुचिस्मिते।

सर्वव्यथाविनिर्मुक्तं जातं दिव्यवपुस्ततः॥ २३॥

निष्पापं प्लावयेत् तस्मात् तथा भावेन तत्परः।

अवगत्य धराबीजं मूलाधारे विचिन्तयेत् ॥ २४ ॥

दशधा तज्जपाद् देवि  पृथ्वीमुत्पाद्य सुन्दरि ।

ततः सर्वाणि बीजानि तत्त्वानि च शुचिस्मिते ॥ २५ ॥

यथास्थाने न्यसेद् बीजं आज्ञाचक्रात् शुचिस्मिते ।

आज्ञादिगुणपद्मान्तं संस्थाप्य परमेश्वरि  ॥ २६ ॥

क्रमं तस्य प्रवक्ष्यामि सावधानाऽवधारय ।

एतद् रहस्यं परमं सदा मम हृदि स्थितम् ॥ २७ ॥

यन्मन्त्रसहितं देवि क्रमात् सुन्दरि तत् शृणु ।

बीजं कुण्डलिनीं देवि आज्ञाचक्रं समानयेत् ॥ २८ ॥

तस्मिन् चक्रे महेशानि आत्मा मनःसमन्वितः ।

पञ्चाशन्मातृकामन्त्रं दशधा प्रजपेत् प्रिये ॥ २९ ॥

तत्र युग्मकलां ध्यात्वां मूलमन्त्रेण तर्पयेत् ।

लम्बयेत् परमेशानि जीवं कुण्डलिनीसह ॥ ३० ॥

मनसा संयुतं कृत्वा विशुद्धौ लम्बयेत् प्रिये ।

तच्चक्रे परमेशानि मातृकावर्णमुत्तमम् ॥ ३१ ॥

प्रजपेद् दशधा देवि मनःसारथिना प्रिये ।

सर्वं हि मनसा कार्यं मनः सर्वार्थसाधकम् ॥ ३२ ॥

तत्रस्थां षोडशकलां मूलमन्त्रेण तर्पयेत् ।

लम्बयेत् प्रणवैर्देवि पुरीं[प्रति]ध्वनिमयीं प्रति ॥ ३३ ॥

तत्रस्थं देवदेवेशं महादेवं च तर्पयेत् ।

प्रणवेन तु मन्त्रेण तर्पयेत् शिवरूपिणम्॥ ३४॥

तत्रस्थां द्वादशकलां तडित्कोतिसमप्रभाम्।

तर्पयेत् मूलमन्त्रेण मातृकाजपपूर्वकम्॥ ३५॥

लम्बयेत् मणिपूरे च शिवं तत्र प्रतर्पयेत्।

तत्रस्थां दशकलां देवि  मूलमन्त्रेण तर्पयेत्॥ ३६॥

मातृकां प्रथमे जप्त्वा तर्पयेत् परमां कलाम्।

तदधः परमेशानि  स्वाधिष्ठानेषु लम्बयेत्॥ ३७॥

स्वाधिष्ठानं महेशानि  शुक्लं हीरकसन्निभम्।

तत्रस्थं शिवदेवं च मूलमन्त्रेण तर्पयेत्॥ ३८॥

मूलमन्त्रं महेशानि  प्रासादं परमं शिवम्।

तत्रस्थां षट्कलां दिव्यां मायाबीजेन तर्पयेत्॥ ३९॥

मूलाधारं ततो नीत्वा बीजं कुण्डलिनीसह।

मनःसारथिना देवि  शिवं सम्भाव्य यत्नतः॥ ४०॥

तर्पयेन्मूलमन्त्रेण प्रासादेन शिवं प्रिये  ।

ततो युगकलां नित्यां मूलमन्त्रेण तर्पयेत्॥ ४१॥

मातृकां दशधा जप्त्वा शिवं सन्तोषयेत् सदा।

स्वस्थानं प्राप्य देवेशि  कुण्डली परदेवता॥ ४२॥

ब्रह्मविष्णुशिवयुता विषतन्तुतनीयसीम्।

जवासिन्दूरसङ्काशामुद्यद्भास्करसन्निभाम्॥ ४३॥

शिवस्य युवतीं योग्यां वह्निरूपधरां प्रिये  ।

ततस्तु परमेशानि  जीवं पुष्करमानयेत्॥ ४४॥

हृदिस्थं पुष्करं पद्मं जीवस्थां सदा स्मृतम्।

ब्रह्मस्थानं च तद् देवि  सूर्यमण्डलसन्निभम्॥ ४५॥

शब्दब्रह्म परं ब्रह्म शब्दास्तिष्ठन्ति तत्र वै।

प्रदीपकलिकाकारं शब्दब्रह्म शुचिस्मिते॥ ४६॥

प्रदीपकलिकाकारं जीवं च परमेश्वरि ।

शब्दब्रह्म परं ब्रह्म शक्तियुक्तं सदा प्रिये ॥ ४७॥

जलसूर्याग्निचन्द्रेषु शक्तिः सर्वत्र वर्तते।

शक्तिः सर्वेषु देवेषु देवीषु च शुचिस्मिते॥ ४८॥

शक्तियुक्तं जायते सर्वं यो न जानाति पामरः।

प्रेतलोकं स गत्वा वै शूकरत्वं प्रजायते ॥ ४९ ॥

॥ इति श्रीभूतशुद्धितन्त्रे हरपार्वतीसंवादे तृतीयः पटलः ॥ ३ ॥

अथ चतुर्थः पटलः

श्री-ईश्वर उवाच

नाभिमध्ये तु वामा च ज्येष्ठा च हृदि संस्थिता ।

रौद्री च परमेशानि  सदा शिरसि संस्थिता ॥ १ ॥

वामा ब्रह्मा महेशानि  ज्येष्ठा च विष्णुरीरिता ।

रौद्री रुद्रं तु विज्ञेया बिन्दुत्रयमितीरिता ॥ २ ॥

ब्रह्मा विष्णुश्च रुद्रश्च सदा प्रकृतिरूपिणी ।

बिन्दुना परमेशानि  कर्मकर्ता सदा प्रिये ॥ ३ ॥

ब्रह्मविष्णुमहेशानां बिन्दुबीजं शुचिस्मिते ।

बिन्दुना जायते सृष्टिः पालनं च शुचिस्मिते ॥ ४ ॥

बिन्दुना हरते सृष्टिं क्रमतः परमेश्वरि ।

बिन्दुं विना महेशानि सकलं प्रेतवत् प्रिये ॥ ५ ॥

अतः परं प्रवक्ष्यामि रहस्यं परमाद्भुतम् ।

मूलाधारे महेशानि त्र्यक्षरीं दशधा जपेत् ॥ ६ ॥

त्र्यक्षरीं शृणु देवेशि सावधानाऽवधारय ।

शिवबीजं समुद्धृत्य पृथ्वीबीजपुटं कुरु ॥ ७ ॥

बिन्द्वर्धसंयुतं कृत्वा साधको जपमारभेत् ।

हृत्पद्मे रञ्जितशिवा समुद्धृत्य शुचिस्मिते ॥ ८ ॥

शिवबीजे पुटीकृत्य बिन्द्वर्धसंयुतं कुरु ।

ललाटे परमेशानि  रलबीजं समुद्धर ॥ ९॥

कलावती पुटीकृत्वा बिन्द्वर्धसंयुक्तं कुरु ।

एता विद्या महेशानि  भूतशुद्धेस्तु कारणम् ॥ १० ॥

श्रीदेवी उवाच

कथ्यतां देवदेवेश  ज्ञानचक्षुस्तपोमयम् ।

कृपया कथयेशान  यद्यहं तव वल्लभा ॥ ११ ॥

वामपार्श्वे स्थितं देवं संदह्य परमेश्वर  ।

जीवः शुद्धात्मको भूत्वा मनसा परमेश्वर ॥ १२ ॥

पूजयेदिष्टदेवं च जपेद् विद्यां प्रसन्नधीः ।

पुनस्तु पुरुषं पापं कथमुत्पद्यते तथा ॥ १३ ॥

एतत्तु संशयं देव हृदये शाल्यवन्मम ।

संशयं मे महादेव  छिन्धि देव दयानिधे ॥ १४ ॥

श्री-ईश्वर उवाच

शृणु कमलपत्राक्षि  रहस्यं परमाद्भुतम् ।

शोषणैर्दहनैर्देवि  पुरुषं पापरूपकम् ॥ १५ ॥

संदह्य परमेशानि  पुनरुत्पद्यते सदा ।

इडा तु वामदेशे हि सदा तिष्ठति पार्वति ॥ १६ ॥

वामनाड्या कृतं पापं वामकुक्षौ स्थितं प्रिये ।

नाडीसंयोगमात्रेण पापमूलं निकृन्तति ॥ १७ ॥

अत एव महेशानि  पुरुषं कृष्णमूर्धजम् ।

पुनरुत्पद्यते देवि  जपपूजाविधेरनु ॥ १८ ॥

शृणु कमलपत्राक्षि  रहस्यं हृदये स्थितम् ।

दहन्तं शेषपापं च नाशनं यदि चेच्छसि ॥ १९ ॥

तत् पापस्यापनोदे च विद्यामेनां जपं कुरु ।

कामनया तथा देवि  मन्मथं परमेश्वरि ॥ २० ॥

अष्टोत्तरशतं जप्त्वा तस्मात् पापाद् विमुच्यते ।

मनो जीवात्मनोः शुद्धिः प्राणयामेन सुन्दरि ॥ २१ ॥

एतत् शुद्धिर्महेशानि सर्वतन्त्रेषु शस्यते ।

सर्वेषु विष्णुमन्त्रेषु शिवमन्त्रे गणाधिपे ॥ २२ ॥

शक्तौ सूर्ये महेशानि  अन्यदेवगणेषु च ।

एवं ते कथितं देवि  रहस्यं परमाद्भुतम् ॥ २३ ॥

आधारं पृथ्वीतत्त्वं वै स्वाधिष्ठानं जलं प्रिये ।

मणिपुरम् अग्नितत्त्वं वायुतत्त्वमनाहते ॥ २४ ॥

कण्ठे च परमेशानि  शून्यतत्त्वं सदा स्मृतम् ।

मनस्तत्त्वं तदूर्ध्वं च मनः सर्वत्र व्यापकम् ॥ २५ ॥

विभुत्वाद् व्यापकत्वाच्च साक्षाद् बिन्दुमयं मनः ।

यावस्ति परमेशानि भूतशुद्ध्यादि यानि च ॥ २६ ॥

तानि सर्वाणि देवेशि  मनसैव प्रणीयते ।

सर्वगामी सर्ववेत्ता सर्वसाक्षी सदा मनः ॥ २७ ॥

पापपुण्ये महेशानि रक्षकं स्यात् मनः प्रिये ।

मनसा वाक्यमुत्पन्नं मनसैव प्रणीयते ।

मन्त्रं विद्या महेशानि  मनसा जपमाचरेत् ॥ २८ ॥

॥ इति श्रीभूतशुद्धितन्त्रे हरपार्वतीसंवादे चतुर्थः पटलः ॥ ४ ॥

अथ पञ्चमः पटलः

श्री-ईश्वर उवाच

मनसा जीवन्संयुक्तः कर्मकर्ता सदा प्रिये ।

मनः प्रविभवे देवि  उन्मनीसहिता यतः ॥ १ ॥

उन्मनी च महेशानि  भवपापनिकृन्तनी ।

जीवस्य परमेशानि  गुप्ततत्त्वं शृणु प्रिये ॥ २ ॥

मूलाधारे स्थितं जीवं प्रदीपकलिकाकृतिम् ।

प्रणवेन समाकृष्य द्वादशान्तं लयेत् सुधीः ॥ ३ ॥

आकाशे च महेशानि  सुखमोक्षमवाप्नुयात् ।

हृत्पद्मे च महेशानि परं ब्रह्म निरीक्षणम् ॥ ४ ॥

आज्ञायां परमेशानि प्रथमं गुरुदर्शनम् ।

मणिपूरं ततो गत्वा स्नापयेन्मनसा सह ॥ ५ ॥

स्वाधिष्ठानं ततो गत्वा अग्निस्पर्शं समाचरेत् ।

ततो जीवं महेशानि  मूलाधारं लयेत् प्रिये ॥ ६ ॥

मनःसारथिना देवि  उन्मनी भवनाशिनी ।

संहत्य सदसत्कर्म जीवः सर्वं करोति हि ॥ ७ ॥

शुद्धसत्त्वात्मको जीवः सदसत्कर्मवर्जितः ।

वामपार्श्वे स्थितं पापं पुरुषेण यदा प्रिये ॥ ८ ॥

संयोगो जायते तत्र असत्कर्म तदाऽकरोत् ।

पापस्य परमेशानि  संयोगो यदि जायते ॥ ९ ॥

मनसा जीवसंयोगात् सत्कार्यं कुरुते तदा ।

शुद्धसत्त्वात्मको जीवस्तस्य कार्यं कुतः प्रिये ॥ १० ॥

मनश्च परमेशानि उन्मनी संयुता यदि ।

जीवस्य वामपार्श्वे तु तदा तिष्ठति पापधृक् ॥ ११ ॥

दक्षिणे परमेशानि मनश्च उन्मनी यतः ।

उन्मज्जन्ति निमज्जन्ति प्रपञ्चेषु शुचिस्मिते ॥ १२ ॥

उन्मनीकरणं देवि  दशासु परमेश्वरि ।

जाग्रत्स्वप्नसुषुप्त्यवस्थां चापि परमेश्वरि ॥ १३ ॥

सुषुम्नान्तर्गता चित्रा चन्द्रकोटिसमप्रभा ।

तत्र कुण्डलिनी देवि यातायातं करोति हि ॥ १४ ॥

कदाचित् मासि तं पद्मं कदाचित् रक्तपङ्कजम् ।

कदाचित् शुक्लपद्मं हि वह्निपद्मं कदा प्रिये ॥ १५ ॥

भित्वा पुरीं याति पुनरायाति कुण्डली सदा ।

प्रपञ्चानां महेशानि  देवानुचरमुत्तमम् ॥ १६ ॥

कथयामि महेशानि सर्वतन्त्रेषु गोपितम् ।

यज्ज्ञात्वा साधको देवि सर्वसिद्धिमवाप्नुयात् ॥ १७ ॥

धर्मार्थकाममोक्षाणां फलभाग् वैष्णवो यतः ।

तव स्नेहान्महेशानि  निगदामि शुचिस्मिते ॥ १८ ॥

ब्रह्माणी चण्डिका रौद्री गौरीन्द्राणी तथैव च ।

कौमारी वैष्णवी दुर्गा नारसिंही च कालिका ॥ १९ ॥

शिवदूती च वाराही माहेशी कौशिकी तथा ।

शाङ्करी च जयन्ती च विशुद्धपद्मसंस्थिता ॥ २० ॥

मङ्गला कपालिका चैव मेधा च शिवरूपिका ।

शाकम्भरी च भीमा च गाण्डा च भ्रामरी तथा ॥ २१ ॥

रुद्ररुपिण्यम्बिका च क्षमा च वह्निरूपिणी ।

एतास्तु परमेशानि  हृत्पद्मे संस्थिताः सदा ॥ २२ ॥

धात्री च वह्निरूपा च मध्यमा च शुचिस्मिते ।

अपर्णा च महेशानि तथा वामा महोदरी ॥ २३ ॥

घोररूपा महाकाली तथा चैव भयङ्करी ।

क्षेमङ्करी च देविशि मणिपूरे स्थिता सदा ॥ २४ ॥

उग्रचण्डा च देवेशि तथा चण्डावती प्रिये ।

चण्डा चैव प्रचण्डा च चण्डनायकसेविता ॥ २५ ॥

चण्डिका चैव देवेशि स्वाधिष्ठाने स्थिता सदा ।

महादेवी महेशानि तथैव मोहरुपिणी ॥ २६ ॥

तथा प्रियङ्करी चैव तथा चैव सनातनी ।

एतास्तु परमेशानि मूलाधारे स्थिताः सदा ॥ २७ ॥

फलविकरिणीरूपा बलप्रमथिनी तथा ।

अक्षरं युगलं देवि आज्ञाचक्रे स्थिता सदा ॥ २८ ॥

अस्यास्तु परमेशानि विशेषं शृणु पार्वति ।

एतज्ज्ञानं महेशानि सदाशिवव्यवस्थितम् ॥ २९ ॥

अस्य ज्ञानप्रभावेण संहरामि जगत् त्रयम् ।

स्थितिकर्ता भवेद् विष्णुर्ब्रह्मा सृष्टिकरं सदा ॥ ३० ॥

यस्य यस्य च देवेशि  यद् बीजं पूर्वसूचितम् ।

तद्बीजे पुटितं कृत्वा देवानां जपमाचरेत् ॥ ३१ ॥

भूतशुद्धिस्तदा देवि  सिद्धो भवति पार्वति ।

अन्यथा प्रेतवच्छुद्धिर्जायते कमलेक्षणे ॥ ३२ ॥

पञ्चाशन्मातृणां देवि षट्चक्रे क्रमतो जपेत्।

षट्चक्रे परमेशानि  यत्नतो जपमाचरेत्॥ ३३॥

तदैव महती सिद्धिः साधकस्यापि जायते।

कलावृक्षे समो भूत्वा साधकः खेचरो भवेत्॥ ३४॥

अणिमादिगुणाधारं तथा भवति साधकः।

अणिमा सूक्ष्मरूपं च लघिमा स्थूलरूपकम्॥ ३५॥

सर्वैश्वर्यपदप्राप्तिं प्राप्तिं परममुच्यते।

मनःक्लेशकरं चैव प्राकाश्यं कमलानने॥ ३६॥

महिमा सर्वलोकेषु गीयते कमलानने।

तदैव महिमा देवि  मम ज्ञानेषु वर्तते॥ ३७॥

ब्रह्माण्डव्यापकं रूपं ईशित्वं च प्रकीर्तितम् ।

ब्रह्माण्डवशरूपं च वशित्वं कथितं प्रिये ॥ ३८ ॥

कन्दर्पध्वंसजननमेतत् कामवशायिता ।

अणिमादिगुणं देवि तव भक्त्या प्रकाशितम् ॥ ३९ ॥

न कस्मैचित् प्रवक्तव्यं तव योनिं यथा प्रिये ।

शृणु देवि प्रवक्ष्यामि भूतशुद्धेस्तु कारणम् ॥ ४० ॥

-महेशानि अष्टोत्तरशतं जपेत् ।

तारं व्योमाग्नि गुण्डी तथा ज्योतिर्मनुः स्मृतः ।

एतज्ज्ञानप्रभावेण भूतशुद्धेः फलं भवेत् ॥ ४१ ॥

॥ इति श्रीभूतशुद्धितन्त्रे हरपार्वतीसंवादे पञ्चमः पटलः ॥ ५ ॥

## अथ षष्ठः पटलः

श्री-ईश्वर उवाच

शृणु ज्ञानं महेशानि  विशेषं कथयामि ते ।

यज्ज्ञात्वा परमेशानि शिवोऽहं मृत्युनाशकः ॥ १ ॥

यज्ज्ञात्वा परमेशानि  ब्रह्मा सृष्टिकरः सदा ।

यज्ज्ञात्वा विष्णुदेवश्च स्थितिकर्ता शुचिस्मिते ॥ २ ॥

यज्ञात्वा तु महेशानि  नाशकोऽहं महेश्वरि ।

चन्द्रः सूर्यो महेशानि यज्ज्ञात्वा परमेश्वरि ॥ ३ ॥

प्रकाशं कुरुते विश्वं ब्रह्माण्डं सचराचरम् ।

अव्यक्तरूपिणीं रम्यां योगगम्यां सदा प्रिये ॥ ४ ॥

सदा शरीरमाश्रित्य वसते कामरूपिणी।

शरीरं द्विविधं देवि  स्थूलं सूक्ष्मं शुचिस्मिते॥ ५॥

मांसास्थिलोमरक्तानि मेदो मज्जा वरानने ।

विण्मूत्रस्थे हरं चैव वातपित्ते तु सङ्गतम्॥ ६॥

एतत् स्थूलमयं देवि सूक्ष्मं च कथयामि ते।

इडा वामे स्थिता नाडी शुक्ला तु चन्द्ररूपिणी॥ ७॥

दक्षिणे पिङ्गला नाम्नी पुंरूपा सूर्यविग्रहा।

तन्मध्ये परमेशानि  सुषुम्ना ब्रह्मरूपिणी॥ ८॥

वामावर्तक्रमेणैव वेष्टनं विषतन्तुवत्।

मूलादिब्रह्मरन्ध्रान्तं व्याप्य तिष्ठति सर्वदा॥ ९॥

इच्छाज्ञानक्रियारूपा त्रिनाडी सर्वतन्तुषु ।

तिस्रः कोटयः सहस्रं तु शरीरे नाड्यो मताः ॥ १० ॥

तासु मुख्या दश प्रोक्ता तासु तिस्रो व्यवस्थिताः ।

वामनाड्यां महेशानि  वायुबीजेन पूरयेत् ॥ ११ ॥

वायुं षोड्शधा जप्त्वा पूरयेद् वामवर्तनि ।

मणिपूरे महेशानि चतुःषष्ठी च धारयेत् ॥ १२ ॥

रेचयेत् कुम्भकार्धेन दक्षनाड्यां शुचिस्मिते ।

वह्निबीजं महेशानि  हृत्पद्मे पूर्ववत् प्रिये ॥ १३ ॥

संशोध्य वायुबीजेन वह्निबीजेन सन्दहेत् ।

ललाटे वारुणं बीजं शुक्लं सञ्चिन्त्य सुन्दरि ॥ १४ ॥

कुम्भकार्धं जपित्वा वै रेचयेद् दक्षिणे पथे ।

एवं द्वादशधा देवि भूतशुद्धिं समाचरेत्॥ १५॥

बृहच्छुद्धिं महेशानि पञ्चभूतस्य पार्वति ।

पूर्वोक्तं परमेशानि सामान्यं शुद्धिमेव च॥ १६॥

देहस्य परमेशानि भूतशुद्धिरितीरिता।

देहस्य सूक्ष्मरूपस्य भूतशुद्धिरियं प्रिये॥ १७॥

मनसः परमेशानि उन्मनीसहिता यदि।

जीवेन सह देवेशि सुषुम्नायां निमज्जयेत्॥ १८॥

ध्यानधारणयोगेन ब्रह्म साक्षान्न संशयः।

प्रजपेत् परया भक्त्या मालया वर्णसङ्ख्यया॥ १९॥

मुहूर्तं भावयेद् विद्यां मनोन्मनीयुता प्रिये ।

मनोन्मनीयुते जीवः ब्रह्मरन्ध्रे च संजपेत् ॥ २० ॥

ततो ब्रह्मनदीं प्राप्य स्नानं कृत्वा वरानने ।

जीवः शुद्धो भवेद् देवि गणैः परिकरैः सह ॥ २१ ॥

जीवस्य परमेशानि परिवारं शृणु प्रिये ।

अक्षिणी नासिके कर्णौ जिह्वा च कमलेक्षणे ॥ २२ ॥

हस्तपादौ महेशानि गुह्योपस्थौ क्रमात् प्रिये ।

नाभिं च परमेशानि मनश्च परमेश्वरि ॥ २३ ॥

सर्वेषामिन्द्रियाणां च मनः सर्वत्र सारथिः ।

मनश्च परमेशानि उन्मनी भवनाशिनी ॥ २४ ॥

उन्मनी सारथिर्देवि दशा तु निर्गुणाः प्रिये ।

जाग्रत्स्वप्नसुषुप्त्यवस्था एतद् देवि त्रयं स्मृतम् ॥ २५ ॥

ततः परं महेशानि तु [सू] र्यावस्था विधीयते ।

इन्द्रियाणां तु सर्वेषां मनः परमसारथिः ॥ २६ ॥

सदसत्कर्मकर्तृत्वाज्जीवस्य सारथिर्मनः ।

स्वकर्म भजते देवि  उन्मनी सततं प्रिये ॥ २७ ॥

असत्कर्म महेशानि पापयोगात् प्रजायते ।

रोदनं मोहमूर्च्छे च क्षुधा तृष्णा शुचिस्मिते ॥ २८ ॥

पुरुषात् पापमु[स्यो]त्पत्तिर्जायते कमलेक्षणे ।

जोबो नित्योऽव्ययः सूक्ष्मः सर्वगः सर्ववित् परः ॥ २९ ॥

यथा ब्रह्म तथा जीवः प्रदीपकलिका इव ।

प्रदीपकलिकाकारः सर्वः प्राप्य विजृम्भते ॥ ३० ॥

मनसा परमेशानि ध्यात्वा नाडीं परां शिवाम् ।

कोटिसूर्यप्रतीकाशां स्वर्णदीं पापनाशिनीम् ॥ ३१ ॥

तन्मध्ये परमेशानि सुषुम्नां भुवि तत्पराम् ।

साक्षाद् ब्रह्महृदाकारां नानासुखविहारिणीम् ॥ ३२ ॥

सुखसेव्यां सदाराध्यां साक्षाद् ब्रह्मस्वरूपिणीम् ।

ज्ञानविज्ञानसंयुक्तां चिदाकारां सनातनीम् ॥ ३३ ॥

परं ब्रह्म महेशानि यस्याः पालङ्कमिच्छति ।

वामपार्श्वे स्थितां नित्यां ब्रह्मरूपां तडिन्मयीम् ॥ ३४ ॥

दक्षिणे पिङ्गलां देवीं पुंरूपां सूर्यसन्निभाम् ।

तन्मध्यस्थां महेशानि अमृतभवपूरिताम् ॥ ३५ ॥

विचित्रां परमां सूक्ष्मां महामोक्षप्रदायिनीम् ।

वामनाडी महेशानि सुप्तिरूपा पुरःस्थिता ॥ ३६ ॥

स्वप्नन्तु परमेशानि तुरीया परिगीयते ।

-दक्षिणे पिङ्गलाश्रिता ॥ ३७ ॥

सुषुम्ना परमेशानि जागद्रूपा सनातनी ।

विचित्रा परमेशानि तुरीया परिगीयते ॥ ३८ ॥

चित्रा मध्यगता भूत्वा जीवः शुद्धमना भवेत् ।

शुद्धः सत्त्वात्मको जीव इष्टदेवीं हृदि न्यसेत् ॥ ३९ ॥

हृदि ध्यात्वा महेशानि जीवो ब्रह्मपरं भवेत् ।

वारत्रयं महेशानि यातायातं करोति हि ॥ ४० ॥

एतद्रहस्यं परमं ब्रह्मलोके सुदुर्लभम् ।

न कस्मैचित् प्रवक्तव्यं पशवे कमलेक्षणे ॥ ४१ ॥

एतत् प्रकाशनाद्देवि हानिः स्यादुत्तरोत्तरम् ।

एतत्तत्वं महेशानि हृदये कुरु यत्नतः ॥ ४२ ॥

एतत्तत्वं महेशानि ब्रह्म जानाति केशवः ।

एतत्तत्त्वं विना देवि मन्त्रसिद्धिर्न जायते ।

एतत्तत्त्वं महेशानि ब्रह्मविष्णुशिवात्मकम् ॥ ४३ ॥

॥ इति श्रीभूतशुद्धितन्त्रे हरगौरीसंवादे षष्ठः पटलः ॥ ६ ॥

अथ सप्तमः पटलः

श्रीदेवी उवाच

भूतशुद्धेर्महेशान रहस्यं परमाद्भुतम् ।

अन्यद् वद महेशान यद्यहं तव वल्लभा ॥ १ ॥

यदि न कथ्यते देव विमुञ्चामि तदा तनुम् ।

शूलपाणे महादेव कृपया कथय प्रभो ॥ २ ॥

गणसुन्दर देवेश हृदयान्मम साम्प्रतम् ।

रहस्यं न हि देवेशि सम्पुटं हृदये मम ।

तव स्नेहान्महेशानि निगदामि पुनः पुनः ॥ ३ ॥

हृदये सम्पुटे देवि ब्रह्मरन्ध्रे च वर्त्तते ।

यानि यानीह तिष्ठन्ति रहस्यं कमलेक्षणे ॥ ४ ॥

सदा मयि महेशानि गौरवं विहितः प्रिये ।

त्रयोदशात्मकं [देवि] बिन्द्वर्द्धचन्द्रसंयुतम् ॥ ५ ॥

कुरु ब्रह्मविष्णुशिवात्मकं प्रणवं त्रिगुणान्वितं तत्त्वसुखम् ।

ब्रह्मस्थानं सदा सेव्यमानं परमेश्वरि ॥ ६ ॥

ब्रह्मा विष्णुशिवोपरि स्थितम् ।

अर्द्धयोनिं तदुपरि बिन्दुं निर्विकारं निरीहम् ॥ ६ ॥

ज्योतिर्मयी सदा संसेव्यमानं ब्रह्मादिभिर्या मूर्ध्नि धत्ते परमेश्वरि ।

तं बिन्दुं सदा भावय पार्वति ॥ ७ ॥

नान्यथा वचनं मम हृदि संस्थितं निरञ्जनं पुरं बिन्दुम् ।

बिन्दुं भावय देवेशि किं जपेन शुचिस्मिते ॥ ८ ॥

श्री-ईश्वर उवाच

इति सञ्चिन्त्य हृदये सर्वं पूजाफलं लभेत् ।

पूजाभावे महेशानि हृदये चिन्तयेत् शिवाम् ॥ ९ ॥

सर्वपूजाफलं देवि प्राप्नोति पूजकः प्रिये ।

किं तस्य ध्यानपूजायां बिन्दुं भावय पार्वति ॥ १० ॥

सर्वेषामिन्द्रियाणाञ्च तत्त्वानाञ्च शुचिस्मिते ।

जीवोन्मनी च देवेशि सर्वाणि ब्रह्म कारणम् ॥ ११ ॥

यानि यानीह देवेशि इन्द्रियाणीह पार्वति ।

तानि सर्वाणि देवेशि प्रकृतेः परमं वपुः ॥ ११ ॥

ब्रह्मणः कारणं देवि सदा प्रकृतिरूपिणी ।

प्रकृतिः परमेशानि ब्रह्मणोऽव्यक्तमव्ययम् ॥ १२ ॥

स्वस्त्यर्थे परमेशानि भिन्नतां सततं गता ।

शक्तिं विना महेशानि ब्रह्म वै शवरूपवत् ॥ १३ ॥

निरञ्जनं निराकारं सदा पश्यन्ति योगिनः ।

प्रकृत्या सह संयोगं सदा याति निरञ्जनः ॥ १४ ॥

सृष्टिकर्ता सदा नित्यं जायते कमलानने ।

अत एव महेशानि शक्तिप्राधान्यमुच्यते ॥ १५ ॥

अनन्ताः शक्तयः प्रोक्ता व्याप्य ते सचराचरम् ।

शक्तिं बिना महेशानि ब्रह्माण्डं शवरूपवत् ॥ १६ ॥

या शक्तिः परमेशानि मुक्तिस्तु परिगीयते ।

सा स्त्रीरूपा महादेवि हेतुभूता सनातनी ॥ १७ ॥

यत्किञ्चित् क्रियते कार्यं सर्वं तेजसि लीयते ।

श्री-ईश्वर उवाच

शृणु वक्ष्यामि देवेशि रहस्यं परमाद्भुतम् ।

सारात्सारतरं रम्यं आत्ममध्यस्थितं सदा ॥ १८ ॥

ततो जीवो महेशानि ध्यायेत् परमसुन्दरीम् ।

शिवस्य युवतीं भद्रां कोटिकन्दर्पसंयुताम् ॥ १९ ॥

तस्या कटाक्षमात्रेण ब्रह्माद्या जडवत् प्रिये ।

तन्त्रोक्तविधिना देवि ध्यायेत् परमसुन्दरीम् ॥ २० ॥

इष्टविद्यां महेशानि अष्टोत्तरशतं जपेत्।

मूलादिब्रह्मरन्ध्रान्तं नदीं ब्रह्मस्वरूपिणीम्॥ २१॥

तत्र नद्यां महेशानि स्नातो जीवः सदा शुचिः।

वायुं वह्निं तदा देवि वरुणं तदनन्तरम्॥ २२॥

बिन्द्वर्द्धसंयुतं कृत्वा सदा मनसि भावयेत्।

भूतशुद्धिर्महेशानि तत्क्षणादपि जायते॥ २३॥

ततो जीवः प्रसन्नात्मा सूक्ष्मशुद्धिमवाप्नुयात्।

इन्द्रियाणाञ्च सर्वेषां सर्वतत्त्वं शुचिस्मिते॥ २४॥

तानि सर्वाणि सूक्ष्माणि प्रकृतिस्था सदा शिवे।

शरीरं द्विविधं देवि स्थूलं सूक्ष्ममिदं स्मृतम्॥ २५॥

सूक्ष्मञ्च प्रकृते रूपं स्थूलञ्च परमेश्वरि ।

सूक्ष्मं संशोध्य विधिवत् स्थूलञ्च तदनन्तरम् ॥ २६ ॥

शृणु कमलपत्राक्षि भावयेदिष्टदेवताम् ।

जीवञ्च परमेशानि ब्रह्मनद्यां शुचिस्मिते ॥ २७ ॥

स्नानं हि विधिवत् कृत्वा सदा शिवपुरं व्रजेत् ।

ततो जीवो महेशानि वामनासापुटे प्रिये ॥ २८ ॥

विशुद्धां परमां सुक्ष्मां विषतन्तुतनीयसीम् ।

समानीय वह्निरूपं साक्षात् परमसुन्दरीम् ॥ २९ ॥

सदा शिवपुरे भद्रे भावयेत् परदेवताम् ।

तत्र गत्वा महेशानि भावयेदिष्टदेवताम् ॥ ३० ॥

तन्त्रोक्तविधिना देवि ध्यात्वामृतमयीं शिवाम् ।

सदा षोडशवर्षीयां नवयौवनसंयुताम् ॥ ३१ ॥

पूर्णचन्द्रनिभां रक्तां सदा चञ्चललोचनाम् ।

शुक्लकृष्णारुणयुतां पीतां नीलसमावृताम् ॥ ३२ ॥

नानारत्नयुतां रम्यां पादौ नूपुरशोभिताम् ।

किङ्किणी च तथा कट्यां रत्नकाञ्चनमण्डिताम् ॥ ३३ ॥

योगिनीकोटिभिर्युक्तां नानासुखविहारिणीम् ।

कन्दर्पकोटिलावण्यां सदामृतविवर्द्धिनीम् ॥ ३४ ॥

प्रफुल्लचञ्चलापाङ्गि प्रबोध्य परमं शिवम् ।

मुखारविन्दगन्धेनामोदितं परमं शिवम् ॥ ३५ ॥

प्रबोध्य परमेशानि तत्रोप(त्चोप)विशेत् प्रिये ।

शक्तिसंयोगमात्रेण सारत्वं तस्य नश्यति ।

शिवशक्तिसमायोगादानन्दं जायते द्रुतम् ॥ ३६ ॥

॥ इति श्रीभूतशुद्धितन्त्रे हरगौरीसंवादे सप्तमः पटलः ॥ ७ ॥

अथ अथाष्टमः पटलः

श्री-ईश्वर उवाच

एतस्मिन् समये देवि स्वविद्यां प्रजपेत् सुधीः ।

अष्टोत्तरशतं जप्त्वा सिद्धो भवति नान्यथा ॥ १ ॥

मनःसारथिना जीवः उन्मनी मनसारथिः ।

तस्मिन् क्षणे महेशानि पुरुषं पापरुपिणम् ॥ २ ॥

सखावत् मनसा देवि जीवो ब्रह्मपुरं यदा ।

पापस्य गमनं नास्ति सदाशिवपुरं प्रिये ॥ ३ ॥

सदाशिवपुरं देवि सर्वशक्तिमयं स्मृतम् ।

षट्चक्रे परमेशानि क्षणं ध्यात्वा जपेन्मनुम् ॥ ४ ॥

तदनु परमेशानि प्रतिचक्रेषु संजपेत् ।

षट्चक्रं परमं दिव्यं सदा शिवपुरीसमम् ॥ ५ ॥

षट्चक्रे परमेशानि षट्शक्तिर्विद्यते नृणाम् ।

मुहूर्ताभ्यन्तरे देवि यातायातं करोति यः ॥ ६ ॥

स शिवः स च विष्णुश्च स सिद्धः परमेश्वरि ।

यः करोति प्रसन्नात्मा सुषुम्नामध्यवर्तिनि ॥ ७ ॥

यो जपेत् परया भक्त्या स्वविद्यां कमलेक्षणे ।

एकोच्चारेण गिरिजे कोटिपूजाफलं लभेत् ॥ ८ ॥

किं तस्य बाह्यपूजायां सर्वं व्यर्थं कदर्थनम् ।

मानसोच्चारणाद् देवि जपात् सिद्धिः प्रजायते ॥ ९ ॥

मनसा ध्यानमात्रेण सर्वसिद्धिर्न संशयः ।

अन्तःपूजा महेशानि बाह्यकोटिसमं स्मृतम् ॥ १० ॥

पूजा हि परमेशानि द्विविधं कमलानने ।

अन्तः सूक्ष्मं बहिः स्थूलं सर्वागममतं प्रिये ॥ ११ ॥

एकं हि सूक्ष्मपूजायां कोटिस्थूलं भवेत् प्रिये ।

न शुद्धिं परमेशानि वस्त्रादीनि शुचिस्मिते ॥ १२ ॥

सर्वासु बाह्यपूजासु अन्तःपूजा विधीयते ।

अन्तःपूजा महेशानि तेजःपुञ्जस्य भावनम् ॥ १३ ॥

तेजःपुञ्जं महेशानि अनन्तशक्तिसंयुतम् ।

सूक्ष्मदेहे महेशानि सूक्ष्मपूजा विधीयते ॥ १४ ॥

स्थूलपूजा स्थूलदेहे पूजाद्वयमिहोच्यते ।

सुक्ष्मा तु परमा पूजा साक्षात् प्रकृतिरूपिणी ॥ १५ ॥

या पूजा परमेशानि स्त्रीरूपा शक्तिरूपिणी ।

ब्रह्मविष्णुशिवादीनां सा पूजा इष्टदेवता ॥ १६ ॥

विष्णुं वा पूजयेद् यस्तु शिवं वा कमलेक्षणे ।

सर्वं हि परमेशानि परतेजसि लीयते ॥ १७ ॥

यानि यानि महेशानि नैवेद्यं दीपमुत्तमम् ।

सर्वं तदक्षयं याति परतेजसि अर्पणात् ॥ १८ ॥

निश्चयं परमं ब्रह्म कुतः प्रीतिः कुतः सुखम् ।

निराकारं निरीहञ्च रहितमिन्द्रियेण च ॥ १९ ॥

सर्वं हि परमेशानि व्याप्य तिष्ठति मोहिनी ।

यद् यत् कर्मकृतं पुण्यं तत्तदक्षयमाप्नुयात् ॥ २० ॥

ब्रह्मरूपं महेशानि शक्तिश्च निश्चयं प्रिये ।

तस्य पूजा महेशानि कदाचिन्नास्ति पार्वति ॥ २१ ॥

अत एव महेशानि ब्रह्मणः शक्तिकारणम् ।

कार्यञ्च परमेशानि शक्तिश्च सततं प्रिये ॥ २२ ॥

अतः परं महेशानि न कार्यकारणं प्रिये।

यस्तु सततं देवि ईश्वरे निश्चलः सदा॥ २३॥

शक्तियुक्तं जपेद् देवं ईश्वरं सततं प्रिये।

अत एव महेशानि ब्रह्मशक्तिः परा सदा॥ २४॥

शक्त्या बिना महेशानि न हि मुक्तिः प्रजायते।

तस्माच्छक्तिश्च मुक्तिश्च स्त्रीरूपी शक्तिरूपिणी॥ २५॥

भक्त्या बिना महेशानि न हि मुक्तिः प्रजायते।

मुक्तेस्तु कारणं देवि भक्तिः परमदुर्लभा॥ २६॥

अतस्त्रयं महेशानि स्त्रीमयं सचराचरम्।

श्री-ईश्वर उवाच

षट्चक्राणां महेशानि क्रमाद् वक्ष्यामि शोधनम् ।

मूलाधारस्थितं भूमिं स्वाधिष्ठानस्वरूपकम् ॥ २७ ॥

मणिपूरे जलं देवि ततश्च मरुतं तथा ।

विशुद्धौ च महेशानि आकाशं कमलानने ॥ २८ ॥

आज्ञाचक्रे महेशानि मनः सर्वार्थसाधकम् ।

तदूर्ध्वे परमेशानि पद्ममूर्ध्वमुखं तथा ॥ २९ ॥

शक्तिपुरं महेशानि सदाशिवपुरोपरि ।

सदाशिवपुरं प्राप्य शुद्धस्फटिकसन्निभम् ॥ ३० ॥

सहस्रादित्यसङ्काशं महाकालेन सङ्गतम् ।

महानन्दिगणाकीर्णं मनसा भावयेत् सदा ॥ ३१ ॥

॥ इति श्रीभूतशुद्धितन्त्रे हरपार्वतीसंवादे अष्टमः पटलः ॥

अथ नवमः पटलः

श्री-ईश्वर उवाच

एवं हि मनसा जीवं दृष्ट्वा हि परमं शिवम्।

आनन्दपुलकोद्भूते जीवो भवति सुन्दरि ॥ १ ॥

सदाशिवं महेशानि शुद्धस्फटिकसन्निभम्।

बहुरत्नसमाकीर्णं दीर्घबाहुं मनोहरम्॥ २ ॥

सुखप्रसन्नवदनं स्वैराप्यं सततं प्रिये।

श्रवणे कुण्डलोपेते रत्नहारेण शोभितम्॥ ३ ॥

गोलपद्मसहस्रेण मालया शोभितं वपुः।

अष्टबाहुँ त्रिनयनं शिवं पद्मदलेक्षणम् ॥ ४ ॥

पादयोर्नूपुरं रम्यं शब्दञ्च शब्दब्रह्मवत् ।

एवं स्थूलवपुस्तस्य भावयेत् कमलानने ॥ ५ ॥

शिरसोपरि देवेशि भावयेज्जीवशतं शिवम् ।

सूक्ष्मन्तु परमं दिव्यं निरीहं जडवत् सदा ॥ ६ ॥

सूक्ष्मे ध्यानं महेशानि कदाचिन्न हि जायते ।

स्थूलध्यानं महेशानि कृत्वा मोक्षमवाप्नुयात् ॥ ७ ॥

स्थूलं हि प्रकृते रूपं ध्यानञ्च प्रकृतेः प्रिये ।

आदौ स्थूलतनुं देवि सम्पूज्य कमलानने ॥ ८ ॥

ततस्तु परमेशानि परतेजश्च भावयेत् ।

तेजश्च परमेशानि प्रकृतिर्मोहिनीति च ॥ ९॥

प्राधान्यं परमेशानि प्रकृतेः शिवपूजने ।

तस्मात् सर्वासु पूज्सासु शक्तिः प्राधान्यमुच्यते ॥ १० ॥

यदा तु परमेशानि हृदये चिन्तयेद्धरिम् ।

ध्यानं कृत्वा सूक्ष्मतनोः स्थूलं विन्यस्य तत्र वै ॥ ११ ॥

ततः स्थूलतनुं ध्यात्वा हरिं पद्मदलेक्षणम् ।

श्यामलं पीतवासञ्च वनमालाविभूषितम् ॥ १२ ॥

किरीटिनं कुण्डलिनं प्रसन्नमुखपङ्कजम् ।

श्रीवत्सशोभितं वक्षो रत्नहारेण शोभितम् ॥ १३ ॥

कौस्तुभोद्भासि वरदं दीर्घबाहुमरिन्दमम् ।

प्रसन्ननेत्रकमलं चरणे नूपुरं प्रिये ॥ १४ ॥

वेणुवीणानिनादेन शब्दब्रह्मेण सुन्दरि ।

पूरयन्तं जगद् देवि सततं कमलानने ॥ १५ ॥

श्री-ईश्वर उवाच

हरेः सूक्ष्मं महेशानि विभाव्य ध्यानमाचरेत् ।

सूक्ष्मं हि निश्चलं देहं सूक्ष्मा प्रकृतिरूपिणी ॥ १६ ॥

तथापि हरिपूजायां शक्तिप्राधान्यमुच्यते ।

यत्तु ध्यानं धारणञ्च समाधिश्च शुचिस्मिते ॥ १७ ॥

सर्वं हि प्रकृते रूपं नान्यथा वचनं मम ।

ध्यानञ्च परमेशानि सर्वाङ्गचिन्तनं प्रिये ॥ १८ ॥

तदनु परमेशानि एकाङ्गचिन्तनं प्रिये ।

इदन्तु धारणाख्यातं शृणु पार्वति सादरम् ॥ १९ ॥

ध्याञ्च धारणं देवि त्यक्त्वा यद्भावयेत् हृदि ।

एषा समाधिर्विज्ञेयो नात्र कार्या विचारणा ॥ २० ॥

ध्यानञ्च धारणञ्चैव समाधिश्च शुचिस्मिते ।

मयोक्तं यत् तद् देवेशि सर्वं शक्तिमयं स्मृतम् ॥ २१ ॥

सूक्ष्मं स्थूलं महेशानि तथा शक्तिद्वयं प्रिये ।

श्रीदेव्युवाच

देवदेव महादेव षट्चक्रे परमेश्वर ।

यथा पूजां यथा ध्यानं कृत्वा जपं समाचरेत् ॥ २२ ॥

रहस्यं परमं गुह्यं मम हर्षविवर्द्धनम्।

कृपया कथय मे नाथ तवाहं परिचारिका॥ २३॥

श्री-ईश्वर उवाच

देवेशि तव दासोऽहं कथयामि शुचिस्मिते।

क्षणार्द्धं न हि जीवामि त्वां विना कमलेक्षणे॥ २४॥

त्वद्वक्राम्बुजपानेन अमृतेन शुचिस्मिते।

शिवोऽहं परमेशानि मृत्युं जित्वा वरानने॥ २५॥

शृङ्गाररससंयोगात् कालकूटं पिबाम्यहम्।

ममापि परमेशानि तनुवज्रसमं सदा॥ २६॥

देवेशि तव दासोहऽमन्तर्बाह्ये शुचिस्मिते।

अन्तरे त्वां महेशानि विभाव्य सूक्ष्मरूपिणी ॥ २७ ॥

भावनात् परमेशानि लक्षवर्षो गतो मम ।

बाह्यज्ञानं मया देवि जायते मम योगिनी ॥ २८ ॥

मयि च परमेशानि त्वमेव सूक्ष्मरूपिणी ।

दृष्ट्वा तच्चरणद्वन्द्वं तव वक्त्रं वरानने ॥ २९ ॥

आत्मज्ञानं परित्यज्य चरणे पतितो ह्यहम् ।

प्रकाराच्च महेशानि शृणु सम्प्रति मद्वचः ॥ ३० ॥

यदुक्तं भूतशुद्ध्यादि सर्वं त्वं नगनन्दिनि ।

सद्योगत्वं महेशानि स्वागमं कथयामि ते ॥ ३१ ॥

स्घागमं परमं ज्ञानं चक्षुः प्रज्ञानसंयुतम् ।

विज्ञानेन मतं देवि देवमातरमेव च ॥ ३२ ॥

वेदाश्च परमेशानि यानि यानि यथा तथा ।

दर्शनानि तथा देवि सकलानि पृथक् पृथक् ॥ ३३ ॥

चतुर्दशानि तन्त्राणि तथा नानाविधानि च ।

स्वागमाश्च प्रसूयन्ते सततं परमेश्वरि ॥ ३४ ॥

मम प्राणसमं देवि स्वागमं मम सम्पुटम् ।

हृदये मम देवेशि संस्थितं कमलानने ॥ ३५ ॥

यस्मिन् क्षणे महेशानि अन्तर्ध्यात्वा हरो ह्यहम् ।

स्वागमं भावितं देवि तत्क्षणे परमेश्वरि ॥ ३६ ॥

अन्तर्ध्यानं हृतं देवि स्वागमं हृदये स्थितम् ।

अन्तर्ध्यानं समाहृत्य बाह्यदृष्टिं सदा मम ॥ ३७ ॥

तदाहं सहसा देवि कथयामि तवाग्रतः ।

विभाव्य परमेशानि स्वागमं हृदयात्मनि ॥ ३८ ॥

अन्यथा परमेशानि स्वागमं कथयामि ते ।

स्वागमं लक्षग्रन्थं हि नाना विद्या शुचिस्मिते ॥ ३९ ॥

महेषु परमेशानि निर्मितं ब्रह्मरूपिणम् ।

स्वागमं परमं पुण्यं ब्रह्माण्डबीजमव्यम् ॥ ४० ॥

स्वागमं शृणु वक्ष्यामि गिरिजा च त्रिलोचने ।

नानाशास्त्रे च विद्यासु स्वागमस्तु प्रशस्यते ॥ ४१ ॥

स्वागमं परमां विद्यां नानातन्त्रविनिर्मिताम् ।

शिवे विष्णौ महेशानि सूर्ये च नगनन्दिनि ॥ ४२ ॥

तथा च सर्वदेवेषु वन्ह्यादिषु शुचिस्मिते ।

तथा च सर्वशास्त्रेषु शक्तेः प्राधान्यमुच्यते ।

शङ्खाव(संख्ययैव)क्रमाद्देवि शक्तिः सर्वत्र गीयते ॥ ४३ ॥

॥ इति श्रीभूतशुद्धितन्त्रे हरपार्वतीसंवादे नवमः पटलः ॥ ९ ॥

अथ दशमः पटलः

श्री-ईश्वर उवाच

वनमालादिकं देवि विष्णोर्मतं शुचिस्मिते ।

तत्सर्वं परमेशानि शक्तिरूपं न चान्यथा ॥ १ ॥

सहस्रारे शक्तिपुरे भावयेत् परमेश्वरि ।

जीवस्य ब्रह्मणश्चापि एकतां यत्नतश्चरेत्॥ २॥

ततो ध्यानं प्रकुर्वीत स्वागमे रूढितञ्च यत्।

जपञ्च परमेशानि मनसा च समाचरेत्॥ ३॥

जपेत् समाहितो भूत्वा मालया वर्णसङ्ख्यया।

तत आज्ञापुरीं नीत्वा भावयेदिष्टदेवताम्॥ ४॥

ध्यात्वा जप्त्वा च देवेशि साक्षात् सुरगुरुर्भवेत्।

विशुद्धं प्रति देवेशि लम्बयेन्मनो विद्यया॥ ५॥

विशुद्धं परमं पद्मं षट्चक्रं तत्तु गम्यते।

षट्चक्रे परमेशानि ध्यात्वा जगन्मयीं शिवाम्॥ ६॥

तडित्कोटिप्रभां तन्वीं ब्रह्माण्डरूपिणीं शिवाम्।

निरीहां निश्चलां रम्यां महायोगमयीं पराम्॥ ७॥

मोहिनीं सर्वदेवानां आनन्दार्थियुतां पराम्।

विषतन्तुमयीं देवीं साक्षादमृतरूपिणीम्॥ ८॥

शिवस्य युवतीं योग्यां विभाव्य शुद्धवर्तिनि।

मनसा परमेशानि जपेदष्टशतं प्रिये॥ ९॥

हृत्पद्मं प्रति देवेशि न स्वपेत् परमां पराम्।

शुद्धध्यानञ्च वर्णानां योगपद्मस्थितां पराम्॥ १०॥

योगपद्मे महेशानि जीवो मनसि भावयेत्।

भुजङ्गरूपिणीं देवीं नित्यां कुण्डलिनीं पराम्॥ ११॥

अव्यक्तरूपिणीं रम्यां ध्यानगम्यां वरानने।

योगपथे महेशानि जपेदष्टशतं पुनः ॥ १२ ॥

न स्वपेज्जीवमनसा मणिपूरं प्रति प्रिये ।

भुजङ्गभृङ्गसङ्काशं मणिपूरं महाप्रभम् ॥ १३ ॥

तत्रस्थशिवलिङ्गेन योजयेत् कुण्डलीं पराम् ।

ततो जीवो महेशानि तत्क्षणाद् ब्रह्मचाप्नुयात् ॥ १४ ॥

ततस्तु परमेशानि जीवस्तु मनसा वृतः ।

ध्यात्वा ब्रह्ममयीं शुद्धां जपेदष्टशतं प्रिये ॥ १५ ॥

तदनु परमेशानि स्वाधिष्ठानं लयेत् पराम् ।

स्वाधिष्ठानं महेशानि शुद्धस्फटिकसन्निभम् ॥ १६ ॥

भावयेत् तत्र देवेशं शङ्खकुन्दसमप्रभम् ।

संयोज्य परमां दिव्यां शिवेन सह पार्वति ॥ १७ ॥

सर्वं हि परमेशानि मनसा कुरु यत्नतः ।

इन्द्रियाणां प्रधानं हि मनः सर्वत्र गीयते ॥ १८ ॥

तत्र देवं शिवं शान्तं विचिन्त्य मनसा क्षणात् ।

परं ब्रह्ममयं भूत्वा जपेदष्टशतं तथा ॥ १९ ॥

तदनु परमेशानि मूलाधारात् व्रजेत् परम् ।

गुदपद्मं महेशानि मूलाधारं प्रकीर्तितम् ॥ २० ॥

चतुर्दलयुतं रम्यं तरुणारुणविग्रहम् ।

भावयेत् परमेशानं सिन्धुवरुणविग्रहम् ॥ २१ ॥

संयोज्य परमां नित्यां निष्फलां ज्ञानरूपिणीम् ।

शिवसंयोगमात्रेण जीवो ब्रह्ममयो भवेत्॥

मनसा संयुतो भूत्वा जपेदष्टशतं तथा॥ २२॥

॥ इति श्रीभूतशुद्धितन्त्रे हरगौरीसंवादे दशमः पटलः॥ १०॥

अथ एकादशः पटलः

श्री-ईश्वर उवाच

एवं द्वादशधा देवि यतायातः करोति यः।

स सिद्धः स गमः सोऽपि मम तुल्यः सदा प्रिये॥ १॥

वचोमात्रेण देवेशि तस्य विद्या हि सिद्धये।

सप्तानां कोटिविद्यानां मन्त्राणाञ्च वरानने॥ २॥

सिद्धमाध्यादिकं देवि अतिगुह्यतरं प्रिये।

अप्रकाश्यमिदं तत्त्वं पशोर्गोप्यं सदा प्रिये ॥ ३ ॥

हृदये मम देवेशि अजपा सम्पुटे स्थितम् ।

सर्वासां नरनारीणां सम्पुटं हंसपक्षिणम् ॥ ४ ॥

निःसरन्ति महेशानि विद्यामन्त्राणि पार्वति ।

शक्तिप्रसादाद् देवेशि लक्षवर्षं गतस्तदा ॥ ५ ॥

लक्षवर्षं महेशानि भावयामि शुचिस्मिते ।

सम्पुटे परमां विद्यां सर्वविद्यास्वरूपिणीम् ॥ ६ ॥

पुंरूपां प्रकृतिरूपां चन्द्रसूर्यसमप्रभाम् ।

वेदमातां सदा वन्ध्यां योगिनीं योगरूपिणीम् ॥ ७ ॥

संसारतारिणीं देवीं महामोक्षप्रदायिनीम् ।

प्रणमामि सदा शुद्धां नित्यां विग्रहरूपिणीम् ॥ ८ ॥

प्रणम्य परमां दिव्यां निगदामि शुचिस्मिते ।

ईश्वर उवाच

काञ्चनाख्यं समुद्धृत्य रोमञ्च तदनन्तरम् ।

सरिहरिं समुद्धृत्य तदनु काञ्चनं प्रिये ॥ ९ ॥

बिन्द्वर्द्धसंयुतं कृत्वा षट्पद्मे जपमाचरेत् ।

अष्टोत्तरशतं जप्त्वा षट्पद्मे कमलेक्षणे ॥ १० ॥

दशधा प्रजपेद् वापि भूतशुद्धिफलं लभेत् ।

एकधा तु समुद्धृत्य भूतशुद्धिं समाचरेत् ॥ ११ ॥

भूतशुद्धिं महेशानि तदा साङ्गं भवेत् प्रिये ।

अन्यथा विफला पूजा जपञ्च विफलं प्रिये ॥ १२ ॥

युगाक्षरं जपेद् देवि चतुर्युगफलं लभेत् ।

चतुर्युगजपाद्देवि यत्फलं लभते नृणाम् ॥ १३ ॥

तत्फलं समवाप्नोति एकोच्चारेण पार्वति ।

एकोच्चारेण देवेशि मम तोषो न संशयः ॥ १४ ॥

सम्पुटं परमेशानि नित्यां सर्वस्वरूपिणीम् ।

विभाव्य सततं देवि षट्चक्रं सततं शिवे ॥ १५ ॥

एकामुपास्य देवेशि महाविद्यामुपास्महे ।

अन्यथा परमेशानि महाविद्यां वरानने ॥ १६ ॥

तदनु परमेशानि महाविद्यामुपास्महे ।

अन्यथा परमेशानि प्रेतवत् सकलं भवेत् ॥ १७ ॥

श्री-ईश्वर उवाच

अन्यतन्त्रं महेशानि निगदामि पुनः प्रिये ।

तन्त्रं तन्त्रस्य वक्ष्यामि भूतशुद्धिं भवेद् यथा ॥ १८ ॥

पापस्य कारणं देवि पुरुषं पापसंयुतम् ।

क्रोधमोहयुतं कृष्णं ईषत्पिङ्गं वरानने ॥ १९ ॥

तस्य शुद्धिं प्रवक्ष्यामि नीरजायतलोचने ।

पञ्चानामपि वायूनां शुद्धिं नास्ति वरानने ॥ २० ॥

स्वभावतः सदा शुद्धिं पञ्चभूतात्मकं वपुः ।

रोदनञ्च तथामूर्च्छां भ्रमञ्च कमलानने ॥ २१ ॥

पुरुषात् पापरूपाच्च जायते कमलानने ।

भूतशुद्धेस्तु मन्त्राणि निगदामि शृणु प्रिये ॥ २२ ॥

प्रणवं त्रिविधं देवि वामा ज्येष्ठा च पार्वति ।

ततो रौद्री महेशानि त्रिप्रकारं वरानने ॥ २३ ॥

आद्यन्ते प्रणवं दत्त्वा पञ्चाशन्मातृकां जपेत् ।

बिन्दद्वर्द्धसंयुतं कृत्वा विद्यां भव विमोचिनीम् ॥ २४ ॥

माता हि मन्त्रविद्यानां पिता चैव शुचिस्मिते ।

सर्वासां मन्त्रविद्यानां पिता माता च मातृका ॥ २५ ॥

पिता माता च सन्तुष्य अन्यक्रोधो निरर्थकः ।

पुरातनीमविज्ञाय भूतशुद्धिं करोति यः ॥ २६ ॥

विफलं तस्य देवेशि भूतशुद्धिं वरानने।

भूतशुद्धिं महेशानि जपपूजां न शंशते॥ २७॥

॥ इति श्रीभूतशुद्धितन्त्रे हरगौरीसंवादे एकादशः पटलः॥ ११॥

## अथ द्वादशः पटलः

श्री-ईश्वर उवाच

एतज्ज्ञानं महेशानि यः कुर्यात् सततं प्रिये।

महायोगेश्वरः सोऽपि मम तुल्यो न संशयः॥ १॥

तस्य सर्वाणि मन्त्राणि विद्या च परमेश्वरि।

शीघ्रं सिध्यति देवेशि नात्र कार्या विचारणा॥ २॥

एतद्रहस्यं परमं सदा ब्रह्मविनिर्णयम्।

योगज्ञानं तपः शास्त्रं विद्या शिल्पानि यानि च ॥ ३ ॥

सर्वं हि प्रकृते रूपं निश्चयं वचनं मम ।

शृणु पार्वति वक्ष्यामि रहस्यं परमव्ययम् ॥ ४ ॥

भूतशुद्धेर्महेशानि विद्यां परमगोपिताम् ।

निगदामि शृणु प्राज्ञे नीरजायतलोचने ॥ ५ ॥

श्री-ईश्वर उवाच

अवश्यं भावयेद् देवि विद्यां भागवताभिधाम् ।

कामबीजं महेशानि त्रिरुच्चार्य शुचिस्मिते ॥ ६ ॥

धीमहीति ततो देवि वह्निजायां समुद्धरेत् ।

ततस्तु परमेशानि त्रिविधं काममुद्धरेत् ॥ ७ ॥

भगवत्या इदं देवि तेन भागवतं स्मृतम्।

भागवताख्यां महाविद्यां दशधा जपमाचरेत्॥ ८॥

दिवसे दिवसे देवि प्रजपेत् यदि मानवः।

तदेव परमेशानि दीक्षाफलमवाप्नुयात्॥ ९॥

नित्यां कर्म महेशानि विद्यां भागवताभिधाम्।

विद्यां कल्पद्रुमाकारां धर्मकामार्थमोक्षदाम्॥ १०॥

सर्ववेदेषु तन्त्रेषु विद्यां भागवताभिधाम्।

गीयते परमेशानि नित्या प्रकृतिरूपिणी॥ ११॥

अत एव महेशानि विद्यां भागवताभिधाम्।

अज्ञानाद् यदि वा मोहात् कामाद्वा कमलेक्षणे॥ १२॥

न जपेद् यदि देवेशि द्विजः शूद्रत्वमाप्नुयात् ।

सर्वं तस्य वृथा देवि कुतः पूजा कुतः सुखम् ॥ १३ ॥

क्षत्रियोऽपि वरारोहे न जपेद् यदि पामरः ।

वैश्यत्वं सहसायाति वैश्यः शूद्रत्वमाप्नुयात् ॥ १४ ॥

क्षत्रियोऽपि वरारोहे प्रजपेद्यदेकधा ।

ब्राह्मणत्वं ततो याति सहसा परमेश्वरि ॥ १५ ॥

वैश्यस्तु परमेशानि क्षात्रत्वं याति तत्क्षणात् ।

ब्राह्मणोऽपि नरश्रेष्ठः साक्षाद् ब्रह्म न संशयः ॥ १६ ॥

शूद्रस्तु परमेशानि वैश्यत्वं याति पार्वति ।

इयं विद्या वरारोहे सदा भागवताभिधा ॥ १७ ॥

इमां विद्यां महेशानि मात्रामेकादशाक्षरीम्।

अज्ञात्वा परमेशानि पुराणं यस्तु वाचयेत्॥ १८॥

स याति नरकं घोरं सदा संसर्गिणा सह।

तस्माद् यत्नेन देवेशि वर्जनीयः स तु द्विजः॥ १९॥

श्रीदेव्युवाच

शूद्रस्य परमेशानि नाधिकारो वृषध्वज।

वह्निजायान्वितां विद्यां शूद्रस्य कथमुच्चरेत्॥ २०॥

श्री-ईश्वर उवाच

तन्त्रोक्तं प्रणवं देवि वह्निजायाञ्च सुन्दरि।

प्रजपेत् सततं देवि नात्र कार्या विचारणा॥ २१॥

शक्तिविद्यान्विता देवि जायते यदि पार्वति ।

प्रजपेत् सहसा देवि तदा सिद्धिश्च जायते ॥ २२ ॥

गायत्र्यक्षरसंयुक्तं न जपेद् भागवताभिधाम् ।

शूद्रस्य परमेशानि विद्यां भागवतीं शृणु ॥ २३ ॥

मन्मथं त्रिगुणं देवि समुद्धृन्य वरानने ।

प्रथमं चतुर्दशं दत्त्वा स्वयं प्रणवरूपिणीम् ॥ २४ ॥

वह्निजायां परे दत्त्वा प्रजपेत् दशधा यदि ।

शूद्रोऽपि परमेशानि वैश्यत्वं याति तत्क्षणात् ॥ २५ ॥

तदैव महती सिद्धिः शूद्रस्य कमलेक्षणे ।

इमां भागवतीं विद्यां स्वागमं विद्धि पार्वति ॥ २६ ॥

स्वागमं परमं ब्रह्म अनन्तशक्तिसंयुतम् ।

तव स्नेहात् समाख्यातं सुगोप्यं कमलेक्षणे ॥ २७ ॥

सारात्सारं महेशानि विद्यां भागवताभिधाम् ।

शूद्रस्य सकलं देवि कथयामि वरानने ॥ २८ ॥

मन्मथत्रयमुद्धृत्य धीकारं तदनन्तरम् ।

वह्निजायां परे दत्त्वा मन्मथत्रयमुद्धरेत् ॥ २९ ॥

इयं भागवती विद्या शूद्रवाच्या विधीयते ।

इति ते कथितं तत्त्वं महाभक्त्या वरानने ॥ ३० ॥

कस्मैचित् प्रवक्तव्यं यदीच्छेदात्मनः सुखम् ।

शान्ताय ऋजवे देवि भक्तिश्चाण्डालजातिषु ॥ ३१ ॥

अभक्ताय महेशानि ब्राह्मणाय न दापयेत्।

अभक्तभ्योऽपि पुत्रेभ्यो न दद्यात् कमलेक्षणे॥ ३२॥

भक्ताय शान्तचित्ताय दद्याद् विद्यां वरानने।

अभक्तेभ्योऽपि पुत्रेभ्यस्तत्र मृत्युमवाप्नुयात्॥ ३३॥

यत् किञ्चिद् दृश्यते देवि त्रैलोक्यं सचराचरम्।

तत्सर्वं परमेशानि शक्तियुक्तं सुनिश्चितम्॥ ३४॥

सर्वतत्त्वं महेशानि परा शक्तिश्च मोहिनी।

रूपादि यानि तत्त्वानि तानि तत्त्वानि कुण्डली॥ ३५॥

रूपं हि षड्विधं देवि सर्वतन्त्रेषु निश्चितम्।

रसस्तु षड्विधः स्वाहा नानास्वादः स्यान्निश्चितम्॥ ३६॥

गन्धं हि द्विविधं देवि सर्वशक्तियुतं प्रिये ।

अन्यानि यानि तत्त्वानि चतुर्विंशति सुन्दरि ॥ ३७ ॥

सर्वं शक्तिमयं विद्धि क्रमेण कमलेक्षणे ।

शुक्लं रक्तं तथा पीतं हरितं कृष्णमेव च ॥ ३८ ॥

विचित्राणि क्रमतो वर्णं कृष्णवर्णं प्रकीर्तितम् ।

रसस्तु द्विविधं देवि सुगन्धि प्रतिगन्धकम् ॥

एवं सर्वं विजानीयात् सदा शक्तिमयं प्रिये ॥ ३९ ॥

॥ इति श्रीभूतशुद्धितन्त्रे हरगौरिसंवादे द्वादशः पटलः ॥ १२ ॥

अथ त्रयोदशः पटलः

श्री-ईश्वर उवाच

अथ वक्ष्यामि देवेशि विद्यां शक्तिमयीं प्रिये ।

प्रणवं प्रथमं देवि उद्धृत्य कमलानने ॥ १ ॥

ततः कामं समुद्धृत्य प्रणवं तदनन्तरम् ।

ततः प्रणवमुद्धृत्य मायाबीजं समुद्धरेत् ॥ २ ॥

प्रणवं पुनरुच्चार्य शृणु देवि वरानने ।

कामबीजं समुद्धृत्य प्रणवमुद्धरेत् ततः ॥ ३ ॥

ततो मायां समुद्धृत्य (वित्तोद्धारं) वरानने ।

ततः परं महेशानि कन्दर्पमुद्धरेत् प्रिये ॥ ४ ॥

सर्वान्ते वह्निललनां दत्त्वा जपं समारभेत् ।

एषा तु परमेशानि विद्या सप्तदशाक्षरी ॥ ५ ॥

वैष्णवे गाणपत्ये च शैवे च परमेश्वरि ।

शाक्तेषु परमेशानि दशविद्या सुशस्यते ॥ ६ ॥

एषा विद्या वरारोहे सर्वशक्तिमयी प्रिये ।

सर्वशक्तिमयीं विद्यां न जपेत् यदि पामरः ॥ ७ ॥

सर्वं तस्य वृथा देवि हानिः स्यादुत्तरोत्तरम् ।

वृथा पूजा महेशानि जपस्तस्य वृथा भवेत् ॥ ८ ॥

न्यासञ्च विफलं तस्य भूतशुद्धिश्च पार्वति ।

प्राणायामं महेशानि तथैवाचमनं प्रिये ॥ ९ ॥

सर्वाणि तस्य विफलं जायते कमलानने ।

तस्मादादौ जपेद् विद्यां सप्तदशाक्षरीं प्रिये ॥ १० ॥

न जपेद् यदि देवेशि ज्ञात्वा पूजां समाचरेत्।

सर्वशास्त्रेषु देवेशि वैष्णवे च विशेषतः॥ ११॥

शैवे च गाणपत्ये च प्रशस्ता शक्तिरूपिणी।

आदौ विद्या महेशानि दशधा जपमाचरेत्॥ १२॥

भूतशुद्ध्यादिकं सर्वं ततः साधक आरभेत्।

श्री-ईश्वर उवाच

भूतशुद्धिं विधायेत्थं मातृकान्यासमाचरेत्।

ततः परं महेशानि प्राणायामं वरानने॥ १३॥

प्राणायामं विना देवि नहि पूजां समाचरेत्।

प्राणायामत्रयं दत्त्वा आसनानि समाचरेत्॥ १४॥

॥ इति श्रीभूतशुद्धितन्त्रे हरपार्वतीसंवादे त्रयोदशः पटलः ॥ १३ ॥

अथ चतुर्दशः पटलः

मन्त्रार्थं मन्त्रचैतन्यं योनिश्चापि न वेत्ति यः।

शतकोटि जपेनापि तस्य विद्या न सिध्यति ॥ १ ॥

देवदेव महादेव रहस्यं पूर्वसूचितम्।

एतत्तत्त्वं महादेव कृपया वद शङ्कर ॥ २ ॥

श्री-ईश्वर उवाच

मन्त्रार्थं परमेशानि सावधानावधारय।

तथा च मन्त्रचैतन्यं निर्वाणपदमुत्तमम् ॥ ३ ॥

प्रसङ्गात् परमेशानि निवदामि तवाज्ञया।

मूलाधारे मूलविद्यां भावयेदिष्टदेवताम्॥ ४॥

शुद्धस्फटिकसङ्काशां भावयेत् परमाक्षरीम्।

भावयेदक्षरश्रेणीमिष्टविद्यां सनातनीम्॥ ५॥

मूहूर्त्तार्द्धं विभाव्यैतां पञ्चध्यानपरो भवेत्।

ध्यानं कृत्वा महेशानि मुहूर्त्तार्द्धं ततः परम्॥ ६॥

ततो जीवो महेशानि मनसा कमलेक्षणे।

स्वाधिष्ठानं ततो गत्वा भावयेदिष्टदेवताम्॥ ७॥

बन्धूकारुणसङ्काशां जपासिन्दूर आकृतिम्।

विभाव्य अक्षरश्रेणीं पद्ममध्यगतां शुभाम्॥ ८॥

ततो जीवः प्रसन्नात्मा पक्षिणा सह सुन्दरी।

मणिपूरं ततो गत्वा भावयेदिष्टदेवताम्॥ ९॥

विभ्राम अक्षरश्रेणीं पद्ममध्यगतां पराम्।

शुद्धस्फटिकसङ्काशां शिववक्षोपरि स्थिताम्॥ १०॥

ततो जीवो महेशानि पक्षिणा सह पार्वति।

हृत्पद्मं प्रययौ शीघ्रं नीरजायतलोचने॥ ११॥

इति विद्यां महेशानि भावयेत् कमलोपरि।

विभाव्य अक्षरश्रेणीं महामरकतप्रभाम्॥ १२॥

ततो जीवो वरारोहे विशुद्धं प्रययौ प्रिये।

तत्पद्मगहनं गत्वा पक्षिणा जीव पार्वति॥ १३॥

इष्टविद्यां महेशानि आकाशोपरि भावयेत्।

विभाव्य अक्षरश्रेणीं हरिद्वर्णं वरानने ॥ १४ ॥

तत्र आज्ञापुरं देवि प्रययौ जीव पार्वति ।

पक्षिणा सह देवेशि खञ्जनाक्षि शुचिस्मिते ॥ १५ ॥

इष्टविद्यां महेशानि साक्षाद् ब्रह्मस्वरूपिणीम् ।

विभाव्य अक्षरश्रेणीं चतुर्वर्णानुरञ्जिताम् ॥ १६ ॥

आज्ञाचक्राणि (सम्भाव्य) विभाव्य वरवर्णिनि ।

षट्चक्रे परमेशानि ध्यानं कृत्वा शुचिस्मिते ॥ १७ ॥

ध्यानेन परमेशानि यद्रूपं समुपस्थितम् ।

तदेव परमेशानि मन्त्रार्थं विद्धि पार्वति ॥ १८ ॥

प्रषञ्चानि ततोऽतीत्य जीवस्तु पक्षिणा सह ।

प्रययौ परमं रम्यं निर्वाणं परमं पदम् ॥ १९ ॥

सहस्रारं शिवपुरं तन्मध्ये सात्त्विकीं पुरीम् ।

कौशिकीं सततं देवि पुरीं शक्तिमयीं प्रिये ॥ २० ॥

पक्षिणा सह देवेशि जीवः शीघ्रं प्रयाति हि ।

विभाव्य अक्षरश्रेणीममृतान्तु रसायनीम् ॥ २१ ॥

तत् सदा शिवपुरं रम्यं कल्पवृक्षतलस्थितम् ।

नानारत्नसमाकीर्णं तन्मूलं कमलानने ॥ २२ ॥

वृक्षञ्च परमेशानि सततं त्रिगुणात्मकम् ।

पञ्चभूतात्मकं वृक्षं पञ्चशाखासमन्वितम् ॥ २३ ॥

चतुःशाखा चतुर्वेदं चक्रतत्त्वसमन्वितम् ।

चतुर्वर्णयुतं पुष्पं शुक्लं रक्तं शुचिस्मिते ॥ २४ ॥

पीतं कृष्णं महेशानि पुष्पद्वयं परं शृणु ।

हरितञ्च महेशानि विचित्रं सर्वमोहनम् ॥ २५ ॥

षट्पुण्यञ्च महेशानि- मिदं स्मृतम् ।

अन्यानि यानि शाखानि क्षुद्राणि नीललोचने ॥ २६ ॥

तानि सर्वाणि पत्राणि सर्वशास्त्राणि सुन्दरि ।

त्वगस्थिमेधामज्जानि वृक्षशाखानि च प्रिये ॥ २७ ॥

तानि सर्वाणि देवेशि इन्द्रियाणि प्रकीर्तितम् ।

सर्वशक्तिमयीं देवि दिव्यां नीरजलोचने ॥ २८ ॥

एवंभूतं महावृक्षं भ्रमरैः परिशोभितम् ।

इतिहासपुराणानि सर्वाणि वृक्षसंस्थितम् ॥ २९ ॥

कोकिलैः परमेशानि शोभितं बहुपक्षिभिः ।

नानापक्षियुतं रम्यं दिव्यस्त्रीगणसंयुतम् ॥ ३० ॥

देवदानवगन्धर्वशोभितं कमलानने ।

बन्धुभिः शोभितं देवि गणैरत्नादिकाङ्क्षभिः ॥ ३१ ॥

सूक्ष्मं हि परमं दिव्यं पर्यङ्कं सर्वमोहनम् ।

चन्द्रकोटिसमं देवि सर्वकोटिसमप्रभम् ॥ ३२ ॥

शीतांशुरश्मिसंयुक्तं नानागन्धानुमोदितम् ।

नानापुष्पसमूहेन रचितं हेममालया ॥ ३३ ॥

ततः परं महेशानि सदाशिवः स्वयं पुनः ।

जीवः पक्षियुतो देवि भावयेत् तत्र पार्वति ॥ ३४ ॥

सदाशिवो महेशानि महाकुण्डलिनीयुतः ।

एवं कल्पद्रुमं ध्यात्वा तदधो रत्नवेदिकाम् ॥ ३५ ॥

तत्रोपरि महेशानि पर्यङ्कं भावयेत् प्रिये ।

कामिनीकोटिसंयुक्तं चामरैर्हस्तसंस्थितम् ॥ ३६ ॥

एवं विभाव्य मनसि सदाजीवं शुचिस्मिते ।

यस्य यस्य महेशानि यदिष्टं कमलानने ॥ ३७ ॥

तस्य ध्यानसमायुक्तो मनसा परमेश्वरि ।

जीवो ध्यानपरो भूत्वा जपेदष्टशतं प्रिये ॥ ३८ ॥

मन्त्राक्षराणि देवेशि मातृकापुटितं क्रमात् ।

कृत्वा जीवः प्रसन्नात्मा जपेदष्टशतं प्रिये ॥ ३९ ॥

अनुलोमविलोमेन कुर्यात् परमयत्नतः ।

अनेन क्रमतो देवि चैतन्यं विद्धि सुन्दरि ॥ ४० ॥

मन्त्रार्थं मन्त्रचैतन्यं कथितं तव भक्तितः ।

न कस्मैचित् प्रवक्तव्यं यदीच्छेच्छुभमात्मनः ॥ ४१ ॥

इदं रहस्यं परमं गोपनीयं वरानने ।

शिष्याय भक्तियुक्ताय साधकाय प्रकाशयेत् ॥ ४२ ॥

वैष्णवेऽपि महेशानि कुर्याच्चैतन्यमद्भुतम् ।

विष्णुमन्त्रे महेशानि शिवमन्त्रेऽप्युपासते ॥ ४३ ॥

चैतन्यं बहुरत्नेन वैष्णवो यत्नतश्चरेत् ।

ततः सिद्धो भवेन्मन्त्रो विद्या च कमलानने ॥ ४४ ॥

सिद्धमन्त्रस्तु यः कुर्यात् स शिवो नात्र संशयः ।

ब्रह्माण्डभाण्डमध्ये तु विहरेत् स च साधकः ॥ ४५ ॥

शतकोटि महेशानि तत्पुरश्चरणं स्मृतम् ।

चैतन्यरहितं देवि यो जपेत् न च पापकृत् ॥ ४६ ॥

मन्त्रार्थं मन्त्रचैतन्यं सुगोप्यं भुवनत्रये ।

तव भक्त्या मयाख्यातं दासोऽहं तव सुन्दरि ॥ ४७ ॥

अहं मृत्युञ्जयो देवि प्रसादात् तव सुन्दरि ।

त्वद्वक्त्राम्बुजपीयूषपानेन कमलानने ॥ ४८ ॥

वज्रतुल्यं मम वपुः सदाविभववर्द्धनम् ।

ब्रह्माण्डं सकलं देवि तव रूपमयं सदा ॥ ४९ ॥

या शक्तिः परमेशानि सा त्वं भवसि सर्वदा ।

कृपामयि महेशानि प्रकृतिः शरीरमाश्रिता ॥ ५० ॥

सती त्वं परमेशानि पार्वतीत्वं गता प्रिये ।

सतीत्वं परमं प्राप्ता इदानीं पार्वती प्रिये ॥ ५१ ॥

सती स्नेहं महेशानि त्यक्त्वा सुन्दरि यत् कृता ।

पार्वंतीत्वं गता भद्रे मेनकायां शुचिस्मिते ॥ ५२ ॥

एतस्मिन्नन्तरे काले सदा ध्यानपरो ह्यहम् ।

इति ध्यानं समागच्छन् भूत्वा तिष्ठामि सुन्दरि ॥ ५३ ॥

ध्यानमार्गपरो भूत्वा करोमि स्वागमं जपम् ।

स्वावासं शक्तिरूपं सदा यत् हृदि संस्थितम्॥ ५४॥

स्वावासं वर्णपुञ्जानि नानाविद्यानि पार्वति।

नानाविद्यासु देवेशि दश विद्या प्रगीयते॥ ५५॥

एतानि स्वागमं देवि सारात्सारं परात्परम्।

जपित्वा लक्षवर्षाणि स्वागमं शक्तिरूपिणम्॥ ५६॥

सिद्धिं गता महेशानि स्वागमे परमेश्वरि।

ध्यानमार्गं परित्यज्य तव पादेषु गीयते॥ ५७॥

यदिष्टं ध्यानमार्गेण तत्सर्वं कथयामि ते।

स्वागमं हि विना देवि न किञ्चिद् वर्त्तते प्रिये॥ ५८॥

सर्वं हि परमेशानि ब्रह्माण्डं स्वागमे स्थितम्।

स्वागमाच्च प्रसूयन्ते कोटिशः कुण्ड (म) ग्नयः ॥ ५९ ॥

ब्रह्माण्डं कोटिशो देवि निर्माणं स्वागमात् प्रिये ।

पुराणानि महेशानि तन्द्राणि विविधानि च ॥ ६० ॥

यत् किञ्चिद् दृश्यते देवि स्थूलसूक्ष्मं शुचिस्मिते ।

तत् सर्वं परमेशानि स्वागमात् कमलानने ॥ ६१ ॥

सृष्टिञ्च कुरुते देवि ब्रह्मा स्वागमात् कमलानने ।

स्थितिञ्च कुरुते विष्णुः स्वागमात् नगनन्दिनि ॥ ६२ ॥

संहरामि जगत् सर्वं त्रैलोक्यं सचराचरम् ।

ब्रह्मा विष्णुश्च रुद्रश्च सर्वे स्वागमरूपिणः ॥ ६३ ॥

स्वागमो ब्रह्मणो रूपं स्वागमं परमं पदम् ।

तेजःपुञ्जं महेशानि यदुक्तं कमलानने ॥ ६४ ॥

तेजःपुञ्जन्तु देवेशि स्त्रीरूपं स्वागमं प्रिये ।

स्वागमं मुक्तिकैवल्यं निर्वाणपदमव्ययम् ॥ ६५ ॥

स्वागमन्तु विना देवि सदेवासुरमानुषम् ।

स्वागमं परमेशानि मम इष्टं सदा प्रिये ॥

रहस्यं स्वागमोपेतं प्रसङ्गात् कथितं मया ॥ ६६ ॥

॥ इति श्रीभूतशुद्धितन्त्रे हरपार्वतीसंवादे चतुर्दशः पटलः ॥ १४ ॥

अथ पञ्चदशः पटलः

श्री-ईश्वर उवाच

धन्यं यशस्यमायुष्यं कलिकल्मषनाशनम् ।

यः कुर्यान्मातृकान्यासं स एव श्रीसदाशिवः ॥ १ ॥

विना न्यासं महेशानि यो जपेन्मातृकाक्षरम् ।

स याति नरकं घोरं विघ्नस्तस्य पदे पदे ॥ २ ॥

ब्रह्मादयोऽपि यां कृत्वा सृष्टिस्थित्यन्तकारकाः ।

द्वारकानायकः कृष्णःयां कृत्वापि युगे युगे ॥ ३ ॥

यां कृत्वा परमेशानि श्रीकृष्णः स्त्रीषु मोहनः ।

मातृकावर्णमाश्रित्य श्रीकृष्णः कमलानने ॥ ४ ॥

षोडशस्त्रीसहस्राणि स रेमे मातृकाकारणात् ।

श्रीरामश्च महेशानि अयोध्यायां वरानने ॥ ५ ॥

वीर्याधिकारी देवेशि भुङ्क्ते राज्यमकण्टकम् ।

दशवर्षसहस्राणि रामो राज्यमाचीकरत्॥ ६ ॥

हत्वा च त्रिविधान् वीरान् वारणादिनिशाचरान्।

मातृकावर्णमाश्रित्य सर्वं कुर्याद्रघूत्तमः॥ ७ ॥

पञ्चाशन्मातृकां देवीं जननीं विश्वमोहिनीम्।

पूर्वोक्ततन्त्रवद् देवि सर्वं कुर्याद् विचक्षणः॥ ८ ॥

प्रथमं मातृकागायत्रीं ध्यानपूर्वां शुचिस्मिते।

ततो जपं मातृकायाः कुर्यात् साधकयत्नतः॥ ९ ॥

षडङ्गयुगलं देवि ततः कुर्यात् समाहितः।

ततस्तु मातृकाध्यानं बहिर्न्यासं ततः परम्॥ १० ॥

ततः परं महेशानि मातृकापानमुत्तमम्।

एवमष्टमकं देवि मातृकान्यासमाचरेत्॥ ११॥

पठित्वा कवचं देवि देहेषु न्यासमाचरेत्।

न्यासस्य परमेशानि वरस्य गुरुरूपकम्॥ १२॥

यन्नोक्तं सर्वतन्त्रेषु प्रसङ्गात् कथयामि ते।

त्रिगुणस्य महेशानि न्यासं वक्ष्यामि संशृणु॥ १३॥

यं विना परमेशानि व्यर्थ-।

शिवविष्णुब्रह्मयुतं बिन्द्वर्ध्वचन्द्रसंयुतम्॥ १४॥

रजः सत्त्वं तमो देवि अर्द्ध योनी शुचिस्मिते।

सर्वोपरि महेशानि बिन्दु ब्रह्मस्वरूपिणम्॥ १५॥

न्यासश्च त्रिगुणोपेतं विन्यसेत् तस्य सन्धिषु।

पञ्चाशन्मातृकास्थाने त्रिगुणं न्यासमाचरेत्॥ १६॥

ततो भावय देवेशि न्यासं त्रैलोक्यमोहनम्।

न्यासस्य परमेशानि रहस्यं परमाद्भुतम्॥ १७॥

प्रपञ्चानां महेशानि दलेषु त्रिगुणं न्यसेत्।

गतञ्च परमेशानि त्रिधा वर्तनतो भवेत्॥ १८॥

अष्टधा त्रिगुणं देवि सहस्रारे ततो न्यसेत्।

अष्टोत्तरशतं देवि भिन्नायां त्रिगुणं न्यसेत्॥ १९॥

न्यासाधिकारी देवेशि ततो भवति साधकः।

त्रिगुणन्यासमात्रेण अधिकारीति गीयते॥ २०॥

अन्यथा विफलं न्यस्यं जपञ्च विफलं भवेत्।

न्यासञ्च विविधं देवि नानातन्त्रेषु गीयते ॥ २१ ॥

मातृकापरमाध्यानं सदा ब्रह्मादिभिः प्रिये ।

न्यासानां परमेशानि मातृका विश्वमोहिनी ॥ २२ ॥

स्रष्टा च परमेशानि गीयते आगमैः प्रिये ।

तस्मात्तु यत्नतो देवि मातृकान्यासमाचरेत् ॥ २३ ॥

रहस्यं परमं दिव्यं त्रिगुणन्यासकर्मणि ।

अतः परं मातृकायाः षोढा मोक्षप्रदायिनी ॥ २४ ॥

अकृत्वा मातृकां षोढां न्यासमन्यं करोति यः ।

षोढा च विफलं तस्य मातृका विफलं भवेत् ॥ २५ ॥

कृत्वा तु परमेशानि यानि न्यासानि आचरेत् ।

सफलानि सदा तस्य अन्यथा रोदनं वने ॥ २६ ॥

तस्मात्तु यत्नतः षोढां शृणु देवि वरानने ।

षोढा तु परमेशानि साक्षाद् ब्रह्मस्वरूपिणी ॥ २७ ॥

निरक्षरा साक्षरा वा कोटिचन्द्रसमप्रभाम् ।

ब्रह्मविष्णुनुतां रम्यां मम सम्पुटसंस्थिताम् ॥ २८ ॥

मम प्राणसमां विद्यां साक्षाज्ज्योतिर्मयीं शिवाम् ।

मातृषोढां वरारोहे सावधानावधारय ॥ २९ ॥

मन्त्रौङ्कारक्रमेणैव प्रसङ्गात् कथयामि ते ।

त्रिगुणे पुटितां कृत्वा पञ्चाशन्मातृकां प्रिये ॥ ३० ॥

परयत्नेन देवेशि पञ्चाशत् स्थानसन्धिषु ।

प्रथममनुलोमे तु विलोमं तदनन्तरम् ॥ ३१ ॥

ततः परं वरारोहे त्रिगुणं न्यासमाचरेत् ।

अष्टोत्तरशतं कृत्वा सर्वसिद्धीश्वरो भवेत् ॥ ३२ ॥

न्यासमात्रेण देवेशि जीवन्मुक्तो भवेन्नरः ।

प्रपञ्चानां दले देवि प्रथमं न्यासमाचरेत् ॥ ३३ ॥

ततः परं महेशानि बाह्यन्यासं समाचरेत् ।

शूद्रस्तु परमेशानि चतुर्दशस्वरं न्यसेत् ॥ ३४ ॥

कवचं हि विना देवि प्रथमं न्यासमाचरेत् ।

चतुर्दशस्वरं पुण्यं दीर्घप्रणवमुच्यते ॥

तस्मात् सर्वत्र शूद्रस्तु दीर्घप्रणवमुच्यते ॥ ३५ ॥

॥ इति श्रीभूतशुद्धितन्त्रे हरपार्वतीसंवादे पञ्चदशः पटलः ॥ १५ ॥

## अथ षोडशः पटलः

श्री-ईश्वर उवाच

प्राणायामं महेशानि प्रसङ्गात् कथयामि ते ।

जीवशुद्धिं मनःशुद्धिं प्राणायाममिदं स्मृतम् ॥ १ ॥

द्विविधं परमेशानि प्राणायामं समाचरेत् ।

प्राणायामं विना देवि न पूजां न जपञ्चरेत् ॥ २ ॥

सगर्भञ्च विगर्भञ्च प्राणायामं वरानने ।

जपध्यानादिभिर्युक्तं सगर्भं कमलानने ॥ ३ ॥

विगर्भञ्च तथा देवि वर्णहीनं भवेद् ध्रुवम् ।

पूरयेत् षोडशैर्वायुमिडया परमेश्वरि ॥ ४ ॥

चतुष्षष्ट्या धारयेत्तु चित्रामध्यगतां प्रिये ।

रेचयेत् कुम्भकार्धेन नाड्या मध्यमया सदा ॥ ५ ॥

एवं द्वादशाद् देवि प्राणायामं समाचरेत् ।

प्राणायामं महेशानि महायोगमयं सदा ॥ ६ ॥

योगं विना महेशानि मन्त्रसिद्धिर्न जायते ।

द्वयोर्द्वयोर्नामयोगो ब्रह्मसंसिद्धिकारणम् ॥ ७ ॥

एवं हि मनसा देवि सदा योगं समभ्यसेत् ।

यस्य यस्य च देवस्य यथा भूषणवाहनम् ॥ ८ ॥

तदेव पूजने तस्य चिन्तयेत् पूरकादिभिः ।

पूरकं धारकं देवि रेचकं नगनन्दिनि ॥ ९॥

सर्वशक्तिमयं देवि सर्वतन्त्रेषु निश्चितम् ।

-वेदान्ते ब्रह्म निर्णितम् ॥ १० ॥

वैशेषिके तु देवेशि परमाणुर्निगीयते ।

न्यासे च परमेशानि ईश्वरं न्याससम्मतम् ॥ ११ ॥

 - पुरुषं कूटरूपिणम् ।

मीमांसया तथा देवि ब्रह्मकर्म प्रगीयते ॥ १२ ॥

वेदादौ तुर्यचैतन्यं गीयते सततं प्रिये ।

तत्पुरोऽप्यस्ति देवेशि गुप्तब्रह्म सनातनम् ॥ १३ ॥

निरिन्द्रियं निश्चलं हि साक्षात् सुप्तमिव स्थितम् ।

एतत् सर्वं महेशानि शवरूपं निरिन्द्रियम्॥ १४॥

सर्वेषां परमेशानि शक्तिः प्रकृतिरूपिणी।

तस्मात् सर्वेषु देवेषु शक्तेः प्राधान्यमुच्यते॥ १५॥

शक्तिः कुण्डलिनी समस्तजननी शतधा वर्तनमयी।

सदा ताञ्च नमाम्यात्मभूतये कमलेक्षणे॥ १६॥

ततः शक्तिं विना देवि ब्रह्माद्याः शवरूपवत्।

शवत्वं सर्वदेवेषु विना शक्तिं शुचिस्मिते॥ १७॥

शवरूप इवायाति परं ब्रह्म सदा प्रिये।

शक्तियुक्तं यदा ब्रह्म तदा देवत्वमाप्नुयात्॥ १८॥

स्वागमं हि महेशानि प्रकृतिं विद्धि पार्वति।

स्वागमे सर्ववेदानि नानातन्त्राणि विद्यते ॥ १९ ॥

स्वागमं हि विना देवि न किञ्चिद् विद्यते प्रिये ।

तस्मात्तु परमेशानि सर्वं प्रकृतिमयं स्मृतम् ॥ २० ॥

ब्रह्माण्डं कोटिनिर्माणं सर्वशक्तियुतं सदा ।

आधारञ्च तथा देयं पाण्डित्यं यस्तु पार्वति ॥ २१ ॥

मूकत्वं कवितां देवि यद्यदन्यं शुचिस्मिते ।

तत्सर्वं परमेशानि शक्तिं विद्यात् शुचिस्मिते ॥ २२ ॥

शक्तिर्हि परमेशानि ब्रह्मद्वन्द्वं सदा प्रिये ।

शब्दब्रह्म परंब्रह्म शक्तियुक्तं सदा प्रिये ॥ २३ ॥

एवं ब्रह्मा महेशानि शब्दब्रह्म प्रशस्यते ।

शब्दस्य कारणं देवि मातृकां ब्रह्मरूपिणीम् ॥ २४ ॥

अत एव महेशानि सदा मम हृदि स्थितम् ।

तव भक्त्या मया ख्यातं सुगोप्यं हि शुचिस्मिते ।

न कस्मैचित् प्रवक्तव्यं यदीच्छेत् शुभमात्मनः ॥ २५ ॥

इति श्रीभूतशुद्धितन्त्रे हरपार्वतीसंवादे षोडशः पटलः ॥ १६ ॥

अथ सप्तदशः पटलः

श्री-ईश्वर उवाच

एतत् तन्त्रं महेशानि स्वर्गमर्त्यरसातले ।

प्रशस्तं स्यात् सदा देवि नान्यथा मम भाषितम् ॥ १ ॥

यस्मिन् राज्ये महेशानि एतत् तन्त्रं हि वर्तते ।

नोत्पातस्तत्र देवेशि न च भीतिः कदाचन ॥ २ ॥

नाशयुर्व्याधयो देवि तस्मिन् राज्ये न कुत्रचित् ।

न च मारीभयं तत्र न च रोगस्तदा प्रिये ॥ ३ ॥

सर्वधर्मेषु यद्धर्मः सर्वयज्ञेषु यत् फलम् ।

तत्फलं लभते देवि पुस्तकस्य च पूजनात् ॥ ४ ॥

यद्गृहे विद्यते देवि पुस्तकं मम दुर्लभम् ।

कामरूपसमं देवि तद्गृहं भुवि दुर्लभम् ॥ ५ ॥

पुस्तकञ्च महेशानि यद्गृहे विद्यते सदा ।

काश्यादीनि च तीर्थानि सर्वाणि तस्य मन्दिरे ॥ ६ ॥

यद्गृहे पुस्तकं देवि विद्यते कमलानने ।

सर्वदेवमयः सर्वदेवमयः सदा ॥ ७ ॥

एतत् तन्त्रं महेशानि सततं यस्य मन्दिरे ।

सर्वागममयं सोऽपि स नान्यथा तु कदाचन ॥ ८ ॥

सततं मन्दिरे यस्य एतत् तन्त्रं वरानने ।

सर्वशास्त्रसमः सोऽपि नान्यथा वचनं मम ॥ ९ ॥

संक्षेपेण भूतशुद्धिविवरणम्

रमिति जलधारया वह्निप्राकारं विचिन्त्य स्वाङ्के उत्तानौ करौ कृत्वा सोऽहमिति जीवात्मानं हृदयस्थं दीपकलिकाकारं मूलाधारस्थ कुलकुण्डलिन्या सह सुषुम्नावर्त्मना मूलाधारस्वाधिष्ठानमणिपूरकानाहत विशुद्धाज्ञाख्यषट् चक्राणि भित्वा शिरोऽवस्थिताधोमुख सहस्रदलकमलकर्णिकान्तर्गतपरमात्मनि संयोज्य तत्रैव पृथिव्यप्तेजोवाय्वाकाशगन्धरसरूपस्पर्शशब्द नासिका - जिह्वा - चक्षुस्त्वक्श्रोत्रवाक्पाणिपादपायुपस्थप्रकृतिमनोबुद्ध्याहङ्कार-रूपचतुर्विंशतितत्त्वानि लीनानि विभाव्य यमिति वायुबीजं धूम्रवर्णं वामनासापुटे विचिन्त्य तस्य षोडशवारजपेन । वायुना

देहमापूर्य नासापुटौ धृत्वा तस्य चतुःषष्ठिवारजपेन कुम्भकं कृत्वा वामकुक्षिस्थकृष्णवर्णं पापपुरुषेण सह देहं संशोष्य तस्य द्वात्रिंशद्वारजपेन दक्षिणनासया वायुं रेचयेत्, दक्षिणनासापुटे रमिति वह्निबीजं रक्तवर्णं ध्यात्वा तस्य षोडशवारजपेन वायुना देहमापूर्य नासापुटौ धृवा तस्य चतुःषष्टिवारजपेन कुम्भकं कृत्वा पापपुरुषेण सह देहं मूलाधारोत्थितवह्निना दग्ध्वा तस्य द्वात्रिंशद्वारजपेन वामनासया भस्मना सह ठमिति चन्द्रबीजं शुक्लवर्णं वामनासायां ध्यात्वा तस्य षोडशवारजपेन ललाटे चन्द्रं नीत्वा नासापुटौ धृत्वा रमिति वरुणबीजस्य चतुःषष्टिवारजपेन तस्माल्ललाटस्थचन्द्राद् गलितसुधया मातृकावर्णात्मिकया समस्तदेहं विरच्य लमिति पृथ्वीबीजस्य द्वात्रिंशद्वारजपेन देहं सुदृढं विचिन्त्य दक्षिणेन वायुं रेचयेत्।

इति श्रीभूतशुद्धितन्त्रं समाप्तम्।

एकैवानेक रूपा सा विद्याश्री त्रिपुराभिधा।
यस्याः संकट वोधेन जीवन्मुक्तः प्रवर्तते॥

इति श्रीवाराहीतंत्रे दक्षिणाम्नायनिर्वाणपदे दशमः पटलः॥ १०॥

श्रीदेव्युवाच॥

पृथिव्यापस्तथा तेज वायुराकाशमेव च।
पंचतत्व गत सृष्टिषु नक्षत्र विलीयते॥

श्रीशिव उवाच॥

पृ। ५०अ)

प्रथमं शून्यमव्यक्त द्वितीय धूममेव च।
तृतीये तेजमुत्पन्ना चतुर्थे आपजायते॥

पंचमे पृथिवी जाता पंचतत्वं प्रजायते।
एतत् पंचाधिकारी च त्रिगुण परमेश्वरः॥

ब्रह्माधराधिपश्चैव विष्णुजराधिपस्तथा ।
तेजो च वायुराकाशं महेश्चव्यावृत्तेश्वरः ॥

एतेषां जन्मं संहारं वक्ष्यामि शृणु पार्वति ।
क्रम्यव्युक्रमणे नैव शुद्धभावेन भावयेत् ॥

पृथिव्यां लीयते * प्सु आपस्तेजसि लीयते ।
तेजो विलीयते वायुः वायुराकाश लीयते ॥

एते पंचधिकारश्च पंचपंच प्रजायते ।
ब्रह्मांडं व्यापकं ज्ञेयं पंचभूतेन पार्वति ॥

मलमस्थितथानाडीनखकेश तथैव च ।
पृथिपंचगुणाप्रेता ज्ञानि ज्ञानेन भाषितं ॥

कामं क्रोधं च लोभं च विवादं विग्रहस्तथा ।
आपपंचगुणा प्रोक्ता ज्ञानि ज्ञानेन भाषितं ॥

क्षुधा तृष्णा तथा निद्रा आरस्यं कुंठ्यमेव च ।
तेजपंच गुणा प्रोक्ता ज्ञानि ज्ञानेन भाषितं ॥

पवनं धारणं चैव निरोधः संकुचिस्तथा ।
प्रशवो वायुरूपेण ज्ञानिज्ञानेन भाषितं ॥

भयं मोहस्तथा लज्जा रागद्वेषस्तथैव च ।
लोभपंचगुणाप्रोक्ता ज्ञानिज्ञानेन भाषितं ॥

अनंत भुवनं देवि ब्रह्मांडं क्रमसंख्यया ।
तेषां निष्ठा प्रवक्ष्यामि शृणुष्व सर्वभक्तितः ॥

पृ। ५०ब्)

पाद द्वय तलं विद्या वितलं गुल्फदेशके ।
सुतलं जंघदेशस्तु तरातल तदुर्द्धत ॥

महातलं उरुदेशे गुह्यदेशे रसातलं ।
पातालं कटिरंध्रे तु सप्तमं परिकीर्तितं ॥

भूर्लोकं नाभिदेशे तु भुवर्लोकं च कुक्षिणं ।
वामांगे स्वर्गलोकं च महर्लोकं च वक्षसि ॥

कंठस्तेज न लोकं च ततो लोकं ललाटके ।
सत्यलोकं भ्रुवोर्मध्ये भुवनानि चतुर्दशः ॥

अध स्थितो भवे मेरुः ऊर्ध्वकोणे च मंदर ।
कैलासश्चोत्तरे कोणे दक्षकोणे हिमालये ॥

माल्यवान् वामरेखायां दक्षिणे गंधमादनं ।
निषधश्चोर्द्धभागेन षडांगे परिपार्श्वतः ॥

अस्थिवेषस्थितो जंवु मेधः प्लक्ष च वस्थितः ।
कुशद्वीपस्थितो मांस क्रौंच द्वीपं च शोणितं ॥

शाल्म द्वीपं च मज्जायां साल्मली रोमसंचय ।
नखे पुष्कर द्वीपं च सप्तद्वीपा प्रकीर्तिता ॥

लवणोदकस्तथा मूत्रे क्षीरो क्षीरोदमस्तके ।

सुरादधि रसायां च श्वनित्यक्षुदधि तथा ॥

सर्पि सागर शुक्रे च तत्रापि जलसागर ।
दधिसागर श्लेष्मायां सागरा सप्त कीर्तिताः ॥

नादस्थाने स्थिता सूर्य तेजस्थाने च चंद्रमा ।
लोचने मंगल प्रोक्ता हृदि सौम्य व्यवस्थिताः ॥

पृ। ५१अ)

नाभि स्थाने गुरुं विद्या शुक्रे शुक्र व्यवस्थिता ।
नाभि स्थाने स्थितो मंदा मुखराहु व्यवस्थित ॥

राहु स्थाने स्थित केतु शरीरे ग्रहमण्डल ।
सार्द्ध त्रयश्च कोटिश्च शरीरे शेष उच्यते ॥

नव ज्वरं च प्रत्यक्षं शुद्धभावेन भावयेत् ।
गुडलिङ्गं च नेत्रञ्च मुखकर्णौ च नाशिक ॥

एतानि नवछिद्राणि द्वारानि नव उच्यते ॥

देव्युवाच ॥

कुत्र वा भावये चंद्रं सूर्यं वा कुत्र भावयेत् ।
मनं वा कुत्र स्थाने च देव देव वदस्व मे ॥

शिव उवाच ॥

तालुमूले स्थितश्चंद्र नाभिमूले दिवाकरः ।
सूर्यस्ते वसते वह्नि चंद्रास्ते वसते मनः ॥

देव्युवाचः ॥

कथमुत्पद्यते प्राणः कथमुत्पद्यते मनः ॥

कथमुत्पद्यतेवाचा एता सर्ववदस्व मे ॥

शिव उवाच ॥

अव्यक्तादुत्पते प्राणाः प्राणादुत्पद्यते मनः ।
मनः सर्वविकारं च वाक्यानि सर्वधातुभिः ॥

देव्युवाच ॥

को वा करोति कर्माणि को वा लिप्यति पातकैः ।
तत्कथय महादेव सर्वज्ञ परमेश्वर ॥

शिव उवाच ॥

मनः करोति कर्माणि मनोलिप्यति पातकैः ।
मनोपि उन्ममी भूत्वा पापपुण्यै न लिप्यते ॥

देव्युवाच ॥

कस्मिन् स्थाने स्थिता शक्तिः कस्मिस्थाने स्थित शिव ।
कस्मिन् स्थाने स्थित कालः जला केन प्रजायते ॥

प्। ५१ब्)

श्रीशिव उवाच ॥

आधारे वसते शक्तिः नादस्थाने वसेत् शिव ।
काला व्याप्त परिज्ञेया चलश्चित्तो जला भवेत् ॥

श्रीदेव्युवाच ॥

श्वासं वाक्यं गतिनिंद्रा प्राणस्य कण्ठमेव च ।
क्षुधा तृष्णा च पौरुष्यं कस्मादश प्रजायते ॥

श्रीशिवोवाच ॥

वायुश्च केवलं सूक्ष्म विकारेन च लभ्यते ।
तन्मयं च कृते भाव मुक्तो भवति तत्क्षणात् ॥

श्रीदेव्युवाच ॥

शिवशक्ति कथं देव दशवायुश्च कीदृशः ।
कीदृश परमं देवं देवदेववदस्वमे ॥

श्रीशिव उवाच ॥

शिवशक्तिश्च वायुंश्च सर्वं तिष्ठति वै क्रमं ।
वदांमि कारणं देवि शृणुत्व कथयामि ते ॥

हृदि प्राण स्थितो वायुरपानो गुरु उच्यते ।
समानो नाभि देशे तु उदानो कण्ठ उच्यते ॥

व्यान सर्वगतो देवि प्राणपंचक्रमोद्भव ।
एते पंचप्रकारेण प्राणो देहे व्यवस्थित ॥

नागकर्म कृकश्चैव देवदत्तो धनंजय ।
उदानो पंचवायुश्च ज्ञायते क्रमयोगत ॥

चैतन्य देहिनां सर्व नागवायु करोति च ।
कूर्मो वायु प्रयोगेन चक्षुनिमिष जायते ॥

क्लिकवायु क्षुधा जाता देवदत्तो त्वनन्तयेत् ।

धनञ्जय सशब्देण पूरयेत् सर्वदेहिनां ॥

पृ। ५२अ)

नागश्च ये गृहे वायु कूर्मश्च मतिनां सह।
कृककरोति कर्माणि देवदत्तो गतो भवेत्॥

बुद्धिधर्मा च मध्यक्षमशेषमविलंवितं।
नवद्धारं च प्रत्यक्षं दशमं स निगद्यते॥

शेषद्धारस्थितं तत्वं गुरुवाक्येन लभ्यते।
शक्तिकुंडलनी रूपा त्रयोदश स नाडिका॥

द्विसप्तति * माह श्रीशरीरे ज्ञायते ध्रुवं।
तेषां मध्ये प्रधानाश्च त्रयोदशमनाडिका॥

इडा च पिंगला चैव सुषुम्ना ऊद्ध्र्वनाडिका।
गांधारी हस्ति जिह्वा च पुषाप्राणलतास्तथा॥

यसाचालंवुषा चैव दक्षमार्गे विलंविका।

कुरंगि शंखिनी नित्या वाममार्गे विलंविता ॥

एतानिभीद्यते येन स योगी योगलक्षणं ।
ममतुल्यो भवत्येव ज्ञानदेवि न संशयः ॥

देव्युवाच ॥

भूतनाथ महादेव ब्रूहि मे परमेश्वर ।
त्रयो देवा कथं नामत्रयो भावाश्च कीदृश ॥

शिव उवाच ॥

रजोभाव स्थितो ब्रह्मा सत्वभाव स्थितो हरि ।
तमो भाव स्थितो रुद्र त्रयो देवा त्रयोगुण ॥

एकमूर्ति त्रयोदेवा रुद्रविष्णु पितामह ।
नानाभाव मनो यस्य तस्य मुक्ति न विंद्यते ॥

अहं श्रुतिरहंकार अहं सर्वगत शिव ।

अहं ब्रह्मारहं विष्णु अहं शून्यं निरञ्जनं ॥

देव्युवाच ॥

प्। ५२ब्)

सर्वज्ञ सर्वभूतेषु सर्वलोक महेश्वर।
त्वया च कथितो देव कथं माता पिता कथं ॥

शिव उवाच ॥

नवद्वारं च प्रत्यक्षं त्रिशून्यं पंच देवता।
पंचेंद्रिया कुतुन्वश्च यत्र प्राण समे गृहं ॥

अखिरा चतुरोवेदा सर्वशास्त्र तथैव च।
सारं च योगिभिः पीतं तक्रं पिवति पंडिता ॥

उंश्छिष्टं सर्वशास्त्राणि सर्वविद्या मुखे मुखे।
नोश्छिष्टं ब्रह्मनो ज्ञानं व्यक्ताव्यक्त मनोमयं ॥

पार्वत्युवाच ॥

यस्त्वया कथितो देव न हि यानामि शंकर ।
निश्चितं ब्रूहि मे देव मनो यत्र विलियते ॥

शिवोवाच ॥

मणः कर्मं च वाक्यं च त्रयो यत्र विलिप्यते ।
तत्रस्था परमाशक्ति शृणु देवि सुनिश्चितं ॥

विनानिसा यथा निद्रा ब्रह्मज्ञानि स उच्यते ।
स्वगमध्य खगज्ञानि खमार्गेण यथा खग ॥

तथात्मयो यजेत् सर्वं पंचभूत क्रमेण तु ।
मृतकस्य यथा निद्रा ब्रह्मज्ञानि स उच्यते ॥

बालकस्य यथाभाव मोक्षे योगस्तथा खगः ।
य इदं ब्रह्मणो ज्ञानं परमात्मा समाहितः ॥

शिवशक्ति समासंगो शतसूर्यस्य संगम ।
एकोपि ब्रह्मणो ज्ञानं यत्र चिंता विना मन ॥

एतत् ते कथितं ज्ञानं ब्रह्मज्ञान स तत्वतः ।
एतच्च सर्वसंतोष यत्र चिंता विना मन ॥

प्। ५३अ)

षट्चक्रं षोडशाधारं केशत्रय स चक्रकं ।
स्वदेहे यो न जानंति कथं ध्यायंति योगिनः ॥

आकाशमासनं कृत्वा मन ज्ञात्वा सुनिश्चितं ।
अहमेवमिदं सर्वं सिद्धया पश्यंतित सुखं ॥

काश्यां वा ससतां संगो गंगांभशंभुपूजनं ।
ब्रह्मज्ञान समो धर्मो नान्यो धर्म विधीयते ॥

अथ आह्लादिनी मंत्रं शृणु मत्प्राण वल्लभे ।
यस्योच्चारण मात्रेण कालिका सुप्रसीदति ॥

अनुस्थानरता सर्वं सिद्धिभागी भवेद्ध्रुवं ।

इति श्रीवाराही तंत्रे दक्षिणाम्नायनिर्वाणपदे पंचविंशति पटलः ॥ २५ ॥

भैरव उवाच ॥

कुर्यात् तदासनं तस्मादारोग्यं चांगलाघवं ।
वशिष्ठाद्यैश्च मुनिभिर्मत्स्यैंद्राद्यैश्च योगिभिः ॥

अंगीकृतान्यासनानि कथ्यंते कानि चित्सदा ।
जानुर्चोरंतरे सम्यक् कृत्वा पादतले उभे ॥

ऋतुकायः समासीनः स्वस्तिकं तन् प्रचक्षते ।

पृ। १५६ब्)

सव्ये दक्षिणगुल्फं तु पृष्टापार्श्वे नियोजयेत् ।
दक्षिणेतथा सव्यं गोमुखं गोमुखं तथा ॥

एकं पादं तथैकस्मिन्विन्यस्योरुणि संस्थितं।
इतरस्मिं तथा चैकं वीरासनमितिरितं॥

गुदं निष्पीडा गुल्फाभ्यां व्युत्क्रमेण समाहितः।
कूर्मासनं भवेदेतदिति योगविदोविदः॥

पद्मासनंस्तु संस्थाप्य जानुर्वोरंतरे करैः।
विन्यस्य भूमौ संस्थाप्य व्योमस्थः कुक्कुटासनं॥

कुक्कुटासनमध्यस्थोद्दोभ्यासं वंध्यकं धरा।
सते कूर्म वदुत्तान एतदुतान कूर्मकं॥

पादांगुष्ठौ तु वाहुभ्यां गृहीत्वा श्रीवणावधि।
धनुराकर्षणं कुर्याद्धनुरासनमुच्यते॥

वामोरुमूलार्पित दक्षपादं जानोर्वहि वेष्ठित वमपादं।
प्रगृह्य तिष्ठेत् परिवेत्ति ताग्रः श्रीमत्स्यनाथोदित मासनं स्यात्॥

मत्स्येंद्र पीठ ज्वलन प्रदीप्तं प्रचंडरुग्मं न * खण्डनास्त्रं।

अभ्यासतः कुंडलिनी प्रबोधं दंडस्थिरत्वं वददाति पुंसां ॥

उत्तानशववद्भूमौ शमनं च सवासनं ।
सवासनं शांति हरं चित्त विशांति कारकं ॥

चतुराशीति भ्यासनानि शिवेन कथितानि तु ।

पृ। १५७अ)

तेभ्यश्चतुष्कमादाय सारभूतव्रवीम्यहं ।
सिद्धं पद्मं तथा सिंहं भद्रं चेति चतुष्टयं ॥

श्रेष्ठ तत्र द्वयं तिष्ठेत् पद्मसिंहासने सदा ।

योनि स्यातकमंघ्रिमूलघंटितं कृत्वा दृढं विन्यसे मेढे
पादमथैकमेव नियतं कृत्वा समं विग्रहं ॥
स्थानु संप्रतितेंद्रियौ चलदृशा पश्यन्नुवोरं * चैतन्मोक्ष *
कपाटभेदजनकं सिद्धासनं प्रोच्यते ॥

मेढ्रादुपरिनिक्षिप्य सव्यगुल्फ तथोपरि ।

गुल्फांतर च निःक्षिप्य सिद्धासनमिदं भवेत् ॥

एतत् सिद्धासनं प्राहुरन्ये वज्रासनं विदुः ।
सुक्तासनं वदंत्येके प्राहुर्गुप्तासनं परे ॥

यमेष्विवमिताहारः अहिंसा नियमेष्विव ।
मुख्यं सर्वासनेष्वेकं सिद्धासिद्धासनं विदुः ॥

चतुराशीति पीठेषु सिद्धमेव सदाभ्यसेत् ।
द्विसप्तति सहस्रैषु नाडीनां मल शोधने ॥

आत्मध्यायी मि * हारी यावद्वादशवत्सरं ।
सदा सिद्धासनाभ्यासाद् योगिनी प्राप्तिमाप्नुयात् ॥

किमाद्यैर्बहुभिः पीठैः सदासिद्धासने सति ।
प्राणानित्ये सावधाने वर्द्ध केवलकुंभके ॥

उरुद्यंते विनिभ्यासा स्वयमेवोत्मनी यथा ।
तथैकस्मिन्नेव दृढे वद्धे सिद्धासने सदा ॥

बंधत्रयसनायासात् स्वयमेवोपजायते ।
न चासनं सिद्धसनं न कुंभसदृशो निल ॥

प्। १५७ब्)

न खेचरी समामुद्रा न नाद सदृशो लयंः ।

वामोरूपरिदक्षिणं च वरणं संस्थाप्य चामं तथा जानु
भूपरिपश्चिमेन विधिना धृत्वा कराभ्यां दृढं ॥ अंगुष्ठौ हृदये
निधाय चिबुकं नासाग्रमालांकये तद्व्याधिविनाशनाय यमिनां
पद्मासनं प्रोच्यते ॥

उत्तानौ चरणौ कृत्वा उरू संधौ प्रयत्नतः ।
उरू मध्ये तथोत्तानौ पाणौ कृत्वा ततो दृशौ ॥

नासाग्रे विन्यसेद् दृष्टी दंतमूलं च जिह्वया ।
उद्धृत्य चिबुकं वक्ष्ये स्थापयेत् पचनैश्शनैः ॥

इदं पद्मासनं प्रोक्तं सर्वव्याधि विनाशनं ।

दुर्लभं येन केनापि धीमता लभ्यते भुवि ॥

कृत्वा संपुटितौ करौ दृढतरं बध्वा तु पद्मासनं गाढं वक्षसि

सन्निधाय चिबुकं ध्यानच्चतच्चेतसि ॥

वा स्वा * रसपार्दमूर्द्धमनिलं प्रोल्लास यत् पूरितं मुंचन्

प्राणमुपैति बोधमतुलं शक्तिं प्रबोधो दयात् ॥

पद्मासने स्थितो योगी नाडी द्वारेण पूरयेत् ।

मारुतं यस्तु पिबति समुक्तो नात्र संशयः ॥

गुल्फो च वृषणस्याधः सीवन्याः पार्श्वयोः क्षिपेत् ।

दक्षिणे सव्य गुल्फं तु दक्षगुल्फं तु सव्यके ॥

हस्तौ भुजानुनोः स्थाप्य स्वांगुलीः संप्रसार्य च ।

व्यात्तवक्त्रौ निरीक्षेत मासाग्रे न्यस्त लोचनः ॥

पृ। १५८अ)

सिंहासनं भवेदेतत् पूजितं योगिभिः सदा ।

बंध त्रितयसंधानं कुरुते चासनोत्तमं ॥

गुल्फो च वृषण स्याधः सीवन्याः पार्श्वयोः क्षिपेत्।
पार्श्वपादौ च पाणिभ्यां दृढं बध्वा सुनिश्चलं॥

भद्रासनं भवेदेततत् सर्वं व्याधि नाशनं।
गोरक्षासनमित्याहुरिदं वै सिद्ध योगिनः॥

एवमानवंधणेषु योगिंद्रो विगतं श्रमः।
अथाभ्यसेन्नाडि शुद्धं मुद्रादि पवन क्रियां॥

क्रियायुक्तस्य सिद्धिः स्यादक्रियस्य कथं भवेत्।
न शास्त्र पाठमात्रेण योगसिद्धि प्रजायते॥

न वेषधारणं सिद्धे कारणं न च तत्कथा।
क्रियैव कारणं सिद्धः सत्यमेव न संशयः॥

सिष्णोदररता ये हे न देयो वेषधारिणः।
मयि बोधी बुधो स्वस्थे तुछोयं विश्वबुद्बुदः॥

मलीन उदितो वेत्ति विकल्पावसरः कुतः ।
आसनं कुंभकश्चित्रं मुद्रादि करणानि च ॥

अथादानानु संधेन स्यादभ्यासान् क्रमो हठे ।
ब्रह्मचारी मिताहारी त्यागी योगपरायणः ॥

अब्दादूर्द्धं भवेत् सिद्धिन्नात्र कार्याविचारणात् ।
सुस्निग्धा मधुराहार चतुर्थांशविवर्जितः ॥

भुजाविमांसदधितक्र कुलत्थकोलपि ।
नद्याकहिंगुलशुनाद्यमपश्यमाहुः ॥

भोजनमहितं विद्यात् पुनरघुलीकृतं ।
रुक्षं अतिलवणं तिलपिंडकदशनम् ॥

प् । १५८ब्)

वर्जयेद्धुर्जन प्रीति वह्निस्त्री पठसेवनं ।
प्रातस्नानोपवासादि कायक्लेशादिकं तथा ॥

गोधूमशालि जवषष्ठिकशोभनान्तं क्षीराज्य खण्ड नवनीतसितामधूनि ॥
सूढीपटोलफलकादि च शाकमुक्तं मुंगादि दिव्यमुदकं च
यमीन्द्रपंथां ॥

इष्टं स मधुरं स्निग्धं गव्यं धातु प्रपोषणं ।
मनोभिलषितं योग्यं योगीभोजनमाचरेत् ॥

युवावृद्धोति * द्धो वा व्याधितो दुर्वलस्तथा ।
अभ्यासात् सिद्धिमाप्नोति सर्वयोगेष्ट तंद्रितः ॥

पीठाति कुंभकश्चित्रं मुद्रादि करणानि च ।
सर्वस्य विह *? भ्यासे राजयोगफलावधि ॥

अथासने दृढे योगी वशीति हमितासनः ।
गुरूपदिष्टमार्गेन योगमार्ग समभ्यसेत् ॥

चलवातेजलंवित्तं निश्च निश्चलते तथा ।
योगीस्थाणुत्व माप्नोति ततो वायुं निरुंधयेत् ॥

यावद्वातास्थितो देहे तावज्जीवनमुच्यते ।
मरन तस्य निःक्रांति तस्माद् वायु न रुंधयेत् ॥

मलाकुलासु नाडीषु मारुती नैव मध्यगः ।
कथं स्यादुत्मनी भावः कार्यसिद्धिः कथं भवेत् ॥

शुद्धिमेति यथा सर्वं नाडी चक्रं मलाकुलं ।
तदैव जाते योगी प्राणसंग्रहणे क्षमः ॥

प्राणाभ्यासं ततः कुर्यान्नित्यं सात्विकयाधिया ।

प्। १५९अ)

यथा सुखेमवस्थायमलाः शौषं प्रयांति च ।
वद्धपद्मासने योगी प्राणं चंद्रेण पूरयेत् ॥

धारयित्वा यथा शत्त्या भूयः सूर्येण रेचयेत् ।
प्राणं सूर्येण चाकृष्य पूरयेदुदरं शनैः ॥

विधिवत् कुंभकं कृत्वा पुनः चंद्रेण रेचयेत् ।

येन त्येजेत्तेना पूर्यधारयेदविरोधतः ॥

रेचयेच्च ततोन्येनशनैरेव न वेगतः ।

प्राणं त्रयापितेन्नियमितं भूयोन्ययारचयेत् पीत्वा पिंगलया समीरणमथो
वध्वा त्यजेद् वामया ॥
सूर्याच्चंद्रमसोरनेन विधिना विंवद्वयं ध्यायतां शुद्धानाडि गणा
भवंति यमिनां मासत्रयादूर्द्धतः ॥

प्रातर्मध्ये दिने शाय मध्यरात्रे च कुंभकान् ।
शनैरशीति पर्यंतं चतुर्वारं समभ्यसेत् ॥

अधमं जायते स्वेदः कंपो भवति मध्यमे ।
उत्तिष्ठ चोत्तमे प्राणा वद्धे पद्मासने मुहुः ॥

जलेन श्रमजातेन गात्रमर्दन माचरेत् ।
दृढता लघुता वापि तेन गात्रस्य जायते ॥

अभ्याकाले प्रथमेशस्मक्षीराज्य भोजनं ।

ततोभ्यासे स्थिरी भूतेन तादृग् नियमग्रहः ॥

यथा सिंहो गजो व्याघ्रो भवेद् वश्य शनैः शनैः ।
तथैव सेवितो वायुरन्यथाहंति साधनं ॥

प्राणायामेन युक्तेन सर्वरोगक्षयो भवेत् ।
अयुक्ताभ्यांसयोगेन सर्वरोगसमुद्भवः ॥

हिक्काकाशस्तथा श्वास शिरः कर्णाक्षि वेदना ।

प्। १५९ब्)

भवंति विविधा दोषाः पवनस्य व्यति क्रमात् ।
युक्तं युक्त त्यजेद् वायुः युक्तं युक्त च सेवयेत् ॥

युक्तं युक्त च वध्नीयादेवं सिद्धिमवाप्नुयात् ।
यदा नाडि विशुद्धिः स्यात् तदा चिह्नानि वाह्यतः ॥

कायस्य क्रियते कांतिस्तथा जायेत निश्चितं ।
यथाष्टं धारणं वायोरानलस्य प्रदीपनं ॥

नादाभिव्यक्तिरारोग्यं जायते नाडि शोधने।
मेदः श्लेष्मादि नाशार्थं षट्कर्मादि समाचरेत्॥

अन्यथा नाचरेत् ज्ञानि दोषाणां समभावतः।
धोतीवर्तिश्च नेतिश्च त्राटकं नौलिकं तथा॥

कपालभाथी चैतानि षट्कर्माणि प्रचक्ष्यते।
कर्मषट्कमिदं गोप्यं घटशोधनकारकं॥

विचित्रगुणसंधायी पूज्यते योगपुंगवैः।
चतुरंगुलविस्तारं हस्तपंचदशेन तु॥

गुरूपदिष्टमार्गेण सिक्तं वस्त्रंशनैग्रसेत्।
ततः प्रत्याहरे चैव दुदितौ धौति कर्म तत्॥

श्वासः काशः प्लीह कुष्टां कफरोगाश्च विंशति।
धौती कर्म प्रभावेन शुद्ध्यंते च न संशयः॥

नाभि दघ्नेन लेपायुन्यसनालोत्कटासनः ।
आधारात् कुंचनं कुर्यात् क्षालनं वस्ति कर्म तत् ॥

गुल्पप्लिहोदलं वापि वातपित्तकफोद्भवं ।
वस्तिकर्म प्रभावेन क्षीयंते सकला मला ॥

पृ। १६०अ)

धोन्विंद्रियांतकरणप्रसादं दधास्वकांतिं दहनप्रदीप्तिं ।
अशेषदोषोपचयंति हन्यादत्यस्य मानं जलपस्ति कर्म ॥

मुत्रं वितस्ति सुस्निग्धनासानासप्रवेशयेत् ।
मुख निर्गमना देव नेति सिद्धैर्निपाद्यते ॥

कपालशोधिनी कार्या दिव्य दृष्टि प्रदायिनी ।
यत्तूर्द्ध जातरोगोद्यानेतिराशुनिहंति च ॥

निरीक्ष्यनिश्चला दृष्ट्या सूक्ष्मलक्षं समाहितः ।
अश्रुसम्पतपर्यंतमाचार्यैस्ताटकंस्ततं ॥

स्फोटनं नेत्ररोगी च तंद्रानां तु कपाटकं ।

प्रयत्नात्त्राटकं गोप्यं यथा हाटकपेतकं ॥

अमंदावर्तवेगेन तुंदसव्यापसव्यतः ।

अतशो भ्रामयेदेषा नौली गौलैः प्रशस्यते ॥

मंदाग्निसंदीपनपाचकादि संधापकानंदकरी सदैव ।

अशेषदोषामलशोषणीव हटक्रियासो जयतीहनौली ॥

लोहकालस्य भस्त्रीवत् कुर्यात् सव्यापसव्यतः ।

कपालभाष्यं विख्यात कफदोषविशोधिनी ॥

षट्कर्मभिर्गतस्थौल्यं कफमेदो वलाधिक ।

प्राणायाम ततः कुर्यादनायासेन सिद्ध्यति ॥

प्राणायामै सुखात् सर्वे प्रशुद्ध्यंति मलाशयाः ।

आचार्यानां तु केषांचिदन्यत् कर्म न सन्मतं ॥

षट्कर्म योगमाप्नोति पचनाभ्यास तत्परः ।

ब्रह्मादयोपि विदशाः प्राणायामपरायणा ॥

प्।१६०ब्)

तेन सिद्धिं गतास्ते च तस्मात् पवनमभ्यसेत्।
सुमनाकांतकाभव्य तस्मात् पवनमभ्यसेत्॥

यावद् वद्धौमरुद् देहे यावच्चित्तं निरामयं।
यावत् पश्यद्भ्रुवौर्मध्यं तावत् कालं भये कुतः॥

विधिवत्प्राणसंयामे नाडीचक्रे विशोधिते।
सुषुम्ना वदनं भित्वा सुखद्विगतिमारुतः॥

मारुतमध्यसंचारे मनस्थैर्य प्रजायते।
यो मनः सुस्थिरो भाव सैवावस्था मनोन्मनी॥

तत्सिद्धये विधानज्ञो चित्रात् कुर्वंति कुंभका।
विचित्रकुंभकासाद्विचित्रां सिद्धिमवाप्नुयात्॥

सूर्यभेदनमुख्यायी तथाशीत्का * *? तली।

भस्तीका भ्रमरीमूर्छा केवलश्चाष्टकुंभकाः॥

पूरकांते तु कर्तव्यो वंधोजालं धराभिधः।
कुंभकांते रेचकादौ कर्तव्यस्तुड्डियानकः॥

अधस्ता कुंचने भाशुकंठसंकोचने कृते।
मध्यपश्चिमतानेन स्यात् प्राणो मध्यनाडिगः॥

अपानमूर्द्धमुत्थाप्य प्राणं कंठादधो नयेत्।
योगी जराविमुक्तश्च षोडशाब्द वयो भवेत्॥

अथासने सुखादेव वध्वावज्रासनं ततः।
दक्षणाड्यासमाकृख्य वहिस्थापवनं शनैः॥

आकेशाग्रान्नखाग्रं च शिरोप्यवधिकुंभयेत्।
कृत्वा वैवामनाड्या च चालयेत् पवनं शनैः॥

पृ। १६१अ)

कपालशोधनं वात दोषघ्नं कृमिनाशनं।

पुनः पुनरिदं सूर्य भेदनं समुदाहृतं ॥

मुखं स यस्य नासाभ्यां आकृष्य पवनं शनैः ।
यदा च गति कंठांतं हृत्पद्मवधिशोधनं ॥

पूर्ववत् कुंभयेत् प्राणाद्रेचयेदितया ततः ।
श्लेष्मादोषहरं देह वलदीप्तिविवर्द्धनं ॥

कुंभं कुर्यात् सदा वक्राद् घ्राणे चैव विजृंभितं ।
एवमभ्यासयोगेन कामदेवो द्वितीयकं ॥

योगी चक्रं समासाद्य सृष्टिसंहारकारकः ।
न क्षुधा न तृषा निद्रा नैवालस्यं तु जायते ॥

भवेश्वछंद देहश्च सर्वोपद्रव वर्जितः ।
अनेन विधिना सत्यं योगींद्रो भुवि मंडले ॥

रसना तालु मूलेन यः प्राणं सततं पिबेत् ।
स भवेत् सर्वसिद्धीनां भाजनं नात्रसंशयः ॥

रसना तालु मूलेन यः प्राणं सततं पिबेत्।
अब्दार्द्धेन भवेत् तस्य सर्वगां सुस्थिरः क्रियां॥

जिह्वाया वायुमाकृष्य पूर्ववत् कुंभसाधनं।
प्राणैस्तु प्रणरंध्राभ्यां रेचयेदनिलं शनैः॥

गुल्म श्लेष्मादयो दोषाः ज्वरपित्तक्षुधा तृषा।
एतानि शीतली नामः कुंभकोयं निहंति च॥

उर्वोरुपारसंस्थाप्य उभे पादतले तथा।
पद्मासनं भवेत् सम्यक् सर्वपापप्रणाशनं॥

सम्यक् पद्मासने वध्वा समग्रीवोदरः सुधी।

प्। १६१ब्)

मुखं संयस्य यत्नेन प्राणं घ्राणेन्द रेचयेत्।
अथैव स्वशरीरस्थं चारयेत् पवनं स्थली॥

सुखसंम्यक् प्रयत्नेन प्राणं घ्राणेन रेचयेत्।
यदा गलति हृत्कंठे कपालपवनं ततः॥

वेगेन पूरयेत् केचिद् हृत्पद्मावधिमारुतं।
पुन विरेचयेत् तद्वत् पुरयेच्च पुनः पुनः॥

यथैव लोहकाराणां भस्त्री वेगेन चारयेत्।
तथैव स्वशरीरस्थं चालयेत् पवनं शनैः॥

यदाश्रमो भवेन् देहे तदा सूर्येण रेचयेत्।
अथोदरं भवेत् पूर्णं रेचनैर तथा लघु॥

धारयेन्नासिका मध्ये अंगुलीभ्यां तथा दृढं।
कुंभकं पूर्ववत् कृत्वा रेचयेद्वित्रया निल॥

वातपित्त श्लेष्म हरं शरीराणि विवर्द्धनं।
कुंडली बोधकः कुंभो रोगघ्नः सुखदः शुभः॥

ब्रह्मनाडी मुखे संस्थः कपालार्गल नाशनः।

सम्यग्सस्त्रासमुद्भूतो ग्रंथि त्रय विभेदकः ॥

वेगाद्दोषं पूरकं भृंगनादं भृंगी नादं रेचकं मंद
मंदं ।
योगींद्राणामेवमभ्यासयोगाच्चित्तै पाताका चिदानन्दमूर्छा ॥

पूरकांते वहुतरं वध्वा जालंधरै शनैः ।
रेचयेन् मूर्छनास्थोयं मनोमूर्छासुखप्रदः ॥

अंतः प्रवर्तिता धार मारुता पूरितोदरः ।
साक्षात् पयस्य गाधोपि प्लवतो ब्रह्मपत्रवत् ॥

प्राणायामस्त्रिधा प्रोक्तो रेचपूरक कुंभकैः ।

पृ। १६२अ)

सहितः केवलश्चेति कुंभको द्विविधो मतः ।
रेचकः पूरक कार्य स वै सहित कुंभकः ॥

यावत् केवल सिद्धि स्यात् तावत् सहितमंन्यसेत् ।

रेचकं पूरकं मुत्त्वा मुखाद्वायु निरोधनात् ॥

प्राणायामोयमित्युक्तः स वै केवल कुंभकः ।
केवलकुंभके सिद्धे रेचं पूरक वर्जितं ॥

न तस्य दुर्लभं किंचित् त्रिषु कालेषु विद्यते ।
शुद्ध केवल कुंभेन यथेष्टं वायु धारणं ॥

राजयोग पदं चैव लभ्यते नात्र संशयः ।
हठं विना राजयोगो राजयोगं विना हठ ॥

न सिद्धयति ततो युग्मनानिष्पत्तेः समभ्यसेत् ।
कुंभकः प्राणरेचांते कुर्यात्रित्तं निरामयं ॥

एवमभ्यासयोगेन राजयोग पदं व्रजेत् ।
कुंभकात् कुण्डली बोधः कुंडलो बोधतो भवेत् ॥

अनुर्गता सुषुम्ना च हठसिद्धिश्च जायते ।
वपुः कृशत्वं वदने प्रसन्न नादस्फुटत्वं नयने च निर्मले ॥

आरोग्यतां बिन्दु जयोग्नि दीपनं नाडीषु सिद्धिर्हठसिद्धिलक्षणं।

स शैलवनधात्रीनां यथाधारो हि कुंडली।

सुप्तागुरु प्रसादेन यथा यागर्ति कुंडली॥

तया पद्मानि सर्वाणि भिद्यंते ग्रंथयोपि च।

प्राणस्य शून्य पदवी तदा राजपथायते॥

तथा चित्त निरालंबं तथा कालस्य वंधनं।

प्.। १६२ब्)

सुषुम्ना शून्य पदवी ब्रह्मरंध्रं महापथः।

श्मशानं शांभवी मध्य मार्गश्चेत्येककवाचका॥

तस्मात् सर्वप्रयत्नेन प्रबोधयतुमीश्वरी।

ब्रह्मद्वारमुखसुप्तं मुद्राभ्यासं समाचरेत्॥

महामुद्रामहावंधो महावेधंश्च खेचरी।

उड्डियानं मूलबंधः ततोजालंधराभिधः ॥

करणी विपरीताख्या वज्रोली शक्ति चालनं ।
इदं च मुद्रा दशकं धरामरणनाशनं ॥

आदिनाथोदितं सर्वं अष्टैश्वर्य प्रदायकं ।
वल्लभं सर्वसिद्धानां वल्लभं मनुजामपि ॥

गोपनीयं प्रयत्नेन यथारत्न करंडकं ।
कस्यचिन्नैव वक्तव्यं कुलस्त्रीसुरतं यथा ॥

वज्रोली रमरोभिश्च सहजालिस्त्रिधा मता ।
एतेषां लक्षणं वक्ष्य कर्तव्यं च विशेषतः ॥

पादमूलन वामेन योनि संपीडयदक्षिणं ।
पादं प्रसारितं धृत्वा कराभ्यां धारितत्सुखं ॥

कंठे वंधंसमारोप्य धारयेद्वायुमूर्द्धतः ।
यथादंडाहतः सर्पो दंडाकारः प्रजायते ॥

ऋज्वा भूता तथाशक्तिः कुण्डली सहसा भवेत्।
तदस्ति मननावस्था जायते द्विपुटाश्रिता ॥

ततः शनैशनैरेव रेचयेन् न तु वेगतः।
इयं खलु महामुद्रा महासिद्धैः प्रशस्यते ॥

महाक्लेशादयो दोषा जायंते मरणादयः।

प्।१६३अ)

महामुद्रा च ते नैव वदंति विवुधोत्तमा।
चंद्रासै च समभ्यस्य सूर्याशे पुनरभ्यसेत्॥

यावत् संख्या भवर्तुल्या ततो मुद्रां विसर्जयेत्।
नापथ्यं न हि पथ्यं च रसा सर्वोपिरीरसा ॥

अपि मुक्तं विषं घोरं पीयूषमिव जीर्यति।
क्षयं कुष्टं मुदावर्त्तं तुल्याजीर्ण पुरोगमाः ॥

दोषाः सर्वक्षयं यांति महामुद्रां तु योभ्यसेत्।
कथितेयं महामुद्रा महासिद्धिकरी नृणां ॥

गंभ्यनीया प्रयत्नेन न देया यस्य कस्यचित्।
ष्णिं भागेन पादस्य योनि स्थानं नियोजयेत्॥

वामोरूपरिसंस्थाप्य दक्षिणं चरणं तथा।
पूरयित्वा ततो वायुं हृदयं चिबुकं दृढं॥

निक्षिप्य योनिमाकुंच्य मनो मध्ये नियोजयेत्।
धारयित्वा यथाशक्त्या रेचयेदनिलंशनैः॥

संव्यागवसमभ्यास्य दक्षिणे नरमभ्यसेत्।
मतमेतं तु केषांचित् कंठवंधं विवर्जयेत्॥

शतदंतस्य जिह्वायां वंधः शस्त्रो भवेद्धितः।
अयं किल महावंधः महासिद्धि प्रदायकः॥

महामुद्रा च ते नैव वदंति विवुधोत्तमा।

चंद्रासै च समभ्यस्य सूर्याशे पुनरभ्यसेत् ॥

यावत् संख्या भवर्तुल्या ततो मुद्रां विसर्जयेत् ।
नापथ्यं न हि पथ्यं च रसा सर्वेपिरीरसा ॥

पृ। १६३ब्)

अपि मुक्तं विषं घोरं पीयूषमिव जीर्यति ।
क्षयं कुष्टं मुदावर्तं तुल्याजीर्णपुरोगमाः ॥

दोषाः सर्वक्षयं यांति महामुद्रां तु योन्यसेत् ।
कथिते यं महामुद्रा महासिद्धिकरी नृणां ॥

गंभ्यनीया प्रयत्नेन न देया यस्य कस्यचित् ।
पार्ष्णि भागेन पादस्य योनि स्थानं नियोजयेत् ॥

वामोरूपरिसंस्थाप्य दक्षिणं चरणं तथा ।
पूरयित्वा ततो वायुं हृदयं चिबुकं दृढं ॥

निक्षिप्य योनिमाकुंच्य मनो मध्ये नियोजयेत् ।

धारयित्वा यथाशक्त्या रेचयेदनिलंशनैः ॥

संव्यागवसमभ्यास्य दक्षिणे नरमभ्यसेत्।
मतमेतस्तु केषांचित् कंठं वंधं विवर्जयेत् ॥

शतदं तस्य जिह्वायां बंधः शस्तो भवेद्वितः।
अयं किल महावंधः महासिद्धि प्रदायकः ॥

कालपाशमहावंध विमोचन विचक्षणः।
अयं च सर्वनाडीनामूर्ध्वं गति विबोधकः ॥

त्रिवेणी संगमं धर्ते केदारं पापयेत् मनः।
रूपलावण्य संपन्न यथास्त्री पुरुषं विना ॥

महामुद्रा महावंधौ निःफलौ वेध वर्जितौ।
महावेधा स्थितो योगी कृत्वा पूरकमेकधीः ॥

वायी नामति मावृत्त्य निभृतं कंठमुद्रया।
समहस्ता युगो भूयो स्फिचौ संताडयेछनैः ॥

पुट द्वयं समाकृष्य वायुः स्फुरति सत्वरं।

पृ। १६४अ)

सोमसूर्याग्निसंबंधा जायते च मृतोर्जयः।
मृतावस्था समुत्पन्ना ततो वायुं विरेचयेत्॥

महावेधो यमभ्यासान् महासिद्धि प्रदायकः।
वलीपलितवंधघ्नः सेव्यते साधकोत्तमैः॥

एतत् त्रयं महामुद्रा जरामृत्युविनाशिनी।
वह्निवृद्धि करा चैव मनिमादि गुणप्रदं॥

अष्टधा क्रियते चैकं यामयामे दिने दिने।
सर्वसंचारसंधायी पापौघाभिदुरं सदा॥

सम्यजिज्ञासतामेवं स्वल्पं प्रथमसाधनं।
वह्निस्त्री पठिसेवा नामादौ वर्जनमाचरेत्॥

छेदनचालनदोहैः कला क्रमेण चोद्धयेत् ।
सायावद्भूमध्यं चेति तदा खेचर मुद्रया ॥

कपालकुहरे जिह्वा प्रविष्टो विपरीतगा ।
भ्रूवोरंतर्गता दृष्टिर्मुद्रा भवति खेचरी ॥

कलां परां मुखी * भ्यक्षणार्द्धेमपि तिष्ठति ।
क्षणेन मुच्यते योगी व्याधिमृत्युजलादिभिः ॥

न रोगो मरणं तस्य न निद्रा न क्षुधा तृषा ।
न च मूर्छा भवेत् तस्य यो मुद्रां वेष्टि खेचरी ॥

वाध्यते न स रोगेन लिप्यते न स कर्मणा ।
बाध्यते न स कालेन यो मुद्रां वेत्ति खेचरी ॥

वित्तं चरति खे यस्माज्जिह्वा चरति खेगता ।
ते नैव खेचरी मुद्रा सर्वसिद्धिर्नमस्कृताः ॥

खेचर्या मुद्रितं येन विवरलंबिकोर्द्धतः ।

तस्य न क्षरते विंदुः कामिन्या लिंग तस्य च ॥

प्। १६४ब्)

चरितोपि यदा बिंदुः संप्राप्तश्चाग्नि मंडलं ।
ब्रह्मत्युर्द्धं हठाछक्त्या निरोधो योगमुद्रया ॥

ऊर्द्धजिह्वा स्थितो भूत्वा सोमपानं करोति यः ।
मासार्द्धेन न संदेहो मृत्युंजयति योगवत् ॥

नित्य सोमकलापूर्णं शरीरं यस्य देहिनः ।
तक्षकेनापि दंष्टस्य विषं तस्य न सर्पति ॥

गोमांसं भक्षयेन् नित्यं पिबेदमरवारुणीं ।
कुलीनं तमहं विद्या इतरे कुलघातकाः ॥

गोशब्दे नोदिता जिह्वा तत्प्रवेशो हि तालुनि ।
गोमांसं भक्षणं तच्च महापातकनाशनं ॥

जिह्वा प्रवेशनं भूतं बहुनात्यादितं खलु ।

चंद्रात् स्त्रवति या सम्यक् सास्यादमरवारुणि ॥

मूर्द्धं षोडश पद्मपत्र गलितं प्राणांदवाप्तं हठादूर्द्धास्यो
रसनां विधाय विपरे शक्तिं परां चिंतयेत् ॥
तत्कल्लोलजः लाकुलं सुविमलं धारामृतं यः पिबेत् निर्दोषः समृणाल
कोमल तनुर्योगी विरंजी पति ॥

चुयंति यदि लंबिकाग्रमनिशं जिह्वारसस्पंदिनी स क्षाराकटु *?
दुग्ध सदृशी सध्वाज्य तुल्यं तथा ॥
व्याधीनां हरणं जरांतकरणं शास्त्रागमोद्गीरणं तस्य स्यादमरत्व
गुष्ठगुणितं सिद्धां गणाकर्षणं ॥

एवं सृष्टिमयं बीज एकामुद्रा च खेचरी ।
एको देवो निरालंब एकावस्था मनोन्मनी ॥

पृ। १६५अ)

सुचिरं ज्ञानजनकं पंचस्त्रोतः समन्वितः ।
तिष्ठंती खेचरी मुद्रा तस्मिन् शून्यनिरंजने ॥

यप्रालेपं पिहित सुखिलं मेरू मूद्धर्या तथैततस्मिंस्तत्वं प्रवदंति सुधी

चस्तन्मुख निम्नगा चंद्रात्सारस्त्रवति वपुषस्तेन मृत्युन्नराणांत

वह्नीयाद्वरुणममृतं नान्यथा कार्य सिद्धि ॥

इति श्रीवाराहीतंत्रे दक्षिणाम्नायनिर्वाणपदे षड्विंशति पटलः ॥ २६ ॥

भैरव उवाच ॥

पार्ष्णि भागेन संपीड्ये योनिमाकुंचय दृढं ।

अपानमूर्द्धमाकृष्य मूलबंधोयमुच्यते ॥

अधोगतमकारं वै ऊर्द्धगं कुरुते वरात् ।

आकुंच्य तेन तं प्राहु मूलबंध हि योगिनः ॥

गुरुपाष्ण्या तु संपीड्ये वायुमाकुंचयद्वलात् ।

वारं वारं तथा चोर्द्ध समायाति समीर ॥

प्राणादितोदितो बिन्दुः मूलबंधेन चैकतः ।

ततो योगससंसिद्ध्यै प्रमा तत्र न संशयः ॥

अपानप्राणयोरैक्याक्षयो मूत्र पुरीषयोः ।
युवा भवति वृद्धोपि सततं मूलबंधनात् ॥

अपाने चोर्द्ध माया ते मध्यतः नाभिमंडले ।
तथा नरे शिखा दीर्घा क्रियते वायुनाहता ॥

ततो वायु वह्नि योगौ प्राणायाम स उच्यते ।
तेनात्यंतः प्रदीप्तस्तु कुतो देहक्षयस्तदा ॥

तेन कुंडलिनी सुप्ता संतता संप्रबुद्ध्यते ।

पृ। १६५ब्)

दंडाहताभुजंगीवनिश्वस्य ऋजुनायिका ।
विलं प्रतिष्ठाच्च ततो ब्रह्मणाड्यंतरे व्रजेत् ॥

तस्मान् नित्यं मूलबंधः कर्तव्यो योगिभिः सदा ।
उर्द्ध स्थितः सुषुम्नायाः प्राणस्तुड्डीयते यतः ॥

तस्मात् त्वे उड्डियानाख्या योगिभिः समुदाहृतः।
उडडीनं कुरुते यस्मादविश्रांतं महाखगः॥

उड्डियानं तदेयं स्यात् क्षत्रबंधोभिधीयते।
उड्डियानं तु सहजं गुरुना कथितं सदा॥

अभ्यसे सततं यस्तु वृद्धोपि तरुणो भवेत्।
नाभेरुद्ध्र्व मधश्चापितानं कुर्याच्च यं नतः॥

योगी समभ्यसेत् मृत्युंजयत्येवन्न संशय।
अति वज्रासने पादौ कराभ्यां धारये दृढं॥

गुल्फदंशसमीपं च कदं तच्च प्रवीच्यते।
पश्चिमतानंमुपरिकारयेद्धृदय गल॥

शनैः शनैर्यथा प्राप्तं तदा गंधिं प्रगछति।
सर्वेषामेव वंधानामुत्तमोहुड्डियानकः॥

उड्डियाने दृढे वंधे मुक्तिः स्वाभविकी भवेत्।

कंठमाकुंच्य हृदये स्थापये दृढमिछय ॥

वंधोजारं धराख्योयं जरामृत्युविनाशकः ।
वध्नाति हि शिराजालं अधोगानि न भोजनं ॥

ततो जालंधरो बंधः कंठदुःखाघनाशनः ।
जालंधरे कृते बंधे कंठसंकोचलक्षणे ॥

मंपीयूषंयतत्यग्नौ न च वायुः प्रधावति ।

पृ। १६६अ)

संकोचलक्षणे नैव द्वे नाड्या स्तंभयेद् दृढं ।
मध्यं चक्रमिदं ज्ञेयं षोडशाधारबंधनं ॥

बंधत्रयामिदं श्रेष्ठं महासिद्धैश्च सेवितं ।
सर्वेषां योगतंत्राणां सधेनं योगिनों बिदुः ॥

अधस्म कुंचरेनाशुकंठसंकोचने कृते ।
मध्यमश्चिमतानेन स्यात् प्राणामध्यनाडिगः ॥

इडा च पिंगला चैव वाहयेत् पश्चिमं पथं ।
ब्रह्मस्थानस्थितोरोधः प्रयाति पवनोलयम् ॥

ततो न जायते मृत्युर्जरारोगादिकं तथा ।
उद्‌ध्र्वनाभि * रः स्तालुरुर्द्धभानुरधः शशी ॥

करणी विपरीताख्या सर्वव्याधिविनाशिनी ।
नित्यमभ्यासयुक्तस्य जठराग्नि प्रवर्द्धिनी ॥

आहारोवहुलस्तस्य सम्पाद्यः साधकस्य तु ।
अल्वाहारो निराहारः क्षुधालस्य वसा भवेत् ॥

अद्धाशिरश्चोर्द्धपादौ क्षण स्यात् प्रथमे दिने ।
क्षणाच्च किंचिदधिकं अभ्यासे च दिने दिने ॥

वलितं परितं चैव षण्मासां तु न दृश्यते ।
मासत्रयं तु यो नित्यमभ्यसे स तु कालवित् ॥

स्वेच्छाया वर्तमानोपि योगोकैर्नियमर्चिना ।
वज्रोलीय विजानाति स योगी सिद्धिमान् भवेत् ॥

तत्र वस्तु द्वयं वक्ष्ये दुर्लभं यस्य कस्यचित् ।
क्षीरं चैव द्वितीयं तु नारी च वश वर्तिनी ॥

मेढ्रेन वसनैः सम्यक् कृत्वा कुंचनमभ्यसेत् ।

प् । १६६ब्)

पुरुषो वापि नारी वा वज्रोली सिद्धिमाप्नुयात् ।
प्रयत्नतः शिरो जाले फट्कारः कंचुकं धरे ॥

शनैः शनैः प्रकुर्वंति वायुसंचार कारणात् ।
भार्या भगे पतद्बिंदुरभ्यासेनोर्द्धमाहरेत् ॥

वलितं वलितं विंदुमूर्द्धमाकृष्यरक्षयेत् ।
एवं रक्षति यो बिंदुं मृत्युं जयति योगवित् ॥

मरणं बिंदुपातेन जीवितं विंदुधारणात् ।

सुगंधिर्योगिनो देहो जायते विंदुधारणात्॥

यावद् विन्दु स्थितो देहे तावन् मृत्यु भयं कुतः।
चित्तायत्तं नृणां शुक्लं शुक्रायत्तं हि जीवितं॥

तस्माच्छुक्रं रजश्चैव रक्षणीयं प्रयत्नतः।
बिंदुमध्ये रजोप्येवं बीजं बिंदु च रक्षयेत्॥

मेढ्रेमाकुंचयदूर्द्ध्वं सम्यगभ्यास योगवित्।
अप्रयासः पुण्यवतं धन्यानां तत्वदर्शितं॥

निर्म *? त्सरणा सिद्ध्यंतन तु मत्सरणालिनां।
सहजोली चामरोली वज्रोल्या एकभेदतः॥

जलेषु भस्मनिःक्षिप्य दग्धमयसमुद्भवं।
वज्रोली मैथुनादूर्द्ध्वं स्त्रीपुंसाः स्वांगलेपनं॥

आसीनयोः सुखेनैव मुक्ताव्यापरयो क्षणं।
सहयोलीरियं प्रोक्ता साध्येया योगिभिः सदा॥

अयं शुभं करो योगो भोगे भुक्तेपि मुक्तिदः।
विहर्ये नित्यं प्रथमावधारां विहाय निःसारतमांत्यधारं॥

प्।१६७अ)

निषव्यते शीतलमध्यधारां कपालिकैः कुण्ठमतैरमेध्या।
अमरीयो पिबेन् नित्यं नस्यं कुर्याद् दिने दिने॥

वज्रालीमभ्यसेत् सत्वे अमरोलीति कथ्यते।
पुंसो विंदुं समाकुंचे सम्यगभ्यास पाटवान्॥

यदि नारी रजो रक्षेत् संयोगी चासि योगिनी।
तस्मा किंचिद् रजो नाशं न गछति न संशयः॥

तस्या शरीरे नादस्तु बिंदुना शब्द गछति।
स बिंदुतद्रजश्चैव एकीभूतः स्वदेहजैः॥

वज्रोल्याभ्यासयोगेन सर्वसिद्धि प्रजायते।
मेढ्रानाकुंचनादूर्द्धं रजसापि हि योगिनी॥

अतीतो नागतवेत्ति खेचरे च भवेद्ध्रुवं।
देहसिद्धिं च लभते वज्रोल्याभ्यास योगतः॥

तस्मादयं साधकानां भोगमुक्तिविमुक्तिद।
तस्मात् पुण्यवतामेव योगोयं संप्रसिद्ध्यति॥

कुटिलांगी कुंडलिनी भुजंगी शक्तिमीश्वरी।
कुण्डल्यारुंध देवीति शब्दाः पर्याय वाचका॥

उद्घात यत् कपाटं तु यथाकुंचितया हठात्।
कुंडलिन्या तथा योगी मोक्षद्वारं विभेदयेत्॥

येन मार्गेण गंतव्यं ब्रह्मस्थानं निरामयं।
मुखेनाछाद्यतद्द्वारं प्रसुप्ता परमेश्वरी॥

कंदोर्ध्वकुण्डली शक्तिरष्टधा कुंतलाकृतिः।
बंधनाय च मूढानां सदा मोक्षाय योगिनां॥

अंभोदि शैलद्वीपानां आधारः शेष कुंडली।

प्। १६७ब्)

अशेष योगतंत्रीणांमाधारः कुण्डली तथा।
कुण्डली कुटिलान्य?रासर्पवत्परिकीर्तिता॥

सा शक्तिश्चालिता येन समुक्तो नात्रसंशयः।
गंगायमुनयोर्मध्ये वालरंडातपस्विनी॥

ज्वालात्कारेण गृह्णायातद्विष्णोः परमंष्पदं।
इडाभृंगवती गंगा पिंगला यमुना नदी॥

इडापिंगलयोर्मध्ये वालरंडा सरस्वती।
पुछेत्प्रगृह्य भुजगी सुप्ताशुद्धोधयंवतां॥

निद्रां विहायस्य ऋज्वी ऊर्द्धमूर्तिष्टते हथात्।
अवस्थिता वैव फणावतीतां प्रातश्च सायं प्रहरार्द्धमात्रं॥

प्रसार्य सूर्यात् परिधान मुक्ता प्रगृह्यते तत्परिवालनीया।

वितस्ति प्रमिदं दीर्घं विस्तारे चतुरंगुली ॥

मृदुलं धवलं प्रोक्तं वेष्टनांवरलक्षणं ।

वज्रासन स्थितो योगी पालयित्वा च कुंडली ॥

कुर्यादनंतरं भस्त्री कुंडलीमाशु बोधयेत् ।

मनोराकुंचने नैव कुंडली चारयेत् तदा ॥

मृत्योर्वक्रगतस्यापि तस्य मृत्युर्भयं कुत ।

नासादक्षिणमार्गवा हि पवनात् प्राणाभिदीर्घाकृतौश्चंद्राभः

परिपूरिता मृततनुः प्राग्घंटिकायास्तथा ॥

छिन्नात्कालविशालवह्निवशगाभ्रूरंधनाडीगणां तत्कार्य कुरुते

पुनर्नवतरं चिन्नद्रुम स्कंधवत् ॥

कुंण्डलि चालयित्वाथ कुर्याद्भस्त्री विशेषतः ।

पृ। १३८अ)

एवमभ्यस्यते नित्यं यमिनस्तु कुतोयम ॥

यदाभ्यसेत् सूर्यभेदमुज्ज्वयी वापि शीतली ।
एवमभ्यासयोगेन शमनोयमिना कुतः ॥

मुहूर्त द्वय पर्यंतं निर्भयं वा दिशोदशः ।
ऊर्द्धमाकृष्यते किंचित् सुषुम्नायाः समुद्धृतः ॥

तेन कुंडलिनी तस्याः सुषुम्नायाः समुद्धृता ।
जहाति तस्मात् प्राणोयं सुषुम्ना व्रजनिश्चला ॥

तस्मात् संचालयेन्नित्यं सुखसुप्तामरंधती ।
यस्यासंचालयेनाशु योगी रोगात् प्रमुच्यते ॥

येन संचालिता शक्तिः स योगी सिद्धिभाजनं ।
किमत्रवहुनोक्तेन कालं व्रजति लीलया ॥

ब्रह्मचर्यरतं स्येवं नित्यं मितमितासिनः ।
मण्डलाद् दृश्यते सिद्धि कुंडल्याभ्यास योगतः ॥

अभ्यासें विस्तृतां चांद्री विभूतां सहमिश्रयेत् ।
तां धारयेदुत्तमांगे दिव्यदृष्टि प्रदायिनी ॥

द्विसप्तति सहस्राणां नाडीनामलशोधनं ।
गुडप्रक्षालनीपायः कुण्डलिभ्यास इष्यते ॥

इति द्वादशधा प्रोक्ता आदि नाथेन शंभुना ।
कारणे सर्वसिद्धीनामेकैकापि क्षमेव सा ॥

राजयोगं विना पृथ्वी राजयोगं विना निशा ।
राजयोगं विना मुद्रा विचित्रापिनु राजते ॥

मारुताभ्यासनं किंचि मानो युक्तं समाचरेत् ।
इतरेत्र न कर्तव्या मनोवृत्ति मनीषिणा ॥

प् । १६८ब्)

विनापि मध्यमा नाडी दृढाभ्यासेन योगिनः ।
आसनं प्राणसंयाम मुद्राभि सरला भवेत् ॥

अभ्यासेन हि मुद्राणां तदुतेति समाधिना।
मुद्राणां चापरा मुद्रा भद्रासिद्धि प्रयछति॥

उपदेशं हि मुद्राणां यो धत्ते सांप्रदायकं।
स एव श्री गुरुः स्वामी साक्षादीश्वर एव सः॥

तस्य वाक्य परो नित्यमथा * स समाहितः।
अनिमादि गुणैस्वर्य लभते कालपंचकः॥

नमः शिवाय गुरवे नादविंदु कलात्मने।
निरंजन पदं यांति यतो योगी परायणः॥

अथेदानीं प्रवक्ष्यामि समाधि क्रममुत्तमं।
मृत्युघ्नं च सुखोपायं ब्रह्मानन्दकरं परं॥

राजयोगसमाधिश्च उत्मनीव * *? नी।
अमरौघारयस्तत्र शून्या छून्यं परं पदं॥

अमनस्कं तथा द्वैतं निरालंबं निरंजनं।

जीवन्मुक्त * ? क्ति पदं शब्द पर्याय वाचकं ॥

सलिले सैधवं यद्व सम्यं भजति योगतः ।
यथात्ममनसौरैक्यं समा *? रभिधीयते ॥

तत्समं च द्वयोरैक्यं जीवात्मा परमात्मना ।
समस्तनष्टसंकल्पः समाधिसोभिधीयते ॥

समाधिस्तु तथा ज्ञानं कर्पूरं सलिले यथा ।
तथात्ममनसौरैक्यं समाधिः साभिधीयते ॥

राजयोगस्य माहात्म्यं कोटयजानाति तत्वतः ।

पृ। १६९अ)

ज्ञानमुक्ति स्थिति सिद्धिः गुरुवाक्य न सिद्ध्यति ।
दुर्लभो विषय त्यागो दुर्लभे तत्व दर्शनं ॥

दुर्लभा सहजावस्था सद्गुरोः करुणाविना ।

यावन्नैव प्रविशंति चरन्मारुतो मध्यमार्गं यावविंदुर्न भवति
दृढः प्राणवातः प्रबुद्धः ॥
यावद्यौन्नः सहज सदृशं जायते नैव चित्तं तावज्ज्ञानं वदति यदिदं
दंभमिथ्या प्रलापः ॥

वायुमार्गेन संचारे सकलं लभते महः ।
तथाष्टगुणमैश्वर्यं सत्यं सत्यं वरानने ॥

विविधे रसनैः कुंभैर्विचित्रकरणैरपि ।
प्रबुद्धायामादि शक्तौ प्राणः शून्य विलीयते ॥

उत्पन्न शक्ति बोधस्य त्यक्त निःशेष कर्मणाः ।
योगिनः सहजावस्था स्वयमेव प्रकाशते ॥

सुषुम्ना वाहिनी प्राणे शून्यविंशति मारुतः ।
तदा सर्वाणि कर्माणि निर्मूलयति योगवित् ॥

अमराय नमस्तुभ्यं सोपि काल त्वयाहतः ।
पतितं पवने यस्य जगदेतच्चराचरं ॥

चित्ते समत्वमापन्ने वायुव्रजति मध्यमे ।
तथामरोली वज्रोली सहजोली मतोपि च ॥

ज्ञानं कुतो मनसि जीवति देहि यावत् प्राणोपि जीवम * नोस्नि पतेन यावत्
प्राणोसनो द्वयमिदं विलयं * याति मोक्षं स गछति नरो न कथं
चिदन्यत् ॥

ज्ञात्वा सुषुम्ना सद्भेदं कृत्वा वायुं च मध्यगं ।

प् । १६९ब्)

स्थित्वा सदैदवस्थाने प्राणरंध्रं निरोधयेत् ॥

सूर्यचंद्रसमाकृत्वा दत्वा कारापि पंजरे ।
सुषुम्नां शांभवी शक्ति शेषास्त्वेवं निरर्थकाः ॥

वायुः परिचितो यस्मादनिमासहकुंडली ।
अथ चिंतांतरेभ्यास प्रत्यासा जीवयोगिना ॥

पवंनो वध्यते येन ते नैव वध्यते मनः।

हेतु द्वयं तु चित्तस्य वासना च समीरणे॥

तयार्विनष्ट एकस्मिन् भावनापि विनश्यतः।

तत्रैव लीयते वायुः मनस्तत्रैव लीयते॥

दुग्धांवुधत्संमिलिता वुभौ तौ तुल्य क्रियौ मानसमारुती हि।

यतो मरुन्निंद्य मनः प्रवृत्ति यतो मनस्तत्र मरुन्निवृत्तिः॥

एकस्यन्मसादपरस्य नाश तत्रैव वृत्तेरपस्य वृत्तिः।

अधस्तयोश्चेंद्रिय वर्गवृत्तिः विज्ञातयोर्मोक्ष पदस्य सिद्धिः॥

रसस्य मनसश्चैव चंचरत्वं स्वभावतः।

रसो वद्धो मनोवद्धं किं न सिद्ध्यति भूतले॥

मूर्छितो हरते व्याधिं मृतो जीवयति स्वयं।

बद्धः खेचरतं धत्ते स जीवशो रसेश्वरः॥

वायुमार्गे च संचारे सफलं लभते महः।

ततोष्टगुणमैश्वर्यं सत्यमित्याह शंकरं ॥

मनस्थैर्यं स्थितो वायुस्ततो बिंदु स्थिरो भवेत् ।
बिंदुस्थैर्यादया सत्ये पिंडस्थैर्यं प्रजायते ॥

इंद्रियाणां मनो नाथे मनोनाथश्च मारुतः ।

प् । १७०अ)

मारुतस्य लयोनाथस्तन्नाथं लयमाश्रयेत् ।
स्वयमेवामोक्षस्वस्ति वापि मंत्रांतरो मनः ॥

प्राणापानमपानं ताल्लयकाश्चित्त वर्तिते ।
प्रनष्टौ छ्वासनिःश्वासः प्रनष्टविषय ग्रहः ॥

निश्चलो निर्विकारश्च लयो जयति योगिनः ।
उछिन्नसर्वसंकल्पो निःशेषाशेषवेष्टितः ॥

स्वावगम्यो लयः कोपि जायते वापि गोचरः ।
यत्र दृष्टि लयस्तत्र भूतेंद्रिय सनातनः ॥

सा शक्तिर्जीवभूतानां दृष्टिल्लक्ष्यलयं गते ।

वेदशास्त्रपुराणानि सामान्या गणिका इव ॥

एकैव शांभवी विद्या गोप्याकुलवधूरिव ।

अन्तल्लक्षमनोदृष्टिर्निमेषां मेषवर्जिता ॥

एषा तु शांभवी मुद्रा सर्वमंत्रेषु गोपिता ।

अनंतल्लक्षविलीन चित्तपवनो योगी यथावर्तते दृष्ट्वा निश्चलतारया वहिरतः

पश्यन्न पश्यन्नपि ॥

मुद्रेयं खेचरी भवति सायुष्म प्रसादान्गुरोः शून्याशून्यविवर्जितं

स्थलति यत्तत्वं पदं शांभवं ॥

ताराज्योतिषु संयोज्यो किंचिदुच्चारयेद्भ्रुवौ ।

सूर्यगतस्य मार्गेषु उन्मनी काललक्षणं ॥

केचिदागमयोगेन केचिन्निगमसंकुले ।

केचित्तर्केन मुह्यंति नैव जानंति तारकम् ॥

अर्द्धोद्घाटित लोचन स्थिरमनोनाशाग्र दत्वे क्षणश्चंद्रार्कौ च

विलीयतांतर गतौ निक्षिप्य भासांतरे ॥

प्_। १७०ब्)

ज्योतीरूपमशेष वाह्य रहितं देदीप्यमानं परं तत्व पश्चरमंचवस्तु

परमं वाच्यं कमत्राधिकं ॥

वासरे पूजयेल्लिंगं रात्रौ चैव न पूजयेत्_।

सततं पूजयेल्लिन्गं दिवारात्रौ न पूजयेत्_॥

सुखिनं ज्ञानजनकं पंचस्त्रोतः समन्वितं ।

तिछते खेचरी मुद्रा तस्मिन्_शून्यनिरंजने ॥

सव्यदक्षिणनाडिस्थो मध्ये वाहीत मारुतः ।

तिष्ठंते खेचरी मुद्रा तत्र सत्यं न संशयः ॥

सोमसूर्य द्वयोर्मध्ये निरालंबंतथा पुनः ।

संस्थिता व्योमचक्रे या सा मुद्रा नाम खेचरी ॥

सोमयोर्भेदिता धाम साक्षाद् वै शिववल्लभा।
पूजयेदतुलां दिव्या सुषुम्ना दक्षिणे मुखे॥

पुरस्ताच्चैव पूर्यंत निश्चिता खेचरी भवेत्।
अत्यस्ता खेचरी मुद्रा उन्मनी संप्रजायते॥

अभ्यसेत् खेचरी मुद्रा तांवत्स्याद् योग निद्रता।
संप्राप्त योगनिद्रस्य कालो नास्ति कदाचन॥

भ्रुवोर्मध्ये शिवस्थानं मनस्तत्र विलीयते।
ज्ञातव्यं तत्पदं तुर्यं तत्र कालो न विद्यते॥

चंद्रसूर्य द्वयोर्मध्ये मुद्रां दद्याच्च खेचरी।
निरालम्बे महाशून्य व्योमचक्र व्यवस्थितं॥

निरालंबं मन कृत्वा न किंचिदपि चिंतयेत्।
स वाह्याभ्यंतरं व्योम्नि घटवर्तिष्ठति ध्रुवं॥

प्। १७१अ)

वाह्यवायुर्यथा लीनस्तथा मध्ये न संशयः।
स्वस्थान गछति प्राणः सूर्याग्नि पवने तथा॥

एवमभ्यस्य मानस्य वायुमार्गं सदानिशं।
अभ्यासाज्जायते वायु मनस्तत्र विलीयते॥

अजरत्वं भवेद् देहे आपदतलमस्तके।
सिद्धयते च महायोगो महावलपराक्रमः॥

शक्तिमध्ये मनःकृष्य शक्तिर्मनसि मध्यतः।
मनसा मनसा लोक्ये धारयेत् परमं पदं॥

खमध्ये कुरु चात्मानमात्ममध्ये च स्वं कुरु।
सर्वं मयं च खं कृत्वा न किंचिदपि चिन्तयेत्॥

अन्तः शून्यो वहिः शून्यो शून्यकुंभ इवाम्वरे।
अंतः पूर्णो वहिः पूर्णः पूर्णकुंभ इवार्णवे॥

वाह्य चिंता न कर्तव्या तथैचांतरचिंतनं।
सर्वचिंता परित्यार्या न किंचिदपि चिन्तये॥

ज्ञेयं सर्वमयी तञ्च ज्ञानं मनसि उच्यते।
ज्ञानं ज्ञेयं मनश्चैव नान्यः पंथो द्वितीयकः॥

मनोदृश्यमिदं सर्वं यत्किंचित् स चराचरं।
मनसो ह्युन्मनी भावो चैतन्नेवै प्रलभ्यते॥

ज्ञेयवस्तु परित्यागाद्विरयं याति मानसं।
मानसो विलये याते कैवल्यमपि कल्पते॥

लयो लय इति प्राहुः कीदृशं लयलक्षणं।
अमुनर्वा सनोत्थानाद्वृत्त्यया विश्वविस्मृतः॥

एवं नानाविधो पायाः सम्यक् स्वानु भवान्विता।
समाधिमार्गा कथिताः पूर्वाचार्यै महात्मभिः॥

प्।१७१ब्)

अशक्यं तत्वबोधीनामूढानामपि सर्मतं ।
प्रोक्तं गोरक्षनाथेन नादोपासनमुच्यते ॥

श्री आदिनाथेन सपादकोटिलयः प्रकारः कथिता जयंति ।
नादानुसंधानकमेव धान्यं मन्यामहेरतर्नैसंलयानां ॥

श्रवणपुटयनयुगलनासामुखरोधनेनव कर्तव्यं शुद्धसुषुम्नाशरणे
स्फुटे ममलः श्रूयते नादः ॥

आरंभश्च घटंश्चैवस्तथा परिचियस्ततः ।
निष्पत्तिः सर्वयोगेषु स्यादवस्था चतुष्टयं ॥

ब्रह्मग्रंथि भवे भिन्ना नादः शून्यसमुद्भवः ।
विचित्रं कुणको देहे नाहतः श्रूयते ध्वनि ॥

दिव्यगंधा दिव्यचक्षुस्तेजस्वी तु अरोगवान् ।
संपूर्ण हृदय शून्य प्रारंभो योगवान् भवेत् ॥

द्वितीय भेदयुक्ते तु वायुर्भावति मध्यगः ।

हठासनो भवेद् योगी ज्ञानी देवसमस्तथा ॥

विष्णुग्रंथस्तथा भेदा परमानंदसूचकः ।
अति शून्ये विसं मंदो भेरीशब्दस्तथा भवेत् ॥

अथ ग्रंथि त्रयं भित्वा जायते मर्दल ध्वनिं ।
महाशून्य समायाति सर्वसिद्धि समाश्रयः ॥

विना मनस्ततो जित्वा सहजानंदसंभवः ।
दोषद्बखजरामृत्युः क्षुधा निद्रा तृषा तथा ॥

रुद्रग्रंथि ततो भित्वा सर्वपीठगतोनिलः ।
निष्पन्नो वेणवः शब्दो क्वणन्नादो क्वणो भवेत् ॥

एकीभूतं तथा चित्तं राजयोगाभिधानकं ।

प् । १७२अ)

सृष्टिसंहारकर्तासो योगीश्वर समो भवेत् ।
राजयोगपदं प्रस्तु मुखवायौल्प चेतसां ॥

सद्यः प्रत्यूपसंधायी सेव्यते नादयो लयः।

नादानुसंधानसमाधि भाजां योगीश्वराणां हृदि वद्धमानं॥
आनन्दमेकं वचसामवाच्यं जानातितं श्रीगुरुनाथ एव॥

मुक्तासना स्थितो योगी मुद्रासंधायशांभवी।
शृणुयाद्दक्षिणे कर्णे नादमंतर्गते महत्॥

अभ्यस्य मानो नादोयं वाच्यमा शृणुते ध्वनि।
पश्चाद्विपक्षमखिलं जित्वा योगी सुखी भवेत्॥

श्रुयते प्रथमाभ्यासे नादो नाम विधो महान्।
वर्द्धमाने ततोभ्यासे श्रूयते शूक्ष्मशूक्ष्मतः॥

आदौ जलधिजीमूत भरीनिर्भर निःस्वनः।
मध्यमर्दलशंखे च घंटाकोलाहलस्तथा॥

अन्ये तु किंकिणी वंश वीणाभ्रमरनिःस्वन।

इति नानाविधानादा श्रूयते यत्र मध्यतः॥

महातिश्रूयमानेपि मेघभेर्यादिक ध्वनैः।
तत्र शूक्ष्मं नादमेघ परितोपि परामृणेत्॥

ध्वनि मुत्सृज्य वा शूक्ष्मे शूक्ष्ममुत्सृज्य वायवे।
श्मशानमपि क्षिप्तं च मनो नेत्र प्रचारयेत्॥

यत्र कुत्रापि वा नादे गलति प्रथमं मनः।
तत्रैव निचलो भूत्वा तेन सार्द्धं विलीयते॥

कोष्ठ प्रवर्तते वह्नि कोष्ठेन सहसाम्यति।
नादे प्रवर्तते चित्तं नादेन सह लीयते॥

प्।१७२ब्)

औदासीन्य परो भूत्वा सदाभ्यासेन संशयः।
उन्मनी कारकं सद्यो नादमेवादधारयेत्॥

ज्ञातेकाचौपटी वा कुटी वा पथ्याहारोगोपयोचापयो वा भोज्यं भुक्तं

चान्नमाकंदयावा द्रोणी चाप्य चोप भोज्यैव पात्रं ॥

सर्वचिंतां समुत्सृज्य सर्वचेष्टाश्च सर्वदा ।
नादमेवा न संधत्ते योगसाम्राज्यमिछति ॥

मकरंदामिवं भृंगो गंधनोप्पक्षते यथा ।
नादाशक्तं तथा चित्तं विषया न हि कांक्षति ॥

वद्धं विमुक्तं चावल्यं नादगंधकरीरणात् ।
मनः पारदमाप्नोति निरालंबाख्य खोटनं ॥

वद्धाचेन्नाद गंधेन सद्यः स त्यक्त चापले ।
प्रयाति साश्वताश्चैव व्युपाछ छिन्न इद्रुमा ॥

नादं प्रणत नित्तस्य मंतरंगा भुजंगमः ।
विस्मृत्य विश्वमेकाग्रं कुत्रचित्त हि धावति ॥

मनोन्मर्तगजेंद्रस्य विषयाप्यनुचारिणः ।
लीयमानः समर्थोयं निलादनिशितांकुशं ॥

नादांतरं तु संगस्य चाजिनः परिधावते।
अंतरंग तुरंगस्य रोगो वा गीयतेपि च॥

अनाहत ध्वने चेतर्ज्ञेयं यत्सूक्ष्मसूक्ष्मकं।
मनस्तत्र लयं याति तद्विष्णोः परमं पदं॥

भावनाकाशसंकल्पो यावछंदः प्रवर्तते।
निःशब्दं तत्परं ब्रह्म परमात्मानुमीयते॥

नादः शक्तिरितिख्याता नादनामं सदाशिवं।

पृ। १७३अ)

नादज्ञानेन नष्टेन तदुन्मन्येव शिष्यते॥

नादायावन्मनस्तावन्नादांते तु मनोन्मनी।
स शब्द कथितं व्योम निःशब्दं ब्रह्म कथ्यते॥

यदा नादानुसंधानात् संक्षीणे वासनोदये।

निरञ्जने वलीयन्ते निस्वरे मनसारुते ॥

नादकोटि सहस्राणि बिन्दुकोटि शतानि च ।
सर्वे तत्र लयं यांति यत्र देवो निरञ्जनं ॥

एवं सृष्टिमयं बीजं एकामुद्रा च खेचरी ।
एको देवी निरालंब एकावस्था मनोन्मनी ॥

शंखदुंदुभिनादं च न शृणोति कदाचन ।
काष्ठवर्जायते देव उन्मन्या अवस्था ध्रुवं ॥

सर्वावस्था विनिर्मुक्ता सर्वचिंता विवर्जिताः ।
मृतवत्तिष्ठते योगी समुक्तो नात्रसंशयः ॥

अवध्यः सर्वशास्त्राणांमवध्यः सर्वदेहिनां ।
अग्रा * मंत्रतन्त्राणां योगी युक्तसमाधिना ॥

प्रवेशे निर्गमे चैव दक्षिणे चोर्द्धमध्यमः ।
न पश्यवायुर्वहति समुक्तो नात्रसंशयः ॥

चित्तं न सुप्तं नो जाग्रत् स्मृति वस्तु च नान्यथा।
नास्ति मेति न चोदेति यथासौ मुक्त एवसः॥

सृष्टिः स्थिरा यस्य विनैव दृश्यं वायु स्थिरोय विना प्रयत्नतः चित्त स्थिरं यस्य विनावलंवनं स एव मुक्तः स गुरुः स सेव्यः॥

विद्या तीर्थे जगति विवुधा साधवः सत्य तीर्थे गंगातीर्थे मलिन मनसो योगिनो ज्ञान तीर्थे॥
प्।१७३ब्)
धारातीर्थे धरणि पतनो दानतीर्थैश्च भक्त्याः लज्जातीर्थः कुलयुवतयः पातकं क्षालयंति॥

इति श्रीवाराहीतंत्रे दक्षिणाम्नायनिर्वाणपदे सप्तविंशतितम पटलः॥ २७॥

भैरव उवाच॥

शृणु देवि प्रवक्ष्यामि षोडशमातृकांविका।
वाराही नीलकाली च कथयामि यथाक्रमं॥

# ॥ दशमपटलः ॥

[ ॥ अथ योगिनीहृदयसारः ॥ ]

॥ श्रीदेव्युवाच ॥

अथैतद्रससर्वत्वां[1] तत्त्वाचार[ं] गणाम्बिके।

श्रुतं सर्वमशेषेण विधान[ं] रसनायके॥ १॥

दुर्भगानां[2] च तन्नाथ[3] न सिध्यति[4] कदाचन।

अथ सौभाग्ये हेत्वर्थे नराणां हितकाम्यया[5]॥ २॥ [6]

तस्मात् सङ्गता[7] या सा महात्रिपुरसुन्दरी।

---

1 *पाठान्तरम्* – अथेतद्रससर्वत्वां- क.।

*शक्यपाठः* – 'अथैतद्रसं सर्वत्वात्'।

2 *मूलपाठः* – दुर्द्धगानां- क., ख.।

3 *पाठान्तरम्* – तन्नाथं- क.।

4 *मूलपाठः* – सिष्यंति - क., ख.।

5 हितमाम्यया- ख.।

6 *अन्यत्र* – श्रीशिवोऽहंसागरग्रन्थमालायां प्रकाशिते श्रीमद्राजानकजयरथविरचिते वामकेश्वरीमतविवरणे उद्धृते श्रीरसमहोदधौ (श्रीरस०वाम०, पृ० ५६) एषोऽधिकपाठोऽस्ति- "महाकामेश्वरस्योक्तं विधानं भैरव त्वया"।

7 *पाठान्तरम्* – तस्यात्सद्गता- ख.।

*अन्यत्र* – "यस्योत्सङ्गता" इति पाठः श्रीरस०वाम०, पृ० ५६।

तस्याः संसूचितं[8] किञ्चिन्मन्त्रध्यानादिकं[9] त्वया॥३॥

पृथागाराध्यते[10] सा तु यथा भाग्यार्थिभिर्नरैः[11]।

तथा कथय मे देव[12] कृपया प्राणिनां प्रभो॥४॥

यथा चक्र[ं] तथा पूजा अङ्गपूजा यथा स्थिता[13]।

मूलविद्या यथा देवी परिवारसमन्विता[14]॥५॥

तथा सर्व[ं] त्वया देव शास्त्र[ं] वै परमेश्वर[15]।

सर्वमेव समाख्यातं[16] किन्तु जन्मकटं[17] नकि[म्]॥६॥

अतस्तत्प्रकटीकर्त्तुं[18] कथ्यतां[19] परमाद्भुतम्[20]।

---

[8] *मूलपाठः* – संसुचितं- क., ख.।

[9] *पाठान्तरम्* – ०धानादिकं - ख.।

[10] पृथागारायेते- क.।

[11] *मूलपाठः* – भाग्यार्थिभिन्नरैः- क., भाग्यार्थिसिन्नरैः- ख.।

[12] देवं- क., ख.।

[13] *पाठान्तरम्* – स्मिता- ख.।

[14] *मूलपाठः* – ०समन्वितः- क., ख.।

[15] परमेश्वरः- क., ख.।

[16] समाख्याता- क., ख.।

[17] *पाठान्तरम्* – जन्युकटं- ख.।

[18] *शक्यपाठः* – 'अतस्तत्प्रकटीकृत्य'।

[19] *पाठान्तरम्* – कंथ्यतां- ख.।

[20] परमाद्भूतं- ख.।

एवमाकर्ण्य[21] देवेश[22] पार्वत्या कथितं[23] वचा[24]।

प्रत्युवाच महावाक्यं सर्वसन्देहशान्तये[25]॥७॥

॥श्रीभैरव उवाच[26]॥

शृणु देवि परं गुह्यं योगिनीहृदयं परम्।

कर्णात्कर्णोपदेशेन[27] संचरत्यवनीतले[28]॥८॥

एतज्ज्ञात्वा वरारोहे सर्वविघ्नैर्न बाध्यते।

चक्रसंकेतको मन्त्रो मुद्रासंकेतकस्तथा॥९॥[29]

त्रिविधः[30] त्रिपुरादेव्याः संकेतः[31] परमेश्वरि[32]।

---

21 एवमाकर्स्मे- ख.।

22 *मूलपाठः* – देवेशः- क., ख.।

23 *पाठान्तरम्* – कथि[x]- ख.।

24 *मूलपाठः* – वच- क., ख.।

25 ०सान्तय- क., ख.।

26 श्रीभैरवोवाच- क., ख.।

27 कर्णात्कर्णपदेशेन- क., ख.।

28 संचरंत्यवसीतले- क., ख.।

*अन्यत्र* – योगिनीहृदये (१।३) "संप्राप्तमवनीतलम्" इति पाठः।

29 "एतज्ज्ञात्वा वरारोहे सद्यः खेचरतां व्रजेत्॥ चक्रसंकेतको मन्त्रपूजासङ्केतकौ तथा" इति पाठो योगिनीहृदये (१।५"-६')।

30 *मूलपाठः* – त्रिविधा- क., ख.।

31 संकेताः- क., ख.।

32 परमेश्वरी- क., ख.।

यावदेतन्न[33] जानाति संकेतं{ऽ} त्रयमुत्तमम्॥ १०॥

न[34] तावत्त्रिपुराचक्रे परमाज्ञाधरो भवेत्॥

शृणु व्याख्याक्रमं गुह्यं पारंपर्यक्रमागतम्॥ ११॥

येन ज्ञातेन गुरवो न च[35] गुह्यन्ति कुत्रचित्।

[अतो मन्त्रार्थः-]

भावार्थः सम्प्रदायार्थो निगर्भार्थश्च कौलिकः॥ १२॥

तथा सर्वरहस्यार्थो[36] महातत्त्वार्थ एव च।

एवमेतन्महादेवि[37] षड्विधं परमेश्वरि[38]॥ १३॥

व्याख्यातं सर्वतन्त्राणां पारम्पर्येण[39] लभ्यते।

एक एव हि भावार्थो बाह्यशास्त्रेषु[40] लभ्यते॥ १४॥

---

33 यावद्देवन्न- क., ख.।

34 *पाठान्तरम्* – "न" इत्यक्षरं नास्ति- क.।

35 *मूलपाठः* – गुरवोरेव- क., गुरवोनव- ख.।

36 *पाठान्तरम्* – सर्वरहस्यार्था- क.।

37 *मूलपाठः* – ०देवी- क., ख.।

38 षड्विधाम्पारमेश्वरी- क., ख.।

39 सर्वतंत्रेनाम्मारंपच्यण- क., सर्व्वतन्त्रनाम्पारंपच्यण- ख.।

40 वाह्यसास्त्रोषु- क., ख.।

शब्दालङ्कारसारोक्तिसंस्काररचनात्मकः[41]।

भावार्थः सम्प्रदायार्थो द्विकशास्त्रेषु[42] यथोच्यते[43]॥ १५॥[44]

भावार्थः[45] सम्प्रदायार्थो निगर्भार्थसमन्वितः।

व्याख्यातं त्रिकतन्त्रेषु[46] त्रिविधं गौरि लभेते॥ १६॥[47]

शिवबाह्यार्थसम्वादी[48] महागुरुमुखे स्थितः।

भावार्थः सम्प्रदायार्थे निगर्भार्थश्च[49] कौलिकः॥ १७॥

महाचतुष्कतन्त्रेषु[50] व्याख्यातं स्याच्चतुर्विधम्।

भावार्थः संप्रदायार्थो निगर्भार्थश्च कौलिकः॥ १८॥

---

41 शव्दरङ्कारसारोक्तिसस्काररवनात्मकः- क., शव्दरद्धारसारोक्तिसस्काररवनात्मकः - ख.।

42 दिकशास्त्रेषु- क., ख.।

*अन्यत्र* – "त्रिकशास्त्रेषु" इति पाठः श्रीरस०वाम०, पृ० १०९।

43 *पाठान्तरम्* – पथोच्यते- ख.।

44 *मूलपाठः* – अत्र एकाक्षरमधिकमस्ति- क., ख.।

अतः "यथोच्यते"स्थाने "विद्यते" इति पठितुं शक्यते।

*अन्यत्र* – "विद्यते" इति पाठः श्रीरस०वाम०, पृ० १०९।

45 *मूलपाठः* – भावार्थो- क., ख.।

46 *पाठान्तरम्* – त्रिकेतन्त्रेषु - क.।

47 *अन्यत्र* – "व्याख्यानं त्रिविधं देवि त्रिकशास्त्रेषु लभ्यते" इत्यर्धश्लोकपाठः श्रीरस०वाम०, पृ० १०९।

48 *पाठान्तरम्* – शिवावाह्यार्थेसम्वादी- ख.।

*अन्यत्र* – "शिवबाह्यार्थसम्वादे" इति पाठः श्रीरस०वाम०, पृ० १०९।

49 *मूलपाठः* – निगर्भर्थश्च – क., ख.।

50 महाचतुस्कतन्त्रैषुः- क., ख.।

तथा सर्वरहस्यार्थ[:] तन्त्रे[ऽ]थ पञ्चरूपिणि[51]।

महाज्ञानार्णवे दृष्टं षड्कतन्त्रेषु पार्वति॥ १९॥ [52]

अक्षरार्थो हि भावार्थः केवलः[53] परमेश्वरि[54]।

सम्प्रदायो महाबोधरूपो[55] गुरुमुखे स्थितः॥ २०॥

निगर्भो[56] हि महादेवि रूपेणार्थावभासकः[57]।

निस्तरंगो निराभासः संकल्पस्थितिपूर्वकः॥ २१॥ [58]

रहस्यार्थो महागुप्तो[59] दिव्यार्थस्थितिपूर्वकः[60]। [61]

---

51 *अन्यत्र* – "सर्वरहस्यार्थस्तन्त्राणां पञ्चरूपिणम्" इति पाठः श्रीरस०वाम०, पृ० ११०।

52 "महाज्ञानर्णवे दृष्टः शङ्का तत्र न पार्वति॥" इति पाठो योगिनीहृदये (२।७७")।

53 *पाठान्तरम्* – - केचलः- ख.।

54 *मूलपाठः* – परमेश्वरी- क., ख.।

55 *पाठान्तरम्* – - महावोधरुरो- क.।

56 *मूलपाठः* – निगर्द्धो- क., निगर्द्धो- ख.।

57 *पाठान्तरम्* – रूपेणार्थाचभासक- ख.।

*अन्यत्र* – "शिवगुर्वात्मगोचरः" इति पाठः श्रीरस०वाम०, पृ० १०९।

58 "निरस्तसर्वसंकल्पविकल्पस्थितिपूर्वकः" इति पाठो योगिनीहृदये (२।७६"), श्रीरस०वाम०, पृ० १०९।

59 *पाठान्तरम्* – महागुफो- क.।

60 ०पूर्वक- क.।

61 *अन्यत्र* – "रहस्यार्थो महागुप्तो दिव्यार्थस्थितिपूर्वकः" इत्यर्धश्लोको वारत्रयं लिखितमस्ति- क., ख.।

"रहस्यार्थो मया गुप्तः सद्यः प्रत्ययकारकः" इति पाठो योगिनीहृदये (२।७७")।

"रहस्यार्थो महागुप्तः सद्यःप्रत्ययकारकः" इति योगिनीहृदयपाठोद्धृतो जयरथेन वामकेश्वरीमतविवरणे (वामकेश्वरीमते, पृ० १०९)।

विद्यापीठनिबंधेषु[62] संस्थितः पिण्डसिद्धिदः॥२२॥[63]

एवमेतत्परं ब्रह्म विज्ञानागमगोचरम्।

देवि विक्षिप्तमीशेन व्याख्यातं तु चतुर्विधा॥२३॥

एवमेष महादेव्या महासंकटकाम्बिके[64]।

कथितो[65] य[त्]प्रबोधेन वीरचक्रेश्वरो भवेत्॥२४॥[66]

[अतः चक्रसंकेतः-]

अथान्तः संप्रवक्ष्यामि चक्रसंकेतमुत्तमम्।

तदर्थ[ं] देवि कुर्वीत[67] त्रिहस्त[ं] मण्डलोत्तमम्॥२५॥

तस्य कुर्यात् त्रिभागेन कर्णिकां[68] चक्रचिह्नताम्[69]।

---

62 *पाठान्तरम्* – ०निवंधषु- ख.।

63 *अन्यत्र* – "विद्यापीठनिबद्धेषु संस्थितो दिव्यसिद्धिदः" इति पाठो योगिनीहृदये (२।७८')।

64 *शक्यपाठः* – 'महासंकेतकोऽम्बिके'।

65 *मूलपाठः* – कथितौ- क., ख.।

66 *अन्यत्र* – "सद्यो यस्य प्रबोधेन वीरचक्रेश्वरो भवेत्" इत्यर्धश्लोकपाठो योगिनीहृदये (२।८५)।

67 *मूलपाठः* – कुर्वित- क., कुर्व्वित - ख.।

68 *पाठान्तरम्* – कर्णिकं- क.।

69 चक्रचिन्हतां- क.।

*अन्यत्र* – "चक्रलाञ्छिताम्" इति पाठो कश्मीरग्रन्थमालायां (नि०षो०वाक०) प्रकाशिते नित्याषोडशीकार्णवे (नि०षो० १।६०) तथा आनन्दाश्रमग्रन्थमालायां (नि०षो०से०) प्रकाशिते नित्याषोडशीकार्णवे (नि०षो० १।६०) तथा च श्रीशिवोऽहंसागरग्रन्थमालायां प्रकाशिते श्रीमद्राजानकजयरथविरचिते वामकेश्वरीमतविवरणे

पद्मद्वयं तदर्धेन[70] द्वारक्षत्रं[71] च तत्समम्॥ २६॥ [72]

ब्रह्मसूत्रं पुरा दत्त्वा कर्णिकाग्रे च[73] मध्यतः।

याम्यासाम्यायतं दद्यात्तत्रस्थं[74] सूत्रसप्तमम्॥ २७॥

तुल्यसूत्रं ततो लुप्त[ं] मध्यांश[ः] स्या[द्] विभावितः[75]।[76]

तृतीयपञ्चमसोगौ[77] कृत्वात्यंशविवर्जितौ॥ २८॥ [78]

---

उद्धृते श्रीरसमहोदधौ (श्रीरस०वाम०, पृ० २५-२६)। नि०षो०वाक०-नि०षो०से०पाठान्तराणि योगतन्त्रमालायां प्रकाशिते नित्याषोडशीकार्णवे (नि०षो०) मिलितानि।

70 *पाठान्तरम्* – तदेर्द्धेन - क.।

71 *अन्यत्र* – "द्वारक्षेत्रं" इति पाठः श्रीरस०वाम०, पृ० २५।

72 "अस्य कार्या तृतीयेन कर्णिका चक्रलाञ्छिता। पद्मद्वयं द्वितीयेन चतुरस्रं च शेषतः॥" इति पाठो नि०षो० (१।६०), नि०षो०से०।

73 *मूलपाठः*– - कर्णिकाग्रेव- क., ख.।

*अन्यत्र* – "कर्णिकाभूमि०" इति पाठो नि०षो० (१।६१)।

"कर्णिकाभ्रम०" इति पाठान्तरं नि०षो०से०, नि०षो०वाक०, श्रीरस०वाम० (पृ० २५)।

74 *मूलपाठः* – याम्यासाम्यायतन्दद्योत्तत्रस्थं- क., याम्यासाम्याततन्दद्योत्तत्रस्थं - ख.।

*अन्यत्र* – "याम्यासौम्यायतं दद्यात्तत्रस्थं" इति पाठान्तरं श्रीरस०वाम०, तत्रैव।

75 *मूलपाठः* – विभावितं- क., ख.।

76 *अन्यत्र* – "तुर्यसूत्रं ततो लुप्याद्मध्यांशः स्याद्विभागशः" इति पाठो नि०षो० (१।६२)।

"तुर्यसूत्रं ततो लुप्त्वा मध्यांशः स्याद्विभागिकः" इति पाठान्तरं नि०षो०वाक०, श्रीरस०वाम० (पृ० २५)।

"तुर्यसूत्रं ततो लुम्पेत् मध्यांशः स्याद्विभागतः" इति पाठान्तरं नि०षो०से०।

77 *पाठान्तरम्* – तृतीयपञ्चमंसौगौ - ख.।

78 *अन्यत्र* – "तृतीयपञ्चमौ नागभूपांशौ द्व्यंशवर्जितौ" इति पाठो नि०षो० (१।६२), नि०षो०से०।

"तृतीयपञ्चमौ भागौ कृत्वा त्र्यंशविवर्जितौ" इति पाठान्तरं नि०षो०वाक०, श्रीरस०वाम० (पृ० २५)।

ते मार्गेण च पुनर्मध्ये तावगम्भिर[ं][79] वर्धयेत्।[80]

तृतीयस्य च[81] द्वितीयस्य चाद्यसूत्रस्य[82] चान्तयोः॥२९॥

प्रसारयेदधोर्द्धधः[83] दष्टं तत्र सुद्वद्वयम्।[84]

भ्रमे[85] सप्तमके[86] सूत्रे ब्रह्मस्थाने च संगतम्॥३०॥

आपञ्चमादधः स्थाना[ं] त्रयाणां[87] च ततो[88] नयेत्।

भ्रमे[89] प्रथमके सूत्रे विशान्तिं च तृतीयकम्॥३१॥[90]

---

79 *पाठान्तरम्* – तावगन्भिर- ख.।

80 *मूलपाठः* – अत्रैकाक्षरमधिकमस्ति- क., ख.।

*अन्यत्र* – "तेन मानेन सप्तैव वीथ्यस्तन्त्रेषु मध्यमम्" इति पाठो नि०षो० (१।६३), नि०षो०से०।

"तेन भागेन च पुनर्मध्यभागं विवर्धयेत्" इति पाठान्तरं नि०षो०वाक०, श्रीरस०वाम० (पृ० २५)।

81 *मूलपाठः* – स्त- क., ख.।

82 *अन्यत्र* - "आदिसूत्रस्य" इति पाठो नि०षो०वाक० (नि०षो० १।६३), श्रीरस०वाम० (पृ० २५)।

"त्वाद्यसूत्रस्य" इति पाठान्तरं नि०षो०से०।

83 *पाठान्तरम्* – प्रसारयेदधोर्द्धधः- क.।

84 *अन्यत्र* – "प्रसारयेदधोधःस्थं ततः सूत्रद्वयद्वयम्" इति पाठो नि०षो० (१।६४), नि०षो०से०।

"प्रसारयेदधोधःस्थं ततः सूत्रद्वयं द्वयम्" इति पाठान्तरं नि०षो०वाक०, श्रीरस०वाम० (पृ० २५)।

85 "भौमे" इति पाठो नि०षो० (१।६४), नि०षो०से०।

86 *पाठान्तरम्* – सप्तमेके - क.।

87 *मूलपाठः* – त्रयानां- क., ख.।

88 *अन्यत्र* – "चान्ततो" इति पाठो नि०षो० (१।६४), नि०षो०वाक०, नि०षो०से०, श्रीरस०वाम० (पृ० २५)।

89 *पाठान्तरम्* – भ्र{म}मे- क.।

90 *अन्यत्र* – "भौमे प्राथमिके सूत्रे विश्रान्तं च तृतीयके" इति पाठो नि०षो० (१।६५), नि०षो०से०। एतत्पाठो नास्ति- नि०षो० वाक०।

सूत्रद्वयं द्वयं वापिन्यन्त्राश्चैव तिष्ठ[न्ति][91] षट्।

चतुर्दशारमारभ्य च दशारं[92] च सिध्यति॥ ३२॥[93]

सूत्रा[द्] द्वितीयका[त्] षष्ठाद्ब्रह्मसूत्रस्य[94] पार्श्वयोः।

सूत्रद्वयं द्वयं देयमध-ऊर्ध्वप्रसारितम्[95]॥ ३३॥

तत्कोटिसंगतं[96] पश्चात् सूत्रयुग्मं प्रसारितम्[97]।

दशारमेवं कथितं मेरुचक्रं[98] तृतीयकम्॥ ३४॥[99]

---

91 "चान्य[तस्तु] त्र्यस्राण्येवं भवन्ति" इति पाठो नि०षो०(१।६६), नि०षो०से०।

"द्वयं चान्यत् त्र्यस्राण्येवं भवन्ति" इति पाठान्तरं नि०षो०वाक०, श्रीरस०वाम० (पृ० २५)।

92 *मूलपाठः* – वन्दशारं- क., ख.।

93 *अन्यत्र* – "चतुर्दशारं देवेशि दशारं चात्र सिद्ध्यति" इति पाठो नि०षो० (१।६६), नि०षो०से०।

"चतुर्दशारमित्येवं दशारं च प्रसिद्ध्यति" इति पाठान्तरं नि०षो०वाक०, श्रीरस०वाम० (पृ० २५)।

94 *मूलपाठः* – स्वेष्टोद्ब्रह्मसूत्रस्य- क., ख.।

95 देयेमधऊर्द्धप्रसारितं- क., ख.।

*अन्यत्र* – "देयमधऊर्ध्वक्रमात्मकम्" इति पाठो नि०षो० (१।६७)।

96 *मूलपाठः* – तत्कोटिसर्गतं- क., ख.।

97 *अन्यत्र* – "प्रसारयेत्" इति पाठो नि०षो० (१।६८), नि०षो०से०, श्रीरस०वाम० (पृ० २६)।

98 *मूलपाठः* – मेरुचक्रं- क., ख.।

*अन्यत्र* – "चक्रमेतत्" इति पाठो नि०षो०वाक० (१।६८), श्रीरस०वाम० (पृ० २६)।

99 "दशारं देवि संसिद्धमेतच्चक्रं तृतीयकम्" इति पाठो नि०षो० (१।६८), नि०षो०से०।

सूत्रात्पंचतमादुर्द्धामन्यत्सूत्रद्वयन्[100] नयेत्।

ऊर्ध्वाधोमुख{:}मध्यस्थं ताम्रममर्मद्वयावधि॥ ३५॥[101]

दद्या[त्] तृतीयसूत्रं तु तयोरन्योन्यसंगतम्[102]।

एवं चतुर्थरःमेकारश्चारत्रयपञ्चमम्[103]॥ ३६॥

इति संसिध्यते चक्रं कर्णिकान्तर्गतं समम्।[104]

तच्छक्तिपञ्चकं सृष्ट्या[105] लयेनाग्निचतुष्टयम्[106]॥ ३७॥

पञ्चशक्तिचतुर्वह्निसंयोगाच्चक्रसम्भवः।

तत्रैव कष्टकर्मं च द्विदशान्ते[107] चतुर्दश॥ ३८॥

---

100 *पाठान्तरम्* – सूत्राभ्यंचतमदुर्द्धामन्यत्सूत्रद्वयन्- ख.।

*अन्यत्र* – "सूत्रात्पञ्चमकान्मध्यादन्यत् सूत्रद्वयं" इति पाठो नि०षो० (१।६९), नि०षो०से०।

"सूत्राग्रात्पञ्चमादूर्ध्वमन्यत्सूत्रद्वयं " इति पाठान्तरम् नि०षो०वाक०, श्रीरस०वाम० (पृ० २६)।

101 "ऊर्ध्वाधोमुखमध्यस्थत्र्यस्त्रमर्मद्वयावधि" इति पाठो नि०षो० (१।६९), नि०षो०वाक०, नि०षो०से०।

"ऊर्ध्वाधोमुखमध्यस्थत्र्यश्रमर्मद्वयावधि" इति पाठः श्रीरस०वाम० (पृ० २६)।

102 *मूलपाठः* – ०संगतः- क., ख.।

103 *अन्यत्र* – "चतुर्थरमष्टारं मध्ययोनिश्च पञ्चमी" इति पाठो नि०षो० (१।७०), नि०षो०से०।

"चतुर्थमष्टारमेकारं चात्र पञ्चमम्" इति पाठान्तरं नि०षो०वाक०, श्रीरस०वाम० (पृ० २६)।

104 "एवं सिद्ध्यति देवेशि सर्वचक्रं मनोहरम्" इति पाठो नि०षो०(१।७१), नि०षो०से०।

105 *मूलपाठः* – श्रष्टो- क., सृष्टो- ख.।

106 लयनाग्निचतुष्टयं- क., ख.।

107 *अन्यत्र* – "तत्रैकमष्टकं देवि द्वे दशारे" इति पाठो नि०षो०(१।७२), नि०षो० वाक०, नि०षो०से०।

"तत्रैकमष्टकं मध्ये द्विदशान्त०" इति पाठः श्रीरस०वाम० (पृ० २६)।

चतुर्दश दशद्वन्द्वमष्टाचक्रं[108] महेश्वरि।

सृष्टिसंहारयोगेन शक्तिस्थानान्यनुक्रमात्॥३९॥

स्थितानि त्रिपुराचक्रे चक्राधारमनो[109] भवेत्।

बहिः पद्मद्वयं कुर्यादष्टषोडशकच्छदम्[110]॥४०॥

चतुरस्रं[111] ततो दत्त्वा कुर्या[द्] द्वारचतुष्टयम्।

चतुष्कोणसमायुक्तमेतन्मण्डलमुत्तमम्[112]॥४१॥[113]

रक्तेन[114] रजसापूर्यमेतच्छुक्ले च रेचकम्[115]।[116]

अस्य दर्शनमात्रेण सौभाग्यं देवि जायते॥४२॥

---

108 "द्वन्द्वमष्टावेकं" इति पाठो नि०षो० (१।७३), नि०षो०वाक०, नि०षो०से०, श्रीरस०वाम० (पृ० २६)।

109 *शक्यपाठः* – 'चक्राधारमतो'।

*अन्यत्र* – "यद्बोधाद्भैरवो" इति पाठो नि०षो० (१।७४), नि०षो०से०।

"यद्बोधादमरो" इति पाठान्तरं नि०षो०वाक०, श्रीरस०वाम० (पृ० २६)।

110 *मूलपाठः* – कुर्य्यादशषोडशकछदं- क., कुर्य्यादष्ठषोडशकछदं- ख.।

111 *पाठान्तरम्* – चतुरस्रं- ख.।

112 *मूलपाठः* – चतुष्कोणसमायुक्तंमेतन्मण्डलोत्तमं[x]- क., ख.।

113 *अन्यत्र* – "गुणवृत्तं ततः कुर्याच्चतुरस्रं च तद्बहिः। चतुर्द्वारसमायुक्तमेवं स्याच्चक्रमुत्तमम्॥" इति श्लोकपाठो नि०षो० (१।७५)।

114 *पाठान्तरम्* – रक्तन- क.।

115 *मूलपाठः* – रजसापुन्यमेतछुलेच्चरेचकं- क., ख.।

*अन्यत्र* – "रजसापूर्यं चक्रं शुक्लोच्चरेखिकम्" इति पाठो नि०षो०वाक० (नि०षो०, पृ० ८८), श्रीरस०वाम० (पृ० २६)।

116 एतदर्धश्लोकं नास्ति नि०षो०, नि०षो०से०।

नश्यन्ति[117] सर्वविघ्यानि[118] प्राप्यते तद्यदीप्सितम्[119]।

अधुना चैव चक्राणां नामानि शृणु सुव्रते[120]॥ ४३॥

त्रैलोक्यमोहनं चक्रं सर्वाशापूरणं तथा।

सर्वसंक्षोभकं[121] देवि सर्वसौभाग्यकारकम्॥ ४४॥

सर्वार्थसाधकं चक्रं सर्वरक्षाकरं परम्।

सर्वरोगहरं चैव सर्वसिद्धिमयं तथा॥ ४५॥

सर्वानन्दमयं चापि[122] नवमं सुरसुन्दरि[123]।

परिपूर्ण[ं] महाचक्रमजरामरकारकम्॥ ४६॥

एवमेव[124] महाचक्रमजरामरकारकम्।

एवमेव[125] महाचक्रे सन्ततः परमेश्वरः[126]॥ ४७॥

कथितंस्त्रिपुरादेव्या जीवन्मुक्तिप्रवर्तकः।

---

117 *मूलपाठः* – नस्यन्ति- क., ख.।

118 *शक्यपाठः* – 'सर्वविघ्नानि'।

119 *मूलपाठः* – तद्यदिप्सितं- क., ख.।

120 सूव्रते- क., ख.।

121 *पाठान्तरम्* – सर्व्वसंक्षोरुकं- ख.।

122 *मूलपाठः* – चापी- क., ख.।

123 सुरसुन्दरी- क., ख.।

124 एवमेष- क., ख.।

125 एवमेष- क., ख.।

126 *अन्यत्र* – योगिनीहृदये (१।८६) "एवमेव महाचक्रसङ्केतः परमेश्वरि" इत्यर्धश्लोकपाठः।

[अतो मन्त्रसंकेतः-]

मन्त्रसंकेतकं चैवमधुना[127] कथयामि ते॥४८॥

यद्वेधादमरो वीरो[128] वीरचक्रेश्वरो भवेत्।

चतुरस्र[ं] पुरा कृत्वा चतुर्विंशाङ्गुलं[129] शुभम्[130]॥४९॥

ईशानात्[131] पश्चिमं सूत्रमग्नेः पश्चिमगं पुरा[132]।[133]

पूर्वसूत्रं तु संस्थाप्य शेषाणि त्रीणि लोपयेत्॥५०॥

त्रिदण्डा[134] तु स्मृता योनिस्त्रियोमाशा[135] त्रिदेवता।

एकैकः दण्डकप्राज्ञः[136] षट् षट् सूत्राणि[137] पातयेत्[138]॥५१॥

---

127 "दिव्यमधुना" इति पाठो योगिनीहृदये (२।१)।

128 *मूलपाठः* – यद्वेधादमरावीर- क., ख.।

*अन्यत्र* – योगिनीहृदये (२।१) "यद्वेत्ता त्रिपुराकारो" इति पाठः।

129 *मूलपाठः* – चतुर्विंशाङ्गुलं- क., चतुर्विंशाद्गुलं- ख.।

130 *पाठान्तरम्* – गुभं-क.।

131 *मूलपाठः* – ईशानं- क., ख.।

132 सूत्रंमग्निःपश्चिमगत्पुरा- क., ख.।

133 *अन्यत्र* – "ईशात्पश्चिमगं सूत्रमग्नेः पश्चिमगं पुनः" इति पाठः श्रीरस०वाम० (पृ० ३४)।

134 *मूलपाठः* – त्रिदण्डो- क., ख.।

135 *अन्यत्र* – "योनिः त्रिमाया सा" इति पाठः श्रीरस०वाम० (पृ० ३४)।

136 "एकैकदण्डके प्राज्ञः" इति पाठः श्रीरस०वाम० (पृ० ३४)।

137 *मूलपाठः* – षड्सुत्राणि - क., ख.।

138 *पाठान्तरम्* – पालयेत्- क.।

योनयो[139] येन[140] जायन्ते समस्ताः समसंधयः।

कोष्टकान्यूनपञ्चाशद्भगरूपाणि[141] तानि तु॥५२॥

ईशादकारमारभ्य[142] वारुण्यां तु विनायकम्।

विन्यसेन्मातृकाः सर्वा विष्ण्वादिशिवपश्चिमाः॥५३॥

एकचक्रं लिखेत्येव[143] दृढे दारुमये शुभे।[144]

त्रिकोणे च त्रिपादे च वर्णोत्कीलितलक्षणे[145]॥५४॥

षण्मासाज्जायते सिद्धिः पूजाजपपरायणे[146]।

अतो मन्त्रः समुद्धार्यो यथा देवि तथा श्रृणु॥५५॥

ओजमध्यगतस्वर्णमूर्द्धशशिरसोरहम्।[147]

---

139 यौनयो – क.।

140 *मूलपाठः* – योन- क., ख.।

141 कोष्ठकाद्युन०- क., ख.।

142 ऐशा०- क., ख.।

143 *पाठान्तरम्* – लिखेभ्येव - ख.।

144 *अन्यत्र* – "एतच्चक्रं लिखेत्पट्टे शुभे दारुमये दृढे" इति पाठः श्रीरस०वाम० (पृ० ३५)।

145 *पाठान्तरम्* – ०लक्षणी- क.।

146 *मूलपाठः* – पूजजय०- क., ख.।

147 *अन्यत्र* – "ओ-जमध्यगतं वर्णं झोर्ध्वेन शिरसा हतम्" इति पाठः श्रीरस०वाम० (पृ० ३४)।

अंगमध्यगतं[148] बीजं[149] वरमध्यासनस्थितम्[150] ॥ ५६ ॥

द्वितीयमेतत्कथितामजमध्यं[151] सबिन्दुकम्।

वहमध्यम् आअधःस्थमंकमध्येन[152] लाञ्छितम्[153] ॥ ५७ ॥

प्रथम[ं] त्र्यक्षरी विद्या करशुद्धिकरी स्मृता।

द्वयोः कृत्वा विपर्यासं पूर्वबीजेन वै विना ॥ ५८ ॥

आत्मन्यासविधेर्विद्यात्[154] द्वितीयेयं कृशोदरि।

षोधायदुर्द्धगत्पिण्डं (?) मायाबिन्दुविभूषितम् ॥ ५९ ॥ [155]

आद्यायां[156] वाग्भवस्थाने न्यस्यौत्मासनरूपिणी[157]।

गृहीत्वा वर्णमेकैकमाद्यमाद्यतृतीययोः ॥ ६० ॥

---

148 *पाठान्तरम्* – अङ्गमध्यगतं- ख.।

149 विजम्- क.।

*अन्यत्र* – “वर्णं” इति पाठः श्रीरस०वाम० (पृ० ३४)।

150 *मूलपाठः* - वरमध्यसनस्थितं- क., ख.।

151 *शक्यपाठः* – (व्याकरणानुसारेण) ‘द्वितीयमेतत्कथितमजमध्यं’।

*अन्यत्र* – “द्वितीयमेतत्कतथितमाऊमध्यं” इति पाठः श्रीरस०वाम० (पृ० ३४)।

152 *मूलपाठः* – ०संकमध्येन- क., ख.।

153 लाछितं- क., ख.।

154 *अन्यत्र* – “अङ्गन्यासविधौ विद्या” इति पाठः श्रीरस०वाम० (पृ० ३५)।

155 “षाधऊर्ध्वगतं पिण्डं आऔअन्तविभूषितम्” इति पाठस्तत्रैव।

156 “आद्याया” इति पाठस्तत्रैव।

157 *पाठान्तरम्* – भ्यस्यौत्मासनरूपिणी- ख.।

*अन्यत्र* – “त्र्यर्णात्मासनरूपिणी” इति पाठः श्रीरस०वाम० (पृ० ३६)।

मध्यान्तमूर्ध्वे षाधेन[158] विद्या चक्रासनस्थिता।

षाध्येन्त्राभ्या[159] युता पूर्वा ज्ञेया मन्त्रासनस्थिता॥ ६१॥

विपरीतस्थितौ चान्तौ सोर्द्धजपूर्वलास्थितौ[160]।

दत्त्वा तृतीयविद्यायाः कामबीजान्तदेशतः॥ ६२॥

साध्यसिद्धासनगता षष्ठी[161] विद्या प्रकाशिता[162]।

दत्त्वा बीजत्रयश्चोर्द्धवररूपार्द्धतन्तगौ[163]॥ ६३॥

यान्तस्थाद्याद्यविद्यैव[164] चावाहनविधौ परा।

एवमेता महाविद्याः पूर्वोक्ता[:] सुरसुन्दरि॥ ६४॥

महात्रिपुरसुन्दर्याः सांगोपांगास्त्रदेवता।

अथांतः संप्रवक्ष्यामि[165] मूलविद्यां वरानने॥ ६५॥

यया विज्ञातया सम्यक् सर्वमेव प्रसिध्यति।

---

158 *मूलपाठः* – मध्यान्तमूद्धसाधेन - क., मधान्तमूद्धसाधेन- ख.।

*अन्यत्र* – "तदन्तमूर्ध्वे षाधेन" इति पाठः श्रीरस०वाम० (पृ० ३६)।

159 *पाठान्तरम्* – षाध्येन्त्रात्पा- क.।

*अन्यत्र* – "षाधोन्ताभ्यां" इति पाठः श्रीरस०वाम० (पृ० ३७)।

160 *अन्यत्र* – "रान्तौ झोर्ध्वपूर्वलाञ्छितौ" इति पाठः श्रीरस०वाम० (पृ० ३७)।

161 *मूलपाठः* – षष्ठि- क., ख.।

162 प्रकासिता - क., ख.।

163 *अन्यत्र* – "बीजत्रयस्योर्ध्वं वर्णौ षाधषअन्तगौ" इति पाठः श्रीरस०वाम० (पृ० ३८)।

164 "यान्तस्था आद्यविद्यैव" इति पाठस्तत्रैव।

165 *मूलपाठः* – संप्रवक्षामि - क., ख.।

अःखमध्यं तु संगृह्य ऐं मध्यमधमः कुरु॥ ६६॥ [166]

तस्य मध्ये[167] न्यसेद्वर्णमकारोर्द्ध्वव्यवस्थितः[168]।

रान्तषाधोयकारान्तस्मायाबिन्दुनिरोधयुक्[169]॥ ६७॥

वाग्भवो[ऽ]यं समाख्यातः समारभ्य यकारकः[170]।

त्रयाणां[171] षाधो वर्णो नामेकैकस्यामने[172] न्यसेत्॥ ६८॥

गाद्यं सोद्धोयकारान्तमेकं[173] प्रागामाद्य लाञ्छितम्[174]। [175]

आडमध्यन[176] चाक्रान्तं द्रौ[177] अःमध्यशिरोयुतः॥ ६९॥

---

166 *अन्यत्र* – "अः-खमध्यगतं गृह्य ऌ-ऐमध्यमतः कुरु" इति पाठः श्रीरस०वाम० (पृ० ४०)।

167 *मूलपाठः* – मध्य- क., ख.।

168 *शक्यपाठः* – (व्याकरणानुसारेण) 'न्यसेद्वर्णमकारोर्ध्वव्यवस्थितम्'।

*अन्यत्र* – "न्यस्येत्पश्चादःकारोर्ध्वव्यवस्थितम्" इति पाठः श्रीरस०वाम० (पृ० ४०)।

169 "रान्तषान्तयकारान्तमायाबिन्दुनिरोधियुक्" इति पाठः श्रीरस०वाम० (पृ० ४१)।

170 "सम्यक्प्रत्ययाकारकः" इति पाठस्तत्रैव।

171 *मूलपाठः* – त्रयानां- क., ख.।

172 *अन्यत्र* – "षाधवर्णानामेकैकस्यासने" इति पाठः श्रीरस०वाम० (पृ० ४१)।

173 *शक्यपाठः* – (व्याकरणानुसारेण) 'सोर्ध्व०'।

174 *मूलपाठः* – लाछितं- क., ख.।

175 *अन्यत्र* – "गाद्यसोर्ध्वयकारान्तावेकत्राद्यर्णलाञ्छितम्" इति पाठस्तत्रैव।

176 *शक्यपाठः* – '०मध्येन'।

177 *पाठान्तरम्* – डौ- ख.।

*शक्यपाठः* – 'ड'।

कामराजं[178] महेशानि सरहस्यं प्रकाशितम्।

अस्योच्चारणमात्रेण जगत्क्षोभः प्रजायते॥ ७०॥

तृतीयं संप्रवक्ष्यामि[179] शक्तिबीज[ं] महाद्भुतम्।

षधो लाधः समायुक्तं गाद्यं फाधो[180] हरात्मकम्॥ ७१॥ [181]

अःऊर्ध्वं[182] पृष्टसंयुक्तं शक्तिबीजं समुद्धरेत्।[183]

अनेन ज्ञानमात्रेण कुर्या[त्] सर्वविषक्षयम्[184]॥ ७२॥

एषा विद्या समाख्याता सर्वैश्वर्यकरी[185] परा।

अनेन[186] ज्ञातया सम्यक् नास्ति तद्यन्न सिध्यति[187]॥ ७३॥

अथांतः संप्रवक्ष्यामि पाशांकुशधनु[:]शरान्।

येषां तु योगमात्रेण देवदेवी प्रसीदति॥ ७४॥

---

178 *अन्यत्र* – "कामबीजं" इति पाठः श्रीरस०वाम० (पृ० ४१)।

179 *पाठान्तरम्* – संप्रवक्षामि- ख.।

180 हाधो– क.।

181 *अन्यत्र* – "षाधं लाधसमायुक्तं गाद्यं फाधं षपाधगम्" इति पाठः श्रीरस०वाम० (पृ० ४१)।

182 *पाठान्तरम्* – अःऊर्द्धं- ख.।

183 *अन्यत्र* – "अःपृष्ठं झोर्ध्वसमायुक्तं शक्तिबीजं समुद्धृतम्" इति पाठः श्रीरस०वाम० (पृ० ४१)।

184 *मूलपाठः* – ०क्षयः- क., ख.।

185 *अन्यत्र* – "सर्वाश्चर्यकरी" इति पाठः श्रीरस०वाम० (पृ० ४१)।

186 "अनया" इति पाठस्तत्रैव।

187 "साधयेत्" इति पाठस्तत्रैव।

यत्पूर्ववर्णयुगलम् आद्यन[188] शिर आहुतम्[189]।[190]

पाशद्वयं समाख्यातं शाक्तं[191] मादनमेव च॥ ७५॥

जंभादिपरमं युक्तमेकमंकुशमुत्तमम्[192]।

द्वितीयं काद्ययोन्यन्तमकारान्तलयान्तगम्[193]॥ ७६ ॥

णान्तस्याद्यं[194] सकाराद्यं[195] चापयुग्ममुदाहृतम्।

सबीजेन[196] नियोक्तव्याः सम्प्रदायसमन्विता[:]॥ ७७॥

पाधो नाधो[197] लयान्तं च हाधो[198] लान्तसमन्वितम्।

---

188 *शक्यपाठः* – 'आद्येन' (?)।

189 *पाठान्तरम्* – शिरश्राहुतं- क.।

190 *अन्यत्र* – "ऊपूर्ववर्णयुगलं काद्येन शिरसान्वितम्" इत्यर्धश्लोकपाठः श्रीरस०वाम०, पृ० ९९।

191 *मूलपाठः* – साक्तं- क., ख.।

192 *पाठान्तरम्* – जंभादिपरमंयुक्तंमेकमंकुशमुत्ततं- ख.।

*अन्यत्र* – "जंभादिपदसंयुक्तमेकमंकुशमुत्तमम्" इति पाठः श्रीरस०वाम०, पृ० ९९।

193 *मूलपाठः* – द्वितीयङ्काद्ययोन्यत्र०- क., ख.।

194 *पाठान्तरम्* – णान्तस्यांद्यां- ख.।

*अन्यत्र* - "णान्तं पाद्यं" इति पाठः श्रीरस०वाम०, पृ० १००।

195 "सकाद्यं च" इति पाठः श्रीरस०वाम०, पृ० १००।

196 *पाठान्तरम्* – सवीजेता- ख.।

*अन्यत्र* – "सबीजैस्तैर्" इति पाठः श्रीरस०वाम०, पृ० ९८।

197 "षाधं राधं" इति पाठः श्रीरस०वाम०, पृ० १००।

198 "बाधं" इति पाठस्तत्रैव।

औअःमध्यगबीजेन सर्वशिरसि आहती[199] ॥ ७८ ॥

पिण्डस्तेन न नियोक्तव्याः संप्रदायसमन्विताः।

कामदेवस्य कथितं शरपञ्चकमुत्तमम् ॥ ७९ ॥

जधमध्यं[200] द्विधोद्धृत्य वपमध्येन[201] लाञ्छितम्[202]।

औअःपृष्ठसमापेतं कपूर्वेण शिरोयुतम् ॥ ८० ॥

गाद्यं वान्तं[203] च सोर्ध्वस्थौ[204] आईअन्तसमन्वितौ।

काद्ययुक्तौ[205] च षान्तं[206] च खाद्यन्ते[207] देवताः[208] शराः ॥ ८१ ॥

सबीजास्ते[209] नियोक्तव्याः सम्प्रदायसमन्विताः[210]।

---

199 "सर्वेऽपि शिरसाहताः" इति पाठस्तत्रैव।

200 *पाठान्तरम्* – अधमद्ध्यं- क.।

201 *अन्यत्र* – "पषमध्येन" इति पाठः श्रीरस०वाम०, पृ० ९७।

202 *मूलपाठः* – लाछितं- क., ख.।

203 *पाठान्तरम्* – वानां- क.।

*अन्यत्र* – "लान्तं" इति पाठः श्रीरस०वाम०, पृ० ९७।

204 *मूलपाठः* – सोर्द्धस्थौ- क., ख.।

205 कद्ययुक्तो- क., ख.।

206 वषान्तं- क., ख.।

*अन्यत्र* – "ष-अन्तं" इति पाठः श्रीरस०वाम०, पृ० ९७।

207 "खाद्यार्कं" इति पाठस्तत्रैव।

208 *मूलपाठः* – ०न्देवताः- क., ख.।

209 *अन्यत्र* – "सबीजैस्तैर्" इति पाठः श्रीरस०वाम०, पृ० ९८।

210 *मूलपाठः* – ०समन्वितः- क., ख.।

प्रागुद्धृतानि बीजानि वशिन्याद्यष्टकस्य[211] च॥८२॥

मायालक्ष्मीमये बीजे आदिचक्रस्य पूजने।

तत्संयुक्तं द्वितीयस्य स्वरषोडशकं पृथक्॥८३॥

मन्त्रसंकेतकः प्रोक्तः सर्वकामफलप्रदः।

[अतः पूजासंकेतः-]

पूजासंकेतकं चापि कथयामि तवेश्वरि[212]॥८४॥

प्रथमे त्रिपुरा चक्रे द्वितीये त्रिपुरेश्वरी॥

तृतीये त्रिपुरादेव्या चतुर्थे त्रिपुरवासिनी॥८५॥

पञ्चमे त्रिपुराश्रीश्च षष्ठे त्रिपुरमालिनी।

सप्तमे त्रिपुरासिद्धिरष्टमे त्रिपुराम्बिका[213]॥८६॥

नवमे तु महेशानि महात्रिपुरसुन्दरी[214]।

मूलविद्या समाख्याता त्रैलोक्यवशकारिणी॥८७॥

---

211 वशिन्याद्याष्टकस्य- क., ख.।

212 *मूलपाठः* – तवेश्वरी- क., ख.।

213 त्रिपुरम्विका - क., ख.।

214 *पाठान्तरम्* – महातिपुरसुन्दरी- ख.।

एवं नवप्रकाराद्या[215] पूजामात्रेण पार्वति।

एकाकारा चादिशक्तिरजरामरकारिणी[216]॥८८॥

मन्त्रसंकेतकस्तस्या[217] [ना]नाकारो[218] व्यवस्थितः[219]।

नानामन्त्रक्रमेणैव पारम्पर्येण[220] लभ्यते॥८९॥

प्रकटादौ ततो गुप्तागुप्ता गुप्ततराः[221] परा[:]।

सम्प्रदायक्रमायाता[:] तथान्यो (?) कुलकौलिनी[222]॥९०॥

महानिगर्भयोगिन्यो रहस्यस्था[:] परापरा[:]।

परमा त्रिरहस्यस्था पूज्या त्रिभुवनेश्वरी॥९१॥

महापीठोपपीठेषु योगिनीवक्त्रसम्भवे।

कर्णात्कर्णोपदेशेन सञ्चरन्त्यवनीतले[223]॥९२॥

---

215 *मूलपाठः* – नवप्रकारायो- क., ख.।

216 ०जला० – क., ख.।

217 मन्त्रसंकेतकंस्तस्मा- क., ख.।

218 *पाठान्तरम्* – [x]नाकारे-क.।

219 *मूलपाठः* – व्यवस्थिताः- क., ख.।

220 *पाठान्तरम्* – पारम्पर्य्येण- ख.।

221 *मूलपाठः* – गुफागुफोद्गुप्ततरा - क., ख.।

222 *शक्यपाठः* – ‘तथान्याः कुलकौलिन्यः’।

223 *मूलपाठः* – सञ्चरभ्यवनीतले- क., ख.।

ततः प्रकटयोगिन्यश्चक्रत्रैलोक्यमोहने[224]।

तथैव गुप्तयोगिन्यः सर्वाशापरिपूरणे॥९३॥

गुप्ता गुप्ततरा[225] देवि सर्वसंक्षोभकारके।

संप्रदायक्रमायाताः सर्वसौभाग्यकारके॥९४॥

कुलकौलिकयोगिन्यश्चक्रे सर्वार्थसाधके।

निगर्भदेवताचक्रे सर्वरक्षाकरे परे॥९५॥

रहस्यदेवताश्चान्याः सर्वरोगहरे[226] प्रभो।

सर्वसिद्धिमये चक्रे परमातिरहस्यगाः[227]॥९६॥

तिष्ठन्ति देवताः सर्वाः सर्वसिद्धिफलप्रदाः।

परापरातिरहस्याद्या[:] सर्वानन्दमये परे॥९७॥

तत्र प्रकटयोगिन्यश्चक्रे त्रैलोक्यमोहने[228]।

अणिमाद्या महादेवि सिद्धयोऽष्टाष्टकस्थिताः[229]॥९८॥

---

224 प्रकत०- क., ख.।

225 *अन्यत्र* – "गुप्तगुप्ततरा" इति पाठः श्रीरस०वाम० पृ० ५०।

226 *मूलपाठः* – ०हर- क., ख.।

227 ०लहस्यगा- क., ख.।

228 ०मोहणे- क., ख.।

229 सिद्धियोऽष्टोष्टवस्थिताः- क., ख.।

तथैव गुप्तयोगिन्यः सर्वाशापरि[पु]रणे[230]।

कामाकर्षणरूपाद्याः[231] कला नित्या[:] प्रकीर्तिताः ॥ ९९ ॥

गुप्ता गुप्ततरा[232] देवि सर्वसंक्षोभकारके।

अनंगकुसुमाद्यस्तु चक्रे सर्वविवस्थिताः ॥ १०० ॥

संप्रदायक्रमायाताश्चक्रसौभाग्यकारके।

सर्वसंक्षोभिणीपूर्वाः[233] संस्थिता[:] सुरसुन्दरि[234] ॥ १०१ ॥

कुलकौलिकयोगिन्यः सर्वसिद्धिप्रदायकाः।

सर्वसिद्धिप्रदाद्याश्चक्रे[235] [तु][236] सर्वार्थसाधके ॥ १०२ ॥

निर्गर्भदेवताश्च[क्रे] सर्वरक्षाकरे प[रे][237]।

सर्वज्ञाद्या महादेवि संस्थिता वीरवन्दिते ॥ १०३ ॥

रहस्यदेवतायाश्च सर्वरोगहरं प्रिये।

वशिन्याद्या महादेव्यः संस्थिता[:] परमार्थत[:] ॥ १०४ ॥

---

230 सर्व्वसापरि[x]रणे- क., ख.।

231 कामाकर्षेणे - क., कामाकर्षणे- ख.।

232 *अन्यत्र* – "गुप्तगुप्ततरा" इति पाठः श्रीरस०वाम०, पृ० ५०।

233 *मूलपाठः* – सर्वसंक्षोभणीपुर्व्वाः- क., ख.।

234 सुरसुन्दरी- क., ख.।

235 ०श्चक्र- क., ख.।

236 *अन्यत्र* – "सर्वसिद्धिप्रदाद्यास्तु चक्रे" इति पाठः श्रीरस०वाम०, पृ० ५२।

237 *मूलपाठः* – रिगर्व्भदेवताश्च[x]सर्व्वरक्षाकरेप[x]- क., ख.।

सर्वसिद्धिमये चक्रे परमातिरहस्यगाः।

स्थिता[:] कामेश्वरीपूर्वाश्चतस्रः पीठदेवताः॥ १०५॥

सर्वानन्दमये चक्रे पूर्णसर्वमयीस्थिताः[238]।

परापररहस्याद्या महात्रिपुरसुन्दरी॥ १०६॥[239]

लोकातीतस्वभावा तत्प्रान्तक्रमसमन्विता[240]।

पराद्वयीतभावस्था[241] सर्वप्रवरगोचरा॥ १०७॥[242]

सर्वभावपरित्यक्ता[243] सर्वद्वन्द्वविवर्जिता।

परमा निर्विकल्पस्था पूजा पापक्षयंकरी॥ १०८॥

सभैरवचतुःषष्ठियोगिनीचक्रमण्डले।

संस्थिते यम्महापूयद्बोधादम[244] (?) नरो भवेत्॥ १०९॥

देवताराधनाकाममेकमाश्रित्य पूजयेत्।

---

238 *शक्यपाठः* – 'पूर्णा सर्वमयी स्थिता'।

239 *अन्यत्र* – "सर्वानन्दमये चक्रे महापूर्णेश्वरीश्वरी। संस्थिताद्या सर्वमयी महात्रिपुरसुन्दरी॥" इति श्लोकपाठः श्रीरस०वाम०, पृ० ५५।

240 *मूलपाठः* – ०समन्विती- क., ख।

241 *पाठान्तरम्* – पराद्वयीतभवस्थाः- ख.।

*शक्यपाठः* – 'परमाद्वैतभावस्था'।

242 *अन्यत्र* – "परमाद्वैतभावस्था महापूजापरा प्रिये" इत्यर्धश्लोकपाठः श्रीरस०वाम०, पृ० ५५।

243 *मूलपाठः* – ०परित्यत्वा- क., ख.।

244 *पाठान्तरम्* – यम्महायूयद्बोधादमन- क.।

सर्वकामपरित्यक्तः सर्वकामानवाप्नुयात्॥ ११०॥

सर्वेप्सितफलावाप्तिः सर्वकामे[245] समाश्रयात्।

यद्येतल्लुप्यते[246] देवि कस्यचित्[247] केनचित् क्वचित्॥ १११॥

मुद्राबन्धं[248] समासेन शृणु वक्ष्ये[ऽ]हमीश्वरि।

उभौ तौ तन्निरुद्धौ[249] तु प्राणापानौ[250] व्यवस्थितौ॥ ११२॥

तत्र मध्ये[251] परं तत्त्वं भावाभावपदोद्भवम्।

तत्र मध्ये[252] विदं[253] कुर्यान्मुद्रैषा खेचरी मता॥ ११३॥

अन्यास्तु[254] करबन्धेन[255] सर्वशास्त्रेषु संस्थिताः।

वाचामगोचरं देव्याः सर्वानन्दमयं वपुः॥ ११४॥

एकवक्त्र[ं] महारक्तं रक्तपद्मासनस्थितम्।

---

245 सर्वकाम- क.।

246 यद्येतद्दृश्यते- ख.।

247 *मूलपाठः* – कस्यश्चित्- क., ख.।

248 मुद्रावंद्धं- क., ख.।

249 *अन्यत्र* – "संनिरुद्धौ" इति पाठः श्रीरस०वाम०, पृ० ७६।

250 *मूलपाठः* – प्राणापानो- क., ख.।

251 मध्य- क., ख.।

252 मध्य- क., ख.।

253 *अन्यत्र* – "चित्तं" इति पाठः श्रीरस०वाम०, पृ० ७६।

254 *मूलपाठः* – अन्योस्तु- क., ख.।

255 करवद्धेन- क., ख.।

चतुर्भिरायुधैः युक्तं पाशांकुशधनुश्शरैः॥ ११५॥

देवीकिरणरूपं तु[256] शुद्ध[ं] शक्तिगणं स्मरेत्।

ध्यानं न विद्यते तस्मास्तदूर्द्धं वरवर्णिनि[257]॥ ११६॥

एवं पूजा विधाने तु सर्वतीर्थफलं लभेत्[258]।

सर्वयज्ञफलं[259] चापि सर्वयोगफलं तथा॥ ११७॥

एतद्रहस्यमख्यातं तत्त्वया परिपृच्छतम्।

नैव देयमभक्तानां किमन्यं कथयामि ते॥ ११८॥

एकैवानेकरूपा सा विद्या श्रीत्रिपुराभिधा[260]।

यस्याः सङ्कटबोधेन[261] जीवन्मुक्तः प्रवर्त्तते॥ ११९॥

॥ इति श्रीवाराहीतन्त्रे दक्षिणाम्नायनिर्वाणपदे दशमपटलः॥ १०॥

---

256 ०रूपस्तु- क., ख.।

257 *अन्यत्र* – "तासामतोऽर्थाद्वरवर्णिनि" इति पाठः श्रीरस०वाम०, पृ० ४८।

258 *मूलपाठः* - रभेत्- क., ख.।

259 सर्व्वजज्ञफलं - क., ख.।

260 *पाठान्तरम्* – श्रीत्रिपुराभिध्या- क.।

261 *शक्यपाठः* – 'सङ्केतबोधेन'।

षण्मासान् भूमिकामस्तु स जप्त्वा लभते महीम्।
राजा शत्रुविनाशाय जपेन्मासाष्टकं पुनः ॥३१॥
रात्रौ वारत्रयञ्चैव नाशयत्येव शास्त्रवान्।
जपेन्मासत्रयं रात्रौ राजानं वशमानयेत् ॥३२॥
धनार्थी च सुतार्थी च दारार्थी यस्तु मानवः।
पठेद्वारत्रयं यद्वा वारमेकं तथा निशि ॥३३॥
धनं पुत्रांस्तथा दारान् प्राप्नुयान्नात्र संशयः।
ध्यानं वक्ष्यामि देवस्य यथा ध्यात्वा पठेन्नरः ॥३४॥
शुद्धस्फटिकसकाशं सहस्रादित्यवर्चसम्।
अष्टबाहुं त्रिनयनं चतुर्बाहुं द्विबाहुकम् ॥३५॥
भुजङ्गमेखलं देवमग्निवर्णं शिरोरुहम्।
दिगम्बरं कुमारीशं बटुकाख्यं महाबलम् ॥३६॥
खट्वाङ्गमसिपाशञ्च शूलञ्चैव तथा पुनः।
डमरुञ्च कपालञ्च वरदं भुजगं तथा ॥३७॥
नीलजीमूतसङ्काशं नीलाञ्जनचयप्रभम्।
दंष्ट्राकरालवदनं नूपुराङ्गदसङ्कुलम् ॥३८॥
आत्मवर्णसमोपेतसारमेयसमन्वितम्।
ध्यात्वा जपेत्सुसंहृष्टः सर्वान् कामानवाप्नुयात् ॥३९॥
ॐ करकलितकपालं कुण्डलीदण्डपाणि-
स्तरुणतिमिरनीलो व्यालयज्ञोपवीती।
क्रतुसमयसपर्याः विघ्नविच्छेदहर्त्ता
जयति बटुकनाथः सिद्धिदः साधकानाम् ॥४०॥

**इति विश्वसारे आपदुद्धारकल्पे बटुकभैरवस्तवराजः समाप्तः**

●

## अथ योगप्रक्रिया

(नियम है कि योगक्रिया विना गुरु के नहीं करनी चाहिये; अतएव यहाँ अनुवाद करने का कोई प्रयोजन नहीं है)

**गौतमीये—**

**गौतम उवाच**

**देवर्षे योगयुक्तात्मन् योगानुभवदर्शक!।**
**सांख्ययोगविशेषज्ञ कर्मयोगनिषेवक ॥**

विना योगं न सिद्ध्येत्तु कुण्डलीचंक्रमः प्रभो।
मूलपद्मे कुण्डलिनी यावन्निद्रायिता प्रभो!।
तावत् किञ्चिन्न सिद्ध्यन्ते यन्त्रमन्त्रार्चनादिकम्॥
जागर्त्ति यदि सा देवी बहुभिः पुण्यसञ्चयैः।
तदा प्रसादमायान्ति यन्त्रमन्त्रार्चनादयः।
शिववद्विहरेल्लोकेष्वष्टैश्वर्यसमन्वितः।
योगयोगाद्भवेन्मुक्तिर्मन्त्रसिद्धिरखण्डितः॥
सिद्धे मनौ परावाप्तिरिति शास्त्रार्थनिर्णयः।
तस्मात् कार्यं परं योगं कथयस्व मुनीश्वर!।
मुक्तात्मा येन विहरेत् स्वर्गे मर्त्ये रसातले।
जीवन्मुक्तश्च देहान्ते निर्वाणपदमाप्नुयात्॥

नारद उवाच

कथयामि तव स्नेहात् योगयोग्योऽसि गौतम!
संसारोत्तारणे युक्तिर्योगशब्देन कथ्यते।
ऐक्यं जीवात्मनोराहुर्योगं योगविशारदाः।
तव स्नेहात्समाख्याता योगे विघ्नकरास्त्विमे।
कामक्रोधलोभमोहमदमात्सर्यसंज्ञकाः।
योगाङ्गैरेभिर्निर्जित्य योगिनो योगमाप्नुयुः।
यमं नियममासनप्राणायामौ ततः परम्।
प्रत्याहारं धारणाख्यं ध्यानं सार्द्धं समाधिना।
अष्टाङ्गान्याहुरेतानि योगिनो योगसाधने।
अहिंसासत्यमस्त्येयब्रह्मचर्यं दयार्जवम्।
क्षमा धृतिर्मिताहारः शौचश्चेति यदा दश॥
तपः सन्तोष आस्तिक्यं दानं देवस्य पूजनम्।
सिद्धान्तश्रवणञ्चैव ह्रीमतिश्च जपो हुतम्।
दशैते नियमा प्रोक्ता योगशास्त्रविशारदैः॥
आसननि पूर्वमुक्तानि।
इड़याकर्षयेद्वायुं बाह्यं षोडशमात्रया।
धारयेत्पूरितं योगी चतुःषष्ट्या च मात्रया॥
सुषुम्नामध्यगं सम्यग् द्वात्रिंशन्मात्रया शनैः।
नाड्या पिङ्गलया चैनं रेचयेद्योगवित्तमः॥

प्राणायाममिमं प्राहुर्योगशास्त्रविशारदाः ।
भूयोभूयः क्रमात्तस्य व्यत्ययेन समाचरेत् ॥
मात्रावृद्धिक्रमेणैव सम्यक् द्वादश षोडश ।
प्राणायामो हि द्विविधः सगर्भोऽगर्भ एव च ।
जपध्यानादिभिर्युक्तं सगर्भं तं विदुर्बुधाः ॥
तदपेतं विगर्भञ्च प्राणायामं परे विदुः ।
क्रमादभ्यसतः पुंसो देहे स्वेदोद्गमोऽधमः ।
मध्यमः कम्पसंयुक्तो भूमित्यागः परो मतः ।
उत्तमस्य गुणावाप्तिर्यावच्छीलनमीष्यते ॥
इन्द्रियाणां विचरतां विशेषेषु निरर्गलम् ।
बलादाहरणन्तेभ्यः प्रत्याहारोऽभिधीयते ।
अङ्गुष्ठगुल्फजानूरूसीमनीलिङ्गनाडिषु ।
हृद्ग्रीवाकण्ठदेशेषु लम्बिकायां तथा नसि ॥
भ्रूमध्ये मस्तके मूर्ध्नि द्वादशान्ते यथाविधि ।
धारणं प्राणमरुतो धारणेति निगद्यते ।
समाहितेन मनसा चैतन्यान्तरवर्त्तिना ।
आत्मन्यभीष्टदेवानां ध्यानं ध्यानमिहोच्यते ॥
समत्वभावना नित्यं जीवात्मपरमात्मनोः ।
समाधिमाहुर्मुनयः प्रोक्तमष्टाङ्गलक्षणम् ।
इत्यादिकथितं विप्र कामादिषट्कनाशनम् ।
इदानीं कथये तेऽहं मन्त्रयोगमनुत्तमम् ।
विश्वं शरीरमित्युक्तं पञ्चभूतात्मकं मुने ।
चन्द्रसूर्याग्नितेजोभिर्जीवब्रह्मैक्यरूपकम् ।
तिस्रः कोट्यस्तदर्द्धेन शरीरे नाड्यो मताः ।
तासु मुख्या दश प्रोक्तास्तासु तिस्रो व्यवस्थिताः ।
प्रधाना मेरुदण्डेऽत्र चन्द्रसूर्याग्निरूपिणी ।
इड़ा यामे स्थिता नाडी शुक्ला तु चन्द्ररूपिणी ।
शक्तिरूपा च सा नाडी साक्षादमृतविग्रहा ।
दाडिमी कुसुमप्रख्या विषाख्या मुनिभिः स्मृताः ।
मेरुमध्ये स्थिता या तु मूलादाब्रह्मविग्रहा ।
सर्वतेजोमयी सा तु सुषुम्ना बहुरूपिणी ।
तस्या मध्ये विचित्राख्या अमृतस्राविणी शुभा ॥

सर्वदेवमयी सा तु योगिनां हृदयङ्गमा ।
विसर्गाद्बिन्दुपर्यन्तं व्याप्य तिष्ठति तत्त्वतः ॥
मूलाधारे त्रिकोणाख्ये इच्छाज्ञानक्रियात्मके ।
मध्ये स्वयम्भुलिङ्गन्तु कोटिसूर्यसमप्रभम् ।
तदूर्ध्वे कामबीजन्तु कलशान्तीन्दुनादकम् ।
तदूर्ध्वे तु शिखाकारा कुण्डली ब्रह्मविग्रहा ।
तद्बाह्ये हेमवर्णानां रसवर्णचतुर्दलम् ।
द्रुतहेमसमप्रख्यं पद्मं तत्र विभावयेत् ॥
तदूर्ध्वेऽग्निसमप्रख्यं षड्दलं हीरकप्रभम् ।
वादिलान्तषड्वर्णेन युक्ताधिष्ठानसंज्ञकम् ॥
मूलमाधारषट्कानां मूलाधारं ततो विदुः ।
स्वशब्देन परं लिङ्गं स्वाधिष्ठानं ततो विदुः ॥
तदूर्ध्वे नाभिदेशे तु मणिपूरं महत्प्रभम् ।
मेघाभं विद्युदाभञ्च रत्नतेजोमयं ततः ।
तत्पद्मं मणिवद्भिन्नं मणिपूरं तथोच्यते ।
दशभिश्च दलैर्युक्तं डादिफान्ताक्षरान्वितम् ॥
शिवेनाधिष्ठितं पद्मं विश्वलोकैककारणम् ।
तदूर्ध्वेऽनाहतं पद्ममुद्यदादित्यसन्निभम् ॥
कादिठान्ताक्षरैरर्कपत्रैश्च समधिष्ठितम् ।
तन्मध्ये बाणलिङ्गन्तु सूर्यायुतसमप्रभम् ।
शब्दब्रह्ममयं शब्दोऽनाहतस्तत्र दृश्यते ।
तेनानाहतपद्मं तन्मुनिभिः परिकीर्त्तिते ।
आनन्दसदनं तत्तु पुरुषाधिष्ठितं परम् ।
तदूर्ध्वन्तु विशुद्धाख्यं दलं षोडशपङ्कजम् ।
स्वरैः षौडशकैर्युक्तं धूम्रवर्णं महत्प्रभम् ।
विशुद्धिं तनुते यस्माज्जीवस्य हंसलोकनात् ।
विशुद्धिं पद्ममाख्यातं आकाशाख्यं महत्परम् ।
आज्ञाचक्रं तदूर्ध्वे तु आत्मनाधिष्ठितं परम् ।
इक्षवर्णं समायुक्तं द्विदलं शुक्लभास्वरम् ।
आज्ञासंक्रमणं तत्र गुरोराज्ञेति कीर्त्तितम् ।
कैलाशाख्यं तदूर्ध्वे तु बोधनीन्तु तदूर्ध्वतः ।

एवञ्च शिवचक्राणि प्रोक्तानि तव सुव्रते।
सहस्राराम्बुजं बिन्दुस्थानं तदूर्ध्वमीरितम्॥
इत्येतत् कथितं सर्वं योगमार्गमनुत्तमम्।
आदौ पूरकयोगेन स्वाधारे योजयेन्मनः॥
गुदमेढ्रान्तरे शक्तिं तामाकुञ्च्य प्रबोधयेत्।
लिङ्गभेदे क्रमेणैव बिन्दुचक्रन्तु प्रापयेत्॥
शम्भुना तां पराशक्तिमेकीभावं विचिन्तयेत्।
पाययित्वा च तां शक्तिं कृष्णाख्यां योगसिद्धिदाम्।
षट्चक्रदेवतास्तत्र सन्तर्प्यामृतधारया॥
आनयेत्तेन मार्गेण मूलाधारं ततो सुधीः।
एवमभ्यस्यमानस्य अहन्यहनि मारुतम्।
जरामरणदुःखाद्यैर्मुच्यते भवबन्धनात्।
पूर्वोक्तदूषिता मन्त्राः सर्वे सिद्ध्यन्ति नान्यथा॥
ये गुणाः सन्ति देवस्य पञ्चकृत्यविधायिनः।
ते गुणाः साधकवरे भवन्त्येव च नान्यथा।
इत्येतत् कथितं सर्वं वायोर्धारणमुत्तमम्।
इदानीं धारणाख्यान्तु शृणुष्वावहिता मुने॥
दिक्कालाद्यनवच्छिन्ने कृष्णे चेतो निधाय च।
तन्मयो भवति क्षिप्रं जीवब्रह्मैक्ययोजनात्॥
अथवा समलं चित्तं यदा क्षिप्रं न सिध्यति।
तदावयवयोगेन योगी योगान् समभ्यसेत्।
पादाम्भोजे मनो दद्यान्नखकिञ्जल्कचित्रिते।
जङ्घायुग्मे तथारामकदलीकाण्डशोभिते।
ऊरूद्वये मत्तहस्तीकरदण्डसमप्रभे।
गङ्गागर्त्तगभीरे तु नाभौ सिद्धबिले ततः॥
उदरे वक्षसि तथा हारे श्रीवस्तकौस्तुभे।
पूर्णचन्द्रायुतप्रख्ये ललाटे चारुकुन्तले॥
शङ्खचक्रगदाम्भोजे दोर्दण्डपरिमण्डिते।
सहस्रादित्यसङ्काशे किरीटकुण्डलद्वये॥
स्थाने नियोजयेन्मन्त्री विशुद्धः शुद्धचेतसा।
मनो निवेश्य कृष्णे वै तन्मयो भवति ध्रुवम्॥

**यावन्मनो लयं याति कृष्णे स्वात्मनि चिन्मये।**
**तावदिष्टमनुर्मन्त्री जपहोमं समभ्यसेत्।**
**अतः परं न किञ्चिच्च कृत्यमस्ति तथा हरेः।**
**विदिते परतत्त्वे तु समस्तैर्नियमैरलम्॥**
**तालवृन्तेन किं कार्यं लब्धे मलयमारुते।**
**कृष्ण इत्युपलक्षणम्।**

## ज्ञानयोगः

पृथिव्यप्तेजोवाय्वाकाशात्मकपञ्चभूतात्मकं शरीरम्। तत्र शरीरे सार्द्धकोटित्रयी नाडी सर्वाऽधोमुखी। तासु मुख्या दश—इडा पिङ्गला सुषुम्ना गान्धारी हस्तिजिह्वा पयस्विनी अनुकूला कुहूः शङ्खिनी चेति। तास्वपि मुख्यास्तिस्रः—इड़ा पिङ्गला सुषुम्ना चेति। तासु च मध्ये मेरुदण्डस्य वामे इडा शुक्लवर्णा च रूपिणी अमृतमयी शक्तिरूपा, दक्षिणे पिङ्गला रक्तवर्णा सूर्यरूपिणी विषमयी पुंरूपा। मेरुदण्डमध्ये सुषुम्ना सर्वतेजोमयी सान्ध्रा सोमसूर्याग्निरूपिणी। सा च शिफाभ्यां पादाङ्गुष्ठद्वयं संयुज्याऽधोमुखीभूय शिरसा मूलाधारस्थशिवलिङ्गाग्रपर्यन्तं व्याप्य तिष्ठति। सुषुम्नास्ये तान्यधोमुखानि मूलाधारस्वाधिष्ठानमणिपूरकानाहतविशुद्धाज्ञाख्यानि षट्पद्मानि। यत्तु महीं मूलाधारे कमपि मणिपूरे हुतवहं मितं स्वाधिष्ठाने इत्यादि शङ्कराचार्यपद्ये द्वितीयपद्मस्य मणिपूरत्वकथनम्, तत् स्वाधिष्ठाने कं मणिपूरे हुतवहमिति व्यत्यासान्वयादविरुद्धं छन्दोनुरोधाच्च तथोक्तमिति तत्त्वम्। सुषुम्नामध्ये चित्राख्याऽधोमुखी नाड़ी अमृतस्राविणी सर्वदेवमयी विसर्गाद् विन्दुपर्यन्तं व्याप्य तिष्ठति। विसर्गः प्रकृतिः। बिन्दुः पुमान्। षण्णां पद्मानां किञ्जल्कमध्ये शक्तिरूपाणि षट् त्रिकोणानि। तेषाञ्च मध्येऽधोमुखानि प्रेतरूपाणि सरन्ध्राणि शिवलिङ्गानि षट्। तेषु मध्ये मूलाधारे स्वयम्भुरनाहते बाणः। आज्ञाचक्रे ईश्वर इति लिङ्गत्रयं प्रधानम्। षट्पत्रेषु ब्रह्मविष्णुरुद्रेश्वरसदाशिवपरमशिवाख्याः षट्शिवाः। ब्रह्मादीनां मूर्त्तयस्तु पूर्वमुक्ताः।

गुदस्थानाद् द्व्यङ्गुलोपरि पीतं पार्थिवं पृथिवीयुक्तं वशषसयुक्तं चतुर्दलाढ्यं डाकिनीदेवताकं मूलाधारपद्मम्। आधारषट्कानां मूलत्वान्मूलाधारमुच्यते। तस्याधस्तेजसं सहस्रदलं रक्तवर्णं तत् किञ्जल्कमध्ये दलमध्ये च शक्तयो विद्युत्प्रभाः। तत्कर्णिकामध्यतश्च कुलदेवी मूलाधारपद्मकर्णिकान्तर्गतत्रिकोणाकारमहायोन्यन्तर्गताधोमुखस्वयम्भुलिङ्गं शङ्खाकारदक्षिणावर्त्तक्रमेण सार्द्धवेष्टनत्रयेणालिङ्ग्याधोमुखतया स्थित्वा सुषुम्नामुखं स्वमुखेनावृत्य स्थिता निद्राणा

प्रसुप्तभुजगाकारा तड़ित्कोटिप्रख्या नीवारशूकवत् तन्वी त्रिकोणस्थानल-शिखोपरि स्थिता मूलविद्यामयी कुलकुण्डलिनी वर्त्तते। ततो हुङ्कारेण त्रिकोण-मण्डलस्थाग्निना कुलकुण्डलिनीं सजागरां विधाय हंस इति मन्त्रेण सुषुम्नावि-वरब्रह्मवर्त्मना चित्रानाड़िकया शिवलिङ्गरन्ध्रद्वारेण लिङ्गान्निष्क्रमया आधार-पङ्कजस्य द्व्यङ्गुलोर्ध्वे आप्ये जलवति विद्युदाभे बभमयरलयुक्तषड्दले सावित्री-ब्रह्मसहिते राकिनीदेवताके लिङ्गमूलस्थे स्वस्य लिङ्गस्याधिष्ठानतया स्वा-धिष्ठाननामके पद्मे तां समानीय तत्रत्यलिङ्गरन्ध्रेण लिङ्गं प्रवेशयित्वा ततो निर्गमय्य स्वाधिष्ठानादेकादशाङ्गुलोपरि तेजसे तेजस्विनि नीलवर्णे डढण-तथदधनपफयुक्तदशदलेन लक्ष्मीनारायणसहिते लाकिनीसहिते लाकिनीदेव-ताके नाभिमूलस्थे मणिपूरके पद्मे समानीय तत्रत्यलिङ्गरन्ध्रेण लिङ्गं प्रवेश-यित्वा ततो निर्गमय्य मणिपूराद् द्वादशाङ्गुलोपरि हृदयस्थे वायव्ये वायुमते रक्तवर्णे कखगघङचछजझञटठयुक्तद्वादशे दले पार्वतीशङ्करान्विते मध्यगत-काकिनीदेवताके कालरात्र्यादिशक्त्यावृत्ते नादोद्यानादियुक्तसूर्यबिम्बसहिते अनाहते पद्मे समानीय तत्रत्यलिङ्गरन्ध्रेण लिङ्गं प्रवेशयित्वा ततो निर्गमय्यानाह-तादेकादशाङ्गुलोपरि कण्ठदेशस्थे आकाशमये आकाशवति धूम्रवर्णे अकारादि-षोडशस्वरयुक्तषोडशदलेन मध्यगतशाकिनीदेवताके विघ्नेश्वरसहिते अमृता-दिशक्तियुक्तबाह्यपत्रे चन्द्रबिम्बसहिते विशुद्धाख्ये पद्मे समानीय तत्रत्य-लिङ्गरन्ध्रेण लिङ्गं प्रवेशयित्वा ततो निर्गमय्य विशुद्धपद्माच्चतुरङ्गुलोपरि भ्रूमध्यस्थे शुक्लवर्णे हक्षयुक्तदलद्वययुक्तहंसवतीक्षमासहितपार्श्वद्वयके मध्यस्थित-हाकिनीदेवताके मालाधिष्ठिते आज्ञाचक्राख्यपद्मे समानीय तत्रत्यलिङ्गरन्ध्रेण लिङ्गं प्रवेशयित्वा ततो निर्गमय्य शिरःस्थितश्वेतसर्ववर्णयुक्तसहस्रदलयुक्ता-रुणकेशराधोमुखकमलकर्णिकान्तर्गतचक्रमण्डलमध्यस्थत्रिकोणान्तर्गतबिम्ब-रूपपरमशिवे महामायायुक्ते तत्रत्यलिङ्गं रन्ध्रद्वारेण तां कुलकुण्डलिनीं योजयेत्।

अयं षट्चक्रभेदप्रकारः। एवंक्रमेण कुलकुण्डलिनीं परमशिवे संयोज्य पुन-स्तेनैव पथा व्युत्क्रमेण पद्मषट्कं विभिद्य शिवशक्तियोगजनितसुधाधारा-प्लावितदेहः सन् पुनस्ताममृतलोलीभूतां मूलाधारमानयेदिति रहस्यार्थः। एतत्प्रमाणन्तु प्रागुक्तेषु समयातन्त्रोक्तान्तर्यागप्रकरणगौतमीयतन्त्रोक्तमन्त्रयोग-प्रकरणशारदातिलकोक्तयोगप्रकरणसमयातन्त्रोक्तकर्मयोगप्रकरणेषु यथायथ-मालोकनीयम्। अधिकञ्च तन्त्रान्तरे—

**ध्यायेदाधारपद्मं स्फुरदरुणचतुःपत्रकं वादिसान्तै-**
**वर्णैः पीतं चतुर्भिर्युतमुपरि लसत्कर्णिकायां त्रिकोणे।**

शङ्खावर्त्तेभसार्द्धत्रिवलययुतया मण्डितं कुण्डलिन्या
बालार्कद्योतिबिम्बं तदुपरि मिलितां डाकिनीदेवताञ्च ॥
स्वाधिष्ठानं षड्दलोपेतमुद्युद्विद्युत्प्रख्यं वादिलान्तैश्च वर्णैः।
युक्तं सावित्रीसहायं विरिञ्चिं ध्यायेदस्मिन् राकिनीदेवताञ्च ॥
नीलनीरदनिभे दशपत्रे डादिफान्तदशवर्णसमेते।
चिन्तयेत्कमलया कमलाक्षं लाकिनीञ्च सहितां मणिपूरे।
अनाहतं सरोरुहं तरुणरक्तसन्ध्यारुण-
प्रभापटलसङ्कुलं स्फुरत्पार्वतीशङ्करम्।
प्रतिच्छदसमुल्लसद्द्विदलकादिठान्ताक्षरं
तदन्तरेऽपि चिन्तयेस्त्रिदशवन्दितां काकिनीम् ॥
तदुपरि विशुद्धाख्यां कुन्दावदातसमप्रभं
स्वरपरिणतं मध्ये पत्रं समुज्ज्वलकर्णिकम्।
कमलममलं विद्येश्वरावपीह निवासिनौ स्थिरमति-
रधिष्ठात्रीं देवीं स्मरेदथ शाकिनीम्।
आज्ञापुरं द्विदलकं शरदिन्दुकान्ति-
ज्योतिर्मयं सलिलपञ्चमहान्तयुक्तम्।
श्रीबुद्धिशक्तिसहिता गुरुरत्र देवी
हाकिन्यमन्दनिजशक्तिपरप्रभावा ।
सरोरुहमधोमुखं प्रविलसत् सहस्रच्छदं
क्रमादरुणकेशरं प्रकरभास्वरं निर्मलम्।
तदन्तरपि चिन्तयेदमृतरोचिषे मण्डले
पुराणपुरुषं परं परिगतं महामायया ॥

तथा—

शान्तिरूपं शिवाकारं सर्वाभ्यासनिजालयम्।
गुदमेढ्रान्तरं देवि पञ्चाङ्गुलसमुच्छ्रितम् ॥
गुदमेकाङ्गुलं मध्ये द्विरङ्गुलविसारिणम्।
तस्य मूले महायोनिस्त्रिकोणाकाररूपिणी ॥
सुषुम्ना योनिमध्यस्था तस्य मूले महेश्वरि।
अधःपद्मं सहस्रारं कर्णिकाकेशरान्वितम् ॥
तेजसं रत्नवद्दीप्तं तद्दलस्थितशक्तिभिः।

प्रतिकिञ्जल्कसंस्थाभिः शक्तिभिश्च युतं प्रिये ।
कर्णिकामध्यतो देवि कुलदेवी च संस्थिता ॥

तथा—

आधारपङ्कजं पीतं चतुष्पत्रं सुकेशरम् ।
अधोमुखञ्च तन्मध्ये कुण्डली परमेश्वरी ॥
स्वयम्भुमध्यगा चिन्त्या यादिवर्णैः समावृता ।
पार्थिवं पङ्कजं ह्येतत् तस्याधः पङ्कजं परम् ॥
तैजसं परमेशानि तन्मध्ये पीठशक्तयः ।
निविष्टाहृष्टमनसो विद्युत्पुञ्जनिभाः स्मरेत् ॥
तदूर्ध्वकर्णिकामध्ये विद्धि बिम्बं तदूर्ध्वगम् ।
पूर्णपीठञ्च तन्मध्ये डाकिनी संस्थिता शिवे ॥
आधारपङ्कजस्योर्ध्वे सार्द्धद्व्यङ्गुलकोपरि ।
तैजसं साष्टपत्रञ्च पीतकर्णिकया युतम् ॥
हृल्लेखा कर्णिकाध्ये स्थिता लङ्काधिदेवता ।
एतस्माद् द्व्यङ्गुलादूर्ध्वं स्वाधिष्ठानं षडस्रकम् ॥
आप्यञ्च राकिनीशक्तिः पूर्वाभिः शक्तिभिर्वृतम् ।
ततश्च भावयेद्देवि नाभिमेकाङ्गुलोपरि ॥
तत्पद्मं मणिपूरञ्च दशपत्रञ्च तैजसम् ।
लाकिनीमध्यगं तच्च भ्रामर्यादिभिरावृतम् ॥
ततो दशाङ्गुलादूर्ध्वे मणिपूराख्यपङ्कजात् ।
पङ्कजं काकिनीमध्यं वायव्यं द्वादशारकम् ॥
तत्रस्थकालरात्र्यादिशक्तिभिश्च समावृतम् ।
तत्रस्थसूर्यबिम्बे च नादोद्यानादिपीठकम् ॥
तस्मादेकाङ्गुलादूर्ध्वं विशुद्धं षोडशारकम् ।
मध्यगा शाकिनी बाह्यपत्रेषु परमेश्वरि ॥
अमृताद्यास्तदाकाशं चन्द्रबिम्बं तदूर्ध्वतः ।
कण्ठोर्ध्वे परमेशानि लम्बिका चतुरङ्गुले ॥
आज्ञाधारं द्विपत्राब्जः हक्षद्विदलसंयुतम् ।
हंसवती क्षमा पार्श्वद्वये मध्ये तु हाकिनी ॥

अथात्र समाधिमुखसमाधानार्थमस्मत्प्रपञ्चः—

पृथ्व्याम्बुतेजोमरुद्व्योमरूपैः शरीरं कृतं पञ्चभिर्भाति भूतैः ।
तनौ सार्द्धकोटित्रयी तत्र नाड़ी स्थिताऽधोमुखी तासु मुख्या दश स्युः ॥
इडा पिङ्गलाख्या सुषुम्ना च गान्धारिका हस्तजिह्वा च पूषा च नाड़ी ।
पयस्विन्ययान्यानुकूला कुहूः शङ्खिनी चेति तासाञ्च तिस्रो वरेण्याः ॥
इड़ावामभागे स्थिता शुक्लवर्णाऽमृतात्मेन्दुरूपिण्यसौ शक्तिरूपा ।
तथा दक्षिणे पिङ्गला रक्तवर्णा विषात्मा च पुंरूपिणी सूर्यरूपा ॥
तथा मेरुदण्डस्य मध्ये सुषुम्ना स्थिता सर्वतेजोमयी रन्ध्रयुक्ता ।
असौ सोमसूर्याग्निरूपा शिफाभ्यां पदाङ्गुष्ठयुग्मेषु संयुज्य नम्रा ॥
स्थिताधारपद्मस्थितेशानलिङ्गाग्रपर्यन्तमावृत्य विद्योतमाना ।
अनुस्यूतपङ्केरुहश्रेणिकस्त्रग्गुणस्पर्द्धनार्द्धनावर्द्धमाना ॥
अथाधारकाधिष्ठिते पूरकनाहताख्ये विशुद्धं तथाज्ञापुरञ्च ।
इदं तत्र चक्राभिधाम्भोजषट्कं निबद्धं सुषुम्नाख्ययाऽधोमुखं सत् ॥
सुषुम्नान्तराले सुधास्राविणी सर्वदेवात्मिका नाड़िकान्यास्ति चित्रा ।
विसर्गादियं बिन्दुपर्यन्तमेका परिव्याप्य तिष्ठत्यतीवानुरूपा ॥
तथा षट् सरोजन्मकिञ्जल्कमध्ये त्रिकोणानि षट्शक्तिरूपाणि सन्ति ।
त्रिकोणान्तरे प्रेतरूपाणि रन्ध्रान्विताधोमुखानीशलिङ्गानि षड्वा ॥
अचैतन्यभाजाममीषार्णमध्ये शिवानामुभौ ब्रह्मविष्णूपदिष्टौ ।
परौ चापि रुद्रेश्वराख्यौ सदाशिवनामा परोऽन्यः पराख्यः शिवश्च ॥
गुदस्थानतो द्व्यङ्गुलोर्ध्वे सुपीतं कुमद्वापि सान्तार्णयुतैश्चतुर्भिः ।
दलैः शोभितं पार्थिवं डाकिनीदेवताकं तदाधारपद्मं पुरस्तात् ॥
अधस्तैजसं तस्य रक्तप्रभाकं दलानां सहस्रेण विभ्राजमानम् ।
लसद्विद्युदुद्द्योतितानेकशक्तिस्फुरन्मध्यकिञ्जल्कमेकं सरोजम् ॥
अधःकर्णिकामध्यतः शङ्खभङ्गीक्रमभ्राजिना दक्षिणावर्त्तनेन ।
प्रसुप्ताहिरूपा तड़ित्कोटिकान्तिः समालिङ्ग्य सार्द्धेन वेष्टत्रयेण ॥
तदाधारनामादिमाम्भोजमध्यस्फुरत्कर्णिकान्तर्निविष्टत्रिकोणाकृतिस्पृडम् ।
महायोनिमध्यस्थिताधोमुखोद्यत् स्वयम्भुप्रदख्यातलिङ्गम् ॥
सुषुम्नामुखं स्वाननेनाणुषज्य स्थिताधोमुखी चिन्तनीयैव निद्रावशा ।
पङ्कनीवारशुकातितन्वी परं मूलविद्यामयी कुण्डलिनी ॥
ततस्था त्रिकोणस्थिताग्नेः शिखाभिः स्मरन् कूर्चबीजं विनिद्रां विदध्यात् ।
अथोऽहंसमुच्चारयंस्तां सुषुम्नान्तरब्रह्ममार्गेण चित्राधमन्या ॥
तदीशानलिङ्गान्तरा रन्ध्रगत्या सुयोगेन निष्क्रामयेल्लिङ्गतोऽस्मात् ।
ततो मूलपद्मादपि द्व्यङ्गुलोर्ध्वे स्फुरद्विद्युदाभे पयस्वत्यथाप्ये ॥

वकारादिलान्तार्णवत्षड्दलाढ्ये समाधित्रिकब्रह्मयुक्ते पुनस्ताम्।
परं लिङ्गमूलस्थिते राकिनीदैवते वारिजन्मन्याधिष्ठानसंज्ञे ॥
समानीय लैङ्गेन रन्ध्रेण लिङ्गं प्रवेशास्य निष्क्रामयेत्साधकेन्द्रः ॥
अथैकादशानामुपर्यङ्गुलीनां सुनीलप्रभे तैजसे तेजसाढ्ये।
डकारादिफान्ताक्षरस्तोयराजद्दलोत्फुल्लपत्रान्विते नाभिमूले ॥
सलक्ष्मीकनारायणाधिष्ठिते लाकिनीदैवते पूरकाख्ये सरोजे।
समानीय तत्रत्यलिङ्गेन तद्वत्समायुज्य तस्मात्पुनश्चालयेत्ताम् ॥
ततोऽस्माद्दलानामुपर्यङ्गुलीनां हृदिस्थे सरायौ च वायव्यरूपे।
ककारादिठान्ताक्षरास्तोमराजद्दलद्योतमाने सरोजे ॥
जवाकान्तिके पार्वती शङ्कराढ्ये तथा कालरात्र्यादिशक्तिप्रयुक्ते।
लसत्काकिनीकेऽपि नादादियुक्तस्फुरत्सूर्यबिम्बान्वितेऽनाहताख्ये ॥
समानीयतां तत्र तत्रत्यलिङ्गे समायुज्य निष्क्रामयेद् योगिराजः।
अथैकादशानामुपर्यङ्गुलीनां नभोनिर्मिते कण्ठदेशस्थिते ताम् ॥
नभस्वत्यकारादिभिः षोडशार्णैः स्फुरद्भिर्दलैः षोडशाङ्कैः समेते।
लसत्साकिनीदेवताके च विद्येश्वराढ्यो लसच्चन्द्रबिम्बे सुधूम्रे ॥
विशुद्धाख्यपद्मे समानीय तद्वच्छिवे योजयित्वा नयेदूर्ध्वमेनाम्।
विशुद्धाख्यपद्माच्चतुष्काङ्गुलोर्ध्वे भ्रुवोर्मध्यगे शुक्लवर्णाभिरामे ॥
तथा हक्षराजद्दलद्वन्द्वयुक्तेऽन्तरा हाकिनीदैवते सन्मनस्के।
क्षमा हंसवत्युल्लसत्पार्श्वयुग्मे समायोजयेत्तामथाज्ञासरोजे ॥
ततस्तत्र लिङ्गे वशी योजयित्वा ततो निर्गमय्य प्रकाशस्वरूपम्।
शिरस्थे स्थिते सर्ववर्णानुभाजा दलानां सहस्रेण विद्योतमाने ॥
जवास्फुरत्केशरेऽधोमुखेऽब्जे समानीयतां कुण्डलीदीप्यमानाम्।
तदीयस्फुरत् कर्णिकान्तर्निविष्टक्षपानाथसन्मण्डलादन्तराले ॥
स्थितस्य त्रिकोणस्य मध्ये तु बिन्दुस्वरूपे महामायया भासमाने।
परस्मिन् शिवलिङ्गरन्ध्रेण देवीं समायोजयेद् योगतः साधकेन्द्रः ॥
अयं साधु षट्चक्रभेदप्रकारो मया वर्णितः शास्त्रयोगीन्द्रयोगात्।
अनेन प्रकारेण शम्भौ पराख्ये पराद्योजयित्वोत्क्रमेणापि भूयः ॥
विभिद्याजषट्कं यथा तेन मूलाम्बुजे स्थापयेदन्तरानन्दसान्द्राम्।
परस्मिन् शिवे कुण्डलिन्या सुसङ्गात् समुद्भावितैः शास्त्रपीयूषवर्यैः ॥
कृतान्तर्निषेकः प्रजातप्रमोदः कृती पूतदेहो भवेद्देवतुल्यः।
त्रिधैवं यदि स्यान्महाकुण्डलिन्यागतामात्रधारापथाम्भःशिवानाम्।
तदा योनिमुद्रा निरुक्तेयमेषा जपादौ सदा मन्त्रिभिः कल्पनीया ॥

ऊर्ध्वाम्नाये—

योऽन्येभ्यो दर्शनेभ्यश्च भुक्तिं मुक्तिञ्च काङ्क्षति।
स्वप्नलब्धधनेनैव धनवान् स भवेद्यदि॥
शुक्तौ रजतविभ्रान्तिर्जायते पार्वति यथा।
तथान्यदर्शनेभ्यश्च भुक्तिं मुक्तिञ्च कांक्षति॥

यामले—

आगमे सर्वविद्याश्च आगमे सर्वसम्पदः।
आगमे सर्वयज्ञाश्च सर्वशास्त्राणि चागमे।
आगमे देवि वेदा हि आगमाच्च परा गतिः॥

ताराप्रदीपे—

आगमोक्तविधानेन कलौ देवान् यजेत्सुधीः।
न हि देवा प्रसीदन्ति कलौ चान्यविधानतः॥
सत्ये श्रुत्यर्थमार्गः स्यात्त्रेतायां स्मृतिसम्भवः।
द्वापरे तु पुराणोक्तः कलावागमसम्भवः॥

यामले—

येऽभ्यस्यन्ति त्विदं शास्त्रं पठन्ति पाठयन्ति वा।
सिद्धयोऽष्टौ करे तेषां धनधान्याद्धि सूनवः॥
आदृता शिवलोकेषु भोगिनः क्षोभकारकः।
आप्नुवन्ति परं ब्रह्म सर्वशास्त्रविशारदाः॥

तथा—

आगतः शिववक्त्रेभ्यो गतश्च गिरिजामुखम्।
मलत्रयव्यपायत्वादागमस्तेन कथ्यते॥

●

## अथ रामस्तवः

श्रीहनमानुवाच

तिरश्चामपि राजेति समवायं समीयुषाम्।
यथा सुग्रीवमुख्यानां यस्तमुग्रं नमाम्यहम्॥१॥
सकृदेव प्रपन्नाय विशिष्टाभैरयच्छ्रियम्।
विभीषणायाद्धि तटे यस्तं वीरं नमाम्यहम्॥२॥

कर्णावतंसतां नीतशवयुग्मभयानकाम्।

वलार्कमण्डलाकार लोचनत्रयभूषिताम्॥ ६/५०॥

सृक्कद्वयगलद्रक्तधारा-विष्फुरिताननाम्।

मुक्तकेशीं स्मितमुखीं श्मशानालयवासिनीम्॥ ६/५१॥

शवानां करसंघातैः कृतकाञ्चीं हसन्मुखीम्।

शवरुपमहादेव-हृदयोपरि संस्थिताम्॥ ६/५२॥

महाकालेन रत्यर्थमुपविष्टां स्मरातुराम्।

शिवाभिर्घोररावाभिश्चतुर्दिक्षु समन्विताम्॥ ६/५३॥

अतिप्रसन्नवदनां स्मेराननसरोरुहाम्।

अनाहतन्तु तत्रैव तडित्कोटिसमप्रभाम्॥ ६/५४॥

तस्योर्द्ध्वे शिखरं तन्वि चिद्रूपा परमाकला।

तया सहितमात्मानमेकीभूतम् विचिन्तयेत्॥ ६/५५॥

गच्छन्तं ब्रह्ममार्गेण लिङ्गभेदक्रमेण तु।

सूर्यकोटिप्रभाक्यरं चन्द्रकोटिसुशीतलम्॥ ६/५६॥

अमृतं तत् विसर्गञ्च परमानन्दलक्षणम्।

गत्वा कुलाकुलं दिव्यं पुनरेव विशेत् कुलम्॥ ६/५७॥

एवमभ्यस्यमानस्य अहन्यहनि निश्चयात्।

मूलाधारसरोजे तु त्रिकोणं सुमनोहरम्॥ ६/५८॥

कामं भ्रमन्तं तन्मध्ये वालार्ककोटिसन्निभम्।

तदुर्द्ध्वे कुण्डलीशक्तिस्तडित्कोटिसमप्रभाम्॥ ६/५९॥

प्रसुपुभुजगाकारां सार्द्धत्रिवलयान्विताम्।

सुधाधारत्रिकोणे तां भावयेत् सुरसुन्दरीम्॥ ६/६०॥

आरोप्यारोप्य शक्तिं कमलजनिलयामात्मना।

साकमेतं स्वस्थानेघावसाने प्रणिहितहृदया चिन्तयन्ति क्रमेण।

नित्यानन्दावसानं

खङ्गमुद्गरमहापद्मद्मान्तरस्थोध्यायेच्चैतन्यरुपाम्-

अभिनवजलदाम् मोक्षमार्गैकमार्गां।

साक्षान्दाक्षरि साभं गगनगतमहापद्मसंस्थाच्चहंसात्

पीत्वा दिव्यामृतोघं पुनरपि च विशेत् मध्यदेशं कुलस्य।

चक्रे चक्रे क्रमेणामृतसरसि सर्वैस्तर्पयेद्देवतास्ता डाकिन्याद्याः समस्ताः

सकलदलगतां तर्पयेत् कुण्डलीन्ताम्।

इन्दौ तदुर्द्धे वोधिन्यां नादे नादान्त एव च॥ ६/६१॥

शक्तौ पुनर्वापि कायाः समानोन्मणिगोचरे।

मन्त्राक्षराणि चिच्छक्तौप्रोतानि परिचिन्तयेत्॥ ६/६२॥

तानेव परमे व्योम्नि परमामृतबृंहिते।

दर्शयेदात्मसद्भावं पूजहोमादिकं विना॥ ६/६३॥

एवं सञ्चिन्तयेन्मन्त्री सयोगी नात्र संशयः।

सर्वपापाद्विनिर्मुक्त इष्टां देवीं प्रपश्यति॥ ६/६४॥

षण्मासे सर्वसिद्धिः स्यादात्मानञ्च प्रपश्यति।

अष्टादशमहासिद्धिर्वत्सरान्ते भविष्यति॥ ६/६५॥

एवं सञ्चिन्तयेद्देवीं परमात्मस्वरूपिणीम्।

स एव शङ्करः साक्षात् स एव विष्णुरव्ययः॥ ६/६६॥

स एव परमं ब्रह्म स एव देवतोत्तमः।

इति ते कथिता देवि योनिमुद्रा महेश्वरि॥ ६/६७॥

वत्सरेण लभेत् सिद्धिं पूर्णकामफलं लभेत्।

इति कुब्जिकातन्त्रे षष्ठः पटलः॥ ०॥ ६॥

## सप्तमः पटलः

पार्वत्युवाच

देवदेव महादेव परमेश पुरातन।

भावञ्च श्रोतुमिच्छामि देवताया विशेषतः॥ ७/१॥

केन भावेन देवेश देवता च प्रसीदति।

तत्सर्वं श्रोतुमिच्छामि कथ्यतां प्राणवल्लभ॥ ७/२॥

कोटिसमप्रभम् ।

तदूर्ध्वे तु शिखा सूक्ष्मा चिद्रूपा परमाकला ।
तथा सहितमात्मानमेकीभूतं विचिन्तयेत् ॥

गच्छन्ती * ह्ममार्गेण लिङ्गभेदक्रमेण तु ।
सूर्यकोटिप्रतीकाशं चन्द्रकोटि सुशीतलम् ॥

अमृतं यद्विसर्गस्थं परमानन्दलक्षणम् ।
दृतरक्तसुतेजाढ्यधारापात प्रवर्षिणम् ॥

पीत्वा कुलामृतं दिव्यं पुनरेव विशेत्कुलम् ।
पुनरेवाकुलं गच्छेन्मात्रायोगेन नान्यथा ॥

सा च प्राणाः समाख्याता तन्त्रेऽस्मिन् परमेश्वरि ।
उद्घातः प्रोच्यते सोऽपि प्राणान्तं स्पृशते यदा ॥

एवमभ्यस्य मानस्य अहन्यहनि निश्चयात् ।
जरामरणदुःखौघैःर्मुच्यते भव बन्धनात् ॥

चतुर्विधा तु या सृष्टिर्यस्यां योनौ प्रवर्तते ।

पुनः प्रलीयते तस्यां कालाग्न्यादि शिवान्तकम् ॥

योनिमुद्रा परा सा तु बन्धं तस्याः प्रकीर्तितम् ।
मुद्राया बन्धमात्रेण किं न साधयते भुवि ॥

p. 2)

अन्यथा जपते मन्त्रमन्यथा कुरुते तु यः ।
नासौ सिध्यति देवेशि सत्यं सत्यं पुन पुनः ॥

छिन्नारुधास्तु ये मन्त्रास्तम्भिताः कीलिता भृशम् ।
दग्धाः स्वतन्त्राभाताश्च मलिनाश्च तिरस्कृताः ॥

मूर्छितामदसंयुक्ताः सुषुप्ता मूर्छिता हताः ।
मन्दाबालास्तथा वृद्धाः प्रौढा यौवनगर्हिताः ॥

अरि पक्षे स्थिता ये च निर्बीजास्तत्ववर्जिताः ।
अंशकेन विहीनाश्च खण्डशः शतधा कृताः ॥

विधिनानेन युक्तास्ते सम्भवन्त्य चिरेणते ।
सिद्धिमोक्षप्रदाः सर्वेदेशिकेन नियोजिताः ॥

यद्यदुच्चरते मन्त्री वर्णरूपं शुभाशुभम् ।

तत्तत् सिध्यत्यनायासाद्योनिमुद्रा प्रबन्धनात् ॥

दीक्षयित्वा विधानेन अभिषिच्य सहस्रधा ।
ततोधिकारी देवेशि तन्त्रेऽस्मिन् नान्यथा भवेत् ॥

मुद्रामण्डलविन्यासैर्जपहोमव्रतादिभिः ।
सम्ताप्य बहुकालं वै भक्तिं विज्ञाय निश्चलाम् ॥

ज्ञात्वा त्यागं बलं तापं तत्तस्तस्य प्रकाशयेत् ।
अस्मिन् कालेऽथवा देवि देव्यादेशः प्रजायते ॥

तत्रेदं कथयेत् ज्ञानमन्यथा नरकं व्रजेत् ।
त्राता किंतु न तस्यास्ति यो परीक्ष्य प्रदापयेत् ॥

p. 3)

तस्मात् परीक्ष्य दातव्यं यदीच्छेज्जीवितुं चिरम् ।
कृत्वा पापसहस्राणि असंख्यातानि सुन्दरि ॥

दह्रा * * * मन्त्रेण योनिबन्धेन नान्यथा ।
न तस्य पुण्यपापानि तमः सूर्योदये यथा ॥

सन्तर्प्य बहुधा कालं प्राणस्त्री द्रविणादिभिः ।

तस्मादभ्यसनं नित्यं कर्तव्यं पुण्यक * * क्षिभिः ॥

अ * * ज्जायते सिद्धिरभ्यासां मोक्षमाप्नुयात् ।
संवित्तिं लभतेभ्यासा योगोभ्यासः प्रवर्तते ।
मन्त्राणां सिद्धि * * सादभ्यासाद्वायुसाधनम् ॥

कालवञ्चनमभ्यासात्तथा मृत्युञ्जयो भवेत् ।

॥ इति प्रथमः पटलः ॥

अथातः संप्रवक्ष्यामि संप्रदायसमन्वितम् ।
त्रैलोक्यडामरं मन्त्रं त्रिपुरावाचकं महत् ॥

सुसमे भूप्रदेशे तु निम्नोन्नत विवर्जिते ।
पुष्पप्रकरसंकीर्णे गन्धधूपाधिवासिते ॥

ललाटे तिलकोपेतो नेत्रकज्जलरञ्जितः ।
ताम्बूलपूर्णगन्धस्तु मदिरानन्दचेतनः ॥

कुङ्कुमेन विलिप्ताङ्गो लाक्षालक्तकशोभितः ।
रक्तवर्णपरीधानो रक्तमाल्योपशोभितः ॥

p. 4)

कर्पूरक्षोदन्धाङ्गः केसपैशून्यवर्जितः।
उद्धरेत्तु महादेवीं दृष्टादृष्टफलप्रदाम्॥

अष्टपत्रं लिखेत्पद्मं केसराढ्यं सुकर्णिकम्।
पत्राग्रे ग्रन्धिसंयुक्तं तदग्रे त्रित्रिशृङ्गकम्॥

इदं चक्रं प्रयत्नेन लिखित्वा साधकोत्तमः।
मातृकां विन्यसेत्पश्चात् पीठभैरवयोगिनीम्॥

कामरूपं लिखेत् पूर्वे कोलगिर्यं तु दक्षिणे।
चोहारं पश्चिमे लेख्यमुत्तरे औणकं लिखेत्॥

मलं चाग्निदिग्भागे नैर्-ऋत्यां तु कुलान्तकम्।
जालन्धरन्तवायव्ये ऐशाने देवकोट्टकम्॥

पीठेशान्विन्यसेत्तत्र असिताङ्गादि भैरवान्
ब्राह्मणीमादितः कृत्वा चण्डिकान्तं प्रकल्पयेत्।
असिता रुरुश्चण्डः क्रोधश्चोन्मत्त भैरवः॥

कपोलभीषणश्चैव संहारश्चाष्टमस्मृतः।
ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा॥

वाराही च तथेन्द्राणि चामुण्डी चण्डिकाष्टमी ।
दीर्घस्वरांश्च एकैकं मातृणां च प्रकल्पयेत् ॥

ह्रस्वाश्च भैरवाख्याता यमला वै प्रक्वमपक्षयेत् ।
कादिवर्णाक्षरा भद्रे ग्रन्धिषु शान्तकाः शुभाः ॥

अन्यवर्णगणाः सर्वे शृङ्गकोणेषु संस्थिताः ।

p. 5)

कादीक्षान्ता न्यसेद्ग्रन्धौ शेषं तच्छिद्रेषु विन्यसेत्
दक्षिणादीन्यसेद्वर्णान् सर्वसिद्धिफलप्रदान् ।
ऐन्द्रद्युत्तरशृङ्गान्त दक्षिणेन प्रकल्पयेत् ॥

तदादि विन्यसेद्धीमान् विरमार्गेण साधकः ।
शिवाख्यौ कर्णिकामध्ये हंसाख्य पदविशृतौ ॥

सकाकेश जीवभूतस्तु हकारः प्राण उच्यते ।
उभौ जीवसमाख्यातौ त्रैलोक्ये सचराचरे ॥

एवन्यस्ये द्विधानेन आपूजयेत् कुलपद्धतिम् ।
एतदन्तरतो ध्यायेद्वाग्भवं देवसाधकः ॥

ततः समुद्धरेन्मन्त्रभुक्तिमुक्तिफलप्रदम् ।
इन्द्राणी बीजमादाय संहारेण तु मण्डितम् ॥

तद्भवेन्नैव चाक्रान्तं वाग्भवं देवि पूजितम् ।
एकाराकारविभवा त्रिकोणेन्दु स्वरूपिणी ॥

दयं परिशिष्येभ्यो भक्तिहीने विशेषतः ।
एतद्बीजं महाबीजसृष्टिभूतं परं प्रिये ॥

कामग्रन्धिं समादाय शृङ्गं कूटस्य दक्षणम् ।
माहेश्वरीयुतं कृत्वा संहारेण समं कुरु ॥

क्षोभकृत् सर्वसत्वानां जीवभूतं परात्परम् ।
त्रैलोक्य पूजितं देवि सृष्टिसंहारकारकम् ॥

कामराजमिदं देविकामसिद्धि प्रधायकम् ।

p. 6)

परापरविभागं तु एककृत्वा समाहिताः ।
सधकः जपेदेकाग्रचित्तस्तु पातालादिषु साधने ॥

प्राणासनस्थितं देवं चामुण्डा भेदितस्ततः।
चण्डिकायां तु संरुद्धं बीजं त्रैलोक्यमोहनम्॥

सदाशिवासनस्थं वै उच्चारेण तु लक्षयेत्।
पूर्वसेवां जपेन्नित्यं योनिबन्धेन निश्चलम्॥

बिलद्वारं समाश्रित्य एकचित्तो जितेन्द्रियः।
आदिमेन तु सा लुप्ता मध्यमेन तु कीलिता॥

अन्तिमेन तु नुच्छिन्ना तेन विद्या न सिध्यति।
आदिमादिमनादिं च मध्यं मध्यममध्यमम्॥

अन्तमन्तमनन्तं च त्रिपुरा शीघ्रसिद्धिदा।
आदिमध्ये तु मध्यादावन्तमन्ते च संस्थितम्॥

पुरक्षोभाय जप्तव्यं विधिनानेन साधकैः।
ह्रस्वदीर्घक्रमेणैव लुप्तां तेन वरानने॥

विशेषणैवमुच्चार्य त्रैलोक्यमपि साधयेत्।

॥ द्वितीयः पटलः॥

श्री देव्युवाच ।

अद्यापि संशयो देवकामतत्वस्य साधनम् ।
विज्ञानमात्रगमनं ब्रूहिमे त्रिपुरान्तक ॥

p. 7)

श्री भैरव उवाच ।

कथयामि समासेन कामतत्वस्य लक्षणम् ।
आकर्षणं परं दिव्यं शृणु श्रेष्ठं समासतः ॥

कामस्थं काममध्यस्थं कामोदरपुटीकृतम् ।
कामेन साधयेत् कामं कामं कामे विनिक्षिपेत् ॥

कामेन कामितं कृत्वा कामस्थं क्षोभयेद्ध्रुवम् ।
अस्मिंश्चक्रे कामराजं ध्यायेत्त्रैलोकपूजितम् ॥

कामस्थं भुवनं ज्ञेयं काममध्ये विग्रहम् ।
कामोदरं भवेद्योनि स्फुटान्तं बिन्दुसंज्ञकम् ॥

अनेनैव तु कामेन कामतत्वं प्रसाधयेत् ।
एतदेव हि कामं तु साध्यायोनौ प्रकल्पयेत् ॥

बिन्दुनामथनं कृत्वा विसर्गस्थं परामृतम् ।
शक्तिमार्गेण योनिस्थं तथा तत् क्षोयेद्ध्रुवम् ॥

बहुनात्र किमुक्तेन जल्पितेन वरानने ।
पूर्वोक्तं यन्त्रमालिख्य त्रिपुरा वा चक्रं महत् ॥

कुण्डो गोलोद्भवेनैव स्वयम्भू कुसुमेन च ।
गोरोचना समायुक्तं भूर्जपत्रेषु लेखयेत् ॥

षोडशारं महापद्मं द्वादशारं तु बाह्यतः ।
वाग्भवं कर्णिकायां तु कामराजं तदूर्ध्वतः ॥

तदूर्ध्वे शक्तिबीजं तु महायोनिगतं लिखेत् ।

p. 8)

त्रिदण्डं बिन्दुसंयुक्तं द्वादशस्वरभेदितम् ।
महायोनिरितिख्याता जननी सा जगत्रये ॥

प्रथमे स्वरसङ्घातं कामराजं द्वितीयके ।
द्वादशस्वरभेदेन भेदयित्वा तु विन्यसेत् ॥

षोडशारे महापद्मे स्वरशक्त्या विभेदयेत् ।
तद्बाह्ये मातृकान् सर्वान् नादबिन्दुकलान्वितम् ॥

हंसबीजसमारूढां कारयेत्परमेश्वरि ।
एतद्यन्त्रवरं दिव्यं त्रैलोक्येष्वपि दुर्लभम् ॥

मन्दरस्योदरे सर्वं सुषिरेण तु वेष्टयेत् ।
चक्रेऽस्मिन् शक्तिबीजं तु ध्यावै साधकोत्तमः ॥

एषां दिव्या मया प्रोक्ता नम्ना त्रिपुर भैरवी ।
कन्यानामसमोपेता बिलद्वारं समाश्रिताः ॥

योनि कुण्डादधस्थाप्य होमयेद्राजिका पुटैः ।
सप्तरात्रां महादेवि क्षुभ्यन्ते मदनोत्कटाः ॥

विरहानलसंप्ता मूर्छाकुलित विग्रहाः ।
पतन्ति साधकस्याग्रे कुन्दमानास्थितास्त्रियः ॥

भो साधक महासत्व हाटकेश्वर विग्रह ।
प्रविश्य साधकैः सार्धमधिकारं कुरुष्वनः ॥

प्रविश्य क्रीडते सोऽपि यावदाभूतसंप्लवम् ।

॥ तृतीयः पटलः ॥

अथातः संप्रवक्ष्यामि त्रिपुरा योगमुत्तमम् ।
हृद्व्योमपद्ममध्यस्थं हंसाख्यं नामनामतः ॥

व्योमपीठा सनासीनं चामुण्डा चण्डिकायुतम् ।
तेनैव कल्पयेत्प्रेतं सादाख्यं परमेश्वरि ॥

तस्योपरि न्यसेन्मूर्तिं नादबिन्दुकलामयीम् ।
सकलेनैव मन्त्रेण वक्त्राण्यङ्गानि कल्पयेत् ॥

ध्यायेद्रूपं महेशान्यानिश्चलेनान्तरात्मना ।
उदयार्कसमप्रख्यां किरणानेकसंकुलाम् ॥

बन्धूककुसुमच्छायां सिन्दूरारुण विग्रहाम् ।
रक्तावस्त्रावृतां देवीं सर्वाभरणभूषिताम् ॥

जटाजूटधरां सौम्यामर्धेन्दुकृतशेखराम् ।
सर्वलक्षणसम्पन्नां पर्यङ्कासनसंस्थिताम् ॥

आपीनमण्डलाकार भोगसमुन्नतपयोधराम् ।

वलीतरङ्गमध्यस्थ रोमराजि विराजिताम् ॥

मदिरानन्दचेतस्कामाह्लादजननी पराम् ।
त्रैलोक्यमोहिनीं देवीमीषत्प्रहसिताननाम् ॥

दिव्यरूपां महादेवीं त्रिणेत्रां च चतुर्भुजाम् ।
सर्वालङ्कारसम्पन्नां व्योमपद्मासन स्थिताम् ॥

वामहस्ते निविष्टेन सर्वज्ञानमयेन च ।
पुस्तकेन वरारोहे दिव्येन वरदेन च ॥

p. 10)

सूर्यबिम्बनिभैर्मुण्डैस्पुरज्ज्वालावलीधरैः ।
ग्रथिता दिव्यरूपां तु रक्तबिन्दुप्रमोचनीम् ॥

चण्डा विद्यामयीममलामापादतल लम्बिनीम् ।
गलेन बिभ्रतीं देवीं चिन्तयेल्लोकमातरम् ॥

ऊर्ध्वमार्गस्थितं पद्मं सहस्रदलसङ्कुलम् ।
वर्षन्तममृतौघेनत्रवल्लाक्षारसप्रभाम् ॥

तेनैव प्लावयेद्देवीं परेणैवामृतेन तु ।

एवमभ्यस्य मानस्य साधकस्य विचक्षणः ॥

महात्मन् ये त्रैलोक्यं क्षुभ्यते सर्वं नान्यथा वीरवन्दिते ।

॥ इति चतुर्थः पटलः ॥

श्री देव्युवाच ।

मन्त्रध्यानं कथं प्रोक्तमुत्थानं वा कथं भवेत् ।
लयः कस्मिन् भवेद्देव विश्रममाश्रममित्यनुपदिष्यति ॥

रघूणामित्य बहुलोत्पन्नस्यार्ण प्रत्ययस्य तद्राजस्य बहुषु तेनैवास्त्रियामिति लुक् ।

अन्वयं तद्धियं प्रबन्धमित्यर्थः । अस्यैवोत्तरश्लोके श्रवण परीक्षा प्राङ्विषत्वे पपत्तैः । न च तत्र तमिति पदेनान्यभेदे परामृश्यत इति शक्यं वक्तुं पुल्लिङ्गान्तान्तरस्या प्रकृतत्वात्तथा च महाकविम् । रघुवरचरितं

p. 11)

मुनिप्रणीतं दशशिरसश्च वधं निशामयध्वमिति चापलाय । चपलकर्मणे तव कर्तुमित्यर्थः । क्रियार्थोपपदस्य कर्मणि स्थानि न इति चतुर्थी । प्रतारितः । अथवा प्रकरणं कारितः । प्रोत्सारित इत्यर्थः । अथवा भृशत्तं प्रतारणं महादनमितिगलायुधः । अयमभिप्रायकृतदन्वये लब्धबुद्धि प्रवेशस्य मन्दोपि वाक्प्रवृत्ताय तत्तद्गुणा धैर्यपरिपन्थिनं प्रवर्तयितारम् । किं

कुर्वन्तीन्तः प्रयोजन्तीत्याह कर्णमागत्येति अथ क्रियमाण प्रबन्ध परीक्षार्थीतः प्रार्थयतेतमिति श्रोतुं परीक्षापर्यन्तं श्रवणं कर्तुं श्रवणमात्रास्यानुपयोगात्। अहन्तीत्यधिकार उक्तम्। तेन च प्रार्थना लभ्यते। अधिकारकथनस्यैव प्रवर्तकत्वाभावाच्छ्रवणपुरःसरां परीक्षां प्रार्थय इत्यर्थः सदसद्यक्तिगुणदोषविभाग प्रकाशनं तत्र हेतवं प्रकाशयितारं हीति प्रसिद्धोऽयं दृष्टान्त इत्यर्थः। अग्न्याविति निमित्तात् सप्तमी। विशुल्लेहान्तरसम्पर्काभावादौ ज्वल्यम्। श्यामिका। तद्विपर्ययः। अपि समुच्चये। वा विकल्प विशुद्धि श्यामिका चोभयमपि हेमजातेरति परीक्षायः। व्यवस्तित व्यक्तिविषयः। विकल्पेन संलक्ष्यत इत्यर्थः। प्रतिवस्त्रपमाचलङ्कारः। प्रतिवस्त्रपमातु सा।

p. 12)

सामान्यस्य सं?रकस्य यत्र वाक्यद्वये स्थितिरिति गुणदोष विभाग हेतुत्वं साधारणो धर्मः शब्दभेदेन वाक्यद्वयेप्युपात्तः। अत एव न दृष्टान्तः। तत्र सामान्यस्यापि बिम्ब प्रतिबिम्ब भावेनावस्थानान् नाप्यर्थान्तरन्यासः सामान्यविशेष विषयतया तत्र वाक्यद्वयस्यावस्थानात् अथ वर्णनीयं वस्त्रपक्षिपति। वैवस्वत इति। मिततेजसः। व्यापकस्य त्रिधाम्नां च मन्त्रोऽयं वीर्यवत्तरिः। क्रमेणानेन मन्त्राणामुच्चारे कुलदेवताः। कुप्यन्ति साधकानां च धातून् गृह्णन्ति भैरवि। तेजो नामविपर्यासविद्धं शुद्धोदितं भवेत्।

वाग्भवं कामराजं च शक्तिं हंसं कुलेश्वरम्।
जपन्ति ये महात्मानः शीघ्रसिद्धिं वहन्तिते॥

देवताश्चानुग्रह्णन्ति कुलचक्राध्वराश्रयाम्।
पदाद्यक्षरसङ्केतं वदामि शृणु भैरवि॥

सर्वमन्त्रानुसन्धानफलसम्पत्तिकारकम् ।
श्रीकण्ठेनादि भूतेन वाग्भवस्य कुलेश्वरि ॥

उपात्तं निखिलं बीजं चक्रं सारस्वतं महत् ।
आद्येन क्रोधनाथेन कामबीजस्य सुन्दरि ॥

आभूतं योनिचक्रं तत् सर्वकामफलप्रदम् ।
आद्येन लकुलीशेन शक्तिबीजस्य सुन्दरि ॥

p. 13)

पादविद्या समुद्दिष्टा सर्वविद्या क्रमागता ।
इदानीं कुलचक्रस्य * * त्वं व्याप्तिलक्षणम् ॥

रुद्रभैरववीराणां सर्वस्वं योगिनी कुलम् ।
हृत्पद्ममध्यकुहरे त्रिकोणे भावयेत्सदा ॥

अकारादि विसर्गान्ताः सव्यरेखा विभाविताः ।
कोटि चन्द्रप्रतीकाशा वाग्भवेन सुपूजिताः ॥

ककारादि तकारान्तादक्षरेखाश्रयां प्रिये ।
अनेकभास्करप्रख्याः कामराजाक्षरार्चिताः ॥

थकारादि सकारान्तादक्षरेखाश्रयां प्रिये ।
अनेक भास्करप्रख्याः कामराजाक्षरार्चिताः ॥

थकारादि सकारान्ताः पूर्वरेखा समाश्रयाः ।
विद्युत् पुञ्जनिभाः श्रेष्ठाः शक्तिबीजेन सम्मताः ॥

मध्ये कुलाकुलादेवी पादविद्या प्रतिष्ठिता ।
इन्द्रचापप्रभा चण्डीहंसमन्त्रविभाविनी ॥

गुरूपदेशतो ज्ञेयानाथितागमकोटिभिः ।
कुलचक्रमयी मूर्तिस्त्वदीया चाक्षमालिका ॥

विद्यापीठां च देवेशित्वदीयं कुलनन्दिनि ।
इत्थं हृत्पद्ममध्ये तु ध्यातव्यं सर्वदा प्रिये ॥

योगिनां योगिनी चैव विद्या सिध्यर्थमुत्तमम् ।
कुलचक्रं महादेवि त्वत्स्नेहात्कथितं प्रिये ॥

p. 14)

आज्ञाधारे सदा देवि भावयेद्यंकुलेश्वरि ।
तस्यासीनं भवत्याशुस्थावरं जङ्गमं जगत् ॥

सर्वदा कुलचक्रं तु योनौ प्रयतमानसः।
योध्यायत्यस्य योगिन्यो जायन्ते मदनातुराः॥

कुलचक्रं तु विज्ञेयं दव्यदेहं शिवस्य तु।
शास्त्राण्यन्यांश्च मन्त्रांश्च पादपांसूनिवत्यजेत्॥

इदं त्वति रहस्यं तु कथितन्ते मृगेक्षणे।
कर्णात्कर्णं प्रयोक्तव्यं न चलेख्यं तु पुस्तके॥

देयं वीरव्रतायेदं हृष्टाय सततं प्रिये।
भक्ताय देशिकेन्द्राणामुन्नताय व्रतास्थिते॥

॥ इति पञ्चमः पटलः॥

कुण्डन्या कृतौ लक्षजपान्ते जुहुयात्ततः।
पूर्व सेवाकृता तस्य भवत्येव न संशयः॥

अनेन विधिना युक्तो मन्दभाग्योऽपि सिध्यति।
मुच्यते सर्वरोगैस्तु असाध्यमपि साधयेत्॥

अत ऊर्ध्वं जपेद्यस्तु साधको वल्लभे शृणु।

लक्षमेकं जपेद्यस्तु तद्गतस्य जितेन्द्रियः ॥

दर्शनात् क्षुभिताः सर्वायोषितो मदनातुराः ।
पतन्ति साधकस्याग्रे निर्लज्जाभयवर्जिताः ॥

p. 15)

द्विलक्षेण जनाः सर्वे एतस्मिन्विषये स्थिताः ।
आगच्छन्ति यथा तीर्थमत्यन्ता कुलविग्रहाः ॥

ददन्ति तस्मै सर्वस्वं तस्यैवाग्रेष्व सष्थिताः ।
त्रिषु लक्षेषु जप्तेषु मण्डलीकाः समण्डलाः ॥

वशमायान्तिते सर्वे नात्र कार्या विचारणा ।
षड्भिर्लक्षैर्महीपालाः सभृत्य बलवाहनाः ॥

लक्षैर्द्वादशजप्तैस्तु यक्षरक्षोगणेश्वराः ।
वशमायान्तिते सर्वे आज्ञां कुर्वन्ति नित्यशम् ॥

लक्षैः पञ्चदशैजप्तैः साधकस्य वरानने ।
सिद्धविद्याधराः सर्वे गन्धर्वाप्सर आदयः ॥

वशमायान्ति ते सर्वेनात्र कार्या विचारणा ।

दूराच्छ्रवणविज्ञानं सर्वज्ञत्वं प्रजायते ॥

शक्तिपुष्टिकरस्तुष्टः शुद्धोमारयते क्षणात् ।
तथाष्टादशभिर्लक्षैर्जप्तै देहेन साधकः ॥

उत्तिष्ठन्मेदिनीं त्यक्त्वा दिव्यदेहः प्रजायते ।
पर्यटेत्स्वेच्छया लोकांश्चित्रां पश्यति मेदिनीम् ॥

अथ विंशतिभिर्लक्षैर्विद्याधरपतिर्भवेत् ।
साधकस्तु भवेद्देवि कामरूपी महाबलः ॥

यक्षकोटितया देवि लीयते परमे पदे ।
त्रिंशल्लक्षैस्तथा जप्तैः सिद्धयोगेश्वरेश्वरः ॥

p. 16)

चतुश्चत्वारिंशल्लक्षैर्ब्रह्माविष्णुश्च शाश्वतः ।
षष्टिजप्तैस्तु रुद्रत्वमीश्वरत्वमशीतिभिः ॥

* * कं तु भवे वि त्रैलोक्येष्वम?र्जपः ।
त्रैपुरं भैरवं तेजः शिवं * * कारणम् ॥

अक्षयं तत्पदं शान्तमप्रमेयमनिपममम् ।

लभतेऽसौ न सन्देहो देवि सर्वमभीप्सितम् ॥

॥ पञ्चमः पटलः ॥

श्री देव्युवाच ।

नवलक्षं कथं देवस्थानं तस्यापि कीदृशम् ।
एतस्मिन् संशयन्तात छेत्तुमर्हसि शूलयुक् ॥

श्री भैरव उवाच ।

सारात्सारतमं देवि बाह्यसंख्या विवर्जितः ।
शरीरे संस्थितं देवि नवलक्षं सुदुर्लभम् ॥

मेढ्राधाराच्चतुर्भिश्च गह्वरोगलगह्वरम् ।
लम्बिकं भ्रूबिलं देवि नवकं ब्रह्मरन्ध्रकम् ॥

मेढ्रादीपशिखाकारामाधारेकनप्रगम् ।
नाभिस्थं सूर्यबिम्बं तु तरुणं सुरसुन्दरि ॥

ज्वालाज्योतिः शिखाकारा तदूर्ध्वे भास्कराकृतिः ।
गले दीपशिखाकारं लम्बिके चन्द्रसन्निभम् ॥

p. 17)

भ्रूमध्ये रत्नसंकाशं नवान्ते विश्वतेजसम् ।
एतत् स्थानगतो योगी नवलक्षं समभ्यसेत् ॥

स्पर्शनं चावलोवकं च सम्भाषा बिन्दुदर्शनम् ।
स्वयमावेशनं चैव मन्त्राणां पञ्चलक्षणम् ॥

श्री भैरव उवाच ।

विद्याकोशं प्रवक्ष्यामि सर्वसिद्धिप्रदायकम् ।
वाग्भवेन वरारोहे देव्या चक्रं प्रपूजयेत् ॥

तन्मध्ये वर्णसङ्घातकृत दिव्यवपुर्धराम् ।
नादबिन्दुमयीं देवीं ध्यायेत् सकलमन्त्रतः
वक्राण्यङ्गानि विन्यस्य प्रेतोर्ध्वे पूजयेत्प्रिये ।
कोणस्था देवतातिस्रोरति प्रीति मनोभवाः

वामेरतिस्तथा प्रीतिर्दक्षिणे मदनाग्रतः ।
मूलविद्यां जपेत् पश्चाल्लक्षणेन समन्वितम् ॥

आकारेण क्षकारस्यादा * * ऊ * सर्वयोजयेत् ।

ईकारेण लकारस्या दूकारेण हकारकम् ॥

ऋसारोग समाख्यातौ लृषायोगस्तथापरः ।
ऐकारेण शकारस्या दाकारेण वकारकम् ॥

अंकारेण लकारस्याद्यजेन्नाम समन्वितम् ।
एषा सा मूलविद्या च नाम्ना त्रिपुरभैरवी ॥

प्रत्यक्षं जायते देवि त्रिधासिद्धिं ददात्यसौ ।

p. 18)

ददते साधकेन्द्राणामितरा भुविका तथा ।
एतत्ते कथितं देवि भुक्तिमुक्ति फलप्रदम् ॥

अयोग्यस्य न दातव्य * * ज्ञा परमेश्वरी ।

॥ षष्ठम पटलः ॥

इति श्रीरुद्रयामले संपादलक्षग्रन्धे विद्यापीठावतारिते उत्तरभागे नित्यक्लिन्ना प्रकरणे
षड्विद्या प्रकाशायामुत्तरषट्कं संपूर्णम् ॥

तद्विवरणम् ॥

हृदये स्पर्शनं प्रोक्तमालोकं कण्ठदेशतः।
तालुस्थाने तु सद्भाषो दर्शनं बिन्दुमध्यतः॥

स्वयमावेशनं देवि ब्रह्मरन्ध्रे तु दर्शितम्।
वन्दे शक्तिं परां शम्भोर्वर्णसंक्षिप्त विग्रहाम्॥

प्राणाद्यारम्भ संक्रीडा निरन्तरधुरन्धराम्।
आगमान्तरसंवाददर्शितार्थ विनिश्चयाम्॥

व्याख्यामुत्तरषट्कस्य करोमि कुलदीपिकाम्।

भगवतश्चैतन्यात्मनस्त्रियम्बक भट्टारकस्य स्फुरणरूपिण्याः सार्वकालिकप्रपञ्चसर्गस्थिति संहार संक्रीडन परायाः सोमसूर्यवह्न्यात्मक विश्वतैजस प्राज्ञापुरत्रय सन्धुक्षण्यावर्णकदम्ब सङ्कलित दिव्यमूर्तेः परायाः शक्तेः

p. 19)

परमोपास्तिसाधन भूतस्य श्रीमति दक्षिणस्योत्तरस्य श्रीरुद्रयामले निखिलजगद्रक्षणाय समुद्रे भाषितस्यापि श्रीमत् काश्मीरसिद्धिसंप्रदाय दरिद्रैरभागधेयैर्याथा तथ्या परिज्ञानात् स्वमनीषिक्या परं परयाकु देशिकैर्विप्लुतोपदे देशस्य श्रीमद् ब्रह्मानन्दप्रकाशभट्टारक परमगुरुमुखगम स * * * पुरःसरं श्रीमदुत्तरषट्कस्य कुलदीपिकाख्यं विवरणमारभ्यते। तस्य तावदयमाद्य श्लोकः।

व्योमाम्बुजे सहस्रारेसितकेसरसङ्कुले ।
तत्रासीनं महादेवमपृच्छत् कुलनायिकेति ॥

तत्र व्योमनाम आज्ञास्थानात् कोदण्डसंज्ञकादूर्ध्वं यच्छिरं कपालान्तरालं तत्र यादम्बुजं कुलस्वरूपं परमबिन्दुसंत्रितं तद्व्योमाम्बुजम् ।

तत्र बिन्दो किरणाः अराणि तेषां सहस्रकम् । अरसहस्रकम् । अरशब्देन दलान्यभिप्रेति सितकेसरसंकुल इति तत्र केसराणि षोडशकलामयानि अमृतमयत्वात् सितानीति कीर्त्यन्ते । उक्तं च श्री निर्गुण्डे श्रीमते ।

षोडशारे महापद्मे कर्णिकायां शिरोपरि ।
कर्णिकायां स्थितं ज्ञानमकाराद्याः क्रियादले ॥

p. 20)

ताश्च षोडशभेदेन शक्तयः परिकीर्तिताः इति । तत्रासीनमिति तत्रावस्थितस्य निरञ्जन समाधि बलेन निरतिशय स्वात्मरूपमुपलभ्यमानमिति यावत् ।

एवं विध समाधिबल लाभे हि सति योगिनः ।
परमरहस्यार्थ विज्ञानातिशये योगो भवति ॥

एवं विधं देवदेवं कुलनायिका मातृकेश्वर्यपृच्छदिति वाक्यार्थः । इह केवलं तन्त्राणां

प्रश्नोपवर्णनमुत्तर व्याकरणारम्भणीयत्वात्तदनुरूप श्लोकविन्यासम्। कृत तु परमार्थकः। शिष्या सति परमेश्वरी देवं देशिकं सन्ततमनुयुङ्क्ते। न खलु पररूपे परशिवभट्टारकस्य सकलविद्याधारभूत मातृका सिद्धायाः परायाः शक्तेश्च परस्परः भेदस्यैव न सम्भवम्। काकथा गुरु शिष्यभावस्य अपरिज्ञातस्य प्रकाशनस्य वा। तथा चरस्योपनिषट्।

गुरुशिष्यपदे स्थित्वा स्वयं देवः सदाशिवः।
पूर्वोत्तरं पदैर्वाक्यैस्तन्त्रं समवतारयदिति॥

कथमपृच्छदिति।

भगवन् देवदेवेश भवनाशन भैरव।
स्तोतुमिच्छामि देवेश देव्या मन्त्रविनिर्णयम्। मिति। देव्या इति त्रिपुराया इत्यर्थः। अत्र विमर्शनीयानर्थान्

p. 21)

प्रश्नरूपेणोपसङ्गृह्णाति।

लिङ्गत्रयसमायुक्तं महापद्मवनं तथा।
कदम्बगोलकं चान्यद्ब्रह्मरन्ध्रं विशेषतः॥

मुद्रा पञ्चकसंयुक्तं पीठत्रयसमन्वितम्।
कुलाकुलविभागं च सप्तमं कथयस्वमे इति लिङ्गत्रय समायुक्तं महापद्मवनमित्यत्र

समायुक्तपदे निहितेऽपि उभयं च पृथक् पृथक् प्रश्नविषयभूतमित्यवगन्तव्यम्। अन्यथा सप्तप्रश्नानुपपत्तेः समायुक्ता पदं तु निदधानेन लिङ्गत्रयान्यतमेन महापद्मवनस्य सन्निकर्षं सूचयति एवमुत्तरत्रापि बोद्धव्यम्।

पश्चिमाभिमुखं लिङ्गं योनिस्थं परिकीर्तितम्।
हृद्ग्रन्धिबीजथस्थानां स्वयम्भूर्बाणवाचकम्॥

इतश्चान्तरालस्थं विसर्गाथ स्थावर इति। पश्चिमाभिमुखमित्यर्थः योनिरिति वर्णविन्यासविशेषः। गुदमेढ्रान्तर इत्यादिना वक्ष्यमाण लक्षणः। तत्रस्थमेकं लिङ्गम्। तच्च पिण्डाख्यम्। हृद्ग्रन्धिबीज संस्थानमिति तत्र ग्रन्धयो वाममुद्रामण्डलमन्त्रविद्याख्याश्चत्वारः। तेचादित आरभ्य मातृकाचक्रस्य द्वादशभिर्द्वादशभिर्वर्णैश्चतुर्था विभक्तस्य क्रमात् संज्ञावेदितव्याः। तथा च श्रीमते श्री चक्रनिर्नये। देवे।

p. 22)

मणिपूरकमालाया ग्रन्धिर्जाताश्चतुर्विधा।
मुद्रामण्डलमन्त्राश्च विद्याग्रन्धिश्चतुर्विधा॥

एकैका द्वादशैर्भेदैर्मायायन्त्रोदरे पुनः।

महामाया पुनभासहस्त्रप्ररोहनिरन्तरतया वनाकृतित्वमभिमन्यमानो वनमिति कथयति। अत्रेति प्रकृतस्य परलिङ्गस्य परिसर इति सामान्यनिर्देशेऽपि तस्योपरिष्टादिति विज्ञेयम्।

अत्र महापद्मं विसर्गाख्यम्। अकुलं रूपातीतम्। तच्च परमबीजस्वरूपम्।
परमादित्यात्मजोतिर्मण्डलं तदेव योग पीठमिति संज्ञितम्। विष्णीशनाथस्य परमभैरव
भट्टारकस्य स्थानकमिति कृत्वा। अथ कदम्बे गोलकमाह। कदम्बगोलकाकारं तत्कामं
बीजरूपिणमिति। कदम्बगोलकं विद्यादिति विशेषः। तत्काममिति तच्छब्देन महावनं
परामृश्यते। तस्य मध्ये कर्णिकास्थानीयम्। अन्तर्गतं त्रिकोणं षट्कोणं
कैलासप्रस्ताररूपम् ऊर्ध्वं कामतत्वयन्त्रात्मकं वह्निमण्डलं तत्कामशब्दवाच्यं
कदम्बगोलकाकारत्वात् कदम्बगोलकं विद्यादिति वाक्यार्थः। तथाचास्मिं स्तन्त्रे
कामशब्देन वह्निमभिधास्यति भ्रूमध्योनिगतं ध्यात्वा कामं बन्धूकसन्निभम्। तस्योर्ध्वे तु
शिखा सूक्ष्मेति बीजारूपिणमिति क्रोडीकृत परबीजस्वरूपिणमित्यर्थः।

p. 23)

उक्तं च श्रीमदुत्तरकौले। व्यापकं परमं बीजं लयातीते व्यवस्थितमिति पुत्रलयातीतशब्देन
ब्रह्मरन्ध्रमभिधीयते। तच्च महापद्मवनकर्णिकामध्यम्। अनन्तरं ब्रह्मरन्ध्रं वर्णयति।
ब्रह्मरन्ध्रं तु तत्रैव सुषुम्नाधारमण्डलमिति। तत्रैवेति कदम्बगोलक एवेत्यर्थः। सुषुम्नाया
आधारभूतं मण्डलं सुषुम्नाधारमण्डलं तत् किलचान्द्रमसं मण्डलम्। आधारीकृत्य सुषुम्ना
देहमनुसृता सुषुम्नेत्याख्याता याचित् काचित्कला आधारभूतं मण्डलम्। तथा च श्रीमते।
एगहस्ते ध्वनि भासावसाने तु चिदचित् गगनान्तरे। याचितो तु परा संविदा
शिवान्तावभासकी ब्रह्मसूत्रेति सा ज्ञेया तेन सूत्रेति कथ्यते इति। अथ मुद्रापञ्चकं प्रसेतौति
पृथिव्यादिनि तत्वानि मुद्राणाङ्गानि तु। इति तत्वं स्वरूपमुद्राणां तत्वानि वाचकरूपाणि
पृथिव्यादीति न तु वाच्यरूपाणि तानि चक्रमादाधारस्वाधिष्ठान मणिपूरकानाहत
विशुध्याख्य स्थानगानि लकार वकार रेफ यकार घोषाख्यानि बीजानि तेषु चाधारादि
स्थानेषु तत्तदाश्रगाल्लकारादीन् भावयतां साधकानां या विभूतयः सिध्यन्तितता मुद्रा

इत्यभिहिताः। तदुक्तं श्रीक्रमन्निर्णये। क्रमं च वीरगं प्रोक्तं वच्मिमुद्रास्वरूपकम्।

p. 24)

भूम्यदौवाचकास्तत्र लवरयहाद्यवस्थिता इति।

आधारादि विशुध्यन्तमाधारादि पञ्चकम्।

पृथिव्यादीनां वाचकानां स्थानमिति कथितम्।

श्री रत्नदेवे।

आधारादि विशुध्यन्तं पृथिव्यादीह पञ्चकम्।

स्वाभाविकं चलद्दीप्तं स्थिरं मूलं नभोयुतम्॥

मायीयं बीजनाद्याढ्यमेतद्बीजं परात्मकम्।

भयवरलसंयुक्तं मायाधस्तात् समन्वितम्॥

ब्रह्मस्थानगता सूक्ष्मा स्वाभाविकमुद्रा भूताः।

विष्णुस्थाने चलाः प्रोक्ता दीप्ता रुद्रपदं गता॥

ईश्वरे स्थिरसंज्ञात्वा सादाख्ये रुद्रवद्ध्रुवा।

समभावा इति एवमेतासां मुद्राणां भावनाद्वारेण विभूति विशेषकारणभूततया लकारादयः।

एवं मुद्रा इती माध्यारोपिताः। अथ पीठत्रयमाह।

पूर्णाख्यं बैन्दवं तत्वं कोदण्डद्वयमध्यगम्।
तदूर्ध्वेनाद नाम्ना तु ओड्याणं तु भवेत्ततः॥

कामरूपं भवेच्छक्तिविश्रामं तु ततः परमिति।
हि शब्दलोपोत्र द्दष्टव्यः। बैन्दवं तत्वं प्रकाशमयम्। भ्रूमध्यगं पूर्णगिर्याख्यं पीठमित्यर्थः। तस्योर्ध्वेनादाख्यं पीठमित्यर्थः। तस्योर्ध्वे नादाख्यं द्वितीयमोड्योणं

p. 25)

पीठः तस्य प्रकाशरूपस्य बिन्दोः शिखात्मनः स्फुरणरूपम्। तत इति तत्र द्वितीयपीठादूर्ध्वं शाक्तं प्रकाशविश्रामरूपं कामरूपं नाम तृतीयं पीठं तदेव शक्तिः कथिता। इति पीठत्रयं व्याहृत्य कुलाकुले विभजति। विसर्गमकुलं प्रिये।

सहस्रारं महापद्मं रक्तकिञ्जल्कशोभितम्।
तत्र संलक्ष्यते सम्यग्वर्षन्तं रक्तबिन्दुभिः।
प्रभानिष्यन्दमयैर्वर्षन्तमपि चान्द्रमसं तेजोतिशयं विसर्गाख्यं तारकविशेषमकुलं लक्षयेत्। भावयेदित्यर्थः। तथा च वक्ष्यति द्रुतं रक्तं सुतेजाढ्यं धारापातप्रवर्षिणम्। पीत्वा कुलामृतं दिव्यमिति तच्चाकुलं सदा। सृष्टिं च भावद्विसर्ग इति कथितं ततो हि विसृज्यमानमिच्छादि मातृकान्तमयकुलचक्रमय शक्तिकदम्बकं प्रतायते। उक्तं च श्री कुलमूलावतारे इच्छाज्ञान क्रियाख्याता कुण्डलिनी मातृका तथा। ततः सर्वं समुत्पन्नं तस्माद् बहुविधं कुलमित्यकुलं विसर्गाख्यं मन्त्रविशेषमुपदिश्य योन्याख्यं कुलस्वरूपव्यावर्णयति।

पूर्वं या सूचिता मुद्रा गुह्याख्यामृतरूपिणी।

बन्धं तस्याः प्रवक्ष्यामि संवित्ति लभते यया इति ।
पूर्वं लिङ्गत्रयविवरण प्रकारणे पश्चिमाभिमुखमित्यादिना

p. 26)

प्रथमलिङ्गाधारत्वेन गुह्याख्या योन्याख्या मुद्रा सूचिता । सकलमातृका चक्र प्रसवित्रीसमन्तमन्त्रबलभूता प्राणा स्वरूपा घोषमयी तस्याबन्धमप्रमादमनुसन्धान लाभं वक्ष्यामि येन सारस्वतयोगभूतेन परसंवित्ति लाभो भवतीति यावत् । अथ बन्धप्रकारमाह । आदौ पूरकयोगेन स्वाधारे योजयेन्मन इति प्रथमं तावत्पूरकयोगकं कृत्वा स्वाधारे मनो योजयेत् । अनन्तरं च स्वाधारमाह उक्तं च विश्वासकारियाम् ।
यद्वेदादौ भवेद्वीजमेका योनिक्षसान्तकः ।
आभ्यामुभयसंवादयोगात् संवेद्यो वेदमक्षरमिति ।
गुदमेढ्रान्तरे योनिस्तामाकुन्च्य प्रबन्धयेत् ।
इति तां प्रबन्धयेत् किं कृत्वेति आकुन्च्ययोनेराधारभूतं पायुस्थानं बलादूर्ध्वमाकृष्येति यावत् । उक्तं च श्रीमतोत्तरे । स्फुरत्याधार कुञ्चनादिति च ।

अस्मिन् तन्त्रे आधारं गुदमित्युक्तमिति ।
तदुक्तं रक्ताख्ये श्रीमते पिण्डयोग प्रकरणे ॥

इदमाक्रम्य प्रवर्तयितेति तस्मिन् स्वाधारयोगेन मनसा किं भावनियमित्याह ।

भ्रमद्योनिगतं ध्यत्वाकामं बन्धूकसन्निभम् ।
ज्वलत्कालानलप्रख्यं तटित्कोटिसमप्रभमिति ।

p. 27)

भ्रमत् स्पन्दमानम्। कामशब्दो रहस्यागमेषु देहाभ्यन्तरगते जातवेदसि निरूढः। तच्च कामतत्वसंज्ञितम्। व्याकरिष्यमाणं चक्रस्वरूपं स्वाधारगतमेवं विधतेजोविशेषं भावयित्वा तस्य
शिखया सहितमात्मानमपि भावयेदित्याह।
तस्योर्ध्वे तु शिखा सूक्ष्मा चिद्रूपा परमा कला।
तथा सहितमात्मानमेकी भूतं विचिन्तयेत्।

तस्य जातवेदस ऊर्ध्वा तदीया शिखा चैतन्यमयि कला तदवयव भूताया शिखा तया सहित तदेकतामापनमात्मानं च भावयेदित्यर्थः। भावं भावयित्वा किमन्यद्भावनी यमित्याह।
गच्छन्तीं ब्रह्ममार्गेण लिङ्ग* * भेदक्रमेण तु। सूर्यकोटि प्रतीकाशं चन्द्रकोटि सुशीतलम्॥

अमृतं यद्विसर्गस्थं परमानन्दलक्षणम्।
द्रुतरक्तं सुतेजाढ्यं धारापातप्रवर्षिणम्॥

पीत्वा कुलामृतं दिव्यं पुनरेव विशेत्कुलम्।
पुनरेवा कुलं गच्छेदिति। गच्छन्तीमिति प्रथमार्थेद्वितीयेयम्। ब्रह्ममार्ग इति।

आधारादि विशुध्यन्तस्थानानु पूर्वि कथ्यते।
द्वाभ्यामुभयमार्गे तु सं * * * * पञ्चकम्॥

सद्योवाममघोरं च पुरुषेशानमेव च।

p. 28)

विशुद्धं पश्चिमं ज्ञेयमुत्तरं च अनाहतम्।
दक्षिणं तु मणिं नाम स्वाधिष्ठानं तु पूर्वकम्॥

कूर्मरूपमधो वक्रमाज्ञा चैशानविग्रहमिति।
लिङ्गानि पूर्वोक्तानि स्वयम्भू प्रभृतीनि एवमात्म स नाथा सा शिखा लिङ्गानि क्रमेण हित्वा ब्रह्ममार्गेणोर्ध्वं याता सूर्यकोटिभास्वरम्। चन्द्रकोटि सुशीतलं च पूर्वोदित विसर्गमध्यस्थित परमानन्द मूर्तिलक्षणद्रव्य द्रूपमरुणं तेजस्वि रक्तबिन्दुधारापातप्रवर्ष स्वभावमकुल परव्योमसम्भवतया दिव्यममृतं पीत्वा प्लुत्यपुनरेव तेन मार्गेणोर्ध्वमुखी विसर्ग सामकुलं विशेत्। मात्रायोगेन नान्यथेति। मात्रेति बिन्दुनादशत्तयाख्यं क्रमादाज्ञा स्थान ललाट मध्यदु * * * स्थानस्थ पीठत्रयमभिसन्दधाति। तदुक्तं श्रीमते। बिन्दुनादस्तथा शक्तिं मात्रात्रयमुदाहतमिति। तेनायमर्थः। यथोक्त प्रकारेणोर्ध्वं यान्ती सा शिखा परलिङ्गस्थानां नासा मूलादूर्ध्वं बिन्दुनादशक्तिसंज्ञेन पीटत्रयेण युज्यमाना तच्च क्रमात् हि दन्त्यकुलं विशेत्। निविश्य च पुनस्तेनैव मार्गेणाधो मुखं व्रजन्ती योन्याधारं विशेदित्यर्थः। अनेन ब्रह्ममार्गवानेन लिङ्गमभेदमात्र पर्यवसायिनीत्यवसेयम्। अत्र विशेदित्येतावन्मात्रेऽभिहितेपि तामेवं विधां शिखां भावयेदिति

p. 29)

तात्पर्याय गन्तव्यं सा च प्राणः समाख्याता तन्त्रेऽस्मिन् परमेश्वरि। उद्घातं प्रोच्यते सोऽपि प्राणान्तयदुदेति सा। इति सेति शिखां परामृशति। अस्मिंस्तन्त्रे प्राणा इति समाख्याता

अत्र हेतुरुद्घाता इति ऊर्ध्वं वात? उद्घातः। ग्रन्थिच्छेदः। तत् कारित्वात् शिखैवोद्घातशब्देनोच्यते। प्राणान्तः क्षकारः। अनेन तत्तत् स्थानभूतसंवर्तमण्डलं विसर्गाख्यमभिप्रैति तेनायमर्थं सा शिखा यदा योन्याधारात्। प्राणान्तं विसर्गस्थानं विशति तदा ग्रन्धिच्छेदविधायिनीति कृत्वा यत उद्घात इति कथ्यते। अतोऽस्मिंस्तन्त्रे प्राणा इति समाख्याता। प्राणोप्यूर्ध्वं विसर्गात्मतयोद्घातरूपं ग्रन्धिच्छेदं विधातुं न प्रभवति। तदुक्तं श्रीविज्ञानभट्टारकेण। ऊर्ध्वे प्राणेभ्यधो जीवो विसर्गात्मा परोच्यते इति। उभयविसर्गबन्धनस्वभावं योनिद्रा बन्धाभिधेयं महायोगं कालतन्त्रेऽपि कथयति। प्राणे तु प्रेर्यमाण त्वादपानः पीड्यते यदा। गत्वा चोर्ध्वं निवर्तेत एतदुद्घातलक्षणमिति। उक्तं च श्रीभगवद्गीतासु। अपाने जुह्वति प्राणं प्राणे पानस्तथा परे। प्राणापानगतेरूर्ध्वा प्राणायामपरायणाः। अपरे नियताहाराः प्राणान् प्राणेषु जुह्वतीति।

p. 30)

उक्तं चोपनिषत्सु। वाचिप्राणं जुहुमः। प्राणेवाचमिति। एवं गत्यागती वितन्वाना शिखैवेति कथितम्। रत्नाख्ये श्रीमते। तन्मध्ये कुण्डलीदेवी शिवेन सहिता प्रिये। स्थानानि भेद्यगच्छन्ती पिबन्तीमम्बिकामृतमिति। एवं गत्यागतिविम शिरोयोगिनो

दहनप्लावनाभ्यास इति

मन्तव्यः एवमभ्यस्मानः स अहन्यहनि निश्चयात्। जरामरणदुःखोघैर्मुच्यते

भवबन्धनादिति।

अनेन योनिमुद्रा बन्धस्य फलातिशयं दर्शयति।

चतुर्विधा तु या सृष्टिर्यस्यां योनौ प्रवर्तते।

पुनः प्रलीयते तस्यां कलाग्न्यादि शिवान्तकमिति।

योनिमुद्रा पराया तु बन्धस्तस्यां प्रकीर्तित इति।

चतुर्विधाया जगत्सृष्टिर्यस्यां योनि भूताया प्रवर्तते ।

कालाग्न्यादि शिवान्तं च तत्वजातं यस्यां लीयते ।

सा योनिमुद्रा पराया निरतिशयोत्कर्षयुक्ता तस्या बन्धस्तत्वेन कथितं मुद्राया बन्धमात्रेण किं न साधयते भुवि । इति बन्धस्यैव प्रशंसेयम् । अन्यथा कुरु मन्त्रेयमन्यथा कुरुते तु यः । नासौ सिध्यति देवेशि सत्यं सत्यं पुनः पुनरिति । मन्त्रजातं विना जपति कर्षणादि क्रियाकलापं बन्धं विना करोति सनसिध्यति न फलेन युज्यत इत्यर्थः ।

p. 33)

तस्मादभ्यसनं नित्यं कर्तव्यं पुण्यकांक्षिभिः ।

अभ्यासाज्जायते सिद्धिरभ्यासान्मोक्षमाप्नुयात् ॥

संवित्ति लभतेभ्यासाद्योगोभ्यासात् प्रवर्तते ।

मन्त्राणां सिद्धिरभ्यासादभ्यासाद्वायुसाधनम् ॥

कालवञ्चनमभ्यासात्तथा मृत्युञ्जयो भवेदिति ।

मुद्राबन्धनाभ्यास्यावश्य कर्तव्यतां फलानि च कथयति ।

॥ इत्युत्तरषट्कविवरणे कुलदीपिकायां प्रथमः पटः ॥

अथ त्रिपुरा विद्याया उद्धारयन्त्रं विवरीतुमुपक्रमते ।

अथातः संप्रवक्ष्यामि संप्रदाय समन्वितम् ।

त्रैलोक्य डामरं मन्त्रं त्रिपुरा वाचकं महत् ।

अथ शब्दो मङ्गले।

सुसमे भूप्रदेशे तु निम्नोन्नतविवर्जिते।

पुष्पप्रकरसङ्कर्णे गन्धपुष्पाधिवासिते॥

ललाटतिलकोपेतो नेत्रकज्जलरञ्जितः।

ताम्बूलपूर्णगन्धश्च मदिरानन्दचेतनः॥

कुङ्कुमे रवि लिप्ताङ्गो लाक्षा तिलकशोभितः।

रक्तवस्त्रपरिधानो रक्तमाल्योपशोभितः॥

कर्पूरक्षोददिग्धाङ्गो क्रोधपैशून्यवर्जितः।

उद्धरेत्त्रिपुरां देवी दृष्ट्वादृष्टफलप्रदाम्॥

p. 34)

अष्टपत्रं लिखेत्पद्मं केसराढ्यं सकर्णिकम्।

पत्राग्रे गन्धिसंयुक्तं तदग्रेति त्रित्रिशृङ्गकम्॥

अथ यथोक्ते भूप्रदेशे देशिकोष्टपत्रं केसराढ्यं सकर्णिकम्।

पत्राणामग्रभागेषु ग्रन्धिभिर्वृत्तमण्डलाकृतिभिर्युक्तं ग्रन्धीनामग्रभागेषु त्रिभिस्त्रिभिः शृङ्गैः

शूलविन्यासैरभिसंयुक्तं पद्मं लिखेत्।

शृङ्गाष्टवभितो भद्रे यथा वक्ष्यामि तत्क्रममिति।

भद्रे इति परमेश्वरीं सम्बोधयति। इह त्रिभिस्त्रिभिः शृङ्गैः प्रतिदलमेकैक शृङ्गमित्यष्टौ शृङ्गानि

तान्यभितस्तत्कथं त्रिपुराविद्या सम्बन्धिनं मातृका चक्रं वक्ष्यामीत्यर्थः।

अष्टौ शृङ्गोणीति ग्रन्धीनां दलां चोपलक्षणम्।
दलेषु ग्रन्धिशृङ्गेषु उक्तमार्गेण विन्यसेत्।
इदं चक्रं प्रयत्नेन लिखित्वा साधकोत्तमः।
मातृकां विन्यसेत् पश्चादिति इदमेवं विधं च पद्मरूपं चक्रं लिखित्वा पश्चात्तस्य दलेषु ग्रन्धिशृङ्गेषु एतत्तन्त्रोक्त प्रकारेण देशिको मातृकां विन्यसेत्। कथमित्याह पीठ भैरव योगिनीमिति। पीठाः कामरूपाद्याः भैरवा असिताङ्गादयः योगिन्यो ब्राह्माद्याः। एतास्तत्र पूर्वं न्यसेत्। एतदेव कथयति।

p. 35)

कामरूपं लिखेत्पूर्वे कोल्लगिर्यं तु दक्षिणे।
चोहरं पश्चिमे लिख्य उत्तरे औकणं लिखेत्॥

मलयं चाग्निदिग्भागे नैर्-ऋत्यां तु कुलान्तकम्।
जातान्धरं तु वायव्ये ऐशान्ये देवि कोट्टकम्॥

इति पूर्वे दलत्याहारः। अत्र पूर्वादि दिग्दलेषु कामरूपादि पीठविन्यासानुपपत्ते सतान्येव काम रूपादि पीठात्मविन्यासानुपपत्ते सतान्येव कामरूपादि पीठात्मना भावयेदित्यवगन्तव्यम्। पीठेशान्विन्यसेत्तत्रेति तेषु दलेष्वित्यर्थः। असिताङ्गादि भैरवान्।
ब्रह्माणीमादितः कृत्वा चण्डिकान्तं प्रकल्पयेत्।
असिताङ्गोरुरुश्चण्डः क्रोधश्चोन्मत्त भैरवः।

कपाली भीषणश्चैव संहाराश्चाष्टम स्मृताः।

ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा।

वाराही च तथेन्द्राणी चामुण्डा चण्डिका तथा॥

इत्येवमन्तं सुगमम्।

दीर्घस्वरांश्च एकैकं मातृणांश्च प्रकल्पयेत्।

ह्रस्वा स्वभैरवाख्यातायामलान्वै प्रकल्पयेत्। इति।

अयमर्थः। दीर्घस्वराणामाकारादि विसर्गान्तानामष्टानालेखनम्। ब्राह्यादि योगिनीन्यासः।

अकाराद्यनुस्वारान्तस्य ह्रस्वाष्टकस्य लेखनम्।

p. 36)

असिताङ्गादि भैरवन्यासः। तेन दीर्घस्वरा एव ब्राह्याद्याः ह्रस्वा भैरवा

असिताङ्गादयोवगन्तव्याः। तांश्चैकैकस्मिन्दलेयमलान् प्रकल्पयेत्। तेन कामरूपाख्ये दले

असिताङ्गाख्यमकारं ब्रह्माण्याख्यमकारं च सहितं लिखेत्। एवमन्येष्वपि दलेषु भैरव

योगिनीन्यासं दर्शयित्वा ग्रन्धिषु मातृकान्यासमाह। कादिवर्गाक्षराभद्रे ग्रन्धिषु क्षान्तगाः

शुभाः। इति कादयस्ते वर्गाक्षराः। कवर्गादयः। पञ्च। अन्तस्था ऊष्माणश्चेति सप्तवर्गाः।

क्षकाश्चैकोवर्ग इत्यष्टवर्गाः। एषां कादीनिक्षान्तगान्यक्षराणिकचट तपयशक्षाः। ते ग्रन्धिषु

पूर्वादिषु न्यस्याः। अन्यवर्णगणाः सर्वा शृङ्गकोणेषु संस्थिताः। इत्यन्यवर्णगणाः

सकारहकारवर्जिता चतुर्विधिः पूर्वादिषु शृङ्गप्रान्तेषु चतुर्विंशतिर्लेखनीयाः। कादिक्षान्ता

न्यसेद्ग्रन्धौ शेषाश्चाङ्गेषु विन्यसेत्। अनेनोक्तमेव व्यक्तीकरोति दक्षिणादीन्यसेद्वर्णान्

सर्वसिद्धिफलफलप्रदानीति। दक्षादि विन्यासे वर्णाः सिद्धिये भवन्तीत्यभिप्रायः। तच्च

दक्षिणादिन्यासमाह । ऐन्द्राद्युत्तरशृङ्गान्तं दक्षिणेन प्रकल्पयेदिति । इन्द्रदिग्भागादारभ्योत्तर शृङ्गादि विधिन्यासो दक्षिणविन्यासः ।

p. 37)

तदादिविन्यसेद्धीमानिह मार्गेण साधकः ।

इत्यनेनैतदेव स्थिरयति । ऐन्द्रमादिं कृत्वा रवेर्दक्षिणायन प्रकारेण वर्णान्विन्यसेत् ।

जीवाख्यौ कर्णिका मध्ये हंसाख्य पदविश्रिताविति ।

कर्णिकायां चिन्मात्र संश्रयं वर्णद्वयमित्यर्थः ।

किं तदित्याह ।

सकारजपभूतस्तु हकारः प्राण उच्यते ।

उभौ जीवेति विख्यातौ त्रैलोके स चराचरमिति ।

कुलेकुलपद्ममिति चक्रस्यैव संज्ञा एतदन्ततो ध्यायेद्वा भगवन्देवि साधक इति । अस्य चक्रस्य मध्ये वाग्भवं ध्यात्वा पूजयेत् । तेन वाग्भव चक्रमेतदिति दर्शितं भवति । इतीह वाग्भवचक्रं प्रकाश्य ततो विद्यामुद्धरति । ततः समुद्धरेन्मन्त्रं भुक्तिमुक्तिफलप्रदमिति ।

सुगमम् । इन्द्राणी बीजमादाय संहरेण तु मण्डितमिति ।

तत्र तावन्महाविद्यायास्त्रिपुर महासुन्दर्याः सामान्य विशेषात्मकं रूपद्वयं सम्भवति । तत्र सामान्यं नाम श्रीकण्ठानन्तरु भूलकुलीश्वराख्यैर्विशेषैर्मधुरं केवलपादत्रयात्मकं इतस्तु तैस्त्रिभिः संयुक्तमेतदुभयं च अनेन दर्शयति । तत्र तावदिन्द्राणी बीजं नाम द्वादशस्वरः । संहारोनुस्वारः तेन मण्डितं सहितमिति यावत् ।

p. 38)

अतोनुस्वारसहितो द्वादशस्वरो वाग्भवाख्ये मनुर्भवतीति सामान्यं रूपम्।

अथ विशेषरूपमाह।

तद्भवेनैव चाक्रान्तं वाग्भवं देविपूजितमिति।

अस्यार्थमेके वर्णयति। तदितीन्द्राणी बीजं परामृश्यते। भवः श्रीकण्ठः तेनाक्रान्तं सहितमित्यर्थः। तेनेन्द्राणी बीजमेव श्रीकण्ठानन्तर भावि विशेषं रूपं वाग्भवं भवतीति। एवमिदं व्याक्रियमायणमेकादश स्वरस्यापि वाग्भवतां सूचयिष्यतां श्रीकण्ठो वालीश इत्यादिना उत्तरेणाक्षरार्थं सूत्रेणाव्याहते। तस्मादन्योर्थः। तद्भवेनैव चाक्रान्तमिति तदिन्द्राबीजं तद्भवेनाक्रान्तमधिष्ठितं श्रूयमाणेन श्रीकण्ठेन संयुतमित्यर्थः। इन्द्राणी बीजे हि संहिता रूपेणान्तः कृत श्रूयमाणो भवतीति श्रीकण्ठः। तन्निवर्तयित्वाक्रान्तवदेन इन्द्राणी बीजं नाम श्रीकण्ठयोनिवर्णसंहितारूपं तत्संहितारूप कबलीकारं हित्वा श्रूयमाणेनैव श्रीकण्ठेन संयुज्यमानं विधाय श्रीकण्ठयोनिबीजात्मकानुस्वारात्मना वर्णत्रयं विशेषरूपं वाग्भवमिति कथितं भवति। तथा चैवं विधस्य मनोर्वाग्भवत्वं श्रीमते श्रीव्योम चक्रविवरणे प्रकाश्यते। एकाराकविभवा त्रिकोणा

p. 39)

बिन्दुरूपिणीति। सिद्धयोगेश्वरे मतेपि। एकादशस्वरस्यैव वाग्भवतामुद्घोषयति। प्रथमशृङ्गा। अकारमेकारेति प्रकीर्तितम्। वाग्भवं तस्य बीजं बिन्दुनादेन कीर्तितमिति। उक्तं च लघुवादैः यामात्रात्रपुसी लता तनुलसत्तन्तु स्थिति स्पर्धिनी वाग्बीजे प्रथमे स्थिता तव सदाता मन्महेते वयम्। शक्तिः कुण्डलिनीति अत्रामात्रेति पदविच्छित्तिः कर्तव्या। तदेव वाग्भवमुभयस्वरूपं प्रदर्श्य नधिकारिणेन देयमिति कथयति। नदेयं परशिष्येभ्यो भक्तिहीने

विशेषतः एतद्बीजं महाबीजसृष्टिभूतं परं प्रिय इति। अथ कामराजः। प्रस्तोति कामग्रन्धिं समादाय शृङ्गं कूटस्य दक्षिणम्।

माहेश्वरि युतं कृत्वा संहारेण समं कुर्वीत। कामग्रन्धिं नामककार कूटं नामवाग्भव चक्रस्य देवि कोट्टाख्यस्य ऐशानोदलविशेषः। तस्य दक्षिण शृङ्गस्थित्वाल्लकारः। कूटस्य दक्षिणशृङ्गमिति कथ्यते। माहेश्वरी नाम ईकारः। संहारोनुस्वारः। अनश्वानु पूर्वा कामराजमुद्धृतफलातिशयं सूचयति। क्षोमकृत् सर्वतत्वानां जीवभूतं परात्परमिति। सर्वतत्वानां सर्वात्मनां क्षोभं महानुरागं जपेदित्यर्थः। त्रैलोक्य

p. 40)

पूजितं देवि सृष्टि संहारकारकम्। कामराजमिदं देवि

कामसिद्धि प्रदायकमिति सुगमम्।

अनन्तरमस्य कामराजस्य विशेषमाह।

परापरविभागं तु एकीकृत्य तु साधकः जपेदेकाग्रचित्तस्तु पातालादिषु साधन इति। परः उत्कृष्टः अपरः अकारात्परो वर्ण आकारः। परश्चासाव परश्चेति परापरः। स एव विभागो विशेषः। तं यथोक्त उद्धृतेन कामराजेन सहितं कृत्वा जपेदित्यर्थः। उक्तं च श्रीलघुपादैः नित्येतव कामराजं परं मन्त्राक्षरं निष्कलमिति अत्रेकार पूर्वीत्यपरेत्यपरो वर्णः। आकार इत्ययं वर्णक्रमः। तथा च श्रीरुद्रयामले। स कीलविद्यारूपेणदर्शितः। क्ला ईम् मद्द्रव्ये। अ एं क्लिं नेत्रलेसौं इति लघुपादैरपि चोक्तम्। निष्कलविद्यारूपेण आ ई पल्लवितैरिति। उक्तं च श्री ज्येष्ठनाथेन आ ई मसंज्ञाममृतामनन्तां त्रियक्षरां कुण्डलिनीं त्रियश्रामिति। एकाग्रचित्तस्तु भावनाप्रकारम्। पातालादिषु साधना इति बीजादि साधन इत्यर्थः। अथ शक्तिबीजमुद्धरति।

प्राणासनस्थितं जीवं चामुण्डा भेदितं पुनः।

चण्डिकायां तु संरुद्धं बीजं त्रैलोक्यमोहनमिति।

p. 41)

प्राणो हकारः। स एवासन प्राणासनम्। तस्मिं स्थितं प्राणासनस्थितम्। जीव इति सकारः। चामुण्डा औकारः तया भेदितम्। विशेषितं सहितमिति यावत्। चण्डिकानाम विसर्जनीयः। ताभ्यां सहितमिति यावत्। एतदुक्तं भवति। वाग्भवकर्णिकायां हकारमानसं कृत्वा तदुपरि सकार विन्यासः। तेन प्राणासनस्थं जीवमिति सकारमभिदधाति * * चामुण्डया चकाया च संयुतं कृत्वा शक्तिबीजस्वरूपेण चक्रादुद्धरेदिति सामान्यम्। एवं प्रकारेण समुद्धृतं परं बीजं श्रीदेशिकेन्द्रकटाक्ष वशालब्वा पृथगे वा जीवमावर्तयेदित्यर्थः।
एवं रूपात्मकं शक्तिबीजं प्रदर्श्य विशेषमाह।
सदाशिवासनस्थं वै उच्चारेण तु लक्षयेदिति।
सदाशिवो घोषः। स एवासनं सदाशिवासनं तस्मिं स्थितं सदाशिवासनस्थं पूर्वं घोषमुच्चार्यानन्तरं पूर्वोक्तं शक्तिबीजमुच्चारयेदिति वाक्यार्थः। उक्तं च श्रीलघुपादैः सदाहस्थितमिति। यत् सद्योवचसां प्रवृत्तिकरणे दृष्टप्रभावं बुधैस्तात्तिर्यं तदहं नमामि। मासात्वद बीजमिन्दु प्रभमिति।तत्र वचसां प्रवृत्तिकरणे दृष्ट प्रभावमिति।

p. 42)

प्राणबीजग्रं घोषाक्षरमाचष्टे। तथा श्रीमते।
वैखरीया * * * तृणा प्राणवृत्ति निबन्धनेति।
कला तन्त्रेप्युक्तम्। हकारस्तु स्मृतः प्राण इत्युभय रूपां विद्यामुपदिश्य तत्साधने

पुरश्चरणविधिमाह ।

पूर्वसेवां जपेल्लक्षं योनिबन्धेन निश्चलम् ।

बिलद्वारं समाश्रित्य एकचित्तो जितेन्द्रिय इति ।

पूर्वसेवां पुरश्चर्यामित्यर्थः । बिलद्वारं समाश्रितः ।

योनिमुद्रां बध्वा पुरश्चर्यारूपेण लक्षं जपेत् ।

त्रिंशद्दिनानिस्ततं जपं कुर्यादित्यर्थः । उक्तं च श्री हंसभेदे मासंलक्षमिति प्रोक्तमिति ।

अनन्तरं साध्य लोकस्याधिकारित्व प्रदायिनीं त्रिकविद्यां साधारणभूतां परमरहस्यभूतां

दीक्षां दर्शयितुं तत्प्रधानाङ्गभूतं योनिमुद्रा बन्धप्रकरणे कामं बन्धूकसन्निभमिति त्रिपुरा

सूचितं कामतत्वयन्त्रप्रश्न विषयत्वोनावतारयति अद्यापि संशयो देवकामतत्वस्य साधनम् ।

विज्ञानमात्रगमनं देहिमे त्रिपुरान्तकेति ।

कामतत्वं नामान्तः कृत हृल्लेखादि कामाराजादिकं वक्ष्यमाण यन्त्र विशेषमाह ।

विज्ञानमात्रेण फलं गमयतीति विज्ञानमात्रगमनम् ।

श्री भैरव उवाच ।

कथायामि समासेन कामतत्वस्य लक्षणम् ।

p. 43)

आकर्षणं परं दिव्यं शृणु शेषसमासत इति सुगमम् ।

कास्थं काममध्यस्थं कामोदरपुटीकृतम् ।

कामेन साधयेन काममिति हृल्लेखाभिधीयते ।

काममध्यशब्देन निर्विशेषः कामराजः कामोदरपुटी कृतमिति कामोदरो नाम त्रिकोण विन्यासो द्वादशस्वरः। केन संपुटितमिति यावत् कामस्थं काममध्यस्थ्यमित्येतद्वितीयं कामोदरे संपुटितं करणीयमित्यन्वयः। संपुटिताभिधानेन कामोदरद्वितीयस्येतरेतराभिमुख्येन विन्यासं सूचयति। तेन त्रिकोणरूपत्वादैकारयोरितराभिमुख्येत्तराधर भावेन विन्यासः षट्कोणं भवतीत्यवगन्तव्यम्। अत्रानुक्तोपि विवरणग्रन्धोपि व्याख्यास्यमानत्वात् बिन्दुसंज्ञितो * * रो विन्या * * * तोमन्तर्यः। अ कामस्थादीनां हृल्लेखादि वाकत्वमुत्तरत्रकामं दम्भु * * * ग्रन्धेन स्वयमेव विवरिष्यति। कामेन साधयेत् कामिति। तत्रानेनध्याहारम्। अनेन कामनेति यथोक्तरूपं हृल्लेखादि चतुष्टयं कामतत्व वा * * * शति। यत्र श्रीरुद्रयामले। हृल्लेखा कामराज वाग्भव बिन्दुस्त्री

p. 44)

काराख्यं कामपञ्चकमिति उद्धुष्यते। कामराजमन्मथादयः। पञ्चमोत् हृल्ले * * * ञ्चां संज्ञा वेदितव्या। तथा च तत्र वक्ष्यति। लक्षद्वयविलोमस्थैः संयोगेन च तत्प्रिये। उपदेशेन बोद्धव्य उद्धारश्चास्य व्रते। इद * * * तां सर्वतत्व प्रबोधकम्। अयं वक्रं परा देवि तेजोवृत्तिनिवासिनः। एषां संयोगरूपेण मन्मथं जायते प्रिये। कन्दर्प कथयिष्यामि * * * * परम्। आपूर्वः भूतमार्गस्थमः पूर्वेण समन्वितम्। अभ्यासं योगजं देवि कन्दर्पं समुदाहृतम्।

क्षभ पूर्वे ॠतुगां तेज तु रेकादशेत * *

* * * भेदेन मकरध्वजसंज्ञिकम्।

हथलद्वय अः पूर्वे मनोहृ भवति प्रिये इति तेनायमर्थः। अनेन पाठक्रम विहितविन्यासेन

कामस्थादीनि * * * कामेन सह कामतत्वसंज्ञकं स्त्रींकार लिखेदिति तात्पर्यार्थः तथा कृते हि कामतत्वस्य सिद्धिर्भवतीति कृत्वा साधयेदिति निहित का * शब्दस्य कामत * * रत्र विवरिष्यते। कामतत्वं प्रसादयेदिति अत एवमभिदधानस्यायं यन्त्रविन्यासक्रमोभिप्रेतोवगन्तव्यः कथमिति। प्रथमं हृल्लेखां म * * * कामराजं तां च स कामराजां हृल्लेखामभितः षट्कोणरूपं

p. 45)

योनिसंज्ञितं वाग्भवं तस्य कोणेषु बिन्दुसंज्ञितान् ब्लूंकारं तत * * * षट्कोणकबलीकरणं स्त्रीकारं विलिखेदिति उक्तं हि शुरु * मले मन्मथस्य मध्यस्थं कामराजन्यसेत्तुतम्। कन्दर्पमन्दिरं कृत्वा द्विधाभूतं तु पार्व * * * * षट्कोणेषु च दापयेत्। चत्वारस्ते महाकामाः पञ्चमस्योदरे क्षिपेत्। कामं कामेन तु क्षिपेदिति। एवं भूतं कामराजयन्त्रं काम * * * योनौ निक्षिपेत्। तद्गततया भावयेदित्यर्थः। कामेन कामितं कृत्वा कामस्थं क्षोभयेद्धृवमिति। एवं भूतो कामराजयन्त्रेण साध्यस्यात्मा * * * * तं कृत्वा कामस्थं योनिस्थं यथा भवति। तथाद्धृवं क्षोभयेद्विसर्गस्थममृत इत्यर्थः। उक्तं च श्रीमते जन्मस्थानात् समुद्यन्ती यात्तद्धृवमण्डलमिति ए * * * * हुनेत्यदिना तदा तत्क्षोभयेद्धृवमित्यन्ते न विवरणग्रन्धेन स्फुटी करिष्यते। अस्मिंश्चक्रे कामराजं ध्यायेद्वै लोकपूजितमिति सुगमम् * * * दिनामनन्तरोक्ता ना दुर्विज्ञेयता परमकारुणकः परमेश्वरस्य यमेव विवरमारभते। कामस्थं भुवने ज्ञेयमित्यादि। भुवनमिति भुव * * * र्थः। काममध्ये तु विग्रहमिति

p. 46)

काममध्ये त्वित्यनेन पूर्वोक्तकाममध्यस्थमिति पदं वक्ष्यति। काममध्यस्थं नाम विग्रहं

जानीयात्। कामस्वरूपं जानीय * * * स्वरूपं नाम कामराजाख्यो मनुः कामोदरं भवेद्योनिरिरिति योनिर्वामि वाग्भवः। पुटान्तं बिन्दुसंज्ञकं भवेदित्यन्वयः। पुटान्तरिति षण्णां कोणा * * * * बिन्दुसंज्ञकमिति यन्त्रस्य वलनरूपेण वलनसाधयेदिति कामेन का साधयेत्। काममित्यस्य विवरणम् एतदेवहि कामं तु साध्ययोनौ प्रकयो * * * कामं कामे तु निक्षिपेदित्यस्य विवरणम्। बिन्दुनामथनमित्यादि क्षोभयेदित्यन्तं कामेन कामितं कृत्वा कामस्थं क्षोभयेद्धृवमित्यस्य विवरणं * * * * बिन्दुशब्देन साधकस्यात्मा कथितः तथा च श्रीमते बिन्दुरात्मा समाख्यातोयं प्रबुद्धो नरोन्तर इति प्रथमशब्देन

परिशीलनातिशयं सूचयति तथा च श्रीमते।
तन्मध्ये चात्मनोरूपं लक्षयेत्तु पुनः पुनः।
मथनं ह्येतदाख्यातमज्ञातमलनाशनमिति।
विसर्गो नाम षोडशान्तं चन्द्रद्वीपं ब्रूते।
शक्तिमार्गो नाम सुषुम्ना च तथा श्रीमते।

शक्तिमार्गं सुषुम्नाख्यमिति योनिस्थमिति क्षोभयेदित्यस्याः।

p. 47)

क्रियाया विशेषणम्। अत्र कामेन कामितं कृत्वेति सङ्ग्रहसूक्तोक्तमपिस्मत्तव्यम्। तेनैव तदुक्तं भवति। साध्ययोनौ तथोक्तरूपं कामयन्त्रं परिकल्प्य साध्यस्यात्मानं तेनैव कामयन्त्रेण यन्त्रितं कृत्वा साधकस्यात्मना साध्यस्य विसर्गस्थममृतं तथा क्षोभयेत्। यथा तच्छक्तिमार्गेण निष्यमानं साध्यस्य योनिस्थं संपद्यत इति साध्यलोकस्ये यमेव सा प्रथमं प्रस्तुतापि रहस्य दीक्षेति कथिता। बहुनात्र किमुक्तेन कल्पितेन वरानने इति सुगमम्।

अनन्तरं शक्तिबीजयन्त्रमाह ।

पूर्वोक्तं यन्त्रमालिख्य तिपुरावाचकं महदिति । पूर्वं प्रथममुक्तं त्रिपुरायन्त्रमिति । वाग्भवमभिधीयते । तद्वक्ष्यमाण महापद्मयन्त्रस्य कर्णिकास्थाने लिखित्वेति यावत् । कुण्डगोलोद्भवेनैव स्वयम्भूकुसुमेन च ।

गोरोचना समायुक्तं भूर्जपत्रे तु लेखयेत् ।
अत्र कुण्डशब्देन स्त्री चिह्नभूतयोनिरभिधीयते ।

गोलशब्देन पुंश्चिह्निभूतं लिङ्गकुसुमशब्देनार्तवमभिप्रैति । अत्र स्वयम्भूत्वं प्रथमोद्भूतता । तेन कुण्डगोलाद्भव शब्देन स्त्रीपुंसयोग सम्भूतं सम्मिलितरूपं शुक्ल शोणितमभिधीयते । स्वयम्भूं कुसुमशब्देन स्त्रियाः

p. 48)

प्रथमोद्भुतमार्तवम् । ताभ्यां गोरोचनया च लिखेदिति यावत् । षोडशारं महापद्मं द्वादशारं तु बाह्यतः । पुनः शोडशपत्रं तु द्वात्रिंशत्तस्य बाह्यतः । इति कर्णिकास्थानीयं वाग्भवयन्त्रमभितः षोडशारं पद्मं लिखेदिति विज्ञेयम् । अरशब्देन दलान्यभिधीयन्ते । तस्य बाह्यतो द्वादशारं तस्यापि बाह्यतो द्वात्रिंशदरं लिखेत् । वाग्भवं कर्णिकायां तु कामराजं तदूर्ध्वतः । कर्णिकाशब्देन यन्त्रमध्यवर्तितयोपचारेण पूर्वोक्त वाग्भव यन्त्रप्रान्तवर्ति षोडशारं महापद्मं प्रतिपादयति । न खलु दलसमुदायरूपो सौ मुख्यतः क * * * विभक्तुमर्हति । कर्णिका तु प्रथमं प्रतिपादितं वाग्भवयन्त्रमेव । अत्र वाग्भवशब्देन षोडशस्वरा अभिधीयन्ते । तथा च स्वयमेव व्याख्या सति प्रथमे स्वरसङ्घाः । इति कामराजादूर्ध्वत

इति अत्र कामराजशब्देन कामराजं द्वादशस्वरभेदेन भेदयित्वा तु विन्यसेदि व्याख्यास्यमानत्वात् अनच्कमेवात्र कामराजबीजमभिवाञ्छितं तदूर्ध्वत इति द्वादशार इत्यर्थः। तदूर्ध्वे शक्तिबीजं तु महायोनिः शतं लिखेत् इति तदूर्ध्वे द्वादशाराद्बहिर्भूत षोडशार इत्यर्थः। शक्ति बीजशब्देन स काममभिप्रैति। महायोनिर्नामोत्तरसूत्रे

p. 49)

वक्ष्यमाणा सा यन्त्रविन्यस्यत इत्युपचारेण द्वात्रिंशदरमभिधीयते। तद्गतं तदन्तर्गतिकामः। तेनायमर्थः। द्वात्रिंशस्यान्तर्वर्तिनि षोडशारे शक्तिबीजं लिखेदिति यावत्। त्रिदण्डं बिन्दुसंयुक्तं द्वादशस्वरभेदिनम्। महायोनिरितिख्याता जननी सा जगत्त्रये इति। त्रयणां दण्डानां समाहार स्त्रिदण्डं ते च हकारसकारौकारादि सान्तानामन्यतमं बिन्दुरनुस्वारः। द्वादशस्वर ऐकारः। तेनायमर्थः। हकार सकारौकादि सान्तानामन्यतम ऐकारो बिन्दुश्चेतीयमानुपूर्वी महायोनि संज्ञितेति अत्र कादिसान्त एव रूपा यन्त्रस्य बाह्यमण्डले द्वात्रिंशदरे विन्यसनीया इत्यनुक्तमप्यर्थाल्लभ्यं यतो वक्ष्यति तद्बाह्ये मातृकाः सर्वा इति

अथ प्रथमे स्वरसङ्घातं कामराजं द्वितीयके।
द्वादशस्वरभेदेन भेदयित्वा तु विन्यसेत्॥

षोडशारे महापद्मे स्वरं शक्त्यादि भेदयेत्।
तद्बाह्ये मातृकान् सर्वानादि बिन्दुक लतान्वितान्।

हंसबीजसमारूढान् कारयेत् परमेश्वरि।
एतद्यन्त्रपरं दिव्यं त्रैलोक्येष्वपि दुर्लभम्॥

मन्दिरस्योदरे सर्वं सुषिरेण तु वेष्टयेदिति ।

अथैषां वाग्भवादीनां विन्यास प्रकारस्या स्पष्टाभिधानत्वात्तदेव
व्यक्ती करोति ।

p. 50)

प्रथमे स्वरसङ्घातमित्यनेन पूर्वनिर्दिष्ट वाग्भवपदस्य षोडशवाराभिधायितां व्यावर्णयन्
प्रथममण्डलविन्यास प्रकारमाह । कामराजमित्यादि षण्ण चतुष्कत्यागेन स्वराणां
द्वादशसंख्यातानां वर्यायणे तात्पर्येण तात्पर्येण द्वादशस्वराणामन्यतमेन स्वरेण सह
ककारलकारात्मिकामराजं विन्यसेदिति द्वितीयमण्डलविन्यासः षोडशार इत्यादि शक्तिरिति
सकारः तमेवैकश षोडशभिस्वरैः संयोज्य लिखेदिति तृतीयमण्डलविन्यासः । तद्बाह्येत्यादि
अत्र मातृकाशब्देन समस्तवर्णानामवरोधेपि स्वराणां पूर्वमण्डलेषु विनियुक्तत्वादविहित
विनियोगस्य कादिसान्तस्य द्वात्रिंशत एव वास्यैव ग्रहणम् । बिन्दुरनुस्वारः ।
नादोनामतस्यैवद्राघी यान्धवनिः ऊर्ध्वरेखा विन्यासं बिन्दुनादा एव कलाः कलानां वर्णा
भूताः अत्र बिन्दुनादान्वितस्य कादिसान्तस्य प्रत्येकं मेकारसहितं द्वादशस्वरभेदनमति
पूर्वोक्ताल्लभ्यते । हंसबीजपदेन हकार सकारौ विवक्षति । द्वात्रिंशदरस्य मण्डलविन्यासः ।
एतद्यन्त्रमित्यादि मन्दिरशब्दः संवर्ताक्षरमाचष्ट । तथा च श्रीमते मन्थानभैरवे ।
ककारोमन्दिरः प्रोक्ता वर्णमरुरितीश्वरीति सुषिरशब्दः आकाशबीजम् ।

p. 51)

घोषवर्णं तेनायमर्थः । एवं विधमेतद्यन्त्रं मन्दिरसंज्ञाक्षरस्य मध्ये कृत्वा तेन च क्षकारेण

सहितमेतद्यन्त्रं सुषिरसंज्ञितस्य हकारस्य मध्ये निक्षिपेदिति। अत्र हक्षाभ्यां स्वर व्यञ्जन व्यामिश्रमयीं सप्तकोटीश्वरीं महामातृकां लक्षयति। अत एव शक्तिबीजयन्त्रविन्यासो बोद्धव्यः। प्रथमं कर्णिकास्थाने पूर्वोक्तं वाग्भवयन्त्रमालिख्य तदभितः षोडशद्वादश षोडशद्वात्रिंशदराणि चत्वारि मण्डलानि वि * * * नि। तत्र प्रथममण्डले एकैकस्मिन् दले एकैक स्वर इति षोडशस्वरा विन्यासनीयाः। अनन्तरं द्वितीये द्वादशारे षण्ण चतुष्टयवर्जितानां प्रत्येकं कामराजाख्य कलाकार युक्तानां द्वादशानां स्वराणां यथा क्रमन्यासः। तृतीय षोडशारे प्रत्येकशक्तिसंज्ञित सकार संयुक्ताः। षोडशस्वरा अपि निधेया चतुर्थे द्वात्रिंशारे एकैक सकार एकारबिन्दुनादोपेता महायोनि सन्त्रिताकादि सान्ता द्वात्रिंशदिति एवं विधं यन्त्रं वेष्टयन्तं क्षकार मालिख्य तमपि वेष्टयते। हकारं लिखेदिति चक्रेऽस्मिन् शक्तिबीजं तु ध्यायेद्वै साधकोत्तमः। एषा रक्षामया प्रोक्ता नाम्ना त्रिपुरभैरवीति सुबोधम्।

p. 52)

कन्या नाम समोपेतो बिलद्वारं समाश्रितः।
योनिकुण्डादधस्थाप्य होमयेद्राजिका पुटैरिति।

योन्याकार कुण्डमयमर्थः। योनागकन्यकाः कामयते स तासां नामानि मनसा संकीर्तयन् बिलद्वारं समाश्रित्य योन्याकृति च किमपि कुण्डं खात्वा तस्य चाधोयन्त्रं निधाय सर्षपैर्भव्यवाहं तर्पयेदिति सप्तरात्रां महादेवि क्षुभ्यन्ते मदनोत्कटाः। विरहानल सन्तप्ता मूर्छा कुलितविग्रहाः। पतन्ति साधकस्याग्रे कन्दमानास्ततस्त्रियः। इति सुगमं भो साधकमहासत्वहाटकेश्वरविग्रह प्रविश्य साधकैः साध्यमधिकारं कुरुष्वन इति भोसाधकेति नागकन्यकान्यां यन्त्रबलाकृष्टानां वचः प्रविश्य क्रीडते सोपि यावदाभूत संप्लवमिति

सुबोधम्।

॥ इत्युत्तरषट्के विवरणे द्वितीयः पटः ॥

अथ स्थूलसूक्ष्म विभिन्नायां श्रीत्रिकविद्यायां स्थूलविद्यां वाग्भव कामराज शक्तिमयीं यन्त्रादिभिः सह विशेषसहितां निरूप्येदानीं केवलविशेषमयीं सूक्ष्मरूपां शुद्धविद्यां तत्प्रसङ्गेन श्रीमृत्युञ्जयसारः। श्रीमदमृतोद्योतोक्त महागुरुमण्डल श्रीमेरुक्रमदेवता स्वरूपसम्भूतं पदादि सङ्केतमक्षरार्थसङ्केतं श्रीमन्

p. 53)

महामातृकामयं कुलचक्रं च व्याकर्तुमारभते।

विशेश विद्यादेवेशि कीदृशी कुलगोचरे।

कीदृशत्वक्षरार्थं च पादादीं कीदृशं तथा॥

कुलचक्रं कीदृशं तु कथयस्वकुलेश्वर। इति।

एवं चतुर्णां प्रश्नानामत उत्तरमनुक्रमेण व्याकरम्।

वैषिकं समुद्धारं त्रिकस्य शृणु सुन्दरि।

यन्नज्ञानं सुरेशानि ब्रह्मविष्णवीश्वरादिभिरिति।

सुबोधम्।

अपरा च परा चैव तथैव च परापरा।

त्रिकविद्या क्रमस्यैताः शक्तयः कथिताः पराः इति त्रिकविद्याक्रमस्य
वीर्यभूतत्वादिमाविशेषरूपाः शक्तय इति कथिताः। नादरूपा परावर्णो परा ब्राह्मीपरापरा।

गुरूपदेशतो ज्ञेया त्रिकविद्यामयोद्धृता इति।
प्रस्तार रहिता विद्या पापसङ्घक्षयंकरी इति।
नादोघोषः परा तत्स्वरूपा अवर्णस्वरूपा ब्राह्मीत्याकारः।

सा परापराख्या वाग्भवादि बीजत्रयविधुरा इयमेव केवला त्रिकविद्या। केवलं
गुरूपदेशैकगम्या। प्राकतनस्य च पीठस्य मन्त्रमयीर्य स्वरूपिणीति। प्राक्तनं
पीठमोढ्याणाख्यम्। तस्य मन्त्रप्रणवः।
तस्य वीर्यत्वेन निविष्टा। अनेन घोषाद्यवर्णब्राह्मी

p. 54)

सहितस्य प्रणवस्य रूपं सादाख्यं सूचयति। इति विशेषविद्यां सामान्येनाभिधाय तद्भेदान्
विवरी तु मुपक्रमते। विशेषविद्ययेदानीं विद्याभेदं च भैरवि। कथा यम्यद्यदेवेशि शृणु
वीरेन्द्रनायिकेति। इति सुबोधम्।

परापरा परादेवी अपारा च तथा क्रमात्।
वाग्वादिनीति कथिता सर्वविद्योत्तमामता। इति।

ब्राह्मी घोषवर्ण स्वरूप चक्रमयी विद्या वाग्वादिनीति यावत्।

तथा च वा * व्याहृतवन्तं लोकोब्रवीति।

ब्राह्मी माहेति परापरा पराक्रमा विद्येश्वरेश्वरी।

भैरवीति मया प्रोक्ता इति पराघोषः अपरा वर्णाः परापरा ब्राह्मीतीयमानु पूर्वी भैरवी विद्या आश्चर्यभूतो विभवः स्फुरमन्दानन्दसन्दोह तदद्भुतस्यात्मरूपस्यापरो क्षिकारः। तं ददातीति। यावत् तथा चाश्चर्यविषयोपलम्भात् सम्भूत प्रमोदातिरेकादस्य वश एव लोको व्याहरतीहेति भैरवी व्युत्क्रमा विद्यायमराज्ञीति सम्मता।

मारणेति प्रशस्ता सादारणा यमहान्वितेति।

अनन्तरं सूप्रवरसूत्रे कथितस्य भैरवी विद्याक्रमस्य विपरीतानुपूर्व यमराज्ञीति संज्ञता विद्या वै परीत्यं च ब्राह्मी प्रथमघोष पाठक्रमपदादरुणेति भातृव्यखेदासीनि कृत्वा यमहायमस्येयं हि सिद्ध विद्येत्यर्थः। तथा चदर्वी

p. 55)

विषहतः ख * * * त्वर्यमुपहतः कोशति जनः। अः इति

वायादिनि वै सौम्या विद्या स्वात्मप्रकाशिका।

सौरेति कथिता देवि परमात्मप्रसाधिकेति।

अत्राद्यवर्णघोषवाग्वादिन्याः क्रमवैलोम्यम्।

विद्या चतुर्विधा देवि चतुर्वर्गफलप्रदा।

ज्ञानेनैव हि विद्येषा सिध्यत्येवाज्ञया विनेति।

चतुर्वर्गफलदातृत्वमेकैश शोविज्ञयः।

ज्ञानेनेति विद्याद्भुत प्रभावादेव विचार्य विहिता भूतवशाक्तमन्त्रादिमयीमाज्ञां परिज्ञमात्रादेव सिध्यतीत्यभि प्रायः। विद्यानामपि मन्त्राणां मुद्राणां मण्डलात्मनाम्। वीर्यमाहेति विद्येषा पराज्ञापरमेश्वरीति। अत्रहेति श्लोकबन्धानुरोधपरमत्वेन परादिशक्ति विज्ञान विशेषभूतां साधकस्योपरि ग्रहणमभिवाञ्छति न तु वाग्वादिन्यास्य क्रम विशेषमभिप्रैति। इयमेव सर्वेषां विद्यामन्त्रमुद्रामण्डलानां तत्तदात्मीयकार्य कारणेपिर्य भूता एतद्विज्ञानमात्रोप ब्रह्मितः साधकेन्द्रः विद्यादिभिरन्यैरपि तत्तत्कार्यकर्म संपादनेष्वयत्नेनैवाधिकं प्रभवतीति तात्पर्यार्थः। अत्र हेतुरियं पारमेश्वरी वा ज्ञेति।

इदानीक्रम प्राप्तमक्षरार्थं व्यावर्णयितुमाह।
अक्षरार्थोपदेशं ते कथयामि शृणु प्रिये।

p. 56)

अपि देवा न जानन्ति कल्पकोटि शतैरपि।

त्रैपुरविद्याबीजभूतानां वाग्भवकामराजशक्तिबीजाख्यानामक्षराणां विनिमय रूपेणाग्न्यादि देवता रूपोयोर्थः। प्रकाश्यते। सोक्षरार्थः। तत्र प्रथमं वाग्भवविनिमय

रूपजातवेदो वाचकं मन्त्रमुत्थापयति।
श्रीकण्ठो वालीशश्चैव महाकालस्वनन्तरम्।
उद्धृतः सहजो मन्त्रो दिव्यो वै जातवेदस इति। अकार श्रीकण्ठः। यकारो वालीशः। मकारो महाकालः। एतेनेदं शब्दस्य प्रलिङ्ग प्रथमाविभक्त्यैकवचनान्तस्य रूपं मन्त्रो

भवति। अत्रावर्णऽयोनि बिन्दुरूपो हि वाग्भवस्य क्रमः।

तत्राद्यन्तवर्णयोर्यथावस्थितक्रममध्य पदस्य योन्याख्यस्यापि शीतसंहिता रूपावस्था वर्ण इवार्णात्मकत्वेन द्विरूपत्व सम्भवा। तद्विमय भूतं वर्णात्मक क्रमापद्य तत्संहिता रूपं यकारं मध्यमं कृत्वोच्चरं यद्येवमात्मको मन्त्रो भवति। अयमिति। तथा च साक्षच्छ्रुतिः। अयमग्निः प्रथमाजा ऋतस्येति सोयं लोकाः सोयमग्निरिति। अयमग्निर्दैश्वा नर इति।

अथ कामराजस्य विनिमयमाह।

महोकालोथ * ण्डीशः पीनाकी क्रोधभैरवः।

मन्त्रोयं परमानस्य योगिनी मेलनप्रद इति।

p. 57)

महाकालोमकारः। झण्डीशोयोनिः। पिनाकी ल कराः। क्रोधेश्वरः। ककार इत्यनयानुपूर्व्यापवमान वाचको मन्त्रः प्रकाशितो भवति। योगिनी मेलनप्रद इति योगिनीभिः पीठेश्वर्यादिभिः साधकेन्द्रस्य मेलनं सामरस्यमापादयतीत्यर्थः। इह कामराजान्तिम भूतमनुस्वारमादौ कृत्व तृतीय चतुर्थयोराकारं या क्रमं हितैव संहितारूपतया योनीबीजतामापाद्य द्वितीय तृतीयता प्रथमस्य ककारस्य चतुर्थां चोद्भाव्य विनिमयः कृतो वेदितव्यः। पवमानो हि द्वेधा वति। प्राणोपानश्च प्राणोग्निः अपरान आदित्यः। तदुभयमेलनात्तद्वाको मन्त्रो मेलकेत्येव रूपो भवति। अधुना शक्तिबीजस्याक्षरार्थं दर्शयति।

श्रीकर्णश्च भृगुश्चैवानुग्रहेशमनुस्वयम्।

मार्ताण्ड भैरवस्यास्य कथितस्ते मृगेक्षणे इति।

श्रीकण्ठ सुवाद्यवर्णः ग्रगुः सकारः। ओकारोनुग्रहेशः।

अत्र घोषस्य स्थाने आद्यवर्णविन्यासः।

तथा च श्रीनिश्वासकारिकायाम्।

अकारश्च हकारश्च लोपेतावेकरूपिणाविति। एतेन पुल्लिङ्गिनोदः शब्दस्य प्रमैकविभक्त्यं तस्य रूपं मन्त्रो भवति। अत एव विभक्ति लोपान्नात्र विसर्जनीयोच्चारः। असौ सौरो मन्त्रः। तथा च शृतिः।

p. 58)

यो सौ तपन्नुदेति। असावादि तु। एकविंशति च केवलं परायाः शक्तेः सोमसूर्यवह्निमयवि * तैजस प्राज्ञपुरत्रयसन्धुक्षण्या भट्टारिकायाः वाक्यं व्यावर्णाद्य परमशिवप्रधानमन्त्रस्य हंसस्य विषयानु रूपेणाक्षरार्थं दर्शयितुमुपक्रमते। महाकालौह सर्गौ ब्रह्ममित तेजसः। व्यापकस्य त्रिधाम्नां च मन्त्रोयं वीर्यवत्तर इति। महाकालो मकारः। हविसर्गौ घोषविसर्जनीयौ अत्र श्लोकबन्धमनुस्मरन् क्रमलोपेतमेवा चिकीर्ष इन्द्रबीजानामेव साकल्येन केवलमुपग्रहं करोति। न पुनर्व्याक्रियमाणस्य मनोरक्षरक्रमोप्ययमिति सन्दर्शयति। तथा च श्रीमूलावतारे दृश्यते। ईहं रूपमास्थापयेति। तत्र भ्रू मतिभिमन्त्र क्रमम्। श्रीमते ईरह ईलकं चैव ईरस्तं च वरानन इति। अत्र हीं क्लीं स्त्रीम् इति भिमन्त्रक्रमः। ततश्च ब्रह्मभूतस्य त्रिधाम्नां सोमसूर्यादीनां व्यापकस्य च अमितस्य तेजसः। अक्षरार्थत्वेन प्रतिपादितत्वात् तत्प्रतिपादन क्रमस्य महच्छन्दमन्तरेणान्यस्य चिन्मात्र विनियामात्मकस्या सम्भाव्य मानत्वात् तदनुरूप एवाक्षरक्रम उत्प्रेक्षणीयः अयं हि हंसस्य उद्धारसिद्धः क्रमः। प्रथमो

घोषः द्वितीयो भवः। तृतीयो मकारः। चतुर्थो भृगुः।

p. 59)

पञ्चमस्य भव इति तस्य मकार भव श्रीकण्ठ भृगुरूप मन्त्रक्रम विनिमयो ज्ञेयः। तत्र भृगोर्विसर्जनीयमत्वं मन्त्रावसानत्वादावपनीयः। क्रमेणानेन मन्त्राणामुच्चारे कुलदेवताः। कुप्यन्ति साधकानां च धातृन् गृह्णन्ति भैरवीति। अनेनेति। अक्षराक्ष प्रमाणदर्शितेनायमर्थः। एवं विधं क्रममङ्गी कुर्वता साधकानामग्न्यादि देवता प्रकारोपनिमित्तः। प्रत्यवायो भवति। तर्हि्कः।

क्रम आ श्रीयतामित्याह।

तेजोनामविपर्यास सिद्धं गुरुमुखोदितम्।
वाग्भवं कामराजं च शक्तिं हंसं तृश्वेरम्।
जीवन्ति ये महात्मानः शीघ्रसिद्धि भवन्ति ये।
देवताश्चानु गृह्णन्ति कुलचक्राश्रया इति।

अक्षरार्थतया प्रदर्शितानिभि वायु सवित्र तेजांसि तेजः शब्दाभिधेयानि तेषां नामानि क्रमादयं मेलकोसौ मह इति चत्वारि एषां विपर्या स उद्धारक्रमदर्शितः। वाग्भव कामराजशक्तिबीजहंसाः। एतानङ्गीकृत्य पूर्वोक्तानि नामानि भित्वा जपतां श्रेयः सिद्धिर्भवति। दैवतानि हि यथावस्थितैरेव नामभिरुच्चार्यमाणैरुपास्य मानानि प्रीतिमुपायान्ति तथा च लोकिका अ स्वनामधेया नाम प्रौढजन स्फुटोच्चारणादपि बाल

p. 60)

जनोद्गीर्णैरनति स्पष्टविप्लुताक्षरैर्वा लापैः प्रीयमाणा दृश्यन्ते। तथा च श्रीतिः। इन्द्रोनामेन्द्रो भवैनामेन्द्रं सन्तमिन्द्र इन्द्रादी च क्षते परोक्षेण परोक्ष प्रिया इव हि देवा इति। प्रजायेमभिरुद्र प्रजाभिरिति ब्रूया न रुद्रेत्ये तस्यैव नामनः। परिभृत्यै इति च। इत्यक्षरार्थ

सङ्केतमुपदिश्य पदादि सङ्केतमाह।
पदाद्यक्षरसङ्केतं वदामि शृणु भैरवि।
सर्वमन्त्रानुसन्धाने फलसम्पत्तिकारकमिति।

तत्र वाग्भवकामराज शक्तिरूपं बीजरूपेण त्रिपादीह विद्या। अतस्त्यान्येव बीजानि पादशब्दाभिहितानि तेषामाद्यक्षराणि श्रीकण्ठक्रोधनाथ लकुलीश्वराख्यानि तेषु यथा सम्भवं सकलामाकोपग्राहकत्वेन परमेश्वर विभतोयः सङ्केत समयः। स पादाद्यक्षर सङ्केतः स तेन सकलमातृकोपग्राहकं पदाद्यक्षरस्वरूपमिति। * * मामनुसन्धाय विद्यामिमामपि परिशीलयत्तन्मातृकामयत्वेन मन्त्रग्रामस्य समस्त मन्त्रानुसन्धान फलसंपत्तिर्भवतीति तात्पर्यार्थः।
श्रीकण्ठोनादि भूतेन वाग्भवस्य कुलेश्वरि।
उपात्तं निखिलं बीजं चक्रं सारस्वतं महदिति॥

बीजचक्रमिति। षोडशस्वरा न भवान्छन्ति तत्र श्रीकण्ठेन

p. 61)

प्रथम पदादि भूतेनेतरेषां स्वराणामुपग्रहोदर्शितः।

आद्येन क्रोधनाथेन कामबीजस्य सुन्दरि।

आहृतं योनिचक्रं तत् सर्वकामफलप्रदमिति क्रोधनाथो व्यञ्जनः। प्रथमवर्णेनेन द्वितीयवादि भूतेन द्वात्रिंशत्संख्य संज्ञं सान्तं योनि चक्रतद्वर्ण कदम्बमवरुध्य वेदितम्।

आद्येन लकुलीशेन शक्तिबीजस्य सुन्द *

पादविद्या समुद्दिष्टा सर्वविद्या क्रमागता इति।

तृतीयपादादि भूतेन लकुलीशेन हकारेण तेन स्वरव्यञ्जना वा मिश्रमयं सप्तकोटीश्वरी संज्ञितां महामातृकापग्रह्णाति सैव पादविद्या भक्षवर्णमयी चरणविद्येति यावत्। तथा च श्रीमते। भक्षस्थापदसंज्ञेति पादविद्याया व्यामिश्रं मातृकामयत्वं श्रीसप्तकोटीश्वर्याश्चरण विद्यायास्तथाविधरूपत्वं च परमरहस्यत्वान्नेह प्रतन्यते। तेषां पदादीनां त्रयाणां वर्णानां मेरु क्रम देवतारूपत्वं परमरहस्यत्वाद्दिव्या ज्ञातिकमभयेन नेह प्रदश्यते।

व्याप्तिलक्षणम् -

इति पादविद्या श्रीकुलद्धकं विवृणोति। इदानीम् कुलचक्रस्य शृणुत्वं व्याप्ति लक्षणमिति।

कुलचक्रं मातृ * * * कावचम्।

तथैवात्रैव तन्त्रेषु पुरस्तादुक्तम्। पूजयेत्कुलपद्ममिति।

तच्च त्रिकोणरूप प्रस्तारमिह प्रकाशयितुमुपक्रान्तम्।

p. 62)

अतस्तस्य विद्यायाभिव्याप्तिः। तस्य लक्षणं व्याप्तिलक्षणम्। रुद्रभैरववीराणामिति।

आदिक्षान्तानुपूर्वी विशिष्टो वर्णः। रुद्रास्तद्विपरीतक्रम विशिष्टा भैरवाः। अकारादि

सकारान्ताः पञ्चविंशति वर्णाः क्षादिभिर्नावसानैर्वामिता वीराः। तेषां सर्वस्वमे तदेव हि मातृका चक्रम्। तेषां क्रमवैचित्र्याणां मूलभूतमिति कृत्वा सर्वस्वमिति वदति।

योगनीकुलमिति मातृका समूहस्य संज्ञा।
हृत्पद्ममध्यकुहरेऽत्र कोणे भावयेत्सदा॥

अकारादि विसर्गान्ताः सव्यरेखा विभाविता इति।
अत्र त्रिकोणमयः प्रस्तारः तत्र सव्य रेखायां षोडस्वरा विन्यस्तव्याः। कोटिचन्द्रप्रतीकाश वाग्भवेन सुपूजिता। तेषां स्वरूप भावना प्रकारः। वाग्भवेन सुपूजिता इति। अनेन तेषामर्चनमन्त्रो वाग्भव इति दर्शयति ककारादि तकारान्तादक्षरेखाश्रयाः प्रिये। अनेक भास्करप्रख्याः कामराजाश्रयाक्षरा इति। अस्य च पूर्ववत् प्रक्रिया। थकारादि सकारान्ताः पूर्वरेखा समाश्रयाः। विद्युत्पुञ्जनिभा श्रेमाः शक्तिबीजेन सम्मता इति।
अस्यापि पूर्वदेवार्थः। मध्ये कुलाकुलादेवी द्वीपा विद्या प्रतिष्ठिता। इन्द्रचापप्रभा चण्डी हंसमन्त्रभाविनी।

p. 63)

गुरूपदेशतो ज्ञेया नाधितागमकोटिभिरिभिः।

अस्य सव्यदक्षरेखामयस्य सोमसूर्यवह्न्यात्मकस्य मन्त्रात्मनो विद्या पादत्रयमन्त्राभ्यर्चितस्य त्रिकोणस्य मध्ये पादादिविद्या विन्य * नीया। तस्याः कुलाकुलेति च नाम। चण्डीति सप्तकोटीश्वरी विद्या एकदेशो पादानेन पादविद्या अपि तन्मनत्वं प्रकटयति। अस्याश्च हंसो मन्त्रः। एवं वाग्भवादि पादत्रयाभ्यर्चितमातृका पङ्क्तित्रयमध्ये वर्तन्याश्चरणविद्याया अक्षरार्थ

प्रकरण प्रदर्शितस्य त्रिध्या व्यापकस्य हंसस्याभ्यर्चनमन्त्रतामुपदिशन् वाग्भवादिभ्योऽपि प्राधान्यं सूचयति। कुलचक्रमयी मूर्तिस्वदीया चाक्षमालिका। तथा विधा द्वतीय कमलानुग्रहीतं च पुस्तकं च त्वन्मयमेवेति। इत्थं हृत्पद्ममध्ये तु ध्यातव्यं सर्वदा प्रिये। योगिनां योगिनीनां च विद्यासिध्यर्थमुत्तमम्।

कुलचक्रं महादेवि त्वत्सेनहात् कथितं प्रिये।
आज्ञाधारे सदा देवि भावयेद्यः कुलेश्वरि।
तत्स्वाधीनं भवत्यागुस्थावरं जङ्गमं जगत्।

सर्वदाकुलस्तु योनौ प्रयतमानसः। योध्यात्यस्य योगिन्यो जायन्ते मदनातुराः। इत्यनेन प्रकारेण कुलचक्रस्य हृत्पद्म आज्ञास्थान मूलधारसंज्ञित

p. 64)

आधारत्रये हि ध्यातस्य क्रमात् सारस्वत सिद्धिर्जगत्

प्रभूता योगिनी वन्द्यताभिः फलवत्वं दर्शयति।
कुलचक्रं तु विज्ञेयं दिव्यदेहं शिवस्य तु।
शास्त्राण्यन्यानि मन्त्रांश्च पादपांसुमिव त्यजेत्॥

इदं चाति रहस्यं तु कथितं ते मृगेक्षणे।
कर्णात्कर्णे प्रयोक्तव्यं न च लेख्यं च पुस्तके।
देयं वीरप्रतायेदं हृष्टाय सततं प्रिये॥

भक्ताय देशिकेन्द्राणामुन्नताय स्थिर वृते इति ।
चक्रस्यमभिमानमेवं विस्तरेण वर्णयन्नुपसंहरति ।

॥ इत्युत्तर षट्कविवरणे तृतीयः पटलः ॥

इति विशेष विद्यां प्रसङ्गा गतानक्षरादिश्च प्रकटयानन्तरं त्रिपुरायोगाख्यमन्तर्यागं वक्तुमुपक्रमते ।

॥ त्रिपुरायोगम् ॥

अथातः संप्रवक्ष्यामि त्रिपुरायोगमुत्तमम् ।

हृद्व्योमपद्ममध्यस्थं हंसाख्यां नाम नामतः । इति ।
हृत्पद्मं व्योमपद्मं चेति हृद्व्योमपद्मयोर्मध्यसितं हृद्व्योमपद्ममध्यस्थं व्योमपद्मं नाम बिन्दुस्थानादुपरि योगपीठसंज्ञितं महापद्मवनं नामशब्दः प्रसिद्धौ । अयमर्थः ।
तत्किलानामतो हंस इत्याख्यायते ।

p. 65)

तद्धृत्पद्ममध्ये च तिष्ठति । व्योमपद्ममध्ये च न केवलं हृत्पद्ममेव हंसस्य स्थानं व्योमपद्ममपीति तात्पर्यार्थः । तथा च हंस परमहंसस्थान तथा द्वयमप्ये तत् श्री कुब्जिकामते समुद्धुष्यते ।

षण्णवत्याः परो हंसः स चाम्नाय विदो विदुः।
सिद्ध कौलाभिपन्ना नामितराणां न दर्शनम्॥

तत्र दिव्यक्रमं पूज्य पादचारेण योगिनः।
तेन गच्छेन्निराधार तत्पदं परमं पदम्॥

द्वादशाधार मूर्तिस्थानमिति यदेतत् परमं बीजं हंसाख्यं हृदि संस्थितमिति च।

हंसाख्येन हंसकाराख्यं वर्णद्वयमुपगृह्यते।
योगपीठासनासीनं चामुण्डा चण्डिकायुतम्॥

यद्यपि चेदहंसाख्यमुभयाधिष्ठानं तथापि।

अत्र योगपीठासनासीनं कृत्वा चामुण्डया ओकारेण चणिकया विसर्जनीयेन संयुक्तमापादयेदित्यर्थः।

योगपीठं नाम व्योमबीजः तेनैव कल्पयेत्।

प्रेतं सादाख्यं परमेश्वर इति ततोनन्तरोक्तेनमनुना सादाख्यं परमेश्वरं प्रेतं कल्पयेत्। अयमर्थः। अनन्तरं शक्तिबीजमुच्चार्य ततो नमोन्तेन सदाशिवं महाप्रेतानायेत्यनेन प्रेतासनं कल्पयेदिति।

p. 66)

तस्योपरि न्यसेन्मूर्तिं नादबिन्दुकलामयीमिति ।

तस्येति प्रेतं परामृशति । * दोनाम लकुलीश्वरः ।
बिन्दुरिति । संवर्तनाथः । अनयोः कलां तं मयीं पञ्चाशद्वर्णमयीति यावत् । हकारस्य हि
कलाः षोडशस्वराः । क्षकारस्य हि कादयर्थान्ताः । स * लेनैव मन्त्रेण वक्राण्यङ्गानि
कल्पयेदिति यावत् ।

ध्याये दूपं महेशान्या निश्चलेनान्तरात्मना ।
उदयार्कसमप्रख्यां किरणानेकसङ्कुलाः ॥

बन्धूक कुसुमच्छायां सिन्धूरारुणविग्रहम् ।
रक्तवस्त्रावृतां देवीं सर्वाभरणभूषिताम् ॥

जटाजूटधरां सौम्यां मध्येन्दुकृतशेखराम् ।
सर्वलक्षणसंपन्नां पर्यासनसंस्थिताम् ॥

आपीनमण्डला भोग समुन्नत पयोधराम् ।
वलीतरङ्ग मध्यस्थां रोमराज विभूषिताम् ॥

मदिरानन्द चैतन्यामाह्लाद जननीं पराम् ।

त्रैलोक्य मोहनीं देवी मीषत्प्रहसिताननाम् ॥

दिव्यरूपधरां देवीं द्विनेत्रां तु शिवां पराम् ।
सर्वालङ्कारसंपन्नां व्योमपद्मासनस्थिताम् ॥

वामहस्तनिविष्टेन दिव्यज्ञानमये न तु ।

इत्येतदन्तं सुगमम् ।

p. 65)

दक्षिणेन समुद्रेण सूर्यकोटिसमप्रभाम् ।

अक्षमालां च हस्तेन सम्बद्धमुद्रेणेति व्याख्यानमुद्रातया सहितेनेति यावत् ।
सूर्यकोटिनिभैर्मुण्डै स्फुरत् ज्वालावली धरैः ।

ग्रन्धिता दिव्यरूपां तु रक्त बिन्दुप्रमोचनीम् ।
चण्डविद्यामयीं मालामपादतललम्बिनीम् ॥

गलेन विभृतीं देवीं चिन्तयेल्लोकमातरम् ।

एवं ध्यात्वा महादेवीमिति या किलसूर्य बिबनिभत्वादि युक्ता मुण्डमाला सा चित् चण्डिका विद्यामयी चण्डिविद्यानाम स्वरव्यञ्जन व्यामिश्रमयी माहामातृको सा हि मण्डमालारूपेण

परिणतया पारमेश्वरीं मूर्तिमाश्रिता चण्डिकास्तीति कदम्बवन मध्यगामिति। तत्रासनताङ्ग तस्य महावन संज्ञितस्य व्योमाम्बुजस्योदरे यत्कदम्ब गोलकमिति पुरा कथितम्। तत्कदम्ब शब्देन प्रतिपादयति तदेव वन प्रभावृतां निरन्तरतया वनमिति भावः। उक्तं च श्रीमतोत्तरे। अनेकार्चिः समाकीर्ण कदम्बवनस्थिताम्। इति

ऊर्ध्वमार्गस्थितं पद्मसहस्रदलसङ्कुलम्।
वर्षन्तं मृतोघेन द्रवल्लाक्षारुण प्रभम्।

तेनैव प्लावयेद्देवीं परेणैवामृतेन तु इति। अत्रोर्ध्व

p. 68)

मार्गशब्देन महापद्मवनादुपरितनं द्वादशमाचष्टे।
ततः श्री कमन्निन्ने श्रीमते प्रकाश्यते।
द्वादशान्ते परं प्रोक्तं सूक्ष्मं वै ब्रह्मरन्ध्रगमिति।
तत्र तस्मिन्नमृतद्रवोपि तत्रैव दर्शितः महारन्ध्रो परिस्थिता तु द्वादशाङ्गुलभामिनी।
द्वादशान्तोर्ध्वगा तस्मिन् प्रद्रवन्तीति सास्मृतेति द्रवल्लाक्षारस प्रभेति एवं विधं पद्मं ध्यात्वा तदुद्भवेन परामृतेन देवी माप्लावयेदित्यर्थः।

एवमभ्यस्य मानस्य साधकस्य महात्मनः।
त्रैलोक्यं क्षुभ्यते सम्यक् नान्यथा वीरवन्दिते।

इति सुबोधम्। अत्र त्रिकविद्याया च सा द्विविधा सम्भवति वाङ्मयी ज्योतिर्मयी चेति।

तत्र वाङ्मयी वर्णस्थान प्रयत्नाभि व्यङ्ग्या वैखरी स्वरूपा प्राण प्रावृत्तिनि बन्धना भवति। सैव पादत्रयात्मना यथावं निर्दिष्टा। ज्योतिर्मयीति नाम आधार हृदयं ब्रह्मरन्ध्र संज्ञे गुहादितये क्रमादुदय लय विश्रामरूपानुच्चार * ष्मामाणापरामध्यमा पश्यन्ती संज्ञिता सद्योदित स्वाभावा अध्यात्महारती विद्या। तथा च श्रुतिः। तिस्रो वाचः। प्रवदज्योतिरग्रा इति। चत्वारि वाक् परिमिता पदानि तानि विदुर्ब्राह्मणाये मनीषिणः।

p. 69)

गुहा त्रीणि निहितानेङ्गयन्ती तुरीयं वाचो मनुष्या वदन्तीति। तस्या एवं विधाया भावनाप्रकारमाधान भूतानि उदयविश्रमस्थानानि चत्थयितुमारभते।

मन्त्रध्यानं कथं प्रोक्तमुत्थानं च कथं भवेत्।
लयः कस्मिन् भवेद्देवि विश्रामश्च कथं भवेत्॥

एतत् कथयदेवकारुण्येन महा प्रभो। इति सुबोधम्।
तत्रोदधविश्रमस्थानानुरूपत्वान्मन्त्रध्यानस्य
प्रथमोद्देशेऽपि पूर्वमुदयानि स्थानान्येवमाह।
आधारे उदयं देविलियं हृदयमध्यगम्।
विश्रामं ब्रह्मरन्ध्रे तु त्रिलक्षं परिकीर्तितम् इति।

उद्यमरूपेण सकलमन्त्रवीर्यभूतस्य स्पन्दनस्य प्राथमिक आविर्भावं लयो विशेषवासः। जुषमाणेन चोद्यमात्रेण रूपेणैका कारतयो स्थितस्य चिणि चिण्या देशनात्मना बहुविधभावः। उक्तं च श्रीमते।

चिणीति प्रथमः शब्दश्चिणीति द्वितीयकः।
वीरवाकी तृतीयस्याश्छङ्ख शब्दश्चतुर्थकः॥

पञ्चमं तन्त्रिनिर्घोषं षष्ठं शंखं तथा।
सप्तमं कंसतालं च मेघशब्दं ततोष्टमम्॥

नवमं वह्नि निर्घोषं दशमं दुन्दुभिस्वनम्।
हननेन विना जातमहाहतमिहोच्यते इति॥

p. 70)

विश्रामो विरामः ज्योतिर्मय्या विद्याया त्रिविधोच्चार श्रीमतो प्रकाश्यते।

शुद्धद्वन्द्वजसङ्कीर्ण उपदेशस्त्रिधा स्थितः।

उद्भवे शुद्ध इत्युक्तो विशेषोर्द्वन्द्वजस्मृतः संकीर्णे लयः संस्थोपि उपदेश त्रिधा इति त्रिलक्षणं परिकीर्तितमिति। उदयादि स्थानानि त्रीणि लक्षणानि तानि च साधकानां मन्त्रवीर्यरूप * * * क्षणीयत्वाल्लक्षणीति कथ्यते। इति ज्योतिर्मध्या विद्याया उच्चारक्रममभिधाय तत्स्वरूपमभिदधाति।

आधारगुदमित्युक्तं रक्तकिञ्जल्कशोभितम्।
वाग्भवं तस्य मध्ये तु विस्फुरं * * प्रभमम्॥

हृदये कामराजं च द्रवल्लाक्षारसप्रभम्।
ब्रह्मरन्ध्रे तु शक्त्याख्यं द्रुतपारतसन्निभमिति।

श्री त्रिकविद्या आधार हृदयब्रह्मरन्ध्रेषु क्रमादुदय विश्रामलयान् हजमाना तटिल्लाक्षारसपारत प्रभा वा वाग्भव कामराज शक्तिबीजसंज्ञिता ज्योतिर्मयी विद्या भावयितव्येति। मन्त्रध्यानं महादेवि सिध्यते ब्रह्महायदि। तव स्नेहान्मयाख्यातं न देयं यस्य कस्यचित्।
इति मन्त्रध्यानस्येयं प्रशंसा।

जपेन्मन्त्रवरं श्रेष्ठं योन्यासन सुसंस्थितः।

p. 71)

निस्तब्धं कुञ्चिदं कायं न भूतं न विलम्बितम्।

योन्यासनं नाम पाट तलद्वयमितरे तरेण सन्धायतदुरि शरीरस्य संस्थितिः। कुञ्चितं कृत्वा कुञ्चितमित्यत एवं कृतं कायं कृत्वेति योज्यम्। अक्षाराक्षरसन्तानं निःसन्दिग्धमना जपेत्। इति। अक्षरेणाक्षरस्य सन्तति रविच्छिन्ना यथा भवति तथा जपेत्। इत्यर्थः।

तद्गतस्त्वेक चित्तस्तु न्यासं कृत्वा यथोदितम्।
देव्यास्तु पुरतो लक्षं कृत्वा लक्षत्रयं जपेत्॥

रक्ताश्वमारपुष्पैस्तु गुलाज्यक्षीरसंयुतैः।

कुण्डे योन्याकृतौ देवि जपान्ते जुहुयात्ततः ॥

पूर्वसेवाकृता तस्य भवत्येव न संशयः ।
अनेन विधिना युक्तो मन्दभाग्योपि सिध्यति ॥

मुच्यते सर्वरोगैस्तु असाध्यमपि साधयेत् ।
अत ऊर्ध्वं जपेद्यस्तु साधको वल्लभे शृणु ॥

लक्षमेकं जपेद्यस्तु तद्गतजितेन्द्रियः ।
दर्शनात् क्षुभितः सर्वा योषितो मदना तु राः ॥

पतन्ति साधकस्याग्रे निर्लजाभयवर्जिताः ।
द्विलक्षेण जनाः सर्वे एतस्मिन्विषयस्थिताः ॥

आगच्छन्ति यथा तीर्थमत्यन्ता कुलविग्रहाः ।
ददन्ति तस्य सर्वस्वं तस्यैवा श्रेष्ठसंस्थिताः ॥

p. 78)

त्रिलक्षैस्तु तथा जप्तैमण्डलीकः स मण्डलः ।
वशं नयन्ति ते सर्वेनात्र कार्याविचारणा ॥

षड्भिर्लक्षैर्महीपाल स सहृत्य बलवाहनाः ।

लक्षैर्द्वादशिजप्तैर्यक्षरक्षो गणेश्वराः ॥

वशमायान्ति ते तस्या ज्ञानं कुर्वन्ति नित्यः ।
लक्षैः पञ्चदशैजप्तैः साधकस्य वरानने ॥

सिद्धविद्याधराः सर्वे गन्धर्वाप्सरसादयः ।
वशमायान्ति ते सर्वेनात्र कार्याविचारणा ॥

दुराच्छ्रवण विज्ञानः सर्वज्ञत्वं प्रजायते ।
शान्ति पुष्टिकरस्तुष्टि कृद्धोमानृयते क्षणात् ॥

तथाष्टादशभिर्लक्षैर्देहेनानेन साधकः ।
उत्तिष्ठं मेदिनीं त्यक्तवा दिव्यदेहः प्रजायते ॥

भ्रूमते स्वेच्छया लोकाच्छिद्रान् पश्यन्ति मेदिनीम् ।
अथ विंशतिभिर्लक्षैर्विद्याधरपतिर्भवेत् ॥

साधकस्तु भवेद्देवि कामरूपी महाबलः ।
त्रिंशल्लक्षैस्तथा जप्तैः सिद्धयोगेश्वरेश्वरः ॥

चत्वारिंशतिभिर्लक्षैर्ब्रह्मा विष्णुश्च शाश्वतः ।
षष्टिजप्तैस्तु रुद्रत्वमीश्वरत्वमशीतिभिः

लक्षकोटितया देवि लीयते परमे पदे।
साधकस्तु भवेद्देवि त्रैलोक्यस्यापि दुर्जयः॥

p. 73)

त्रैपुरं भैरवं तेजः शिवं परमकारणम्।
अक्षयन्तमजं शान्तमप्रमेयमनिपमम्॥

लभते सनसन्देहो देवि सर्वत्वमीप्सितम्।

इत्येतदन्तं सुगमम्।

॥ इत्युत्तरषट्कविवरणे चतुर्थः पटलः॥

नव लक्षं कथं देवस्थानं तस्यापि कीदृशम्।
एतन् मे संशयोनाथ वक्तुमर्हसि शूलधृगिति॥ सुगमम्।
अनन्तरं नवलक्षाणि तत्स्थानानि च वर्णयुतुमुपक्रमे।
सारात्सारतरं मुख्यबाह्यसंख्या विवर्जितम्॥

शरीरे संस्थितं देवि नवलक्षं च दुर्लभमिति।
अत्र बाह्यसंख्या विवर्जितमित्यस्याभिप्रायः॥

लोके हि लक्षः शब्दः संख्या विशेषे प्रसिद्धिः।

इह शब्दार्थौ न भवतीति इह लक्षशब्द वाच्यानि नवस्थानानि गतानि। वक्ष्यमाण दीपशिखाद्याकृतीनि तेजांसि तानि च इह निष्कीलत्रिकविद्याक्षराणां श्रीकण्ठ वाग्भवादीनां रूपाणि।

मेढ्राधारस्वनाभिश्च हृत्कण्ठेबिसलम्बिका।
तथा च भ्रूबिलं चैव नवमं ब्रह्मरन्ध्रगमिति।
आधारशब्दस्य पूर्वोदित एवार्थः। बिलं नामकण्ठमूलम्।

p. 74)

बिसलम्बकानामो पुरितनतालुस्थानं शेषं सुगमम्।

मेढ्रदीपशिखाकारमात्मारे कनकप्रभम्।
नाभिस्थ सूर्यबिम्बं तु तरुणं कुलसुन्दरि॥

हृदि ज्योतिशिखाकारं तदूर्ध्वे भास्कराकृतिम्।
गलेदीपशिखाकारं लम्बिके चन्द्रसन्निभम्॥

भ्रूमध्ये रत्नसंकाशं नवान्ते विश्वतेजसम्। इति।

अनेनाधारगतं तेजोविशेषं व्याकृतं विद्याप्रसङ्गेण सर्वमन्त्राणां पञ्चलक्षणम्।

स्पर्शनं नाममन्त्रेण सहसाधकस्य सम्बन्धः।
तस्यापि चिह्नं कम्पनम्। तच्च हृदिपूर्वं जायते।
अवलोकश्चेति मन्त्रो यदि साधकमवलोकयन्ति।

तदेवावलोकनम्। तस्यापि चिह्नन्धूननम्। तदपि कर्णे भवति। समभाषं चेति मन्त्रो यदि साधकं भाषते तत्सम्भाषणम्। तस्य चिह्नं स्तोभः। साचास्वयं वंशस्य समस्तविद्या मन्त्रपरिकल्पनम्। बिन्दुदर्शनमिति बिन्दुशब्देन मन्त्रस्यात्मा विवक्षितः। मन्त्रो यदि साधकस्यात्मनं दर्शयति। तद्बिन्दुदर्शनम्। तच्च भ्रूमध्ये भवति। तच्चिह्नमणिमादि गुणावाप्तिः। स्वयमावेशनमिति। मन्त्रो यदि स्वात्मनि साधकमावेशयति। तत्स्वयमावेशनम्।

p. 75)

तद्ब्रह्मरन्ध्रो भवति। तस्यापि चिह्नं देहस्योपतनम्। उक्तं च श्रीमते।

स्पर्शनं हृदि संस्थं तु आलोकः कण्ठदेशतः।
तालुस्थाने तु सम्भाषा दर्शनं बिन्दुमध्यतः॥

स्वयमावेशनं देविकं द्विजरन्ध्रेन संशयः।
स्पर्शने कम्पनं ज्ञेयमालोकेधूननं भवेत्॥

सम्भाषे तु भवेत्स्तोभः शास्त्रार्थं चैव मन्यते।

दर्शने तु गुणावप्तिरणिमादि गुणाष्टकम् ॥

स्वयमावेशनं देवि उत्पतेन्नात्र संशयः ।

॥ इत्युत्तरषट्कविवरणे पञ्चमः पटलः ॥

अथ देव्यावाहनप्रकारं दर्शयितुमुपक्रमते ।
विद्याकोशं प्रस्तोति ।

विद्याकोशं प्रवक्ष्यामि सर्वसिद्धिप्रदायकम् ।
वाग्भवेन वरारोहे देव्याश्चक्रं प्रपूजयेत् ॥

विद्याकोशमिति कोणकर्णिकं सादाख्यं प्रेत पीठसनाथमष्टदलपद्मं वक्ष्यमाणमभिप्रैति ।
देव्याश्चक्रमिति विद्याकोशमित्यर्थः । वाग्भवेन मन्त्रेणार्चयेदित्यर्थः ।

तन्मध्ये वर्ण * पात दिव्यवपुद्धराम् ।
नादबिन्दुमयीं देवीं ध्यात्वा सकलमन्त्रतः ॥

p. 76)

वक्त्राण्यङ्गानि विन्यस्य प्रतोर्ध्वे पूजयेदिति ।

बिन्दुनादावतूपुराव्याकृता वा ज्ञाक्षरेण तावत्र वर्णसङ्घातस्य प्रत्येकं वीर्यतया निविष्टौ

वेदितव्यौ। तथा चोक्तं क्रमनिर्नये श्रीमते। महामायाक्षरः पुमां देवि द्वाभ्या ममला चतुष्टयमिति। सकलमन्त्रत इति ककारसहितेन मन्त्रेण कामराजाख्येनेति यावत्। प्रेतोर्ध्वे पूजयेत्यर्थः। अत्रानुक्तमपि शक्तिबीजेन सादाख्य प्रेतं कल्पयेदिति। अन्तर्यागभूतं त्रिपुरा योगोक्त प्रकारेण वेदिनीयम्। कोणस्था देवतास्तिस्त्रोरति प्रीतिमनोभवाः। वामे रतिस्तथा प्रीतिर्दक्षिणे मदनोग्रतः। इति सुगमम्।

मूलविद्यान्यसेत् पश्चाल्लक्षणेन समन्विताम्। इति। मूलविद्यानां प्रथममाविनो ब्राह्मादि चण्डिकानन्तानष्टौ दीर्घस्वरांश्चरा महाविभिः। प्रत्येकमा शब्दावसानौः क्षादिलान्तैरष्टभिर्व्यञ्जनैः क्रमादिभिः संयोज्य एवमष्टविभागा या विद्याभिधीयते। सा तथोच्यते। तामेवं विधां विद्यां कोशस्याष्टदलेषु क्रमाद्विन्यसेत्। विन्यासं मनसा भावयेदिति तात्पर्यार्थः। एकस्मिन्दले आकारः क्षकारः आ ई शब्दश्चेतीयमानुपूर्वी विन्यस्य अपरस्मिन्नीकारो लकारः आ ई शब्दश्चेतीयमानुपूर्वी।

p. 77)

एवमनयादीशान्येष्वप्यवगच्छेत्। आसनामप्यष्टा नामानुपूर्वीणां ब्राह्मादय एव संज्ञाः। एव देवतन्त्रे  कुलाष्टकमिति श्लाघ्यते। अनन्त * * लक्षणसंयुक्तामेवमूलविद्याक्षरानुपूर्वी स्वयमेवोपन्यस्यति।

आकारेण क्षकारस्यादायीं सर्वत्र योजयेत्।
ईकारेण लकारस्यादूकारे * हकारकम्॥

ॠसायोग समाख्यातो लॄषायोगस्तथा परः।
एकारेण शकारस्यादौकारेण वकारकः॥

अंकारेण लकारस्याद्यजेद्देवि कुलाष्टकम् ।
अष्टपत्रमूलविद्यानाम्ना त्रिपुरभैरवि ॥

एवमुद्धारेण क्रमानुसारेण मन्त्रध्यान योगादीनुपन्यस्यानन्तरं जपविधेस्तथाविधक्रमविपर्यास श्रेयस्करणम् । अन्य * * करणे च प्रत्यवाय बहुलतां प्रदर्यितुं प्रकरणमिदमारभते । आदिमध्ये तु मध्यादावन्तमन्ते च संस्थितम् । पुरक्षोभाय जप्तव्यं विधिनानेन साधकैरिति । तथा * * पूर्वपस्त्यो वाग्भवादिः शक्तिबीजान्तः क्रमो न सृष्टिक्रमो भवितुमर्हति नापि संहारक्रमः नाप्युभयात्मक स्थितिक्रमः । न ह्येतां क्रम त्रयीमतिरिच्य क्रमात् क्रमानन्तर सम्भा * व युज्यते । अतः परं रहस्यार्थ गोपायनपरः परमेश्वरो वाग्मन्दाधिकारित्वं विद्यायः परिजिहीर्षन्नुद्धार

p. 78)

क्रमोपप्लवं क्रमस्य विहितवानिति बोद्धव्यं तन्त्रान्तरेष्वपीय मेवेति दृश्यते । तथा च परमेश्वरे मते । प्रथमं वाग्भवादि शक्तिबीजान्तमुद्धृत्य जपविधापाद्यम मध्यगतमित्यादिना प्रकरणेनतमपवदति । तथा च लघुपादैः । ऐन्द्रस्येवेत्यादिना श्लोकपाद संख्याक्षर क्रमेण वाग्भवादिमेव क्रमं दर्शयद्भिरपि । आधारक्रमे वाग्भवमध्यपातिता प्रकाशनेन संक्षिप्तश्चर्चापादैरपि मूर्ध्निस्फुरदित्यानिनासौ क्रमौङ्गीकृतः । अत इहाप्यासौ न परमार्थतया बोद्धव्यः । अयं श्लोकार्थः । उद्धारक्रमेखलु वाग्भवमादि भूतं कामराजं मध्यमम् ।

तत्राभूत हि वाग्भव कामराजस्थाने विन्यस्य मध्यभूतं कामराजं वाग्भवस्थानीयं कृत्वा अन्तिमबीजं यथावस्थितमेव विधाय जपेत् । एतत् क्रम विशेषमेव विशिष्टं जपतां

साधकानां पुरक्षोभो भवति। पुरशब्देन बुद्धादय उपादीयन्ते। तेषां क्षोभः पुरक्षोभः स च साधकाज्ञा प्रभावेन साध्यस्य जाग्रदवस्थापन्नस्य सुषुप्ताद्यवस्थोत्पादनमेवं विधं पुरक्षोभं साध्यस्य साधकः सम्प्रा?दयितुं प्रभवेदिति यावत्। बुध्यादीनां पुरत्वमपि हंसभेदे समुद्घोषितम्।

कायप्राणकयीरूपे विचरन्ति पुरत्रये।

p. 79)

तस्य स्वरूपौ भरणाः शक्तिस्त्रिपुरभैरवीति।
बुद्धिप्राणशरीराख्ये यदे तस्मिन् पुरत्रये॥

अहङ्कारद्वसत्यात्मा तेनायं पुरुषस्मृतः।
एतत् पुरत्रयं दग्धं येन सत्त्रिपुरान्तक इति।

प्लुतदीर्घह्रस्वान्त सहितः कामराजादि शक्तिबीजान्तः क्रम उद्दिष्टः इति संहारक्रमः। अनन्तरं स्थितिक्रममाह। आदिमादिमनादिं च मध्यममध्यममध्यमम्। अन्तमन्तमनन्तं च त्रिपुराशीघ्रसिद्धिदेति। अत्रैकानादि पादेनोद्धारक्रम प्रथमभूतवाग्भवमभिसन्धत्ते। द्वितीयेन तद्विशेषभूतमाद्यवर्णम्। तच्च द्वयमनादिर्मध्यमं कृत्वेत्यर्थः। मध्यममध्यमिति। एकोमध्यम शब्द-उद्धारक्रममध्यभूतं कामराजं प्रतिपादयति। द्वितीयस्तद्विशेष भूतमनन्तशब्दं तदुभयं मध्यममादि कृत्वेति यावत्। शक्तिबीजस्य विशेष सहितस्योद्धारक्रमान्त्य भूतद्वारान्तमन्ते च संस्थितमिति वचनार्चानुक्तमेवात्रान्तिममध्यं सिध्यतीति। अयं संहारक्रमः। अन्तमन्तमनन्तं चेति पूर्ववदन्तशब्दाभ्यां शक्तिबीजं

तच्छेषभूषतं घोषं चाभिप्रैति। अनन्तमादि कृत्वेत्यर्थः। अनेन सृष्टिक्रमाभिधाधिना वक्ष्यमाण ह्रस्वदीर्घादि सूत्रप्रतिपादितो ह्रस्वादि

p. 80)

प्लुतान्तक्रमो दर्शितः। इदं क्रमद्वयमेकी कृतं स्थिति क्रमः। तथा चोक्तं पारमेश्वरे मते।

आद्यममध्यगतं कुर्यादुभावन्ते नियोजयेदिति। अमुं क्रमं जपवतां साधकेन्द्राणां पुरत्रयसन्धुक्षणी भगवती शीघ्रसिद्धिदेति। आत्मस्वरूपं प्रकाशयति। उक्तं चामृतोद्येते। शीघ्रसिद्धिशब्दस्यात्माभिधायित्वम्। शीघ्रन्ते सिद्धिरितिख्यातम्। अमृतो दधिमध्यगमकारमूर्तिमात्मानं वीराः पश्यन्ति सन्ततमिति। उक्तं च श्रीमदुत्पलपादैः आदिसिद्धो महेश्वर इति इयं स्थिति क्रमविद्या उक्त प्रकारादन्यथोपदिश्यमानाचेन्न सिध्यतीति प्रतिपादयति।

आदिमेन तु सा लुप्ता मध्यमेन तु कीलिता।
अन्तमेन तु साच्छिन्ना तेन विद्या न सिध्यतीति।
उक्तक्रमस्यादिमः कामराजः तेन विद्या चेल्लुप्ता न सिध्यति। उद्धारक्रमेभ्या श्रीयमामेण वाग्भवोभ्यादिमो भवति। ततः कामराजे नादिमेन तु लुप्ता भवति मध्यमेन तु कीलितेति कीलिता वियुक्तेति यावत्। उक्तं श्रीमातृकातन्त्रे। मन्त्रायथा न सिध्यन्ति प्रणवज्ञानकीलनात्। तथा हं स परिज्ञानं वियोगादित सुन्दरीति। अत्र हि क्रमद्वयरूपे स्थिति क्रमे संहारसर्गक्रम योगमध्यमे

p. 81)

वाग्भवन्तेन लुप्तापि यदीयं विद्या स्यात्तदापि न सिध्यति। उद्धारक्रमे हि कामराजो मध्यमः। तेनोद्धारक्रमाङ्गीकारे मध्यमेन तु कीलिता भवतीति। अन्तिमेन तु साच्छिन्नेति अन्तरोक्ता या विद्याया अन्तिमो वर्णः। कामराजः तेनापि यदि लुप्येत तथापि न सिध्यति। उद्धारक्रमाङ्गीकारे हि शक्तिबीजस्यान्तिमत्वादन्तिमेन विच्छिन्ने निकृतेर विद्या न सिद्धये भवतीति यावत्। अनन्तरं सृष्टिक्रममाह।

ह्रस्व दीर्घक्रमेणैव प्लुतान्ते तु वरानने।
विशेषेणैवमुच्चार्य त्रैलोक्यमपि साधयेदिति।
ह्रस्वो नाम शक्तिबीज विशेषभूतो घोष्टवर्णः।
दीर्घ इति वाग्भवविशेष भूतो मातृका प्रथमवर्णः।
प्लुतोपि कामराजबलभूत आकारः। एषां ह्रस्वदीर्घ प्लुतमन्योन्यापेक्षं तथा हि। अर्धरात्रो घोषः। तदपेक्षयैकमात्रो ह्रस्वदीर्घप्लुतो भवति। एवं भूतह्रस्वदीर्घप्लुतात्मविशेषसहितं शक्तिबीजादि कामराजान्तं वर्णत्रयमुच्चारयतः साधकस्य त्रैलोक्यमपि सिद्धं स्यात्। त्रैलोक्यं नाम भूम्यन्तरिक्ष स्वर्गाख्यम्।

बाह्यं पुरत्रयं तद्विधेयं भवतीत्यर्थः।
प्रत्यक्षं जायते देवि त्रिधा सिद्धिं ददात्यसौ।

p. 82)

खेचरी भूचरी सिद्धिस्त्रितीयाखेचरीपरे।

अनेन सिद्धित्रयं कथयति खेचरत्वमाकाशचारित्वमित्यर्थः। अल्पेन काले न

दूरदेशाभिगामित्वं पराखेचरीत्यनेन चिद्योमकरणाख्या सिद्धिरभि धीयते। सा च प्रलीनेन मनसा चिद्योमनि निरन्तमनुसन्धानम्। ददते साधकेन्द्राणामितरा सिद्धिका तथा। अष्टसिद्धिं प्रयच्छन्ति तस्यैव कुलदेवतेति सुगमम्।

नाघोरात् परतो मन्त्रो विद्या त्रिपुरा परा।
न गुरोः परमं देवं न मुद्रा खेचरी परेति॥

त्रिपुरा प्रशस्ति प्रसङ्गेन पुरुषार्थोपयोगिनोन्यानपि प्रशस्ततरां निर्दिशति। एतदेनावस्फुटं देवि भुक्ति मुक्ति फलप्रदम्।

अयोग्येभ्यो न दातमित्याज्ञा परमेश्वरीति।

यथोक्तं त्रिपुरा विद्या रहस्यं तदयोग्येभ्यो न दातव्यमिति परमेश्वरस्याज्ञेति।

कुदे कोपदेशान्धमसः प्रतिघातिनी।

॥ प्रकाशित रहस्यार्था समाप्ता कुलदीपिका॥

न वसुधाम सुधाम सुधाम यम्भवन नाम सुनाम सुनाथितम्।
न हि नमामि नमामित सिद्धये धृतमुदारमुदारमुमामयम्।
आविर्भावित वैभवमहत भवं भक्त्या भजन्तो हराट् खण्डोत्तुङ्गितशेखरं खरतमः सन्तापयन्नुक्तये। रूपं भारति भारति प्रकटितं सम्भावयन्तो वयं जीवामो वयमायुरग्रय

ममलं सार्थं प्रकुर्वीमभि ॥

ऐं ह्रीं श्रीं तेजोनन्दनाथ विटम्बा श्री पादुकां पूजयामि ।

॥ श्री गुरुभ्यो नमः ॥

॥ त्रिपुरासारसमुच्चयम् ॥

श्री महेश्वानन्दनाथ महेश्वरी पराम्बा श्रीपादुकां पूजयामि । प्रह्वप्राचीनबर्हि
प्रमुखसुरवरानेककोटीरकोटिस्पष्ट श्लिष्टेन्द्रनीलोपल मणिमधुप श्रीणिजुष्टं कृषिष्ट ।
श्रीपादाम्भोजयुग्मन्नख मुखविलसद्रश्मि किं जल्कपुञ्जं शिञ्जं मञ्जीर हंसीमुखरितमनिशं
मङ्गलं वोभवान्याः । भक्त्या गुरोर्भवपयोनिधिसेतु हेतॄन् श्रीपादपद्मयुगरेणुकणान् प्रणम्य ।
लम्बोदरं च कथयामि गुरूपदिष्टमाराधन क्रममहं कुलनायिकायाः । स्नात्वा यथाविधि
विधौत करानना‌ङ्घ्रिराचम्य सम्यगमलाम्बर यज्ञसूत्रः । प्रागाननोधनददिश्वदनोथवापि
बद्धासनो गणपतिं च गुरुं च नत्वा । सं * योज्यजीवमथ दुर्गं

p. 84)

मध्यनाडीमार्गेणखाब्जग शशिस्थ शिवे सुसूक्ष्मे । हंसेन देह ममरेन्द्र पुरोगतेन सार्धेन्दुना
भसित सा द्विदधीतबुध्या । सास्यादि नाथमरुतापनयं न शेषं तद्भस्मराशिमखिलं भुवनं
सकेन । संप्लावयन्वलभिदा परिचिन्तयेत् स्वमात्मानमम्भसि घटेन स बिन्दुकेन । ततो
बृहद्बुद्बुदमध्यवर्ति स्फुरत् प्रभामण्डलमण्डमाजम् । ध्यात्वा तदर्भुवनान्यमूनि
विचिन्तयेद्भूतलमेतदन्तः । स्मितप्रसवशोभितं नवमनिन्द्यबन्धोद्गटं कदम्बवनमुच्चकैरिह

समन्त तश्चिन्तयेत्। तदन्तरविमण्डितं मणि गणैर्महामण्डपं हिरण्मयमुदञ्चित
द्विमणिलावप्रभम्। चतुर्द्वारोपेतं मणिमयचतुस्तोरणयुतं शरत्तारानाथ द्वितिसित
वितानांकमुपरि। स्थितौ द्वारे द्वारेरुचिरमणि मालाम्बरधरौ गणेशक्षेत्रेशौ सह
परिकरौचस्यमभितौ। पूर्वद्वारि स वाहनं हरिहयं यस्यैव याम्ये यमं पश्चात्ये वरुणं तथैव
यदुदग्वारे कुबेरं स्थितम्। सङ्गीताभिरन्तैर्यदन्तस्मरस्त्रीणां गणैराकुलं ध्यायेत्
सम्यगनाकुलेन सा गन्धर्वमुख्यैरपि। तस्य मध्यगतसिंहविष्टरे पद्ममष्टदल शोभितं सितम्।
उद्यदुष्णकरमण्डलोज्वलं भावयेदरुणकेकरोत्कटम्। तत्कर्णिकोपरि कपं च ममम्बु
तुर्ययुक्तमाननुस्वरतदन्तयुतं निधाय। प्रेतन्धियात्र तदुपरि त्रिदशेशवन्धां

p. 85)

ध्यात् त्रिलोकजननीं दयितां पुरोरेः। सुरुचिरं नासिकां सुनयनां सुक्बालतलां
मरुणजटाकलापकलितामलचन्द्रकलाम्। प्रविलसदष्टमीन्दु कमनीयं ललाटतटां
परिणतशारदेन्दुरुचिराननं पङ्करुहाम्। बन्धूकारुणकन्तदन्तवसनामुत्तुङ्गवृत्तस्तनीं युक्तां
बालमृणालनालमुदुभिर्व्यैश्चतुभिर्भुजैः। तत्कालस्मितपद्मपत्रविलसन्नेत्र
त्रयोद्भासितान्ताराधीशनेन शकुण्डलधरामुल्लास चिल्लीवताम्। वलित्रयोद्भासितदीनम्ध्यां
प्रदक्षिणावर्तगभीरनाभिम्। कस्तूरिका कर्म मरेखयैव विराजमान नवरोमराज्या।
स्मितनवबन्धूजीवं कुसुमारुण स च सनाममणिरशनाकलाप कलितोरुनि तम्बतटाम्।
करिवरपीवरोरुयुगलां वरहंसगतिं चरण तल प्रभावजित पङ्कजगर्भदलाम्।
प्रणतपुरन्दरप्रमुख लेखनिकायलसन्मणिमकुटप्रभापटल पाटलिताङ्घ्रियुगाम्।
सुरुचिरसान्ध्यवारिधर कान्तिकलापमुषानिजतनु तेजसा कबलितां प्रतिदिग्वलयाम्।
दिव्याम्बुवाह निवहोदर मुक्तवृत्तमुक्ताफलेर्विरचितां रुचिरां वहन्तीम्।
एकावलीममलकोमलकान्तियुक्तां कान्तेगले च हरिचन्दनलिप्तगात्रीम्।

पाशाङ्कुशाभयवरोद्यत पाणिपद्मां रत्न प्रकाण्डरुचिराभरणाभिरामाम्। स्मेराननां रुचिरदन्तमरीचिधौ

p. 86)

तारुणाधरदलां सुरबृन्दवन्द्याम्। स्वैत्येन त्रिभुवनमातरं धृडानीं ध्यात्वैवं निजकुलकामधेनुमेनाम्। हृत्पद्मं पुनरपि जीवमानयेत् स्वमाकाशं बुरुहकुटीनि विष्टहंसात्।

॥ इति भट्टनागविरचिते त्रिपुरा सारसमुच्चये प्रथमः पटलः॥

प्रथमः पटलः॥

अङ्गुष्ठादि कनिष्ठिकावधिकर द्वन्द्वाङ्गुलीषु न्यसेद्बाणान् पञ्चगुरूपदिष्टविधिना ब्रूमोवयन्तानिह। अत्रीशोमुखवृत्तवह्नि सहित स्वाद्यं सदण्डं त्रिमूर्त्याकान्तानन वृत्तमेव खलु तद्बीजं द्वितीयं भवेत्। मुखान्तस्थितं देवराजाधिरूढं स वामेक्षं वक्रपूर्वेणयुक्तम्। भपूर्वं सवृत्तारि षष्ठस्वरार्धक्षपे शङ्कतुर्यङ्कपूर्वेण युक्तम्। न्यस्याङ्गान्यपि चाङ्गुलीषु करयोस्थित्या कलान्यासकं कुर्यात् साधकपुङ्गवो भगपरममायाकुलान्तं क्रमात्। बीजानां त्रयमर्धचन्द्रसहितं विन्यस्य मूर्ध्नि स्वकेसानन्तं मुख वृत्तकेकगतकं संवर्तकं विन्यसेत् सूक्षादिश्चतुरो युगे * * * नयनयोन्यस्त्वा ताच्छ्रोत्रयोः सार्धेन्दून् स्वकपोलयोर्भृगुयुगं घ्राणद्वयेनान्वितम्। चन्द्रार्द्धाङ्कितमस्तकं च चिबुकेश्चेतद्वयं विन्यसेत् पश्चाद्गण्डयुगान्वितं शशिदलोपेतोत्तमाङ्गं बुधः।

p. 87)

दन्तपङ्क्तियुगलेबकद्वयं सेन्दु खण्डरदनच्छदद्वयम्। ओण्यष्ठयोर्घटयुगं ततोन्य सेदतयुग्ममुखपूर्वसंयुतम्। रसन्ना भावर्धोडुपति सहितन्यस्य पवनन्न्यसेन्मन्त्री सान्त्यस्वरमथ शिखायामवहितः। सदान्यासं कुर्वन्नमुमिभि यथोक्तेन विधिना नरो जीवत्यर्धाविगतगदमृत्युश्चिरमिह। पश्चाद्देहे केवलमातृका वा विन्यस्तव्या रुद्रशक्त्यन्विता वा। विद्यान्या संसाधकेन्द्रस्ततोङ्गे न्यासं चास्य न्यासपूर्वं विद्यध्यात्। विद्यान्यासं मूलमन्त्रस्य वर्णैः कुर्याद्धीमान्वक्ष्यमाण क्रमेण।
आद्यं बीजं मूर्ध्नि गुह्ये द्वितीयन्तार्त्तीयीकं विन्यसेद्धृत्प्रदेशे॥

सर्व व्यापसव्येक्षणयोर्ललाटे ततो बुदः कर्णयुगे मुखे च।
अंसद्वये चापि च पृष्ठदेशे बीजत्रयं जानुयुगे च नाभौ॥

बीजत्रयेणैव षडाननानि प्रकल्पयेदूर्ध्वमुखादि विद्वान्।
अङ्गानि मूलेन च गुह्यनाभिहृद्वक्र मूर्ध्वस्वपि पञ्चबाणान्। ललाटदेशे वदने हृदिस्वेनाभौ च गुह्येऽपि च विन्यसेन्ना। त्रैलोक्यसंक्षोभण दृष्टशक्तीन् पञ्चापि कामानिह वक्ष्यमाणान्। इह कामराजमन्मथ कन्दर्पोमकरकेतनश्चापि। नामभिरेतैर्गदिता मनो भवेनान्वितः क्रमशः। क * पञ्चमंशु विनयनान्तसंयुतं स वामदृक् पवनगुणान्वितः करः। रविस्वरो हरिहर

p. 88)

विष्णुषष्ठवद्धनं ततस्थल उपरान्वितो भृगुः। तेषां शिरः सुविदधीतबुधोर्धचन्द्रानेव मम या निगदिताः खलु पञ्चकामाः। पुङ्स स्मराननुदिनन्य यत्र त स्वदेहे लोकत्रयं भवति तस्य मनोनुवर्ति। विद्याङ्गहेतोः कुलनायिकाया वक्ष्यामि बीजत्रितयस्वरूपम्। गोप्तव्यमेतत् कुलधर्म विद्धिरायुष्य हेतोर्गुणसिद्धये च। कान्तादिभूतपदगङ्कगतार्धचन्द्रं

दन्तान्तपूर्वजलसिस्थितवर्णं युक्तम्। एतज्जपं नखरो भुवि वाग्भवाख्यं वाचां सुधारसमुचां लभते स सिद्धिम्। कान्तान्तं कुलपूर्वपञ्चमयुतं नेत्रान्तदण्डान्वितं कामाख्यं गदितं जपान्मनुरयं साक्षाज्जगत्क्षोभकृत्। दन्तान्तेनयुतं तु दण्डि सकलं सम्मोहनाख्यं कुलं सिध्यत्यस्य गुणाष्टकं खचरता सिद्धिश्च नित्यं जपेत्। ऋषिर्दक्षिणामूर्तिसंज्ञो महात्मा भवेच्छन्द एतस्य मन्त्रस्य पङ्क्तिः। शक्तिस्तु सा खण्डलकर्णपूर्वं स हार्धजैवात्रकमानानान्तम्। अमुष्य मन्त्रस्य रदान्तयुक्तं बीजं सदण्डं लकुलीशपूर्वम्। वर्णः शुक्ले मुनिभिस्त्रिभुवनमभितस्य मन्त्रराजस्य। आगकपारकमतिभिर्गान्धारोस्य स्वरोगदितः। विद्यामूलोत्पत्तिरेषामयोक्ता ज्ञातव्येयं सर्वथा सिद्धि कामैः। देव्याः शप्तोधेन विद्येयमाद्या पूर्वन्तेन प्राणहीना भवत्सा।

p. 89)

शिवशक्तिबीजमत एव शम्भुना निहितं तयोरुपरिपूर्वबीजयोः। अकुलं परोपरि च मध्यमाधरे दहनं वतः प्रभृति सोर्जिता भवत्। भैरवीयमुदिता कुलपूर्वा देशिकैर्यदि भवेत् कुलपूर्वा। सैवशीघ्रफलदा भुवि विद्येत्युच्यते पशुजनेष्वति गोप्या। शिवाष्टमं केवलमादि बीजं भगस्य पूर्वाष्टकबीजमन्यत्। परं शिरोन्तं कथिता त्रिवर्णा सङ्केतविद्यागुरू वक्रगम्या। कान्तान्त वान्ताकुललान्त वामनेत्रान्वितं दण्डिकुलं स नादम्। सट्कूटमेतत् त्रिपुरार्णवोक्तमत्यन्तगुह्यं स्मर एव साक्षात्। आद्यं बीजममध्यमे मध्यमादावन्ते चान्त्यं योजयित्वा जपेद्यः। त्रैलोक्यान्तः पातिनो भूतसङ्घावश्यास्तस्यैश्वर्य भाजो भवेयुः। आद्यं कृत्वा चावसानेन्त्य बीजममध्ये मध्यं चादिमे साधकेन्द्रः। शश्वत्कुर्वन्यो जपेन्मन्त्रमेनं जीवन्मुक्तः सोश्नुते सर्वसिद्धिः। मन्त्र राजममुं समस्तजगद्विमोहन कारणममतृकान्तरितं जपेदनुलोमतोपि विलोमतः। हंसदेव समन्वितं सकले बुधः पर एव वासोऽपि दिव्यगुणान्वितो लभतेभसिद्धि मनुक्तमाम्। व्यञ्जनहंससमन्वितमेनं रञ्जकरञ्जगतो

निखिलस्य। यो जपति स्थिर निर्मलचित्तो शीघ्रमुपैति नरः स तु सिद्धिम्। कमलं परिलुप्तमध्यमाद्य स्वरमीशादि युतं सबिन्दुनादम्।

p. 90)

न गमादि नमोन्तरे विराजद्भुवि देवी हृदयप्रदिष्टमेतत्। ओं-क्लीन्नमः। विद्याकाम दुघा त्रिलोकमहिता स्वर्गापवर्गप्रदा गुह्याद्गुह्यतरा महोदयकरीया योगिनी नामिह। सा सारस्वरजन्मभूमिरुदिता सौभाग्य संपत्करी सद्यः प्रत्ययकारिकासकृदपि प्रोच्चारिता भूतले। यतः स्तावस्थामियमुपगता विश्व विभुना ततः सिद्धिं नैव प्रवितरति जप्तापि सततम्। प्रबुद्धा चेद्विद्या फलति सहसा दीपनकरीमतो विद्यां वक्ष्याम्यहमिहरहस्यामतितराम्। पुष्पं वारिमुचान्दवादिरपरं ता वैव वर्णा ततो दीर्घं वारि सखान्तमम्ब्वपि तथा धान्तौ स लोकस्वरौ। विद्या वाग्भवबीजदीपनकरी सारस्वतोत्पत्ति भूः साक्षात् काङ्क्षित पारिजातलतिका वस्वक्षरोक्ता मया। ब्रह्मा शक्रदृगुन्वितः सह भगामेषा नादिनी कान्तान्तं सभगं सपूतनमतो धान्तश्चमेषः सदृक्। कालोनन्तयुतो वियत्सदशनः संवर्तको भीषणः सा कूरः कमलासनः सह शिवो वैश्वान्विता नरस्तादृशः।

एकादशाक्षरीय मन्मथ बीज प्रबोध दक्षतरा।
क्षोभयति नागभूतल रसातल स्थानवासिनः सहसा।

सावित्रीरदनयुता महादिकाली व्योमान्तं शशधरखण्ड मण्डितान्तम्। मोहिन्यासरसिज भूर्युतस्तथाग्निष्ठिघेयं

p. 91)

भुवि परबीजदीपनी स्यात्। या यस्य दीपनकरीगदिते ह विद्याबीज तस्य पुर एव समुच्चरेत्ताम्। विद्या षडङ्ग वदनेषु यथा व देवन्यासेषु साधकवरो विदधीतशश्वत्। विद्याङ्गमेवन्य सतस्वदेहे त्रैलोक्यमेतद्वशमेति पुंसः। पापानि सद्यः प्रशमं प्रयान्ति त्रिस्यन्ति रक्षांसि सपन्नगानि। मन्त्ररूपमिदमीरितं मया सर्वथा गुरुं मुखेन लभ्यते। गुर्वनुग्रह मृते महीतले मन्त्र एषनभिदायिकः।

॥ इति भट्टनागविरचिते सारसमुच्चये द्वितीयः पटलः॥

द्वितीयः पटलः॥

अथेदं शरीरं स्वकीयाङ्गुलीभिर्बुधैः षण्णवत्यङ्गुलायाम मुत्तमम्। दिनेशाङ्गुलीभिः शरीरात् समीरोधिकः प्राणसञ्ज्ञोमतो योगविद्भिः। इह प्राणवायुं सदाभ्यास तोयो नरो न्यूनभावन्नयत्येनमङ्गात्। समत्वं शरीरेण वा भूतलेऽस्मिन् स पूर्वज्यो बुधैरुत्तमो योगवित्सु। चतुर्दशात्रापद्यने प्रधानानाडयस्थितास्तास्वपितिस्र एव। इडा सुषुम्नापि च पिङ्गला च मुख्या सुषुम्नैव च तासु चैका। इडा नाम नाडी श्रिता वामभागं तनोर्दक्षिणं पिङ्गला नाम नाडी। तयोः प्रष्ठवंशं समाश्रित्य मध्ये सुषुम्ना

p. 92)

स्थिता ब्रह्मरन्ध्रं तु यावत्। सुषुम्नान्तराले स्थिता चित्रनाडीयुता पञ्चवर्णोज्वला पञ्चदेवैः। तदन्तस्थितं ब्रह्मरन्ध्रं सुसूक्ष्मं मृणालान्तरालोल्लसत्तं तु तुल्यम्। ब्रह्मसूत्रमिदमेव देहिनां जीवभूतममृतैककारणम्। यद्वदन्तिमुनयं पुरातना दिव्यमार्गमिति भवचेतसः। इडायां च रत्येष शीतांशु माली ततो वामभागो मृतं संप्रदिष्टम्। रविः पिङ्गलायां चरत्येष तस्माद्विषं

दक्षिणेभाग उक्तं मुनीन्द्रैः। जानीयादुदम्बुधोजठरगे देव्यस्य कन्देनृणां ध्यानात्तिग्मकराङ्गुले च विलयं सन्ध्ये च पूर्वापरे। उत्पत्तिं च लयं च सन्ततमधो वृत्तिं निशां वासरन्त्रध्वां वृत्तिमधस्तथा हिमकरं तुध्वां दिनेशं गतिम्। तुषारांशुनाडीं प्रपन्नेत्रदेवे तदाशान्तिकादीनि कर्माणि कुर्यात्। बुधो रौद्रकर्माणिमार्त्ताण्डनाडीमुभे मिश्रकर्माणि नाड्यौ प्रपन्ने। भूतानामुदयं द्वयोरपि बुधः संलक्षयेत् पक्षयोस्तत्रादौ वसुधोदयं निशितधीघ्राणस्य दग्धस्पृशि। देवेधस्पृशिवारिणो हुतभुजस्तूर्ध्वं गतेतूदयं तिर्यक् संस्पृशिमारुतस्य परितस्पृष्टेमरुद्वत्मनः। वश्यस्तम्भनयोः प्रशस्त उदयोर्भूमे जलस्योदयः शस्तः शान्तिकपौष्टिकादिषु शुभेष्वह्नायवह्नेः पुनः। शात्रोर्दारुणमारणादिकरणेत्त्सादनोच्चाटयोर्वायोः

p. 93)

शान्तिकनिर्विषीकरयोर्व्योम्न्रे हितस्त्रदय धरणेरुदये गदार्दितानां यदि दूतः समुपेत्य पृच्छतीह। सहसा नभिरोगजा प्रबाधा प्रशमं यान्ति चिकित्सितापि सम्यक्। जलोदये व्याधिरुपैति शान्तिं मृत्युर्भवदित्येव वसुदयेत्। तथोदये चापि समीरणस्य व्योम्नो चिरेणैव रुजां विनाशः। देवे दक्षिणभागगेऽथ पुरुषे रोगातुरे दक्षिणेस्थित्वा पृच्छतिकः स पुरुषो जीवत्यपेतज्वरः। वामायां तुरुजाकुलीकृततनौ वामाश्रिते चेश्वरे वामे पृच्छति चेत् स्थितागतगदावामा चिरञ्जीवति। देवे गते पृच्छति वामभागं स्थित्वा नरो दक्षिणतोयदीह। व्यत्यासनोस्मादपि कृच्छ्रसाध्यं वदन्ति सन्तः खलुरोगजातम्। अन्तर्गते पृच्छति पृच्छकश्चेद्देवेनरो जीवति वीतरोगः। तेनैव रोगेण बहिर्गतेऽस्मिन् परेतराजस्य पुरं प्रयाति। सर्वेषु कार्येषु सदेश्वरेऽस्मिन् नन्तर्गते मङ्गलमभ्युपैति। बहिर्गते मङ्गलमीश्वरेण शुभाशुभं कर्मफलं तु विद्यात्। प्रारभ्य दर्शप्रथमा मुदेति वामे पुटे त्रीणि दिनानि देवः। वामेतरे त्रीणि ततो दिनानि पूर्णा तिथिर्यावदथैवमेव। अथारम्य शुक्लान्यपक्षादि भूतां तिथि त्रीणि देवो दिनान्यभ्युपैति।

p. 94)

पुटे दक्षिणे त्रीणि वामे तु यावत् कहरेवमेवं सदालक्षयेन्ना ।

एकस्य पक्षेस्य विपर्ययेण रोगाभिभूतिर्भवतीह पुंस्तः ।

तयोर्द्वयो बन्धु सुहृद्विपत्ति पक्षद्वयव्यत्ययतो मृतिस्यात् ।

यदात्मनः कालवशात् समीरो विपर्युदेति प्रकृतिं विहाय सः । तदानिरुध्यग्वसनं निपीडयेत्तदास्थितः पक्षमुपैति चान्यतः । द्वावेवधत्तः सकलं च कालं दिवाकरः कैरवबान्धवाश्च । भोक्त्री सुषुम्ना सकलस्य चास्य कालस्य दोषादिवसात्मकस्य । ततः क्रमेणैव विशुद्धनाडी पथान्तरं प्राणसमीरणस्य । शनैः शनैः संय्यमनै प्रयत्नं यथा विधानं विदधीत धीरः । शीतांशुमार्गेण शनैः समीरमापूरयेत्स्वोदर मादरेण । विकारमात्राभिरपेततन्द्रः कालाग्निमूलार्पितचित्तवृत्तिः । ततो धारयेन्मारुतं धीरचेताश्चतुः मषिमात्राभिरा पूरितन्तम् । बहिर्भास्वतारे च येन्मन्दमेनं तदर्धाभिरन्तं निरुद्धं तु ताभिः । विपरीतमथो विदधीत बुधः पुनरप्यथ तद्विपरीतमिति । अमुना विधिना सुमनाः सततं मरुतो विदधीत सुसंयमनम् ।

प्रस्वेदं जनयति प्राणायामे सोधमं प्रोक्तः ।

कम्पममध्यं पुंसां भूमित्यागं तनोस्तनोतिपमः ॥

तावद्विदधीत बुधः प्राणायामसमाहितो विधिवत् ।

p. 95)

यावत् सम्भवति भुवि प्राणायामोक्तमस्य गुणः ।

अयं प्राणायामः सकलदुरितध्वंसनकरो विगर्भाः प्रोक्तो सौशतगुणफलोगर्भकलितः। जपध्यानापेतः स तु निगदितो गर्भरहितः स गर्भस्तद्युक्तो मुनि परिवृढैर्योगनिरतैः। शुचिः प्राणायामान् प्रणवसहितान् षोडशवशी प्रभाते सायं च प्रतिदिवसमेवं वितनुते। द्विजोयस्तम्भ्रूण प्रहणन कृताभोहि कलितं पुनन्त्येते मासादिहृदुरिततृलौघदहनाः। त्रायन्त्यमीषड्भरतीव मासैर्जन्मान्तरो पार्जित पापपुञ्जात्। संवत्सराद्ब्रह्मपरं तदेकं प्रकाशयन्त्येव यदच्युताख्यम्। इहरे च कपूरकौ विहाय स्थिरधीः कुम्भकमेव केवलं यः। स्ततं कुरुते मनोजवत्वलभते वीतजरामयः समर्त्यः। न हि तस्य सु दुर्लभं त्रिलोक्यामिहयं केवलकुम्भके निषण्णः। अणिमादि गुणाष्टकं करस्थं ननु तस्यैव निरस्तमृत्युभीतेः। राजदन्तयुगलादिमस्पृशन् सन्निधाय रसनान्तदन्तिके। काकचञ्चु पुटमारुतं पिबेत् प्राणसंयमनमेतदुत्तमम्। पिकचञ्चु समीरणं शनैर्धयन्तः संपरिकृष्यसन्ततम्। श्रममोहगरो दरोदकज्वरगुल्मा प्रशमं प्रयान्ति च। उभयोरपि सन्ध्ययोर्मुहूर्तेऽपि च धातुन्धयतस्त्रिमासमात्रम्।

p. 96)

समरुत् पिकचञ्चु गन्धवाहं भुवि सारस्वत सिद्धिरुद्धता स्यात्। हरिः।

विषमुग्रमुग्रवीर्यभाजामपि नाशं समुपैति पञ्चगानाम्।
किमुवृश्चिककीटलूतकामीहकाकोलमुखानिलस्य पानात्॥

पिकचञ्चु समीरणं नराः सततं यः परिकृष्यसन्ततं ध्ययोः।
कुरुते निजकुण्डलीमुखे क्षयरोगं स विमुच्य जीवति॥

पिकचञ्चु समीरणं नरो यः पिबती हानिशमेव वीततद्रः।
भवति ध्रुवमेव तस्य वर्षाच्छ्रवणं दर्शनमप्यतीव दूरात्॥

बहुधा किमुथितैर्मुभुकिमेभिः पिकचञ्चवात्त समीरणस्य पानात्। जरसा सहनाशमाशुयाति प्रबलं मृत्युकृतं भयं नराणाम्। जिह्वां कृत्वा नाकुलस्तस्य मूले दन्तैर्दन्तान् गाढमापीडयित्वा। मन्दममन्दं यः पिबेद्गन्धवाहं सौधैः पूरैः सा क्रममन्तसृवद्भिः। षड्भिमासैरत्र रोगैरशेषैः पापापेतो मुच्यते साधकेन्द्रः। अब्दादर्वाग्विसृ साममृत्युद्रुतीं जित्वाभ्रमौ दीर्घकालं स जीवेत्। १००।

वर्षत्रयाभ्यासवशादतीतमनागतं वेत्यलिनीलकेशः। विषं न देहे क्रमते तदीये दष्टैः सुघोरैरपि पन्नगेन्द्रैः। न कृत्तिमं स्थावरजङ्गमं वा विषं किमन्नैरपि कालकूटम्। गुणाष्टकं कालवशा दुपेत्यमहीतले क्रीडति भैरवो वा। यामुण्डाधार

p. 97)

दण्डान्तरविवरगताहारनीहारगौरां सौधीन्धारान् नमोभ्याम्भोरुऽकुहरविधोः संसृवन्तीं वहन्ती। तस्या वज्राख्यनाड्याः खगमुदरदरी मध्यगं यो विदध्यात्तस्या ब्रह्माण्डभाण्डप्रलयमपघनं स्याद्धनममृत्युमृत्योः। मूर्छाङ्गतो हरति रोग समूहमद्धाबद्धः करोति गगने गमनं नराणाम्। वातो मृतो वितनुते मरतां समस्तमभ्यासतः सुलभमेव समीरणस्य। अथ पार्ष्णि निरुद्धकम्बुलिर्नाध्र्वमूलस्थित सव्यपादपार्ष्णिः। ऋजुकाय शिरोधरोयतात्मा विषयेभ्यो विनिवर्तितेन्द्रियौघः। काकीचञ्चवाग्रकृष्टैर्निजजठरदरीं पूरयित्वा समीरेङ्गुष्ठाभ्यामुभ्याभ्यां मुररिपुविवरे तर्जनीभ्यां च नेत्रे नासा * न्ध्रे निरुध्यस्थिर

विमलमतिर्मध्यमाभ्यामथास्यं त्वन्याभिन्नाति गाढं कमलजनिलये योजयेन्मानसं स्वम्।
यथाशक्त्याभ्या संप्रति दिवसमेवं वियतया परमया चिद्रूपया सङ्गताम्। मायां कुण्डलिनीं
समाहितमनास्तामुच्चरेत् कौलिकीं शक्तिं ब्रह्ममहापथेन सहितामाधारशक्त्यात्मना। भित्वा
लिङ्गत्रयमथ बुधो ब्रह्मनाड्येह चोर्ध्वं गच्छन्तीं तां कमलजपदात् प्रापयेदात्मशक्तीम्।
व्योमाम्भोजप्रणयि परमानन्द कन्दं विसर्गस्थानं चन्द्रोदरपरिगलद्रक्त * * यूषधाराम्।

p. 98)

पीत्वा कुलामृतरसं पुनरेव दिव्यं मध्यं विशेन्निज कुलस्य समाहितात्मा। यायात्
कुलादकुलमेव पुनश्च मात्रायोगेन देशिकवर प्रतिपादितेन। सा शक्तिः सकलशरीरजीवभूता
प्राणो सावितिगदितात्र तन्त्रमुख्ये। उद्धातः स तु परिपठ्यते मुनीन्द्रैः प्राणान्तं स्पृशति यदा
क्रमेणनीतः। अमुंस्वाचारस्थः प्रतिदिवसमभ्यासवशतः करोति श्रद्धावान्
सततमवधूताखिलमलः। समुक्तो दुःखौ घैःरपगतजरार्थैश मरणो गुणग्रामोपेतः स्वरूपचिरं
जीवति भुवि। चतुर्विधायागदितेह सृष्टिः प्रवर्तते सा सकला तु यस्याः। प्रलीयते चापि
जगत्समस्तं कालाग्नि रुद्रादि शिवान्तमेतत्। सेयममयोक्ता खलु योनिमुद्रा बन्धश्च
दैवैरपि। दुर्लभोस्याः। अनेन बन्धेन न साध्यतेयं नास्येव तत्साधकपुङ्गवस्य।
छिन्नारुद्धाकीलिता स्तम्भिताये सुप्तामत्तामूर्छिताहीन वीर्याः दग्धास्रस्ताः शत्रुपक्षस्थिताये
बाला वृद्धागर्विता यौवनेन।
ये निझाताये च सत्वेन हीनाः खण्डी भूताश्चाङ्ग मन्त्रैर्विहीनाः। एते मुद्रा बन्धयेनैव योन्या
मन्त्राः सर्वे वीयवन्तो भवन्ति। गुरुतल्पनिषेवणं च पानं द्विहत्यामधुनः सुवर्ण चौर्यः।
अमुनाविलयं

p. 99)

प्रयान्ति सद्यः सकृदप्या चरितेन बन्धनेन। स हि मन्त्रिवरः स एव योगी गुणसिद्धेः पदमास्थितः एव। अमुनाचरतीह बन्धन यः सततं स्वोचित कर्मधर्म निष्ठाः। अमुना भवतीह देहभाजां सतताभ्या स कृतेन बन्धनेर्नजरा पितृराज वै जयन्ती न च मृत्यु प्रतिपादिता च भीतिः। एतस्यैव चतु बन्धनस्य मनुजं प्राप्नोति शश्वत्कृतादभ्यासादणिमादि सिद्धिमतुलां संवित्तिमप्यूर्जिताम्। योगं चा प्रतिमं जयं च मरुतः कालस्य वा पञ्चमं तद्विष्णोः परमं पदं च सततः पश्यन्ति यत् सूरयः।

॥ इति त्रिपुरासारसमुच्चये योनिमुद्रा बन्धनविधिश्चतुर्थः पटलः॥

अथाधारपङ्केरुहाण्यत्र वक्ष्ये सुषुम्नान्तरस्थानि सङ्कोचतोऽहम्। तदम्भोजपत्रस्थितांश्चापि देवांस्तदम्भोजवर्णान् षडाधारदेवीः। अजग्रन्थिपद्मं पुरा यन्मयोक्तं तदाधारमाद्यं वदन्तीह सन्तः। सुवर्णाभवर्णैश्चतुर्भिः समेतं दलैर्योगिगम्यं महाश्चर्यभूतम्। चतुर्ष्वब्जपत्रेषु देवी निरुद्धाञ्जलाद्यब्धि वर्णान्यसेत् केवलान्वा। स बिन्दून् * * प्रभावात् समिद्धस्पुरज्ज्योति षोडाकिनी देवतात्रा।

p. 100)

मूलाधारे सम्यगभ्यास योगात् स्तम्भस्तोहादुत्प्लुतिर्दार्दुरी च। भ्रमित्यागं खेचरत्वं च सम्यङ् नृणामेते षड्गुणाः सम्भवन्ति। कान्तिप्रकर्षो वपुषोति नादव्यक्तिः प्रदीप्तिःर्जठरा नलस्य। लघुत्वमङ्गस्य निजेन्द्रियाणां पटुत्वमारोग्य मदीनतां च। कृत्वा मनो निश्चलमत्र चक्रे चरं नरः सन्ततमादरेण। भूतं भवच्चापि भविष्य दग्धं वदन्तिं शास्त्राण्यपि चाश्रितानि। विहाय सद्यः कमलासनस्य मुखाम्बुजं प्रीति तरङ्गसङ्गा। तदीय वक्राम्बुरुहोदरान्तरे सरस्वती नृत्यति दिव्य रूपिणी। अधिगम्यरसेन्द्र मन्त्रसिद्धीरपि कालं च विजित्य

दुर्निवारम्। अजरामरतामवाप्य चैते परमानन्दपदेमुदारमन्ते। एकी भूतार्णवाम्भः प्लुतमखिलजगत्पूर्वमासीदपूर्वं ज्योतिर्मूर्तिस्तदन्तर्मभितमभि हृल्लिङ्गरूपी बभूव। षट् सिद्धाधिष्ठितात्मा सकलसुरतनुः षड्भिरास्यैरुपेतः षड्भिः कोशैरुपेतो भव भयतिमिरध्वंस हंसो महेशः। अङ्गं लिङ्गवपुर्धृतो भगवतो देवो द्विरण्डो भवत्वाली पूर्वमुखं शिवस्य तु महाकालस्ततोर्ध्वाननम्। वक्त्रं दक्षिणमाशुशुक्षणिरसौ साक्षात् पिनाकी पुनः पाश्चात्यं छगलण्ड एष भगवान्वामस्यमस्या भवत्।

p. 101)

स्वाधिष्ठान समाह्वयं रसदलैर्मूले ध्वजस्याम्बुजं बालादित्यनिभं दलोपरि हितैः पृष्ठादितर्कांक्षरैः। बिन्दून् भासितमस्तकैर्भगवतो लिङ्गात्मनः शूलिनस्थानं योगिवरेण्यगोचरमिदं चास्यादिपाराकिना। इह स्वाधिष्ठाने निहितनिजचेतो लयवशादामन्दानन्दौ घस्तिमित हृदयः साधकवरः। समेतानङ्योनङ्गः क्षितितलगतो वा मृगदृशां स्मरस्मेरापाङ्गं रसयति गणं कान्ति कलितम्। इह वेत्ति विधायमानसं स्वविधं चाशृत शास्त्रजालमुच्चैः। अवधूत जरामयः समर्त्यः सुचिरञ्जीवति वीतमृत्युभीतिः। वपुषो शुचिभाजनस्य शश्वत्परमांशुद्धमिहातनोति पुंसाम्। शरदं बुदपेलवस्य लोकेघनरुद्धो दृढतां च शीतरश्मिः चलितं सहसा महारथेन्द्रं कमलालोकनतो वियत्सरोजात्। इह येव निवारयन्ति सन्तो ननु धीराः। पुरुषोत्तमास्त एव च। मदधौतकटौ महागजेन्द्रोवशतामेति यथा शनैरुपायात्। बलवानपि वै सुधाकरो सौकमरुद्धस्ववशो भवत्यवश्यम्। एतस्मिन् कुलिशाब्जयो भजनितादादौलयो जायते रागादीन्द्रिय दन्तिनां लयवशात् संवर्तिरप्यूर्जिता। अन्तर्लीन महारसद्रवजुषा नृणां चलेतो लयादाविर्भावमुपेत्य मन्दसहसानन्दच्छलेन्दूदयः।

p. 102)

नाभिस्थं मणिपूरकं दशदलैर्नीलाञ्जनाभैर्युतण्डाणाद्यैश्च दशाक्षरैर्दल गतैर्बिन्दूल्लसन्मस्तकैः। लाकिन्यासमधिष्ठितं च सततं ध्यायन्ति ये ते जनावश्याकर्षणनिविषीकरण भू क्षोभादिकं कुर्वते। स्थानेस्मिन् निहितात्मनः सुकृतिनः पातालसिद्धिः परा खड्गस्या प्रतिमस्य साधनमपि स्यादीक्षितं चक्षितौ। रूपं भूमिविसर्जनं परपुरे शक्तिः प्रवेष्टुं जराहानिश्चाखिल दुःखरोगशमनं कालस्य पावञ्चनम्। हृदये सरसेन्द्र गोपसन्ध्या घन सिन्दूर सुवर्णवर्णमब्जम्। वदनाहतमित्युशन्ति सन्तोरविसं खैरुपशोभितं दलैश्च। क्रोधीशाद्यैर्भैरवैर्भानुसंख्यैर्दन्धोपेतैर्मण्डितं चण्डवीर्यैः। तत् काकिन्याधिष्ठितं दिव्यशक्त्या देव्या हंसेनाविदेवन शश्वत्। एतस्मिन् सततं निविष्टमनसस्थाने विमान स्थिताक्षुभ्यन्त्यद्भुत दिव्यकान्तिकलिता दिव्यस्त्रियो योगिनः। ज्ञानं चाप्रतिमन्त्रिकालविषयं क्षोभं पुरस्य शृतिर्दूरादेव च दर्शनं खगगतिस्याद्योगिनी मेलनम्। विशुद्धाख्यं कण्ठे नलिनमथ धूमालिरुचिभिर्युतं श्रीकण्ठादि स्वरपरिगतैः षोडशदलैः। इह स्थाने सा किन्यतुलनिज शक्तिर्भगवती स्थिता नित्यदेवी शरणगमनार्ति प्रशमनी।

p. 103)

समुत्तुङ्गैः शृङ्गैस्थगित गगनाभोगककभोवसं नानारत्नाकलितकटकान् भूधरवशान्। कुरङ्गैः सारङ्गैरपि च रमणीयां वन भुवं तथा गुर्वी मुर्वी मम हित विविधक्षेत्र सहिताम्। तरङ्गैरुत्तुङ्गैरभि मकरमातङ्गमकरैः करालानाभीरैरपि जलधरैर्भूधरवरैः। तथा पारावारोनमलसरितो वारिहरिताः स हंसालीं पालीमपि च सरसां सारस जुषाः। चरन्मरोलं सबकोटमालन्तदित्करालान्तरवारिनीलम्। तथा कपालं सधवानुकूलं प्रवासि कालं नवमेघजालम्। एतस्मिन् परमाद्भुताव्यय महानन्दैकं कन्दे परे स्थाने मानसमात्मनस्थिरमतिः संयोजयेन्मुद्रया। योगीतन्मयतामुपैति शनकैश्चेतो निरालम्बया पश्चान्नैलमहासुखं लयवयादाविर्भवत्यान्तरम्। लीने चेतसि चात्र विश्वनिलये वह्नेरिवादौ

कणा दृश्यन्तेन्तनन्तरं च विलसद्दीपाः प्रदीपांकुराः। बालस्येव दिवाकरस्य बहलोद्योतस्तथो द्योतते यद्वा भूगगनान्तराल कुहरे ज्योत्स्नासपन्नं महः। नित्यानन्दनिधिश्रियः पतिरिति श्रीवासुदेवः पुमान् नात्मेत्यच्युत इत्यचिन्त्यमहिमा योगीयते योगिभिः। स्थानेऽस्मिन् परमे स एष भगवान्व्यक्तो भवत्यावयः

p. 104)

साक्षाद्राहुरिवाम्बरान्तर चरश्चन्द्रार्कयोर्मण्डले। विश्वस्यायतनं महद्भगवतस्थानं यदेतत् परं यत्रारोप्य समीरणं सुकृतिनः प्राणः प्रयाणे नराः। दिव्यन्तं परमं पुराणपुरुषां वेद्यं कवीनां कविं विश्वाद्यं प्रविश्यन्ति सन्तत महानन्दैककन्दं विभुम्। सहस्रारपद्मं विसर्गादधस्तादधो वक्रमारक्तकिञ्जल्कपुञ्जम्। कुरङ्गेण हीनस्त्रिशृङ्गस्तदन्तस्पुरद्रश्मिजालः सुधांशुः समास्ते। तदन्तर्गतं ब्रह्मरन्ध्रसु सूक्ष्मं यदाधारभूतं सुषुम्नाख्य नाड्याः। तदेतत् परं दिव्यन्तगुह्य सुरैरप्यगम्यं सुगोप्यं प्रयत्नात्। एतत् कैलाससंज्ञं पदमकुलपदं बिन्दुरूपीस्वरूपी यत्रास्ते देवदेवो भवभयतिमिरध्वंस हंसः स हंसः। भूतानामादि भूतार स विसरसितां सन्ततामन्तरङ्गे सौधीन्धारां विमुं चन्नभिमतफलदो योगिनां योगगम्यः। स्थानस्यास्य ज्ञानमात्रेण नृणां संसारेऽस्मिन् सम्भवो नैव भूयः। भूतग्रामं सन्तताभ्यासयोगात् कर्तुं भर्तुं स्याच्च शक्तिः समग्रा। स्थाने परे हंस निवास भूते कैलासनाम्नी हनिविष्टचेताः। योगीगतव्याधिरधः कृताधिबाधश्चिरञ्जीवति मृत्युमुक्तः। स्थानेऽस्मिन् क्षयवृद्धि भावरहिता नित्योदिताधोमुखी

p. 105)

बालादित्यनिभ प्रभाशशभृतः सास्तेकला षोडशी। वालाग्रस्य विखण्डितस्य शतधा भागेन वैकेनया सूक्ष्मत्वात् सदृशी निरन्तरगलत् पीयूषधाराधरा। एतस्यात् परतस्थिता भगवती

भूताधि देवाधिपा निर्वाणाख्य कलार्धचन्द्रकुटिला सा षोडशान्तं गता। वालाग्रस्य सहस्त्रधा विगलितस्येकेन भागेनया सूक्ष्मत्वात्। सदृशी त्रिलोकजननी या द्वादशार्कप्रभा। निर्वाणाख्य महाकलोपरिगता निर्वाणशक्तिः परा कोटयादित्य समप्रभाति गहनावलाग्र भागस्य या। कोटयंशेन समासमस्तजननी नित्योदिता निर्मतला नित्यानन्दपदच्छलोरु नगरद्वारा निरालम्बना। एतस्याः परतः परात्परतरं निर्वाणशक्तेः पदं शैवं शाश्वतमति प्रमेयममलं नित्योदितं निष्कयम्। तद्विष्णोः पदमित्युशन्ति सुधियः केचित् पदं ब्रह्मणः केचिद्धंसपदं निरञ्जनपदं केचिन्निरालम्बनम्। आरोप्यारोप्य शक्तिं कमलजनिलयादात्मनासा क्रमेषु स्थानेष्वाज्ञावसानेष्ववहित हृदयश्चिन्तयित्वा क्रमेण। नीत्वा नादावसाने खगमकुल महापद्मसत्मान्तरस्थां ध्यायेच्चेतन्यरूपामभिमतफलसंप्राप्तये शक्तिमाद्याम्। साक्षाल्लाक्षारसाभं गगनगतमहापद्मसत्मस्थ हंसात्

p. 106)

पीत्वा दिव्यामृतौघं पुनरपि च विशेन्मध्यदेशं कुलस्य। चक्रे चक्रे क्रमेणामृतरसविसरैस्त पयं देवतास्ताहा किन्याद्याः समस्ता कमलजपदगां प्लावयेत् कुण्डलीन्ताम्।

॥ इति आधारनिर्णयोनाम पञ्चमः पटलः॥

स्वयम्भुलिङ्गनिजयोनि मध्यरन्ध्रान्तरे हृत्सरसीरुहान्तः। बाणाह्वयं चेतरमन्तराले वदन्ति सन्तो गगनाम्बुजेन्ये। यद्बीजं वाग्भवाख्य द्रुतकनकनिभं तत् स्वयं भूतलिङ्ग स्थाने ध्यात्वा हृदं रुहकुहरगते बाणलिङ्गे द्वितीयम्। कामाख्यं बन्धुजीवप्रसवसमरुचिं शारदेन्दु प्रभाहं तात्तीयीकं तु बीजं त्वितरपरिगतं चिन्तयेत् शान्तचित्तमः। प्राणान्योनिगतान्विधाय मनसा ध्यायन्ति ये भारतीं बीजाख्यां निजयोनिरन्ध्रनिलया मानाभिरन्ध्रोत्थिताम्। बालार्कारुण

तेजसा भगवतीं ये सिद्धलिङ्गाकृतिं तेषामेव कवित्वसम्पद् तुलापीयूषनिष्यदिनी ।
सिन्दूरारुण सुन्दराभिरखिलं प्रोद्भासयन्तीं कुलं हृत्पद्मान्तरगां विभाभिरनिशं ये
बाणलिङ्गाकृतिम् । आ बिन्दोरुदितामनन्यमनसो ध्यायन्ति दिव्याङ्गनाः

p. 107)

कामर्तानि पतन्ति लोकमसस्तेषां पदान्ते भुवि ।
ये गौरीमितराभिधान्निजरुचाध्ययन्ति लिङ्गाकृतिम् ॥

बिन्दुस्थानगतां सुधाकरकर श्रीहारिणोद्भासिताम् ।

अर्धेन्दु प्रतिमां विसर्गगमहापद्मः सुतां बिभृतीं धारां विद्रुमपाटलामृतमयीं ते
सम्पदामास्पदम् ॥ १ ॥

त्रयाणां लिङ्गानामति बहलतेजस्ततिजुषां त्रिषु स्थानेष्वेषु स्थिरनिहितधीः साधाकवरः । जपं
मन्त्रं लक्षं सरसकुसुमैर्ब्रह्मतरुजैस्त्रिमध्वक्तैर्होमं तदनु निशि चारेण जुहुयात् ॥ २ ॥

निः शङ्कं हरिणाक्रमं बरतलोत्पातालमूलं गतं
तन्त्रस्थेन दिवाकरेण पुटितं कृत्वा समाधाय च ।
रहोरस्य गते कपालिकरण प्रस्तावना पण्डितः
कुण्डे हस्त कुरण्डकेन जुहुयाद्धोमो यमत्यद्भुतम् ॥ ३ ॥

एकं वत्सरमेव मेवशितधीर्मर्त्यो जुहोतीभयः

सद्योमृत्युन्मसौ विजित्य वपुषः पुष्टिं विष्टां दधत्।
दर्पं दर्पकसन्निभो मृगदृशां भञ्जन् स भृङ्गाङ्गना
श्रीणी श्रीमदराल कुन्तल च यो जीवत्यनेकाः समाः॥ ४॥

बन्धूक सान्ध्यघनबन्धुरकान्तिकान्तं मन्दस्मितांशु विशदी कृतमुद्वहन्तीम्।
दन्तेच्छदंरुचिरकुण्डल मण्डितं च गण्डस्थ लीयुगमखण्ड सुधांशु पाण्डु।

p. 108)

उत्तुङ्गसङ्गतपयोधरहारनम्रकम्रावलग्नविलत् त्रिवली तरङ्गाम्। गम्भीरनाभिविवरामुरुराजरम्भ स्तम्भोपमोरु युगलामरुणाङ्घ्रिपद्मम्। कलाम्मौलाविन्दोर्गलदमलपि यूषविसरां वहन्तीं सन्तानप्रसवरचितं शेखरम्। वसानां सचासोभि किरणनिर्मोकविशदं महाबिन्दो रूढां जढरशशभृत्कोटिधवलाम्।

हस्ताभ्यामक्षमालां स्फटिकमणिमयीं ज्ञानभद्रां
बिभ्राणां दक्षिणाभ्यां मणिमयमकुटां पुस्तकं चाभयं च। वामाभ्यां रत्नकाञ्ची परिव्रतजयनां रत्नकेयूरहारां
दिव्यावं कारयुक्तां त्रिभुवनं जननीं दिव्यगन्धानुलिप्ताम्।

समु * * न्तीमपि शास्त्रजालं निरन्तरं कान्तिकलासमग्राम्।
विनम्र देवासुरनम्रमौलिमालारजो रञ्जितपादपद्माम्॥

ध्यात्वा वागीश्वरीं तां गगनगत महाबिन्दु पीठादतीतं

स्थानं चातीत तस्मादपि तदनुनयेदात्मन स्थानमेनाम्।
सान्तातीतं तु तस्मादनुपममहिमा सूर्यचक्रं ततोस्मा-
द्योमाम्भोजं ततश्चाखिलभुवननुतामानयेत्प्रेतभूमिम्॥

प्रेतस्थानादर्धचन्द्रं ततस्तामरम्भं तु प्रारभेत्सेतुबन्धम्।
तस्माच्चैवं व्योमतस्मादमेयात् स्थानं प्राप्तां चिन्तयेदीश्वरस्य॥

तस्माद्रुद्रस्यालयं रुद्रगेहाद्विष्णुस्थानं प्रापयेदेवदेवीम्।
विष्णुस्थानाद्ब्रह्मणस्थानमेनां ब्रह्मस्थानात् कुण्डलीं गेहमध्यम्॥

p. 109)

सहस्रदलशोभिते रुचिर कर्णिकाकेसरे
वसन्महसि कुण्डली भवनपङ्कजे तां स्थिताम्।
विसर्गगखगाख्य बिन्दुविगलत्सुधा
धारया ततः समभिषेचयेद्भगवतीमविच्छिन्नया॥

अनेन शश्वद्विहितेन देवी ध्यानेन नाशं समुपैति मृत्युः।
याः सिद्धयो दिव्यजनाभिगम्या भवन्तिता अप्यचिरेण पुंसाम्॥

आधार दुर्लसन्तीमकुलगत महापद्मपर्यन्तमन्तर्ध्यायन्ति
ब्रह्मनाड्या स्फुरदमृतरुचि प्रख्यरूपां भवानीम्।
ये देवीं लिङ्गरूपामम्भुवि विमलधियो भावनामातृगम्या निर्धूताशेषपापानिखिलगुणयुता

ज्ञानिनस्ते भवन्ति ॥

ये गोक्षीर तुषार हार धवल प्रोद्दामतेजच्छटा च्छायोद्भासितरोमकूबविवरा

शेषाङ्गलिङ्गाकृतिम् ।

वागीशीं धवलां वराम्बुज गलत्पीयूषधाराद्दवैरा

सिञ्चन्ति समं ततोऽपि च वपुर्मृत्योश्चते मृत्युवः ॥

लिङ्गाकारधरां सुरासुरनुतामेनां सुषुम्नान्तरे

देवीमञ्जनपुञ्जमे च करुचा सिञ्चन्ति शश्वद्भुवि ।

ये दिव्यामृतधारया कालाग्रद्रुतिं नृणां रूपो-

न्मीलनदृष्टपावधरा तेषां कुतो विस्रसा ॥

लाक्षारसस्नपित भग्नमृणालनाल * * *

तन्त्रपमांस्मरति यः स्त्रिपुरां कुलान्तः ॥

p. 110)

तं विस्मयस्तिमितमुग्धदृशस्मरार्ता

वामभृवोरतिपति प्रतिमं स्मरन्ति ।

सिन्दूरपुञ्जपरिपि * * तामिवद्यां

लाक्षारसार्दितमिव क्षितिमण्डलं च ॥

ध्यायन्ति ये रुचिचयैर्हरवल्लभाया

लज्जां विहाय भुवितां ननु यान्ति कान्ताः।

शक्तिं हंसेन युक्तां कमलजनिलयात्वज्रनाड्यन्तरालान्नि बिन्दच्चन्द्रबिम्बान्तर खगपसुधाबिन्दुसन्दोहमन्दम्।
नीत्वा तत्रैव नित्यं स्मरति खगगतामात्मनः शक्तिमाद्यां
यस्तस्या जाण्डभाण्डप्रलयमपघनं स्याद्धनं मृत्युमृत्योः॥

पीताभां स्तम्भनादौशशधरधवला शान्तिकादौ
सु धूम्रामुच्चाटादौ जपाहां त्रिभुवनजनताकर्षणे कार्मणे च।
नित्यान्नित्यं विशुद्धस्फटिकमणि निभां खेचरत्वादि
सिद्धौ मोक्षे साक्षादपेतां बुजगगननिभां भावयेद्भक्तिगम्याम्॥

मार्गेऽस्मिन्नव लक्षमक्षयपदप्राप्त्यै बुधो लक्षयेन्मन्त्राणामिह येन सिद्धिरतुला पञ्चप्रकारा अपि। आधरध्वज नाभिदेश हृदुदरः कण्ठे तथा लम्बके भ्रूमध्येऽपि च भूतनाथ निलयस्थाने नवान्तेऽपि च। आधारे कनकप्रभं प्रविलसद्दीप्तां कृतिः षण्मुखस्थाने नूतनभानुकान्ति सदृशं नाभौ हृदम्भोरुहे।

p. 111)

दीपाकारमुरोन्तरेखरकरोद्योतप्रभं भावयेत्
कण्ठे दीपशिखाकृतिर्मणिगणोद्योतं भ्रुवोरन्तरे।
नवान्ता च ज्योतिर्भवभयतमोध्वंसकुशलं
तदेतद्विश्वाख्यां निरतिशय शर्मोर्मिजनकम्।

दुरापं पापैर्यत्रिभुवनधरं त्रैपुरमिति
प्रतीतं तत्वानां यदुपरिगतं तच्च परमम् ।

॥ इति लिङ्गनिर्णयोनाम षष्ठः पटलः ॥

अथ त्रिलोकार्चितशासनाया वक्ष्यामि बाह्यार्चनमम्बिकायाः ।
यदर्चनीयत्वमुपैति कुर्व * र्वीतले सर्वजनैर्मनुष्यः ॥

शुद्धे मनोज्ञे पशु दृष्टिपातविवर्जिते देवगृहे गृहे वा ।
पूर्वोक्तमार्गेण कृतात्मशुद्धि स्थानस्य शुद्धिं विदधीतपश्चात् ।
भगवतः परमस्य पूर्वयुक्तं गगनं सा नलवामदृक् तथैव ।

कुशतोय समुत्क्षणात् क्षमेयमनुनानेन विशुध्यते समन्तात् ।

अकुलं सकुलादि तर्कबीजं
शिवपूर्वेणयुतं सहेन्दुखण्डम् ।
अमुनामनुना समाहितात्मा
तनुयाद्द्रव्य समुत्क्षणं कुर्याद्भिः ॥

पुष्करं शिवमुखादिसयुतं
पात्रशुद्धिमनुरेष कीर्तितः ।

p. 112)

क्षालयेदमृतवारिभिस्ततः

पात्रजातममुनैव मानवः ।

विलिम्पेत्ततः पीठमम्भोभिर्धौतं

स्वयं भूतपुष्पैन्दुकास्तुरिकाभिः ॥

सकाश्मीरगोरोचनाभिः समन्ताल्लि

खेदत्र यन्त्रं ततो वक्ष्यमाणम् ।

त्रिकोणं विलिख्यानुवृत्तं दलानां

ततः पञ्चकं तद्बहिश्चापि वृत्तम् ॥

पुनः षड्दलं बाह्यतस्तस्य वृत्तं

लिखेदष्टपत्राणि तद्बाह्यतोनु ।

पीठस्योत्तरभागे गुरु पङ्क्तिं पूजयेद्विधिवत् ॥

वायव्यदिक्प्रदेशादारभ्येशानपर्यन्तम् ।

आधारशक्तिमासनमूलेनन्तं च संपूज्य ॥

कूर्मं तदुपरि पृथिवीमपि गन्धाद्यैर्यथार्चयेन्मन्त्री ।

पीठस्याग्नेयादिषु चतुष्कोणेषु पूजयेत्क्रमशः ॥

धर्मादीन् गन्धाद्यैश्चतुरो धर्मादिकांस्तथा दिक्षु ।

पीठस्योपरि सत्वरजस्तमसां त्रितयं च संपूज्य ॥

तदुपरि पद्मं तस्मिन्वसु रविशशिमण्डलानि यजेत् ।
प्रेतं त्रिकोणमध्यगत शशिमण्डलमध्यमे यजेत्तदन्व
तदुपरि शङ्करदयितां हृदयाम्बुजगह्वरात् समावाह्य ।

p. 113)

संस्थाप्य सन्निरुध्य प्रणिपत्य च दर्शयेन्मुद्राम् ।
गुह्याख्यामतिगुह्यामर्घ्यादिकमाचरेद्विधिवत् ॥

वामे त्रिकोणकोणे पाशकरां तप्तहेमसंकाशाम् ।
रतिमर्चयेन्मनोहरवेषां स्वेनैव बीजेन ॥

प्रीतं दक्षिणकोणे निजबीजेनार्चयेच्छ शाङ्कनिभाम् ।
अङ्कुशहस्तां सुमुखीमुज्वलवेषां सुगन्धाद्यैः ॥

आसीनं कुसुमायुधमग्रे देव्याः समर्चयेन्मन्त्री ।
बन्धूककुसुमवर्णं कारयुतकोदण्डदण्डशरम् ॥

कामस्य कामराजं रतिबीजं वाग्भवं समुद्दिष्टम् ।
सम्मोहनाख्यमन्त्यं प्रीते बीजं तथा प्रोक्तम् ॥

शरपञ्चकदेवतास्वमन्त्रैरभिपूज्या दलपञ्चकेषु तेषु ।

शशिकाञ्चन सान्ध्यमेघनीलोत्पलमाञ्जिष्ठनिभास्तरुण्यः ॥

द्राविण्याद्याः क्रमशः सर्वाभरणोपशोभिताः समदाः ।

सव्यकरकलितबाणाः शेषकरैः कृतनमस्काराः ॥

ततो भगाख्यां भगजिह्विकां च देवीं भगास्यां भगसर्पणीं च यजेद्भगाक्षीं च दलेषु षट्सु

तथा भगाह्लादनिकाः क्रमेण ।

शरदंबुदधूम्र सान्ध्य वार्मुक्फलिनी रात्रि सुवर्णवर्णतुल्याः ।

रुचिराभरणो ज्वलास्तरुण्यो मदिरानन्दितमानसामनोज्ञाः ।

करैः खड्गशूलासि वेतालदण्डान्

स कुन्तान्निजैबिभृतीः खेटकं च ।

p. 114)

पैरैर्विस्मयन्त्यः कपालस्य खण्डं

तनुं दुन्दुभिन्नादबिन्द्वाख्यमुद्रे ।

कथयामि भगादि देवतानामिह

बीजान्यपि वाग्भवं सदण्डम् ॥

वसुवामदृगिन्दु खण्डयुक्ते

कुलपूर्वानलगाम्बरे क्रमेण ।

ब्रह्माणीं हंसयानां द्रुतकनकनिभामब्धिवक्त्रांसु नेत्रां हस्ताब्जैः ब्रह्मकूर्चं कलशमपि

लसद्दण्डमच्छाक्षमालाम् ।

बिभ्राणां चारुवेषामथ हरि भयदिक्पत्रमूले यजेत्तां गन्धाद्यैर्बन्धुराङ्गीं वहति वरजटाजूटहारं

सदाया ॥

माहेशीं तां कपालोड्डमर डमरुका भीलशूलोरुटङ्कं

बिभ्राणां बाहुदण्डैर्निबिडभिमनिभामग्निदिक्पत्रमूले ।

नेत्रैरुद्भासमानां त्रिभिररुण जटाजूटमुग्धेन्दु खण्डां गन्धाद्यैः पूजयेत्तां वृषमुडुनिभमारुह्य

नित्यं विहान्तीम् ॥

कौमारीं यौवनाष्यां सुरुचिरवदनां कुङ्कुमाभां सुशोभां शक्तिं पाशाङ्कुशौ या वहति

निजकरैर्दक्षिणेवाभयं च ।

हेलालोलां विशालालस नयनयुगामर्चयेद्गन्धपुष्पैः सर्वालङ्कारयुक्तां शिखिनियमदिशः

पत्रमूले निषण्णाम् ॥

रक्षो दिक्पत्रमूले सजल जलधरश्यामलाङ्गीं सुकेशीं

घणाकम्बुं कपालं रथ चरणमथो बिभृतीं बाहुदण्डैः ।

p. 115)

आरूडां वैनतेय मणिमयमकुटोद्भासितां वैष्णवीं तां गन्धाद्यैरर्चयेद्यां मयुमदमुदितां

नित्यमालोल दृष्टिः ।

वाराहीं खेटकास्युद्धटहलमुसलान् बिभृतीं पोत्रिवक्त्रां

पाश्चात्ये पत्रमूले मणिमयविलसत्कुण्डलोद्भासिगण्डाम् ॥

या शश्वद्विश्व पूज्यागिरिशिखर खराहील लोके निषण्णा गन्धाद्यैरर्चयेत्तां सुरुचिरवदनां धूम्र धूम्राङ्गकान्तिम् ।

इन्द्राणीं चन्द्रबिम्बप्रतिमनिजमुखीमिन्द्रनीलाभवर्णां कर्णान्तोद्भ्रान्तनेत्रां मणिमयमकुटां वायुदिक्पत्रमूले ॥

वज्रं कम्बुं त्रिशूलं शरमपि दधतीं हस्तपद्मैश्चतुर्भि-

र्गन्धैः पुष्पैश्च धूपैः सुरपति वनितामर्चयेन्नित्यमताम् ।

चामुण्डां चण्डभासोद्भटविकटतटाभील वक्त्रान्तरालां

खड्गं शूलकपालं निजकरकमलैर्बिभृतीं खेटकं च ॥

निर्मांसां रक्तनेत्रां त्रिभुवनभयदां सौम्यदिक्पत्रमूले

कालीं कङ्कालभूषां पितृयननिलयामर्चयेदूर्ध्वकेशीम् ।

पश्चादाम्वय्यरूपां सुरुचिरवदनां शुद्धजाम्बूनदाभां

हस्ताब्जै रक्षसूत्राभय कमललसन्मातुलुङ्गी पलानि ॥

बिभ्राणामर्चयेत्तां त्रिभुवनजनताभ्यर्चितां रेयौवनाढ्यां

लक्ष्मीमुत्तुङ्गपीनस्तनभरनिमितामीशदिक्पत्रमूले ।

बीजान्यमीषामथ वर्च्यमनन्तो दीप * * भोन्तं नयनान्तमिन्द्रः ॥

प्रांशूद्रगन्तान्तपरं कुलान्तमनन्तरुद्रेण ततः समेतम् ।

p. 116)

तिथीशः सानन्तो भृगुरथहरोनन्तसहितं
बकान्तं भृतीशस्तदनु च बकोनस्तसहितः ।
कपूर्वं सूक्ष्मान्तान्वितमथ वनं चानुवदनं
शचीनाथोपेतं वदनमिति कान्तान्वितमिति ॥

अथासिताङ्गं रुरुचण्डसंज्ञौ क्रौधीशमुन्मत्तकपालिना च ।
पलाशमध्येष्वपि भीषणाख्यं संहारसज्ञं च यजेत्क्रमेण ॥

दधतोञ्जनपुञ्जनीलवर्णानुरूपे तालकपालशूलदण्डान् ।
लघुदुबुभिसंयुतां स्त्रिणेत्रान् करदण्डैकरिहस्तदण्डचण्डैः ॥

गजकृत्तिनिवर्तितोत्तरीयान् भृकुटीसंघटितैर्ललाटपटैः ।
अलिनालिकलाभ कुन्तलान्मुदितान्तः करणान् सुयौवनाढ्यान् ॥

हरात् तृतीयं भगभूतसंयुतं कुलान्तमर्पित्तविलोचनान्तयुक् ।
निशाकरार्धाङ्कितमस्तकान्वितममयैह तेषामपि बीजमीरितम् ॥

यो हेतुको यन्त्रिपुरान्तराख्यो यौ वह्निवेताल भूताशजिह्वौ ।
कालः करालश्च यथैक पादाभीमाकृतिर्यः खलु भीमसंज्ञाः ॥

ततो नीलजीमूतसंकाशवर्णां दलाग्रेषु गन्धादिभिस्तान् क्रमेण ।
त्रिशूलं कपालं स्फुरन्नागपाशं तनु बुबुभिर्विभृतोबाहुदण्डैः ॥

दंष्ट्राभील विशालवक्रकुहरान्नेत्रैस्त्रिभिः प्रक्षरद्रक्तैर्वा भृकुटीकरालवदनान् कादम्बरीलालसान् ।
ऊर्ध्वी भूतशिरोरुहान् नववयोर्युक्तांश्च भीमाकृतीन्
भौतीशेन निशाकरार्धसहिते नाभ्यर्चयेत्साधकः ॥

p. 117)

प्रियङ्गुश्यामाङ्गं प्रविलसितपाणिं मणिमयो-
र्लसचूडापीडं द्विरदवदनाधिष्ठिततनुम् ।
सहस्रं बिभ्राणं नयनकमलानां हरिरियं
यजेत्पूर्वस्यां वै दिशि कुसुमगन्धादिभिरनु ॥

अथ विकसित किं शुकाहमग्निं छगलगतं सृवशक्तियुक्तहस्तम् ।
मणिमयमकुटं यजेत्सुगन्धैः कुसुमवरैर्धृतरत्नकुण्डलं च ॥

अर्चयेत्तदनु दक्षिणभागे नीलनीरदनिभं पितृनाथम् ।
दण्डहस्तमरुणायतनेत्रं सैरिरिहाङ्गगतमुज्वलवेषम् ॥

नरारूढं रक्षोदिशिविकटदंष्ट्रं सुनिशितं
कृपाणं बिभ्राणं सजलदजलद श्यामलतनुम् ।

यजेद्धेलालोलं पलचपलमारक्तनयनं

विचित्रालङ्कारं तदनुविधिवद्राक्षसपतिम् ॥

शरदभ्रशशाङ्कनिभं वरुणं मकरस्थितमुज्वलवेषयुतम् ।

मणिकुण्डलमण्डितगण्डतलं वरपाशधरं च यजेत्स्वदिशि ॥

वरशं बरगं सृणिरक्तकरं शुचिकेतन धूम्रनिजाङ्गरुचिम् ।

निजदिश्यनलं विधिना हि भजेत्कुसुमप्रमुखैर्मणिहारधरम् ॥

अथोर्णया स्वर्णप्रचयसमवर्णं धनपतिं

समासीनं यक्षैः परिवृतमशेषैश्च निधिभिः ।

गदाहस्तं पिङ्गाक्ष कमलयुगलं सुष्ठुकुसुमै

र्यजेत्गन्धैः पुष्पैः स्वदिशिलसदाकल्पमपि च ॥

p. 118)

ऐशान्यां शशिखण्डमण्डितजटाजूटं त्रिणेत्रं हरं

सिन्दूरारुण विग्रहं दिशि यजेच्छूलं कपालं सदा ।

बिभ्राणं स्वभुजैश्चतुभिरभयं योगाख्यमुद्रां तथा भस्मोद्धूलितविग्रहं वृषवरारूढं ततः

साधकः ॥

मस्कादिजलराशिगं सकं मस्तकादनलगम्बिकान्त्ययुक् ।

सूक्ष्मपूर्वमुखपूर्वसंयुतं लोकपालमनुरेषकीर्तितः ॥ ६४ ॥

वटुकगणं दुर्गाक्षेत्रपालान् स्वबीजैरपि

तदनु नमोन्तै स साधकेन्द्रः क्रमेण ।

मलयजकुसुमाद्यैरर्चयेद्भक्तियुक्तो

भुतवहपिशिताशाधीशं वाय्वीशदिक्षु । ६५ ॥

वसुभ्यो रुद्रेभ्योदिन परिबृढेभ्योऽपि च बलिं

स भूतेभ्यो दद्याद्यजविधिरित्थं निगदितः ।

अमुं कुर्वन्नब्धी तलमपि बुधो नित्यमपि यः

स संपूर्णः कामान् गिरिश इव संप्राप्य रमते ॥ १०६६ ॥

॥ इति सप्तमः पटलः ॥

नित्ये नैमित्तिके च प्रविमलमतयः प्राहुरेकेब्धिकोणं

कुण्डं हस्तप्रमाणं स्मरगृहसदृशं वाथ वृत्तं प्रशस्तम् ।

षट्कोणं वार्धादोषाकर सदृशमिदं स्थण्डिलं रत्निमात्रा यामवाङ्गुष्ठपर्वोन्नतमपि सु समं निर्मितं वालुकाभिः ॥ ६७ ॥

p. 119)

चतुष्कोणमब्धेङ्गुलोत्सेधयुक्तं

बुधाहस्तविस्तारयुक्तं तदाहुः ।

ततः शोधनं क्षालनं शोषणं च

प्रकुर्यात्तथापानं चापि कुर्यात् ॥ ६८ ॥

तिस्रस्तत्र लिखेदुगगत शिखा रेखास्ततो बर्हिषा
प्रगग्राश्च तथा चतुर्मुखमयश्याकरा देवताः ।
तासां वृत्ररिपोर्हरिर्द्रतः शिखाया मध्यसव्योत्तरे
ष्वीश श्रीशसुराधिपर इह तथा प्रागग्ररेखाधिपाः ॥ ६९ ॥

अभ्युक्ष्ये कुशाम्भोहिर्गन्धाद्यैस्तस्यमध्यमध्यमभ्यर्च्य ।
इह नील नीरनदाभां ध्यायेद्वागीश्वरीमुतु स्नाताम् ॥ १०७० ॥

जातं मार्ताण्डकान्ताद्धुतव ह मरणे श्रोत्रियागारतो वा
क्षेत्रां निक्षिप्य पात्रे वा कनकमये ताम्रपात्रे तथापि ।
मृत्पात्रे वा निधा * मलविपुलमतर्वह्निबीजेनमन्त्री
क्रव्यादांशं त्यजंस्तं तदनु च मननाशोधयेदस्त्रकेण ॥ ७१ ॥

कवचेन ततोऽवकुण्ठ्य पश्चान्निहितात्मा प्रविदर्श्य धेनुमुद्राम् ।
आम्रतीरणं बुधो विदध्याज्जलबीजेन स बिन्दुना कृशानोः ॥ ७२ ॥

प्रादक्षिण्यात्त्रिः परिभ्राम्यं सम्यग्वागीश्वर्याः कुण्डमध्यस्थितायाः ।
योनावेवं विन्यसेत्स्वाभिवक्त्रं पश्चादग्निं मूलमन्त्रेणमन्त्री ॥ ७३ ॥

हृन्मन्त्रेण समाहितोऽथ जुहुयादाज्येन सप्ताहुती

गर्भाधानमिदं सितेतरगते सम्यक् कृतं स्यादिह ।

p. 120)

एवं पुंसवनं ततोऽपि तनुयान्मन्त्री तु सीमन्तके ।

तेनैवास्य हि जातकर्मविधिना वह्नेर्विदध्यदपि ॥ ७४ ॥

ततः सप्तहस्तं त्रिपादां द्विशीर्षं

चतुर्भिर्विषाणेस्त्रिधाबद्धमिद्धम् ।

पिशङ्गैर्युतं लोचनैस्तर्कसंख्ये

द्विनासंरणं तं चतुश्रोत्रमग्निम् ॥ ७५ ॥

रक्ताम्बुजस्थं प्रविलम्बितैकपादं च पृष्ठेनं गतं वृषेन्द्रम् ।

स्वस्म्मुखं दक्षिणगैश्चतुर्भिर्वामैस्त्रिभिर्बाहुभिरप्यपेतम् ॥ ७६ ॥

शक्तिं वह्निं स्रुक्स्रुवासव्यहस्तै

र्वामैहस्तैस्तोमरं तालवृन्तम् ।

सर्पः पूर्णं तप्त सौवर्णवर्णं

पात्रं शश्वत्सप्तजिह्वादधस्थनात् ॥ ७७ ॥

या सा हिरण्या कनका च रक्ता

वामाननस्था बहुरूपिका च ।

सुतप्तचामीकर चारुवर्णा

स्थिता हिरण्यादिशि शूलपाणेः ॥ ७८ ॥

वैडूर्यवर्णा कनकाभिधाना

या सा निषण्णा * * वासवस्य ।

या रक्ता तरुणदिवाकराभवर्णा

सा जिह्वाहरिति सु संस्थिता कृशानोः ॥

p. 121)

या कृष्णा विकसित नीरदाभवर्णा

सा रक्षापरिबृढदिग्विभागलग्नाः ।

पद्मरागसदृशं प्रभोज्वला सुप्रभावरुणदिश्यवस्थिता ।

यामभारजतपुष्पसन्निभा गन्धवाहदिशि सा तिरक्तिका ॥

यथार्थ संज्ञा बहुरूपिकाया जिह्वोत्तरे दक्षिणतस्थिता सा

कुण्डस्य मध्येत्वथव प्रशास्ताजिह्वा हिरण्या भुवि कार्मणादौ ।

स्तम्भनादिषु मता कनकाख्या द्वेषणादिषुमता खलुरक्ता ॥

मारणे निगदिता भुवि कृष्णा सुप्रभा बुधवैरैरिहशाक्याम् ।

उच्चाटनेति रक्ताया बहुरूपोत्तरे सिद्धिः ।

ऋद्धिं दक्षिणतः सा तनु ते मध्ये शुभानि सदा ॥

वृत्तारेक अन्येत्वागमपारगामलधियः प्राहुर्बुधाः सुप्रभां

त्विभि स्थितां पितृपतेः कृष्णां हिरण्यां पुनः ।

वारुण्यां बहुरूपिकां पुरभिदो रक्तामुदीच्यां स्थिता माग्नेर्यामतिरिक्तकां च कनकां कुण्डलस्य

मध्येस्थिताम् ॥

जिह्वां तु कनकाख्यां शान्तिकर्मणिकनकाख्याम् ।

रक्तां कार्मणि कर्मणि कृष्णां क्षुद्र क्रियासु बुधाः ॥

या सु प्रभेति गदितातामाहुर्मोक्षकारिणीजिह्वाम् ।

अतिरिक्तामाकृष्टौ बहुरूपामखिलसिद्धिदां जिह्वाम् ॥

सर्वालङ्कारान्वितं सर्वकर्मस्वेवं रूपं चिन्तयेच्चित्र भानु

मन्त्री सम्यक्सप्तजिह्वाभिरामाभिर्युक्तं जातं व्यावृतोत्तान वक्रम् ।

p. 122)

कुर्यान्मन्त्री जातकर्मावसाने पाद्याघ्र्याद्यैरयित्वा यथावत् ।

हृन्मन्त्रेणाज्याहुति सप्तहुत्वा श्रीमन्नामामुष्यधूमं ध्वजस्य ॥

पादग्रैरुदगग्रैः परिस्तरेदथ कुशैः सम्यक् ।

एकलमेखलकुण्डैर्निशितमतिर्मेखलाधस्तात् ॥

परिस्तरे *? मेखले द्वितीयमेखलोपरि ।

त्रिमेखले तु मध्यमस्थमेखले परिस्तरेत्॥

स्थण्डिलकेसिकतानां बाह्येतधत्रीन्यसेत्परिधीन्।
कुण्डस्य दक्षिणोत्तर पश्चिमभागेषु साधकोमतिमान्॥

होतुः पूर्वं पूर्वभागं प्रदिष्टं सव्यं भागदक्षिणां चागमज्ञैः।
वामं विद्यादुत्तरं भागमग्रं प्रज्ञावद्भिः पश्चिमं भागमुक्तम्॥

ततो वामभागे परिस्तीर्यदर्भान्
पुलोमात्मजा वल्लभाशागताग्रान्।
तदूर्ध्वन्यसेद् द्वन्द्वरूपेण पात्राथो
यो न तस्यामि निर्वाणिधीमान्॥

सौवर्णान्यपि राजतान्यपि तथा शौल्बानि पात्राणि वा
मृत्पात्राण्यपि शान्तिकादिषु परं शस्तानि कर्मस्विह।
सेल्वक्षद्रुमशिग्र भूरुहन्येतानि विद्वेषणोच्चा
टोत्सादनमारणादिषु भृशंशस्तानि पात्राण्यपि॥

अथोक्तानि तेष्वेषु पात्रेषु पात्रं
जलैरेकमापूर्य तीर्थानि तत्र।

p. 123)

सु सञ्चिन्त्यतैः प्रोक्षयेत्कूर्चदर्भै

र्हदा सव्यभागस्थितं द्रव्यजालम् ॥

कृतघृतशुद्धिः प्रविमलबुद्धि-

र्जुहुयादाहुति सप्तकमपि च ।

अन्नप्राशनमेतत् चौलोप

नयनयोरपि विद्धीतेर्थम् ॥

गोदानमङ्गलादि ब्रूतेषु सर्वेषु सर्वेषु हृदयेन ।

ते नैब समावर्तनविवाहयोराहुती जुहुयात् ॥

अमुनेति च संस्कृते कृशानौ विधिनापूर्वसमीरितासनन्तत् ।

परिकल्प्य यथा वदर्चयेत्तां परिवारेण सहाम्बिकामथात्र ॥

परिवारस्यैकाकां देव्यादशाचाहुतीर्जुहुयात् ।

एवं भैरव्यग्निर्जनितस्याद्धोममारभेताथ ॥

पालाशैर्मधुरत्रयेण कुसुमैः सितैरशेषान्नरः ।

कामांश्चंपकपाटलैर्वचकिलैः प्राप्नोति होमादयम् ॥

राज्यं बिल्वफलैर्दलैरपि तथा साम्ब्राज्यमम्भोरुहै

रायुः शाड्वलपल्लवैः सहदलैः शान्तिं सभाज्यैस्तिलैः ।

आधारेण द्रविणं विगदत्वं प्राप्नुयाच्च सिद्धार्थैः ।

प्रीतिं गुडेन पत्रैः पुत्रान् सौख्यं फलैर्मनुजः ॥

लाजैः सौभाभाग्यं धान्यमनेन होमात्

पुष्पैः कादम्बैर्यक्ष लोकाधिपत्यम् ।

p. 124)

मर्त्यं पुन्नागैरेति विद्याधरत्वं

पुष्पैर्मालयाः सिद्धगन्धर्वलोकान् ॥

आकृष्टिर्यक्षिणीनां त्रिमधुसहितैरर्जुनैः

सर्षपैस्याद्वेश्यावश्याभवेयुर्हरिहय कुसुमैः किंशुकैश्चापि होमान् ।

वश्यास्युः कर्णिकारैरथ धरणि सुराःक्षत्र्याः कासमर्दैर्वैश्यानां किङ्करातैर्गण इह वशगः

पाटलाभिश्च शूद्राः ॥

छगलां गजमांसलेश होमात्परराष्ट्रं स्ववशं भवेदशेषम् ।

अपि चारिबलं पराङ्मुखं स्यान्मधुयुक्तेन महाबलेन वापि ॥

कटुकत्रयनिम्बपरकेशै

स्वगुडैन्नाखलान्वितैर्निशासु ।

कटुतैलविमिश्रितैश्च होमा

दरयस्त्रिर्मुनिवासरायन्ते ॥

नग्नजितस्थ्यजहोम हरिद्रा खण्डनखैर्विहितः खलु होमः ।
सप्तदिनात् प्रतिपक्षं नृपाणां स्तम्भनकृत्प्रवलस्य बलस्य ॥

माषैर्मूष्कत्वं कोद्रव्यैर्व्याधिबाधा
वातातं कास्युः कलायैश्च होमात् ।
मत्तस्यादक्षजाभिः समिद्भिर्मृत्युः
सप्ताहाच्छल्मलीवृक्षजाभिः ॥

कपिला घृतसंयुतैर्मनुष्योयव
गोधूमतिलैः षडश्च कुण्डे ।

p. 125)

नियुतं खचरत्वमेति हुत्वा निशि
चारेण समाहितान्तरात्मा ॥

पलाशदृकाष्ठैः परिज्वाल्य भव्या-
शनं चन्दनाभ्युक्षितैर्बन्धुजीवैः ।
समस्तानि भूतानि वश्यानि होमाद्
भवेयुः प्रियङ्गु प्रसूनैश्च तद्वत् ॥

नरो भक्ष्य भोज्यान्नपानानि हुत्वा

परां संपदं प्राप्नुयादत्र लोको ।
वटोदुम्बराद्यं कुरैस्वादुवर्गा-
न्वितैः कल्पिता मल्लिकाभिर्यशस्तु ॥

तुष्टिं नीलाम्भोजैर्होमात् सौगन्धिकैर्भवेत्पुष्टिः ।
कुमुदैर्जनवात्सल्यं पुत्राः कङ्केलि कुसुमैस्युः ॥

यत्खलु किञ्चिदभीतमं स्याद्भूमितले मनसोमनुजानाम् ।
तत्सकलं मधुरत्रयहोमात् स्यादचिरेण सुशक्यमुपैतुम् ॥

घृता इति द्विगुणित षोडशाङ्गुलो-
न्नतिर्वरा तत इह मध्यमार्थतः ।
गजाङ्गुलोन्नतिरधमा तिलोद्भवं
तथैवमाक्षिकमपञ्चगव्ययुक् ॥

एकं चुलुकं पयसोदघ्नस्तन्वन्यतस्तु वन्याश्च ।
एकैकापूपलिकापासमक्षप्रमाणं स्यात् ॥

p. 126)

कदलीपलमेकैकं नारङ्गं चापि मातुलङ्गं च ।
पनसफलां दशखण्डं गुणखण्डं स्यात् फलं वैल्वम् ॥

कर्करिका गुणखण्डा दलपुष्पफलान्य खण्डानि ।
चतुरङ्गुष्ठसमाना व्यञ्जनपिण्याककृसराञ्चश्च ॥

चुलुकार्धार्धं हि तिलाः प्रसृतिमिताः पक्तवोगतोः ।
लाजास्याम्मुष्टिमिताः कषार्धार्धं तु सर्षपाः प्रोक्ताः ॥

कर्ष प्रतिमितामुद्गामाषाश्च ब्रीहियो मुष्टिमिताः ।
षोडशनरपति माषौ गोधूमा रक्तशालयस्तद्वत् ॥

सप्ताष्टौ वा यवकौ वेणु यवाः पञ्चषा भगिताः ।
अर्धफलं गुलमानं मुष्यर्धं तण्डुलाः प्रोक्ताः ॥

कुङ्कुमचन्दनमृगमदघ्नसाराश्चणकमात्रास्युः ।
बरफलप्रमाणं पुरद्विखण्डं कपित्थं फलम् ॥

श्लेष्मातपिशाचतरुं त्यक्तवान्येभ्यः समाचरेत्समिधम् ।
गोपुच्छशीर्षकांश्च त्यक्तवान्य तृणं भवेत्परिस्तरणम् ॥

एधां त्रिहिरण्यायां चरुमाधारं च कनकायाम् ।
बहुरूपायां जुहुयात् सिद्धर्थान्वै यवांस्तु रक्तायाम् ॥

कृष्णायामिह लाजान् सक्तून्वै सुप्रभायां तु ।

अति रक्तायां तु तिलान् सर्वद्रव्याणि कनकायाम् ॥

वह्नेः कण्ठोहोमतो व्याधिबाधानेत्रे
न्धत्वं नासिकायामथाविधिः ।

p. 127)

द्रव्यच्छेदो मस्तके स्यान्मुखा
न्तर्होमं कुर्यात्तेन नित्यं विपश्चित् ॥

भेरी वारिदवारणध्वनि नभो वह्नौ ध्वनिः शोभनो
वर्णस्वर्णनिभः शुभोदयकरः सिन्दूररेणूपमः ।
उद्यद्भास्कर स प्रभश्च सुसृणक्षोदेन्द्रगोपारुणो गन्धश्चम्पकपाटलाविचकिलैराज्येन
तुल्योऽपि च ॥

पुन्नाग पुष्पकेसर गुल्गुलु गन्धोपमश्च सिद्धिकरः ।
छत्राकारा शुभदा शिखाशिखाहात्यकम्पना च भवेत् ॥

धूमोग्नेः कुन्दनिभफलदः काशकुसुमसंकाशः ।
खरवायसरव सदृशोवह्नेः शब्दो विनाशकरः ॥

कृष्णोहुतवहवर्णो यजमानं मारयेदचिरात् ।
पिङ्गो बहुरोगकरोरूप्या भोराष्ट्रदाहमपि कुर्यात् ॥

विष्ठा सदृशो वह्नेर्गन्धोर्विविधानि दुःखानि ।
मूत्रसमोबलहानिं स्वेदाभः सुतविनाशनं कुर्यात् ॥

विच्छिन्नोग्नेर्मृत्युं शिखा सुवृत्ता करोति धनहानिम् ।
शुकपिञ्छा गोधूमो वह्नेर्वाजीन्द्रमाशु नाशयति ॥

कुर्यात्कपोतसदृशः कूपीडयोनेर्गवां हानिम् ।
आवर्तः शुभफलदः प्रदक्षिणो वीतिहोत्रस्य ॥

विद्युत्पातं दर्दुरो विष्णुलिङ्गे
* *र्थ्यं स्याद्धोमकाले कृशानोः ।

p. 128)

वामावर्ते व ग्रहोभासयुक्ते
होतुभीतिश्चोद्भवो भूतसङ्घान् ॥

वस्वधिकमाहुतीनां जुहुयाच्छतमेषु दोषेषु ।
अस्त्रेन साधकेन्द्रस्तनयादथ चक्रपूजां च ॥

वश्यो भवत्यवश्यं * म्भूमिपतिर्लक्षहोमेन ।
लक्षार्धेनामात्याः सामन्ता पादहोमेन ॥

षष्टि सहस्रे भूपति पत्न्योवशगास्तदीय पुत्राश्च ।
एकलसहस्रहोमात् सुभगाणगणिकाश्च वश्यास्युः ॥

नियुतैर्दशभिर्भवन्ति वशगानागसदः सुरेशमुख्याः ।
नियुतैस्त्रिभिरेव देवपत्योमुनयश्चापि तथाल्पदेवताश्च ॥

गन्धर्वसिद्धचारणाप्सरोगणाह्येकलक्षेण ।
वंशतिलक्षैर्वशगा भवन्ति विद्येश्वराः सर्वे ॥

नियुतैर्दशार्धसंख्यैः सदाशिवाम्भोजनाभिकमलभुवः ।
वश्या भवन्ति लक्षैः कोटिभिराप्नोति शाश्वतन्धाम ॥

पूर्णाहुतिमथ कृत्वा दुरारिदयितां विसृज्य दृढबुद्धिः ।
तदनुसमाहितबुद्धिस्वाहानाथं विसर्जयेन्मन्त्री ॥

स परिस्तरां न होमे नित्यं परिधीं दहेन्मतिमान् ।
नैमित्तिके तु होमे परिधीन् स परिस्तरां दहेन्मन्त्री ॥

॥ इत्यष्टमपटलः ॥

अथाग्निकार्यं कथयामि पूजागारस्य कुर्याद्दिशिवासवस्य ।

ईशस्य य * दिशिवित्तपस्य विभावसोर्मण्डलस्थ कोणः ॥

नवहस्तमात्रमुतशैलदोर्मितं यदि वा हृषीकरसमंमितं म्तम् ।
रुचिरैश्चतुर्भिरविरन्ध्रमुन्नतं कुशतोरणैः सितवितानशोभितम् ॥

चतुर्द्वारयुक्तं ततस्तस्य मध्ये
बुधं तत्त्रिभागेकभागेन वेदिम् ।
अरत्रिप्रमाणान्नतिं दर्पणान्तं
निभाभामनोहारणं तत्र कुर्यात् ॥

वेदाश्रं योनिमर्धोन्धुपतिमनलाश्रं सुवृत्तं षडश्रं
पद्माकारं गजाश्रं हरिहयहरदारह्ये तस्यां विदध्यात् ।
मध्ये वृत्तं च गोरीपति सुरपति दशोः पण्डिताः केचिदाहु
र्वायव्ये पञ्चकोणं दिशि मदनरिपोः सप्तकोणं च कुण्डकं ॥

प्राक्सूत्रं प्रथमं निधाय विदधीतार्धेन तस्याङ्कितं
मध्ये मत्स्ययुतं दिशोर्विमलधीकी नाशवित्तेशयोः ।
ताभ्यां वृत्तमभिप्रासार्य चतुरः कोणांस्ततो लाञ्छयेत्
क्षेत्रं स्याच्चतुरश्रमत्र जनयेदन्यानि कुण्डान्यपि ॥

क्षेत्रे क्षिप्त्वा बहिरिह पुरोभूतभागेंशमेकं
कोणार्धार्धं सु निशितमतिर्भ्रामयेत् संप्रगृह्य ।

भास्वत्कोणः परमपि तथा सूत्रयुग्मस्य पातं

मध्यात्कुर्याद् भवति तदिदं मन्मथा वा सकुण्डम् ॥

p. 130)

परित्यज्य भागद्वयं पङ्क्ति भागी

कृतोत्रोपविष्टादधस्तच्च विद्वान् ।

परिभ्रामयेत्तेनमानेन सम्यग्

भवेदर्धचन्द्रांकितं कुण्डमेतत् ॥

वासरेशार्धभागी कृते क्षेत्रतः

पार्श्वयोर्न्यस्य भागद्वयं पण्डितः ।

तेनमानेन सूत्रद्वयं विन्यसे

त्कुण्डमेतद्भवेद्रुद्र नेत्राश्रकम् ॥

दिग्गजाभ्यधिकपङ्क्तिभागतः

क्षेत्रतो निशितधीर्बहिन्र्यसेत् ।

भागकलमनेन सर्वतो भ्रामये

द्भवति वृत्तमुत्तमम् ॥

भूपांशेंशद्वयमिह बहिः पार्श्वयोन्न्यस्य मध्यात्

क्षेत्रव्यासे सु विमलमतिस्तेन वामेन कृत्वा ।

पार्श्वद्वन्द्वे झषयुगयुतं सूत्रषट्कस्य पातं

कुर्यात्कुण्डं भवति तद्दिदं तर्ककोणं मनोज्ञम् ॥

दशांशे तु विन्यस्य बाह्येंशामेकं
परिभ्राम्य तेनैव वृत्ता दलान्तान् ।
बहिर्मध्यमे कर्णिकां चापि कुर्याद्
भवेदष्टपत्रं बुधः पद्मकुण्डम् ॥

p. 131)

क्षेत्रे क्षिप्त्वात्र बाह्ये दिशिदिशिमिहिरद्वन्द्वकांशेंशमेकं
कृत्वा तेनाब्धिकोणं पुनरपिमतिमान् कोणतोर्धं गृहीत्वा ।
तत्कोणाभ्यां विदध्यादिह खलु परितस्तेनमानेन चिह्ना
न्यष्टाश्रं स्यात्समन्तादपि च वितनुयादष्टसूत्रप्रयोगम् ॥

भायांशेत्रनागं बहिर्न्यस्य वृत्तं
परिभ्राम्य भूमौ युगांशी कृतेशैः ।
त्रिभिः पट्टदैर्घ्यं भवेत्पञ्चसूत्र
प्रयोगादिदं तेन पञ्चाश्रकुण्डम् ॥

क्षेत्रव्यासे दशांशे बहिरिह विनिधायैकमंशं सुवृत्तं
मानेनानेन कृत्वा पुनरपि च चतुःषष्टि भागीकृतेऽत्र ।
भागायाम प्रमाणं दृढमतिरमुना स त्रिकैस्त्रिंशदंशेः
कुर्यात् सप्ताश्रकुण्डं भवति च तदिदं सप्तसूत्रप्रयोगात् ॥

यावन्मानं कुण्डविस्तार उक्त-
स्तावत्खातस्यापि मानं प्रदिष्टम् ।
कुण्डाकारं पण्डितो यादृशं तत्
तादृग्रूपं मेखलाया विदध्यात् ॥

तिस्रः कुण्डे मेखला मेखलेद्वे
यद्वा विद्वानेकलामेखलां वा ।
कुर्यादूर्ध्वं मेखलाया गजोष्ठा
कारं योनिं चापि होतुर्दिशीह ॥

p. 132)

मुष्टिमात्रेऽत्रतामेखलाद्व्यङ्गुलैका
धाङ्गुलोत्सेधतारा भवेयुः ।
क्रमाद्रत्निमात्रेऽत्र तास्त्र्यङ्गुल
द्व्यङ्गुलैकाङ्गुलोत्सेधताराः पुनः ॥

युगार्पित्तनेत्राङ्गुलोत्सेधतारा-
स्युरेताः क्रमाद्धस्तमात्रे तु कुण्डे ।
करद्वन्द्वमात्रेरसाम्भोधि वह्न्य
ङ्गुलोत्सेधविस्तारयुक्ता भवेयुः ॥

वेदकरेऽस्मिन् सिन्धुरतर्काब्ध्य

ङ्गुलतारोत्सेधयुतास्ताः ।

षट्करमात्रेऽस्मिन् दशकुम्भ्याङ्गा

गुलतारोत्सेधयुता समेताः ॥

भास्करपङ्क्ति गजाङ्गुलतारो-

त्सेधयुतास्युरिमाव सुहस्ते ।

नाहि महाम्बुजमत्र विदध्यादष्टदलं सहकर्णिकमन्तः मुष्टिमात्रेरसाम्भोधि

नेत्राङ्गुलायामतारोन्नतिर्योनिरुक्ताबुधैः ।

नेत्रवेदाङ्गुलोत्सेधतारोन्विता

नाभिरप्यत्र योन्योष्टमेकाङ्गुलम् ।

योन्या लक्षणमेतद्गदितमिदं रत्निमात्रेऽत्र ।

कुण्डस्य मये भोक्तं तदेव खलु हस्तमात्रस्य ॥

p. 133)

एकैकेनाङ्गुलेनाम * निशितमतिर्वर्धयेदन्यकुण्डे

ष्वेनां योनिं च नाभिं खलु यवयुगलेनेह योन्यास्तथोष्ठम् ।

कुर्यान्नाभिं च वृत्ता कृतिमपि यदि वा कुण्डरूपानुरूपा

योन्याकारेऽत्र योनिं सरसिजसदृशेनोपि दध्याच्चनाभिम् ॥

कुण्डस्यैके हस्तमात्रस्य योनिं प्राहुर्भूतद्यङ्गुलायामताराम् ।
व्यासत्र्यंशैकांशकोत्सेधयुक्तां कुर्याद्बोधिक्ष्माजपात्रानुरूपाम् ॥

नेत्रताराङ्गुलोत्सेधतारान्वितान्
नाभिमंसद्वये तच्छदान्यष्ट च ।
व्यासवह्न्यंशतोंशेन तत्कर्णिकां
मध्यभागे विदध्याद्बुधः कुण्डतः ॥

कुण्डस्यैककरस्य चारुपरितोनेमिर्भवेदङ्गुले
नैकेनैव ततो विरोचनकरादारभ्य संवर्तयेत् ।
कुण्डादुत्तरकुण्डकावधिबुधः प्रत्येकमर्धाङ्गुलं
तद्बाह्ये खलु मेखला त्रितयकं कुर्याद्यथोक्तक्रमात् ॥

शतार्धहोमे खलु मुष्टिमात्रं
रत्निप्रमाणं शतहोमकुण्डम् ।
हस्तं सहस्रेह्ययुते द्विहस्तं
लक्षे चतुर्हस्तमिदं प्रदिष्टम् ॥

दशलक्षेरसहस्तं वसुहस्तं कोटिहोमस्यात् ।
कोटयूर्ध्वेत्वष्टकरं होमेष्वागमविदो ब्रुवते ॥

p. 134)

केचिद्धस्तं लक्षहोमे द्विहस्तं
लक्षद्वन्द्वे वह्नि लक्षेत्रिहस्तम् ।
होमे कुण्डं वेदलक्षेब्धिहस्तं
प्राहुर्दोष्णां पञ्चकं पञ्चलक्षे ॥

रसलक्षं रसहस्ते सप्तकरं सप्तलक्षे स्यात् ।
सुलक्षे वसुहस्तं नवलक्षे नवकरं कुण्डम् ॥

दशलक्षे दशहस्तं दशकरमेवेह कोटिहोमेऽपि ।
दशहस्तां न हि कुण्डं परमभीतले मुष्टिन् ॥

सर्वसिद्धिकरमम्बुधिकोणं पुत्रदम्मनसिजाव सथाभम् ।
अर्धचन्द्रसदृशं शुभदं स्यादग्निकोणमरिमर्दनहेतुः ॥

शान्तिकर्मणि भवेत्सुवर्तुलं
शत्रुमारणकरं षडश्रकम् ।
पद्मकुण्डमिह वृष्टिकारकं
रोगशान्तिकरमष्टकोणकम् ॥

चतुरश्रं विप्राणां राज्ञामिवर्तुलं कुण्डम् ।
वणिजामर्धशशाङ्काकारं त्र्यश्रं तु शूद्राणाम् ॥

चतुरश्रं तु सर्वेषां प्रशस्तमिति केचिदाहुराचार्याः ।
वाञ्छिदफलदं यत्तत् कुण्डं त्विह भुक्तिकरम् ॥

षट्कोणमर्धचन्द्राकारं चापि प्रजाकारं कुण्डम् ।
मुक्तिकरं पञ्चाश्रं वसुकोणं चेहराज्यदायोनिः ॥

॥ नवमः पटलः ॥

p. 135)

अथामरेन्द्रैरपि दानवेन्द्रैर्धृतं प्रसिद्धैरपि सिद्धवर्यैः ।
सौभाग्य सम्पत्तिगुणैक हेतुर्यत् त्रैपुरं तत्कथयामि यन्त्रम् ॥

कर्पूरक्षोद्दिग्धाखिलतनुरमलस्नान पूतोवसान
क्षौमं श्रीकण्ठपङ्क स्पुटरचितलसत्चित्रको नेत्रयुग्मम् ।
सद्यः कृत्वाञ्जनोक्तं विकसितवदनः प्राप्तनिःसिमहर्ष
स्ताम्बूलग्रास पूर्णारुण मुखकुहरश्चालिखेद्यन्त्रराजम् ॥

कस्तूरिका गरु सुधाकरखण्ड कुण्ड
गोलोत्थजागलगुडैः स पटीरपङ्कैः ।
युक्तै स्वयम्भूति सुमेनविशालभूर्ज
पत्रे लिखेदविवरे तपनीय सूच्या ॥

लिखेद्भूप पत्राणि वृत्ताद्बहि
र्मांस पत्राणि तद्बाह्य देशे।
पुनर्भूपपत्राणि तेषां दलानां
बहिर्दन्त पत्राणि चारूणि धीरः॥

तत्कर्णिकायां महायोनिमध्ये लिखेद्
वाग्भवं कामराजं तु तस्योपरि।
शक्तिबीजं तयोरूर्ध्वतः कारयेद्धंस
देवो परिस्थां जगन्नायिकाम्॥

षोडशारे ततः षोडशोहस्वरा
द्वादशारे पुनः कामराजं लिखेत्।

p. 136)

वासरेशस्वरैर्भिन्नमेनं विधा-
यान्त्यबीजं परे षोडशारे लिखेत्॥

कला बिन्दुनादैः शिरोदेशलग्नैः
परिभ्राजमानान् ककारादि वर्णान्।
लिखेदन्तपत्रेषु सर्वं तदेतद्
बुधो मन्दिरस्थोदरस्थं विदध्यात्॥

सुषिरेण तु वेष्टयेत् समन्ता-

दथ मन्त्री महनीय यन्त्रराजम् ।

सुविशुद्ध सुवर्ण पट्टबन्धं

विदधीतानुहुतादि सिद्धमेनम् ॥

इयं रक्षा साक्षात्त्रिपुरमथनेनापि विभुना श्रियः

कान्तेनापि त्रिदशगुरुणाचापि हरिणा ।

धृता कन्दर्पेणाप्य मृत किरणे नापि विनतात

निजेनाप्येषा सततमपि शीते तरुरुचा ॥

गन्धर्वैरपि किन्नरैरपि धृता यक्षस्तथा राक्षसैः

सिद्धैः साध्यगणैन पन्नगवरैर्विद्याधरैर्गुह्यकैः ।

सौभाग्यात्थिभिरर्थलोलहृदयैरन्यैश्च धन्यैर्जग-न्मङ्गल्यैर्मनुजोत्तमैरपि नृपैर्वस्वेश्वराद्यैरपि ॥

बहुब * रगन्धसिन्धुरेन्द्रै

र्मदचित्वल्लविलिप्तगण्डपिण्डैः ।

p. 137)

तुमुलेयुधि यन्त्रराजशक्त्या समवाप्नोति जयश्रियं नरेन्द्रः ।

नरपालग्रहोदरेषु सम्यग्व्यवहारेष्वपि धारणादमुष्य ॥

मनुजोपि च वादिभिर्विवादे जयमाप्नोति हि यन्त्रसत्तमस्य ।

विपिनेषु लुलाय चित्रकाय द्विपभल्सूककुलाकुलेषु पुंसाम् ।

चरतान्न चिराय विद्यतेभी स्त्रिपुरा यन्त्रवरस्य धारणेन ।

नरनाथवराभवन्ति वश्यास्तदधीनाः सचिवाश्च तत्तनिजाः ।

प्रमदाः समदाश्च यौवनाढ्या स्तनभारानमिताः स लीलयाताः विषमुग्रं पीहकालकूट प्रतिमं संहृति कर्मकर्मठं यत् ।

अमृतं भवन्ति धृवं तदेतद्वधतस्त्रैपुर यन्त्रराजमेनम् ।

दहनस्तु हि नत्यसौदर्वान्तर्विततोर्ध्वीकृत भूरिलोलकीलः ।

धृतयन्त्रवरस्य देहभाजः पयसां चापि निधिस्थ लीयते च ।

हृत्पङ्केरुहकर्णिकोपरि तले मन्त्री तु यन्त्राधिपं ध्यात्वा

शक्ति गमागमं वितवुते धीरः सुषुम्नान्तरे ।

यस्तं शश्वदगण्यपुण्यनिलयं वाक्कामिनी गोमिनी

सामानाधिकरण्य संपदतुलानो मुञ्चतिक्ष्मातले ।

आदौ मन्मथकोष्ठकोटरगतं कामाधिराजं लिखेत्

कन्दर्पद्वितयेन चानुपुटितं कुर्यात्तदेतद्वयम् ।

तद्बीरोमकरध्वजं परिलिखेत्कोणेषु षट् स्वधारान्

मध्ये नाममनोभवस्य सकलं कुक्षौ तदेतत् क्षिपेत् ।

यन्त्रं पूर्वोक्तयन्त्राधिप सदृशमिदं चापि मौलौ गले वा

p. 138)

बाहौ वायौ बिभर्ति त्रिभुवनमखिलं तद्वशे वर्तते च । कान्ताः कान्तालकान्ताः

प्रथुकठिनकुचानम्रकम्राङ्गवल्यः कामेनोप द्रवार्ता कुलितनिजधियस्तं व्रजेयुः सुवल्यः ।

ध्यात्वैवं मूलचक्रान्तरकमलकुटी कोटरे यन्त्रराजं सान्द्रस्वानन्दमन्दं तरुणतरणि

भाभासुराङ्गं च तं च।

यन्त्रान्तः सुस्थसाध्यामलविलसच्चेतनामात्र रूपं

हृष्टोपष्टभ्यमन्त्री मथनमथशनैरुच्चरेदात्मशक्त्या।

भवत्यवश्यं मथने वश्यः साध्यस्तथा साधकपुङ्गवस्य।

त्रिःसप्तरात्रेण महानुभावो देवोऽपि मर्त्यः किमुमन्दवीर्यः।

कलापत्रोपेतं कमलमपि संलिख्य सुमनस्तास्तदन्तः शृङ्गाटद्वितयमपि चान्योन्य पुटितम्।

लिखेन्मध्ये देवी हृदयमपि कोणेषु मदनान्

षडन्तः षट्स्वाख्यां समभिमतसाध्यस्य मतिमान्।

स्मरान् पत्रेष्वेतत् सुषिरविवरान्तः परिलिखेज्जगत्यस्मिन् मन्त्रं प्रथितमिह पिण्डामृतमिति।

जनस्येतद्यन्त्रं वरकनकपट्टेन विहितं

जगत्सर्वं शश्वद्भवति वशवर्ती भवहतः।

॥ इति श्री भट्टनागविरचिते त्रिपुरासारसमुच्चये दशमः पटलः॥

श्री पुरुषोत्तमानन्दसंविदाम्बा श्रीपादुकां पूजयामि। महेश्वरानन्द महेश्वरीम्बा श्रीपादुकां पूजयामि। शिशिरांशु मौले नमः शिवाय। हरहरशिवशिव। मालाधरभट्टन्

p. 139)

॥ संप्रदायदीपिका॥

जपत्येषा गणेशस्य पादपङ्कजयोर्नतिः।

यौ विघ्ननिवहन्दुरान्निरस्यति पदे पदे ।

भट्टनागविरचितस्य सारसमुच्चयस्य व्याख्यारभ्यते । तत्राचार्यः । प्रारिप्सितस्य ग्रन्धस्या विघ्नपरिसमाप्यर्थः मन्त्राधिकारिणामभ्युदय निश्रेयसार्थं च तदुपायभूत देवतास्तुति पुरः सरमाशीर्लक्षणं मङ्गलमाशास्ते । प्रह्वप्राचीरेत्यादि । प्राचीनबर्हिरिन्द्रः कोटीरं मकुटम् । मञ्जीरङ्नपुरम् । कुलनायिका आधाराधिष्ठितात्री जीवं जीवात्मानम् । मध्यनाडी सुषुम्ना । खाब्जगशशिस्थ शिवेति । सूक्ष्मे द्वादशं तस्थसहस्त्रारसरसिजमध्यवर्तिनि सोमात्मकपरमगुरुशिवात्मनि । हंसेन । अजपया । अमरेन्द्रपुरोगतेन । सार्धेन्दुना । अमरेन्द्रो लकारः । तत् परोगतो रेफः । अर्धेन्दुबिन्दुः । रम् इति सास्यादिनाथमरुता । आस्यं विसर्जनीयः । तस्यादि बिन्दुः । मरुत् । यकारः । यम् इति । भुवनं जगत् । सकेन सम्भावयन् । वलभिदा । कम् बिन्दुः । वलभिल्लकारः । लम् इति घटेन स बिन्दुकेन । घटोवकारः । वम् इति । आजम् अण्डं ब्रह्माण्डम् । हरिहयः । इन्द्रः । क पञ्चमं मम्बु तुर्ययुक्तम् । मनुस्वरं तदन्तयुतमिति । कंवकारः तत्पञ्चमं हकराः ।

p. 140)

अम्बु वकारः । तुरीयं सकारः । मनुस्वर औकारः तदन्तं बिन्दुः हकार सकारौकारबिन्दुभिः सदाशिवाख्यं बीजम् । दन्तवसनमोष्ठम् । चिल्लीलता भ्रूलता । लेखनिकायो देवसमूहः जीवं जीवात्मानम् । आकाशाम्बुरुहेत्यादि व्योमपद्मस्थित परमहंसात् स्पष्टमन्यत् ॥

॥ संप्रदायदीपिकायां प्रथमः पटलः ॥

एवं भूतशुद्धिं विधाय देवतास्वरूपमात्मानं बुध्वा वक्ष्यमाणन्यासजातं कुर्यादित्याह ।

अङ्गुष्ठेत्यादिना। अत्रीशोमुखवृत्तवह्निसहितस्वाद्यं सदमिति। अत्रीशोदकारः। वह्नीरेफः। दण्डो बिन्दुः। एभिः प्रथमं बाणबीजम्। त्रिमूर्त्याक्रान्तानन वृत्तमेव तदिति। त्रिमूर्तिरीकारः। तदितिद्राम् इति बीजम्। तदादेशवदाकारमुत्सार्य तत्स्थानमाक्रामता ईकारेण युक्तम्। द्रीमिति बीजम्। मुखान्तस्थितं देवराजाधिरूढमिति। मुखं विसर्जनीयः देवराजो लकारः। वामेक्षणमीकारः। देवराजो लक्षारः। वामेक्षणमीकारः। वक्रं विसर्जनीयम्। तत्पूर्वोबिन्दुः। ककारलक्षारेकार बिन्दुभिः तृतीयम्। क्लीमिति बीजम्। भपूर्वं स वृत्तारि

१४१)

षष्ठस्वरार्धक्षपेशमित्यादिह पूर्वं बकारः। वृत्रारिर्लकारः। षष्ठस्वर ऊकारः। अर्धक्षपेशे बिन्दुः। एभिश्चतुर्थं ब्लूम् इति। कतुर्यंक पूर्वेण युक्तमिति। कं वकारः। तत्तुरीयं सकारः। क पूर्वं विसर्गः। सः इति पञ्चमं बाणबीजम्। एतानि बीजानि अङ्गुष्ठादि कनिष्ठिकावधिकरद्वन्द्वाङ्गुलीषु न्यसेत्। स्थित्यास्थितिन्यासोक्त विधिना। उभयकराङ्गुलीषु करतलद्वयोश्च षडङ्गं विन्यसेत्। न्यासो हि ब्रह्मचारी गृही मुमुक्षुरित्याद्यधिकारि भेदात्। सृष्टिस्थिति संहारात्मना त्रिविधः। तदुक्तं वायवी संहितायाम्। स्थितिन्यासो गृहस्थानामुत्पत्तिर्ब्रह्मचारिणाम्। यतीनां संहृतिन्यासोवनस्थानां तथैव चेति मध्यमादि कनिष्ठान्तमङ्गुष्ठादि न्यसेत्स्थितिम्।

अङ्गुष्ठान्तं कनिष्ठादि सृष्टिन्यासो विधीयते।
अङ्गुष्ठादि कनिष्ठान्तं संहारान्यास ईरितिः॥

नाभ्यादिकेशपादान्तं स्थित्यादेहेन्यसेद्बुधः।
केशादि पादपर्यन्तं सृष्टिन्यासो विधीयते॥

पादादि केशपर्यन्तं संहारन्यास ईरितः। इति।

एवं यथाधिकारं विन्यस्य वक्ष्यमाण कलान्यासं कुर्यात्। यथा। भगपरममायाकुलान्तं क्रमात्। बीजानां त्रयमर्धचन्द्रसहितं विन्यस्य मूर्ध्निस्वक इति। भगमाकारः तत् परमैकारः।

p. 142)

मया भुवनेशी। अकुलान्तम्। अकुलो हकारः। तदनतः। क्षकारः। अर्धचन्द्रो बिन्दुः। एकार बिन्दुभ्यं प्रथमम्। हकार रे * कार बिन्दुभिर्द्वितीयम्। ककार षकार बिन्दुभिस्त्रितीयमिति। एतानि बीजानि स्वरसि विन्यसेत्। सानन्तं मुखवृत्तकेकगतकं संवर्तकमिति। अनन्त आकारः। कंशिरः। तद्गतकं शिरोगतबिन्दुरित्यर्थः। संवर्तकः क्षकारः। आकार बिन्दुभ्यां युक्तं क्षकारं मुखवृत्ते न्यसेत्। सूक्ष्मादीश्चतुरो युगे नयनयोर्न्यस्त्वा तत श्रोत्रयोः सार्धेन्दूनिति। सूक्ष्म ईकारः। स आदिय्येषान्ते सूक्ष्मादयः। अर्धेन्दु बिन्दुः स बिन्दुगानित्यर्थः। इम् ईम् उम् ऊम् इति नयनयोः। श्रोत्रयोश्चन्यसेत्। स्वकपोलयो भृगु युगम्। घ्राणद्वयेनान्वितम्। चन्द्रार्ंधाङ्कितमस्तकं चेति। भृगुः सकारः। प्राणद्वयम्। ऋ ॠ चन्द्रार्धो बिन्दुः स बिन्दू सकार ऋकार बिन्दुभिरेकम्। सकार ॠकार बिन्दुभिरन्यत्। तद्वयं कपोलयोन्न्यसेत्। बे * द्वयं विन्यसेत् पश्चाद्गण्डयुगान्वितं शशिदलोपेतोत्तमाङ्गं बुधे इति। श्वेतः षकारः। गण्डयुगम् ऌम् ॡम्। शशिदलं बिन्दुः षकार ऌकारबिन्दुभिरेक * * कार ॡकारबिन्दुभिरेकम्। एते चिबुकपार्श्वयोर्न्यसेत्।

p. 143)

दन्तपङ्क्तियुगले बकद्वयम्सेन्दुखण्डरदनच्छदद्वयमिति बकः शकारः इन्दुखण्डो बिन्दुः। रदनच्छदद्वयमोष्ठ युगलम्। एम् ऐम् शकारेणयुक्तं बीजद्वयं दन्तपङ्क्त्यो न्यसेत्। ओष्ठयो घटयुगं ततो न्यसेद्दन्तयुग्ममुख पूर्वसंयुक्तमिति। घटो वकारः। दन्तयुग्मम्। ओ औ। मुखं विसर्जनीयः। तत्पूर्वं बिन्दुः। शेषं पूर्ववत्। एते ओष्ठयो न्यसेत्। रसन्नाभावधोंढुपयुतमिति। रसो * कारः। अधोंडुपोबिन्दुः। वम् इति नाभो न्यसेत्। पवनन्न्यसेन्मन्त्रीसान्त्यस्वरमथ शिखामवहित इति। पवनो यकारः। अन्त्यस्वरो विसर्गः। यः इति शिरसिन्यसेत्। इति षोडशकलान्यासः॥ पश्चाद्देह इत्यादि वक्ष्यमाण क्रमेणेत्येतदन्तस्यायमर्थः। षोडशकलान्यासानन्तरं मातृकां केवला वा रुद्रशक्ति सहितां वा यथ * * स्यानर्थन्तरं विद्यान्यासं कुर्यादिति। यथा। आद्यं बीजमित्यारभ्योर्ध्वमुखादि विद्वानित्यस्यायमर्थः। मूलविद्या बीजत्रयं विभज्य मूर्ध्नि गुह्ये च हृदये चै * * * वामादि नयनयुगे ललाटे चैकोन्यासः। कर्णयुगल आस्ये चैकोन्यासः। अंसद्वये पृष्ठे चैकोन्यासः। जानुयुगे नाभौ चै * * * ध्वाधौ दक्षिणवक्त्रेष्वेकः। वामापरमध्ये वक्त्रेष्वेकः।

p. 144)

एवं सप्तविधं मूलविद्यां विन्यसेदिति। अङ्गानि मूलेन चेति। मूलमन्त्रं बी * * * * गानि कुर्यादित्यर्थः। गुह्यनाभीति। गुह्यनाभि हृदयानन मूर्ध्वसु। पूर्वोक्तबाणपञ्चकन्यसेत्। ललाटदेशे वदनेत्यादि भवन्ति तस्य म * * * * मर्थः। क पञ्चमं शुचि नयनान्तसंयुतमिति। कंवकारः। तत् पञ्चमो हकारः। शुचिरग्निः। रेफ इति यावत्। नयनान्तमीकारः। हकार रे * * * * बीजमेकम्। स वामदृक्पवना गुणान्वितः। कर इति वाम दृगीकारः।

पवनो यकारः। तद्गुणाक्षरः। तृतीयाक्षरः। लकारः। करः ककारः। कलारलकार ऊ * * * * कामाख्यम्। रविस्वर इति द्वादशस्वर ऐकारः। हरिहयविष्णुषष्ठ वदनमिति। हरिहयो लकारः। विष्णुरकारः तत् षष्ठ ऊकारः। वनं वकारः। वकार लकार ऊकार * * चतुर्थम्। ततस्थल उ पुरान्वितो भृगुरिति। थ पूर्वस्तकरः। ल पूर्वोरेफः। उ पूर्व ईकारः। भृगुः सकारः। सकार तकार रेफ ईकारेः पञ्च * * * षां शिरः सुविद्धीतर्धचन्द्रानिति। एतानि बीजानि प्रत्येकं बिन्दुभिः। कामराजमन्मथकन्दर्पमकरकेतनमनोभव नामभिश्च संयोज्य ललाटवदनहृदय * * * न्यसेदित्यर्थः। विद्यान्यासं मूलमन्त्रेणाङ्गानि मूलेनेति च पूर्वोक्तं

p. 145)

विद्यान्यासाङ्गन्यासार्थं मूलविद्याबीजत्रयं वक्ष्यामीत्याह। विद्याङ्गहेतोः ल * * या इत्यादि सम्मोहनाख्यं कुलमित्यं तेव कान्तादि भूतपदकङ्कगतार्थचन्द्रं दन्तान्तान्त पूर्वजलधिस्थितवर्णयुक्तम्। अत्र प्रासङ्गिकत्वेन प्रपञ्च सारो * * * लिपि प्रक्रिया प्रदृश्यते। ह्रस्वां पञ्चपरेचेत्यत्र। ह्रस्व पञ्चकानां दीर्घपञ्चकानां बिन्द्वन्तसन्धिविकृतपञ्चकानां का दिव्यजनानां च प्राणभूताश * * * मया इति क्रमेण भूतसंज्ञा विधानेन मातृकाक्षराणां पञ्चभूतात्मत्वेनोक्तत्वाद्यथा। अ आ ए क च ट त प य ष इत्येते दशवर्णाः। प्राणभूतात्मकाः। * * * * * * ख छ ठ थ फ र क्ष इत्येते दशवर्णाः। अन्यात्मकाः। उ ऊ ओ ग ज ड द ब ल ल इत्येते दशवर्णाः। पार्थिवात्मकाः। ॠ ॠ औ घ झ ट ध भ व स इत्येते दशवर्णाः * * * * त्मकाः। ऌ ॡ अं ङ ञ ण न म श ह इत्येते दशवर्णा व्योमात्मकाः। इति कान्तादि भूतवदगमिति। कंजलम्। तद्बीजम् ॠकारः। तदन्त आकाशः। तद्बीजं * * * * भूत पदगं ह्रस्वर्गो तत्प्रतिलोम्येन पञ्चमस्थानगतम् अकारः कं शिरः। अर्धचन्द्रो बिन्दुः। दन्तान्त औकारः। तत्पूर्ण जधिस्थितवर्णयु * * * म्येन चतुर्थमक्षरमेकारः।

p. 146)

कगतबिन्दुः। स बिन्दुरित्यर्थः। अ एम् इति युक्तः शब्दः सन्धिकार्येण वृद्धिं सूचयति। एवं कृतेद्वा द्वादशस्वरा वाग्भवाख्यो * * * * न्तान्तं कुलपूर्वपञ्चमयुतं नेत्रान्त दण्डान्वितं कामाख्यमिति। कं बिन्दुः। तस्यान्तो विसर्गः। दन्तः ककारः। तत्पूर्वपञ्चमं तत्प्रातिलोम्येन पञ्च * * * * नेत्रमिकारः। तदन्त ईकारः। दण्डो बिन्दुः। ककार लकार ईकार बिन्दुभिः। कामराजाख्य उद्धृतः। दन्तान्तेन युतं तु दण्डि सकलं सम्मोहनाख्यं कुलमिति * * * तदन्त औकारः। दण्डो बिन्दुः। सकलः। काला सहितः। सकारौकार बिन्दु विसर्जनीयैः स मोहनाख्यमन्त्र उद्धृतः। ऋषिरिति सुबोधः। अमुष्य मन्त्रस्यरदान्तयुक् *। बीजं स दण्डं लकुलीश पूर्वं शक्तिस्तु सेतिरद ओकारः। तस्यान्त औकारः। लकुलीशो हकारः। दण्डो बिन्दुः। सकार औकार बिन्दुभिः सार्धं बीजमध्यस्य बीजमित्युक्तम्। आखण्डलकर्णपूर्वं सहार्धजैवात्रकमाननान्तमिति आखण्डलो लकारः। कर्ण उकारः। तत्पूर्व ईकारः। अर्धजैवात्रको बिन्दुः। आननं विसर्जनीयः। दन्तः ककारः। ककारलकार ईकारबिन्दुभिः सिद्धं कामराजं बीजमस्य शक्तिरित्युक्तम्।

p. 147)

वर्णः शुक्ल इति स्पष्टम्। शिवशक्तिबीजमित्यादि सोर्जिता भवदित्यं तस्यायमर्थः। शिवं बीजं हकारः शक्तिबीजं सकारः। अकुलो हकारः। दहनो रेफः। अयमर्थः। मन्त्रस्य प्रथममध्यबीजयोरुपरि शिवशक्त्यात्मक हकार सकारौ निहिता परोपरि तृतीय बीजोपरि हकारो निहितः। मध्यमाख्य कामराजाधरे रेफो निहितः। यथा हकार सकार ऐकारबिन्दुभिः। प्रथमम्। हकार सकार ककार लकार रेफ ईकार बिन्दुभिद्वितीयम्। हकार सकार औकार बिन्दु विसर्जनीयैस्त्रितीयमिति। अकुलो हकारः। कुलं सकारः। अयमर्थः।

हकार पूर्वा भैरवी सकार पूर्वा विद्येति देशिकावदन्निति। शिवाष्टमं केवलमादि बीजम्। भगस्य पूर्वाष्टमबीज मन्यत्। परं शिरोन्तं कथिता त्रिवर्णा सङ्केतविद्या गुरु वक्त्रगम्येति। शिव उकारः। तदष्टममेकारम्। भग एकारः। तत्पूर्वाष्टकं प्रातिलोम्येनाष्टममीकारः। परं तृतीयम्। शिरोन्तं शिरो बिन्दुः। तदन्तो यस्य औकारः। द्वादश चतुर्थचतुर्दशस्वरैः स बिन्दुकैः साङ्केतिकी संप्रदाय लभ्या मूलविद्येत्यर्थः। कान्तान्तवान्त कुललान्तवामनेत्रान्वितं दण्डिकुलं सनादम्। षट्कूटमिति।

p. 148)

कं बिन्दुः। तस्यान्तो विसर्गः। तदन्तः ककारः। व अन्तो यस्य स लकारः। अकुलो हकारः। लकार अन्तो यस्य स रेफः। वामनेत्रम् ईकारः। दण्डो बिन्दुः। कुलं सकारः। सनादं नादो हकारः। एतदुक्तं भवति। हकार सकार ककार लकार रेफ ईकार बिन्दुभिः षट् कूटाख्यो महामन्त्र उद्धृतः। अथवा कं बिन्दुः। तस्यान्तो विसर्जनीयः। तस्यान्तः ककारः। वं जलम् अमृतम्। तद्बीजं ठकारः। तदन्तो डकारः। अकुलो हकारः। लान्त इति लकार रेफयोर्ग्रहणम्। संप्रदायेनावगम्यते। ल इति स्वरूपग्रहणम्। लकार अन्तो यस्य स रेफः। वामनेत्रमीकारः। दण्डो बिन्दुः। कुलं सकारः। नादसहितम्। अयमर्थः। हकार सकार ककार लकार डकार रेफ ईकार बिन्दुनादैः षट्कूटमिति केचित्। मतद्वयमपि संप्रदायवत्। आद्यं बीजममध्यमे मध्यमादावन्ते चान्तं योजयित्वा जपेद्य इति। आद्यं वाग्भवाख्यम्। बीजममध्यमे कामराजस्थाने निधाय। मध्यमं कामराजाख्यमादौ वाग्भवस्थाने निधाय। अन्त्यमन्ते यथा स्थितं कृत्वा जपतामुक्तफलसिद्धिरित्यर्थः। आद्यं कृत्वा चावसानेन्त्यबीजममध्ये मध्यं चादिमं साधकेन्द्र इति।

p. 149)

आद्यं वाग्भवाख्यम्। बीजं परबीजस्थाने कृत्वा तत् पराख्यं तृतीयबीजमध्ये कामराजस्थाने कृत्वा मध्यं कामराजाख्यमादौ वाग्भवस्थाने निधाय जपतामुक्तफल सिद्धिरित्यर्थः। तथा च श्रुतिः। अनन्तामन्तामधि निर्मितां महीमिति। अत्र महीमिति वाग्भवमभि दधाति। मन्त्रराजममुं समस्तजगद्विमोहन कारणं मातृकान्तरिं जपेदनुलोमतोऽपि विलोमतः। इत्यस्यार्थः। जपकाले मन्त्रमुच्चार्य अन्ते अकारमुच्चरेत्। पुनरपि मन्त्रमुच्चार्यान्ते आकारमुच्चरेत्। एवं लकार पर्यन्ताक्षराणि। प्रत्येकं मन्त्रान्तरितं जपं कृत्वा पुनर्मन्त्ररहितं केवलं क्षकारम्मैरुस्थाने समुच्चार्य पुनः प्रतिलोम क्रमेण लकाराद्यकार पर्यन्तं प्रत्येकं मातृकान्तरितं जपेत्। एवं मातृकाक्षमालाया जपं कुर्वतामेकवारेण जपः शतसंख्या परितो भवतीत्यर्थः। हंसदेवसमन्वित * * * ले बुध इति। मूलविद्या बीजत्रयमिति हकार सकाराभ्यां संयोज्य जपेत्। दित्यर्थः। परः कवेति मूलविद्यायाः। प्रथमं मध्यमे बीजे केवके उच्चार्य अन्तिमबीजं हकार सकाराभ्यां संयोज्य जपेत्। व्यञ्जन हंस समन्वितमिति। हकार सकारयोरन्तमकारं लोपयित्वा केवलव्यञ्जमात्र हकार सकारावेव हस इति विद्याया संयोज्य जपेत्।

p. 150)

कमलं परिलुप्तमध्यमान्त स्वरमीशादि युतं सबिन्दुनादम्। निगमादि नमोन्तरे विराजन् भुवि देवी हृदयं प्रदिष्टमेतदिति। कमलशब्दस्य मध्यमाक्षरे मकारे लकारान्तगते अकारे परिलुप्ते अवशिष्टः। क्लति भवति। ईश उकारः तस्यादिरीकारः। स बिन्दुनादं बिन्दुनादयुक्तम्। ककार लकार ईकार बिन्दुनादैः सिद्धिकामाख्यं बीजमिति निगमादिः प्रणवः नम इति स्वरूप ग्रहणम्। प्रणवनमसोर्मध्ये कामबीजे निहिते चतुरक्षरात्मिका देवी हृदयाख्या विद्या स्यात्। विद्या कामदुघेत्यादिनितरां रहस्यमित्यन्तः सुबोधः। अथ पुष्पं वारिमुचामित्यादि वारिमुचो मेघाः। तेषां पुष्पजलं तद्बीजं वकारः।

द्वयोर्दकारवकारयोरादिर्दकारः। ताचेव वर्णौ वकारदकारौ दीर्घमित्याकारः। वारिवाकारः। वान् इत्यर्थः। खान्तं गकारः। अम्बु वकारः। तथेति पूर्वोक्तग्रहणम्। ग्वा इति सिद्धं भवति। यथा दकार नकारो सलोकस्वरो लोकस्वर इकारः। इकारयुक्तौ दिनिवदवदेत्युक्त्वा वाग्वादिनीत्युच्चरेत्। वस्वक्षरमष्टाक्षरम्। एषा अष्टाक्षरी विद्या वाग्भवबीजदीपनकरीत्यर्थः ब्रह्मा शक्रदृगन्वित इत्यादि ब्रह्मा ककारः। शक्रो लकारः।

p. 151)

दृगिकारः। अन्वितः ककारो लकार इकाराभ्यां युत इत्यर्थः। भग एकारः मेषोनकारः। दृगिकारः। दकार नकारौ इकारयुक्तावित्यर्थः। कालोमकारः अनन्त आकारः। वियत् हकारः आकारयुक्तो हकारः। दशन ओकारः संवर्तः क्षकारः। ओकारयुक्तक्षकारः। भीषणो हकारः। अक्रूरो बिन्दुः। बिन्दुयुक्तो हकारः। कमलासनः ककारः। शिव उकारः। उकारयुक्तः वैश्वानरो रेफः। तादृश उकार युक्तः। क्लिन्ने इत्युच्चार्यान्ते क्लेदिनीति पदान्ते महाक्षोभं कुर्वति। एकादशाक्षरीयं विद्यामन्मथबीजदीपनकरीत्यर्थः। क्षोभयतीति। सुबोधः। सावित्रीरदनयुता महादि काली व्योमान्तं शशधरखण्डमण्डिताङ्गम्। मोहिन्या सरसिज भूर्युतस्तथा निर्विघ्नेद्यं भुवि परबीजदीपनी स्यात्। सावित्री प्रणवः। रदन ओकारः। महादि काली। महाकालो मकारः। ओंकारयुक्तो मकारः। व्योमहकारः। तदन्तः क्षकारः। शशधरखण्डो बिन्दुः। बिन्दुयुक्तं क्षकारः। मोहिनी उकारः सरसिज भूः ककारः। उकारयुक्तः अग्निरेफः। तथेति रेफस्याप्युकारानुवृत्तिः। प्रणवान्तं मोक्षपदं प्रोक्त्वा कुरुशब्दमुच्चरेत्। इयं पञ्चाक्षरविद्या परबीजदीपनकरी। अन्ये केचन

p. 152)

देशिकामपरबीजदीपनीकरीमन्यथा योजयन्ति। सावित्री प्रणवयुता महादिकालीति।

प्रणवान्ते महाशब्दमुच्चार्यान्ते मोक्षं कुर्विति। सप्ताक्षरीमुद्धरन्ति यस्य बीजस्य या दीपनकरी तां पूर्वमुच्चार्यानन्तरं बीजमुच्चरेत्। एवं त्रिष्वपि बीजेषु जपप्रकारः। विद्या षडङ्गवदनेष्विति। विद्या षडङ्गवदनेषु न्यासेषु स्वस्वदीपनविद्योच्चारपुरः सर एव मन्त्रबीजानि यथोक्तक्रमेण विन्यसेदित्यर्थः। विद्यामेवन्यासत इति स्पष्टः। मन्त्ररूपमिति। इति सकलागमश्रिति स्मृतिसारभूतं सकलदुरिततिमिरभास्करं मलमाया पाशभङ्ग प्रभञ्जनं स्वान्त कुमुदसम्बोध सुधाकरः सकल संसारबन्धमोचनं महागुरु सङ्कुचि संप्रदायं यथा वन्मन्त्रस्वरूपमीरितम्। तस्मात् साधकचित्त वित्तकाय शाठ्यं हित्वा * * शु श्रूषया तदनुग्रहप्रसादपुरः सरं यथा विधि लब्धमन्त्रः सन् पूर्वोक्तमन्त्रस्थानन्यास जातं विधाय जपपूजादि कुर्यात्। नान्यथेति।

॥ इति संप्रदायदीपिकायां द्वितीयः पटलः॥

एवं साधकानां सकलपुरुषार्थ साधनभूतं मन्त्रस्वरूपमुक्त्वा पुरुषार्थान्तराय परिहाराय योगाङ्गभूतं प्राणायामप्रकारं

p. 153)

तद्विशेषांश्च वक्तुमुपक्रमते। अथेदं शरीरमित्यादिना दिशाङ्गुलम्। द्वादशाङ्गुलम्। चतुर्दशरात्रेति अपघने शरीरे प्रधानाः प्राणादीनां स्वैरसञ्चा नियमनयोग्याः पञ्चवर्णोज्वला। वकार लकार रेफ यकार हकारैरुल्लसच्छरीरा। प्रणवात्मकत्वादकार उकार मकार बिन्दुनादैर्वा रक्तशुक्लादिभिर्वा पञ्चदेवाः ब्रह्मविष्णुरुद्र ईश्वरसदाशिवाख्याः प्राणादयो वा। मृणान्तरालोल्लसत्त्तं तु पद्मसूत्रम्। चतुर्दशात्रेत्यारभ्य मुनीन्द्रैरित्यं तस्यायमर्थः। अत्र सकल शरीरे भुक्तस्य चतुर्विधस्यान्नस्य रसमापादतलमस्तकं व्यापकरकद्वारभूतासु अनेकासु नाडीषु सतिषु प्राणादीनां स्वैरसञ्चार नियमन योग्याः प्राधानभूताश्चतुर्दशनाड्यः।

सन्ति । तास्वपि तिस्रो मुख्याः । सुषुम्नेडापिङ्गलेति । तास्वपि सुषुम्नैकैवमुख्या । साचाधाराद्या द्वादशान्तं पृष्ठवंशं समाश्रित्य सकलाधारत्वेनाधो वदना ऋ ॠ भूता तिष्ठति । तस्या मूले वामदक्षिण भागमाश्रित्य इडा पिङ्गले स्थिते । तयोरिडानामनाडी चापाकृतिर्भूत्वा लिङ्गमूलस्थाने सुषुम्नामाश्रित्य दक्षिणभागगता । तदाकारा पुनरपि नाभिस्थाने तामेवाश्रित्य वामभागं गता । तदाकारा पुनरपि हृदयस्थाने तामेवाश्रित्य दक्षिणभागंगता । तदाकारा पुनरपि तालुमूले तालुमेवाश्लिष्य वामांसजत्रुमध्यगा

p. 154)

वा मनसा सुषिरं गच्छति । दक्षिणभागसम्भूता पिङ्गलानाडी तत्र तत्रस्था सुषुम्नामाश्रित्य दक्षिणना * सुषिरं गच्छति । यत्र यत्रेडा पिङ्गलयो सुषुम्ना सम्बन्धः । तत्र तत्र स्वाधिष्ठान मणिपूरकानाहत विशुध्यात्राख्यानि पञ्चपर्वाणि भवन्ति सुषुम्नान्तरालतदाकारा काचनचित्रानाडी पञ्चवर्णोज्वला पञ्चदेवमयी ज्योतिर्मयी स्थिता । तदन्तः सर्वप्रभा मूलभूता पद्मतन्तु निभा प्रभा चिन्मयी भाति इडायां चन्द्रश्चरति । पिङ्गलायां सूर्यः । तस्मादम्रस्य वामभागे स्थितिः । दक्षिणभागे विषस्येति । योगविन्दो वदन्तीति । जानीयादुदयं बुध इति देवस्य प्राणवायोः कन्दे मूलाधारे नृणां साधकानां तिग्मकराङ्गुले द्वादशान्तङ्गुले सन्ध्ये च । पूर्वापरे प्रातः सायं सन्ध्ये उत्पत्तिरुदयः लय अस्तमयः । अधोवृत्तिः । निशावासरम् । ऊर्ध्ववृत्तिः । प्राणवृत्तिः दिनेशः सूर्यः एतदुक्तं भवति । साधकशरीरे मूलाधारस्थाने सकल प्रपञ्चकारणभूत संविन्मयमाया स्वरूप कुण्डलिनी शक्तिव्यापारसञ्चारः सकलसमष्टिप्राण इडापिङ्गल मार्गेण ऊर्ध्वं गच्छन् नासा विवराभ्या बहिर्द्वादशाङ्गुलं निर्गच्छति । पुनरपि मूलाधाराभिमुखं परावर्तते । सन्ततमेवं वर्तमानं वायुमेवमभ्यासेन यः करोति स योगविदां श्रेष्ठ इति ।

p. 155)

अस्य वायोर्भुक्ति भेदां नामानि च भिद्यन्ते। यथा। ऊर्ध्ववृत्तिः प्राणः अधोवृत्तिरपानः। उक्तान्नरसपाकायाग्निसन्धुक्षकः समानः। पाकमुत्तर समापादतलमस्तकं व्यापयतीतिव्यानः। यः प्राणसचिवो निमेषोन्मेषौ करोति स उदानः। उद्गारकारकोनाकः। ग उन्मीलयति कूर्मकः क्षुत्कारः कूकः। लः। योज्यं भयति। स देवदत्तः आपादतलमस्तकं व्याप्ययो मृतमपि न मुञ्चत्च्छब्दविशेषान्। करोति स धनं जयति। अहरेव प्राणो रात्रिरपानः। अहः सूर्यो * * * चन्द्रमाः इति श्रुत्या प्राणापानयो * होरात्रि रूपत्वं सोमसूर्यात्मकं चोक्तम्। अतो निश्वासनिर्गमनकालात्मा प्राणोदिवासूर्यश्च भवति। निश्वासपरावृत्तिकालात्मा अपानो रात्रि चन्द्रश्चेति। आधारादुदेत्याद् गमनाय नाडी प्रवेश समयः प्रातः सन्ध्या आधाराभिमुखं परावृत्ति प्रारम्भ समः सायं सन्ध्येति। इडयावाहनसमय उत्तरायणः। पिङ्गलया दक्षिणायनमिति। तस्मान्निशा दिवसयोर्वायानि कर्माणि प्रारम्भणीयानि तत्तत् कालगमनं प्रतीक्ष्यैवोक्तेषु कालविशेषेषु प्रारम्भणीयानीत्यभिप्रायः। तुषांशुनाडीमित्यादि पदमुपैति चोत्तरमित्यन्तः सुबोधः। मरुद्वत्म आकाशः। अन्हाय शीघ्रम्। वसूदये अन्ह्यूदये। द्वावेधत्तः सकलं च

p. 156)

कालमिति देशाद्यनवच्छिन्न कालाख्य परमेश्वरस्य इडा पिङ्गलोपाधिक प्राणापानात्मनश्चन्द्रसूर्यौ लवतुटि कलाकष्ठानिमेषमात्रा घटिका मुहुर्ताहोरात्रादि प्रलयान्तावच्छेदपरिणताभ्यां पूरकरे चक्रद्वारा सकलं कालन्धत्तः। ताभ्यां धृतस्यनक्तं दिनात्मकस्य सुषुम्ना भोक्त्री भवति। भोक्तृत्वं नाम चित्कालसमवेतस्य तस्योपाधितयारूप वत्वमापाद्यसर्वस्याव भावकत्वमित्यर्थः। ततः क्रमेणेत्यारभ्य महीतले कीतिभैरवोवेत्यन्तः सुबाधः। विकारमात्राभिः षोडशमात्राभिस्तदर्धाभिः द्वात्रिंशन्मात्राभिः धातुं वायुं

विगततन्द्रोविगतालस्यः। अनातिलोव्यग्रः। विस्त्रसाजरा। यामुण्डाधारदण्डेति सुषुम्नाधारदण्डः। नभोम्भोरुहकुहर विधोः। द्वादशान्तस्थ सहस्त्रपत्रपद्ममध्यवर्तिनश्चन्द्रमसः। वज्राख्यनाड्याः। चित्रनाड्याः। खगं हंसात्मानं प्राणवायुम्। तथा च श्रुतिः। हिरण्मयः शकुनिर्ब्राह्मनामेति। अपघनम्। शरीरम्। घनं स्याद् दृढं भवति। एतदुक्तं भवति। या सुषुम्नान्तराले स्थिता चित्रनाडी तु पूर्वोक्ता सामुण्डाधारदण्डात्मसुषुम्ना दण्डमध्ये द्वादशान्तस्थः सहस्त्रदलपङ्कजकर्णिकामध्यवर्तिनश्चन्द्रमसो मुक्ता दामनीभां सुधाधारां वहन्ती स्थिता। तस्या मध्ये ये हंसात्मानं स्वान्तसं भिन्नं प्राणवायुं सुस्थिरं कृत्वा।

p. 157)

सन्तत सुधाधारयाभिषिच्यमानमानं ध्यायेत्। तस्य मृत्योरपि मृत्युभूतस्य शरीरमाब्रह्मलयावसानं सुस्थिरं भवति मूर्च्छाङ्कित इति मूर्च्छानामप्राणवायोः शरीरान्तरापादतलमस्तकमापूर्यावस्थानं बन्धः। करोतीति मूलासाराद्याधारेषु अन्यतमे नियतमाभ्यासे न प्राणवायोः संस्थापनम्। वातोमृत इति। यन्दास्वान्तसं भिन्नो वायुर्नियताभ्यास बलेन चिदात्ममाभूतया विलयं याति। तदामृत इति गीयते। योगविद्भिरित्यर्थः। अथ पार्ष्णि निरुद्धेत्यारभ्य गुण संप्राप्तिरपेतकल्मषेत्यन्तः सुबोधः। कम्बुलिः पायुः ध्वजमूलं लिङ्गमूलम्। नररिपुविवरे नरोर्जुनः। तस्य रिपुः कर्णः। कर्णरन्ध्रे छिन्द्राण्डङ्गुलीभिरिति। छिन्द्राणीन्द्रियाणि विधिवद्गुरूपदेशेन तथा चोक्तं भवता पराशरेण। क्रमावाप्तमहायोगो निश्चलात्मा यथा शरतीति। कोदण्डयोर्भ्रुवोः वृषभश्रेष्ठः वृषो विषयः। तं भजत इति वृषभः। वृषभाणीन्द्रियाणि। तच्छेष्ठं वृषभश्रेष्ठम्। षष्ठे श्रियं मनः। त्रैर्यन्तगीतं वेदान्तगीतमित्यर्थः। अङ्कमुक्तशशहल्लक्षावलक्षप्रभम्। अनेकचन्द्रसहस्त्रधवलप्रभम्। अयमर्थः। इन्द्रियाणि स्वकराङ्गुलिभिन्निरुध्य ह्रुवोर्मध्ये स्वान्तसंभिन्नं प्राणवायुं

संप्रदायक्रमेण नियमयति स तत् क्षणादेव

p. 158)

निर्मलानेकेन्दु समप्रभं वेदान्तवेद्यं परं ज्योतिस्वरूपमात्मानमनु भावयतीति।

॥ इति संप्रदायदीपिकायां तृतीयः पटलः ॥

एवं प्राणायाममुखेन पवनविजयं योगविशेषांश्चोक्त्वा जितमरुतामधिकारिणामभ्युदय निश्रेयस प्राप्त्युपाय भूतं मन्त्राणां छिन्नरोधानि दोषपरिहारार्थं च योनिमुद्रा बन्धनप्रकारं वक्तुमुपक्रमते। अथ पूरकयोग इत्यादिना पूरकादि योगाभ्यासेन स्वान्तं नियमितं स्वाधारे प्राण संभिन्नं मनः संयोज्याग्रजन्ध्याख्य सुषुम्नाख्य विकसने यत्नं कुर्यात्। तदुक्तं रुद्रयामले। नित्य क्लिन्ना प्रकारणे आदौ पूरकयोगेन स्वाधारे योजयेमरन इति। शकृत्समुत्सृजेति। कम्बुलिमार्गं पायुस्थानम्। अर्वा अश्वः। यथोत्सृष्टमलस्तुरङ्गः शनैः शनैस्वपायुमार्गं सङ्कोचयेत्। तथा स्वाधार नियमितान्तः करणोपानवायुना पायु द्वारमाकृष्याकुञ्चनं प्रबन्धयेत्। यथा पानवायुरवशेनापि बहिर्निर्गच्छति। तथा नियम्य सङ्कोचयेदित्यर्थः। विदधीतेति। तमपान वायुं देशिकदर्शितक्रमेण मुहुर्मुहुं कृति करणेन ऊर्ध्वमुखं कुर्यात्। आधारलक्षणमाह। दृढरुद्धगु * द ध्वजान्तरालेति। गुदमाधारचक्रस्याधो भागः। पायुस्थानम्।

p. 159)

ध्वजं मुष्कमूलं तेजोमयम्। जाढराग्न्याधारम्। पुष्कराश्रयोग्निमत् त्रिकोणम्। अयमर्थः। गुदध्वजोर्मध्ये स्थितं यच्चतुष्पतिं पद्मम्। तन्मध्ये त्रिकोणाकारयोनिरिति। तथा चोक्तम्।

श्री रुद्रयामले। गुदमेढ्रान्तरे योनिरिति। अथ कम्बुलिमारुतमिति।

कम्बुलिमारुताख्यमपानवायुं देशिकोपदेशक्रमेणाकुञ्चनेन शनैः शनैरूर्ध्वमुखं नीत्वा कमलासनपङ्कजाख्य सुषुम्नामूलं प्रवेशयेत्। तथा चोक्तं श्रीरुद्रयामले। तामातिञ्च्य प्रबन्धयेदिति। अमुनाविधिनेति। एवं मुहुर्मुहुरभ्यासेन निरुद्धाधो वृत्तिरपानवायुरूर्ध्वगमनाय राज्ञां प्रयाणाय तद्भटैः क्रियमाणाध्वशुद्धिवत्कुण्डलिनी शक्त्यात्मकस्य परमेश्वरस्या कुलाख्य स्वभवनगमनाय सुषुम्नामूलं प्रविश्य तदन्तर्ब्रह्ममार्गस्थितग्रन्थिभेदनं करोतीत्यर्थः परिहृत्य खगाधिप इति। अपानोप्यूर्ध्व वृत्तित्वेन प्राणात्मत्वात् खगाधिपाख्यां लभते। एवमूर्ध्वगमनाय प्रवृत्तोपानवायुः सोमसूर्यात्मकेडा पिङ्गलमार्गौ परिहृत्य कमलासनपङ्कजमूलं सुषुम्नामूलं प्रविश्योर्ध्वमुखी करोति। प्रभानमिति। परमेष्ठिनोगवनं सुषुम्नाकाशः। तटित्कोटि प्रख्यमिति। तटिच्छब्देन महाप्रकाशरूपत्वम्। कालानलशब्देनाखण्डज्ञानस्वरूपत्वम्। सहस्रादित्य

p. 160)

शब्देनान्तर्बहिरपि सर्वप्रकाशत्वम्। बन्धूकशब्दो रक्तवर्णताम्। शशभृल्लक्षशिशिरमिति। साधकानामानन्द जनकत्वं चोच्यते। भ्रमन्तं योन्यन्तरिति। कुण्डलिनी शक्त्यात्मना सकल जगत् सृष्टिकारणत्वेन स्पन्दमानम्। काममिति। कामशब्दो रहस्यागमेषु शरीर वैश्वानरो रूढः। एवं तेजोमयं कामं स्वारगतं भावयेत्। तथा चोक्तं श्रीरुद्रयामले भ्रमद्योनिगतं ध्यायेत् कामबन्धूकसन्निभम्। ज्वलत्कालानलप्रख्यं तटित् पञ्जसमप्रभम्। तस्योर्ध्वे तु शिखेति। तस्य कामाख्य जातवेदस उपरि शिखारूपानि सूक्ष्मा विद्युत् समूहसन्निभा चिद्रूपायाकला ब्रह्मपथान्तराम्बरगता सुषुम्नान्तराल स्थित चित्रनाड्यन्तगत ब्रह्ममार्गेण द्वादशान्तस्थित विसर्गाख्य परशक्त्यात्मक परमपदं गतेत्यर्थः। अनेन हि पथा ब्रह्मगतागतं करोति। तत्र ब्रह्मशब्दः शक्तिपर्याय वाचकः। तथा च श्रुतिः बृहत्वाद्

ब्रह्मणत्वाच्च यद्रूपं ब्रह्मस * तमिति। अतः सकल जगत्कारणात्मिकायाः प्रकृतेर्ब्रह्मत्वं ब्रह्मणत्वं चास्ति। हंसरूपं क्षेत्रज्ञतया एकीभूतं तदात्मनामापन्नं निवातारोपित दीपवत् सुस्थिरं ध्यायेदित्यर्थः। तथा चोक्तः श्रीरुद्रे तस्योर्ध्वे तु शिखा सूक्ष्मा चिद्रूपा परमाकला। तया

p. 161)

सहितमात्मानमेकीभूतं विचिन्तयेदिति। शक्ति कुण्डलिनीति। सकलजगनिर्माणे या सदोद्युक्ता त्रिगुणिता प्रसुप्त भुजगाकारा सदा विद्योतमान सौदामिनी सन्निभा मृणालसूत्रवत् सूक्ष्मा जगन्मोहिनी कुण्डलिनीति प्रसिद्धाया चिन्मयी शक्तिः। तां पूर्वोक्त शिखामध्यगतां परिभावयेत्। अन्तर्बहिर्व्याप्य स्थितां भावयेदित्यर्थः। तथोक्तं श्रीमते। तन्मध्ये कुण्डली देवी शिवेन सहिता प्रिये इति। उक्तमर्थं संक्षिप्य कथयति। हुङ्कारेणेति। मायाम्। भुवनेशीं कौलिकीं कुलमूलाधारः। तत्रस्थां कुण्डलिन्यात्मिकामित्यर्थः तथा चोक्तं श्रीरुद्रे तन्त्रे। परं कारणमकुलं कुलं कुण्डलिनी मता इति। विद्यामन्त्रगणः। कौलमिति तृतयम्। निर्णय इति। कुली शिव इत्युक्तः। प्रकीर्तितः। कोलं तेजो विन्यस्यादिति त्रितय निर्णय इति च। अयमर्थः। नामरूप प्रपञ्चमूलभूतात्माया बीजात्मिका कुण्डलिनी कौलिकी स्वरूपां चिद्रूपां देशिकदर्शितक्रमेण हुं कृतिकरणेन मूलाधारादुत्थाप्यचार्य पूर्वोक्तशिखा संभिन्नात्मना संयोज्य सुषुम्नान्तर्गत ब्रह्ममार्गेण परशक्त्यात्मक ब्रह्ममयं गमयेदिति भित्वालिङ्गत्रयमिति। कुण्डलिन्यात्म शिखारूपामात्मसनाथां चत्मयीं शक्तिस्वमूलाधारा दुत्थाप्य सुषुम्ना रन्ध्रं प्रवेश्य स्वयम्भुलिङ्गमित्यादिना

p. 162)

वक्ष्यमाणलिङ्गानि क्रमेण भित्वा ब्रह्ममार्गेणोर्ध्वं गत्वा

द्वादशान्तस्थितसहस्त्रदलपङ्कजस्योपरि भाग विसर्गस्थानगत पराशक्त्यात्मक चन्द्रोदरगलद्रक्तपीयूषधारम्मित दिवाकर भास्वरं शशाङ्कचयशीतलं परमानकन्दभूतं कुलस्थानं प्राप्याम्रतं पाययेदित्यर्थः। पीत्वा कुलामृतमिति। अकुलान्तर्दिव्यममृतरसं पीत्वा पुनरपि तेनैव मार्गेणावरोहक्रमेण कुलाख्यं योन्याधारं प्रापयेत् सावधानः। पुनरेवाकुलं गच्छेदिति। कथं गमयेदित्यत आह। मात्रायोगेनेति। मात्रेति पीठत्रयं लक्ष्यते। तथा हि। आज्ञास्थानगतबिन्दुतत्वात्मकप्रकाशरूपं पूर्णाख्यं पीठम्। तदुपरि ललाटमध्ये बिन्द्वात्मकप्रकाशरूपस्य शिवात्मना स्फुरद्रूपं नादात्मकमोध्याण पीठात्मकं द्वितीयं पीठम्। तदुपरि शिखा विश्रामात्मकशक्तिरूपं तृतीयं कामाख्यं पीठम्। तथा चोक्तं श्रीमते। बिन्दुनादस्तथा शक्तिर्मात्रा त्रयमुदाहृतमिति। तस्माद्देशिकदर्शित क्रमेण योन्याधारान् ब्रह्माध्वनागच्छन्ति। शिखारूपा चिन्मयी शक्तिर्यथा लिङ्गानि निर्भिद्यनकुलं गमयेदित्यर्थः। अथ वामात्रेति कुण्डलीः पर्यायः। तथा चोक्तं लघुपादैः यामात्रात्रपुसीलतेति। अयमर्थः। पूर्वोक्तशिखायाः कुण्डलिनी संयोगो मात्रायोग इति। अथ वामात्रेति काल परिणाम वाचकः।

p. 163)

तथा चोक्तं श्रीरुद्रेतन्त्रे। अयुते द्वे सहस्रैक षट्छतानि तथैव च। समात्रागीयते चात्र उद्घातवशवर्तिनी। उद्घातात्मकप्राणात्मकशिखायाः कालावच्छेदात्मकमात्रायोगेन विनागमागमौनस्तः। तस्मात् कालावच्छेदकमात्रया शिखायोग इत्यर्थः। सा शक्तिः सकलशरीरजीवभूता इति। या पूर्वोक्त शिखारूपा चिन्मयी शक्तिः सकलशरीरजीवभूता चराचरात्मकशरीरिणां सृष्ट्यादि व्यापारेस्य शक्त्यधीनत्वात्। तथाचोक्तं श्रीरुद्रेतन्त्रे। नाडीनामास्पदं पिण्डो नाड्यः प्राणस्य चाश्रयाः। जीवस्य निलयः प्राणो जीवो हंसस्य चाश्रयः हंसः शङ्केरधिष्ठानशक्त्यायत्तमिदं जगत्। इति। प्राणो सावेति। असौ शिखा

चिन्मयी शक्तिः। अत्रास्मि तन्त्रे प्राण इति गीयते तत्र को विदैः।
प्राणवायुरूर्ध्ववृत्तित्वादुद्घाताख्य ग्रन्धिभेदं विधातुं भवति। तथा चोक्तं श्री रुद्रयामले। सा च प्राणसमाख्याता तन्त्रेऽस्मिन् परमेश्वरीति। उद्घातः स तु पठयत् इति। तु शब्दोवधारणे। यदा स एव प्राणः प्राणान्तं स्पृशति। प्राणो हकारः। तदन्तः क्षकारः ऊर्ध्वं घात उद्घातः। एतदुक्तं भवति। पूर्वोक्त चिन्मयशक्त्यात्मकप्राणो देशिकदर्शितक्रमेण ब्रह्मपदोर्ध्वं गच्छन्। तत्रस्थालिङ्गपीठात्मक ग्रन्धिरूपान् कवाटानुद्घाटय प्राणात्मकपरशक्त्यन्तर्भूतं

p. 164)

संवर्तकाख्यं निष्कलपदं यदा गच्छेति तदा स एवेवोद्घात इति गीयते। योगसूरिभिरिति। तथा चोक्तम्। रुद्रयामले। उद्घातः प्रोच्यते। सोभिप्राणान्तं स्पृशते यदेति तथा श्री कामेश्वरी तन्त्रेऽपि। प्राणेन प्रेर्यमाणेनाप्यपानः पीडयते यदा। गत्वा चोर्ध्वं निवर्तेत एतदुद्घात लक्षणमिति। अमुं स्वाचारर्थ इति  अनेन योनिमुद्रा बन्धाभ्यासिनः। फलातिशयं दर्शयति  योधिकारी गुरुपराधीनवित्तचित्तकाय प्रवृत्तिर्विहित दीक्षाचेधो योनिमुद्रा बन्धयोगविशेषांश्च यथोक्तक्रमेण ज्ञात्वा नित्यमभ्यसेत्। अनुसन्दयाति स साधकवरो निरस्त निःशेषदुःख कल्मषोपगत जरा क्लेश मरणश्च सुखसमूह परिवृतो लक्ष्मीपतिरिव कटाक्षविक्षेप किं करीकृतदेवगणो दिवि सुरेन्द्र इव भूमौ चिरञ्जीवतीत्यर्थः। तथा चोक्तं श्रीरुद्रयामले। एवमभ्यासस्तु स्यादहन्यहनियश्चयात्। जरामरणदुःखौघैर्मुच्यते भवबन्धनात्॥ अथ पूरक इत्यादि सुचिरञ्जीवतीत्यन्तेन एतदुक्तं भवति विविक्तदेशे रमणीये मृद्वासने प्राङ्मुखोदङ्मुखो वा स्वस्तिकाद्यासनेष्वन्यतमेनोपविश्य। कृतगुरुचरणारविन्द वन्दनस्वाङ्गग्रीवशिरांसि सन्धारयन्। स्वाधारनियमितान्तकरणो देशिकोपदेश क्रमेण हुं कृतिकरणेन शनैः

p. 165)

शनैर्मुहुः पायुमार्गमाकृष्याकुञ्च्य बध्वापान वायुमाधारे नियम्यतं स्वान्तसम्भिन्नेन प्राणवायुना संयोज्य। चन्द्र सूर्यात्मकेडा पिङ्गलामागोप * हृत्य सुषुम्ना मुखमुन्मीलयन् तदन्तर्गतचित्र नाड्यन्तर्गत ब्रह्ममार्गं प्रवेश्य ऊर्ध्वं गत्वा ततस्वमूलाधारे योन्यन्तस्त्रिगुणित प्रसुप्त भुजगाकार चिन्मयकुण्डलिनी शक्त्यात्मना भ्रमन्तं बन्धूक पुष्पसंकाशं सन्ततविद्योतमानं तटित्समूहसन्निभम्। दिनकरभास्वरं सोमसमूहशीतल ज्वलत् कालानलरुचिं कालाग्निमयं कामं ध्यात्वा। तदूर्ध्वे भागे निवातारोपित दीपवत्। शिखारूपमायात्मक कुण्डलीनीमात्म स्वन्नाथ चिन्मयीं प्राणात्मिकां ध्यात्वा तां ब्रह्ममार्गेणोध्वर्स्वयम्भु बाण परिलिङ्गानि हित्वा तदुपरि स्थितमात्राख्य पूर्णोड्याण कामात्मकपीठत्रयं च भित्वा प्राणाख्य पर शक्तिं गत्वा तदुपरि भागस्थिता मृतकर बिम्बान्तर्गलिता मृतसागर मया कुलाख्य परं पदं गत्वा तदमृतं पाययेत्। अगलान्तममृतरसं पीत्वा ततः परावृत्या सावधस्तेनैव पथा च कुलाख्यं मूलाधारं प्रवेशयेत्। पुनरपि तथैवोर्ध्वं गच्छेत्। पुनरपि तथैवाधारम्। इत्येवं नियताभ्यासेन योनिमुद्रा बन्धनाख्य योगसिद्धस्य उक्तफलानि भवन्तीति। चतुर्विधाया कथितेह सृष्टीति। अण्डजस्वेद जोद्भिज्जरायुजाश्चेति।

p. 166)

अण्डजाः पक्षि सर्वादयः। स्वेदजाः यूकमत् कुणादयः। क्षणविनाशिनः। उद्भिजाः येभित्वोद् गच्छन्तीति। ते स्थावरा वृक्षगुल्मलनादयः। नरतुरगगजपश्वादयः। जरायुजाः। एवं चतुर्विधाया कथितेहसृष्टिरिति। तिर्यग्योनि भूताया निमित्तोपादानकरणभूतायां प्रवर्तते। कालाग्नि रुद्रादि सदाशिवान्तं तत्वजातम्। चतुर्दशभुवनात्मकब्रह्माण्डं लयं याति। सा

त्रिरेखाकारा वाग्भवात्मिका शक्तिस्त्रिपुराख्येति। तथोक्तमुमातन्त्रे। सा देवी त्रिपुराख्याता योन्याख्या च तथा परेति। तथा च श्रीमतसारे। कालाग्नि रुद्रादि सदाशिवान्तमखण्डं धावरणेषु चाण्डम्। यस्यां ययां व्याप्तमवस्थितं चमत्वातदन्यं न च संस्मरामीति। पूर्वोक्तलक्षणां योनिमुद्रां तद्बन्धनं चोपसंहरति। सेय मम योक्तेऽति। योनिमुद्रा बन्धनाभ्यासिनां फलानि दर्शयति। अनेन बन्धन साध्यत इति। एतेच्छिन्नादयो मन्त्रदोषा मन्त्रव्याकरणे दृष्टव्याः। अत्रापि तं मतेन दिशा प्रकाश्यते। अर्थगूढाश्च ये मन्त्राच्छिन्नास्ते समुदीरिताः। रुद्धा विसन्धिका मन्त्राः सन्धिकार्यकरणेषु योग्येषु सत्सु विगतसन्धिका मन्त्रास्तेरुद्धाः। उच्चारसनसोच्चारो मन्त्रस्तम्भित उच्यते।

१६७)

मन्त्रोद्धारसमये सानुनासिकाक्षराये मन्त्रास्तत् प्रचुराक्षराश्च ते स्तभिताः। कीलितश्चन्दसो मन्त्र उक्तादेरधिकाक्षरः। उक्तादिच्छन्दसो येधिकाक्षरा मन्त्रास्ते कीलिताः। सप्ताः। दीपिन्या चिविनासिद्धाः सुप्ता इति समीरिताः। ये अनवगत * पनमन्त्रास्ते सुप्ता। मत्ता लेखना त्रय संयुताः। ये मन्त्राः मत्तमनिभिर्विलिख्य पठन्ते ते मत्ताः। मूर्छितास्वपगता मन्त्राः। ये मन्त्रा स्वापकालोपदिष्टास्तत्कालविनियुक्ताश्चते मूर्छिताः। हीनवीर्याः शक्तिहीनाः। अनधिकारि बहुजनोपदेशावधिकाम्य प्रयोगाच्च सर्वे मन्त्राः शक्तिहीना भवन्ति। ते हीनवीर्याः। दग्धाः षट्कर्णैर्यः श्रुताता मन्त्रा ते दग्धा समुदीरिताः। बलवत्सन्निधानेन दुर्बलस्त्रासितो भवेत्। अघोर नृसिंहादि मन्त्रेषु जप्यमानेषु क्षुद्रमन्त्राणां यक्षिणी महाशास्त्रार्द्रपटादीनान्त्रा सो जायते। शत्रुपक्षेन्धिताः प्रतिकूलोरिपु स्मृतः। अभीष्टमन्त्रेषु सिद्धसाध्यादीनाशोध्यमानेषु वैरिकेषु गतोद्धाराक्षराये मन्त्रास्ते शत्रु पक्ष स्थिताः। बालवृद्धा उभाझेयौ गुरुतो वर्णलक्षणैः। गुरु संप्रदायेन लध्वक्षरात्मकाये मन्त्रास्

* ?लाः। गुर्वक्षरा वृद्धाः। गर्विता यौवनेन। गुरोरप्यविधिना

p. 168)

प्राप्ता ये मन्त्रास्ते यौवनेन गर्विताः। निजिताः। यथोक्तक्रमेण उक्तसंख्याधिकं जप्यमाना अपि साधककर्मबलान्त फलेदास्तेनि ज्ञाताः। ये च सत्वेन हीनाः। सत्ववर्जम बीजकम्। अज्ञातबीजा ये मन्त्रास्ते सत्वहीनाः। खण्डीभूताः। अयुतनियुतात्मकाक्षरा ये मन्त्राः पठितुमशक्तेः तत्खण्डमात्रमादाय जप्यन्ते ते खण्डीभूताः। विहीनाः। अनवगताङ्गमन्त्राविहीनाः। एवमाद्यनेकदोषदूषिता अपि योनिमुद्रा बन्धनाख्य योगाभ्यासयुक्तेन जपेन सर्वे मन्त्रा अभिमतफलादा भवन्तीत्यर्थः। तथा चोक्तम्। श्री रुद्रयामले नित्यक्लिन्ना प्रकरणे। यद्यदुच्चरते मन्त्रं वर्णरूपं शुभाशुभम्। तत्तत् सिध्यत्यनायासाद्योनिमुद्रानि बन्धनादिति। गुरुतल्पनिषेवणमिति। स कृदाचरितेनापि योनिमुद्रानि बन्धनेन महापातकयुक्तोप पुरुषः पूतो भवतीत्यर्थः। तथा चोक्तं श्रीरुद्रयामले। कृत्वा पापसहस्राणिभ्य संख्यातानि सुन्दरि। दहत्युच्चारमात्रेण योनिबन्धेन नान्यथेति। स तु मन्त्रवर इत्यादि श्लोकत्रयेण योनिमुद्रा बन्धनाभ्यासिनामैहिकामुषिकं फलातिशयं दर्शयति। तथा चोक्तं श्री रुद्रयामले। तस्मादभ्यासनं नित्यं कर्तव्यं पुण्यकांक्षिभिः अभ्यासाज्जायते सिद्धिरभ्यासान्मोक्षमाप्नुयात्। संवित्तिं

p. 169)

लभतेभ्यासाद्योगाभ्यासात् प्रवर्तते। मन्त्राणां सिद्धिरभ्यासादभ्यासाद्वा साधनम्। कालवं च नमभ्यासात्तथा मृत्युञ्जयो भवेत्। इति। तस्मादेकेन कर्मणा सकल पुरुषार्थकाङ्क्षिभि योनिमुद्रा बन्धनाख्या योगाभ्यासे नित्यं यत्नः कर्तव्य इत्यर्थः।

॥ संप्रदायदीपिकायां चतुर्थः पटलः ॥

एवमधिकारिणामभ्युदय निश्रेयस प्राप्युपायभूतं योनिमुद्रा बन्धन प्रकारमुक्त्वा अनन्तरं षडाधारेषु योगविशेषान्वक्तुमुपक्रमते । अथ आधारपङ्केरुहाणीत्यादिना । सुषुम्नान्तरस्थानि । या पूर्वोक्ता सुषुम्नान्तराले स्थिता चित्रनाडी तदन्तर्मूलाधारादि षट् पर्वाणि सन्ति । तान्येव षडाधाराणीत्यर्थः । तदम्भोजेति । तन्मूल संस्थितान्देवान् ब्रह्मादीनक्षराणि आधारविंष्टाः । डाकिनीत्यादि देवताश्च वक्ष्य इति । पूर्वेण सम्बन्धः । अजग्रन्थिपद्ममिति । योनिमुद्रा बन्धप्रकरणे । मूलाधारात्वेनोक्तम् । यच्चतुर्दलात्मकं पद्मं तदेवाधार माद्यं ब्रुवते । योगिनः । देवी निरुद्धेति । तत्र सकल प्रपञ्चमूलमृतां ज्योतिर्मयी कुण्डलिनी शक्तिस्थितेत्यर्थः । जलेन्द्राग्नि वायून्यसेदिति । जलत्वकारः । वह्नितीयं शकारः ।

p. 170)

अग्नि तृतीयं षकारः । डाकिनीति मूलाधार निविष्टाशक्तिः डाकिनीत्यर्थः । एतदुक्तं भवति । मूलाधारे तेजोमयैः वकारशकारषकारसकारै सबिन्दुकैश्चतुर्भिरक्षरैयुतं चतुर्दलात्मकं पीताभं डाकिनी देवताधिष्ठिताश्चर्यभूतं यत् पद्मं तत् सकल प्रपञ्चमूलत्वान्मूलाधारमिति योगिनो वदन्तीति । तस्मिन्मूलाधारे नियमितामरुतां योगिना मैहिकामुष्मिकं फलानि दर्शयति । मूलाधारे सन्ततं ध्यानयोगादित्यारभ्य परमानन्दपदे मुदारमन्त इति । उत्प्लुतिरुत्पतम् । दार्दुरीददर्दुरोमण्डूकः । तत्सम्बन्धिनी प्लुतिरिति यावत् । व्रजं गृहं मूलाधारादारभ्यादा द्वादशान्त सुषुम्नान्तस्थ तयोपास्यत्वेनोक्तनिष्कल चैतन्य ज्योतिषोयाथात्म्यं ब्रह्मरूपशिवलिङ्गस्वरूपत्व माधारदेवतानां च तन्मुखत्वेन तस्य षन्मुखत्वं षट्कोणशानां च तत्तदाधारोपाधिकं चोप्यास्यतया व्याचष्टे । एकीभूतार्ण वा इति । षट् सिद्धाः द्विरण्डवालि महाकालाग्नि पिनाकिच्छगलण्डा इति । सकल सुरतनुः ।

ब्रह्मविष्णुरुद्रेश्वरसदाशिव शिवात्म षट् कोशाः। त्वं मासरुधिरमज्जास्थिस्नायवः।
पूर्वमुपास्य तयोक्त निष्कल चैतन्यस्य ब्रह्मण उपास्यं सकलं रूपं दर्शयति। अभङ्गं
लिङ्गवपुद्धृतोगगवत इति। भगवतः।

p. 171)

ऐश्वर्य वीर्य यशश्री ज्ञान वैराग्येषु भगशब्दो वर्तते।
तद्वतो भगवच्छब्द् वाच्यत्वम्। आधारात्मा द्विरण्डः।
स्वाधिष्ठानात्मा वह्निः। मणिपूरकात्मा वाली।
अनाहतात्मा पिनाकी। विशुध्यात्मा छगलब्धः।
आज्ञात्मा महाकाल इति। स्वाधिष्ठानमिति रसदलैः। षड्दलैः ध्वजमूलं लिङ्गमूलम्।
पृष्ठादि तर्काक्षरैः पृष्ठं बकारः। तदादि षडक्षरैः। बिन्दून् भासितमस्तकैः। स बिन्दुकैः।
लिङ्गात्मनः शूलिनः। सुषुम्नौपाधिक चिन्मय तेजो लिङ्गात्मनः। परमेश्वरस्येत्यर्थः।
एतदुक्तं भवति। लिङ्गमूलस्थाने। बं भं मं यं रं लम् इति षडक्षरैर्युक्तं षड्दलात्मकं पद्मं
बालदिवाकरभास्वरं लाकिनी देवतादिष्ठितं स्वाधिष्ठानाख्यं पङ्कजम्। एवं मूलाधाराद्या
द्वादशान्तमुपास्यत्वेन उक्तस्य सुषुम्नापाधिक चैतन्य ज्योतिर्लिङ्गात्मनो भगवतः।
परमेश्वरस्याति महनीयमुपलब्धिस्थानमिति योगिनो वदन्ति। इह किलसमनस्कानां
नियमितमरुतां योगिनामिहपरत्रापि फलानि दर्शयति। इह स्वाधिष्ठान इत्यारभ्य
सहजानन्दच्छलेन्दूदय इत्यन्तेन। नाभिस्थं मणिपूरकमिति। डकारादिभिः
फकारान्तैर्दशभिरक्षरैः। अयमर्थः। नाभिस्थाने। डं ढं णं तं थं दं धं नं पं फम् इति
दशभिरक्षरैः

p. 172)

संभिन्नं दशदलात्मकं नीलवर्णं लाकिनीं देवताधिष्ठितं मणिपूरकं नाम। अत्र स्थाने। स्थिरीकृतान्तः करणस्य नियमितमरुतो यो भिन्नं फलातिशयं दर्शयति। सततं ध्यायं दर्शयति ते नरा इत्यारभ्य कालस्य वा वञ्चनमित्यन्तेन। हृदये सरसेन्द्रगोप सन्ध्याघनसिन्दूर सुवर्ण वर्णमब्जमिति। रविसंख्यैर्द्वादशभिः क्रोधीशाद्यैः क्रोधीशः। ककाराद्यैरित्यर्थः। भानुसंख्यैर्द्वादशभिर्दण्डो पेतैर्बिन्दुमद्भिः। अयमर्थः। हृदयप्रदेशे। कं खं गं घं ङं चं छं जं झं ञं टं ठम् इति क्रोधीशादि द्वादशभैरव सहितैर्द्वादशाक्षरैर्युक्त द्वादशदलात्मकं कर्णिकान्तर्भितसमप्रभ मन्त्रमूलं शक्त्याकाकिन्याधिष्ठितमिन्द्रगोप * न्दूर सन्ध्यारागसमप्रभमनुपममब्जामन्वाहताख्यम्। एकस्मिन् न नाहतात्मनि स्थाने नियमितमानसमरुतां समाधिमतां लोकद्वयानुबन्धीनि फलानि दर्शयति। एतस्मिन् सततं निविष्टमनस इत्यारभ्यस्याद्योगिनी मेलनमित्यन्तेन। विशुद्धाख्यं कण्ठ इति श्री कण्ठ अकारः। अकाराद्यैः अयमर्थः। अम् आम् इम् ईम् उम् ऊम् ऋम् ॠम् लृम् ॡम् एम् ऐम् ओम् औम् अम् अः इति षोडशस्वरैर्युक्तं षोडशदलात्मकं धूमवसानवर्णं साकिनी देवताधिष्ठितं विशुद्धाख्यं पदम्। अस्मिम् स्थाने संस्थापितमानसवायुनां

१७३)

संयमनामपरत्र च फलातिशयं दर्शयति। अभ्यासयोगादित्यारभ्यनापिगणप इत्यन्ते न। अज्ञानामेति। दलयुग्मं द्विदलम्। वर्णावन्त्यौ हकारक्षकारौ। एतदुक्तं भवति। भ्रुवोन्मध्यै संविन्दुकाभ्यां हकारक्षकाराभ्यां युतद्विदलात्मकं शरदम्बु संकाशं हाकिनी देवताधिष्ठितमाज्ञाख्यं कमलम्। अत्र ध्यानयुक्तानामैहिकामुष्मिक फलाति यं दर्शयति। ध्यानयोगनिरतस्य इत्यादि महानन्दकन्दमित्यन्तेन। बिन्दुनिलये अज्ञास्थाने निरालम्बां मुद्रांखेचरी मुद्राम्। विष्णोः पदमाकाशः। उल्लासि चिल्लियुगलं स विलास भ्रूयुगलम्।

विसरं समूहम्। मुद्रया खेचर्या विश्वनि च ये आकरालाकृष्णवर्णा। आभीलेर्भयानकैः। चरन्मरालं सञ्चरद्धं सम्। सबकोटमालम्। बलाकमालायुक्तिम्। तटित्करालान्तरवारिनीलम्। विद्युज्वल सलिलश्यामम्। मुद्रयाखेचर्या विश्वनिलये आज्ञास्थाने। सहस्रारपद्ममिति। अरशब्देनदलान्युच्यते। सहस्रदल पङ्कजमित्यर्थः। विसर्गादधस्तादिति। विसर्गस्याकुलाख्यस्य पदस्या वाग्भाग-इत्यर्थः। अथो वक्रमवाङ्मुखम्। आरक्तकिञ्जल्क पुञ्जं रक्तकेसराढ्यं कुरङ्गेण हीनः। विगताङ्कः। त्रिशृङ्गेण युक्तः। त्रिकोणाकारः। योन्याकार इति यावत्। तथा चोक्तं श्रीमते। शक्तिर्यत्र लयं यातातदेवाधारमण्डलमिति।

p. 174)

स्फुरद्रश्मिजालः भास्वत् प्रभासमूहः। सुधाङ्कुरमृतकरः। तदन्तर्गतं ब्रह्मरन्ध्रम्। सुसूक्ष्मम्। तन्मध्ये सूक्ष्माकाशात्मकम्। ब्रह्मरन्ध्रम्। तथा चोक्तं श्रीरुद्रयामले। ब्रह्मरन्ध्रं तु तत्रैव सुषुम्नाधारमण्डलमिति यदाधारभूतं सुषुम्नाख्यनाड्याः। सुषुम्नायाः शक्तिनाड्या आधारभूतं सुषुम्नेति। निष्कलचैतन्या परमेश्वरस्योपाधि भूता चित्कालसहिता इन्दुमण्डलमध्यवर्ति ब्रह्मरन्ध्रमूर्तीरी कृत्यदेहमनुगतेत्यर्थः। तथाचोक्तं योगामृते। शक्तिर्यत्र लयं यातातदेवाधारमण्डलमिति। एतत्कैलाससंज्ञं पदं कुलपदं यदेतद्विसर्गाख्यं मकुलपदं तदेव कैलाससंख्यं बिन्दुरूपी खरूपी। प्रं प्रकृत्यात्मकः। तथा चोक्तं श्रीभगवत्पादैः। बिन्दुः पुरुष इत्युक्तो विसर्गः प्रकृतिर्मता। बिन्दुविसर्गात्मको हंसः। सततदात्मकमिदं जगत्। एतदुक्तं भवति। पूर्वोक्तादाज्ञास्थानादूर्ध्वं यच्छिरः। कपालन्तराले स्थितमधो वदनमारक्त केसरं कलात्मक षोडशस्वर परिवृत्तं सहस्रदलपङ्कजम्। तन्मध्ये त्रिकोणाकारमण्डलान्तर स्फुरत् प्रभासमूहः सुधाकरः समास्ते। तदन्तर्ब्रह्मनाड्याधार भूतम्। ब्रह्मरन्ध्रम्। ददुपरि भागेषूर्ध्वं केसरं सहस्रा दलात्मकं पद्मम्।

तद्विसर्गाख्यमकुलपदम्। एतदेव स्थानं कैलाससंज्ञमिति।

p. 175)

देशिकावदन्ति। यत्रास्ते भगवतान्विष्वेषान् जनाना भवभयकातरकप्रबोध परमाचार्यरूप जगदुत्पत्ति परिवृतलीलोनादि निधनो योगैकगम्यो योगिनामभिमतफलदः सन्ततमन्तः सौधीन्धारां विमुञ्चन् सच्चिदानन्देक रसस्वलक्षणः। परिपूर्णात्मा परया शक्त्या परमेश्वर इति। अत्र कैलासस्थाने नियमितस्वान्तमरुतामिह च परत्र च फलभोगातिशयं दर्शयति। स्थानस्येत्यारभ्य वीतमृत्युरित्यन्तेन स्थानेस्मिन् नित्यादि प्रापयेदित्यन्तः सुबोधः।

॥ संप्रदायदीपिकायां पञ्चमः पटलः॥

एवं षडाधारेषु योगविशेषानुक्त्वा अनन्तरं मूलाधारेषु स्वयम्भुवादि लिङ्गविशेषान्वक्तुमुपक्रमते। स्वयम्भुलिङ्गमित्यादिना। स्वयम्भुलिङ्गम्। निजयोनिमध्यरन्ध्रान्तरमिति। पूर्वदृढरुचगुदध्वजान्तराल इत्यत्र योनिमुद्रा बन्धनप्रकरणे मूलाधारस्थाने प्रस्तुताया कुण्डलिनी शक्त्यात्मिका योनिः। तन्मध्ये यच्चिन्मयं पिण्डात्मकं तेजस्वयम्भुलिङ्गमिति। हृत्सरसीरुहान्तर्बाणाह्वयं चेति। हृदय कमलकर्णिकान्तस्थ बिन्दौ। स्थितं यत्परं तेजः। तद्बाणाख्यं बाणलिङ्गमित्यर्थः। इतरमन्तरालमिति।

p. 176)

भ्रुवोर्मध्यमाज्ञास्थानम्। तथाचोक्तमुमातन्त्रे। ललाट सुषिरेरम्येनिर्द्धूमज्योतिरव्ययम्। ध्यायेदिति। तस्मात्तन्मध्यगबिन्दौ स्थितं यच्चिद्रूपात्मकं तेजः। तदितरलिङ्गमित्यर्थः। तथाचोक्तम्। स्वयम्भु बाणपरलिङ्गानां पिण्डपदरूपात्मकत्वम्। श्रीमतोत्तरेऽपि। पिण्डं

कुण्डलिक्तिः। पदं हंस प्रकीर्तितः। रूपं बिन्दुः समारव्यात इति। गगनाम्बुजेन्य इति। अन्ये च केचनदेशिकाः। अस्यैव परलिङ्गस्य स्थानान्तरे ध्यानमाहुः। गगाम्बुजे विसर्गपदारव्य परबिन्दुस्वरूपनिष्कलपद इत्यर्थः। केचिदन्यथा वर्णयन्ति। विसर्गाधस्तात् परमिति। विसर्गाध स्ताशब्देन विश्व विश्वमाश्रयं कुलपदमभिधीयते। तदवा भगवत ब्रह्मरन्ध्रान्तराले तृतीयलिङ्गं परलिङ्गमित्यर्थः। अथ किमुच्यते। लिङ्गमिति। विश्वमिदं जगद्यत्र लयं याति तल्लिङ्गम्। लिङ्गचयच्चराचरमिति वा लिङ्गयद्वालीनार्थं गमयतीति लिङ्गम्। नलोहपाषाणादिकं तथा च श्रुतिः। अन्तस्थमात्मानमजं न दृष्ट्वा भ्रमन्ति मूढा गिरि गह्वरेषु। पश्चादुदग्दक्षिणतः पुरस्तादधस्विदादुपरि स्विदासीत्। तथा ब्रह्मरन्ध्रेऽपि। बाह्याभ्यन्तरं श्रेष्ठं वीराणां तु कुलार्चनम्। इति। तथा च श्रीकामेश्वरी तन्त्रे। आत्मन्येवार्चनं कुर्याद्बहिर्लिङ्गार्चनं न चेत्। इति।

p. 177)

तथा च ज्ञाननिर्णनेऽपि। आत्मलिङ्गं सदा ध्यायेद्यो यद्यत् फलमिच्छति। तत्तल्लभेन्न स देहोभ्यात्म संवित्तिकारणमिति। तथा च सिद्धान्तवचनम्। आत्मस्थं यः शिवं त्यक्त्वा बहिष्ठं तु समर्चति। हस्तस्तस्थं पिण्डमुत्सृज्यलेडिकोर्पनमात्मन इति। तथा च भगवान्याज्ञवल्क्यः। मध्यमे च हृदये च ललाटे स्थाणुवत् ज्वलति लिङ्गमदृश्यम्। अस्ति गार्गिपरमार्थमिदं त्वं पश्य पश्यमनसा रविरूपम्। अत्र मध्यमे चेति। मूधारमध्य इत्यर्थः। तस्माद्बाह्यादारभ्यन्तरं श्रेष्ठमिति। सर्वेषां संप्रतिपन्नमित्यर्थः। श्रीमूलविद्यायास्त्रयाणां बीजानां बीजानां स्वयम्भुवादि लिङ्गात्मकत्वेनाध्यनमाह। यद्बीजं वाग्भवारव्यमित्यादिना। यद्वाग्भवारव्यं प्रथमबीजम्। निर्मलकाञ्चन संकाशं मूलाधारे स्वयम्भुलिङ्गात्मकं ध्यायेत्। यत् कामराजारव्यं मध्यमं बीजं जपा कुसुमसंकाशं हृदयकमल कर्णिका मध्ये येदित्यर्थः। यत् परारव्यं तृतीय बीजं शारदेन्दु संकाशमाज्ञा

स्थाने परलिङ्गात्मकं ध्यायेदित्यर्थः। एतेषां बीजानं प्रत्येकं जपध्याने फलविशेषं दर्शयति। प्राणान्योनि गता नित्यादि श्लोकत्त्रेण विद्यां साकल्येण जपतां ध्यानविधिं हुतविधिं च * हत्रयाणां लिङ्गानामिति। कपालकरणाख्य होमप्रक्रिया प्रज्ञातस्य कुण्डलीमुखान्तस्थ

p. 178)

चिन्मयपरमेश्वराग्नौ नामरूपात्मकस्य जपतोमृतात्मनाहोम प्रक्रियामाह। निःशङ्कमिति। नियतशब्दमात्रमेवं कृत हुं कृति विधिकस्य फलविशेषमाह। एकं वत्सरमिति ततो देवीं ध्यायेदित्यादि ध्यानश्लोकागतार्थाः। महाविद्याख्य निष्कल पदादि मूलाधारान्तं षोडशाधारेषु क्रमेण देव्यवतार ध्यानमाह। ध्यात्वा वागीश्वरीमित्यादिना। एते तेषोपशाधाराः। महाबिन्दुपीठं व्योमरूपावस्थात्मक निष्कलाकाशः। अतीतस्थानं भूविन्यवस्था। आत्मनगतस्थानमुन्मनावस्था। शान्तातीतं समानवस्था। सूर्यचक्रं विसर्गाख्य परशक्ति स्थानम्। व्योमाम्भोजं विसर्गादयस्थितशान्ताख्यं ब्रह्मरन्ध्रं प्रेतभूमिं ब्रह्मरन्ध्रादधस्थित कर्णिकास्थानगतशक्त्याख्य सदाशिवस्थानम्। अर्धचन्द्रं सहस्रारपद्मस्य षोडशकलात्मककेसरस्थानम्। आरम्भं नादात्मकाकुलस्थानम्। सेतुबन्धं विद्वात्मक ललाटबन्धमध्यमम्। व्योमभृवोर्मध्यमाज्ञास्थानम्। ईश्वरास्थानं विशुद्धाख्य कण्ठस्थानम्। रुद्रस्यालयमष्टानाहताख्य हृदयस्थानम्। विष्णुस्थानं मणिपूरकाख्यनाभिस्थानं ब्रह्मस्थानं स्वाधिष्ठानाख्यं लिङ्गमूलं कुण्डलिनी गेहमध्यं मूलाधारमिति। एतेषु मूलाधाराद्याज्ञान्तं सकलाः। परतो निष्कला इति। ज्ञातव्यम्। निरन्तरं ध्यानवन्ध्यानयोगयुक्तस्य फलविशेषमाह।

p. 179)

अनेन शश्वदिति मूलाधारा द्वादशान्तं ब्रह्मन्तर्गतवतीं विद्युदाति वर्णभेदेन ज्योतिर्लिङ्गाकारां

ध्यायतां सम्यक् ज्ञादीन् फलविशेषान्दर्शयति। आधारादुल्लसन्तीमिति। यागोक्षीरेत्यादि ध्यान श्लोकास्पष्टार्थः। मूलाधारे भगवतीं ध्यात्वा हंसमन्त्राधिरूढं तृतीयं बीजं जपन् तामकुलपदं नीत्वाताममृतार्णव निमग्नां सुस्थितां ध्यायतः। फलविशेषमाह। शक्तिं हंसेन युक्तामिति। पीतां सतम्भनादावित्यादि यच्च परमित्यन्तः सुबोधः। सिद्धिरतुला पञ्चप्रकारेति। सिद्धयः तत्र प्रसिद्धाः पातालगलिताञ्जन खड्गमुद्राख्याः अधिकारमन्त्रयोगात्मज्ञानाख्यावेति।

॥ संप्रदायदीपिकायां षष्ठः पटलः॥

एवं मूलाधारेषु वाग्भवादिषु बीजानां स्वयम्भुलिङ्गात्मकत्वेन योगविशेषांश्चोक्त्वा अनन्तरं सौभाग्यलक्ष्म्यादि सर्वैश्वर्यप्रदं यन्त्रविधानं वक्तुमुपक्रमते। अथामरैरैरित्यादि अथ यन्त्रलेखः सु नियत चरितः संयतेन्द्रियमनोवृत्तिः। परापवादानि वारितवाग्विलासः सुविमल सलिल स्नातः। क्षौमाम्बरधरो मणिमय भूषा भूताङ्गो हिम सलिलालोलित चन्दन कर्पूरागरु कुंकुम कस्तूरिकापङ्क लिप्तगात्रः सुरभि सुमनोमालालं कृताङ्गशिराः। पाटीरपङ्ककृततिलकललाटपट्टः।

p. 180)

कज्जलाञ्जितनयन युगलस्ताम्बूलग्रास पूर्णारुणमुखकुहरोमुदितस्वान्तवृत्तस्मरवदभिरूप वेषोम्बिका पादाम्बुज भृङ्गायमाण मानस स्वगुरुचरण प्रणामपुरःसरं यन्त्रराजं लिखेदित्याह। कर्पूरक्षोददिग्धाङ्ग इत्यादिना यन्त्राणां लेखद्रव्याण्याह। कस्तूरिकेत्यादिना। सुधाकरखण्डः। कर्पूरखण्डः। पटीरं रक्तचन्दनम्। यन्त्रलेखप्रकारमाह। लिखेद् भू पत्राणीत्यादिना। भूपोराजा। राजशब्देन षोडशकलात्मकश्चन्द्रः। षोडशपत्राणीत्यर्थः।

तद्बहिर्मास पत्राणि द्वादशपत्राणि तद्बाह्यदेशे पुनर्भूपपत्राणि षोडशदलानि बहिर्दन्तपत्राणि द्वात्रिंशद्दन्ताः द्वात्रिंशद्दलानि। तत् कर्णिकायां महायोनिरिति। मध्यकर्णिकायां षट्कोणमित्यर्थः। हंसदेवोपरिस्थान् जगन्नायिकाम्। हंसमन्त्रारूढां मातृकामित्यर्थः। यन्त्रलेखं संक्षिप्योक्त्वा विस्तारेणाह। षोडशार इत्यादिना। वासरेशस्वरैर्भिन्नमेनं विधायेति। वासरेशस्वरैः पिण्डचतुष्टयवर्जं द्वादशस्वरैः। सम्भिन्नं कामराजमित्यर्थः। कलाबिन्दुनादैः शिरो देशलग्नैः परिभ्राजमानान् ककारादि वर्णानिति। कलावाग्भवम्। बिन्दुः सकारः। नादो हकारः। ऐकार हकार स सम्भिन्नैः कादिसान्तैरित्यन्तः।

p. 181)

तथा चोक्तं श्रीरुद्रयामले तद्बाह्ये मातृकाः सर्वा बिन्दुनादकलायुताः। हंसवर्णकरोरूढाः कारयेत् परमेश्वरीति। मन्दिरस्योदरस्थमिति। मन्दिरं क्षकारः। तस्यान्तस्थमित्यर्थः। तथाचोक्तमस्थानभैरवे। क्षकारो मन्दरः। प्रोक्तावर्णो मेरुरुतीश्वर इति। सुषिरं हकारः। हकारवेष्टितं कुर्यादित्यर्थः। एतदुक्तं भवति। प्रथमं षट्कोणाव्रतं त्रिकोणं विलिख्य बहिद्वत्तं लिखेत्। तद्बहिः षोडशदलम्। तद्बहिर्वृत्तम्। ततेद्वादश दलम्। पुनरपिवृत्तम्। तद्बहिः षोडशदलात्मकं पद्मम्। बहिर्द्वादशारे पिण्डवर्णवर्ज्यम्। द्वादशस्वरसम्भिन्नम् कामराजं ह्लां क्लीं इत्यादि लिखेत्। पुनः प्रथमषोडशारे अम् आम् इत्यादि षोडशस्वरान् लिखेत् तद्बहिर्द्वात्रिंशर्दले हकार सकार रैकार सहितान् ककारादि सकारान्तान् सन्दुकान् द्वादशवर्णान् हैसकं हैसखम् इत्यादि हैससम् इत्यन्तं लिखेत्। एतत् सर्वं क्षकारेण वेष्टयेत्। तद्बहि हकारेण वेष्टयेदिति। एतन्महनीय यन्त्रराजमित्यादि स्थलीयते चेत्यन्तः सुबोधः। गन्धसिन्धुरेन्द्रैः। मदहस्तिभिः। मदचित्ख्वल्लविलिप्तगण्डपिण्डैः। मदपंरोहितगण्डस्थलैः। दरोदरेद्यूते। लुलायोवनमहिषः। चित्रकायः। व्याघ्रः।

p. 182)

भल्लूको हंसको मृगविशेषः। लोलकीलश्चलश्चलत् ज्वालः। हृत्पङ्केरुहे हृदयकमलकर्णिकामध्ये यन्त्रराजमध्यस्थितमानं ध्यात्वा मूलविद्यां जपन् मूलाधारात् कुण्डलिन्यात्म चिन्मयीं शक्तिमुत्थाप्य ब्रह्ममार्गेणोर्ध्वमाद्वादशान्तं गत्वा तदन्तर्गता मृतकरबिम्बात् सृतबहलसुधाधारयाभिषिच्यमानं ध्यानन् अमृतमयीं ध्यान्तां मूलाधारान्तं पुनरपि द्वादशान्तं पुनरपि मूलारपि मूलाधारम्। एवमारो * रोहाभ्यासेन नित्ययुक्तं गण्डपुण्यनिलयं पुरुषवरन्धातारमिव भारतीमुकुन्दमिव लक्ष्मीश्च विना कृत सापत्न्येते वाणी भजेत इत्यर्थः। आदौ मन्मथकोष्ठ इत्यादि कुक्षौ तदेतत् क्षिपेदित्यन्तस्यायमर्थः। तावन्ममथाख्य क्लीं कारोदरे साध्याख्य कर्मसहितं कामाधि राजाख्यं ह्रींकारं लिखेत्। तद्बहिः संपुटीकृतं कन्दर्पद्वितयाख्येन षट्कोणेन वेष्टयेत्। षट्कोणेषु मकरध्वजाख्यं ब्लूंकारं लिखेत्। एतत् सर्वं मनोभवाख्येन स्त्रींकारेण वेष्टयेदिति। यन्त्रं पूर्वोक्तयन्त्राधिपेनत्योदि सुचिल्य इत्यन्तः सुबोधः। साधक स्वमूलाधारकमलकर्णिकामध्ये इदं कामराजयन्त्रं ध्यात्वा साध्यं च तन्मध्ये बालदिवाकरसंकाशमानन्दमन्दं मण्ढरेश्चेतनामात्र रूपं ध्यात्वा देशिकोपदेश क्रमेण स्वशक्त्यामथनं कुर्यादित्याह। ध्यात्वेवमित्यादिना

p. 183)

भगवत्यवश्यमिति स्पष्टः। कलापत्रोपेतमित्यादि पिण्डामृतमित्यन्तस्ययमर्थः। कलापत्रं षोडशदलात्मकं विलिख्य

* त्कर्णिकायां शृङ्गाटद्वितयाख्यं षट्कोणं विलिख्य तन्मध्ये ओं क्लीं नमः। इति देवी हृदयाख्यं मन्त्रं लिखेत्। षट्कोणेषु पञ्चसुकामपञ्चकं ह्रीं क्लीम् ऐं ब्लूं स्त्रीम् इति विलिख्य षष्ठे कोणे साध्यस्य नमाभिमत कर्मसहितं लिखेत्। बहिः षोडशदलेषु स्मररूपान् षोडशस्वरूपान् सबिन्दुकान् लिखेत्। एतत् सर्वं सुषिराख्य हकार कुक्षौ निक्षिपेत्।

एतद्यन्त्रं पिण्डामृत्याख्यमिति। जनस्येतदित्यादि सुबोधः।

॥ इति सप्तमः पटलः॥

एवं यन्त्ररचनाप्रकार तथा कथनानन्तरं बाह्य पूजाविधानं वक्तुमुपक्रमते। अथेत्यादिना प्रथमस्नानादिना शुद्धिं विधाय देवग्रहे स्वग्रहे वा यागमण्डपं परिकल्प्य तज्जल गोमयाभ्या शोधयेदित्याह। शुद्धेत्यादिना भगवतः परमस्य पूर्वयुक्तं गगनं सा नलवामदृक् तथैवेति। भग एकारः। तत्परमैकारः आस्यो विसर्जनीयः। तत्पूर्वो बिन्दुः ऐम् इति। गगनं हकारः। अनलो रेफः। वामदृगीकारः। तथैवेति पूर्वोक्तो रूपो बिन्दुः। ह्रीम् इति

p. 184)

बीजद्वयात्मकेन मन्त्रेण कुशजाभ्यां पूजास्थलमभ्युक्षयेदित्याह। कुशजलेत्यादिना क्ष्मापूजास्थलम्। अकुलं सकुलादि तर्कबीजं शिवपूर्वेणयुतं सहेन्दुखण्डमिति। अकुलं हकारः। कुलं सकारः। तस्यादि तर्कबीजम्। तत् प्रतिलोम्येन षष्ठमक्षरं रेफम्। शिव उकारः। तत् पूर्वमीकारः इन्दुखण्डो बिन्दुः। ह्रीम् इति मन्त्रेण द्रव्यशुद्धिं कुर्याद् अमुनामनुनेति वाग्भवमैकारः। सदण्डं बिन्दुसहितम् ऐम् इति। वसुरग्निः। रेफ इति यावत्। वामदृगीकारः। इन्दुखण्डो बिन्दुः। तत् प्रातिलोम्येनानलगम्। तृतीयमक्षरं शकारः। अम्बरं हकारः। शकारहकारौ रेफ ईकारबिन्दुयुतावित्यर्थः। ऐं ह्रीं श्रीम् इति बीजत्रयात्मकेन मन्त्रेण भगादिदेवताः। पूजयेदित्यर्थः। ब्रह्माणीं हंसयानामित्यादि पत्रमूलमित्यन्तः सुबोधः। अब्धिवक्त्रा चतुमुखी। ब्रह्मादि देवतानां मन्त्रानाह। बीजान्यमीषामित्यादिना। अनन्तो दीर्घः। आकारः नभोन्तमिति नभो हकारः। तदन्तः क्षकारः। दीर्घः। आक्षा इति ब्रह्माणी मन्त्रः। नयनान्तमिन्द्रः। प्राङ्गुरिति। नयनान्तमिति।

ककारः इन्द्रो लकारः। प्रांशुर्दीर्घ इत्यर्थः। ईत्वा इति माहेश्वरी मन्त्रः। दृगान्तपरः कुलान्तमन्तरुद्रेण ततः समेतमिति। दृगिकारः तदन्त ऊकारः।

p. 185)

तदन्त उकारः। तत्पर ऊकारः। कुलं सकारः। तदन्तो हकारः। अनन्त रुद्र आकारः समेत आकार सहित इत्यर्थः। ऊ्हा इति कौमारी मन्त्रः तिथीशः सानन्तो भृगुरिति। तिथीशो ॠकारः। भृगुः सकारः। सानन्त आकारसहितः। साॠसा। इति वैष्णवीमन्त्रः। हरोनन्तसहितं बकान्तमिति। हरः ॡकारः। बकः शकारः। तदन्तः षः अनन्तसहित आकारसहितः। षा ॡ षा। इति वाराही मन्त्रः भृतीशस्तदनुबकोनन्त सहित इति। भृतीश ऐकारः बकः शकारः। अनन्तसहित आकारयुक्तः। शा ऐशा इति। इन्द्राणी मन्त्रः। कपूर्वन्तं सूक्ष्मान्तन्वितमथवन इति। कम्बिन्दुः। तत्पूर्वमौकारः। सूक्ष्म इकारः। इकार अन्तो यस्य स आकारः। वनं जलम्। वकारः। वकारमनुप्राप्तः। आकारः वा औवा इति। चामुण्डा मन्त्रः। अनुवदनं शचीनाथोपेतमिति। वदनं विसर्जनीयः। अनु पुनरपि वदनमाकारः। शचीनाथो लकारः। उपेतम्। आकारो लकारेण सम्भिन्नमित्यर्थः। अः ला इति महालक्ष्मी मन्त्रः। वदमविक्रान्तान्वितमिति। वदनपि पूर्वोक्ताष्टसु मन्त्रेषु य आकारः। कान्तान्वितमपि भवति। अम् अकारः। तदन्त आकारः। तदनु इकारः। तदितः तदनन्तप्राप्तं ऊकारः।

१८६)

अपि शब्देन प्रकारमनुप्राप्त ईकार इत्यर्थः। एवं कृते। आ क्षा ई ला ई-ऊ्हा ई ॠ सा ई - ॡ षा ई - ऐशा ई - औवा ई - अः ला ऊ - इति भवतीत्यभिप्रायः। अथा सिताङ्गमित्यादि

यौवनाड्या नित्यन्तः। सुबोधः। असिताङ्गादि भैरवाणां मन्त्रमाह। ह्यत् तृतीयम्। भगभूतसंयुतं कुलान्तमपि विलोचनान्दयुक्। निशाकरार्धाङ्कितमस्तं चेति। हरः लृकारः। तन्त्रीय मैकारः। भग ऐकारः। तद्भूताक्षरम्। पञ्चमाक्षरम्। बिन्दु तत्संयुतम्। बिन्दुयुक्तमित्यर्थः। ऐं कुलान्तं कुलः सकारः। तदन्तो भकारः। अपित्तमग्निं रेफ इति। यावत् विलोचनान्तमीकारः। निशाकरार्धो बिन्धुः। तदङ्कितमस्तकं सबिन्दुकमित्यर्थः। ऐं ह्रीम् इति मन्त्रेणासिताङ्ग्यष्टभैरवाः। पूज्याः इत्यर्थः। यो हेतुकमित्यादि भीमा इत्यन्तः सुबोधः। हेतुकादीनां मन्त्रानाह। भौतीशनेति भौतीश ऐकारः। निशाकरार्धो बिन्दुः। तत्सहितेन। ऐम् इति मन्त्रेण हेतुकादि भैरवाः पूज्याः। प्रियङ्ग्विवत्यादि साधक इत्यन्तः सुबोधः। छगलगतिं मेषवाहनम्। सेरिहाङ्गगतं महिषा * म्। वरशम्बरगतम्। कृष्णमृगारूढम्। ऊर्णायूरोमशोमेष विशेषः। इन्द्रादि लोकपालानां मन्त्रमाह।

p. 187)

मस्तकादि जलराशिगं सकमं मस्तकादल नगं वकान्तयुक्। सूक्ष्मपूर्वमुखसंयुतमिति। मस्तकम्। बिन्दुः तदादि जलराशिगम्। तत् प्रातिलोम्येन चतुर्थमक्षरम्। ऐकारः। सकं सबिन्दुकम्। ऐं मस्तका दनलगम्। मस्तकं बिन्दुः। तस्मादलगम्। तृतीयमक्षरं ककारः। बकः शकारः। तदन्तः षकारः। युक् ककारः षकारयुक्तः। सूक्ष्म इकारः। तत्पूर्वमाकारः। मुखं विसर्जनीयः। तत्पूर्वं बिन्दुः बिन्दुयुक्तम्। क्षाम् ऐम् इति मन्त्रेण इन्द्रादि लोकपालाः पूज्याः इत्यर्थः। वटुक इत्यादिरमत इत्यन्तः सुबोधः। अथ त्रिलोकार्चितं शासनाया इत्यादि गिरीश इव संप्राप्त इत्यन्तेनैतदुक्तं भवति॥ अथ ब्राह्मे मुहूर्त्त उत्थाय श्रीमत् स्वगुरु चरणारविन्दं शिरसि निधायाभिमत देवतानुस्मृतिं कृत्वा पूर्ववत् तीर्थं गत्वा कृत शौचाचमनदन्तधावनमुखप्रक्षालनो विधिवत् स्नानं विधायाचम्यमूलमन्त्रेण कलमुद्रयात्मानमष्टोत्तरशतमभिषिच्याचम्य तीरमासाद्य क्षौममये वाससी परिधाय

कृतविहित सन्ध्यावन्दनो भानुमण्डले भगवतीं ध्यात्वा तां स परिवारामृतमयैः सलिलैरष्टोत्तरशतं मूलविद्या सन्तर्प्य । महामातृकाविद्महे कालसङ्कर्षणी धीमहि । तन्नो देवि प्रचोदयात् । दिति । त्रैपुरगायत्र्याघ्यँ

p. 188)

दत्वा जयथा शक्ति जपित्वोत्थाय पशुजनविहिते रमणी ये देवगृहे - हे वा सुरक्षित दृढ परिवीत यागमण्डपं परिकल्प्य द्वारोवान्ते पादौ प्रक्षाल्याचम्यान्तः प्रविश्य । ऐं ह्रीम् इति मन्त्रेण कुशजलाभ्युक्षालनेन मण्डपं भावयित्वा हुम् इति मन्त्रेण यागपात्राणि प्रक्षाल्यादि शुद्धान्यपरिमितानि पूजोपकरणानि सन्निधाप्य प्राङ्मुखोदङ्मुखो वा स्वस्तिकासनेनोपविश्य निजस्वभागे गुरुदक्षिणभागे गणपतिं च संपूज्य स्वमूलाधारे कुण्डलिन्यात्म चिन्मय परशक्तिस्वरूपं जीवात्मानं बुध्वा हंसमन्त्रेण ब्रह्माध्वनो द्वादशान्तं नीत्वा सहस्रदल पङ्कजमध्यवर्तिनि सोमात्मक परशिखात्मनि संयोज्य रम् इति बीजेन मूलाधारात् कला रुद्रमूढाप्य तेन सकलब्रह्माण्डमयं शरीरं दग्ध्वा भस्मसात् कृत्य नाभिस्थेन यम् इति बीजेन प्रचण्डवायु मुत्थाप्य तेन तं भस्मराशिमखिलवनी यद्वादशान्त स्थितः सहस्रदलपङ्कज कर्णिकामध्य स्थितेन वम् इति बीजेनामृताम्भोधिमयं ध्यात्वा ततः परिगलद्बहल सुधाधारया पूर्यमाणन्तं निष्कलं तेजो रूपमात्मानं बुध्वा लम् इति बीजेनात्मानं सुस्थिरं सञ्चिन्त्य सकली कृत्य मन्त्रमयो भूत्वान्यास जातं विदधीत । यथाद्रां द्रावणबाणाय नमः । द्रीं क्षोभणबाणाय नमः ।

p. 189)

क्लीं वशीकरबाणाय नमः । ब्लूम् आकर्षणबाणाय नमः । सं सम्मोहन बाणाय नमः । इति पञ्चबाणानङ्गुष्ठादि कनिष्ठान्तं करद्वयाङ्गुलीषु विन्यस्यानन्तरम् । वदवदवाग्वादिनि ऐं हृदयाय

नमः। क्लिन्ने क्लेदिनि महाक्षोभं कुरुकुरु। क्लीं शिरसे स्वाहा। ओं मोक्षं कुरु कुरु - सौम शिखायै वौ - वदवदवाग्वादिनि ऐं कवचाय हुम्। किन्ने क्लेदिनि महाक्षोभं कुरु कुरु क्लीं नेत्र त्रयाय वौषट्। ओं मोक्षं कुरु कुरु सौः अस्त्राय फड् इत्यङ्गषट्कं पूर्वोक्तप्रकारेण स्थित्या स्थितिन्यास विधिना यथा विधिकारमुभयकराङ्गुलीषु करतलयोश्च विन्यस्यानन्तरम्। ऐं ह्रीं क्षम् इति शिरसि। क्षां मुखवृत्ते। इम् ई नयनयोः। उम् ऊं श्रोत्रयोः। सृं सॄं कपोलयोः। ष्णुं ष्णूं चिबुकयोः। शें शैं दन्तपङ्क्त्योः। वों वौम् ओष्ठयोः। वं नाभौ। यः शिरस्यानन्तरम्। अं श्रीकण्ठेश पूर्णोदर शक्तिभ्यान्नमः शिवाभ्या। इत्यादि मातृकां यथास्थानं विन्यस्यानन्तरं मूलविद्या बीजत्रयं विभज्य स्वस्व दीपनीपुरःसरं वक्ष्यमाण क्रमेणन्यस्येत्। मूर्ध्नि गुह्ये हृदये चैकोन्यासः वामादि नयनयुगे ललाटे चेकोन्यासः। कर्णयुगल आस्येचैकः। अंसद्वये पृष्ठे चैकः। जानुयुगे नाभौ चैकः ऊर्ध्वाधो

p. 190)

दक्षिणवक्रेष्वेकः। वामापरमध्यमवक्रेष्वपरः। एवं सप्तविधं विद्यां विन्यस्यानन्तरं पूर्वोक्तषडङ्गानि हृदयादिषु विन्यसेत्। ततो गुह्यनाभि हृदयाननमूर्ध्वसु पूर्वो बाणपञ्चकं विन्यस्य। अथ ललाटवदनहृदयनाभि गुह्येषु। ह्रीं कामराजाय नमः। क्लीं मन्मथाय नमः। ऐं कन्दर्पाय नमः। ब्लूं मकरकेतनाय नमः। स्त्रीं मनोभवाय नमः। इति पञ्चक्रमान्विन्यस्य। मूलविद्या गोलकात्वेन पादादि केशान्तं केशादि पादान्तं विन्यसेत्। एवन्न्यासजातं विधाय गन्धपुष्पादिभिरात्मानमभ्यर्च्यात्मानं परमेश्वरमयं ध्यात्वा यथा शक्ति जपेत्। ततो विमल प्रक्षालितं पीठिकं वेदिकायां विन्यस्य चन्दनकुंकुम कर्पूरकस्तूरिगोरोचनादि गन्धनिष्यन्दैरलक्तकर स लुलितै स्वयम्भुं कुसुमोपेतैर्विलिप्य ततोर्घ्यमण्डं च यथा विधाय अर्घ्यपात्र पादमग्निमण्डलं बुध्या वाग्भवेन प्रतिष्ठाप्य अग्निमण्डलाय दशकलात्मने अर्घ्यपात्रपादाय नमः। इति पादसंपूज्य। सौवर्ण रजत ताम्र

मयेष्वन्यतमं सवित्रमण्डलं बुध्या कामराजेन प्रतिष्ठाप्य सूर्यमण्डलाय द्वादशकलात्मने अर्घ्यपात्राय नमः। इति पात्रं संपूज्य यथोपदिष्टमर्घ्यजलं सोममण्डलं बुध्या तृतीयबीजेन प्रतिष्ठाप्य सोममण्डलाय षोडशकलात्मने अर्घ्यामृताय नमः।

p. 191)

इति अर्घ्यमृतं संपूज्य गन्धपुष्पाक्षत कुशयवतिलसर्षपपूर्वा यथा लाभमर्घ्यजले निधाय हृन्मन्त्रेणाभ्यर्च्य शिरसार्घ्य जलगतदोषं समुद्धृत्य शिखया विसृज्य कवचेनावकुण्ठ्य नेत्रेण सुरभिमुद्रयामृती कृत्यास्त्रेण संरक्ष्य मूलमन्त्रेणभ्यर्च्य तत्रामृतेश्वरीं ध्यात्वार्घ्य जलं स्पृशन् अर्घ्यममृती करोमीत्यन्तया मूलविद्यया सप्तवारं जपित्वा ततोर्घ्येण ह्रीमिति मन्त्रेण पूजोपकरणानि पीठमात्मानं च संप्रोक्ष्य ततः पीठोपरि त्रिकोण पञ्चदलाष्टदल चतुरश्रात्मकं पद्मं विलिख्य तन्मध्ये मूलमन्त्रेणाधारशक्तिं संपूज्य तदुपरि। अनन्ताय नमः। कूर्माय नमः। पृथिव्यै नमः। इति संपूज्य। पीठस्याग्नेयादिषु विदिक्षु पीठपादेषु धर्मादि चतुष्टयं पूर्वादि दिक्षु पीठगात्रेषु। अधर्मादि चतुष्टयं च नमोन्ते स्वनामभिः संपूज्य ततः पीठोपरि। संसत्वाय नमः। रं रजसे नमः। तं तमसे नमः। कन्दाय नमः। नालाय नमः। पद्माय नमः। कुलपद्माय नमः। योन्यासनाय नमः। वं वह्निमण्डलाय नमः। अम् अर्कमण्डलाय नमः सं सोममण्डलाय नमः। इत्युपरिर्यपरि विन्यस्य। तत्र हसौः। सदाशिवमहाप्रेतपद्मासनाय नमः। इत्यभ्यर्च्य। तत्र यथोपदिष्टवर्णाभरणाम्बरां भजमानपरिजातलितिका

p. 192)

मण्डल संवित्स्वरूपिणीं दवीमावाहनमुद्रया हृदयकमल कर्णिकागं वराद्दक्षिण न नासापुटेन कराञ्जलौ विरेच्यावाह्य संस्थापनमुद्रया संस्थाप्य सन्निधिकारिण्या सन्निधाप्य।

सन्निरोधिन्या सन्निरुध्यावकुण्ठनमुद्रयावकुण्ठ्य । हंसमन्त्रेण मूर्तिं बध्वा योनिमुद्रां च प्रदर्श्य मूर्तौ स्वदेहवत् करन्यास वर्जन्यास जातं विधायाघ्र्यादि षोडशोपचारैः मूलमन्त्रेणाभ्यर्च्य नीराज्यप्रणम्य तदनुज्ञा पुरः सरं परिवारानर्चयेत् । यथा । देव्याः परितो हृदयादि कवचान्त मनीशा सुरवायुषु पुरतो नेत्रं दिक्षु चास्त्रं पूर्वोक्त षडङ्गन्यासमन्त्रैः क्रमेणाभ्यर्च्य त्रिकोणमध्य वाम कोणाग्रेद्दत कनकमय सन्निभा अतिरमणीयवेषां पाशनतिकरां रतिं वाग्भवेनाभ्यर्च्य । दक्षिणकोणाग्रे शशाङ्कनिभामतिसुन्दरगात्रीं सुमुखीं कुशनतिकरां प्रीतिं तृतीयबीजेनाभ्यर्च्य । अग्रकोणाग्रे बन्धूक कुसुमसंकाशमिक्षुचापपुष्पशरधं मणिमया कल्पालङ्कृतं कामं कामबीजेनाभ्यर्च्य ततः पूर्वादि पञ्चदलेषु द्रां द्राविण्यै नमः । ह्रीं क्षोहिण्यै नमः । क्लीं वशीकरिण्यै नमः । ब्लूम् आकर्षण्यै नमः । सः सम्मोहिन्यै नमः । इति शरपञ्चक देवताः । कर्पूर कनकसन्ध्यारागेन्द्रनीलमाञ्जिष्ठनिभाः सव्यकरकलित बाणाः । शेषकरकृतनमस्काराः सकलभूषाभूषिताङ्गाः

p. 193)

समादाः क्रमेणाभ्यर्च्य ऐं ह्रीं भगायै नमः । ३ ।
भगजिह्वायै नमः । ३ । भगपिण्यै नमः । ३ ।
भगाक्ष्यै नमः । ३ । भगाह्लादिन्यै नमः । इति भगादि देवताः । क्रमेणाभ्यर्च्य ।
ब्रह्माद्यायथोपदिष्ट वर्णाम्बरायुधा भरणधरा द्वन्द्वशः समर्चयेत् । यथा । आक्षायी ब्रह्माण्यै नमः । ऐं ह्रीम् । ऐं क्षम् असिताङ्ग भैरवाय नमः । ई ला ई माहेश्वर्यै नमः । ऐं ह्रीम् इं लं रुरु भैरवाय नमः । ऊ हा ई कौमार्यै नमः । ऐं ह्रीं उं हं चण्डभैरवाय नमः । ॠ सा ई वैष्णव्ये नमः । ऐं ह्रीं ॠं सं क्रोधीशभैरवाय नमः । ॡ षा ई वाराह्यै नमः । उ ॡं षं उन्मत्तभैरवाय नमः । ऐ शा ई इन्द्राण्ये नमः । ऐं ह्रीं एं शं कपाल भैरवाय नमः । औ वा

ई चामुण्डयै नमः। ऐं ह्रीं ओं वं भीषण भैरवाय नमः। अः ला ई महालक्ष्म्यै नमः। ऐं ह्रीम् अं लं संहारभैरवाय नमः। ऐं हेतुकाय नमः। ऐं त्रिपुरान्तकाय नमः। ऐम् अग्निवेतालाय नमः। ऐम् अग्निजिह्वाय नमः। ऐं कालाय नमः। ऐं करालाय नमः। ऐम् एकपादाय नमः। ऐं भीमाय नमः। इत्यभ्यर्च्य। पीठस्योत्तरभागे वायव्यादीशानां गुरु पङ्क्तिमर्चयेत्। हेतुकादीशावरणयोर्मध्ये समन्त्रका गुरुपादुका पङ्क्तिः पूजनीया। ओं मों गुरुपादुकेभ्यो नमः।

p. 194)

ओं मिं पूज्य गुरुपादुकेभ्यो नमः। ओं मिं महागुरु पादुकेभ्यो नमः। ततस्वगुरुपङ्क्तिमर्चयेत्। इति गुप्तमुदाहृतम्। ततोष्टदलानां बहिर्पूर्वाद्यष्टदिक्षु। ऐं क्षाम् इन्द्राय वज्रहस्ताय सुराधिपतये स वाहन सपरिवाराय नमः। ऐं क्षाम् अग्नये तेजोधिपतशक्तिहस्ताय सवाहन स परिवाराय नमः। २। यमाय प्रेताधिपतये दण्डहस्ताय सवाहन सपरिवाराय नमः। २। नृ-ऋते रक्षोधिपतये खड्गहस्ताय सवाहन सपरिवाराय नमः। २। वरुणाय जलाधिपतये पाशहस्ताय सवाहन सपरिवाराय नमः। २। वायवे प्राणाधिपतये अङ्कुशहस्ताय सवाहन सपरिवाराय नमः। २। कुबेराय यक्षाधिपतये गदा हस्ताय सवाहन सपरिवाराय नमः। २। ईशानाय विद्याधिपतये शूलहस्ताय सवाहन परिवाराय नमः। इति संपूज्य। पुनः अग्नि नृ-ऋति वायव्येश दिक्षु। वां वीं वूं वं वटुकाय नमः। गां गीं ग्रं गं गणपतये नमः। दां दीं दूं दुं दुर्गायै नमः। क्षां क्षीं क्षूं क्षं क्षेत्रपालाय नमः। इति संपूज्य। बर्हिरैन्द्रयाम्य वारुण सोम्य दिक्षु अष्टवसुभ्यो नमः। एकादशरुद्रेभ्यो नमः। द्वादशादित्येभ्यो नमः।

p. 195)

सर्वेभ्यो भूतेभ्यो नमः। इति क्रमेणाभ्यर्च्य। ततः परमानन्दामृतसन्दोह निष्यन्दमान देहामखण्डसंवित् स्वरूपिणीं भजमानपारिजातलतिकां परमेश्वरीं गन्ध पुष्पादिभिरभ्यर्च्य। स परिवारां यथोपदेशं सन्तर्प्य नीराज्यस्तुत्वा नमस्कृत्यमात्मानं मत्वा सकलपरिवार देतागणं परदेवतामूर्तौ लीनं परिभाव्यतां च सकल भुवनोद्भूति परिभूतिं मूलभूतां निष्कल तेजोरूपां सम्भाव्य मुद्रयोपसंहारिण्यामण्डलस्थ कुसुमेनादायाघ्राय हृदयारविन्द स्थानं नीत्वा तन्मयमात्मानं परिभाव्य गन्धादिभिरभ्यर्च्य तदनुगृहीतप्रसादः षडङ्गं विन्यस्य स्वयममृतानन्दमयो भूत्वा जीवन्मुक्तो यथा सुखं विहरेदिति शिवम्।

॥ इत्यष्टमः पटलः॥

एवमिहलोक परलोक सुखसाधनभूत परदेवता समाराधन कथनान्तरं होमविधानं वक्तुमुपक्रमते। अथाग्निकार्य मित्यादिना एककुण्डविधाने कुण्डलक्षणं नियमं चाह। पूजाग्रहस्येत्यादिना। अयमर्थः। वक्ष्यमाण दीक्षामण्डप मध्यस्थ वेदिकायाः पूर्वस्यां दिशि वा ईशानकोणे वा धनद भागे वा बुद्धिकोणं चतुरश्रात्मकमेकमेव कुण्डं कुर्यादिति। अथ दीक्षामण्डपलक्षणमाह। नवहस्तमात्रमित्यादिना।

p. 196)

अयमर्थः। ऐन्द्रवारुणयाम्यसौम्यं च नवहस्तपरिमितम्। परिवीतदृढावरणं चतुर्द्वारतोरणोप शोभितम्। धौताम्बरवितानदर्भमाला परिवृतमुज्वलितमण्डपं कुर्यादिति। उतशैलदोर्मितम्। शैलाः सप्तसंख्याताः सप्तहस्तपरिमिता वा। हृषीक करसम्मितम्। हृषीकाणीन्द्रियाणि तानि च पञ्च पञ्च हस्तपरितं वेत्यर्थः। पूजा वेदिकानिर्माण प्रमाणमाह। ततस्तस्य मध्य इत्यादिना तन्मण्डपमध्ये त्रिभागैकभागं वेदिकां कुर्यादिति। यथा मण्डपं प्राक्प्रत्यगग्रं सूत्र

चतुष्टयेनास्पाप्य दक्षिणोत्तराग्रं च तथैवास्पालयेत्। एवं कृते तत्तन्मण्डपं नवपदात्मं जायते। एषु मध्यपदं वेदिकामरत्निमात्रोन्नतान्त द्विगुणमाया विस्तारामादर्शतलवत्क्रममेणोन्नतां मुख प्रतिमा बिम्बा लोकनार्हामुज्वलितरामति रमणीयां कुर्यात्। अवशिष्टेषु पूर्वाद्यष्टदिक्पदेषु क्रमेण वेदाश्रमित्यादिना वक्ष्यमाण कुण्डानि कुर्यादित्यर्थः। वेदाश्रं चतुरश्रम्। योनिमश्वर्थ पत्राकारः। अर्धोन्धुपनिभम् अर्धचन्द्राकारम्। अनलाश्रम्। त्रिकोणम्। गजाश्रम्। अष्टाश्रम्। हरहय हरिदारभ्य प्राचीदिशमारभ्येत्यर्थः। अन्येत्वेवमाहुरिन्द्रेशान् द्दशोर्मध्ये वृत्तं वायव्ये पञ्चकोणम् ईशकोणे सप्तकोणम्। ञ्च कुर्यादिति।

p. 197)

कुण्डप्रस्तारप्रकारमाह। प्राक्सूत्रमित्यादि प्रथमं प्राक् प्रत्यगग्रं सूत्रमास्पाल्य तन्मध्ये मत्स्याङ्कितं कृत्वा तन्मानेन दिशोर्याम्योत्तरयोर्मत्स्य द्वयं विन्यसेत्। मत्स्योत्तरयोर्दक्षिणोत्तरं सूत्रमास्पालयेत्। तत् सूत्रयुगाग्राणि यथोक्तभ्यायेन वर्धयेत्। सूत्राण्यवष्टभ्य चतुर्षुकोणेषु मत्स्यं चतुष्कं विन्यसेत्। तन्मत्स्यादरेषु चतुर्षु दिक्षु सूत्र चतुष्कमास्फालयेत्। एवं कृते चतुष्पदोपेतं सम चतुरश्रमण्डलं जायते। एतच्चतुरश्रं कुण्डं पूर्वदिग्गतं भवति। एतदेव चतुरश्रं प्रतीत्यान्यानि कुण्डान्युद्धरेदित्याह। अत्र जनयेदन्या नीत्यादिना क्षेत्रे क्षिप्त्वेति प्रकृतचतुरश्रे आग्नेयमारुते नै-ऋतेशं च सूत्रद्यमास्फाल्य पुनस्तु चतुरश्रं पञ्चविधा विभज्य तेष्वेकोनेन मध्यसूत्रपाश्चात्य सूत्रस्य प्रागग्रं पूर्वदिग्गतदक्षिणोत्तरात् सूत्राद्बहिर्वर्धयेत्। ततः पश्चिमपदगतकोणसूत्रं चतुर्धा विभज्य तत्कोणाग्र प्रान्तमेकमेकमंशं परित्यज्यावशिष्टांश त्रयमानेन कोणमात्रमिन्दुशशिकलवद्भ्रामयेत्। उरकोणमपि तथैव कुर्यात्। ततो मद्धमकोणोत्तरसूत्राग्रद्वयमष्टभ्य मध्यप्राची सूत्राग्रपर्यन्तं कोणसूत्रवत् सूत्रद्वयमास्फालयेत्।

सू * कलान्यन्यानि परिमार्जयेत्।

p. 198)

एतदश्वत्थ पत्राकारं योनिकुण्डमग्निदिग्गतं परित्यज्य भागद्वयमिति यथोक्तमानेन चतुरश्रं कृत्वा तस्य दक्षिणोत्तर प्राची सूत्रयोर्मध्ये समान्तरालं प्राक् प्रत्यग्रं नवसूत्राण्यास्फालयेत्। एवं कृते प्राक्प्रत्यग्राण्येकादशसूत्राण्यास्फालितानि भवन्ति। चतुरश्रं च दशधा विभक्तं स्यात्तेषु दक्षिणोत्तरांशं परित्यज्य वशिष्ट नवसूत्रांशं दक्षिणोत्तरांष्टांश क्षेत्रमानेन उत्तर प्राचीसूत्रयोर्मध्यावष्टभ्य तत्प्राचीसूत्रप्रागग्र पश्चिमा * * * वर्जयेत्। पुनरपि तन्मानेनैव तत्सूत्रमध्यात्तत् प्रागग्रमारभ्य तत्सूत्रपश्चिमाग्रपर्यन्तं खण्डेन्दुवद्भ्रामयेत्। सूत्रखण्डान्यन्यानि परिमार्जयेत्। एतदर्धचन्द्राह्वयं कुण्डं दक्षिणदिग्गतं भवति। वासरेशार्धभागिति। प्रकृतं चतुरश्रक्षेत्रं षोडशाविभज्य तदंशद्वयस्यैकैकांशेन मध्यप्राचीसूत्राग्रं पूर्वदिग्गतदक्षिणोत्तरसूत्राद्बहिर्धयेत्। ततो मध्यादारभ्य तन्मानेन परितो वृत्तं भ्रामयेत्। सूत्रखण्डान्यन्यानि मार्जयेत्। एतद्वृत्तकुण्डं पश्चिमदिग् गतम्। भूपांश इत्यादि। प्रकृतं चतुरश्रमष्टधा विभज्य तदंशद्वयस्यैकांशेन मध्य प्राचीसूत्रस्य पागग्रं पश्चिमाग्रं च वर्धयेत्। ततो मध्यमादारभ्य तन्मानेन पार्श्वयोर्मत्स्य चतुष्कं जनयेत्। तत्र मत्स्योदरेषु परिमित षट्सूत्रपातेन षट्कोणात्मकं कुण्डं भवेत्।

p. 199)

तद्वायव्यदिग्गतम्। दशांशांशेत्रेति। प्रकृतं चतुरश्रक्षेत्रं दशधा विभज्यते। तेष्वेकेनां केन पूर्वोक्त वृत्तकुण्डाद्बहिर्वृत्त भ्रामयेत्। पुनरपि तेनैवमानेन तद्बहिर्वृत्तं भ्रामयेत्। कुण्डात्मकमध्यवृत्तेन कर्णिका द्वितीयवृत्तेन केसराणि तृतीयेन चतुर्दलाद्यष्टदलानि वा कुर्यादित्यर्थः। इदं पद्मकुण्डम्। कौबेर दिग्गतं भवति। क्षेत्रं क्षिपेत्वति। प्रकृतं चतुरक्षेत्रं

चतुर्विंशतिधा विभज्यष्वेकेनांशेन मध्यसूत्रप्रागग्रं पूर्वदिग्गत दक्षिणोत्तरसूत्राद्बहिर्वर्धयित्वा पुनस्तेनैवमानेन बहिरपि प्राकारचतुरश्रं कुर्यात्। पुनरपि प्रकृत चतुरश्रकार्धमानेन बाह्य चतुरश्रकोणाग्रमवष्टभ्य तद्भुजद्वयमभितो लाञ्छयेत्। एवमन्यान्यपि कोणानि लाञ्छयेत्। पुनश्चतुर्षु कोणेषु लाञ्छनद्वयानुबन्धि तिर्यसूत्रचतुष्टयमास्फालयेत्। दिक्ष्वपि चिह्नाचिह्नं सूत्राणि यथास्थितं वलयेत्। कोणानि सूत्रशकलानि च परिमार्जयेत्। एतदष्टाश्रं कुण्डं भवति। तदीश्वरदिग्गतम्। हयांशेत्रेति प्रकृतं चतुर * क्षेत्रं सप्तधा विभज्य तेष्वेकेनांशेन मध्यप्राची सूत्राग्रं पूर्वदिग्गतदिक्षिणोत्तर सूत्राद्बहिर्वर्धयित्वा पुनस्तेनैवमानेन परिवृतो वृत्तं भावयेत्। पुनरपि चतुरश्रं चतुर्धाविभज्य तेष्वप्येकमंशं

p. 200)

परित्यज्यावशिष्टं त्रयमानेन्तवृत्त लेखनम्। पञ्चधा तृतीयं प्रमीय तत्र पञ्च चिह्नानि कृत्वा चिह्नात् चिह्नं दीर्घाकाराणि पञ्चसूत्राण्यास्फालयेत्। सूत्रशकलान्यन्यानि परिमार्जयेत्। एतत् पञ्चकोणात्मककुण्डं वायुकोणगतम्। क्षेत्रव्यासे इति। प्र तं चतुरश्रक्षेत्रं दशधा विभज्य तेष्वेकेनांशेन मध्य प्राचीसूत्राग्रं पूर्वदिग्गतदक्षिणोत्तरसूत्राद्बहिर्वर्धयित्वा पुनस्तेनैव मानेन परितो वृत्तं भ्रामयेत्। पुनरपि चतुरश्रं चतुःषष्टिधा विभज्य तेष्वेकत्रिंशमंशं परित्यज्य अवशिष्टेश त्रयस्त्रिंशदंशेन वृत्तरेखां सप्तधा प्रमीय तत्र सप्त चिह्नानि कृत्वा चिह्नात्चिह्नं ऋजूनसप्तसूत्राण्यास्फालयेत्। सप्तकोणात्मकं कुण्डमीशदिग्गतमित्यर्थः। यावतामानेन कुण्डस्यायं विस्तारौ तावतामानेनखातमपि कुर्यात्। यदाकारं कुण्डं मेखलाश्च तदाकाराः कुर्यादित्याह। यावन्मानेनेत्यादि एककुण्डानां मेखलायोन्योः सामान्यलक्षणमाह। तिस्रः कुण्ड इत्यादि होतर्दिशेह इत्यन्तेन। मुष्टिमात्रमिति मुष्ट्यङ्गुलपरितमित्यर्थः। यद्वा मुष्टिरिति। तालद्वय स वाचकः। मुष्टिपरिमिते कुण्डे मेखलानामुत्सेधविस्तारयोर्लक्षणमाह। द्व्यङ्गुलैकांगुलार्धाङ्गुलेति। अरत्निमात्राद्यष्टहस्तां

p. 201)

तेषु कुण्डेषु मेखलानामुत्सेध विस्तारयोर्लक्षणमाह। रत्निमात्रे त्रता इत्यादि वसुहस्त इत्यन्तेन अरत्निपरिमितयोरपि घ्यङ्गुलं त्र्यङ्गुलैकाङ्गुलेति हस्तपरिमिते युगार्वित्त नेत्राङ्गुल इति युगाङ्गुलं चतुरङ्गुलम्। अर्पित्ताङ्गुलमग्न्यङ्गुलम्। त्र्यङ्गुलमित्यर्थः। नेत्राङ्गुलघ्यङ्गुल इति। हस्तद्वयपरिमिते। रसाम्भो * वन्यङ्गुलमिति। रसाङ्गुलं षडङ्गुलम्। षट् परिमितेदङ्कशम्भ्यङ्गा इल इति। दशाङ्गुलम्। त्रभ्यङ्गुलम्। अष्टाङ्गुलम्। अङ्गाङ्गुलमित्यर्थः। वसुहस्ते अष्टहस्ते परिमिते। भास्करपङ्क्तिः। गजाङ्गुलमिति। भास्कराङ्गुलम्। द्वंदशाङ्गुलम्। पङ्क्त्यङ्गुलम्। दशाङ्गुलम्। गजाङ्गुलः अष्टाङ्गुल इत्यर्थः। कुण्डमध्ये नाभिनिर्माण प्रकारमाह। नामिहां * जवदिति। मुष्टिपरिमिते कुण्डनाभियोन्योरायाम विस्तारेत् सेति स लक्षणमाह। रसाम्भोधीत्यादिना षडङ्गुलीयतां चतुरङ्गुलविस्तारघ्यङ्गुलोन्तामश्वत्थपत्रवत् क्रमसङ्कुचिता ग्रामेकाङ्गुलोष्टा कुण्डान्तनिविष्टाग्रामिव योनिं चतुरङ्गुलायामविस्ताराद्यङ्गुलोनन्तामष्टदलाम्बुजरूपां नाभिं च कुर्यादिर्थः। रत्न्यात्रिष्वपि कुण्डेषु नाभि योन्योर्लक्षणमेतदेवेति। इति दिशतियोन्या लक्षणमित्यादि। तदेव खलु मात्रस्येत्यतेन करद्वयादि

p. 202)

कुण्डानां योनिं नाभिं चोत्तरोत्तरमेकैकाङ्गुलेन वृद्धिमानेन कुर्यात्। योन्यष्टमपि प्रत्येकं यवद्वयमानेन वर्धयेत्। नाभि वृत्ताकारकुण्डानुरूपां वा कुर्यात्। योनिकुण्डे योनिः। पद्मकुण्डे पद्मं च न विहितेत्याह। एकैकेनाङ्गुलेत्यादिना विदध्यार्चनाभिमित्यन्तेन। अन्येत्वेकाहस्य परिमित कुण्डेनस्य योनिनिर्माणं यथा वर्णयन्ति। कुण्डस्यैक इत्यादि बोधिष्ठानरूपमित्यन्तेन। भूताद्यङ्गुलं भूतादि प्रकृतिः प्रत्यङ्गुलमष्टाङ्गुलमितिवात्। व्यास

आयामः। तत्र शसंख्यं षडङ्गुलम्। एकाद्यङ्गुलम्। बोधिष्ठापत्रानुरूपा। अश्वत्थ पत्राकाराम्। एतदुक्तं भवति। हस्तमात्रस्य कुण्डस्य योनिमष्टाङ्गुलायताम्। षडङ्गुलविस्तृताद्यङ्गुलोनन्तमश्वत्थ दलवत्क्रमसङ्कुचिताग्रं कुर्यादिति। पूर्वोक्तनाभेदनकर्णिका विभागमा * नेत्र भूताङ्गुलमित्यादि कुण्डन्त इत्यन्तेन। तां चतुरङ्गुलायामविस्ताराभि स्त्रिधा विभज्य मध्यांशेन कर्णिकामवशिष्टांश द्येनाष्टदलानि कुर्यादित्यर्थः। मुष्ट्यादि कुण्डाना * * म् करणमेकाङ्गुलमनेनेत्याह। कुण्डसेकरस्येति करद्यादि कुण्डानाग्नेमि करणमुत्तरोत्तरं प्रत्येकमध्यर्धाङ्गुलमनावृद्धेत्याह। विलोचनकरादारभ्येतित्यादि यथोक्तक्रमादित्यन्तेन किमङ्गुलिरिति।

p. 203)

स्वकराङ्गुले दीर्घतिर्यं मानयोरन्यतमेन। यद्वामानान्तरे नोच्यते। अङ्गुलिर्लक्षणभेदेन पञ्चधा भवति। मानाङ्गुलिर्मानान्तराङ्गुलिर्मात्रान्तराङ्गुलिर्मुष्ट्यङ्गुलिर्देह लब्धाङ्गुलिरिति। तथा चोक्तं श्रीपञ्चरात्रे तन्त्रे। वातायनपथं प्राप्य ये भान्तिरविश्मयः। तेषु सूक्ष्मा विसर्पन्तिरेणवः परमाणवः। तेष्टौ केशान्वयास्तेष्टौ लिक्षोयूकस्तदष्टकम्। तदष्टकं यवास्तेष्टं वङ्गुलिः समुदाहृता। तदुक्तमाङ्गुलिः सप्तयवासैव तु मध्यमा। षड्यवासाधमाप्रोक्तामानाङ्गुलं भवेत्। विस्यस्तैस्तिर्यगष्टाभिर्यवैर्मानान्तराङ्गुलम्। शालिभिर्वारि जान्यस्तै स्त्रिभिर्मानान्तरं भवेत्। आचार्यदक्षिणकरे मध्यमाङ्गुलिमध्यमे। पर्वणोनन्तरदीर्घमात्रान्तरमुदाहृतम्। विनाङ्गुष्ठेन शेषाभिर्मुषिरङ्गुलिभिः कृता। चतुर्धा विभजेदेकोमानोमुष्ट्यङ्गुलि स्मृता। आचार्यहस्त कनिष्ठिकाद्यैश्चतुर्भिरेवाङ्गुलीभिर्महर्षेर्मध्यमाङ्गुलेर्मध्यमपर्वभागे तिर्यक् विसर्पद्भिरिहैवमेयम्। यः कश्चित् कौतुकायामं विभज्य दशधा पुनः। एवं द्वादशया भागं कृत्वा तेष्वेकमङ्गुलम्। देहलब्धाङ्गुलं नामेति महामानाङ्गुलिरिति। परमाणुक्रमसिद्धमानाङ्गुलि वाचकः। प्रतिमोत्सेधनिर्माणे महामानाङ्गुलिमानो

p. 204)

प्रासादगोपुरादि निर्माणे मानाङ्गुलमानान्तराङ्गुले नैव नान्येन केनचित्। योगोपकरणानि स्त्रावादीनि मन्त्राङ्गुलेनैव कुण्डनिर्माणेमुष्ट्यङ्गुलेनैव प्रतिमां गोपाङ्गानिन केनचित्। योगोपकरणानि स्त्रावात्। तथा चोक्तं श्री पञ्चरात्रतन्त्रे। उच्छ्रायः। प्रतिमानास्यान्महामानाङ्गुलाश्रयः। प्रसादादींश्च तेनैव कुर्यान् मानान्तरेण वा। वेदिकापीठशिबिकारथादीना विधा पुनः। मानान्तराङ्गुलेनैव भवेनान्येन केनचित्। योयोपकरणानां च कुर्यान्मात्राङ्गुलेन वै। होमाङ्गानि स्त्रवादीनि कुण्डमुष्ट्यङ्गुलमाश्रयः। देहलब्धाङ्गुलेनैव प्रतिमाङ्गानि कल्पयेदिति। द्वादशाङ्गुलपरिमितस्तलः। तलद्वयं मुष्टिः। पञ्चविंशाङ्गुलोपत्ति। षड्विशाङ्गुलवर्तिः। सप्तविंशाङ्गुलो हस्तः। तेषामेवकुण्डादि शब्दानां पर्यायशब्देन नामादीनि पठ्यन्ते। निष्कुः प्रजापत्यं धनुर्मुष्टिर्धनुग्रहश्चेति। तथा चोक्तं श्री पञ्चरात्रतन्त्रे। चतुर्विंशाङ्गुलनिष्कुः पञ्चविंशः प्रजापतेः। षड्विंशतिर्धनुर्मुष्टिः सप्तविंशद्धनुग्रह इति। दीक्षानां नित्यनैमित्तिकयोः शान्तिकपौष्टिकयोरुत्सवादिषु च किष्कुविमानोत्सवे प्राजापत्यं वास्तुनिर्माणेन तु मुष्टिः। ग्रामादिस्थाने धनुग्रहः। अथवा सर्वेष्वपि कार्येषु किष्कुरेवाभिमत इति।

p. 205)

तथा श्री पञ्चरात्रतन्त्रे। या ते च शनये किष्कुं प्राजापत्यं विमानके। वास्तूनां तु धनुर्मुष्टिर्ग्रामादीनां धनुर्ग्रहः। कर्मणामपि सर्वेषां किष्कुरेवाथ वामत इति। कथमत्यन्तविलक्षयोः संवित् पञ्चरात्र तन्त्रयोः संवादकृतिरुच्यते। तयोः प्रतिपाद्य देवतायाः परस्परा भेदा सम्भवतात्तन्त्रभेदोऽपि नास्तीत्यव गच्छामः। भेदव्यवहारस्तु स्वसंहिता भेदवत् संज्ञिता मात्र भेदादुपपद्यत एव। पञ्चरात्रतन्त्रे पुरुषप्राधान्यं संवित् तन्त्रे

तत्प्राधान्यमित्येतावता भेदेन तन्त्रभेदोनाभ्युपगन्तुं युक्तुः। तथा चोक्तं श्रीपञ्चरात्रोपनिषदि। ओं भगवान् वासुदेवः। परा प्रकृतिञ्ज्यायसी विभूतित भूतय एव सस्वयं भवतीति। तथा च श्री पौष्कर संहितायाम्। या परा प्रकृतिर्मात्री वासुदेवाख्य लक्षणा। षाड्गुण्यविग्रहा सर्वशक्ति तत्वगुणान्विता। कोशभूतत्वमापन्ना स्वयमानन्दलक्षणेति। तथा च श्री सात्वत संहितायाम्। नादावसान गगने देवोनन्तः सनातनः। शान्तुः संवित् स्वरूपस्तु भक्तानुग्रहकाम्यया। शक्तिः साचात्मकामी या चेश्वरीत्यभिधीयत इति। तथा च वैरिं च नृसिंह व्यूह प्रकरणे। शक्तिर्या वैष्णवी माया वासुदेवात्मिकाव्यया। ये वै पराङ्मुखास्तस्यां संसारे संसन्तित इति।

p. 206)

तथा चेश्वरसंहितायां परां प्रकृतिं विद्धिवासुदेवाम्भिधांसुत। कोशभूतां तनुं तस्य शक्तिव्यूहस्य निष्कलामिति। तथा च जायाख्य संहितायाम्। तनिर्मुक्तदेहस्य केवलस्य चिदात्मनः। उदेति महदानन्दः सा शक्तिर्वैष्णवीपरा। अलुप्तकर्म कर्तारं जीवं कृत्वा तदात्मसात्। यन्त्रोदिता च तत्रैव पुनरेवाव तिष्ठते। तच्च सङ्कल्पनिर्मुक्तमवाच्यं विधिनारदेति। तथा च श्वेताश्वतरोपनिषदि। ते योगानुगता पश्यं देवताशक्तिं स्वगुणैर्निगृढामिति। यो योनिमधितिष्ठति। एत इति च। तथा ब्रह्माण्ये पुराणे। शक्तिः शक्तिमतो भेदाद्वासुदेव इतीरितः। शक्तिस्थिता शक्तिमानपि शाक्तिष्वपि किञ्च ब्रह्मादि पिपीलिकां तेषु मूलाधारमन्दिरे कुण्डलिनी शेष पर्यङ्के कामाख्य चिन्मय वैश्वानराग्न्यात्मा भगवान् वासुदेवः शेते। तथा च श्रीतिः। तस्यान्ते सुचिरं सूक्ष्ममित्यादि विश्वतो मुख इत्यन्तम्। तथा च श्री भगवद्गीतायाम्। अहं वैश्वानरो भूत्वा प्राणिना देहमाश्रितः। प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम्॥ इति। किञ्च। संविदुपासकानां फलत्वेन वैष्णवं परमं पदं दर्शयति। प्रपञ्चसारे। यां ज्ञात्वा सकलमपास्य कर्मबन्धेतद्विष्णोः

p. 207)

परमं पदं प्रयाति भूयः। तामेनां जगदिहजं तु जीवभूतां हृल्लेखां जपति च नित्यमर्चयीत। हृल्लेखां जपविधिमर्चनाविशेषादेतां स्तुतिमपि नित्यमादरेण। योभ्यस्येत् स्वखलु परां श्रियं च गत्वा शुद्धं तद्रज इति पदं परस्यधाम्नः। इति च। एवं श्रुतिस्मृतीतिहास पुराणागमानि अहमहमिकया प्रकृति पुरुषयोरैक्यमेव प्रतिपादयन्ति। तान्यत्र न लिख्यन्ते ग्रन्धविस्तारभयादित्यवगन्तव्यम्। शतार्द्धहोम इत्यारभ्यरन्धतायोनिरित्यन्तः सुबोधः।

॥ इति संप्रदायदीपिकायां नवमः पटलः॥

एवं कुण्डमण्डपविधानान्तरं स्थण्डिलविधानं होमविधानं च वक्तुमुपक्रमते। नित्यादिना। स परिस्तरां दहेन्मन्त्रीत्यन्तस्यायमर्थः। अथोक्त कर्म सिध्यर्थम्। पूर्वो कुण्डेष्वन्यतमे स्थण्डिले वा होममारभेत। यथा वेदिकायां पूर्वस्यां दिशि पञ्चविंशाङ्गुलायामतारमङ्गुष्ठपर्वोन्नतं वा सप्तविंशाङ्गुलायामतारं चतुरङ्गुलोन्नतं वा समचतुरश्रं स्थण्डिलं कृत्वा नखकेशलोष्टादीन् संशोध्य गोमयाम्बुना कुण्डमुपलिप्य स्थण्डिलं चेदमभ्युक्ष्य वायुबीजेन संशोष्याग्निबीजेन पावयित्वा तत्र हृन्मन्त्राख्य

p. 208)

वाग्भवेन नमोन्तेन बर्हिषाद्विगुणितेन दक्षिणादुत्तराग्रं पश्चिमादि पूर्वाग्रं रेखात्रयं विलिख्यतासु दक्षिणादुत्तरागेषु मध्यम पश्चिमपूर्व * * * तानां क्रमेण ब्रह्मयमसोमाः पश्चिमादि पूर्वाग्रेषु मध्यदक्षिणोत्तराणामीश श्रीशसुरेशाश्च देवता इति ध्यात्वा प्रोक्ष्य ततो दक्षिणभागे गन्धपुष्पाक्षतादीनि होमद्रव्याणि संस्थाप्य वामभागे दर्भान् संस्थाप्य तदुपरि

ययोक्तानि पात्राण्यधोमुखानि द्वन्द्वशो विन्यस्य पवित्रे कृत्वा प्रोक्षणी संस्कृत्य तत्

संस्पृश्यंमूलविद्यया त्रिवारमभिमन्त्रय तत् सकलतीर्थमयं ध्यात्वा तेन दर्भमय कूर्चेन

दक्षिणभाग स्थितद्रव्यजातं पात्राणि च पूर्वोक्त ब्रह्ममन्त्रेण संप्रोक्ष्य कुण्डस्थण्डिलयोरन्यतम

मध्ये कुशगन्ध पुष्पाक्षतमय योग विष्टरं सङ्कल्प्य गन्धादिभिरभ्यर्च्यात्र नीलोत्पलदल

श्यामलाङ्गीमशेष लोकजननीं वागीश्वरी मृतु स्नातां सञ्चिन्त्येतद्योनौ भास्करकान्तभवं वा

आरणेयं वा श्रोत्र्यागारतो वा हुतवहमानीय पवित्री कृते पात्रे वह्निबीजेन

निधायक्रव्यादांशत्वेन किञ्चिदङ्गारखण्डं परित्यज्यास्त्रेण संशोध्य कवचेनावकुण्ठ्यामृतबीजेन

धेनुमुद्रयामृती कृत्योत्थाप्य प्रादक्षिण्य क्रमेण स्थण्डिलं कुण्डं वा त्रिः परिभ्राम्य

स्वसम्मुखीकृत्य मूलमन्त्रेण निधाय प्रज्वाल्य

p. 209)

सुसंस्कृतेन घृतेन पूर्वोक्तहृन्मन्त्रेण गर्भाधान पुंसुवन सीमन्तोन्नयन जातकर्मणां प्रत्येकं

सप्तसप्ताहुतीर्हुत्वा गायत्र्युष्णिगनुष्टप्प बृहती पङ्क्ति तृष्टुप्प जगतीछन्दोमय

सप्तबाहुगार्हपत्याहवनीय दक्षिणाग्निमयं त्रिपादं यजमानपत्न्यात्मक द्विशीर्षमध्वर्युहोतृ

ब्रह्मोद्गात्रमय चतुरङ्गं शृङ्गम्। प्रातर्मध्याह्न सायाह्न सवनत्रयबद्ध शरीरं वेदलोकाधिक

पञ्चरात्र पाशुपत बौद्धार्हत समय पिङ्गषण्णयाम्। हव्यकव्यात्मकद्विनासम्। वदनत्रयेषु

ऋग्यजुः सामात्मकैर्मन्त्रैस्तोत्र शस्त्ररूपेण * धमानं ऋग्यजुः समाथर्वात्मक चतुश्रोत्रं

महान्तं दीप्यमान वपुषं साधकाभिमतकामवर्षकतया वृषभं तदाननयोर्दक्षिणास्येन हिरण्या

कनकारक्ता कृष्णा चेति च त * * मास्येन सुप्रभातिरक्ता बहुरूपिका चेति सप्तजिह्विका

दक्षिणगैश्चतुर्भुजैः शक्तिं वह्निं स्त्रुक् स्त्रुवौ वामकरैस्त्रिभिस्तोमरं तालवृन्तं घृतपूर्णं सौवर्णपात्रं

च दधानं प्रविलम्बितैकपादमितराभ्यां पादाभ्यां बद्धपद्मासनमरुण

कमलकर्णिकासमासीनमनेका कल्पमरुणवर्णं पशुपति पर्जन्यपावकरक्षो वरुणमरुतां

दिग्गलेषु क्रमेलभिरज्या कनका रक्ता कृष्णा सुप्रभातिरक्तोस्तपनीय वैडूर्य तरुण दिवाकरेन्दीवर पद्मराग सुवर्णवर्णादि शोर्याम्य सौम्ययोर्दलयोर्मध्ये

p. 210)

च यथोक्तवर्णा बहुरूपिका चेति सप्तजिह्वाभिरा वृत्तव्यावृतोत्तानवक्त्रं जातवेदसं ध्यात्वा अर्घ्यपाद्यादि धूपदीपान्तैरुपचारैरभ्यर्च्य ततः प्रागग्रैरुदगग्रैर्दर्भैरेकमेखले कुण्डे मेखलाधस्ताद्विमेखलेद्वयोर्मध्ये त्रिमेखले मध्यममेखलायां परिस्तीर्य यदि स्थण्डिले सिकतानां बाह्ये दक्षिणोत्तरपश्चिमभागेषु त्रीन् परिधीन् अग्नीशयोर्दिशोराघारबेन समिद्वयं च विन्यस्य परिषिच्य ततो वह्नेर्नामान्नप्राशन चौलोपनयन प्राजापत्याग्नेय वैष्वदेव सौम्यगोदान समावर्तन विवाहान्तानां संस्काराणां पूर्वोक्त हुन्मन्त्रेण प्रत्येकं सप्तसप्ता हुतीर्हुत्वा ततस्तन्मध्ये पूर्वोक्त पूजापीठं परिकल्प्यात्र यथोक्तरूपां सपरिवाराम्म्बिकां समावाह्याभ्यर्च्या शेषपरिवारं देवतानां प्रत्येकमेकाहुतिं हुत्वा मूलविद्यया दशाहुतीर्जुहुयादेवं स्वाहा प्रिये शक्तिमये सिद्धे तस्मिन्यथोक्तकार्याय यथोदितैर्द्रव्यैर्यथोक्त संख्यया हुत्वा गन्धादिभिरभ्यर्च्य स्तुत्वा नमस्कृत्य प्रसाद्यानन्तरं महाव्याहृतीर्जुहुयात्। यथा। भूरग्नये च महते च स्वाहा इत्यादि च तस्त्रः। आम् इतः पूर्णं प्राणबुद्धि देह धर्माधिकारतो जाग्रत् स्वप्न सुषुप्त्यवस्था सुमसना वाचा कर्मणा हस्ताभ्यां * * * मुदरेण शिश्नायत् स्मृतं यदुक्तं यत्कृतं सर्वं ब्रह्मार्पणं भवतु स्वाहेति

p. 211)

ब्रह्मार्पणमन्त्रेणाष्टाहुतीर्हुत्वा पूर्णाहुतिं हुत्वा परमेश्वरीं सपरिवारामुद्वास्य हृदयभवनं नीत्वा गन्धादिभिरात्मानमभ्यर्च्य कृतकृत्यमात्मानम्मत्वा यथा विभवं ब्राह्मणान् सन्तर्प्य स परिवारं हुतवहमुद्वासयेत्। नैमित्तिके होमे स परिधीन् परिस्तरां दहेत्। नित्यहोमेन दहेत्।

यत्र कामनाहोमविन्यस्तासु जुहुयादिति। विचकिलैन्नव मल्लिकाभिः शाड्वलपल्लवैर्दूर्वादलैराघारेण घृतेन सिद्धार्थैसितसर्षपैः हरिरिपू कुसुमैरक्तकरवीरकुसुमैः कासमर्दैपोरिः बु इति द्रव्य विडाः किं करातैः कुरण्डैः छगलां गजमांसलेशेन अजमांसलेशेन नग्नजितस्थि कार्पासबीजम्। नीलाम्भोजैर्नीलोत्पलैः सौगन्धिकैः कल्हारैः कङ्केलि कुसुमैरशोकपुष्पैस्पष्टमन्यत्।

॥ इति संप्रदायदीपिकायां दशमः पटलः॥

श्री तेजानन्दनाथसंविदाम्बा श्रीपादुकां पूजयामि।

तेजानन्दस्य शिष्येन कृष्णानन्दस्य सूरिणा। लिखितं संप्रदायस्य दीपिकाचाम्बिकाज्ञया॥

ऐं ह्रीं श्रीं पुरुषोत्तमानन्दाय नमः।

p. 212)

॥ शिवाय नमः॥

* * * * * * * * * * * * * * * * । 

* * * * * * * * * * * * * * * स्युः

कोणयोनिषु। ब्रह्माणीमसिताङ्गेन माहेशीरुरुणा सह। कौमारीं चण्डसंज्ञेन क्रोधेन सह वैष्णवीम्। उन्मत्तेन च वाराहीमिन्द्राणीं च कपालिना। भीषणेनापि चामुण्डीं संहारेणापि

चण्डिकाम्। अम् असिताङ्गभैरवाय। आं ब्रह्माण्यै नमः। इत्यादि दलेषुभिर्यजेत्।

देहाश्चतुर्थ्यन्ते स नामभिः। आं ब्रह्माण्यै नमः। * * * * *

भैरवाय इत्यादि पुनरिन्द्रादिकां दिक्षु बहिर्वज्राादिकास्ततः। एवं परिवारान् स गन्धाक्षत कुंकु

?मामृता बिन्दुभिरभ्यर्च्य देवी मूर्तौ चतुश्चत्वारिंशम्मूलम * * * * * * * कृत्वा धूपदीपां

दत्वा आरात्रिकं विधाय स घृतकदली नालिकेरो पदं शंसशर्करं च सुशृतम्। शाल्योदनं

निवेद्यं समर्प्याग्निकार्यं कृत्वा। ओं ह्रीं सकृद्भ्यः सर्वभूतेभ्यो हुं स्वाहेति बलिं

विकीर्यनत्वापानीयामृतं दत्वा निवेद्यं विसृज्य। ऐम् उच्छिष्टचाण्डालिमातङ्गि सर्ववशङ्करिणि

स्वाहेति तस्यै दत्वा गण्डकुषादि दत्वा प्रसन्नपूजां विधाय ब्रह्मार्पणमात्मार्पणं च कृत्वा

तीर्थं स्वीकृत्य स्तुत्वा नत्वा स्वयं तन्मयो भूत्वा लयाङ्गं

p. 213)

विधायात्मान्युद्वास्य प्राणप्रतिष्ठां कृत्वा स्वात्मनि देवी मूर्तौ चैकवारं पुष्पाञ्जलिं कृत्वा

शङ्खमभ्यर्च्य निधायां गरिष्यादि पूर्वकं यथाकालं यथारुचि च मन्त्रं जप्त्वा योगान् कृत्वा

देवतामयो भूयादिति शिवम्। परापरमयीमित्यत्र किं वा तत्परं रूपं देवा अपररूपं वा

किमित्याकाङ्क्षायां परं रूपं तावदाह। शब्दानां जननीति। हेवायादिनि वाचं वागिन्द्रियं

वादितुं शीलमस्या इति वाग्वादिनी तत्र सम्बोधनम्। तथा हेसरस्वति अत्र शब्दार्थात्मके

भुवनेत्वं शब्दानां जननीति सद्भिरुच्य सेस परापश्यन्तादि क्रमेण पञ्चाशद्वर्णात्मना

परिणतत्वात् सर्वेषां वेदादि लक्षणानां शब्दानां तन्मयत्वाच्च नैवं वयं ब्रूमः। किन्तु

केशववासव प्रभृतयः। केशवप्रभृतयो वास प्रभृतयश्च प्रधानार्था अपित्वत्तं

कल्पादावाविर्भवन्तिकं पुनरितरेर्याः। ध्रुवं निश्चितमेतत्। अर्थस्य शब्दविवर्तत्वाद्यदाहुः।

अनादिनिधनं ब्रह्मशब्दशतसङ्ग्रहविस्तराभ्यां यथा शक्ति विमृश्यते। इह द्विविधं वृत्तं

मातृवृत्तं वर्णवृत्तं चेति। तत्र चतसृभिश्च तसृभिर्मात्राभिः पञ्चगणा यत्र कल्प्यते। * *

इति श्रीनीरतन्त्रे श्री-ऊर्मिकौलार्णवे महाशास्त्रे लक्षपादोद्धृते परमरहस्ये श्रीभोगहस्तक्रमाम्नाये [-न्यते] श्रीकौलगिरीपीठविनिर्गते श्रीनाथपादावतारिते षड्वताधिकशते [षड्वता-] मण्डलदीक्षाधिकारो नाम द्वितीयपटलः। २।

२२अ) श्रीदेव्युवाच

श्रुतं सर्वं कुलाम्नायं सिद्धियोगिनीसेवितम्।

संप्रदायं महागुह्यं ऊर्मिकौलार्णवोथितम्॥ ३/१॥

त्वत्प्रसादाद् मया देव निःशेषं चावधारितम्।

इदानिं श्रोतुमिच्छामि यदि योग्योष्मि [योग्यास्मि?] शासने॥ ३/२॥

कथयस्व प्रसादेन निःअस्ंदिग्दं सविस्तरम् [निस्संदिग्व मविस्तरं]।

७४अ च) अनादिमुद्रा [अतः परं गुहामुद्रा तथैव च इति यावद् खप्रतिलिप्यां पाठो न विद्यते।] वल्ली च ओघाम्बुः [कः उघाम्वुः] क्षेत्रनायकः॥ १०-५८॥

कृतयुगं [गः -युगे] तथाधारदेवं [गः तथाधारंदेव] रक्षासमन्वितम् [गः रक्तस- घः लक्षसिद्धहितं?]।

श्रीमहानन्ददेवं च श्रीकुजासहितं यजेत् [घः प्रिये]॥ १०-५९॥

श्रीजालाख्यं मण्डलं च जालाम्बा [क, ङः -लाचा ग, घः जालाद्या] च जयन्तिका [गः क्रयन्तिका]।

चर्यादेवं [गः ययादे-] च मन्थानं [ग, छः -न घः मंदान] मठं [क, घ, च, छः मठ गः मथ] मुद्रा तथैव च॥ १०-६०॥

श्रीशिलाशेखराख्या [कः -ख्याः गः  च घः श्रीशैलाख्ये च राख्या] गुहामुद्रा तथैव च। [चः ?]

करञ्जं [खः कत्वंजं घ, चः -ज] कुलवृक्षं च देवदाली [गः देवदारु घः -री] च वल्लरी॥ १०-६१॥

द्वादशः पटलः

५२अ ङ्) श्रीपरादेव्युवाच [घः ?]

(७८ब्) आदिनाथ मया सर्वं भविष्यान्वयसूचनम्।

श्रुतं सम्यग्विधानेन भवद्भिर्यदुदाहृतम् [खः हृतः गः -दाहतं ङः ?]॥ १२-१॥

इदानीं श्रोतुमिच्छामि भुक्तिमुक्तिफलप्रदम्।

ध्यानाराधनसंबन्धं साधकानां हिताय वै॥ १२-२॥

यथा ध्यानं यथा ध्येयं विधिस्तत्रोपवर्ण्यतां [खः विनिस्तत्रोपवर्णतां गः -वर्णाताम् ङः -तत्रोपव * *? चः विनिस्-]।

यथा जानन्ति ते [ख्, घ्, चः तं] देव विधिवद्ध्यानकारकाः॥ १२-३॥

८६अ घ) श्री आदिनाथ उवाच

तथा तेऽहं [चः मे?हों] प्रवक्ष्यामि [क, ख, छः -क्षामि] श्रृणु ध्यानानि [कः ध्यानरि ख, घ, च, छः ध्याननि गः ध्यातरि] सिद्धिदे।

ध्यानं ध्येयविधानं [गः ध्येयंविधानञ्] च स्वल्पग्रन्थार्थविस्तरम् [ङः * * * * *? स्तरम्]॥ १२-४॥

यद् ध्येयमिति विज्ञेयं तदहं [घान्येः तमहं] त्वं [घः त्वत् चः त्व] तथा प्रिये।

ध्यानं चिन्ताधिकारत्वं [कः चिताधिकारस्त्वं खः चिन्ताधिकारस्त्वध्या गः चिन्ताधिकारस्त्वं घः -कारस्तु] श्रीकुजे गतचेतसः [ङः -स चः ?]॥ १२-५॥

परसूक्ष्मादिभेदेन स्थूलेत्येवमनुक्रमात् [खः -लेभ्येचम- गः स्थुलत्पवमनुक्रमात्]।

गुरूपदेशतो [चछान्येः गुरु-] ज्ञेया मुद्रा स्थानलयान्विता [ङान्येः -तं]॥ १२-६॥

मुद्राश्चत्वारि विज्ञेया ध्यानं प्रति कुलाम्बिके।

८०अ च्) अभिध्येयाश्च [क्, ङः याभिद्ध्येया च खः याभिद्यया च गः याभिर्द्ध्ये घः याभिद्यव्यया च चः याभिध्येया च] या [कः वयं गः यावयं] देवि ताश्च ते [चः तं] कथयाम्यहम् [खः कया-]॥ १२-७॥ [छः ?]

निरालम्बा [छः ?] खेचराख्या [गः खच- छः ?] योनिमुद्रा तृतीयका।

५८अ छ्) सर्वाङ्गसुन्दरी चान्या एतन्मुद्राचतुष्टयम् [ख्, चः -मुद्र-]॥ १२-८॥

यत् तदेवावयोर्देवि [गः रदेवादयोद्देवि घः -योदेवि ङः रदेवा-] स्वरूपमचलं [ख्, घः -मवलं ङः -चरं] ध्रुवम्।

निराधारं परं शान्तं व्यापकं सर्वतोमुखम्॥ १२-९॥

शून्यं शून्यासनासीनं [चः ] व्योमव्यापी निरञ्जनम्।

बहिरन्तर्गतं चैकं स्थानचक्रविवर्जितम् [गः स्तानंचक्र-]॥ १२-१०॥

(७९अ) निरालम्बं निराचारं रूपादिगुणवर्जितम् [क्, खः -ता ङ् गुनवर्जितम्]।

निरालम्बेन [गः निरालेषन] मार्गेण नित्यानन्दप्रदायकम् [गः निद्या-]॥ १२-११॥

कैवल्यं [गः कैवल्यै] कल्पनाहीनं यथा संप्राप्यते [गः -प्यत] प्रिये।

चक्रचारविनिर्मुक्ता [गः चक्रचारेविनिर्मुक्तां ङः -चालविनिर्मुक्ता]
लक्षरूपादिवर्जिता [क्, खः -तं गः -पाविवर्ज्जिता]॥ १२-१२॥

कैवल्या निर्गुणा शान्ता निरालम्बा प्रकीर्तिता।

निराश्रये [खः -स्त्रये] परे व्योम्नि सर्वगे [घः -ङ्गे] सा व्यवस्थिता॥ १२-१३॥

५२ब् ङ्) गुरुपदेशमार्गेण [ख्, चः -मार्गेन ङः -पदे * मार्गेण] ज्ञातव्या सा
कुलाम्बिके।

८६ब् घ्) निराश्रयं मनः कृत्वा अकिञ्चित्करपूरकम्॥ १२-१४॥

सर्वालम्बविनिर्मुक्तं [छः -विनिमुक्त गछान्येः -विनिमुक्तं] आत्मानं सततं
स्मरेत्।

नाहं नास्मीति [क्, गः नास्तीति ख्, च्, छः नाम्नीति] मे कायं [कः कोयं गः कार्यं] न

मनो [खः माना] बुद्धिरेव च॥ १२-१५॥

न [ङः ना] चान्तःकरणं चात्मा [गः नात्मा] न शक्तिर्न च स शिवः [चः ते शिवम् अन्येः तं शिवम्]।

लोलीभूतं स्मरेत् सर्वं निर्विकल्पेन [गः -कल्पन] चेतसा॥ १२-१६॥

सर्वावस्थापरित्यक्ता [क, ग, च, छः -स्थां खः सर्वोवस्थां गः -परित्यज्य] निरालम्बा प्रकीर्तिता।

खेचरी [ङः -रि] तु परा [क, ग, घ, छः पुरा] ख्याता [छः -तो] मुद्राचक्रे [चः -चक्रं] व्यवस्थिता॥ १२-१७॥

यत्र मुद्राष्टकं प्रोक्तं चतुःषष्टिक्रमान्तिके [ख, चः चतु- गः -ष्टिक्रेमान्तिके]।

योनिमुद्रा तृतीया तु शृणु योगेश्वरेश्वरि॥ १२-१८॥

भुक्तिमुक्तिप्रदा सम्यक् महापातकनाशनी [ख, चः -सनी घः -शिनी]।

८०ब् च) आधारोर्ध्वे [गः आधारोर्द्ध] जगन्मातः [सर्वैः -ते] स्वाधिष्ठानान्तरे [ख,

ङ, चः -स्थानान्तरे] स्थिता॥ १२-१९॥

त्र्यस्त्रं [घः त्र्यक्षं] चक्रं [गः चक्र] महादीप्तं स्फुरद्रश्मिसमाकुलम् [क, ख, चः -रस्मि- गः स्फुरद्रस्मिसमा-]।

तस्य मध्ये महाबिन्दुः कदम्बकुसुमाकृतिः [गः -कृति]॥ १२-२०॥

सा च योनिः [ख, चः योनि गः योरिः] समाख्याता सृष्टिमार्गप्रवाहिणी।

आकुञ्च्याधारचक्रं तु ऊर्ध्वतत्त्वे [गः ऊर्द्धतत्वा] क्षिपेन्मनः [गः क्षिपेत्मनः]॥ १२-२१॥

बाह्याचारविनिर्मुक्तं अन्तश्चारगतिस्थितम्।

तस्मिन् [गः तस्मिश्च] चक्रे समुत्थन्ती [ख, घः समुच्छन्ती ङः समुठेती चः ?] विद्रुमाकारसन्निभा [खः विक्रमाकाल]॥ १२-२२॥

ध्वनिरूपा [छान्येः -पां] महाशक्तिः [खः -शक्ति खङान्येः -शक्तिं] कुण्डल्याकारविग्रहा [ख, चः -काल- घङान्येः -विग्रहां]।

(७९ब) ५८ब् छ) भेदयन्ती [घः -तीं] शरीरस्थं [कः सरीरस्थं] समस्तं

चक्रसंचयम्॥ १२-२३॥

ब्रह्मरन्ध्रान्तमार्गेण [क्, चः -मार्गेन] गच्छन्ती व्योममण्डलम्।

भ्रमित्वा तु परे [कः वरा] व्योम्नि तस्मिन् [क्, ख्, छः तस्मि] कन्दे [खः क्षन्दे] वरानने॥ १२-२४॥

८७अ घ्) विशन्तीं [क्, ख्, छः विशन्ती गः वशन्ती ङः विसंति] चिन्तयेद् देवि
सर्वचक्रेश्वरेश्वरीम् [घः -रि घचान्येः -री]।

योनिमुद्रा [चः योनी-] समाख्याता एषा देवी [गः देवि] मया तव॥ १२-२५॥ [छः ?]

मुद्रितं तु यया सर्वं दृश्यं [क्, खः द्रेष्यं ग्, ङः द्रस्यं] चादृश्यमेव [कः
चाद्रेश्यमेव खः चाद्रेष्यमेव गः चाद्रश्यमेव चः -चादृश्यंमेव] च। [छः ?]

अनया बद्धमात्रया [छः -मात्राया छान्येः -मात्रायां] मन्त्रविद्यागणो
महान्॥ १२-२६॥

सद्यः सान्निध्यतां देवि भविष्यति न संशयः।

योनिमुद्रा समाख्याता श्रृणु सर्वाङ्गसुन्दरीम् [घः -रि अन्येः -री]॥ १२-२७॥

यस्याभ्यासवशाद् [ख, चः -वसाद्] देवि सिद्ध्यन्ते [क, ख, घ, चः सिद्ध्यते] बहवो गुणाः
।

आपादमस्तकान्ते तु शरीरेन्द्रियगोचरम्॥ १२-२८॥

व्यापयेत् [क, ग, छः व्यापरेत् खः व्यारेत् ङः व्यापरोन् चः ?] तत्र सा देवी [घः देवि चः दावी] मुद्रा [घः  मुद्रा] सर्वाङ्गसुन्दरी।

मनो हि यत्र तत्रात्मा यत्रात्मा त्वं [कचान्येः  हि] तत्रगा॥ १२-२९॥

यत्र त्वं श्रीकुलेशानि वयं तत्र व्यवस्थिताः [सर्वैः -स्थिता]।

अङ्गप्रत्यङ्गभूता [क, ख, ग, घः -भुता] हि [कः दि] सर्वेषामेव देहिनाम्॥ १२-३०॥

सौन्दर्यचेष्टया नाथे विकारजननी स्थिता।

तवाङ्गजनितं देवि एतत् मुद्राचतुष्टयम्॥ १२-३१॥

८१अ च) साक्षात् [गः -क्षान्] त्वद्रूपमेवेह नान्यथा वस्तु संस्थितम्।

५३अ ङ्) एकैका तु पृथग्भूता [गः पृथकन्यूना] मुद्रा श्रीकुलनायिके॥ १२-३२॥

सर्वार्थसाधनी [क्, खः -ना] ज्ञेया ध्याता सौख्यविवर्धनी [गः सौख्या- घः -
वर्द्धिनी]।

मुद्राचारस्थिता [गघान्येः -तां खः भाद्रा-] नाथे नाडयः [ग, घः नादये]
संव्यवस्थिताः [ङः -ताम् गङान्येः -ता]॥ १२-३३॥

नाडीचारगतो [ङः नादी-] वायुर्वायुचारगता कला [ङः कर]।

कलाचारगतो [गः -गता ङः करा-] ह्यात्मा [खः * अत्मा] शक्त्यन्ते [खः शक्षन्तं
खङान्येः -न्तं] याति निष्कलाम् [गः -ला ङः नीःकला गङान्येः निःकला]॥ १२-३४॥

८७ब् घ्) त्वं च देवि पराशक्तिर्लयं यासि [गः जाति घः याति] तनौ मम।

य एवं [खः यत्र वं] ध्यानरूपेण ध्यानमार्गं [ख, घः -मार्ग ग, ङः ध्याता-
] चरिष्यति [चान्येः करिष्यति]॥ १२-३५॥

गुरूपदेशमार्गेण स चेष्यति [गः चष्यति] ममान्तिकम्।

यत् तत् [घः तं] प्रिये समाख्यातं कुण्डल्याकारविग्रहम् [ख्, चः -काल-]॥ १२-३६॥

(८०अ) स्वरूपं तव कल्याणि [क्, ख्, चः -नि] योनिचक्रान्तरे स्थितम् [गः -ता]।

तं [गः त चः ते] स्मृत्वा चक्रभेदेन ब्रह्मरन्ध्रान्तगामिनम्॥ १२-३७॥

गतिरागतियोगेन [गः -गेण?] ममान्ते लयमागतम्।

अनौपम्यं [गः अनौपम्य छः अनो-] महाकान्तं [कः * हा- घान्येः -कान्ति]
प्रस्फुरत्किरणाकुलम् [गः -त्किरणोज्वलं घः प्रस्फुदरंतिममान्तिकं। रवाकुलं]॥ १२-३८॥

भास्वन्तं [गः भास्वतं] रोमकूपेषु [गः राम-] निष्क्रान्तं देहमध्यगम् [घः
हेममध्यगं]।

आत्मानमपि [गः -मपी] संस्मर्य [गङान्येः -र्यँ ङः संस्मंर्य] तत्र
तन्मयतां गतम्॥ १२-३९॥

५९अ छ्) अपृथग्भावयोगेन [ख्, चः अस्पृसग्भाग- घः अस्पृशग्भोगयोगेन]
तदर्पितमनोऽक्षधीः [खः -वीः गः मत- -क्षवीः घः तदर्पीतसनोक्षवी ङः म- -धी

च: तदर्पितम?नोजविः]। [छ: ?]

एवं ध्यानसमायोगात् [ग: ध्यात्वासमायोगात्] तव [ग: नव घ: ते च] तत्त्वे विलीयते॥ १२-४०॥ [छ: ?]

त्वं चापि मच्छरीरस्था [क्, ख्, च्, छ: -सरीरस्था घ्, ङ: मत्शरीरस्था] तच्च [ङान्ये: स च] तत्रैव नान्यथा।

आपादतलमूर्धान्तं [क: -न्ता ख: -मूध्नान्तां ग: -मूर्द्धान्ता छ:-मूर्ध्नांता] समस्तं [ग: -स्त] चक्रसंचयम्॥ १२-४१॥

भेदयित्वा [ख: भेदयन्ती त्वां घ: भेदयंत्यो च: भेदयं त्वा] व्रजन्ती [ग: व्रजंन्ती] त्वां शङ्खिनीद्वारमार्गगा [च: शखीनी-]।

गुरूद्दिष्टेन [घ: गुरुदिष्टेन] रूपेण सम्यगभ्यासकारिभिः॥ १२-४२॥

स्मर्तव्यासि महामाये [ग: -माय] निरालम्बफलेप्सुभिः [घ: -पालेप्सुभिः]।

सृष्टिमार्गे [ख्, ग्, छ: -मार्ग घ: * *?मार्ग] समुत्पन्ने [घ: -न्न] वस्तुरूपे [घ: - प] दिवानिशि॥ १२-४३॥

आलोक्य [खः आलोक्ष्य ङः आलोक्या] सूर्यदीपाभ्यां भवत्या हि तथा वयम्।

८१ब् च्) त्वचक्षुर्घ्राणकर्णाभ्यां [खः त्वच्छक्षर्- घः त्वचक्षु भवेत् सो हि

तथा त्रयं घ्, च्, छः त्वक्कक्षु-] जिह्वायां [गः -या] संस्थिता प्रिये॥ १२-४४॥

८८अ घ्) स्पर्शादिविषयानां [घः -वि * यानां] च त्वं ग्रहित्री [ख्, चः ग्रहीत्री]

भविष्यसि।

वाक्पाणिपादपायुश्च [खः वाह्याणि- घः वाक्पाणि * * पायुश्च]

उपस्थेन्द्रियगोचरैः॥ १२-४५॥

भविष्यन्ति [गः भविष्यति] विकाराश्च [कः विकराश्च खः विकराध्व]

भवत्याधिष्ठिताः [खः भवेत्या- घः -ता] प्रिये।

जल्पनं [ख्, घः जल्पं न] चलनं [ख्, घ्, चः चलन] सृष्टिर्मलोत्सर्गश्च [गः

सृष्टिर्म्मलान्स-] देहिनाम्॥ १२-४६॥

गतिचारविकारास्ते [ख्, ङः गतिभार-] भविष्यन्ति कुलाम्बिके।

अहिंसा सत्यमस्तेयं शौचं [खः शोचं गः शौच] इन्द्रियनिग्रहः

[खः * * * निग्रहः]॥ १२-४७॥

दमः [घः दया घङान्येः दमा] क्षमार्जवं दानं विकारः [ङान्येः -र]

शुभदो [ङान्येः -शुभदं] न च।

गुरौ [ख, च, छः गुरो घः गुरु] भक्तिरकौटिल्यं शासने [खः शामने] परमा स्पृहा

[ख, ग, च, छः स्पृहां]॥ १२-४८॥

योगिनीवीरवात्सल्यं [खः -सत्यं] समयानां [घः -यांनां] च पालनम्।

ह्रीर्दया मार्दवं स्नेहो [चान्येः स्नेहं] जपः [ग, घः जप अन्येः जपं]

पूजाभिलाषिता [घः पूजाभिलाखिला?]॥ १२-४९॥

लौल्यचापल्यदम्भानां [कः लौल्याचापल्यडम्भानां] परिहारस्तथैव च।

इत्येषां [क, ग, छः इत्येषा] गतिभिर्देवि शोभना [ङः सो-] परिकीर्तिता॥ १२-५०॥

विपरीता पुनर्यान्या [ख, गः पुनर्योन्या घः पुनर्यन्या] सात्यन्तमशुभावहा [खः

साभ्यन्त मण्डमावहा]।

५३ब् ङ्) तव चारविभागेन [गः -गेण घः स्वरवि-] संचारणोऽस्मि [क्, ख्, चः संचरानोस्मि गः संचरामौस्मि घः संचनास्मि] सर्वगः॥ १२-५१॥

सर्वदा [चः नास्ति] सर्वमूर्तिस्थः [घचान्येः -स्थ] प्रिये [गः प्रिय] मूर्तिविवर्जितः।

एतत् सर्वं तवाख्यातं रहस्यं गूढगोचरम्॥ १२-५२॥

मुद्राचारं तथा ध्यानमादिसूत्रं [गः ध्यानंमा-] यथास्थितम्।

अस्य भेदोपभेदांश्च [ग्, घः -दाश्च] नानाग्रन्थार्थविस्तरान् [क्, ख्, च्, छः -राः गः नादा- -राः घः -रा]॥ १२-५३॥

सप्रपञ्चेन [गः -ञ्चन] भावेन मित्रनाथः करिष्यति।

अथैतद् [खः अचैतद् घः अवैतद्] दिव्यविज्ञानं [खः अचैत-] ध्यानं सर्वार्थसाधनम्॥ १२-५४॥

न वेत्ति तस्य देवेशि शृणु ध्यानं परं [खः व्यापरं] प्रिये।

पूर्वोक्तध्यानसिद्धस्तु येन संप्राप्यते स्फुटम् [ख्, ग्, चः स्फुतं]॥ १२-५५॥

५९ब् छ्) तथा मेतज्जगद्योनि नान्यथा समुदाहृतम्।

समाहितमनो [ग: सनाहित-] भूत्वा त्रिविधेनान्तरात्मना [घ: नास्ति]॥ १२-५६॥

८८ब् घ्) ८२अ च्) अनन्यशरणो [घ: नास्ति] भूत्वा [घ: नास्ति] निर्विकल्पेन चेतसा।

आत्मीयशिरसोर्ध्वस्थं [ग: आत्मीयंशिरसोर्द्धस्थ घ: -स्थ] व्योममार्गे
महाम्बुजे॥ १२-५७॥

श्वेतवर्णं सुतेजाढ्यं [ख: सुतेजा *] सहस्त्रदलसंयुतम् [छ: सहस्त्र * * * * *?]।

तत्रोपविष्टं [ग: -विष्ट] स्वगुरुं यः स्मरिष्यति भावितः [ग: -तं घ: भावतः]॥ १२-५८॥

पूर्वोक्तध्यानसिद्धिं तु [गान्ये: -सिद्धिस्तु] लभिष्यति [ग: लभेष्यति] न संशयः।

अहं त्वं च विशालाक्षि श्रीक्रमावरणान्वितौ [घ: -व * णान्वितौ]॥ १२-५९॥

गुरुमूर्तौ कुलेशानि आज्ञायोगे सदा स्थितौ [ग: -ता]।

विद्यामन्त्रगणस्यैव मूर्तिवाचकयोगिनः [ग, घ, ङ, छः मूर्तिर्वाचक- चः -नीः]॥ १२-६०॥

ध्यानं सर्वं [ख, च, छः सर्व] मया ख्यातं मूर्तिभेदानुरूपतः [कः -भेदान्-]

।

क्रियाकाण्डे कुलेशानि आत्मनस्ते तथैव च॥ १२-६१॥

संक्षेपतः [खः संख्येयेतः गः संक्षपतः] प्रिये यस्माद् विस्तराच्छास्त्रविस्तरः

।

इति श्री आदिदेवात् [गः आदिनाथ छः -देवा] पञ्चाशत्कोटिविस्तीर्णाद् [क, ख, ङ, चः -वीस्तीर्णाद् गः नास्ति] विनिर्गते [गः  पञ्चाशत्कोटिविस्तीर्ण्ण श्रीकुब्जिकामते] श्रीकुलरत्नोद्योते [क, घ, ङ, छः -रत्नोद्योते खः -रत्नाद्योते गः कुलर-] मुद्राचारध्यानाराधनानाम [घः -ध्यान * * * नाम चः -ध्याना * * * नाम] द्वादशमः [खः एकादशमः घ, चः द्वादशः] पटलः॥ १२॥

## त्रयोदशमः पटलः

# कामधेनुतन्त्रम्

ॐ नमः परदेवतायै

कामधेनुतन्त्रम्

प्रथमः पटलः

श्रीपार्वती उवाच

देवदेव महादेव सर्वागमविशारद।

अधुना देवदेवेश पञ्चाशद्वर्णमुत्तमम्॥ १/१॥

तत्त्वरूपं महादेव कथयस्व दयानिधे।

कृपया कथयेशान यद्यहं तव वल्लभा॥ १/२॥

श्रीमहादेव उवाच

अधुना संप्रवक्ष्यामि रहस्यमतिगोपनम्।

येन विज्ञातमात्रेण जीवन्मुक्तो भवेन्नरः॥ १/३॥

अज्ञात्वा मन्त्रतत्त्वानि महाविद्यां जपेत्तु यः।

सर्वं तस्य वृथा देवि किं तस्य जपपूजनैः॥ १/४॥

ध्यानावधारणे चैव तथा योगसमाधिना।

वर्णज्ञानं यदा नास्ति किं तस्य जपपूजनैः॥ १/५॥

मम कण्ठे स्थितं बीजं पञ्चाशद्वर्णमद्भुतम्।

नानावर्णयुतं शुद्धं तन्त्राणां सारमुत्तमम्॥ १/६॥

पञ्चाशन्मातृकां देवीं नानाविद्यामयीं सदा।

नानाविद्यामयीं देवीं महाविद्यामयीं तथा॥ १/७॥

सर्ववर्णमयीं देवीं सर्वदेवमयीं पराम्।

सर्वदेवमयीं सौम्यां ब्रह्माण्डजननीं पराम्॥ १/८॥

प्रणम्य बहुधा भक्त्या निगदामि शृणु प्रिये।

अकारादिक्षकारान्ता मातृका बीजरूपिणी॥ १/९॥

विसर्गश्चैव बिन्दुश्च त्रिशक्तिब्रह्मविग्रहः।

वर्णात्तु जायते ब्रह्मा तथा विष्णुः प्रजायते॥ १/१०॥

रुद्रश्च जायते देवि जगत्संहारकारकः।

मम कण्ठस्थिता या सा शारदा वामलोचना॥ १/११॥

तस्या गर्भस्थिता देवि बीजानि विविधानि च।

विधृत्य कण्ठदेशे तु शिवोऽहं कमलानने॥ १/१२॥

शृणु तत्त्वमकारस्य अतिगोप्यं वरानने।

शरच्चन्द्रप्रतीकाशं पञ्चकोषमयं सदा॥ १/१३॥

पञ्चदेवमयं वर्णं शक्तित्रयसमन्वितम्।

निर्गुणं त्रिगुणोपेतं स्वयं कैवल्यमूर्तिमान्॥

बिन्दुतत्त्वमयं वर्णं स्वयं प्रकृतिरूपिणी॥ १/१४॥

इति श्रीकामधेनुतन्त्रे देवदेवीसंवादे प्रथमः पटलः॥

द्वितीयः पटलः

श्रीमहादेव उवाच

आकारं परमाश्चर्यं शङ्खज्योतिर्मयं प्रिये।

ब्रह्मविष्णुमयं वर्णं तथा रुद्रं स्वयं प्रिये॥ २/१॥

पञ्चप्राणमयं वर्णं स्वयं परमकुण्डली।

इकारं परमानन्दं सुगन्धकुसुमच्छविम्॥ २/२॥

हरिब्रह्ममयं वर्णं सदा रुद्रयुतं प्रिये।

सदा शक्तिमयं देवि गुरुब्रह्म स्वयं तथा॥ २/३॥

सदाशिवमयं वर्णं परंब्रह्म समन्वितम्।

हरिब्रह्मात्मकं वर्णं गुणत्रयसमन्वितम्॥ २/४॥

इकारं परमेशानि मूर्तिर्वै कुण्डली स्वयम्।

ईकारं परमेशानि स्वयं परमकुण्डली॥ २/५॥

ब्रह्मविष्णुमयं वर्णं तथा रुद्रमयं सदा।

पञ्चदेवमयं वर्णं पीतविद्युल्लताकृतिम्॥ २/६॥

चतुर्ज्ञानमयं वर्णं पञ्चप्राणमयं सदा।

उकारं परमेशानि तार कुण्डलीनी स्वयम्॥ २/७॥

पीतचम्पकसंकाशं पंचदेवमयं सदा।

पञ्चप्राणमयं देवि चतुर्वर्गप्रदायकम्॥ २/८॥

अकारं देवदेवेशि बीजं परमदुर्लभम्।

शङ्खकुन्दसमाकारं स्वयं परमकुण्डली॥ २/९॥

पञ्चप्राणमयं वर्णं पञ्चदेवमयं सदा।

पञ्चप्राणयुतं वर्णं तथा त्रयगुणात्मकम्॥ २/१०॥

बिन्दुत्रययुतं वर्णं पीतविद्युल्लता यथा।

धर्मार्थकाममोक्षं च सदा सुखप्रदायकम्॥ २/११॥

ऋकारं परमेशानि कुण्डली मूर्त्तिमान् स्वयम्।

अत्र ब्रह्मा च विष्णुश्च रुद्रश्चैव वरानने॥ २/१२॥

सदाशिवयुतं वर्णं सदा ईश्वरसंयुतम्।

पञ्चप्राणमयं वर्णं चतुर्ज्ञानमयं सदा॥ २/१३॥

रक्तविद्युल्लताकारं ॠकारं प्रणमाम्यहम्।

ॠकारं परमेशानि स्वयं परमकुण्डली॥ २/१४॥

पीतविद्युल्लताकारं पञ्चदेवमयं सदा।

चतुर्ज्ञानमय्ं वर्णं पञ्चप्राणमयं सदा॥ २/१५॥

त्रिशक्तिसहितं वर्णं प्रणमामि सदा प्रिये।

ऌकारं चञ्चलापाङ्गि कुण्डली परदेवता॥ २/१६॥

अत्र ब्रह्मादयः सर्वे तिष्ठन्ति सततं प्रिये।

पञ्चदेवमयं वर्णं चतुर्ज्ञानमयं सदा॥ २/१७॥

पञ्चप्राणयुतं वर्णं तथा गुणत्रयात्मकम्।

बिन्दुत्रयात्मकं वर्णं पीतविद्युल्लता यथा॥ २/१८॥

ॡकारं परमेशानि पूर्णचन्द्रसमप्रमम्।

पञ्चदेवात्मकं वर्णं पञ्चप्राणात्मकं सदा॥ २/१९॥

गुणत्रयात्मकं वर्णं तथा बिन्दुत्रयात्मकम्।

चतुर्वर्गप्रदं देवि स्वयं परमकुण्डली॥ २/२०॥

एकारं परमं दिव्यं ब्रह्मविष्णुशिवात्मकम्।

बन्धूककुसुमप्रख्यं पञ्चदेवमयं सदा॥ २/२१॥

पञ्चप्राणात्मकं वर्णं तथा बिन्दुत्रयात्मकम्।

चतुर्वर्गप्रदं देवि स्वयं परमकुण्डली॥ २/२२॥

इति श्रीकामधेनुतन्त्रे द्वितीयः पटलः॥

## तृतीयः पटलः

ऐकारं परमं दिव्यं महाकुण्डलिनी स्वयम्।

कोटिचन्द्रप्रतीकाशं पञ्चप्राणमयं सदा॥ ३/१॥

ब्रह्मविष्णुमयं वर्णं तथा रुद्रमयं प्रिये।

सदाशिवमयं वर्णं बिन्दुत्रयसमन्वितम्॥ ३/२॥

ओकारं चञ्चलापाङ्गि पञ्चदेवमयं सदा।

रक्तविद्युल्लताकारं त्रिगुणात्मानमीश्वरम्॥ ३/३॥

पञ्चप्राणमयं वर्णं नमामि देवमातरम्।

एतद्वर्णं महेशानि स्वयं परमकुण्डली॥ ३/४॥

रक्तविद्युल्लताकारं औकारं कुण्डला स्वयम्।

अत्र ब्रह्मादयः सर्वे तिष्ठन्ति सततं प्रिये॥ ३/५॥

पञ्चप्राणमयं वर्णं सदाशिवमयं सदा।

सदा ईश्वरसंयुक्तं चतुर्वर्गप्रदायकम्॥ ३/६॥

अंकारं बिन्दुसंयुक्तं पीतविद्युत्समप्रभम्।

पञ्चप्राणात्मकं वर्णं ब्रह्मादिदेवतामयम्॥ ३/७॥

सर्वज्ञानमयं वर्णं बिन्दुत्रयसमन्वितम्।

शक्तित्रयमयं वर्णं स्वयं परमकुण्डली॥ ३/८॥

अःकारं परमेशानि विसर्गसहितं सदा।

अःकारं परमेशानि रक्तविद्युत्प्रभामयम्॥ ३/९॥

पञ्चदेवमयो वर्णः पञ्चप्राणमयः सदा।

सर्वज्ञानमयो वर्ण आत्मादितत्त्वसंयुतः॥ ३/१०॥

बिन्दुत्रयमयो वर्णः शक्तित्रयमयः सदा।

किशोरवयसः सर्वा गीतवाद्यादितत्पराः॥

शिवस्य युवती एता मूर्त्तिमत् कुण्डली स्वयम्॥ ३/११॥

अधुना संप्रवक्ष्यामि कारतत्त्वमुत्तमम्।

रहस्यं परमाश्चर्यं त्रैलोक्यानां च संश्रृणु॥ ३/१२॥

वामरेखा भवेद् ब्रह्मा विष्णुर्दक्षिणवीथिका।

अधोरेखा भवेद्रुद्रो मात्रा साक्षान्महेश्वरी॥ ३/१३॥

कुण्डली अङ्कुशाकारा मध्ये शून्यः सदाशिवः।

जवायावकसंकाशा बामरेखा वरानने॥ ३/१४॥

शरच्चन्द्रप्रतीकाशा दक्षरेखा च मूर्तिमान्।

अधोरेखा वरारोहे महामारकतद्युतिः॥ ३/१५॥

शङ्खकुन्दसमा कीर्तिर्मात्रा साक्षात् सरस्वती।

कुण्डली अङ्कुशा या तु कोटिविद्युल्लताकृतिः॥ ३/१६॥

कोटिचन्द्रप्रतिकाशा मध्ये शून्यः सदाशिवः।

शून्यगर्भे स्थिता काली कैवल्यपददायिनी॥ ३/१७॥

ककाराज्जायते सर्वं कामं कैवल्यमेव च।

अर्थश्च जायते देवि तथा धर्मश्च नान्यथा॥ ३/१८॥

ककारः सर्ववर्णानां मूलप्रकृतिरेव च।

ककारः कामदा कामरूपिणी स्फुरदव्यया॥ ३/१९॥

कामिनी या महेशानि स्वयं प्रकृतिसुन्दरी।

माता सा सर्वदेवानां कैवल्यपददायिनी॥ ३/२०॥

ऊर्ध्वकोणे स्थिता कामा ब्रह्मशक्तिरितीरिता।

वामकोणे स्थिता ज्येष्ठा विष्णुशक्तिरितीरिता॥ ३/२१॥]

दक्षकोणे स्थितो बिन्दू रौद्रीसंहाररूपिणी।

ज्ञानार्था सातु चार्वङ्गि केन चतुष्टयात्मिका॥ ३/२२॥

इच्छाशक्तिर्भवेद् ब्रह्मा विष्णुश्च ज्ञानशक्तिमान्।

क्रियाशक्तिर्भवेद् रुद्रः सर्वं प्रकृतिमूर्त्तिमान्॥ ३/२३॥

आत्मविद्याशिवैस्तत्त्वैः सदासाराप्रतिष्ठितैः।

आसनं त्रिपुरादेव्याः ककारं पञ्चदेवताम्॥ ३/२४॥

ईश्वरो यस्तु देवेशि त्रिकोणे तस्य संस्थितिः।

त्रिकोणमेतत् कथितं योनिमण्डलमुत्तमम्॥ ३/२५॥

केवलं प्रपदे यस्याः कामिनी सा प्रकीर्त्तिता।

ॐ शयनागारसिन्दूरसदृशीं कामिनीं पराम्॥ ३/२६॥

चतुर्भुजां त्रिनेत्राञ्च बाहुवल्लीविराजिताम्।

कदम्बकोरकाकारस्तनद्वयविभूषिताम्॥ ३/२७॥

रत्नकेयूराङ्गदैश्च भूषणैरुपशोभिताम्।

रत्नहारैः पुष्पहारैः शोभितां परमेश्वरीम्॥ ३/२८॥

एवं हि कामिनीं ज्ञात्वा ककारं दशधा जपेत्।
प्रफुल्लञ्च ततो ध्यात्वा जपस्य फलभाग् भवेत्।
एतत्ते कथितं देवि ककारतत्त्वमुत्तमम् ॥ ३/२९॥

इति श्रीकामधेनुतन्त्रे देवदेवीसंवादे तृतीयः पटलः॥

## चतुर्थः पटलः

श्रीमहादेव उवाच

ककारं परमेशानि कुण्डलीत्रयसंयुतम्।
खकारं परमाश्चर्यं शङ्खकुन्दसमप्रभम्॥ ४/१॥
कोणत्रययुतं शून्यं बिन्दुत्रयसमन्वितम्।
गुणत्रययुतं देवि पञ्चदेवमयं सदा॥ ४/२॥
त्रिशक्तिसंयुतं वर्णं खकारं प्रणमाम्यहम्।
गकारं परमेशानि पञ्चदेवात्मकं सदा॥ ४/३॥
निर्गुणं त्रिगुणोपेतं निरीहं निर्मलं सदा।
पञ्चप्राणमयं वर्णं सर्वशक्त्यात्मकं प्रिये॥ ४/४॥
अरुणादित्यसङ्काशं कुण्डलीं प्रणमाम्यहम्।
घकारं चञ्चलापाङ्गि चतुष्कोणात्मकं सदा॥ ४/५॥

पञ्चदेवमयं वर्णं अरुणादित्यसन्निभम्।

निर्गुणं त्रिगुणोपेतं सदा त्रिगुणसंयुतम्॥ ४/६॥

सर्वगं सर्वदं शान्तं घकारं प्रणमाम्यहम्।

ङकारं परमेशानि स्वयं परमकुण्डली॥ ४/७॥

सर्वदेवमयं वर्णं त्रिगुणं लोललोचने।

पञ्चप्राणमयं वर्णं ङकारं प्रणमाम्यहम्॥ ४/८॥

चवर्णं शृणु सुश्रोणि चतुर्वर्गप्रदायकम्।

कुण्डलीसहितं देवि स्वयं परमकुण्डली॥ ४/९॥

सततं कुण्डलीयुक्तं पञ्चदेवमयं सदा।

पञ्चप्राणमयं वर्णं पञ्चप्राणात्मकं सदा॥ ४/१०॥

त्रिशक्तिसहितं वर्णं त्रिबिन्दुसहितं प्रिये।

छकारं परमाश्चर्यं स्वयं परमकुण्डली॥ ४/११॥

सततं कुण्डलीयुक्तं पञ्चदेवमयं सदा।

पञ्चप्राणमयं वर्णं त्रिशक्तिसहितं सदा॥ ४/१२॥

त्रिबिन्दुसहितं वर्णं सदा ईश्वरसंयुतम्।

पीतविद्युल्लताकारं छकारं प्रणमाम्यहम्॥ ४/१३॥

जकारं परमेशानि या स्वयं मध्यकुण्डली।

शरच्चन्द्रप्रतीकाशं सदा त्रिगुणसंयुतम्॥ ४/१४॥

पञ्चदेवमयं वर्णं पञ्चप्राणमयं सदा।

त्रिशक्तिसहितं वर्णं त्रिबिन्दुसहितं प्रिये॥ ४/१५॥

झकारं परमेशानि कुण्डली मोक्षरूपिणी।

रक्तविद्युल्लताकारं सदा त्रिगुणसंस्थितम्॥ ४/१६॥

पञ्चदेवमयं वर्णं पञ्चप्राणात्मकं सदा।

त्रिबिन्दुसहितं वर्णं त्रिशक्तिसहितं सदा॥ ४/१७॥

सदा ईश्वरसंयुक्तं ञकारं शृणु सुन्दरि।

रक्तविद्युल्लताकारं स्वयं परमकुण्डली॥ ४/१८॥

पञ्चदेवमयं वर्णं पञ्चप्राणमयं सदा।

त्रिशक्तिसहितं वर्णं त्रिबिन्दुसहितं सदा॥ ४/१९॥

टकारं चञ्चलापाङ्गि स्वयं परमकुण्डली।

कोटिविद्युल्लताकारं पञ्चदेवमयं सदा॥ ४/२०॥

पञ्चप्राणयुतं वर्णं गुणत्रयसमन्वितम्।

त्रिशक्तिसहितं वर्णं त्रिबिन्दुसहितं सदा॥ ४/२१॥

ठकारं चञ्चलापाङ्गि कुण्डली मोक्षरूपिणी।

पीतविद्युल्लताकारं सदा त्रिगुणसंयुतम्॥ ४/२२॥

पञ्चप्राणात्मकं वर्णं पञ्चप्राणमयं सदा।

त्रिबिन्दुसहितं वर्णं त्रिशक्तिसहितं सादा॥ ४/२३॥

डकारं चञ्चलापाङ्गि सदा त्रिगुणसंयुतम्।

पञ्चदेवमयं वर्णं पञ्चप्राणमयं सदा॥ ४/२४॥

त्रिशक्तिसहितं वर्णं त्रिबिन्दुसहितं सदा।

चतुर्ज्ञानमयं वर्णं आत्मादितत्त्वसंयुतम्॥ ४/२५॥

पीतविद्युल्लताकारं डकारं प्रणमाम्यहम्।

ढकारं परमाराध्यं या स्वयं कुण्डली परा॥ ४/२६॥

पञ्चदेवात्मकं वर्णं पञ्चप्राणमयं सदा।

सदा त्रिगुणसंयुक्तं आत्मादितत्त्वसंयुतम्।

रक्तविद्युल्लताकारं ढकारं प्रणमाम्यहम्॥ ४/२७॥

णकारं परमेशानि स्वयं परमकुण्डली।

पीतविद्युल्लताकारं पञ्चदेवमयं सदा॥ ४/२८॥

पञ्चप्राणमयं देवि सदा त्रिगुणसंयुतम्।

आत्मादितत्त्वसंयुक्तं महामोहप्रदायकम्॥ ४/२९॥

इति श्रीकामधेनुतन्त्रे देवदेवीसंवादे चतुर्थः पटलः॥

## पञ्चमः पटलः

श्रीमहादेव उवाच

तकारं चञ्चलापाङ्गि स्वयं परमकुण्डली।

पञ्चदेवात्मकं वर्णं पञ्चप्राणम्यं तथा॥ ५/१॥

त्रिशक्तिसहितं वर्णमात्मादितत्त्वसंयुतम्।

त्रिबिन्दुसहितं वर्णं पीतविद्युत्समप्रभम्॥ ५/२॥

थकारं चञ्चलापाङ्गि कुण्डली मोक्षरूपिणी।
त्रिशक्तिसहितं वर्णं त्रिबिन्दुसहितं सदा॥ ५/३॥
पञ्चदेवमयं वर्णं पञ्चप्राणात्मकं सदा।
अरुणादित्यसंकाशं थकारं प्रणमाम्यहम्॥ ५/४॥
दकारं श्रृणु चार्वङ्गि चतुर्वर्गप्रदायकम्।
पञ्चदेवमयं वर्णं पञ्चप्राणमयं सदा॥ ५/५॥
त्रिशक्तिसहितं देवि त्रिबिन्दुसहितं सदा।
आत्मादितत्त्वसंयुक्तं स्वयं परमकुण्डली॥ ५/६॥
रक्तविद्युल्लताकारं दकारं हृदि भावय।
धकारं परमेशानि कुण्डली मोक्षरूपिणी॥ ५/७॥
आत्मादितत्त्वसंयुक्तं पञ्चदेवमयं सदा।
पञ्चप्राणमयं देवि त्रिशक्तिसहितं सदा॥ ५/८॥
त्रिबिन्दुसहितं वर्णं धकारं हृदि भावय।
पीतविद्युल्लताकारं चतुर्वर्गप्रदायकम्॥ ५/९॥
नकारं श्रृणु चार्वङ्गि रक्तविद्युल्लताकृतिम्।
पञ्चदेवमयं वर्णं स्वयं परमकुण्डली॥ ५/१०॥
पञ्चप्राणात्मकं वर्णं हृदि भावय पार्वति।
अतः परं प्रवक्ष्यामि पकारं मोक्षदायकम्॥ ५/११॥
चतुर्वर्गप्रदं वर्णं शरच्चन्द्रसमप्रभम्।
पञ्चदेवमयं वर्णं स्वयं परमकुण्डली॥ ५/१२॥

पञ्चप्राणमयं वर्णं त्रिशक्तिसहितं सदा।

त्रिगुणै रहितं वर्णमात्मादितत्त्वसंयुतम्॥ ५/१३॥

महामोक्षप्रदं वर्णं हृदि भावय पार्वति।

फकारं श्रृणु चार्वङ्गि रक्तविद्युल्लतोपमम्॥ ५/१४॥

चतुर्वर्गप्रदं वर्णं पञ्चदेवमयं सदा।

पञ्चप्राणमयं वर्णं सदा त्रिगुणसंयुतम्॥ ५/१५॥

आत्मादितत्त्वसंयुक्तं त्रिबिन्दुसहितं सदा।

बकारं श्रृणु चार्वङ्गि चतुर्वर्गप्रदायकम्॥ ५/१६॥

शरच्चन्द्रप्रतीकाशं पञ्चदेवमयं सदा।

पञ्चप्राणात्मकं वर्णं त्रिबिन्दुसहितं सदा॥ ५/१७॥

त्रिशक्तिसहितं वर्णं सदा चामृतनिर्मितम्।

स्वयं कुण्डलिनी साक्षात् सततं प्रणमाम्यहम्॥ ५/१८॥

भकारं श्रृणु चार्वङ्गि स्वयं परमकुण्डली।

महामोक्षप्रदं वर्णमरुणादित्यसन्निभम्॥ ५/१९॥

पञ्चप्राणमयं वर्णं पञ्चदेवमयं सदा।

त्रिशक्तिसहितं वर्णं त्रिबिन्दुसहितं प्रिये॥ ५/२०॥

मकारं श्रृणु चार्वङ्गि स्वयं परमकुण्डली।

अरुणादित्यसंकाशं चतुर्वर्गप्रदायकम्॥ ५/२१॥

त्रिशक्तिसहितं वर्णं त्रिबिन्दुसहितं सदा।

आत्मादितत्त्वसंयुक्तं हृदिस्थं प्रणमाम्यहम्॥ ५/२२॥

यकारं शृणु चार्वङ्गि चतुष्कोणमयं सदा।

पलालधूमसंकाशं स्वयं परमकुण्डली॥ ५/२३॥

पञ्चप्राणमयं वर्णं पञ्चदेवमयं सदा।

त्रिशक्तिसहितं वर्णं त्रिबिन्दुसहितं तथा॥ ५/२४॥

प्रणमामि सदा वर्णं मूर्तिमान् (?)मोक्षमव्ययम्।

इति श्रीकामधेनुतन्त्रे देवद्वीसंवादे पञ्चमः पटलः॥

## षष्ठः पटलः

श्रीमहादेव उवाच

रकारं चञ्चलापाङ्गि कुण्डलीद्वयसंयुतम्।

रक्तविद्युल्लताकारं पञ्चदेवात्मकं सदा॥ ६/१॥

पञ्चप्राणमयं वर्णं त्रिबिन्दुसहितं सदा।

त्रिशक्तिसहितं देवि आत्मादितत्त्वसंयुतम्॥ ६/२॥

सर्वतेजोमयं वर्णं सततं प्रणमाम्यहम्।

लकारं चञ्चलापाङ्गि कुण्डलीत्रयसंयुतम्॥ ६/३॥

पीतविद्युल्लताकारं सर्वरत्नप्रदायकम्।

पञ्चदेवमयं वर्णं पञ्चप्राणात्मकं सदा॥ ६/४॥

त्रिशक्तिसहितं वर्णं त्रिबिन्दुसहितं हि सा।

आत्मादितत्त्वसहितं हृदि भावय सर्वदा॥ ६/५॥

वकारं चञ्चलापाङ्गि कुण्डली मोक्षमव्ययम्।

पञ्चप्राणमयं वर्णं त्रिशक्तिसहितं सदा॥ ६/६॥

त्रिबिन्दुसहितं वर्णमात्मादितत्त्वसंयुतम्।

पञ्चदेवमयं वर्णं पीतविद्युल्लतोपमम्॥ ६/७॥

चतुर्वर्गमयं वर्णं सर्वसिद्धिप्रदायकम्।

त्रिशक्तिसहितं देवि त्रिशक्तिसहितं सदा॥ ६/८॥

शकारं परमेशानि स्वर्णवर्णं शुचिस्मिते।

रक्तवर्णप्रभाकारा स्वयं परमकुण्डली॥ ६/९॥

चतुर्वर्गप्रदं देवि शकारं ब्रह्मविग्रहम्।

पञ्चदेवमयं वर्णं पञ्चप्राणात्मकं प्रिये॥ ६/१०॥

रजःसत्त्वतमोयुक्तं त्रिबिन्दुसहितं सदा।

त्रिशक्तिसहितं वर्णमात्मादितत्त्वसंयुतम्॥ ६/११॥

षकारं शृणु चार्वङ्गि कोणषट्कमयं सदा।

रक्तचन्द्रप्रतीकाशं स्वयं परमकुण्डली॥ ६/१२॥

चतुर्वर्गप्रदं वर्णं सुधानिर्मितविग्रहम्।

पञ्चदेवमयं वर्णं पञ्चप्राणमयं सदा॥ ६/१३॥

रजःसत्त्वतमोयुक्तं त्रिबिन्दुसहितं परम्।

सर्वदेवमयं वर्णं हृदि भावय पार्वति॥ ६/१४॥

सकारं शृणु चार्वङ्गि शक्तिबीजं परात्परम्।

कोटिविद्युल्लताकारं कुण्डलीत्रयसंयुतम्॥ ६/१५॥

पञ्चदेवमयं देवि पञ्चप्राणमयं सदा।

रजःसत्त्वतमोयुक्तं त्रिबिन्दुसहितं सदा॥ ६/१६॥

त्रिशक्तिसहितं वर्णमात्मादितत्त्वसंयुतम्।

प्रणम्य सततं देवि हृदि भावय सुन्दरि॥ ६/१७॥

हकारं शृणु चार्वङ्गि चतुर्वर्गप्रदायकम्।

कुण्डलीत्रयसंयुक्तं रक्तविद्युल्लतोपमम्॥ ६/१८॥

रजःसत्त्वतमोयुक्तं पञ्चदेवमयं सदा।

पञ्चप्राणात्मकं वर्णं त्रिशक्तिसहितं सदा॥ ६/१९॥

त्रिबिन्दुसहितं वर्णं हृदि भावय सुन्दरि।

क्षकारं शृणु चार्वङ्गि कुण्डलीत्रयसंयुतम्॥ ६/२०॥

चतुर्वर्गमयं वर्णं पञ्चदेवमयं सदा।

पञ्चप्राणात्मकं वर्णं त्रिशक्तिसहितं सदा॥ ६/२१॥

त्रिबिन्दुसहितं वर्णमात्मादितत्त्वसंयुतम्।

शरच्चन्द्रप्रतीकाशं हृदि भावय सुन्दरि॥ ६/२२॥

अकारादिक्षकारान्तं स्वयं परमकुण्डली।

सर्वं चराचरं विश्वं वर्णात्तु जायते ध्रुवम्॥ ६/२३॥

नानाशास्त्रं पुराणञ्च इतिहासञ्च सुन्दरि।

वेदञ्च स्मृतिशास्त्रञ्च अन्यानि यानि कानि च॥ ६/२४॥

अक्षराज्जायते सर्वं परं ब्रह्म स्वयं प्रिये।

इति कामधेनुतन्त्रे देवदेवीसंवादे षष्ठः पटलः॥

## सप्तमः पटलः

श्रीमहादेव उवाच

रहस्यं परमाश्चर्यं सदा मम हृदि स्थितम्।
अतः परं प्रवक्ष्यामि मन्त्रतत्त्वं पृथक् पृथक्॥ ७/१॥
मातृकाया वरारोहे सावधानावधारय।
अतः परं जपेन्मन्त्रं पञ्चाशन्मातृकां पृथक्॥ ७/२॥
अतस्त्वमधिकारी स्यान्नात्र कार्या विचारणा।
इति ते कथितं देवि प्रयोगं मन्त्रमुत्तमम्॥ ७/३॥
एतन्मन्त्रं विना देवि इष्टं मन्त्रं जपेन्नरः।
सर्वं तस्य भवेद्व्यर्थं सर्वं व्यर्थकदर्थनम्॥ ७/४॥
एतन्मन्त्रं प्रथमतो दशधा प्रजपेत् प्रिये।
ततस्तु प्रणवं दत्त्वा मातृकां प्रजपेत् पृथक्॥ ७/५॥
प्रयोगं परमाश्चर्यं सावधानावधारय।

तद्यथा - ॐ, अं ॐ, ॐ आं ॐ, ॐ इं ॐ, ॐ ईं ॐ, ॐ उं, ॐ, ॐ ॐ ॐ, ॐ ऋं ॐ, ॐ ॠं ॐ, ॐ लृं ॐ, ॐ ॡ ॐ, ॐ एं ॐ, ॐ ऐं ॐ, ॐ ओं ॐ, ॐ औं ॐ, ॐ अं ॐ, ॐ अः ॐ, ॐ कं ॐ।

एवं क्षकारपर्यन्तं प्रणवैः पुटितं सदा।

प्रत्येकमेवं चार्वङ्गि दशधा दशधा जपेत्॥ ७/६॥

प्रत्येकं जपमात्रेण प्रत्येकं ध्यानमाचरेत्।

अथवा सर्ववर्णानामेकीकृत्य वरानने॥ ७/७॥

प्रजपेद् दशधा मन्त्रं स्वमन्त्रं प्रजपेत्ततः।

तथा च सर्ववर्णानां ध्यानं वक्ष्यामि संश्रृणु॥ ७/८॥

कोटिचन्द्रपतीकाशां पुण्डरीकोपरिस्थिताम्।

भ्रमद्भ्रमरलीलाभां नयनत्रयराजिताम्॥ ७/९॥

नानाशास्त्रप्रवक्त्रीं च विद्याभ्यासमयीं सदा।

नानावाद्यमयीं देवीं श्वेतांशुकपरिष्कृताम्॥ ७/१०॥

शुक्लाभरणदीप्ताङ्गी शुक्लवस्त्रोत्तरीयिणीम्।

ब्रह्माण्डं दर्पणे यस्या वामहस्तस्य पार्वति॥ ७/११॥

तद्वच्छुकशिशुं प्रेक्ष्य क्षुद्रदर्पणमुच्यते।

एवं ध्यात्वा जगद्धात्रीं मातृकां जगदम्बिकाम्॥ ७/१२॥

प्रजपेद्दशधा मन्त्रमेकधा वा जपेत्तु यः।

सर्वसिद्धिमवाप्नोति नात्र कार्या विचारणा॥ ७/१३॥

एषा ते कथिता विद्या मातृका परमात्मिका।

यत् कृत्वा साधको याति दुर्लभं मोक्षमव्ययम्॥ ७/१४॥

प्रत्येकेनाथवा देवि एकैकैव वरानने।

रहस्यं श्रृणु चार्वङ्गि सुगोप्यं भुवनत्रये॥ ७/१५॥

इष्टविद्यां सकृत् स्मृत्वा मनसा परमेश्वरि।

यस्य मन्त्रस्य यद्ध्यानं कृत्वा देवि प्रयत्नतः॥ ७/१६॥

तन्मन्त्रं दशधा जप्त्वा इष्टध्यानं ततः प्रिये।

इष्टमन्त्रं प्रजप्त्वा वै सर्वसिद्धिं ततो लभेत्॥ ७/१७॥

अनेन विधिना देवि मन्त्रश्चैतन्यमाप्नुयात्।

चैतन्यरहितं मन्त्रं विद्या वा सुरपूजिते॥ ७/१८॥

सर्वं व्यर्थं भवेद्देवि बिफलं स जपो भवेत्।

श्रीमाहदेव उवाच

अपरं श्रृणु चार्वङ्गि वर्गाष्टकमनुत्तमम्॥ ७/१९॥

वर्गाष्टकं विना देवि कोटिपुरश्चरं यदि।

सर्वं तस्य वृथा देवि अन्ते च नरकं ब्रजेत्॥ ७/२०॥

अकचटतपयशा इत्येतदष्टवर्गकम्।

मन्त्रस्यादौ च अन्ते च अकारं बिन्दुसंयुतम्॥ ७/२१॥

दत्त्वा तमेव भक्त्या च अष्टोत्तरशतं जपेत्।

अनेन विधिना देवि आदित्याभं समाचरेत्॥ ७/२२॥

तावज्जपेद् वरारोहे यावल्लक्षं समाप्यते।

ततो मन्त्रं वरारोहे ध्रुवं जीवत्वमाप्नुयात्॥ ७/२३॥

जीवत्वं हि विना देवि न पुरश्चरणं चरेत्।

जीवत्वं हि विना देवि यदि कुर्यात् पुरश्चरम्॥ ७/२४॥

विफला तस्य सा सर्वा पूर्वपुण्यं विनश्यति।

वर्गाष्टकेन सहितं प्रत्यहं प्रजपेत् शतम्॥ ७/२५॥

सदैव सहसा भद्रे सर्वं मन्त्रञ्च सिध्यति।

किं तस्य ध्यानपूजायां पुरश्चर्याञ्च किं पुनः॥ ७/२६॥

कृत्वा तु जीवं मन्त्रस्य विद्याञ्च वरवर्णिनी।

विद्यायाश्च तथा देवि यः कुर्यात् प्राणनिर्णयम्॥ ७/२७॥

तत्क्षणाद् यान्ति चार्वङ्गि पुरश्चर्या शतं शतम्।

विशेषतः कलियुगे जम्बूद्वीपस्य भारते॥ ७/२८॥

प्राणन्यासं विना देवि न जपेत् साधकः क्वचित्।

वैष्णवेषु च मन्त्रेषु शैवेषु शक्तिमन्त्रके॥ ७/२९॥

गणेशसौरमन्त्रे च प्राणन्यासः प्रशस्यते।

किं तस्य जपपूजासु होमादिषु च किं प्रिये॥ ७/३०॥

प्राणतत्त्वं महेशानि यो जानाति स पूजकः।

प्राणतत्त्वं विना देवि देहन्यासं करोति यः॥ ७/३१॥

स भ्रष्टः स च पापिष्ठो रौरवं नरकं व्रजेत्।

आलोक्य तन्मुखं देवि सूर्यदर्शनमाचरेत्॥ ७/३२॥

इति कामधेनुतन्त्रे देवदेवीसंवादे सप्तमः पटलः

## अष्टमः पटलः

श्रीमहादेव उवाच

एतत्ते कथितं भद्रे रहस्यं परमाद्भुतम्।

यन्नोक्तं सर्वतन्त्रेषु मातृकायाः पृथक् पृथक्॥ ८/१ ॥

पञ्चाशद्वर्णसंकेतं पञ्चाशत्तत्त्वमुत्तमम्।

सर्वदेवमयं तत्त्वं सर्वज्ञानमयं तथा॥ ८/२ ॥

बिन्दुतत्त्वमयं देवि अहंतत्त्वमयं तथा।

सर्वशक्तिमयं तत्त्वं सर्वप्राणमयं तथा॥ ८/३ ॥

गर्भतत्त्वमयं देवि केवलं कलिका तथा।

कुसुमस्य यदा देवि कलिकां गन्धसंयुताम्॥ ८/४ ॥

अदृश्यं सर्वभूतानां तथा गन्धं सुचिस्मिते।

पुष्पस्य कलिकामध्ये यथा ज्योतिः प्रदीप्यते॥ ८/५ ॥

तथैव कलिकाबीजे नवतत्त्वञ्च विद्यते।

कोटिविद्युत्प्रतीकाशां मातृकां प्रणमाम्यहम्॥ ८/६ ॥

निराबाधां निर्गुणाञ्च गुणानां गुणमातृकाम्।

माता सा सर्वविद्यानां सर्वागमप्रतिष्ठिता॥ ८/७॥

सर्वासां वेदविद्यानां ब्रह्माण्डानाञ्च पार्वति।

माता सा गीयते देवि पञ्चाशन्मातृका च सा॥ ८/८॥

मन्त्रतत्त्वञ्च विद्याञ्च सर्ववर्णविनिश्चयम्।

पञ्चाशद्युवतीरूपा मातृका शवमव्यया॥ ८/९॥

मातृका परमेशानि काली साक्षान्न संशयः।

कुतो ब्रह्मा कुतो विष्णुः कुतो रुद्रश्च ईश्वरः॥ ८/१०॥

सदाशिवः कुतो देवि ते सर्वे शववत् प्रिये।

शववत् सर्वदेवाश्च ब्रह्माण्डं शववत् सदा॥ ८/११॥

अत एव वरारोहे विष्णुमन्त्रं यथा तथा।

शिवमन्त्रं यथा देवि गणेशं सौरमेव च॥ ८/१२॥

शक्तिमन्त्रञ्च विद्याञ्च पञ्चाशद्युवतीमयम्।

पुराणञ्च तथा वेदं स्मृतिशास्त्रं तथैव च॥ ८/१३॥

एतत्तत्त्वं वरारोहे युवतीरूपमद्भुतम्।

ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः॥ ८/१४॥

ते सर्वे चञ्चलापाङ्गि मातृकाज्जायते (?) प्रिये।

समस्तजननी देवि मातृका जननी परा॥ ८/१५॥

कटाक्षलक्षसंयुक्ता महाशक्तिः प्रगीयते।

मातृकावर्णरहितं ब्रह्माण्डं शववत् प्रिये॥ ८/१६॥

गीतं वाद्यं श्रुतिर्नाट्यमालापं वरवर्णिनी।

सर्वं हि युवतीरूपं ध्यानमार्गे प्रतिष्ठितम्॥ ८/१७॥

एतत्ते कथितं देवि कालिकाबीजमुत्तमम्।

उभयोः संगमं देवि प्रफुल्लं भवति प्रिये॥ ८/१८॥

बहवः सङ्गमे देवि प्रफुल्लं मोक्षमव्ययम्।

यन्न मन्त्रेषु विद्यासु प्रफुल्लं भवति ध्रुवम्॥ ८/१९॥

प्रफुल्लं शृणु चार्वङ्गि जपयज्ञं समाचरेत्।

प्रफुल्लरहितं देवि विद्यामन्त्रं यदि प्रिये॥ ८/२०॥

केवलं कालिकाबीजं वर्णैर्वर्णैः पृथक् पृथक्।

ध्यात्वा सिद्धिमवाप्नोति नान्यथा सुरपूजिते॥ ८/२१॥

प्रफुल्लात् कलिकाद्वापि कृष्णादि जायते ध्रुवम्।

युवती या समाख्याता सा महाकुण्डली परा॥ ८/२२॥

वर्णरूपमयी देवी कुण्डली परदेवता।

पञ्चाशद्वर्णतत्त्वं च विद्यामन्त्रं जपेत्तु यः॥ ८/२३॥

सर्वं हि विफलं तस्य शववत् तज्जपो भवेत्।

चैतन्यरहितं देवि तज्जपं शवमेव तत्॥ ८/२४॥

ज्ञात्वा प्रणम्य कुर्वीत जपपूजादिकं प्रिये।

हरिर्हि निर्गुणः साक्षात् सगुणा परकुण्डली॥ ८/२५॥

तस्मात्तु युवतीदेहात् हरेरुत्पत्तिरेव च।

सर्वासां देवदेवीनां बीजं जन्मस्थलं सदा॥ ८/२६॥

बीजात्तु जायते ब्रह्मा शून्यरूपी सनातनः।

अत एव महेशानि ब्रह्मणः कारणं परा॥ ८/२७॥

ज्ञात्वा तन्त्रमिदं देवि जपपूजां करोति यः।

प्राणन्यासविधिं कृत्वा जपपूजां करोति यः॥ ८/२८॥

स शिवः परमं ब्रह्म स एव पुरुषोत्तमः।

स एव दिव्यो वीरश्च स एव भैरवः स्वयम्॥ ८/२९॥

स एव धन्यो देवेशि त्रैलोक्ये सचराचरे।

स सूर्यो देवि पूज्यश्च सद्गुरुश्च न चान्यथा॥ ८/३०॥

उद्धर्तुं चैव संहर्तुं समर्थः सोऽपि नान्यथा।

अज्ञात्वा तन्त्रमेतत्तु जपयज्ञं करोति यः॥ ८/३१॥

सर्वं तस्य वृथा देवि पशुरेव न संशयः।

सर्वेषु च गुरुर्देवि शिष्योऽपि पशुवत् सदा॥ ८/३२॥

श्रुत्वा तस्य मुखे विद्यां मन्त्रं वा नगनन्दिनि।

सिक्तो भवति चार्वङ्गि किं तस्य जपपूजनैः॥ ८/३३॥

एवं विधं गुरुं त्यक्त्वा श्रुत्वा पशुमुखात् प्रिये।

पूर्वमन्त्रं परित्यज्य गृह्णीयाद् गणनापरम्॥ ८/३४॥

स भ्रष्टः स च पापिष्ठः कथं मन्त्रमुपास्महे(?)।

मन्त्रस्य गणनाद्देवि यत् पापं प्राप्नुयान्नरः॥ ८/३५॥

तत् पापं श‍ृणु चार्वङ्गि नरकञ्चोत्तरोत्तरम्।

यत् पापं प्राप्नुयाद् देवि स्वयंभूलिङ्गचालने॥ ८/३६॥

तत् पापं कोटिगुणितं गणनाद्देवमन्त्रयोः।

तस्मात्तु गणनां देवि वर्जयेन्मतिमान्नरः॥ ८/३७॥

त्यक्त्वा शैववैष्णवेषु सौरे गाणपते तथा।

अन्यत् सर्वासु विद्यासु गणनां वर्जयेन्नरः॥ ८/३८॥

इति श्री कामधेनुतन्त्रे देवदेवीसंवादे अष्टमः पटलः॥

## नवमः पटलः

श्रीमाहादेव उवाच

अधुना संप्रवक्ष्यामि रहस्यं गुह्यमुत्तमम्।

यज्ज्ञात्वा साधको याति दुर्लभं ब्रह्ममन्दिरम्॥ ९/१॥

इडया पूरयेद् वायुं सुषुम्नान्तर्गतं ततः।

रेचयेत् पिङ्गलामार्गे प्राणायामक्रमात् प्रिये॥ ९/२॥

अनुलोमेन चार्वङ्गि मातृकां युवतीं स्मरेत्।

पञ्चाशन्मातृकावर्णं सबिन्दुं नादसंयुतम्॥ ९/३॥

उच्चार्य पूरकेणैव तत इष्टं समुच्चरेत्।

ततस्तु मातृकावर्णं विलोमेन जपेत् प्रिये॥ ९/४॥

सुषुम्नामध्यदेशे तु चित्रिणी सुवरानने।

अनुलोमविलोमेन मातृकां युवतीं स्मरेत्॥ ९/५॥

इष्टमन्त्रं ततो जप्त्वा विलोमं कुरु यत्नतः।

अनेनैव विधानेन रेचयेत् पिङ्गलापथे॥ ९/६॥

एवं द्वादशधा कृत्वा प्रत्यहं वरवर्णिनि।

त्रिसन्ध्यां चञ्चलापाङ्गि यः कुर्यात् कमलानने॥ ९/७॥

जीवन्यासं भवेत्तस्य मन्त्रसिद्धिश्च नान्यथा।

एकधा वा महेशानि कलौ संख्या चतुर्गुणा॥ ९/८॥

प्रत्यहं दशधा कृत्वा शिवतुल्यो भवेन्नरः।

इति श्रीकामधेनुतन्त्रे देवदेवीसंवादे नवमः पटलः॥

## दशमः पटलः

श्रीमहादेव उवाच

ललाटतत्त्वं चार्वङ्गि अकारं सर्वदा प्रिये।

आकारं मुखतत्त्वन्तु शृणुष्व वरवर्णिनि॥ १०/१॥

इकारं दक्षनेत्रञ्च ईकारं वामनेत्रके।

उकारं दक्षकर्णे स्यादूकारं वामकर्णके॥ १०/२॥

ऋकारं दक्षनासा च ॠकारं वामनासिके।

ऌकारं दक्षगण्डं स्यात् ॡकारं वामगण्डकम्॥ १०/३॥

एकारं अधरं तत्त्वं ऐकारं ओष्ठ एव च।

ओकारं ऊर्ध्वदन्तं स्यात् औकारश्चाधोदन्तकम्॥ १०/४॥

अंकारं शिरसस्तत्त्वं अःकारं मुखमण्डलम्।

ककारादि पञ्चतत्त्वं दक्षबाहौ प्रशस्यते॥ १०/५॥

वामबाहौ चकारादि पञ्चतत्त्वञ्च तिष्ठति।

दक्षपादे टकारादि पञ्चतत्त्वं वरानने॥ १०/६॥

तकारादि पञ्चतत्त्वं वामपादे पशस्यते।

पकारं दक्षपार्श्वञ्च फकारं वामपार्श्वके॥ १०/७॥

बकारं पृष्ठतत्त्वञ्च भकारं नाभिरेव च।

मकारं उदरं तत्त्वं यकारं हृदयं तथा॥ १०/८॥

रकारं स्कन्दतत्त्वञ्च लकारं वाममेव च।

घटितत्त्वं वकारञ्च शकारं दक्षबाहुषु॥ १०/९॥

वामबाहौ षकारञ्च सकारं दक्षपादकम्।

वामपादं हकारञ्च क्षकारं शिरसोपरि॥ १०/१०॥

अकारं बीजतत्त्वञ्च तकारं प्रणवेन च।

मकारञ्च सकारञ्च मण्डितं हि तथैव च॥ १०/११॥

अहङ्कारः पकारं स्यात् फकारो मनसस्तथा।

नकारं शब्दतत्त्वञ्च दं धं रूपं प्रशस्यते॥ १०/१२॥

गकारं पादतत्त्वञ्च छकारोपस्थमेव च।

उकारमाकाशतत्त्वञ्च ऊकारं श्रोत्रमेव च॥ १०/१३॥

त्वक्तत्त्वञ्च जकारः स्याद् झकारः पादमेव च।

ककारः पृथ्वीतत्त्वं खकारो ज्ञानतत्त्वकम्॥ १०/१४॥

शकारं हृत्पुण्डरीकं षकारं तत्त्वमण्डलम्।

सकराञ्च तथा चन्द्रं रकारं वह्निमण्डलम्॥ १०/१५॥

परमेष्ठि तथा तत्त्वं षकारः सुरपूजिते।

लकारं पृथ्वीतत्त्वं हकारञ्च शिरस्तथा॥ १०/१६॥

यकारं वायुतत्त्वञ्च ककारं स्वर्गमेव च।

एतयोर्योगमासाद्य क्षकारं तत्त्वविग्रहम्॥ १०/१७॥

तेन अ त म स प फ न द ध ग छ उ ऊ ज झ क ख श ष स र य ल ह क्ष

॥

अकारादिक्षान्तवर्णं तत्त्वञ्च पञ्चविंशतिः।

सर्वतत्त्वमतिगुह्यं परमात्मा सुलोचने॥ १०/१८॥

मातृकाया वरारोहे क्रमान्नामानि संश्रृणु।

ब्रह्माणी चण्डिका रौद्री गौरीन्द्राणी तथैव च॥ १०/१९॥

कौमारो वैष्णवी दुर्गा तथैव नारसिंहिका।

कालिका मुण्डमाला च शिवदूती तथा परा॥ १०/२०॥

वराही कौषिकी चैव तथा माहेश्वरी प्रिये।

शङ्करी च जयन्ती च मंगला कलिमर्दिनी॥ १०/२१॥

पालिका चैव मेधा च शिवरूपा च शाम्भवी।

भीमा शान्ता च उग्रा च भ्रामरी रुद्ररूपिणी॥ १०/२२॥

अम्बिका बहुरूपा च क्षेमा क्षेमङ्करी तथा।

धात्रीरूपा स्वधा स्वाहा तथैव वह्निरूपिणी॥ १०/२३॥

अपर्णा च तथा माया घोररूपा प्रियंवदा।

ब्रह्माण्डवाणी ब्राह्मी च पञ्चाशन्मातृकाः स्मृताः॥ १०/२४॥

इत्येतत् कथितं सम्यक् केवलं तव भक्तितः।

एतास्तु मातृकादेव्यो ब्रह्माण्डं सचराचरम्॥ १०/२५॥

व्याप्य तिष्ठन्ति चार्वाङ्गि नानामूर्त्तिधराव्ययाः।

शक्तिमन्त्रे विष्णुमन्त्रे शैवे सौरे च पार्वति॥ १०/२६॥

अन्यसर्वेषु मन्त्रेषु गणेशे वरवर्णिनि।

मातृका युवतीरूपा मन्त्रविग्रहरूपिणी॥ १०/२७॥

ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः।

ते सर्वे चञ्चलापाङ्गि निश्चलाश्च निरिन्द्रियाः॥ १०/२८॥

देवादीनां वरारोहे मन्त्रं नास्ति कदाचन।

शब्दब्रह्म यदा याति तन्त्रं मन्त्रं तदा भवेत्॥ १०/२९॥

पञ्चाशद्युवती सर्वा शब्दब्रह्मस्वरूपिणी।

ब्रह्मणः कारणं नास्ति प्रकृतेरस्ति भाविनि॥ १०/३०॥

प्रकृतेर्या वरारोहे सा दीक्षा सर्वसम्मता।

दीक्षायां चञ्चलापाङ्गि प्रशस्ता युवतीकला॥ १०/३१॥

पञ्चाशन्मातृका या सा युवती परिगीयते।

युवतीरहितं देवि कुतो विद्या कुतो मनुः।

निर्गुणं परमं ब्रह्म प्रधाना युवतीगणाः॥ १०/३२॥

इति श्रीकामधेनुतन्त्रे देवदेवीसंवादे दशमः पटलः॥

## एकादशः पटलः

श्रीशिव उवाच

यथा जले सूर्यतत्त्वं तथा मन्त्रे प्रतिष्ठितम्।

देवीनां ज्योतिषः पुञ्जो वर्तन्ते प्रकृतेः कलाः॥ ११/१॥

अथान्तरात्मा परमं ज्ञानात्मा सुवरानने।

वर्तन्ते युवतीरूपाः षोडश प्रकृ(तिः?तेः) पराः॥ ११/२॥

प्रकृतिं हि विना देवि ज्ञाता ब्रह्मा सनातनः।

अत एव वरारोहे स एव श्रीसदाशिवः॥ ११/३॥

जाग्रत् स्वप्नसुषुप्तिर्या तुरीया वरवर्णिनि।

तास्ताः सर्वा वरारोहे युवती परमापरा॥ ११/४॥

कार्यकारणकाले च गणनीया वरानने।

शून्यात् शून्यं परं शून्यं शून्यरूपं निरञ्जनम्॥ ११/५॥

कोटिसूर्यप्रतीकाशं निर्मलं ज्ञानमुत्तमम्।

हृदि भावय चार्वङ्गि तेजःपुञ्जं महाप्रभम्॥ ११/६॥

दलिताञ्जनपुञ्जाभं वर्णराजं वरानने।

त्रिभङ्गललिताकारं चारुचूडाविराजितम्॥ ११/७॥

शिखिपुच्छयुतं चूडं भ्रमरैः शोभितं परम्।

पीतांशुकपरीधानं वनमालाविभूषितम्॥ ११/८॥

रत्नकुण्डलसंयुक्तं स्फुरद्गण्डमनोहरम्।

कदम्बकुसुमोपेतं श्रवणं जनमोहितम्॥ ११/९॥

श्रीवत्सकौस्तुभोद्दीप्तं आजानुबाहुराजितम्।

आरक्तनयनद्वन्द्वं कोटिविद्युत्समद्युतिम्॥ ११/१०॥

आरक्तचरणद्वन्द्वं नूपुरारावसंयुतम्।

आरक्तकरतलस्वच्छं गुञ्जमालाविराजितम्॥ ११/११॥

शब्दब्रह्ममयं विष्णुं इकारं शब्दजल्पितम्।

एवंरूपं समुत्पन्नं हृदि मध्ये वरानने॥ ११/१२॥

जायते कामबीजात्तु शून्यमध्ये सुलोचने।

शून्यमध्ये स्थिता देवि कामबीजस्वरूपिणी॥ ११/१३॥

लकारसंयुता या सा कृष्णमाता प्रगीयते।

सर्वेषु विष्णुमन्त्रेषु कामबीजं परात्परम्॥ ११/१४॥

हृदि शून्ये महेशानि विष्णोर्मन्त्रं जपेत् प्रिये।

ततो वै कामबीजात्तु जायते विष्णुविग्रहम्॥ ११/१५॥

अतं काममयं विष्णुं हृदि भावय पार्वति।

कामिनी या महेशानि विष्णुमाता प्रगीयते॥ ११/१६॥

अतो विष्णुमातृवर्णं वर्णराजमवाप्नुयात्।

ककारः कामिनी साक्षाद् लकारः पृथिवीश्वरी॥ ११/१७॥

रतिस्तु मर्दिनी साक्षाद् नादस्तु योनिरूपिणी।

बिन्दुः कुण्डलिनीरूपं शिवशक्तिमयं प्रिये॥ ११/१८॥

इदं बीजं महेशानि विष्णुमाता पराक्षरा।

निरक्षरो विष्णुदेवो ह्यक्षराज्जायते ध्रुवम्॥ ११/१९॥

अत एव वरारोहे ब्रह्मणः कारणं परा।

क्लींकारबीजरूपा या सा परा परिगीयते॥ ११/२०॥

परात्परतरा साऽपि वह्निमण्डलसंयुता।

कामिनी सा महेशानि पृथिवी तस्य आसनम्॥ ११/२१॥

कदाचित् पृथिवीमध्ये कदाचिद् वह्निमण्डले।

वसते कामिनी देवी बिन्दुत्रयसमन्विता॥ ११/२२॥

जन्मलब्धा महाविष्णुः कूर्चबीजं जपेत् प्रिये।

अनेन प्रजपेन्मन्त्रं हुंकारं वरवर्णिनि॥ ११/२३॥

विष्णोर्विग्रहणे तत्तु स्वयं प्रकृतिमूर्तिमान्।

प्रकृतिः परमाराध्या देवानां नगनन्दिनि॥ ११/२४॥

हुंकारं परमाश्चर्यं बीजरन्तं शृणु प्रिये।

षष्ठस्वरः परिचयो वियद्बीजं शशिप्रभम्॥ ११/२५॥

तस्योपरि वरारोहेसदाबिन्दुं विभावय।

काममन्मथकन्दर्पम् अक्षरध्वजसंज्ञकम्॥ ११/२६॥

मीनकेतुर्महेशानि पञ्चबीजं प्रकीर्तितम्।

मायाकूर्चं वधूबीजं लक्ष्मीबीजञ्च पार्वति॥ ११/२७॥

प्रणवञ्च महेशानि स्वयं चतुर्दशं तथा।

सपिण्डवत्तथा देवि येषु यासु च विद्यते॥ ११/२८॥

तन्मन्त्रमतिसिद्धं स्यात् परः प्रकृतिरूपिणी।

एवं बीजं सकृद् ध्यात्वा सर्वासां भवति प्रियः॥ ११/२९॥

तन्मन्त्रं प्रजपेद्देवि बीजध्यानं पुनः प्रिये।

एवं हि दशधा कृत्वा मन्त्राणां बीजसाधनम्॥ ११/३०॥

तस्माद् बीजात् समाकृष्य देवतारूपमुद्भवम्।

देवध्यानं ततः कृत्वा इष्टमन्त्रं ततो जपेत्॥ ११/३१॥

पुनर्ध्यानं देवतायाः पुनर्जापं कुरु प्रिये।

एवं हि दशधा कृत्वा देवाधिष्ठानमेव च॥ ११/३२॥

ततः सप्तच्छदां जप्त्वा कुल्लुकां दशधा जपेत्।

आद्यन्ते सेतुमन्त्रञ्च दत्वा अष्टोत्तरं जपेत्।

तन्मन्त्रं प्रजपेद्देवि एवं सिद्धिमुपालभे॥ ११/३३॥

इति कामधेनुतन्त्रे देवदेवीसंवादे एकादशः पटलः॥

## द्वादशः पटलः

श्रीमहादेव उवाच

अपरैकं प्रवक्ष्यामि रहस्यमतिगोपनम्।

अकृत्वा ध्यानतत्त्वञ्च अष्टतत्त्वं तथैव च॥ १२/१॥

अकृत्वा व्यर्थतां याति नात्र कार्या विचारणा।

ततो जीवत्वमाप्नोति मन्त्रः सिध्यति तत्क्षणात्॥ १२/२॥

अथवा परमेशानि मन्त्रवर्णं यथा तथा।

प्रणवपुटितं कृत्वा अनुलोमविलोमतः॥ १२/३॥

तदैव परमेशानि जीवत्वं प्राप्यते मनुः।

एकधा वा त्रिधा कृत्वा यदि कुर्याद् वरानने॥ १२/४॥

तदा सिद्धिमवाप्नोति नान्यथा सुरपूजिते।

जीवत्वं हि विना देवि यदि मन्त्रं जपेत् सुधीः॥ १२/५॥

तज्जपं चञ्चलापाङ्गि शवमेव न संशयः।

सदा निद्रातुरो मन्त्री जीवहीनश्च पार्वति॥ १२/६॥

श्रीं क्लीं ह्रीं हुं स्त्रीं श्रीं ओम्।

कथं सिद्धिमवाप्नोति निद्रायां वरवर्णिनि।

जीवन्यासेन चार्वङ्गि निद्राभङ्गो भवेद् ध्रुवम्॥ १२/७॥

बिन्दुतत्त्वं प्रजप्याथ ज्ञानतत्वञ्च सुन्दरि।

प्राणतत्त्वञ्च चार्वङ्गि देवतत्त्वं तथैव च॥ १२/८॥

जपतत्त्वं मन्त्रतत्त्वं ध्यानतत्त्वं सुलोचने।

अक्षरे अक्षरे देवि अज्ञात्वा प्रजपेद् यदि॥ १२/९॥

संयोगं यद् भवेद् योगं प्रफुल्लं तदुदाहृतम्।

केवलं कलिकाबीजं तद्वर्णं सुरपूजिते॥ १२/१०॥

आगतं मम वक्राद् यद् गतं तव मुखे सदा।

मतं श्रीवासुदेवस्य इति ते कथितं प्रिये॥ १२/११॥

एतन्मन्त्रं महागुह्यं ईशानमुखसंयुतम्।

एतन्मन्त्रप्रभावाद्धि कालकूटं पिबाम्यहम्॥ १२/१२॥

एतास्तु मातृका वर्णाः सुषुम्नामध्यवर्तिनः।

एते वर्णा वरारोहे महायोगमयाः सदा॥ १२/१३॥

अक्षरं हि विना देवि न योगो जायते मम।

योगमार्गे भक्तिमार्गे मुक्तिमार्गे च सुन्दरि॥ १२/१४॥

ध्यानमार्गे तु पूजायां जपमार्गे तथैव च।

एतास्तु युवतीवर्णाः कार्यकारणरूपिणः॥ १२/१५॥

एतन्मन्त्रमविज्ञाय न जप्तव्यं कदाचन।

एतन्मन्त्रमविज्ञाय पुराणं संहितां स्मृतिम्॥ १२/१६॥

पठन्नरकमाप्नोति पितृभिः सह नान्यथा।

सर्वधर्मेषु यत्कर्म सर्वयज्ञेषु यत्फलम्॥ १२/१७॥

सर्वदानेषु तीर्थेषु यत्फलं प्राप्नुयाद् द्विजः।

तत्फलं समवाप्नोति वर्णानां ध्यानमात्रतः॥ १२/१८॥

वर्णध्यानमविज्ञाय वर्णतत्त्वं तथैव च।

पुराणवाचको यस्तु ध्रुवं नरकमाप्नुयात्॥ १२/१९॥

कोटिवंशान् समादाय स द्विजो नरकं व्रजेत्।

यथा वक्ता तथा श्रोता द्वयोरपि फलं समम्॥ १२/२०॥

कथमज्ञानतो मूर्खोऽज्ञात्वा वर्णविनिर्णयम्।

पुराणानि पठित्वा वै निश्चयं नरकं व्रजेत्॥ १२/२१॥

निश्चयञ्च महेशानि दारिद्र्यं घोरमाप्नुयात्।

निश्चयं रोगमाप्नोति जम्बूद्वीपस्य भारते॥ १२/२२॥

स स्यात् सनातनो देवो वाणी त्रिपुरसुन्दरी।

सर्वासां युवतीनाञ्च भवानी चाधिदेवता॥ १२/२३॥

ध्यायेद् देवीं महामायां मातृकां जगदीश्वरीम्।

रक्तपद्मासनगतां रक्तांशुकपरिष्कृताम्॥ १२/२४॥

रक्तचन्दनलिप्ताङ्गीं रक्तवस्त्रोत्तरीयिणीम्।

रक्तबिम्बफलाभासां राकाचन्द्रमुखीं पराम्॥ १२/२५॥

भ्रमद्भ्रमरलीलाभनयनत्रयराजिताम्।

कटाक्षशतसंयुक्तां चारुचूडाविनोदिनीम्॥ १२/२६॥

रक्तालङ्कारसुभगां त्रिभङ्गिललिताकृतिम्।

हास्ययुक्तां प्रफुल्लास्यां ज्योत्स्नाजालसमच्छविम्॥ १२/२७॥

मृणालसदृशाकारबाहुवल्लीविराजिताम्।

कञ्चुलीसंयुतां रम्यां कदम्बकोरकस्तनीम्॥ १२/२८॥

नखानां किरणोद्योतैर्भुवनं परिमोहयन्।

एवं ध्यात्वा महामायां भवानीं शिवमोहिनीम्॥ १२/२९॥

अपरैकं प्रवक्ष्यामि रहस्यं प्रमाद्भुतम्।

हृत्पद्मे द्वादशदले वराहोपरि भावयेत्॥ १२/३०॥

यस्यदेवस्य यद्बीजं प्रफुल्लकलिकां तथा।

ध्यात्वादेवीं यथाशक्त्या तस्मादाविर्भवेत् स्वयम्॥ १२/३१॥

शक्तिर्वा विष्णुदेवो वा शिवो वा सूर्य एव वा।

बीजादुत्पद्यते देवि परंब्रह्म निरञ्जनम्॥ १२/३२॥

बीजध्यानं विना देवि कथमुत्पद्यते हरिः।

सदाशिवो महादेवः कथमुत्पद्यते स्वयम्॥ १२/३३॥

सदाशिवस्य जननी बीजरूपा सनातनी।

इति यो वेत्ति स ज्ञानी स एव वीरसत्तमः॥ १२/३४॥

गुरुर्योग्यः स एव स्यात् स एव परमः शिवः।

सर्वेषाञ्चैव बीजानामेवं ध्यानं समाचरेत्॥ १२/३५॥

शुक्लविद्युत्समाकारां नयनत्रयधारिणीम्।

कटाक्षविशिखैर्युक्तां चतुर्बाहुसमन्विताम्॥ १२/३६॥

त्रिभङ्गललिताकारां चारुचूडाविराजिताम्।

पुण्डरीकोपविष्टाञ्च राकाचन्द्रमुखीं पराम्॥ १२/३७॥

नानागन्धप्रलिप्ताङ्गीं सुगन्धिमाल्यसंस्कृताम्।

नानाभरणदीप्ताङ्गीं मेघांशुकपरिष्कृताम्॥ १२/३८॥

वीणावाद्यविनोदेन उल्लसन्तीं जगत्त्रयम्।

आद्यां ब्रह्ममयीं देवीमिष्टबीजस्वरूपिणीम्॥ १२/३९॥

ब्रह्माद्या देवता यस्याश्चरणे पतिता भुवि।

भजेऽहं मातृकादेवीं वेदमाता सनातनीम्॥ १२/४०॥

अनेन विधिना ध्यात्वा सर्वासां भवति प्रियः।

बीजमेतन्महेशानि प्रथमं दशधा जपेत्॥ १२/४१॥

तन्मन्त्रं चञ्चलापाङ्गि आनन्दपटले स्थितम्।

ततो ध्यात्वा पुनर्जप्त्वा दशधा वरवर्णिनि॥ १२/४२॥

एतत्तत्त्वमविज्ञाय प्रजपेद् यदि पार्वति।

सर्वपापमयः सोऽपि भवेत् शूकरवद् द्विजः॥ १२/४३॥

तत्त्वमेतन्महागुह्यं योगमार्गे स्थितं सदा।

तव भक्त्या मयाख्यातमतिगुह्यं सुलोचने॥ १२/४४॥

तन्त्राणां सारमेतत्तु सर्वसिद्धिप्रदायकम्।

स योगी योगवेत्ता च योगात्मा योगनायकः॥

योगाचार्यो योगमाया योगानन्दप्रदायकः॥ १२/४५॥

इति श्रीकामधेनुतन्त्रे देवदेवीसंवादे द्वादशः पटलः॥

## त्रयोदशः पटलः

श्रीमहादेव उवाच

अधुना संप्रवक्ष्यामि आनन्दपटलं प्रिये।

शृणु तत्त्वं प्रवक्ष्यामि सुन्दरं सुमनोहरम्॥ १३/१॥

हृत्पद्मे द्वादशदले विद्युत्कोटिसमन्विते।

भावयेन्मन्त्रबीजानि यस्य या इष्टदेवता॥ १३/२॥

भावयेत् प्रथमं बीजं वराटोपरि पार्वति।

अन्यानि सर्वबीजानि पत्रमध्ये पृथक् पृथक्॥ १३/३॥

एवं हि दशधा जप्त्वा क्रमाद् बीजं जपेत् प्रिये।

दशधा दशधा देवि प्रजपेद् बीजमुत्तमम्॥ १३/४॥

ततस्तु बीजमध्ये तु ध्यायेदिष्टं सुलोचने।

तस्माद् बीजाद् वरारोहे देवता जायते ध्रुवम्॥ १३/५॥

तस्य देवस्य चार्वङ्गि निरीक्ष्य देहसुन्दरम्।

चरणात् केशपर्यन्तं नानावेशमयं प्रिये॥ १३/६॥

निरीक्ष्य मनसा भक्त्या पुनर्ध्यानं समाचरेत्।

ततस्तु प्रजपेद् बीजं वर्णानन्दस्वरूपिणम्॥ १३/७॥

प्रजपेत् प्रथमं बीजं बीजध्यानं ततः परम्।

एतत्तु प्रथमं बीजं साधनं दुर्लभं प्रिये॥ १३/८॥

सर्वेषां बीजवर्णानां यदि जानाति साधकः।

ध्यानं परमकल्याणं वर्णे वर्णे पृथक् पृथक्॥ १३/९॥

अज्ञात्वा चञ्चलापाङ्गि मातृकाध्यानमाचरेत्।

तदेवं सहसा देवि सर्वासां जायते ध्रुवम्॥ १३/१०॥

यस्य मन्त्रस्य यद्वर्णं तस्य ध्यानं पृथक् पृथक्।

बीजात्तु जायते विष्णुरवतारवरः प्रिये॥ १३/११॥

बीजात्तु जायते रामो बीजात् कृष्णः प्रजायते।

स्थावरं जङ्गमं देवि सर्वं बीजात् प्रजायते॥ १३/१२॥

आज्ञाचक्रे विशुद्धौ च मूलाधारे ततः प्रिये।

स्वाधिष्ठाने ततो देवि मणिपूरे च पार्वति॥ १३/१३॥

अनेन विधिना देवि कुर्यात् साधकसत्तमः।

प्रत्यहं कुरुते यस्तु स सिद्धः शिव एव सः॥ १३/१४॥

प्रत्यहं चञ्चलापाङ्गि षट्चक्रं भ्रामयेत्तु यः।

साधनाच्च महेशानि तस्मात् कुसुमवत् प्रिये॥ १३/१५॥

नित्यञ्च हृदये कुर्यादवश्यं वद किं प्रिये।

बीजस्य चञ्चलापाङ्गि ध्यानं मन्त्रं पृथक् पृथक्॥ १३/१६॥

साक्षात् श्रीः प्रकृतिर्देवी बीजरूपा सनातनी।

सनातनस्य जननी सर्ववर्णमयी प्रिये॥ १३/१७॥

जपस्य प्रथमे काले बीजस्य तत्त्वमुच्चरेत्।

ततस्तु प्रजपेन्मन्त्रं ससेतु वरवर्णिनि॥ १३/१८॥

बीजतत्त्वमविज्ञाय प्रजपेद् यदि कोटिधा।

सर्वं तस्य वृथा देवि अरण्ये रोदनं यथा॥ १३/१९॥

तत्त्वत्रयं प्रवक्ष्यामि मन्त्राणां श्रृणु सुन्दरि।

विभाव्य नाभिपद्मेषु वायुबीजं सबिन्दुकम्॥ १३/२०॥

मन्त्रस्य प्रथमं वायुबीजं मध्ये विचिन्त्य वै।

ध्यात्वा बीजं महेशानि प्रजपेद् बीजमुत्तमम्॥ १३/२१॥

दशधा प्रजपेद् बीजं दशधा ध्यानमेव च।

दशतत्त्वयुतं मन्त्रं तदैव सहसा भवेत्॥ १३/२२॥

संशोष्य बीजं चार्वङ्गि वह्निबीजे विचिन्त्य वै।

हृत्पद्मे वह्निमध्ये तु ध्यात्वा बीजं हुताशनम्॥ १३/२३॥

दशधा प्रजपेन्मन्त्रं दशधा ध्यानमेव च।

विंशतत्त्वयुतं मन्त्रं तदैव सहसा भवेत्॥ १३/२४॥

मातृस्वरात्ततो देवि गलितामृतधारया।

आप्लाव्य बीजं चार्वङ्गि सर्वावयवसंयुतम्॥ १३/२५॥

तदैव सहसा कृत्वा ललाटे वरुणालये।

वरुणस्य तु मध्ये तु तद्बीजं भावयेत् प्रिये॥ १३/२६॥

दशधा च जपित्वा वै बीजञ्च दशधा स्मरेत्।

तदामृतमयं बीजं सहसा भवति प्रिये॥ १३/२७॥

विष्णुमन्त्रेषु देवेशि चन्द्रबीजेषु भावयेत्।

अन्यत् सर्वेषु मन्त्रेषु भावयेद् वरुणालये॥ १३/२८॥

त्रिंशत्तत्त्वयुतं मन्त्रं तदैव भवति प्रिये।

तत्त्वातीतं स्वधातीतं वाचा विद्यां जपेत् प्रिये॥ १३/२९॥

अनेन विधिहीनञ्च तज्जपं विफलं सदा।

तत्त्वहीनं जपेद्यस्तु विफलं सततं प्रिये॥ १३/३०॥

शोषणं दहनं देवि अमृतं ज्ञानसंज्ञकम्।

एतत् तत्त्वमयं भद्रे शीघ्रं सिद्धिप्रदायकम्॥ १३/३१॥

यो जपेत्तत्त्वरहितं तस्य हानिः पदे पदे।

तस्मात्तत्त्वं शुभाराध्य तस्मान्मन्त्रं जपेत् सुधीः॥ १३/३२॥

अनेन विधिना देवि सर्वतत्त्वमयं मनुम्।

कृष्णमन्त्रेषु रामेषु अवतारवरेषु च॥ १३/३३॥

सौरे गणपतौ देवि शक्तिमन्त्रे स्वयं प्रिये।

शिवमन्त्रेषु चार्वङ्गि अन्यतन्त्रे तथैव च॥ १३/३४॥

त्रिंशत्तत्त्वयुतं कृत्वा मन्त्रं बीजं सुलोचने।

एवमेव विधानेन बीजे जीवत्वमाप्नुयात्॥ १३/३५॥

तस्माद् बीजाद् वरारोहे रामकृष्णादयश्च ये।

उत्पद्यन्ते वरारोहे नान्यथा वरवर्णिनि॥ १३/३६॥

एतन्मन्त्रं सकृत् कृत्वा प्रजपेदनिशं मनुम्।

प्रजपेदनिशं विद्यां शौचाशौचं न चाचरेत्॥ १३/३७॥

मन्त्रे अक्षरबुद्धिः स्याद् गुरौ तु मानवः प्रिये।

देवतायां वरारोहे प्रतिमाबुद्धिर्जायते॥ १३/३८॥

किं तस्य जपपूजायां सर्वं व्यर्थं कदर्थनम्।
इति ते कथितं देवि बीजतत्त्वं सुगोपनम्॥ १३/३९॥
कस्यचिन्नैव वक्तव्यं यदि कल्याणमिच्छसि।
एतज्ज्ञानमविज्ञाय स कथं गुरुतां व्रजेत्॥ १३/४०॥

इति श्रीकामधेनुतन्त्रे देवदेवीसंवादे त्रयोदशः पटलः॥

चतुर्दशः पटलः

श्रीमहादेव उवाच

देवदेव महादेव संसारार्णवतारक।
कृपया कथयेशान वकारतत्त्वमुत्तमम्॥ १४/१॥

श्रीमहादेव उवाच

पूर्वोक्तं चञ्चलापाङ्गि गायत्रीतत्त्वमुत्तमम्।
गायत्री या वरारोहे चतुर्वकारसंयुता॥ १४/२॥
कान्तं शेषवकारञ्च वरुणं हृदि भावय।
यवर्गं वायुबीजञ्च हृदि भावय पार्वति॥ १४/३॥

यवर्गं यत्तु देवेशि वायुबीजं तदुच्यते।

यकारस्य चतुर्थो यो वायुबीजं प्रकीर्तितम्॥ १४/४॥

यवर्गञ्च वायुबीजं मयैतन्निश्चितं प्रिये।

सर्वविद्यासु मन्त्रेषु वरुणं भावय प्रिये॥ १४/५॥

वह्निजायायुतानाञ्च पवर्गं हृदि भावय।

गायत्री संस्थिता देवि पापोच्चाटनकर्मणि॥ १४/६॥

पूर्वोक्तध्यानमार्गेण भावना परिकीर्त्तिता।

ध्यानभेदेन चार्वङ्गि वकारं भावय प्रिये॥ १४/७॥

अधुना संप्रवक्ष्यामि ककारध्यानमुत्तमम्।

विशेषं श्रृणु वक्ष्यामि ककारस्यातिदुर्लभम्॥ १४/८॥

यन्नोक्तमानन्दपटले अधुना कथयामि ते।

तद् ध्यात्वा साधको याति दुर्लभं मोक्षमव्ययम्॥ १४/९॥

येन ध्यानप्रकाशेन मन्त्रं तन्त्रञ्च सिध्यति।

एवं तद्ध्यानमात्रेण शिवतुल्यो भवेन्नरः॥ १४/१०॥

ककारध्यानमात्रेण सर्ववर्णं हि सिध्यति।

ककारभावनाच्चैव सर्वासां भावना भवेत्॥ १४/११॥

तस्मात् सर्वप्रयत्नेन ककारं हृदि भावय।

ओम् प्रातरादित्यसंकाशां सिंहपृष्ठोपरिस्थिताम्॥ १४/१२॥

रक्तपद्मोपविष्टाञ्च रक्तवस्त्रपरीवृताम्।

चतुर्भूजां त्रिनेत्राञ्च पञ्चबाणधनुर्धराम्॥ १४/१३॥

वरदाभयदात्रीञ्च पीनतुङ्गपयोधराम्।

मृणालसदृशाकारचतुर्बाहुपरीवृताम्॥ १४/१४॥

शङ्खकङ्कणकेयूरैरङ्गदैः परिशोभिताम्।

सुगन्धिमल्लिकाहारैः कबरीमध्यशोभिताम्॥ १४/१५॥

त्रिभङ्गललिताकारां चारुचूडाविराजिताम्।

शिखिपुच्छयुतां चूडां नानारत्नसमन्विताम्॥ १४/१६॥

ईषधास्यप्रसन्नास्यां मुक्तारञ्जितनासिकाम्।

माणिक्यकिरणोद्योतदन्तपङ्क्तिविराजिताम्॥ १४/१७॥

पूर्णचन्द्रसमाभासनखपङ्क्तिमनुत्तमाम्।

स्वर्णसूत्रयुतहाररत्नचारुविनिर्मिताम्॥ १४/१८॥

कटाक्षविशिखोद्दीप्तभ्रूलतापरिशोभिताम्।

तीर्थत्रययुतां रम्यां नयनत्रयराजिताम्॥ १४/१९॥

रामरम्भासमाकार - ऊरुद्वयविराजिताम्।

बृहल्लतासुसंयुक्तरत्नकिञ्जल्कशोभिताम्॥ १४/२०॥

अष्टवर्गैः सेविताञ्च अष्टवर्गैः प्रपूजिताम्।

सिन्दूरतिलकोदीप्तामञ्जनाङ्कितलोचनाम्॥ १४/२१॥

ललाटपट्टिकाशुभ्रामर्द्धचन्द्रपरीवृताम्।

ब्रह्मादिदेवतावृन्दैः शिरसि धार्यते च या॥ १४/२२॥

किमाख्यां कामिनीं साक्षात् ककारवररूपिणीम्।

एवं ध्यात्वा वरारोहे प्रजपेद् यदि साधकः॥ १४/२३॥

तदैव सहसा सिद्धिर्जायते तस्य सुन्दरि।

वर्णज्ञानं विना देवि न जपेत् पाशवः क्वचित्॥ १४/२४॥

किं तस्य ध्यानपूजायां पुरश्चर्याशतं शतम्।

किं तस्य जपहोमेन चन्द्रसूर्यस्य पर्वणि॥ १४/२५॥

वर्णज्ञानं विना देवि वैष्णवः शैव एव वा।

एकदा नोच्चरेद्देवि अज्ञात्वा व्र्णदीपनीम्॥ १४/२६॥

सर्वासां मन्त्रविद्यानां दीपनी या प्रकीर्तिता।

सर्वेषां शास्त्रमध्ये तु प्रशस्ता वर्णदीपनी॥ १४/२७॥

शक्तिमन्त्रे तथा सौरे गणेशमर्च्यते सदा।

ज्ञात्वा तन्त्रं प्रकुर्वीत दीक्षां पूजां शुचिस्मिते॥ १४/२८॥

श्रीमहादेव उवाच

रहस्यं तत्र वक्ष्यामि अत्यन्तगोपनं श्रृणु।

यत्कृत्वा साधको याति परमं पदमुत्तमम्॥ १४/२९॥

ललाटे तिलकं कृत्वा चन्दनेन सुगन्धिना।

कर्पूरागुरुकस्तूरीरोचनाकुङ्कुमैः प्रिये॥ १४/३०॥

तिलकं धारयेद् यत्नादेकीकृत्य मनोहरम्।

त्रिकोणं सुन्दरं स्वच्छं तिलकं जनमोहनम्॥ १४/३१॥

एकीकृत्य पृथग् वापि नानावस्तुषु कारयेत्।

राज्यार्थी रक्तवर्णेन मोक्षार्थी श्वेतचन्दनैः॥ १४/३२॥

वश्ये रोचनया देवि तिलकं कारयेत् सुधीः।

मोहने चञ्चलापाङ्गि अगुरुकुङ्कुमादिना॥ १४/३३॥

कृष्णगन्धं वरारोहे शत्रोर्मारणकर्मणि।

ललाटे बाहुमूले च तथा स्कन्धद्वयेषु च॥ १४/३४॥

हृत्पद्मपार्श्वयुगले पृष्ठे नाभौ च सुन्दरि।

ऊरुद्वये गण्डयुग्मे अधः पादद्वयेषु च॥ १४/३५॥

विलिखेद् यत्नतो देवि ककारवर्णमुत्तमम्।

चन्द्रविन्दुयुतं कृत्वा विलिखेद् वरवर्णिनि॥ १४/३६॥

तदैव सहसा देवि विद्या मन्त्रश्च सिध्यति।

मोहयेदखिलान् लोकान् वशयेदिष्टदेवताम्॥ १४/३७॥

इष्टदेवं वशं कृत्वा एकदा प्रजपेद् यदि।

तत्क्षणाच्चञ्चलापाङ्गि देवत्वमुपजायते॥ १४/३८॥

देवत्वं हि विना देवि कुतः पूजा कुतो जपः।

अन्यथा प्रेतवत् पूजा वैष्णवे च विशेषतः॥ १४/३९॥

ललाटे तिलकं कृत्वा रोचनासु शुचिस्मिते।

तन्मध्ये विलिखेद् वर्णं ककारं सुमनोहरम्॥ १४/४०॥

सामान्यमेतत् कथितं तिलकं जनमोहनम्।

एतत्तु तिलकञ्चैव वशयेदपि केशवम्॥ १४/४१॥

जपासनं दशम्यान्तु तदारभ्य च प्रत्यहम्।

एतद्वर्णमविज्ञाय विषये समुपास्महे।
स भ्रष्टः स च पापिष्ठो रौरवं नरकं व्रजेत्॥ १४/४२॥

इति श्रीकामधेनुतन्त्रे देवदेवीसंवादे चतुर्दशः पटलः॥

## पञ्चदशः पटलः

श्रीदेवी उवाच

देवदेव महादेव नीलकण्ठ त्रिलोचन।
हृत्तत्वं कथयेशान यद्यहं तव वल्लभा॥ १५/१॥

श्रीमहादेव उवाच

श्रृणु देवि प्रवक्ष्यामि ज्ञानं परमदुर्लभम्।
येन विज्ञानमात्रेण विष्णुः स्याद् वैष्णवः प्रिये॥ १५/२॥
हृत्पद्मे द्वादशदले स्वविद्यां भावयेत् सुधीः।
ककारं भावयेदादौ वराटोपरि पार्वति॥ १५/३॥
पत्रे पत्रे ततो देवि स्वविद्यां प्रजपेत् सुधीः।
मन्त्राणां प्रथमं बीजं ध्यात्वादौ प्रजपेत् सुधीः॥ १५/४॥

तस्मान्मन्त्रात्ततो देवि जायते देवविग्रहम्।

देवताञ्च ततो ध्यात्वा तन्त्रोक्तध्यानवर्त्मना॥ १५/५॥

ध्यानञ्च त्रिविधं देवि समानफलदायकम्।

कृत्वा ध्यानत्रयं देवि हृत्पद्मे परमेश्वरि॥ १५/६॥

सहस्रदलपद्मान्तर्मध्यस्थाने गुरोर्मुखात्।

स्वविद्यां भावयेद्देवि कोटिविद्युत्समाकृतिम्॥ १५/७॥

भावयेदनिशं भक्त्या सिद्धो भवति तत्क्षणात्।

जायन्ते देवि बीजात्तु रामकृष्णादयश्च ये॥ १५/८॥

ते सर्वे चञ्चलापाङ्गि बीजात्तु प्रभवन्ति वै।

ज्ञात्वा सनातनं तत्त्वं आनन्दपटले स्थितम्॥ १५/९॥

पूजा कार्या च चार्वङ्गि सर्वसिद्धिमयो भवेत्।

इदं सनातनं तत्त्वमज्ञात्वा नरकं व्रजेत्॥ १५/१०॥

शूद्रः शूद्रमुखाच्छ्रुत्वा विद्यां वा मन्त्रमुत्तमम्।

रौरवं नरकं यं यं तं तमाप्नोति निश्चितम्॥ १५/११॥

न शूद्राय मतिं दद्याद् न च शूद्रं कदाचन।

उभयोर्नरकं देवि कोटिकुलसमायुतम्॥ १५/१२॥

अनाचारो द्विजो यस्तु शूद्राणां गुरुरेव सः।

यदि शूद्रो भवेद्देवि सत्यवादी जितेन्द्रियः॥ १५/१३॥

स धर्मे निरतो भूत्वा श्रुत्वा द्विजगुरोर्मुखात्।

सर्वसिद्धिमवाप्नोति शीघ्रं देवमवाप्नुयात्॥ १५/१४॥

यद्देशे विद्यते शूद्रः पातकी मन्त्रविक्रयी।

तद्देशं पतितं मन्ये तस्य राजा च पातकी॥ १५/१५॥

स कथं चञ्चलापाङ्गि जिह्वायां प्रजपेन्मनुम्।

तस्य जिह्वा वरारोहे मूत्रशोणितविड्यथा॥ १५/१६॥

तन्मुखं मूत्रविड्कूपमन्नं विष्ठासमं सदा।

तज्जलं शोणितं साक्षाच्चाण्डालसमजातिषु॥ १५/१७॥

पृथिव्यां यानि तीर्थानि सर्वदेवमयानि वै।

आलोक्य तन्मुखंतीर्थं तत्स्थानं त्यज्य(?)गच्छति॥ १५/१८॥

तीर्थ कोटिः पलायन्ते दृष्ट्वा तन्मुखमण्डलम्।

गङ्गाजलं परित्यज्य द्रुतं स्वस्थानमवाप्नुयात्॥ १५/१९॥

महापातकिनो ये च ब्रह्महत्यादिसंयुताः।

त्रैलोक्यपावनी गङ्गा तान् पुनाति न संशयः॥ १५/२०॥

मन्त्रविक्रयिणः शूद्राः सदा नरकगामिनः।

कलौ तु भारते वर्षे भविष्यन्ति न संशयः॥ १५/२१॥

मन्त्रविक्रयिणः शूद्रा जायन्ते व्याघ्रयोनिषु।

तत्संसर्गश्च यो विप्रश्चर्मकारः स एव हि॥ १५/२२॥

चाण्डालसदृशः सोऽपि स एव वर्णसङ्करः।

स्वधर्मनिरतः सूद्रो विद्यामन्त्रं श्रृणोति यः॥ १५/२३॥

स धन्यः पृथिवीमध्ये स एव वैष्णवोत्तमः।

स शाक्तः शिवभक्तश्च गाणेशः सौर एव च॥

एतत्ते कथितं देवि वर्णज्ञानविनिर्णयम्॥ १५/२४॥

इति श्रीकामधेनुतन्त्रे देवदेवीसंवादे ज्ञानानन्दे
पञ्चदशः पटलः॥

## षोडशः पटलः

श्रीमहादेव उवाच

अपरैकं प्रवक्ष्यामि रहस्यं परमाद्भुतम्।
यत्कृत्वा चञ्चलापाङ्गि रावणाद्या निशाचराः॥ १६/१॥
अवाप्यमतिवृद्धिञ्च त्रैलोक्याधिपतिः प्रभुः।
सांकेतं परमं गुह्यमक्षराणां पृथक् पृथक्॥ १६/२॥
एतत्तत्त्वं विजानाति हरिर्ब्रह्मा पुरन्दरः।
पञ्चाशद्वर्णसङ्केतं सावधानावधारय॥ १६/३॥
अकृत्वा साधको याति रौरवं नरकं व्रजेत्।
रौरवं नरकं याति पुनरावृत्तिदुर्लभम्॥ १६/४॥
विशेषं विष्णुमन्त्रेषु कुर्याद् वैष्णवसत्तमः।
अकृत्वा वैष्णवो याति नरकं कोटिकोटिशः॥ १६/५॥
मासि मासि वरारोहे शनिभौमदिने प्रिये।

प्रातः स्नानं समासाद्य कृत्वा सन्ध्यां समाप्य च॥ १६/६॥

सूर्यायार्घ्यं ततो दद्यात् पादप्रक्षालनाय च।

यागमण्डपमासाद्य भूतशुद्धिं विधाय च॥ १६/७॥

कुर्यान्न्यासं मातृकायाः प्राणायामं ततः परम्।

न्यासानन्यांस्ततः कुर्यात्तन्त्रमार्गेण पार्वति॥ १६/८॥

शुक्लाम्बरधरः स्रग्वी गन्धलिप्तकलेवरः।

रक्तासनं समासाद्य कुशासनमथापि वा॥ १६/९॥

प्रलिप्य ताम्रपात्रेषु सिन्दूरं रक्तचन्दनम्।

विलिख्य मातृकावर्णं ह्यस्मिन् पात्रे पृथक् पृथक्॥ १६/१०॥

अकारादिक्षकारान्तं सबिन्दुं चन्द्रसंयुतम्।

महापद्मान्तरस्थानादानीय ब्रह्मवक्रकम्॥ १६/११॥

वामनासापथेनैव श्वासं पुष्पाञ्जलौ क्षिपेत्।

तत्पुष्पं चञ्चलापाङ्गि कुर्यात् पुष्पस्य सञ्चयम्॥ १६/१२॥

ध्यात्वा तु पूजयेद्देवीं क्रमेणैव पृथक् पृथक्।

गन्धैर्नानाविधैर्देवीं पुष्पैर्नानाविधैस्तथा॥ १६/१३॥

धूपैर्नानाविधैर्देवि दीपैर्नानाविधैस्तथा।

नैवेद्यं विविधं देवि चतुर्विधमयं तथा॥ १६/१४॥

दत्त्वा नानाफलादींश्च पूजयेत् परमेश्वरीम्।

नानापुष्पमयैर्हारैः शुक्रादिगन्धसंयुतम्॥ १६/१५॥

महापद्मवनान्तस्थमष्टोत्तरशतं जपेत्।

प्रजपेद् मातृकावर्णं वर्णे वर्णे पृथक् पृथक्॥ १६/१६॥

प्रतिपद्मे जपेन्मन्त्रं यस्मिन् पद्मे तु यत् स्थितम्।

तस्मिन् पद्मे वनान्तस्थः स्वविद्यां प्रजपेच्छतम्॥ १६/१७॥

सुप्रसन्ना मातृका स्यात् तदैव सहसा प्रिये।

अकृत्वा मातृकापूजां मासि मासि वरानने॥ १६/१८॥

इष्टविद्यां जपेद्यस्तु तस्य हानिं शृणु प्रिये।

चित्रानाडीगता भूत्वा मातृका जगदीश्वरी॥ १६/१९॥

सर्वेषां वैष्णवानाञ्च शाक्तानां वरवर्णिनि।

शैवानाञ्च महेशानि अन्येषाञ्चैव सुन्दरि॥ १६/२०॥

हरन्ति वैष्णवादीनां नान्यथा वचनं मम।

प्रशस्ता मातृकापूजा दीक्षा या मत्त एव हि॥ १६/२१॥

पुरश्चर्या हि चार्वङ्गि पूजनीया पृथक् पृथक्।

माता सा सर्वविद्यानां मन्त्राणाञ्च पृथक् पृथक्॥ १६/२२॥

यस्मादुत्पद्यते विद्या मन्त्रश्च सुरवन्दिते।

तस्मात्तु यत्नतो देवि तासां पूजा विधीयते॥ १६/२३॥

नान्यथा निष्फला पूजा संवत्सरकृता च या।

अनेन विधिना देवि पूजयेद् यदि मातृकाम्॥ १६/२४॥

प्रसन्ना मातृका देवि पुत्रत्वेनानुकल्पते।

रहितो मातृकापूजां जपपूजनतत्परः॥ १६/२५॥

तस्य सर्वं महामाया मातृका जगदीश्वरी।

हरन्ति मन्त्रतेजांसि आयुर्विद्यायशोबलम्॥ १६/२६॥

अपरैकं प्रवक्ष्यामि रहस्यं परमाद्भुतम्।

अनुलोमविलोमेन कथितं शृणु पार्वति॥ १६/२७॥

अनुलोमविलोमञ्च तथैव हि महेश्वरि।

सर्वेषां जपयज्ञानां सहसा फलभाग् भवेत्॥ १६/२८॥

सहसा सिद्धिमाप्नोति सहसा धर्ममाप्नुयात्।

सहसा अर्थमाप्नोति सहसा मोक्षमाप्नुयात्॥ १६/२९॥

पौर्णमास्याममावस्यां मासि मासि प्रयत्नतः।

यः करोति प्रसन्नात्मा स एव श्रीसदाशिवः॥ १६/३०॥

ज्ञात्वा संदीपनीं विद्यां आनन्दपटले स्थिताम्।

अज्ञात्वा दीपनीं विद्यां चतुर्वर्गफलप्रदाम्।

रहस्यमेतदन्यच्च सर्वञ्च विफलं व्रजेत्॥ १६/३१॥

इति श्रीकामधेनुतन्त्रे देवदेवीसंवादे

षोडशः पटलः॥

## सप्तदशः पटलः

श्रीमहादेव उवाच

एतत्तत्त्वमविज्ञाय न भावो जायते प्रिये।
न देवो विद्यते काष्ठे न पाषाणे च पार्वति॥ १७/१॥
भावेषु विद्यते देवि भावो मोक्षस्वरूपधृक्।
दिव्यभावो वीरभावः सदैव सहसा भवेत्॥ १७/२॥
अन्यथा चञ्चलापाङ्गि पशुभावमयः सदा।
स्वभावेन विना देवि कथं सिद्धिर्भवेत् प्रिये॥ १७/३॥
तस्मात् प्रयत्नतो देवि वीरभावमयो भवेत्।
अनेनैव विधानेन मातृकां पूजयेत्तु यः॥ १७/४॥
स एव दिव्यभावः स्याद् वीरभावः स एव हि।
स धनी गुणी लोके मातृकां यस्तु पूजयेत्॥ १७/५॥

श्रीमहादेव उवाच

अपरैकं प्रवक्ष्यामि सामान्यं वरवर्णिनि।
पूर्वोक्तध्यानमाचर्य प्रजपेन्मातृकामनुम्॥ १७/६॥
ककारध्यानमात्रेण सर्वसिद्धिः प्रजायते।
जप्त्वा ककारं चार्वङ्गि सर्वासां भवति प्रियः॥ १७/७॥
सर्वासां मातृकां जप्त्वा ककारं केवलञ्च वा।
ककारं सर्ववर्णानां मूलप्रकृतिरूपिणीम्॥ १७/८॥
तस्मात् प्रयत्नतो देवि ककारं पूजयेत् प्रिये।

प्रत्यहं पूजयेद्देवीं प्रथमं पूजयेत् सुधीः॥ १७/९॥

सर्वासां फलमाप्नोति तदा भावमयो भवेत्।

ककारपूजनाद् भद्रे सर्वासां पूजनं भवेत्॥ १७/१०॥

प्रत्यहं कुरुते यस्तु प्रतिमासि वरानने।

दिव्यवीरः स एव स्यात् सर्वपूजाफलं लभेत्॥ १७/११॥

अकृत्वा चञ्चलापाङ्गि मनसापि च संस्मरेत्।

सर्वपूजामयः सोऽपि सर्वभावमयः सदा॥ १७/१२॥

भावतत्त्वमविज्ञाय विष्णुमन्त्रं कथं जपेत्।

शक्तिमन्त्रं महेशानि स कथं पामरो जपेत्॥ १७/१३॥

शिवमन्त्रञ्च सौरञ्च गाणेशं स कथं जपेत्।

भावतत्त्वं विना देवि प्रजपेद्यदि कोटिधा॥ १७/१४॥

सर्वं तस्य वृथा देवि नरकञ्च पदे पदे।

स कथं चञ्चलापाङ्गि दिव्यवीरगुरुर्भवेत्॥ १७/१५॥

पशुवत् सर्वदा देवि स एव पशुगुरुः प्रिये।

भावतत्त्वेन रहितः स कथं पञ्चमं यजेत्॥ १७/१६॥

वैष्णवस्तु वरारोहे मकारं पञ्चमं यजेत्।

देवताया वरारोहे शरीरं जायते ध्रुवम्॥ १७/१७॥

एवं मन्त्रं प्रवक्ष्यामि आनन्दपटले स्थितम्।

कालीं छिन्नादिविद्याञ्च त्रिंशद्वर्णमयीं सदा॥ १७/१८॥

तदा सिद्धिमयं सोऽपि अन्यथा विफलं सदा।

इष्टध्यानं ततः कृत्वा हृदि मध्ये निरीक्षणम्॥ १७/१९॥

प्रथमं कामिनीं ध्यात्वा प्रफुल्लां तदनन्तरम्।

प्रफुल्लाध्यानमात्रेण जायते देवविग्रहम्॥ १७/२०॥

पफुल्ला जायते देवि यस्य या इष्टदेवता।

तदिष्टं भावयेद् देवि मन्त्रोक्तध्यानवर्त्मना॥ १७/२१॥

देवतायाः शरीरञ्च बीजादुत्पद्यते ध्रुवम्।

मन्त्रस्य प्रथमाद्बीजाज्जायते नगनन्दिनि॥ १७/२२॥

पञ्चाशन्मातृका या सा सर्वा युवतिरूपिणी।

तस्मात्तु युवतीदेहाज्जायते कृष्णविग्रहम्॥ १७/२३॥

रामः पद्मपलाशाक्षः प्रफुल्लो जायते ध्रुवम्।

बीजादुत्पद्यते देवि परं ब्रह्म सनातनम्॥ १७/२४॥

बीजसंयोगमात्रेण शब्दब्रह्म सनातनम्।

अपरैकं प्रवक्ष्यामि रहस्यं परमाद्भुतम्॥ १७/२५॥

पञ्चाशद्वर्णसंकेतं पञ्चाशत्तत्त्वमद्भुतम्।

वर्णतत्त्वं विना देवि प्रजपेद्यदि कोटिधा॥ १७/२६॥

सर्वं तस्य वृथा देवि हानिस्तस्य पदे पदे।

हृत्पद्मे द्वादशदले वराटोपरि कामिनीम्॥ १७/२७॥

ध्यात्वा प्रयत्नतो देवि तद्गर्भे वर्णभावनम्।

अकारादिक्षकारान्तं त्रिकोणमध्यमण्डले॥ १७/२८॥

अनुलोमविलोमे न कामिन्या गर्भपञ्जरे।

एकैकं भावयेद् देवि प्रतिवर्गे पृथक् पृथक्॥ १७/२९॥

सर्वासां देवदेवीनां ककारं सुरपूजिते।

ध्यात्वा प्रयत्नतो देवि अनुलोमविलोमतः॥ १७/३०॥

पञ्चाशत्तत्त्वसङ्केतं पञ्चाशद्वर्णमेव हि।

यः करोति नरो ज्ञात्वा शीघ्रं विद्या प्रसीदति॥ १७/३१॥

किमसाध्यं वरारोहे यस्मै विद्या प्रसीदति।

षट्चक्रे परमेशानि रहस्यं स्थानमुत्तमम्॥ १७/३२॥

सहस्रारे गुरोः पादे पद्मं ध्यात्वा प्रयत्नतः।

पञ्चाशद्वर्णसङ्केतं यः कुर्यान्मानवः प्रिये॥ १७/३३॥

केशवं वशयेद्देवि रहस्येनाधुना ध्रुवम्।

मोहयेच्चञ्चलापाङ्गि रुद्रं कालानलप्रभम्॥ १७/३४॥

सर्वञ्चराचरं विश्वं सहसा मोहमानयेत्।

एतत्ते कथितं देवि वर्णमोहनमुत्तमम्॥ १७/३५॥

अज्ञात्वा मोहनं तत्त्वं प्रजपेद् यदि पार्वति।

तस्मै लोका गन्धर्वाश्च वैरभावं ब्रजन्ति वै॥ १७/३६॥

प्रत्यक्षरमयं देवि कथितं वर्णमोहनम्।

अज्ञात्वा मोहनं तत्त्वं यः कुर्यादन्यमोहनम्॥ १७/३७॥

सर्वं तस्य वृथा देवि नान्यथा तु कदाचन।

एतत्तत्वप्रभावाद्धि अचिरात् सिद्धिमाप्नुयात्॥ १७/३८॥

गर्भमध्ये जपेन्मन्त्रं अनुलोमविलोमतः।

जपित्वा वर्णमेकञ्च स्वस्थानमानयेच्च तम्॥ १७/३९॥

पुनर्वर्णं समाकृष्य कामिनीगर्भमध्यतः।

प्रजपेदक्षरं देवि चन्द्रबिन्दुसमन्वितम्॥ १७/४०॥

पञ्चाशदक्षरञ्चैव भावयेच्च पृथक् पृथक्।

अनेन विधिना देवि यो जपेन्मन्त्रमुत्तमम्॥ १७/४१॥

तस्य शीघ्रं भवेत् सिद्धिरन्यथा विफला भवेत्।

सम्भावं लिखितं देवि यथा भवति अक्षरम्॥ १७/४२॥

तत्तदेव वरारोहे जपपूजा निरर्थकम्।

विशेषमन्त्रं वक्ष्यामि आनन्दपटले स्थितम्॥ १७/४३॥

मन्त्रं श्रीमोहनं नाम पञ्चाशद्वर्णसंज्ञकम्।

ज्ञात्वा यः कुरुते देवि तस्य सिद्धिरदूरतः॥ १७/४४॥

अन्यथा विफलं सर्वं रहस्यं सफलं नहि।

इति श्रीकामधेनुतन्त्रे देवदेवीसंवादे सप्तदशः पटलः॥

## अष्टादशः पटलः

श्रीमहादेव उवाच

अथान्यत् संप्रवक्ष्यामि रहस्यं परमाद्भुतम्।

अज्ञात्वा वैष्णवो याति रौरवं वरवर्णिनि॥ १८/१॥

एवं तत्त्वयुतं देवि यो जपेत् परमेश्वरीम्।

नवतत्त्वमयीं विद्यां यदा जपति पार्वति॥ १८/२॥

तदैव सहसा सिद्धिर्जायते सुरसुन्दरि।

नवतत्त्वयुतं मन्त्रं ज्ञात्वा यः प्रजपेत् सकृत्॥ १८/३॥

तदैव सहसा देवि विष्णुतुल्यो भवेद् ध्रुवम्।

प्रथमं कामिनीं ध्यात्वा हृत्पद्मे कमलेक्षणे॥ १८/४॥

उच्चरेत् प्रथमं बीजं कामिनीं तदनन्तरम्।

पुनर्बीजं द्वितीयञ्च उच्चरेद् यत्नतः सुधीः॥ १८/५॥

कामिनीञ्च ततो ध्यात्वा तृतीयं बीजमुच्चरेत्।

अनेन विधिना देवि कामिनीध्यानसंपुटम्॥ १८/६॥

पुनर्ध्यानं ककारस्य अनुलोमेन पार्वति।

अनुलोमं यथा देवि विलोमञ्च तथा कुरु॥ १८/७॥

एवं क्रमेण देवेशि यद्यदक्षरकं प्रिये।

कृत्वा यत्नाद् वरारोहे सर्वसिद्धीश्वरो भवेत्॥ १८/८॥

सर्वेषां मन्त्रवर्णानां ध्यात्वा ध्यात्वा पृथक् पृथक्।

आद्यन्ते कामिनीं ध्यात्वा शिवशक्तिमयो भवेत्॥ १८/९॥

अथवा चञ्चलापाङ्गि हृत्पद्मे कमलानने।

आदौ मध्ये तथा चान्ते बीजं दत्त्वा जपेत् प्रिये॥ १८/१०॥

तदैव सहसा देवि जायते देवविग्रहम्।

सदा निद्रातुरो मन्त्रः कलिकाले च भारते॥ १८/११॥

रहस्यनेन चार्वङ्गि निद्राभङ्गो तदा भवेत्।

जपेदादौ वरारोहे त्रिवारमनुलोमतः॥ १८/१२॥

विलोमेन त्रिवारञ्च ध्यात्वा जप्त्वा हृदम्बुजे।

अथान्यत् संप्रवक्ष्यामि निद्राभङ्गस्य लक्षणम्॥ १८/१३॥

प्रथमं कामिनीं ध्यात्वा अन्ते च तदनन्तरम्।

दशधा प्रजपेन्मन्त्रं निद्राभङ्गाय पार्वति॥ १८/१४॥

ततस्तु प्रजपेद् देवि प्रफुल्लं विश्वमोहनम्।

रहस्यनेन चार्वङ्गि जायते विष्णुविग्रहम्॥ १८/१५॥

शङ्खचक्रधरं देवं शुद्धतत्त्वात्मकं प्रिये।

पीताम्बरधरं शान्तं प्रसन्नं मुखपङ्कजम्॥ १८/१६॥

आजानुलम्बितकरं वनमालाविराजितम्।

त्रिभङ्गललिताकारं चारुचूडाविभूषितम्॥ १८/१७॥

श्रीवत्सकौस्तुभोद्दीप्तं जायते विष्णुविग्रहम्।

अवतारं स्वयं कृष्णं ललिताञ्जनचिक्कणम्॥ १८/१८॥

गोपीमण्डलमध्यस्थं नानासुखमयं हरिम्।

अथवा जायते देवि तस्माद्बीजाच्छुचिस्मिते॥ १८/१९॥

कामिनीध्यानमात्रेण देवता जायते ध्रुवम्।

रहस्यमेतच्चार्वङ्गि कर्तव्यं हृदि मध्यतः॥ १८/२०॥

रहस्यानाञ्च सर्वेषां सारमेतन्न संशयः।

अथान्यत् संप्रवक्ष्यामि रहस्यं परमाद्भुतम्॥ १८/२१॥

ध्यात्वा तु कामिनीनारीं प्रथमं हृदि मध्यतः।

तद्गर्भे भावयेन्मन्त्रं मनसा नगनन्दिनि॥ १८/२२॥

तद्गर्भे भावयेद् देवं ध्यानमार्गेण सुन्दरि।

पुनश्च कामिनीं ध्यात्वा तस्मादाविर्भवेद् हरिः॥ १८/२३॥

हरिरित्युपलक्षणं देवि सर्वेषामेव निर्मितम्।

निद्रायुक्तं महेशानि विद्यामन्त्रं भवेत् सदा॥ १८/२४॥

तस्मात्तु निद्रारहितं प्रजपेद् यदि एकदा।

जपात् कोटिगुणं भद्रे सहसा लभते ध्रुवम्॥ १८/२५॥

वामबाहोर्यदा वाहस्तदा निद्रातुरो मनुः।

चलते च यदा बाहोर्दक्षिणे वरवर्णिनि॥ १८/२६॥

तदैव चञ्चलापाङ्गि त्यक्तनिद्रः सदा मनुः।

अत एव वरारोहे त्यक्तनिद्रं जपेत् सुधीः॥ १८/२७॥

श्रीदेवी उवाच

पूजाकाले महादेव यदि निद्रातुरो भवेत्।

तत्कथं सिध्यते मन्त्रः किं कर्तव्यं तदा प्रभो॥ १८/२८॥

प्रजपेत् केन विधिना न जपेद्वा वद प्रभो।

श्रीमहादेव उवाच

रहस्यमन्त्रं वक्ष्यामि आनन्दपटले स्थितम्॥ १८/२९॥

द्वादशार्णमयं मन्त्रं निद्राभङ्गस्य दीपनम्।

रहस्यमन्त्रं चार्वङ्गि अज्ञात्वा विफलं भवेत्॥ १८/३०॥

इति श्रीकामधेनुतन्त्रे देवदेवीसंवादे अष्टादशः पटलः॥

ऊनविंशः पटलः

श्रीमहादेव उवाच

सन्देहो नैव कर्तव्यः पूजाकाले शुचिस्मिते।

सहसा कामिनीं ध्यात्वा तुरीयकूटमुच्चरेत्॥ १९/१॥

तदैव सहसा देवि त्यक्तनिद्रो भवेन्मनुः।

प्रजपेद् दशधा देवि हृदये मनसापि वा॥ १९/२॥

पूजाकाले महेशानि संत्यजेद् यदि दक्षिणम्।

प्रायश्चित्तं भवेत्तस्य मन्त्रस्य वरवर्णिनि॥ १९/३॥

प्रायश्चित्तमिदं देवि कृत्वा मन्त्रं जपेद् यदि।

किं तस्य दक्षिणो बाहुस्तस्य निद्रातुरेण किम्॥ १९/४॥

रहस्यमन्त्रं चार्वङ्गि पूजाकाले विनिर्णयम्।

रहस्यमेतच्चार्वङ्गि सर्वनिद्रासु मङ्ग्लम्॥ १९/५॥

वामबाहोर्यदा वायुर्यदा च दक्षिणावहः।

रहस्यमेतच्चार्वङ्गि कृत्वा तु प्रजपेन्मनुम्॥ १९/६॥

तदैव त्यक्तनिद्रा सा विद्या मन्त्रश्च नान्यथा।

योगनिद्रामयी विद्या योगनिद्रामयो मनुः॥ १९/७॥

विशेषमन्त्रं वक्ष्यामि आनन्दपटले स्थितम्।

अष्टाक्षरीं महाविद्यां दीपनीं मोक्षरूपिणीम्॥ १९/८॥

सर्वसिद्धिमयो भूत्वा रहस्यफलमाप्नुयात्।

प्रजपेद् यदि निद्रायां किं तस्य जपपूजने॥ १९/९॥

रहस्यनेन चार्वङ्गि निद्रां त्यक्त्वा सनातनी।

सुषुम्णामध्यमार्गेषु संस्थिता ब्रह्मरूपिणी॥ १९/१०॥

रहस्यमेतच्चार्वङ्गि अज्ञात्वा योजपेन्मनुम्।

तस्य पापमहं वक्ष्ये सावधानावधारय॥ १९/११॥

शूद्रेण लिखितं देवि पटलं यत्तु पठ्यते।

यं यं नरकमाप्नोति तं तं प्राप्नोति मानवः॥ १९/१२॥

द्वात्रिंशत्कोटिमध्येषु नरकेषु क्रमेण हि।

कोटिवंशान् समादाय पच्यन्ते मनुजाधमाः॥ १९/१३॥

विप्रो वा क्षत्रियो वापि वैश्यो वा नगनन्दिनि।

पच्यन्ते नरके घोरे शूद्रस्य लिखनात् प्रिये॥ १९/१४॥

तस्मात्तु शूद्रलिखितं पटलं न जपेत् सुधीः।

तस्मादावश्यकं देवि कामिनीध्यानमुच्चरेत्॥ १९/१५॥

ततः सिद्धो भवेद् देवि विद्या मन्त्रं न चान्यथा।

कामिनीध्यानमात्रेण सर्वसिद्धिमयो भवेत्॥ १९/१६॥

एकेनैव कृतार्थं स्याद् बहुभिः किमुपासते।

तव भक्त्या मयाख्यातं यद्गोप्यं भुवनत्रये॥ १९/१७॥

कामधेनुमिदं ज्ञात्वा यदि पूजां समाचरेत्।

सफला सा भवेत् पूजा जपञ्च सफलं सदा॥ १९/१८॥

अन्यथा प्रेतवद् दीक्षा पूजा च प्रेतवत् सदा।

प्रथमं कामिनीं ध्यात्वा जपपूजां समाचरेत्॥ १९/१९॥

कामधेनोः फलं लब्ध्वा सदाशिवमयो भवेत्।

विष्णुरूपी स एव स्यान्महामाया स एव हि॥ १९/२०॥

शिवमन्त्रे विष्णुमन्त्रे शक्तिमन्त्रे शुचिस्मिते।

कामधेनुमिदं मन्त्रं प्रशस्तं सुरपूजिते॥ १९/२१॥

एतत्ते कथितं देवि सारात्सारं परात्परम्।

यत् कृत्वा साधको याति दुर्लभं मोक्षमन्दिरम्॥ १९/२२॥

विशेषमन्त्रं वक्ष्यामि विद्यां श्रीकामरूपिणीम्।

अज्ञात्वा कामिनीध्यानं सहसा व्यर्थतामियात्॥ १९/२३॥

तद्ध्यानं चञ्चलापाङ्गि आनन्दपटले स्थितम्।

तस्मादवश्यं जप्तव्यं सततं कामदीपनीम्॥ १९/२४॥

इति श्रीकामधेनुतन्त्रे देवदेवीसंवादे ऊनविंशः पटलः॥

## विंशतितमः पटलः

श्रीदेवी उवाच

मन्त्रसमर्पणं तत्त्वं कथ्यतां देवपूजित।

कस्मै समर्पयेन्मन्त्रं वद देव पुरातन॥ २०/१॥

अर्पयेन्मन्त्रतेजांसि देवेश यदि शूलधृक्।

निस्तेजा साधको देव तदैव सहसा भवेत्॥ २०/२॥

किं जप्येन च पूजायां पुरश्चर्येण किं पुनः।

तन्मे वद महाभाग कृपया परमेश्वर॥ २०/३॥

श्रीमहादेव उवाच

साधु पृष्टं त्वया भद्रे अधुना कथयामि ते।

जपित्वा चञ्चलापाङ्गि ध्यायेत् परमकामिनीम्॥ २०/४॥

मन्त्रवर्णं वरारोहे कामिनीगजगह्वरे।

चन्द्रबिन्दुयुतं कृत्वा एकैकं दशधा जपेत्॥ २०/५॥

अनुलोमे यथा देवि विलोमेन तथा कुरु।

अतः परं वरारोहे ज्ञात्वा तु कामिनीं पराम्॥ २०/६॥

वियद्ब्रह्म महेशानि कामिनीं दशधा जपेत्।

कामिनीगर्भमध्ये तु वियद्वह्नियुतं प्रिये॥ २०/७॥

प्रजपेद् दशधा भक्त्या बीजतत्त्वं तदा भवेत्।

ततस्तु कामिनीतत्त्वं ललाटे परिचिन्त्य वै॥ २०/८॥

एवञ्च मातृकास्थाने कामिनीं भावयेत् प्रिये।

पञ्चाशन्मातृकास्थाने प्रजपेन्मातृकामनुम्॥ २०/९॥

बीजस्य ज्योतिःपुञ्जेषु कामिनीं सत्वरं कुरु।

दशधा प्रजपेद् देवि कामिनीबीजमुत्तमम्॥ २०/१०॥

कामिनीगर्भमध्ये तु ज्योतिस्तत्त्वे जपं कुरु।

ज्योतिस्तत्त्वं वरारोहे स्वयं जीवः सनातनः॥ २०/११॥

कामिनीजीवतत्त्वं च कृत्वा वै साधकः सुधीः।

सहस्रारे महापद्मे संस्थाप्य कामिनीं पराम्॥ २०/१२॥

गुह्यातिगुह्यगोप्त्री त्वमिति मन्त्रेण मन्त्रवित्।

देवस्य दक्षिणे हस्ते बाह्यपूजादि चार्पयेत्॥ २०/१३॥

देव्या वामे वरारोहे समर्प्य फलभाग् भवेत्।

जपस्य सर्वतेजांसि देवहस्ते यदि प्रिये॥ २०/१४॥

समर्प्य परमेशानि तेज(स्य? स्वी) साधको भवेत्।

किं तस्य पूजने भद्रे किं जापेन वरानने॥ २०/१५॥

यत्किञ्चिद् दीयते देवि सर्वं ब्रह्मणि लीयते।

विद्यामन्त्रं जपेद् देवि तत्तेज उपजायते॥ २०/१६॥

जीवतत्त्वं विना देवि देवहस्ते कदाचन।

नार्पयेच्चञ्चलापाङ्गि देव्या हस्ते विशेषतः॥ २०/१७॥

तस्मात् प्रयत्नतो देवि जीवतत्त्वं कुरु ध्रुवम्।

जीवतत्त्वं विना देवि यदि देवं समर्पयेत्॥ २०/१८॥

जपञ्च विफलं देवि पूजा च विफला भवेत्।

गन्धपुष्पादिकं यद्यत् सर्वं देवे समर्पयेत्॥ २०/१९॥

जपतत्त्वं वरारोहे सर्वतेजोमयं सदा।

यदि तेजो वरारोहे देव्यै देवाय अर्पयेत्॥ २०/२०॥

यस्तेजः सततं जीवः कथं सिद्धिः प्रजायते।

यस्तेजस्त्वर्पयेद् देवि पुनरागमनं प्रिये॥ २०/२१॥

दुर्लभं चञ्चलापाङ्गि तत्तेजः साधकस्य च।

वृथा भयं वरारोहे कुरुते नरपामरः॥ २०/२२॥

समर्पणमविज्ञाय प्रजपेद् यदि कोटि वा।

देवतातेजमध्ये तु तत्तेजोपविशेत् प्रिये॥ २०/२३॥

भावयेद् बहुयत्नेन यथा सर्वस्वसंपुटम्।

एतत्ते कथितं देवि जीवतत्त्वं सुदुर्लभम्॥ २०/२४॥

यत् कृत्वा साधको याति दुर्लभं ब्रह्मविग्रहम्।

श्रुत्वा तन्त्रमिदं देवि रहस्यफलमाप्नुयात्।

तन्त्रमेतद् वरारोहे शृणुयात् साधकः प्रिये॥ २०/२५॥

इति कामधेनुतन्त्रे देवदेवीसंवादे विंशतितमः पटलः॥

## एकविंशतितमः पटलः

श्रीमहादेव उवाच

चन्द्रसूर्योपरागे च प्रजपेद् यदि कामिनीम्।
तदैव सहसा सिद्धिर्जायते नात्र संशयः॥ २१/१॥
प्रथमं कामिनीं जप्त्वा स्वविद्याः प्रजपेद् यदि।
ततस्तु कामिनीं जप्त्वा सर्वसिद्धीश्वरो भवेत्॥ २१/२॥
अज्ञात्वा कामिनीतत्त्वं न जपेद् ग्रहणे प्रिये।
न जपेद् ग्रहणे भद्रे अज्ञानाद् यदि मूढधीः॥ २१/३॥
सर्वं तस्य वृथा देवि पूर्वधर्मो विनश्यति।
चन्द्रपर्व सूर्यपर्व न विचार्यं कदाचन॥ २१/४॥
सूर्यपर्व वरारोहे न पश्येद् यदि पामरः।
अस्तु तावत् परो धर्मः पूर्वधर्मो विनश्यति॥ २१/५॥
न पश्येद् यदि अज्ञानात् सर्वारिष्टमवाप्नुयात्।
सर्वारिष्टमयः सोऽपि सर्वपापमयः सदा॥ २१/६॥
तस्मादवश्यं कर्तव्यं चन्द्रपर्वनिरीक्षणम्।
सूर्यपर्व तथा देवि निरीक्ष्यमोक्षमाप्नुयात्॥ २१/७॥

अज्ञात्वा यदि मूढात्मा राश्यादिगणनं प्रिये।

विचार्य चञ्चलापाङ्गि न पश्येद् ग्रहणं यदि॥ २१/८॥

पूर्वपूर्वार्जितं पुण्यं तत्क्षणादेव नश्यति।

चन्द्रसूर्योपरागञ्च तस्माद् यत्नान्निरीक्षयेत्॥ २१/९॥

किं तस्य कामिनीं भद्रे रम्याणि च पुनश्च किम्।

ग्रासादिमुक्तिपर्यन्तं जप्त्वा सिद्धीश्वरो भवेत्॥ २१/१०॥

न जपेद् यदि चार्वङ्गि रौरवं नरकं व्रजेत्।

तत्काले चञ्चलापाङ्गि परंब्रह्मस्वरूपिणी॥ २१/११॥

तस्मिन् काले वरारोहे क्षत्रादिजातिभेदतः।

आचण्डालप्रभृतयो द्विजतुल्या भवन्ति हि॥ २१/१२॥

द्विजास्तु चञ्चलापाङ्गि साक्षाद् ब्रह्म न संशयः।

तत्र का गणना देवि चाण्डालानां वरानने॥ २१/१३॥

तस्माद् यत्नेन कर्तव्यं चन्द्रपर्वनिरीक्षणम्।

चन्द्रकोटिगुणं देवि सूर्यो दशगुणं भवेत्॥ २१/१४॥

तत्र यद् यत् कृतं कर्म जपहोमादिकं प्रिये।

अक्षयं तद् भवेद् देवि वचनं मम निश्चितम्॥ २१/१५॥

राश्यादिगणनं त्यक्त्वा यवनैर्दृश्यते यदि।

यवनस्य तथा सिद्धिर्जायते पृथिवीतले॥ २१/१६॥

दीक्षितोऽदीक्षितो वापि दृष्ट्वा स्नानं समाचरेत्।

तदेवमक्षयं स्नानं गङ्गास्नानं भवेत् प्रिये॥ २१/१७॥

विष्ठाकूपस्थितं तोयं गङ्गोदकसमं स्मृतम्।

प्रशस्तं ग्रहणे काले नान्यथा वचनं मम॥ २१/१८॥

षष्ठमासाधिको बालो यदि स्याद् वरवर्णिनि।

ग्रहणे चन्द्रसूर्यस्य तस्य स्नानं प्रशस्यते॥ २१/१९॥

अकृत्वा स्नानदानञ्च सहसा नरकं ब्रजेत्।

स भ्रष्टः स च पापिष्ठः सहसा सूकरः प्रिये॥ २१/२०॥

तस्यान्नमुदकं देवि मूत्रं शोणितवत् प्रिये।

जायते नात्र सन्देहो मम वाक्यं वरानने॥ २१/२१॥

ब्राह्मणोऽब्राह्मणो वापि चन्द्रपर्वणि पार्वति।

चाण्डालप्रभृतिः सर्वो ब्रह्मगोत्रे प्रवर्तते॥ २१/२२॥

ब्रह्मेति नाम सर्वेषां राश्यादिगणनं कुतः।

तस्मात्तु चञ्चलापाङ्गि संकल्पं नैव कारयेत्॥ २१/२३॥

मासपक्षतिथीनां च निमित्तानि च पार्वति।

न विचार्यं वरारोहे ग्रहणे चन्द्रसूर्ययोः॥ २१/२४॥

ग्रासादिमोक्षकाले तु कुतो मासः कुतस्तिथिः।

स कालः परमं ब्रह्म सर्वेषामक्षिगोचरम्॥ २१/२५॥

तत् कथं पामरो लोको राश्यादिगणनं प्रिये।

उपरागं परित्यज्य यश्चान्यं परिचिन्तयेत्॥ २१/२६॥

स भवेद्रौरवे मग्नो ब्रह्मणश्चानुमानतः।

रौरवात् पुनरागत्य पापयोनौ प्रवर्त्तते॥ २१/२७॥

निष्कृतिर्नास्ति चार्वङ्गि तस्यापि च कदाचन।

तस्मात् सर्वं परित्यज्य चन्द्रपर्वनिरीक्षणम्॥ २१/२८॥

चन्द्रपर्वे यथा देवि सूर्यपर्वे तथा प्रिये।

तत्र श्राद्धादिकं त्यक्त्वा विद्यां मन्त्रं जपेत् प्रिये॥ २१/२९॥

अन्यथा नरकं याति पितॄन् सप्त नयत्यधः।

अपरैकं प्रवक्ष्यामि रहस्यं शृणु सुन्दरि॥ २१/३०॥

अकारादिक्षकारान्तं प्रतिपद्मे निरीक्षयेत्।

ततस्तु प्रजपेत् शून्यं चन्द्रबिन्दुकसंयुतम्॥ २१/३१॥

ततस्तु हृदयाकाशे शून्ये ज्योतिर्मयेषु च।

अनुलोमविलोमेन मातृकां प्रजपेत् सुधीः॥ २१/३२॥

ततस्तु साधकश्रेष्ठो वराटोपरि मातृकाम्।

पद्मबीजं यथा देवि वर्णबीजं प्रभावयेत्॥ २१/३३॥

चन्द्रबीजं पुटं कृत्वा जपेद् वर्णं प्रसन्नधीः।

अनुलोमविलोमेन जप्त्वाऽमृतमयो भवेत्॥ २१/३४॥

केवलं कामिनीं ध्यात्वा प्रफुल्लवदनान्तरम्।

बीजादुत्पद्यते देवो देवी वा कमलेक्षणे।

ततस्तु देवतां ध्यात्वा निरीक्ष्य देवविग्रहम्॥ २१/३५॥

इति श्रीकामधेनुतन्त्रे महादेवमहादेवीसंवादे

एकविंशतितमः पटलः॥

## त्रयोविंशतितमः पटलः

(ग्रन्थपातः)

....ष्यां च वरारोहे गङ्गायां स्नानमित्यहम्॥ २२/१०॥

करिष्ये इति सङ्कल्प्य शिरःस्नानं समाचरेत्।

अर्कौ धर्मपयो देवि अमाद्यर्थश्च मूर्तिमान्॥ २२/११॥

श्रवणञ्च महेशानि साक्षात्कामश्च मूर्तिमान्।

व्यतीपाते महेशानि स्वयं मुक्तिः प्रगीयते॥ २२/१२॥

माद्यस्तु चञ्चलापाङ्गि स्वयमेवेश्वरः प्रिये।

एतत्तु कथितं देवि पञ्चयोगं परात्परम्॥ २२/१३॥

कायिकं वाचिकं चैव मानसं पापमुत्कटम्।

तत्सर्वं नाशमायाति गङ्गादर्शनमात्रतः॥ २२/१४॥

कोटिजन्मार्जितं पापं जलस्पर्शाद्विनश्यति।

ततस्तु मौशलं स्नानं कोटिसूर्यग्रहैः समम्॥ २२/१५॥

फलमाप्नोति चार्वङ्गि नात्र कार्या विचारणा।

आचम्य चञ्चलापाङ्गि वासं कुर्याद् विशालधीः॥ २२/१६॥

इति कामधेनुतन्त्रे त्रयोविंशतितमः पटलः।

## चतुर्विंशतितमः पटलः

श्रीमहादेव उवाच

मालारहस्यं योगेन्द्र कथयस्व कृपानिधे।
यदि पुच्छं जपेन्मन्त्रं हरेत्तेजांसि तन्मुखम्॥ २३/१॥
मुखाद् यदि जपेन्मन्त्रं पुच्छं च चञ्चलं भवेत्।
चञ्चले सति चार्वङ्गि तज्जपं निष्फलं भवेत्॥ २३/२॥

श्री-ईश्वर उवाच

पञ्चाशदक्षरं देवि ग्रथितं चित्रनाडिषु।
स्थाप्याक्षराणि पूर्वे वै सुमेरुं पुच्छं तर्पिणम्॥ २३/३॥
सुमेरुं च परिचार्य्य अकरादिकमाज्जपेत्।
मालारहस्यं चार्वङ्गि सुगोप्यं भुवनत्रये॥ २३/४॥
जातिभेदं जीवभेदं सुगोप्यं च यथा प्रिये।
जीवमन्त्रं प्रवक्ष्यामि सावधानावधारय॥ २३/५॥
जीवमन्त्रं जातिमन्त्रं समानमिति निर्णयः।
यथा ध्यानं महेशानि समानं याति जीवने॥ २३/६॥
तद्ध्यानं श्रृणु चार्वङ्गि सावधानावधारय।

द्विभुजां स्वर्णगौराङ्गीं पीतपट्टपरिच्छदाम्॥ २३/७॥

नानाभरणदीप्ताङ्गीं किशोरीं नवयौवनाम्।

कृष्णगन्धप्रलिप्ताङ्गीं सूर्यासनकृताश्रयाम्॥ २३/८॥

तनुदीर्घाङ्गुलीं भास्वन्नखचन्द्रविराजिताम्।

कदम्बकोरकाकारस्तनद्वयविराजिताम्॥ २३/९॥

कर्पूरसकलोन्मिश्रताम्बूलपूरिताननाम्।

कटाक्षलक्षसंयुक्तभ्रूलतापरिशोभिताम्॥ २३/१०॥

सिन्दूरतिलकोद्दीप्तां कुटिलालकमण्डिताम्।

सर्वत्रैवं महेशानि जीवं तिष्ठति सर्वदा॥ २३/११॥

द्विजादीनां च सर्वेषामानन्दपटले स्थिताम्।

एतत्ते कथितं सर्वं कामधेनोर्मतं प्रिये॥ २३/१२॥

इति श्रीकामधेनुतन्त्रे देवीश्वरसंवादे चतुर्विंशतितमः पटलः॥

समाप्तमिदं कामधेनुतन्त्रम्

# भूतशुद्धितन्त्रम्

## ॥अथ प्रथमः पटलः ॥

ॐ देव्युवाच —

कथयेशान ! सर्वज्ञ ! यतोऽहं तव वल्लभा ।
योगं शारीरिकं देव ! यतस्त्वं योगवित्तमः ॥१ ॥
विना येन न सिद्ध्येत् तु जपहोमार्चनादिकम् ।
आत्मज्ञानं महेशान येन त्वं सिद्धिमान् गुरुः ॥२ ॥

भैरव उवाच —

श्रृणु देवि ! प्रवक्ष्यामि सारात् सारतरं परम् ।
स्त्रीस्वभावात् कदा कुत्र न प्रकाश्यं कदाचन ॥३ ॥
अतिप्रेमवशीभूतः कथयामि तवाऽग्रतः ।
गुदोर्ध्वं द्व्यङ्गुलं देवि ! कन्दमूलं खगाण्डवत् ॥४ ॥
तत्र नाड्यः समुत्पन्नाः सहस्त्राणां द्विसप्ततिः ।
तासु नाड्यः प्रधानास्तु तत्र मुख्याश्चतुर्दश ॥५ ॥
तासां मुख्यतमास्तिस्र इडाद्याः परमेश्वरि ।
इडा च पिङ्गला चैव सुषुम्णा चेति तत्क्रमात् ॥ ६ ॥
सुषुम्णा त्रितया ज्ञेया वज्राचित्रान्तरान्विता ।
पञ्च नाड्यः प्रधानास्तु योगिनां साधने हिताः ॥ ७ ॥
मेरोर्वामे इडा दक्षे पिङ्गला चाऽस्थिनि स्थिते ।
पार्श्वयोर्मध्यदेशे च सुषुम्ना त्रिगुणा मता ॥ ८ ॥
पृष्ठदेशं समाश्रित्य प्रोद्गता ब्रह्मरन्ध्रकम् ।
सुषुम्ना चैव वल्ली च मेरोः श्लिष्टाः पुरोगताः ॥ ९ ॥

ग्रीवान्तं प्राप्य गलितं तिर्यग्भूता वराङ्गने ! ।
शङ्खिनीनालमालम्ब्य गता सा ब्रह्मसाधने ॥१० ॥
तदूर्ध्वं द्व्यङ्गुलान्तं च वज्राख्या चित्रिणी तथा ।
त्रिगुणा चातिसूक्ष्माग्रा ललन्ती ललना तथा ॥११ ॥
अतः सुषुम्णा त्रिगुणा ब्रह्मविष्णुशिवात्मिका ।
सत्त्वादित्रिगुणाधारा मता तु ब्रह्मनाडिका ॥१२ ॥
कन्दलग्नोर्ध्वदेशे तु सहस्रच्छदमुत्तमम् ।
श्वेतोदरं तथा श्वेतकिञ्जल्कपरिमण्डितम् ॥१३ ॥
पीतकर्णिकमाश्चर्यमैश्वर्यमजमव्ययम् ।
कमलं सर्वदेवानामाक्रीडं तद्धि पार्वति ! ॥१४ ॥
तदूर्ध्वं त्र्यङ्गुलं गुह्यं मूलाधाराच्चतुर्दलम् ।
रक्तं वशषसोपेतं डाकिन्या समधिष्ठितम् ॥
ध्यानं तस्याः प्रवक्ष्यामि सावधानाऽवधारय ॥१५ ॥
रक्ताक्षीं रक्तवर्णां पशुजनभयकृच्छूलखट्वाङ्गहस्तां
वामे खड्गं दधानां चणकमपि सुधापूरितं चैकवक्त्राम् ।
अत्युग्रामुग्रदंष्ट्रामरिकुलमथनीं पायसान्ने प्रसक्तां
मूलाधारेऽमृतार्थे परिवृतवससां डाकिनीं चिन्तयेत् ताम् ॥१६ ॥
ध्यायेत् तत्र त्रिकोणं च तन्मध्ये विवरं शुचि ।
तत्र ध्यायेत् कुण्डलिनीं प्रसुप्तां भुजगाकृतिम् ॥१७ ॥
संवेष्ट्याधोमुखं लिङ्गं त्रिवृत्त्या पुच्छसंयुताम् ।
विनोद्वेगं विनोत्कण्ठां निजे याति ततोत्थिता ॥१८ ॥
हुताशतापसंविग्नां चोर्ध्वमात्रामृतार्थिनाम् ।
ततो नयेत् पथि प्राज्ञो जीवयोगेन तत्पदम् ॥१९ ॥

तदूर्ध्वं ध्वजमूले तु पङ्कजं षड्दलं परम् ।
स्वाधिष्ठानाख्यमाश्चर्यं सूक्ष्मं सर्वगुणान्वितम् ॥
बभमैर्यवलैर्युक्तमारक्तं राकिणीस्थितम् ॥२० ॥
श्यामां शूलाग्रहस्तां डमरुकरयुतां तीक्ष्णटङ्कं वहन्ती
मुग्रां रक्तां त्रिनेत्रां शुचिकुटिललसच्चोग्रदंष्ट्रां प्रभाति ।
दीप्तां तां देवदेवीं त्रितयकमलगां रक्तधारैकनाथां
शुक्लान्ने सक्तचित्तामभिमतफलदां राकिनीं चिन्तयेत् ताम् ॥२१ । ।
रं बीजं कर्णिकायां तु तदन्ते विष्णुलिङ्गकम् ॥२२ ॥

॥इति श्रीभूतशुद्धितन्त्रे परमरहस्ये प्रथमः पटलः ॥

## ॥अथ द्वितीयः पटलः ॥

तदूर्ध्वं नाभिमूले तु पङ्कजं मणिपूरकम् ।

नीलं दशदलं शुद्धं डादिकान्ताक्षरान्वितम् ॥१ ॥

नीलां देवीं त्रिवक्त्रां त्रिनयनलसितां दंष्ट्रिणीमुग्ररूपां

वज्रं शक्तिं दधानामभयवरकरां दक्षवामक्रमेण ।

ध्यात्वा नाभौ सुपद्मे दशदलविलसत्कर्णिके लाकिनीं तां

मांसाशीं गौरवर्णां भक्तोत्सुकहृदयां विन्यसेत् साधकेन्द्रः ॥२ ॥

कर्णिकायां त्रिकोणस्थं रक्ताभं वह्निबीजकम् ।

तदन्तं चैव लिङ्गं च ध्यात्वा सिद्धीश्वरो भवेत् ॥३ ॥

बाह्योत्तरे मुखं तत्र त्रिकोणत्रयमुत्तमम् ।

हृदि पीतं द्वादशार्णं कादिठान्तार्णसंयुतम् ॥

अनाहताख्यं देवेशि ! पङ्कजं सुमनोहरम् ॥४ ॥

तत्र ध्यायेदिमां तां रविदलकमले कामिनीं वेदहस्तैः

पाशं शूलं वहन्तीं डमरुकमभयं धारिणीं पीतवर्णाम् ।

दध्यन्ने सक्तचित्तां - - - - - काकिनीं मत्तचित्तां

पत्रार्णैः कादिठान्तैः परिवृतवपुषां भावयेद् योगिनीं ताम् ॥ ५ ॥

कर्णिकायां च षट्कोणे वायुबीजयुतं महत् ।

ततः क्रोडे ईशं तदधस्त्रिकोणे बाणलिङ्गकम् ॥ ६ ॥

तन्मध्येऽष्टदलं रक्तं तत्र कल्पतरुं तथा ।

इष्टदेवासनं चारु चन्द्रार्कोपरि राजितम् ॥ ७ ॥

पिङ्गलाभं कण्ठदेशे विशुद्धाख्यं कलादलम् ।

षोडशस्वरसंयुक्तं पङ्कजं व्योमसंस्थितम् ।

हकारं धूम्रवर्णं तु तदङ्के च सदाशिवम् ॥ ८ ॥

देवीं ज्योतिःस्वरूपां त्रिनयनलसितां पञ्चवक्त्राभिरामां
हस्तैश्चापैश्च पाशं सृणिमपि दधतीं पुस्तकं ज्ञानमुद्राम् ।
ध्यायेत् कण्ठस्थपद्मे निखिलपशुजनोम्नादिनीमस्थिसंस्थां
दुग्धान्ने प्रीतियुक्तां मधुमदमुदितां शाकिनीं साधकेन्द्रः ॥९ ॥
कर्णिकायां त्रिकोणस्थं पूर्णचन्द्रं च चिन्तयेत् ।
हेमाभबीजमारूढमाकाशं तत्र चिन्तयेत् ॥१० ॥
शुक्लं सुवेषचरितं ततो देवं सदाशिवम् ।
गिरिजाभिन्नदेहार्धं रौप्यहेमशरीरकम् ॥११ ॥

॥ इति श्रीभूतशुद्धितन्त्रे परमरहस्ये द्वितीयः पटलः ॥

■

## ॥अथ तृतीयः पटलः॥

तदूर्ध्वमाज्ञाचक्रं च द्विदलं धूम्रधूमकम्।
हस्ताभ्यां लसितं शङ्खमालाधिष्ठितमद्भुतम्॥१॥
कर्णिकायां त्रिकोणस्थं मत्तालिप्रणवाकृतिम्।
जलद्वीपनिभं चोर्ध्वं नादरूपं मनोरमम्॥
बिन्दुं मकाररूपं च तदूर्ध्वं मनसालयम्॥२॥
चक्रस्थां शुक्लवर्णां डमरुकरयुतामक्षसूत्रां कपालं
विद्यां मुद्रां दधानां त्रिनयनविलसद्रक्तसद्वक्त्रयुक्ताम्।
हारिद्रान्ने प्रसक्तां मधुमदमुदितां शुक्लमब्जस्वरूपां
देवीं देवेन्द्ररत्नाकरमधुमुदितां भावयेत् शाकिनीं ताम्॥३॥
नादस्थानं तदूर्ध्वे तु नादान्तं च तदूर्ध्वतः।
शक्तिस्थानं तदूर्ध्वे तु समनिं च तदूर्ध्वतः॥४॥
उन्मनीं चिन्तयेदूर्ध्वे ततो ब्रह्मपुरं व्रजेत्।
ब्रह्मरन्ध्रस्थितं शुद्धं सहस्रच्छदमद्भुतम्॥५॥
शङ्खिनीशिखरासीनं प्रफुल्लं भानुतेजसा।
सर्वदेवाधिसंस्थानं गुरुराष्ट्रेण वर्त्मना॥६॥
हृदिस्थां कुञ्चिकां कृत्वा गत्वा तदुपरि शिवे!
कण्ठाद्यं समनुप्राप्य द्वारं सङ्कोचयेद् हठात्॥७॥
उत्थाप्य परमेशानि! परमात्मनि दीपयेत्।
हुताशनं प्रतप्त्वा तु तापसम्भूतमूर्ध्वता॥८॥
प्रसुप्ता नागिनी लिङ्गे योनिवक्त्रे प्रधापयेत्।
ततः प्रचालयेद् वायुं यावन्नाभ्यन्तरेषु च॥९॥
गुरुराष्ट्रेण मार्गेण सकृत् तु कुम्भकेन वै।
आक्रम्यैवं ततो जीवः श्वासत्वेन यथाम्भसः॥१०॥

ऊर्ध्वश्वासेनोर्ध्वमुखान् कोरकान् पङ्कजान् शिवे ! ।
प्रबोधयन् शनैर्भग्नमेरुश्रृङ्गं नयेत् सुधीः ॥११ ॥
गृहीत्वा प्रविसेद् वापि तत्तद्देवस्वरूपिणीम् ।
चित्रिणीं विवरे रक्तभेदपङ्कसमुद्भवाम् ॥१२ ॥
सत्यदक्षे पार्श्वयोश्च नालस्थां वाहयेच्च ताम् ।
पद्मान् नाडीन् मध्यवर्त्मबोधितान् परमेश्वरि ॥१३ ॥
नालं वार्य विशेत् पद्मान् तेन भेदः प्रजायते ।
यथाऽसौ परतिं रश्मिवह्निं नाययति प्रभुः ॥१४ ॥
भेदयित्वा तथा चक्रं स उ जीवं नयेष्टताम् ।
शिरःस्थानि महेशानि ! चिन्तयेद् गुरुमार्गतः ॥१५ ॥
साङ्गत्ये. . . तयोः सामरस्यं विभाव्य च ।
तदुद्भूतरसेनैव तर्पयेद् देहदेवताम् ॥१६ ॥
पाननिष्ठां सदा हृष्टामानन्दाप्लुतविग्रहाम् ।
पुनस्तेन पथा देवि ! आनयेत् कुलगह्वरम् ॥१७ ॥
एवं यो चिन्तयेद् देवि ! योगं चाहरहः सुधीः ।
आजातयाममन्त्रस्थस्तुभ्यं नित्यं न संशयः ॥१८ ॥
एतद्योगं विना देवि ! दीक्षापूजाजपादिकम् ।
निष्फलं नात्र सन्देहो विजस्थे चषकं यथा ॥१९ ॥
एतत् तत्त्वं परं तत्त्वं यो जानाति स एव हि ।
इत्येतत् कथितं तत्त्वं परं पिण्डविशोधनम् ॥
विना येन न सिद्धिः स्यात् सप्तजन्मकृतात् श्रमात् ॥२० ॥
तथाऽन्यत् सम्प्रवक्ष्यामि गुह्याद् गुह्यतरं महत् ।
यज्ज्ञात्वा सिद्धिमाप्नोति षण्मासादपि साधकः ॥२१ ॥

॥ इति श्रीभूतशुद्धितन्त्रे परमहस्ये तृतीयः पटलः ॥

■

## ॥अथ चतुर्थः पटलः॥

भैरव उवाच —

इडायां सञ्चरेच्चन्द्रः पिङ्गलायां च भास्करः।
सुषुम्नायां सदा वह्नी रेतायोगविशेषतः॥१॥

युगपत्त्रक्रमोद्योगमहं वेद्मि न चापरः।
शुद्धचित्तेन सिद्धेन गुरोः प्रियहुतं क्वचित्॥२॥

जानाति परमेशान! गुरुपादप्रसादतः।
त्रिधारां वहते तास्तु यस्तां वेत्ति स सर्ववित्॥३॥

इडायां यमुना देवि! पिङ्गलायां सरस्वती।
सुषुम्नायां वहेद् गङ्गा तासां योगस्त्रिधा भवेत्॥४॥

सङ्गता ध्वजमूलेन विमुक्ता भ्रूवियोगतः।
त्रियोगवेणी सा प्रोक्ता तत्र स्नानं महाफलम्॥५॥

ग्रहणेऽर्कस्य चेन्दोर्वा सुषुम्नायां सदा शुभे।
गत्वा त्रिवेण्यां स्नात्वा च मनःसङ्कल्पपूर्वकम्॥६॥

ग्रासाद् विमुक्तिपर्यन्तं जप्त्वा सिद्धीश्वरो भवेत्।
यस्तु मन्त्री सुषुम्नायां विमले बिन्दुतीर्थके॥७॥

गयाश्राद्धं कृतं तेन शताब्दं नात्र संशयः।
त्रिवेण्यां यस्तु स्नायाद्वै पुष्करे वा द्विजाकुले॥८॥

तस्य पुण्यफलं वक्तुं न शक्नोमि महेश्वरि।
नित्यं स्नात्वा च तीर्थेऽस्मिन् जपपूजादिकं चरेत्॥९॥

मन्त्रसिद्धिर्भवेत् तस्य पुरश्चर्यादिभिर्विना।
सहस्रारे गुरुं ध्यात्वा परमानन्दनिर्वृतः॥
कुर्वीताहरहः कृत्यं न च पापैर्विलिप्यते॥१०॥

सहस्रदलपङ्कजं सकलशीतरश्मिप्रभं
वराभयकराम्बुजं विविधगन्धमालान्वितम् ।
प्रसन्नवदनेक्षणं सकलदेवतारूपिणं
स्मरेत् शिरसि हंसगं तदभिधानपूर्वं गुरुम् ॥११ ॥

एतत् ते कथितं तत्त्वं सुगोप्यं पशुसङ्कटे ।
न कस्मैचित् प्रवक्तव्यं यदीच्छेत् सिद्धिमात्मनः ॥१२ ॥

॥ इति श्रीभूतशुद्धितन्त्रे परमरहस्ये चतुर्थः पटलः ॥

॥ग्रन्थश्च समाप्तः ॥

■

षण्मासान् भूमिकामस्तु स जप्त्वा लभते महीम् ।
राजा शत्रुविनाशाय जपेन्मासाष्टकं पुनः ॥३१॥
रात्रौ वारत्रयञ्चैव नाशयत्येव शास्त्रवान् ।
जपेन्मासत्रयं रात्रौ राजानं वशमानयेत् ॥३२॥
धनार्थी च सुतार्थी च दारार्थी यस्तु मानवः ।
पठेद्वारत्रयं यद्वा वारमेकं तथा निशि ॥३३॥
धनं पुत्रांस्तथा दारान् प्राप्नुयान्नात्र संशयः ।
ध्यानं वक्ष्यामि देवस्य यथा ध्यात्वा पठेन्नरः ॥३४॥
शुद्धस्फटिकसकाशं सहस्रादित्यवर्चसम् ।
अष्टबाहुं त्रिनयनं चतुर्बाहुं द्विबाहुकम् ॥३५॥
भुजङ्गमेखलं देवमग्निवर्णं शिरोरुहम् ।
दिगम्बरं कुमारीशं बटुकाख्यं महाबलम् ॥३६॥
खट्वाङ्गमसिपाशञ्च शूलञ्चैव तथा पुनः ।
डमरुञ्च कपालञ्च वरदं भुजगं तथा ॥३७॥
नीलजीमूतसङ्काशं नीलाञ्जनचयप्रभम् ।
दंष्ट्राकरालवदनं नूपुराङ्गदसङ्कुलम् ॥३८॥
आत्मवर्णसमोपेतसारमेयसमन्वितम् ।
ध्यात्वा जपेत्सुसंहृष्टः सर्वान् कामानवाप्नुयात् ॥३९॥
ॐ करकलितकपालं कुण्डलीदण्डपाणि-
स्तरुणतिमिरनीलो व्यालयज्ञोपवीती ।
क्रतुसमयसपर्याः विघ्नविच्छेदहर्त्ता
जयति बटुकनाथः सिद्धिदः साधकानाम् ॥४०॥

**इति विश्वसारे आपदुद्धारकल्पे बटुकभैरवस्तवराजः समाप्तः**

●

## अथ योगप्रक्रिया

(नियम है कि योगक्रिया विना गुरु के नहीं करनी चाहिये; अतएव यहाँ अनुवाद करने का कोई प्रयोजन नहीं है)

**गौतमीये—**

**गौतम उवाच**

**देवर्षे योगयुक्तात्मन् योगानुभवदर्शक! ।**
**सांख्ययोगविशेषज्ञ कर्मयोगनिषेवक ॥**

विना योगं न सिद्ध्येत्तु कुण्डलीचंक्रमः प्रभो।
मूलपद्मे कुण्डलिनी यावन्निद्रायिता प्रभो!।
तावत् किञ्चिन्न सिद्ध्यन्ते यन्त्रमन्त्रार्चनादिकम्॥
जागर्त्ति यदि सा देवी बहुभिः पुण्यसञ्चयैः।
तदा प्रसादमायान्ति यन्त्रमन्त्रार्चनादयः।
शिववद्विहरेल्लोकेष्वष्टैश्वर्यसमन्वितः।
योगयोगाद्भवेन्मुक्तिर्मन्त्रसिद्धिरखण्डितः॥
सिद्धे मनौ परावाप्तिरिति शास्त्रार्थनिर्णयः।
तस्मात् कार्यं परं योगं कथयस्व मुनीश्वर!।
मुक्तात्मा येन विहरेत् स्वर्गे मर्त्ये रसातले।
जीवन्मुक्तश्च देहान्ते निर्वाणपदमाप्नुयात्॥

नारद उवाच

कथयामि तव स्नेहात् योगयोग्योऽसि गौतम!
संसारोत्तारणे युक्तिर्योगशब्देन कथ्यते।
ऐक्यं जीवात्मनोराहुर्योगं योगविशारदाः।
तव स्नेहात्समाख्याता योगे विघ्नकरास्त्विमे।
कामक्रोधलोभमोहमदमात्सर्यसंज्ञकाः।
योगाङ्गैरेभिर्निर्जित्य योगिनो योगमाप्नुयुः।
यमं नियममासनप्राणायामौ ततः परम्।
प्रत्याहारं धारणाख्यं ध्यानं सार्द्धं समाधिना।
अष्टाङ्गान्याहुरेतानि योगिनो योगसाधने।
अहिंसासत्यमस्त्येयब्रह्मचर्यं दयार्जवम्।
क्षमा धृतिर्मिताहारः शौचञ्चेति यदा दश॥
तपः सन्तोष आस्तिक्यं दानं देवस्य पूजनम्।
सिद्धान्तश्रवणञ्चैव ह्रीमतिश्च जपो हुतम्।
दशैते नियमा प्रोक्ता योगशास्त्रविशारदैः॥
आसननि पूर्वमुक्तानि।
इड़याकर्षयेद्वायुं बाह्यं षोडशमात्रया।
धारयेत्पूरितं योगी चतुःषष्ट्या च मात्रया॥
सुषुम्नामध्यगं सम्यग् द्वात्रिंशन्मात्रया शनैः।
नाड्या पिङ्गलया चैनं रेचयेद्योगवित्तमः॥

प्राणायाममिमं प्राहुर्योगशास्त्रविशारदाः ।
भूयोभूयः क्रमात्तस्य व्यत्ययेन समाचरेत् ॥
मात्रावृद्धिक्रमेणैव सम्यक् द्वादश षोडश ।
प्राणायामो हि द्विविधः सगर्भोऽगर्भ एव च ।
जपध्यानादिभिर्युक्तं सगर्भं तं विदुर्बुधाः ॥
तदपेतं विगर्भञ्च प्राणायामं परे विदुः ।
क्रमादभ्यसतः पुंसो देहे स्वेदोद्गमोऽधमः ।
मध्यमः कम्पसंयुक्तो भूमित्यागः परो मतः ।
उत्तमस्य गुणावाप्तिर्यावच्छीलनमीष्यते ॥
इन्द्रियाणां विचरतां विशेषेषु निरर्गलम् ।
बलादाहरणन्तेभ्यः प्रत्याहारोऽभिधीयते ।
अङ्गुष्ठगुल्फजानूरूसीमनीलिङ्गनाडिषु ।
हृद्ग्रीवाकण्ठदेशेषु लम्बिकायां तथा नसि ॥
भ्रूमध्ये मस्तके मूर्ध्नि द्वादशान्ते यथाविधि ।
धारणं प्राणमरुतो धारणेति निगद्यते ।
समाहितेन मनसा चैतन्यान्तरवर्त्तिना ।
आत्मन्यभीष्टदेवानां ध्यानं ध्यानमिहोच्यते ॥
समत्वभावना नित्यं जीवात्मपरमात्मनोः ।
समाधिमाहुर्मुनयः प्रोक्तमष्टाङ्गलक्षणम् ।
इत्यादिकथितं विप्र कामादिषट्कनाशनम् ।
इदानीं कथये तेऽहं मन्त्रयोगमनुत्तमम् ।
विश्वं शरीरमित्युक्तं पञ्चभूतात्मकं मुने ।
चन्द्रसूर्याग्नितेजोभिर्जीवब्रह्मैक्यरूपकम् ।
तिस्रः कोट्यस्तदर्द्धेन शरीरे नाड्यो मताः ।
तासु मुख्या दश प्रोक्तास्तासु तिस्रो व्यवस्थिताः ।
प्रधाना मेरुदण्डेऽत्र चन्द्रसूर्याग्निरूपिणी ।
इड़ा यामे स्थिता नाडी शुक्ला तु चन्द्ररूपिणी ।
शक्तिरूपा च सा नाडी साक्षादमृतविग्रहा ।
दाडिमी कुसुमप्रख्या विषाख्या मुनिभिः स्मृताः ।
मेरुमध्ये स्थिता या तु मूलादाब्रह्मविग्रहा ।
सर्वतेजोमयी सा तु सुषुम्ना बहुरूपिणी ।
तस्या मध्ये विचित्राख्या अमृतस्राविणी शुभा ॥

सर्वदेवमयी सा तु योगिनां हृदयङ्गमा ।
विसर्गाद्बिन्दुपर्यन्तं व्याप्य तिष्ठति तत्त्वतः ॥
मूलाधारे त्रिकोणाख्ये इच्छाज्ञानक्रियात्मके ।
मध्ये स्वयम्भुलिङ्गन्तु कोटिसूर्यसमप्रभम् ।
तदूर्ध्वे कामबीजन्तु कलशान्तीन्दुनादकम् ।
तदूर्ध्वे तु शिखाकारा कुण्डली ब्रह्मविग्रहा ।
तद्बाह्ये हेमवर्णानां रसवर्णचतुर्दलम् ।
द्रुतहेमसमप्रख्यं पद्मं तत्र विभावयेत् ॥
तदूर्ध्वेऽग्निसमप्रख्यं षड्दलं हीरकप्रभम् ।
वादिलान्तषड्र्णेन युक्ताधिष्ठानसंज्ञकम् ॥
मूलमाधारषट्कानां मूलाधारं ततो विदुः ।
स्वशब्देन परं लिङ्गं स्वाधिष्ठानं ततो विदुः ॥
तदूर्ध्वे नाभिदेशे तु मणिपूरं महत्प्रभम् ।
मेघाभं विद्युदाभञ्च रत्नतेजोमयं ततः ।
तत्पद्मं मणिवद्भिन्नं मणिपूरं तथोच्यते ।
दशभिश्च दलैर्युक्तं डादिफान्ताक्षरान्वितम् ॥
शिवेनाधिष्ठितं पद्मं विश्वलोकैककारणम् ।
तदूर्ध्वेऽनाहतं पद्ममुद्यदादित्यसन्निभम् ॥
कादिठान्ताक्षरैरर्कपत्रैश्च समधिष्ठितम् ।
तन्मध्ये बाणलिङ्गन्तु सूर्यायुतसमप्रभम् ।
शब्दब्रह्ममयं शब्दोऽनाहतस्तत्र दृश्यते ।
तेनानाहतपद्मं तन्मुनिभिः परिकीर्त्तिते ।
आनन्दसदनं तत्तु पुरुषाधिष्ठितं परम् ।
तदूर्ध्वन्तु विशुद्धाख्यं दलं षोडशपङ्कजम् ।
स्वरैः षौडशकैर्युक्तं धूम्रवर्णं महत्प्रभम् ।
विशुद्धिं तनुते यस्माज्जीवस्य हंसलोकनात् ।
विशुद्धिं पद्ममाख्यातं आकाशाख्यं महत्परम् ।
आज्ञाचक्रं तदूर्ध्वे तु आत्मनाधिष्ठितं परम् ।
इक्षवर्णं समायुक्तं द्विदलं शुक्लभास्वरम् ।
आज्ञासंक्रमणं तत्र गुरोराज्ञेति कीर्त्तितम् ।
कैलाशाख्यं तदूर्ध्वे तु बोधनीन्तु तदूर्ध्वतः ।

एवञ्च शिवचक्राणि प्रोक्तानि तव सुव्रते ।
सहस्राराम्बुजं बिन्दुस्थानं तदूर्ध्वमीरितम् ॥
इत्येतत् कथितं सर्वं योगमार्गमनुत्तमम् ।
आदौ पूरकयोगेन स्वाधारे योजयेन्मनः ॥
गुदमेढ्रान्तरे शक्तिं तामाकुञ्च्य प्रबोधयेत् ।
लिङ्गभेदे क्रमेणैव बिन्दुचक्रन्तु प्रापयेत् ॥
शम्भुना तां पराशक्तिमेकीभावं विचिन्तयेत् ।
पाययित्वा च तां शक्तिं कृष्णाख्यां योगसिद्धिदाम् ।
षट्चक्रदेवतास्तत्र सन्तर्प्यामृतधारया ॥
आनयेत्तेन मार्गेण मूलाधारं ततो सुधीः ।
एवमभ्यस्यमानस्य अहन्यहनि मारुतम् ।
जरामरणदुःखाद्यैर्मुच्यते भवबन्धनात् ।
पूर्वोक्तदूषिता मन्त्राः सर्वे सिद्ध्यन्ति नान्यथा ॥
ये गुणाः सन्ति देवस्य पञ्चकृत्यविधायिनः ।
ते गुणाः साधकवरे भवन्त्येव च नान्यथा ।
इत्येतत् कथितं सर्वं वायोर्धारणमुत्तमम् ।
इदानीं धारणाख्यान्तु शृणुष्वावहिता मुने ॥
दिक्कालाद्यनवच्छिन्ने कृष्णे चेतो निधाय च ।
तन्मयो भवति क्षिप्रं जीवब्रह्मैक्ययोजनात् ॥
अथवा समलं चित्तं यदा क्षिप्रं न सिध्यति ।
तदावयवयोगेन योगी योगान् समभ्यसेत् ।
पादाम्भोजे मनो दद्यान्नखकिञ्जल्कचित्रिते ।
जङ्घायुग्मे तथारामकदलीकाण्डशोभिते ।
ऊरूद्वये मत्तहस्तीकरदण्डसमप्रभे ।
गङ्गागर्त्तगभीरे तु नाभौ सिद्धबिले ततः ॥
उदरे वक्षसि तथा हारे श्रीवस्तकौस्तुभे ।
पूर्णचन्द्रायुतप्रख्ये ललाटे चारुकुन्तले ॥
शङ्खचक्रगदाम्भोजे दोर्दण्डपरिमण्डिते ।
सहस्रादित्यसङ्काशे किरीटकुण्डलद्वये ॥
स्थाने नियोजयेन्मन्त्री विशुद्धः शुद्धचेतसा ।
मनो निवेश्य कृष्णे वै तन्मयो भवति ध्रुवम् ॥

**यावन्मनो लयं याति कृष्णे स्वात्मनि चिन्मये।**
**तावदिष्टमनुर्मन्त्री जपहोमं समभ्यसेत्।**
**अतः परं न किञ्चिच्च कृत्यमस्ति तथा हरेः।**
**विदिते परतत्त्वे तु समस्तैर्नियमैरलम्॥**
**तालवृन्तेन किं कार्यं लब्धे मलयमारुते।**
**कृष्ण इत्युपलक्षणम्।**

## ज्ञानयोगः

पृथिव्यप्तेजोवाय्वाकाशात्मकपञ्चभूतात्मकं शरीरम्। तत्र शरीरे सार्द्धकोटित्रयी नाडी सर्वाऽधोमुखी। तासु मुख्या दश—इडा पिङ्गला सुषुम्ना गान्धारी हस्तिजिह्वा पयस्विनी अनुकूला कुहूः शङ्खिनी चेति। तास्वपि मुख्यास्तिस्रः—इड़ा पिङ्गला सुषुम्ना चेति। तासु च मध्ये मेरुदण्डस्य वामे इडा शुक्लवर्णा च रूपिणी अमृतमयी शक्तिरूपा, दक्षिणे पिङ्गला रक्तवर्णा सूर्यरूपिणी विषमयी पुंरूपा। मेरुदण्डमध्ये सुषुम्ना सर्वतेजोमयी सान्ध्रा सोमसूर्याग्निरूपिणी। सा च शिफाभ्यां पादाङ्गुष्ठद्वयं संयुज्याऽधोमुखीभूय शिरसा मूलाधारस्थशिवलिङ्गाग्रपर्यन्तं व्याप्य तिष्ठति। सुषुम्नास्ये तान्यधोमुखानि मूलाधारस्वाधिष्ठानमणिपूरकानाहतविशुद्धाज्ञाख्यानि षट्पद्मानि। यत्तु महीं मूलाधारे कमपि मणिपूरे हुतवहं मितं स्वाधिष्ठाने इत्यादि शङ्कराचार्यपद्ये द्वितीयपद्मस्य मणिपूरत्वकथनम्, तत् स्वाधिष्ठाने कं मणिपूरे हुतवहमिति व्यत्यासान्वयादविरुद्धं छन्दोनुरोधाच्च तथोक्तमिति तत्त्वम्। सुषुम्नामध्ये चित्राख्याऽधोमुखी नाड़ी अमृतस्राविणी सर्वदेवमयी विसर्गाद् बिन्दुपर्यन्तं व्याप्य तिष्ठति। विसर्गः प्रकृतिः। बिन्दुः पुमान्। षण्णां पद्मानां किञ्जल्कमध्ये शक्तिरूपाणि षट् त्रिकोणानि। तेषाञ्च मध्येऽधोमुखानि प्रेतरूपाणि सरन्ध्राणि शिवलिङ्गानि षट्। तेषु मध्ये मूलाधारे स्वयम्भुरनाहते बाणः। आज्ञाचक्रे ईश्वर इति लिङ्गत्रयं प्रधानम्। षट्पत्रेषु ब्रह्मविष्णुरुद्रेश्वरसदाशिवपरमशिवाख्याः षट्शिवाः। ब्रह्मादीनां मूर्त्तयस्तु पूर्वमुक्ताः।

गुदस्थानाद् द्व्यङ्गुलोपरि पीतं पार्थिवं पृथिवीयुक्तं वशषसयुक्तं चतुर्दलाढ्यं डाकिनीदेवताकं मूलाधारपद्मम्। आधारषट्कानां मूलत्वान्मूलाधारमुच्यते। तस्याधस्तेजसं सहस्रदलं रक्तवर्णं तत् किञ्जल्कमध्ये दलमध्ये च शक्तयो विद्युत्प्रभाः। तत्कर्णिकामध्यतश्च कुलदेवी मूलाधारपद्मकर्णिकान्तर्गतत्रिकोणाकारमहायोन्यन्तर्गताधोमुखस्वयम्भुलिङ्गं शङ्खाकारदक्षिणावर्त्तक्रमेण सार्द्धवेष्टनत्रयेणालिङ्ग्याधोमुखतया स्थित्वा सुषुम्नामुखं स्वमुखेनावृत्य स्थिता निद्राणा

प्रसुप्तभुजगाकारा तड़ित्कोटिप्रख्या नीवारशूकवत् तन्वी त्रिकोणस्थानल-शिखोपरि स्थिता मूलविद्यामयी कुलकुण्डलिनी वर्त्तते। ततो हुङ्कारेण त्रिकोण-मण्डलस्थाग्निना कुलकुण्डलिनीं सजागरां विधाय हंस इति मन्त्रेण सुषुम्नावि-वरब्रह्मवर्त्मना चित्रानाड़िकया शिवलिङ्गरन्ध्रद्वारेण लिङ्गान्निष्क्रमया आधार-पङ्कजस्य द्व्यङ्गुलोर्ध्वे आप्ये जलवति विद्युदाभे बभमयरलयुक्तषड्दले सावित्री-ब्रह्मसहिते राकिनीदेवताके लिङ्गमूलस्थे स्वस्य लिङ्गस्याधिष्ठानतया स्वा-धिष्ठाननामके पद्मे तां समानीय तत्रत्यलिङ्गरन्ध्रेण लिङ्गं प्रवेशयित्वा ततो निर्गमय्य स्वाधिष्ठानादेकादशाङ्गुलोपरि तेजसे तेजस्विनि नीलवर्णे डढण-तथदधनपफयुक्तदशदलेन लक्ष्मीनारायणसहिते लाकिनीसहिते लाकिनीदेव-ताके नाभिमूलस्थे मणिपूरके पद्मे समानीय तत्रत्यलिङ्गरन्ध्रेण लिङ्गं प्रवेश-यित्वा ततो निर्गमय्य मणिपूराद् द्वादशाङ्गुलोपरि हृदयस्थे वायव्ये वायुमते रक्तवर्णे कखगघङचछजझञटठयुक्तद्वादशे दले पार्वतीशङ्करान्विते मध्यगत-काकिनीदेवताके कालरात्र्यादिशक्त्यावृत्ते नादोद्यानादियुक्तसूर्यबिम्बसहिते अनाहते पद्मे समानीय तत्रत्यलिङ्गरन्ध्रेण लिङ्गं प्रवेशयित्वा ततो निर्गमय्यानाह-तादेकादशाङ्गुलोपरि कण्ठदेशस्थे आकाशमये आकाशवति धूम्रवर्णे अकारादि-षोडशस्वरयुक्तषोडशदलेन मध्यगतशाकिनीदेवताके विघ्नेश्वरसहिते अमृता-दिशक्तियुक्तबाह्यपत्रे चन्द्रबिम्बसहिते विशुद्धाख्ये पद्मे समानीय तत्रत्य-लिङ्गरन्ध्रेण लिङ्गं प्रवेशयित्वा ततो निर्गमय्य विशुद्धपद्माच्चतुरङ्गुलोपरि भ्रूमध्यस्थे शुक्लवर्णे हक्षयुक्तदलद्वययुक्तहंसवतीक्षमासहितपार्श्वद्वयके मध्यस्थित-हाकिनीदेवताके मालाधिष्ठिते आज्ञाचक्राख्यपद्मे समानीय तत्रत्यलिङ्गरन्ध्रेण लिङ्गं प्रवेशयित्वा ततो निर्गमय्य शिरःस्थितश्वेतसर्ववर्णयुक्तसहस्रदलयुक्ता-रुणकेशराधोमुखकमलकर्णिकान्तर्गतचक्रमण्डलमध्यस्थत्रिकोणान्तर्गतबिम्ब-रूपपरमशिवे महामायायुक्ते तत्रत्यलिङ्गं रन्ध्रद्वारेण तां कुलकुण्डलिनीं योजयेत्।

अयं षट्चक्रभेदप्रकारः। एवंक्रमेण कुलकुण्डलिनीं परमशिवे संयोज्य पुन-स्तेनैव पथा व्युत्क्रमेण पद्मषट्कं विभिद्य शिवशक्तियोगजनितसुधाधारा-प्लावितदेहः सन् पुनस्ताममृतलोलीभूतां मूलाधारमानयेदिति रहस्यार्थः। एतत्प्रमाणन्तु प्रागुक्तेषु समयातन्त्रोक्तान्तर्यागप्रकरणगौतमीयतन्त्रोक्तमन्त्रयोग-प्रकरणशारदातिलकोक्तयोगप्रकरणसमयातन्त्रोक्तकर्मयोगप्रकरणेषु यथायथ-मालोकनीयम्। अधिकञ्च तन्त्रान्तरे—

**ध्यायेदाधारपद्मं स्फुरदरुणचतुःपत्रकं वादिसान्तै-**
**वर्णैः पीतं चतुर्भिर्युतमुपरि लसत्कर्णिकायां त्रिकोणे।**

शङ्खावर्त्तेभसार्द्धत्रिवलययुतया मण्डितं कुण्डलिन्या
बालार्कद्योतिबिम्बं तदुपरि मिलितां डाकिनीदेवताञ्च ॥
स्वाधिष्ठानं षड्दलोपेतमुद्युद्विद्युत्प्रख्यं वादिलान्तैश्च वर्णैः ।
युक्तं सावित्रीसहायं विरिञ्चिं ध्यायेदस्मिन् राकिनीदेवताञ्च ॥
नीलनीरदनिभे दशपत्रे डादिफान्तदशवर्णसमेते ।
चिन्तयेत्कमलया कमलाक्षं लाकिनीञ्च सहितां मणिपूरे ।
अनाहतं सरोरुहं तरुणरक्तसन्ध्यारुण-
प्रभापटलसङ्कुलं स्फुरत्पार्वतीशङ्करम् ।
प्रतिच्छदसमुल्लसद्द्विदलकादिठान्ताक्षरं
तदन्तरेऽपि चिन्तयेस्त्रिदशवन्दितां काकिनीम् ॥
तदुपरि विशुद्धाख्यां कुन्दावदातसमप्रभं
स्वरपरिणतं मध्ये पत्रं समुज्ज्वलकर्णिकम् ।
कमलममलं विद्येश्वरावपीह निवासिनौ स्थिरमति-
रधिष्ठात्रीं देवीं स्मरेदथ शाकिनीम् ।
आज्ञापुरं द्विदलकं शरदिन्दुकान्ति-
ज्योतिर्मयं सलिलपञ्चमहान्तयुक्तम् ।
श्रीबुद्धिशक्तिसहिता गुरुरत्र देवी
हाकिन्यमन्दनिजशक्तिपरप्रभावा ।
सरोरुहमधोमुखं प्रविलसत् सहस्रच्छदं
क्रमादरुणकेशरं प्रकरभास्वरं निर्मलम् ।
तदन्तरपि चिन्तयेदमृतरोचिषे मण्डले
पुराणपुरुषं परं परिगतं महामायया ॥

तथा—

शान्तिरूपं शिवाकारं सर्वाभ्यासनिजालयम् ।
गुदमेढ्रान्तरं देवि पञ्चाङ्गुलसमुच्छ्रितम् ॥
गुदमेकाङ्गुलं मध्ये द्विरङ्गुलविसारिणम् ।
तस्य मूले महायोनिस्त्रिकोणाकाररूपिणी ॥
सुषुम्ना योनिमध्यस्था तस्य मूले महेश्वरि ।
अधःपद्मं सहस्रारं कर्णिकाकेशरान्वितम् ॥
तेजसं रत्नवद्दीप्तं तद्दलस्थितशक्तिभिः ।

प्रतिकिञ्जल्कसंस्थाभिः शक्तिभिश्च युतं प्रिये।
कर्णिकामध्यतो देवि कुलदेवी च संस्थिता॥

तथा—

आधारपङ्कजं पीतं चतुष्पत्रं सुकेशरम्।
अधोमुखञ्च तन्मध्ये कुण्डली परमेश्वरी॥
स्वयम्भुमध्यगा चिन्त्या यादिवर्णैः समावृता।
पार्थिवं पङ्कजं ह्येतत् तस्याधः पङ्कजं परम्॥
तैजसं परमेशानि तन्मध्ये पीठशक्तयः।
निविष्टाहृष्टमनसो विद्युत्पुञ्जनिभाः स्मरेत्॥
तदूर्ध्वकर्णिकामध्ये विद्धि बिम्बं तदूर्ध्वगम्।
पूर्णपीठञ्च तन्मध्ये डाकिनी संस्थिता शिवे॥
आधारपङ्कजस्योर्ध्वे सार्द्धद्व्यङ्गुलकोपरि।
तैजसं साष्टपत्रञ्च पीतकर्णिकया युतम्॥
हृल्लेखा कर्णिकाध्ये स्थिता लङ्काधिदेवता।
एतस्माद् द्व्यङ्गुलादूर्ध्वं स्वाधिष्ठानं षडस्रकम्॥
आप्यञ्च राकिनीशक्तिः पूर्वाभिः शक्तिभिर्वृतम्।
ततश्च भावयेद्देवि नाभिमेकाङ्गुलोपरि॥
तत्पद्मं मणिपूरञ्च दशपत्रञ्च तैजसम्।
लाकिनीमध्यगं तच्च भ्रामर्यादिभिरावृतम्॥
ततो दशाङ्गुलादूर्ध्वे मणिपूराख्यपङ्कजात्।
पङ्कजं काकिनीमध्यं वायव्यं द्वादशारकम्॥
तत्रस्थकालरात्र्यादिशक्तिभिश्च समावृतम्।
तत्रस्थसूर्यबिम्बे च नादोद्यानादिपीठकम्॥
तस्मादेकाङ्गुलादूर्ध्वं विशुद्धं षोडशारकम्।
मध्यगा शाकिनी बाह्यपत्रेषु परमेश्वरि॥
अमृताद्यास्तदाकाशं चन्द्रबिम्बं तदूर्ध्वतः।
कण्ठोर्ध्वे परमेशानि लम्बिका चतुरङ्गुले॥
आज्ञाधारं द्विपत्राब्जः हक्षद्विदलसंयुतम्।
हंसवती क्षमा पार्श्वद्वये मध्ये तु हाकिनी॥

अथात्र समाधिमुखसमाधानार्थमस्मत्प्रपञ्चः—

पृथ्व्याम्बुतेजोमरुद्व्योमरूपैः शरीरं कृतं पञ्चभिर्भाति भूतैः ।
तनौ सार्द्धकोटित्रयी तत्र नाड़ी स्थिताऽधोमुखी तासु मुख्या दश स्युः ॥
इडा पिङ्गलाख्या सुषुम्ना च गान्धारिका हस्तजिह्वा च पूषा च नाड़ी ।
पयस्विन्ययान्यानुकूला कुहूः शङ्खिनी चेति तासाञ्च तिस्रो वरेण्याः ॥
इड़ावामभागे स्थिता शुक्लवर्णाऽमृतात्मेन्दुरूपिण्यसौ शक्तिरूपा ।
तथा दक्षिणे पिङ्गला रक्तवर्णा विषात्मा च पुंरूपिणी सूर्यरूपा ॥
तथा मेरुदण्डस्य मध्ये सुषुम्ना स्थिता सर्वतेजोमयी रन्ध्रयुक्ता ।
असौ सोमसूर्याग्निरूपा शिफाभ्यां पदाङ्गुष्ठयुग्मेषु संयुज्य नम्रा ॥
स्थिताधारपद्मस्थितेशानलिङ्गाग्रपर्यन्तमावृत्य विद्योतमाना ।
अनुस्यूतपङ्केरुहश्रेणिकस्त्रग्गुणस्पर्द्धनार्द्धनावर्द्धमाना ॥
अथाधारकाधिष्ठिते पूरकनाहताख्ये विशुद्धं तथाज्ञापुरञ्च ।
इदं तत्र चक्राभिधाम्भोजषट्कं निबद्धं सुषुम्नाख्ययाऽधोमुखं सत् ॥
सुषुम्नान्तराले सुधास्राविणी सर्वदेवात्मिका नाड़िकान्यास्ति चित्रा ।
विसर्गादियं बिन्दुपर्यन्तमेका परिव्याप्य तिष्ठत्यतीवानुरूपा ॥
तथा षट् सरोजन्मकिञ्जल्कमध्ये त्रिकोणानि षट्शक्तिरूपाणि सन्ति ।
त्रिकोणान्तरे प्रेतरूपाणि रन्ध्रान्विताधोमुखानीशलिङ्गानि षड्वा ॥
अचैतन्यभाजाममीषार्णमध्ये शिवानामुभौ ब्रह्मविष्णूपदिष्टौ ।
परौ चापि रुद्रेश्वराख्यौ सदाशिवनामा परोऽन्यः पराख्यः शिवश्च ॥
गुदस्थानतो द्व्यङ्गुलोर्ध्वे सुपीतं कुमद्वापि सान्तार्णयुतैश्चतुर्भिः ।
दलैः शोभितं पार्थिवं डाकिनीदेवताकं तदाधारपद्मं पुरस्तात् ॥
अधस्तैजसं तस्य रक्तप्रभाकं दलानां सहस्रेण विभ्राजमानम् ।
लसद्विद्युदुद्द्योतितानेकशक्तिस्फुरन्मध्यकिञ्जल्कमेकं सरोजम् ॥
अधःकर्णिकामध्यतः शङ्खभङ्गीक्रमभ्राजिना दक्षिणावर्त्तनेन ।
प्रसुप्ताहिरूपा तड़ित्कोटिकान्तिः समालिङ्ग्य सार्द्धेन वेष्टत्रयेण ॥
तदाधारनामादिमाम्भोजमध्यस्फुरत्कर्णिकान्तर्निविष्टत्रिकोणाकृतिस्पृडम् ।
महायोनिमध्यस्थिताधोमुखोद्यत् स्वयम्भुप्रदख्यातलिङ्गम् ॥
सुषुम्नामुखं स्वाननेनाणुषज्य स्थिताधोमुखी चिन्तनीयैव निद्रावशा ।
पङ्कनीवारशुकातितन्वी परं मूलविद्यामयी कुण्डलिनी ॥
ततस्था त्रिकोणस्थितागनेः शिखाभिः स्मरन् कूर्चबीजं विनिद्रां विदध्यात् ।
अथोऽहंसमुच्चारयंस्तां सुषुम्नान्तरब्रह्ममार्गेण चित्राधमन्या ॥
तदीशानलिङ्गान्तरा रन्ध्रगत्या सुयोगेन निष्क्रामयेल्लिङ्गतोऽस्मात् ।
ततो मूलपद्मादपि द्व्यङ्गुलोर्ध्वे स्फुरद्विद्युदाभे पयस्वत्यथाप्ये ॥

वकारादिलान्तार्णवत्षड्दलाढ्ये समाधित्रिकब्रह्मयुक्ते पुनस्ताम् ।
परं लिङ्गमूलस्थिते राकिनीदैवते वारिजन्मन्याधिष्ठानसंज्ञे ॥
समानीय लैङ्गेन रन्ध्रेण लिङ्गं प्रवेशास्य निष्क्रामयेत्साधकेन्द्रः ॥
अथैकादशानामुपर्यङ्गुलीनां सुनीलप्रभे तैजसे तेजसाढ्ये ।
डकारादिफान्ताक्षरस्तोयराजद्दलोत्फुल्लपत्रान्विते नाभिमूले ॥
सलक्ष्मीकनारायणाधिष्ठिते लाकिनीदैवते पूरकाख्ये सरोजे ।
समानीय तत्रत्यलिङ्गेन तद्वत्समायुज्य तस्मात्पुनश्चालयेत्ताम् ॥
ततोऽस्माद्दलानामुपर्यङ्गुलीनां हृदिस्थे सरायौ च वायव्यरूपे ।
ककारादिठान्ताक्षरास्तोमराजद्दलद्योतमाने सरोजे ॥
जवाकान्तिके पार्वती शङ्कराढ्ये तथा कालरात्र्यादिशक्तिप्रयुक्ते ।
लसत्काकिनीकेऽपि नादादियुक्तस्फुरत्सूर्यबिम्बान्वितेऽनाहताख्ये ॥
समानीयतां तत्र तत्रत्यलिङ्गे समायुज्य निष्क्रामयेद् योगिराजः ।
अथैकादशानामुपर्यङ्गुलीनां नभोनिर्मिते कण्ठदेशस्थिते ताम् ॥
नभस्वत्यकारादिभिः षोडशार्णैः स्फुरद्भिर्दलैः षोडशाङ्कैः समेते ।
लसत्साकिनीदेवताके च विद्येश्वराढ्यो लसच्चन्द्रबिम्बे सुधूम्रे ॥
विशुद्धाख्यपद्मे समानीय तद्वच्छिवे योजयित्वा नयेदूर्ध्वमेनाम् ।
विशुद्धाख्यपद्माच्चतुष्काङ्गुलोर्ध्वे भ्रुवोर्मध्यगे शुक्लवर्णाभिरामे ॥
तथा हक्षराजद्दलद्वन्द्वयुक्तेऽन्तरा हाकिनीदैवते सन्मनस्के ।
क्षमा हंसवत्युल्लसत्पार्श्वयुग्मे समायोजयेत्तामथाज्ञासरोजे ॥
ततस्तत्र लिङ्गे वशी योजयित्वा ततो निर्गमय्य प्रकाशस्वरूपम् ।
शिरस्थे स्थिते सर्ववर्णानुभाजा दलानां सहस्रेण विद्योतमाने ॥
जवास्फुरत्केशरेऽधोमुखेऽब्जे समानीयतां कुण्डलीदीप्यमानाम् ।
तदीयस्फुरत् कर्णिकान्तर्निविष्टक्षपानाथसन्मण्डलादन्तराले ॥
स्थितस्य त्रिकोणस्य मध्ये तु बिन्दुस्वरूपे महामायया भासमाने ।
परस्मिन् शिवलिङ्गरन्ध्रेण देवीं समायोजयेद् योगतः साधकेन्द्रः ॥
अयं साधु षट्चक्रभेदप्रकारो मया वर्णितः शास्त्रयोगीन्द्रयोगात् ।
अनेन प्रकारेण शम्भौ पराख्ये पराद्योजयित्वोत्क्रमेणापि भूयः ॥
विभिद्याजषट्कं यथा तेन मूलाम्बुजे स्थापयेदन्तरानन्दसान्द्राम् ।
परस्मिन् शिवे कुण्डलिन्या सुसङ्गात् समुद्भावितैः शास्त्रपीयूषवर्यैः ॥
कृतान्तर्निषेकः प्रजातप्रमोदः कृती पूतदेहो भवेद्देवतुल्यः ।
त्रिधैवं यदि स्यान्महाकुण्डलिन्यागतामात्रधारापथाम्भःशिवानाम् ।
तदा योनिमुद्रा निरुक्तेयमेषा जपादौ सदा मन्त्रिभिः कल्पनीया ॥

ऊर्ध्वाम्नाये—

योऽन्येभ्यो दर्शनेभ्यश्च भुक्तिं मुक्तिञ्च काङ्क्षति।
स्वप्नलब्धधनेनैव धनवान् स भवेद्यदि॥
शुक्तौ रजतविभ्रान्तिर्जायते पार्वति यथा।
तथान्यदर्शनेभ्यश्च भुक्तिं मुक्तिञ्च कांक्षति॥

यामले—

आगमे सर्वविद्याश्च आगमे सर्वसम्पदः।
आगमे सर्वयज्ञाश्च सर्वशास्त्राणि चागमे।
आगमे देवि वेदा हि आगमाच्च परा गतिः॥

ताराप्रदीपे—

आगमोक्तविधानेन कलौ देवान् यजेत्सुधीः।
न हि देवा प्रसीदन्ति कलौ चान्यविधानतः॥
सत्ये श्रुत्यर्थमार्गः स्यात्त्रेतायां स्मृतिसम्भवः।
द्वापरे तु पुराणोक्तः कलावागमसम्भवः॥

यामले—

येऽभ्यस्यन्ति त्विदं शास्त्रं पठन्ति पाठयन्ति वा।
सिद्धयोऽष्टौ करे तेषां धनधान्याद्धि सूनवः॥
आदृता शिवलोकेषु भोगिनः क्षोभकारकः।
आप्नुवन्ति परं ब्रह्म सर्वशास्त्रविशारदाः॥

तथा—

आगतः शिववक्त्रेभ्यो गतश्च गिरिजामुखम्।
मलत्रयव्यपायत्वादागमस्तेन कथ्यते॥

●

## अथ रामस्तवः

श्रीहनमानुवाच

तिरश्चामपि राजेति समवायं समीयुषाम्।
यथा सुग्रीवमुख्यानां यस्तमुग्रं नमाम्यहम्॥१॥
सकृदेव प्रपन्नाय विशिष्टाभैरयच्छ्रियम्।
विभीषणायाद्धि तटे यस्तं वीरं नमाम्यहम्॥२॥

## ॥ एकादशपटलः ॥[1]

[॥ अथ पंचतत्त्वसृष्टिलयौ ॥]

॥ देव्युवाच ॥

पृथिव्यापस्तथा तेजो[2] वायुराकाशमेव[3] च।

पञ्चतत्त्वगतसृष्टि[:] पुनः कुत्र विलीयते ॥ १ ॥

॥ श्रीशिव उवाच[4] ॥

प्रथमं शुन्यमव्यक्त[ं] द्वितीय[ं] धूममेव च।

तृतीय[ं] तेज उत्पन्नं[5] चतुर्थे आपो[6] जायते ॥ २ ॥

पञ्चमी[7] पृथिवी जाता पञ्चतत्त्वं प्रजायते।

एतत्पंचाधिकारी च त्रिगुणपरमेश्वरः ॥ ३ ॥

---

1 *पाठान्तरम्* – नास्ति पटल एषः - क.।

2 *मूलपाठः* – तेज- ख.।

3 वायुराकासमेव- ख.।

4 श्रीशिवोवाच- ख.।

5 तेजमुत्पन्ना- ख.।

6 आप- ख.।

7 पञ्चमे- ख.।

ब्रह्मा धराधिपश्चैव विष्णु[र्] जराधिपस्तथा।

तेजश्च[8] वायुराकाशं महेशो[9] व्यावृतेश्वरः॥४॥

एतेषां जन्मसंहारं वक्ष्यामि शृणु पार्वति।

क्रम्य व्युक्रमनेनैव[10] शुद्धभावेन भावयेत्॥५॥

पृथिवी[11] लीयते[ऽ]प्सु आपस्तेजसि लीयते।

तेजो विलीयते वायौ[12] वायुराकाशे[13] लीयते॥६॥

एते पंचाधिकाराश्च[14] पञ्च पञ्च प्रजायते।

ब्रह्माण्डं व्यापकं ज्ञेयं पञ्चभूतेन पार्वति[15]॥७॥

मलमस्थि तथा नाडी नख[ं] केश[ः] तथैव च।

पृथ्वीपञ्चगुणा[ः] प्रोक्ता[16] ज्ञानिज्ञानेन भाषितम्॥८॥

कामं क्रोधं च लोभं च विवादं विग्रहस्तथा।

---

8 तेजोच- ख.।

9 महेश्च- ख.।

10 *शक्यपाठः* – 'व्युत्क्रमणेनैव'।

11 *मूलपाठः* – पृथिव्यां- ख.।

12 वायुः- ख.।

13 वायुराकास- ख.।

14 पंचधिकारश्च- ख.।

15 पार्व्वती- ख.।

16 प्रेता- ख.।

आपपञ्चगुणा[:] प्रोक्ता ज्ञानिज्ञानेन भाषितम्॥ ९॥

क्षुधा तृषा तथा निद्रा आलस्यं[17] कुत्थमेव च[18]।

तेजपञ्चगुणा[:] प्रोक्ता ज्ञानिज्ञानेन भाषितम्॥ १०॥

पवनं धारणं चैव निरोधः संकुचिस्तथा।

प्रसवो वायुरूपेण ज्ञानिज्ञानेन भाषितम्॥ ११॥

भयं मोहस्तथा लज्जा[19] रागो[20] द्वेषस्तथैव च।

नभःपञ्चगुणाः[21] प्रोक्ता ज्ञानिज्ञानेन भाषितम्॥ १२॥

[॥ अथ पिण्डे ब्रह्माण्डनिष्ठा॥]

अनन्तभुवनं देवि ब्रह्माण्डं क्रमसंख्यया।

तेषां निष्ठा[ं] प्रवक्ष्यामि श्रृणुष्व सर्वभक्तितः॥ १३॥

---

17 आरस्यं- ख.।

18 *अन्यत्र* – "क्लान्तिरेव च" इति पाठो ज्ञानसङ्कुलीतन्त्रे (२२)।

19 *मूलपाठः* – लर्ज्जा- ख.।

20 राग- ख.।

21 रोभपञ्चगुणा- ख.।

पादद्वये[22] तलं विद्या[द्] वितलं गुल्फदेशके।

सुतलं जद्यदेशेस्तु[23] तलातल[ं] तदूर्ध्वतः[24] ॥ १४॥

महातलम् उरुदेशे गुह्यदेशे रसातलम्।

पातालं[25] कटिरन्ध्रे तु सप्तमं परिकीर्तितम्॥ १५॥

भूर्लोकं नाभिदेशे तु भुवलोकं च कुक्षिणम्[26]।

वामाङ्गे स्वर्गलोकं च महर्लोकं च वक्षसि[27] ॥ १६ ॥

कण्ठस्थे[28] जनलोकं च ततो लोकं ललाटके।

सत्यलोकं भ्रुवोर्मध्ये[29] भुवनानि चतुर्दश[30] ॥ १७॥

[इति चतुर्दशभुवनानि।]

अध[:]स्थितो भवे[न्] मेरुः ऊर्ध्वकोणे[31] च मन्दर[:]।

---

22 पादद्वय- ख.।

23 *शक्यपाठः* – 'जङ्घदेशे तु'।

24 *मूलपाठः* – तदूर्द्धत- ख.।

25 पातारं- ख.।

26 *शक्यपाठः* – 'कक्षिके' (?)।

27 'दक्षसि'।

28 *मूलपाठः* – कण्ठस्ते- ख.।

29 भ्रुवोर्म्मध्य- ख.।

30 चतुर्द्दशः- ख.।

31 ऊर्द्धकोणे- ख.।

कैलाशश्चोत्तरे कोणे दक्षकोणे हिमालयः[32] ॥ १८ ॥

माल्यवान् वामरेखायां दक्षिणे गन्धमादनम्।

निषधश्चोर्ध्वभागेन[33] षडङ्गोपरि[34] पार्श्वगः[35] ॥ १९ ॥

[इति सप्तपर्वताः।]

अस्थिव्यवस्थितो[36] जम्बू मेधः प्लक्षवेवस्थितः[37]।

कुशद्वीप[:] स्थितो मांसे[38] क्रौञ्चद्वीपश्च[39] शोणिते[40] ॥ २० ॥

शाल्मद्वीपं च मज्जायां शाल्मली[41] रोमसञ्चय[:]।

नखे पुष्करद्वीपं च सप्तद्वीपाः प्रकीर्तिता[:] ॥ २१ ॥

[इति सप्तद्वीपाः।]

---

32 हिमालये- ख.।

33 निषधश्चोर्द्धभागेन- ख.।

34 षदाङ्गेपरि- ख.।

35 पार्श्वेगः- ख.।

36 ०वेवस्थितो- ख.।

37 *शक्यपाठः* – 'मेधे प्लक्षो व्यास्थितः'।

38 *मूलपाठः* – मांस- ख.।

39 क्रौञ्चदीपञ्च- ख.।

40 शोनितं- ख.।

41 साल्मली- ख.।

लवणोदकस्तथा[42] मूत्रे क्षीरो क्षीरोदमस्तके।[43]

सुरा दधिरसायां च श्वनित्यक्षुदधि (?) तथा॥२२॥

सर्पिस्सागरः[44] शुक्रे च तत्रापि जलसागर[:]।

दधिसागर[:] श्लेष्मायां सागराः सप्तकीर्तिताः॥२३॥

[इति सप्तसागराः।]

नादस्थाने स्थितः सूर्य[:] तेजस्थाने च चन्द्रमा।

लोचने मङ्गल[:] प्रोक्तो हृदि सोमो व्यवस्थितः[45]॥२४॥

नाभिस्थाने गुरुर्विद्या[46] शुक्रे शुक्रो[47] व्यवस्थितः।

नाभिस्थाने स्थितो मन्दो[48] मुखे राहुर्व्यवस्थितः[49]॥२५॥

राहुस्थाने स्थित[:] केतुः शरीरे ग्रहमण्डलम्[50]।

---

42 लवनोदकस्तथा- ख.।

43 *मूलपाठः* – अत्रैकाक्षरमधिकमस्ति।

*शक्यपाठः* – 'क्षीरोदको मस्तके'।

44 *मूलपाठः* – सर्पिसागर- ख.।

45 सौम्यव्यवस्थिता- ख.।

46 गुरुंविद्या- ख.।

47 शुक्र- ख.।

48 मन्दा- ख.।

49 रद्वव्यवस्थितः- ख.।

50 ०मन्दल- ख.।

सार्द्धत्रयकोटिशु शरीरे[x] सेष (?)[51] उच्यते॥२६॥

[इति नवग्रहाणि।]

नवद्वारं च प्रत्यक्षं शुद्धभाव्येन[52] भावयेत्।

गुदो[53] लिङ्गं च नेत्रं च मुखकर्णे च नासिका[54]।

एतानि नवछिद्राणि[55] द्वाराणि[56] नव उच्यते॥।२७॥

[इति नवद्वाराणि।]

॥देव्युवाच॥

कुत्र वा भावयेच्[57] चन्द्रं सूर्यं वा कुत्र भावयेत्।

मनः[58] च कुत्र स्थाने च देवदेव वदस्व मे॥२८॥

॥शिव उवाच॥

तालुमूले स्थितश्चन्द्रो नाभिमूले दिवाकरः।

---

51 *शक्यपाठः* – 'सार्धत्रयकोटिषु शरीरेषु सैष' (?)।

52 'शुद्धभावेन'।

53 *मूलपाठः* – गुड- ख.।

54 नाशिका- ख.।

55 नवछिद्रानि- ख.।

56 द्वारानि- ख.।

57 भावय- ख.।

58 मनं- ख.।

सूर्यस्ते[59] वसते वह्नि[:][60] चन्द्रास्ते[61] वसते मनः॥२९॥

[इति चन्द्रसूर्यौ]

[॥अथ ब्रह्मज्ञानम्॥]

॥देव्युवाच॥

कथमुत्पद्यते प्राणः कथमुत्पद्यते मनः।

कथमुत्पद्यते वाचा एता सर्वा[62] वदस्व मे॥३०॥

॥शिव उवाच॥

अव्यक्तादुत्पते [प्राणः] प्रणादुत्पद्यते मनः।

मनः सर्वविकारं च वाक्यानि सर्वधातुभिः॥३१॥

॥देव्युवाच॥

को वा करोति कर्माणि को वा लिप्यति पातकैः।

तत् कथय महादेव सर्वज्ञ परमेश्वर॥३२॥

---

59 *अन्यत्र* – "सूर्याग्रे" इति पाठो ज्ञानसङ्कुलीतन्त्रे (३८)।

60 "वायुः" इति पाठो ज्ञानसङ्कुलीतन्त्रे, तत्रैव।

61 "चन्द्राग्रे" इति पाठो ज्ञानसङ्कुलीतन्त्रे, तत्रैव।

62 *शक्यपाठः* – 'एतत् सर्वं'।

॥ शिव उवाच ॥

मनः करोति कर्माणि मनो लिप्यते पातकैः।

मनो[ऽ]पि उन्मनी[63] भूत्वा पापपुण्यै[र्] न लिप्यते ॥ ३३ ॥

॥ देव्युवाच ॥

कस्मिन् स्थाने स्थिता शक्तिः कस्मिन् स्थाने स्थित[:] शिवः।

कस्मिन् स्थाने स्थितः कालो जरा[64] केन प्रजायते ॥ ३४ ॥

॥ शिव उवाच ॥

आधारे वसते शक्तिः नादस्थाने वसते शिव[:]।

कालो[65] व्याप्तपरिज्ञेयो[66] चलश्चित्तो जरा[67] भवेत् ॥ ३५ ॥

॥ देव्युवाच ॥

श्वासं वाक्यं गति[र्] निद्रा[68] प्राणस्य कण्ठमेव च।

क्षुधा तृष्णा[69] च पौरुष्यं कस्माद्दश प्रजायते ॥ ३६ ॥

---

63 *अन्यत्र* – "तन्मया" इति पाठो ज्ञानसङ्कुलीतन्त्रे (४५)।

64 *मूलपाठः* – कालःजाल- ख.।

65 काला- ख.।

66 व्याप्तपरिज्ञेया- ख.।

67 जला- ख.।

68 निंन्द्रा- ख.।

69 तृस्ना- ख.।

॥ शिव उवाच[70] ॥

वायुश्च केवलं सूक्ष्मो[71] विकारेण[72] च लभ्यते।

तन्मयं च कृते भावः[73] मुक्तो भवति तत्क्षणात्॥ ३७॥

॥ देव्युवाच॥

शिव[:] शक्ति[:] कथं देव दशवायुश्च कीदृशः।

कीदृशः[74] परमदेवो[75] देवदेव [व]दस्व मे॥ ३८॥

॥ शिव उवाच[76] ॥

शिव[:] शक्तिश्च वायुश्च सर्वं तिष्ठन्ति वै क्रमम्।

वदामि कारणं देवि श्रृणु त्व[ं][77] कथयामि ते॥ ३९॥

हृदि प्राण[:] स्थितो वायुरपानो गुद[78] उच्यते।

---

70 शिवोवाच- ख.।

71 सूक्ष्म- ख.।

72 विकारेन- ख.।

73 *शक्यपाठः* – 'तन्मयः च कृतो भावो'।

74 *मूलपाठः* – किदृस- ख.।

75 परमंदेव- ख.।

76 शिवोवाच- ख.।

77 *शक्यपाठः* – 'श्रृणुष्व'।

78 *मूलपाठः* – गुड- ख.।

समानो[79] नाभिदेशे[80] तु उदानः[81] कण्ठ उच्यते॥४०॥

व्यान[:] सर्वगतो देवि प्राणपञ्चक्रमोद्भव[:]।

एते पञ्चप्रकारेण प्राणो देहे व्यवस्थित[:]॥४१॥

नागकूर्म[:] कृकश्चैव देवदत्तो धनञ्जय[:]।

उदानः[82] पंचवायुश्च ज्ञायते क्रमयोगत[:]॥४२॥

चैतन्यं देहिनां सर्व[ं] नागवायु[:] करोति च।

कूर्मो वायुप्रयोगेन चक्षुनिमिषो[83] जायते॥४३॥

क्लिकवायुक्षुधाजाता[84] देवदत्तः त्वनन्तयेत्[85]।

धनंजय[:] सशब्देन[86] पूरयेत्[87] सर्वदेहिनाम्॥४४॥

नागश्चये गृहे वायुकूर्मश्च मतिना सह।

कृक[:] करोति कर्माणि देवदत्तो गतो भवेत्॥४५॥

---

79 समारो- ख.।

80 नाभिदेसे- ख.।

81 उदानो- ख.।

82 उदानो- ख.।

83 चक्षुनिमिष- ख.।

84 *शक्यपाठः* – 'कृकवायुः क्षुधाजातः'।

*अन्यत्र* – "कृकरः क्षोभिते चैव" इति पाठो ज्ञानसङ्कुलीतन्त्रे (७२)।

85 "देवदत्तोऽपि जृम्भणे" इति पाठो ज्ञानसङ्कुलीतन्त्रे (७३)।

86 *मूलपाठः* – सशव्देण- ख.।

87 पुरयेत्- ख.।

बुद्धिधर्मा च मध्यक्षमशेषमविलम्बितम् (?)।

नवद्वारं च प्रत्यक्षं दशमं[88] सनि[89] गद्यते॥४६॥

शेषद्वारस्थितं तत्त्वं गुरुवाक्येन लभ्यते।

शक्तिः कुण्डलिनीरूपा[90] त्रयोदशमनाडिका[91]॥४७॥

द्विसप्ततिसाह[x] श्रीशरीरे ज्ञायते ध्रुवम्[92]।

तेषां मध्ये प्रधानाश्च त्रयो दशमनाडिका[:] (?)॥४८॥

इडा च पिङ्गला चैव सुषुम्ना ऊर्ध्वनाडिका[93]।

गान्धारी हस्तिजिह्वा च पूषा प्राणलगास्तथा[94]॥४९॥

यशा[95] चालम्बुषा चैव दक्षमार्गे विलंबिका[:]।

कुरङ्गि[96] शाङ्खिनी नित्या वाममार्गे विलम्बिता[:]॥५०॥

---

88 दसमं- ख.।

89 *अन्यत्र* – "मनो इति पाठो ज्ञानसङ्कुलीतन्त्रे (७३)।

90 *मूलपाठः* – कुण्डलनीरूपा- ख.।

91 *अन्यत्र* – "चैव प्रसूता दशनाडिका" इति पाठो ज्ञानसङ्कुलीतन्त्रे (७३)।

92 "द्विसप्ततिसहस्राणि शरीरे नाडिकाः स्मृताः" इति पाठो ज्ञानसङ्कुलीतन्त्रे (७७)।

93 *मूलपाठः* – ऊर्द्धनाडिका- ख.।

*अन्यत्र* – "चोर्ध्वगामिनी" इति पाठो ज्ञानसङ्कुलीतन्त्रे (७५)।

94 "गान्धारी हस्तिजिह्वा च प्रसवा गमनायता" इति पाठो ज्ञानसङ्कुलीतन्त्रे (७५)।

95 *मूलपाठः* – यसा- ख.।

96 *शक्यपाठः* – 'कुहुश्च'।

एतानि भिद्यते[97] येन स योगी योगलक्षणः[98]।

मम तुल्यो[99] भवत्येव ज्ञान[ं] देवि न संशयः॥५१॥

॥देव्युवाच॥

भूतनाथ महादेव ब्रुहि मे परमेश्वर।

त्रयो देवाः कथं नाम त्रयो भावाश्च कीदृशः[100]॥५२॥

॥शिव उवाच॥

रजोभावस्थितो ब्रह्मा सत्त्वभावस्थितो हरि[:]।

तमोभावस्थितो[101] रुद्र[:] त्रयो देवास्त्रयो गुणाः[102]॥५३॥

एकमूर्ति[:] त्रयो देवा रुद्रविष्णुपितामहाः[103]।

नानाभाव[ं] मनो यस्य तस्य मुक्ति[र्] न विद्यते॥५४॥

अहं श्रुतिरहं कार[:][104] अहं सर्वगत[:] शिव[:]।

---

97 'विन्दते'।

98 *मूलपाठः* – योगलक्षणं- ख.।

99 *शक्यपाठः* – 'तुल्यं'।

100 *मूलपाठः* – किदृश- ख.।

101 *अन्यत्र* – "क्रोधभावस्थितो" इति पाठो ज्ञानसङ्कुलीतन्त्रे (८०)।

102 *मूलपाठः* – देवात्तयोगुण- ख.।

103 ०पितामह- ख.।

104 *शक्यपाठः* – 'कालः'।

अहं ब्रह्मा अहं[105] विष्णु[र्] अहं शुन्यं निरञ्जनम्[106]॥ ५५॥

॥ देव्युवाच॥

सर्वज्ञ सर्वभूतेषु सर्वलोकमहेश्वर।

त्वया च कथितो देव कथं माता पिता कथम्॥ ५६॥

॥ शिव उवाच॥

नवद्वारं च प्रत्यक्षं त्रिशुन्यं पञ्चदेवता[:]।

पञ्चेन्द्रियाः कुतुन्वश्च[107] यत्र प्राणसमे गृहम्॥ ५७॥

अखिलाः[108] चतुरो वेदा[:] सर्वशास्त्र[ं] तथैव च।

सारं च योगिभिः पीतं तक्रं[109] पिबति पण्डित[:]॥ ५८॥

उच्छिष्टं सर्वशास्त्राणि सर्वविद्या मुखे मुखे।

नोच्छिष्टं ब्रह्मणो ज्ञानं व्यक्ताव्यक्तमनोमयम्॥ ५९॥

---

105 *मूलपाठः* – रहं- ख.।

106 निरञ्जणं- ख.।

107 *शक्यपाठः* – 'कुटुम्भश्च' (?)।

108 *मूलपाठः* – अखिरा- ख.।

109 *शक्यपाठः* – 'तक्रं'।

॥ पार्वत्युवाच ॥

य[त्] त्वया कथितं[110] देव न हि जानामि[111] शंकर।

निश्चितं ब्रुहि मे देव मनो यत्र विलीयते[112] ॥ ६० ॥

॥ शिव उवाच[113] ॥

मनः कर्म[114] च वाक्यं च त्रयो यत्र विलीयते[115]।

तत्रस्था परमा शक्ति[:] शृणु देवि सुनिश्चितम् ॥ ६१ ॥

विना निशा[116] यथा निद्रा ब्रह्मज्ञानी[117] स उच्यते।[118]

खगमध्ये[119] खगज्ञानी[120] खमार्गेण यथा खग[म्] ॥ ६२ ॥

तथात्म[नं] योजयेत् सर्वं पञ्चभूतं[121] क्रमेण तु।

---

110 *मूलपाठः* - कथितो- ख.।

111 यानामि- ख.।

112 विलियते- ख.।

113 शिवोवाच- ख.।

114 कर्म्मं- ख.।

115 विलिय्यते- ख.।

116 निसा- ख.।

117 ब्रह्मज्ञानि- ख.।

118 *अन्यत्र* – "विना स्वप्नं यथा निद्रा ब्रह्मज्ञानं तदुच्यते" इति पाठो ज्ञानसङ्कुलीतन्त्रे (५९)।

119 *मूलपाठः* – खगमध्य- ख.।

120 ०ज्ञानि- ख.।

121 पञ्चभूत- ख.।

मृतकस्य यथा निद्रा ब्रह्मज्ञानी[122] स उच्यते॥ ६३॥

बालकस्य यथा भावो[123] मोक्षयोगस्तथा खगः।

य इदं ब्रह्मणो ज्ञानं परमात्मा समाहितः ॥ ६४॥

शिवशक्तिसमासंगः[124] शतसूर्यस्य संगमः[125]।

एको[ऽ]पि ब्रह्मणो ज्ञानं यत्र चिन्ताविना मन[:]॥ ६५॥

एतत्ते कथितं ज्ञान[ं] ब्रह्मज्ञानं सतत्त्वतः।

एतच्च सर्वसंतोष[ं] यत्र चिन्ताविना मन[:]॥ ६६॥

षट्चक्रं षोडशाधारं कोशत्रयं[126] सचक्रकम्।

स्वदेहे ये[127] न जानन्ति कथं ध्यायन्ति योगिनः॥ ६७॥

आकाशमासनं कृत्वा मनो[128] ज्ञात्वा सुनिश्चलम्।

अहमेवमिदं सर्वं सिध्यापश्यंतितसुखम् (?)॥ ६८॥

---

122 ०ज्ञानि- ख.।

123 भाव- ख.।

124 ०संगो- ख.।

125 शंगम- ख.।

126 केशत्रय- ख.।

127 यो- ख.।

128 *मूलपाठः* – मनं- ख.।

काश्यां वाससतां[129] सङ्गो गङ्गंभि (?) शंभुपूजनम्[130]।

ब्रह्मज्ञानसमो धर्मो नान्यो धर्मो[131] विधीयते॥ ६९॥

[॥ अथाह्लादिनीमन्त्रः॥]

अथ आह्लादिनीमन्त्रं श्रृणु मत्प्राणवल्लभे।

यस्योच्चारणमात्रेण कालिका सुप्रसीदति॥ ७०॥

कामबीजं कूर्चबीजं[132] मेघबीजं मतः परम्।

प्राणदं[133] रावबीजं पञ्चबीजानि चोद्धरेत्॥ ७१॥

सप्तवारं जपेन्मन्त्रं बीजं पञ्चपुटीकृतम्।

एवं कृते महेशानि मन्त्रसिद्धिरनुत्तमा॥ ७२॥

न कुल्लुकां[134] जपेद्देवि विना निर्वाणं[135] न सेतुकम्।

---

129 *शक्यपाठः* – 'वाससतः'।

130 *मूलपाठः* – भुपूजनं- ख.।

131 धर्म्म- ख.।

132 कुर्च्चवीजं- ख.।

133 प्रशादं- ख.।

134 कुलुकां- ख.।

135 विननिर्व्वाण- ख.।

# ॥ दशमपटलः ॥

[॥ अथ योगिनीहृदयसारः ॥]

॥ श्रीदेव्युवाच ॥

अथैतद्रससर्वत्वां[1] तत्त्वाचार[ं] गणाम्बिके।

श्रुतं सर्वमशेषेण विधान[ं] रसनायके॥ १॥

दुर्भगानां[2] च तन्नाथ[3] न सिध्यति[4] कदाचन।

अथ सौभाग्ये हेत्वर्थे नराणां हितकाम्यया[5]॥ २॥ [6]

तस्मात् सङ्गता[7] या सा महात्रिपुरसुन्दरी।

---

[1] *पाठान्तरम्* – अथेतद्रससर्वत्वां- क.।

*शक्यपाठः* – 'अथैतद्रसं सर्वत्वात्'।

[2] *मूलपाठः* – दुर्द्धगानां- क., ख.।

[3] *पाठान्तरम्* – तन्नाथं- क.।

[4] *मूलपाठः* – सिष्यंति - क., ख.।

[5] हितमाम्यया- ख.।

[6] *अन्यत्र* – श्रीशिवोऽहंसागरग्रन्थमालायां प्रकाशिते श्रीमद्राजानकजयरथविरचिते वामकेश्वरीमतविवरणे उद्धृते श्रीरसमहोदधौ (श्रीरस०वाम०, पृ० ५६) एषोऽधिकपाठोऽस्ति- "महाकामेश्वरस्योक्तं विधानं भैरव त्वया"।

[7] *पाठान्तरम्* – तस्यात्सद्गता- ख.।

*अन्यत्र* – "यस्योत्सङ्गता" इति पाठः श्रीरस०वाम०, पृ० ५६।

तस्याः संसूचितं[8] किञ्चिन्मन्त्रध्यानादिकं[9] त्वया ॥ ३ ॥

पृथागाराध्यते[10] सा तु यथा भाग्यार्थिभिर्नरैः[11]।

तथा कथय मे देव[12] कृपया प्राणिनां प्रभो ॥ ४ ॥

यथा चक्र[ं] तथा पूजा अङ्गपूजा यथा स्थिता[13]।

मूलविद्या यथा देवी परिवारसमन्विता[14] ॥ ५ ॥

तथा सर्व[ं] त्वया देव शास्त्र[ं] वै परमेश्वर[15]।

सर्वमेव समाख्यातं[16] किन्तु जन्मकटं[17] नकि[म्] ॥ ६ ॥

अतस्तत्प्रकटीकर्त्तुं[18] कथ्यतां[19] परमाद्भुतम्[20]।

---

[8] *मूलपाठः* – संसुचितं- क., ख.।

[9] *पाठान्तरम्* – ०धानादिकं - ख.।

[10] पृथागारायेते- क.।

[11] *मूलपाठः* – भाग्यार्थिभिन्नरैः- क., भाग्यार्थिसिन्नरैः- ख.।

[12] देवं- क., ख.।

[13] *पाठान्तरम्* – स्मिता- ख.।

[14] *मूलपाठः* – ०समन्वितः- क., ख.।

[15] परमेश्वरः- क., ख.।

[16] समाख्याता- क., ख.।

[17] *पाठान्तरम्* – जन्युकटं- ख.।

[18] *शक्यपाठः* – 'अतस्तत्प्रकटीकृत्य'।

[19] *पाठान्तरम्* – कंथ्यतां- ख.।

[20] परमाद्भूतं- ख.।

एवमाकर्ण्य[21] देवेश[22] पार्वत्या कथितं[23] वचा[24]।

प्रत्युवाच महावाक्यं सर्वसन्देहशान्तये[25]॥७॥

॥श्रीभैरव उवाच[26]॥

शृणु देवि परं गुह्यं योगिनीहृदयं परम्।

कर्णात्कर्णोपदेशेन[27] संचरत्यवनीतले[28]॥८॥

एतज्ज्ञात्वा वरारोहे सर्वविघ्नैर्न बाध्यते।

चक्रसंकेतको मन्त्रो मुद्रासंकेतकस्तथा॥९॥[29]

त्रिविधः[30] त्रिपुरादेव्याः संकेतः[31] परमेश्वरि[32]।

---

21 एवमाकर्स्मे- ख.।

22 *मूलपाठः* – देवेशः- क., ख.।

23 *पाठान्तरम्* – कथि[x]- ख.।

24 *मूलपाठः* – वच- क., ख.।

25 ०सान्तय- क., ख.।

26 श्रीभैरवोवाच- क., ख.।

27 कर्णात्कर्णपदेशेन- क., ख.।

28 संचरंत्यवसीतले- क., ख.।

*अन्यत्र* – योगिनीहृदये (१।३) "संप्राप्तमवनीतलम्" इति पाठः।

29 "एतज्ज्ञात्वा वरारोहे सद्यः खेचरतां व्रजेत्॥ चक्रसंकेतको मन्त्रपूजासङ्केतकौ तथा" इति पाठो योगिनीहृदये (१।५"-६')।

30 *मूलपाठः* – त्रिविधा- क., ख.।

31 संकेताः- क., ख.।

32 परमेश्वरी- क., ख.।

यावदेतन्न[33] जानाति संकेतं{ऽ} त्रयमुत्तमम्॥ १०॥

न[34] तावत्त्रिपुराचक्रे परमाज्ञाधरो भवेत्॥

श्रृणु व्याख्याक्रमं गुह्यं पारंपर्यक्रमागतम्॥ ११॥

येन ज्ञातेन गुरवो न च[35] गुह्यन्ति कुत्रचित्।

[अतो मन्त्रार्थः-]

भावार्थः सम्प्रदायार्थो निगर्भार्थश्च कौलिकः॥ १२॥

तथा सर्वरहस्यार्थो[36] महातत्त्वार्थ एव च।

एवमेतन्महादेवि[37] षड्विधं परमेश्वरि[38]॥ १३॥

व्याख्यातं सर्वतन्त्राणां पारम्पर्येण[39] लभ्यते।

एक एव हि भावार्थो बाह्यशास्त्रेषु[40] लभ्यते॥ १४॥

---

33 यावद्देवन्न- क., ख.।

34 *पाठान्तरम्* – "न" इत्यक्षरं नास्ति- क.।

35 *मूलपाठः* – गुरवोरेव- क., गुरवोनव- ख.।

36 *पाठान्तरम्* – सर्वरहस्यार्था- क.।

37 *मूलपाठः* – ०देवी- क., ख.।

38 षड्विधाम्पारमेश्वरी- क., ख.।

39 सर्वतंत्रेनाम्मारंपच्यण- क., सर्व्वतन्त्रनाम्पारंपच्यण- ख.।

40 वाह्यसास्त्रोषु- क., ख.।

शब्दालङ्कारसारोक्तिसंस्काररचनात्मकः[41]।

भावार्थः सम्प्रदायार्थो द्विकशास्त्रेषु[42] यथोच्यते[43]॥ १५॥[44]

भावार्थः[45] सम्प्रदायार्थो निगर्भार्थसमन्वितः।

व्याख्यातं त्रिकतन्त्रेषु[46] त्रिविधं गौरि लभेते॥ १६॥[47]

शिवबाह्यार्थसम्वादी[48] महागुरुमुखे स्थितः।

भावार्थः सम्प्रदायार्थे निगर्भार्थश्च[49] कौलिकः॥ १७॥

महाचतुष्कतन्त्रेषु[50] व्याख्यातं स्याच्चतुर्विधम्।

भावार्थः संप्रदायार्थो निगर्भार्थश्च कौलिकः॥ १८॥

---

41 शव्दरङ्कारसारोक्तिसस्काररवनात्मकः- क., शव्दरद्धारसारोक्तिसस्काररवनात्मकः - ख.।

42 दिकशास्त्रेषु- क., ख.।

*अन्यत्र* – "त्रिकशास्त्रेषु" इति पाठः श्रीरस०वाम०, पृ० १०९।

43 *पाठान्तरम्* – पथोच्यते- ख.।

44 *मूलपाठः* – अत्र एकाक्षरमधिकमस्ति- क., ख.।

अतः "यथोच्यते"स्थाने "विद्यते" इति पठितुं शक्यते।

*अन्यत्र* – "विद्यते" इति पाठः श्रीरस०वाम०, पृ० १०९।

45 *मूलपाठः* – भावार्थो- क., ख.।

46 *पाठान्तरम्* – त्रिकेतन्त्रेषु - क.।

47 *अन्यत्र* – "व्याख्यानं त्रिविधं देवि त्रिकशास्त्रेषु लभ्यते" इत्यर्धश्लोकपाठः श्रीरस०वाम०, पृ० १०९।

48 *पाठान्तरम्* – शिवावाह्यार्थेसम्वादी- ख.।

*अन्यत्र* – "शिवबाह्यार्थसम्वादे" इति पाठः श्रीरस०वाम०, पृ० १०९।

49 *मूलपाठः* – निगर्भर्थश्च – क., ख.।

50 महाचतुस्कतन्त्रैषुः- क., ख.।

तथा सर्वरहस्यार्थ[:] तन्त्रे[ऽ]थ पञ्चरूपिणि[51]।

महाज्ञानार्णवे दृष्टं षड्कतन्त्रेषु पार्वति॥ १९॥ [52]

अक्षरार्थो हि भावार्थः केवलः[53] परमेश्वरि[54]।

सम्प्रदायो महाबोधरूपो[55] गुरुमुखे स्थितः॥ २०॥

निगर्भो[56] हि महादेवि रूपेणार्थावभासकः[57]।

निस्तरंगो निराभासः संकल्पस्थितिपूर्वकः॥ २१॥ [58]

रहस्यार्थो महागुप्तो[59] दिव्यार्थस्थितिपूर्वकः[60]। [61]

---

51 *अन्यत्र* – "सर्वरहस्यार्थस्तन्त्राणां पञ्चरूपिणम्" इति पाठः श्रीरस०वाम०, पृ० ११०।

52 "महाज्ञानर्णवे दृष्टः शङ्का तत्र न पार्वति॥" इति पाठो योगिनीहृदये (२।७७")।

53 *पाठान्तरम्* – - केचलः- ख.।

54 *मूलपाठः* – परमेश्वरी- क., ख.।

55 *पाठान्तरम्* – - महावोधरुरो- क.।

56 *मूलपाठः* – निगर्द्धा- क., निगर्द्धो- ख.।

57 *पाठान्तरम्* – रूपेणार्थाचभासक- ख.।

*अन्यत्र* – "शिवगुर्वात्मगोचरः" इति पाठः श्रीरस०वाम०, पृ० १०९।

58 "निरस्तसर्वसंकल्पविकल्पस्थितिपूर्वकः" इति पाठो योगिनीहृदये (२।७६"), श्रीरस०वाम०, पृ० १०९।

59 *पाठान्तरम्* – महागुफो- क.।

60 ०पूर्वक- क.।

61 *अन्यत्र* – "रहस्यार्थो महागुप्तो दिव्यार्थस्थितिपूर्वकः" इत्यर्धश्लोको वारत्रयं लिखितमस्ति- क., ख.।

"रहस्यार्थो मया गुप्तः सद्यः प्रत्ययकारकः" इति पाठो योगिनीहृदये (२।७७")।

"रहस्यार्थो महागुप्तः सद्यःप्रत्ययकारकः" इति योगिनीहृदयपाठोद्धृतो जयरथेन वामकेश्वरीमतविवरणे (वामकेश्वरीमते, पृ० १०९)।

विद्यापीठनिबंधेषु[62] संस्थितः पिण्डसिद्धिदः ॥ २२ ॥ [63]

एवमेतत्परं ब्रह्म विज्ञानागमगोचरम्।

देवि विक्षिप्तमीशेन व्याख्यातं तु चतुर्विधा ॥ २३ ॥

एवमेष महादेव्या महासंकटकाम्बिके[64]।

कथितो[65] य[त्]प्रबोधेन वीरचक्रेश्वरो भवेत् ॥ २४ ॥ [66]

[अतः चक्रसंकेतः-]

अथान्तः संप्रवक्ष्यामि चक्रसंकेतमुत्तमम्।

तदर्थ[ं] देवि कुर्वीत[67] त्रिहस्त[ं] मण्डलोत्तमम् ॥ २५ ॥

तस्य कुर्यात् त्रिभागेन कर्णिकां[68] चक्रचिह्नताम्[69]।

---

62 *पाठान्तरम्* – ०निवंधषु- ख.।

63 *अन्यत्र* – "विद्यापीठनिबद्धेषु संस्थितो दिव्यसिद्धिदः" इति पाठो योगिनीहृदये (२।७८')।

64 *शक्यपाठः* – 'महासंकेतकोऽम्बिके'।

65 *मूलपाठः* – कथितौ- क., ख.।

66 *अन्यत्र* – "सद्यो यस्य प्रबोधेन वीरचक्रेश्वरो भवेत्" इत्यर्धश्लोकपाठो योगिनीहृदये (२।८५)।

67 *मूलपाठः* – कुर्वित- क., कुर्व्वित - ख.।

68 *पाठान्तरम्* – कर्णिकं- क.।

69 चक्रचिन्हतां- क.।

*अन्यत्र* – "चक्रलाञ्छिताम्" इति पाठो कश्मीरग्रन्थमालायां (नि०षो०वाक०) प्रकाशिते नित्याषोडशीकार्णवे (नि०षो० १।६०) तथा आनन्दाश्रमग्रन्थमालायां (नि०षो०से०) प्रकाशिते नित्याषोडशीकार्णवे (नि०षो० १।६०) तथा च श्रीशिवोऽहंसागरग्रन्थमालायां प्रकाशिते श्रीमद्राजानकजयरथविरचिते वामकेश्वरीमतविवरणे

पद्मद्वयं तदर्धेन[70] द्वारक्षत्रं[71] च तत्समम्॥ २६॥[72]

ब्रह्मसूत्रं पुरा दत्त्वा कर्णिकाग्रे च[73] मध्यतः।

याम्यासाम्यायतं दद्यात्तत्रस्थं[74] सूत्रसप्तमम्॥ २७॥

तुल्यसूत्रं ततो लुप्त[ं] मध्यांश[:] स्या[द्] विभावितः[75]।[76]

तृतीयपञ्चमसोगौ[77] कृत्वात्यंशविवर्जितौ॥ २८॥[78]

---

उद्धृते श्रीरसमहोदधौ (श्रीरस०वाम०, पृ० २५-२६)। नि०षो०वाक०-नि०षो०से०पाठान्तराणि योगतन्त्रमालायां प्रकाशिते नित्याषोडशीकार्णवे (नि०षो०) मिलितानि।

70 *पाठान्तरम्* – तदेर्द्धेन - क.।

71 *अन्यत्र* – "द्वारक्षेत्रं" इति पाठः श्रीरस०वाम०, पृ० २५।

72 "अस्य कार्या तृतीयेन कर्णिका चक्रलाञ्छिता। पद्मद्वयं द्वितीयेन चतुरस्रं च शेषतः॥" इति पाठो नि०षो० (१।६०), नि०षो०से०।

73 *मूलपाठः*– - कर्णिकाग्रेव- क., ख.।

*अन्यत्र* – "कर्णिकाभूमि०" इति पाठो नि०षो० (१।६१)।

"कर्णिकाभ्रम०" इति पाठान्तरं नि०षो०से०, नि०षो०वाक०, श्रीरस०वाम० (पृ० २५)।

74 *मूलपाठः* – याम्यासाम्यायतन्दद्योत्तत्रस्थं- क., याम्यासाम्याततन्दद्योत्तत्रस्थं - ख.।

*अन्यत्र* – "याम्यासौम्यायतं दद्यात्तत्रस्थं" इति पाठान्तरं श्रीरस०वाम०, तत्रैव।

75 *मूलपाठः* – विभावितं- क., ख.।

76 *अन्यत्र* – "तुर्यसूत्रं ततो लुप्याद्मध्यांशः स्याद्विभागशः" इति पाठो नि०षो० (१।६२)।

"तुर्यसूत्रं ततो लुप्त्वा मध्यांशः स्याद्विभागिकः" इति पाठान्तरं नि०षो०वाक०, श्रीरस०वाम० (पृ० २५)।

"तुर्यसूत्रं ततो लुम्पेत् मध्यांशः स्याद्विभागतः" इति पाठान्तरं नि०षो०से०।

77 *पाठान्तरम्* – तृतीयपञ्चमंसौगौ - ख.।

78 *अन्यत्र* – "तृतीयपञ्चमौ नागभूपांशौ व्यंशवर्जितौ" इति पाठो नि०षो० (१।६२), नि०षो०से०।

"तृतीयपञ्चमौ भागौ कृत्वा त्र्यंशविवर्जितौ" इति पाठान्तरं नि०षो०वाक०, श्रीरस०वाम० (पृ० २५)।

ते मार्गेण च पुनर्मध्ये तावगम्भिर[ं][79] वर्धयेत्।[80]

तृतीयस्य च[81] द्वितीयस्य चाद्यसूत्रस्य[82] चान्तयोः॥२९॥

प्रसारयेदधोर्द्धधः[83] दष्टं तत्र सुद्वद्वयम्।[84]

भ्रमे[85] सप्तमके[86] सूत्रे ब्रह्मस्थाने च संगतम्॥३०॥

आपञ्चमादधः स्थाना[ं] त्रयाणां[87] च ततो[88] नयेत्।

भ्रमे[89] प्रथमके सूत्रे विशान्तिं च तृतीयकम्॥३१॥[90]

---

79 *पाठान्तरम्* – तावगन्भिर- ख.।

80 *मूलपाठः* – अत्रैकाक्षरमधिकमस्ति- क., ख.।

*अन्यत्र* – "तेन मानेन सप्तैव वीथ्यस्तन्त्रेषु मध्यमम्" इति पाठो नि०षो० (१।६३), नि०षो०से०।

"तेन भागेन च पुनर्मध्यभागं विवर्धयेत्" इति पाठान्तरं नि०षो०वाक०, श्रीरस०वाम० (पृ० २५)।

81 *मूलपाठः* – स्त- क., ख.।

82 *अन्यत्र* - "आदिसूत्रस्य" इति पाठो नि०षो०वाक० (नि०षो० १।६३), श्रीरस०वाम० (पृ० २५)।

"त्वाद्यसूत्रस्य" इति पाठान्तरं नि०षो०से०।

83 *पाठान्तरम्* – प्रसारयेदधोर्द्धधः- क.।

84 *अन्यत्र* – "प्रसारयेदधोधःस्थं ततः सूत्रद्वयद्वयम्" इति पाठो नि०षो० (१।६४), नि०षो०से०।

"प्रसारयेदधोधःस्थं ततः सूत्रद्वयं द्वयम्" इति पाठान्तरं नि०षो०वाक०, श्रीरस०वाम० (पृ० २५)।

85 "भौमे" इति पाठो नि०षो० (१।६४), नि०षो०से०।

86 *पाठान्तरम्* – सप्तमेके - क.।

87 *मूलपाठः* – त्रयानां- क., ख.।

88 *अन्यत्र* – "चान्ततो" इति पाठो नि०षो० (१।६४), नि०षो०वाक०, नि०षो०से०, श्रीरस०वाम० (पृ० २५)।

89 *पाठान्तरम्* – भ्र{म}मे- क.।

90 *अन्यत्र* – "भौमे प्राथमिके सूत्रे विश्रान्तं च तृतीयके" इति पाठो नि०षो० (१।६५), नि०षो०से०। एतत्पाठो नास्ति- नि०षो० वाक०।

सूत्रद्वयं द्वयं वापिन्यन्त्राश्चैव तिष्ठ[न्ति][91] षट्।

चतुर्दशारमारभ्य च दशारं[92] च सिध्यति॥ ३२॥[93]

सूत्रा[द्] द्वितीयका[त्] षष्ठाद्ब्रह्मसूत्रस्य[94] पार्श्वयोः।

सूत्रद्वयं द्वयं देयमध-ऊर्ध्वप्रसारितम्[95]॥ ३३॥

तत्कोटिसंगतं[96] पश्चात् सूत्रयुग्मं प्रसारितम्[97]।

दशारमेवं कथितं मेरुचक्रं[98] तृतीयकम्॥ ३४॥[99]

---

91 “चान्य[तस्तु] त्र्यस्राण्येवं भवन्ति” इति पाठो नि०षो०(१।६६), नि०षो०से०।

“द्वयं चान्यत् त्र्यस्राण्येवं भवन्ति” इति पाठान्तरं नि०षो०वाक०, श्रीरस०वाम० (पृ० २५)।

92 *मूलपाठः* – वन्दशारं- क., ख.।

93 *अन्यत्र* – “चतुर्दशारं देवेशि दशारं चात्र सिद्ध्यति“ इति पाठो नि०षो० (१।६६), नि०षो०से०।

“चतुर्दशारमित्येवं दशारं च प्रसिद्ध्यति“ इति पाठान्तरं नि०षो०वाक०, श्रीरस०वाम० (पृ० २५)।

94 *मूलपाठः* – स्वेष्टोद्ब्रह्मसूत्रस्य- क., ख.।

95 देयेमधऊर्द्धप्रसारितं- क., ख.।

*अन्यत्र* – “देयमधऊर्ध्वक्रमात्मकम्” इति पाठो नि०षो० (१।६७)।

96 *मूलपाठः* – तत्कोटिसर्गतं- क., ख.।

97 *अन्यत्र* – “प्रसारयेत्” इति पाठो नि०षो० (१।६८), नि०षो०से०, श्रीरस०वाम० (पृ० २६)।

98 *मूलपाठः* – मेरुचक्रं- क., ख.।

*अन्यत्र* – “चक्रमेतत्” इति पाठो नि०षो०वाक० (१।६८), श्रीरस०वाम० (पृ० २६)।

99 “दशारं देवि संसिद्धमेतच्चक्रं तृतीयकम्” इति पाठो नि०षो० (१।६८), नि०षो०से०।

सूत्रात्पंचतमादुर्द्धामन्यत्सूत्रद्वयन्[100] नयेत्।

ऊर्ध्वाधोमुख{:}मध्यस्थं ताम्रमर्मद्वयावधि॥ ३५॥[101]

दद्या[त्] तृतीयसूत्रं तु तयोरन्योन्यसंगतम्[102]।

एवं चतुर्थरःमेकारश्चारत्रयपञ्चमम्[103]॥ ३६॥

इति संसिध्यते चक्रं कर्णिकान्तर्गतं समम्।[104]

तच्छक्तिपञ्चकं सृष्ट्या[105] लयेनाग्निचतुष्टयम्[106]॥ ३७॥

पञ्चशक्तिचतुर्वह्निसंयोगाच्चक्रसम्भवः।

तत्रैव कष्टकर्मं च द्विदशान्ते[107] चतुर्दश॥ ३८॥

---

100 *पाठान्तरम्* – सूत्राभ्यंचतमदुर्द्धामन्यत्सूत्रद्वयन्- ख.।

*अन्यत्र* – "सूत्रात्पञ्चमकान्मध्यादन्यत् सूत्रद्वयं" इति पाठो नि०षो० (१।६९), नि०षो०से०।

"सूत्राग्रात्पञ्चमादूर्ध्वमन्यत्सूत्रद्वयं " इति पाठान्तरम् नि०षो०वाक०, श्रीरस०वाम० (पृ० २६)।

101 "ऊर्ध्वाधोमुखमध्यस्थत्र्यस्त्रमर्मद्वयावधि" इति पाठो नि०षो० (१।६९), नि०षो०वाक०, नि०षो०से०।

"ऊर्ध्वाधोमुखमध्यस्थत्र्यश्रमर्मद्वयावधि" इति पाठः श्रीरस०वाम० (पृ० २६)।

102 *मूलपाठः* – ०संगतः- क., ख.।

103 *अन्यत्र* – "चतुर्थरमष्टारं मध्ययोनिश्च पञ्चमी" इति पाठो नि०षो० (१।७०), नि०षो०से०।

"चतुर्थमष्टारमेकारं चात्र पञ्चमम्" इति पाठान्तरं नि०षो०वाक०, श्रीरस०वाम० (पृ० २६)।

104 "एवं सिद्ध्यति देवेशि सर्वचक्रं मनोहरम्" इति पाठो नि०षो०(१।७१), नि०षो०से०।

105 *मूलपाठः* – श्रष्टो- क., सृष्टो- ख.।

106 लयनाग्निचतुष्टयं- क., ख.।

107 *अन्यत्र* – "तत्रैकमष्टकं देवि द्वे दशारे" इति पाठो नि०षो०(१।७२), नि०षो० वाक०, नि०षो०से०।

"तत्रैकमष्टकं मध्ये द्विदशान्त०" इति पाठः श्रीरस०वाम० (पृ० २६)।

चतुर्दश दशद्वन्द्वमष्टाचक्रं[108] महेश्वरि।

सृष्टिसंहारयोगेन शक्तिस्थानान्यनुक्रमात्॥ ३९॥

स्थितानि त्रिपुराचक्रे चक्राधारमनो[109] भवेत्।

बहिः पद्मद्वयं कुर्यादष्टषोडशकच्छदम्[110]॥ ४०॥

चतुरस्त्रं[111] ततो दत्त्वा कुर्या[द्] द्वारचतुष्टयम्।

चतुष्कोणसमायुक्तमेतन्मण्डलमुत्तमम्[112]॥ ४१॥ [113]

रक्तेन[114] रजसापूर्यमेतच्छुक्ले च रेचकम्[115]। [116]

अस्य दर्शनमात्रेण सौभाग्यं देवि जायते॥ ४२॥

---

108 "द्वन्द्वमष्टावेकं" इति पाठो नि॰षो॰ (१।७३), नि॰षो॰वाक॰, नि॰षो॰से॰, श्रीरस॰वाम॰ (पृ॰ २६)।

109 *शक्यपाठः* – 'चक्राधारमतो'।

*अन्यत्र* – "यद्बोधाद्भैरवो" इति पाठो नि॰षो॰ (१।७४), नि॰षो॰से॰।

"यद्बोधादमरो" इति पाठान्तरं नि॰षो॰वाक॰, श्रीरस॰वाम॰ (पृ॰ २६)।

110 *मूलपाठः* – कुर्य्यादशषोडशकछदं- क., कुर्य्यादष्ठषोडशकछदं- ख.।

111 *पाठान्तरम्* – चतुरस्रं- ख.।

112 *मूलपाठः* – चतुष्कोणसमायुक्तंमेतन्मण्डलोत्तमं[x]- क., ख.।

113 *अन्यत्र* – "गुणवृत्तं ततः कुर्याच्चतुरस्त्रं च तद्बहिः। चतुर्द्वारसमायुक्तमेवं स्याच्चक्रमुत्तमम्॥" इति श्लोकपाठो नि॰षो॰ (१।७५)।

114 *पाठान्तरम्* – रक्तन- क.।

115 *मूलपाठः* – रजसापुन्यमेतछुलेच्चरेचकं- क., ख.।

*अन्यत्र* – "रजसापूर्यं चक्रं शुक्लोच्चरेखिकम्" इति पाठो नि॰षो॰वाक॰ (नि॰षो॰, पृ॰ ८८), श्रीरस॰वाम॰ (पृ॰ २६)।

116 एतदर्धश्लोकं नास्ति नि॰षो॰, नि॰षो॰से॰।

नश्यन्ति[117] सर्वविघ्यानि[118] प्राप्यते तद्यदीप्सितम्[119]।

अधुना चैव चक्राणां नामानि श्रृणु सुव्रते[120]॥४३॥

त्रैलोक्यमोहनं चक्रं सर्वाशापूरणं तथा।

सर्वसंक्षोभकं[121] देवि सर्वसौभाग्यकारकम्॥४४॥

सर्वार्थसाधकं चक्रं सर्वरक्षाकरं परम्।

सर्वरोगहरं चैव सर्वसिद्धिमयं तथा॥४५॥

सर्वानन्दमयं चापि[122] नवमं सुरसुन्दरि[123]।

परिपूर्ण[ं] महाचक्रमजरामरकारकम्॥४६॥

एवमेव[124] महाचक्रमजरामरकारकम्।

एवमेव[125] महाचक्रे सन्ततः परमेश्वरः[126]॥४७॥

कथितंस्त्रिपुरादेव्या जीवन्मुक्तिप्रवर्तकः।

---

117 *मूलपाठः* – नस्यन्ति- क., ख.।

118 *शक्यपाठः* – 'सर्वविघ्नानि'।

119 *मूलपाठः* – तद्यदिप्सितं- क., ख.।

120 सूव्रते- क., ख.।

121 *पाठान्तरम्* – सर्व्वसंक्षोरुकं- ख.।

122 *मूलपाठः* – चापी- क., ख.।

123 सुरसुन्दरी- क., ख.।

124 एवमेष- क., ख.।

125 एवमेष- क., ख.।

126 *अन्यत्र* – योगिनीहृदये (१।८६) "एवमेव महाचक्रसङ्केतः परमेश्वरि" इत्यर्धश्लोकपाठः।

[अतो मन्त्रसंकेतः-]

मन्त्रसंकेतकं चैवमधुना[127] कथयामि ते॥४८॥

यद्वेधादमरो वीरो[128] वीरचक्रेश्वरो भवेत्।

चतुरस्र[ं] पुरा कृत्वा चतुर्विंशाङ्गुलं[129] शुभम्[130]॥४९॥

ईशानात्[131] पश्चिमं सूत्रमग्नेः पश्चिमगं पुरा[132]।[133]

पूर्वसूत्रं तु संस्थाप्य शेषाणि त्रीणि लोपयेत्॥५०॥

त्रिदण्डा[134] तु स्मृता योनिस्त्रियोमाशा[135] त्रिदेवता।

एकैकः दण्डकप्राज्ञः[136] षट् षट् सूत्राणि[137] पातयेत्[138]॥५१॥

---

127 "दिव्यमधुना" इति पाठो योगिनीहृदये (२।१)।

128 *मूलपाठः* – यद्वेधादमरावीर- क., ख.।

*अन्यत्र* – योगिनीहृदये (२।१) "यद्वेत्ता त्रिपुराकारो" इति पाठः।

129 *मूलपाठः* – चतुर्विंशाङ्गुलं- क., चतुर्विंशाद्गुलं- ख.।

130 *पाठान्तरम्* – गुभं-क.।

131 *मूलपाठः* – ईशानं- क., ख.।

132 सूत्रंमग्निःपश्चिमगत्पुरा- क., ख.।

133 *अन्यत्र* – "ईशात्पश्चिमगं सूत्रमग्नेः पश्चिमगं पुनः" इति पाठः श्रीरस०वाम० (पृ० ३४)।

134 *मूलपाठः* – त्रिदण्डो- क., ख.।

135 *अन्यत्र* – "योनिः त्रिमाया सा" इति पाठः श्रीरस०वाम० (पृ० ३४)।

136 "एकैकदण्डके प्राज्ञः" इति पाठः श्रीरस०वाम० (पृ० ३४)।

137 *मूलपाठः* – षड्सुत्राणि - क., ख.।

138 *पाठान्तरम्* – पालयेत्- क.।

योनयो[139] येन[140] जायन्ते समस्ताः समसंधयः।

कोष्टकान्यूनपञ्चाशद्गरूपाणि[141] तानि तु॥५२॥

ईशादकारमारभ्य[142] वारुण्यां तु विनायकम्।

विन्यसेन्मातृकाः सर्वा विष्ण्वादिशिवपश्चिमाः॥५३॥

एकचक्रं लिखेत्येव[143] दृढे दारुमये शुभे।[144]

त्रिकोणे च त्रिपादे च वर्णोत्कीलितलक्षणे[145]॥५४॥

षण्मासाज्जायते सिद्धिः पूजाजपपरायणे[146]।

अतो मन्त्रः समुद्धार्यो यथा देवि तथा शृणु॥५५॥

ओजमध्यगतस्वर्णमूर्द्धशशिरसोरहम्।[147]

---

139 यौनयो – क.।

140 *मूलपाठः* – योन- क., ख.।

141 कोष्ठकाद्युन०- क., ख.।

142 ऐशा०- क., ख.।

143 *पाठान्तरम्* – लिखेभ्येव - ख.।

144 *अन्यत्र* – "एतच्चक्रं लिखेत्पट्टे शुभे दारुमये दृढे" इति पाठः श्रीरस०वाम० (पृ० ३५)।

145 *पाठान्तरम्* – ०लक्षणी- क.।

146 *मूलपाठः* – पूजजय०- क., ख.।

147 *अन्यत्र* – "ओ-जमध्यगतं वर्णं झोर्ध्वेन शिरसा हतम्" इति पाठः श्रीरस०वाम० (पृ० ३४)।

अंगमध्यगतं[148] बीजं[149] वरमध्यासनस्थितम्[150] ॥ ५६ ॥

द्वितीयमेतत्कथितामजमध्यं[151] सबिन्दुकम्।

वहमध्यम् आअधःस्थमंकमध्येन[152] लाञ्छितम्[153] ॥ ५७ ॥

प्रथम[ं] त्र्यक्षरी विद्या करशुद्धिकरी स्मृता।

द्वयोः कृत्वा विपर्यासं पूर्वबीजेन वै विना ॥ ५८ ॥

आत्मन्यासविधेर्विद्यात्[154] द्वितीयेयं कृशोदरि।

षोधायदुर्द्धगत्पिण्डं (?) मायाबिन्दुविभूषितम् ॥ ५९ ॥ [155]

आद्यायां[156] वाग्भवस्थाने न्यस्यौत्मासनरूपिणी[157]।

गृहीत्वा वर्णमेकैकमाद्यमाद्यतृतीययोः ॥ ६० ॥

---

148 *पाठान्तरम्* – अङ्गमध्यगतं- ख.।

149 विजम्- क.।

*अन्यत्र* – "वर्णं" इति पाठः श्रीरस०वाम० (पृ० ३४)।

150 *मूलपाठः* - वरमध्यसनस्थितं- क., ख.।

151 *शक्यपाठः* – (व्याकरणानुसारेण) 'द्वितीयमेतत्कथितमजमध्यं'।

*अन्यत्र* – "द्वितीयमेतत्कतथितमाऊमध्यं" इति पाठः श्रीरस०वाम० (पृ० ३४)।

152 *मूलपाठः* – ०संकमध्येन- क., ख.।

153 लाछितं- क., ख.।

154 *अन्यत्र* – "अङ्गन्यासविधौ विद्या" इति पाठः श्रीरस०वाम० (पृ० ३५)।

155 "षाधऊर्ध्वगतं पिण्डं आऔअन्तविभूषितम्" इति पाठस्तत्रैव।

156 "आद्याया" इति पाठस्तत्रैव।

157 *पाठान्तरम्* – भ्यस्यौत्मासनरूपिणी- ख.।

*अन्यत्र* – "त्र्यर्णात्मासनरूपिणी" इति पाठः श्रीरस०वाम० (पृ० ३६)।

मध्यान्तमूर्ध्वे षाधेन[158] विद्या चक्रासनस्थिता।

षाध्येन्त्राभ्या[159] युता पूर्वा ज्ञेया मन्त्रासनस्थिता॥ ६१॥

विपरीतस्थितौ चान्तौ सोर्द्धजपूर्वलास्थितौ[160]।

दत्त्वा तृतीयविद्यायाः कामबीजान्तदेशतः॥ ६२॥

साध्यसिद्धासनगता षष्ठी[161] विद्या प्रकाशिता[162]।

दत्त्वा बीजत्रयश्चोर्द्धवररूपार्द्धतन्तगौ[163]॥ ६३॥

यान्तस्थाद्याद्यविद्यैव[164] चावाहनविधौ परा।

एवमेता महाविद्याः पूर्वोक्ता[:] सुरसुन्दरि॥ ६४॥

महात्रिपुरसुन्दर्याः सांगोपांगास्त्रदेवता।

अथांतः संप्रवक्ष्यामि[165] मूलविद्यां वरानने॥ ६५॥

यया विज्ञातया सम्यक् सर्वमेव प्रसिध्यति।

---

158 *मूलपाठः* – मध्यान्तमूद्धसाधेन - क., मधान्तमूद्धसाधेन- ख.।

*अन्यत्र* – “तदन्तमूर्ध्वे षाधेन” इति पाठः श्रीरस०वाम० (पृ० ३६)।

159 *पाठान्तरम्* – षाध्येन्त्रात्पा- क.।

*अन्यत्र* – “षाधोन्ताभ्यां” इति पाठः श्रीरस०वाम० (पृ० ३७)।

160 *अन्यत्र* – “रान्तौ झोर्ध्वपूर्वलाञ्छितौ” इति पाठः श्रीरस०वाम० (पृ० ३७)।

161 *मूलपाठः* – षष्ठि- क., ख.।

162 प्रकासिता - क., ख.।

163 *अन्यत्र* – “बीजत्रयस्योर्ध्वं वर्णौ षाधषअन्तगौ” इति पाठः श्रीरस०वाम० (पृ० ३८)।

164 “यान्तस्था आद्यविद्यैव” इति पाठस्तत्रैव।

165 *मूलपाठः* – संप्रवक्षामि - क., ख.।

अःखमध्यं तु संगृह्य ऐं मध्यममधमः कुरु॥ ६६॥ [166]

तस्य मध्ये[167] न्यसेद्वर्णमकारोर्द्ध्वव्यवस्थितः[168]।

रान्तषाधोयकारान्तस्मायाबिन्दुनिरोधयुक्[169]॥ ६७॥

वाग्भवो[ऽ]यं समाख्यातः समारभ्य यकारकः[170]।

त्रयाणां[171] षाधो वर्णो नामेकैकस्यामने[172] न्यसेत्॥ ६८॥

गाद्यं सोद्धोयकारान्तमेकं[173] प्रागामाद्य लाञ्छितम्[174]। [175]

आडमध्यन[176] चाक्रान्तं द्रौ[177] अःमध्यशिरोयुतः॥ ६९॥

---

166 *अन्यत्र* – "अः-खमध्यगतं गृह्य ॡ-ऐमध्यमतः कुरु" इति पाठः श्रीरस०वाम० (पृ० ४०)।

167 *मूलपाठः* – मध्य- क., ख.।

168 *शक्यपाठः* – (व्याकरणानुसारेण) 'न्यसेद्वर्णमकारोर्ध्वव्यवस्थितम्'।

*अन्यत्र* – "न्यस्येत्पश्चादःकारोर्ध्वव्यवस्थितम्" इति पाठः श्रीरस०वाम० (पृ० ४०)।

169 "रान्तषान्तयकारान्तमायाबिन्दुनिरोधियुक्" इति पाठः श्रीरस०वाम० (पृ० ४१)।

170 "सम्यक्प्रत्ययाकारकः" इति पाठस्तत्रैव।

171 *मूलपाठः* – त्रयानां- क., ख.।

172 *अन्यत्र* – "षाधवर्णानामेकैकस्यासने" इति पाठः श्रीरस०वाम० (पृ० ४१)।

173 *शक्यपाठः* – (व्याकरणानुसारेण) 'सोर्ध्व०'।

174 *मूलपाठः* – लाछितं- क., ख.।

175 *अन्यत्र* – "गाद्यसोर्ध्वयकारान्तावेकत्राद्यर्णलाञ्छितम्" इति पाठस्तत्रैव।

176 *शक्यपाठः* – '०मध्येन'।

177 *पाठान्तरम्* – डौ- ख.।

*शक्यपाठः* – 'ड'।

कामराजं[178] महेशानि सरहस्यं प्रकाशितम्।

अस्योच्चारणमात्रेण जगत्क्षोभः प्रजायते॥ ७०॥

तृतीयं संप्रवक्ष्यामि[179] शक्तिबीज[ं] महाद्भुतम्।

षधो लाधः समायुक्तं गाद्यं फाधो[180] हरात्मकम्॥ ७१॥ [181]

अःऊर्ध्वं[182] पृष्टसंयुक्तं शक्तिबीजं समुद्धरेत्। [183]

अनेन ज्ञानमात्रेण कुर्या[त्] सर्वविषक्षयम्[184]॥ ७२॥

एषा विद्या समाख्याता सर्वैश्वर्यकरी[185] परा।

अनेन[186] ज्ञातया सम्यक् नास्ति तद्यन्न सिध्यति[187]॥ ७३॥

अथांतः संप्रवक्ष्यामि पाशांकुशधनु[:]शरान्।

येषां तु योगमात्रेण देवदेवी प्रसीदति॥ ७४॥

---

178 *अन्यत्र* – "कामबीजं" इति पाठः श्रीरस०वाम० (पृ० ४१)।

179 *पाठान्तरम्* – संप्रवक्षामि- ख.।

180 हाधो– क.।

181 *अन्यत्र* – "षाधं लाधसमायुक्तं गाद्यं फाधं षपाधगम्" इति पाठः श्रीरस०वाम० (पृ० ४१)।

182 *पाठान्तरम्* – अःऊर्द्धं- ख.।

183 *अन्यत्र* – "अःपृष्ठं झोर्ध्वसमायुक्तं शक्तिबीजं समुद्धृतम्" इति पाठः श्रीरस०वाम० (पृ० ४१)।

184 *मूलपाठः* – ०क्षयः- क., ख.।

185 *अन्यत्र* – "सर्वाश्चर्यकरी" इति पाठः श्रीरस०वाम० (पृ० ४१)।

186 "अनया" इति पाठस्तत्रैव।

187 "साधयेत्" इति पाठस्तत्रैव।

यत्पूर्ववर्णयुगलम् आद्यन[188] शिर आहुतम्[189]।[190]

पाशद्वयं समाख्यातं शाक्तं[191] मादनमेव च॥ ७५॥

जंभादिपरमं युक्तमेकमंकुशमुत्तमम्[192]।

द्वितीयं काद्ययोन्यन्तमकारान्तलयान्तगम्[193]॥ ७६ ॥

णान्तस्याद्यं[194] सकाराद्यं[195] चापयुग्ममुदाहृतम्।

सबीजेन[196] नियोक्तव्याः सम्प्रदायसमन्विता[:]॥ ७७॥

पाधो नाधो[197] लयान्तं च हाधो[198] लान्तसमन्वितम्।

---

188 *शक्यपाठः* – 'आद्येन' (?)।

189 *पाठान्तरम्* – शिरश्राहुतं- क.।

190 *अन्यत्र* – "ऊपूर्ववर्णयुगलं काद्येन शिरसान्वितम्" इत्यर्धश्लोकपाठः श्रीरस०वाम०, पृ० ९९।

191 *मूलपाठः* – साक्तं- क., ख.।

192 *पाठान्तरम्* – जंभादिपरमंयुक्तंमेकमंकुशमुत्ततं- ख.।

*अन्यत्र* – "जंभादिपदसंयुक्तमेकमंकुशमुत्तमम्" इति पाठः श्रीरस०वाम०, पृ० ९९।

193 *मूलपाठः* – द्वितीयङ्काद्ययोन्यत्र०- क., ख.।

194 *पाठान्तरम्* – णान्तस्यांद्यां- ख.।

*अन्यत्र* - "णान्तं पाद्यं" इति पाठः श्रीरस०वाम०, पृ० १००।

195 "सकाद्यं च" इति पाठः श्रीरस०वाम०, पृ० १००।

196 *पाठान्तरम्* – सवीजेता- ख.।

*अन्यत्र* – "सबीजैस्तैर्" इति पाठः श्रीरस०वाम०, पृ० ९८।

197 "षाधं राधं" इति पाठः श्रीरस०वाम०, पृ० १००।

198 "बाधं" इति पाठस्तत्रैव।

औअःमध्यगबीजेन सर्वशिरसि आहती[199] ॥ ७८ ॥

पिण्डस्तेन न नियोक्तव्याः संप्रदायसमन्विताः।

कामदेवस्य कथितं शरपञ्चकमुत्तमम् ॥ ७९ ॥

ञधमध्यं[200] द्विधोद्धृत्य वपमध्येन[201] लाञ्छितम्[202]।

औअःपृष्ठसमापेतं कपूर्वेण शिरोयुतम् ॥ ८० ॥

गाद्यं वान्तं[203] च सोर्ध्वस्थौ[204] आईअन्तसमन्वितौ।

काद्ययुक्तौ[205] च षान्तं[206] च खाद्यन्ते[207] देवताः[208] शराः ॥ ८१ ॥

सबीजास्ते[209] नियोक्तव्याः सम्प्रदायसमन्विताः[210]।

---

199 "सर्वेऽपि शिरसाहताः" इति पाठस्तत्रैव।

200 *पाठान्तरम्* – अधमद्ध्यं- क.।

201 *अन्यत्र* – "पषमध्येन" इति पाठः श्रीरस०वाम०, पृ० ९७।

202 *मूलपाठः* – लाछितं- क., ख.।

203 *पाठान्तरम्* – वानां- क.।

*अन्यत्र* – "लान्तं" इति पाठः श्रीरस०वाम०, पृ० ९७।

204 *मूलपाठः* – सोर्द्धस्थौ- क., ख.।

205 कद्ययुक्तो- क., ख.।

206 वषान्तं- क., ख.।

*अन्यत्र* – "ष-अन्तं" इति पाठः श्रीरस०वाम०, पृ० ९७।

207 "खाद्याकं" इति पाठस्तत्रैव।

208 *मूलपाठः* – ०न्देवताः- क., ख.।

209 *अन्यत्र* – "सबीजैस्तैर्" इति पाठः श्रीरस०वाम०, पृ० ९८।

210 *मूलपाठः* – ०समन्वितः- क., ख.।

प्रागुद्धृतानि बीजानि वशिन्याद्यष्टकस्य[211] च॥८२॥

मायालक्ष्मीमये बीजे आदिचक्रस्य पूजने।

तत्संयुक्तं द्वितीयस्य स्वरषोडशकं पृथक्॥८३॥

मन्त्रसंकेतकः प्रोक्तः सर्वकामफलप्रदः।

[अतः पूजासंकेतः-]

पूजासंकेतकं चापि कथयामि तवेश्वरि[212]॥८४॥

प्रथमे त्रिपुरा चक्रे द्वितीये त्रिपुरेश्वरी॥

तृतीये त्रिपुरादेव्या चतुर्थे त्रिपुरवासिनी॥८५॥

पञ्चमे त्रिपुराश्रीश्च षष्ठे त्रिपुरमालिनी।

सप्तमे त्रिपुरासिद्धिरष्टमे त्रिपुराम्बिका[213]॥८६॥

नवमे तु महेशानि महात्रिपुरसुन्दरी[214]।

मूलविद्या समाख्याता त्रैलोक्यवशकारिणी॥८७॥

---

211 वशिन्याद्याष्टकस्य- क., ख.।

212 *मूलपाठः* – तवेश्वरी- क., ख.।

213 त्रिपुरम्विका - क., ख.।

214 *पाठान्तरम्* – महातिपुरसुन्दरी- ख.।

एवं नवप्रकाराद्या[215] पूजामात्रेण पार्वति।

एकाकारा चादिशक्तिरजरामरकारिणी[216]॥८८॥

मन्त्रसंकेतकस्तस्या[217] [ना]नाकारो[218] व्यवस्थितः[219]।

नानामन्त्रक्रमेणैव पारम्पर्येण[220] लभ्यते॥८९॥

प्रकटादौ ततो गुप्तागुप्ता गुप्ततराः[221] परा[:]।

सम्प्रदायक्रमायाता[:] तथान्यो (?) कुलकौलिनी[222]॥९०॥

महानिगर्भयोगिन्यो रहस्यस्था[:] परापरा[:]।

परमा त्रिरहस्यस्था पूज्या त्रिभुवनेश्वरी॥९१॥

महापीठोपपीठेषु योगिनीवक्त्रसम्भवे।

कर्णात्कर्णोपदेशेन सञ्चरन्त्यवनीतले[223]॥९२॥

---

215 *मूलपाठः* – नवप्रकारायो- क., ख.।

216 ०जला० – क., ख.।

217 मन्त्रसंकेतकंस्तस्मा- क., ख.।

218 *पाठान्तरम्* – [x]नाकारे-क.।

219 *मूलपाठः* – व्यवस्थिताः- क., ख.।

220 *पाठान्तरम्* – पारम्पर्य्यण- ख.।

221 *मूलपाठः* – गुफागुफोद्गुप्ततरा - क., ख.।

222 *शक्यपाठः* – 'तथान्याः कुलकौलिन्यः'।

223 *मूलपाठः* – सञ्चरभ्यवनीतले- क., ख.।

ततः प्रकटयोगिन्यश्चक्रत्रैलोक्यमोहने[224]।

तथैव गुप्तयोगिन्यः सर्वाशापरिपूरणे॥९३॥

गुप्ता गुप्ततरा[225] देवि सर्वसंक्षोभकारके।

संप्रदायक्रमायाताः सर्वसौभाग्यकारके॥९४॥

कुलकौलिकयोगिन्यश्चक्रे सर्वार्थसाधके।

निगर्भदेवताचक्रे सर्वरक्षाकरे परे॥९५॥

रहस्यदेवताश्चान्याः सर्वरोगहरे[226] प्रभो।

सर्वसिद्धिमये चक्रे परमातिरहस्यगाः[227]॥९६॥

तिष्ठन्ति देवताः सर्वाः सर्वसिद्धिफलप्रदाः।

परापरातिरहस्याद्या[:] सर्वानन्दमये परे॥९७॥

तत्र प्रकटयोगिन्यश्चक्रे त्रैलोक्यमोहने[228]।

अणिमाद्या महादेवि सिद्धयोऽष्टाष्टकस्थिताः[229]॥९८॥

---

224 प्रकत०- क., ख.।

225 *अन्यत्र* – "गुप्तगुप्ततरा" इति पाठः श्रीरस०वाम० पृ० ५०।

226 *मूलपाठः* – ०हर- क., ख.।

227 ०लहस्यगा- क., ख.।

228 ०मोहणे- क., ख.।

229 सिद्धियोऽष्टोष्टवस्थिताः- क., ख.।

तथैव गुप्तयोगिन्यः सर्वाशापरि[पु]रणे[230]।

कामाकर्षणरूपाद्याः[231] कला नित्या[:] प्रकीर्तिताः ॥ ९९ ॥

गुप्ता गुप्ततरा[232] देवि सर्वसंक्षोभकारके।

अनंगकुसुमाद्यस्तु चक्रे सर्वविवस्थिताः ॥ १०० ॥

संप्रदायक्रमायाताश्चक्रसौभाग्यकारके।

सर्वसंक्षोभिणीपूर्वाः[233] संस्थिता[:] सुरसुन्दरि[234] ॥ १०१ ॥

कुलकौलिकयोगिन्यः सर्वसिद्धिप्रदायकाः।

सर्वसिद्धिप्रदाद्याश्चक्रे[235] [तु][236] सर्वार्थसाधके ॥ १०२ ॥

निर्गर्भदेवताश्च[क्रे] सर्वरक्षाकरे प[रे][237]।

सर्वज्ञाद्या महादेवि संस्थिता वीरवन्दिते ॥ १०३ ॥

रहस्यदेवतायाश्च सर्वरोगहरं प्रिये।

वशिन्याद्या महादेव्यः संस्थिता[:] परमार्थत[:] ॥ १०४ ॥

---

230 सर्व्वसापरि[x]रणे- क., ख.।

231 कामाकर्षेणे - क., कामाकर्षणे- ख.।

232 *अन्यत्र* – “गुप्तगुप्ततरा” इति पाठः श्रीरस०वाम०, पृ० ५०।

233 *मूलपाठः* – सर्वसंक्षोभणीपुर्व्वाः- क., ख.।

234 सुरसुन्दरी- क., ख.।

235 ०श्चक्र- क., ख.।

236 *अन्यत्र* – “सर्वसिद्धिप्रदाद्यास्तु चक्रे” इति पाठः श्रीरस०वाम०, पृ० ५२।

237 *मूलपाठः* – रिगर्व्भदेवताश्च[x]सर्व्वरक्षाकरेप[x]- क., ख.।

सर्वसिद्धिमये चक्रे परमातिरहस्यगाः।

स्थिता[:] कामेश्वरीपूर्वाश्चतस्रः पीठदेवताः॥ १०५॥

सर्वानन्दमये चक्रे पूर्णसर्वमयीस्थिताः[238]।

परापररहस्याद्या महात्रिपुरसुन्दरी॥ १०६॥ [239]

लोकातीतस्वभावा तत्प्रान्तक्रमसमन्विता[240]।

पराद्वयीतभावस्था[241] सर्वप्रवरगोचरा॥ १०७॥ [242]

सर्वभावपरित्यक्ता[243] सर्वद्वन्द्वविवर्जिता।

परमा निर्विकल्पस्था पूजा पापक्षयंकरी॥ १०८॥

सभैरवचतुःषष्टियोगिनीचक्रमण्डले।

संस्थिते यम्महापूयद्वोधादम[244] (?) नरो भवेत्॥ १०९॥

देवताराधनाकाममेकमाश्रित्य पूजयेत्।

---

238 *शक्यपाठः* – 'पूर्णा सर्वमयी स्थिता'।

239 *अन्यत्र* – "सर्वानन्दमये चक्रे महापूर्णेश्वरीश्वरी। संस्थिताद्या सर्वमयी महात्रिपुरसुन्दरी॥" इति श्लोकपाठः श्रीरस०वाम०, पृ० ५५।

240 *मूलपाठः* – ०समन्विती- क., ख।

241 *पाठान्तरम्* – पराद्वयीतभवस्थाः- ख.।

*शक्यपाठः* – 'परमाद्वैतभावस्था'।

242 *अन्यत्र* – "परमाद्वैतभावस्था महापूजापरा प्रिये" इत्यर्धश्लोकपाठः श्रीरस०वाम०, पृ० ५५।

243 *मूलपाठः* – ०परित्यत्वा- क., ख.।

244 *पाठान्तरम्* – यम्महायूयद्दोधादमन- क.।

सर्वकामपरित्यक्तः सर्वकामानवाप्नुयात्॥ ११०॥

सर्वेप्सितफलावाप्तिः सर्वकामे[245] समाश्रयात्।

यद्येतल्लुप्यते[246] देवि कस्यचित्[247] केनचित् क्वचित्॥ १११॥

मुद्राबन्धं[248] समासेन शृणु वक्षे[ऽ]हमीश्वरि।

उभौ तौ तन्निरुद्धौ[249] तु प्राणापानौ[250] व्यवस्थितौ॥ ११२॥

तत्र मध्ये[251] परं तत्त्वं भावाभावपदोद्भवम्।

तत्र मध्ये[252] विदं[253] कुर्यान्मुद्रैषा खेचरी मता॥ ११३॥

अन्यास्तु[254] करबन्धेन[255] सर्वशास्त्रेषु संस्थिताः।

वाचामगोचरं देव्याः सर्वानन्दमयं वपुः॥ ११४॥

एकवक्त्र[ं] महारक्तं रक्तपद्मासनस्थितम्।

---

245 सर्वकाम- क.।

246 यद्येतद्दृश्यते- ख.।

247 *मूलपाठः* – कस्यश्चित्- क., ख.।

248 मुद्रावंद्धं- क., ख.।

249 *अन्यत्र* – "संनिरुद्धौ" इति पाठः श्रीरस०वाम०, पृ० ७६।

250 *मूलपाठः* – प्राणापानो- क., ख.।

251 मध्य- क., ख.।

252 मध्य- क., ख.।

253 *अन्यत्र* – "चित्तं" इति पाठः श्रीरस०वाम०, पृ० ७६।

254 *मूलपाठः* – अन्योस्तु- क., ख.।

255 करवद्धेन- क., ख.।

चतुर्भिरायुधैः युक्तं पाशांकुशधनुश्शरैः ॥ ११५ ॥

देवीकिरणरूपं तु[256] शुद्ध[ं] शक्तिगणं स्मरेत्।

ध्यानं न विद्यते तस्मास्तदूर्द्धं वरवर्णिनि[257] ॥ ११६ ॥

एवं पूजा विधाने तु सर्वतीर्थफलं लभेत्[258]।

सर्वयज्ञफलं[259] चापि सर्वयोगफलं तथा ॥ ११७ ॥

एतद्रहस्यमख्यातं तत्त्वया परिपृच्छतम्।

नैव देयमभक्तानां किमन्यं कथयामि ते ॥ ११८ ॥

एकैवानेकरूपा सा विद्या श्रीत्रिपुराभिधा[260]।

यस्याः सङ्कटबोधेन[261] जीवन्मुक्तः प्रवर्त्तते ॥ ११९ ॥

॥ इति श्रीवाराहीतन्त्रे दक्षिणाम्नायनिर्वाणपदे दशमपटलः ॥ १० ॥

---

256 ०रूपस्तु- क., ख.।

257 *अन्यत्र* – "तासामतोऽर्थाद्वरवर्णिनि" इति पाठः श्रीरस०वाम०, पृ० ४८।

258 *मूलपाठः* - रभेत्- क., ख.।

259 सर्व्वजज्ञफलं - क., ख.।

260 *पाठान्तरम्* – श्रीत्रिपुराभिध्या- क.।

261 *शक्यपाठः* – 'सङ्केतबोधेन'।

तन्निःसारय चित्तात्वं[264] पापं [हूं] फट् च[265] ते नमः।

सामान्यार्घ[ं] विशेषं च[266] द्विविधं शोधनं मतम्॥ १२०॥

सामान्यमल्पं कथितं विशेषो बहुविस्तरः[267]।

[॥ अथ षड्चक्रशोधनम्॥]

कुण्डलिन्यादि चाज्ञान्तं चक्रं षड्कं विशोधयेत्॥ १२१॥

त[च्] छोधनेन सकलं शुद्धिमतिकलेवरम्[268]।

तद्विशुद्धौ विशुद्धाः स्युर्न्यासपूजाजपादयः॥ १२२॥

महाफल्गुषधूपेन[269] महारक्तेन पात्रकम्[270]।

---

264 *पाठान्तरम्* – वित्तात्वं- क.।

*शक्यपाठः* – 'चित्तात्मे'।

265 *पाठान्तरम्* – पापं[x]फट्२च- ख.।

266 विखाषश्च- क.।

267 *शक्यपाठः* – 'विशेषं बहुविस्तरम्'।

268 *पाठान्तरम्* – शुद्धिमेतिकलेवरं- ख.।

269 *मूलपाठः* – ०धूपेश- क., ०धूपेण- ख.।

270 *पाठान्तरम्* – मात्रकं- क.।

महातैलेन[271] द्वीपादि[272] दीपयेत्सर्वथा निशि॥ १२३॥

सप्तदशाक्षरा विद्या विद्याविद्येश्वरेश्वरी।

सिद्धिकालीति विख्याता सिद्धिलक्ष्मी परेश्वरी॥ १२४॥

चरु[म्] उत्तममध्यं च बाह्यपूज्य प्रयत्नतः।

बाह्ये उत्तममध्यस्थं चरु[ं] पूज्य गृहे सदा॥ १२५॥

अस्मिन्तन्त्रे समाख्याता सिद्धिलक्ष्मी जयद्रथा[273]।

गुह्यकाली राजलक्ष्मी शिवा प्रत्यंगिरेति[274] च॥ १२६॥

नानया[275] सदृशी विद्या सर्वकर्मकरी[276] शुभा।

एषा विद्या महाविद्या मालामन्त्रगणा स्मृता॥ १२७॥

न चैषा[277] दीयते युक्ता स्वभावेन तु दीपिता।

यथा देवी[278] तथा देहे मम तुल्यो भविष्यति॥ १२८॥

समकायशिरोग्रीवा धारयेदचलस्थितम्।

---

271 ०तिलेन- क.।

272 *शक्यपाठः* – 'दीपानि'।

273 *मूलपाठः* – जयद्रथ- क., ख.।

274 *पाठान्तरम्* – प्रत्यंशिरेति- क.।

275 नारया- क.।

276 ०करीः- क.।

277 *मूलपाठः* – चैषां- क., ख.।

278 देवि- क., ख.।

स पश्यन्नासिकाग्रे[279] तु दिशश्च नावलोकयेत्॥ १२९॥

मज्जा[ं][280] मेदा[ं][281] वसा[म्] अण्डा[ं] मांसं रुधिरमेव च।

तद्[282] दद्याद्योगिनीमन्यां नाशयेत्सकलान्वितम्॥ १३०॥

गुरुदेवाग्निभक्तानां मन्त्रध्यानपरायणः।

तत्र तन्मध्ये दातव्यमित्याज्ञा[283] पारमेश्वरी॥ १३१॥

आज्ञायास्त्रिपुरा देवी मूलाधारस्य कुब्जिका।

चण्डेश्वरी स्वाधिष्ठानेऽनाहते गुह्यकालिका॥ १३२॥

मणिपूरकचक्रे तु छिन्नमस्ता प्रकीर्तिता।

विशुद्धे राजमातङ्गी चक्राणां नायिका इमाः[284]॥ १३३॥

ऊर्ध्वपश्चिमपूर्वोत्तराऽधोदक्षिणसंज्ञिकाः[285]।

---

279 *पाठान्तरम्* – पश्यन्नापिकाग्रे- क.।

280 मर्जा- क.।

281 मदा- क.।

282 *मूलपाठः* – ते- क., ख.।

283 तन्मध्यदातव्यामित्याज्ञा- क., ख.।

284 *पाठान्तरम्* – ईमाः- क.।

285 *मूलपाठः* – ०संज्ञकाः- क., ख.।

यथा तारेश्वरी[286] पूर्णा तथा पूर्णेश्वरी[287] निशा[288]॥ १३४॥

यथा निशेश्वरी[289] कुब्जा तथा कुब्जेश्च गुह्यका[290][।]

श्रीमत्परा महाविद्या महात्रिपुरसुन्दरी॥ १३५॥

प[रा]प्रासादमहामन्त्रं[291] सकलं निष्कलामयम्।

स्वदेहं सकलं प्रोक्तं निष्कलं परमादिभिः॥ १३६॥

सकलं निष्कलं ज्ञात्वा मोक्षभावेन पूजयेत्।

षडाम्नाया अमी प्रोक्तास्तत्रेमा नायिकाः क्रमात्॥ १३७॥

एकैको मन्त्र एकैको न्यासो ध्यानमथैकैकम्[292]।

जपश्चाष्टोत्तरशतं तदर्धं वाथ पादिकम्॥ १३८॥

पश्चिमाम्नायमध्ये तु मुख्या वै कुब्जिका मता।

मूलाधारं चक्रमस्याः स्थित्यर्थं निलयाकृति[ः]॥ १३९॥

मूलाधारे महाचक्रे कुब्जिकां परिचिन्तयेत्।

---

286 तालेश्वरी- क., तालेश्वली- ख.।

287 पूर्णेश्वली- क., ख.।

288 निसा- क., ख.।

289 निसेश्वरी- क., ख.।

290 *पाठान्तरम्* – गुस्वका- क.।

291 *मूलपाठः* – प्र[x]प्रासादमहामन्त्रं - क., ख.।

292 ध्यानमथैककं- क, ख.।

अस्ति कुण्डलिनी ब्रह्मशक्तिराधारपंकजे॥ १४०॥

आब्रह्मरन्ध्रां नियतं नीतेयममृतप्रदा।

कुण्डलिन्याः समुत्पन्नं जगदेतच्चराचरम्॥ १४१॥

द्वितीयजगदाकारं भौतिकं देहमेव च।

सांख्ययोगः समाविष्टे[293] प्रकृतिं पुरुषं तथा॥ १४२॥

जगतः कारणत्वेन तद्वद्वै[294] बन्धमोक्षयोः।

तत्रापि प्रकृतिं स्यादौ[295] पुरुषस्तदनन्तरम्॥ १४३॥

प्रकृतिः शक्तिरूपाहि पुरुषः शिव[296] उच्यते।

आद्या[297] शक्तिः कुण्डलिनी चिन्मयी प्रकृतिः कला॥ १४४॥

इत्याद्या वाचकाः शब्दा बहवः शास्त्रगोचराः।

परमात्मेश्वरः साक्षी मायेशः पुरुषः शिवः॥ १४५॥

पर्यायशब्दा[298] एते[ऽ]पि भूयासः परमेशितुः।

---

293 *पाठान्तरम्* – समाचष्टे- क., समावष्टे- ख.।

294 त[x]द्वै- क.।

295 *शक्यपाठः* – 'प्रकृतिरादौ'।

296 *पाठान्तरम्* – शिर- क.।

297 आद्यो- क.।

298 मर्यायशव्दा- क.।

तस्याः कन्दागृहं[299] प्रोक्तं मूलस्याधारहेतुतः[300]॥ १४६॥

मूलाधारमिति ख्यातं ब्रह्मग्रन्थितया तथा।

साध्याष्टवलया[301] तत्र प्रसुप्तभुजगाकृति[ः]॥ १४७॥

चेष्टयन्ती[302] तनुं सर्वं[303] तिष्ठत्यमृतरूपिणी।

सदाशिवस्य भवनं ब्रह्मरन्ध्रमिति स्मृतम्॥ १४८॥

सहस्रदलमम्भोजं त[द्]दुरिष्टमधोमुखम्।

ब्रह्मकारे सूक्ष्मरन्ध्रे[304] कुण्डलिन्यहिरूपिणी॥ १४९॥

प्रविश्य तिष्ठति यतो[305] ब्रह्मरन्ध्रं[306] ततो मुखम्।

ब्रह्मरन्ध्रं शिरस्येव[307] ब्रह्मग्रन्थिं गुदोपरि॥ १५०॥

ग्रन्थै[र्] विमोचे[308] मोक्षो[309] ब्रह्मग्रन्थिस्ततः स्मृतः।

---

299 *शक्यपाठः* – 'कुण्डगृहं'।

300 *मूलपाठः* – मूलास्या०- क., ख.।

301 *पाठान्तरम्* – साध्यष्टवलयो- क.।

302 *मूलपाठः* – चेष्टयन्तीं- क., ख.।

303 सर्वां- क., ख.।

304 शूष्मरन्धे- क., शूष्मरन्ध्रे- ख.।

305 यते- क., यातो- ख।

306 व्रह्मरन्धं- क., ख.।

307 *पाठान्तरम्* – गिरस्येच- क.।

308 ग्रन्थैपिमोचे- क.।

309 मोक्षा- क.।

मूलाधारश्च कन्दश्च[310] ब्रह्मग्रन्थिः सनातनः॥ १५१॥

ब्रह्माण्डं ब्रह्मशर्या[311] च शब्दाः पर्यायवाचकाः[312]।

कुण्डलिन्येव हि सदा गच्छत्यूर्ध्वं[313] शिवान्तिकम्॥ १५२॥

न शिवोऽधः समायाति कदापि हि तदन्तिकम्।

यत्र यत्र च विश्रम्य गच्छत्यमृतलिंगया॥ १५३॥

क्रमेणोर्द्ध्वेद्धिसंस्थाना[च्] (?) चक्रमित्यभिधीयते[314]।

देवि[315] कामकलाकालि[316] सृष्टिस्थित्यन्तकारिणि॥ १५४॥

अत्राधिष्ठानमाधसि[317] परिवारगणे सह।

यथा शक्ति[र्] यथा लाभं त्वदर्थमु[x]कल्पिते[318]॥ १५५॥

दृष्टिं निवेशये[त्][319] शनिपूजोपकरणेऽखिले[320]।

---

310 *शक्यपाठः* – 'कुण्डश्च'।

311 *पाठान्तरम्* – ब्रह्म[x]र्य्या- ख.।

312 *मूलपाठः* – पर्य्याच०- क., ख.।

313 *पाठान्तरम्* – मछत्युर्द्ध- ख.।

314 क्रमेणिद्धेद्धिसंस्थानाच्चक्र०- ख.।

315 दैवि- क.।

316 कामकलाका[x]- क.।

317 ०धेसि- ख.।

318 *शक्यपाठः* – 'त्वदर्थमनुकल्पिते'।

319 *मूलपाठः* – नवेशये- क., ख.।

320 शानिपूजा०- क., शानिपूजो०- ख.।

जलेऽनुलेपने पुष्पे धूपदीपे वलौ तथा॥ १५६॥

नैवेद्ये[ऽ]पि च ताम्बुले राजोपकरणे[321] तथा।

अधिष्ठितायां त्वप्यम्व(?) विघ्नान् रक्ष्यन्ति सर्वशः॥ १५७॥

भूतानि विद्र[ं] विष्यन्ति मम[322] रक्षा भविष्यति।

मनोरथाश्च मे सर्वे सेत्स्यन्ति त्वत्प्रसादतः॥ १५८॥

पूजा च सकला[323] देवि भवित्रीते कृपावशात्।

नृचर्ममासनं कृत्वा नरपात्रे प्रपूजयेत्॥ १५९॥

यथा गुरुमोखोद्दिष्टनिर्विकल्पेन साधयेत्[324]।

लाक्षारसनिभेनैव हेतुना परिपूरितम्॥ १६०॥

फल्गु[ं][325] दत्त्वा तत्र मध्ये पात्रे हेतुप्रपूरिते।

अष्टम्यां वा[326] चतुर्दश्यां नवम्यां वा विशेषतः॥ १६१॥

शिवरात्र्यां तथा पूजा निशायां परिपूजयेत्।

---

321 *पाठान्तरम्* – राजा०- क.।

322 मेम- क.।

323 *मूलपाठः* – वसहला- क., ख.।

324 सोधयेत्- क., ख.।

325 *अन्यत्र* – "फलं" इति पाठः परातन्त्रे (प० ९।७८)।

326 *पाठान्तरम्* – मा- क.।

यथा श्रीचक्रपूजां वै तथा सर्वं[327] समाचरेत्॥ १६२॥

बिन्दुचक्रे त्रिकोणे तु महापात्रं तु[328] स्थापयेत्।

पञ्चकाल्यां तु[329] पञ्चारे चरुकं पञ्च वै क्रमात्॥ १६३॥

नातः परतरं भद्रे कालिकाक्रमपूजने।

भोग्यं स्वर्गं सुखं मोक्षम् आज्ञासिद्धिं भवेद्ध्रुवम्[330]॥ १६४॥

सत्यं सत्यं महादेवि सत्यमेतद्ब्रवीम्यहम्[331]।

अन्यथा कुरुते यस्तु हेतुवादकुतर्कतः[332]॥ १६५॥

परिश्रमं केवलं तु न[333] स सिद्धिमवाप्नुयात्।

मंगला च महामाया चण्डकापालिनी[334] शिवा॥ १६६॥

चामुण्डा चर्चिका चण्डा सृष्टिस्थित्यन्तकारिणी।

---

327 सर्वे- क.।

328 *मूलपाठः* – महापातुत्तु- क., महापात्रन्तु- ख.।

329 *पाठान्तरम्* – ०कान्यातु- क.।

330 भवेध्रुवं- क.।

331 ०द्ववीम्यहं- क.।

332 ०पादकुतर्कतः- क.।

333 र- ख.।

334 *अन्यत्र* – "चण्डा कापालिनी" इति पाठः प० (९।९७)।

अनाख्या च महाभागा[335] गुह्यकाली[336] जया परा॥ १६७॥

सिद्धिलक्ष्मी विश्वलक्ष्मी महाप्रत्यंगिरा स्मृता।

सुन्दरी त्रिपुरा चारु उग्रचण्डा प्रकाशिनी॥ १६८॥

विभिन्ना[337] बहुधा[338] जाता नानाभेदसमाश्रिता।

एका सा बहुरूपा[339] च जानीया दिव्यचक्षुषा[340]॥ १६९॥

स एव साधक[:][341] श्रेष्ठः[342] सिद्धिज्ञानस्य[343] भाजनम्।[344]

---

335 "महाभाषा" इति पाठः प० (९।९८)।

336 *पाठान्तरम्* – गुह्येकालि- क.।

337 विहिन्ना- क.।

338 वद्गधा- ख.।

339 वद्गरूपा- ख.।

340 द्दिव्य०- ख.।

341 साधका- क.।

342 *मूलपाठः* – श्रेष्टः- क., ख.।

343 *पाठान्तरम्* – ०ज्ञानस्म- ख.।

344 *अन्यत्र* – "अनुष्ठानरतः सर्वं सिद्धिभागी भवेद्ध्रुवम्" इत्यधिकपाठः प० (९।१०१)।

एकैवानेक रूपा सा विद्याश्री त्रिपुराभिधा।
यस्याः संकट वोधेन जीवन्मुक्तः प्रवर्तते॥

इति श्रीवाराहीतंत्रे दक्षिणाम्नायनिर्वाणपदे दशमः पटलः॥ १०॥

श्रीदेव्युवाच॥

पृथिव्यापस्तथा तेज वायुराकाशमेव च।
पंचतत्व गत सृष्टिषु नक्षत्र विलीयते॥

श्रीशिव उवाच॥

पृ। ५०अ)

प्रथमं शून्यमव्यक्त द्वितीय धूममेव च।
तृतीये तेजमुत्पन्ना चतुर्थे आपजायते॥

पंचमे पृथिवी जाता पंचतत्वं प्रजायते।
एतत् पंचाधिकारी च त्रिगुण परमेश्वरः॥

ब्रह्माधराधिपश्चैव विष्णुजराधिपस्तथा।
तेजो च वायुराकाशं महेश्वव्यावृत्तेश्वरः॥

एतेषां जन्मं संहारं वक्ष्यामि शृणु पार्वति।
क्रम्यव्युक्रमणे नैव शुद्धभावेन भावयेत्॥

पृथिव्यां लीयते * प्सु आपस्तेजसि लीयते।
तेजो विलीयते वायुः वायुराकाश लीयते॥

एते पंचधिकारश्च पंचपंच प्रजायते।
ब्रह्मांडं व्यापकं ज्ञेयं पंचभूतेन पार्वति॥

मलमस्थितथानाडीनखकेश तथैव च।
पृथिपंचगुणाप्रेता ज्ञानि ज्ञानेन भाषितं॥

कामं क्रोधं च लोभं च विवादं विग्रहस्तथा।
आपपंचगुणा प्रोक्ता ज्ञानि ज्ञानेन भाषितं॥

क्षुधा तृष्णा तथा निद्रा आरस्यं कुंठ्यमेव च ।
तेजपंच गुणा प्रोक्ता ज्ञानि ज्ञानेन भाषितं ॥

पवनं धारणं चैव निरोधः संकुचिस्तथा ।
प्रशवो वायुरूपेण ज्ञानिज्ञानेन भाषितं ॥

भयं मोहस्तथा लज्जा रागद्वेषस्तथैव च ।
लोभपंचगुणाप्रोक्ता ज्ञानिज्ञानेन भाषितं ॥

अनंत भुवनं देवि ब्रह्मांडं क्रमसंख्यया ।
तेषां निष्ठा प्रवक्ष्यामि शृणुष्व सर्वभक्तितः ॥

पृ। ५०ब्)

पाद द्वय तलं विद्या वितलं गुल्फदेशके ।
सुतलं जंघदेशस्तु तरातल तदुर्द्धत ॥

महातलं उरुदेशे गुह्यदेशे रसातलं ।
पातालं कटिरंध्रे तु सप्तमं परिकीर्तितं ॥

भूर्लोकं नाभिदेशे तु भुवर्लोकं च कुक्षिणं।
वामांगे स्वर्गलोकं च महर्लोकं च वक्षसि॥

कंठस्तेज न लोकं च ततो लोकं ललाटके।
सत्यलोकं भ्रुवोर्मध्ये भुवनानि चतुर्दशः॥

अध स्थितो भवे मेरुः ऊर्ध्वकोणे च मंदर।
कैलासश्चोत्तरे कोणे दक्षकोणे हिमालये॥

माल्यवान् वामरेखायां दक्षिणे गंधमादनं।
निषधश्चोर्द्धभागेन षडांगे परिपार्श्वतः॥

अस्थिवेषस्थितो जंवु मेधः प्लक्ष च वस्थितः।
कुशद्वीपस्थितो मांस क्रौंच द्वीपं च शोणितं॥

शाल्म द्वीपं च मज्जायां साल्मली रोमसंचय।
नखे पुष्कर द्वीपं च सप्तद्वीपा प्रकीर्तिता॥

लवणोदकस्तथा मूत्रे क्षीरो क्षीरोदमस्तके।

सुरादधि रसायां च श्वनित्यक्षुदधि तथा ॥

सर्पि सागर शुक्रे च तत्रापि जलसागर ।
दधिसागर श्लेष्मायां सागरा सप्त कीर्तिताः ॥

नादस्थाने स्थिता सूर्य तेजस्थाने च चंद्रमा ।
लोचने मंगल प्रोक्ता हृदि सौम्य व्यवस्थिताः ॥

पृ। ५१अ)

नाभि स्थाने गुरुं विद्या शुक्रे शुक्र व्यवस्थिता ।
नाभि स्थाने स्थितो मंदा मुखराहु व्यवस्थित ॥

राहु स्थाने स्थित केतु शरीरे ग्रहमण्डल ।
सार्द्ध त्रयश्च कोटिश्च शरीरे शेष उच्यते ॥

नव ज्वरं च प्रत्यक्षं शुद्धभावेन भावयेत् ।
गुडलिङ्गं च नेत्रञ्च मुखकर्णौ च नाशिक ॥

एतानि नवछिद्राणि द्वारानि नव उच्यते ॥

देव्युवाच ॥

कुत्र वा भावये चंद्रं सूर्यं वा कुत्र भावयेत् ।
मनं वा कुत्र स्थाने च देव देव वदस्व मे ॥

शिव उवाच ॥

तालुमूले स्थितश्चंद्र नाभिमूले दिवाकरः ।
सूर्यस्ते वसते वह्नि चंद्रास्ते वसते मनः ॥

देव्युवाचः ॥

कथमुत्पद्यते प्राणः कथमुत्पद्यते मनः ॥

कथमुत्पद्यतेवाचा एता सर्ववदस्व मे ॥

शिव उवाच ॥

अव्यक्तादुत्पते प्राणाः प्राणादुत्पद्यते मनः।
मनः सर्वविकारं च वाक्यानि सर्वधातुभिः॥

देव्युवाच॥

को वा करोति कर्माणि को वा लिप्यति पातकैः।
तत्कथय महादेव सर्वज्ञ परमेश्वर॥

शिव उवाच॥

मनः करोति कर्माणि मनोलिप्यति पातकैः।
मनोपि उन्ममी भूत्वा पापपुण्यै न लिप्यते॥

देव्युवाच॥

कस्मिन् स्थाने स्थिता शक्तिः कस्मिस्थाने स्थित शिव।
कस्मिन् स्थाने स्थित कालः जला केन प्रजायते॥

प्। ५१ब्)

श्रीशिव उवाच ॥

आधारे वसते शक्तिः नादस्थाने वसेत् शिव ।
काला व्याप्त परिज्ञेया चलश्चित्तो जला भवेत् ॥

श्रीदेव्युवाच ॥

श्वासं वाक्यं गतिनिंद्रा प्राणस्य कण्ठमेव च ।
क्षुधा तृष्णा च पौरुष्यं कस्मादश प्रजायते ॥

श्रीशिवोवाच ॥

वायुश्च केवलं सूक्ष्म विकारेन च लभ्यते ।
तन्मयं च कृते भाव मुक्तो भवति तत्क्षणात् ॥

श्रीदेव्युवाच ॥

शिवशक्ति कथं देव दशवायुश्च कीदृशः ।
कीदृश परमं देवं देवदेववदस्वमे ॥

श्रीशिव उवाच ॥

शिवशक्तिश्च वायुंश्च सर्वं तिष्ठति वै क्रमं ।
वदामि कारणं देवि शृणुत्व कथयामि ते ॥

हृदि प्राण स्थितो वायुरपानो गुरु उच्यते ।
समानो नाभि देशे तु उदानो कण्ठ उच्यते ॥

व्यान सर्वगतो देवि प्राणपंचक्रमोद्भव ।
एते पंचप्रकारेण प्राणो देहे व्यवस्थित ॥

नागकर्म कृकश्चैव देवदत्तो धनंजय ।
उदानो पंचवायुश्च ज्ञायते क्रमयोगत ॥

चैतन्य देहिनां सर्व नागवायु करोति च ।
कूर्मो वायु प्रयोगेन चक्षुनिमिष जायते ॥

क्लिकवायु क्षुधा जाता देवदत्तो त्वनन्तयेत् ।

धनञ्जय सशब्देण पूरयेत् सर्वदेहिनां ॥

पृ। ५२अ)

नागश्च ये गृहे वायु कूर्मश्च मतिनां सह ।
कृककरोति कर्माणि देवदत्तो गतो भवेत् ॥

बुद्धिधर्मा च मध्यक्षमशेषमविलंवितं ।
नवद्धारं च प्रत्यक्षं दशमं स निगद्यते ॥

शेषद्वारस्थितं तत्वं गुरुवाक्येन लभ्यते ।
शक्तिकुंडलनी रूपा त्रयोदश स नाडिका ॥

द्विसप्तति * माह श्रीशरीरे ज्ञायते ध्रुवं ।
तेषां मध्ये प्रधानाश्च त्रयोदशमनाडिका ॥

इडा च पिंगला चैव सुषुम्ना ऊद्ध्र्वनाडिका ।
गांधारी हस्ति जिह्वा च पुषाप्राणलतास्तथा ॥

यसाचालंवुषा चैव दक्षमार्गे विलंविका ।

कुरंगि शंखिनी नित्या वाममार्गे विलंविता ॥

एतानिभीद्यते येन स योगी योगलक्षणं ।
ममतुल्यो भवत्येव ज्ञानदेवि न संशयः ॥

देव्युवाच ॥

भूतनाथ महादेव ब्रूहि मे परमेश्वर ।
त्रयो देवा कथं नामत्रयो भावाश्च कीदृश ॥

शिव उवाच ॥

रजोभाव स्थितो ब्रह्मा सत्वभाव स्थितो हरि ।
तमो भाव स्थितो रुद्र त्रयो देवा त्रयोगुण ॥

एकमूर्ति त्रयोदेवा रुद्रविष्णु पितामह ।
नानाभाव मनो यस्य तस्य मुक्ति न विंद्यते ॥

अहं श्रुतिरहंकार अहं सर्वगत शिव ।

अहं ब्रह्मारहं विष्णु अहं शून्यं निरञ्जनं ॥

देव्युवाच ॥

प्। ५२ब्)

सर्वज्ञ सर्वभूतेषु सर्वलोक महेश्वर ।
त्वया च कथितो देव कथं माता पिता कथं ॥

शिव उवाच ॥

नवद्वारं च प्रत्यक्षं त्रिशून्यं पंच देवता ।
पंचेंद्रिया कुतुन्वश्च यत्र प्राण समे गृहं ॥

अखिरा चतुरोवेदा सर्वशास्त्र तथैव च ।
सारं च योगिभिः पीतं तक्रं पिवति पंडिता ॥

उंश्छिष्टं सर्वशास्त्राणि सर्वविद्या मुखे मुखे ।
नोश्छिष्टं ब्रह्मनो ज्ञानं व्यक्ताव्यक्त मनोमयं ॥

पार्वत्युवाच ॥

यस्त्वया कथितो देव न हि यानामि शंकर ।
निश्चितं ब्रूहि मे देव मनो यत्र विलियते ॥

शिवोवाच ॥

मणः कर्मं च वाक्यं च त्रयो यत्र विलिप्यते ।
तत्रस्था परमाशक्ति शृणु देवि सुनिश्चितं ॥

विनानिसा यथा निद्रा ब्रह्मज्ञानि स उच्यते ।
स्वगमध्य खगज्ञानि खमार्गेण यथा खग ॥

तथात्मयो यजेत् सर्वं पंचभूत क्रमेण तु ।
मृतकस्य यथा निद्रा ब्रह्मज्ञानि स उच्यते ॥

बालकस्य यथाभाव मोक्षे योगस्तथा खगः ।
य इदं ब्रह्मणो ज्ञानं परमात्मा समाहितः ॥

शिवशक्ति समासंगो शतसूर्यस्य संगम ।
एकोपि ब्रह्मणो ज्ञानं यत्र चिंता विना मन ॥

एतत् ते कथितं ज्ञानं ब्रह्मज्ञान स तत्वतः ।
एतच्च सर्वसंतोष यत्र चिंता विना मन ॥

पृ। ५३अ)

षट्चक्रं षोडशाधारं केशत्रय स चक्रकं ।
स्वदेहे यो न जानंति कथं ध्यायंति योगिनः ॥

आकाशमासनं कृत्वा मन ज्ञात्वा सुनिश्चितं ।
अहमेवमिदं सर्वं सिद्धया पश्यंतित सुखं ॥

काश्यां वा ससतां संगो गंगांभशंभुपूजनं ।
ब्रह्मज्ञान समो धर्मो नान्यो धर्म विधीयते ॥

अथ आह्लादिनी मंत्रं शृणु मत्प्राण वल्लभे ।
यस्योच्चारण मात्रेण कालिका सुप्रसीदति ॥

अनुस्थानरता सर्वं सिद्धिभागी भवेद्ध्रुवं ।

इति श्रीवाराही तंत्रे दक्षिणाम्नायनिर्वाणपदे पंचविंशति पटलः ॥ २५ ॥

भैरव उवाच ॥

कुर्यात् तदासनं तस्मादारोग्यं चांगलाघवं ।
वशिष्ठाद्यैश्च मुनिभिर्मत्स्यैंद्राद्यैश्च योगिभिः ॥

अंगीकृतान्यासनानि कथ्यंते कानि चित्सदा ।
जानुर्चोरंतरे सम्यक् कृत्वा पादतले उभे ॥

ऋतुकायः समासीनः स्वस्तिकं तन् प्रचक्षते ।

पृ। १५६ब्)

सव्ये दक्षिणगुल्फं तु पृष्टापार्श्वे नियोजयेत् ।
दक्षिणेतथा सव्यं गोमुखं गोमुखं तथा ॥

एकं पादं तथैकस्मिन्विन्यस्योरुणि संस्थितं।
इतरस्मिं तथा चैकं वीरासनमितिरितं॥

गुदं निष्पीडा गुल्फाभ्यां व्युक्तमेण समाहितः।
कूर्मासनं भवेदेतदिति योगविदोविदः॥

पद्मासनंस्तु संस्थाप्य जानुर्वोरंतरे करैः।
विन्यस्य भूमौ संस्थाप्य व्योमस्थः कुक्कुटासनं॥

कुक्कुटासनमध्यस्थोद्दौभ्यासं वंध्यकं धरा।
सते कूर्म वदुत्तान एतदुतान कूर्मकं॥

पादांगुष्ठौ तु वाहुभ्यां गृहीत्वा श्रीवणावधि।
धनुराकर्षणं कुर्याद्धनुरासनमुच्यते॥

वामोरुमूलार्पित दक्षपादं जानोर्वहि वेष्ठित वमपादं।
प्रगृह्य तिष्ठेत् परिवेत्ति ताग्रः श्रीमत्स्यनाथोदित मासनं स्यात्॥

मत्स्येंद्र पीठ ज्वलन प्रदीप्तं प्रचंडरुग्मं न * खण्डनास्त्रं।

अभ्यासतः कुंडलिनी प्रबोधं दंडस्थिरत्वं वददाति पुंसां ॥

उत्तानशववद्भूमौ शमनं च सवासनं ।
सवासनं शांति हरं चित्त विशांति कारकं ॥

चतुराशीति भ्यासनानि शिवेन कथितानि तु ।

पृ। १५७अ)

तेभ्यश्चतुष्कमादाय सारभूतब्रवीम्यहं ।
सिद्धं पद्मं तथा सिंहं भद्रं चेति चतुष्टयं ॥

श्रेष्ठ तत्र द्वयं तिष्ठेत् पद्मसिंहासने सदा ।

योनि स्यातकमंघ्रिमूलघंटितं कृत्वा दृढं विन्यसे मेढे
पादमथैकमेव नियतं कृत्वा समं विग्रहं ॥
स्थानु संप्रतितेंद्रियौ चलदृशा पश्यन्भ्रुवोरं * चैतन्मोक्ष *
कपाटभेदजनकं सिद्धासनं प्रोच्यते ॥

मेढ्रादुपरिनिक्षिप्य सव्यगुल्फ तथोपरि ।

गुल्फांतर च निःक्षिप्य सिद्धासनमिदं भवेत्॥

एतत् सिद्धासनं प्राहुरन्ये वज्रासनं विदुः।
सुक्तासनं वदंत्येके प्राहुर्गुप्तासनं परे॥

यमेष्विवमिताहारः अहिंसा नियमेष्विव।
मुख्यं सर्वासनेष्वेकं सिद्धासिद्धासनं विदुः॥

चतुराशीति पीठेषु सिद्धमेव सदाभ्यसेत्।
द्विसप्तति सहस्त्रैषु नाडीनां मल शोधने॥

आत्मध्यायी मि * हारी यावद्वादशवत्सरं।
सदा सिद्धासनाभ्यासाद् योगिनी प्राप्तिमाप्नुयात्॥

किमाद्यैर्बहुभिः पीठैः सदासिद्धासने सति।
प्राणानित्ये सावधाने वर्द्ध केवलकुंभके॥

उरुद्यंते विनिभ्यासा स्वयमेवोत्मनी यथा।
तथैकस्मिन्नेव दृढे वद्धे सिद्धासने सदा॥

बंधत्रयसनायासात् स्वयमेवोपजायते ।
न चासनं सिद्धसनं न कुंभसदृशो निल ॥

प्। १५७ब्)

न खेचरी समामुद्रा न नाद सदृशो लयंः ।

वामोरूपरिदक्षिणं च वरणं संस्थाप्य चामं तथा जानु
भूपरिपश्चिमेन विधिना धृत्वा कराभ्यां दृढं ॥ अंगुष्ठौ हृदये
निधाय चिबुकं नासाग्रमालांकये तद्व्याधिविनाशनाय यमिनां
पद्मासनं प्रोच्यते ॥

उत्तानौ चरणौ कृत्वा उरू संधौ प्रयत्नतः ।
उरू मध्ये तथोत्तानौ पाणौ कृत्वा ततो दृशौ ॥

नासाग्रे विन्यसेद् दृष्टी दंतमूलं च जिह्वया ।
उद्धृत्य चिबुकं वक्ष्ये स्थापयेत् पचनैशनैः ॥

इदं पद्मासनं प्रोक्तं सर्वव्याधि विनाशनं ।

दुर्लभं येन केनापि धीमता लभ्यते भुवि ॥

कृत्वा संपुटितौ करौ दृढतरं बध्वा तु पद्मासनं गाढं वक्षसि

सन्निधाय चिबुकं ध्यानच्चतच्चेतसि ॥

वा स्वा * रसपार्दमूर्द्धमनिलं प्रोल्लास यत् पूरितं मुंचन्

प्राणमुपैति बोधमतुलं शक्तिं प्रबोधो दयात् ॥

पद्मासने स्थितो योगी नाडी द्वारेण पूरयेत् ।

मारुतं यस्तु पिबति समुक्तो नात्र संशयः ॥

गुल्फो च वृषणस्याधः सीवन्याः पार्श्वयोः क्षिपेत् ।

दक्षिणे सव्य गुल्फं तु दक्षगुल्फं तु सव्यके ॥

हस्तौ भुजानुनोः स्थाप्य स्वांगुलीः संप्रसार्य च ।

व्यात्तवक्रौ निरीक्षेत मासाग्रे न्यस्त लोचनः ॥

पृ। १५८अ)

सिंहासनं भवेदेतत् पूजितं योगिभिः सदा ।

बंध त्रितयसंधानं कुरुते चासनोत्तमं ॥

गुल्फो च वृषण स्याधः सीवन्याः पार्श्वयोः क्षिपेत्।
पार्श्वपादौ च पाणिभ्यां दृढं बध्वा सुनिश्चलं॥

भद्रासनं भवेदेततत् सर्वं व्याधि नाशनं।
गोरक्षासनमित्याहुरिदं वै सिद्ध योगिनः॥

एवमानवंधणेषु योगिंद्रो विगतं श्रमः।
अथाभ्यसेन्नाडि शुद्धं मुद्रादि पवन क्रियां॥

क्रियायुक्तस्य सिद्धिः स्यादक्रियस्य कथं भवेत्।
न शास्त्र पाठमात्रेण योगसिद्धि प्रजायते॥

न वेषधारणं सिद्धे कारणं न च तत्कथा।
क्रियैव कारणं सिद्धः सत्यमेव न संशयः॥

सिष्णोदररता ये हे न देयो वेषधारिणः।
मयि बोधी बुधो स्वस्थे तुछोयं विश्वबुद्बुदः॥

मलीन उदितो वेत्ति विकल्पावसरः कुतः।
आसनं कुंभकश्चित्रं मुद्रादि करणानि च॥

अथादानानु संधेन स्यादभ्यासान् क्रमो हठे।
ब्रह्मचारी मिताहारी त्यागी योगपरायणः॥

अब्दादूर्द्धं भवेत् सिद्धिन्नात्र कार्याविचारणात्।
सुस्निग्धा मधुराहार चतुर्थांशविवर्जितः॥

भुजाविमांसदधितक्र कुलत्थकोलपि।
नद्याकहिंगुलशुनाद्यमपश्यमाहुः॥

भोजनमहितं विद्यात् पुनरघुलीकृतं।
रुक्षं अतिलवणं तिलपिंडकदशनम्॥

पृ। १५८ब्)

वर्जयेद्दुर्जन प्रीति वह्निस्त्री पठसेवनं।
प्रातस्नानोपवासादि कायक्लेशादिकं तथा॥

गोधूमशालि जवषष्ठिकशोभनान्तं क्षीराज्य खण्ड नवनीतसितामधूनि ॥
सूढीपटोलफलकादि च शाकमुक्तं मुंगादि दिव्यमुदकं च
यमीन्द्रपंथां ॥

इष्टं स मधुरं स्निग्धं गव्यं धातु प्रपोषणं ।
मनोभिलषितं योग्यं योगीभोजनमाचरेत् ॥

युवावृद्धोति * द्धो वा व्याधितो दुर्वलस्तथा ।
अभ्यासात् सिद्धिमाप्नोति सर्वयोगेष्ट तंद्रितः ॥

पीठाति कुंभकश्चित्रं मुद्रादि करणानि च ।
सर्वस्य विह *? भ्यासे राजयोगफलावधि ॥

अथासने दृढे योगी वशीति हमितासनः ।
गुरूपदिष्टमार्गेन योगमार्ग समभ्यसेत् ॥

चलवातेजलंवित्तं निश्च निश्चलते तथा ।
योगीस्थाणुत्व माप्नोति ततो वायुं निरुंधयेत् ॥

यावद्वातास्थितो देहे तावज्जीवनमुच्यते।
मरन तस्य निःक्रांति तस्माद् वायु न रुंधयेत्॥

मलाकुलासु नाडीषु मारुती नैव मध्यगः।
कथं स्यादुत्मनी भावः कार्यसिद्धिः कथं भवेत्॥

शुद्धिमेति यथा सर्वं नाडी चक्रं मलाकुलं।
तदैव जाते योगी प्राणसंग्रहणे क्षमः॥

प्राणाभ्यासं ततः कुर्यान्नित्यं सात्विकयाधिया।

पृ। १५९अ)

यथा सुखेमवस्थायमलाः शौषं प्रयांति च।
वद्धपद्मासने योगी प्राणं चंद्रेण पूरयेत्॥

धारयित्वा यथा शक्त्या भूयः सूर्येण रेचयेत्।
प्राणं सूर्येण चाकृष्य पूरयेदुदरं शनैः॥

विधिवत् कुंभकं कृत्वा पुनः चंद्रेण रेचयेत्।

येन त्येजेत्तेना पूर्यधारयेदविरोधतः ॥

रेचयेच्च ततोन्येनशनैरेव न वेगतः ।

प्राणं त्रयापितेन्नियमितं भूयोन्ययारचयेत् पीत्वा पिंगलया समीरणमथो
वध्वा त्यजेद् वामया ॥
सूर्याच्चंद्रमसोरनेन विधिना विंवद्वयं ध्यायतां शुद्धानाडि गणा
भवंति यमिनां मासत्रयादूर्द्धतः ॥

प्रातर्मध्ये दिने शाय मध्यरात्रे च कुंभकान् ।
शनैरशीति पर्यंतं चतुर्वारं समभ्यसेत् ॥

अधमं जायते स्वेदः कंपो भवति मध्यमे ।
उत्तिष्ठ चोत्तमे प्राणा वद्धे पद्मासने मुहुः ॥

जलेन श्रमजातेन गात्रमर्दन माचरेत् ।
दृढता लघुता वापि तेन गात्रस्य जायते ॥

अभ्याकाले प्रथमेशस्मक्षीराज्य भोजनं ।

ततोभ्यासे स्थिरी भूतेन तादृग् नियमग्रहः ॥

यथा सिंहो गजो व्याघ्रो भवेद् वश्य शनैः शनैः ।
तथैव सेवितो वायुरन्यथाहंति साधनं ॥

प्राणायामेन युक्तेन सर्वरोगक्षयो भवेत् ।
अयुक्ताभ्यांसयोगेन सर्वरोगसमुद्भवः ॥

हिक्काकाशस्तथा श्वास शिरः कर्णाक्षि वेदना ।

प्। १५९ब्)

भवंति विविधा दोषाः पवनस्य व्यति क्रमात् ।
युक्तं युक्त त्यजेद् वायुः युक्तं युक्त च सेवयेत् ॥

युक्तं युक्त च वध्नीयादेवं सिद्धिमवाप्नुयात् ।
यदा नाडि विशुद्धिः स्यात् तदा चिह्नानि वाह्यतः ॥

कायस्य क्रियते कांतिस्तथा जायेत निश्चितं ।
यथाष्टं धारणं वायोरानलस्य प्रदीपनं ॥

नादाभिव्यक्तिरारोग्यं जायते नाडि शोधने ।
मेदः श्लेष्मादि नाशार्थं षट्कर्मादि समाचरेत् ॥

अन्यथा नाचरेत् ज्ञानि दोषाणां समभावतः ।
धोतीवर्तिश्च नेतिश्च त्राटकं नौलिकं तथा ॥

कपालभाथी चैतानि षट्कर्माणि प्रचक्ष्यते ।
कर्मषट्कमिदं गोप्यं घटशोधनकारकं ॥

विचित्रगुणसंधायी पूज्यते योगपुंगवैः ।
चतुरंगुलविस्तारं हस्तपंचदशेन तु ॥

गुरूपदिष्टमार्गेण सिक्तं वस्त्रंशनैग्रसेत् ।
ततः प्रत्याहरे चैव दुदितौ धौति कर्म तत् ॥

श्वासः काशः प्लीह कुष्टां कफरोगाश्च विंशति ।
धौती कर्म प्रभावेन शुद्ध्यंते च न संशयः ॥

नाभि दघ्नेन लेपायुन्यसनालोत्कटासनः ।
आधारात् कुंचनं कुर्यात् क्षालनं वस्ति कर्म तत् ॥

गुल्पप्लिहोदलं वापि वातपित्तकफोद्भवं ।
वस्तिकर्म प्रभावेन क्षीयंते सकला मला ॥

पृ। १६०अ)

धोन्विंद्रियांतकरणप्रसादं दधास्वकांतिं दहनप्रदीप्तिं ।
अशेषदोषोपचयंति हन्यादत्यस्य मानं जलपस्ति कर्म ॥

मुत्रं वितस्ति सुस्निग्धनासानासप्रवेशयेत् ।
मुख निर्गमना देव नेति सिद्धैर्निपाद्यते ॥

कपालशोधिनी कार्या दिव्य दृष्टि प्रदायिनी ।
यत्तूर्द्ध जातरोगोद्यानेतिराशुनिहंति च ॥

निरीक्ष्यनिश्चला दृष्ट्या सूक्ष्मलक्षं समाहितः ।
अश्रुसम्पतपर्यंतमाचार्यैस्ताटकंस्ततं ॥

स्फोटनं नेत्ररोगी च तंद्रानां तु कपाटकं।
प्रयत्नात्त्राटकं गोप्यं यथा हाटकपेतकं॥

अमंदावर्तवेगेन तुंदसव्यापसव्यतः।
अतशो भ्रामयेदेषा नौली गौलैः प्रशस्यते॥

मंदाग्निसंदीपनपाचकादि संधापकानंदकरी सदैव।
अशेषदोषामलशोषणीव हटक्रियासो जयतीहनौली॥

लोहकालस्य भस्त्रीवत् कुर्यात् सव्यापसव्यतः।
कपालभाष्यं विख्यात कफदोषविशोधिनी॥

षट्कर्मभिर्गतस्थौल्यं कफमेदो वलाधिक।
प्राणायाम ततः कुर्यादनायासेन सिद्ध्यति॥

प्राणायामै सुखात् सर्वे प्रशुद्ध्यंति मलाशयाः।
आचार्यानां तु केषांचिदन्यत् कर्म न सन्मतं॥

षट्कर्म योगमाप्नोति पचनाभ्यास तत्परः।

ब्रह्मादयोपि विदशाः प्राणायामपरायणा ॥

प्। १६०ब्)

तेन सिद्धिं गतास्ते च तस्मात् पवनमभ्यसेत् ।
सुमनाकांतकाभव्य तस्मात् पवनमभ्यसेत् ॥

यावद् वद्धौमरुद् देहे यावच्चित्तं निरामयं ।
यावत् पश्यद्भ्रुवौर्मध्यं तावत् कालं भये कुतः ॥

विधिवत्प्राणसंयामे नाडीचक्रे विशोधिते ।
सुषुम्ना वदनं भित्वा सुखद्विगतिमारुतः ॥

मारुतमध्यसंचारे मनस्थैर्य प्रजायते ।
यो मनः सुस्थिरो भाव सैवावस्था मनोन्मनी ॥

तत्सिद्धये विधानज्ञो चित्रात् कुर्वंति कुंभका ।
विचित्रकुंभकासाद्विचित्रां सिद्धिमवाप्नुयात् ॥

सूर्यभेदनमुख्यायी तथाशीत्का * *? तली ।

भस्तीका भ्रमरीमूर्छा केवलश्चाष्टकुंभकाः ॥

पूरकांते तु कर्तव्यो वंधोजालं धराभिधः ।
कुंभकांते रेचकादौ कर्तव्यस्तुड्डियानकः ॥

अधस्ता कुंचने भाशुकंठसंकोचने कृते ।
मध्यपश्चिमतानेन स्यात् प्राणो मध्यनाडिगः ॥

अपानमूर्द्धमुत्थाप्य प्राणं कंठादधो नयेत् ।
योगी जराविमुक्तश्च षोडशाब्द वयो भवेत् ॥

अथासने सुखादेव वध्वावज्रासनं ततः ।
दक्षणाड्यासमाकृख्य वहिस्थापवनं शनैः ॥

आकेशाग्रान्नखाग्रं च शिरोप्यवधिकुंभयेत् ।
कृत्वा वैवामनाड्या च चालयेत् पवनं शनैः ॥

पृ। १६१अ)

कपालशोधनं वात दोषघ्नं कृमिनाशनं ।

पुनः पुनरिदं सूर्य भेदनं समुदाहृतं ॥

मुखं स यस्य नासाभ्यां आकृष्य पवनं शनैः ।
यदा च गति कंठांतं हृत्पद्मवधिशोधनं ॥

पूर्ववत् कुंभयेत् प्राणाद्रेचयेदितया ततः ।
श्लेष्मादोषहरं देह वलदीप्तिविवर्द्धनं ॥

कुंभं कुर्यात् सदा वक्राद् घ्राणे चैव विजृंभितं ।
एवमभ्यासयोगेन कामदेवो द्वितीयकं ॥

योगी चक्रं समासाद्य सृष्टिसंहारकारकः ।
न क्षुधा न तृषा निद्रा नैवालस्यं तु जायते ॥

भवेश्वछंद देहश्च सर्वोपद्रव वर्जितः ।
अनेन विधिना सत्यं योगींद्रो भुवि मंडले ॥

रसना तालु मूलेन यः प्राणं सततं पिबेत् ।
स भवेत् सर्वसिद्धीनां भाजनं नात्रसंशयः ॥

रसना तालु मूलेन यः प्राणं सततं पिबेत्।
अब्दार्द्धेन भवेत् तस्य सर्वगां सुस्थिरः क्रियां॥

जिह्वाया वायुमाकृष्य पूर्ववत् कुंभसाधनं।
प्राणैस्तु प्रणरंध्राभ्यां रेचयेदनिलं शनैः॥

गुल्म श्लेष्मादयो दोषाः ज्वरपित्तक्षुधा तृषा।
एतानि शीतली नामः कुंभकोयं निहंति च॥

उर्वोरुपारसंस्थाप्य उभे पादतले तथा।
पद्मासनं भवेत् सम्यक् सर्वपापप्रणाशनं॥

सम्यक् पद्मासने वध्वा समगीवोदरः सुधी।

प्।१६१ब्)

मुखं संयस्य यत्नेन प्राणं घ्राणेन्द रेचयेत्।
अथैव स्वशरीरस्थं चारयेत् पवनं स्थली॥

सुखसंम्यक् प्रयत्नेन प्राणं घ्राणेन रेचयेत्।
यदा गलति हृत्कंठे कपालपवनं ततः॥

वेगेन पूरयेत् केचिद् हृत्पद्मावधिमारुतं।
पुन विरेचयेत् तद्वत् पुरयेच्च पुनः पुनः॥

यथैव लोहकाराणां भस्त्री वेगेन चारयेत्।
तथैव स्वशरीरस्थं चालयेत् पवनं शनैः॥

यदाश्रमो भवेन् देहे तदा सूर्येण रेचयेत्।
अथोदरं भवेत् पूर्णं रेचनैर तथा लघु॥

धारयेन्नासिका मध्ये अंगुलीभ्यां तथा दृढं।
कुंभकं पूर्ववत् कृत्वा रेचयेद्वित्रया निल॥

वातपित्त श्लेष्म हरं शरीराणि विवर्द्धनं।
कुंडली बोधकः कुंभो रोगघ्नः सुखदः शुभः॥

ब्रह्मनाडी मुखे संस्थः कपालार्गल नाशनः।

सम्यग्सस्त्रासमुद्भूतो ग्रंथि त्रय विभेदकः॥

वेगाद्दोषं पूरकं भृंगनादं भृंगी नादं रेचकं मंद
मंदं।
योगींद्राणामेवमभ्यासयोगाच्चित्तै पाताका चिदानन्दमूर्छा॥

पूरकांते वहुतरं वध्वा जालंधरै शनैः।
रेचयेन् मूर्छनास्थोयं मनोमूर्छासुखप्रदः॥

अंतः प्रवर्तिता धार मारुता पूरितोदरः।
साक्षात् पयस्य गाधोपि प्लवतो ब्रह्मपत्रवत्॥

प्राणायामस्त्रिधा प्रोक्तो रेचपूरक कुंभकैः।

पृ। १६२अ)

सहितः केवलश्चेति कुंभको द्विविधो मतः।
रेचकः पूरक कार्य स वै सहित कुंभकः॥

यावत् केवल सिद्धि स्यात् तावत् सहितमंन्यसेत्।

रेचकं पूरकं मुक्त्वा मुखाद्वायु निरोधनात्॥

प्राणायामोयमित्युक्तः स वै केवल कुंभकः।
केवलकुंभके सिद्धे रेचं पूरक वर्जितं॥

न तस्य दुर्लभं किंचित् त्रिषु कालेषु विद्यते।
शुद्ध केवल कुंभेन यथेष्टं वायु धारणं॥

राजयोग पदं चैव लभ्यते नात्र संशयः।
हठं विना राजयोगो राजयोगं विना हठ॥

न सिद्धयति ततो युग्मनानिष्पत्तेः समभ्यसेत्।
कुंभकः प्राणरेचांते कुर्यान्त्रित्तं निरामयं॥

एवमभ्यासयोगेन राजयोग पदं व्रजेत्।
कुंभकात् कुण्डली बोधः कुंडलो बोधतो भवेत्॥

अनुर्गता सुषुम्ना च हठसिद्धिश्च जायते।
वपुः कृशत्वं वदने प्रसन्न नादस्फुटत्वं नयने च निर्मले॥

आरोग्यतां बिन्दु जयोग्नि दीपनं नाडीषु सिद्धिर्हठसिद्धिलक्षणं।

स शैलवनधात्रीनां यथाधारो हि कुंडली।
सुप्तागुरु प्रसादेन यथा यागर्ति कुंडली॥

तया पद्मानि सर्वाणि भिद्यंते ग्रंथयोपि च।
प्राणस्य शून्य पदवी तदा राजपथायते॥

तथा चित्त निरालंबं तथा कालस्य वंधनं।

प्।१६२ब्)

सुषुम्ना शून्य पदवी ब्रह्मरंध्रं महापथः।
श्मशानं शांभवी मध्य मार्गश्चेत्येककवाचका॥

तस्मात् सर्वप्रयत्नेन प्रबोधयतुमीश्वरी।
ब्रह्मद्वारमुखसुप्तं मुद्राभ्यासं समाचरेत्॥

महामुद्रामहावंधो महावेधश्च खेचरी।

उड्डियानं मूलबंधः ततोजालंधराभिधः ॥

करणी विपरीताख्या वज्रोली शक्ति चालनं ।
इदं च मुद्रा दशकं धरामरणनाशनं ॥

आदिनाथोदितं सर्वं अष्टैश्वर्य प्रदायकं ।
वल्लभं सर्वसिद्धानां वल्लभं मनुजामपि ॥

गोपनीयं प्रयत्नेन यथारत्न करंडकं ।
कस्यचिन्नैव वक्तव्यं कुलस्त्रीसुरतं यथा ॥

वज्रोली रमरोभिश्च सहजालिस्त्रिधा मता ।
एतेषां लक्षणं वक्ष्य कर्तव्यं च विशेषतः ॥

पादमूलन वामेन योनि संपीडयदक्षिणं ।
पादं प्रसारितं धृत्वा कराभ्यां धारितत्सुखं ॥

कंठे वंधंसमारोप्य धारयेद्वायुमूर्द्धतः ।
यथादंडाहतः सर्पो दंडाकारः प्रजायते ॥

ऋज्वा भूता तथाशक्तिः कुण्डली सहसा भवेत्।
तदस्ति मननावस्था जायते द्विपुटाश्रिता॥

ततः शनैशनैरेव रेचयेन् न तु वेगतः।
इयं खलु महामुद्रा महासिद्धैः प्रशस्यते॥

महाक्लेशादयो दोषा जायंते मरणादयः।

प्।१६३अ)

महामुद्रा च ते नैव वदंति विवुधोत्तमा।
चंद्रासै च समभ्यस्य सूर्यांशे पुनरभ्यसेत्॥

यावत् संख्या भवर्तुल्या ततो मुद्रां विसर्जयेत्।
नापथ्यं न हि पथ्यं च रसा सर्वोपिरीरसा॥

अपि मुक्तं विषं घोरं पीयूषमिव जीर्यति।
क्षयं कुष्टं मुदावर्त्तं तुल्याजीर्ण पुरोगमाः॥

दोषाः सर्वक्षयं यांति महामुद्रां तु योभ्यसेत्।
कथितेयं महामुद्रा महासिद्धिकरी नृणां॥

गंभ्यनीया प्रयत्नेन न देया यस्य कस्यचित्।
र्ष्णि भागेन पादस्य योनि स्थानं नियोजयेत्॥

वामोरूपरिसंस्थाप्य दक्षिणं चरणं तथा।
पूरयित्वा ततो वायुं हृदयं चिबुकं दृढं॥

निक्षिप्य योनिमाकुंच्य मनो मध्ये नियोजयेत्।
धारयित्वा यथाशक्त्या रेचयेदनिलंशनैः॥

संव्यागवसमभ्यास्य दक्षिणे नरमभ्यसेत्।
मतमेतं तु केषांचित् कंठवंधं विवर्जयेत्॥

शतदंतस्य जिह्वायां वंधः शस्त्रो भवेद्धितः।
अयं किल महावंधः महासिद्धि प्रदायकः॥

महामुद्रा च ते नैव वदंति विवुधोत्तमा।

चंद्रांसे च समभ्यस्य सूर्यांशे पुनरभ्यसेत्॥

यावत् संख्या भवर्तुल्या ततो मुद्रां विसर्जयेत्।
नापथ्यं न हि पथ्यं च रसा सर्वेपिरीरसा॥

प्। १६३ब्)

अपि मुक्तं विषं घोरं पीयूषमिव जीर्यति।
क्षयं कुष्टं मुदावर्तं तुल्याजीर्णपुरोगमाः॥

दोषाः सर्वक्षयं यांति महामुद्रां तु योन्यसेत्।
कथिते यं महामुद्रा महासिद्धिकरी नृणां॥

गंभ्यनीया प्रयत्नेन न देया यस्य कस्यचित्।
पार्ष्णि भागेन पादस्य योनि स्थानं नियोजयेत्॥

वामोरूपरिसंस्थाप्य दक्षिणं चरणं तथा।
पूरयित्वा ततो वायुं हृदयं चिबुकं दृढं॥

निक्षिप्य योनिमाकुंच्य मनो मध्ये नियोजयेत्।

धारयित्वा यथाशक्त्या रेचयेदनिलंशनैः॥

संव्यागवसमभ्यास्य दक्षिणे नरमभ्यसेत्।
मतमेतस्तु केषांचित् कंठं वंधं विवर्जयेत्॥

शतदं तस्य जिह्वायां बंधः शस्तो भवेद्धितः।
अयं किल महावंधः महासिद्धि प्रदायकः॥

कालपाशमहावंध विमोचन विचक्षणः।
अयं च सर्वनाडीनामूर्द्ध्वं गति विबोधकः॥

त्रिवेणी संगमं धर्त्ते केदारं पापयेत् मनः।
रूपलावण्य संपन्न यथास्त्री पुरुषं विना॥

महामुद्रा महावंधौ निःफलौ वेध वर्जितौ।
महावेधा स्थितो योगी कृत्वा पूरकमेकधीः॥

वायी नामति मावृत्त्य निभृतं कंठमुद्रया।
समहस्ता युगो भूयो स्फिचौ संताडयेछनैः॥

पुट द्वयं समाकृष्य वायुः स्फुरति सत्वरं।

पृ। १६४अ)

सोमसूर्याग्निसंबंधा जायते च मृतोर्जयः।
मृतावस्था समुत्पन्ना ततो वायुं विरेचयेत्॥

महावेधो यमभ्यासान् महासिद्धि प्रदायकः।
वलीपलितवंधघ्नः सेव्यते साधकोत्तमैः॥

एतत् त्रयं महामुद्रा जरामृत्युविनाशिनी।
वह्निवृद्धि करा चैव मनिमादि गुणप्रदं॥

अष्टधा क्रियते चैकं यामयामे दिने दिने।
सर्वसंचारसंधायी पापौघाभिदुरं सदा॥

सम्यजिज्ञासतामेवं स्वल्पं प्रथमसाधनं।
वह्निस्त्री पठिसेवा नामादौ वर्जनमाचरेत्॥

छेदनचालनदोहैः कला क्रमेण चोद्धयेत्।
सायावद्भ्रूमध्यं चेति तदा खेचर मुद्रया॥

कपालकुहरे जिह्वा प्रविष्टो विपरीतगा।
भ्रूवोरंतर्गता दृष्टिर्मुद्रा भवति खेचरी॥

कलां परां मुखी * भ्यक्षणार्द्धेमपि तिष्ठति।
क्षणेन मुच्यते योगी व्याधिमृत्युजलादिभिः॥

न रोगो मरणं तस्य न निद्रा न क्षुधा तृषा।
न च मूर्छा भवेत् तस्य यो मुद्रां वेष्टि खेचरी॥

वाध्यते न स रोगेन लिप्यते न स कर्मणा।
बाध्यते न स कालेन यो मुद्रां वेत्ति खेचरी॥

वित्तं चरति खे यस्माज्जिह्वा चरति खेगता।
ते नैव खेचरी मुद्रा सर्वसिद्धिर्नमस्कृताः॥

खेचर्या मुद्रितं येन विवरलंबिकोर्द्धतः।

तस्य न क्षरते विंदुः कामिन्या लिंग तस्य च॥

प्।१६४ब्)

चरितोपि यदा बिंदुः संप्राप्तश्चाग्नि मंडलं।
ब्रह्मत्युर्द्धं हठाछत्त्या निरोधो योगमुद्रया॥

ऊर्द्धजिह्वा स्थितो भूत्वा सोमपानं करोति यः।
मासार्द्धेन न संदेहो मृत्युंजयति योगवत्॥

नित्य सोमकलापूर्णं शरीरं यस्य देहिनः।
तक्षकेनापि दंष्टस्य विषं तस्य न सर्पति॥

गोमांसं भक्षयेन् नित्यं पिबेदमरवारुणीं।
कुलीनं तमहं विद्या इतरे कुलघातकाः॥

गोशब्दे नोदिता जिह्वा तत्प्रवेशो हि तालुनि।
गोमांसं भक्षणं तच्च महापातकनाशनं॥

जिह्वा प्रवेशनं भूतं बहुनात्यादितं खलु।

चंद्रात् स्त्रवति या सम्यक् सास्यादमरवारुणि ॥

मूर्द्धं षोडश पद्मपत्र गलितं प्राणांदवाप्तं हठादूर्द्धास्यो
रसनां विधाय विपरे शक्तिं परां चिंतयेत् ॥
तत्कल्लोलजः लाकुलं सुविमलं धारामृतं यः पिबेत् निर्दोषः समृणाल
कोमल तनुर्योगी विरंजी पति ॥

चुयंति यदि लंबिकाग्रमनिशं जिह्वारसस्पंदिनी स क्षाराकटु *?
दुग्ध सदृशी सध्वाज्य तुल्यं तथा ॥
व्याधीनां हरणं जरांतकरणं शास्त्रागमोद्गीरणं तस्य स्यादमरत्व
गुष्ठगुणितं सिद्धां गणाकर्षणं ॥

एवं सृष्टिमयं बीज एकामुद्रा च खेचरी ।
एको देवो निरालंब एकावस्था मनोन्मनी ॥

पू । १६५अ)

सुचिरं ज्ञानजनकं पंचस्त्रोतः समन्वितः ।
तिष्ठंती खेचरी मुद्रा तस्मिन् शून्यनिरंजने ॥

यप्रालेपं पिहित सुखिलं मेरू मूद्धर्या तथैततस्मिंस्तत्वं प्रवदंति सुधी
चस्तन्मुख निम्नगा चंद्रात्सारस्त्रवंति वपुषस्तेन मृत्युन्नराणांत
वह्नीयाद्वरुणममृतं नान्यथा कार्य सिद्धि ॥

इति श्रीवाराहीतंत्रे दक्षिणाम्नायनिर्वाणपदे षड्विंशति पटलः ॥ २६ ॥

भैरव उवाच ॥

पार्ष्णि भागेन संपीड्ये योनिमाकुंचय दृढं ।
अपानमूर्द्धमाकृष्य मूलबंधोयमुच्यते ॥

अधोगतमकारं वै ऊर्द्धगं कुरुते वरात् ।
आकुंच्य तेन तं प्राहु मूलबंध हि योगिनः ॥

गुरुपाष्ण्या तु संपीड्ये वायुमाकुंचयद्बलात् ।
वारं वारं तथा चोर्द्ध समायाति समीर ॥

प्राणादितोदितो बिन्दुः मूलबंधेन चैकतः ।
ततो योगससंसिद्ध्यै प्रमा तत्र न संशयः ॥

अपानप्राणयोरैक्याक्षयो मूत्र पुरीषयोः।
युवा भवति वृद्धौपि सततं मूलबंधनात्॥

अपाने चोर्द्ध माया ते मध्यतः नाभिमंडले।
तथा नरे शिखा दीर्घा क्रियते वायुनाहता॥

ततो वायु वह्नि योगौ प्राणायाम स उच्यते।
तेनात्यंतः प्रदीप्तस्तु कुतो देहक्षयस्तदा॥

तेन कुंडलिनी सुप्ता संतता संप्रबुद्ध्यते।

पृ। १६५ब्)

दंडाहताभुजंगीवनिश्वस्य ऋजुनायिका।
विलं प्रतिष्ठाच्च ततो ब्रह्मणाड्यंतरे व्रजेत्॥

तस्मान् नित्यं मूलबंधः कर्तव्यो योगिभिः सदा।
उर्द्ध स्थितः सुषुम्नायाः प्राणस्तुड्डीयते यतः॥

तस्मात् त्वे उड्डियानाख्या योगिभिः समुदाहृतः।
उडडीनं कुरुते यस्मादविश्रांतं महाखगः॥

उड्डियानं तदेयं स्यात् क्षत्रबंधोभिधीयते।
उड्डियानं तु सहजं गुरुना कथितं सदा॥

अभ्यसे सततं यस्तु वृद्धोपि तरुणो भवेत्।
नाभेरुद्ध्र्व मधश्चापितानं कुर्याच्च यं नतः॥

योगी समभ्यसेत् मृत्युंजयत्येवन्न संशय।
अति वज्रासने पादौ कराभ्यां धारये दृढं॥

गुल्फदंशसमीपं च कदं तच्च प्रवीच्च्यते।
पश्चिमतानंमुपरिकारयेद्धृदय गल॥

शनैः शनैर्यथा प्राप्तं तदा गंधिं प्रगछति।
सर्वेषामेव वंधानामुत्तमोहुड्डियानकः॥

उड्डियाने दृढे वंधे मुक्तिः स्वाभविकी भवेत्।

कंठमाकुंच्य हृदये स्थापये दृढमिछय ॥

वंधोजारं धराख्योयं जरामृत्युविनाशकः ।
वध्नाति हि शिराजालं अधोगानि न भोजनं ॥

ततो जालंधरो बंधः कंठदुःखाघनाशनः ।
जालंधरे कृते बंधे कंठसंकोचलक्षणे ॥

मंपीयूषंयतत्यग्नौ न च वायुः प्रधावति ।

पृ। १६६अ)

संकोचलक्षणे नैव द्वे नाड्या स्तंभयेद् दृढं ।
मध्यं चक्रमिदं ज्ञेयं षोडशाधारबंधनं ॥

बंधत्रयामिदं श्रेष्ठं महासिद्धैश्च सेवितं ।
सर्वेषां योगतंत्राणां सधेनं योगिनों बिदुः ॥

अधस्म कुंचरेनाशुकंठसंकोचने कृते ।
मध्यमश्चिमतानेन स्यात् प्राणामध्यनाडिगः ॥

इडा च पिंगला चैव वाहयेत् पश्चिमं पथं ।
ब्रह्मस्थानस्थितोरोधः प्रयाति पवनोलयम् ॥

ततो न जायते मृत्युर्जरारोगादिकं तथा ।
उद्ध्र्वनाभि * रः स्तालुरुर्द्धभानुरधः शशी ॥

करणी विपरीताख्या सर्वव्याधिविनाशिनी ।
नित्यमभ्यासयुक्तस्य जठराग्नि प्रवर्द्धिनी ॥

आहारोवहुलस्तस्य सम्पाद्यः साधकस्य तु ।
अल्वाहारो निराहारः क्षुधालस्य वसा भवेत् ॥

अद्धाशिरश्चोर्द्धपादौ क्षण स्यात् प्रथमे दिने ।
क्षणाच्च किंचिदधिकं अभ्यासे च दिने दिने ॥

वलितं परितं चैव षण्मासां तु न दृश्यते ।
मासत्रयं तु यो नित्यमभ्यसे स तु कालवित् ॥

स्वेच्छाया वर्तमानोपि योगोकैर्नियमर्चिना।
वज्रोलीय विजानाति स योगी सिद्धिमान् भवेत्॥

तत्र वस्तु द्वयं वक्ष्ये दुर्लभं यस्य कस्यचित्।
क्षीरं चैव द्वितीयं तु नारी च वश वर्तिनी॥

मेढ्रेन वसनैः सम्यक् कृत्वा कुंचनमभ्यसेत्।

प्। १६६ब्)

पुरुषो वापि नारी वा वज्रोली सिद्धिमाप्नुयात्।
प्रयत्नतः शिरो जाले फट्कारः कंचुकं धरे॥

शनैः शनैः प्रकुर्वंति वायुसंचार कारणात्।
भार्या भगे पतद्बिंदुरभ्यासेनोर्द्ध्वमाहरेत्॥

वलितं वलितं विंदुमूर्द्धमाकृष्यरक्षयेत्।
एवं रक्षति यो बिंदुं मृत्युं जयति योगवित्॥

मरणं बिंदुपातेन जीवितं विंदुधारणात्।

सुगंधिर्योगिनो देहो जायते विंदुधारणात् ॥

यावद् विन्दु स्थितो देहे तावन् मृत्यु भयं कुतः ।
चित्तायत्तं नृणां शुक्लं शुक्रायत्तं हि जीवितं ॥

तस्माच्छुक्रं रजश्चैव रक्षणीयं प्रयत्नतः ।
बिंदुमध्ये रजोप्येवं बीजं बिंदु च रक्षयेत् ॥

मेढ्रेमाकुंचयदूर्द्धं सम्यगभ्यास योगवित् ।
अप्रयासः पुण्यवतं धन्यानां तत्वदर्शितं ॥

निर्म *? त्सरणा सिद्धयंतन तु मत्सरणालिनां ।
सहजोली चामरोली वज्रोल्या एकभेदतः ॥

जलेषु भस्मनिःक्षिप्य दग्धमयसमुद्भवं ।
वज्रोली मैथुनादूर्द्ध स्त्रीपुंसाः स्वांगलेपनं ॥

आसीनयोः सुखेनैव मुक्ताव्यापरयो क्षणं ।
सहयोलीरियं प्रोक्ता साध्येया योगिभिः सदा ॥

अयं शुभं करो योगो भोगे भुक्तेपि मुक्तिदः।
विहर्ये नित्यं प्रथमावधारां विहाय निःसारतमांत्यधारं॥

पृ। १६७अ)

निषव्यते शीतलमध्यधारां कपालिकैः कुण्ठमतैरमेध्या।
अमरीयो पिबेन् नित्यं नस्यं कुर्याद् दिने दिने॥

वज्रालीमभ्यसेत् सत्वे अमरोलीति कथ्यते।
पुंसो विंदुं समाकुंचे सम्यगभ्यास पाटवान्॥

यदि नारी रजो रक्षेत् संयोगी चासि योगिनी।
तस्मा किंचिद् रजो नाशं न गछति न संशयः॥

तस्या शरीरे नादस्तु बिंदुना शब्द गछति।
स बिंदुतद्रजश्चैव एकीभूतः स्वदेहजैः॥

वज्रोल्याभ्यासयोगेन सर्वसिद्धि प्रजायते।
मेढ्रानाकुंचनादूर्द्धं रजसापि हि योगिनी॥

अतीतो नागतवेत्ति खेचरे च भवेद्रुवं ।
देहसिद्धिं च लभते वज्रोल्याभ्यास योगतः ॥

तस्मादयं साधकानां भोगमुक्तिविमुक्तिद ।
तस्मात् पुण्यवतामेव योगोयं संप्रसिद्धयति ॥

कुटिलांगी कुंडलिनी भुजंगी शक्तिमीश्वरी ।
कुण्डल्यारुंध देवीति शब्दाः पर्याय वाचका ॥

उद्धात यत् कपाटं तु यथाकुंचितया हठात् ।
कुंडलिन्या तथा योगी मोक्षद्वारं विभेदयेत् ॥

येन मार्गेण गंतव्यं ब्रह्मस्थानं निरामयं ।
मुखेनाछाद्यतद्द्वारं प्रसुप्ता परमेश्वरी ॥

कंदोर्द्ध्वकुण्डली शक्तिरष्टधा कुंतलाकृतिः ।
बंधनाय च मूढानां सदा मोक्षाय योगिनां ॥

अंभोदि शैलद्वीपानां आधारः शेष कुंडली।

पृ। १६७ब्)

अशेष योगतंत्रीणांमाधारः कुण्डली तथा।
कुण्डली कुटिलान्य?रासर्पवत्परिकीर्तिता॥

सा शक्तिश्चालिता येन समुक्तो नात्रसंशयः।
गंगायमुनयोर्मध्ये वालरंडातपस्विनी॥

ज्वालात्कारेण गृह्णायातद्विष्णोः परमंष्पदं।
इडाभृंगवती गंगा पिंगला यमुना नदी॥

इडापिंगलयोर्मध्ये वालरंडा सरस्वती।
पुछेत्प्रगृह्य भुजगी सुप्ताशुद्धोधयंवतां॥

निद्रां विहायस्य ऋज्वी ऊर्द्धमूर्तिष्टते हथात्।
अवस्थिता वैव फणावतीतां प्रातश्च सायं प्रहरार्द्धमात्रं॥

प्रसार्य सूर्यात् परिधान मुक्ता प्रगृह्यते तत्परिवालनीया।

वितस्ति प्रमिदं दीर्घं विस्तारे चतुरंगुली ॥

मृदुलं धवलं प्रोक्तं वेष्टनांवरलक्षणं ।

वज्रासन स्थितो योगी पालयित्वा च कुंडली ॥

कुर्यादनंतरं भस्त्री कुंडलीमाशु बोधयेत् ।

मनोराकुंचने नैव कुंडली चारयेत् तदा ॥

मृत्योर्वक्रगतस्यापि तस्य मृत्युर्भयं कुत ।

नासादक्षिणमार्गवा हि पवनात् प्राणाभिदीर्घाकृतौश्चंद्राभः

परिपूरिता मृततनुः प्राग्घंटिकायास्तथा ॥

छिन्नात्कालविशालवह्निवशगाभ्रूरंधनाडीगणां तत्कार्य कुरुते

पुनर्नवतरं चिन्नद्रुम स्कंधवत् ॥

कुंण्डलि चालयित्वाथ कुर्याद्भस्त्री विशेषतः ।

पृ। १३८अ)

एवमभ्यस्यते नित्यं यमिनस्तु कुतोयम ॥

यदाभ्यसेत् सूर्यभेदमुज्ज्वयी वापि शीतली ।
एवमभ्यासयोगेन शमनोयमिना कुतः ॥

मुहूर्त द्वय पर्यंतं निर्भयं वा दिशोदशः ।
ऊर्द्धमाकृष्यते किंचित् सुषुम्नायाः समुद्धृतः ॥

तेन कुंडलिनी तस्याः सुषुम्नायाः समुद्धृता ।
जहाति तस्मात् प्राणोयं सुषुम्ना व्रजनिश्चला ॥

तस्मात् संचालयेन्नित्यं सुखसुप्तामरंधती ।
यस्यासंचालयेनाशु योगी रोगात् प्रमुच्यते ॥

येन संचालिता शक्तिः स योगी सिद्धिभाजनं ।
किमत्रवहुनोक्तेन कालं व्रजति लीलया ॥

ब्रह्मचर्यरतं स्येवं नित्यं मितमितासिनः ।
मण्डलाद् दृश्यते सिद्धि कुंडल्याभ्यास योगतः ॥

अभ्यासें विस्तृतां चांद्री विभूतां सहमिश्रयेत्।
तां धारयेदुत्तमांगे दिव्यदृष्टि प्रदायिनी॥

द्विसप्तति सहस्राणां नाडीनामलशोधनं।
गुडप्रक्षालनीपायः कुण्डलिभ्यास इष्यते॥

इति द्वादशधा प्रोक्ता आदि नाथेन शंभुना।
कारणे सर्वसिद्धीनामेकैकापि क्षमेव सा॥

राजयोगं विना पृथ्वी राजयोगं विना निशा।
राजयोगं विना मुद्रा विचित्रापिनु राजते॥

मारुताभ्यासनं किंचि मानो युक्तं समाचरेत्।
इतरेत्र न कर्तव्या मनोवृत्ति मनीषिणा॥

प्।१६८ब्)

विनापि मध्यमा नाडी दृढाभ्यासेन योगिनः।
आसनं प्राणसंयाम मुद्राभि सरला भवेत्॥

अभ्यासेन हि मुद्राणां तदुतेति समाधिना ।

मुद्राणां चापरा मुद्रा भद्रासिद्धि प्रयछति ॥

उपदेशं हि मुद्राणां यो धत्ते सांप्रदायकं ।

स एव श्री गुरुः स्वामी साक्षादीश्वर एव सः ॥

तस्य वाक्य परो नित्यमथा * स समाहितः ।

अनिमादि गुणैस्वर्य लभते कालपंचकः ॥

नमः शिवाय गुरवे नादविंदु कलात्मने ।

निरंजन पदं यांति यतो योगी परायणः ॥

अथेदानीं प्रवक्ष्यामि समाधि क्रममुत्तमं ।

मृत्युघ्नं च सुखोपायं ब्रह्मानन्दकरं परं ॥

राजयोगसमाधिश्च उत्मनीव * *? नी ।

अमरौघारयस्तत्र शून्या छून्यं परं पदं ॥

अमनस्कं तथा द्वैतं निरालंबं निरंजनं ।

जीवन्मुक्त * ? क्ति पदं शब्द पर्याय वाचकं ॥

सलिले सैधवं यद्व सम्यं भजति योगतः ।
यथात्ममनसौरैक्यं समा *? रभिधीयते ॥

तत्समं च द्वयोरैक्यं जीवात्मा परमात्मना ।
समस्तनष्टसंकल्पः समाधिसोभिधीयते ॥

समाधिस्तु तथा ज्ञानं कर्पूरं सलिले यथा ।
तथात्ममनसौरैक्यं समाधिः साभिधीयते ॥

राजयोगस्य माहात्म्यं कोटयजानाति तत्वतः ।

पृ। १६९अ)

ज्ञानमुक्ति स्थिति सिद्धिः गुरुवाक्य न सिद्ध्यति ।
दुर्लभो विषय त्यागो दुर्लभे तत्व दर्शनं ॥

दुर्लभा सहजावस्था सद्गुरोः करुणाविना ।

यावन्नैव प्रविशंति चरन्मारुतो मध्यमार्गं यावद्विंदुर्न भवति
दृढः प्राणवातः प्रबुद्धः ॥
यावद्ध्यौन्नः सहज सदृशं जायते नैव चित्तं तावज्ज्ञानं वदति यदिदं
दंभमिथ्या प्रलापः ॥

वायुमार्गेन संचारे सकलं लभते महः ।
तथाष्टगुणमैश्वर्यं सत्यं सत्यं वरानने ॥

विविधै रसनैः कुंभैर्विचित्रकरणैरपि ।
प्रबुद्धायामादि शक्तौ प्राणः शून्य विलीयते ॥

उत्पन्न शक्ति बोधस्य त्यक्त निःशेष कर्मणाः ।
योगिनः सहजावस्था स्वयमेव प्रकाशते ॥

सुषुम्ना वाहिनी प्राणे शून्यविंशति मारुतः ।
तदा सर्वाणि कर्माणि निर्मूलयति योगवित् ॥

अमराय नमस्तुभ्यं सोपि काल त्वयाहतः ।
पतितं पवने यस्य जगदेतच्चराचरं ॥

चित्ते समत्वमापन्ने वायुर्व्रजति मध्यमे ।
तथामरोली वज्रोली सहजोली मतोपि च ॥

ज्ञानं कुतो मनसि जीवति देहि यावत् प्राणोपि जीवम * नोस्नि पतेन यावत्
प्राणोसनो द्वयमिदं विलयं * याति मोक्षं स गछति नरो न कथं
चिदन्यत् ॥

ज्ञात्वा सुषुम्ना सद्भेदं कृत्वा वायुं च मध्यगं ।

प् । १६९ब्)

स्थित्वा सदैदवस्थाने प्राणरंध्रं निरोधयेत् ॥

सूर्यचंद्रसमाकृत्वा दत्वा कारापि पंजरे ।
सुषुम्नां शांभवी शक्ति शेषास्त्वेवं निरर्थकाः ॥

वायुः परिचितो यस्मादनिमासहकुंडली ।
अथ चिंतांतरेभ्यास प्रत्यासा जीवयोगिना ॥

पवंनो वध्यते येन ते नैव वध्यते मनः।

हेतु द्वयं तु चित्तस्य वासना च समीरणे॥

तयार्विनष्ट एकस्मिन् भावनापि विनश्यतः।

तत्रैव लीयते वायुः मनस्तत्रैव लीयते॥

दुग्धांवुधत्संमिलिता वुभौ तौ तुल्य क्रियौ मानसमारुती हि।

यतो मरुन्निंद्य मनः प्रवृत्ति यतो मनस्तत्र मरुन्निवृत्तिः॥

एकस्यन्मसादपरस्य नाश तत्रैव वृत्तेरपस्य वृत्तिः।

अधस्तयोश्चेंद्रिय वर्गवृत्तिः विज्ञातयोर्मोक्ष पदस्य सिद्धिः॥

रसस्य मनसश्चैव चंचरत्वं स्वभावतः।

रसो वद्धो मनोवद्धं किं न सिद्ध्यति भूतले॥

मूर्छितो हरते व्याधिं मृतो जीवयति स्वयं।

बद्धः खेचरतं धत्ते स जीवशो रसेश्वरः॥

वायुमार्गे च संचारे सफलं लभते महः।

ततोष्टगुणमैश्वर्यं सत्यमित्याह शंकरं ॥

मनस्थैर्यं स्थितो वायुस्ततो बिंदु स्थिरो भवेत् ।
बिंदुस्थैर्यादया सत्ये पिंडस्थैर्यं प्रजायते ॥

इंद्रियाणां मनो नाथे मनोनाथश्च मारुतः ।

पृ। १७०अ)

मारुतस्य लयोनाथस्तन्नाथं लयमाश्रयेत् ।
स्वयमेवामोक्षस्वस्ति वापि मंत्रांतरो मनः ॥

प्राणापानमपानं ताल्लयकाश्चित्त वर्तिते ।
प्रनष्टौ छ्वासनिःश्वासः प्रनष्टविषय ग्रहः ॥

निश्चलो निर्विकारश्च लयो जयति योगिनः ।
उछिन्नसर्वसंकल्पो निःशेषाशेषवेष्टितः ॥

स्वावगम्यो लयः कोपि जायते वापि गोचरः ।
यत्र दृष्टि लयस्तत्र भूतेंद्रिय सनातनः ॥

सा शक्तिर्जीवभूतानां दृष्टिल्लक्ष्यलयं गते ।
वेदशास्त्रपुराणानि सामान्या गणिका इव ॥

एकैव शांभवी विद्या गोप्याकुलवधूरिव ।
अन्तल्लक्षमनोदृष्टिर्निर्मेषां मेषवर्जिता ॥

एषा तु शांभवी मुद्रा सर्वमंत्रेषु गोपिता ।

अनंतल्लक्षविलीन चित्तपवनो योगी यथावर्तते दृष्ट्वा निश्चलतारया वहिरतः
पश्यन्न पश्यन्नपि ॥
मुद्रेयं खेचरी भवति सायुष्म प्रसादान्गुरोः शून्याशून्यविवर्जितं
स्थलति यत्तत्वं पदं शांभवं ॥

ताराज्योतिषु संयोज्यो किंचिदुच्चारयेद्भुवौ ।
सूर्यगतस्य मार्गेषु उन्मनी काललक्षणं ॥

केचिदागमयोगेन केचिन्निगमसंकुले ।
केचित्तर्केन मुह्यंति नैव जानंति तारकम् ॥

अर्द्धोद्धाटित लोचन स्थिरमनोनाशाग्र दत्वे क्षणश्चंद्रार्कौं च

विलीयतांतर गतौ निक्षिप्य भासांतरे ॥

प्_। १७०ब्)

ज्योतीरूपमशेष वाह्य रहितं देदीप्यमानं परं तत्व पश्चरमंचवस्तु

परमं वाच्यं कमत्राधिकं ॥

वासरे पूजयेल्लिंगं रात्रौ चैव न पूजयेत्_।

सततं पूजयेल्लिन्गं दिवारात्रौ न पूजयेत्_॥

सुखिनं ज्ञानजनकं पंचस्त्रोतः समन्वितं।

तिछते खेचरी मुद्रा तस्मिन्_शून्यनिरंजने ॥

सव्यदक्षिणनाडिस्थो मध्ये वाहीत मारुतः।

तिष्ठंते खेचरी मुद्रा तत्र सत्यं न संशयः ॥

सोमसूर्य द्वयोर्मध्ये निरालंबंतथा पुनः।

संस्थिता व्योमचक्रे या सा मुद्रा नाम खेचरी ॥

सोमयोर्भेदिता धाम साक्षाद् वै शिववल्लभा।
पूजयेदतुलां दिव्या सुषुम्ना दक्षिणे मुखे॥

पुरस्ताच्चैव पूर्यंत निश्चिता खेचरी भवेत्।
अत्यस्ता खेचरी मुद्रा उन्मनी संप्रजायते॥

अभ्यसेत् खेचरी मुद्रा तांवत्स्याद् योग निद्रता।
संप्राप्त योगनिद्रस्य कालो नास्ति कदाचन॥

भ्रुवोर्मध्ये शिवस्थानं मनस्तत्र विलीयते।
ज्ञातव्यं तत्पदं तुर्यं तत्र कालो न विद्यते॥

चंद्रसूर्य द्वयोर्मध्ये मुद्रां दद्याच्च खेचरी।
निरालम्बे महाशून्य व्योमचक्र व्यवस्थितं॥

निरालंबं मन कृत्वा न किंचिदपि चिंतयेत्।
स वाह्याभ्यंतरं व्योम्नि घटवर्तिष्ठति ध्रुवं॥

प्। १७१अ)

वाह्यवायुर्यथा लीनस्तथा मध्ये न संशयः।
स्वस्थान गछति प्राणः सूर्याग्नि पवने तथा॥

एवमभ्यस्य मानस्य वायुमार्गं सदानिशं।
अभ्यासाज्जायते वायु मनस्तत्र विलीयते॥

अजरत्वं भवेद् देहे आपदतलमस्तके।
सिद्ध्यते च महायोगो महावलपराक्रमः॥

शक्तिमध्ये मनःकृष्य शक्तिर्मनसि मध्यतः।
मनसा मनसा लोक्ये धारयेत् परमं पदं॥

खमध्ये कुरु चात्मानमात्ममध्ये च स्वं कुरु।
सर्वं मयं च खं कृत्वा न किंचिदपि चिन्तयेत्॥

अन्तः शून्यो वहिः शून्यो शून्यकुंभ इवाम्वरे।
अंतः पूर्णो वहिः पूर्णः पूर्णकुंभ इवार्णवे॥

वाह्य चिंता न कर्तव्या तथैचांतरचिंतनं।
सर्वचिंता परित्यार्या न किंचिदपि चिन्तये॥

ज्ञेयं सर्वमयी तञ्च ज्ञानं मनसि उच्यते।
ज्ञानं ज्ञेयं मनश्चैव नान्यः पंथो द्वितीयकः॥

मनोदृश्यमिदं सर्वं यत्किंचित् स चराचरं।
मनसो ह्युन्मनी भावो चैतन्नैवै प्रलभ्यते॥

ज्ञेयवस्तु परित्यागाद्विरयं याति मानसं।
मानसो विलये याते कैवल्यमपि कल्पते॥

लयो लय इति प्राहुः कीदृशं लयलक्षणं।
अमुनर्वा सनोत्थानाद्धृत्त्यया विश्वविस्मृतः॥

एवं नानाविधो पायाः सम्यक् स्वानु भवान्विता।
समाधिमार्गा कथिताः पूर्वाचार्यै महात्मभिः॥

अशक्यं तत्वबोधीनामूढानामपि सर्मतं ।

प्रोक्तं गोरक्षनाथेन नादोपासनमुच्यते ॥

श्री आदिनाथेन सपादकोटिलयः प्रकारः कथिता जयंति ।

नादानुसंधानकमेव धान्यं मन्यामहेरतनैंसंलयानां ॥

श्रवणपुटयनयुगलनासामुखरोधनेनव कर्तव्यं शुद्धसुषुम्नाशरणे

स्फुटे ममलः श्रूयते नादः ॥

आरंभश्च घटंश्चैवस्तथा परिचयस्ततः ।

निष्पत्तिः सर्वयोगेषु स्यादवस्था चतुष्टयं ॥

ब्रह्मग्रंथि भवे भिन्ना नादः शून्यसमुद्भवः ।

विचित्रं कुणको देहे नाहतः श्रूयते ध्वनि ॥

दिव्यगंधा दिव्यचक्षुस्तेजस्वी तु अरोगवान् ।

संपूर्ण हृदय शून्य प्रारंभो योगवान् भवेत् ॥

द्वितीय भेदयुक्ते तु वायुर्भावति मध्यगः ।

हठासनो भवेद् योगी ज्ञानी देवसमस्तथा ॥

विष्णुग्रंथस्तथा भेदा परमानंदसूचकः ।
अति शून्ये विसं मंदो भेरीशब्दस्तथा भवेत् ॥

अथ ग्रंथि त्रयं भित्वा जायते मर्दल ध्वनिं ।
महाशून्य समायाति सर्वसिद्धि समाश्रयः ॥

विना मनस्ततो जित्वा सहजानंदसंभवः ।
दोषद्वखजरामृत्युः क्षुधा निद्रा तृषा तथा ॥

रुद्रग्रंथि ततो भित्वा सर्वपीठगतोनिलः ।
निष्पन्नो वेणवः शब्दो क्वणन्नादो क्वणो भवेत् ॥

एकीभूतं तथा चित्तं राजयोगाभिधानकं ।

पृ। १७२अ)

सृष्टिसंहारकर्तासो योगीश्वर समो भवेत् ।
राजयोगपदं प्रस्तु मुखवायौल्प चेतसां ॥

सद्यः प्रत्यूपसंधायी सेव्यते नादयो लयः।

नादानुसंधानसमाधि भाजां योगीश्वराणां हृदि वद्धमानं॥

आनन्दमेकं वचसामवाच्यं जानातितं श्रीगुरुनाथ एव॥

मुक्तासना स्थितो योगी मुद्रासंधायशांभवी।

शृणुयाद्दक्षिणे कर्णे नादमंतर्गते महत्॥

अभ्यस्य मानो नादोयं वाच्यमा शृणुते ध्वनि।

पश्चाद्विपक्षमखिलं जित्वा योगी सुखी भवेत्॥

श्रुयते प्रथमाभ्यासे नादो नाम विधो महान्।

वर्द्धमाने ततोभ्यासे श्रूयते शूक्ष्मशूक्ष्मतः॥

आदौ जलधिजीमूत भरीनिर्भर निःस्वनः।

मध्यमर्दलशंखे च घंटाकोलाहलस्तथा॥

अन्ये तु किंकिणी वंश वीणाभ्रमरनिःस्वन।

इति नानाविधानादा श्रूयते यत्र मध्यतः॥

महातिश्रूयमानेपि मेघभेर्यादिक ध्वनैः।
तत्र शूक्ष्मं नादमेघ परितोपि परामृणेत्॥

ध्वनि मुत्सृज्य वा शूक्ष्मे शूक्ष्ममुत्सृज्य वायवे।
श्मशानमपि क्षिप्तं च मनो नेत्र प्रचारयेत्॥

यत्र कुत्रापि वा नादे गलति प्रथमं मनः।
तत्रैव निचलो भूत्वा तेन सार्द्धं विलीयते॥

कोष्ठ प्रवर्तते वह्नि कोष्ठेन सहसाम्यति।
नादे प्रवर्तते चित्तं नादेन सह लीयते॥

प्।१७२ब्)

औदासीन्य परो भूत्वा सदाभ्यासेन संशयः।
उन्मनी कारकं सद्यो नादमेवादधारयेत्॥

ज्ञातेकाचौपटी वा कुटी वा पथ्याहारोगोपयोचापयो वा भोज्यं भुक्तं

चान्नमाकंदयावा द्रोणी चाप्य चोप भोज्यैव पात्रं ॥

सर्वचिंतां समुत्सृज्य सर्वचेष्टाश्च सर्वदा ।
नादमेवा न संधत्ते योगसाम्राज्यमिछति ॥

मकरंदामिवं भृंगो गंधनोप्पक्षते यथा ।
नादाशक्तं तथा चित्तं विषया न हि कांक्षति ॥

वद्धं विमुक्तं चावल्यं नादगंधकरीरणात् ।
मनः पारदमाप्नोति निरालंबाख्य खोटनं ॥

वद्धाचेन्नाद गंधेन सद्यः स त्यक्त चापले ।
प्रयाति साश्वताश्चैव व्युपाछ छिन्न इद्रुमा ॥

नादं प्रणत नित्तस्य मंतरंगा भुजंगमः ।
विस्मृत्य विश्वमेकाग्रं कुत्रचित्त हि धावति ॥

मनोन्मर्तगजेंद्रस्य विषयाप्यनुचारिणः ।
लीयमानः समर्थोयं निलादनिशितांकुशं ॥

नादांतरं तु संगस्य चाजिनः परिधावते ।

अंतरंग तुरंगस्य रोगो वा गीयतेपि च ॥

अनाहत ध्वने चेतर्ज्ञेयं यत्सूक्ष्मसूक्ष्मकं ।

मनस्तत्र लयं याति तद्विष्णोः परमं पदं ॥

भावनाकाशसंकल्पो यावछंदः प्रवर्तते ।

निःशब्दं तत्परं ब्रह्म परमात्मानुमीयते ॥

नादः शक्तिरितिख्याता नादनामं सदाशिवं ।

पृ। १७३अ)

नादज्ञानेन नष्टेन तदुन्मन्येव शिष्यते ॥

नादायावन्मनस्तावन्नादांते तु मनोन्मनी ।

स शब्द कथितं व्योम निःशब्दं ब्रह्म कथ्यते ॥

यदा नादानुसंधानात् संक्षीणे वासनोदये ।

निरञ्जने वलीयन्ते निस्वरे मनसारुते ॥

नादकोटि सहस्त्राणि बिन्दुकोटि शतानि च ।
सर्वे तत्र लयं यांति यत्र देवो निरञ्जनं ॥

एवं सृष्टिमयं बीजं एकामुद्रा च खेचरी ।
एको देवी निरालंब एकावस्था मनोन्मनी ॥

शंखदुंदुभिनादं च न शृणोति कदाचन ।
काष्ठवर्जायते देव उन्मन्या अवस्था ध्रुवं ॥

सर्वावस्था विनिर्मुक्ता सर्वचिंता विवर्जिताः ।
मृतवत्तिष्ठते योगी समुक्तो नात्रसंशयः ॥

अवध्यः सर्वशस्त्राणांमवध्यः सर्वदेहिनां ।
अग्रा * मंत्रतन्त्राणां योगी युक्तसमाधिना ॥

प्रवेशे निर्गमे चैव दक्षिणे चोर्द्धमध्यमः ।
न पश्यवायुर्वहति समुक्तो नात्रसंशयः ॥

चित्तं न सुप्तं नो जाग्रत् स्मृति वस्तु च नान्यथा ।
नास्ति मेति न चोदेति यथासौ मुक्त एवसः ॥

सृष्टिः स्थिरा यस्य विनैव दृश्यं वायु स्थिरोय विना प्रयत्नतः चित्त स्थिरं यस्य विनावलंवनं स एव मुक्तः स गुरुः स सेव्यः ॥

विद्या तीर्थे जगति विवुधा साधवः सत्य तीर्थे गंगातीर्थे मलिन मनसो योगिनो ज्ञान तीर्थे ॥
पृ। १७३ब्)
धारातीर्थे धरणि पतनो दानतीर्थेश्च भक्त्याः लज्जातीर्थः कुलयुवतयः पातकं क्षालयंति ॥

इति श्रीवाराहीतंत्रे दक्षिणाम्नायनिर्वाणपदे सप्तविंशतितम पटलः ॥ २७ ॥

भैरव उवाच ॥

शृणु देवि प्रवक्ष्यामि षोडशमातृकांविका ।
वाराही नीलकाली च कथयामि यथाक्रमं ॥